अतोऽन्यथा तैरुपचर्य्यमाणा हत्वा समेतान् धृतराष्ट्रपुत्रान् । तैर्विप्रकारस्तु निगृह्य कार्य्याः सुहृज्जनास्तानि निवारयेरन् ॥ २१ ॥ युद्धेन बाधेयुरथापि तैवं तैर्बाध्यमाना युधि तांश्च हन्युः । तथापि नैतेऽल्पतया समर्थास्तज्जयायेति मतिर्भवेद्वः ॥ २२ ॥ समेत्य सर्वे सहिताः सुहृद्भिस्तेषां विनाशाय यतेयुरेव । दुर्योधनस्यापि मतं यथावन्न ज्ञायते किन्नु करिष्यतीति ॥ २३ ॥ अज्ञायमाने च मते परस्य किं स्यात् समारभ्यतमं मतं वः । तस्मादितो गच्छतु धर्मशीलः शुचिः कुलीनः प्रयतोऽप्रमत्तः ॥ २४ ॥ दूतः समर्थः प्रशमाय तेषां राज्यार्द्धदानाय युधिष्ठिरस्य । निशम्य वाक्यं तु जनार्द्दनस्य धर्मार्थयुक्तं मधुरं समञ्च । समाददे वाक्यमथाग्रजोऽस्य सम्पूज्य वाक्यं तदतीव राजन् ॥ २५ ॥

इति उद्योगपर्व्वणि सेनोद्योगपर्व्वणि श्रीकृष्णवाक्ये प्रथमोऽध्यायः ॥ १ ॥

बलदेव उवाच । श्रुतं भवद्भिर्गदपूर्वजस्य वाक्यं यथा धर्मवदर्थवच्च । अजातशत्रोश्च हितं हितञ्च दुर्योधनस्यापि तथैव राज्ञः ॥ १ ॥ अर्द्धं हि राज्यस्य विसृज्य वीराः कुन्तीसुतास्तस्य कृते यतन्ते । प्रदाय चार्द्धं धृतराष्ट्रपुत्रः सुखी सहास्माभिरतीव मोदेत् ॥ २ ॥ लब्ध्वा हि राज्यं पुरुषप्रवीराः सम्यक्प्रवृत्तेषु परेषु चैव । ध्रुवं प्रशान्ताः सुखमाविशेयुस्तेषां प्रशान्तिश्च हितं प्रजानाम् ॥ ३ ॥ दुर्योधनस्यापि मतञ्च वेत्तुं वक्तुञ्च वाक्यानि युधिष्ठिरस्य । प्रियं मम स्याद्यदि तत्र कश्चिद्व्रजेत शमार्थं कुरुपाण्डवानाम् ॥ ४ ॥ स भीष्ममामन्त्र्य कुरुप्रवीरं वैचित्रवीर्य्यञ्च महानुभावम् । द्रोणं सपुत्रं विदुरं कृपञ्च गान्धारराजञ्च

यथावदनुपूर्वम् ॥ ५ ॥ सर्वे च येऽन्ये धृतराष्ट्रपुत्रा बलप्रधाना निगम-
प्रधानाः । स्थिताश्च धर्मेषु यथा स्वकेषु लोकप्रवीराः श्रुतकाल-
वृद्धाः ॥ ६ ॥ एतेषु सर्वेषु समागतेषु पौरेषु वृद्धेषु च सङ्गतेषु ।
ब्रवीतु वाक्यं प्रणिपातयुक्तं कुन्तीसुतस्यार्थकरं यथा स्यात् ॥ ७ ॥
सर्वास्ववस्थासु च ते न कोप्या ग्रस्तो हि सोऽर्थो बलमाश्रितैस्तैः ।
प्रियाभ्युपेतस्य युधिष्ठिरस्य द्यूते प्रमत्तस्य हृतं स्वराज्यम् ॥ ८ ॥
निवार्यमाणश्च कुरुप्रवीरः सर्वैः सुहृद्भिर्ह्ययमप्यतज्ज्ञः । गान्धार-
राजस्य सुतं मताक्षं समाह्वयद्देवितुमाजमीढः ॥ ९ ॥ दुरोदरा-
स्तत्र सहस्रशोऽन्ये युधिष्ठिरो यान् विषहेत जेतुम् । उत्सृज्य
तान् सौबलमेव चायं समाह्वयत्तेन जितोऽक्षवत्याम् ॥ १० ॥ स
दीव्यमानः प्रतिदेवनेन अक्षेषु नित्यं तु पराङ्मुखेषु । संरम्भ-
माणो विजितः प्रसह्य तत्रापराधः शकुनेर्न कश्चित् ॥ ११ ॥ तस्मात्
प्रणम्यैव वचो ब्रवीतु वैचित्रवीर्यं बहुसामयुक्तम् । तथा हि
शक्यो धृतराष्ट्रपुत्रः स्वार्थे नियोक्तुं पुरुषेण तेन ॥ १२ ॥ अयुद्ध-
माकाङ्क्षत कौरवाणां साम्नैव दुर्योधनमाह्वयध्वम् । साम्ना जितो-
ऽर्थोऽर्थकरो भवेत युद्धेऽनयो भविता नेह सोऽर्थः ॥ १३ ॥

वैशम्पायन उवाच । एवं ब्रुवत्येव मधुप्रवीरे शिनिप्रवीरः
सहसोत्पपात । तच्चापि वाक्यं परिनिन्द्य तस्य समाददे वाक्य-
मिदं समन्युः ॥ १४ ॥ यादृशः पुरुषस्यात्मा तादृशं सम्प्रभाषते ।
यथारूपोऽन्तरात्मा ते तथा रूपं प्रभाषसे ॥ १५ ॥ सन्ति वै
पुरुषाः शूराः सन्ति कापुरुषास्तथा । उभाविमौ दृढौ पक्षौ
दृश्येते पुरुषान् प्रति ॥ १६ ॥ एकस्मिन्नेव जायेते कुले क्लीबमहा-
बलौ । फलाफलवती शाखे यथैकस्मिन् वनस्पतौ ॥ १७ ॥ नाभ्य-
सूयामि ते वाक्यं ब्रुवतो लाङ्गलध्वज । ये तु शृण्वन्ति ते वाक्यं
तानसूयामि माधव ॥ १८ ॥ कथं हि धर्मराजस्य दोषमल्पमपि
ब्रुवन् । लभते परिषन्मध्ये व्याहर्तुमकुतोभयः ॥ १९ ॥ समा

इयं महात्मानं जितवन्तोऽक्षकोविदाः । अनर्हं यथान्यत्र तेषु
धनञ्जय कृत ॥ २० ॥ यदि कुन्तीसुत गेहे क्रीडन्तं भ्रातृभिः
सह । आमन्त्र्य जयेयुस्ते तत् तेषां धर्मतो भवेत् ॥ २१ ॥ समा-
हूय तु कौन्तेय क्षत्रधर्मरतं सदा । निकृत्या जितवन्तस्ते किन्नु
तेषां परं शुभम् ॥ २२ ॥ कथं प्रणिपतेच्चायमिह कृत्वा पणं परम् ।
वनवासाद्विमुक्तस्तु प्राप्तः पैतामहं पदम् ॥ २३ ॥ यद्ययं पर-
वित्तानि कामयीत युधिष्ठिरः । एवमप्ययमत्यन्तं परं नार्हति
याचितुम् ॥ २४ ॥ कथञ्च धर्मयुक्तास्ते न च राज्यं जिहीर्षव ।
निवृत्तवासान् कौन्तेयान् य आहुर्विदिता इति ॥ २५ ॥ अनु-
नीता हि भीष्मेण द्रोणेन च महात्मना । न व्यवस्यन्ति पाण्डूनां
प्रदातुं पैतृकं पदम् ॥ २६ ॥ अहन्तु तान् शितैर्बाणैरनुनीय रणे
बलात् । पादयोः पातयिष्यामि कौन्तेयस्य महात्मनः ॥ २७ ॥
अथ ते न व्यवस्यन्ति प्रणिपाताय धीमतः । गमिष्यन्ति सहा-
मात्या यमस्य सदनं प्रति ॥ २८ ॥ न हि ते युयुधानस्य संरब्धस्य
युयुत्सतः । वेगं समर्थाः संसोढुं वज्रस्येव महीधराः ॥ २९ ॥ को
हि गाण्डीवधन्वानं कश्च चक्रायुधं युधि । माञ्चापि विषहेत् को
नु कश्च भीमं दुरासदम् ॥ ३० ॥ यमौ च दृढधन्वानौ यमकालो-
पमद्युती । को जिजीविषुरासीदेद्धृष्टद्युम्नञ्च पार्षतम् ॥ ३१ ॥
पञ्चेमान् पाण्डवेयांस्तु द्रौपद्याः कीर्त्तिवर्द्धनान् । समप्रमाणान्
पाण्डूनां समवीर्य्यान् मदोत्कटान् ॥ ३२ ॥ सौभद्रञ्च महेष्वास-
ममरैरपि दुःसहम् । गदप्रद्युम्नसाम्बांश्च कालवज्रानलोपमान्
॥ ३३ ॥ ते वयं धृतराष्ट्रस्य पुत्रं शकुनिना सह । कर्णेन तु
निहत्याजावभिषेक्ष्याम पाण्डवम् ॥ ३४ ॥ नाधर्मो विद्यते कश्चि-
च्छत्रून् हत्वाततायिनः । अधर्म्यमयशस्यञ्च शात्रवाणां प्रयाचनम्
॥ ३५ ॥ हृद्गतस्तस्य यः कामस्तं कुरुध्वमतन्द्रिताः । विसृष्टं
धृतराष्ट्रेण राज्यं प्राप्नोतु पाण्डवः ॥ ३६ ॥ अद्य पाण्डुसुतो

राज्यं लभेत वा युधिष्ठिरः। निहता वा मया सर्वे शेष्यन्ति वसुधातले ॥ १७ ॥

इति उद्योगपर्वणि सेनोद्योगपर्वणि सात्यकिक्रोधवाक्ये द्वितीयोऽध्यायः ॥ २ ॥

द्रुपद उवाच। एवमेतन्महाबाहो भविष्यति न संशयः। न हि दुर्योधनो राज्यं मधुरेण प्रदास्यति ॥ १ ॥ अनुवर्त्स्यति तं चापि धृतराष्ट्रः सुतप्रियः। भीष्मद्रोणौ च कार्पण्यात् मौर्ख्याद्राधेयसौबलौ ॥ २ ॥ बलदेवस्य वाक्यन्तु मम ज्ञाने न युज्यते। एतद्धि पुरुषेणाग्रे कार्यं सुनयमिच्छता ॥ ३ ॥ न तु वाच्यो मृदु वचो धार्तराष्ट्रः कथञ्चन। न हि मार्दवसाध्योऽसौ पापबुद्धिर्मतो मम ॥ ४ ॥ मार्दवं गर्दभे कुर्याद्गोषु तैक्ष्ण्यं समाचरेत्। मृदु दुर्योधने वाक्यं यो ब्रूयात् पापचेतसि ॥ ५ ॥ मृदु वै मन्यते पापो भाष्यमाणमशक्तिजम्। जितमर्थं विजानीयादबुधो मार्दवे सति ॥ ६ ॥ एतच्चैव करिष्यामो यत्नश्च क्रियतामिह। प्रस्थापयामो मित्रेभ्यो बलान्युद्योजयन्तु नः ॥ ७ ॥ शल्यस्य धृष्टकेतोश्च जयत्सेनस्य वा विभो। केकयानाञ्च सर्वेषां दूता गच्छन्तु शीघ्रगाः ॥ ८ ॥ स च दुर्योधनो नूनं प्रेषयिष्यति सर्वशः। पूर्वाभिपन्नाः सन्तश्च भजन्ते पूर्वचोदिनम् ॥ ९ ॥ तत्त्वरध्वं नरेन्द्राणां पूर्वमेव प्रचोदने। महद्धि कार्यं वोढव्यमिति मे वर्त्तते मतिः ॥ १० ॥ शल्यस्य प्रेष्यतां शीघ्रं ये च तस्यानुगा नृपाः। भगदत्ताय राज्ञे च पूर्वसागरवासिने ॥ ११ ॥ अमितौजसे तथोग्राय हार्दिक्यायाहुकाय च। दीर्घप्रज्ञाय शूराय रोचमानाय वा विभो ॥ १२ ॥ आनीयतां बृहन्तश्च सेनाबिन्दुश्च पार्थिवः। सेनजित् प्रतिविन्ध्यश्च चित्रवर्मा सुवास्तुकः ॥ १३ ॥ बाह्लीको मुञ्जकेशश्च चैद्याधिपत-

श्चैव च। सुपार्श्वश्च सुबाहुश्च पौरवश्च महारथः ॥ १४ ॥ शकानां
पह्लवानाञ्च दरदानाञ्च ये नृपाः। सुरारिश्च नदीजश्च कर्णवेष्टश्च
पार्थिवः ॥ १५ ॥ नीलश्च वीरधर्मा च भूमिपालश्च वीर्य्यवान्।
दुर्जयो दन्तवक्त्रश्च रुक्मी च जनमेजयः ॥ १६ ॥ आषाढो वायु-
वेगश्च पूर्वपाली च पार्थिवः। भूरितेजा देवकश्च एकलव्यः सहा-
त्मजः ॥ १७ ॥ कारूषकाश्च राजानः क्षेमधूर्त्तिश्च वीर्य्यवान्।
काम्बोजा ऋषिका ये च पश्चिमानूपकाश्च ये ॥ १८ ॥ जयत्सेनश्च
काश्यश्च तथा पञ्चनदा नृपाः। क्राथपुत्त्रश्च दुर्द्धर्षः पार्वतीयाश्च ये
नृपाः ॥ १९ ॥ जानकिश्च सुशर्मा च मणिमान् पौतिमत्स्यकः।
पांशुराष्ट्राधिपश्चैव धृष्टकेतुश्च वीर्य्यवान् ॥ २० ॥ पौण्ड्रश्च दण्ड-
धारश्च वृहत्सेनश्च वीर्य्यवान्। अपराजितो निषादश्च श्रेणिमान्
वसुमानपि ॥ २१ ॥ वृहद्बलो महौजाश्च बाहुः परपुरञ्जयः।
समुद्रसेनो राजा च सह पुत्त्रेण वीर्य्यवान् ॥ २२ ॥ उद्भवः क्षेमक-
श्चैव वाटधानश्च पार्थिवः। श्रुतायुश्च दृढायुश्च शाल्वपुत्त्रश्च वीर्य्यवान्
॥ २३ ॥ कुमारश्च कलिङ्गानामीश्वरो युद्धदुर्म्मदः। एतेषां प्रेष्यतां
शीघ्रमेतद्धि मम रोचते ॥ २४ ॥ अयञ्च ब्राह्मणो विद्वान् मम
राजन् पुरोहितः। प्रेष्यतां धृतराष्ट्राय वाक्यमस्मै प्रदीयताम् ॥ २५ ॥
यथा दुर्य्योधनो वाच्यो यथा शान्तनवो नृपः। धृतराष्ट्रो यथा
वाच्यो द्रोणश्च रथिनां वरः ॥ २६ ॥

इति उद्योगपर्वणि सेनोद्योगपर्वणि द्रुपदवाक्ये
तृतीयोऽध्यायः ॥ ३ ॥

---

वासुदेव उवाच। उपपन्नमिदं वाक्यं सोमकानां धुरन्धरे।
अर्थसिद्धिकरं राज्ञः पाण्डवस्यामितौजसः ॥ १ ॥ एतच्च पूर्वं

न समीतमभिकाङ्क्षताम् । अन्यथा ह्याचरन् कर्म पुरुषः स्यात्
सुबालिशः ॥ २ ॥ किन्तु सम्बन्धकं तुल्यमस्माकं कुरुपाण्डुषु ।
यथेष्टं वर्त्तमानेषु पाण्डवेषु च तेषु च ॥ ३ ॥ ते विवाहार्थमानीता
वयं सर्वे तथा भवान् । कृते विवाहे मुदिता गमिष्यामो गृहान्
प्रति ॥ ४ ॥ भवान् वृद्धतमो राज्ञां वयसा च श्रुतेन च । शिष्य-
वत्ते वयं सर्वे भवामेह न संशयः ॥ ५ ॥ भवन्तं धृतराष्ट्रश्च सततं
बहु मन्यते । आचार्य्ययोः सखा चासि द्रोणस्य च कृपस्य च ॥६॥
स भवान् प्रेषयत्वद्य पाण्डवार्थकरं वचः । सर्वेषां निश्चितं तन्नः
प्रेषयिष्यति यद्भवान् ॥ ७ ॥ यदि तावच्छमं कुर्य्यान्न्यायेन
कुरुपुङ्गवः । न भवेत् कुरुपाण्डूनां सौभ्रात्रेण महान् क्षयः
॥ ८ ॥ अथ दर्पान्वितो मोहान्न कुर्य्याद्धृतराष्ट्रजः । अन्येषां
प्रेषयित्वा च पश्चादस्मान् समाह्वयेः ॥ ९ ॥ ततो दुर्य्योधनो
मन्दः सहामात्यः सबान्धवः । निष्ठामापत्स्यते मूढः क्रुद्धे गाण्डीव-
धन्वनि ॥ १० ॥

वैशम्पायन उवाच । ततः सत्कृत्य वार्ष्णेयं विराटः पृथिवी-
पतिः । गृहान् प्रस्थापयामास सगणं सहबान्धवम् ॥ ११ ॥ द्वारकान्तु
गते कृष्णे युधिष्ठिरपुरोगमाः । चक्रुः सांग्रामिकं सर्वं विराटश्च
महीपतिः ॥ १२ ॥ ततः सम्प्रेषयामास विराटः सह बान्धवैः ।
सर्वेषां भूमिपालानां द्रुपदश्च महीपतिः ॥ १३ ॥ वचनात् कुरु-
सिंहानां मत्स्यपाञ्चालयोश्च ते । समाजग्मुर्महीपालाः सम्प्रहृष्टा
महाबलाः ॥ १४ ॥ तच्छ्रुत्वा पाण्डुपुत्राणां समागच्छन्महद्
बलम् । धृतराष्ट्रसुताश्चापि समानिन्युर्महीपतीन् ॥ १५ ॥ समा-
कुला मही राजन् कुरुपाण्डवकारणात् । तदा समभवत् कृत्स्ना
सम्प्रयाणे महीक्षिताम् ॥ १६ ॥ सञ्चुक्षुभे च तदा भूमिश्चतुरङ्ग-
बलान्विता । बलानि तेषां वीराणामागच्छन्त ततस्ततः ॥ १७ ॥
चालयन्तीव गां देवीं सपर्वतवनामिमाम् । ततः प्रज्ञावयोवृद्ध

पाञ्चाल्यः स्वपुरोहितम्। कुरुभ्यः प्रेषयामास युधिष्ठिरमते स्थितः॥१७॥

इति उद्योगपर्व्वणि सेनोद्योगपर्व्वणि पाञ्चाल्यपुरोहितयाने चतुर्थोऽध्यायः॥४॥



द्रुपद उवाच। भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः। बुद्धिमत्सु नराः श्रेष्ठा नरेष्वपि द्विजातयः॥१॥ द्विजेषु वैद्याः श्रेयांसो वैद्येषु कृतबुद्धयः। कृतबुद्धिषु कर्त्तारः कर्त्तृषु ब्रह्मवेदिनः॥२॥ स भवान् कृतबुद्धीनां प्रधान इति मे मतिः। कुलेन च विशिष्टोऽसि वयसा च श्रुतेन च॥३॥ प्रज्ञया सदृशश्चासि शुक्रेणाङ्गिरसेन च। विदितञ्चापि ते सर्वं यथावृत्तः स कौरवः॥४॥ पाण्डवश्च यथावृत्तः कुन्तीपुत्रो युधिष्ठिरः। धृतराष्ट्रस्य विदिते वञ्चिताः पाण्डवाः परैः॥५॥ विदुरेणानुनीतोऽपि पुत्रमेवानुवर्त्तते। शकुनिर्बुद्धिपूर्वं हि कुन्तीपुत्रं समाह्वयत्॥६॥ अनक्षज्ञं मताक्षः सन् क्षत्रवृत्ते स्थितं शुचिम्। ते तथा वञ्चयित्वा तु धर्मराजं युधिष्ठिरम्॥७॥ न कस्याञ्चिदवस्थायां राज्यं दास्यन्ति वै स्वयम्। भवांस्तु धर्मसंयुक्तं धृतराष्ट्रं ब्रुवन् वचः॥८॥ मनांसि तस्य योधानां ध्रुवमावर्त्तयिष्यति। विदुरश्चापि तद्वाक्यं साधयिष्यति तावकम्॥९॥ भीष्मद्रोणकृपादीनां भेदं सञ्जनयिष्यति। अमात्येषु च भिन्नेषु योधेषु विमुखेषु च॥१०॥ पुनरेकत्रकरणं तेषां कर्म भविष्यति। एतस्मिन्नन्तरे पार्थाः सुखमेकाग्रबुद्धयः॥११॥ सेनाकर्म करिष्यन्ति द्रव्याणां चैव सञ्चयम्। भिद्यमानेषु च स्वेषु लम्बमाने तथा त्वयि॥१२॥ न तथा ते करिष्यन्ति सेनाकर्म न संशयः। एतत्प्रयोजनं चात्र प्राधान्येनोपलभ्यते॥१३॥ सङ्गत्या धृतराष्ट्रश्च कुर्य्या-

धर्म्यं वदस्त्व । स भवान् धर्मयुक्तश्च धर्म्यं तेषु समाचरन् ॥१४॥
कृपालुषु परिक्लेशान् पाण्डवीयान् प्रकीर्त्तयन् । वृद्धेषु कुलधर्मञ्च
ब्रुवन् पूर्व्वैरनुष्ठितम् ॥ १५ ॥ विभेत्स्यति मनांस्येषामिति मे
नात्र संशयः । न च तेभ्यो भयं तेऽस्ति ब्राह्मणो ह्यसि वेदवित्
॥ १६ ॥ दूतकर्म्मणि युक्तश्च स्थविरश्च विशेषतः । स भवान् पुष्य-
योगेन मुहूर्त्तेन जयेन च । कौरवेयान् प्रयात्वाशु कौन्तेयस्यार्थ-
सिद्धये ॥ १७ ॥

वैशम्पायन उवाच । तथानुशिष्टः प्रययौ द्रुपदेन महात्मना ।
पुरोधा वृत्तसम्पन्नो नगरं नागसाह्वयम् ॥ १८ ॥ शिष्यैः परिवृतो
विद्वान् नीतिशास्त्रार्थकोविदः । पाण्डवानां हितार्थाय कौरवान्
प्रति जग्मिवान् ॥ १९ ॥

इति उद्योगपर्व्वणि सैन्योद्योगपर्व्वणि पुरोहितयाने
पञ्चमोऽध्यायः ॥ ५ ॥

---

वैशम्पायन उवाच । पुरोहितं ते प्रस्थाप्य नगरं नागसा-
ह्वयम् । दूतान् प्रस्थापयामासुः पार्थिवेभ्यस्ततस्ततः ॥ १ ॥
प्रस्थाप्य दूतानन्यत्र द्वारकां पुरुषर्षभः । स्वयं जगाम कौरव्यः
कुन्तीपुत्रो धनञ्जयः ॥२॥ गते द्वारवतीं कृष्णे बलदेवे च माधवे ।
सह वृष्ण्यन्धकैः सर्व्वैर्भोजैश्च शतशस्तथा ॥ ३ ॥ सर्व्वमागमयामास
पाण्डवानां विचेष्टितम् । धृतराष्ट्रात्मजो राजा गूढैः प्रणिहितैः
चरैः ॥ ४ ॥ स श्रुत्वा माधवं यान्तं सदश्वैरनिलोपमैः । बलेन
नातिमहता द्वारकामभ्ययात् पुरीम् ॥ ५ ॥ तमेव दिवसं चापि
कौन्तेयः पाण्डुनन्दनः । आनर्त्तनगरीं रम्यां जगामाशु धनञ्जयः
॥ ६ ॥ तौ यात्वा पुरुषव्याघ्रौ द्वारकां कुरुनन्दनौ । सुप्तं ददृ-
शतुः कृष्णं शयानं चाभिजग्मतुः ॥ ७ ॥ ततः शयाने गोविन्दे

प्रविवेश सुयोधनः । तस्मीर्षतश्च कृष्णस्य निषसाद वराङ्गने ॥८॥
ततः किरीटी तस्यानु प्रविवेश महामनाः । पश्चार्द्धे च स कृष्णस्य
प्रह्वोऽतिष्ठत् कृताञ्जलिः ॥ ९ ॥ प्रतिबुद्धः स वार्ष्णेयो ददर्शाग्रे
किरीटिनम् । स तयोः स्वागतं कृत्वा यथावत् प्रतिपूज्य तौ ॥१०॥
तदागमनजं हेतुं पप्रच्छ मधुसूदनः । ततो दुर्य्योधनः कृष्ण-
मुवाच प्रहसन्निव ॥ ११ ॥ विग्रहेऽस्मिन् भवान् साह्यं मम दातु-
मिहार्हति । समं हि भवतः सख्यं मयि चैवार्जुनेऽपि च ॥ १२ ॥
तथा सम्बन्धकं तुल्यमस्माकं त्वयि माधव । अहं चाभिगतः पूर्व्वं
त्वामद्य मधुसूदन ॥ १३ ॥ पूर्व्वं चाभिगतं सन्तो भजन्ते पूर्व्व-
चारिणः । त्वञ्च श्रेष्ठतमो लोके सतामद्य जनार्द्दन । सततं
सम्मतश्चैव सद्वृत्तमनुपालय ॥ १४ ॥

कृष्ण उवाच । भवानभिगतः पूर्व्वमत्र मे नास्ति संशयः ।
दृष्टस्तु प्रथमं राजन् मया पार्थो धनञ्जयः ॥ १५ ॥ तव पूर्व्वाभि-
गमनात् पूर्व्वं चाप्यस्य दर्शनात् । साहाय्यमुभयोरेव करिष्यामि
सुयोधन ॥ १६ ॥ प्रवारणन्तु बालानां पूर्व्वं कार्य्यमिति श्रुतिः ।
तस्मात् प्रवारणं पूर्व्वमर्हः पार्थो धनञ्जयः ॥ १७ ॥ मत्संहनन-
तुल्यानां गोपानामर्बुदं महत् । नारायणा इति ख्याताः सर्व्वे
संग्रामयोधिनः ॥ १८ ॥ ते वा युधि दुराधर्षा भवन्त्वेकस्य
सैनिकाः । अयुध्यमानः संग्रामे न्यस्तशस्त्रोऽहमेकतः ॥ १९ ॥
आभ्यामन्यतरं पार्थ यत् ते हृद्यतरं मतम् । तद्वृणीतां भवानग्रे
प्रवार्य्यस्त्वं हि धर्म्मतः ॥ २० ॥

वैशम्पायन उवाच । एवमुक्तस्तु कृष्णेन कुन्तीपुत्रो धनञ्जयः ।
अयुध्यमानं संग्रामे वरयामास केशवम् ॥ २१ ॥ नारायणममित्रघ्नं
कामाज्जातमजं नृषु । सर्व्वक्षत्रस्य पुरतो देवदानवयोरपि
॥ २२ ॥ दुर्य्योधनस्तु तत् सैन्यं सर्व्वमावरयत्तदा । सहस्राणां
सहस्रन्तु योधानां प्राप्य भारत ॥ २३ ॥ कृष्णं चापहृतं ज्ञात्वा

सम्प्राप परमां मुदम्। दुर्योधनस्तु तत् सैन्यं सर्वमादाय पार्थिवः
॥२४॥ ततोऽभ्ययाद्भीमबलो रौहिणेयं महाबलम्। सर्वं चाग-
मने हेतुं स तस्मै संन्यवेदयत्। प्रत्युवाच ततः शौरिर्धार्तराष्ट्र-
मिदं वचः ॥२५॥

बलदेव उवाच। विदितं ते नरव्याघ्र सर्वं भवितुमर्हति।
यन्मयोक्तं विराटस्य पुरा वैवाहिके तदा ॥२६॥ निगृह्योक्तो
हृषीकेशस्त्वदर्थं कुरुनन्दन। मया सम्बन्धकं तुल्यमिति राजन्
पुनः पुनः ॥२७॥ न च तद्वाक्यमुक्तं वै केशवः प्रत्यपद्यत। न
चाहमुत्सहे कृष्णं विना स्थातुमपि क्षणम् ॥२८॥ नाहं सहायः
पार्थानां नापि दुर्योधनस्य वै। इति मे निश्चिता बुद्धिर्वासुदेव-
मवेक्ष्य ह ॥२९॥ जातोऽसि भारते वंशे सर्वपार्थिवपूजिते।
गच्छ युध्यस्व धर्मेण क्षात्रेण भरतर्षभ ॥३०॥

वैशम्पायन उवाच। इत्येवमुक्तस्तु तदा परिष्वज्य हला-
युधम्। कृष्णं चापहृतं ज्ञात्वा जितं मेने धनञ्जयम् ॥३१॥
सोऽभ्ययात् कृतवर्माणं धृतराष्ट्रसुतो नृपः। कृतवर्मा ददौ तस्य
सेनामक्षौहिणीं तदा ॥३२॥ स तेन सर्वसैन्येन भीमेन कुरु-
नन्दनः। वृतः प्रतिययौ हृष्टः सुहृदः सम्प्रहर्षयन् ॥३३॥ ततः
पीताम्बरधरो जगत्स्रष्टा जनार्दनः। गते दुर्योधने कृष्णः किरी-
टिनमथाब्रवीत्। अयुध्यमानः कां बुद्धिमास्थायाहं वृतस्त्वया ॥३४॥

अर्जुन उवाच। भवान् समर्थस्तान् सर्वान्निहन्तुं नात्र संशयः।
निहन्तुमहमप्येकः समर्थः पुरुषर्षभ ॥३५॥ भवांस्तु कीर्ति-
मांल्लोके तद्यशस्त्वां गमिष्यति। यशसा चाहमप्यर्थी तस्मादसि
मया वृतः ॥३६॥ सारथ्यं तु त्वया कार्यमिति मे मानसं सदा।
चिररात्रेप्सितं कामं तद्भवान् कर्तुमर्हति ॥३७॥

वासुदेव उवाच। उपपन्नमिदं पार्थ यत् स्पर्धसि मया सह।
सारथ्यं ते करिष्यामि कामः सम्पद्यतां तव ॥३८॥

वैशम्पायन उवाच । एवं प्रमुदितः पार्थः कृष्णेन सहित-स्तदा । ततो द्वारवतीं प्रायात् पुनरायाद् युधिष्ठिरम् ॥ ३८ ॥

इति उद्योगपर्वणि सैन्योद्योगपर्वणि कृष्णसारथ्यस्वीकारे षष्ठोऽध्यायः ॥ ६ ॥

वैशम्पायन उवाच । शल्यः श्रुत्वा तु दूतानां सैन्येन महता वृत । अभ्ययात् पाण्डवान् राजन् सह पुत्रैर्महारथैः ॥ १ ॥ तस्य सेनानिवेशोऽभूदध्यर्द्धमिव योजनम् । तथा हि विपुलां सेनां बिभर्त्ति स नरर्षभ ॥ २ ॥ अक्षौहिणीपती राजन् महावीर्य-पराक्रमः । विचित्रकवचाः शूरा विचित्रध्वजकार्मुकाः ॥ ३ ॥ विचित्राभरणाः सर्वे विचित्ररथवाहनाः । विचित्रस्रग्धराः सर्वे विचित्राम्बरभूषणाः ॥ ४ ॥ स्वदेशवेशाभरणा वीराः शतसह-स्रशः । तस्य सेनाप्रणेतारो बभूवुः क्षत्रियर्षभाः ॥ ५ ॥ व्यथय-न्निव भूतानि कम्पयन्निव मेदिनीम् । शनैर्विश्रामयन् सेनां स ययौ येन पाण्डवः ॥ ६ ॥ ततो दुर्योधनः श्रुत्वा महात्मानं महा-रथम् । उपायान्तमभिद्रुत्य स्वयमानर्च भारत ॥ ७ ॥ कारया-मास पूजार्थं तस्य दुर्योधनः सभाः । रमणीयेषु देशेषु रत्नचित्राः स्वलङ्कृताः ॥ ८ ॥ शिल्पिभिर्विविधैश्चैव क्रीडास्तत्र प्रयोजिताः । तत्र माल्यानि मांसानि भक्ष्यं पेयञ्च सत्कृतम् ॥ ९ ॥ कूपाश्च विविधाकारा मनोहर्षविवर्द्धनाः । वाप्यश्च विविधाकारा औद-कानि गृहाणि च ॥ १० ॥ स ताः सभाः समासाद्य पूज्यमानो यथामरः । दुर्योधनस्य सचिवैर्देशे देशे समन्ततः ॥ ११ ॥ आज-गाम सभामन्यां देवावसथवर्चसम् । स तत्र विषयैर्युक्तैः कल्याणै-रतिमानुषैः ॥ १२ ॥ मेनेऽभ्यधिकमात्मानमवमेने पुरन्दरम् । पप्रच्छ च ततः प्रेष्यान् प्रहृष्टः क्षत्रियर्षभः ॥ १३ ॥ युधिष्ठिरस्य

पुरुषा कौरव यत्तु धर्मा इमाः। आनीयन्तां समाकाराः प्रदीयन्तां हि मे मता ॥ १४ ॥ प्रेवाद्मेयाः दासा अमि कुन्तीपुत्रास्तु मन्यताम्। दुर्योधनाय तत्सर्वं कथयान्ति स्म, विस्मिताः ॥ १५ ॥ सप्रहृष्टो यदा शल्यो दित्सदात्मनः जीवितम्। गूढो दुर्योधन स्तत्र दर्शयामास मातुलम् ॥ १६ ॥ तं दृष्ट्वा मद्रराजश्च ज्ञात्वा यत्नं तस्य तम्। परिष्वज्याब्रवीत् प्रीत इष्टार्थो गृह्यतामिति॥१७

दुर्योधन उवाच। सत्यवाग्भव कल्याण वरो वै मम दीयताम्। सर्वसेनाप्रणेता मे भवान् भवितुमर्हति ॥ १८ ॥

वैशम्पायन उवाच। कृतमित्यब्रवीच्छल्यः किमन्यत् क्रियतामिति। कृतमित्येव गान्धारिः प्रत्युवाच पुनः पुनः ॥ १९ ॥

शल्य उवाच। गच्छ दुर्योधन पुरं स्वकमेव नरर्षभ। अहं गमिष्ये द्रष्टुं वै युधिष्ठिरमरिन्दमम् ॥ २० ॥ दृष्ट्वा युधिष्ठिरं राजन् क्षिप्रमेष्ये नराधिप। अवश्यं चापि द्रष्टव्यः पाण्डवः पुरुषर्षभ ॥२१

दुर्योधन उवाच। क्षिप्रमागम्यतां राजन् पाण्डवं वीक्ष्य पार्थिव। त्वय्यधीनाः स्म राजेन्द्र वरदानं स्मरस्व नः ॥ २२ ॥

शल्य उवाच। क्षिप्रमेष्यामि भद्रन्ते गच्छस्व स्वपुरं नृप। परिष्वज्य तथान्योऽन्यं शल्यदुर्योधनावुभौ ॥ २३ ॥ स तथा शल्यमामन्त्र्य पुनरायात् स्वकं पुरम्। शल्यो जगाम कौन्तेया नाख्यातुं कर्म तस्य तत् ॥ २४ ॥ उपप्लव्यं स गत्वा तु स्कन्धावारं प्रविश्य च। पाण्डवानथ तान् सर्वान् शल्यस्तत्र ददर्श ह ॥ २५ ॥ समेत्य च महाबाहुः शल्यः पाण्डुसुतैस्तदा। पाद्यमर्घ्यञ्च गाञ्चैव प्रत्यगृह्णाद्यथाविधि ॥ २६ ॥ ततः कुशलपूर्वं हि मद्रराजोऽरिसूदनः। प्रीत्या परमया युक्तः समाश्लिष्य युधिष्ठिरम् ॥ २७ ॥ तथा भीमार्जुनौ हृष्टौ स्वस्रीयौ च यमावुभौ। आसने चोपविविश शल्यः पार्थमुवाच ह ॥ २८ ॥ कुशलं राजशार्दूल कच्चित्ते कुरुनन्दन। अरण्यवासाद्दिष्ट्यासि विमुक्तो जयतां वर ॥ २९ ॥

सुदुष्करं कृतं राजन्निर्जने वसता त्वया । भ्रातृभिः सह राजेन्द्र कृष्णया चानया सह ॥ ३० ॥ अज्ञातवासं घोरञ्च वसता दुष्करं कृतम् । दुःखमेव कुतः सौख्यं भ्रष्टराज्यस्य भारत ॥ ३१ ॥ दुःखस्यैतस्य महतो धार्त्तराष्ट्रकृतस्य वै । अवाप्स्यसि सुखं राजन् हत्वा शत्रून् परन्तप ॥ ३२ ॥ विदितन्ते महाराज लोक-तत्त्वं नराधिप । तस्माल्लोभकृतं किञ्चित्तव तात न विद्यते ॥ ३३ ॥ राजर्षीणां पुराणानां मार्गमन्विच्छ भारत । दाने तपसि सत्ये च भव तात युधिष्ठिर ॥ ३४ ॥ क्षमा दमश्च सत्यञ्च अहिंसा च युधिष्ठिर । अद्भुतश्च पुनर्लोकस्त्वयि राजन् प्रतिष्ठितः ॥ ३५ ॥ मृदुर्वदान्यो ब्रह्मण्यो दाता धर्मपरायणः । धर्मास्ते विदिता राजन् बहवो लोकसाक्षिकाः ॥ ३६ ॥ सर्वं जगदिदं तात विदितं ते परन्तप । दिष्ट्या कृच्छ्रमिदं राजन् पारितं भरतर्षभ ॥ ३७ ॥ दिष्ट्या पश्यामि राजेन्द्र धर्मात्मानं सहानुगम् । निस्तीर्णं दुष्करं राजंस्त्वां धर्मनिचय प्रभो ॥ ३८ ॥

वैशम्पायन उवाच । ततोऽस्याकथयद्राजा दुर्य्योधनसमागमम् । तच्च शुश्रूषितं सर्वं वरदानञ्च भारत ॥ ३९ ॥

युधिष्ठिर उवाच । सुकृतं ते कृतं राजन् प्रहृष्टेनान्तरात्मना । दुर्य्योधनस्य यद्वीर त्वया वाचा प्रतिश्रुतम् ॥ ४० ॥ एकं त्विच्छामि भद्रन्ते क्रियमाणं महीपते । राजन्नकर्त्तव्यमपि कर्त्तुमर्हसि सत्तम ॥ ४१ ॥ मम त्ववेक्षया वीर शृणु विज्ञापयामि ते । भवानिह महाराज वासुदेवसमो युधि ॥ ४२ ॥ कर्णार्जुनाभ्यां सम्प्राप्ते द्वैरथे राजसत्तम । कर्णस्य भवता कार्य्यं सारथ्यं नात्र संशयः ॥ ४३ ॥ तत्र पाल्योऽर्जुनो राजन् यदि मत्प्रियमिच्छसि । तेजोवधश्च ते कार्य्यः सौतेरस्मज्जयावहः । अकर्त्तव्यमपि ह्येतत् कर्त्तुमर्हसि मातुल ॥ ४४ ॥

शल्य उवाच । शृणु पाण्डव भद्रं ते यद्ब्रवीषि दुरात्मन ।

तेजोवधनिमित्तं मे सूतपुत्रस्य संयुगे ॥ ४५ ॥ अहं तस्य भविष्यामि संग्रामे सारथिर्ध्रुवम्। वासुदेवेन हि समं नित्यं मां स हि मन्यते ॥ ४६ ॥ तस्याहं कुरुशार्दूल प्रतीपमहितं वचः। ध्रुवं संकथयिष्यामि योद्धुकामस्य संयुगे ॥ ४७ ॥ यथा स हृतदर्पश्च हृततेजाश्च पाण्डव। भविष्यति सुखं हन्तुं सत्यमेतद्ब्रवीमि ते ॥ ४८ ॥ एवमेतत् करिष्यामि यथा तात त्वमात्थ माम्। यच्चान्यदपि शक्ष्यामि तत् करिष्यामि ते प्रियम् ॥ ४९ ॥ यच्च दुःखं त्वया प्राप्तं द्यूते वै कृष्णया सह। परुषाणि च वाक्यानि सूतपुत्रकृतानि वै ॥ ५० ॥ जटासुरात् परिक्लेशः कीचकाच्च महाद्युते। द्रौपद्याधिगतं सर्वं दमयन्त्या यथाशुभम् ॥ ५१ ॥ सर्वं दुःखमिदं वीर सुखोदर्कं भविष्यति। नात्र मन्युस्त्वया कार्यो विधिर्हि बलवत्तरः ॥ ५२ ॥ दुःखानि हि महात्मानः प्राप्नुवन्ति युधिष्ठिर। देवैरपि हि दुःखानि प्राप्तानि जगतीपते ॥ ५३ ॥ इन्द्रेण श्रूयते राजन् सभार्य्येण महात्मना। अनुभूतं महद्दुःखं देवराजेन भारत ॥ ५४ ॥

इति उद्योगपर्वणि सेनोद्योगपर्वणि शल्यवाक्ये सप्तमोऽध्यायः ॥ ७ ॥

---

युधिष्ठिर उवाच। कथमिन्द्रेण राजेन्द्र सभार्य्येण महात्मना। दुःखं प्राप्तं परं घोरमेतदिच्छामि वेदितुम् ॥ १ ॥

शल्य उवाच। शृणु राजन् पुरावृत्तमितिहासं पुरातनम्। सभार्य्येण यथा प्राप्तं दुःखमिन्द्रेण भारत ॥ २ ॥ त्वष्टा प्रजापतिर्ह्यासीद्देवश्रेष्ठो महातपाः। स पुत्रं वै त्रिशिरसमिन्द्रद्रोहात् किलासृजत् ॥ ३ ॥ ऐन्द्रं स प्रार्थयत् स्थानं विश्वरूपो महाद्युतिः। तैस्त्रिभिर्वदनैर्घोरैः सूर्य्येन्दुज्वलनोपमैः ॥ ४ ॥ वेदानेकेन सोऽधीते सुरामेकेन चापिबत्। एकेन च दिशः सर्वाः पिबन्निव

निरीक्षते ॥ ५ ॥ स तपस्वी मृदुर्दान्तो धर्मे तपसि चोद्यतः । तपस्तस्य महत्तीव्रं सुदुश्चरमरिन्दम ॥ ६ ॥ तस्य दृष्ट्वा तपोवीर्य्यं सत्वं चामिततेजसः । विषादमगमच्छक्र इन्द्रोऽयं मा भवेदिति ॥ ७ ॥ कथं सज्जेत भोगेषु न च तप्येन्महत्तपः । विवर्द्धमानस्त्रिशिराः सर्व्वं त्रिभुवनं ग्रसेत् ॥ ८ ॥ इति सञ्चिन्त्य बहुधा बुद्धिमान् भरतर्षभ । आज्ञापयत् सोऽप्सरसस्त्वष्टृपुत्रप्रलोभने ॥ ९ ॥ यथा स सज्जेत्त्रिशिराः कामभोगेषु वै भृशम् । क्षिप्रं कुरुत गच्छध्वं प्रलोभयत मा चिरम् ॥ १० ॥ शृङ्गारवेशाः सुश्रोण्यो हारैर्युक्ता मनोहरैः । हावभावसमायुक्ताः सर्व्वाः सौन्दर्य्यशोभिताः ॥ ११ ॥ प्रलोभयत भद्रं वः शमयध्वं भयं मम । अस्वस्थं ह्यात्मनात्मानं लक्षयामि वराङ्गनाः । भयं तन्मे महाघोरं क्षिप्रं नाशयताबलाः ॥ १२ ॥

अप्सरस ऊचुः । तथा यत्नं करिष्यामः शक्र तस्य प्रलोभने । यथा नावाप्स्यसि भयं तस्माद्बलनिषूदन ॥ १३ ॥ निर्द्दहन्निव चक्षुर्भ्यां योऽसावास्ते तपोनिधिः । तं प्रलोभयितुं देव गच्छामः सहिता वयम् । करिष्यामो वशीकर्त्तुं व्यपनेतुञ्च ते भयम् ॥ १४ ॥

शल्य उवाच । इन्द्रेण तास्त्वनुज्ञाता जग्मुस्त्रिशिरसोऽन्तिकम् । तत्र ता विविधैर्भावैर्लोभयन्त्यो वराङ्गनाः ॥ १५ ॥ नित्यं सन्दर्शयामासुस्तथैवाङ्गेषु सौष्ठवम् । नाभ्यगच्छत् प्रहर्षं ताः स पश्यन् सुमहातपाः ॥ १६ ॥ इन्द्रियाणि वशे कृत्वा पूर्णसागरसन्निभः । तास्तु यत्नं परं कृत्वा पुनः शक्रमुपस्थिताः ॥ १७ ॥ कृताञ्जलिपुटाः सर्व्वा देवराजमथाब्रुवन् । न स शक्यः सुदुर्द्धर्षो धैर्य्याच्चालयितुं प्रभो ॥ १८ ॥ यत्ते कार्य्यं महाभाग क्रियतां तदनन्तरम् । सम्पूज्याप्सरसः शक्रो विसृज्य च महामतिः ॥ १९ ॥ चिन्तयामास तस्यैव वधोपायं युधिष्ठिर । स तूष्णीं चिन्तयन् वीरो देवराजः प्रतापवान् ॥ २० ॥ विनिश्चितमतिर्धीमान् वधे

त्रिशिरसोऽभवत् । वज्रमस्य क्षिपाम्यद्य स क्षिप्रं न भविष्यति
॥ २१ ॥ शत्रुः प्रवृद्धो नोपेक्ष्यो दुर्बलोऽपि बलीयसा । शास्त्र-
बुद्ध्या विनिश्चित्य कृत्वा बुद्धिं वधे दृढाम् ॥ २२ ॥ अथ वैश्वानर-
निभं घोररूपं भयावहम् । मुमोच वज्रं संक्रुद्धः शक्रस्त्रिशिरसं
प्रति ॥ २३ ॥ स पपात हतस्तेन वज्रेण दृढमाहतः । पर्वतस्येव
शिखरं प्रणुन्नं मेदिनीतले ॥ २४ ॥ तन्तु वज्रहतं दृष्ट्वा शयान-
मचलोपमम् । न शर्म लेभे देवेन्द्रो दीपितस्तस्य तेजसा ॥ २५ ॥
हतोऽपि दीप्ततेजाः स जीवन्निव हि दृश्यते । घातितस्य शिरां-
स्याजौ जीवन्तीवाद्भुतानि वै ॥ २६ ॥ ततोऽतिभीतो हृदयात्
शक्र आस्ते विचारयन् । अथाजगाम परशुं स्कन्धेनादाय
वर्धकिः ॥ २७ ॥ तदरण्यं महाराज यत्रास्तेऽसौ निपातितः ।
स भीतस्तत्र तक्षाणं घटमानं शचीपतिः ॥ २८ ॥ अपश्यदब्रवी-
च्चैनं सत्वरं पाकशासनः । क्षिप्रं छिन्धि शिरांस्यस्य कुरुष्व वचनं
मम ॥ २९ ॥

तक्षोवाच । महास्कन्धो भृशं ह्येष परशुर्न भविष्यति । कर्तुं
चाहं न शक्ष्यामि कर्म सद्भिर्विगर्हितम् ॥ ३० ॥

इन्द्र उवाच । मा भैस्त्वं शीघ्रमेतद्वै कुरुष्व वचनं मम । मत्-
प्रसादाद्धि ते शस्त्रं वज्रकल्पं भविष्यति ॥ ३१ ॥

तक्षोवाच । कं भवन्तमहं विद्यां घोरकर्माणमद्य वै । एत-
दिच्छाम्यहं श्रोतुं तत्त्वेन कथयस्व मे ॥ ३२ ॥

इन्द्र उवाच । अहमिन्द्रो देवराजस्तक्षन्विदितमस्तु ते ।
कुरुष्वैतद्यथोक्तं मे तक्षन्मा त्वं विचारय ॥ ३३ ॥

तक्षोवाच । क्रूरेण नापत्रपसे कथं शक्रेह कर्मणा । ऋषि-
पुत्रमिमं हत्वा ब्रह्महत्याभयं न ते ॥ ३४ ॥

शक्र उवाच । पश्चाद्धर्मं चरिष्यामि पावनार्थं सुदुश्चरम् ।
शत्रुरेष महावीर्यो वज्रेण निहतो मया ॥ ३५ ॥ अद्यापि चाह-

शुद्धिमन्तस्तवन्नमाहिमेमि वै । क्षिप्रं छिन्धि शिरांसि त्वं करिष्येऽनुग्रहं तव ॥ ३६ ॥ शिरः पशोस्ते दास्यन्ति भागं यज्ञेषु मानवाः । एष तेऽनुग्रहस्तक्षन् क्षिप्रं कुरु मम प्रियम् ॥ ३७ ॥

शल्य उवाच । एतच्छ्रुत्वा तु तक्षा स महेन्द्रवचनात्तदा । शिरांस्यथ त्रिशिरसः कुठारेणाच्छिनत्तदा ॥ ३८ ॥ निकृत्तेषु ततस्तेषु निष्क्रामंस्त्वण्डजास्त्वथ । कपिञ्जलास्तित्तिराश्च कलविङ्काश्च सर्व्वशः ॥ ३९ ॥ येन वेदानधीते स्म पिबते सोममेव च । तस्माद्वक्त्राद्विनिष्पेतुः क्षिप्रं तस्य कपिञ्जलाः ॥ ४० ॥ येन सर्व्वा दिशो राजन् पिबन्निव निरीक्षते । तस्माद्वक्त्राद्विनिष्पेतुस्तित्तिरास्तस्य पाण्डव ॥ ४१ ॥ यत्सुरापन्तु तस्यासीद्वक्त्रं त्रिशिरसस्तदा । कलविङ्काः समुत्पेतुः श्येनाश्च भरतर्षभ ॥ ४२ ॥ ततस्तेषु निकृत्तेषु विज्वरो मघवानथ । जगाम त्रिदिवं हृष्टस्तक्षापि स्वगृहान् ययौ ॥ ४३ ॥ मेने कृतार्थमात्मानं हत्वा शत्रुं सुरारिहा । त्वष्टा प्रजापतिः श्रुत्वा शक्रेणाथ हतं सुतम् । क्रोधसंरक्तनयन इदं वचनमब्रवीत् ॥ ४४ ॥

त्वष्टोवाच । तप्यमानं तपो नित्यं क्षान्तं दान्तं जितेन्द्रियम् । विनापराधेन यतः पुत्रं हिंसितवान्मम ॥ ४५ ॥ तस्माच्छक्रविनाशाय वृत्रमुत्पादयाम्यहम् । लोकाः पश्यन्तु मे वीर्य्यं तपसश्च बलं महत् ॥ ४६ ॥ स च पश्यतु देवेन्द्रो दुरात्मा पापचेतनः । उपस्पृश्य ततः क्रुद्धस्तपस्वी सुमहायशाः ॥ ४७ ॥ अग्नौ हुत्वा समुत्पाद्य घोरं वृत्रमुवाच ह । इन्द्रशत्रो विवर्द्धस्व प्रभावात्तपसो मम ॥ ४८ ॥ सोऽवर्द्धत दिवं स्तब्ध्वा सूर्य्यवैश्वानरोपमः । किं करोमीति चोवाच कालसूर्य्य इवोदितः ॥ ४९ ॥ शक्रं जहीति चाप्युक्तो जगाम त्रिदिवं ततः । ततो युद्धं समभवद्वृत्रवासवयोर्म्महत् ॥ ५० ॥ संक्रुद्धयोर्म्महाघोरं प्रसक्तं कुरुसत्तम । जग्राह देवेन्द्रं वृत्रो वीरः शतक्रतुम् ॥ ५१ ॥ अ ९ ॥

शक्रं कोपसमन्वितः । ग्रस्ते वृत्रेण शक्रे तु सम्भ्रान्तास्त्रिदिवेश्वराः ॥ ५२ ॥ असृजत्ते महासत्त्वा जृम्भिकां वृत्रनाशिनीम् । विजृम्भमाणस्य ततो वृत्रस्यास्यादपावृतात् ॥ ५३ ॥ स्वान्यङ्गान्यभिसंक्षिप्य निष्क्रान्तो बलनाशनः । ततः प्रभृति लोकस्य जृम्भिका प्राणसंश्रिता ॥ ५४ ॥ जहृषुश्च सुराः सर्वे शक्रं दृष्ट्वा विनिःसृतम् । ततः प्रववृते युद्धं वृत्रवासवयोः पुनः ॥ ५५ ॥ संरब्धयोस्तदा घोरं सुचिरं भरतर्षभ । यदा व्यवर्द्धत रणे वृत्रो बलसमन्वितः ॥ ५६ ॥ त्वष्टुस्तेजोबलाविद्धस्तदा शक्रो न्यवर्त्तत । निवृत्ते च तदा देवा विषादमगमन् परम् ॥ ५७ ॥ समेत्य सह शक्रेण त्वष्टुस्तेजोविमोहिताः । अमन्त्रयन्त ते सर्वे मुनिभिः सह भारत ॥ ५८ ॥ किं कार्य्यमिति वै राजन् विचिन्त्य भयमोहिताः । जग्मुः सर्वे महात्मानं मनोभिर्विष्णुमव्ययम् । उपविष्टा मन्दराग्रे सर्वे वृत्रवधेप्सवः ॥ ५९ ॥

इति उद्योगपर्व्वणि सेनोद्योगपर्व्वणि वृत्रवासवयुद्धे
अष्टमोऽध्यायः ॥ ८ ॥

---

इन्द्र उवाच । सर्वं व्याप्तमिदं देवा वृत्रेण जगदव्ययम् । न ह्यस्य सदृशं किञ्चित् प्रतीघाताय यद्भवेत् ॥ १ ॥ समर्थो ह्यभवं पूर्वमसमर्थोऽस्मि साम्प्रतम् । कथं नु कुर्य्यां भद्रं वो दुष्प्रधर्षः स मे मतः ॥ २ ॥ तेजस्वी च महात्मा च युद्धे चामितविक्रमः । ग्रसेत्त्रिभुवनं सर्वं सदेवासुरमानुषम् ॥ ३ ॥ तस्माद्विनिश्चयमिमं शृणुध्वं त्रिदिवौकसः । विष्णोः क्षयमुपागम्य समेत्य च महात्मना । तेन सम्मन्त्र्य वेत्स्यामो वधोपायं दुरात्मनः ॥ ४ ॥

शल्य उवाच । एवमुक्ते मघवता देवाः सर्षिगणास्तदा । शरण्यं शरणं देवं जग्मुर्विष्णुं महाबलम् ॥ ५ ॥ ऊचुश्च सर्वे

देवेश विष्णुं वृषभवाहिताः । त्रयो लोकास्त्वया क्रान्तास्त्रिभि-
र्विक्रमणैः पुरा ॥ ६ ॥ अमृतं चाहृतं विष्णो दैत्याश्च निहता रणे ।
बलिं बद्ध्वा महादैत्यं शक्रो देवाधिपः कृत ॥ ७ ॥ त्वं प्रभुः सर्व-
देवानां त्वया सर्वमिदं ततम् । त्वं हि देव महादेवः सर्वलोक-
नमस्कृत ॥ ८ ॥ गतिर्भव त्वं देवानां सेन्द्राणाममरोत्तम । जग-
द्व्याप्तमिदं सर्वं वृत्रेणासुरसूदन ॥ ९ ॥

। विष्णुरुवाच । अवश्यं करणीयं मे भवतां हितमुत्तमम् ।
तस्मादुपायं वक्ष्यामि यथासौ न भविष्यति ॥ १० ॥ गच्छध्वं सर्षि-
गन्धर्वा यत्रासौ विश्वरूपधृक् । साम तस्य प्रयुञ्जध्वं तत एनं
विजेष्यथ ॥ ११ ॥ भविष्यति जयो देवाः शक्रस्य मम तेजसा ।
अदृश्यश्च प्रवेक्ष्यामि वज्रे ह्यस्यायुधोत्तमे ॥ १२ ॥ गच्छध्वमृषिभिः
सार्द्धं गन्धर्वैश्च सुरोत्तमाः । वृत्रस्य सह शक्रेण सन्धिं कुरुत
मा चिरम् ॥ १३ ॥

शल्य उवाच । एवमुक्तास्तु देवेन ऋषयस्त्रिदशास्तथा । ययुः
समेत्य सहिताः शक्रं कृत्वा पुरःसरम् ॥ १४ ॥ समीपमेत्य च
तदा सर्व एव महौजसः । तं तेजसा प्रज्वलितं प्रतपन्तं दिशो
दश ॥ १५ ॥ ग्रसन्तमिव लोकांस्त्रीन् सूर्याचन्द्रमसौ यथा ।
ददृशुस्ते ततो वृत्रं शक्रेण सह देवताः ॥ १६ ॥ ऋषयोऽथ
ततोऽभ्येत्य वृत्रमूचुः प्रियं वचः । व्याप्तं जगदिदं सर्वं तेजसा तव
दुर्जय ॥ १७ ॥ न च शक्नोषि निर्जेतुं वासवं बलिनाम्वर ।
युध्यतोश्चापि वां कालो व्यतीतः सुमहानिह ॥ १८ ॥ पीड्यन्ते च
प्रजाः सर्वाः सदेवासुरमानुषाः । सख्यं भवतु ते वृत्र शक्रेण
सह नित्यदा ॥ १९ ॥ अवाप्स्यसि सुखं त्वञ्च शक्रलोकांश्च शाश्व-
तान् । ऋषिवाक्यं निशम्याथ वृत्रः स तु महाबलः ॥ २० ॥
उवाच तानृषीन् सर्वान् प्रणम्य शिरसासुरः । सर्वे यूयं महा-
भागा गन्धर्वाश्चैव सर्वशः ॥ २१ ॥ यद्ब्रूथ तच्छ्रुतं सर्वं ममापि

शृणुतानघाः। सन्धिः कथं वै भविता मम शक्रस्य चोभयोः। तेजसोर्हि द्वयोर्देवाः सख्यं वै भविता कथम् ॥ २२ ॥

ऋषय ऊचुः। सकृत्सतां सङ्गतं लिप्सितव्यं ततः परम्भविता भव्यमेव। नातिक्रमेत सत्पुरुषेण सङ्गतं तस्मात् सतां सङ्गतं लिप्सितव्यम् ॥ २३ ॥ दृढं सतां सङ्गतं चापि नित्यं ब्रूयाच्चार्थं ह्यर्थकृच्छ्रेषु धीरः। महार्थवत् सत्पुरुषेण सङ्गतं तस्मात् सन्तं न जिघांसेत धीरः ॥ २४ ॥ इन्द्रः सतां सम्मतश्च निवासश्च महात्मनाम्। सत्यवादी ह्यदीनश्च धर्मवित् सूक्ष्मनिश्चयः ॥ २५ ॥ तेन ते सह शक्रेण सन्धिर्भवतु नित्यदा। एवं विश्वासमागच्छ मा ते भूद्बुद्धिरन्यथा ॥ २६ ॥

शल्य उवाच। महर्षिवचनं श्रुत्वा तानुवाच महाद्युतिः। अवश्यं भगवन्तो मे माननीयास्तपस्विनः ॥ २७ ॥ ब्रवीमि यदहं देवास्तत्सर्वं क्रियते यदि। ततः सर्वं करिष्यामि यदूचुर्मां द्विजर्षभाः ॥ २८ ॥ न शुष्केण न चार्द्रेण नाश्मना न च दारुणा। न शस्त्रेण न वज्रेण न दिवा न तथा निशि ॥ २९ ॥ वध्यो भवेयं विप्रेन्द्राः शक्रस्य सह दैवतैः। एवं मे रोचते सन्धिः शक्रेण सह नित्यदा ॥ ३० ॥ बाढमित्येव ऋषयस्तमूचुर्भरतर्षभ। एवं वृत्ते तु सन्धाने वृत्रः प्रमुदितोऽभवत् ॥ ३१ ॥ युक्तः सदाभवच्चापि शक्रो हर्षसमन्वितः। वृत्रस्य वधसंयुक्तानुपायाननुचिन्तयन् ॥ ३२ ॥ छिद्रान्वेषी समुद्विग्नः सदा वसति देवराट्। स कदाचित् समुद्रान्ते तमपश्यन्महासुरम् ॥ ३३ ॥ सन्ध्याकाल उपावृत्ते मुहूर्ते चातिदारुणे। ततः सञ्चिन्त्य भगवान् वरदानं महात्मनः ॥ ३४ ॥ सन्ध्येयं वर्तते रौद्रा न रात्रिर्दिवसं न च। वृत्रश्चावश्यवध्योऽयं मम सर्वहरो रिपुः ॥ ३५ ॥ वृत्रं यदि न हन्म्यद्य वञ्चयित्वा महासुरम्। महाबलं महाकायं न मे श्रेयो भविष्यति ॥ ३६ ॥ एवं सञ्चिन्तयन्नेव शक्रो विष्णुमनुस्मरन्। अथ

फेनं तदापश्यत समुद्रे पर्वतोपमम् ॥ ३७ ॥ नायं शुष्को न चार्द्रोऽयं न च शस्त्रमिदं तथा। एनं क्षेप्स्यामि वृत्रस्य क्षणादेव नाशयति ॥ ३८ ॥ सवज्रमथ फेनं तं क्षिप्रं वृत्रे निसृष्टवान्। प्रविश्य फेनं तं विष्णुरथ वृत्रं व्यनाशयत् ॥ ३९ ॥ निहते तु ततो वृत्रे दिशो वितिमिराभवन्। प्रववौ च शिवो वायुः प्रजाश्च जहृषुस्तदा ॥ ४० ॥ ततो देवाः सगन्धर्वा यक्षरक्षोमहोरगाः। ऋषयश्च महेन्द्रं तमस्तुवन्विविधैः स्तवैः ॥ ४१ ॥ नमस्कृतः सर्वभूतैः सर्वभूतान्यसान्त्वयत्। हतशत्रुः प्रहृष्टात्मा वासवः सह दैवतैः ॥ ४२ ॥ विष्णुं त्रिभुवनश्रेष्ठं पूजयामास धर्मवित्। ततो हते महावीर्ये वृत्रे देवभयङ्करे ॥ ४३ ॥ अनृतेनाभिभूतोऽभूच्छक्रः परमदुर्मनाः। त्रैशीर्षयाभिभूतश्च स पूर्वं ब्रह्महत्यया ॥ ४४ ॥ सोऽन्तमाश्रित्य लोकानां नष्टसंज्ञो विचेतनः। न प्राज्ञायत देवेन्द्रस्त्वभिभूतः स्वकल्मषैः ॥ ४५ ॥ प्रतिच्छन्नोऽवसच्चाप्सु चेष्टमान इवोरगः। ततः प्रनष्टे देवेन्द्रे ब्रह्महत्याभयार्दिते ॥ ४६ ॥ भूमिः प्रध्वस्तसङ्काशा निर्वृक्षा शुष्ककानना। विच्छिन्नस्रोतसो नद्यः सरांस्यनुदकानि च ॥ ४७ ॥ संक्षोभश्चापि सत्त्वानामनावृष्टिकृतोऽभवत्। देवाश्चापि भृशं त्रस्तास्तथा सर्वे महर्षयः ॥ ४८ ॥ अराजकं जगत् सर्वमभिभूतमुपद्रवैः। ततो भीताभवन् देवाः को नो राजा भवेदिति ॥ ४९ ॥ दिवि देवर्षयश्चापि देवराजविनाकृताः। न स्म कश्चन देवानां राज्ये वै कुरुते मतिम् ॥ ५० ॥

इति उद्योगपर्वणि सेनोद्योगपर्वणि वृत्रवधे

नवमोऽध्यायः ॥ ९ ॥

---

शल्य उवाच। ऋषयोऽथाब्रुवन् सर्वे देवाश्च त्रिदिवेश्वराः। अयं वै नहुषः श्रीमान् देवराज्येऽभिषिच्यताम् ॥ १ ॥ तेजस्वी च

यशस्वी च धार्मिकश्चैव नित्यदा। ते गत्वा त्वब्रुवन् सर्वे राजा नो भव पार्थिव ॥ २ ॥ स तानुवाच नहुषो देवानृषिगणांस्तथा। पितृभिः सहितान् राजन् परीप्सन् हितमात्मनः ॥ ३ ॥ दुर्बलोऽहं न मे शक्तिर्भवतां परिपालने। बलवान् जायते राजा बलं शक्रे हि नित्यदा ॥ ४ ॥ तमब्रुवन् पुनः सर्वे देवा ऋषिपुरोगमाः। अस्माकं तपसा युक्तः पाहि राज्यं त्रिविष्टपे ॥ ५ ॥ परस्परभयं घोरमस्माकं हि न संशयः। अभिषिच्यस्व राजेन्द्र भव राजा त्रिविष्टपे ॥ ६ ॥ देवदानवयक्षाणामृषीणां रक्षसां तथा। पितृगन्धर्वभूतानां चक्षुर्विषयवर्तिनाम् ॥ ७ ॥ तेज आदास्यसे पश्यन् बलवांश्च भविष्यसि। धर्मं पुरस्कृत्य सदा सर्वलोकाधिपो भव ॥ ८ ॥ ब्रह्मर्षींश्चापि देवांश्च गोपायस्व त्रिविष्टपे। अभ्यषिच्यत राजेन्द्र ततो राजा त्रिविष्टपे ॥ ९ ॥ धर्मं पुरस्कृत्य तदा सर्वलोकाधिपोऽभवत्। सुदुर्लभं वरं लब्ध्वा प्राप्य राज्यं त्रिविष्टपे ॥ १० ॥ धर्मात्मा सततं भूत्वा कामात्मा समपद्यत। देवोद्यानेषु सर्वेषु नन्दनोपवनेषु च ॥ ११ ॥ कैलासे हिमवत्पृष्ठे मन्दरे श्वेतपर्वते। सह्ये महेन्द्रे मलये समुद्रेषु सरित्सु च ॥ १२ ॥ अप्सरोभिः परिवृतो देवकन्यासमावृतः। नहुषो देवराजोऽथ क्रीडन् बहुविधं तदा ॥ १३ ॥ शृण्वन् दिव्या बहुविधाः कथाः श्रुतिमनोहराः। वादित्राणि च सर्वाणि गीतञ्च मधुरस्वनम् ॥ १४ ॥ विश्वावसुर्नारदश्च गन्धर्वाप्सरसां गणाः। ऋतवः षट् च देवेन्द्रं मूर्तिमन्त उपस्थिताः ॥ १५ ॥ मारुतः सुरभिर्वाति मनोज्ञः सुखशीतलः। एवञ्च क्रीडतस्तस्य नहुषस्य दुरात्मनः ॥ १६ ॥ सम्प्राप्ता दर्शनं देवी शक्रस्य महिषी प्रिया। स तां सन्दृश्य दुष्टात्मा प्राह सर्वान् सभासदः ॥ १७ ॥ इन्द्रस्य महिषी देवी कस्मान्मां नोपतिष्ठति। अहमिन्द्रोऽस्मि देवानां लोकानाञ्च तथेश्वरः ॥ १८ ॥ आगच्छतु शची मह्यं क्षिप्रमद्य

निवेदनम्। तच्छ्रुत्वा दुर्मना देवी बृहस्पतिमुवाच ह ॥ १९ ॥ रक्ष मां नहुषाद्ब्रह्मंस्त्वमसि शरणं गता। सर्वलक्षणसम्पन्ना ब्रह्मंस्त्वं मां प्रभाषसे ॥ २० ॥ देवराजस्य दयितामत्यन्तसुखभागिनीम्। अवैधव्येन युक्ता चाप्येकपत्नी पतिव्रताम् ॥ २१ ॥ उक्तवानसि मां पूर्वमृतां तां कुरु वै गिरम्। नोक्तपूर्वञ्च भगवन् वृथा ते किञ्चिदीश्वर ॥ २२ ॥ तस्मादेतत् भवेत् सत्यं त्वयोक्तं द्विजसत्तम। बृहस्पतिरथोवाच शक्राणीं भयमोहिताम् ॥ २२ ॥ यदुक्तासि मया देवि सत्यं तद्भविता ध्रुवम्। द्रक्ष्यसे देवराजानमिन्द्रं शीघ्रमिहागतम् ॥ २३ ॥ न भेतव्यञ्च नहुषात् सत्यमेतद्ब्रवीमि ते। समानयिष्ये शक्रेण नचिराद्भवतीमहम् ॥ २४ ॥ अथ शुश्राव नहुषः शक्राणीं शरणं गताम्। बृहस्पतेरङ्गिरसश्चुक्रोध स नृपस्तदा ॥ २५ ॥

इति उद्योगपर्वणि सेनोद्योगपर्वणि इन्द्राणीभये दशमोऽध्यायः ॥ १० ॥

---

शल्य उवाच। क्रुद्धं तु नहुषं दृष्ट्वा देवा ऋषिपुरोगमाः। अब्रुवन् देवराजानं नहुषं घोरदर्शनम् ॥ १ ॥ देवराज जहि क्रोधं त्वयि क्रुद्धे जगद्विभो। त्रस्तं सासुरगन्धर्वं सकिन्नरमहोरगम् ॥ २ ॥ जहि क्रोधमिमं साधो न कुप्यन्ति भवद्विधाः। परस्य पत्नी सा देवी प्रसीदस्व सुरेश्वर ॥ ३ ॥ निवर्त्तय मनः पापात् परदाराभिमर्षणात्। देवराजोऽसि भद्रं ते प्रजा धर्मेण पालय ॥ ४ ॥ एवमुक्तो न जग्राह तद्वचः काममोहितः। अथ देवानुवाचेदमिन्द्रं प्रति सुराधिपः ॥ ५ ॥ अहल्या धर्षिता पूर्वमृषिपत्नी यशस्विनी। जीवतो भर्त्तुरिन्द्रेण स वः किं न निवारितः ॥ ६ ॥ बहूनि च नृशंसानि कृतानीन्द्रेण वै पुरा। वैधर्म्या-

खुपधाखेव स य किं न निवारित ॥ ७ ॥ उपतिष्ठतु देवी मामेतदस्या हितं परम् । युष्माकञ्च सदा देवा. शिवमेवं भविष्यति ॥ ८ ॥

देवा ऊचु । इन्द्राणीमानयिष्यामो यथेच्छसि दिवस्पते । जहि क्रोधमिमं वीर प्रीतो भव सुरेश्वर ॥ ९ ॥

शल्य उवाच । इत्युक्त्वा तं तदा देवा ऋषिभि सह भारत । जग्मुर्वृहस्पतिं वक्तुमिन्द्राणी चाशुभं वच ॥१०॥ जानीम. शरणं प्राप्तामिन्द्राणीं तव वेश्मनि । दत्ताभयाञ्च विप्रेन्द्र त्वया॰ देवर्षिसत्तम ॥११॥ ते त्वा देवा सगन्धर्वा ऋषयश्च महाद्युते । प्रसादयन्ति चेन्द्राणी नहुषाय प्रदीयताम् ॥१२॥ इन्द्राद्विशिष्टो नहुषो देवराजो महाद्युति । वृणोत्विमं वरारोहा भर्त्तृत्वे वरवर्णिनी ॥ १३ ॥ एवमुक्ते तु सा देवी वाष्पमुत्सृज्य सस्वनम् । उवाच रुदती दीना वृहस्पतिमिदं वच ॥ १४ ॥ नाहमिच्छामि नहुषं पतिं देवर्षिसत्तम । शरणागतास्मि ते ब्रह्मंस्त्रायस्व महतो भयात् ॥ १५ ॥

वृहस्पतिरुवाच । शरणागता न त्यजेयमिन्द्राणी मम निश्चय । धर्मज्ञा सत्यशीलाञ्च न त्यजेयमनिन्दिता ॥१६॥ नाकार्य्यं कर्त्तुमिच्छामि ब्राह्मण सन् विशेषत । श्रुतधर्मा सत्यशीलो जानन् धर्मानुशासनम् ॥ १७ ॥ नाहमेतत् करिष्यामि गच्छध्वं वै सुरोत्तमा । अस्मिंश्चार्थे पुरा गीतं ब्रह्मणा श्रूयतामिदम् ॥ १८ ॥ न तस्य बीजं रोहति बीजकाले न तस्य वर्षं वर्षति वर्षकाले । भीतं प्रपन्नं प्रददाति शत्रवे न स त्रातारं लभते त्राणमिच्छन् ॥ १९ ॥ मोघमन्नं विन्दति चाप्यचेता स्वर्गाल्लोकाद्भ्रश्यति नष्टचेष्ट । भीतं प्रपन्नं प्रददाति यो वै, न तस्य हव्यं प्रतिगृह्णन्ति देवा ॥ २० ॥ प्रमीयते चास्य प्रजा ह्यकाले सदा विवासं पितरोऽस्य कुर्वते । भीतं प्रपन्नं प्रददाति शत्रवे सेन्द्रा देवा प्रहरन्त्यस्य वज्रम् ॥२१॥

एतदेवं विजानन् वै न दास्यामि शचीमिमाम्। इन्द्राणीं विश्रुतां लोके शक्रस्य महिषीं प्रियाम् ॥ २२ ॥ अस्या हितं भवेद्यच्च मम चापि हितं भवेत्। क्रियतां तत् सुरश्रेष्ठा न हि दास्याम्यहं शचीम् ॥ २३ ॥

शल्य उवाच। अथ देवाः सगन्धर्वा गुरुमाहुरिदं वचः। कथं सुनीतं तु भवेन्मन्त्रयस्व बृहस्पते ॥ २४ ॥

बृहस्पतिरुवाच। नहुषं याचतां देवी किञ्चित् कालान्तरं शुभा। इन्द्राणी हितमेतद्धि तथास्माकं भविष्यति ॥ २५ ॥ बहुविघ्नः सुराः कालः कालं कालो नयिष्यति। गर्वितो बलवांश्चापि नहुषो वरसंश्रयात् ॥ २६ ॥

शल्य उवाच। ततस्तेन तथोक्ते तु प्रीता देवास्तदाब्रुवन्। ब्रह्मन् साध्विदमुक्तं ते हितं सर्वदिवौकसाम् ॥ २७ ॥ एवमेतद्द्विजश्रेष्ठ देवी चेयं प्रसाद्यताम्। ततः समस्ता इन्द्राणीं देवाश्चाग्निपुरोगमाः। ऊचुर्वचनमव्यग्रा लोकानां हितकाम्यया ॥ २८ ॥

देवा ऊचुः। त्वया जगदिदं सर्वं धृतं स्थावरजङ्गमम्। एकपत्न्यसि सत्या च गच्छस्व नहुषं प्रति ॥ २९ ॥ क्षिप्रं त्वामभिकामश्च विनशिष्यति पापकृत्। नहुषो देवि शक्रश्च सुरैश्वर्यमवाप्स्यति ॥ ३० ॥ एवं विनिश्चयं कृत्वा इन्द्राणी कार्य्यसिद्धये। अभ्यगच्छत सव्रीडा नहुषं घोरदर्शनम् ॥ ३१ ॥ दृष्ट्वा तां नहुषश्चापि वयोरूपसमन्विताम्। समहृष्यत दुष्टात्मा कामोपहतचेतनः ॥ ३२ ॥

इति उद्योगपर्व्वणि सेनोद्योगपर्व्वणि इन्द्राणीकालयाचने एकादशोऽध्यायः ॥ ११ ॥

शल्य उवाच । अथ तामब्रवीद् दृष्ट्वा नहुषो देवराट् तदा । त्रयाणामपि लोकानामहमिन्द्रः शुचिस्मिते ॥ १ ॥ भजस्व मां वरारोहे पतित्वे वरवर्णिनि । एवमुक्ता तु सा देवी नहुषेण पतिव्रता ॥ २ ॥ प्रावेपत भयोद्विग्ना प्रवाते कदली यथा । प्रणम्य सा हि ब्रह्माणं शिरसा तु कृताञ्जलिः ॥ ३ ॥ देवराजमथोवाच नहुषं घोरदर्शनम् । कालमिच्छाम्यहं लब्धुं त्वत्तः कञ्चित् सुरेश्वर ॥ ४ ॥ न हि विज्ञायते शक्रः किं वा प्राप्तः क्व वा गतः । तत्त्वमेतत्तु विज्ञाय यदि न ज्ञायते प्रभो ॥ ५ ॥ ततोऽहं त्वामुपस्थास्ये सत्यमेतद्ब्रवीमि ते । एवमुक्तः स इन्द्राण्या नहुषः प्रीतिमानभूत् ॥ ६ ॥

नहुष उवाच । एवं भवतु सुश्रोणि यथा मामिह भाषसे । ज्ञात्वा चागमनं कार्य्यं सत्यमेतदनुस्मरेः ॥ ७ ॥ नहुषेण विसृष्टा च निश्चक्राम ततः शुभा । बृहस्पतिनिकेतं च सा जगाम यशस्विनी ॥ ८ ॥ तस्याः संश्रुत्य च वचो देवाश्चाग्निपुरोगमाः । चिन्तयामासुरेकाग्राः शक्रार्थं राजसत्तम ॥ ९ ॥ देवदेवेन सङ्गम्य विष्णुना प्रभविष्णुना । ऊचुश्चैनं समुद्विग्ना वाक्यं वाक्यविशारदाः ॥ १० ॥ ब्रह्मवध्याभिभूतो वै शक्रः सुरगणेश्वरः । गतिश्च नस्त्वं देवेश पूर्वजो जगतः प्रभुः ॥ ११ ॥ रक्षार्थं सर्वभूतानां विष्णुत्वमुपजग्मिवान् । त्वद्वीर्य्यान्निहते वृत्रे वासवो ब्रह्महत्यया ॥१२॥ वृतः सुरगणश्रेष्ठ मोक्षं तस्य विनिर्दिश । तेषां तद्वचनं श्रुत्वा देवानां विष्णुरब्रवीत् ॥ १३ ॥ मामेव यजतां शक्रः पावयिष्यामि वज्रिणम् । पुण्येन हयमेधेन मामिष्ट्वा पाकशासनः ॥ १३ ॥ पुनरेष्यति देवानामिन्द्रत्वमकुतोभयः । दुष्कर्मभिश्च नहुषो नाशं यास्यति दुर्मतिः ॥ १४ ॥ कञ्चित् कालमिमं देवा मर्षयध्वमतन्द्रिताः । श्रुत्वा विष्णोः शुभां सत्यां वाणीं ताममृतोपमाम् ॥१५॥ ततः सर्वे सुरगणाः सोपाध्यायाः सहर्षिभिः । यत्र शक्रो भयो-

विमलं देशमुपचक्रमु ॥ १६ ॥ यजाश्वमेधः सुमहान्महेन्द्रस्य महात्मन । वर्त्तते पावनार्थं वै ब्रह्महत्यापहो नृप ॥ १७ ॥ विभज्य ब्रह्महत्यान्तु वृक्षेषु च नदीषु च । पर्व्वतेषु पृथिव्याञ्च स्त्रीषु चैव युधिष्ठिर ॥ १८ ॥ स विभज्य च भूतेषु विसृज्य च सुरेश्वर । विज्वरो धूतपाप्मा च वासवोऽभवदात्मवान् ॥ १९ ॥ अकम्प्यन्नहुषं स्थानाद्दृष्ट्वा बलनिषूदनः । तेजोघ्नं सर्व्वभूतानां वरदानाच्च दुःसहम् ॥ २० ॥ ततः शचीपतिर्देव पुनरेव व्यनश्यत । अदृश्यः सर्व्वभूतानां कालाकाङ्क्षी चचार ह ॥ २१ ॥ प्रनष्टे तु ततः शक्रे शची शोकसमन्विता । हा शक्रेति तदा देवी विललाप सुदुःखिता ॥ २२ ॥ यदि दत्तं यदि हुतं गुरवस्तोषिता यदि । एकभर्त्तृत्वमेवास्तु सत्यं यद्यस्ति वा मयि ॥ २३ ॥ पुण्यां चेमामहं दिव्यां प्रवृत्तामुत्तरायणे । देवीं रात्रिं नमस्यामि सिध्यतां मे मनोरथः ॥ २४ ॥ प्रयता च निशां देवीमुपातिष्ठत तत्र सा । पतिव्रतात्वात् सत्येन सोपश्रुतिमथाकरोत् ॥ २५ ॥ यत्रास्ते देवराजोऽसौ तं देशं दर्शयस्व मे । इत्याहोपश्रुतिं देवी सत्यं सत्येन दृश्यताम् ॥ २६ ॥

शल्य उवाच । अथैनां रूपिणीं साध्वीमुपातिष्ठदुपश्रुतिः । तां वयोरूपसम्पन्नां दृष्ट्वा देवीमुपस्थिताम् ॥ १ ॥ इन्द्राणी संप्रहृष्टात्मा सम्पूज्यैनामथाब्रवीत् । इच्छामि त्वामहं ज्ञातुं का त्वं ब्रूहि वरानने ॥ २ ॥

इति उद्योगपर्व्वणि सेनोद्योगपर्व्वणि शल्यवाक्ये इन्द्रनिग्रहे द्वादशोऽध्यायः ॥ १२ ॥

---

श यशेन नियमेन च । दर्शयिष्यामि ते शक्रं देवं वृत्रनिसूदनम्
॥ ४ ॥ क्षिप्रमन्वेहि भद्रं ते द्रक्ष्यसे सुरसत्तमम् । ततस्तां
प्रस्थितां देवीमिन्द्राणी सा समन्वगात् ॥ ५ ॥ देवारण्यान्यति-
क्रम्य पर्वतांश्च बहूंस्ततः । हिमवन्तमतिक्रम्य उत्तरं पार्श्व-
मागमत् ॥ ६ ॥ समुद्रञ्च समासाद्य बहुयोजनविस्तृतम् । आस-
साद महाद्वीपं नानाद्रुमलतावृतम् ॥ ७ ॥ तत्रापश्यत्सरो दिव्यं
शुभं शकुनिभिर्वृतम् । शतयोजनविस्तीर्णं तावदेवायतं शुभम्
॥ ८ ॥ तत्र दिव्यानि पद्मानि पञ्चवर्णानि भारत । षट्पदैरुप-
गीतानि प्रफुल्लानि सहस्रशः ॥ ९ ॥ सरसस्तस्य मध्ये तु पद्मिनी
महती शुभा । गौरेणोन्नतनालेन पद्मेन महता वृता ॥ १० ॥
पद्मस्य भित्त्वा नालञ्च विवेश सहिता तया । विसतन्तुप्रविष्टञ्च
तत्रापश्यच्छतक्रतुम् ॥ ११ ॥ तं दृष्ट्वा च सुसूक्ष्मेण रूपेणावस्थितं
प्रभुम् । सूक्ष्मरूपधरा देवी बभूवोपश्रुतिश्च सा ॥ १२ ॥ इन्द्रं
तुष्टाव चेन्द्राणी विश्रुतैः पूर्वकर्मभिः । स्तूयमानस्ततो देवः शची-
माह पुरन्दरः ॥ १३ ॥ किमर्थमसि सम्प्राप्ता विज्ञातश्च कथं
त्वहम् । ततः सा कथयामास नहुषस्य विचेष्टितम् ॥ १४ ॥ इन्द्रत्वं
त्रिषु लोकेषु प्राप्य वीर्यसमन्वितः । दर्पाविष्टश्च दुष्टात्मा मामु-
वाच शतक्रतो ॥ १५ ॥ उपतिष्ठेति स क्रूरः कालञ्च कृतवान्मम ।
यदि न त्रास्यसि विभो करिष्यति स मां वशे ॥ १६ ॥ एतेन चाहं
सम्प्राप्ता नूनं शक्र तवान्तिकम् । जहि रौद्रं महाबाहो नहुषं
पापनिश्चयम् ॥ १७ ॥ प्रकाशयात्मनात्मानं दैत्यदानवसूदन ।
तेज समाप्नुहि विभो देवराज्यं प्रशाधि च ॥ १८ ॥

इति उद्योगपर्वणि सेनोद्योगपर्वणि इन्द्राणीन्द्रस्तवे
त्रयोदशोऽध्यायः ॥ १३ ॥

। शल्य उवाच । एवमुक्तः स भगवान् शच्या तां पुनरब्रवीत् । विक्रमस्य न कालोऽयं नहुषो बलवत्तरः ॥ १ ॥ विवर्द्धितश्च ऋषिभिर्हव्यैः कव्यैश्च भाविनि । नीतिमत्र विधास्यामि देवि तां कर्त्तुमर्हसि ॥ २ ॥ गुह्यं चैतत्त्वया कार्य्यं नाख्यातव्यं शुभे क्वचित् । गत्वा नहुषमेकान्ते ब्रवीहि च सुमध्यमे ॥ ३ ॥ ऋषियानेन दिव्येन मामुपैहि जगत्पते । एवं तव वशे प्रीता भविष्यामीति तं वद ॥ ४ ॥ इत्युक्ता देवराजेन पत्नी सा कमलेक्षणा । एवमस्त्वित्यथोक्ता तु जगाम नहुषं प्रति ॥ ५ ॥ नहुषस्तां ततो दृष्ट्वा सस्मितो वाक्यमब्रवीत् । स्वागतं ते वरारोहे किङ्करोमि शुचिस्मिते ॥ ६ ॥ भक्तं मां भज कल्याणि किमिच्छसि मनस्विनि । तव कल्याणि यत् कार्य्यं तत्करिष्ये सुमध्यमे ॥ ७ ॥ न च व्रीडा त्वया कार्य्या सुश्रोणि मयि विश्वसे । सत्येन वै शपे देवि करिष्ये वचनं तव ॥ ८ ॥

मे रुचितं देवि त्वदर्थोऽस्मि वरानने ॥ १६ ॥ न ह्यल्पवीर्यो भवति
यो वाहान् कुरुते मुनीन् । अहं तपस्वी बलवान् भूतभव्यभवत्-
प्रभुः ॥ १७ ॥ मयि क्रुद्धे जगन्न स्यान्मयि सर्वं प्रतिष्ठितम् ।
देवदानवगन्धर्वाः किन्नरोरगराक्षसाः ॥ १८ ॥ न मे क्रुद्धस्य
पर्य्याप्ताः सर्वे लोकाः शुचिस्मिते । चक्षुषा यं प्रपश्यामि तस्य
तेजो हराम्यहम् ॥ १९ ॥ तस्मात्ते वचनं देवि करिष्यामि न
संशयः । सप्तर्षयो मां वक्ष्यन्ति सर्वे ब्रह्मर्षयस्तथा । पश्य माहा-
त्म्यमस्माकमृद्धिञ्च वरवर्णिनि ॥ २० ॥

शल्य उवाच । एवमुक्त्वा तु तां देवीं विसृज्य च वराननाम् ।
विमाने योजयित्वा स ऋषीन्नियममास्थितान् ॥ २१ ॥ अब्रह्मण्यो
बलोपेतो मत्तो मदबलेन च । कामवृत्तः स दुष्टात्मा वाहयामास
तानृषीन् ॥ २२ ॥ नहुषेण विसृष्टा च बृहस्पतिमथाब्रवीत् ।
समयोऽल्पावशेषो मे नहुषेणेह यः कृतः ॥ २३ ॥ शक्रं मृगय
शीघ्रं त्वं भक्तायाः कुरु मे दयाम् । बाढमित्येव भगवान् बृह-
स्पतिरुवाच ताम् ॥ २४ ॥ न भेतव्यं त्वया देवि नहुषाद्दुष्टचेतसः ।
न ह्येष स्थास्यति चिरं गत एव नराधमः ॥ २५ ॥ अधर्मज्ञो
महर्षीणां वाहनाच्च ततः शुभे । इष्टिञ्चाहं करिष्यामि विनाशा-
यास्य दुर्मतेः ॥ २६ ॥ शक्रं चाधिगमिष्यामि मा भैस्त्वं भद्रमस्तु
ते । ततः प्रज्वाल्य विधिवज्जुहाव परमं हविः ॥ २७ ॥ बृह-
स्पतिर्महातेजा देवराजोपलब्धये । हुत्वाग्निं सोऽब्रवीद्राजन् शक्र-
मन्विष्यतामिति ॥ २८ ॥ तस्माच्च भगवान् देवः स्वयमेव हुता-
शनः । स्त्रीवेशमद्भुतं कृत्वा तत्रैवान्तरधीयत ॥ २९ ॥ स दिशः
प्रदिशश्चैव पर्वतांश्च वनानि च । पृथिवीञ्चान्तरिक्षञ्च विचित्याथ
मनोगतिः । निमेषान्तरमात्रेण बृहस्पतिमुपागमत् ॥ ३० ॥

अग्निरुवाच । बृहस्पते न पश्यामि देवराजमिह क्वचित् ।
आपः शेषाः सदा चापः प्रवेष्टुं नोत्सहाम्यहम् ॥ ३१ ॥ न मे तत्र

गतिर्ब्रह्मन् किमन्यत् करवाणि ते। तमब्रवीद्देवगुरुरपो विश महाद्युते ॥ ३२ ॥

अग्निरुवाच। नापः प्रवेष्टुं शक्ष्यामि क्षयो मेऽत्र भविष्यति। शरणं त्वां प्रपन्नोऽस्मि स्वस्ति तेऽस्तु महाद्युते ॥ ३३ ॥ अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम्। तेषां सर्वत्रगन्तेजः स्वासु योनिषु शाम्यति ॥ ३४ ॥

इति उद्योगपर्वणि सेनोद्योगपर्वणि वृहस्पत्यग्निसंवादे चतुर्दशोऽध्यायः ॥ १४ ॥

---

वृहस्पतिरुवाच। त्वमग्ने सर्वदेवाना मुख त्वमसि हव्यवाट्। त्वमन्तः सर्वभूतानां गूढश्चरसि साक्षिवत् ॥ १ ॥ त्वामाहुरेकं कवयस्त्वामाहुस्त्रिविधं पुनः। त्वया त्यक्तं जगच्चेदं सद्यो नश्येद्धुताशन ॥ २ ॥ कृत्वा तुभ्यं नमो विप्राः स्वकर्मविजितां गतिम्। गच्छन्ति सह पत्नीभिः सुतैरपि च शाश्वतीम् ॥ ३ ॥ त्वमेवाग्ने हव्यवाहस्त्वमेव परमं हविः। यजन्ति सत्रैस्त्वामेव यज्ञैश्च परमाध्वरे ॥ ४ ॥ सृष्ट्वा लोकांस्त्रीनिमान् हव्यवाह प्राप्ते काले पचसि पुनः समिद्धः। त्वं सर्वस्य भुवनस्य प्रसूतिस्त्वमेवाग्ने भवसि पुनः प्रतिष्ठा ॥ ५ ॥ त्वामग्ने जलदानाहुर्विद्युतश्च मनीषिणः। वहन्ति सर्वभूतानि त्वत्तो निष्क्रम्य हेतयः ॥ ६ ॥ त्वय्यापो निहिताः सर्वास्त्वयि सर्वमिदं जगत्। न तेऽस्त्यविदितं किञ्चित् त्रिषु लोकेषु पावक ॥ ७ ॥ स्वयोनिं भजते सर्वो विशस्वापोऽविशङ्कितः। अहं त्वां वर्द्धयिष्यामि ब्राह्मैर्मन्त्रैः सनातनैः ॥ ८ ॥ एवं स्तुतो हव्यवाट् स भगवान् कविरुत्तमः। वृहस्पतिमथोवाच प्रीतिमान् वाक्यमुत्तमम्। दर्शयिष्यामि ते शक्रं सत्यमेतद्ब्रवीमि ते ॥ ९ ॥

शल्य उवाच। प्रविश्यापस्ततो वह्निः ससमुद्राः सपल्वलाः।

आजगाम सरस्तच्च गूढो यत्र शतक्रतुः ॥ १० ॥ अथ तत्रापि पद्मानि विचिन्वन् भरतर्षभ । अन्वपश्यत् स देवेन्द्रं बिसमध्यगतं तदा ॥ ११ ॥ आगत्य च ततस्तूर्णं तमाचष्ट बृहस्पतिम् । अणुमात्रेण वपुषा पद्मतन्त्वाश्रितं प्रभुम् ॥ १२ ॥ गत्वा देवर्षिगन्धर्वैः सहितोऽथ बृहस्पतिः । पुराणैः कर्मभिर्देवं तुष्टाव बलसूदनम् ॥ १३ ॥ महासुरो हतः शक्र नमुचिर्दारुणस्त्वया । शम्बरश्च बलश्चैव तथोभौ घोरविक्रमौ ॥ १४ ॥ शतक्रतो विवर्द्धस्व सर्वान् शत्रून्निषूदय । उत्तिष्ठ शक्र सम्पश्य देवर्षींश्च समागतान् ॥ १५ ॥ महेन्द्र दानवान् हत्वा लोकास्त्रातास्त्वया विभो । अपां फेनं समासाद्य विष्णुतेजोऽतिबृंहितम् । त्वया वृत्रो हतः पूर्वं देवराज जगत्पते ॥ १६ ॥ त्वं सर्वभूतेषु शरण्य ईड्यस्त्वया समं विद्यते नेह भूतम् । त्वया धार्य्यन्ते सर्वभूतानि शक्र त्वं देवानां महिमानं चकर्थ ॥ १७ ॥ पाहि सर्वान् सलोकांश्च महेन्द्र बलमाप्नुहि । एवं संस्तूयमानश्च सोऽवर्द्धत शनैः शनैः ॥ १८ ॥ स्वञ्चैव वपुरास्थाय बभूव स बलान्वितः । अब्रवीच्च गुरुं देवो बृहस्पतिमवस्थितम् ॥ १९ ॥ किं कार्य्यमवशिष्टं वो हतस्त्वाष्ट्रो महासुरः । वृत्रश्च सुमहाकायो यो वै लोकाननाशयत् ॥ २० ॥

बृहस्पतिरुवाच । मानुषो नहुषो राजा देवर्षिगणतेजसा । देवराज्यमनुप्राप्त सर्वान्नो बाधते भृशम् ॥ २१ ॥

इन्द्र उवाच । कथञ्च नहुषो राज्यं देवानां प्राप दुर्लभम् । तपसा केन वा युक्त किंवीर्य्यो वा बृहस्पते ॥ २२ ॥

बृहस्पतिरुवाच । देवा भीताः शक्रमकामयन्त त्वया त्यक्तं महदैन्द्रं पदं तत् । तदा देवा पितरोऽथर्षयश्च गन्धर्वमुख्याश्च समेत्य सर्वे ॥ २३ ॥ गत्वाब्रुवन्नहुषं तत्र शक्र त्वं नो राजा भव भुवनस्य गोप्ता । तानब्रवीन्नहुषो नास्मि शक्त आप्यायध्वं तपसा तेजसा माम् ॥ २४ ॥ एवमुक्तैर्वर्द्धितश्चापि देवै राजाभवन्नहुषो

घोरवीर्य्यः । त्रैलोक्यं च प्राप्य राज्यं महर्षीन् कृत्वा वाहान् याति लोकान् दुरात्मा ॥ २५ ॥ तेजोहरं दृष्टिविषं सुघोरं मा त्वं पश्चेर्नहुषं वै कदाचित्। देवाश्च सर्व्वे नहुषं भयार्त्ता न पश्यन्तो गूढ़रूपाश्चरन्त. ॥ २६ ॥

शल्य उवाच। एवं वदत्यङ्गिरसां वरिष्ठे वृहस्पतौ लोकपाल: कुवेरः। वैवस्वतश्चैव यम पुराणो देवाश्च सोमो वरुणश्चाजगाम ॥ २७ ॥ ते वै समागम्य महेन्द्रमूचुर्दिष्ट्या त्वाष्ट्रो निहतश्चैव वृत्रः। दिष्ट्या च त्वां कुशलिनमक्षतञ्च पश्यामो वै निहतारिञ्च शक्र ॥ २८ ॥ स तान् यथावच्च हि लोकपालान् समेत्य वै प्रीतमना महेन्द्रः। उवाच चैतान् प्रतिभाष्य शक्रः सञ्चोदयिष्यन्नहुषस्यान्तरेण ॥ २९ ॥ राजा देवानां नहुषो घोररूपस्तत्र साह्यं दीयतां मे भवद्भिः। ते चाब्रुवन्नहुषो घोररूपो दृष्टीविषस्तस्य बिभीम देव ॥ ३० ॥ त्वं चेद्राजानं नहुषं पराजयेस्ततो वयं भागमर्हाम शक्र। इन्द्रोऽब्रवीद्भवतु भवानपाम्पतिर्यमः कुवेरश्च मयाभिषिक्तम् ॥ ३१ ॥ सम्प्राप्नुवन्तु दा सहैव दैवतैरिपुं जयामो नहुषं घोरदृष्टिम्। तत· शक्रं ज्वलनोऽप्याह भागं प्रयच्छ मह्यं भवतुसाह्यं करिष्ये ॥ ३२ ॥ तं प्राह शक्रो भवितान्ने तवापि चैन्द्राग्नो वै भाग एको महाक्रतौ।

शल्य उवाच। एवं सञ्चिन्त्य भगवान् महेन्द्रः पाकशासन। कुवेरं सर्व्वयक्षाणां धनानाञ्च प्रभुं तथा ॥ ३३ ॥ वैवस्वतं पितृणाञ्च वरुणञ्चाप्यपां तथा। आधिपत्यं ददौ शक्रः सत्कृत्य वरदस्तथा ॥ ३४ ॥

इति उद्योगपर्व्वणि सेनोद्योगपर्व्वणि इन्द्रवरुणादिसंवादे पञ्चदशोऽध्यायः ॥ १५ ॥

---

शल्य उवाच । अथ सञ्चिन्तयानस्य देवराजस्य धीमतः । नहुषस्य वधोपायं लोकपालैः सदैवतैः ॥ १ ॥ तपस्वी तत्र भगवानगस्त्यः प्रत्यदृश्यत । सोऽब्रवीदर्च्य देवेन्द्रं दिष्ट्या वै वर्द्धते भवान् ॥ २ ॥ विश्वरूपविनाशेन वृत्रासुरवधेन च । दिष्ट्या च नहुषो भ्रष्टो देवराज्यात् पुरन्दर । दिष्ट्या हतारिं पश्यामि भवन्तं बलसूदन ॥ ३ ॥

इन्द्र उवाच । स्वागतं ते महर्षेऽस्तु प्रीतोऽहं दर्शनात्तव । पाद्यमाचमनीयञ्च गामर्घ्यञ्च प्रतीच्छ मे ॥ ४ ॥

शल्य उवाच । पूजितं चोपविष्टं तमासने मुनिसत्तमम् । पर्य्यपृच्छत देवेशः प्रहृष्टो ब्राह्मणर्षभम् ॥ ५ ॥ एतदिच्छामि भगवन् कथ्यमानं द्विजोत्तम । परिभ्रष्टः कथं स्वर्गान्नहुषः पापनिश्चयः ॥६॥

अगस्त्य उवाच । शृणु शक्र प्रियं वाक्यं यथा राजा दुरात्मवान् । स्वर्गाद्भ्रष्टो दुराचारो नहुषो बलदर्पितः ॥ ७ ॥ श्रमार्त्तास्तु वहन्तस्तं नहुषं पापकारिणम् । देवर्षयो महाभागास्तथा ब्रह्मर्षयोऽमलाः ॥ ८ ॥ पप्रच्छुर्नहुषं देव संशयं जयतां वर । य इमे ब्राह्मणाः प्रोक्ता मन्त्रा वै प्रोक्षणे गवाम् ॥ ९ ॥ एते प्रमाणं भवत उताहो नेति वासव । नहुषो नेति तानाह तमसा मूढ़चेतनः ॥ १० ॥

ऋषय ऊचुः । अधर्मे संप्रवृत्तस्त्वं धर्मं न प्रतिपद्यसे । प्रमाणमेतदस्माकं पूर्वं प्रोक्तं महर्षिभिः ॥ ११ ॥

अगस्त्य उवाच । ततो विवदमानः स मुनिभिः सह वासव । अथ मामस्पृशन्मूर्द्धि पादेनाधर्मयोजितः ॥ १२ ॥ तेनाभूद्धततेजाश्च निःश्रीकश्च महीपतिः । ततस्तं सहसाविग्नमवोचं भयपीड़ितम् ॥ १३ ॥ यस्मात् पूर्वैः कृतं ब्रह्म ब्रह्मर्षिभिरनुष्ठितम् । अदुष्टं दूषयसि वै यच्च मूर्द्ध्न्यस्पृशः पदा ॥ १४ ॥ यच्चापि त्वमृषीन्मूढ़ ब्रह्मकल्पान् दुरासदान् । वाहान् कृत्वा वाहयसि

तेन स्वर्गाद्धतप्रभः ॥ १५ ॥ ध्वंस पाप परिभ्रष्टः क्षीणपुण्यो महीतलम् । दशवर्षसहस्राणि सर्परूपधरो महान् ॥ १६ ॥ विचरिष्यसि पूर्णेषु पुनः स्वर्गमवाप्स्यसि । एवं भ्रष्टो दुरात्मा स देवराज्यादरिन्दम ॥ १७ ॥ दिष्ट्या वर्द्धामहे शक्र हतो ब्राह्मणकण्टकः । त्रिपिष्टपं प्रपद्यस्व पाहि लोकान् शचीपते । जितेन्द्रियो जितामित्रस्तूयमानो महर्षिभिः ॥ १८ ॥

शल्य उवाच । ततो देवा भृशं तुष्टा महर्षिगणसंवृताः । पितरश्चैव यक्षाश्च भुजगा राक्षसास्तथा ॥ १९ ॥ गन्धर्वा देवकन्याश्च सर्वे चाप्सरसां गणाः । सरांसि सरितः शैलाः सागराश्च विशाम्पते ॥ २० ॥ उपागम्याब्रुवन् सर्वे दिष्ट्या वर्द्धसि शत्रुहन् । हतश्च नहुषः पापो दिष्ट्यागस्त्येन धीमता । दिष्ट्या पापसमाचारः कृतः सर्पो महीतले ॥ २१ ॥

इति उद्योगपर्व्वणि सेनोद्योगपर्व्वणि नहुषभ्रंशे षोडशोऽध्यायः ॥ १६ ॥



शल्य उवाच । ततः शक्रः स्तूयमानो गन्धर्वाप्सरसां गणैः । ऐरावतं समारुह्य द्विपेन्द्रं लक्षणैर्युतम् ॥ १ ॥ पावकः सुमहातेजा महर्षिश्च बृहस्पतिः । यमश्च वरुणश्चैव कुवेरश्च धनेश्वरः ॥ २ ॥ सर्वैर्देवैः परिवृतः शक्रो वृत्रनिसूदनः । गन्धर्वैरप्सरोभिश्च यातस्त्रिभुवनं प्रभुः ॥ ३ ॥ स समेत्य महेन्द्राण्या देवराजः शतक्रतुः । मुदा परमया युक्तः पालयामास देवराट् ॥ ४ ॥ ततस्तु भगवानिन्द्रः प्रहृष्टः समपद्यत । वरञ्च प्रददौ तस्मै अथर्वाङ्गिरसे तदा ॥ ५ ॥ अथर्वाङ्गिरसो नाम वेदेऽस्मिन् वै भविष्यति । उदाहरणमेतद्धि यज्ञभागञ्च लप्स्यसे ॥ ६ ॥ एवं

सम्पूज्य भगवानथवीङ्गिरसं तदा। व्यसर्ज्जयन्महाराज देवराज शतक्रतुः ॥ ७॥ सम्पूज्य सर्वांस्त्रिदशानृषींश्चापि तपोधनान्। इन्द्रः प्रमुदितो राजा धर्म्मेणापालयत् प्रजाः ॥ ८॥ एवं दुःखमनुप्राप्तमिन्द्रेण सह भार्य्यया। अज्ञातवासश्च कृतः शत्रूणां वधकाङ्क्षया ॥ ९॥ नात्र मन्युस्त्वया कार्य्यो यत् क्लिष्टोऽसि महावने। द्रौपद्या सह राजेन्द्र भ्रातृभिश्च महात्मभिः ॥ १०॥ एवं त्वमपि राजेन्द्र राज्यं प्राप्स्यसि भारत। वृत्रं हत्वा यथा प्राप्तः शक्रः कौरवनन्दन ॥ ११॥ दुराचारश्च नहुषो ब्रह्मद्विट् पापचेतनः। अगस्त्यशापाभिहतो विनष्टः शाश्वतीः समाः ॥ १२॥ एवं तव दुरात्मानः शत्रवः शत्रुसूदन। क्षिप्रं नाशङ्गमिष्यन्ति कर्णदुर्य्योधनादयः ॥ १३॥ ततः सागरपर्य्यन्तां भोक्ष्यसे मेदिनीमिमाम्। भ्रातृभिः सहितो वीर द्रौपद्या च सहानया ॥ १४॥ उपाख्यानमिदं शक्रविजयं वेदसम्मितम्। राज्ञा व्यूढेष्वनीकेषु श्रोतव्यं जयमिच्छता ॥ १५॥ तस्मात् संश्रवयामि त्वां विजयं जयतां वर। संस्तूयमाना वर्द्धन्ते महात्मानो युधिष्ठिर ॥ १६॥ क्षत्रियाणामभावोऽयं युधिष्ठिर महात्मनाम्। दुर्य्योधनापराधेन भीमार्ज्जुनबलेन च ॥ १७॥ आख्यानमिन्द्रविजयं य इदं नियतः पठेत्। धूतपाप्मा जितस्वर्गः परत्रेह च मोदते ॥ १८॥ न चारिजं भयं तस्य नापुत्रो वा भवेन्नरः। नापदं प्राप्नुयात् काञ्चिद्दीर्घमायुश्च विन्दति। सर्व्वत्र जयमाप्नोति न कदाचित् पराजयम् ॥ १९॥

वैशम्पायन उवाच। एवमाश्वासितो राजा शल्येन भरतर्षभ। पूजयामास विधिवच्छल्यं धर्म्मभृतां वरः ॥ २०॥ श्रुत्वा तु शल्यवचनं कुन्तीपुत्रो युधिष्ठिर। प्रत्युवाच महाबाहुर्मद्रराजमिदं वचः ॥ २१॥ भवान् कर्णस्य सारथ्यं करिष्यति न संशयः। तस्य तेजोवधः कार्य्यः कर्णस्यार्ज्जुनसंस्तवैः ॥ २२॥

शल्य उवाच। एवमेतत् करिष्यामि यथा मां सम्भाषसे।
यच्चान्यदपि वक्ष्यामि तत् करिष्याम्यहं तव ॥ २७ ॥

वैशम्पायन उवाच। ततस्तामन्त्र्य कौन्तेयाञ्छल्यो मद्राधिपस्तदा। जगाम सबलः श्रीमान् दुर्योधनमरिन्दम ॥ २८ ॥

इति उद्योगपर्वणि सैनोद्योगपर्वणि शल्यगमने
सप्तदशोऽध्यायः ॥ १७ ॥

---

वैशम्पायन उवाच। युयुधानस्ततो वीरः सात्वतानां महारथः। महता चतुरङ्गेण बलेनागाद्युधिष्ठिरम् ॥ १ ॥ तस्य योधा महावीर्य्या नानादेशसमागताः। नानाप्रहरणा वीराः शोभयाञ्चक्रिरे बलम् ॥ २ ॥ परश्वधैर्भिन्दिपालैः शूलतोमरमुद्गरैः। परिघैर्यष्टिभिः पाशैः करवालैश्च निर्मलैः ॥ ३ ॥ खड्गकार्मुकनिर्य्यूहैः शरैश्च विविधैरपि। तैलधौतैः प्रकाशद्भिः तदशोभत वै बलम् ॥ ४ ॥ तस्य मेघप्रकाशस्य शस्त्रैस्तैः शोभितस्य च। बभूव रूपं सैन्यस्य मेघस्येव सविद्युतः ॥ ५ ॥ अक्षौहिणी तु सा सेना तदा यौधिष्ठिरं बलम्। प्रविश्यान्तर्दधे राजन् सागरं कुनदी यथा ॥ ६ ॥ तथैवाक्षौहिणीं गृह्य चेदीनामृषभो बली। धृष्टकेतुरुपागच्छत् पाण्डवानमितौजसः ॥ ७ ॥ मागधश्च जयत्सेनो जरासन्धिर्महाबलः। अक्षौहिण्यैव सैन्यस्य धर्मराजमुपागमत् ॥ ८ ॥ तथैव पाण्ड्यो राजेन्द्र सागरानूपवासिभिः। वृतो बहुविधैर्योधैर्युधिष्ठिरमुपागमत् ॥ ९ ॥ तस्य सैन्यमतीवासीत्तस्मिन् बलसमागमे। प्रेक्षणीयतरं राजन् सुवेशं बलवत्तदा ॥ १० ॥ द्रुपदस्याप्यभूत् सेना नानादेशसमागतैः। शोभिता पुरुषैः शूरैः पुत्रैश्चास्य महारथैः ॥ ११ ॥ तथैव राजा मत्स्यानां विराटो वाहिनीपतिः। पार्वतीयैर्महीपालैः सहित पाण्डवानियात् ॥१२॥

दूतश्चैतद्य पाण्डूनां समाजग्मुर्महात्मनाम्। अक्षौहिण्यस्तु सप्तैता विविधध्वजसङ्कुलाः ॥ १३ ॥ युयुत्समानाः कुरुभिः पाण्डवान् समहर्षयन्। तथैव धार्तराष्ट्रस्य हर्षं समभिवर्द्धयन् ॥ १४ ॥ भगदत्तो महीपालः सेनामक्षौहिणीं ददौ। तस्य चीनैः किरातैश्च काञ्चनैरिव संवृतम् ॥ १५ ॥ बभौ बलमनाधृष्यं कर्णिकारवनं यथा। तथा भूरिश्रवाः शूरः शल्यश्च कुरुनन्दन ॥ १६ ॥ दुर्योधनमुपायातामक्षौहिण्या पृथक् पृथक्। कृतवर्मा च हार्दिक्यो भोजान्धकुकुरैः सह ॥ १७ ॥ अक्षौहिण्यैव सेनाया दुर्योधनमुपागमत्। तस्य तैः पुरुषव्याघ्रैर्वनमालाधरैर्बलम् ॥ १८ ॥ अशोभत यथामत्तैर्वनं प्रक्रीड़ितैर्गजैः। जयद्रथमुखाश्चान्ये सिन्धुसौवीरवासिनः ॥ १९ ॥ आजग्मुः पृथिवीपालाः कम्पयन्त इवाचलान्। तेषामक्षौहिणी सेना बहुला विबभौ तदा ॥ २० ॥ विधूयमाना वातेन बहुरूप इवाम्बुदः। सुदक्षिणश्च काम्बोजो यवनैश्च शकैस्तथा ॥ २१ ॥ उपाजगाम कौरव्यमक्षौहिण्या विशाम्पते। तस्य सेनासमावायः शलभानामिवाबभौ ॥ २२ ॥ स च सम्प्राप्य कौरव्यं तत्रैवान्तर्दधे तदा। तथा माहिष्मतीवासी नीलो नीलायुधैः सह ॥ २३ ॥ महीपालौ महावीर्यैर्दक्षिणापथवासिभिः। आवन्त्यौ च महीपालौ महाबलसुसंवृतौ ॥ २४ ॥ पृथगक्षौहिणीभ्यां तावभियातौ सुयोधनम्। केकयाश्च नरव्याघ्राः सोदर्य्याः पञ्च पार्थिवाः ॥ २५ ॥ संहर्षयन्तः कौरव्यमक्षौहिण्या समाद्रवन्। ततस्ततस्तु सर्वेषां भूमिपानां महात्मनाम् ॥ २६ ॥ तिस्रोऽन्याः समवर्त्तन्त वाहिन्यो भरतर्षभ। एवमेकादशावृत्ताः सेना दुर्योधनस्य ताः ॥ २७ ॥ युयुत्समानाः कौन्तेयान् नानाध्वजसमाकुलाः। न हास्तिनपुरे राजन्नवकाशोऽभवत्तदा ॥२८॥ राज्ञा स्वबलमुख्याना प्राधान्येनापि भारत। ततः पञ्चनदञ्चैव कृत्स्नञ्च कुरुजाङ्गलम् ॥ २९ ॥ तथा रोहितकारण्यं मरुभूमिश्च

केरला । अहिच्छत्रं कालकूटं गङ्गाकूलञ्च भारत ॥ ३० ॥ वारणं वाटधानञ्च यामुनश्चैव पर्वतः । एष देशः सुविस्तीर्णः प्रभूतधन-धान्यवान् ॥ ३१ ॥ बभूव कौरवेयाणां बलेनातीव संवृतः । तत्त् सैन्यं तथायुक्तं ददर्श स पुरोहितः । यः स पञ्चालराजेन प्रेषितः कौरवान् प्रति ॥ ३२ ॥

इति उद्योगपर्वणि सेनोद्योगपर्वणि पुरोहितसैन्यदर्शने अष्टादशोऽध्यायः समाप्तञ्च सेनोद्योगपर्व ॥ १८ ॥

———

सभि ॥ ११ ॥ ते सर्वं पृष्ठतः कृत्वा तत् सर्वं पूर्वकिल्बिषम् । शामेव कुरुभिः सार्धमिच्छन्ति कुरुपुङ्गवाः ॥ १२ ॥ तेषाञ्च वृत्तमाज्ञाय वृत्तं दुर्य्योधनस्य च । अनुनेतुमिहार्हन्ति धार्त्तराष्ट्रं सुहृज्जनाः ॥ १३ ॥ न हि ते विग्रहं वीराः कुर्वन्ति कुरुभिः सह । अविनाशेन लोकस्य काङ्क्षन्ते पाण्डवाः स्वकम् ॥ १४ ॥ यच्चापि धार्त्तराष्ट्रस्य हेतुः स्याद्विग्रहं प्रति । स च हेतुर्न मन्तव्यो बलीयांसस्तथा हि ते ॥ १५ ॥ अक्षौहिण्यश्च सप्तैव धर्मपुत्रस्य सङ्गताः । युयुत्समानाः कुरुभिः प्रतीक्षन्तेऽस्य शासनम् ॥ १६ ॥ अपरे पुरुषव्याघ्राः सहस्राक्षौहिणीसमाः । सात्यकिर्भीमसेनश्च यमौ च सुमहाबलौ ॥ १७ ॥ एकादशैताः पृतना एकतश्च समागताः । एकतश्च महाबाहुर्बहुरूपो धनञ्जयः ॥१८॥ यथा किरीटी सर्वाभ्य सेनाभ्योऽप्यतिरिच्यते । एवमेव महाबाहुर्वासुदेवो महाद्युतिः ॥१९॥ बहुलत्वञ्च सेनानां विक्रमञ्च किरीटिनः । बुद्धिमत्ताञ्च कृष्णस्य बुद्धा युध्येत को नरः ॥२०॥ ते भवन्तो यथाधर्मं यथासमयमेव च । प्रयच्छन्तु प्रदातव्यं मा वः कालोऽत्यगादयम् ॥ २१ ॥

इति उद्योगपर्वणि सञ्जययानपर्वणि पुरोहितवाक्ये एकोनविंशोऽध्यायः ॥ १९ ॥

---

वैशम्पायन उवाच । तस्य तद्वचनं श्रुत्वा प्रज्ञावृद्धो महाद्युतिः । सम्पूज्यैनं यथाकालं भीष्मो वचनमब्रवीत् ॥ १ ॥ दिष्ट्या कुशलिनः सर्वे सह दामोदरेण ते । दिष्ट्या सहायवन्तश्च दिष्ट्या धर्मे च ते रताः ॥ २ ॥ दिष्ट्या च सन्धिकामास्ते भ्रातरः कुरुनन्दनाः । दिष्ट्या न युद्धमनसः पाण्डवाः सह बान्धवैः ॥ २ ॥ भवता सत्यमुक्तन्तु एवमेतन्न संशयः । अतितीक्ष्णन्तु ते वाक्यं ब्राह्मण्यादिति मे मतिः ॥ ३ ॥ असंशयं क्लेशितास्ते वने चेह च

पाण्डवाः । प्राप्ताश्च धर्मतः सर्वं पितुर्धनमसंशयम् ॥ ४ ॥ किरीटी बलवान् पार्थः कृतास्त्रश्च महारथः । को हि पाण्डुसुतं युद्धे विषहेत धनञ्जयम् ॥ ५ ॥ अपि वज्रधरः साक्षात् किमुतान्ये धनुर्भृतः । त्रयाणामपि लोकानां समर्थ इति मे मतिः ॥ ६ ॥ भीष्मे ब्रुवति तद्वाक्यं धृष्टमाक्षिप्य मन्युना । दुर्य्योधनं समालोक्य कर्णो वचनमब्रवीत् ॥ ७ ॥ न तन्नाविदितं ब्रह्मन् लोके भूतेन केनचित् । पुनरुक्तेन किन्तेन भाषितेन पुनः पुनः ॥ ८ ॥ दुर्य्योधनार्थे शकुनिर्द्यूते निर्ज्जितवान् पुरा । समयेन गतोऽरण्यं पाण्डुपुत्रो युधिष्ठिरः ॥ ९ ॥ न तं समयमादृत्य राज्यमिच्छन्ति पैतृकम् । बलमाश्रित्य मत्स्यानां पञ्चालानाञ्च मूर्खवत् ॥ १० ॥ दुर्य्योधनो भयाद्विद्वन्न दद्यात् पादमन्ततः । धर्मतस्तु महीं कृत्स्नां प्रदद्याच्छत्रवेऽपि च ॥ ११ ॥ यदि काङ्क्षन्ति ते राज्यं पितृपैतामहं पुनः । यथाप्रतिज्ञं कालं तं चरन्तु वनमाश्रिताः ॥ १२ ॥ ततो दुर्य्योधनस्याङ्के वर्त्तन्तामकुतोभयाः । अधार्म्मिकीं तु मा बुद्धिं मौर्ख्यात् कुर्वन्तु केवलाम् ॥ १३ ॥ अथ ते धर्ममुत्सृज्य युद्धमिच्छन्ति पाण्डवाः । आसाद्येमान् कुरुश्रेष्ठान् स्मरिष्यन्ति वचो मम ॥ १४ ॥

भीष्म उवाच । किन्नु राधेय वाचा ते कर्म तत् स्मर्त्तुमर्हसि । एक एव यदा पार्थः षड्रथान् जितवान् युधि ॥ १५ ॥ न चेदेवं करिष्यामो यदयं ब्राह्मणोऽब्रवीत् । ध्रुवं युधि हतास्तेन भक्षयिष्याम पांशुकान् ॥ १६ ॥

वैशम्पायन उवाच । धृतराष्ट्रस्ततो भीष्ममनुमान्य प्रसाद्य च । अवभर्त्स्य च राधेयमिदं वचनमब्रवीत् ॥ १७ ॥ अस्मद्धितं वाक्यमिदं भीष्मः शान्तनवोऽब्रवीत् । पाण्डवानां हितं चैव सर्वस्य जगतस्तथा ॥ १८ ॥ चिन्तयित्वा तु पार्थेभ्यः प्रेषयिष्यामि सञ्जयम् । स भवान् प्रतियात्वद्य पाण्डवानेव मा चिरम् ॥ १९ ॥

तं सत्कृत्य च कौरव्य प्रेषयामास पाण्डवान् । सभामध्ये समाहूय सञ्जयं वाक्यमब्रवीत् ॥ १९ ॥

इति उद्योगपर्वणि सञ्जययानपर्वणि सञ्जययाहाने विंशोऽध्यायः ॥ २० ॥

---

धृतराष्ट्र उवाच । प्राप्तानाहुः सञ्जय पाण्डुपुत्रानुपप्लव्ये तान् विजानीहि गत्वा । अजातशत्रुञ्च सभाजयेथा दिष्ट्या न स्थानमुपस्थितस्त्वम् ॥ १ ॥ सर्वान् वदेः सञ्जय स्वस्तिमन्तः कृच्छ्रं वासमतदर्हा निरुष्य । तेषां शान्तिर्विद्यतेऽस्मासु शीघ्रं मिथ्योपेतानामुपकारिणां सताम् ॥ २ ॥ नाहं क्वचित् सञ्जय पाण्डवानां मिथ्यावृत्तिं काञ्चन जातु पश्ये । सर्वां श्रियं ह्यात्मवीर्येण लब्ध्वा पर्याकार्षुः पाण्डवा मह्यमेव ॥ ३ ॥ दोषं ह्येषां नाध्यगच्छं परीप्सन्नित्यं कञ्चिद्येन गर्हेम पार्थान् । धर्मार्थाभ्यां कर्म कुर्वन्ति नित्यं सुखप्रिये नानुरुध्यन्ति कामात् ॥ ४ ॥ घर्मं शीतं क्षुत्पिपासे तथैव निद्रां तन्द्रीं क्रोधहर्षौ प्रमादम् । धृत्या चैव प्रज्ञया चाभिभूय धर्मार्थयोगात् प्रीतयन्ति पार्थाः ॥ ५ ॥ त्यजन्ति मित्रेषु धनानि काले न संवासाज्जीर्यति तेषु मैत्री । यथार्हमानार्थकरा हि पार्थास्तेषां द्वेष्टा नास्त्याजमीढस्य पक्षे ॥ ६ ॥ अन्यत्र पापाद्विषमान्मन्दबुद्धेर्दुर्योधनात् क्षुद्रतराच्च कर्णात् । तेषां हीमौ हीनसुखप्रियाणां महात्मनां वर्धयतो हि तेजः ॥ ७ ॥ उत्थानवीर्यं सुखमेधमानो दुर्योधनः सुकृतं मन्यते तत् । तेषां भागं यच्च मन्येत बालः शक्यं हर्तुं जीवतां पाण्डवानाम् ॥ ८ ॥ यस्यार्जुनः पदवीं केशवश्च वृकोदरः सात्यकोऽजातशत्रोः । माद्रीपुत्रौ सृञ्जयाश्चापि यान्ति पुरा युद्धात् साधु तस्य प्रदानम् ॥ ९ ॥ स ह्येवैकः पृथिवीं सव्यसाची गाण्डीवधन्वा प्रणुदेद्रथस्थः । तथा

जिष्णुः क्रोधवोऽप्यप्रधृष्यो लोकत्रयस्याधिपतिर्महात्मा ॥१०॥ तिष्ठेत कस्तस्य मर्त्यः पुरस्तात् सर्वलोकेषु वरेण्य एकः। पर्जन्यघोषान् प्रवपञ्छरौघान् पतङ्गसङ्घानिव शीघ्रवेगान् ॥ ११ ॥ दिशं ह्युदीचीमपि चोत्तरान् कुरून् गाण्डीवधन्वैकरथो जिगाय। धनं चैषामाहरत सव्यसाची सेनानुगान् द्राविडांश्चैव चक्रे ॥ १२ ॥ यश्चैव देवान् खाण्डवे सव्यसाची गाण्डीवधन्वा प्रजिगाय सेन्द्रान्। उपाहरत फाल्गुनो जातवेदसे यशो मानं वर्द्धयन् पाण्डवानाम् ॥ १३ ॥ गदाभृतां नास्ति समोऽत्र भीमाद्धस्त्यारोहो नास्ति समश्च तस्य। रथेऽर्जुनादाहुरहीनमेनं बाह्वोर्बलेनायुतनागवीर्य्यम् ॥ १४ ॥ सुशिक्षितः कृतवैरस्तरस्वी दहेत क्रुद्धस्तरसा धार्त्तराष्ट्रान्। सदात्यमर्षी बलवान्न शक्यो युद्धे जेतुं वासवेनापि साक्षात् ॥ १५ ॥ सुचेतसौ बलिनौ शीघ्रहस्तौ सुशिक्षितौ भ्रातरौ फाल्गुनेन। श्येनौ यथा पक्षिपूगान् रुजन्तौ माद्रीपुत्रौ शेषयतौ न शत्रून् ॥ १६ ॥ एतद्बलं पूर्णमस्माकमेवं यत् सत्यं तान् प्राप्य नास्तीति मन्ये। तेषां मध्ये वर्त्तमानस्तरस्वी धृष्टद्युम्नः पाण्डवानामिहैकः ॥ १७ ॥ सहामात्यः सोमकानां प्रबर्हः सन्त्यक्तात्मा पाण्डवार्थे श्रुतो मे। अजातशत्रुं प्रसहेत कोऽन्यो येषां स स्यादग्रणीर्वृष्णिसिंहः ॥ १८ ॥ सहोषितश्चरितार्थो वयःस्थो मत्स्येयानामधिपो वै विराटः। स वै सपुत्रः पाण्डवार्थे च शश्वद्युधिष्ठिरे भक्त इति श्रुतं मे ॥ १९ ॥ अवरुद्धा बलिनः केकयेभ्यो महेष्वासा भ्रातरः पञ्च सन्ति। केकयेभ्यो राज्यमाकाङ्क्षमाणा युद्धार्थिनश्चानुवसन्ति पार्थान् ॥ २० ॥ सर्वे च वीराः पृथिवीपतीनां समानीताः पाण्डवार्थे निविष्टाः। शूरानहं भक्तिमतः शृणोमि प्रीत्या युक्तान् संश्रितान् धर्मराजम् ॥ २१ ॥ गिर्य्याश्रया दुर्गनिवासिनश्च योधाः पृथिव्याः कुलजाश्च दृढाः। म्लेच्छाश्च नानायुधवीर्य्यवन्तः समागताः पाण्डवार्थे निविष्टाः ॥ २२

पाण्ड्यश्च राजा ऽमितीन्द्रकल्पो युधि प्रवीरैर्बहुभिः समेतः ।
समागतः पाण्डवार्थे महात्मा लोकप्रवीरोऽप्रतिवीर्य्यतेजाः ॥ २३ ॥
अस्त्रं द्रोणादर्जुनाद्वासुदेवात् कृपाद्भीष्माद्येन कृतं शृणोमि । यन्तं
कार्ष्णिप्रतिममाहुरेकं स सात्यकिः पाण्डवार्थे निविष्टः ॥ २४ ॥
उपाश्रिताश्चेदिकरूषकाश्च सर्वोद्योगैर्भूमिपालाः समेताः । तेषां
मध्ये सूर्य्यमिवातपन्तं श्रियावृतं चेदिपतिं ज्वलन्तम् ॥ २५ ॥
अस्तम्भनीयं युधि मन्यमानो ज्याकर्षतां श्रेष्ठतमं पृथिव्याम् ।
सर्वोत्साहं क्षत्रियाणां निहत्य प्रसह्य कृष्णस्तरसा ममर्द्द ॥ २६ ॥
यशोमानौ वर्द्धयन् पाण्डवानां पुराभिनच्छिशुपालं समीक्ष्य ।
यस्य सर्वे वर्द्धयन्ति स्म मानं करूषराजप्रमुखा नरेन्द्राः ॥ २७ ॥
तमसह्यं केशवं तत्र मत्वा सुग्रीवयुक्तेन रथेन कृष्णम् । सम्प्राद्रवं-
श्चेदिपतिं विहाय सिंहं दृष्ट्वा क्षुद्रमृगा इवान्ये ॥ २८ ॥ यस्तं
प्रतीपस्तरसा प्रत्युदीयादाशंसमानो द्वैरथे वासुदेवम् । सोऽशेत
कृष्णेन हतः परासुर्वातेनेवोन्मथितः कर्णिकारः ॥ २९ ॥ परा-
क्रमं मे यदवेदयन्त तेषामर्थे सञ्जय केशवस्य । अनुस्मरंस्तस्य
कर्माणि विष्णोर्गावल्गणे नाधिगच्छामि शान्तिम् ॥ ३० ॥ न
जातु ताञ्छत्रुरन्यः सहेत येषां स स्यादग्रणीर्वृष्णिसिंहः । प्रवे-
पते मे हृदयं भयेन श्रुत्वा कृष्णावेकरथे समेतौ ॥ ३१ ॥ न चेद्-
गच्छेत्सङ्गरं मन्दबुद्धिस्ताभ्यां लभेच्छर्म तदा सुतो मे । नो चेत्
कुरून् सञ्जय निर्द्दहेतामिन्द्रो विष्णुर्दैत्यसेनां यथैव ॥ ३२ ॥ मतो
हि मे शक्रसमो धनञ्जयः सनातनो वृष्णिवीरश्च विष्णुः । धर्मा-
रामो ह्रीनिषेधस्तरस्वी कुन्तीपुत्रः पाण्डवोऽजातशत्रुः ॥ ३३ ॥
दुर्य्योधनेन निकृतो मनस्वी नो चेत् क्रुद्धः प्रदहेद्धार्त्तराष्ट्रान् । नाहं
तथा ह्यर्जुनाद्वासुदेवाद्भीमाद्वापि यमयोर्वा बिभेमि ॥ ३४ ॥ यथा
राज्ञः क्रोधदीप्तस्य सूत मन्योरहं भीततरः सदैव । महातपा
ब्रह्मचर्य्येण युक्तः सङ्कल्पोऽयं मानसस्तस्य सिध्येत् ॥ ३५ ॥ तस्य

क्रोधं सञ्जयार्त्तं समीक्ष्य स्थाने जानन् अश्रमसाद्य भीत । स
गच्छ शीघ्रं प्रहितो रथेन पञ्चालराजस्य चमूनिवेशनम् ॥ ३६ ॥
अजातशत्रुं कुशलं स्म पृच्छेः पुनः पुनः प्रीतियुक्तं वदेस्त्वम् । जना-
र्द्दनं चापि समेत्य तात महामात्रं वीर्य्यवतामुदारम् ॥ ३७ ॥
अनामयं मद्वचनेन पृच्छेर्धृतराष्ट्रः पाण्डवैः शान्तिमीप्सुः । न
तस्य किञ्चिद्वचनं न कुर्य्यात् कुन्तीपुत्रो वासुदेवस्य सूत ॥ ३८ ॥
प्रियश्चैषामात्मसमश्च कृष्णो विद्वांश्चैषां कर्म्मणि नित्ययुक्तः । समा-
नीतान् पाण्डवान् सृञ्जयांश्च जनार्द्दनं युयुधानं विराटम् ॥ ३९ ॥
अनामयं मद्वचनेन पृच्छेः सर्व्वांस्तथा द्रौपदेयांश्च पञ्च । यद्यत्तत्र
प्राप्तकालं परेभ्यस्त्वं मन्येथा भारतानां हितञ्च । तत्तद्भाषेथाः
सञ्जय राजमध्ये न मूर्च्छयेद्यन्न च युद्धहेतुः ॥ ४० ॥

इति उद्योगपर्व्वणि सञ्जययानपर्व्वणि धृतराष्ट्रकथायां
एकविंशोऽध्यायः ॥ २१ ॥

---

वैशम्पायन उवाच । राज्ञस्तु वचनं श्रुत्वा धृतराष्ट्रस्य
सञ्जयः । उपप्लव्यं ययौ द्रष्टुं पाण्डवानमितौजसः ॥ १ ॥ स तु
राजानमासाद्य कुन्तीपुत्रं युधिष्ठिरम् । अभिवाद्य ततः पूर्व्वं
सूतपुत्रोऽभ्यभाषत ॥ २ ॥ गावल्गणिः सञ्जयः सूतसूनुरजात-
शत्रुमवदत् प्रतीतः । दिष्ट्या राजंस्त्वामरोगं प्रपश्ये सहायवन्तञ्च
महेन्द्रकल्पम् ॥ ३ ॥ अनामयं पृच्छति त्वाम्बिकेयो वृद्धो राजा
धृतराष्ट्रो मनीषी । कच्चिद्भीमः कुशली पाण्डवाग्र्यो धनञ्जयस्तौ
च माद्रीतनूजौ ॥ ४ ॥ कच्चित् कृष्णा द्रौपदी राजपुत्री सत्यव्रता
वीरपत्नी सपुत्रा । मनस्विनी यत्र च वाञ्छसि त्वमिष्टान् कामान्
भारत स्वस्तिकामः ॥ ५ ॥

युधिष्ठिर उवाच । गावल्गणे सञ्जय स्वागतं ते प्रीयामहे

वयं दर्शनेन। अनामयं प्रतिजाने तवाहं सहानुजै: कुशली चास्मि विदन् ॥ ६ ॥ चिरादिदं कुशलं भारतस्य श्रुत्वा राज्ञः कुरुवृद्धस्य सूत। मन्ये साक्षाद्दृष्टमहं नरेन्द्रं दृष्ट्वैव त्वां सञ्जय प्रीतियोगात् ॥ ७ ॥ पितामहो नः स्थविरो मनस्वी महाप्राज्ञः सर्वधर्मोपपन्नः। स कौरव्यः कुशली तात भीष्मो यथापूर्वं वृत्तिरस्यास्य कच्चित् ॥ ८॥ कच्चिद्राजा धृतराष्ट्रः सपुत्रो वैचित्रवीर्यः कुशली महात्मा। महाराजो वाह्लिकः प्रातिपेयः कच्चिद्विद्वान् कुशली सूतपुत्र ॥ ९ ॥ स सोमदत्तः कुशली तात कच्चिद् भूरिश्रवाः सत्यसन्धः शलश्च। द्रोणः सपुत्रश्च कृपश्च विप्रो महेष्वासाः कच्चिदेतेऽप्यरोगाः ॥ १० ॥ सर्वे कुरुभ्यः स्पृहयन्ति सञ्जय धनुर्धरा ये पृथिव्यां प्रधानाः। महाप्रज्ञाः सर्वशास्त्रावदाता धनुर्भृतां मुख्यतमाः पृथिव्याम् ॥ ११ ॥ कच्चिन्मानं तात लभन्त एते धनुर्भृतः कच्चिदेतेऽप्यरोगाः। येषां राष्ट्रे निवसति दर्शनीयो महेष्वासः शीलवान् द्रोणपुत्रः ॥ १२ ॥ वैश्यापुत्रः कुशली तात कच्चिन्महाप्राज्ञो राजपुत्रो युयुत्सुः। कर्णोऽमात्यः कुशली तात कच्चित् सुयोधनो यस्य मन्दो विधेयः ॥ १३ ॥ स्त्रियो वृद्धा भारतानां जनन्यो महानस्यो दासभार्य्याश्च सूत। वध्वः पुत्रा भागिनेया भगिन्यो दौहित्रा वा कच्चिदप्यव्यलीकाः ॥ १४ ॥ कच्चिद्राजा ब्राह्मणानां यथावत् प्रवर्त्तते पूर्ववत्तात वृत्तिम्। कच्चिद्दायान्मामकान् धार्त्तराष्ट्रो द्विजातीनां सञ्जय नोपहन्ति ॥ १५ ॥ कच्चिद्राजा धृतराष्ट्रः सपुत्र उपेक्षते ब्राह्मणातिक्रमान् वै। स्वर्गस्य कच्चिन्न तथा वर्त्मभूतामुपेक्षते तेषु सदैव वृत्तिम् ॥ १६ ॥ एतज्ज्योतिरुत्तमं जीवलोके शुक्लं प्रजानां विहितं विधात्रा। ते चेल्लोभं न नियच्छन्ति मन्दाः कृतस्नो नाशो भविता कौरवाणाम् ॥ १७ ॥ कच्चिद्राजा धृतराष्ट्रः सपुत्रो बुभूषते वृत्तिममात्यवर्गे। कच्चिन्न भेदेन जिजीविषन्ति सुहृद्रूपा दुर्हृदश्चैकमत्यात् ॥ १८ ॥

कच्चिन्न पापं कथयन्ति तात ते पाण्डवानां कुरवः सर्व्व एव । द्रोणः सपुत्रश्च कृपश्च वीरो नास्मासु पापानि वदन्ति कच्चित् ॥२०॥ कच्चिद्राजानं धृतराष्ट्रं सपुत्रं समेत्याहुः कुरवः सर्व एव । कच्चिद्दृष्ट्वा दस्युसङ्घान् समेतान् स्मरन्ति पार्थस्य युधां प्रणेतुः ॥ २१ ॥ मौर्वीभुजाग्रप्रहितान् स्म तात दोधूयमानेन धनुर्गुणेन । गाण्डीवमुक्तान् स्तनयित्नुघोषानजिह्मगान् कच्चिदनुस्मरन्ति ॥ २२ ॥ न चापश्यं कच्चिदहं पृथिव्यां योधं समं चाधिकञ्चार्जुनेन । यस्यैकषष्टिर्निशितास्तीक्ष्णधाराः सुवाससः सम्मतो हस्तवाप ॥ २३ ॥ गदापाणिर्भीमसेनस्तरस्वी प्रवेपयंश्चैव महाननीके । नागः प्रभिन्न इव नड्वलेषु चङ्क्रम्यते कच्चिदेनं स्मरन्ति ॥ २४ ॥ माद्रीपुत्रः सहदेवः कलिङ्गान् समागतानजयद्दन्तकूरे । वामेनास्यन् दक्षिणेनैव यो वै महाबलं कच्चिदेनं स्मरन्ति ॥ २५ ॥ पुरा जेतुं नकुलः प्रेषितोऽयं शिबींस्त्रिगर्त्तान् सञ्जय पश्यतस्ते । दिशं प्रतीचीं वशमानयन्मे माद्रीसुतं कच्चिदेनं स्मरन्ति ॥ २६ ॥ पराभवो द्वैतवने य आसीद्दुर्मन्त्रिते घोषयात्रागतानाम् । यत्र मन्दाञ्छत्रुवशं प्रयातानमोचयद्भीमसेनो जयश्च ॥ २७ ॥ अहं पश्चादर्जुनमभ्यरक्षं माद्रीपुत्रौ भीमसेनोऽप्यरक्षत् । गाण्डीवभृच्छत्रुसङ्घानुदस्य स्वस्त्यागमत् कच्चिदेनं स्मरन्ति ॥ २८ ॥ न कर्मणा साधुनैकेन नूनं सुखं शक्यं वै भवतीह सञ्जय । सर्वात्मना परिजेतुं वयञ्चेन्न शक्नुमो धृतराष्ट्रस्य पुत्रम् ॥ २९ ॥

इति उद्योगपर्वणि सञ्जययानपर्वणि युधिष्ठिरप्रश्ने द्वाविंशोऽध्यायः ॥ २२ ॥

---

सञ्जय उवाच । यथात्थ मे पाण्डव तत्तथैव कुरून् कुरुश्रेष्ठजनञ्च पृच्छसि । अनामयास्तात मनस्विनस्ते कुरुश्रेष्ठान्

पृच्छसि पार्थ यांस्त्वम् ॥ १ ॥ सन्त्येव वृद्धाः साधवो धार्त्तराष्ट्रे सन्त्येव पापाः पाण्डव तस्य विद्धि । दद्याद्रिपुभ्योऽपि हि धार्त्तराष्ट्रः कुतो दायांल्लोपयेद्ब्राह्मणानाम् ॥ २ ॥ यद्युष्माकं वर्त्ततेऽसौ न धर्म्यमद्रुग्धेषु द्रुग्धवत्तन्न साधु । मित्रध्रुक् स्याद्धृतराष्ट्रः सपुत्रो युष्मान् द्विषन् साधुवृत्तानसाधुः ॥ ३ ॥ न चानुजानाति भृशञ्च तप्यते शोचत्यन्तः स्थविरोऽजातशत्रो । शृणोति हि ब्राह्मणानां समेत्य मित्रद्रोहः पातकेभ्यो गरीयान् ॥ ४ ॥ स्मरन्ति तुभ्यं नरदेव संयुगे युद्धे च जिष्णोश्च युधां प्रणेतुः । समुत्कृष्टे दुन्दुभिशङ्खशब्दे गदापाणिं भीमसेनं स्मरन्ति ॥ ५ ॥ माद्रीसुतौ चापि रणाजिरेषु सर्वा दिशः सम्पतन्तौ स्मरन्ति । सेनां वर्षन्तौ शरवर्षैरजस्रं महारथौ समरे दुष्प्रकम्पौ ॥ ६ ॥ न त्वेव मन्ये पुरुषस्य राजन्ननागतं ज्ञायते यद्भविष्यम् । त्वञ्चेत्तथा सर्वधर्मोपपन्नः प्राप्तः क्लेशं पाण्डव कृच्छ्ररूपम् ॥ ७ ॥ त्वमेवैतत् सर्वमतश्च भूयः समीकुर्य्याः प्रज्ञयाऽजातशत्रो । न कामार्थं सन्त्यजेयुर्हि धर्मं पाण्डोः सुताः सर्व एवेन्द्रकल्पाः ॥ ८ ॥ त्वमेवैतत् प्रज्ञयाऽजातशत्रो समीकुर्य्या येन शर्माप्नुयुस्ते । धार्त्तराष्ट्राः पाण्डवाः सृञ्जयाश्च ये चाप्यन्ये सन्निविष्टा नरेन्द्राः ॥ ९ ॥ यन्माब्रवीद्धृतराष्ट्रो निशायामजातशत्रो वचनं पिता ते । सहामात्यः सहपुत्रश्च राजन् समेत्य तां वाचमिमां निबोध ॥ १० ॥

इति उद्योगपर्वणि सञ्जययानपर्वणि सञ्जयवाक्ये त्रयोविंशोऽध्यायः ॥ २३ ॥

---

युधिष्ठिर उवाच । समागताः पाण्डवाः सृञ्जयाश्च जनार्द्दनो युयुधानो विराटः । यत्ते वाक्यं धृतराष्ट्रानुशिष्टं गावल्गणे ब्रूहि तत् सूतपुत्र ॥ १ ॥

सञ्जय उवाच । अजातशत्रुञ्च वृकोदरञ्च धनञ्जयं माद्रवती-
सुतौ च । आमन्त्रये वासुदेवञ्च शौरिं युयुधानं चेकितानं विराटम्
॥ १ ॥ पञ्चालानामधिपञ्चैव वृद्धं धृष्टद्युम्नं पार्षतं याज्ञसेनिम् ।
सर्वे वाचं शृणुतेमां मदीयां वक्ष्यामि यां भूतिमिच्छन् कुरूणाम्
॥ २ ॥ शमं राजा धृतराष्ट्रोऽभिनन्दन्नयोजयत्त्वरमाणो रथं मे ।
सभ्रातृपुत्रस्वजनस्य राज्ञस्तद्रोचतां पाण्डवानां शमोऽस्तु ॥ ३ ॥
सर्वैर्धर्मैः समुपेतास्तु पार्थाः संस्थानेन मार्द्दवेनार्जवेन । कुले
जाता अनृशंसा वदान्या ह्रीनिषेवाः कर्मणां निश्चयज्ञाः ॥ ४ ॥
न युज्यते कर्म युष्मासु हीनं सत्त्वं हि वस्तादृशं भीमसेनाः ।
उद्भासते ह्यञ्जनबिन्दुवत्तच्छुभ्रे वस्त्रे यद्भवेत् किल्बिषं वः ॥ ५ ॥
सर्व्वक्षयो दृश्यते यत्र कृत्स्नः पापोदयो निरयोऽभावसंस्थः । क-
स्तत्र कुर्य्याज्जातु कर्म प्रजानन् पराजयो यत्र समो जयश्च ॥ ६ ॥
ते वै धन्या यैः कृतं ज्ञातिकार्य्यं ते वै पुत्राः सुहृदो बान्धवाश्च ।
उपक्रुष्टं जीवितं सन्त्यजेयुर्यतः कुरूणां नियतो वै भवः स्यात् ॥७॥
ते चेत् कुरूननुशिष्याथ पार्था निर्णीय सर्वान् द्विषतो निगृह्य ।
समन्तु वस्तज्जीवितं मृत्युना स्याद्यज्जीवध्वं ज्ञातिवधेन साधु ॥ ८ ॥
को ह्येव युष्मान् सह केशवेन सचेकितानान् पार्षतबाहुगुप्तान् ।
ससात्यकीन् विषहेतेह जेतुं लब्ध्वापि देवान् सचिवानपीन्द्रः ॥९॥
को वा कुरून् द्रोणभीष्माभिगुप्तानश्वत्थाम्ना शल्यकृपादिभिश्च ।
रणे विजेतुं विषहेत राजन् राधेयगुप्तान् सह भूमिपालैः ॥१०॥
महद्बलं धार्त्तराष्ट्रस्य राज्ञः को वै शक्तो हन्तुमक्षीयमाणम् ।
सोऽहं जये चैव पराजये च निःश्रेयसं नाधिगच्छामि किञ्चित्
॥ ११ ॥ कथं हि नीचा इव दौष्कुलेया निर्धर्मार्थं कर्म कुर्य्युश्च
पार्थाः । सोऽहं प्रसाद्य प्रणतो वासुदेवं पञ्चालानामधिपं चैव
वृद्धम् ॥ १२ ॥ कृताञ्जलिः शरणं वः प्रपद्ये कथं स्वस्ति स्यात्
कुरुसृञ्जयानाम् । न ह्येवमेवं वचनं वासुदेवो धनञ्जयो वा जातु

किञ्चिन्न कुर्यात् ॥ १३ ॥ प्राणान् ददौ याच्यमानः कुतोऽन्य-देतद्विद्वन् साधनार्थं ब्रवीमि। एतद्राष्ट्रो भीष्मपुरोगमस्य मतं यद्वः शान्तिरिहोत्तमा स्यात् ॥ १४ ॥

इति उद्योगपर्वणि सञ्जययानपर्वणि सञ्जयवाक्ये चतुर्विंशोऽध्यायः ॥ २४ ॥

---

युधिष्ठिर उवाच। कां नु वाचं सञ्जय मे शृणोषि युद्धैषिणीं येन युद्धाद्बिभेषि। अयुद्धं वै तात युद्धाद्गरीयः कस्तल्लब्ध्वा जातु युध्येत सूत ॥ १ ॥ अकुर्वतश्चेत् पुरुषस्य सञ्जय सिध्येत सङ्कल्पो मनसा यं यमिच्छेत्। न कर्म कुर्याद्विदितं वै ममैतदन्यत्र युद्धाद्बहु यल्लघीयः ॥ २ ॥ कुतो युद्धं जातु नरोऽवगच्छेत् को दैवशप्तो हि वृणीत युद्धम्। सुखैषिणः कर्म कुर्वन्ति पार्था धर्मादहीनं यच्च लोकस्य पथ्यम् ॥ ३ ॥ धर्मोदयं सुखमाशंसमानाः कृच्छ्रोपायं तत्त्वतः कर्म दुःखम्। सुखं प्रेप्सुर्विजिघांसुश्च दुःखं य इन्द्रियाणां प्रीतिवशानुगामी ॥ ४ ॥ कामाभिध्या स्वशरीरं दुनोति यया प्रमुक्तो न करोति दुःखम्। यथेध्यमानस्य समिद्धतेजसो भूयो बलं वर्द्धते पावकस्य ॥ ५ ॥ कामार्थलाभेन तथैव भूयो न तृप्यते सर्पिषेवाग्निरिद्धः। सम्पश्येमं भोगचयं महान्तं सहास्माभिर्धृतराष्ट्रस्य राज्ञः ॥ ६ ॥ नाश्रेयानीश्वरो विग्रहाणां नाश्रेयान् वै गीतशब्दं शृणोति। नाश्रेयान् वै सेवते माल्यगन्धान् चाप्यश्रेयाननुलेपनानि ॥ ७ ॥ नाश्रेयान् वै प्रावारान् सन्निवस्ते कथं तस्मात् संप्रणुदेत् कुरुभ्यः। अत्रैव स्यादबुधस्यैष कामः प्रायः शरीरे हृदयं दुनोति ॥ ८ ॥ स्वयं राजा विषमस्थः परेषु सामर्थ्यमन्विच्छति तन्न साधु। यथात्मनः पश्यति वृत्तमेव तथा परेषामपि सोऽभ्युपैतु ॥ ९ ॥ आसन्नमग्निन्तु निदाघकाले गम्भीर

कक्षे गहने विसृज्य। यथा ह्यहं वायुवशेन शोचेत् क्षेमं मुमुचुः शिशिरव्यपाये ॥ १० ॥ आत्मैश्वर्य्यो धृतराष्ट्रोऽद्य राजा लालप्यते सञ्जय कस्य हेतोः। प्रगृह्य दुर्बुद्धिमनार्य्यवे रतं पुत्रं मन्दं मूढमन्त्रिणात्तु ॥ ११ ॥ अनाप्तवचाप्ततमस्य वाचः सुयोधनो विदुरस्यावमन्य। सुतस्य राजा धृतराष्ट्रः प्रियैषी सम्बुध्यमानो विशतेऽधर्म्ममेव ॥ १२ ॥ मेधाविनं ह्यर्थकामं कुरूणां बहुश्रुतं वाग्मिनं शीलवन्तम्। स तं राजा धृतराष्ट्रः कुरुभ्यो न सस्मार विदुरं पुत्रकाम्यात् ॥ १३ ॥ मानघ्नस्यात्मो मानकामस्य चेर्ष्योः संरम्भिणश्चार्थधर्मातिगस्य। दुर्भाषिणो मन्युवशानुगस्य कामात्मनो दौर्हृदैर्भावितस्य ॥ १४ ॥ अनेयस्याश्रेयसो दीर्घमन्योर्मित्रद्रुहः सञ्जय पापबुद्धेः। सुतस्य राजा धृतराष्ट्रः प्रियैषी प्रपश्यमानः प्राजहाद्धर्म्मकामौ ॥ १५ ॥ तदैव मे सञ्जय दीव्यतोऽभून्मतिः कुरूणामागतः स्यादभावः। काव्यां वाचं विदुरो भाषमाणो न विन्दते यद्धृतराष्ट्रात् प्रशंसाम् ॥ १६ ॥ क्षत्तुर्यदा नान्ववर्त्तन्त बुद्धिं कृच्छ्रं कुरून् सूत तदाभ्याजगाम। यावत् प्रज्ञामन्ववर्त्तन्त तस्य तावत्तेषां राष्ट्रवृद्धिर्बभूव ॥ १७ ॥ तदर्थलुब्धस्य निबोध मेऽद्य ये मन्त्रिणो धार्त्तराष्ट्रस्य सूत। दुःशासनः शकुनिः सूतपुत्रो गावल्गणे पश्य सम्मोहमस्य ॥ १८ ॥ सोऽहं न पश्यामि परीक्षमाणः कथं स्वस्ति स्यात् कुरुसृञ्जयानाम्। आत्तैश्वर्य्यो धृतराष्ट्रः परेभ्यः प्रव्राजिते विदुरे दीर्घदृष्टौ ॥ १९ ॥ आशंसते वै धृतराष्ट्रः सपुत्रो महाराज्यमसपत्नं पृथिव्याम्। तस्मिन् शमः केवलो नोपलभ्यः सर्वं स्वकं मद्गतं मन्यतेऽर्थम् ॥ २० ॥ यत्तत् कर्णो मन्यते पारणीयं युद्धे गृहीतायुधमर्ज्जुनं वै। आसंश्च युद्धानि पुरा महान्ति कथं कर्णो नाभवद्द्वीप एषाम् ॥ २१ ॥ कर्णश्च जानाति सुयोधनश्च द्रोणश्च जानाति पितामहश्च। अन्ये च ये कुरवस्तत्र सन्ति यथार्ज्जुनान्नास्त्यपरो धनुर्द्धरः ॥ २२ ॥ जानन्त्ये

तत्र कुरवः सर्व एव ये चाप्यन्ये भूमिपालाः समेताः । दुर्य्योधने राज्यमिहाभवदाशा अरिन्दमे फाल्गुने विद्यमाने ॥ २३ ॥ तेनानुबन्धं मन्यते धार्त्तराष्ट्रः प्राप्यं हर्त्तुं पाण्डवानां ममत्वम् । किरीटिना तालमात्रायुधेन तद्वेदिना संयुगं तत्र गत्वा ॥ २४ ॥ गाण्डीवविस्फारितशब्दमाजावशृण्वाना धार्त्तराष्ट्रा ध्रियन्ते । क्रुद्धं न चेद्वीक्षते भीमसेनं सुयोधनो मन्यते सिद्धमर्थम् ॥ २५ ॥ इन्द्रोऽप्येतन्नोत्सहेत्तात हर्त्तुमैश्वर्य्यं नो जीवति भीमसेने । धनञ्जये नकुले चैव सूत तथा वीरे सहदेवे मदीये ॥ २६ ॥ स चेदेतां प्रतिपद्येत बुद्धिं वृद्धो राजा सह पुत्रेण सूत । एवं रणे पाण्डवकोपदग्धा न नश्येयुः सञ्जय धार्त्तराष्ट्राः ॥ २७ ॥ जानासि त्वं क्लेशमस्मासु वृत्तं त्वां पूजयन् सञ्जयाहं क्षमेयम् । यच्चास्माकं कौरवैर्भूतपूर्व्वं या नो वृत्तिर्धार्त्तराष्ट्रे तदासीत् ॥ २८ ॥ अद्यापि तत्तत्र तथैव वर्त्ततां शान्तिं गमिष्यामि यथा त्वमात्थ । इन्द्रप्रस्थे भवतु ममैव राज्यं सुयोधनो यच्छतु भारताग्र्यः ॥ २९ ॥

इति उद्योगपर्व्वणि सञ्जययानपर्व्वणि युधिष्ठिरवाक्ये पञ्चविंशोऽध्यायः ॥ २५ ॥

---

सञ्जय उवाच । धर्म्मनित्या पाण्डव ते विचेष्टा लोके श्रुता दृश्यते चापि पार्थ । महास्रावं जीवितं चाप्यनित्यं सम्पश्यस्व पाण्डव मा व्यनीनशः ॥ १ ॥ न चेद्भागं कुरवोऽन्यत्र युद्धात् प्रयच्छेरंस्तुभ्यमजातशत्रो । भैक्षचर्य्यामन्धकवृष्णिराज्ये श्रेयो मन्ये न तु युद्धेन राज्यम् ॥ २ ॥ अल्पकालं जीवितं यन्मनुष्ये महास्रावं नित्यदुःखं चलञ्च । भूयश्च तद्वयसो नानुरूपं तस्मात् पापं पाण्डव मा कृथास्त्वम् ॥ ३ ॥ कामा मनुष्यं प्रसजन्त एते धर्म्मस्य ये विघ्नमूलं नरेन्द्र । पूर्व्वं नरस्तान्मतिमान् प्रणिघ्नन् लोके

प्रशंसां लभतेऽनवद्याम् ॥ ४ ॥ निबन्धनी ह्यर्थतृष्णेह पार्थ तामिच्छतां बाध्यते धर्म एव। धर्मन्तु यः प्रवृणीते स बुद्धः कामे गृद्धो हीयतेऽर्थानुरोधात् ॥ ५ ॥ धर्मं कृत्वा कर्मणां तात मुख्यं महाप्रतापः सवितेव भाति। हीनो हि धर्मेण महीमपीमां लब्ध्वा नरः सीदति पापबुद्धिः ॥ ६ ॥ वेदोऽधीतश्चरितं ब्रह्मचर्यं यज्ञैरिष्टं ब्राह्मणेभ्यश्च दत्तम्। परं स्थानं मन्यमानेन भूय आत्मा दत्तो वर्षपूगं सुखिभ्यः ॥ ७ ॥ सुखप्रिये सेवमानोऽतिवेलं योगाभ्यासे यो न करोति कर्म। वित्तक्षये हीनसुखोऽतिवेलं दुःखं शेते कामवेगप्रणुन्नः ॥ ८ ॥ एवं पुनर्ब्रह्मचर्याप्रसक्तो हित्वा धर्मं यः प्रकरोत्यधर्मम्। अश्रद्दधत् परलोकाय मूढो हित्वा देहं तप्यते प्रेत्य मन्दः ॥ ९ ॥ न कर्मणां विप्रणाशोऽस्त्यमुत्र पुण्यानां वाप्यथवा पापकानाम्। पूर्वं कर्त्तुर्गच्छति पुण्यपापं पश्चात्त्वेनमनुयात्येव कर्त्ता ॥ १० ॥ न्यायोपेतं ब्राह्मणेभ्यो यदन्नं श्रद्धापूतं गन्धरसोपपन्नम्। अन्वाहार्य्येषूत्तमदक्षिणेषु तथारूपं कर्म विख्यायते ते ॥ ११ ॥ इह क्षेत्रे क्रियते पार्थ कार्य्यं न वै किञ्चित् क्रियते प्रेत्य कार्य्यम्। त्वया कृतं पारलोक्यञ्च कर्म पुण्यं महत् सद्भिरतिप्रशस्तम् ॥ १२ ॥ जहाति मृत्युञ्च जरां भयञ्च क्षुत्पिपासे मनसश्चाप्रियाणि। न कर्त्तव्यं विद्यते तत्र किञ्चिदन्यत्र वै चेन्द्रियप्रीणनाद्धि ॥ १३ ॥ एवं रूपं कर्मफलं नरेन्द्र मात्रावता हृदयस्य प्रियेण। स क्रोधजं पाण्डव हर्षजञ्च लोकावुभौ मा प्रहासीश्चिराय ॥ १४ ॥ अन्तं गत्वा कर्मणां मा प्रजह्या सत्यं दमञ्चार्ज्जवमानृशंस्यम्। अश्वमेधं राजसूयं स चेष्ट्वा पापस्यान्तं कर्मणां मा पुनर्गाः ॥ १५ ॥ तच्चेदेवं द्वेषरूपेण पार्थाः करिष्यध्वं कर्म पापं चिराय। निवसध्वं वर्षपूगान् वनेषु दुःखं वासं पाण्डवा धर्म्महेतोः ॥ १६ ॥ अप्रव्रज्ये मा स्म हित्वा पुरस्तादात्माधीनं यद्बलं ह्येतदासीत्। नित्यञ्च वश्या सचिवास्तवेमे जनार्द्दनो युयु-

भानय वीर ॥ १७ ॥ मत्स्यो राजा रुक्मरथ सपुत्र प्रहारिभि
सह पुत्रैर्विराट । राजानश्च ये विजिता पुरस्तात्त्वामेव ते
स्रयेयु समस्ता ॥ १८ ॥ महासहाय प्रतपन् बलस्थ पुरस्कृतो
वासुदेवार्जुनाभ्याम् । वरान् हनिष्यन् द्विषतो रङ्गमध्ये व्यनेष्यथा
धार्त्तराष्ट्रस्य दर्पम् ॥ १९ ॥ बलं कस्माद्वर्द्धयित्वा परस्य निजान्
कस्मात कर्षयित्वा सहायान् । निरुष्य कस्माद्वर्षपूगान् वनेषु
युयुत्ससे पाण्डव हीनकालम ॥ २० ॥ अप्राज्ञो वा पाण्डव युध्य
मानो धर्मज्ञो वा भूतिमयोऽभ्यपैति । प्रज्ञावान् वा बुध्यमानोऽपि
धर्म संरम्भाद्वा सोऽपि भूतेरपैति ॥ २१ ॥ नाधर्मे ते धीयते
पार्थ बुद्धिर्न संरम्भात कर्म चकर्थ पापम् । अथो किं तत कारणं
यस्य हेतो प्रज्ञाविरुद्ध कर्म चिकीर्षसीदम ॥ २२ ॥ अव्याधिज
कटुक शीर्षरोगि यशोमुष पापफलोदयञ्च । सता पेयं यन्न
पिबन्त्यसन्तो मन्युं महाराज पिब प्रशाम्य ॥ २३ ॥ पापानुबन्धं
को नु त कामयेत क्षमैव ते ज्यायसी नोत भोगा । यत्र भीष्म
शान्तनवो हत स्याद्यत्र द्रोण सहपुत्रो हत स्यात ॥ २४ ॥ कृप
शल्य सौमदत्तिर्विकर्णो विविंशति कर्णदुर्योधनौ च । एतान्
हत्वा कीदृश तत सुख स्याद्विन्देयास्तदनुब्रूहि पार्थ ॥ २५ ॥
लब्ध्वापीमा पृथिवी सागरान्ता जरामृत्यू नैव हि त्व प्रजह्या ।
प्रियाप्रिये सुखदु खे च राजन्नेव विद्वन्नैव युद्धं कुरु त्वम् ॥ २६ ॥
अमात्यानां यदि कामस्य हेतोरेवं युक्त कर्म चिकीर्षसि त्वम ।
अपक्रामे संप्रदायैव तेषां मा गास्त्व वै देवयानात् पथोऽद्य ॥२७॥

इति उद्योगपर्वणि सञ्जययानपर्वणि सञ्जयवाक्ये
षड्विंशोऽध्याय ॥ २६ ॥

युधिष्ठिर उवाच। असंशयं सञ्जय सत्यमेतद्धर्मो वरः कर्मणां यत्त्वमात्थ। ज्ञात्वा तु मां सञ्जय गर्हयेस्त्वं यदि धर्मं यद्यधर्मं चरेयम् ॥ १ ॥ यत्राधर्मो धर्मरूपाणि धत्ते धर्मः कृत्स्नो दृश्यतेऽधर्मरूपः। बिभ्रद्धर्मो धर्मरूपं तथा च विद्वांसस्तं सम्प्रपश्यन्ति बुद्ध्या ॥ २ ॥ एवं तथैवापदि लिङ्गमेतद्धर्माधर्मौ नित्यवृत्ती भजेताम्। आद्यं लिङ्गं यस्य तस्य प्रमाणमापद्धर्मं सञ्जय तन्निबोध ॥ ३ ॥ असत्यामापदि कर्मणि वर्त्तमानो विकर्मस्थः सञ्जय गर्हये तम्। लुप्तायान्तु प्रकृतौ येन कर्म निष्पादयेत्तत् परीप्सेद्विहीनः ॥ ४ ॥ प्रकृतिस्थश्चापदि वर्त्तमान उभौ गर्ह्यौ भवतः सञ्जयैतौ। अविनाशमिच्छतां ब्राह्मणानां प्रायश्चित्तं विहितं यद्विधात्रा ॥ ५ ॥ सम्पश्येथाः कर्मसु वर्त्तमानान् विकर्मस्थान् सञ्जय गर्हयेस्त्वम्। मनीषिणां सत्त्वविच्छेदनाय विधीयते सत्सु वृत्तिः सदैव ॥ ६ ॥ अब्राह्मणाः सन्ति तु ये न वैद्याः सर्वोच्छेदं साधु मन्येत तेभ्यः। तदर्थान् पितरो ये च पूर्वे पितामहा ये च तेभ्यः परेऽन्ये ॥ ७ ॥ मनीषिणो ये च हि कर्म कुर्युर्नान्यं ततो नास्तिकोऽस्मीति मन्ये। यत् किञ्चनेदं वित्तमस्यां पृथिव्यां यद्देवानां त्रिदशानां परं यत् ॥ ८ ॥ प्राजापत्यं त्रिदिवं ब्रह्मलोकं नाधर्मतः सञ्जय कामयेयम्। धर्मेश्वरः कुशलो नीतिमांश्चाप्युपासिता ब्राह्मणानां मनीषी ॥ ९ ॥ नानाविधांश्चैव महाबलांश्च राज्ञो विजानन्ननुशास्ति कृष्णः। यदि ह्यहं विसृजन् स्यामगर्ह्यो युध्यमानो यदि जह्यां स्वधर्मम् ॥ १० ॥ महायशाः केशवस्तद्ब्रवीतु वासुदेवस्तूभयोरर्थकामः। शैनेयोऽयञ्चेदयश्चान्धकाश्च वार्ष्णेयभोजाः कुकुराः सृञ्जयाश्च ॥ ११ ॥ उपासीना वासुदेवस्य बुद्धिं निगृह्य शत्रून् सुहृदो नन्दयन्ति। वृष्ण्यन्धका ह्युग्रसेनादयो वै कृष्णप्रणीताः सर्व एवेन्द्रकल्पाः ॥ १२ ॥ मनस्विनः सत्यपरायणाश्च महाबला यादवा भोगवन्तः। काश्यो

बभ्रुः प्रियमुत्तमाहृतो लब्ध्वा कृष्णं भ्रातरमीशितारम्॥ १३॥
यस्मै कामान् वर्षति वासुदेवो ग्रीष्मात्यये मेघ इव प्रजाभ्यः।
ईदृशोऽयं केशवस्तात भूयान् विद्धि ह्येनं कर्मणां निश्चयज्ञम्।
प्रियश्च नः साधुतमश्च कृष्णो नातिक्रमे वचनं केशवस्य॥ १४॥

इति उद्योगपर्वणि सञ्जययानपर्वणि युधिष्ठिरवाक्ये सप्तविंशोऽध्यायः॥ २७॥

---

वासुदेव उवाच। अविनाशं सञ्जय पाण्डवानामिच्छाम्यहं भूतिमेषां प्रियञ्च। तथा राज्ञो धृतराष्ट्रस्य सूत सदाशंसे बहुपुत्रस्य वृद्धिम्॥ १॥ कामो हि मे सञ्जय नित्यमेव नान्यद्ब्रूयां तान् प्रति शाम्यतेति। राज्ञश्च हि प्रियमेतच्छृणोमि मन्ये चैतत् पाण्डवानां समर्थम्॥ २॥ सुदुष्करस्तत्र शमो हि नूनं प्रदर्शितः संजय पाण्डवेन। यस्मिन् गृद्धो धृतराष्ट्रः सपुत्रः कस्मादेषां कलहो नावमूर्च्छेत्॥ ३॥ न त्वं धर्मं विचरन् संजयेह मत्तश्च जानासि युधिष्ठिराच्च। अथो कस्मात् संजय पाण्डवस्य उत्साहिनः पूरयतः स्वकर्म॥ ४॥ यथाख्यातमावसतः कुटुम्बं पुरा कस्मात् साधु विलोपमात्थ। अस्मिन् विधौ वर्त्तमाने यथावदुच्चावचा मतयो ब्राह्मणानाम्॥ ५॥ कर्मणाहुः सिद्धिमेके परत्र हित्वा कर्म विद्यया सिद्धिमेके। नाभुञ्जानो भक्ष्यभोज्यस्य तृप्येद्विद्वानपीह विदितं ब्राह्मणानाम्॥ ६॥ या वै विद्याः साधयन्तीह कर्म तासां फलं विद्यते नेतरासाम्। तत्रेह वै दृष्टफलन्तु कर्म पीत्वोदकं शाम्यति तृष्णयार्त्तः॥ ७॥ सोऽयं विधिर्विहितः कर्मणैव सम्वर्त्तते संजय तत्र कर्म। तत्र योऽन्यत् कर्मणः साधु मन्येन्मोघं तस्यालपितं दुर्बलस्य॥ ८॥ कर्मणामी भान्ति देवाः परत्र कर्मणैवेह प्लवते मातरिश्वा। अहोरात्रे विदधत् कर्मणैव

अतन्द्रितो याबदुदेति सूर्यः ॥ ९ ॥ मासार्द्धमासानथ नक्षत्र-
योगानतन्द्रितश्चन्द्रमाश्चाभ्युपैति । अतन्द्रितो दहते जातवेदाः
समिध्यमानः कर्म्म कुर्व्वन् प्रजाभ्यः ॥ १० ॥ अतन्द्रिता भारमिमं
महान्तं बिभर्त्ति देवी पृथिवी बलेन । अतन्द्रिताः शीघ्रमपो वहन्ति
सन्तर्पयन्त्यः सर्व्वभूतानि नद्यः ॥ ११ ॥ अतन्द्रितो वर्षति भूरि-
तेजाः सन्नादयन्नन्तरीक्षं दिशश्च । अतन्द्रितो ब्रह्मचर्य्यं चचार
श्रेष्ठत्वमिच्छन् बलभिद्देवतानाम् ॥ १२ ॥ हित्वा सुखं मनसश्च
प्रियाणि तेन शक्रः कर्म्मणा श्रैष्ठ्यमाप । सत्यधर्म्मौ पालयन्नप्र-
मत्तो दमन्तितिक्षां समतां प्रियञ्च ॥ १३ ॥ एतानि सर्व्वाण्युप-
सेवमानः स देवराज्यं मघवान् प्राप मुख्यम् । बृहस्पतिर्ब्रह्मचर्य्यं
चचार समाहितः संशितात्मा यथावत् ॥ १४ ॥ हित्वा सुखं
प्रतिरुध्येन्द्रियाणि तेन देवानामगमद्गौरवं सः । तथा नक्षत्राणि
कर्म्मणामुत्र भान्ति रुद्रादित्या वसवोऽथापि विश्वे ॥ १५ ॥ यमो
राजा वैश्रवणः कुवेरो गन्धर्व्वयक्षाप्सरसश्च शुभ्राः । ब्रह्मविद्यां
ब्रह्मचर्य्यं क्रियाश्च निषेवमाणा ऋषयोऽमुत्र भान्ति ॥ १६ ॥ जान-
न्निमं सर्व्वलोकस्य धर्म्मं विप्रेन्द्राणां क्षत्रियाणां विशाञ्च । स कस्मा-
त्त्वं जानतां ज्ञानवान् सन् व्यायच्छसे सञ्जय कौरवार्थे ॥ १७ ॥
आम्नायेषु नित्यसंयोगमस्य तथाश्वमेधे राजसूये च विद्धि । संयु-
ज्यते धनुषा वर्म्मणा च हस्त्यश्वपृष्ठे रथसत्तमे च भूयः ॥ १८ ॥ ते
चेदिमे कौरवाणामुपायमवगच्छेयुरवधेनैव पार्थाः । धर्म्मत्राणं
पुण्यमेषां कृतं स्यादार्य्ये वृत्ते भीमसेनं निगृह्य ॥ १९ ॥ ते चेत्
पित्र्ये कर्म्मणि वर्त्तमाना आपद्येरन् दिष्टवशेन मृत्युम् । यथा शक्त्या
पूरयन्तः स्वकर्म्म तदप्येषां निधनं स्यात् प्रशस्तम् ॥ २० ॥ उताहो

स्वकर्म प्रशंस वा निन्द वा या मतिस्ते ॥ २२ ॥ अधीयीत ब्राह्मणो वै यजेत दद्यादियात्तीर्थमुख्यानि चैव । अध्यापयेद्याजयेच्चापि याज्यान् प्रतिग्रहान् वा विदितात् प्रतीच्छेत् ॥ २३ ॥ तथा क्षत्रियो रक्षणं वै प्रजानां कृत्वा धर्मेणाप्रमत्तोऽथ दत्त्वा । यज्ञैरिष्ट्वा सर्ववेदानधीत्य दारान् कृत्वा पुण्यकृदावसेद् गृहान् ॥ २४ ॥ स धर्मात्मा धर्ममधीत्य पुण्यं यदिच्छया व्रजति ब्रह्मलोकम् । वैश्योऽधीत्य कृषिगोरक्षपण्यैर्वित्तं चिन्वन् पालयन्नप्रमत्तः ॥२५॥ प्रियं कुर्वन् ब्राह्मणक्षत्रियाणां धर्मशील पुण्यकृदावसेद् गृहान् । परिचर्यां वन्दनं ब्राह्मणानां नाधीयीत प्रतिषिद्धोऽस्य यज्ञः ॥२६॥ नित्योत्थितो भूतयेऽतन्द्रितः स्यादेवं स्मृतः शूद्रधर्मः पुराणः । एतान् राजा पालयन्नप्रमत्तो नियोजयन् सर्ववर्णान् स्वधर्मे ॥२७॥ अकामात्मा समवृत्तिः प्रजासु नाधार्मिकाननुरुध्येत कामान् । श्रेयांस्तस्माद्यदि विद्येत कश्चिदभिज्ञातः सर्वधर्मोपपन्नः ॥ २८ ॥ स तं दुष्टमनुशिष्यात् प्रजानामेतद्बुध्येन्न च तस्मिन्नसाधु । यदा गृध्येत् परभूमौ नृशंसो विधिप्रकोपाद्बलमाददानः ॥ २९ ॥ ततो राज्ञां समभवद्युद्धमेतत्तत्र जातं वर्म शस्त्रं धनुश्च । इन्द्रेणैतद्दस्युवधाय कर्म उत्पादितं वर्म शस्त्रं धनुश्च ॥ ३० ॥ तत्र पुण्यं दस्युवधेन लभ्यते सोऽयं दोषः कुरुभिस्तीव्ररूपः । अधर्मज्ञैर्धर्ममबुध्यमानैः प्रादुर्भूतः संजय तन्न साधु ॥ ३१ ॥ तत्र राजा धृतराष्ट्रस्य पुत्रो धर्म्यं हरन् पाण्डवानामकस्मात् । नाविक्षते राजधर्मं पुराणं तदन्वयाः कुरवः सर्व एव ॥ ३२ ॥ स्तेनो हरेद्यत्र धनं ह्यदृष्टः प्रसह्य वा यत्र हरेत दृष्टः । उभौ गर्ह्यौ भवतः संजयैतौ किं वै पृथक्त्वं धृतराष्ट्रस्य पुत्रे ॥ ३३ ॥ सोऽयं लोभान्मन्यते धर्ममेतं यमिच्छति क्रोधवशानुगामी । भागः पुनः पाण्डवानां निविष्टस्तन्नो कस्मादाददीरन् परे वै ॥ ३४ ॥ अस्मिन् पदे युध्यतां नो वधोऽपि श्लाघ्यः पित्र्यं परराज्याद्विशिष्टम् । एतान्

धर्म्मात् कौरवाणां पुराणानाचचीथा सञ्जय राजमध्ये ॥ ३५ ॥
ये ते मन्दा मृत्युवशाभिपन्नाः समानीता धार्त्तराष्ट्रेण मूढ़ा । इदं
पुन कर्म्म पापीयमेव सभामध्ये पश्य वृत्तं कुरूणाम् ॥ ३६ ॥
प्रियां भार्य्यां द्रौपदीं पाण्डवानां यशस्विनीं शीलवृत्तोपपन्नाम् ।
यदुपेचन्त कुरवो भीष्ममुख्या कामानुगेनोपरुद्धां रुदन्तीम् ॥३७॥
ताञ्चेत्तदा ते सकुमारवृद्धा अवारयिष्यन् कुरवः समेता । मम
प्रिय धृतराष्ट्रोऽकरिष्यत् पुत्राणाञ्च कृतमस्याभविष्यत् ॥ ३८ ॥
दुःशासन प्रातिलोम्यान्निनाय सभामध्ये श्वशुराणाञ्च कृष्णाम् ।
सा तत्र नीता करुणं व्यपेक्ष्य नान्यं चत्तुर्नाथमवाप किञ्चित् ॥३९॥
कार्पण्यादेव सहितास्तत्र भूपा नाशक्नुवन् प्रतिवक्तुं सभायाम् ।
एकः चत्ता धर्म्म्यमर्थं ब्रुवाणो धर्म्मबुद्ध्या प्रत्युवाचाल्पबुद्धिम् ॥४०॥
अनुक्त्वा तं धर्म्ममेतं सभायामथेच्छसे पाण्डवस्योपदेष्टुम् । कृष्णा
त्वेतत् कर्म्म चकार शुद्धं सुदुष्करं तत्र सभां समेत्य ॥ ४१ ॥ येन
कृच्छ्रात् पाण्डवानुज्जहार तथात्मानं नौरिव सागरौघात् । यत्रा

कुरूणामपि चेत्क्षमेयम्। पुण्यञ्च मे स्याच्चरितं महोदयं मुच्येरंश्च कुरवो मृत्युपाशात् ॥ ४८ ॥ अपि मे वाचं भाषमाणस्य काव्यां धर्मारामामर्थवतीमहिंस्राम्। अवेक्षेरन् धार्त्तराष्ट्राः समक्षं मान्च प्राप्तं कुरवः पूजयेयुः ॥ ४९ ॥ अतोऽन्यथा रथिना फाल्गुनेन भीमेन चैवाहवदंशितेन। पराषिक्तान् धार्त्तराष्ट्रांश्च विद्धि प्रदह्यमानान् कर्मणा स्वेन पापान् ॥ ५० ॥ पराजितान् पाण्डवेयास्तु वाचो रौद्रा रूक्षा भाषते धार्त्तराष्ट्रः। गदाहस्तो भीमसेनोऽप्रमत्तो दुर्य्योधनं स्मारयिता हि काले ॥ ५१ ॥ सुयोधनो मन्युमयो महाद्रुमः स्कन्धः कर्णः शकुनिस्तस्य शाखा। दुःशासनः पुष्पफले समृद्धे मूलं राजा धृतराष्ट्रोऽमनीषी ॥ ५२ ॥ युधिष्ठिरो धर्ममयो महाद्रुमः स्कन्धोऽर्जुनो भीमसेनोऽस्य शाखा। माद्रीसुतौ पुष्पफले समृद्धे मूलन्त्वहं ब्रह्म च ब्राह्मणाश्च ॥ ५३ ॥ वनं राजा धृतराष्ट्रः सपुत्रो व्याघ्रास्ते वै सञ्जय पाण्डुपुत्राः। मा वनं छिन्धि सव्याघ्रं मा व्याघ्रा नीनशुर्वनात् ॥ ५४ ॥ निर्वनो बध्यते व्याघ्रो निर्व्याघ्रं छिद्यते वनम्। तस्माद्व्याघ्रो वनं रक्षेद्वनं व्याघ्रञ्च पालयेत् ॥५५॥ लताधर्म्मा धार्त्तराष्ट्राः शालाः सञ्जय पाण्डवाः। न लता वर्द्धते जातु महाद्रुममनाश्रिता ॥ ५६ ॥ स्थिताः शुश्रूषितुं पार्थाः स्थिता योद्धुमरिन्दमाः। यत् कृत्यं धृतराष्ट्रस्य तत् करोतु नराधिप ॥ ५७ ॥ स्थिताः शमे महात्मानः पाण्डवा धर्म्मचारिणः। योधाः समर्थास्तद्विद्वानाचरीथा यथातथम् ॥५८॥

इति उद्योगपर्व्वणि सञ्जययानपर्व्वणि कृष्णवाक्ये अष्टाविंशोऽध्यायः ॥ २८ ॥

---

सञ्जय उवाच। आमन्त्रये त्वां नरदेवदेव गच्छाम्यहं पाण्डव स्वस्ति तेऽस्तु। कच्चिन्न वाचा वृजिनं हि किञ्चिदुच्चारितं

मे मनसोऽभिप्रज्ञात् ॥ १ ॥ जनार्द्दनं भीमसेनार्जुनौ च माद्रीसुतौ सात्यकिं चेकितानम् । आमन्त्र्य गच्छामि शिवं सुखं वः सौम्येन मां पश्यत चक्षुषा नृपाः ॥ २ ॥

युधिष्ठिर उवाच । अनुज्ञातः सञ्जय स्वस्ति गच्छ न नः स्मरस्यप्रियं जातु विद्वन् । विद्मश्च त्वा ते च वयञ्च सर्वे शुद्धात्मानं मध्यगतं सभास्थम् ॥ ३ ॥ आप्तो दूतः सञ्जय सुप्रियो मे कल्याणवाक् शीलवांस्तृप्तिमांश्च । न मुह्येस्त्वं सञ्जय जातु मत्या न च क्रुध्येरुच्यमानो दुरुक्तैः ॥ ४ ॥ न मर्म्मगां जातु वक्तासि रूक्षां नापस्तुतिं कटुकां नो तु मुक्ताम् । धर्म्मारामामर्थवतीमहिंस्रामेतां वाचं तव जानीम सूत ॥ ५ ॥ त्वमेव नः प्रियतमोऽसि दूत इहागच्छेद्विदुरो वा द्वितीयः । अभीक्ष्णदृष्टोऽसि पुरा हि नस्त्वं धनञ्जयस्यात्मसमः सखासि ॥ ६ ॥ इतो गत्वा सञ्जय क्षिप्रमेव उपातिष्ठेथा ब्राह्मणान् ये तदर्हाः । विशुद्धवीर्य्यांश्चरणोपपन्नाः कुले जाताः सर्वधर्म्मोपपन्नाः ॥ ७ ॥ स्वाध्यायिनो ब्राह्मणा भिक्षवश्च तपस्विनो ये च नित्या वनेषु । अभिवाद्या वै मद्वचनेन वृद्धास्तथेतरेषां कुशलं वदेथाः ॥ ८ ॥ पुरोहितं धृतराष्ट्रस्य राज्ञस्तथाचार्य्यानृत्विजो ये च तस्य । तैश्च त्वं तात सहितैर्यथार्हं सङ्गच्छेथाः कुशलेनैव सूत ॥ ९ ॥ अश्रोत्रिया ये च वसन्ति वृद्धा मनस्विनः शीलबलोपपन्नाः । आशंसन्तोऽस्माकमनुस्मरन्तो यथाशक्ति धर्म्ममात्रां चरन्त ॥ १० ॥ आख्याय मां कुशलिनं स्म तेभ्यो ह्यनामयं तात पृच्छेर्जघन्यम् । ये जीवन्ति व्यवहारेण राष्ट्रे ये पालयन्तो निवसन्ति राष्ट्रे ॥ ११ ॥ आचार्य्य इष्टो नयगो विधेयो वेदानभीप्सन् ब्रह्मचर्य्यं चचार । यो ऽस्त्रं चतुष्पात् पुनरेव चक्रे द्रोणः प्रसन्नोऽभिवाद्यस्त्वयासौ ॥ १२ ॥ अधीतविद्यश्चरणोपपन्नो योऽस्त्रं चतुष्पात् पुनरेव चक्रे । गन्धर्व्वपुत्त्रप्रतिमं तरस्विनं तमश्वत्थामानं कुशलं स्म पृच्छेः ॥ १३ ॥ शारद्वतस्याव-

मर्थं स गत्वा महारथस्यात्मविदां वरस्य। त्वं मामभीक्ष्णं परि- १
कीर्त्तयन् वै कृपस्य पादौ संजय पाणिना स्पृशेः ॥ १४ ॥ यस्मिन्
शौर्य्यमानृशंस्यं तपश्च प्रज्ञा शीलं श्रुतिसत्त्वे धृतिश्च। पादौ
गृहीत्वा कुरुसत्तमस्य भीष्मस्य मां तत्र निवेदयेथाः ॥ १५ ॥ प्रज्ञा-
चक्षुर्यः प्रणेता कुरूणां बहुश्रुतो वृद्धसेवी मनीषी। तस्मै राज्ञे
स्थविरायाभिवाद्य आचक्षीथाः संजय मामरोगम् ॥ १६ ॥ ज्येष्ठ-
पुत्रो धृतराष्ट्रस्य मन्दो मूर्खः शठः संजय पापशीलः। प्रशास्ता
वै पृथिवी येन सर्वा सुयोधनं कुशलं तात पृच्छेः ॥ १७ ॥ भ्राता
कनीयानपि तस्य मन्दस्तथाशीलः संजय सोऽपि शश्वत्। महे-
ष्वासः शूरतमः कुरूणां दुःशासनः कुशलं तात वाच्यः ॥ १८ ॥
यस्य कामो वर्त्तते नित्यमेव नान्यः शमाद्भारतानामिति स। स
वाह्लिकानामृषभो मनीषी त्वयाभिवाद्यः संजय साधुशीलः ॥ १९ ॥
गुणैरनेकैः प्रवरैश्च युक्तो विज्ञानवान्नैव च निष्ठुरो यः। स्नेहा-
दमर्षं सहते सदैव स सोमदत्तः पूजनीयो मतो मे ॥ २० ॥ अर्हे-
त्तमः कुरुषु सौमदत्तिः स नो भ्राता संजय मत्सखायः। महे-
ष्वासो रथिनामुत्तमोऽर्हः सहामात्यः कुशलं तस्य पृच्छेः ॥ २१ ॥
ये चैवान्ये कुरुमुख्या युवानः पुत्राः पौत्रा भ्रातरश्चैव ये नः। यं
यमेषां मन्यसे येन योग्यं तत्तत् प्रोच्यानामयं सूत वाच्याः ॥२२॥
ये राजानः पाण्डवायोधनाय समानीता धार्त्तराष्ट्रेण केचित्।
वसातयः शाल्वकाः केकयाश्च तथाम्बष्ठा ये त्रिगर्त्ताश्च मुख्याः
॥ २३ ॥ प्राच्योदीच्या दाक्षिणात्याश्च शूरास्तथा प्रतीच्याः
पार्वतीयाश्च सर्वे। अनृशंसाः शीलवृत्तोपपन्नास्तेषां सर्वेषां कुशलं
सूत पृच्छेः ॥ २४ ॥ हस्त्यारोहा रथिनः सादिनश्च पदातय-
श्चार्य्यसङ्घा महान्तः। आख्याय मां कुशलिनं स्म नित्यमनामयं
परिपृच्छेः समग्रान् ॥ २५ ॥ तथा राज्ञो ह्यर्थयुक्तानमात्यान्
दौवारिकान् ये च सेनां नयन्ति। आयव्ययं ये गणयन्ति नित्य-

मर्य्यांय ये महतश्चिन्तयन्ति॥ २६॥ वृन्दारकं कुरुमध्येष्वमूढं महाप्रज्ञं सर्व्वधर्म्मोपपन्नम्। न तस्य युद्धं रोचते वै कदाचित् वैश्यापुत्रं कुशलं तात पृच्छेः॥ २७॥ निकर्त्तने देवने योऽद्वितीयश्छन्नोपधः साधुदेवी मताचः। यो दुर्ज्जयो देवितव्येन सङ्ख्ये स चित्रसेनः कुशलं तात वाच्यः॥ २८॥ गान्धारराजः शकुनिः पार्व्वतीयो निकर्त्तने योऽद्वितीयोऽचदेवी। मानं कुर्व्वन् धार्त्तराष्ट्रस्य सूत मिथ्याबुद्धेः कुशलं तात पृच्छेः॥ २९॥ य पाण्डवानेकरथेन वीरः समुत्सहत्यप्रधृष्यान् विजेतुम्। यो मुह्यतां मोहयिताद्वितीयो वैकर्त्तनः कुशलं तस्य पृच्छेः॥ ३०॥ स एव भक्तः स गुरुः स भर्त्ता स वै पिता स च माता सुहृच्च। अगाधबुद्धिर्विदुरो दीर्घदर्शी स नो मन्त्री कुशलं तं स्म पृच्छेः॥ ३१॥ वृद्धाः स्त्रियो याश्च गुणोपपन्ना ज्ञायन्ते नः सञ्जय मातरस्ताः। ताभिः सर्व्वाभिः सहिताभिः समेत्य स्त्रीभिः वृद्धाभिरभिवादं वदेथाः॥ ३२॥ कच्चित् पुत्रा जीवपुत्राः सुसम्यग्वर्त्तन्ते वो वृत्तिमनृशंसरूपाः। इति स्मोक्ता सञ्जय ब्रूहि पश्चादजातशत्रुः कुशली सपुत्रः॥ ३३॥ या नो भार्य्याः सञ्जय वेत्थ तत्र तासां सर्व्वासां कुशलं तात पृच्छेः। सुसङ्गुप्ताः सुरभयोऽनवद्याः कच्चिद्गृहाणावसथाप्रमत्ताः॥ ३४॥ कच्चिद्वृत्तिं श्वशुरेषु भद्राः कल्याणीं वर्त्तध्वमनृशंसरूपाम्। यथा च स्युः पतयोऽनुकूलास्तथा वृत्तिमात्मनः स्थापयध्वम्॥ ३५॥ या नः स्नुषाः सञ्जय वेत्थ तत्र प्राप्ताः कुलेभ्यश्च गुणोपपन्नाः। प्रजावत्यो ब्रूहि समेत्य ताश्च युधिष्ठिरो वोऽभ्यवदत् प्रसन्नः॥ ३६॥ कन्याः स्वजेथाः सदनेषु सञ्जय अनामयं मद्वचनेन पृष्ट्वा। कल्याणा वः सन्तु पतयोऽनुकूला यूयं पतीनां भवतानुकूलाः॥ ३७॥ अलङ्कृता वस्त्रवत्यः सुगन्धा अबीभत्साः सुखिता भोगवत्यः। लघु यासां दर्शनं वाक् च लघ्वी वेशस्त्रियः कुशलं तात पृच्छेः॥ ३८॥ दास्यः स्युर्या

ये च दासा कुरूणां तत्राश्रया बहव कुब्जखञ्जा। आख्याय मा कुशलिन स्म तेभ्योऽप्यनामय परिपृच्छेर्जघन्यम्॥ ३९॥ कच्चि द्वृत्ति वर्त्तते वै पुराणी कच्चिद्भोगान् धार्त्तराष्ट्रो ददाति। अङ्ग-हीनान कृपणान् वामनान् वा यानानृशंस्यो धृतराष्ट्रो बिभर्त्ति॥ ४०॥ अन्धाश्च सर्वान् स्थविरास्तथैव हस्त्याजीवा बहवो येऽत्र सन्ति। आख्याय मा कुशलिन स्म तेभ्योऽप्यनामयं परिपृच्छे-र्जघन्यम्॥ ४१॥ मा भैष्ट दु खेन कुजीवितेन नूनं कृत परलोकेषु पापम्। निगृह्य शत्रून् सुहृदोऽनुगृह्य वासोभिरन्नेन च वो भरिष्ये॥ ४२॥ सन्त्येव मे ब्राह्मणेभ्य कृतानि भावीन्यथो नो बत वर्त्तयन्ति। तान् पश्यामि युक्तरूपास्तथैव तामेव सिद्धिं श्रावयेथा नृपन्तम्॥ ४३॥ ये चानाथा दुर्बला सर्वकालमात्म-न्येव प्रयतन्तेऽथ मूढा। तांश्चापि त्वं कृपणान् सर्वथैव अस्म-द्वाक्यात कुशलं तात पृच्छे॥ ४४॥ ये चाप्यन्ये संश्रिता धार्त्त-राष्ट्रान्नानादिग्भ्योऽभ्यागता सूतपुत्र। दृष्ट्वा तांश्चैवार्हतश्चापि सर्वान् संपृच्छेथा कुशलं चाव्ययञ्च॥ ४५॥ एवं सर्वानागताभ्या-गतांश्च राज्ञो दूतान् सर्वदिग्भ्योऽभ्युपेतान्। पृष्ट्वा सर्वान् कुशलं तांश्च सूत पश्चादहं कुशली तेषु वाच्य॥ ४६॥ न हीदृशा सन्त्यपरे पृथिव्यां ये योधका धार्त्तराष्ट्रेण लब्धा। धर्मस्तु नित्यो मम धर्म एव महाबल शत्रुनिबर्हणाय॥ ४७॥ इद पुन-र्वचन धार्त्तराष्ट्रं सुयोधनं सञ्जय श्रावयेथा। यस्ते शरीरे हृदयं दुनोति कामः कुरून् स सपत्नोऽनुशिष्याम्॥ ४८॥ न विद्यते युक्तिरेतस्य काचिन्नैव विधास्याम यथा प्रिय ते। ददस्व वा शक्रपुरीं ममैव युध्यस्व वा भारतमुख्य वीर॥ ४९॥

इति उद्योगपर्वणि सञ्जययानपर्वणि युधिष्ठिरवाक्ये एकोनत्रिंशोऽध्याय॥ २९।

युधिष्ठिर उवाच। उत सन्तमसन्तं वा वालं वृद्धं च सञ्जय। उतावलं वलीयांसं धाता प्रकुरुते वशे ॥ १ ॥ उत वालाय पाण्डित्यं पण्डितायोत वालताम्। ददाति सर्वमीशानः पुरस्ताच्छुक्रमुच्चरन् ॥ २ ॥ वलं जिज्ञासमानस्य आचक्षीथा यथातथम्। अथ मन्त्रं मन्त्रयित्वा याथातथ्येन हृष्टवत् ॥ ३ ॥ गावल्गणे कुरून् गत्वा धृतराष्ट्रं महावलम्। अभिवाद्योपसंगृह्य ततः पृच्छेरनामयम् ॥ ४ ॥ ब्रूयाश्चैनं त्वमासीनं कुरुभिः परिवारितम्। तवैव राजन् वीर्य्येण सुखं जीवन्ति पाण्डवा ॥ ५ ॥ तव प्रसादाद्वालास्ते प्राप्ता राज्यमरिन्दम। राज्ये तान् स्थापयित्वाग्रे नोपेक्षीर्विनशिष्यत ॥ ६ ॥ सर्वमप्येतदेकस्य नालं सञ्जय कस्यचित्। तात संहत्य जीवामो द्विषतां मा वशं गमः ॥ ७ ॥ तथा भीष्मं शान्तनवं भारतानां पितामहम्। शिरसाभिवदेथास्त्वं मम नाम प्रकीर्त्तयन् ॥ ८ ॥ अभिवाद्य च वक्तव्यस्ततोऽस्माकं पितामहः। भवता शान्तनोर्वंशो निमग्नः पुनरुद्धृत ॥ ९ ॥ स त्वं कुरु तथा तात स्वमतेन पितामह। यथा जीवन्ति ते पौत्राः प्रीतिमन्तः परस्परम् ॥ १० ॥ तथैव विदुरं ब्रूया कुरूणां मन्त्रधारिणम्। अयुद्धं सौम्य भाषस्व हितकामो युधिष्ठिरे ॥ ११ ॥ अथ दुर्योधनं ब्रूया राजपुत्रममर्षणम्। मध्ये कुरूणामासीनमनुनीय पुनः पुनः ॥ १२ ॥ अपापां यदुपैक्षस्त्वं कृष्णामेकां सभागताम्। तद्दुःखमतितिक्षाम मा वधिष्म कुरूनिति ॥ १३ ॥ एवं पूर्वापरान् क्लेशान् तितिक्षन्ते स्म पाण्डवा। वलीयांसोऽपि सन्तो यत्तत् सर्वं कुरवो विदुः ॥ १४ ॥ यन्नः प्राव्राजय सौम्य अजिनैः प्रतिवासितान्। अतितिक्षामहि च तत् मा वधिष्म कुरूनिति ॥ १५ ॥ यत्तत् कुन्तीमतिक्रम्य कृष्णा केशेष्वधर्षयत्। दुःशासनस्तेऽनुमते तच्चास्माभिरुपेक्षितम् ॥ १६ ॥ यथोचितं स्वकं भाग लभेमहि परन्तप। निवर्त्तय परद्रव्यात् वुद्धिं गृद्धां नर-

र्षभ ॥१७॥ शान्तिरेवं भवेद्राजन् प्रीतिश्चैव परस्परम्। राज्यैकदेशमपि न प्रयच्छ शममिच्छताम् ॥ १८ ॥ कुशस्थलं वृकस्थलं माकन्दीं वारणावतम्। अवसानं भवेदत्र किञ्चिदेकञ्च पञ्चमम् ॥ १९ ॥ भ्रातॄणां देहि पञ्चानां पञ्च ग्रामान् सुयोधन। शान्तिर्नोऽस्तु महाप्राज्ञ ज्ञातिभिः सह सञ्जय ॥ २० ॥ भ्राता भ्रातरमन्वेतु पिता पुत्रेण युज्यताम्। स्मयमानाः समायान्तु पाञ्चालाः कुरुभिः सह ॥२१॥ अक्षतान् कुरुपाञ्चालान् पश्येयमिति कामये। सर्वे सुमनसस्तात शाम्याम भरतर्षभ ॥ २२ ॥ अलमेव शमायास्मि तथा युद्धाय सञ्जय। धर्मार्थयोरलञ्चाहं मृदवे दारुणाय च ॥२३॥

इति उद्योगपर्वणि सञ्जययानपर्वणि युधिष्ठिरवाक्ये त्रिंशोऽध्यायः ॥ ३० ॥



वैशम्पायन उवाच। अनुज्ञातः पाण्डवेन प्रययौ सञ्जयस्तदा। शासनं धृतराष्ट्रस्य सर्वं कृत्वा महात्मनः ॥ १ ॥ सम्प्राप्य हास्तिनपुरं शीघ्रमेव प्रविश्य च। अन्तःपुरं समास्थाय द्वाःस्थं वचनमब्रवीत् ॥ २ ॥ आचक्ष्व धृतराष्ट्राय द्वाःस्थ मां समुपागतम्। सकाशात् पाण्डुपुत्राणां सञ्जयं मा चिरं कृथाः ॥ ३ ॥ जागर्त्ति चेदभिवदेस्त्वं हि द्वाःस्थ प्रविशेय विदितो भूमिपस्य। निवेद्यमत्रात्यधिकं हि मेऽस्ति द्वाःस्थोऽथ श्रुत्वा नृपतिं जगाद ॥ ४ ॥

द्वाःस्थ उवाच। प्रजयोऽयं भूमिपते नमस्ते दिदृक्षया द्वारमुपागतस्ते। प्राप्तो दूतः पाण्डवानां सकाशात् प्रशाधि राजन् किमयं करोतु ॥ ५ ॥

वैशम्पायन उवाच। ततः प्रविश्यानुमते नृपस्य महद्वेश्म प्राज्ञशूरार्य्यगुप्तम्। सिंहासनस्थं पार्थिवमाससाद वैचित्रवीर्य्यं प्राञ्जलिः सूतपुत्रः॥ ७॥

सञ्जय उवाच। सञ्जयोऽहं भूमिपते नमस्ते प्राप्तोऽस्मि गत्वा नरदेव पाण्डवान्। अभिवाद्य त्वां पाण्डुपुत्रो मनस्वी युधिष्ठिरः कुशलं चान्वपृच्छत्॥ ८॥ स ते पुत्रान् पृच्छति प्रीयमाणः कच्चित् पुत्रैः प्रीयसे नप्तृभिश्च। तथा सुहृद्भिः सचिवैश्च राजन् ये चापि त्वामुपजीवन्ति तैश्च॥ ९॥

धृतराष्ट्र उवाच। अभिनन्द्य त्वां तात वदामि सञ्जय अजातशत्रुञ्च सुखेन पार्थम्। कच्चित् स राजा कुशली सपुत्रः सहामात्यः सानुजः कौरवाणाम्॥ १०॥

सञ्जय उवाच। सहामात्यः कुशली पाण्डुपुत्रो बुभूषते यच्च तेऽग्रे मनोऽभूत्। निर्णिक्तधर्म्मार्थकरो मनस्वी बहुश्रुतो दृष्टिमाञ्छीलवांश्च॥ ११॥ परो धर्म्मः पाण्डवस्यानृशंस्यं धर्म्मः परो वित्तचयान्मतोऽस्य। सुखप्रिये धर्म्महीनेऽनपार्थेऽनुरुध्यते भारत तस्य बुद्धिः॥ १२॥ परप्रयुक्तः पुरुषो विचेष्टते सूत्रप्रोता दारुमयीव योषा। इमं दृष्ट्वा नियमं पाण्डवस्य मन्ये परं कर्म्म दैवं मनुष्यात्॥ १३॥ इमञ्च दृष्ट्वा तव कर्म्मदोषं पापोदर्कं घोरमवर्णरूपम्। यावत् परः कामयतेऽतिवेलं तावन्नरोऽयं लभते प्रशंसाम्॥ १४॥ अजातशत्रुस्तु विहाय पापं जीर्णां त्वचं सर्प इवासमर्थाम्। विरोचतेऽहार्य्यवृत्तेन धीरो युधिष्ठिरस्त्वयि पापं विसृज्य॥ १५॥ अन्तात्मनः कर्म्म निबोध राजन् धर्म्मार्थयुक्तादार्य्यवृत्तादपेतम्। उपक्रोशं चेह गतोऽसि राजन् भूयश्च पापं प्रसजेदमुत्र॥ १६॥ स त्वमर्थं संशयितं विना तैराशंससे पुत्रवशानुगोऽस्य। अधर्म्मशब्दश्च महान् पृथिव्यां नेदं कर्म्म त्वत्समं भारताग्र्य॥ १७॥ हीनप्रज्ञो दौष्कुलेयो नृशंसो दीर्घवैरी

त्त्वविद्यास्वधीरः । एवं धर्मानापदः संश्रयेयुर्हीनो वीर्य्ये यश्च
भवेदशिष्टः ॥ १८ ॥ कुले जातो बलवान् यो यशस्वी बहुश्रुतः
सुखजीवी जितात्मा । धर्माधर्मौ ग्रथितौ यो बिभर्त्ति स ह्यस्य
दिष्टस्य वशादुपैति ॥ १९ ॥ कथं हि मन्त्राग्र्यधरो मनीषी
धर्मार्थयोरापदि सम्प्रणेता । एवंयुक्तः सर्वमन्त्रैरहीनो नरो नृशंसं
कर्म कुर्य्यादमूढः ॥ २० ॥ तव ह्यमी मन्त्रविदः समेत्य समासते
कर्मसु नित्ययुक्ताः । तेषामयं बलवान्निश्चयश्च कुरुक्षयो नियमे
नोदपादि ॥ २१ ॥ आकालिकं कुरवो नाभविष्यन् पापेन चेत्
पापमजातशत्रो । इच्छेज्जातु त्वयि पापं विसृज्य निन्दा चेयं
तव लोकेऽभविष्यत् ॥ २२ ॥ किमन्यत्र विषयादीश्वराणां यत्र
पार्थ परलोकं स्म द्रष्टुम् । अत्यक्रामत् स तथा सम्मतः स्यान्न
संशयो नास्ति मनुष्यकारे ॥ २३ ॥ एतान् गुणान् कर्मकृतानवेक्ष्य
भावाभावौ वर्त्तमानावनित्यौ । बलिर्हि राजा पारमविन्दमानो
नान्यत् कालात् कारणं तत्र मेने ॥ २४ ॥ चक्षुः श्रोत्रे नासिका
त्वक् च जिह्वा ज्ञानस्यैतान्यायतनानि जन्तोः । तानि प्रीतान्येव
तृष्णाक्षयान्ते तान्यव्यथो दुःखहीनः प्रणुद्यात् ॥ २५ ॥ न त्वेव
मन्ये पुरुषस्य कर्म संवर्त्तते सुप्रयुक्तं यथावत् । मातुः पितुः
कर्मणाभिप्रसूतः संवर्द्धते विधिवद्भोजनेन ॥ २६ ॥ प्रियाप्रिये
सुखदुःखे च राजन्निन्दाप्रशंसे च भजन्त एव । परस्त्वेनं गर्हयते-
ऽपराधे प्रशंसते साधुवृत्तं तमेव ॥ २७ ॥ स त्वा गर्हे भारतानां
विरोधादन्तो नूनं भविताऽयं प्रजानाम् । नो चेदिदं तव कर्मा-
पराधात् कुरून् दहेत् कृष्णवर्त्मेव कक्षम् ॥ २८ ॥ त्वमेवैको
जातु पुत्रस्य राजन् वशं गत्वा सर्वलोके नरेन्द्र । कामात्मनः
श्लाघनो द्यूतकाले नागाः शमं पश्य विपाकमस्य ॥ २९ ॥ अना-
प्तानां प्रग्रहात्त्वं नरेन्द्र तथाप्तानां निग्रहाच्चैव राजन् । भूमिं
स्फीतां दुर्बलत्वादनन्तामशक्तस्त्वं रक्षितुं कौरवेन्द्र ॥ ३० ॥ आनु

स्नातो रथवेगावधूतः श्रान्तोऽभिपद्ये शयनं नृसिंह। प्रातः श्रोतारः कुरवः सभायामजातशत्रोर्वचनं समेताः॥ ३१॥

धृतराष्ट्र उवाच। अनुज्ञातोऽस्त्यावसथं परेहि सुखं प्रपद्यस्व शयनं सूतपुत्र। प्रातः श्रोतारः कुरवः सभायामजातशत्रोर्वचनं समेता.॥ ३२॥

इति उद्योगपर्वणि सञ्जययानपर्वणि धृतराष्ट्रसञ्जयसंवादे एकत्रिंशोऽध्यायः समाप्तञ्च सञ्जययानपर्व॥ ३२॥

---

अथ प्रजागरपर्व॥

वैशम्पायन उवाच। द्वाःस्थं प्राह महाप्राज्ञो धृतराष्ट्रो महीपतिः। विदुरं द्रष्टुमिच्छामि तमिहानय मा चिरम्॥ १॥ प्रहितो धृतराष्ट्रेण दूतः चत्तारमब्रवीत्। ईश्वरस्त्वां महाराजो महाप्राज्ञ दिदृक्षति॥ २॥ एवमुक्तस्तु विदुरः प्राप्य राजनिवेशनम्। अब्रवीद्धृतराष्ट्राय द्वाःस्थं मां प्रतिवेदय॥ ३॥

द्वाःस्थ उवाच। विदुरोऽयमनुप्राप्तो राजेन्द्र तव शासनात्। द्रष्टुमिच्छति ते पादौ किं करोतु प्रशाधि माम्॥ ४॥

धृतराष्ट्र उवाच। प्रवेशय महाप्राज्ञं विदुरं दीर्घदर्शिनम्। अहं हि विदुरस्यास्य नाकल्यो जातु दर्शने॥ ५॥

द्वाःस्थ उवाच। प्रविशान्तःपुरं चत्तर्महाराजस्य धीमतः। न हि ते दर्शनेऽकल्यो जातु राजाब्रवीद्धि माम्॥ ६॥

वैशम्पायन उवाच। तत. प्रविश्य विदुरो धृतराष्ट्रनिवेशनम्। अब्रवीत् प्राञ्जलिर्वाक्यं चिन्तयानं नराधिपम्॥ ७॥ विदुरोऽहं महाप्राज्ञ संप्राप्तस्तव शासनात्। यदि किञ्चन कर्त्तव्यमयमस्मि प्रशाधि माम्॥ ८॥

धृतराष्ट्र उवाच। सञ्जयो विदुर प्राप्तो गर्हयित्वा च माङ्गत।

अजातशत्रोः श्वो वाक्यं सभामध्ये स वक्ष्यति ॥ ९ ॥ तस्याद्य कुरुवीरस्य न विज्ञातं वचो मया। तन्मे दहति गात्राणि तदकार्षीत् प्रजागरम् ॥ १० ॥ जाग्रतो दह्यमानस्य श्रेयो यदनुपश्यसि। तद्ब्रूहि त्वं हि नस्तात धर्मार्थकुशलो ह्यसि ॥ ११ ॥ यतः प्राप्तः संजयः पाण्डवेभ्यो न मे यथावन्मनसः प्रशान्तिः। सर्वेन्द्रियाण्यप्रकृतिं गतानि किं वक्ष्यतीत्येव हि मेऽद्य चिन्ता ॥ १२ ॥

विदुर उवाच। अभियुक्तं बलवता दुर्बलं हीनसाधनम्। हृतस्वं कामिनं चोरमाविशन्ति प्रजागराः ॥ १३ ॥ कच्चिदेतैर्महादोषैर्न स्पृष्टोऽसि नराधिप। कच्चिन्न परवित्तेषु गृध्यन् परितप्यसे ॥ १४ ॥

धृतराष्ट्र उवाच। श्रोतुमिच्छामि ते धर्म्यं परं नैःश्रेयसं वचः। अस्मिन् राजर्षिवंशे हि त्वमेकः प्राज्ञसम्मतः ॥ १५ ॥

विदुर उवाच। राजा लक्षणसम्पन्नस्त्रैलोक्यस्याधिपो भवेत्। प्रेष्यस्ते प्रेषितश्चैव धृतराष्ट्र युधिष्ठिरः ॥ १६ ॥ विपरीततरश्च त्वं भागधेये न सम्मतः। अर्चिषां प्रक्षयाच्चैव धर्मात्मा धर्मकोविदः ॥ १७ ॥ आनृशंस्यादनुक्रोशाद्धर्मात् सत्यात् पराक्रमात्। गुरुत्वात्त्वयि संप्रेक्ष्य बहून् क्लेशान् तितिक्षते ॥ १८ ॥ दुर्योधने सौबले च कर्णे दुःशासने तथा। एतेष्वैश्वर्यमाधाय कथं त्वं भूतिमिच्छसि ॥ १९ ॥ आत्मज्ञानं समारम्भस्तितिक्षा धर्मनित्यता। यमर्था नापकर्षन्ति स वै पण्डित उच्यते ॥ २० ॥ निषेवते प्रशस्तानि निन्दितानि न सेवते। अनास्तिकः श्रद्दधान एतत् पण्डितलक्षणम् ॥ २१ ॥ क्रोधो हर्षश्च दर्पश्च ह्रीः स्तम्भो मान्यमानिता। यमर्थान्नापकर्षन्ति स वै पण्डित उच्यते ॥ २२ ॥ यस्य कृत्यं न जानन्ति मन्त्रं वा मन्त्रितं परे। कृतमेवास्य जानन्ति स वै पण्डित उच्यते ॥ २३ ॥ यस्य कृत्यं न विघ्नन्ति शीतमुष्णं भयं रतिः। समृद्धिरसमृद्धिर्वा स वै पण्डित उच्यते ॥ २४ ॥ यस्य संसारिणी

प्रज्ञा धर्म्मार्थावनुवर्त्तते। कामादर्थं वृणीते यः स वै पण्डित उच्यते ॥ २५ ॥ यथाशक्ति चिकीर्षन्ति यथाशक्ति च कुर्वते। न किञ्चिदवमन्यन्ते नराः पण्डितबुद्धयः ॥ २६ ॥ क्षिप्रं विजानाति चिरं शृणोति विज्ञाय चार्थं भजते न कामात्। नासम्पृष्टो ह्युपयुङ्क्ते परार्थे तत् प्रज्ञानं प्रथमं पण्डितस्य ॥ २७ ॥ नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम्। आपत्सु च न मुह्यन्ति नराः पण्डितबुद्धयः ॥ २८ ॥ निश्चित्य यः प्रक्रमते नान्तर्वसति कर्मणः। अवन्ध्यकालो वश्यात्मा स वै पण्डित उच्यते ॥ २९ ॥ आर्य्यकर्मणि रज्यन्ते भूतिकर्माणि कुर्वते। हितञ्च नाभ्यसूयन्ति पण्डिता भरतर्षभ ॥ ३० ॥ न हृष्यत्यात्मसम्माने नावमाने न तप्यते। गाङ्गो ह्रद इवाक्षोभ्यो यः स पण्डित उच्यते ॥ ३१ ॥ तत्त्वज्ञः सर्वभूतानां योगज्ञः सर्वकर्मणाम्। उपायज्ञो मनुष्याणां नरः पण्डित उच्यते ॥ ३२ ॥ प्रवृत्तवाक् चित्रकथ ऊहवान् प्रतिभानवान्। आशुग्रन्थार्थवक्ता च यः स पण्डित उच्यते ॥ ३३ ॥ श्रुतं प्रज्ञानुगं यस्य प्रज्ञा चैव श्रुतानुगा। असम्भिन्नार्य्यमर्य्यादः पण्डिताख्यां लभेत सः ॥ ३४ ॥ अश्रुतश्च समुन्नद्धो दरिद्रश्च महामनाः। अर्थांश्चाकर्मणा प्रेप्सुर्मूढ इत्युच्यते बुधैः ॥ ३५ ॥ स्वमर्थं यः परित्यज्य परार्थमनुतिष्ठति। मिथ्याचरति मित्रार्थे यश्च मूढः स उच्यते ॥ ३६ ॥ अकामान् कामयति यः कामयानान् परित्यजेत्। बलवन्तञ्च यो द्वेष्टि तमाहुर्मूढचेतसम् ॥३६॥ अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनस्ति च। कर्म चारभते दुष्टं तमाहुर्मूढचेतसम् ॥ ३७ ॥ संसारयति कृत्यानि सर्वत्र विचिकित्सते। चिरं करोति क्षिप्रार्थे स मूढो भरतर्षभ ॥ ३८ ॥ श्राद्धं पितृभ्यो न ददाति दैवतानि न चार्चति। सुहृन्मित्रं न लभते तमाहुर्मूढचेतसम् ॥ ३९ ॥ अनाहूतः प्रविशति अपृष्टो बहु भाषते। अविश्वस्ते विश्वसिति मूढचेता नराधमः ॥ ४० ॥ परं

क्षिपति दोषेण वर्त्तमानः स्वयं तथा। यश्च क्रुध्यत्यनीशान स च मूढतमो नरः॥ ४१॥ आत्मनो बलमज्ञाय धर्मार्थपरिवर्ज्जितम्। अलभ्यमिच्छन्नैष्कर्म्यान्मूढबुद्धिरिहोच्यते॥ ४२॥ अशिष्यं शास्ति यो राजन् यश्च शून्यमुपासते। कदर्य्यं भजते यश्च तमाहुर्मूढचेतसम्॥ ४३॥ अर्थं महान्तमासाद्य विद्यामैश्वर्य्यमेव वा। विचरत्यसमुन्नद्धो यः स पण्डित उच्यते॥ ४४॥ एकः सम्पन्नमश्नाति वस्ते वासश्च शोभनम्। योऽसंविभज्य भृत्येभ्यः को नृशंसतरस्ततः॥ ४५॥ एकः पापानि कुरुते फलं भुंक्ते महाजनः। भोक्तारो विप्रमुच्यन्ते कर्त्ता दोषेण लिप्यते॥ ४६॥ एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता। बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्रं सराजकम्॥ ४७॥ एकया द्वे विनिश्चित्य त्रींश्चतुर्भिर्वशे कुरु। पञ्च जित्वा विदित्वा षट् सप्त हित्वा सुखी भव॥४८॥ एकं विषरसो हन्ति शस्त्रेणैकश्च बध्यते। सराष्ट्रं सप्रजं हन्ति राजानं मन्त्रविप्लवः॥ ४९॥ एकः स्वादु न भुञ्जीत एकश्चार्थान्न चिन्तयेत्। एको न गच्छेदध्वानं नैकः सुप्तेषु जागृयात्॥ ५०॥ एकमेवाद्वितीयं तद्यद्राजन्नावबुध्यसे। सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव॥ ५१॥ एकः क्षमावतां दोषो द्वितीयो नोपपद्यते। यदेनं क्षमया युक्तमशक्तं मन्यते जनः॥ ५२॥ सो.स्य दोषो न मन्तव्य क्षमा हि परमं बलम्। क्षमा गुणो ह्यशक्तानां शक्तानां भूषणं क्षमा॥ ५३॥ क्षमा वशीकृतिर्लोके क्षमया किं न साध्यते। शान्तिखड्‌गः करे यस्य किं करिष्यति दुर्ज्जनः॥ ५४॥ अतृणे पतितो वह्निः स्वयमेवोपशाम्यति। अक्षमावान् परं दोषैरात्मानमेव योजयेत्॥ ५५॥ एको धर्मः परं श्रेय. क्षमैका शान्तिरुत्तमा। विद्यैका परमा तृप्तिरहिंसैका सुखावहा॥ ५६॥ द्वाविमौ ग्रसते भूमिः सर्पो बिलशयानिव। राजानं चाप्ययोद्धारं ब्राह्मणं चाप्रवासिनम्॥ ५७॥ द्वे कर्म्मणी नरः

कर्व्वन्नस्मिल्लोके विरोचते। अब्रुवन् परुषं किञ्चिदसतोऽनर्चयं-स्तथा ॥ ५८ ॥ द्वाविमौ पुरुषव्याघ्र परप्रत्ययकारिणौ। स्त्रियः कामितकामिन्यो लोकः पूजितपूजकः ॥ ५९ ॥ द्वाविमौ कण्टकौ तीक्ष्णौ शरीरपरिशोषणौ। यश्चाधनः कामयते यश्च कुप्यत्यनीश्वरः ॥ ६० ॥ द्वाविमौ न विराजेते विपरीतेन कर्म्मणा। गृहस्थश्च निरारम्भः कार्य्यवांश्चैव भिक्षुकः ॥ ६१ ॥ द्वाविमौ पुरुषौ राजन् स्वर्गस्योपरि तिष्ठतः। प्रभुश्च क्षमया युक्तो दरिद्रश्च प्रदानवान् ॥ ६२ ॥ न्यायागतस्य द्रव्यस्य बोद्धव्यौ द्वावतिक्रमौ। अपात्रे प्रतिपत्तिश्च पात्रे चाप्रतिपादनम् ॥ ६३ ॥ द्वावम्भसि विनिक्षेप्तौ गाढं बद्धा गले शिलाम्। धनिनञ्चाप्रदातारं दरिद्रं चातपस्विनम् ॥ ६४ ॥ द्वाविमौ पुरुषव्याघ्र सूर्य्यमण्डलभेदिनौ। परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः ॥ ६५ ॥ त्रयोपाया मनुष्याणां श्रूयन्ते भरतर्षभ। कनीयान्मध्यमः श्रेष्ठ इति वेदविदो विदुः ॥ ६६ ॥ त्रिविधाः पुरुषा राजन् उत्तमाधममध्यमाः। नियोजयेद्यथावत्तांस्त्रिविधेष्वेव कर्म्मसु ॥ ६७ ॥ त्रय एवाधना राजन् भार्य्या दासस्तथा सुतः। यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम् ॥ ६८ ॥ हरणञ्च परस्वानां परदाराभिमर्षणम्। सुहृदश्च परित्यागस्त्रयो दोषा भयप्रदाः ॥ ६९ ॥ त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः। कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ ७० ॥ भक्तञ्च भजमानञ्च तवास्मीति च वादिनम्। त्रीनेतान्छरणं प्राप्तान् विषमेऽपि न सन्त्यजेत् ॥ ७० ॥ वरप्रदानं राज्यञ्च पुत्रजन्म च भारत। शत्रोश्च मोचणं कृच्छ्रात्त्रीणि चैकञ्च तत् समम् ॥ ७१ ॥ चत्वारि राज्ञा तु महाबलेन वर्ज्यान्याहुः पण्डितस्तानि विद्यात्। अल्पप्रज्ञैः सह मन्त्रं न कुर्य्यान्न दीर्घसूत्रै रलसैश्चारणैश्च ॥ ७२ ॥ चत्वारि ते तात गृहे वसन्तु श्रियाभिजुष्टस्य गृहस्थधर्म्मे। वृद्धो ज्ञातिरवसन्नः कुलीनः सखा दरिद्रो

भगिनी चानपत्या ॥ ७३ ॥ चत्वार्याहु महाराज साद्यस्कानि वृहस्पतिः। पृच्छते त्रिदशेन्द्राय तानीमानि निबोध मे ॥ ७४ ॥ देवतानाञ्च सङ्कल्पमनुभावञ्च धीमताम्। विनयं कृतविद्यानां विनाशं पापकर्मणाम् ॥ ७५ ॥ चत्वारि कर्माण्यभयङ्कराणि भयं प्रयच्छन्त्ययथाकृतानि। मानाग्निहोत्रमुत मानमौनं मानेनाधीतमुत मानयज्ञः ॥ ७६ ॥ पञ्चाग्नयो मनुष्येण परिचर्य्याः प्रयत्नतः। पिता माताग्निरात्मा च गुरुश्च भरतर्षभ ॥ ७७ ॥ पञ्चैव पूजयन् लोके यशः प्राप्नोति केवलम्। देवान् पितॄन् मनुष्यांश्च भिक्षून् तिथिपञ्चमान् ॥ ७८ ॥ पञ्च त्वानुगमिष्यन्ति यत्र यत्र गमिष्यसि। मित्राण्यमित्रा मध्यस्था उपजीव्योपजीविनः ॥ ७९ ॥ पञ्चेन्द्रियस्य मर्त्यस्य छिद्रं चेदेकमिन्द्रियम्। ततोऽस्य स्रवति प्रज्ञा दृतेः पात्रादिवोदकम् ॥ ८० ॥ षड् दोषाः पुरुषेणेह हातव्या भूतिमिच्छता। निद्रा तन्द्रीर्भयं क्रोध आलस्यं दीर्घसूत्रता ॥ ८१ ॥ षडिमान् पुरुषो जह्याद्भिन्नां नावमिवार्णवे। अप्रवक्तारमाचार्य्यमनधीयानमृत्विजम् ॥ ८२ ॥ अरक्षितारं राजानं भार्य्यां चाप्रियवादिनीम्। ग्रामकामञ्च गोपालं वनकामञ्च नापितम् ॥ ८३ ॥ षडेव तु गुणाः पुंसा न हातव्याः कदाचन। सत्यं दानमनालस्यमनसूया क्षमा धृतिः ॥ ८४ ॥ षडिमानि विनश्यन्ति मुहूर्त्तमनवेक्षणात्। गावः सेवा कृषिर्भार्य्या विद्या वृषलसङ्गतिः ॥८५॥ षडेते ह्यवमन्यन्ते नित्यं पूर्वोपकारिणम्। आचार्य्यं शिक्षिताः शिष्याः कृतदाराश्च मातरम् ॥ ८६ ॥ नारीं विगतकामाश्च कृतार्थाश्च प्रयोजनम्। नावं निस्तीर्णकान्तारा आतुराश्च चिकित्सकम् ॥ ८७ ॥ आरोग्यमानृण्यमविप्रवासः सद्भिर्मनुष्यैः सह संप्रयोगः। स्वप्रत्यया वृत्तिरभीतवासः षड् जीवलोकस्य सुखानि राजन् ॥८८॥ ईर्षुर्घृणी त्वसन्तुष्टः क्रोधनो नित्यशङ्कितः। परभाग्योपजीवी च षडेते नित्यदुःखिताः ॥ ८९ ॥ अर्थागमो नित्यमरोगिता च प्रिय

च भार्य्या प्रियवादिनी च । वश्यश्च पुत्रोऽर्थकरी च विद्या षड् जीवलोकस्य सुखानि राजन् ॥ ९० ॥ षडेवमात्मनि नित्यानामैश्वर्य्यं योऽधिगच्छति । न स पापैः कुतोऽनर्थैर्युज्यते विजितेन्द्रियः ॥ ९१ ॥ षडिमे षट्सु जीवन्ति सप्तमो नोपलभ्यते । चौराः प्रमत्ते जीवन्ति व्याधितेषु चिकित्सकाः ॥ ९२ ॥ प्रमदाः कामयानेषु यजमानेषु याजकाः । राजा विवदमानेषु नित्यं मूर्खेषु पण्डिताः ॥ ९३ ॥ सप्त दोषाः सदा राज्ञा हातव्या व्यसनोदयाः । प्रायशो यैर्विनश्यन्ति कृतमूला अपीश्वराः ॥९४॥ स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यञ्च पञ्चमम् । महच्च दण्डपारुष्यमर्थदूषणमेव च ॥ ९५ ॥ अष्टौ पूर्वनिमित्तानि नरस्य विनशिष्यतः । ब्राह्मणान् प्रथमं द्वेष्टि ब्राह्मणैश्च विरुध्यते ॥ ९६ ॥ ब्राह्मणस्वानि चादत्ते ब्राह्मणांश्च जिघांसति । रमते निन्दया चैषां प्रशंसां नाभिनन्दति ॥ ९७ ॥ नैतान् स्मरति कृत्येषु याचितश्चाभ्यसूयति । एतान् दोषान् नरः प्राज्ञो बुध्येद्बुद्ध्वा विसर्जयेत् ॥९८॥ अष्टाविमानि हर्षस्य नवनीतानि भारत । वर्त्तमानानि दृश्यन्ते तान्येव सुसुखान्यपि ॥ ९९ ॥ समागमश्च सखिभिर्महांश्चैव धनागमः । पुत्रेण च परिष्वङ्गः सन्निपातश्च मैथुने ॥ १०० ॥ समये च प्रियालापः स्वयूथ्येषु समुन्नतिः । अभिप्रेतस्य लाभश्च पूजा च जनसंसदि ॥ १०१ ॥ अष्टौ गुणाः पुरुषं दीपयन्ति प्रज्ञा च कौल्यञ्च दमः श्रुतञ्च । पराक्रमश्चाबहुभाषिता च दानं यथाशक्ति कृतज्ञता च ॥ १०२ ॥ नवद्वारमिदं वेश्म त्रिस्थूणं पञ्चसाक्षिकम् । क्षेत्रज्ञाधिष्ठितं विद्वान् यो वेद स परः कविः ॥ १०३ ॥ दश धर्मं न जानन्ति धृतराष्ट्र निबोध तान् । मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः ॥१०४॥ त्वरमाणश्च लुब्धश्च भीतः कामी च ते दश । तस्मादेतेषु सर्व्वेषु न प्रसज्जेत पण्डितः ॥ १०५ ॥ अत्रैवोदाहरन्तीममितिहासं पुरातनम् । पुत्रार्थमसुरेन्द्रेण गीतञ्चैव सुधन्वना

॥१०४॥ यः काममन्यू प्रजहाति राजा पात्रे प्रतिष्ठापयते धनञ्च। विशेषविच्छ्रुतवान् क्षिप्रकारी तं सर्वलोकः कुरुते प्रमाणम् ॥१०५॥ जानाति विश्वासयितुं मनुष्यान् विज्ञातदोषेषु दधाति दण्डम्। जानाति मात्राञ्च तथा क्षमाञ्च तं तादृशं श्रीर्जुषते समग्रा ॥१०६॥ सुदुर्बलं नावजानाति कञ्चिद्युक्तो रिपुं सेवते बुद्धिपूर्वम्। न विग्रहं रोचयते बलस्थैः काले च यो विक्रमते स धीरः ॥ १०७ ॥ प्राप्यापदं न व्यथते कदाचिदुद्योगमन्विच्छति चाप्रमत्तः। दुःखञ्च काले सहते महात्मा धुरन्धरस्तस्य जिताः सपत्नाः ॥ १०८ ॥ अनर्थकं विप्रवासं गृहेभ्यः पापैः सन्धिं परदाराभिमर्षम्। दम्भं स्तैन्यं पैशुनं मद्यपानं न सेवते यः स सुखी सदैव ॥ १०९ ॥ न संरम्भेणारभते त्रिवर्गमाकारितः शंसति तत्त्वमेव। न मित्रार्थे रोचयते विवादं नापूजितः कुप्यति चाप्यमूढः ॥ ११० ॥ योऽभ्यसूयत्यनुकम्पते च न दुर्बलः प्रातिभाव्यं करोति। नात्याह किञ्चित् क्षमते विवादं सर्वत्र तादृग्लभते प्रशंसाम् ॥ १११ ॥ यो नोद्धतं कुरुते जातु वेषं न पौरुषेणापि विकत्थतेऽन्यान्। न मूर्च्छितः कटुकान्याह किञ्चित् प्रियं सदा तं कुरुते जनो हि ॥ ११२ ॥ न वैरमुद्दीपयति प्रशान्तं न दर्पमारोहति नास्तमेति। न दुर्गतोऽस्मीति करोत्यकार्यं तमार्यशीलं परमाहुरार्याः ॥ ११३ ॥ न स्वे सुखे वै कुरुते प्रहर्षं नान्यस्य दुःखे भवति प्रहृष्टः। दत्त्वा न पश्चात् कुरुतेऽनुतापं स कथ्यते सत्पुरुषार्यशीलः ॥ ११४ ॥ देशाचारान् समयान् जातिधर्मान् बुभूषते यः स परावरज्ञः। स यत्र तत्राधिगतः सदैव महाजनस्याधिपत्यं करोति ॥ ११५ ॥ दम्भं मोहं मत्सरं पापकृत्यं राजद्विष्टं पैशुनं पूगवैरम्। मत्तोन्मत्तैर्दुर्जनैश्चापि वादं यः प्रज्ञावान् वर्जयेत् स प्रधानः ॥ ११६ ॥ दमं शौचं दैवतं मङ्गलानि प्रायश्चित्तान् विविधाँल्लोकवादान्। एतानि यः कुरुते नैत्यिकानि तस्योत्थानं देवता राधयन्ति ॥ ११७ ॥ समैर्विवाह

कुरुते न हीनैः समैः सख्यं व्यवहारं कथाय। गुणैर्विशिष्टांश्च पुरो दधाति विपश्चितस्तस्य नयाः सुनीताः॥ ११८ ॥ मितं भुंक्ते संविभज्याश्रितेभ्यो मितं स्वपित्यमितं कर्म कृत्वा। ददात्यमित्रेष्वपि याचितः स्वं तमात्मवन्तं प्रजहत्यनर्थाः॥ ११९ ॥ चिकीर्षितं विप्रकृतञ्च यस्य नान्ये जनाः कर्म जानन्ति किञ्चित्। मन्त्रे गुप्ते सम्यगनुष्ठिते च नाल्पोऽप्यस्य च्यवते कश्चिदर्थः ॥ १२० ॥ यः सर्वभूतप्रशमे निविष्टः सत्यो मृदुर्मानकृच्छुद्धभावः। अतीव स ज्ञायते ज्ञातिमध्ये महामणिर्जात्य इव प्रसन्नः ॥ १२१॥ य आत्मनापत्रपते भृशं नरः स सर्वलोकस्य गुरुर्भवत्युत। अनन्ततेजा सुमना समाहितः स तेजसा सूर्य्य इवावभासते॥ १२२ ॥ वने जाताः शापदग्धस्य राज्ञः पाण्डोः पुत्राः पञ्च पञ्चेन्द्रकल्पाः। त्वयैव बाला वर्द्धिताः शिक्षिताश्च तवादेशं पालयन्त्याम्बिकेय ॥ १२३ ॥ प्रदायैषामुचितं तात राज्यं सुखी पुत्रैः सहितो मोदमानः। न देवानां नापि च मानुषाणां भविष्यसि त्वं तर्कणीयो नरेन्द्र ॥ १२४ ॥

इति उद्योगपर्वणि प्रजागरपर्वणि विदुरहितवाक्ये द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

धृतराष्ट्र उवाच। जाग्रतो दह्यमानस्य यत् कार्य्यमनुपश्यसि। तद्ब्रूहि त्वं हि नस्तात धर्म्मार्थकुशलो ह्यसि ॥ १ ॥ त्वं मां यथावद्विदुर प्रशाधि प्रज्ञापूर्वं सर्वमजातशत्रोः। यन्मन्यसे पथ्यमदीनसत्त्व श्रेयस्करं ब्रूहि तद्वै कुरूणाम् ॥ २ ॥ पापाशङ्की पापमेवानुपश्यन् पृच्छामि त्वां व्याकुलेनात्मनाहम्। कवे तन्मे ब्रूहि सर्वं यथावन्मनीषितं सर्वमजातशत्रोः ॥ ३ ॥

विदुर उवाच। शुभं वा यदि वा पापं द्वेष्यं वा यदि वा

प्रियम्। अपृष्टस्तस्य तद्ब्रूयाद्यस्य नेच्छेत् पराभवम् ॥ ४ ॥ तस्माद्वक्ष्यामि ते राजन् भवमिच्छन् कुरून् प्रति। वचः श्रेयस्करं धर्म्यं ब्रुवतस्तन्निबोध मे ॥ ५ ॥ मिथ्योपेतानि कर्माणि सिध्येयुर्यानि भारत। अनुपायप्रयुक्तानि मा स्म तेषु मनः कृथाः ॥ ६ ॥ तथैव योगविहितं न सिध्येत् कर्म यन्नृप। उपाययुक्तं मेधावी न तत्र ग्लपयेन्मनः ॥ ७ ॥ अनुबन्धानपेक्षेत सानुबन्धेषु कर्मसु। सम्प्रधार्य्य च कुर्वीत न वेगेन समाचरेत् ॥ ८ ॥ अनुबन्धञ्च संप्रेक्ष्य विपाकञ्चैव कर्मणाम्। उत्थानमात्मनश्चैव धीरः कुर्वीत वा न वा ॥ ९ ॥ यः प्रमाणं न जानाति स्थाने वृद्धौ तथा क्षये। कोषे जनपदे दण्डे न स राज्येऽवतिष्ठते ॥ १० ॥ यस्त्वेतानि प्रमाणानि यथोक्तान्यनुपश्यति। युक्तो धर्मार्थयोर्ज्ञाने स राज्यमधिगच्छति ॥ ११ ॥ न राज्यं प्राप्तमित्येव वर्त्तितव्यमसाम्प्रतम्। श्रियं ह्यविनयो हन्ति जरा रूपमिवोत्तमम् ॥ ११ ॥ भक्ष्योत्तमप्रतिच्छन्नं मत्स्यो वडिशमायसम्। लोभाभिपाती ग्रसते नानुबन्धमपेक्षते ॥ १२ ॥ यच्छक्यं ग्रसितुं ग्रस्यं ग्रस्तं परिणमेच्च यत्। हितञ्च परिणामे यत्तदाद्यं भूतिमिच्छता ॥ १३ ॥ वनस्पतेरपक्वानि फलानि प्रचिनोति यः। स नाप्नोति रसं तेभ्यो बीजञ्चास्य विनश्यति ॥ १४ ॥ यस्तु पक्वमुपादत्ते काले परिणतं फलम्। फलाद्रसं स लभते बीजाच्चैव फलं पुनः ॥ १५ ॥ यथा मधु समादत्ते रक्षन् पुष्पाणि षट्पदः। तद्वदर्थान्मनुष्येभ्य आदद्यादविहिंसया ॥ १६ ॥ पुष्पं पुष्पं विचिन्वीत मूलच्छेदं न कारयेत्। मालाकार इवारामे न यथाङ्गारकारकः ॥ १७ ॥ किं नु मे स्यादिदं कृत्वा किं नु मे स्यादकुर्वतः। इति कर्माणि सञ्चिन्त्य कुर्य्याद्वा पुरुषो न वा ॥ १८ ॥ अनारभ्या भवन्त्यर्थाः केचिन्नित्यं तथागताः। कृतः पुरुषकारो हि भवेद्येषु निरर्थकः ॥१९॥ प्रसादो निष्फलो यस्य क्रोधश्चापि निरर्थकः। न तं भर्त्तार-

मिच्छन्ति परत्रं पतिमिव स्त्रियः ॥ २० ॥ कश्चिदर्थान्नरः प्राज्ञो लघुमूलान्महाफलान् । क्षिप्रमारभते कर्त्तुं न विघ्नयति तादृशान् ॥ २१ ॥ ऋजुः पश्यति यः सर्वं चक्षुषा प्रपिवन्निव । आसीनमपि तूष्णीकमनुरज्यन्ति तं प्रजाः ॥ २२ ॥ सुपुष्पितः स्यादफलः फलितः स्याद्दुरारुहः । अपक्वः पक्वसङ्काशो न तु शीर्य्येत कर्हिचित् ॥२३॥ चक्षुषा मनसा वाचा कर्म्मणा च चतुर्व्विधम् । प्रसादयति यो लोकं त लोकोऽनुप्रसीदति ॥ २४ ॥ यस्मात्त्रस्यन्ति भूतानि मृगव्याधान्मृगा इव । सागरान्तामपि महीं लब्ध्वा स परिहीयते ॥ २५ ॥ पितृपैतामहं राज्यं प्राप्तवान् स्वेन तेजसा । वायुरभ्रमिवासाद्य भ्रंशयत्यनये स्थितः ॥ २६ ॥ धर्म्ममाचरतो राज्ञः सद्भिश्चरितमादितः । वसुधा वसुसम्पूर्णा वर्द्धते भूतिवर्द्धिनी ॥२७॥ अथ सन्त्यजतो धर्म्ममधर्म्मञ्चानुतिष्ठतः । प्रतिसंवेष्टते भूमिरग्नौ चर्म्माहितं यथा ॥ २८ ॥ य एव यत्नः क्रियते परराष्ट्रविमर्द्दने । स एव यत्नः कर्त्तव्यः स्वराष्ट्रपरिपालने ॥ २९ ॥ धर्म्मेण राज्यं विन्देत धर्म्मेण परिपालयेत् । धर्म्ममूलां श्रियं प्राप्य न जहाति न हीयते ॥ ३० ॥ अप्युन्मत्तात् प्रलपतो बालाच्च परिजल्पतः । सर्व्वतः सारमादद्यादश्मभ्य इव काञ्चनम् ॥ ३१ ॥ सुव्याहृतानि सूक्तानि सुकृतानि ततस्ततः । सञ्चिन्वन् धीर आसीत शिलाहारी शिलं यथा ॥ ३२ ॥ गन्धेन गावः पश्यन्ति वेदैः पश्यन्ति ब्राह्मणाः । चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥ ३३ ॥ भूयांसं लभते क्लेशं या गौर्भवति दुर्दुहा । अथ या सुदुहा राजन्नैव तां वितुदन्त्यपि ॥ ३४ ॥ यदतप्तं प्रणमति न तत् सन्तापयन्त्यपि । यच्च स्वयं नतं दारु न तत् सन्तापयन्त्यपि ॥ ३५ ॥ एतयोपमया धीरः सन्नमेत बलीयसे । इन्द्राय स प्रणमते नमते यो बलीयसे ॥ ३६॥ पर्ज्जन्यनाथाः पशवो राजानो मन्त्रिबान्धवाः । पतयो बान्धवाः स्त्रीणां ब्राह्मणा वेदबान्धवाः ॥ ३७ ॥ सत्येन

रक्ष्यते धर्मो विद्या योगेन रक्ष्यते। मृजया रक्ष्यते रूपं कुलं वृत्तेन रक्ष्यते ॥ ३८ ॥ मानेन रक्ष्यते धान्यमश्वान् रक्षत्यनुक्रम। अभीक्ष्णं दर्शनं गाव स्त्रियो रक्षेत् कुचेलता ॥ ३९ ॥ न कुलं वृत्तहीनस्य प्रमाणमिति मे मतिः। अन्त्येष्वपि हि जातानां वृत्तमेव विशिष्यते ॥ ४० ॥ य ईर्षुः परवित्तेषु रूपे वीर्य्ये कुलान्वये सुखसौभाग्यसत्कारे तस्य व्याधिरनन्तकः ॥ ४१ ॥ अकार्य्यकरणाद्भीतः कार्य्याणाञ्च विवर्ज्जनात्। अकाले मन्त्रभेदाच्च येन माद्येन्न तत् पिबेत् ॥ ४२ ॥ विद्यामदो धनमदस्तृतीयोऽभिजनोमदः। मदा एतेऽवलिप्तानामेत एव सतां दमाः ॥ ४३ ॥ असन्तोऽभ्यर्थिता सद्भिः क्वचित् कार्य्ये कदाचन। तावन्न तस्य सुकृतं किञ्चित् कार्य्ये कदाचन ॥ ४४ ॥ मन्यन्ते सन्तमात्मानमसन्तमपि विश्रुतम्। गतिरात्मवतां सन्त सन्त एव सतां गति ॥ ४५ ॥ असताञ्च गति सन्तो न त्वसन्त सता गति। जिता सभा वस्त्रवता मिष्टाशा गोमता जिता। अध्वा जितो यानवता सर्वं शीलवता जितम् ॥ ४६ ॥ शीलं प्रधानं पुरुषे तद्यस्येह प्रणश्यति। न तस्य जीवितेनार्थो न धनेन न बन्धुभि ॥ ४७ ॥ आढ्यानां मांसपरमं मध्यानां गोरसोत्तरम्। तैलोत्तरं दरिद्राणां भोजनं भरतर्षभ ॥ ४८ ॥ सम्पन्नतरमेवान्नं दरिद्रा भुञ्जते सदा। क्षुत् स्वादुतां जनयति सा चाढ्येषु सुदुर्लभा ॥ ४९ ॥ प्रायेण श्रीमतां लोके भोक्तुं शक्तिर्न विद्यते। जीर्य्यन्त्यपि हि काष्ठानि दरिद्राणां महीपते ॥ ५० ॥ अवृत्तिर्भयमन्त्यानां मध्यानां मरणाद्भयम्। उत्तमानान्तु मर्त्यानामवमानात् परं भयम् ॥ ५१ ॥ ऐश्वर्य्यमदपापिष्ठा मदा पानमदादय। ऐश्वर्य्यमदमत्तो हि नापतित्वा विबुध्यते ॥ ५२ ॥ इन्द्रियैरिन्द्रियार्थेषु वर्त्तमानैरनिग्रहैः। तैरयं ताप्यते लोको नक्षत्राणि ग्रहैरिव ॥ ५३ ॥ यो जित पञ्चवर्गेण सहजेनात्मकर्षिणा। आपदस्तस्य वर्द्धन्ते शुक्ल-

पच्च द्रवोद्‌धुराट् । ५४ ॥ अविजित्य य आत्मानममात्यान् विजिगीषते । अमित्रान् वा जितामात्य सोऽवशः परिहीयते ॥ ५५ ॥ आत्मानमेव प्रथमं द्वेष्यरूपेण यो जयेत् । ततोऽमात्यानमित्रांश्च न मोघं विजिगीषते ॥ ५६ ॥ वश्येन्द्रियं जितात्मानं धृतदण्डं विकारिषु । परीच्य कारिणं धीरमत्यन्तं श्रीर्निषेवते ॥ ५७ ॥ रथः शरीरं पुरुषस्य राजन्नात्मा नियन्तेन्द्रियाण्यस्य चाश्वाः । तैरप्रमत्तः कुशली सदश्वैर्दान्तैः सुखं याति रथीव धीरः ॥ ५८ ॥ एतान्यनिगृहीतानि व्यापादयितुमप्यलम् । अविधेया इवादान्ता हयाः पथि कुसारथिम् ॥ ५९ ॥ अनर्थमर्थतः पश्यन्नर्थञ्चैवाप्यनर्थतः । इन्द्रियैरजितैर्बालः सुदुःखं मन्यते सुखम् ॥ ६० ॥ धर्मार्थौ यः परित्यज्य स्यादिन्द्रियवशानुगः । श्रीप्राणधनदारेभ्यः क्षिप्रं स परिहीयते ॥ ६१ ॥ अर्थानामीश्वरो यः स्यादिन्द्रियाणामनीश्वरः । इन्द्रियाणामनैश्वर्य्यादैश्वर्य्याद्भ्रश्यते हि सः ॥६२॥ आत्मनात्मानमन्विच्छेन्मनोबुद्धीन्द्रियैर्यतैः । आत्मा ह्येवात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ६३ ॥ बन्धुरात्मात्मनस्तस्य येनैवात्मात्मना जितः । स एव नियतो बन्धुः स एव नियतो रिपुः ॥६४॥ क्षुद्राक्षेणेव जालेन झषावपिहितावुभौ । कामश्च राजन् क्रोधश्च तौ प्रज्ञानं विलुम्पतः ॥ ६५ ॥ समवेक्ष्येह धर्मार्थौ सम्भारान् योऽधिगच्छति । स वै सम्भृतसम्भारः सततं सुखमेधते ॥ ६५ ॥ यः पञ्चाभ्यन्तरान् शत्रूनविजित्य मनोमयान् । जिगीषति रिपून् अन्यान् रिपवोऽभिभवन्ति तम् ॥ ६७ ॥ दृश्यन्ते हि दुरात्मानो बध्यमानाः स्वकर्म्मभिः । इन्द्रियाणामनीशत्वाद्राजानो राज्यविभ्रमैः ॥ ६८ ॥ असन्त्यागात् पापकृतामपापांस्तुल्यो दण्डः स्पृशते मिश्रभावात् । शुष्केणार्द्रं दह्यते मिश्रभावात् तस्मात् पापैः सह सन्धिं न कुर्य्यात् ॥ ६९ ॥ निजानुत्पततः शत्रून् पञ्च पञ्च प्रयोजनान् । यो मोहान्न निगृह्णाति तमापद्ग्रसते नरम् ॥ ७० ॥ अनसूया-

र्ज्जवं शौचं सन्तोषः प्रियवादिता । दमः सत्यमनायासो न भवन्ति दुरात्मनाम् ॥ ७१ ॥ आत्मज्ञानमनायासस्तितिक्षा धर्मनित्यता । वाक् चैव गुप्ता दानञ्च नैतान्यन्त्येषु भारत ॥ ७२ ॥ अक्रोशपरिवादाभ्यां विहिंसन्त्यबुधा बुधान् । वक्ता पापमुपादत्ते क्षममाणो विमुच्यते ॥ ७३ ॥ हिंसा बलमसाधूनां राज्ञां दण्डविधिर्बलम् । शुश्रूषा तु बलं स्त्रीणां क्षमा गुणवतां बलम् ॥ ७४ ॥ वाक्संयमो हि नृपते सुदुष्करतमो मतः । अर्थवच्च विचित्रञ्च न शक्यं बहु भाषितुम् ॥ ७५ ॥ अभ्यावहति कल्याणं विविधं वाक् सुभाषिता । सैव दुर्भाषिता राजन्ननर्थायोपपद्यते ॥ ७६ ॥ रोहते सायकैर्विद्धं वनं परशुना हतम् । वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम् ॥ ७७ ॥ कर्णिनालीकनाराचा निर्हरन्ति शरीरतः । वाक्शल्यस्तु न निर्हर्त्तुं शक्यो हृदिशयो हि सः ॥ ७८ ॥ वाक्सायका वदनान्निष्पतन्ति यैराहतः शोचति रात्र्यहानि । परस्य नामर्मसु ते पतन्ति तान् पण्डितो नावसृजेत् परेभ्यः ॥ ७९ ॥ यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम् । बुद्धिं तस्यापकर्षन्ति सोऽवाचीनानि पश्यति ॥ ८० ॥ बुद्धौ कलुषभूतायां विनाशे प्रत्युपस्थिते । अनयो नयसङ्काशो हृदयान्नापसर्पति ॥ ८१ ॥ सेयं बुद्धिः परीता ते पुत्राणां भरतर्षभ । पाण्डवानां विरोधेन न चैनामवबुध्यसे ॥ ८२ ॥ राजलक्षणसम्पन्नस्त्रैलोक्यस्यापि यो भवेत् । शिष्यस्ते शासिता सोऽस्तु धृतराष्ट्र युधिष्ठिरः ॥ ८३ ॥ अतीत्य सर्वान् पुत्रांस्ते भागधेयपुरस्कृतः । तेजसा प्रज्ञया चैव युक्तो धर्मार्थतत्त्ववित् ॥ ८४ अनुक्रोशादानृशंस्याद्योऽसौ धर्मभृतां वरः । गौरवात्तव राजेन्द्र बहून् क्लेशांस्तितिक्षति ॥ ८५ ॥

इति उद्योगपर्वणि प्रजागरपर्वणि विदुरवाक्ये

त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

धृतराष्ट्र उवाच। ब्रूहि भूयो महाबुद्धे धर्मार्थसंहितं वचः। शृण्वतो नास्ति मे तृप्तिर्विचित्राणीह भाषसे ॥ १ ॥

विदुर उवाच। सर्वतीर्थेषु वा स्नानं सर्वभूतेषु चार्जवम्। उभे त्वेते समे स्यातामार्जवं वा विशिष्यते ॥ २ ॥ आर्जवं प्रतिपद्यस्व पुत्रेषु सततं विभो। इह कीर्त्तिं परां प्राप्य प्रेत्य स्वर्गमवाप्स्यसि ॥ ३ ॥ यावत् कीर्त्तिर्मनुष्यस्य पुण्या लोके प्रगीयते। तावत् स पुरुषव्याघ्र स्वर्गलोके महीयते ॥ ४ ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम्। विरोचनस्य संवादं केशिन्यर्थे सुधन्वना ॥ ५ ॥ स्वयम्वरे स्थिता कन्या केशिनी नाम नामतः। रूपेणाप्रतिमा राजन् विशिष्टपतिकाम्यया ॥६॥ विरोचनोऽथ दैतेयस्तदा तत्राजगाम ह। प्राप्तुमिच्छंस्ततस्तत्र दैत्येन्द्रं प्राह केशिनी ॥७॥

केशिन्युवाच। किं ब्राह्मणाः स्विच्छ्रेयांसो दितिजाः स्विद्विरोचन। अथ केन स्म पर्य्यङ्कं सुधन्वा नाधिरोहति ॥ ८ ॥

विरोचन उवाच। प्राजापत्यास्तु वै श्रेष्ठा वयं केशिनि सत्तमाः। अस्माकं खल्विमे लोकाः के देवाः के द्विजातयः ॥ ९ ॥

केशिन्युवाच। इहैवावां प्रतीक्षाव उपस्थाने विरोचन। सुधन्वा प्रातरागन्ता पश्येयं वां समागतौ ॥ १० ॥

विरोचन उवाच। तथा भद्रे करिष्यामि यथा त्वं भीरु भाषसे। सुधन्वानञ्च माञ्चैव प्रातर्द्रष्टासि सङ्गतौ ॥ ११ ॥

विदुर उवाच। अतीतायाञ्च शर्वर्य्यामुदिते सूर्य्यमण्डले। अथाजगाम तं देशं सुधन्वा राजसत्तम ॥ १२ ॥ विरोचनो यत्र विभो केशिन्या सहितः स्थितः। सुधन्वा वै समागच्छत् प्राह्लादिं केशिनीं तथा ॥ १३ ॥ समागतं द्विजं दृष्ट्वा केशिनी भरतर्षभ। प्रत्युत्थायासनं तस्मै पाद्यमर्घ्यं ददौ पुनः ॥ १४ ॥

सुधन्वोवाच। अन्वालभे हिरण्मयं प्राह्लादे तवासनम्। एकत्वमुपसम्पन्नो न त्वासेऽहं त्वया सह ॥ १५ ॥

विरोचन उवाच। तवार्हते तु फलकी कूर्चं वाप्यथ वा वृषी। सुधन्वन्न त्वमर्होऽसि मया सह समासनम् ॥ १६ ॥

सुधन्वोवाच। पिता पुत्रौ सहासीता द्वौ विप्रौ क्षत्रियावपि। वृद्धौ वैश्यौ च शूद्रौ च न त्वन्याविततरेतरम् ॥ १७ ॥ पिता हि ते समासीनमुपासीतैव मामधः। बालः सुखैधितो गेहे न त्वं किञ्चन बुध्यसे ॥ १८ ॥

विरोचन उवाच। हिरण्यञ्च गवाश्वञ्च यद्वित्तमसुरेषु नः। सुधन्वन् विपणे तेन प्रश्नं पृच्छाव ये विदुः ॥ १९ ॥

सुधन्वोवाच। हिरण्यञ्च गवाश्वञ्च तवैवास्तु विरोचन। प्राणयोस्तु पणं कृत्वा प्रश्नं पृच्छाव ये विदुः ॥ २० ॥

विरोचन उवाच। आवां कुत्र गमिष्याव प्राणयोर्विपणे कृते। न तु देवेष्वहं स्थाता न मनुष्येषु कर्हिचित ॥ २१ ॥

सुधन्वोवाच। पितरं ते गमिष्याव प्राणयोर्विपणे कृते। पुत्रस्यापि स हेतोर्हि प्रह्लादो नानृतं वदेत ॥ २२ ॥

विदुर उवाच। एवं कृतपणौ क्रुद्धौ तत्राभिजग्मतुस्तदा। विरोचनसुधन्वानौ प्रह्लादो यत्र तिष्ठति ॥ २३ ॥

प्रह्लाद उवाच। इमौ तौ सम्प्रदृश्येते याभ्यां न चरितं सह। आशीविषाविव क्रुद्धावेकमार्गाविहागतौ ॥ २४ ॥ किं वै सहैव चरथो न पुरा चरथः सह। विरोचनैतत् पृच्छामि किन्ते सख्यं सुधन्वना ॥ २५ ॥

विरोचन उवाच। न मे सुधन्वना सख्यं प्राणयोर्विपणावहे। प्रह्लाद तत्त्वं पृच्छामि मा प्रश्नमनृतं वदेः ॥ २६ ॥

प्रह्लाद उवाच। उदकं मधुपर्कं वाप्यानयन्तु सुधन्वने। ब्रह्मन्नभ्यर्चनीयोऽसि श्वेता गौः पीवरीकृता ॥ २७ ॥

सुधन्वोवाच। उदकं मधुपर्कं च पथिष्वेवार्पितं मम।

प्रह्लाद त्वन्तु मे तथ्यं प्रश्नं प्रब्रूहि पृच्छतः । किं ब्राह्मणाः स्वि-च्छ्रेयांस उताहोस्विद्विरोचनः ॥ २८ ॥

प्रह्लाद उवाच । पुत्र एको मम ब्रह्मंस्त्वञ्च साक्षादिह स्थितः । तयोर्विवदतोः प्रश्नं कथमस्मद्विधो वदेत् ॥ २९ ॥

सुधन्वोवाच । गां प्रदद्यास्त्वौरसाय यद्वान्यत् स्यात् प्रियं धनम् । द्वयोर्विवदतोस्तथ्यं वाच्यञ्च मतिमंस्त्वया ॥ ३० ॥

प्रह्लाद उवाच । अथ यो नैव प्रब्रूयात् सत्यं वा यदि वानृतम् । एतत् सुधन्वन् पृच्छामि दुर्विवक्ता स्म किं वसेत् ॥३१॥

सुधन्वोवाच । यां रात्रिमधिविन्ना स्त्री याञ्चैवाक्षपराजितः । याञ्च भाराभितप्ताङ्गो दुर्विवक्ता स्म तां वसेत् ॥ ३२ ॥ नगरे प्रतिरुद्धः सन् वहिर्द्वारे बुभुक्षितः । अमित्रान् भूयसः पश्येद्यः साक्ष्यमनृतं वदेत् ॥ ३३ ॥ पञ्च पश्वनृते हन्ति दश हन्ति गवानृते । शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥ ३४ ॥ हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन् । सर्वं भूम्यनृते हन्ति मा स्म भूम्यनृतं वदीः ॥ ३५ ॥

प्रह्लाद उवाच । मत्तः श्रेयानङ्गिरा वै सुधन्वा त्वद्विरोचन । मातास्य श्रेयसी मातुस्तस्मात्त्वन्तेन वै जितः ॥ ३६ ॥ विरोचन सुधन्वायं प्राणानामीश्वरस्तव । सुधन्वन् पुनरिच्छामि त्वया दत्तं विरोचनम् ॥ ३७ ॥

सुधन्वोवाच । यद्धर्ममवृणीथास्त्वं न कामादनृतं वदीः । पुनर्ददामि ते पुत्रं तस्मात् प्रह्लाद दुर्लभम् ॥ ३८ ॥ एष प्रह्लाद पुत्रस्ते मया दत्तो विरोचनः । पादप्रक्षालनं कुर्य्यात् कुमार्य्याः सन्निधौ मम ॥ ३९ ॥

विदुर उवाच । तस्माद्राजेन्द्र भूम्यर्थे नानृतं वक्तुमर्हसि । मा गमः ससुतामात्यो नाशं पुत्रार्थमब्रुवन् ॥ ४० ॥ न देवा दण्ड-मादाय रक्षन्ति पशुपालवत् । यन्तु रक्षितुमिच्छन्ति बुद्ध्या

संविभजन्ति तम् ॥ ४१ ॥ यथा यथा हि पुरुषः कल्याणे कुरुते मनः। तथा तथास्य सर्वार्थाः सिध्यन्ते नात्र संशयः ॥ ४२ ॥ नैनं छन्दांसि वृजिनात्तारयन्ति मायाविनं मायया वर्त्तमानम्। नीड़ं शकुन्ता इव जातपक्षाश्छन्दांस्येनं प्रजहत्यन्तकाले ॥ ४३ ॥ मद्यपानं कलहं पूगवैरं भार्य्यापत्योरन्तरं ज्ञातिभेदम्। राजद्विष्टं स्त्रीपुंसयोर्विवादं वर्ज्यान्याहुर्यश्च पन्थाः प्रदुष्टः ॥ ४४ ॥ सामुद्रिकं वणिजं चौरपूर्वं शलाकधूर्त्तञ्च चिकित्सकञ्च। अरिञ्च मित्रञ्च कुशीलवञ्च नैतान् साक्ष्ये त्वधिकुर्वीत सप्त ॥ ४५ ॥ मानाग्निहोत्रमुतमानमौनं मानेनाधीतमुतमानयज्ञः। एतानि चत्वार्य्यभयङ्कराणि भयं प्रयच्छन्त्ययथाकृतानि ॥ ४६ ॥ अगारदाही गरदः कुण्डाशी सोमविक्रयी। पर्वकारश्च सूची च मित्रध्रुक् पारदारिकः ॥ ४७ ॥ भ्रूणहा गुरुतल्पी च यश्च स्यात्पानपो द्विजः। अतितीक्ष्णश्च काकश्च नास्तिको वेदनिन्दकः ॥ ४८ ॥ स्रुवप्रग्रहणो व्रात्यः कीनाशश्चात्मवानपि। रक्षेत्युक्तश्च यो हिंस्यात् सर्वे ब्रह्महभिः समाः ॥ ४९ ॥ तृणोल्कया ज्ञायते जातरूपं वृत्तेन भद्रो व्यवहारेण साधुः। शूरो भयेष्वर्थकृच्छ्रेषु धीरः कृच्छ्रास्वापत्सु सुहृदश्चारयश्च ॥ ५० ॥ जरा रूपं हरति हि धैर्य्यमाशा मृत्युः प्राणान् धर्मचर्य्यामसूया। क्रोधः श्रियं शीलमनार्य्यसेवा ह्रियं कामः सर्वमेवाभिमानः ॥ ५१ ॥ श्रीर्मङ्गलात् प्रभवति प्रागल्भ्यात् सम्प्रवर्द्धते। दाक्ष्यात्तु कुरुते मूलं संयमात् प्रतितिष्ठति ॥ ५२ ॥ अष्टौ गुणाः पुरुषं दीपयन्ति प्रज्ञा च कौल्यञ्च दमः श्रुतञ्च। पराक्रमश्चाबहुभाषिता च दानं यथाशक्ति कृतज्ञता च ॥ ५३ ॥ एतान् गुणांस्तात महानुभावानेको गुणः संश्रयते प्रसह्य। राजा यदा सत्कुरुते मनुष्यं सर्वान् गुणानेष गुणो बिभर्त्ति ॥ ५४ ॥ अष्टौ नृपेमानि मनुष्यलोके स्वर्गस्य लोकस्य निदर्शनानि। चत्वार्य्येषामन्ववेतानि सद्भिश्चत्वारि चैषा-

मनुयान्ति सन्तः ॥ ५५ ॥ यज्ञो दानमध्ययनं तपश्च चत्वार्य्येता-न्यन्ववेतानि सद्भिः। दमः सत्यमार्ज्जवमानृशंस्यं चत्वार्य्येतान्यनु-यान्ति सन्तः ॥ ५६ ॥ इज्याध्ययनदानानि तपः सत्यं क्षमा घृणा। अलोभ इति मार्गोऽयं धर्मस्याष्टविधः स्मृतः ॥ ५७ ॥ तत्र पूर्वं-श्चतुर्वर्गो दम्भार्थमपि सेव्यते। उत्तरश्च चतुर्वर्गो नामहात्मसु तिष्ठति ॥ ५८ ॥ न सा सभा यत्र न सन्ति वृद्धा न ते वृद्धा ये न वदन्ति धर्मम्। नासौ धर्मो यत्र न सत्यमस्ति न तत् सत्यं यच्छलेनाभ्युपेतम् ॥ ५९ ॥ सत्यं रूपं श्रुतं विद्या कौल्यं शीलं बलं धनम्। शौर्य्यञ्च चित्रभाष्यञ्च दशेमे स्वर्गयोनयः ॥ ६० ॥ पापं कुर्वन् पापकीर्त्तिः पापमेवाश्नुते फलम्। पुण्यं कुर्वन् पुण्यकीर्त्तिः पुण्यमत्यन्तमश्नुते ॥ ६१ ॥ तस्मात् पापं न कुर्वीत पुरुषः शंसित-व्रतः। पापं प्रज्ञां नाशयति क्रियमाणं पुनः पुनः ॥ ६२ ॥ नष्ट-प्रज्ञः पापमेव नित्यमारभते नरः। पुण्यं प्रज्ञां वर्द्धयति क्रियमाणं पुनः पुनः ॥ ६३ ॥ वृद्धप्रज्ञः पुण्यमेव नित्यमारभते नरः। पुण्यं कुर्वन् पुण्यकीर्त्तिः पुण्यं स्थानं स्म गच्छति ॥ ६४ ॥ तस्मात् पुण्यं निषेवेत पुरुषः सुसमाहितः। असूयको दन्दशूको निष्ठुरो वैर-कृच्छठः ॥ ६५ ॥ स कृच्छ्रं महदाप्नोति न चिरात् पापमाचरन्। अनसूयः कृतप्रज्ञः शोभनान्याचरन् सदा ॥ ६६ ॥ न कृच्छ्रं मह-दाप्नोति सर्वत्र च विरोचते। प्रज्ञामेवागमयति यः प्राज्ञेभ्यः स पण्डितः ॥ ६७ ॥ प्राज्ञो ह्यवाप्य धर्मार्थौ शक्नोति सुखमेधितुम्। दिवसेनैव तत् कुर्य्याद्येन रात्रौ सुखं वसेत् ॥ ६८ ॥ अष्टमासेन तत् कुर्य्यात् येन वर्षाः सुखं वसेत्। पूर्वं वयसि तत् कुर्य्यात् येन वृद्धः सुखं वसेत् ॥ ६९ ॥ यावज्जीवेन तत् कुर्य्याद्येनामुत्र सुखं वसेत्। जीर्णमन्नं प्रशंसन्ति भार्य्याञ्च गतयौवनाम् ॥ ७० ॥ शूरं विजितसंग्रामं गतपारं तपस्विनम्। धनेनाधर्मलब्धेन यच्छिद्र-मपिधीयते ॥ ७१ ॥ असंवृतं तद्भवति ततोऽन्यदवदीर्य्यते। गुरु-

रात्मवता शास्ता शास्ता राजा दुरात्मनाम् ॥ ७२ ॥ अथ प्रच्छन्न-पापानां शास्ता वैवस्वतो यमः। ऋषीणाञ्च नदीनाञ्च कुलानाञ्च महात्मनाम् ॥ ७३ ॥ प्रभवो नाधिगन्तव्यः स्त्रीणां दुश्चरितस्य च। द्विजातिपूजाभिरतो दाता ज्ञातिषु चार्ज्जवी ॥ ७४ ॥ क्षत्रिय शीलभाग्राजंश्चिरं पालयते महीम्। सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः ॥ ७५ ॥ शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम्। बुद्धिश्रेष्ठानि कर्म्माणि वाहुमध्यानि भारत ॥ ७६ ॥ तानि जङ्घा-जघन्यानि भारप्रत्यवराणि च। दुर्य्योधने च शकुनौ मूढे दुःशासने तथा ॥ ७७ ॥ कर्णे चैश्वर्य्यमाधाय कथं त्वं भूतिमिच्छसि। सर्व्वैर्गुणैरुपेतास्तु पाण्डवा भरतर्षभ। पितृवत्त्वयि वर्त्तन्ते तेषु वर्त्तस्व पुत्रवत् ॥ ७८ ॥

इति उद्योगपर्व्वणि प्रजागरपर्व्वणि विदुरहितवाक्ये चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

विदुर उवाच। अत्रैवोदाहरन्तीममितिहासं पुरातनम्। आत्रेयस्य च संवादं साध्यानां चेति नः श्रुतम् ॥ १ ॥ चरन्तं हंस-रूपेण महर्षिं संशितव्रतम्। साध्या देवा महाप्रज्ञं पर्य्यपृच्छन्त वै पुरा ॥ २ ॥

साध्या ऊचुः। साध्या देवा वयमेते महर्षे दृष्ट्वा भवन्तं न शक्नुमोऽनुमातुम्। श्रुतेन धीरो बुद्धिमांस्त्वं मतो नः काव्यां वाचं वक्तुमर्हस्युदाराम् ॥ ३ ॥

हंस उवाच। एतत् कार्य्यममराः संश्रुतं मे धृतिः शमः सत्य-धर्म्मानुवृत्तिः। ग्रन्थिं विनीय हृदयस्य सर्व्वं प्रियाप्रिये चात्मसमं नयीत ॥ ४ ॥ आक्रुश्यमानो नाक्रोशेन्मन्युरेव तितिक्षितः। आक्रोष्टारं निर्द्दहति सुकृतं चास्य विन्दति ॥ ५ ॥ नाक्रोशी स्या

न्नातिमानी परस्य मित्रद्रोही नोत नीचोपसेवी । न चाभिमानी न च हीनवृत्तो रूक्षां वाचमुशतीं वर्ज्जयीत ॥ ६ ॥ मर्माण्यस्थीनि हृदयं तथासून् रूक्षा वाचो निर्दहन्तीह पुंसाम् । तस्माद्वाचमुशतीं रुक्षरूपां धर्मारामो नित्यशो वर्ज्जयीत ॥ ७ ॥ अरुन्तुदं परुषं रूक्षवाचं वाक्कण्टकैर्वितुदन्तं मनुष्यान् । विद्यादलक्ष्मीकतमं जनानां मुखे निबद्धां निर्ऋतिं वै वहन्तम् ॥ ८ ॥ परश्चेदेनमभिविध्येत बाणैर्भृशं सुतीक्ष्णैरनलार्कदीप्तैः । स विध्यमानोऽप्यतिदह्यमानो विद्यात् कविः सुकृतं मे दधाति ॥ ९ ॥ यदि सन्तं सेवति यद्यसन्तं तपस्विनं यदि वा स्तेनमेव । वासो यथा रङ्गवशं प्रयाति तथा स तेषां वशमभ्युपैति ॥ १० ॥ अतिवादं न प्रवदेन्न वादयेद्यो नाहतः प्रतिहन्यान्न घातयेत् । हन्तुञ्च यो नेच्छति पापकं वै तस्मै देवाः स्पृहयन्त्यागताय ॥ ११ ॥ अव्याहृतं व्याहृताच्छ्रेय आहुः सत्यं वदेद्व्याहृतं तद्द्वितीयम् । प्रियं वदेद्व्याहृतं तत्तृतीयं धर्म्यं वदेद्व्याहृतं तच्चतुर्थम् ॥ १२ ॥ यादृशैः सन्निविशते यादृशांश्चोपसेवते । यादृगिच्छेच्च भवितुं तादृग्भवति पूरुषः ॥ १३ ॥ यतो यतो निवर्त्तते ततस्ततो विमुच्यते । निवर्त्तनाद्धि सर्व्वतो न वेत्ति दुःखमण्वपि ॥ १४ ॥ न जीयते नानुजिगीषतेऽन्यान्न वैरकृच्चाप्रतिघातकश्च । निन्दाप्रशंसासु समस्वभावो न शोचते हृष्यति नैव चायम् ॥ १५ ॥ भावमिच्छति सर्व्वस्य नाभावे कुरुते मनः । सत्यवादी मृदुर्दान्तो यः स उत्तमपूरुषः ॥ १६ ॥ नानर्थकं सान्त्वयति प्रतिश्रुत्य ददाति च । रन्ध्रं परस्य जानाति यः स मध्यमपूरुषः ॥ १७ ॥ दुःशासनस्तूपहतोऽभिशस्तो नावर्त्तते मन्युवशात् कृतघ्नः । न कस्यचिन्मित्रमथो दुरात्मा कलाश्चैता अधमस्येह पुंसः ॥ १८ ॥ न श्रद्दधाति कल्याणं परेभ्योऽप्यात्मशङ्कितः । निराकरोति मित्राणि यो वै सोऽधमपूरुषः ॥ १९ ॥ उत्तमानेव सेवेत प्राप्तकाले तु मध्यमान् । अधमांस्तु

न सेवेत य इच्छेद्भूतिमात्मनः ॥ २० ॥ प्राप्नोति वै वित्तमसद्बलेन नित्योत्थानात् प्रज्ञया पौरुषेण। न त्वेव सम्यग्लभते प्रशंसां न वृत्तमाप्नोति महाकुलानाम् ॥ २१ ॥

धृतराष्ट्र उवाच। महाकुलेभ्यः स्पृहयन्ति देवा धर्मार्थनित्याश्च बहुश्रुताश्च। पृच्छामि त्वां विदुर प्रश्नमेतं भवन्ति वै कानि महाकुलानि ॥ २२ ॥

विदुर उवाच। तपो दमो ब्रह्मवित्त्वं वितानाः पुण्या विवाहाः सततान्नदानम्। येष्वेवैते सप्त गुणा भवन्ति सम्यग्वृत्तास्तानि महाकुलानि ॥ २३ ॥ येषां न वृत्तं व्यथते न योनिश्चित्तप्रसादेन चरन्ति धर्मम्। ये कीर्त्तिमिच्छन्ति कुले विशिष्टां त्यक्तानृतास्तानि महाकुलानि ॥ २४ ॥ अनिज्यया कुविवाहैर्वेदस्योत्सादनेन च। कुलान्यकुलतां यान्ति धर्मस्यातिक्रमेण च ॥ २५ ॥ देवद्रव्यविनाशेन ब्रह्मस्वहरणेन च। कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥ २६ ॥ ब्राह्मणानां परिभवात् परिवादाच्च भारत। कुलान्यकुलतां यान्ति न्यासापहरणेन च ॥२७॥ कुलानि समुपेतानि गोभिः पुरुषतोऽर्थतः। कुलसङ्ख्यां न गच्छन्ति यानि हीनानि वृत्ततः ॥ २८ ॥ वृत्ततस्त्वविहीनानि कुलान्यल्पधनान्यपि। कुलसङ्ख्याञ्च गच्छन्ति कर्षन्ति च महद्यशः ॥ २९ ॥ वृत्तं यत्नेन संरक्षेद्वित्तमेति च याति च। अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः ॥ ३० ॥ गोभिः पशुभिरश्वैश्च कृष्या च सुसमृद्धया। कुलानि न प्ररोहन्ति यानि हीनानि वृत्ततः ॥ ३१ ॥ मा नः कुले वैरकृत् कश्चिदस्तु राजामात्यो मा परस्वापहारी। मित्रद्रोही नैकृतिकोऽनृती वा पूर्वाशी वा पितृदेवातिथिभ्यः ॥ ३२ ॥ यश्च नो ब्राह्मणान् हन्याद्यश्च नो ब्राह्मणान् द्विषेत्। न तस्य समितिं गच्छेद्यश्च नो निर्वपेत् कृषीन् ॥ ३३ ॥ तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता। सतामेतानि गेहेषु नोच्छिद्यन्ते कदाचन ॥३४॥

श्रद्धया परया राजन्नुपनीतानि सत्कृतिम्। प्रवृत्तानि महाप्राज्ञ धर्म्मिणां पुण्यकर्म्मिणाम् ॥ ३५ ॥ सूक्ष्मोऽपि भारं नृपते स्यन्दनो वै शक्तो वोढुं न तथान्ये महीजाः। एवं युक्ता भारसहा भवन्ति महाकुलीना न तथान्ये मनुष्याः ॥ ३६ ॥ न तन्मित्रं यस्य कोपाद्बिभेति यद्वा मित्रं शङ्कितेनोपचर्य्यम्। यस्मिन्मित्रे पितरीवाश्वसीत तद्वै मित्रं सङ्गतानीतराणि ॥ ३७ ॥ य कश्चिदप्यसम्बद्धो मित्रभावेन वर्त्तते। स एव बन्धुस्तन्मित्रं सा गतिस्तत्परायणम् ॥ ३८ ॥ चलचित्तस्य वै पुंसो वृद्धाननुसेवतः। पारिप्लवमतेर्नित्यमध्रुवो मित्रसंग्रहः ॥ ३९ ॥ चलचित्तमनात्मानमिन्द्रियाणां वशानुगम्। अर्थाः समतिवर्त्तन्ते हंसाः शुष्कं सरो यथा ॥ ४० ॥ अकस्मादेव कुप्यन्ति प्रसीदन्त्यनिमित्ततः। शीलमेतदसाधूनामभ्रं पारिप्लवं यथा ॥ ४१ ॥ सत्कृताश्च कृतार्थाश्च मित्राणां न भवन्ति ये। तान्मृतानपि क्रव्यादाः कृतघ्नान्नोपभुञ्जते ॥ ४२ ॥ अर्च्चयेदेव मित्राणि सति वासति वा धने। नानर्थयन् प्रजानाति मित्राणां सारफल्गुताम् ॥ ४३ ॥ सन्तापाद्भ्रश्यते रूपं सन्तापाद्भ्रश्यते बलम्। सन्तापाद्भ्रश्यते ज्ञानं सन्तापाद्व्याधिमृच्छति ॥ ४४ ॥ अनवाप्यञ्च शोकेन शरीरं चोपतप्यते। अमित्राश्च प्रहृष्यन्ति मा स्म शोके मनः कृथाः ॥ ४५ ॥ पुनर्नरो म्रियते जायते च पुनर्नरो हीयते वर्द्धते च। पुनर्नरो याचति याच्यते च पुनर्नरः शोचति शोच्यते च ॥ ४६ ॥ सुखञ्च दुःखञ्च भवाभवौ च लाभालाभौ मरणं जीवितं च। पर्य्यायशः सर्व्वमेते स्पृशन्ति तस्माद्धीरो न च हृष्येन्न शोचेत् ॥ ४७ ॥ चलानि हीमानि षड़िन्द्रियाणि तेषां यद्यद्वर्द्धते यत्र यत्र। ततस्ततः स्रवते बुद्धिरस्य छिद्रोदकुम्भादिव नित्यमम्भः ॥ ४८ ॥

धृतराष्ट्र उवाच। तनुरुद्ध शिखी राजा मिथ्योपचारितो मया। मन्दानाम्मम पुत्राणां युद्धेनान्तं करिष्यति ॥ ४९ ॥ नित्यो-

ह्मिन्निदं सर्वं नित्योह्मिन्निदं मन। यत्तत्पदमनुह्मिन्नं तन्वेवद् महामते ॥ ५० ॥

विदुर उवाच। नान्यत्र विद्यातपसोर्नान्यत्रेन्द्रियनिग्रहात्। नान्यत्र लोभसन्त्यागाच्छान्तिं पश्यामि तेऽनघ ॥ ५१ ॥ बुद्ध्या भयं प्रणुदति तपसा विन्दते महत्। गुरुशुश्रूषया ज्ञानं शान्तिं योगेन विन्दति ॥ ५२ ॥ अनाश्रिता दानपुण्यं वेदपुण्यमनाश्रिता। रागद्वेषविनिर्मुक्ता विचरन्तीह मोक्षिणः ॥ ५३ ॥ स्वधीतस्य सुयुद्धस्य सुकृतस्य च कर्मणः। तपसश्च सुतप्तस्य तस्यान्ते सुखमेधते ॥ ५४ ॥ स्वास्तीर्णानि शयनानि प्रपन्ना न वै भिन्ना जातु निद्रां लभन्ते। न स्त्रीषु राजन्रतिमाप्नुवन्ति न मागधैः स्तूयमाना न सूतैः ॥ ५५ ॥ न वै भिन्ना जातु चरन्ति धर्मं न वै सुखं प्राप्नुवन्तीह भिन्नाः। न वै भिन्ना गौरवं प्राप्नुवन्ति न वै भिन्ना प्रशमं रोचयन्ति ॥ ५६ ॥ न वै तेषां स्वदते पथ्यमुक्तं योगक्षेमं कल्पते नैव तेषाम्। भिन्नानां वै मनुजेन्द्र परायणं न विद्यते किञ्चिदन्यद्विनाशात् ॥५७॥ सम्पन्नं गोषु सम्भाव्यं सम्भाव्यं ब्राह्मणे तपः। सम्भाव्यं चापलं स्त्रीषु सम्भाव्यं ज्ञातितो भयम् ॥ ५८ ॥ तन्तवोऽप्यायता नित्यं तनवो बहुलाः समाः। बहून् बहुत्वादायासान् सहन्तीत्युपमा सताम् ॥ ५९ ॥ धूमायन्ते व्यपेतानि ज्वलन्ति सहितानि च। धृतराष्ट्रोल्मुकानीव ज्ञातयो भरतर्षभ ॥ ६० ॥ ब्राह्मणेषु च ये शूराः स्त्रीषु ज्ञातिषु गोषु च। वृन्तादिव फलं पक्वं धृतराष्ट्र पतन्ति ते ॥ ६१ ॥ महानप्येकजो वृक्षो बलवान् सुप्रतिष्ठितः। प्रसह्य एव वातेन सस्कन्धो मर्दितुं क्षणात् ॥ ६२ ॥ अथ ये सहिता वृक्षाः सङ्घशः सुप्रतिष्ठिताः। ते हि शीघ्रतमान् वातान् सहन्तेऽन्योन्यसंश्रयात् ॥ ६३ ॥ एवं मनुष्यमप्येकं गुणैरपि समन्वितम्। शक्यं द्विषन्तो मन्यन्ते वायुर्द्रुममिवैकजम् ॥ ६४ ॥ अन्योन्यसमुपष्टम्भादन्योन्यापाश्रयेण

च। ज्ञातयः सम्प्रवर्द्धन्ते सरसीवोत्पलान्युत ॥ ६५ ॥ अवध्या ब्राह्मणा गावो ज्ञातयः शिशवः स्त्रियः। येषाञ्चान्नानि भुञ्जीत ये च स्युः शरणागताः ॥ ६६ ॥ न मनुष्ये गुणः कश्चिद्राजन् सधनतामृते। अनातुरत्वाद्भद्रन्ते मृतकल्पा हि रोगिनः ॥ ६७ ॥ अव्याधिजं कटुकं शीर्षरोगि पापानुबन्धं परुषं तीक्ष्णमुष्णम्। सतां पेयं यन्न पिबन्त्यसन्तो मन्युं महाराज पिब प्रशाम्य ॥ ६८ ॥ रोगार्द्दिता न फलान्याद्रियन्ते न वै लभन्ते विषयेषु तत्त्वम्। दुःखोपेता रोगिणो नित्यमेव न बुध्यन्ते धनभोगान्न सौख्यम् ॥ ६९ ॥ पुराह्युक्तं नाकरोस्त्वं वचो मे द्यूते जितां द्रौपदीं प्रेक्ष्य राजन्। दुर्य्योधनं वारयेत्यक्षवत्यां कितवत्वं पण्डिता वर्ज्जयन्ति ॥ ७० ॥ न तद्बलं यन्मृदुना विरुध्यते सूक्ष्मो हि धर्म्मस्तरसा सेवितव्यः। प्रध्वंसिनी क्रूरसमाहिता श्रीर्मृदुप्रौढ़ा गच्छति पुत्रपौत्रान् ॥ ७१ ॥ धार्त्तराष्ट्राः पाण्डवान् पालयन्तु पाण्डोः सुतास्तव पुत्रांश्च पान्तु। एकारिमित्राः कुरवो ह्येकधर्म्मा जीवन्तु राजन् सुखिनः समृद्धाः ॥ ७२ ॥ मेधीभूतः कौरवाणां त्वमद्य त्वय्याधीनं कुरुकुलमाजमीढ़। पार्थान् बालान् वनवासप्रतप्तान् गोपायस्व स्वं यशस्तात रक्षन् ॥ ७३ ॥ सन्धत्स्व त्वं कौरवान् पाण्डुपुत्रैर्माऽन्तरं रिपवः प्रार्थयन्तु। सत्ये स्थितास्ते नरदेव सर्व्वे दुर्य्योधनं स्थापय त्वं नरेन्द्र ॥ ७४ ॥

इति उद्योगपर्व्वणि प्रजागरपर्व्वणि विदुरहितवाक्ये पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

विदुर उवाच। सप्तदशेमान् राजेन्द्र मनुः स्वायम्भुवोऽब्रवीत्। वैचित्रवीर्य्य पुरुषानाकाशं मुष्टिभिर्घ्नतः ॥ १ ॥ दानवेन्द्रस्य हि धनुरनाम्यं नमतोऽब्रवीत्। अथो मरीचिनः पादानग्राह्यान्

यत्कृतस्तथा ॥ २ ॥ यथाविषयं शास्ति वै यश्च तुष्येद्यश्चातिवेलं भजते द्विषन्तम्। स्त्रियश्च यो रक्षति भद्रमस्तु ते यश्चायाच्यं याचते कत्थते च ॥ ३ ॥ यश्चाभिजातः प्रकरोत्यकार्यं यश्चाबलो बलिना नित्यवैरी। अश्रद्दधानाय च यो ब्रवीति यश्चाकाम्यं कामयते नरेन्द्र ॥ ४ ॥ वध्वावहासं श्वशुरो मन्यते यो वध्वा-वसन्नभयो मानकामः। परक्षेत्रे निर्वपति यश्च बीजं स्त्रियञ्च यः परिवदतेऽतिवेलम् ॥ ५ ॥ यश्चापि लब्ध्वा न स्मरामीतिवादी दत्त्वा च यः कत्थति याच्यमानः। यश्चासतः सत्त्वमुपानयीत एतान्नयन्ति निरयं पाशहस्ताः ॥ ६ ॥ यस्मिन् यथा वर्त्तते यो मनुष्यस्तस्मिंस्तथा वर्त्तितव्यं स धर्मः। मायाचारो मायया बाधि-तव्यः साध्वाचारः साधुना प्रत्युपेयः ॥ ७ ॥ जरा रूपं हरति हि धैर्यमाशा मृत्युः प्राणान् धर्मचर्य्यामसूया। कामो ह्रियं वृत्तमनार्य्यसेवा क्रोधः श्रियं सर्वमेवाभिमानः ॥ ८ ॥

धृतराष्ट्र उवाच। शतायुरुक्तः पुरुषः सर्ववेदेषु वै यदा। नाप्नोत्यथ च तत् सर्वमायुः केनेह हेतुना ॥ ९ ॥

विदुर उवाच। अतिमानोऽतिवादश्च तथात्यागो नराधिप। क्रोधश्चात्मविधित्सा च मित्रद्रोहश्च तानि षट् ॥ १० ॥ एत एवा-सयस्तीक्ष्णाः कृन्तन्त्यायूंषि देहिनाम्। एतानि मानवान् घ्नन्ति न मृत्युर्भद्रमस्तु ते ॥ ११ ॥ विश्वस्तस्यैति यो दारान् यश्चापि गुरुतल्पगः। वृषलीपतिर्द्विजो यश्च पानपश्चैव भारत ॥ १२ ॥ आदेशकृद्वृत्तिहन्ता द्विजानां प्रेषकश्च यः। शरणागतहा चैव सर्वे ब्रह्मघ्नाः समाः। एतैः समेत्य कर्त्तव्यं प्रायश्चित्तमिति श्रुतिः ॥ १३ ॥ गृहीतवाक्यो नयविद्वदान्यः शेषान्नभोक्ता ह्यविहिंसकश्च। नानर्थकृत्याकुलः कृतज्ञः सत्यो मृदुः स्वर्गमुपैति विद्वान् ॥ १४ ॥ सुलभाः पुरुषा राजन् सततं प्रियवादिनः। अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ १५ ॥ यो हि धर्मं समाश्रित्य हित्वा

भर्त्तु प्रियाप्रियौ। अप्रियाख्याह पथ्यानि तेन राजा सहायवान् ॥ १६ ॥ त्यजेत कुलार्थे पुरुषं ग्रामस्यार्थे कुलं त्यजेत। ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत ॥ १७ ॥ आपदर्थे धनं रक्षेद्दारान् रक्षेद्धनैरपि। आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥ १८ ॥ द्यूतमेतत् पुराकल्पे दृष्टं वैरकरं नृणाम्। तस्माद्द्यूतं न सेवेत हास्यार्थमपि बुद्धिमान् ॥ १९ ॥ उक्तं मया द्यूतकालेऽपि राजन्नेद युक्तं वचनं प्रातिपेयम्। तदौषधं पथ्यमिवातुरस्य न रोचते, तव वैचित्रवीर्य्य ॥ २० ॥ काकैरिमांश्चित्रवर्हान्मयूरान् पराजयेथा पाण्डवान् धार्त्तराष्ट्रैः। हित्वा सिंहान् क्रोष्टुकान् गूहमान प्राप्ते काले शोचिता त्वं नरेन्द्र ॥ २१ ॥ यस्तात न क्रुध्यति सर्व्वकालं भृत्यस्य भक्तस्य हितेरतस्य। तस्मिन् भृत्या भर्त्तरि विश्वसन्ति न चैनमापत्सु परित्यजन्ति ॥ २२ ॥ न भृत्यानां वृत्तिसरोधनेन राज्यं धनं सञ्जिघृक्षेदपूर्व्वम्। त्यजन्ति ह्येन वञ्चिता वै विरुद्धा स्निग्धा ह्यमात्या परिहीनभोगाः ॥ २३ ॥ कृत्यानि पूर्व्वं परिसङ्ख्याय सर्व्वाण्यायव्ययौ चानुरूपाञ्च वृत्तिम्। सङ्गृह्णी यादनुरूपान् सहायान् सहायसाध्यानि हि दुष्कराणि ॥ २४ ॥ अभिप्रायं यो विदित्वा तु भर्त्तुः सर्व्वाणि कार्य्याणि करोत्यतन्द्री। वक्ता हितानामनुरक्त आर्य्यः शक्तिज्ञ आत्मेव हि सोऽनुकम्प्यः ॥ २५ ॥ वाक्यन्तु यो नाद्रियतेऽनुशिष्टः प्रत्याह यश्चापि नियुज्यमानः। प्रज्ञाभिमानी प्रतिकूलवादी त्याज्यः स तादृक् त्वरयैव भृत्यः ॥ २६ ॥ अस्तब्धमक्लीवमदीर्घसूत्रं सानुक्रोशं श्लक्ष्णमहार्य्यमन्यैः। अरोगजातीयमुदारवाक्यं भृत्यं वदन्त्यष्टगुणोपपन्नम् ॥२७॥ न विश्वासाज्जातु परस्य गेहे गच्छेन्नरश्चेतयानो विकाले। न चत्वरे निशि तिष्ठेन्निगूढो न राजकाम्यां योषितं प्रार्थयीत ॥ २८ ॥ न निह्नवं मन्त्रगतस्य गच्छेत् संसृष्टमन्त्रस्य कुसङ्गतस्य। न च ब्रूयान्नाश्वसिमि त्वयीति सकारणं व्यपदेशन्तु कुर्य्यात् ॥ २९॥

द्यूती राजा पुंश्चली राजभृत्यः पुत्रो भ्राता विधवा बालपुत्रा। सेनाजीवी चोद्धृतभूतिरेव व्यवहारेषु वर्जनीयाः स्युरेते ॥ ३० ॥ अष्टौ गुणास्तात पुरुषं दीपयन्ति प्रज्ञा च कौल्यञ्च श्रुतन्दमश्च। पराक्रमश्चाबहुभाषिता च दानं यथाशक्ति कृतज्ञता च ॥ ३१ ॥ एतान् गुणांस्तात महानुभावानेको गुणः संश्रयते प्रसह्य। राजा यदा सत्कुरुते मनुष्यं सर्वान् गुणानेष गुणो विभर्त्ति ॥ ३२ ॥ गुणा दश स्नानशीलं भजन्ते बलं रूपं स्वरवर्णप्रशुद्धिः। स्पर्शश्च गन्धश्च विशुद्धता च श्रीः सौकुमार्यं प्रवराश्च नार्यः ॥ ३३ ॥ गुणाश्च षण्मितभुक्तं भजन्ते आरोग्यमायुश्च बलं सुखञ्च। अनाविलं चास्य भवत्यपत्यं न चैनमाद्यून इति क्षिपन्ति ॥ ३४ ॥ अकर्मशीलञ्च महाशनञ्च लोकद्विष्टं बहुमायं नृशंसम्। अदेशकालज्ञमनिष्टवेशमेतान् गृहे न प्रतिवासयीत ॥ ३५ ॥ कदर्यमाक्रोशकमश्रुतं च वनौकसं धूर्त्तममान्यमानिनम्। निष्ठूरिणं कृतवैरं कृतघ्नमेतान् भृशार्त्तोऽपि न जातु याचेत् ॥ ३६ ॥ संक्लिष्टकर्माणमतिप्रवादं नित्यानृतञ्चादृढभक्तिकञ्च। विसृष्टरागं पटुमानिनञ्चाप्येतान्न सेवेत नराधमान् षट् ॥ ३७ ॥ सहायबन्धना ह्यर्थाः सहायाश्चार्थबन्धनाः। अन्योऽन्यबन्धनावेतौ विनान्योऽन्यं न सिध्यतः ॥ ३८ ॥ उत्पाद्य पुत्राननृणांश्च कृत्वा वृत्तिञ्च तेभ्योऽनुविधाय काञ्चित्। स्थाने कुमारीः प्रतिपाद्य सर्वा अरण्यसंस्थोऽथमुनिर्बुभूषेत् ॥ ३९ ॥ हितं यत् सर्वभूतानामात्मनश्च सुखावहम्। तत् कुर्य्यादीश्वरे ह्येतन्मूलं सर्वार्थसिद्धये ॥ ४० ॥ बुद्धिः प्रभावस्तेजश्च सत्त्वमुत्थानमेव च। व्यवसायश्च यस्य स्यात् तस्यावृत्तिभयं कुतः ॥ ४१ ॥ पश्य दोषान् पाण्डवैर्विग्रहे त्वं यत्र व्यथेयुरपि देवाः सशक्राः। पुत्रैर्वैरं नित्यमुद्विग्नवासो यशःप्रणाशो द्विषतां च हर्षः ॥ ४२ ॥ भीष्मस्य कोपस्तव चैवेन्द्रकल्पद्रोणस्य राज्ञश्च युधिष्ठिरस्य। उत्सादयेल्लोकमिमं प्रवृद्धः श्वेतो ग्रहस्तिर्य्यगिवापतन् खे ॥ ४३ ॥

तवं पुत्रास्तथैव कर्णः पञ्च च पाण्डवाः । पृथिवीमनुशासेयुरखिलां सागराम्बराम् ॥ ४४ ॥ धार्त्तराष्ट्रा वनं राजन् व्याघ्राः पाण्डुसुता मताः । मा वनं छिन्धि सव्याघ्रं मा व्याघ्रा नीनशन्वनात् ॥ ४५ ॥ तस्माद्वनमृते व्याघ्रान् व्याघ्रा न स्युर्ऋते वनम् । वनं हि रक्ष्यते व्याघ्रैर्व्याघ्रान्रचति काननम् ॥ ४६ ॥ न तथेच्छन्ति कल्याणान् परेषां वेदितुं गुणान् । यथैषां ज्ञातुमिच्छन्ति नैर्गुण्यं पापचेतसः ॥ ४७ ॥ अर्थे सिद्धिं परामिच्छन् धर्ममेवादितश्चरेत् । न हि धर्मादपैत्यर्थः स्वर्गलोकादिवामृतम् ॥ ४८ ॥ यस्यात्मा विरतः पापात् कल्याणे च निवेशितः । तेन सर्वमिदं बुद्धं प्रकृतिर्विकृतिश्च या ॥ ४९ ॥ यो धर्ममर्थं कामञ्च यथाकालं निषेवते । धर्मार्थकामसंयोगं सोऽमुत्रेह च विन्दति ॥ ५० ॥ सन्नियच्छति यो वेगमुत्थितं क्रोधहर्षयोः । स श्रियो भाजनं राजन् यथापत्सु न मुह्यति ॥ ५१ ॥ बलं पञ्चविधं नित्यं पुरुषाणां निबोध मे । यत्तु बाहुबलं नाम कनिष्ठं बलमुच्यते ॥ ५२ ॥ अमात्यलाभो भद्रं ते द्वितीयं बलमुच्यते । तृतीयं धनलाभन्तु बलमाहुर्मनीषिणः ॥ ५३ ॥ यत्त्वस्य सहजं राजन् पितृपैतामहं बलम् । अभिजातबलं नाम तच्चतुर्थं बलं स्मृतम् ॥ ५४ ॥ येन त्वेतानि सर्वाणि संगृहीतानि भारत । यद्बलानां बलं श्रेष्ठं तत् प्रज्ञाबलमुच्यते ॥ ५५ ॥ महते योऽपकाराय नरस्य प्रभवेन्नरः । तेन वैरं समासज्य दूरस्थोऽस्मीति नाश्वसेत् ॥ ५६ ॥ स्त्रीषु राजसु सर्पेषु स्वाध्यायप्रभुशत्रुषु । भोगेष्वायुषि विश्वासं कः प्राज्ञः कर्त्तुमर्हति ॥ ५७ ॥ प्रज्ञाशरेणाभिहतस्य जन्तोश्चिकित्सकाः सन्ति न चौषधानि । न होममन्त्रा न च मङ्गलानि नाथर्वणा नाप्यगदाः सुसिद्धाः ॥ ५८ ॥ सर्पश्चाग्निश्च सिंहश्च कुलपुत्रश्च भारत । नावज्ञेया मनुष्येण सर्वे ह्येतेऽतितेजसः ॥ ५९ ॥ अग्निस्तेजो महल्लोके गूढ़स्तिष्ठति दारुषु । न चोपयुङ्क्ते तद्दारु

यावन्नोद्दीप्यते परैः ॥ ६० ॥ स एव खलु दारुभ्यो यदा निर्मथ्य दीप्यते । तदा तच्च वनं चान्यन्निर्दहत्याशु तेजसा ॥ ६१ ॥ एवमेव कुले जाताः पावकोपमतेजसः । क्षमावन्तो निराकारा काष्ठेऽग्निरिव शेरते ॥ ६२ ॥ लताधर्मा सपुत्रस्त्वं शालाः पाण्डुसुता मताः । न लता वर्द्धते जातु महाद्रुममनाश्रिता ॥ ६३ ॥ वनं राजंस्त्वं सपुत्रोऽम्बिकेय सिंहान् वने पाण्डवांस्तात विद्धि । सिंहैर्विहीनं हि वनं विनश्येत सिंहा विनश्येयुर्ऋते वनेन ॥ ६४ ॥

इति उद्योगपर्वणि प्रजागरपर्वणि विदुरहितवाक्ये षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

हिंसति हिंसत ॥ ८ ॥ न विश्वसेदविश्वस्ते विश्वस्ते नाति-
विश्वसेत् । विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥ ९ ॥
अनीर्षुर्गुप्तदारश्च संविभागी प्रियंवदः । श्लक्ष्णो मधुरवाक् स्त्रीणां
न चासां वशगो भवेत् ॥ १० ॥ पूजनीया महाभागाः पुण्याश्च
गृहदीप्तय । स्त्रियः श्रियो गृहस्योक्तास्तस्माद्रक्ष्या विशेषतः
॥ ११ ॥ पितुरन्तःपुरं दद्यान्मातुर्दद्यान्महानसम् । गोषु चात्म-
समं दद्यात् स्वयमेव कृषिं व्रजेत् ॥ १२ ॥ भृत्यैर्वाणिज्यचारञ्च
पुत्रैः सेवेत च द्विजान् । अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोह-
मुत्थितम् ॥ १३ ॥ तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ।
नित्यं सन्तः कुले जाताः पावकोपमतेजसः ॥ १४ ॥ क्षमावन्तो
निराकाराः काष्ठेऽग्निरिव शेरते । यस्य मन्त्रं न जानन्ति बाह्या-
श्चाभ्यन्तराश्च ये ॥ १५ ॥ स राजा सर्वतश्चक्षुश्चिरमैश्वर्यमश्नुते ।
करिष्यन्न प्रभाषेत कृतान्येव तु दर्शयेत् ॥ १६ ॥ धर्मकामार्थ-
कार्य्याणि तथा मन्त्रो न भिद्यते । गिरिपृष्ठमुपारुह्य प्रासादं वा
रहोगतः ॥ १७ ॥ अरण्ये निःशलाके वा तत्र मन्त्रो विधीयते ।
नासुहृत् परमं मन्त्रं भारतार्हति वेदितुम् ॥ १८ ॥ अपण्डितो
वापि सुहृत् पण्डितो वाप्यनात्मवान् । नापरीक्ष्य महीपालः
कुर्य्यात् सचिवमात्मनः ॥ १९ ॥ अमात्ये ह्यर्थलिप्सा च मन्त्र-
रक्षणमेव च । कृतानि सर्वकार्य्याणि यस्य पारिषदा विदुः ॥२०॥
धर्मे चार्थे च कामे च स राजा राजसत्तम । गूढमन्त्रस्य नृपते-
स्तस्य सिद्धिरसंशयम् ॥ २१ ॥ अप्रशस्तानि कार्य्याणि यो मोहा-
दनुतिष्ठति । स तेषां विपरिभ्रंशाद्भ्रश्यते जीवितादपि ॥ २२ ॥
कर्मणान्तु प्रशस्तानामनुष्ठानं सुखावहम् । तेषामेवाननुष्ठानं पश्चा-
त्तापकरं मतम् ॥ २३ ॥ अनधीत्य यथा वेदान्न विप्रः श्राद्धमर्हति ।
एवमश्रुतषाड्गुण्यो न मन्त्रं श्रोतुमर्हति ॥ २४ ॥ स्थानवृद्धिक्षय-
ज्ञस्य षाड्गुण्यविदितात्मनः । अनवज्ञातशीलस्य स्वाधीना

पृथिवी नृप ॥ २५ ॥ अमोघक्रोधहर्षस्य स्वयं कृत्यान्ववेक्षिणः। आत्मप्रत्ययकोषस्य वसुधैव वसुन्धरा ॥ २६ ॥ नाममात्रेण तुष्येत छत्रेण च महीपतिः। भृत्येभ्यो विसृजेदर्थान्नैकः सर्वहरो भवेत् ॥ २७ ॥ ब्राह्मणं ब्राह्मणो वेद भर्त्ता वेद स्त्रियं तथा। अमात्यं नृपतिर्वेद राजा राजानमेव च ॥ २८ ॥ न शत्रुर्वशमापन्नो मोक्तव्यो वध्यतां गतः। न्यग्भूत्वा पर्य्युपासीत वध्यं हन्याद्बले सति ॥ २९ ॥ अहताद्धि भयं तस्माज्जायते न चिरादिव। दैवतेषु प्रयत्नेन राजसु ब्राह्मणेषु च ॥ ३० ॥ नियन्तव्यः सदा क्रोधो वृद्धबालातुरेषु च। निरर्थकलहं प्राज्ञो वर्ज्जयेन्मूढसेवितम् ॥ ३१ ॥ कीर्त्तिञ्च लभते लोके न चानर्थेन युज्यते। प्रसादो निष्फलो यस्य क्रोधश्चापि निरर्थकः ॥ ३२ ॥ न तं भर्त्तारमिच्छन्ति षण्ढं पतिमिव स्त्रियः। न बुद्धिर्धनलाभाय न जाड्यमसमृद्धये ॥ ३३ ॥ लोकपर्य्यायवृत्तान्तं प्राज्ञो जानाति नेतरः। विद्याशीलवयोवृद्धान् बुद्धिवृद्धांश्च भारत ॥ ३४ ॥ धनाभिजातवृद्धांश्च नित्यं मूढोऽवमन्यते। अनार्य्यवृत्तमप्राज्ञमसूयकमधार्म्मिकम् ॥ ३५ ॥ अनर्थाः क्षिप्रमायान्ति वाग्दुष्टं क्रोधनं तथा। अविसंवादनन्दानं समयस्याव्यतिक्रमः ॥ ३६ ॥ आवर्त्तयन्ति भूतानि सम्यक् प्रणिहिता च वाक्। अविसंवादको दक्षः कृतज्ञो मतिमानृजुः ॥ ३७ ॥ अपि सङ्क्षीणकोषोऽपि लभते परिवारणम्। धृतिः शमो दमः शौचं कारुण्यं वागनिष्ठुरा ॥ ३८ ॥ मित्राणाञ्चानभिद्रोहः सप्तैताः समिधः श्रियः। असंविभागी दुष्टात्मा कृतघ्नो निरपत्रपः ॥ ३९ ॥ तादृङ्नराधमो लोके वर्ज्जनीयो नराधिप। न च रात्रौ सुखं शेते ससर्प इव वेश्मनि ॥ ४० ॥ यः कोपयति निर्द्दोषं सदोषोऽभ्यन्तरं जनम्। येषु दुष्टेषु दोषः स्याद्योगक्षेमस्य भारत ॥ ४१ ॥ सदा प्रसादनं तेषां देवतानामिवाचरेत्। येऽर्था स्त्रीषु समायुक्ताः प्रमत्तपतितेषु च ॥ ४२ ॥

ये चानार्य्यसमासक्ताः सर्वे ते संशयं गताः। यत्र स्त्री यत्र कितवो बालो यत्रानुशासिता ॥ ४३ ॥ मज्जन्ति तेऽवशा राजन्नद्यामश्मप्लवा इव। प्रयोजनेषु ये सक्ता न विशेषेषु भारत ॥४४॥ तानहं पण्डितान्मन्ये विशेषा हि प्रसङ्गिनः। यं प्रशंसन्ति कितवा यं प्रशंसन्ति चारणाः ॥ ४५ ॥ यं प्रशंसन्ति बन्धक्यो न स जीवति मानवः। हित्वा तान् परमेष्वासान् पाण्डवानमितौजसः ॥ ४६ ॥ आहितं भारतैश्वर्य्यं त्वया दुर्य्योधने महत्। तं द्रक्ष्यसि परिभ्रष्टं तस्मात्त्वमचिरादिव। ऐश्वर्य्यमदसम्मूढं बलिं लोकत्रयादिव ॥ ४७ ॥

इति उद्योगपर्व्वणि प्रजागरपर्व्वणि विदुरवाक्ये
त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

धृतराष्ट्र उवाच। अनीश्वरोऽयं पुरुषो भवाभवे सूत्रप्रोता दारुमयीव योषा। धात्रा तु दिष्टस्य वशे कृतोऽयं तस्माद्वद त्वं श्रवणे धृतोऽहम् ॥ १ ॥

विदुर उवाच। अप्राप्तकाले वचनं बृहस्पतिरपि ब्रुवन्। लभते बुद्ध्यवज्ञानमवमानञ्च भारत ॥ २ ॥ प्रियो भवति दानेन प्रियवादेन चापरः। मन्त्रमूलबलेनान्यो यः प्रियः प्रिय एव सः ॥ ३ ॥ द्वेष्यो न साधुर्भवति न मेधावी न पण्डितः। प्रिये शुभानि कार्य्याणि द्वेष्ये पापानि चैव ह ॥ ४ ॥ उक्तं मया जातमात्रेऽपि राजन् दुर्य्योधनं त्यज पुत्रमेकम्। तस्य त्यागात् पुत्रशतस्य वृद्धिरस्यात्यागात् पुत्रशतस्य नाशः ॥ ५ ॥ न वृद्धिर्बहु मन्तव्या या वृद्धिः क्षयमावहेत्। क्षयोऽपि बहु मन्तव्यो यः क्षयो वृद्धिमावहेत् ॥ ६ ॥ न स क्षयो महाराज यः क्षयो वृद्धिमावहेत्। क्षयः स त्विह मन्तव्यो यं लब्ध्वा बहु नाशयेत् ॥ ७ ॥

धनवृद्धा गुणात केचिद्भवन्ति धनतोऽपरे । धनवृद्धान् गुणैर्हीनान्
धृतराष्ट्र विवर्जय ॥ ८ ॥

धृतराष्ट्र उवाच । सर्वं त्वमायतीयुक्तं भाषसे प्राज्ञसम्मतम् ।
न चोत्सहे सुतन्त्यक्तुं यतो धर्मस्ततो जय ॥ ९ ॥

विदुर उवाच । स्वतीवगुणसम्पन्नो न जातु विनयान्वित ।
सुसूक्ष्ममपि भूतानामुपमर्द्दमुपेक्षते ॥ १० ॥ परापवादनिरता
परदुःखे दयेषु च । परस्परविरोधे च यतन्ते सततोत्थिता ॥ ११ ॥
सदोष दर्शनं येषा स्ववासे सुमहद्भयम् । अर्थादाने महान् दोष
प्रदाने च महद्भयम् ॥ १२ ॥ ये वै भेदनशीलास्तु सकामा
निस्त्रपा शठा । ते पापा इति विख्याता संवासे परिगर्हिता
॥ १३ ॥ युक्तश्चान्यैर्महादोषैर्ये नरास्तान् विवर्जयेत् । निवर्त्त
माने सौहार्द्दे प्रीतिर्नीचे प्रणश्यति ॥ १३ ॥ या चैव फलनिर्वृत्ति
सौहृदे चैव यत सुखम । यतते चापवादाय यत्नमारभते क्षये
॥ १५ ॥ अल्पेऽप्यपकृते मोहान्न शान्तिमधिगच्छति । तादृशै
सङ्गतं नीचैर्नृशंसैरकृतात्मभि ॥ १६ ॥ निशम्य निपुणं बुद्धा
विद्वान् दूराद्विवर्जयेत् । यो ज्ञातिमनुगृह्णाति दरिद्रं दीन
मातुरम ॥ १७ ॥ स पुत्रपशुभिर्वृद्धिं श्रेयश्चानन्त्यमश्नुते । ज्ञातयो
वर्द्धनीयास्तैर्य इच्छन्त्यात्मन शुभम् ॥ १८ ॥ कुलवृद्धिञ्च राजेन्द्र
तस्मात् साधु समाचर । श्रेयसा योक्ष्यते राजन् कुर्वाणो ज्ञाति
सत्क्रियाम ॥ १९ ॥ विगुणा ह्यपि संरक्ष्या ज्ञातयो भरतर्षभ ।

भरतर्षभ। सम्भोजनं सङ्कथनं सम्प्रीतिश्च परस्परम् ॥ २४ ॥ ज्ञातिभिः सह कार्य्याणि न विरोधः कदाचन। ज्ञातयस्तारयन्तीह ज्ञातयो मज्जयन्ति च ॥ २५ ॥ सुवृत्तास्तारयन्तीह दुर्वृत्ता मज्जयन्ति च। सुवृत्तो भव राजेन्द्र पाण्डवान् प्रति मानद ॥ २६॥ अधर्षणीयः शत्रूणां तैर्वृतस्त्वं भविष्यसि। श्रीमन्तं ज्ञातिमासाद्य यो ज्ञातिरवसीदति ॥ २७ ॥ दिग्धहस्तं मृग इव स एनस्तस्य विन्दति। पश्चादपि नरश्रेष्ठ तव तापो भविष्यति ॥२८॥ तान् वा हतान् सतान् वापि श्रुत्वा तदनुचिन्तय। येन खट्वां समारूढः परितप्येत कर्म्मणा ॥ २९ ॥ आदावेव न तत् कुर्य्यादध्रुवे जीविते सति। न कश्चिन्नापनयति पुमानन्यत्र भार्गवात् ॥ ३० ॥ शेषसम्प्रतिपत्तिस्तु बुद्धिमत्स्वेव तिष्ठति। दुर्य्योधनेन यद्येतत् पापन्तेषु पुरा कृतम् ॥ ३१ ॥ त्वया तत् कुलवृद्धेन प्रत्यानेयं नरेश्वर। तांस्त्वं पदे प्रतिष्ठाप्य लोके विगतकल्मषः ॥३२॥ भविष्यसि नरश्रेष्ठ पूजनीयो मनीषिणाम्। सुव्याहृतानि धीराणां फलतः परिचिन्त्य यः ॥ ३३ ॥ अध्यवस्यति कार्य्येषु चिरं यशसि तिष्ठति। असम्यगुपयुक्तं हि ज्ञानं सुकुशलैरपि ॥ ३४ ॥ उपलभ्यञ्चाविदितं विदितञ्चाननुष्ठितम्। पापोदयफलं विद्वान् यो नारभति वर्द्धते ॥ ३५ ॥ यस्तु पूर्व्वकृतं पापमविमृश्यानुवर्त्तते। अगाधपङ्के दुर्म्मेधा विषमे विनिपात्यते ॥ ३६ ॥ मन्त्रभेदस्य षट् प्राज्ञो द्वाराणीमानि लक्षयेत्। अर्थसन्ततिकामश्च रक्षेदेतानि नित्यशः ॥ ३७ ॥ मदं स्वप्नमविज्ञानमाकारं चात्मसम्भवम्। दुष्टामात्येषु विश्रम्भं दूताच्चाकुशलादपि ॥ ३८ ॥ द्वाराण्येतानि यो ज्ञात्वा संवृणोति सदा नृप। त्रिवर्गाचरणे युक्तः स शत्रूनधितिष्ठति ॥ ३९ ॥ न वै श्रुतमविज्ञाय वृद्धानुपसेव्य वा। धर्मार्थौ वेदितुं शक्यौ बृहस्पतिसमैरपि ॥ ४० ॥ नष्टं समुद्रे पतितं नष्टं वाक्यमशृण्वति। अनात्मनि श्रुतं नष्टं नष्टं हुतमनग्निकम् ॥ ४१ ॥

मत्या परीक्ष्य मेधावी बुद्ध्या सम्पाद्य चासकृत्। श्रुत्वा दृष्ट्वाथ
विज्ञाय प्राज्ञै मैंत्रीं समाचरेत् ॥ ४२ ॥ अकीर्त्तिं विनयो हन्ति
हन्त्यनर्थं पराक्रमः। हन्ति नित्यं क्षमा क्रोधमाचारो हन्त्यलक्ष-
णम् ॥ ४३ ॥ परिच्छदेन क्षेत्रेण वेश्मना परिचर्य्यया। परी-
क्षेत कुलं राजन् भोजनाच्छादनेन च ॥ ४४ ॥ उपस्थितस्य कामस्य
प्रतिवादो न विद्यते। अपि निर्मुक्तदेहस्य कामरक्तस्य किं पुनः
॥ ४५ ॥ प्राज्ञोपसेविनं वैद्यं धार्मिकं प्रियदर्शनम्। मित्रवन्तं
सुवाक्यञ्च सुहृदं परिपालयेत् ॥ ४६ ॥ दुष्कुलीनः कुलीनो वा
मर्य्यादां यो न लङ्घयेत्। धर्मापेक्षी मृदुर्ह्रीमान् स कुलीनशता-
द्वरः ॥ ४७ ॥ ययोश्चित्तेन वा चित्तं निभृतं निभृतेन वा। समेति
प्रज्ञया प्रज्ञा तयोर्मैत्री न जीर्य्यति ॥ ४८ ॥ दुर्बुद्धिमकृतप्रज्ञं छन्नं
कूपं तृणैरिव। विवर्ज्जयीत मेधावी तस्मिन्मैत्री प्रणश्यति ॥४९॥
अवलिप्तेषु मूर्खेषु रौद्रसाहसिकेषु च। तथैवापेतधर्मेषु न मैत्री-
माचरेद्बुधः ॥ ५० ॥ कृतज्ञं धार्मिकं सत्यमक्षुद्रं दृढभक्तिकम्।
जितेन्द्रियं स्थितं स्थित्यां मित्रमत्यागि चेष्यते ॥ ५१ ॥ इन्द्रियाणा-
मनुत्सर्गो मृत्युनापि विशिष्यते। अत्यर्थं पुनरुत्सर्गः सादयेद्दैवता-
न्यपि ॥ ५२ ॥ मार्द्दवं सर्वभूतानामनसूया क्षमा धृतिः। आयु-
ष्याणि बुधाः प्राहुर्मित्राणां चापि मानना ॥ ५३ ॥ अपनीतं
सुनीतेन योऽर्थं प्रत्यानिनीषते। मतिमास्थाय सुदृढां तदकापुरुष-
व्रतम् ॥ ५४ ॥ आयत्यां प्रतिकारज्ञस्तदात्वे दृढनिश्चयः। अतीते
कार्य्यशेषज्ञो नरोऽर्थैर्न प्रहीयते ॥ ५५ ॥ कर्मणा मनसा वाचा
यदभीक्ष्णं निषेवते। तदेवापहरत्येनं तस्मात् कल्याणमाचरेत्
॥ ५६ ॥ मङ्गलालम्भनं योगः श्रुतमुत्थानमार्ज्जवम्। भूतिमेतानि
कुर्वन्ति सतां चाभीक्ष्णदर्शनम् ॥ ५७ ॥ अनिर्वेदः श्रियो मूलं
लाभस्य च शुभस्य च। महान् भवत्यनिर्विण्णः सुखं चानन्त्यमश्नुते
॥ ५८ ॥ नातः श्रीमत्तरं किञ्चिदन्यत् पथ्यतमं तथा। प्रभ-

विद्योयया तात चमा सर्व्वत्र सर्व्वदा ॥ ५९ ॥ चमेदमत्ता सर्व्वस्य शक्तिमान् धर्मकारणात्। अर्थानर्थौ समौ यस्य तस्य नित्यं चमा हिता ॥ ६० ॥ यत् सुखं सेवमानोऽपि धर्मार्थाभ्यां न हीयते। कामं तदुपसेवेत न मूढ़व्रतमाचरेत् ॥ ६१ ॥ दुःखार्त्तेषु प्रमत्तेषु नास्तिकेष्वलसेषु च। न श्रीर्वसत्यदान्तेषु ये चोत्साहविवर्ज्जिताः ॥ ६२ ॥ आर्ज्जवेन नरं युक्तमार्ज्जवात् सव्यपत्रपम्। अशक्तं मन्यमानास्तु धर्षयन्ति कुबुद्धयः ॥ ६३ ॥ अत्यार्य्यमतिदातारमतिशूरमतिव्रतम्। प्रज्ञाभिमानिनञ्चैव श्रीर्भयान्नोपसर्पति ॥६४॥ न चातिगुणवत्स्वेषा नात्यन्तं निर्गुणेषु च। नैषा गुणान् कामयते नैर्गुण्यान्नानुरज्यते ॥ ६५ ॥ उन्मत्ता गौरिवान्धा श्रीः क्वचिदेवावतिष्ठते। अग्निहोत्रफला वेदाः शीलवृत्तफलं श्रुतम् ॥ ६६ ॥ रतिपुत्रफला नारी दत्तभुक्तफलं धनम्। अधर्म्मोपार्ज्जितैरर्थैर्यः करोत्यौर्ध्वदेहिकम् ॥ ६७ ॥ न स तस्य फलं प्रेत्य भुंक्तेऽर्थस्य दुरागमात्। कान्तारे वनदुर्गेषु कृच्छ्रास्वापत्सु संभ्रमे ॥ ६८ ॥ उद्यतेषु च शस्त्रेषु नास्ति सत्त्ववतां भयम्। उत्थानं संयमो दाक्ष्यमप्रमादो धृतिः स्मृतिः ॥ ६९ ॥ समीक्ष्य च समारम्भो विद्धि मूलं भवस्य तु। तपो बलं तापसानां ब्रह्म ब्रह्मविदां बलम् ॥ ७० ॥ हिंसा बलमसाधूनां चमा गुणवतां बलम्। अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः ॥ ७१ ॥ हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम्। न तत्परस्य सन्दध्यात् प्रतिकूलं यदात्मनः ॥ ७२ ॥ संग्रहेणैष धर्मः स्यात् कामादन्यः प्रवर्त्तते। अक्रोधेन जयेत् क्रोधमसाधुं साधुना जयेत् ॥ ७३ ॥ जयेत् कदर्य्यं दानेन जयेत् सत्येन चानृतम्। स्त्रीधूर्त्तकेऽलसे भीरौ चण्डे पुरुषमानिनि ॥ ७४ ॥ चौरे कृतघ्ने विश्वासो न कार्य्यो न च नास्तिके। अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ॥७५॥ चत्वारि सम्प्रवर्द्धन्ते कीर्त्तिरायुर्यशो बलम्। अतिक्लेशेन येऽर्थाः स्युर्धर्म-

स्यातिक्रमेण च ॥ ७६ ॥ अरेर्वा प्रणिपातेन मा स्म तेषु मनः
कृथाः । अविद्यः पुरुषः शोच्यः शोच्यं मैथुनमप्रजम् ॥ ७७ ॥
निराहाराः प्रजाः शोच्याः शोच्यं राष्ट्रमराजकम् । अध्वा जरा
देहवतां पर्वतानां जलं जरा ॥ ७८ ॥ असम्भोगो जरा स्त्रीणां
वाक्शल्यं मनसो जरा । अनाम्नायमला वेदा ब्राह्मणस्याव्रतं
मलम् ॥ ७९ ॥ मलं पृथिव्या वाह्लीकाः पुरुषस्यानृतं मलम् ।
कौतूहलमला साध्वी विप्रवासमलाः स्त्रियः ॥ ८० ॥ सुवर्णस्य
मलं रूप्यं रूप्यस्यापि मलं त्रपु । ज्ञेयं त्रपुमलं सीसं सीसस्यापि
मलं मलम् ॥ ८१ ॥ न स्वप्नेन जयेन्निद्रां न कामेन जयेत् स्त्रियः ।
नेन्धनेन जयेदग्निं न पानेन सुरां जयेत् ॥ ८२ ॥ यस्य दानजितं
मित्रं शत्रवो युधि निर्जिताः । अन्नपानजिता दाराः सफलं तस्य
जीवितम् ॥ ८३ ॥ सहस्रिणोऽपि जीवन्ति जीवन्ति शतिनस्तथा ।
धृतराष्ट्र विमुञ्चेच्छां न कथञ्चिन्न जीव्यते ॥ ८४ ॥ यत् पृथिव्यां
व्रीहियवं हिरण्यं पशवः स्त्रियः । नालमेकस्य तत् सर्वमिति
पश्यन्न मुह्यति ॥ ८५ ॥ राजन् भूयो ब्रवीमि त्वां पुत्रेषु सम
माचर । समता यदि ते राजन् स्वेषु पाण्डुसुतेषु वा ॥ ८६ ॥

इति उद्योगपर्वणि प्रजागरपर्वणि विदुरहितवाक्ये
अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

---

रतिवादः स्त्रियो वध । अशुश्रूषा त्वरा श्लाघा विद्यायाः शत्रवस्त्रय ॥ ४ ॥ आलस्यं मदमोहौ च चापलं गोष्ठिरेव च । स्तब्धता चाभिमानित्वं तथात्यागित्वमेव च ॥ ५ ॥ एते वै सप्त दोषाः स्युः सदा विद्यार्थिनां मताः । सुखार्थिनः कुतो विद्या नास्ति विद्यार्थिनः सुखम् ॥ ६ ॥ सुखार्थी वा त्यजेद्विद्यां विद्यार्थी वा त्यजेत् सुखम् । नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः । नान्तकः सर्वभूतानां न पुंसां वामलोचना ॥ ७ ॥ आशा धृतिं हन्ति समृद्धिमन्तकः क्रोधः श्रियं हन्ति यशः कदर्य्यता । अपालनं हन्ति पशूंश्च राजन्नेकः क्रुद्धो ब्राह्मणो हन्ति राष्ट्रम् ॥ ८ ॥ अजाश्च कांस्यं रजतञ्च नित्यं मध्वाकर्षः शकुनिः श्रोत्रियश्च । वृद्धो ज्ञातिरवसन्नः कुलीन एतानि ते सन्तु गृहे सदैव ॥ ९ ॥ अजोक्षा चन्दनं वीणा आदर्शो मधुसर्पिषी । विषमौदुम्बरं शङ्खः स्वर्णनाभोऽथ रोचना ॥ १० ॥ गृहे स्थापयितव्यानि धन्यानि मनुरब्रवीत् । देवब्राह्मणपूजार्थमतिथीनाञ्च भारत ॥ ११ ॥ इदञ्च त्वां सर्व्वपरं ब्रवीमि पुण्यं पदं तात महाविशिष्टम् । न जातु कामान्न भयान्न लोभाद्धर्मं त्यजेज्जीवितस्यापि हेतोः ॥ १२ ॥ नित्यो धर्मः सुखदुःखे त्वनित्ये जीवो नित्यो हेतुरस्य त्वनित्यः । त्यक्त्वानित्यं प्रतितिष्ठस्व नित्ये सन्तुष्य त्वं तोषपरो हि लाभः ॥ १३ ॥ महाबलान् पश्य महानुभावान् प्रशास्य भूमिं धनधान्यपूर्णाम् । राज्यानि हित्वा विपुलांश्च भोगान् गतान्नरेन्द्रान् वशमन्तकस्य ॥ १४ ॥ मृतं पुत्रं दुःखपुष्टं मनुष्या उत्क्षिप्य राजन् स्वगृहान्निर्हरन्ति । तं मुक्तकेशाः करुणं रुदन्ति चितामध्ये काष्ठमिव क्षिपन्ति ॥ १५ ॥ अन्यो धनं प्रेतगतस्य भुङ्क्ते वयांसि चाग्निश्च शरीरधातून् । द्वाभ्यामयं सह गच्छत्यमुत्र पुण्येन पापेन च वेष्ट्यमानः ॥ १६ ॥ उत्सृज्य विनिवर्त्तन्ते ज्ञातयः सुहृदः सुताः । अपुष्पानफलान् वृक्षान् यथा तात पतत्रिणः ॥ १७ ॥ अग्नौ प्रास्तं

तं पुरुषं कर्मान्वेति स्वयं कृतम्। तस्मात्तु पुरुषो यत्नाद्धर्मं सञ्चि-
नुयाच्छनैः॥ १८॥ अस्माल्लोकादूर्ध्वममुष्य चाधो महत्तमस्तिष्ठति
ह्यन्धकारम्। तद्वै महामोहनमिन्द्रियाणां बुध्यस्व मा त्वां प्रलभेत
राजन्॥ १९॥ इदं वचः शक्ष्यसि चेद्यथावन्निशम्य सर्वं प्रति-
पत्तुमेव। यशः परं प्राप्स्यसि जीवलोके भयं न चामुत्र न चेह
तेऽस्ति॥ २०॥ आत्मा नदी भारत पुण्यतीर्था सत्योदका धृति-
कूला दयोर्मिः। तस्यां स्नातः पूयते पुण्यकर्मा पुण्यो ह्यात्मा
नित्यमलोभ एव॥ २१॥ कामक्रोधग्राहवतीं पञ्चेन्द्रियजलां
नदीम्। नावं धृतिमयीं कृत्वा जन्मदुर्गाणि सन्तर॥ २२॥ प्रज्ञा-
वृद्धं धर्मवृद्धं स्वबन्धुं विद्यावृद्धं वयसा चापि वृद्धम्। कार्य्याकार्य्ये
पूजयित्वा प्रसाद्य यः सम्पृच्छेन्न स मुह्येत् कदाचित्॥ २३॥
धृत्या शिश्नोदरं रक्षेत् पाणिपादञ्च चक्षुषा। चक्षुःश्रोत्रे च मनसा
मनो वाचञ्च कर्मणा॥ २४॥ नित्योदकी नित्ययज्ञोपवीती नित्य-
स्वाध्यायी पतितान्नवर्ज्जी। सत्यं ब्रुवन् गुरवे कर्म कुर्वन्न ब्राह्मण-
श्च्यवते ब्रह्मलोकात्॥ २५॥ अधीत्य वेदान् परिसंस्तीर्य्य चाग्नी-
निष्ट्वा यज्ञैः पालयित्वा प्रजाश्च। गोब्राह्मणार्थे शस्त्रपूतान्तरात्मा
हतः संग्रामे क्षत्रियः स्वर्गमेति॥ २६॥ वैश्योऽधीत्य ब्राह्मणान्
क्षत्रियांश्च धनैः काले संविभज्याश्रितांश्च। त्रेतापूतं धूममाघ्राय
पुण्यं प्रेत्य स्वर्गे दिव्यसुखानि भुंक्ते॥ २७॥ ब्रह्म क्षत्रं वैश्य-
वर्णञ्च शूद्रः क्रमेणैतान् न्यायतः पूजयानः। तुष्टेष्वेतेष्वव्यथो दग्ध-
पापस्त्यक्त्वा देहं स्वर्गसुखानि भुंक्ते॥ २८॥ चातुर्वर्ण्यस्यैष धर्म-
स्तवोक्तो हेतुं चात्र ब्रुवतो मे निबोध। क्षात्राद्धर्माद्धीयते पाण्डु-
पुत्रस्तं त्वं राजन् राजधर्मे नियुङ्क्ष्व॥ २९॥

धृतराष्ट्र उवाच। एवमेतद्यथा त्वं मामनुशाससि नित्यदा।
ममापि च मतिः सौम्य भवत्येवं यथात्थ माम्॥ ३०॥ सा तु
बुद्धिः कृताप्येवं पाण्डवान् प्रति मे सदा। दुर्य्योधनं समासाद्य

पुनर्विपरिवर्त्तते ॥ ३१ ॥ न दिष्टमभ्यतिक्रान्तुं शक्यं भूतेन केनचित्। दिष्टमेव ध्रुवं मन्ये पौरुषन्तु निरर्थकम् ॥ ३२ ॥

इति उद्योगपर्व्वणि प्रजागरपर्व्वणि विदुरवाक्ये
एकोनचत्वारिंशोऽध्यायः समाप्तञ्च प्रजागरपर्व्व ॥ ३९ ॥

---

अथ सनत्सुजातपर्व्व ॥

धृतराष्ट्र उवाच। अनुक्तं यदि ते किञ्चिद्वाचा विदुर विद्यते। तन्मे शुश्रूषतो ब्रूहि विचित्राणीह भाषसे ॥ १ ॥

विदुर उवाच। धृतराष्ट्र कुमारो वै यः पुराणः सनातनः। सनत्सुजातः प्रोवाच मृत्युर्नास्तीति भारत ॥ २ ॥ स ते गुह्यान् प्रकाशांश्च सर्वान् हृदयसंश्रयान्। प्रवक्ष्यति महाराज सर्वबुद्धिमतां वरः ॥ ३ ॥

धृतराष्ट्र उवाच। किं त्वं न वेद तद्भूयो यन्मे ब्रूयात् सनातनः। त्वमेव विदुर ब्रूहि प्रज्ञाशेषोऽस्ति चेत्तव ॥ ४ ॥

विदुर उवाच। शूद्रयोनावहं जातो नातोऽन्यद्वक्तुमुत्सहे। कुमारस्य तु या बुद्धिर्वेद तां शाश्वतीमहम् ॥ ५ ॥ ब्राह्मीं हि योनिमापन्न सुगुह्यमपि यो वदेत्। न तेन गर्ह्यो देवानां तस्मादेतद्ब्रवीमि ते ॥ ६ ॥

धृतराष्ट्र उवाच। ब्रवीहि विदुर त्वं मे पुराणं तं सनातनम्। कथमेतेन देहेन स्यादिहैव समागमः ॥ ७ ॥

मनुष्येन्द्र सर्वदु:खातिगो भवेत। लाभालाभौ प्रियद्वेष्यौ यथन न जरान्तकौ ॥ ११ ॥ विपद्धेरन् भयामर्षौ चुत्पिपासे मदोद्भवौ। अरतिश्चैव तन्द्रीश्च कामक्रोधौ चयोदयौ ॥ १२ ॥

इति उद्योगपर्वणि सनतसुजातपर्वणि विदुरप्रार्थने चत्वारिंशोऽध्याय ॥ ४० ॥

---

वैशम्पायन उवाच। ततो राजा धृतराष्ट्रो मनीषी सपूज्य वाक्य विदुरेरित तत। सनतसुजात रहिते महात्मा पप्रच्छ बुद्धि परमा बुभूषन् ॥ १ ॥

धृतराष्ट्र उवाच। सनतसुजात यदिद शृणोमि न मृत्यु रस्तीति तव प्रवादम्। देवासुरा ह्याचरन् ब्रह्मचर्यममृत्यवे तत कतरन्नु सत्यम ॥ २ ॥

सनतसुजात उवाच। अपृच्छ कर्मणा यच्च मृत्युर्नास्तीति चापरम। शृणु मे ब्रुवतो राजन् यथैतन्मा विशङ्किथा ॥ ३ ॥ उभे सत्ये चत्रियैतस्य विद्धि मोहान्मृत्यु सम्मतोऽय कवीनाम। प्रमाद वै मृत्युमह ब्रवीमि तथाप्रमादममृतत्व ब्रवीमि ॥ ४ ॥ प्रमा दाद्वै असुरा पराभवन्नप्रमादाद्ब्रह्मभूता भवन्ति। न वै मृत्यु र्व्याघ्र इवात्ति जन्तून् ह्यस्य रूपमुपलभ्यते हि ॥ ५ ॥ यम त्वेके मृत्यु मतोऽन्यमाहुरात्मावसन्नममृत ब्रह्मचर्यम। पितृलोके राज्य मनुशास्ति देव शिव शिवानामशिवोऽशिवानाम् ॥ ६ ॥ अस्या देशान्नि सरते नराणा क्रोध प्रमादो लोभरूपश्च मृत्यु। अह, गतेनैव चरन् विमार्गान्न चात्मनो योगमुपैति कश्चित ॥ ७ ॥ ते मोहितास्तद्वशे वर्त्तमाना इत प्रेतास्तत्र पुन पतन्ति। ततस्तान देवा अनुविप्लवन्ते अतो मृत्युर्मरणाख्यामुपैति ॥ ८ ॥ कर्मोदये कर्मफलानुरागास्ते तत्रानु ते यान्ति न तरन्ति मृत्युम्। सर्व्वार्थ

योगानवगमात् समन्तात् प्रवर्त्तते भोगयोगेन देही ॥ ८ ॥ तद्वै महामोहनमिन्द्रियाणां मिथ्यार्थयोगेऽस्य गतिर्हि नित्या। मिथ्यार्थयोगाभिहतान्तरात्मा स्मरन्नुपास्ते विषयान् समन्तात् ॥ १० ॥ अभिध्या वै प्रथमं हन्ति लोकान् कामक्रोधावनुगृह्याशु पश्चात्। एते बालान्मृत्यवे प्रापयन्ति धीरास्तु धैर्य्येण तरन्ति मृत्युम् ॥ ११ ॥ सोऽभिध्यायन्नुत्पतितान्निहन्यादनादरेणाप्रतिबुध्यमानः। नैनं मृत्युर्मृत्युरिवात्ति भूत्वा एवं विद्वान् यो विनिहन्ति कामान् ॥ १२ ॥ कामानुसारी पुरुषः कामाननु विनश्यति। कामान् व्युदस्य धुनुते यत् किञ्चित् पुरुषो रजः ॥ १३ ॥ तमोऽप्रकाशो भूतानां नरकोऽयं प्रदृश्यते। मुह्यन्त इव धावन्ति गच्छन्तः श्वभ्रवत् सुखम् ॥ १४ ॥ अमूढवृत्तेः पुरुषस्येह कुर्य्यात् किं वै मृत्युस्तार्ण इवास्य व्याघ्रः। अमन्यमानः क्षत्रिय किञ्चिदन्यन्नाधीयीत निर्णुदन्निवास्य चायुः ॥ १५ ॥ स क्रोधलोभौ मोहवानन्तरात्मा स वै मृत्युस्त्वच्छरीरे य एषः। एवं मृत्युं जायमानं विदित्वा ज्ञाने तिष्ठन्न बिभेतीह मृत्योः। विनश्यते विषये तस्य मृत्युर्मृत्योर्यथा विषयं प्राप्य मर्त्यः ॥ १६ ॥

धृतराष्ट्र उवाच। यानेवाहुरिज्यया साधुलोकान् द्विजातीनां पुण्यतमान् सनातनान्। तेषां परार्थं कथयन्तीह वेदा एतद्विद्वानुपैति कथं नु कर्म ॥ १७ ॥

योगेन भवन्ति नित्या। तथास्य नाधिक्यमपैति किञ्चिदनादि योगेन भवन्ति पुंस ॥ २० ॥ य एतद्वा भगवान् स नित्यो विकार योगेन करोति विश्वम्। तथा च तच्छक्तिरिति स्म मन्यते तथार्थयोगे च भवन्ति वेदा ॥ २१ ॥

धृतराष्ट्र उवाच। येऽस्मिन् धर्मानाचरन्तीह केचित्तथा धर्मान् केचिदिहाचरन्ति। धर्मं पापेन प्रतिहन्यते स्विदुताहो धर्मं प्रतिहन्ति पापम् ॥ २२ ॥

सनत्सुजात उवाच। उभयमेव तत्रोपयुज्यते फलं धर्मस्यैवेतरस्य च। तस्मिन् स्थितौ वाप्युभयं हि नित्यं ज्ञानेन विद्वान् प्रतिहन्ति सिद्धम्। तथान्यथा पुण्यमुपैति देही तथागतं पापमुपैति सिद्धम् ॥ २३ ॥ गत्वोभयं कर्मणा युज्यतेऽस्थिरं शुभस्य पापस्य स चापि कर्मणा। धर्मेण पापं प्रणुदतीह विद्वान् धर्मो बलीयानिति तस्य सिद्धिः ॥ २४ ॥

धृतराष्ट्र उवाच। यानिहाहुः स्वस्य धर्मस्य लोकान् द्विजातीनां पुण्यकृतां सनातनान्। तेषां क्रमान् कथय ततोऽपि चान्यान्नैतद्विद्वन् वेत्तुमिच्छामि कर्म ॥ २५ ॥

सनत्सुजात उवाच। येषां व्रतेऽथ विस्पर्द्धा बले बलवतामिव। ते ब्राह्मणा इतः प्रेत्य ब्रह्मलोके प्रकाशकाः ॥ २६ ॥ येषां धर्मे च विस्पर्द्धा तेषां तज्ज्ञानसाधनम्। ते ब्राह्मणा इतो मुक्ताः स्वर्गं यान्ति त्रिविष्टपम् ॥ २७ ॥ तस्य सम्यक्समाचारमाहुर्वेदविदो जनाः। नैनं मन्येत भूयिष्ठं बाह्यमाभ्यन्तरं जनम् ॥ २८ ॥ यत्र मन्येत भूयिष्ठं प्रावृषीव तृणोलपम्। अन्नं पानं ब्राह्मणस्तज्जीवन्नानुसंज्वरेत् ॥ २९ ॥ यत्राकथयमानस्य प्रयच्छत्यशिवं भयम्। अतिरिक्तमिवाकुर्वन् स श्रेयान्नेतरो जनः ॥ ३० ॥ यो वा कथयमानस्य ह्यात्मानं नानुसंज्वरेत्। ब्रह्मस्वं नोपभुञ्जीत तदन्नं सम्मतं सताम् ॥ ३१ ॥ यथा स्वं वान्तमश्नाति श्वा वै

नित्यमभूतये। एवन्ते वान्तमश्नाति स्ववीर्य्यस्योपसेवनात् ॥ ३२ ॥ नित्यमज्ञातचर्य्या मे इति मन्येत ब्राह्मणः। ज्ञातीनां तु वसन्मध्ये तं विदुर्ब्राह्मणं बुधाः ॥ ३३ ॥ को ह्यनन्तरमात्मानं ब्राह्मणो हन्तुमर्हति। निर्लिङ्गमचलं शुद्धं सर्वद्वैतविवर्ज्जितम्। तस्माद्धि क्षत्रियस्यापि ब्रह्मावभाति पश्यति ॥ ३४ ॥ योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते। किं तेन न कृतं पापं चौरेणात्मापहारिणा ॥ ३५ ॥ अश्रान्तः स्यादनादाता सम्मतो निरुपद्रवः। शिष्टो नःशिष्टवत् स स्यात् ब्राह्मणो ब्रह्मवित् कविः ॥ ३६ ॥ अनाढ्या मानुषे वित्ते आढ्या दैवे तथा क्रतौ। ते दुर्द्धर्षा दुष्प्रकम्प्यास्तान् विद्याद्ब्रह्मणस्तनुम् ॥ ३७ ॥ सर्वान् स्विष्टकृतो देवान् विद्याद्य इह कश्चन। न समानो ब्राह्मणस्य तस्मिन् प्रयतते स्वयम् ॥ ३८ ॥ यमप्रयतमानन्तु मानयन्ति स मानितः। न मान्यमानो मन्येत न मान्यमभिसंज्वरेत् ॥ ३९ ॥ लोकः स्वभाववृत्तिर्हि निमेषोन्मेषवत् सदा। विद्वांसो मानयन्तीह इति मन्येत मानितः ॥ ४० ॥ अधर्मनिपुणा मूढा लोके मायाविशारदाः। न मान्यं मानयिष्यन्ति मान्यानामवमानिनः ॥ ४१ ॥ न वै मानञ्च मौनञ्च सहितौ वसतः सदा। अयं हि लोको मानस्य असौ मौनस्य तद्विदुः ॥ ४२ ॥ श्रीः सुखस्येह संवासः सा चापि परिपन्थिनी। ब्राह्मी सुदुर्लभा श्रीर्हि प्रज्ञाहीनेन क्षत्रिय ॥ ४३ ॥ द्वाराणि तस्येह वदन्ति सन्तो बहुप्रकाराणि दुराधराणि। सत्यार्जवे ह्रीर्दमशौचविद्या यथा न मोहप्रतिबन्धकानि ॥ ४४ ॥

इति उद्योगपर्वणि सनत्सुजातपर्वणि सनत्सुजातवाक्ये एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

---

धृतराष्ट्र उवाच। कस्यैष मौनः कतरन्नु मौनं प्रब्रूहि विद्वन्निह मौनभावम्। मौनेन विद्वानुत याति मौनं कथं मुने मौनमिहाचरन्ति ॥ १ ॥

सनत्सुजात उवाच। यतो न वेदा मनसा सहैनमनुप्रविशन्ति ततोऽथ मौनम्। यत्रोत्थितो वेदशब्दस्तथायं स तन्मयत्वेन विभाति राजन् ॥ २ ॥

धृतराष्ट्र उवाच। ऋचो यजूंषि यो वेद सामवेदञ्च वेद च। पापानि कुर्वन् पापेन लिप्यते किं न लिप्यते ॥ ३ ॥

सनत्सुजात उवाच। नैनं सामान्यृचो वापि न यजूंष्यविचक्षणम्। त्रायन्ते कर्मणः पापान्न ते मिथ्या ब्रवीम्यहम् ॥ ४ ॥ न छन्दांसि वृजिनात्तारयन्ति मायाविनं मायया वर्त्तमानम्। नीडं शकुन्ता इव जातपक्षाश्छन्दांस्येनं प्रजहत्यन्तकाले ॥ ५ ॥

धृतराष्ट्र उवाच। न चेद्वेदा विना धर्मं त्रातुं शक्ता विचक्षण। अथ कस्मात् प्रलापोऽयं ब्राह्मणानां सनातन ॥ ६ ॥

सनत्सुजात उवाच। तस्यैव नामादिविशेषरूपैरिदं जगद्भाति महानुभाव। निर्दिश्य सम्यक् प्रवदन्ति वेदास्तद्विश्ववैरूप्यमुदाहरन्ति ॥ ७ ॥ तदर्थमुक्तन्तप एतदिज्या ताभ्यामसौ पुण्यमुपैति विद्वान्। पुण्येन पापं विनिहत्य पश्चात् सञ्जायते ज्ञानविदीपितात्मा ॥ ८ ॥ ज्ञानेन चात्मानमुपैति विद्वान् अथान्यथा वर्गफलानुकाङ्क्षी। अस्मिन् कृतं तत् परिगृह्य सर्वममुत्र भुङ्क्ते पुनरेति मार्गम् ॥ ९ ॥ अस्मिँल्लोके तपस्तप्तं फलमन्यत्र भुज्यते। ब्राह्मणानामिमे लोका ऋद्धे तपसि तिष्ठताम् ॥ १० ॥

धृतराष्ट्र उवाच। कथं समृद्धमप्यृद्धं तपो भवति केवलम्। सनत्सुजात तद्ब्रूहि यथा विद्याम तद्वयम् ॥ ११ ॥

सनत्सुजात उवाच। निष्कल्मषं तपस्त्वेतत् केवलं परिचक्षते। एतत् समृद्धमप्यृद्धं तपो भवति केवलम् ॥ १२ ॥ तपो

मूलमिदं सर्वं यन्मां पृच्छसि क्षत्रिय । तपसा वेदविद्वांस परं त्वमृतमाप्नुयु ॥ १३ ॥

धृतराष्ट्र उवाच । कल्मषं तपसो ब्रूहि श्रुतं निष्कल्मषं तपः । सनत्सुजात येनेदं विद्यां गुह्यं सनातनम् ॥ १४ ॥

सनत्सुजात उवाच । क्रोधादयो द्वादश यस्य दोषास्तथा नृशंसानि दशत्रि राजन् । धर्मादयो द्वादश ते पितृणां शास्त्रे गुणा ये विदिता द्विजानाम् ॥ १५ ॥ क्रोधः कामो लोभमोहौ विधित्सा कृपासूये मानशोकौ स्पृहा च । ईर्ष्या जुगुप्सा च मनुष्यदोषा वर्ज्याः सदा द्वादशैते नराणाम् ॥ १६ ॥ एकैकः पर्य्युपास्ते ह मनुष्यान्मनुजर्षभ । लिप्समानोऽन्तरं तेषां मृगाणामिव लुब्धकः ॥ १७ ॥ विकत्थनः स्पृहयालुर्मनस्वी बिभ्रत् कोपं चपलोऽरक्षणश्च । एतान् पापाः षण्णराः पापधर्मान् प्रकुर्वते नो त्रसन्तः सुदुर्गे ॥ १८ ॥ सम्भोगसम्विद्विषमोऽतिमानी दत्तानुतापी कृपणो बलीयान् । वर्गप्रशंसी वनितासु द्वेष्टा एते परे सप्त नृशंसवर्गाः ॥ १९ ॥ धर्मश्च सत्यञ्च दमस्तपश्च अमात्सर्य्यं ह्रीस्तितिक्षानसूया । यज्ञश्च दानञ्च धृतिः श्रुतञ्च व्रतानि वै द्वादश ब्राह्मणस्य ॥ २० ॥ यस्त्वेतेभ्यः प्रभवेत् द्वादशभ्यः सर्वामपीमां पृथिवीं स शिष्यात् । त्रिभिर्द्वाभ्यामेकतो वार्थितो यस्तस्य स्वमस्तीति स वेदितव्यः ॥२१॥ दमस्त्यागोऽप्रमादश्च एतेष्वमृतमाहितम् । तानि सत्यमुखान्याहुर्ब्राह्मणा ये मनीषिणः ॥ २२ ॥ दमो ह्यष्टादशगुणः प्रतिकूलं कृताकृते । अनृतं चाभ्यसूया च कामार्थौ च तथा स्पृहा ॥ २३ ॥ क्रोधः शोकस्तथा तृष्णा लोभः पैशुन्यमेव च । मत्सरश्च विहिंसा च परितापस्तथारतिः ॥ २४ ॥ अपस्मारश्चातिवादस्तथा सम्भावनात्मनि । एतैर्विमुक्तो दोषैर्यः स दान्तः सद्भिरुच्यते ॥ २५ ॥ मदोऽष्टादशदोषः स्यात्त्यागो भवति षड्विधः । विपर्य्ययाः स्मृता एते मददोषा उदाहृताः ॥ २६ ॥ श्रेयांस्तु षड्विध-

त्यागस्तृतीयो दुष्करो भवेत्। तेन दुःखं तरत्येव भिन्नं तस्मिन् जितं कृते ॥ २७ ॥ श्रेयांस्तु षड्विधस्त्यागः प्रियं प्राप्य न हृष्यति। इष्टापूर्ते द्वितीयं स्यान्नित्यं वैराग्ययोगतः ॥ २८ ॥ कामत्यागश्च राजेन्द्र स तृतीय इति स्मृतः। अप्यवाच्यं वदन्त्येनं स तृतीयो गुणः स्मृतः ॥ २९ ॥ त्यक्तैर्द्रव्यैर्यद्भवति नोपयुक्तैश्च कामतः। न च कर्मसु तद्धेतु दुःखं तेन च न ग्लपेत् ॥ ३० ॥ सर्वैरेव गुणैर्युक्तो द्रव्यवानपि यो भवेत्। अप्रिये च समुत्पन्ने व्यथां जातु न गच्छति ॥ ३१ ॥ इष्टान् पुत्रांश्च दारांश्च न याचेत कदाचन। अर्हते याचमानाय प्रदेयं तच्छुभं भवेत् ॥ ३१ ॥ अप्रमादी भवेदेतैः स चाप्यष्टगुणो भवेत्। सत्यं ध्यानं समाधानं चोद्यं वैराग्यमेव च ॥ ३२ ॥ अस्तेयं ब्रह्मचर्य्यञ्च तथासंग्रह एव च। एवं दोषा मदस्योक्तास्तान्दोषान् परिवर्ज्जयेत् ॥ ३३ ॥ तथा त्यागोऽप्रमादश्च स चाप्यष्टगुणो मतः। अष्टौ दोषाः प्रमादस्य तान्दोषान् परिवर्ज्जयेत् ॥ ३४ ॥ इन्द्रियेभ्यश्च पञ्चभ्यो मनसश्चैव भारत। अतीतानागतेभ्यश्च मुक्तश्चेत्तः सुखी भवेत् ॥ ३५ ॥ सत्यात्मा भव राजेन्द्र सत्ये लोकाः प्रतिष्ठिताः। तांस्तु सत्यमुखानाहुः सत्ये ह्यमृतमाहितम् ॥ ३६ ॥ निवृत्तेनैव दोषेण तपोव्रतमिहाचरेत्। एतद्धातृकृतं वृत्तं सत्यमेव सतां व्रतम् ॥ ३७ ॥ दोषैरेतैर्वियुक्तस्तु गुणैरेतैः समन्वितः। एतत् समृद्धमत्यर्थं तपो भवति केवलम् ॥ ३८ ॥ यन्मां पृच्छसि राजेन्द्र सङ्क्षेपात् प्रब्रवीमि ते। एतत् पापहरं पुण्यं जन्ममृत्युजरापहम् ॥ ३९ ॥

धृतराष्ट्र उवाच। आख्यानपञ्चमैर्वेदैर्भूयिष्ठं कथ्यते जनः। तथा चान्ये चतुर्वेदास्त्रिवेदाश्च तथा परे ॥ ४० ॥ द्विवेदाश्चैकवेदाश्चाप्यनृचश्च तथा परे। तेषान्तु कतरः स स्याद्यमहं वेद वै द्विजम् ॥ ४१ ॥

सनत्सुजात उवाच। एकस्य वेदस्याज्ञानाद्वेदास्ते बहवः कृताः। सत्यस्यैकस्य राजेन्द्र सत्ये कश्चिदवस्थितः ॥ ४२ ॥ एवं वेदमविज्ञाय प्राज्ञोऽहमिति मन्यते। दानमध्ययनं यज्ञो लोभादेतत् प्रवर्त्तते ॥ ४३ ॥ सत्यात् प्रच्यवमानानां सङ्कल्पश्च तथा भवेत्। ततो यज्ञः प्रतायेत सत्यस्यैवावधारणात् ॥ ४४ ॥ मनसान्यस्य भवति वाचान्यस्याथ कर्म्मणा। सङ्कल्पसिद्धः पुरुषः सङ्कल्पानधितिष्ठति ॥ ४५ ॥ अनैभृत्येन वै तस्य दीक्षितव्रतमाचरेत्। नामैतद्धातुनिर्वृत्तं सत्यमेव सतां परम् ॥ ४६ ॥ ज्ञानं वै नाम प्रत्यक्षं परोक्षं जायते तपः। विद्याद्बहुपठन्तन्तु द्विजं वै बहुपाठिनम् ॥ ४७ ॥ तस्मात् क्षत्रिय मामंस्था जल्पितेनैव वै द्विजम्। य एव सत्यान्नापैति स ज्ञेयो ब्राह्मणस्त्वया ॥ ४८ ॥ छन्दांसि नाम क्षत्रिय तान्यथर्व्वा पुरा जगौ महर्षिसङ्घ एष। छन्दोविदस्ते य उतानधीतवेदा न वेदवेद्यस्य विदुर्हि तत्त्वम् ॥ ४९ ॥ छन्दांसि नाम द्विपदां वरिष्ठ स्वच्छन्दयोगेन भवन्ति तत्र। छन्दोविदस्ते न च तानधीत्य गता न वेदस्य न वेद्यमार्य्याः ॥ ५० ॥ न वेदानां वेदिता कश्चिदस्ति कश्चित्त्वेतान् बुध्यते वापि राजन्। यो वेद वेदान्न स वेद वेद्यं सत्ये स्थितो यस्तु स वेद वेद्यम् ॥ ५१ ॥ न वेदाना वेदिता कश्चिदस्ति वेद्येन वेदं न विदुर्न वेद्यम्। यो वेद वेदं स च वेद वेद्यं यो वेद वेद्यं न स वेद सत्यम् ॥ ५२ ॥ यो वेद वेदान् न च वेद वेद्यं न तं विदुर्वेदविदो न वेदाः। तथापि वेदेन विदन्ति वेदं ये ब्राह्मणा वेदविदो भवन्ति ॥ ५३ ॥ धामांशभागस्य तथा हि वेदा यथा च शाखा हि महीरुहस्य। संवेदने चैव यथामनन्ति तस्मिन् हि सत्ये परमात्मनोऽर्थे ॥ ५४ ॥ अभिजानामि ब्राह्मणं व्याख्यातारं विचक्षणम्। यश्छिन्नविचिकित्सः सन् व्याचष्टे सर्व्वसंशयान् ॥५५॥ नास्य पर्य्येषणं गच्छेत् प्राचीनं नोत दक्षिणम्। नार्वाचीनं कुत-

स्त्रिथ्यङ्‌ादिग्न्तु कथञ्चन ॥ ५६ ॥ तस्य पर्य्यषणे गच्छेत् प्रत्य थिंषु कथञ्चन। अविचिन्वन्निमं वेदे तप पश्यति तं प्रभुम ॥५७॥ तूष्णीभूत उपासीत न चेष्टेन्मनसापि च। अभ्यावर्त्तते तद्ब्रह्म अन्तरात्मनि विश्रुतम् ॥ ५८ ॥ मौनाद्धि स मुनिर्भवति नारण्य वसनान्मुनि । स्वलक्षणन्तु यो वेद स मुनि श्रेष्ठ उच्यते ॥५९॥ सर्वार्थाना व्याकरणाद्वैयाकरण उच्यते। तन्मूलतो व्याकरणं व्याकरोतीति तत्तथा ॥ ६० ॥ प्रत्यक्षदर्शी लोकाना सर्वदर्शी भवेन्नर । सत्ये वै ब्राह्मणस्तिष्ठन् तद्विद्वान् सर्वविद्भवेत ॥ ६१ ॥ धर्मादिषु स्थितोऽप्येव क्षत्रिय ब्रह्म पश्यति वेदेषु चानुपूर्व्येण एतद्बुद्ध्या ब्रवीमि ते ॥ ६२ ॥

इति उद्योगपर्वणि सनत्सुजातपर्वणि सनत्सुजातवाक्ये द्विचत्वारिंशोऽध्याय ॥ ४२ ॥

---

धृतराष्ट्र उवाच। सनत्सुजात यामिमा परां त्व ब्राह्मी वाचं वदसे विश्वरूपाम। परां हि कामेन सुदुर्लभां कथां तद्ब्रूहि मे वाक्यमेतत् कुमार ॥ १ ॥

सनत्सुजात उवाच। नैतद्ब्रह्म त्वरमाणेन लभ्य यन्मा पृच्छस्यतिहृष्यस्यतीव। बुद्धौ विलीने मनसि प्रचिन्त्या विद्या हि सा ब्रह्मचर्य्येण लभ्या ॥ २ ॥

धृतराष्ट्र उवाच। अत्यन्तविद्यामिति यत् सनातनी ब्रवीषि त्वं ब्रह्मचर्य्येण सिद्धाम्। अनारभ्या वसतीह कार्य्यकाले, कथ ब्राह्मण्यममृतत्व लभेत ॥ ३ ॥

सनत्सुजात उवाच। अव्यक्तविद्यामभिधास्ये पुराणीं बुद्ध्या च तेषा ब्रह्मचर्य्येण सिद्धाम। या प्राप्यैन मर्त्यलोकं त्यजन्ति या वै विद्या गुरुवृद्धेषु नित्या ॥ ४ ॥

धृतराष्ट्र उवाच । ब्रह्मचर्य्येण या विद्या शक्या वेदितुमञ्जसा । तत् कथं ब्रह्मचर्य्यं स्यादेतद् ब्रह्मन् ब्रवीहि मे ॥ ५ ॥

सनत्सुजात उवाच । आचार्य्ययोनिमिह ये प्रविश्य भूत्वा गर्भं ब्रह्मचर्य्यं चरन्ति । इहैव ते शास्त्रकारा भवन्ति प्रहाय देहं परमं यान्ति योगम् ॥ ६ ॥ अस्मिंल्लोके वै जयन्तीह कामान् ब्राह्मीं स्थितिं ह्यनुतितिक्षमाणाः । त आत्मानं निर्हरन्तीह देहान् मुञ्जादिषीकामिव सत्त्वसंस्थाः ॥ ७ ॥ शरीरमेतौ कुरुतः पिता माता च भारत । आचार्य्यशास्ता या जातिः सा पुण्या साजरामरा ॥ ८ ॥ यः प्रावृणोत्यवितथेन वर्णानृतं कुर्व्वन्नमृतं संप्रयच्छन् । तं मन्येत पितरं मातरञ्च तस्मै न द्रुह्येत् कृतमस्य जानन् ॥ ९ ॥ गुरुं शिष्यो नित्यमभिवादयीत स्वाध्यायमिच्छेच्छुचिरप्रमत्तः । मानं न कुर्य्यान्नादधीत रोषमेष प्रथमो ब्रह्मचर्य्यस्य पादः ॥ १० ॥ शिष्यवृत्तिक्रमेणैव विद्यामाप्नोति यः शुचिः । ब्रह्मचर्य्यव्रतस्यास्य प्रथमः पाद उच्यते ॥ ११ ॥ आचार्य्यस्य प्रियं कुर्य्यात् प्राणैरपि धनैरपि । कर्म्मणा मनसा वाचा द्वितीयः पाद उच्यते ॥ १२ ॥ समा गुरौ यथा वृत्तिर्गुरुपत्न्यां तथाचरेत् । तत्पुत्रे च तथा कुर्व्वन् द्वितीयः पाद उच्यते ॥ १३ ॥ आचार्य्येणात्मकृतं विजानन् ज्ञात्वा चार्थं भावितोऽस्मीत्यनेन । यन्मन्यते तं प्रति हृष्टबुद्धिः स वै तृतीयो ब्रह्मचर्य्यस्य पादः ॥ १४ ॥ नाचार्य्यस्यानपाकृत्य प्रवासं प्राज्ञः कुर्व्वीत नैतदहं करोमि । इतीव मन्येत न भाषयीत स वै चतुर्थो ब्रह्मचर्य्यस्य पादः ॥ १५ ॥ कालेन पादं लभते तथार्थं ततश्च पादं गुरुयोगतश्च । उत्साहयोगेन च पादमृच्छेत् शास्त्रेण पादञ्च ततोऽभियाति ॥ १६ ॥ धर्म्मादयो द्वादश यस्य रूपमन्यानि चाङ्गानि तथा बलञ्च । आचार्य्ययोगे फलतीति चाहुर्ब्रह्मार्थयोगेन च ब्रह्मचर्य्यम् ॥ १७ ॥ एवं प्रवृत्तो यदुपालभेत वै धनमाचार्य्याय तदनुप्रयच्छेत् । स तां वृत्तिं

बहुगुणानिवसति गुरौ गुरौ भवति च वृत्तिरेषा ॥ १८ ॥ एवं वसन् सर्वतो वर्द्धतीह बहून् पुत्राल्लभते च प्रतिष्ठाम् । वर्षन्ति चास्मै प्रदिशो दिशश्च वसन्त्यस्मिन् ब्रह्मचर्य्ये जनाश्च ॥ १९ ॥ एतेन ब्रह्मचर्य्येण देवा देवत्वमाप्नुवन् । ऋषयश्च महाभागा ब्रह्मलोकं मनीषिणः ॥ २० ॥ गन्धर्वाणामनेनैव रूपमप्सरसामभूत् । एतेन ब्रह्मचर्य्येण सूर्य्योऽप्यह्नाय जायते ॥ २१ ॥ आकाङ्क्षार्थस्य संयोगाद्रसभेदार्थिनामिव । एवं ह्येतत समाज्ञाय तादृग्भावं गता इमे ॥ २२ ॥ य आश्रयेत पावयेच्चापि राजन् सर्वं शरीरं तपसा तप्यमानः । एतेन वै बाल्यमभ्येति विद्वान् मृत्युं तथा स जयत्यन्तकाले ॥ २३ ॥ अन्तवतः क्षत्रिय ते जयन्ति लोकान् जनाः कर्मणा निर्मलेन । ब्रह्मैव विद्वांस्तेन चाभ्येति सर्वं नान्यः पन्था अयनाय विद्यते ॥ २४ ॥

धृतराष्ट्र उवाच । आभाति शुक्लमिव लोहितमिवाथो कृष्णमथाञ्जनं काद्रवं वा । सद्ब्रह्मणः पश्यति योऽत्र विद्वान् कथं रूपं तदमृतमक्षरं परम् ॥ २५ ॥

सनत्सुजात उवाच । आभाति शुक्लमिव लोहितमिवाथो कृष्णमायसमर्कवर्णम् । न पृथिव्यां तिष्ठति नान्तरिक्षे नैतत् समुद्रे सलिलं बिभर्त्ति ॥ २६ ॥ न तारकासु न च विद्युदाश्रितं न चाभ्रेषु दृश्यते रूपमस्य । न चापि वायौ न च देवतासु नैतच्चन्द्रे दृश्यते नोत सूर्य्ये ॥ २७ ॥ नैवर्क्षु तन्न यजुःषु नाप्यथर्वसु न दृश्यते वै विमलेषु सामसु । रथन्तरे बार्हद्रथे वापि राजन् महाव्रते नैव दृश्येद्ध्रुवं तत् ॥ २८ ॥ अपारणीयं तमसः परस्तात्तदन्तकोऽप्येति विनाशकाले । अणीयोरूपं क्षुरधाराया समं महच्च रूपं तद्वै पर्वतेभ्यः ॥ २९ ॥ सा प्रतिष्ठा तदमृतं लोकास्तद्ब्रह्म तद्यशः । भूतानि जज्ञिरे तस्मात् प्रलयं यान्ति तत्र हि ॥ ३० ॥ अनामयं तन्महदुद्यतं यशो वाचो विकारं कवयो

वदन्ति । यस्मिन् जगत् सर्वमिदं प्रतिष्ठितं ये तद्विदुरमृतास्ते भवन्ति ॥ ३१ ॥

इति उद्योगपर्वणि सनत्सुजातपर्वणि सनत्सुजातवाक्ये द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

---

सनत्सुजात उवाच । शोकः क्रोधश्च लोभश्च कामो मानः परासुता । ईर्ष्या मोहो विधित्सा च कृपासूया जुगुप्सता ॥ १ ॥ द्वादशैते महादोषा मनुष्यप्राणनाशनाः । एकैकमेते राजेन्द्र मनुष्यान् पर्य्युपासते । यैराविष्टो नरः पापं मूढसंज्ञो व्यवस्यति ॥२॥ स्पृहयालुरुग्रः परुषो वदान्यः क्रोधं बिभ्रन्मनसा वै विकत्थी । नृशंसधर्माः षडिमे जना वै प्राप्याप्यर्थं नोत सभाजयन्ते ॥ ३ ॥ सम्भोगसम्विद्विषमोऽतिमानी दत्त्वा विकत्थी कृपणो दुर्बलश्च । बहुप्रशंसी वनिताद्विट् सदैव सप्तैवोक्ताः पापशीला नृशंसाः ॥ ४ ॥ धर्मश्च सत्यञ्च तपो दमश्च अमात्सर्य्यं ह्रीस्तितिक्षानसूया । दानं श्रुतञ्चैव धृतिः क्षमा च महाव्रता द्वादश ब्राह्मणस्य ॥ ५ ॥ यो नैतेभ्यः प्रच्यवेद्द्वादशभ्यः सर्वामपीमां पृथिवीं स शिष्यात् । त्रिभिर्द्वाभ्यामेकतो वार्थितो यो नास्य स्वमस्तीति स वेदितव्यम् ॥ ६ ॥ दमस्त्यागोऽथाप्रमाद इत्येतेष्वमृतं स्थितम् । एतानि ब्रह्ममुख्यानां ब्राह्मणानां मनीषिणाम् ॥ ७ ॥ सद्वासद्वा परीवादो ब्राह्मणस्य न शस्यते । नरकप्रतिष्ठास्ते स्युर्य एवं कुर्वते जनाः ॥ ८ ॥ मदोऽष्टादशदोषः स स्यात् पुरा योऽप्रकीर्त्तितः । लोकद्वेष्यं प्रातिकूल्यमभ्यसूया मृषावचः ॥ ९ ॥ कामक्रोधौ पारतन्त्र्यं परिवादोऽथ पैशुनम् । अर्थहानिर्विवादश्च मात्सर्य्यं प्राणिपीडनम् ॥ १० ॥ ईर्ष्या मोदोऽतिवादश्च संज्ञानाशोऽभ्यसूयिता । तस्मात् प्राज्ञो न माद्येत सदा ह्येतद्विगर्हितम् ॥ ११ ॥ सौहृदे वै षड्-

गुणा वेदितव्याः प्रिये ह्यन्यप्रिये च व्यथन्ते । स्वादात्मनः
सुहितं याचते यो दद्यात्‌ याचन्नपि देयं खलु स्यात् ॥ १२ ॥
इष्टान् पुत्रान् विभवान् स्वांश्च दारानभ्यर्थितश्चार्हति शुद्धभावः ।
त्यक्तद्रव्यः संवसेन्नेह कामात् भुंक्ते कर्म स्वाश्रितमस्याधते च ॥ १३ ॥
द्रव्यवान् गुणवानेवं त्यागी भवति सात्त्विकः । पञ्चभूतानि पञ्चभ्यो
निवर्त्तयति तादृशः ॥ १४ ॥ एतत् समृद्धमप्यूर्द्धं तपो भवति
केवलम् । सत्त्वात् प्रच्यवमानानां सङ्कल्पेन समाहितम् ॥ १५ ॥
यतो यज्ञः प्रवर्त्तन्ते सत्यस्यैवावरोधनात् । मनसान्यस्य भवति
वाचान्यस्याथ कर्मणा ॥ १६ ॥ सङ्कल्पसिद्धं पुरुषमसङ्कल्पोऽधि-
तिष्ठति । ब्राह्मणस्य विशेषेण किञ्चान्यदपि मे शृणु ॥ १७ ॥
अध्यापयेन्महदेतद्यशस्यं वाचो विकारान् कवयो वदन्ति । अस्मिन्
योगे सर्वमिदं प्रतिष्ठितं ये तद्विदुरमृतास्ते भवन्ति ॥ १८ ॥ न
कर्मणा सुकृतेनैव राजन् सत्यञ्जयेज्जुहुयाद्वा यजेद्वा । नैतेन
बालोऽमृत्युमभ्येति राजन् रतिञ्चासौ न लभत्यन्तकाले ॥ १९ ॥
तूष्णीमेक उपासीत चेष्टेत मनसापि न । तथा संस्तुतिनिन्दाभ्यां
प्रीतिरोषौ विवर्ज्जयेत् ॥ २० ॥ अत्रैव तिष्ठन् क्षत्रिय ब्रह्मा-
विशति पश्यति । वेदेषु चानुपूर्व्येण एतद्विद्वन् ब्रवीमि ते ॥ २१ ॥

इति उद्योगपर्व्वणि सनत्सुजातपर्व्वणि सनत्सुजातवाक्ये
चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

---

सनत्सुजात उवाच । यत्तच्छुक्रं महज्ज्योतिर्दीप्यमानं महद्-
यशः । तद्वै देवा उपासन्ते तस्मात् सूर्य्यो विराजते । योगिनस्तं
प्रपश्यन्ति भगवन्तं सनातनम् ॥ १ ॥ शुक्राद्ब्रह्म प्रभवति ब्रह्म
शुक्रेण वर्द्धते । तच्छुक्रं ज्योतिषां मध्येऽतप्तं तपति तापनम् ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ २ ॥ आपोऽथ अद्भ्यः

सलिलस्य मध्ये उभौ देवौ शिश्रियातेऽन्तरिक्षे। अतन्द्रितः सवितु-
र्विवस्वानुभौ बिभर्त्ति पृथिवीं दिवञ्च। योगिनस्तं प्रपश्यन्ति
भगवन्तं सनातनम् ॥ ३ ॥ उभौ च देवौ पृथिवीं दिवं च दिशः
शुक्रो भुवनं बिभर्त्ति। तस्माद्दिशः सरितश्च स्रवन्ति तस्मात् समुद्रा
विहिता महान्तः। योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥४॥
चक्रे रथस्य तिष्ठन्तोऽध्रुवस्याव्ययकर्मणः। केतुमन्तं वहन्त्यश्वास्तं
दिव्यमजरं दिवि। योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥५॥
न सादृश्ये तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चिदेनम्। मनी-
षयाथो मनसा हृदा च य एनं विदुरमृतास्ते भवन्ति। योगिनस्तं
प्रपश्यन्ति भगवन्तं सनातनम् ॥ ६ ॥ द्वादशपूगां सरितं पिबन्तो
देवरक्षिताम्। मध्वीशन्तश्च ते तस्याः सञ्चरन्तीह घोराम्।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ७ ॥ तदर्द्धमासं पिबति
सञ्चित्य भ्रमरो मधु। ईशानः सर्वभूतेषु हविर्भूतमकल्पयत्।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ८ ॥ हिरण्यपर्ण-
मश्वत्थमभिपत्य ह्यपक्षकाः। तत्र ते पक्षिणो भूत्वा प्रपतन्ति यथा
दिशम्। योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ९ ॥ पूर्णात्
पूर्णान्युद्धरन्ति पूर्णात्पूर्णानि चक्रिरे। हरन्ति पूर्णात्पूर्णानि
पूर्णमेवावशिष्यते। योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥१०॥
तस्माद्वै वायुरायातस्तस्मिंश्च प्रयतः सदा। तस्मादग्निश्च सोमश्च
तस्मिंश्च प्राण आततः। सर्वमेव ततो विद्यात्तत्तद्वक्तुं न शक्नुमः।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ११ ॥ अपानं गिरति
प्राणः प्राणं गिरति चन्द्रमाः। आदित्यो गिरते चन्द्रमादित्यं
गिरते परः। योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १२ ॥
एकं पादं नोत्क्षिपति सलिलाद्धंस उच्चरन्। तच्चेत् सततमूर्द्धाय
न मृत्युर्नामृतं भवेत्। योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्
॥ १३ ॥ अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा लिङ्गस्य योगेन स याति

नित्यम। तमीशमीड्यमनुकल्पमाद्यं पश्यन्ति मूढा न विराज-
मानम्। योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम॥ १४॥
असाधना वापि ससाधना वा समानमेतद् दृश्यते मानुषेषु। समान
मेतदमृतस्येतरस्य मुक्तास्तत्र मध्व उत्सं समापुः। योगिनस्तं
प्रपश्यन्ति भगवन्तं सनातनम॥ १५॥ उभौ लोकौ विद्ययाव्याप्य
याति तदा हुतं चाहुतमग्निहोत्रम। मा ते ब्राह्मी लघुतामाद
धीत प्रज्ञानं स्यान्नाम धीरा लभन्ते। योगिनस्तं प्रपश्यन्ति भग
वन्तं सनातनम॥ १६॥ एवं रूपो महात्मा स पावकं पुरुषो
गिरन्। यो वै तं पुरुषं वेद तस्येहार्थो न रिष्यते। योगिनस्तं
प्रपश्यन्ति भगवन्तं सनातनम्॥ १७॥ यः सहस्रं सहस्राणां
पक्षान् सन्तत्य सम्पतेत। मध्यमे मध्य आगच्छेदपि चेत्स्यान्मनो
जव॥ १८॥ योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम॥ १९॥
न दर्शने तिष्ठति रूपमस्य पश्यन्ति चैनं सुविशुद्धसत्त्वाः। हितो
मनीषी मनसा न तप्यते ये प्रव्रजेयुरमृतास्ते भवन्ति। योगि
नस्तं प्रपश्यन्ति भगवन्तं सनातनम॥ २०॥ गूहन्ति सर्पा इव
गह्वराणि स्वशिक्षया स्वेन वृत्तेन मर्त्याः। तेषु प्रमुह्यन्ति जना
विमूढा यथाध्वानं मोहयन्ते भयाय। योगिनस्तं प्रपश्यन्ति
भगवन्तं सनातनम्॥ २१॥ नाहं सदासत्कृतः स्यां न मृत्युर्न
चामृत्युरमृतं मे कुतः स्यात। सत्यानृते सत्यसमानबन्धे सतश्च
योनिरसतश्चैक एव। योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम
॥ २२॥ न साधुना नोत असाधुना वा समानमेतद् दृश्यते मानु
षेषु। समानमेतदमृतस्य विद्यादेवं युक्तो मधु तद्वै परीप्सेत।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्॥ २३॥ नास्यातिवादा
हृदयं तापयन्ति नानधीतं नाहुतमग्निहोत्रम्। मनो ब्राह्मी
लघुतामादधीत प्रज्ञामस्मै नाम धीरा लभन्ते। योगिनस्तं
प्रपश्यन्ति भगवन्तं सनातनम॥ २४॥ एवं यः सर्वभूतेषु आत्मान

मनुपश्यति । अन्यत्रान्यत्र युक्तेषु किं स शोचेत्ततः परम् ॥ २५ ॥ यथोदपाने महति सर्वतः संप्लुतोदके । एवं सर्व्वेषु वेदेषु आत्मानमनुजानतः ॥ २६ ॥ अङ्गुष्ठमात्रः पुरुषो महात्मा न दृश्यतेऽसौ हृदि सन्निविष्टः । अजश्चरो दिवारात्रमतन्द्रितश्च स तं मत्वा कविरास्ते प्रसन्नः ॥ २७ ॥ अहमेव स्मृतो माता पिता पुत्रोऽस्म्यहं पुनः । आत्माहमपि सर्व्वस्य यच्च नास्ति यदस्ति च ॥२८॥ पितामहोऽस्मि स्थविरः पिता पुत्रश्च भारत । ममैव यूयमात्मस्था न मे यूयं न वोऽप्यहम् ॥ २९ ॥ आत्मैव स्थानं मम जन्म चात्मा ओतप्रोतोऽहमजरः प्रतिष्ठः । अजश्चाहोरात्रमतन्द्रितोऽहं मां विज्ञाय कविरास्ते प्रसन्नः ॥ ३० ॥ अणोरणीयान् सुमनाः सर्व्वभूतेषु जाग्रति । पितरं सर्व्वभूतेषु पुष्करे निहितं विदुः ॥ ३१ ॥

इति उद्योगपर्व्वणि सनत्सुजातपर्व्वणि सनत्सुजातवाक्ये पञ्चचत्वारिंशोऽध्यायः समाप्तञ्च सनत्सुजातपर्व्व ॥ ४५ ॥

---

अथ यानसन्धिपर्व्व ॥

वैशम्पायन उवाच । एवं सनत्सुजातेन विदुरेण च धीमता । सार्द्धं कथयतो राज्ञः सा व्यतीयाय शर्व्वरी ॥ १ ॥ तस्यां रजन्यां व्युष्टायां राजानः सर्व्व एव ते । सभामाविविशुर्हृष्टाः सूतस्योप दिदृक्षया ॥ २ ॥ शुश्रूषमाणाः पार्थानां वाचो धर्म्मार्थसंहिताः । धृतराष्ट्रमुखाः सर्व्वे ययू राजसभां शुभाम् ॥ ३ ॥ सुधावदातां विस्तीर्णां कनकाजिरभूषणाम् । चन्द्रप्रभां सुरुचिरां सिक्तां चन्दनवारिणा ॥ ४ ॥ रुचिरैरासनैस्तीर्णां काञ्चनैर्दारवैरपि । अश्मसारमयैर्दान्तैः स्वास्तीर्णैः सोत्तरच्छदैः ॥ ५ ॥ भीष्मो द्रोणः कृपः शल्यः कृतवर्म्मा जयद्रथः । अश्वत्थामा विकर्णश्च सोमदत्तश्च बाह्लिकः ॥ ६ ॥ विदुरश्च महाप्राज्ञो युयुत्सुश्च महारथः । सर्व्वे

च सहिताः शूराः पार्थिवा भरतर्षभ ॥ ७ ॥ धृतराष्ट्रं पुरस्कृत्य विविशुस्तां सभां शुभाम् । दुःशासनश्चित्रसेनः शकुनिश्चापि सौबलः ॥ ८ ॥ दुर्मुखो दुःसहः कर्ण उलूकोऽथ विविंशतिः । कुरुराजं पुरस्कृत्य दुर्य्योधनममर्षणम् ॥ ९ ॥ विविशुस्तां सभां राजन् सुराः शक्रसदो यथा । आविशद्भिस्तदा राजन् शूरैः परिघबाहुभिः ॥ १० ॥ शुशुभे सा सभा राजन् सिंहैरिव गिरेर्गुहा । ते प्रविश्य महेष्वासाः सभां सर्वे महौजसः ॥ ११ ॥ आसनानि विचित्राणि भेजिरे सूर्य्यवर्च्चसः । आसनस्थेषु सर्व्वेषु तेषु राजसु भारत ॥ १२ ॥ द्वाःस्थो निवेदयामास सूतपुत्रमुपस्थितम् । अयं स रथ आयाति योऽयासीत् पाण्डवान् प्रति ॥ १३ ॥ दूतो नस्तूर्णमायातः सैन्धवैः साधुवाहिभिः । उपयाय तु स क्षिप्रं रथात् प्रस्कन्द्य कुण्डली । प्रविवेश सभां पूर्णां महीपालैर्महात्मभिः ॥ १४ ॥

सञ्जय उवाच । प्राप्तोऽस्मि पाण्डवान् गत्वा तद्विजानीत कौरवाः । यथावयः कुरून् सर्वान् प्रतिनन्दन्ति पाण्डवाः ॥ १५ ॥ अभिवादयन्ति वृद्धांश्च वयस्यांश्च वयस्यवत् । यूनश्चाभ्यवदन् पार्थाः प्रतिपूज्य यथावयः ॥ १६ ॥ यथाहं धृतराष्ट्रेण शिष्टः पूर्व्वमितो गतः । अब्रुवं पाण्डवान् गत्वा तन्निबोधत पार्थिवाः ॥ १७ ॥

इति उद्योगपर्व्वणि यानसन्धिपर्व्वणि सञ्जयप्रत्यागमने
षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

---

धृतराष्ट्र उवाच । पृच्छामि त्वां सञ्जय राजमध्ये किमब्रवीद्वाक्यमदीनसत्त्वः । धनञ्जयस्तात युधां प्रणेता दुरात्मनां जीवितच्छिन्महात्मा ॥ १ ॥

सञ्जय उवाच । दुर्य्योधनो वाचमिमां शृणोतु यदब्रवी-

दर्जुनो योत्स्यमानः । युधिष्ठिरस्यानुमते महात्मा धनञ्जयः शृण्वतः
केशवस्य ॥ २ ॥ अन्वशस्तो बाहुवीर्यं विदान उपह्वरे वासु-
देवस्य वीर । अवोचन्मां योत्स्यमानः किरीटी मध्ये ब्रूया धार्त्त-
राष्ट्रं कुरूणाम् ॥ ३ ॥ संशृण्वतस्तस्य दुर्भाषिणो वै दुरात्मनः
सूतपुत्रस्य सूत । यो योद्धुमाशंसति मां सदैव मन्दप्रज्ञः काल-
पक्वोऽतिमूढः ॥ ४ ॥ ये वै राजानः पाण्डवायोधनाय समा-
नीताः शृण्वतां चापि तेषाम् । यथा समग्रं वचनं मयोक्तं सहा-
मात्यं श्रावयेथा नृपं तत् ॥ ५ ॥ यथा नूनं देवराजस्य देवाः
शुश्रूषन्ते वज्रहस्तस्य सर्वे । तथाशृण्वन् पाण्डवाः सृञ्जयाश्च
किरीटिना वाचमुक्तां समर्थाम् ॥ ६ ॥ इत्यब्रवीदर्जुनो योत्स्य-
मानो गाण्डीवधन्वा लोहितपद्मनेत्रः । न चेद्राज्यं मुञ्चति धार्त्त-
राष्ट्रो युधिष्ठिरस्याजमीढस्य राज्ञः ॥ ७ ॥ अस्ति नूनं कर्म कृतं
पुरस्तादनिर्विष्टं पापकं धार्त्तराष्ट्रैः । येषां युद्धं भीमसेनार्जुनाभ्यां
तथाश्विभ्यां वासुदेवेन चैव ॥ ८ ॥ शैनेयेन ध्रुवमात्तायुधेन
धृष्टद्युम्नेनाथ शिखण्डिना च । युधिष्ठिरेणेन्द्रकल्पेन चैव योऽप-
ध्यानान्निर्दहेद्गां दिवञ्च ॥ ९ ॥ तैश्चेद्योद्धुं मन्यते धार्त्तराष्ट्रो
निर्वृत्तोऽर्थः सकलः पाण्डवानाम् । मा तत् कार्षीः पाण्डव-
स्यार्थहेतोरुपैहि युद्धं यदि मन्यसे त्वम् ॥ १० ॥ यां तां वने
दुःखशय्यामवात्सीत् प्रव्राजितः पाण्डवो धर्मचारी । आप्नोतु तां
दुःखतरामनर्थामन्त्यां शय्यां धार्त्तराष्ट्रः परासुः ॥ ११ ॥ ह्रिया
ज्ञानेन तपसा दमेन शौर्येणाथो धर्मगुप्त्या धनेन । अन्यायवृत्तिः
कुरुपाण्डवेयानध्यातिष्ठद्धार्त्तराष्ट्रो दुरात्मा ॥ १२ ॥ मायो-
पधः प्रणिपातार्जवाभ्यां तपोदमाभ्यां धर्मगुप्त्या बलेन । सत्यं
ब्रुवन् प्रतिपन्नो नृपो नस्तितिक्षमाणः क्लिश्यमानोऽतिवेलम् ॥१३॥
यदा ज्येष्ठः पाण्डवः संशितात्मा क्रोधं यत्तं वर्षपूगान् सुघोरम् ।
अवसृष्टा कुरुषूद्वृत्तचेतास्तदा युद्धं धार्त्तराष्ट्रोऽन्वतप्स्यत् ॥ १४ ॥

कृष्णवर्त्मेव ज्वलितः समिद्धो यथा दहेत् कक्षमग्निर्निदाघे । एवं
दग्धा धार्त्तराष्ट्रस्य सेनां युधिष्ठिरः क्रोधदीप्तोऽन्ववेक्ष्य ॥ १५ ॥
यदा द्रष्टा भीमसेनं रथस्थं गदाहस्तं क्रोधविषं वमन्तम् । दुर्म
र्षणं पाण्डवं भीमवेगं तदा युद्धं धार्त्तराष्ट्रोऽन्वतप्स्यत ॥ १६ ॥
सेनाग्रगं दंशितं भीमसेनं स्वालक्षण्यं वीरहणं परेषाम् । घन्तकम्
अन्तकसन्निवेशं तदा स्मर्त्ता वचनस्याभिमानी ॥ १७ ॥ यदा द्रष्टा
भीमसेनेन नागान् निपातितान् गिरिकूटप्रकाशान् । कुम्भैरिवा
सृग्वमतो भिन्नकुम्भांस्तदा युद्धं धार्त्तराष्ट्रोऽन्वतप्स्यत ॥ १८ ॥

द्रोणस्तदा तप्स्यति धार्त्तराष्ट्रः ॥ ४० ॥ यदा स सेनापतिरप्र
मेयः पराभवन्निषुभिर्धार्त्तराष्ट्रान् । द्रोणं रणे शत्रुसहोऽभि
याता तदा युद्धं धार्त्तराष्ट्रोऽन्वतप्स्यत ॥ ४१ ॥ धीमान्मनीषी
बलवान्मनस्वी स लक्ष्मीवान् सोमकानां प्रबर्हः । न जातु तं
शत्रवोऽन्ये सहेरन् येषां स स्यादग्रणीर्वृष्णिसिंहः ॥ ४२ ॥ इदञ्च
ब्रूया मा वृणीष्वेति लोके युद्धे द्वितीयं सचिवं रथस्थम् । शिने
र्नप्तारं प्रवृणीम सात्यकिं महाबलं वीतभयं कृतास्त्रम् ॥ ४३ ॥
महोरस्को दीर्घबाहुः प्रमाथी युद्धेऽद्वितीयः परमास्त्रवेदी । शिने
र्नप्ता तालमात्रायुधोऽयं महारथो वीतभयः कृतास्त्रः ॥ ४४ ॥
यदा शिनीनामधिपो मयोक्तः शरैः परान्मेघ इव प्रवर्षन् । प्रच्छा
दयिष्यत्यरिहा योधमुख्यांस्तदा युद्धं धार्त्तराष्ट्रोऽन्वतप्स्यत ॥ ४५ ॥
यदा धृतिं कुरुते योत्स्यमानः स दीर्घबाहुर्दृढधन्वा महात्मा ।
सिंहस्येव गन्धमाघ्राय गावः संवेष्टन्ते शत्रवोऽस्माद्यथाग्नेः ॥ ४६ ॥
स दीर्घबाहुर्दृढधन्वा महात्मा भिन्द्याद्गिरीन् संहरेत सर्वलोकान् ।
अस्त्रे कृती निपुणः क्षिप्रहस्तो दिवि स्थितः सूर्य्य इवाभिभाति
॥ ४७ ॥ चित्रः सूक्ष्मः सुकृतो यादवस्य अस्त्रे योगो वृष्णि
सिंहस्य भूयान् । यथाविधं योगमाहुः प्रशस्तं सर्वैर्गुणैः सात्य
किस्तैरुपेतः ॥ ४८ ॥ हिरण्मयं श्वेतहयैश्चतुर्भिर्यदा युक्तं स्यन्दनं
माधवस्य । द्रष्टा युद्धे सात्यकेर्धार्त्तराष्ट्रस्तदा तप्स्यत्यकृतात्मा
स मन्दः ॥ ४९ ॥ यदा रथं हेममणिप्रकाशं श्वेताश्वयुक्तं वानर
केतुमुग्रम् । द्रष्टा समास्थितं केशवेन तदा तप्स्यत्यकृतात्मा
स मन्दः ॥ ५० ॥ यदा मौर्व्यास्तलनिष्पेषमुग्रं महाशब्दं वज्र
निष्पेषतुल्यम् । विधूयमानस्य महारणे मया स गाण्डीवस्य
श्रोष्यति मन्दबुद्धिः ॥ ५१ ॥ तदा मूढो धृतराष्ट्रस्य पुत्रस्तप्स्य
त्यल्पो दुर्मतिर्दुःसहायः । दृष्ट्वा सैन्यं बाणवर्षान्धकारे प्रभज्यन्तं
गोकुलवद्रणाग्रे ॥ ५२ ॥ बलाहकादुच्चरतः सुभीमान् विद्यु

स्फुलिङ्गानिव घोररूपान्। सहस्रघ्नान् द्विषतां सङ्गरेषु अस्थि-
च्छिदो मर्म्मभिदः सुपुङ्खान् ॥ ५३ ॥ यदा द्रष्टा ज्यामुखाद्बाण-
सङ्घान् गाण्डीवमुक्तानापततः शिताग्रान्। हयान् गजान् वर्म्मिण-
श्चाददानांस्तदा युद्धं धार्त्तराष्ट्रोऽन्वतप्स्यत् ॥ ५४ ॥ यदा मन्द-
परवाणान् विमुक्तान्ममेषुभिर्ह्रियमाणान् प्रतीपान्। तिर्य्यग्विध्य
छिद्यमानान् क्षुरप्रैस्तदा युद्धं धार्त्तराष्ट्रोऽन्वतप्स्यत् ॥ ५५ ॥
यदा विपाठा मद्भुजविप्रमुक्ता द्विजाः फलानीव महीरुहाग्रात्।
प्रचेतार उत्तमाङ्गानि यूनां तदा युद्धं धार्त्तराष्ट्रोऽन्वतप्स्यत् ॥५६॥
यदा द्रष्टा पततः स्यन्दनेभ्यो महागजेभ्योऽश्वगतान् सुयोधान्।
शरैर्हतान् पतितांश्चैव रङ्गे तदा युद्धं धार्त्तराष्ट्रोऽन्वतप्स्यत् ॥५७॥
असम्प्राप्तानस्त्रपथं परस्य यदा द्रष्टा नश्यतो धार्त्तराष्ट्रान्। अकु-
र्व्वतः कर्म्म युद्धे समन्तात्तदा युद्धं धार्त्तराष्ट्रोऽन्वतप्स्यत् ॥ ५८ ॥
पदातिसङ्घान् रथसङ्घान् समन्ताद्व्यात्ताननः काल इवाततेषुः। प्रणो-
त्स्यामि ज्वलितैर्बाणवर्षैः शत्रूंस्तदा तप्स्यति मन्दबुद्धिः ॥ ५९ ॥
सर्व्वा दिशः सम्पतता रथेन रजोध्वस्तं गाण्डीवेन प्रकृत्तम्। यदा
द्रष्टा स्वबलं सम्प्रमूढं तदा पश्चात्तप्स्यति मन्दबुद्धिः ॥ ६० ॥
कान्दिग्भूतं छिन्नगात्रं विसंज्ञं दुर्य्योधनो द्रक्ष्यति सर्व्वसैन्यम्।
हताश्ववीराग्र्यनरेन्द्रनागं पिपासितं श्रान्तपत्रं भयार्त्तम् ॥ ६१ ॥
आर्त्तस्वरं हन्यमानं हतञ्च विकीर्णकेशास्थिकपालसङ्घम्। प्रजा-
पतेः कर्म्म यथार्द्धनिष्ठितं तदा दृष्ट्वा तप्स्यति मन्दबुद्धिः ॥ ६२ ॥
यदा रथे गाण्डिवं वासुदेवं दिव्यं शङ्खं पाञ्चजन्यं हयांश्च।
तूणावक्षय्यौ देवदत्तञ्च माञ्च दृष्ट्वा युद्धं धार्त्तराष्ट्रोऽन्वतप्स्यत्
॥ ६३ ॥ उद्वर्त्तयन् दस्युसङ्घान् समेतान् प्रवर्त्तयन् युगमन्यद्-
युगान्ते। यदा धक्ष्याम्यग्निवत् कौरवेयांस्तदा तप्ता धार्त्तराष्ट्रः
सपुत्रः ॥ ६४ ॥ सभ्राता वै सहसैन्यः सभृत्यो भ्रष्टैश्वर्य्यः क्रोध-
वशोऽल्पचेताः। दर्पस्यान्ते विहतो वेपमानः पश्चान्मन्दस्तप्स्यति

धार्त्तराष्ट्रः ॥ ६५ ॥ पूर्वाह्णे मां कृतजप्यं कदाचिद्विप्रः प्रोवाचोद-
कान्ते मनोज्ञम्। कर्त्तव्यन्ते दुष्करं कर्म पार्थ योद्धव्यन्ते शत्रुभिः
सव्यसाचिन् ॥ ६७ ॥ इन्द्रो वा ते हरिमान् वज्रहस्तः पुरस्ता-
द्यातु समरेऽरीन् विनिघ्नन्। सुग्रीवयुक्तेन रथेन वा ते पश्चात्
कृष्णो रक्षतु वासुदेवः ॥ ६८ ॥ वव्रे चाहं वज्रहस्तान्महेन्द्राद-
स्मिन् युद्धे वासुदेवं सहायम्। स मे लब्धो दस्युवधाय कृष्णो
मन्ये चैतद्विहितं दैवतैर्मे ॥ ६९ ॥ स बाहुभ्यां सागरमुत्तितीर्षे-
न्महोदधिं सलिलस्याप्रमेयम्। तेजस्विनं कृष्णमत्यन्तशूरं युद्धेन
यो वासुदेवं जिगीषेत् ॥ ७० ॥ गिरिं य इच्छेत्तु तलेन भेत्तुं
शिलोच्चयं श्वेतमतिप्रमाणम्। तस्यैव पाणिः सनखो विशीर्य्येन्न
चापि किञ्चित् स गिरेस्तु कुर्य्यात् ॥ ७१ ॥ अग्निं समिद्धं शम-
येद्भुजाभ्यां चन्द्रञ्च सूर्य्यञ्च निवारयेच्च। हरेद्देवानाममृतं प्रसह्य
युद्धेन यो वासुदेवं जिगीषेत् ॥ ७२ ॥ यो रुक्मिणीमेकरथेन
भोजानुत्साद्य राज्ञः समरे प्रसह्य। उवाह भार्य्यां यशसा ज्वलन्तीं
यस्यां जज्ञे रौक्मिणेयो महात्मा ॥ ७३ ॥ अयं गान्धारांस्तरसा
सम्प्रमथ्य जित्वा पुत्रान्नग्नजितः समग्रान्। बद्धं मुमोच विन-
दन्तं प्रसह्य सुदर्शनं वै देवतानां ललामम् ॥ ७४ ॥ अयं कपा-
टेन जघान पाण्ड्यं तथा कलिङ्गान् दन्तकूरे ममर्द्द। अनेन दग्धा
वर्षपूगाननाथा वाराणसी नगरी सम्बभूव ॥ ७५ ॥ अयं स्म
युद्धे मन्यतेऽन्यैरजेयं तमेकलव्यं नाम निषादराजम्। वेगेनैव
शैलमभिहत्य जम्भः शेते स कृष्णेन हतः परासुः ॥ ७६ ॥ तथो-
ग्रसेनस्य सुतं सुदुष्टं वृष्ण्यन्धकानां मध्यगतं सभास्थम्। अपा-
तयद्बलदेवद्वितीयो हत्वा ददौ चोग्रसेनाय राज्यम् ॥ ७७ ॥
अयं सौभं योधयामास खस्थं विभीषणं मायया शाल्वराजम्।
सौभद्वारे प्रत्यगृह्णाच्छतघ्नीं दोर्भ्यां क एनं विषहेत मर्त्त्यः ॥ ७८ ॥
प्राग्ज्योतिषं नाम बभूव दुर्गं पुरं घोरमसुराणामसह्यम्। मह-

वलो नरकस्तव भौमो जहाराऽदित्या मणिकुण्डले शुभे ॥ ७९ ॥ न तं देवाः सह शक्रेण शेकुः समागता युधि मृत्योरभीताः । दृष्ट्वा च तं विक्रमं केशवस्य बलं तथैवास्त्रमवारणीयम् ॥ ८० ॥ जानन्तोऽस्य प्रकृतिं केशवस्य न्ययोजयन् दस्युवधाय कृष्णम् । स तत् कर्म्म प्रतिशुश्राव दुष्करमैश्वर्य्यवान् सिद्धिषु वासुदेव ॥ ८१ ॥ निर्मोचने षट् सहस्राणि हत्वा सञ्छिद्य पाशान् सहसा क्षुरान्तान् । मुरं हत्वा विनिहत्यौघरक्षो निर्मोचनं चापि जगाम वीरः ॥ ८२ ॥ तत्रैव तेनास्य बभूव युद्धं महाबलेनातिबलस्य विष्णोः । शेते स कृष्णेन हतः परासुर्वातेनेव मथितः कर्णिकारः ॥ ८३ ॥ आहृत्य कृष्णो मणिकुण्डले ते हत्वा च भौमं नरकं मुरञ्च । श्रिया वृतो यशसा चैव विद्वान् प्रत्याजगामाप्रतिमप्रभावः ॥ ८४ ॥ अस्मै वरानददंस्तत्र देवा दृष्ट्वा भीमं कर्म्म कृतं रणे तत् । श्रमश्च ते युध्यमानस्य न स्यादाकाशे चाप्सु च ते क्रमः स्यात् ॥ ८५ ॥ शस्त्राणि गात्रे न च ते क्रमेरन्नित्येव कृष्णश्च ततः कृतार्थः । एवं रूपे वासुदेवेऽप्रमेये महाबले गुणसम्पत् सदैव ॥ ८६ ॥ तमसह्यं विष्णुमनन्तवीर्य्यमाशंसते धार्त्तराष्ट्रो विजेतुम् । सदा ह्येनं तर्कयते दुरात्मा तच्चाप्ययं सहतेऽस्मान् समीक्ष्य ॥ ८७ ॥ पर्य्यागतं मम कृष्णस्य चैव यो मन्यते कलहं संप्रसह्य । शक्यं न हर्त्तुं पाण्डवानां ममत्वं तद्वेदिता संयुगं तत्र गत्वा ॥ ८८ ॥ नमस्कृत्वा शान्तनवाय राज्ञे द्रोणायाथो सहपुत्राय चैव । शारद्वतायाप्रतिद्वन्द्विने च योत्स्याम्यहं राज्यमभीप्समानः ॥ ८९ ॥ धर्म्मेणाप्तं निधनं तस्य मन्ये यो योत्स्यते पाण्डवैः पापबुद्धिः । मिथ्याग्लहे निर्ज्जिता वै नृशंसैः सम्वत्सरान् वै द्वादश राजपुत्राः ॥ ९० ॥ वासः कृच्छ्रो विहितश्चाप्यरण्ये दीर्घं कालं चैकमज्ञातवर्षम् । तेषां कस्माज्जीवतां पाण्डवानां नन्दिष्यन्ते धार्त्तराष्ट्राः पदस्थाः ॥ ९१ ॥ ते चेदस्मान्

युध्यमानान् जयेयुर्द्देवैर्महेन्द्रप्रमुखैः सहायैः । धर्मादधर्मश्चरितो
गरीयांस्ततो ध्रुवं नास्ति कृतस्य साधु ॥ ९२ ॥ न चेदिमं पुरुषं
कर्मबद्धं न चेदस्मान्मन्यतेऽसौ विशिष्टान् । आशंसेऽहं वासुदेव-
द्वितीयो दुर्य्योधनं सानुबन्धं निहन्तुम् ॥ ९३ ॥ न चेदिदं कर्म
नरेन्द्र वन्ध्यं न चेत भवितृ तत् कृतं निष्फलं वा । इदञ्च तत्राभि-
समीक्ष्य नूनं पराजयो धार्त्तराष्ट्रस्य साधुः ॥ ९४ ॥ प्रत्यक्षं वः
कुरवो यत् ब्रवीमि युध्यमाना धार्त्तराष्ट्रा न सन्ति । अन्यत्र युद्धात्
कुरवो यदि स्युर्न युद्धे वै शेष इहास्ति कश्चित् ॥ ९५ ॥ हत्वा
त्वहं धार्त्तराष्ट्रान् सकर्णान् राज्यं कुरूणामवजेता समग्रम् । यद्वः
कार्य्यं तत् कुरुध्वं यथास्वमिष्टान्दारानात्मभोगान् भजध्वम् ॥ ९६ ॥
अप्येवं नो ब्राह्मणाः सन्ति वृद्धा बहुश्रुताः शीलवन्तः कुलीनाः ।
सांवत्सरा ज्योतिषि चाभियुक्ता नक्षत्रयोगेषु च निश्चयज्ञाः ॥ ९७ ॥
उच्चावचं दैवयुक्तं रहस्यं दिव्याः प्रश्ना मृगचक्रा मुहूर्त्ताः । क्षयं
महान्तं कुरुसृञ्जयानां निवेदयन्ते पाण्डवानां जयञ्च ॥ ९८ ॥
यथा हि नो मन्यतेऽजातशत्रुः संसिद्धार्थो द्विषतां निग्रहाय ।
जनार्द्दनश्चाप्यपरोक्षविद्यो न संशयं पश्यति वृष्णिसिंहः ॥ ९९ ॥
अहं तथैवं खलु भाविरूपं पश्यामि बुद्ध्या स्वयमप्रमत्तः । दृष्टिश्च
मे न व्यथते पुराणी संयुध्यमाना धार्त्तराष्ट्रा न सन्ति ॥ १०० ॥
अनालब्धं जृम्भति गाण्डिवं धनुरनाहता कम्पति मे धनुर्ज्या ।
बाणाश्च मे तूणमुखाद्विसृत्य मुहुर्मुहुर्गन्तुमुशन्ति चैव ॥ १०१ ॥
खड्गः कोशान्निःसरति प्रसन्नो हित्वेव जीर्णामुरगस्त्वचं स्वाम् ।
ध्वजे वाचो रौद्ररूपा भवन्ति कदा रथो योक्ष्यते ते किरीटिन्
॥ १०२ ॥ गोमायुसंघाश्च नदन्ति रात्रौ रक्षांस्यथो निष्पतन्त्य-
न्तरीक्षात् । मृगाः शृगालाः शितिकण्ठाश्च काका गृध्रा बकाश्चैव
तरक्षवश्च ॥ १०३ ॥ सुवर्णपत्राश्च पतन्ति पश्चात् दृष्ट्वा रथं श्वेत-
हयप्रयुक्तम् । अहं ह्येकः पार्थिवान् सर्वयोधान् शरान् वर्षन्

मृत्युलोकं नयेयम् ॥ १०४ ॥ समाददान पृथगस्त्रमार्गान् यथा-ग्निरिद्धो गहनं निदाघे। स्थूणाकर्णं पाशुपतं महास्त्रं ब्राह्मं चास्त्रं यच्च शक्रोऽप्युदामे ॥ १०५ ॥ वधे धृतो वेगवत प्रमुञ्च-न्नाहं प्रजा किञ्चिदिहावशिष्ये। शान्तिं लप्स्ये परमो ह्येष भावः स्थिरो मम ब्रूहि गावल्गणे तान ॥ १०६ ॥ ये वै न जय्या समरे सूत लब्ध्वा देवानपीन्द्रप्रमुखान् समेतान् । तैर्मन्यते कलहं सम्प्रु-ह्य स धार्त्तराष्ट्र पश्यत मोहमस्य ॥ १०७ ॥ वृद्धो भीष्म शान्तनव कृपश्च द्रोण सपुत्रो विदुरश्च धीमान्। एते सर्वे यदद-न्वितदस्तु आयुष्मन्त कुरव सन्तु सर्वे ॥ १०८ ॥

इति उद्योगपर्व्वणि यानसन्धिपर्व्वणि सञ्जयवाक्ये सप्तचत्वारिंशोऽध्याय ॥ ४७ ॥

---

वैशम्पायन उवाच। समवेतेषु सर्व्वेषु तेषु राजसु भारत। दुर्य्योधनमिदं वाक्य भीष्म शान्तनवोऽब्रवीत ॥ १ ॥ बृहस्पति-ना च शक्रश्च पर्य्युपस्थितौ। मरुतश्च सहेन्द्रेण वसवश्च ग्निना सह ॥ २ ॥ आदित्याश्चैव साध्याश्च ये च सप्तर्षयो दिवि। विश्वावसुश्च गन्धर्वं शुभाश्चाप्सरसाङ्गणा ॥ ३ ॥ नमस्कृत्योप-जग्मुस्ते लोकवृद्ध पितामहम्। परिवार्य्य च विश्वेश पर्य्यासत दिवौकस ॥ ४ ॥ तेषा मनश्च तेजश्चाप्याददानाविवौजसा। पूर्व्व-देवौ व्यतिक्रान्तौ नरनारायणावृषी ॥ ५ ॥ बृहस्पतिस्तु पप्रच्छ ब्रह्माण काविमाविति। भवन्त नोपतिष्ठेते तौ न शंस पितामह ॥६॥

ब्रह्मोवाच। यावेतौ पृथिवी द्याञ्च भासयन्तौ तपस्विनौ। ज्वलन्तौ रोचमानौ च व्याप्यातीतौ महाबलौ ॥ ७ ॥ नरनारा-यणावेतौ लोकाल्लोक समास्थितौ। ऊर्ज्जितौ स्वेन तपसा महा-सत्त्वपराक्रमौ ॥ ८ ॥ एतौ हि कर्म्मणा लोकं नन्दयामासतुर्ध्रुव ।

द्विधाभूतौ महाप्राज्ञौ विद्धि ब्रह्मन् परन्तपौ। असुराणां विनाशाय देवगन्धर्वपूजितौ ॥ ९ ॥

वैशम्पायन उवाच। जगाम शक्रस्तच्छ्रुत्वा यत्र तौ तेपतुस्तपः। सार्द्धं देवगणैः सर्वैर्बृहस्पतिपुरोगमैः ॥ १० ॥ तदा देवासुरे युद्धे भये जाते दिवौकसाम्। अयाचत महात्मानौ नरनारायणौ वरम् ॥ ११ ॥ तावब्रूतां वृणीष्वेति तदा भरतसत्तम। अथैतावब्रवीच्छक्रः साह्यं नः क्रियतामिति ॥ १२ ॥ ततस्तौ शक्रमब्रूतां करिष्यावो यदिच्छसि। ताभ्याञ्च सहितः शक्रो विजिग्ये दैत्यदानवान् ॥ १३ ॥ नर इन्द्रस्य संग्रामे हत्वा शत्रून् परन्तप। पौलोमान् कालकञ्जांश्च सहस्राणि शतानि च ॥ १४ ॥ एष भ्रान्ते रथे तिष्ठन् भल्लेनापहरच्छिरः। जम्भस्य ग्रसमानस्य तदा ह्यर्जुन आहवे ॥१५॥ एष पारे समुद्रस्य हिरण्यपुरमारुजत्। जित्वा षष्टिं सहस्राणि निवातकवचान् रणे ॥ १६ ॥ एष देवान् सहेन्द्रेण जित्वा परपुरञ्जय। अतर्पयन्महाबाहुरर्जुनो जातवेदसम् ॥ १७ ॥ नारायणस्तथैवात्र भूयसोऽन्यान् जघान ह। एवमेतौ महावीर्य्यौ तौ पश्यत समागतौ ॥ १८ ॥ वासुदेवार्जुनौ वीरौ समवेतौ महारथौ। नरनारायणौ देवौ पूर्वदेवाविति श्रुतिः ॥ १९ ॥ अजेयौ मानुषे लोके सेन्द्रैरपि सुरासुरैः। एष नारायणः कृष्णः फाल्गुनश्च नरः स्मृतः ॥ २० ॥ नारायणो नरश्चैव सत्त्वमेकं द्विधाकृतम्। एतौ हि कर्मणा लोकानश्नुवातेऽक्षयान् ध्रुवान् ॥ २१ ॥ तत्र तत्रैव जायेते युद्धकाले पुनः पुनः। तस्मात् कर्म्मैव कर्त्तव्यमिति होवाच नारदः ॥ २२ ॥ एतद्धि सर्वमाचष्टे वृष्णिचक्रस्य वेदवित्। शङ्खचक्रगदाहस्तं यदा द्रक्ष्यसि केशवम् ॥ २३ ॥ पर्य्याददानं चास्त्राणि भीमधन्वानमर्जुनम्। सनातनौ महात्मानौ कृष्णावेकरथे स्थितौ ॥ २४ ॥ दुर्य्योधन तदा तात स्मर्त्तासि वचनं मम। नो चेदय

मभावः स्यात् कुरूणां प्रत्युपस्थितः ॥ २५ ॥ अर्थोऽयं तात सर्व्वोऽस्य तव बुद्धिरुपप्लुता। न चेत् करिष्यसे वाक्यं श्रोतासि सुबहून् हतान् ॥ २६ ॥ तवैव हि मतं सर्व्वे कुरवः पर्य्युपासते। वयाणामेव च मतं तत्त्वमेकोऽनुमन्यसे ॥ २७ ॥ रामेण चैव शप्तस्य कर्णस्य भरतर्षभ। दुर्ज्जातेः सूतपुत्रस्य शकुनेः सौबलस्य च। तथा क्षुद्रस्य पापस्य भ्रातुर्दुःशासनस्य च ॥ २८ ॥

कर्ण उवाच। नैवमायुष्मता वाच्यं यन्मामात्थ पितामह। क्षत्रधर्म्मे स्थितो ह्यस्मि स्वधर्म्मादनपेयिवान् ॥ २९ ॥ किञ्चान्यन्मयि दुर्व्वृत्तं येन मां परिगर्हसे। न हि मे वृजिनं किञ्चित् धार्त्तराष्ट्रा विदुः क्वचित् ॥ ३० ॥ नाचरं वृजिनं किञ्चित् धार्त्तराष्ट्रस्य नित्यशः। अहं हि पाण्डवान् सर्व्वान् हनिष्यामि रणे स्थितान् ॥ ३१ ॥ प्राग्विरुद्धैः शमं सद्भिः कथं वा क्रियते पुनः। राज्ञो हि धृतराष्ट्रस्य सर्व्वं कार्य्यं प्रियं मया। तथा दुर्य्योधनस्यापि स हि राज्ये समाहितः ॥ ३२ ॥

वैशम्पायन उवाच। कर्णस्य तु वचः श्रुत्वा भीष्मः शान्तनवः पुनः। धृतराष्ट्रं महाराज सम्भाष्येदं वचोऽब्रवीत् ॥ ३३ ॥ यदयं कत्थते नित्यं हन्ताहं पाण्डवानिति। नायं कलापि सम्पूर्णा पाण्डवानां महात्मनाम् ॥ ३४ ॥ अनर्थो योऽयमागन्ता पुत्राणां ते दुरात्मनाम्। तदस्य कर्म्म जानीहि सूतपुत्रस्य दुर्म्मतेः ॥ ३५ ॥ एनमाश्रित्य पुत्रस्ते मन्दबुद्धिः सुयोधनः। अवामन्यत तान् वीरान् देवपुत्रानरिन्दमान् ॥ ३६ ॥ किञ्चाप्येतेन तत् कर्म्म कृतपूर्व्वं सुदुष्करम्। तैर्यथा पाण्डवैः सर्व्वैरेकैकेन कृतं पुरा ॥३७॥ दृष्ट्वा विराटनगरे भ्रातरं निहतं प्रियम्। धनञ्जयेन विक्रम्य किमनेन तदा कृतम् ॥३८॥ सहितान् हि कुरून् सर्व्वानभियातो धनञ्जयः। प्रमथ्य चाच्छिनद्वासः किमयं प्रोषितस्तदा ॥ ३९ ॥ गन्धर्व्वैर्घोषयात्रायां ह्रियते यत् सुतस्तव। क्व तदा सूतपुत्रोऽभूत् य इदानीं

तृणायते ॥ ४० ॥ ननु तवापि भीमेन पार्थेन च महात्मना। यमाभ्यामेव सङ्गम्य गन्धर्वास्ते पराजिता ॥ ४१ ॥ एतान्यस्य मयोक्तानि बहूनि भरतर्षभ। विकत्थनस्य भद्रन्ते सदा धर्मविलोपिन ॥ ४२ ॥ भीष्मस्य तु वच श्रुत्वा भारद्वाजो महामना। धृतराष्ट्रमुवाचेदं राजमध्येऽभिपूजयन् ॥ ४३ ॥ यदाह भरतश्रेष्ठो भीष्मस्तत् क्रियतां नृप। न काममर्थलिप्सूना वचनं कर्तुमर्हसि ॥ ४४ ॥ पुरा युद्धात् साधु मन्ये पाण्डवैः सह सङ्गतम्। यद्वाक्य मर्जुनेनोक्त सञ्जयेन निवेदितम् ॥ ४५ ॥ सर्वं तदभिजानामि करिष्यति च पाण्डव। न ह्यस्य त्रिषु लोकेषु सदृशोऽस्ति धनुर्धर ॥ ४६ ॥ अनादृत्य तु तद्वाक्यमर्थवद्द्रोणभीष्मयो। ततः स सञ्जय राजा पर्यपृच्छत पाण्डवान् ॥ ४७ ॥ तदैव कुरवः सर्वे निराशा जीवितेऽभवन्। भीष्मद्रोणौ यदा राजा न सम्यगनुभाषते ॥ ४८ ॥

इति उद्योगपर्वणि यानसन्धिपर्वणि भीष्मवाक्ये अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

---

कुन्तीपुत्रं युधिष्ठिरम् ॥ ५ ॥ नभ सूर्य्यमिवोद्यन्तं कौन्तेयं दीप्ततेजसम्। पाञ्चालाः प्रतिनन्दन्ति तेजोराशिमिवोदितम् ॥ ६ ॥ आगोपाला विपालाश्च नन्दमाना युधिष्ठिरम्। पाञ्चालाः केकया मत्स्याः प्रतिनन्दन्ति पाण्डवम् ॥ ७ ॥ ब्राह्मण्यो राजपुत्रश्च विशो दुहितरश्च याः। क्रीड़न्त्योऽभिसमायान्ति पार्थं सन्नद्धमीक्षितुम् ॥८॥

धृतराष्ट्र उवाच। सञ्जयाचक्ष्व येनास्मान् पाण्डवा अभ्ययुञ्जत। धृष्टद्युम्नस्य सैन्येन सोमकानां बलेन च ॥ ९ ॥

वैशम्पायन उवाच। गावल्गणिस्तु तत् पृष्टः सभायां कुरुसंसदि। निश्वस्य सुभृशं दीर्घं मुहुः सञ्चिन्तयन्निव ॥ १० ॥ तत्रानिमित्ततो दैवात् सूतं कश्मलमाविशत। तदाचचक्षे विदुरः सभायां कुरुसंसदि ॥ ११ ॥ सञ्जयोऽयं महाराज मूर्च्छितः पतितो भुवि। वाचं न सृजते काञ्चिद्धीनप्रज्ञोऽल्पचेतनः ॥ १२ ॥

धृतराष्ट्र उवाच। अपश्यत सञ्जयो नूनं कुन्तीपुत्रान्महारथान्। तैरस्य पुरुषव्याघ्रैर्भृशमुद्वेजितं मन ॥ १३ ॥

वैशम्पायन उवाच। सञ्जयश्चेतना लब्ध्वा प्रत्याश्वस्येदमब्रवीत। धृतराष्ट्रं महाराजं सभायां कुरुसंसदि ॥ १४ ॥

सञ्जय उवाच। दृष्टवानस्मि राजेन्द्र कुन्तीपुत्रान्महारथान्। मत्स्यराजगृहावासनिरोधेनावकर्षितान् ॥ १५ ॥ शृणु यैर्हि महाराज पाण्डवा अभ्ययुञ्जत। धृष्टद्युम्नेन वीरेण युद्धे वस्तेऽभ्ययुञ्जत ॥ १६ ॥ यो नैव रोषान्न भयान्न लोभान्नार्थकारणात। न हेतुवादात धर्मात्मा सत्यं जह्यात् कदाचन ॥ १७ ॥ यः प्रमाणं महाराज धर्मे धर्मभृताम्वर। अजातशत्रुणा तेन पाण्डवा अभ्ययुञ्जत ॥ १८ ॥ यस्य बाहुबले तुल्यः पृथिव्यां नास्ति कश्चन। यो वै सर्वान् महीपालान् वशे चक्रे धनुर्धरः ॥ १९ ॥ य काशीवङ्गमगधान् कलिङ्गांश्च युधाजयत्। तेन वो भीमसेनेन पाण्डवा अभ्ययुञ्जन ॥ २० ॥ यस्य वीर्य्येण सहसा चत्वारो भुवि

मानवाः । निःसृता जातुगेहाद्वै हिडिम्बात् पुरुषादकात् ॥ २१ ॥
यश्चैषामभवद्द्वीपः कुन्तीपुत्रो वृकोदरः । याज्ञसेनीमथो यत्र
सिन्धुराजोऽपकृष्टवान् ॥ २२ ॥ तत्रैषामभवत् द्वीपः कुन्तीपुत्रो
वृकोदरः । यश्च तान् पाण्डवान् सर्वान् संहतान् वारणावते
॥ २३ ॥ दह्यतो मोचयामास तेन वस्तेऽभ्ययुज्यन्त । कृष्णाया-
श्चरता प्रीतिं येन क्रोधवशा हताः ॥ २४ ॥ प्रविश्य विषमं घोरं
पर्वतं गन्धमादनम् । यस्य नागायुतं वीर्यं भुजयोः सारमर्पितम्
॥ २५ ॥ तेन वो भीमसेनेन पाण्डवा अभ्ययुज्यन्त । कृष्णद्वितीयो
विक्रम्य तुष्ट्यर्थं जातवेदसः ॥ २६ ॥ अजयत् यः पुरा वीरो
युध्यमानं पुरन्दरम् । यः स साक्षात् महादेवं गिरिशं शूल-
पाणिनम् ॥ २७ ॥ तोषयामास युद्धेन देवदेवमुमापतिम् । यश्च
सर्वान् वशे चक्रे लोकपालान् धनुर्द्धरः ॥ २८ ॥ तेन वो विजयि-
नाजौ पाण्डवा अभ्ययुज्यन्त । यः प्रतीचीं दिशं चक्रे वशे म्लेच्छ-
गणायुताम् ॥ २९ ॥ स तत्र नकुलो योद्धा चित्रयोधी व्यवस्थितः ।
तेन वो दर्शनीयेन वीरेणातिधनुर्भृता ॥ ३० ॥ माद्रीपुत्रेण
कौरव्य पाण्डवा अभ्ययुज्यन्त । यः काशीवङ्गमगधान् कलिङ्गांश्च
युधाजयत् ॥ ३१ ॥ तेन वः सहदेवेन पाण्डवा अभ्ययुज्यन्त ।
यस्य वीर्येण सदृशाश्चत्वारो भुवि मानवाः ॥ ३२ ॥ अश्वत्थामा
धृष्टकेतूरुक्मी प्रद्युम्न एव च । तेन वः सहदेवेन युद्धं राजन्महा-
त्यये ॥ ३३ ॥ यवीयसा नृवीरेण माद्रीनन्दिकरेण च । तपश्चचार
या घोरं काशिकन्या पुरा सती ॥ ३४ ॥ भीष्मस्य वधमिच्छन्ती
प्रेत्यापि भरतर्षभ । पाञ्चालस्य सुता जज्ञे दैवाच्च स पुनः पुमान्
॥ ३५ ॥ स्त्रीपुंसौ पुरुषव्याघ्र यः स वेद गुणागुणान् । य
कालिङ्गान् समापेदे पाञ्चाल्यो युद्धदुर्मदः ॥ ३६ ॥ शिखण्डिना
वः कुरवः कृतास्त्रेणाभ्ययुज्यन्त । यां यक्षः पुरुषं चक्रे भीष्मस्य
निधनेच्छया ॥ ३७ ॥ महेष्वासेन रौद्रेण पाण्डवा अभ्ययुज्यन्त ।

महेष्वासा राजपुत्रा भ्रातरः पञ्च केकयाः ॥ ३८ ॥ आमुक्तकवचाः शूरास्तैश्च वस्तेऽभ्ययुञ्जत । यो दीर्घबाहुः क्षिप्रास्त्रो धृतिमान् सत्यविक्रमः ॥ ३९ ॥ तेन वो वृष्णिवीरेण युयुधानेन सङ्गरः । य आसीच्छरणं काले पाण्डवानां महात्मनाम् ॥ ४० ॥ रणे तेन विराटेन भविता वः समागमः । यः स काशीपतीराजा वाराणस्यां महारथः ॥ ४१ ॥ स तेषामभवत् योद्धा तेन वस्ते-ऽभ्ययुञ्जत । शिशुभिर्दुर्जयैः सङ्ख्ये द्रौपदेयैर्महात्मभिः ॥ ४२ ॥ आशीविषसमस्पर्शैः पाण्डवा अभ्ययुञ्जत । य कृष्णसदृशो वीर्य्ये युधिष्ठिरसमो दमे ॥ ४३ ॥ तेनाभिमन्युना सङ्ख्ये पाण्डवा अभ्य-युञ्जत । यश्चैवाप्रतिमो वीर्य्ये धृष्टकेतुर्महायशाः ॥ ४४ ॥ दुःसहः समरे क्रुद्धः शैशुपालिर्महारथः । तेन वश्चेदिराजेन पाण्डवा अभ्ययुञ्जत ॥ ४५ ॥ अक्षौहिण्या परिवृतः पाण्डवान् योऽभि-संश्रितः । यः संश्रयः पाण्डवानां देवानामिव वासवः ॥ ४६ ॥ तेन वो वासुदेवेन पाण्डवा अभ्ययुञ्जत । तथा चेदिपतेर्भ्राता शरभो भरतर्षभ ॥४७॥ करकर्षेण सहितस्ताभ्यां वस्तेऽभ्ययुञ्जत । जारासन्धिः सहदेवो जयत्सेनश्च तावुभौ ॥ ४८ ॥ युद्धेऽप्रति-रथौ वीरौ पाण्डवार्थे व्यवस्थितौ । द्रुपदश्च महातेजा बलेन महता वृतः ॥ ४९ ॥ त्यक्तात्मा पाण्डवार्थाय योत्स्यमानो व्यव-स्थित । एते चान्ये च बहव प्राचीदीच्या महीक्षित । यतश्चो यानुपाश्रित्य धर्मराजो व्यवस्थित ॥ ५० ॥

इति उद्योगपर्वणि यानसन्धिपर्वणि सञ्जयवाक्ये एकोनपञ्चाशोऽध्याय ॥ ४९ ॥

---

धृतराष्ट्र उवाच । सर्व एते महोत्साहा ये त्वया परि-कीर्त्तिताः । एकतस्त्वेव ते सर्वे समेता भीम एकत ॥ १ ॥ भीम-

सेनाद्धि मे भूयो भयं सञ्जायते महत्। क्रुद्धादमर्षणात्तात व्याघ्रादिव महारुरो ॥ २ ॥ जागर्मि रात्रयः सर्वा दीर्घमुष्णञ्च नि श्वसन्। भीतो वृकोदरात्तात सिंहात् पशुरिवापरः ॥ ३ ॥ न हि तस्य महाबाहोः शक्रप्रतिमतेजसः। सैन्येऽस्मिन् प्रतिपश्यामि य एनं विषहेत युधि ॥ ४ ॥ अमर्षणश्च कौन्तेयो दृढवैरश्च पाण्डवः। अनर्महासी सोन्मादस्तिर्य्यक्प्रेक्षी महास्वनः ॥ ५ ॥ महावेगो महोत्साहो महाबाहुर्महाबलः। मन्दानां मम पुत्राणां युद्धेनान्तं करिष्यति ॥ ६ ॥ ऊरुग्राहगृहीतानां गदां बिभ्रद् वृकोदरः। कुरूणामृषभो युद्धे दण्डपाणिरिवान्तकः ॥ ७ ॥ अष्टाश्रिमायसीं घोरां गदां काञ्चनभूषणाम्। मनसाहं प्रपश्यामि ब्रह्मदण्डमिवोत्थितम् ॥ ८ ॥ यथा मृगाणां यूथेषु सिंहो जातबलश्चरेत्। मामकेषु तथा भीमो बलेषु विचरिष्यति ॥ ९ ॥ सर्वेषां मम पुत्राणां स एकः क्रूरविक्रमः। बह्वाशी विप्रतीपश्च बाल्येऽपि रभसः सदा ॥ १० ॥ उद्वेपते मे हृदयं ये मे दुर्य्योधनादयः। बाल्येऽपि तेन युध्यन्तो वारणेनेव मर्द्दिताः ॥ ११ ॥ तस्य वीर्य्येण सततं नित्यमेव सुता मम। स एव हेतुर्भेदस्य भीमो भीमपराक्रमः ॥ १२ ॥ ग्रसमानमनीकानि नरवारणवाजिनाम्। पश्यामीवाग्रतो भीमं क्रोधमूर्च्छितमाहवे ॥ १३ ॥ अस्त्रे द्रोणार्जुनसमं वायुवेगसमं जवे। महेश्वरसमं क्रोधे को हन्याद् भीममाहवे ॥ १४ ॥ सञ्जयाचक्ष्व मे शूरं भीमसेनममर्षणम्। अतिलाभन्तु मन्येऽहं यत्तेन रिपुघातिना ॥ १५ ॥ तदैव न हताः सर्वे पुत्रा मम मनस्विना। येन भीमबलाः यक्षा राक्षसाश्च पुरा हताः ॥ १६ ॥ कथं तस्य रणे वेगं मानुषः प्रसहिष्यति। न स जातु वशे तस्थौ मम बाल्येऽपि सञ्जय ॥ १७ ॥ किं पुनर्मम दुष्पुत्रैः क्लिष्टः सम्प्रति पाण्डवः। निष्ठुरो रोषणोऽत्यर्थं भज्येतापि न सन्नमेत् ॥ १८ ॥ तिर्य्यक्प्रेक्षी संहतभ्रूः कथं शाम्येद्वृकोदरः।

भूरस्तथाप्रतिबलो गौरस्ताल इवोन्नत ॥ १९ ॥ प्रमाणतो भीमसेन प्रादेशेनाधिकोऽर्जुनात्। जवेन वाजिनोऽत्येति बलेनात्येति कुञ्जरान् ॥ २० ॥ अव्यक्तजल्पी मध्वक्षो मध्यमः पाण्डवो बली। इति बाल्ये श्रुतः पूर्वं मया व्यासमुखात् पुरा ॥ २१ ॥ रूपतो वीर्य्यतश्चैव याथातथ्येन पाण्डवः। आयसेन स दण्डेन रथान्नागान्नरान् हयान् ॥ २२ ॥ हनिष्यति रणे क्रुद्धो रौद्रः क्रूरपराक्रमः। अमर्षी नित्यसंरब्धो भीम प्रहरतां वरः ॥ २३ ॥ मया तात प्रतीपानि कुर्वन् पूर्वं विमानितः। निष्क्रसौमायसीं स्थूलां सुपार्श्वां काञ्चनीं गदाम् ॥ २४ ॥ शतघ्नीं शतनिर्ह्रादां कथं शक्ष्यन्ति मे सुताः। अपारमप्लवागाधं समुद्रं शरवेगितम् ॥ २५ ॥ भीमसेनमयं दुर्गं तात मन्दास्तितीर्षवः। क्रोशतो मे न शृण्वन्ति बालाः पण्डितमानिनः ॥ २६ ॥ विषमं नावमन्यन्ते प्रपातं मधुदर्शिनः। संयुगं ये गमिष्यन्ति नररूपेण मृत्युना ॥ २७ ॥ नियतं चोदिता धात्रा सिंहेनेव हता मृगाः। शैक्यां तात चतुष्किष्कुं षड्ग्निममितौजसम् ॥ २८ ॥ प्रहिता दुःखसंस्पर्शां कथं शक्ष्यन्ति मे सुताः। गदां भ्रामयतस्तस्य भिन्दतो हस्तिमस्तकान् ॥ २९ ॥ सृक्कणी लेलिहानस्य बाष्पमुत्सृजतो मुहुः। उद्दिश्य नागान् पततः कुर्वतो भैरवान्नवान् ॥ ३० ॥ प्रतीपं पततो मत्तान् कुञ्जरान् प्रतिगर्ज्जतः। विगाह्य रथमार्गेषु वरानुद्दिश्य निघ्नतः ॥ ३१ ॥ अग्नेः प्रज्वलितस्येव अपि मुच्येत मे प्रजा। वीथीं कुर्वन् महाबाहुर्द्रावयन्मम वाहिनीम् ॥ ३२ ॥ नृत्यन्निव गदापाणिर्युगान्तं दर्शयिष्यति। प्रभिन्न इव मातङ्गः प्रभञ्जन् पुष्पितान् द्रुमान् ॥ ३३ ॥ प्रवेक्ष्यति रणे सेनां पुत्राणां मे वृकोदरः। कुर्वन् रथान् विपुरुषान् विध्वजान् भग्नचक्रान् विशीर्णध्वजान् ॥ ३४ ॥ आरुजन् पुरुषव्याघ्रो रथिनः सादिनस्तथा। गङ्गावेग इवानूपांस्तीरजान् विविधान् द्रुमान् ॥ ३५ ॥ प्रभङ्क्ष्यति रणे सेना पुत्राणां

मम सञ्जय। स्त्रियो नूनं गमिष्यन्ति भीमसेनभयार्दिता ॥ ३६ ॥ मम पुत्राश्च भृत्याश्च राजानश्चैव सञ्जय। येन राजा महावीर्य्यः प्रविश्यान्तःपुरं पुरा ॥ ३७ ॥ वासुदेवसहायेन जरासन्धो निपातितः। कृत्स्नेयं पृथिवी देवी जरासन्धेन धीमता ॥ ३८ ॥ मागधेन्द्रेण बलिना वशे कृत्वा प्रतापिता। भीष्मप्रभावात् कुरवो नयेनान्धकवृष्णयः ॥ ३९ ॥ यन्न तस्य वशे जग्मुः केवलं दैवमेव तत्। स गत्वा पाण्डुपुत्रेण तरसा बाहुशालिना ॥ ४० ॥ अनायुधेन वीरेण निहतः किं ततोऽधिकम्। दीर्घकालसमासक्तं विषमाशीविषो यथा ॥ ४१ ॥ स मोक्ष्यति रणे तेजः पुत्रेषु मम सञ्जय। महेन्द्र इव वज्रेण दानवान्देवसत्तम ॥ ४२ ॥ भीमसेनो गदापाणिः सूदयिष्यति मे सुतान्। अविषह्यमनावार्य्यं तीव्रवेगपराक्रमम् ॥ ४३ ॥ पश्यामीवातिताम्राक्षमापतन्तं वृकोदरम्। अगदस्याप्यधनुषो विरथस्य विवर्मणः ॥ ४४ ॥ बाहुभ्यां युध्यमानस्य कस्तिष्ठेदग्रतः पुमान्। भीष्मो द्रोणश्च विप्रोऽयं कृपः शारद्वतस्तथा ॥ ४५ ॥ जानन्त्येते यथैवाहं वीर्य्यज्ञस्तस्य धीमतः। आर्य्यव्रतन्तु जानन्तः सङ्गरान्तं विधित्सव ॥ ४६ ॥ सेनामुखेषु स्थास्यन्ति मामकानां नरर्षभाः। बलीयः सर्वतो दिष्टं पुरुषस्य विशेषतः ॥ ४७ ॥ पश्यन्नपि जयं तेषां न नियच्छामि यत्सुतान्। ते पुराणं महेष्वासा मार्गमैन्द्रं समाश्रिताः ॥ ४८ ॥ त्यक्ष्यन्ति तुमुले प्राणान् रक्षन्तः पार्थिवं यशः। यथैषां मामकास्तात तथैषां पाण्डवा अपि ॥ ४९ ॥ पौत्रा भीष्मस्य शिष्याश्च द्रोणस्य च कृपस्य च। यत्त्वस्मादाश्रयं किञ्चिद्दत्तमिष्टञ्च सञ्जय ॥ ५० ॥ तस्यापचितिमार्य्यत्वात् कर्त्तारः स्थविरास्त्रयः। आददानस्य शस्त्रं हि क्षत्रधर्मं परीप्सतः ॥ ५१ ॥ निधनं क्षत्रियस्याजौ वरमेवाहुरुत्तमम्। स वै शोचामि सर्वान् वै ये युयुत्सन्ति पाण्डवैः ॥ ५२ ॥ विक्रुष्टं विदुरेणादौ तदेतद्भयमागतम्। न तु मन्ये विघाताय

शानं दुःखस्य संजय ॥ ५३ ॥ भवत्यतिबलं ह्येतत् ज्ञानस्याप्युपघातकम्। ऋषयोऽपि ह्यनिर्मुक्ताः पश्यन्तो लोकसंग्रहान् ॥५४॥ सुखैर्भवन्ति सुखिनस्तथा दुःखेन दुःखिताः। किं पुनर्मोहमासक्तास्तत्र तत्र सहस्रधा ॥ ५५ ॥ पुत्रेषु राज्ये दारेषु पौत्रेष्वपि च बन्धुषु। संशयो तु महत्यस्मिन् किं नु मे क्षेममुत्तमम् ॥ ५६ ॥ विनाशं ह्येव पश्यामि कुरूणामनुचिन्तयन्। द्यूतप्रमुखमाभाति कुरूणां व्यसनं महत् ॥ ५७ ॥ मन्देनैश्वर्य्यकामेन लोभात् पापमिदं कृतम्। मन्ये पर्य्यायधर्म्मोऽयं कालस्यात्यन्तगामिनः ॥५८॥ चक्रे प्रधिरिवासक्तो नास्य शक्यं पलायितुम्। किं नु कुर्य्यां कथं कुर्य्यां क्व नु गच्छामि संजय ॥ ५९ ॥ एते नश्यन्ति कुरवो मन्दाः कालवशङ्गताः। अवशोऽहं तदा तात पुत्राणां निहते शते। श्रोष्यामि निनदं स्त्रीणां कथं मां मरणं स्पृशेत् ॥ ६० ॥ यथा निदाघे ज्वलनः समिद्धो दहेत् कक्षं वायुना चोद्यमानः। गदाहस्तः पाण्डवो वै तथैव हन्ता मदीयान् सहितोऽर्ज्जुनेन ॥ ६१ ॥

इति उद्योगपर्व्वणि यानसन्धिपर्व्वणि धृतराष्ट्रवाक्ये पञ्चाशोऽध्यायः ॥ ५० ॥

---

धृतराष्ट्र उवाच। यस्य वै नानृता वाचः कदाचिदनुशुश्रुम। त्रैलोक्यमपि तस्य स्याद्यस्य योद्धा धनञ्जय ॥ १ ॥ तस्यैव च न पश्यामि युधि गाण्डीवधन्वनः। अनिशं चिन्तयानोऽपि यः प्रतीयाद्रथेन ताम् ॥ २ ॥ अस्यतः कर्णिनालीकान् मार्गणान् हृदयच्छिदः। प्रत्येता न समः कश्चिद्युधि गाण्डीवधन्वनः ॥ ३ ॥ द्रोणकर्णौ प्रतीयातां यदि वीरौ नरर्षभौ। कृतास्त्रौ बलिनां श्रेष्ठौ समरेष्वपराजितौ ॥ ४ ॥ महान् स्यात् संशयो लोके न त्वस्ति विजयो मम। घृणी कर्णः प्रमादी च आचार्य्यः स्थविरो गुरुः ॥ ५ ॥ समर्थो बलवान् पार्थो दृढधन्वा जितक्लमः। भवेत्

सुतुमुलं युद्धं सर्वेषामप्यपराजय ॥ ६ ॥ सर्वेऽप्यस्त्रविद शूरा सर्वे प्राप्ता महद्यश । अपि सर्वामरैश्वर्यं त्यजेयुर्न पुनर्जयम् ॥ ७ ॥ ध्रुवं नूनं भवेच्छान्तिस्तयोर्वा फाल्गुनस्य वा । न च हन्तार्जुनस्यास्ति जेता चास्य न विद्यते ॥ ८ ॥ मन्युस्तस्य कथं शाम्येत मन्दान् प्रति य उत्थित । अन्येऽप्यस्त्राणि जानन्ति जीयन्ते च जयन्ति च ॥ ९ ॥ एकान्तविजयस्त्वेव श्रूयते फाल्गुनस्य च । त्रयस्त्रिंशत समा हूत खाण्डवेऽग्निमतर्पयत ॥ १० ॥ जिगाय च सुरान सर्वान्नास्य विद्म पराजयम । यस्य यन्ता हृषीकेश शीलवृत्तसमो युधि ॥ ११ ॥ ध्रुवं तस्य जयस्तात यथेन्द्रस्य जयस्तथा । कृष्णावेकरथे यत्तावधिज्यं गाण्डिव धनु ॥ १२ ॥ युगपत त्रीणि तेजांसि समेतान्यनुशुश्रुम ॥ नैवास्ति नो धनुस्तादृङ् न योद्धा न च सारथि ॥ १३ ॥ तच्च मन्दा न जानन्ति दुर्योधनवशानुगा । शेषयेदशनिर्दीप्तो निपतन्मूर्ध्नि सञ्जय ॥ १४ ॥ न तु शेषं शरास्तात कुर्युरस्ता किरीटिना । अपि चास्यन्निवाभाति निघ्नन्निव धनञ्जय ॥ १५ ॥ उद्धरन्निव कायेभ्य शिरांसि शरवृष्टिभि । अपि बाणमयं तेज प्रदीप्तमिव सर्वत । १६ ॥ गाण्डीवोत्थं दहेताजौ पुत्राणां मम वाहिनीम् । अपि सा रथघोषेण भयार्त्ता सव्यसाचिन ॥ १७ ॥ वित्रस्ता बहुधा सेना भारती प्रतिभाति मे । यथा कक्षं महानग्नि प्रदहेत् सर्वतश्चरन् । महार्चिरनिलोद्धूतस्तद्वद्धक्ष्यति मामकान् ॥ १८ ॥ यदोद्यमन्निशितान् बाणसङ्घांस्तानाततायी समरे किरीटी । सृष्टोऽन्तक सर्वहरो विधात्रा यथा भवेत्तद्वदवारणीय ॥ १९ ॥ यदा ह्यभीक्ष्णं सुबहून् प्रकारान् श्रोतास्मि तानावसथे कुरूणाम् । तेषां समन्तात् तथा रणाग्रे क्षय किलाय भरतानुपैति ॥ २० ॥

इति उद्योगपर्वणि यानसन्धिपर्वणि धृतराष्ट्रवाक्ये एकपञ्चाशोऽध्याय ॥ ५१ ॥

धृतराष्ट्र उवाच। यथैव पाण्डवाः सर्वे पराक्रान्ता जिगीषव। तथैवाभिसरास्तेषां त्यक्तात्मानो जये धृताः ॥ १ ॥ त्वमेव हि पराक्रान्तानाचक्षीथा परान्मम। पाञ्चालान् केकयान्मत्स्यान् मागधान् वत्सभूमिपान् ॥ २ ॥ यश्च सेन्द्रानिमाल्लोकानिच्छन् कुर्य्याद्वशे वशी। स श्रेष्ठो जगतः कृष्णः पाण्डवानां जये धृतः ॥ ४ ॥ समस्तामर्जुनाद्विद्यां सात्यकिः क्षिप्रमाप्तवान्। शैनेयः समरे स्थाता बीजवत् प्रवपन् शरान् ॥ ५ ॥ धृष्टद्युम्नश्च पाञ्चाल्यः क्रूरकर्म्मा महारथः। मामकेषु रणे कर्त्ता बलेषु परमास्त्रवित् ॥ ६ ॥ युधिष्ठिरस्य च क्रोधादर्जुनस्य च विक्रमात्। यमाभ्यां भीमसेनाच्च भयं मे तात जायते ॥ ७ ॥ अमानुषं मनुष्येन्द्रैर्जालं विततमन्तरा। न मे सैन्यास्तरिष्यन्ति ततः क्रोशामि सञ्जय ॥८॥ दर्शनीयो मनस्वी च लक्ष्मीवान् ब्रह्मवर्च्चसी। मेधावी सुकृतप्रज्ञो धर्म्मात्मा पाण्डुनन्दन ॥ ९ ॥ मित्रामात्यैः सुसम्पन्नः सम्पन्नो युद्धयोजकैः। भ्रातृभिः श्वशुरैर्वीरैरुपपन्नो महारथैः ॥१०॥ धृत्या च पुरुषव्याघ्रो नैभृत्येन च पाण्डवः। अनृशंसो वदान्यश्च ह्रीमान् सत्यपराक्रमः ॥ ११ ॥ बहुश्रुतः कृतात्मा च वृद्धसेवी जितेन्द्रियः। तं सर्वगुणसम्पन्नं समिद्धमिव पावकम् ॥ १२ ॥ तपन्तमिव को मन्दः पतिष्यति पतङ्गवत्। पाण्डवाग्निमनावार्य्यं मुमूर्षुर्नष्टचेतन ॥१३॥ तनुरुच्चः शिखी राजा मिथ्योपचरितो मया। मन्दानां मम पुत्राणां युद्धेनान्तं करिष्यति ॥ १४ ॥ तैरयुद्धं साधु मन्ये कुरवस्तन्निबोधत। युद्धे विनाशः कृत्स्नस्य कुलस्य भविता ध्रुवम् ॥१५॥ एषा मे परमा बुद्धिर्यया शाम्यति मे मन। यदि त्वयुद्धमिष्टं वो वयं शान्त्यै यतामहे ॥ १६ ॥ न तु नः क्लिश्यमानानामुपेक्षेत युधिष्ठिर। जुगुप्सति ह्यधर्म्मेण मामेवोद्दिश्य कारणम् ॥ १७ ॥

इति उद्योगपर्व्वणि यानसन्धिपर्व्वणि धृतराष्ट्रवाक्ये द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

सञ्जय उवाच । एवमेतन्महाराज यथा वदसि भारत ।
युद्धे विनाशः क्षत्रस्य गाण्डीवेन प्रदृश्यते ॥ १ ॥ इदन्तु नाभि-
जानामि तव धीरस्य नित्यशः । यत् पुत्रवशमागच्छेस्तत्त्वज्ञः
सव्यसाचिनः ॥ २ ॥ नैष कालो महाराज तव शश्वत्कृतागसः ।
त्वया ह्येवादितः पार्था निकृता भरतर्षभ ॥ ३ ॥ पिता श्रेष्ठः
सुहृत् यश्च सम्यक् प्रणिहितात्मवान् । आस्थेयं हि हितं तेन न
द्रोग्धा गुरुरुच्यते ॥ ४ ॥ इदं जितमिदं लब्धमिति श्रुत्वा परा-
जितान् । द्यूतकाले महाराज स्मयसे स्म कुमारवत् ॥ ५ ॥
परुषाण्युच्यमानांश्च पुरा पार्थानुपेक्षसे । कृत्स्नं राज्यं जय-
न्तीति प्रपातं नानुपश्यसि ॥ ६ ॥ पित्र्यं राज्यं महाराज कुर-
वस्ते सजाङ्गलाः । अथ वीरैर्जितामुर्वीमखिलां प्रत्यपद्यथाः ॥ ७ ॥
बाहुवीर्यार्जिता भूमिस्तव पार्थैर्निवेदिता । मयेदं कृतमित्येवं
मन्यसे राजसत्तम ॥ ८ ॥ ग्रस्तान् गन्धर्वराजेन मज्जतो ह्यप्ल्वे-
ऽम्भसि । आनिनाय पुनः पार्थः पुत्रांस्ते राजसत्तम ॥ ९ ॥
कुमारवच्च स्मयसे द्यूते विनिकृतेषु यत् । पाण्डवेषु वनं राजन्
प्रव्रजत्सु पुनः पुनः ॥ १० ॥ प्रवर्षतः शरव्रातानर्जुनस्य शितान्
बहून् । अप्यर्णवा विशुष्येयुः किं पुनर्मांसयोनयः ॥ ११ ॥ अस्यतां
फाल्गुनः श्रेष्ठो गाण्डीवं धनुषां वरम् । केशवः सर्वभूतानां
चक्राणाञ्च सुदर्शनम् ॥ १२ ॥ वानरो रोचमानश्च केतुः केतुमतां
वर । एवमेतानि स रथो वहन् श्वेतहयो रणे ॥ १३ ॥ क्षप-
यिष्यति नो राजन् कालचक्रमिवोद्यतम् । तस्याद्य वसुधा राज-
न्निखिला भरतर्षभ ॥ १४ ॥ यस्य भीमार्जुनौ योधौ स राजा
राजसत्तम । तथा भीमहतप्रायां मज्जन्तीं तव वाहिनीम् ॥ १५ ॥
दुर्योधनमुखा दृष्ट्वा क्षयं यास्यन्ति कौरवाः । न भीमार्जुनयो-
र्भीता लप्स्यन्ते विजयं विभो ॥ १६ ॥ तव पुत्रा महाराज
राजानश्चानुसारिणः । मत्स्यास्त्वामद्य नार्चन्ति पाञ्चालाश्च

केकयाः ॥ १७ ॥ बालुयाः शूरसेनाश्च सर्वे त्वामवजानते । पार्थं ह्येते गताः सर्वे वीर्य्यज्ञास्तस्य धीमतः ॥ १८ ॥ भक्त्या ह्यस्य विरुध्यन्ते तव पुत्रैः सदैव ते । अनर्हानेव तु वधे धर्मयुक्तान् विकर्मणा ॥ १९ ॥ योऽक्लेशयत् पाण्डुपुत्रान् यो विद्विष्टाधुनापि वै । सर्वोपायैर्नियन्तव्यः सानुगः पापपूरुषः ॥ २० ॥ तव पुत्रो महाराज नानुशोचितुमर्हसि । द्यूतकाले मया प्रोक्तं विदुरेण च धीमता ॥ २१ ॥ यदिदं ते विलपितं पाण्डवान् प्रति भारत । अनीशेनेव राजेन्द्र सर्वमेतन्निरर्थकम् ॥ २२ ॥

इति उद्योगपर्वणि यानसन्धिपर्वणि सञ्जयवाक्ये त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

———

न कृत्स्ना तात जनार्द्दन । एकराज्यं कुरूणां स चिकीर्षति
युधिष्ठिरे ॥ १० ॥ तत्र किं प्राप्तकालं नः प्रणिपातः पलायनम् ।
प्राणान् वा सम्परित्यज्य प्रतियुध्यामहे परान् ॥ ११ ॥ प्रतियुद्धे
तु नियतः स्यादस्माकं पराजयः । युधिष्ठिरस्य सर्वे वै पार्थिवा
वशवर्त्तिनः ॥ १२ ॥ विरक्तराष्ट्राश्च वयं मित्राणि कुपितानि नः ।
धिक्कृताः पार्थिवैः सर्वैः स्वजनेन च सर्वशः ॥ १३ ॥ प्रणिपाते
न दोषोऽस्ति सन्धिर्नः शाश्वतीः समाः । पितरं त्वेव शोचामि
प्रज्ञानेत्रं जनाधिपम् ॥ १४ ॥ मत्कृते दुःखमापन्नं क्लेशं प्राप्त-
मनन्तकम् । कृतं ह्येतत् पुत्रैस्ते परेषामवरोधनम् ॥ १५ ॥ मत्
प्रियार्थं पुरैवैतद्विदितं ते नरोत्तम । ते राज्ञो धृतराष्ट्रस्य
सामात्यस्य महारथाः ॥ १६ ॥ वैरं प्रतिकरिष्यन्ति कुलोच्छेदेन
पाण्डवाः । ततो द्रोणोऽब्रवीद्भीष्मः कृपो द्रौणिश्च भारत ॥ १७ ॥
मत्वा मां महतीं चिन्तामास्थितं व्यथितेन्द्रियम् । अभिद्रुग्धाः
परे चेन्नो न भेतव्यं परन्तप ॥ १८ ॥ न समर्थाः परे जेतुमस्मान्
युधि समास्थितान् । एकैकशः समर्थाः स्मो विजेतुं सर्वपार्थिवान्
॥ १९ ॥ आगच्छन्तु विनेष्यामो दर्पमेषां शितैः शरैः । पुरैकेन
हि भीष्मेण विजिताः सर्वपार्थिवाः ॥ २० ॥ मृते पितर्यतिक्रुद्धो
रथेनैकेन भारत । जघान सुबहूंस्तेषां संरब्धः कुरुसत्तम ॥ २१ ॥
ततस्ते शरणं जग्मुर्देवव्रतमिमं भयात् । स भीष्मः सुसमर्थो-
ऽयमस्माभिः सहितो रणे ॥ २२ ॥ परान् विजेतुं तस्माद्वो व्येतु
भीर्भरतर्षभ । इत्येषां निश्चयो ह्यासीत् तत्कालेऽमिततेजसाम्
॥ २३ ॥ पुरा परेषां पृथिवी कृत्स्नासीद्वशवर्त्तिनी । अस्मान्
पुनरमी नाद्य समर्था जेतुमाहवे ॥ २४ ॥ छिन्नपक्षाः परे ह्यद्य
वीर्यहीनाश्च पाण्डवाः । अस्मत्संस्था च पृथिवी वर्त्तते भरतर्षभ
॥ २५ ॥ एकार्थाः सुखदुःखेषु समानीताश्च पार्थिवाः । अप्यग्निं
प्रविशेयुस्ते समुद्रं वा परन्तप ॥ २६ ॥ मदर्थं पार्थिवाः सर्वे

वदिह्नि कुरुसत्तम। ज्वान्तमिव चापि त्वा प्रहसन्तीह दुःखितम ॥ २७ ॥ विलपन्तं बहुविध भीत परविकत्थने। एषा ह्येकाकिनो राज्ञा समर्थं पाण्डवान् प्रति ॥ २८ ॥ आलान मन्यते सर्वो व्येतु ते भयमागतम्। जेतुं समग्रा सेना मे वासवोऽपि न शक्नुयात ॥ २९ ॥ हन्तुमप्यध्यवस्येयं ब्रह्मणोऽपि स्वयम्भुवः। युधिष्ठिर पुत्रं हित्वा पञ्च ग्रामान् स्म याचते ॥ ३० ॥ भीतो हि मामकात सैन्यात प्रभावाच्चैव मे विभो। समर्थं मन्यसे यच्च कुन्तीपुत्रं वृकोदरम् ॥ ३१ ॥ तन्मिथ्या न हि मे कृतस्नं प्रभावं वेत्सि भारत। मत्समो हि गदायुद्धे पृथिव्यां नास्ति कश्चन ॥३२॥ नासीत कश्चिदतिक्रान्तो भविता न च कश्चन। युक्तो दुःखोषितश्चाह विद्यापारगतस्तथा ॥ ३३ ॥ तस्मान्न भीमान्नान्येभ्यो भयं मे विद्यते क्वचित। दुर्य्योधनसमो नास्ति गदायामिति निश्चयः ॥ ३४ ॥ सङ्कर्षणस्य भद्रं ते यत्तदैनमुपावसम्। युद्धे सङ्कर्षणसमो बलेनाभ्यधिको भुवि ॥ ३५ ॥ गदाप्रहार भीमो मे न जातु विसहेत युधि। एक प्रहार य दद्यां भीमाय रुषितो नृप ॥ ३६ ॥ स एवैन नयेत घोर क्षिप्रं वैवस्वतक्षयम्। इच्छेयञ्च गदाहस्तं राजन् द्रष्टु वृकोदरम ॥ ३७ ॥ सुचिरं प्रार्थितो ह्येष मम नित्यमनोरथः। गदया निहतो ह्याजौ मया पार्थो वृकोदर ॥ ३८ ॥ विशीर्णगात्र पृथिवीं परासु प्रपतिष्यति। गदाप्रहाराभिहतो हिमवानपि पर्वत ॥ ३९ ॥ सकृन्मया विशीर्य्येत गिरि शतसहस्रधा। स चाप्येतत विजानाति वासुदेवार्जुनौ तथा ॥ ४० ॥ दुर्य्योधनसमो नास्ति गदायामिति निश्चय। तत्ते वृकोदरमय भय व्येतु महाहवे ॥ ४१ ॥ व्यपनेष्याम्यह ह्येन मा राजन् विमना भव। तस्मिन् मया हते क्षिप्रमर्जुन बहवो रथा ॥ ४२ ॥ तुल्यरूपा विशिष्टा वा क्षेप्स्यन्ति भरतर्षभ। भीष्मो द्रोण कृपो द्रौणि कर्णो भूरिश्रवास्तथा ॥ ४३ ॥ प्राग्ज्योतिषा-

धिपः शल्यः सिन्धुराजो जयद्रथः । एकैक एषां शक्तस्तु हन्तुं
भारत पाण्डवान् ॥ ४४ ॥ समेतास्तु पुनरेते नेष्यन्ति यम-
सादनम् । समग्रा पार्थिवी सेना पार्थमेकं धनञ्जयम् ॥ ४५ ॥
कस्मादशक्ता निर्जेतुमिति हेतुर्न विद्यते । शरव्रातैस्तु भीष्मेण
शतशोऽथ सहस्रशः ॥ ४६ ॥ द्रोणद्रौणिकृपैश्चैव गन्ता पार्थो
यमक्षयम् । पितामहोऽपि गाङ्गेयः शान्तनोरधि भारत ॥ ४७ ॥
ब्रह्मर्षिसदृशो जज्ञे देवैरपि सुदुःसहः । न हन्ता विद्यते चापि
राजन् भीष्मस्य कश्चन ॥ ४८ ॥ पित्रा ह्युक्तः प्रसन्नेन नाकामस्त्वं
मरिष्यसि । ब्रह्मर्षेश्च भरद्वाजात् द्रोण्यां द्रोणोऽभ्यजायत ॥ ४९ ॥
द्रोणाज्जज्ञे महाराज द्रौणिश्च परमास्त्रवित् । कृपश्चाचार्य-
मुख्योऽयं महर्षेर्गौतमादपि ॥ ५० ॥ शरस्तम्बोद्भवः श्रीमान
वध्य इति मे मतिः । अयोनिजास्त्रयस्त्वेते पिता माता च मातुलः
॥ ५१ ॥ अश्वत्थाम्नो महाराज स च शूरः स्थितो मम । सर्वे एते
महाराज देवकल्पा महारथाः ॥ ५२ ॥ शक्रस्यापि व्यथां कुर्युः
संयुगे भरतर्षभ । नैतेषामर्जुनः शक्त एकैकं प्रतिवीक्षितुम् ॥ ५३ ॥
सहितास्तु नरव्याघ्र हनिष्यन्ति धनञ्जयम् । भीष्मद्रोणकृपाणां
तुल्यः कर्णो मतो मम ॥ ५४ ॥ अनुज्ञातश्च रामेण मत्समोऽसीति
भारत । कुण्डले रुचिरे चास्तां कर्णस्य सहजे शुभे ॥ ५५ ॥ ते
शच्यर्थं महेन्द्रेण याचितः स परन्तपः । अमोघया महाराज शक्त्या
परमभीमया ॥ ५६ ॥ तस्य शक्त्योपगूढस्य कस्माज्जीवेद्धनञ्जयः ।
विजयो मे ध्रुवं राजन् फलं पाणाविवाहितम् ॥ ५७ ॥ अभि-
व्यक्तः परेषाञ्च कृत्स्नो भुवि पराजयः । अह्ना ह्येकेन भीष्मोऽयं
प्रयुतं हन्ति भारत ॥ ५८ ॥ तत्समाश्च महेष्वासा द्रोणद्रौणि
कृपा अपि । संशप्तकानां वृन्दानि क्षत्रियाणां परन्तप ॥ ५९ ॥
अर्जुनं वयमस्मान् वा निहन्यात् कपिकेतनः । तच्चालमिति मन्यन्ते
सव्यसाचिवधे धृताः ॥ ६० ॥ पार्थिवः स भवांस्तेभ्यो ह्यकस्मा

व्यथते कथम्। भीमसेने च निहते कोऽन्यो युध्येत भारत ॥ ६१ ॥
-परेषां तन्ममाचक्ष्व यदि वेत्थ परन्तप। पञ्च ते भ्रातरः सर्व्वे
धृष्टद्युम्नोऽथ सात्यकिः ॥ ६२ ॥ परेषां समरे राजन् योधाः
सारं बलं मतम्। अस्माकन्तु विशिष्टा ये भीष्मद्रोणकृपादयः ॥६३॥
द्रौणिर्वैकर्त्तनः कर्णः सोमदत्तोऽथ वाह्लिकः। प्राग्ज्योतिषाधिपः
शल्य आवन्त्योऽथ जयद्रथः ॥ ६४ ॥ दुःशासनो दुःसहश्च दुर्मुखश्च
विशाम्पते। श्रुतायुश्चित्रसेनश्च पुरुमित्रो विविंशतिः ॥ ६५ ॥ शलो
भूरिश्रवाश्चैव विकर्णश्च तवात्मजः। अक्षौहिण्यो हि मे राजन्
दशैका च समाहृताः ॥ ६६ ॥ न्यूनाः परेषां सप्तैव कस्मान्मे
स्यात् पराजयः। बलं त्रिगुणतो हीनं योध्यं प्राह बृहस्पतिः
॥ ६७ ॥ परेभ्यस्त्रिगुणा चेयं मम राजन्ननीकिनी। गुणहीनं
परेषाञ्च बहु पश्यामि भारत ॥ ६८ ॥ गुणोदयं बहुगुणमात्मनश्च
विशाम्पते। एतत् सर्व्वं समाज्ञाय बलाग्र्यं मम भारत ॥ ६९ ॥
न्यूनतां पाण्डवानाञ्च न मोहं गन्तुमर्हसि। इत्युक्त्वा सञ्जयं भूयः
पर्य्यपृच्छत भारत। विवित्सुः प्राप्तकालानि ज्ञात्वा परपुरञ्जयः ॥७०॥

इति उद्योगपर्व्वणि यानसन्धिपर्व्वणि दुर्य्योधनवाक्ये
चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

---

दुर्य्योधन उवाच। अक्षौहिणीः सप्त लब्ध्वा राजभिः सह
सञ्जय। किंस्विदिच्छति कौन्तेयो युद्धप्रेप्सुर्युधिष्ठिरः ॥ १ ॥

सञ्जय उवाच। अतीव मुदितो राजन् युद्धप्रेप्सुर्युधिष्ठिर।
भीमसेनार्ज्जुनौ चोभौ यमावपि न बिभ्यत ॥ २ ॥ रथन्तु दिव्य
कौन्तेयः सर्व्वा विभ्राजयन्दिशः। मन्त्रं जिज्ञासमान सन् वीभत्सु
समयोजयत् ॥ ३ ॥ तमपश्याम सन्नद्धं मेघं विद्युद्युतं यथा।

समन्तात् समभिध्याय हृष्यमाणोऽभ्यभाषत ॥ ४ ॥ पूर्वरूप-
मिदं पश्य वयं जेष्याम सञ्जय । बीभत्सुमां यथोवाच तथावैम्यह-
मच्युत ॥ ५ ॥

दुर्य्योधन उवाच । प्रशंसस्यभिनन्दंस्तान् पार्थानक्षपरा-
जितान् । अर्ज्जुनस्य रथे ब्रूहि कथमश्वाः कथं ध्वजाः ॥ ६ ॥

सञ्जय उवाच । भौमनः सह शक्रेण बहुचित्रं विशाम्पते ।
रूपाणि कल्पयामास त्वष्टा धाता सदा विभो ॥ ७ ॥ ध्वजे हि
तस्मिन् रूपाणि चक्रुस्ते देवमायया । महाधनानि दिव्यानि,
महान्ति च लघूनि च ॥ ८ ॥ भीमसेनानुरोधाय हनूमान् मार
तात्मजः । आत्मप्रतिकृतिं तस्मिन् ध्वज आरोपयिष्यति ॥ ९ ॥
सर्वा दिशो योजनमात्रमन्तरं स तिर्य्यगूर्द्ध्वञ्च रुरोध वै ध्वजः । न
सज्जतेऽसौ तरुभिः संवृतोऽपि तथा हि माया विहिता भौमनेन
॥ १० ॥ यथाकाशे शक्रधनुः प्रकाशते न चैकवर्णं न च विद्मि किन्तु
तत् । तथा ध्वजो विहितो भौमनेन बह्वाकारं दृश्यते रूपमस्य
॥ ११ ॥ यथाग्निधूमो दिवमेति रुद्धा वर्णान् बिभ्रत् तैजसांश्च
रूपान् । तथा ध्वजो विहितो भौमनेन न चेद्भारो भविता नोप-
रोधः ॥ १२ ॥ श्वेतास्तस्मिन् वातवेगाः सदश्वा दिव्या रथा
श्चित्ररथेन दत्ताः । भुव्यन्तरीक्षे दिवि वा नरेन्द्र एषां गतिर्हीय
नात्र सर्वा ॥ १३ ॥ शतं यत्तत् पूर्य्यते नित्यकालं हतं हतं दत्त
वरं पुरस्तात् । तथा राज्ञो दन्तवर्णा बृहन्तो रथे युक्ता भान्ति
तद्वीर्य्यतुल्याः ॥ १४ ॥ ऋक्षप्रख्या भीमसेनस्य वाहा रथे
वायोस्तुल्यवेगा बभूवुः । कल्माषाङ्गास्तित्तिरिचित्रपृष्ठा भ्रात्रा
दत्ताः प्रीयता फाल्गुनेन ॥ १५ ॥ भ्रातुर्वीरस्य स्वैस्तुरङ्गैर्विशिष्टा
मुदा युक्ताः सहदेवं वहन्ति । माद्रीसुतं नकुलं त्वाजमीढ
महेन्द्रदत्ता हरयो वाजिमुख्याः ॥ १६ ॥ समा वायोर्बलवन्त
स्तरस्विनो वहन्ति वीरं वृत्रशत्रुं यथेन्द्रम् । तुल्यायैभिर्वय

विक्रमेण महाजवाश्चित्ररूपाः सदश्वाः । सौभद्रादीन् द्रौपदेयान्
कुमारान् वहन्त्यश्वा देवदत्ता बृहन्तः ॥ १७ ॥

इति उद्योगपर्वणि यानसन्धिपर्वणि सञ्जयवाक्ये
पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

---

धृतराष्ट्र उवाच । कांस्तत्र सञ्जयापश्यः प्रीत्यर्थेन समागतान् ।
ये योत्स्यन्ते पाण्डवार्थे पुत्रस्य मम वाहिनीम् ॥ १ ॥
सञ्जय उवाच । मुख्यमन्धकवृष्णीनामपश्यं कृष्णमागतम् ।
चेकितानञ्च तत्रैव युयुधानञ्च सात्यकिम् ॥ २ ॥ पृथगक्षौहिणीभ्यां
तु पाण्डवानभिसंश्रितौ । महारथौ समाख्यातावुभौ पुरुष-
मानिनौ ॥ ३ ॥ अक्षौहिण्याथ पाञ्चाल्यो दशभिस्तनयैर्वृतः ।
सत्यजित् प्रमुखैर्वीरैर्धृष्टद्युम्नपुरोगमैः ॥ ४ ॥ द्रुपदो वर्द्धयन्मानं
शिखण्डिपरिपालितः । उपायात् सर्वसैन्यानां प्रतिच्छाद्य तदा
वपुः ॥ ५ ॥ विराटः सह पुत्राभ्यां शङ्खेनैवोत्तरेण च । सूर्य-
दत्तादिभिर्वीरैर्मदिराक्षपुरोगमैः ॥ ६ ॥ सहितः पृथिवीपालो
भ्रातृभिस्तनयैस्तथा । अक्षौहिण्यैव सैन्यानां वृतः पार्थं समा-
श्रितः ॥ ७ ॥ जारासन्धिर्मागधश्च धृष्टकेतुश्च चेदिराट् । पृथक्
पृथगनुप्राप्तौ पृथगक्षौहिणीवृतौ ॥ ८ ॥ केकया भ्रातरः पञ्च
सर्वे लोहितकध्वजाः । अक्षौहिणीपरिवृताः पाण्डवानभिसंश्रिताः
॥ ९ ॥ एतानेतावतस्तत्र तानपश्यं समागतान् । ये पाण्डवार्थे
योत्स्यन्ति धार्त्तराष्ट्रस्य वाहिनीम् ॥ १० ॥ यो वेद मानुषं व्यूहं
दैवं गान्धर्वमासुरम् । स तत्र सेनाप्रमुखे धृष्टद्युम्नो महारथः ॥ ११ ॥
भीष्मः शान्तनवो राजन् भागः क्लृप्तः शिखण्डिनः । तं विराटो-
ऽभिसंस्याता सार्द्धं मत्स्यैः प्रहारिभिः ॥ १२ ॥ ज्येष्ठस्य पाण्डु-
पुत्रस्य भागो मद्राधिपो बली । तौ तु तत्राब्रुवन् केचित् विषमौ

नौ मताविति ॥ १३ ॥ दुर्य्योधनः सहसुतः सार्द्धं भ्रातृशतेन च। प्राच्याश्च दाक्षिणात्याश्च भीमसेनस्य भागतः ॥ १४ ॥ अर्जुनस्य तु भागेन कर्णो वैकर्त्तनो मतः। अश्वत्थामा विकर्णश्च सैन्धवश्च जयद्रथः ॥ १५ ॥ अशक्याश्चैव ये केचित् पृथिव्यां शूरमानिनः। सर्वांस्तानर्ज्जुनः पार्थः कल्पयामास भागतः ॥ १६ ॥ महेष्वासा राजपुत्रा भ्रातरः पञ्च कैकयाः। कैकेयानेव भागेन कृत्वा योत्स्यन्ति संयुगे ॥ १७ ॥ तेषामेव कृतो भागो मालवाः शाल्वकास्तथा। त्रिगर्त्तानाञ्च वै मुख्यौ यौ तौ संशप्तकाविति ॥ १८ ॥ दुर्य्योधनसुताः सर्वे तथा दुःशासनस्य च। सौभद्रेण कृतो भागो राजा चैव वृहद्वलः ॥ १९ ॥ द्रौपदेया महेष्वासाः सुवर्ण-विकृतध्वजाः। धृष्टद्युम्नमुखा द्रोणमभियास्यन्ति भारत ॥ २० ॥ चेकितानः सोमदत्तं द्वैरथे योद्धुमिच्छति। भोजन्तु कृतवर्म्माणं युयुधानो युयुत्सति ॥ २१ ॥ सहदेवस्तु माद्रेयः शूरः संक्रन्दनो युधि। स्वयं सङ्कल्पयामास श्यालं ते सुवलात्मजम् ॥ २२ ॥ उलूकं चैव कैतव्य ये च सारस्वता गणाः। नकुलः कल्पयामास भागं माद्रवतीसुतः ॥ २३ ॥ ये चान्ये पार्थिवा राजन् प्रत्युद्यास्यन्ति संयुगे। समाह्वानेन तांश्चापि पाण्डुपुत्रा अकल्पयन् ॥ २४ ॥ एवमेषामनीकानि प्रविभक्तानि भागशः। यत्ते कार्य्यं सपुत्रस्य क्रियतां तदकालिकम् ॥ २५ ॥

धृतराष्ट्र उवाच। न सन्ति सर्वे पुत्रा मे मूढ़ा दुर्य्यूतदेविन। येषां युद्धं बलवता भीमेन रणमूर्द्धनि ॥ २६ ॥ राजानः पार्थिवाः सर्वे प्रोक्षिताः कालधर्म्मणा। गाण्डीवाग्निं प्रवेक्ष्यन्ति पतङ्गा इव पावकम् ॥ २७ ॥ विद्रुतां वाहिनीं मन्ये कृतवैरैर्महात्मभिः। तां रणे केऽनुयास्यन्ति प्रभग्नां पाण्डवैर्युधि ॥ २८ ॥ सर्वे ह्यतिरथाः शूराः कीर्त्तिमन्तः प्रतापिनः। सूर्य्यपावकयोस्तुल्यास्तेजसा समितिञ्जयाः ॥ २९ ॥ येषां युधिष्ठिरो नेता गोप्ता च मधुसूदनः।

योधौ च पाण्डवौ वीरौ सव्यसाचिवृकोदरौ॥ ३०॥ नकुलः सहदेवश्च धृष्टद्युम्नश्च पार्षतः। सात्यकिर्द्रुपदश्चैव धृष्टद्युम्नश्च सानुज॥ ३१॥ उत्तमौजाश्च पाञ्चाल्यो युधामन्युश्च दुर्ज्जयः। शिखण्डी चवदेवश्च तथा वैराटिरुत्तरः॥ ३२॥ काश्ययश्चेदयश्चैव मत्स्याः सर्व्वे च सृञ्जयाः। विराटपुत्रो वभ्रुश्च पाञ्चालाश्च प्रभद्रकाः॥ ३३॥ येषामिन्द्रोऽप्यकामानां न हरेत पृथिवीमिमाम्। वीराणां रणधीराणां ये भिन्द्युः पर्व्वतानपि॥ ३४॥ तान् सर्व्वगुणसम्पन्नानमनुष्यप्रतापिनः। क्रोशतो मम दुष्पुत्रो योद्धुमिच्छति सञ्जय॥ ३५॥

दुर्य्योधन उवाच। उभौ स्व एकजातीयौ तथोभौ भूमिगोचरौ। अथ कस्मात् पाण्डवानामेकतो मन्यसे जयम्॥ ३६॥ पितामहञ्च द्रोणञ्च कृपं कर्णञ्च दुर्ज्जयम्। जयद्रथं सोमदत्तमश्वत्थामानमेव च॥ ३७॥ सुतेजसो महेष्वासानिन्द्रोऽपि सहितोऽमरैः। अशक्तः समरे जेतुं किं पुनस्तात पाण्डवाः॥ ३८॥ सर्व्वे च पृथिवीपाला मदर्थे तात पाण्डवान्। आर्य्या शस्त्रभृतः शूराः समर्थाः प्रतिबाधितुम्॥ ३९॥ न मामकान् पाण्डवास्ते समर्थाः प्रतिवीक्षितुम्। पराक्रान्तो ह्यहं पाण्डून् सपुत्रान् योद्धुमाहवे॥ ४०॥ मत्प्रियं पार्थिवाः सर्व्वे ये चिकीर्षन्ति भारत। ते तानावारयिष्यन्ति ऐणेयानिव तन्तुना॥ ४१॥ महता रथवंशेन शरजालैश्च मामकैः। अभिद्रुता भविष्यन्ति पाञ्चालाः पाण्डवैः सह॥ ४२॥

धृतराष्ट्र उवाच। उन्मत्त इव मे पुत्रो विलपत्येष सञ्जय। न हि शक्तो रणे जेतुं धर्मराजं युधिष्ठिरम्॥ ४३॥ जानाति हि यथा भीष्मः पाण्डवानां यशस्विनाम्। बलवत्तां सपुत्राणां धर्म्मज्ञानां महात्मनाम्॥ ४४॥ यतो नारोचयदयं विग्रहं तैर्म्महात्मभिः। किन्तु सञ्जय मे ब्रूहि पुनस्तेषां विचेष्टितम्॥ ४५॥

कस्तांस्तरस्विनो भूय सन्दीपयति पाण्डवान्। आक्षिपतो महे ष्वासान् हविषा पावकानिव ॥ ४६ ॥

सञ्जय उवाच। धृष्टद्युम्नः सदैवैतान् सन्दीपयति भारत। युध्यध्वमिति मा भैष्ट युद्धाद्भरतसत्तमाः ॥४७॥ ये केचित पार्थिवास्तत्र धार्त्तराष्ट्रेण संवृता। युद्धे समागमिष्यन्ति तुमुले शस्त्रसंकुले ॥ ४८ ॥ तान् सर्वानाहवे क्रुद्धान् सानुबन्धान् समागतान्। अहमेक समादास्ये तिमिर्मत्स्यानिवोदकात् ॥ ४९ ॥ भीष्मं द्रोणं कृपं कर्णं द्रौणिं शल्यं सुयोधनम्। एतांश्चापि निरोत्स्यामि वेलेव मकरालयम् ॥ ५० ॥ तथा ब्रुवन्तं धर्म्मात्मा प्राह राजा युधिष्ठिर। तव धैर्य्यञ्च वीर्य्यञ्च पाञ्चाला पाण्डवैः सह ॥ ५१ ॥ सर्वे समधिरूढा स्म सङ्ग्रामान्न. समुद्धर। जानामि त्वां महाबाहो क्षत्रधर्मे व्यवस्थितम् ॥ ५२ ॥ समर्थमेकं पर्य्याप्तं कौरवाणां विनिग्रहे। पुरस्तादुपयातानां कौरवाणां युयुत्सताम् ॥ ५३ ॥ भवता यद्विधातव्यं तन्न श्रेय परन्तप। संग्रामादपयातानां भग्नानां शरणैषिणाम् ॥ ५४ ॥ पौरुषं दर्शयन् शूरो यस्तिष्ठेदग्रत पुमान्। क्रीणीयात्तं सहस्रेण इति नीतिमता मतम् ॥ ५५ ॥ स त्वं शूरश्च वीरश्च विक्रान्तश्च नरर्षभ। भयार्त्तानां परित्राता संयुगेषु न संशय ॥ ५६ ॥ एवं ब्रुवति कौन्तेये धर्म्मात्मनि युधिष्ठिरे। धृष्टद्युम्न उवाचेदं मां वचो गतसाध्वसम् ॥५७॥ सर्वान् जनपदान् सूत तथा दुर्योधनस्य ये। सबाह्लिकान् कुरून् ब्रूया प्रातिपेयान् शरद्वत ॥ ५८ ॥ सूतपुत्रं तथा द्रोणं सहपुत्रं जयद्रथम्। दु शासन विकर्णञ्च तथा दुर्य्योधनं नृपम्। भीष्मञ्च ब्रूहि गत्वा त्वमाशु गच्छत मा चिरम् ॥ ५९ ॥ युधिष्ठिर साधुनैवाभ्युपेयो मा वोऽवधीदर्ज्जुनो देवगुप्त। राज्यं दातुं धर्मराजस्य तूर्णं याचध्वं वै पाण्डवं लोकवीरम् ॥ ६० ॥ नैतादृशो हि योधोऽस्ति पृथिव्यामिह कश्चन। यथाविध सव्यसाची पाण्डव

सत्यविक्रमः ॥ ६१ ॥ देवैर्हि संहृतौ दिव्यौ रथो गाण्डीवधन्वनः ।
न स जेयो मनुष्येण मा स्म कृद्धं मनो युधि ॥ ६२ ॥

इति उद्योगपर्व्वणि यानसन्धिपर्व्वणि सञ्जयवाक्ये
षट्‌पञ्चाशोऽध्यायः ॥ ५६ ॥

---

धृतराष्ट्र उवाच । चत्रतेजा ब्रह्मचारी कौमारादपि पाण्डवः ।
तेन संयुगमेष्यन्ति मन्दा विलपतो मम ॥ १ ॥ दुर्य्योधन निव-
र्त्तस्व युद्धाद्भरतसत्तम । न हि युद्धं प्रशंसन्ति सर्व्वावस्थमरिन्दम
॥ २ ॥ अलमर्द्धं पृथिव्यास्ते सहामात्यस्य जीवितुम् । प्रयच्छ
पाण्डुपुत्राणां यथोचितमरिन्दम ॥ ३ ॥ एतद्धि कुरवः सर्व्वे मन्यन्ते
धर्म्मसंहितम् । यत्त्वं प्रशान्ते मन्येथाः पाण्डुपुत्रैर्महात्मभिः ॥ ४ ॥
अङ्गेमां समवेचस्व पुत्र स्वामेव वाहिनीम् । जात एष तवाभावस्त्वं
तु मोहान्न बुध्यसे ॥ ५ ॥ न ह्यहं योद्धुमिच्छामि नैतदिच्छति
वाह्लिकः । न च भीष्मो न च द्रोणो नाश्वत्थामा न सञ्जयः ॥ ६ ॥
न सोमदत्तो न शल्यो न कृपो योद्धुमिच्छति । सत्यव्रत पुरुमित्रौ
जयो भूरिश्रवास्तथा ॥ ७ ॥ येषु सम्प्रतितिष्ठेयुः कुरवः पीड़िताः
परैः । ते योद्धुं नाभिनन्दन्ति तत्तुभ्यं तात रोचताम् ॥ ८ ॥ न
त्वं करोषि कामेन कर्णः कारयिता तव । दुःशासनश्च पापात्मा
शकुनिश्चापि सौवलः ॥ ९ ॥

दुर्य्योधन उवाच । नाहं भवति न द्रोणे नाश्वत्थाम्नि न
सञ्जये । न भीष्मे न च काम्बोजे न कृपे न च वाह्लिके ॥ १० ॥
सत्यव्रते पुरुमित्रे भूरिश्रवसि वा पुनः । अन्येषु वा तावकेषु भारं
कृत्वा समाह्वये ॥ ११ ॥ अहञ्च तात कर्णश्च रणयज्ञं वितत्य वै ।
युधिष्ठिरं पशुं कृत्वा दीचितौ पुरुषर्षभौ ॥ १२ ॥ रथो वेद

स्रुव. खड्गो गदा स्रुक् कवचं सदः। चातुर्होत्रञ्च धुर्या मे
शरा दर्भा हविर्यश· ॥ १३ ॥ आत्मयज्ञेन नृपते इष्ट्वा वैवस्वतं
रणे। विजित्य च समेष्यावो हतामित्रौ श्रियावृतौ ॥ १४ ॥
अहञ्च तात कर्णश्च भ्राता दुःशासनश्च मे। एते वयं हनिष्याम
पाण्डवान् समरे त्रय· ॥ १५ ॥ अहं हि पाण्डवान् हत्वा प्रशास्ता
पृथिवीमिमाम्। मां वा हत्वा पाण्डुपुत्रा भोक्तारः पृथिवीमिमाम्
॥ १६ ॥ त्यक्तं मे जीवितं राज्यं धनं सर्वञ्च पार्थिव। न जातु
पाण्डवैः सार्द्धं वसेयमहमच्युत ॥ १७ ॥ यावद्धि सूच्यास्तीक्ष्णाया
विध्येदग्रेण मारिष। तावदप्यपरित्याज्यं भूमेर्नः पाण्डवान्
प्रति ॥ १८ ॥

धृतराष्ट्र उवाच। सर्वान् वस्तात शोचामि त्यक्तो दुर्योधनो
मया। ये मन्दमनुयास्यध्वं यान्तं वैवस्वतक्षयम् ॥ १९ ॥ रुरूणा-
मिव यूथेषु व्याघ्राः प्रहरतां वराः। वरान् वरान् हनिष्यन्ति
समेता युधि पाण्डवाः ॥ २० ॥ प्रतीपमिव मे भाति युयुधानेन
भारती। व्यस्ता सीमन्तिनी ग्रस्ता प्रमृष्टा दीर्घबाहुना ॥ २१ ॥
सम्पूर्णं पूरयन् भूयो बलं पार्थस्य माधव। शैनेयः समरे स्थाता
बीजवत् प्रवपन् शरान् ॥ २२ ॥ सेनामुखे प्रयुद्धानां भीमसेनो
भविष्यति। तं सर्वे संश्रयिष्यन्ति प्राकारमकुतोभयम् ॥ २३ ॥
यदा द्रक्ष्यसि भीमेन कुञ्जरान् विनिपातितान्। विशीर्णदन्तान्
गिर्य्याभान् भिन्नकुम्भान् सशोणितान् ॥ २४ ॥ तानभिप्रेक्ष्य
संग्रामे विशीर्णानिव पर्वतान्। भीतो भीमस्य संस्पर्शात् स्मर्त्तासि
वचनस्य मे ॥ २५ ॥ निर्दग्धं भीमसेनेन सैन्यं हतरथद्विपम्।
गतिमग्नेरिव प्रेक्ष्य स्मर्त्तासि वचनस्य मे ॥ २६ ॥ महद्वो भय-
मागामि न चेच्छाम्यथ पाण्डवैः। गदया भीमसेनेन हता शम-
मुपैष्यथ ॥ २७ ॥ महावनमिव छिन्नं यदा द्रक्ष्यसि पातितम्।
बलं कुरूणां भीमेन तदा स्मर्त्तासि मे वच ॥ २८ ॥

वैशम्पायन उवाच । एतावदुक्त्वा राजा तु सर्व्वांस्तान् पृथिवीपतीन् । अनुभाष्य महाराज पुनः पप्रच्छ सञ्जयम् ॥ २८ ॥

इति उद्योगपर्व्वणि यानसन्धिपर्व्वणि धृतराष्ट्रवाक्ये सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

---

धृतराष्ट्र उवाच । यदब्रूतां महात्मानौ वासुदेवधनञ्जयौ । तन्मे ब्रूहि महाप्राज्ञ शुश्रूषे वचनं तव ॥ १ ॥

सञ्जय उवाच । शृणु राजन् यथा दृष्टौ मया कृष्णधनञ्जयौ । ऊचतुश्चापि यद्वीरौ तत्ते वक्ष्यामि भारत ॥ २ ॥ पादाङ्गुलीरभिप्रेक्ष्य प्रयतोऽहं कृताञ्जलिः । शुद्धान्तं प्राविशं राजन्नाख्यातुं नरदेवयोः ॥ ३ ॥ नैवाभिमन्युर्न यमौ तं देशमभियान्ति वै । यत्र कृष्णौ च कृष्णा च सत्यभामा च भामिनी ॥ ४ ॥ उभौ मध्वासवक्षीवावुभौ चन्दनरूषितौ । स्रग्विनौ वरवस्त्रौ तौ दिव्याभरणभूषितौ ॥ ५ ॥ नैकरत्नविचित्रन्तु काञ्चनं महदासनम् । विविधास्तरणाकीर्णं यत्रासातामरिन्दमौ ॥ ६ ॥ अर्जुनोत्सङ्गगौ पादौ केशवस्योपलक्षये । अर्जुनस्य च कृष्णाया सत्यायाश्च महात्मन ॥ ७ ॥ काञ्चनं पादपीठन्तु पार्थो मे प्रादिशत् तदा । तदहं पाणिना स्पृष्ट्वा ततो भूमावुपाविशम् ॥ ८ ॥ ऊर्द्ध्वरेखतलौ पादौ पार्थस्य शुभलक्षणौ । पादपीठादपहृतौ तत्रापश्यमहं शुभौ ॥ ९ ॥ श्यामौ बृहन्तौ तरुणौ शालस्कन्धाविवोद्गतौ । एकासनगतौ दृष्ट्वा भयं मा महदाविशत् ॥ १० ॥ इन्द्रविष्णुसमावेतौ मन्दात्मा नावबुध्यते । संश्रयात् भीष्मद्रोणाभ्यां कर्णस्य च विकत्थनात् ॥ ११ ॥ निदेशस्थाविमौ यस्य मानसस्तस्य सेत्स्यते । सङ्कल्पो धर्मराजस्य निश्चयो मे तदाभवत् ॥ १२ ॥ सत्कृतश्चान्नपानाभ्यामाच्छन्नो लब्धसत्क्रियः । अञ्जलिं मूर्द्ध्नि सन्धाय

तौ सन्देशमचोदयम् ॥ १३ ॥ धनुर्गुणकिणाङ्केन पाणिना शुभलक्षणम् । पादमानमयन् पार्थः केशवं समचोदयत् ॥ १४ ॥ इन्द्रकेतुरिवोत्थाय सर्वाभरणभूषितः । इन्द्रवीर्योपमः कृष्णः संविष्टो माभ्यभाषत ॥ १५ ॥ वाचं संवदतां श्रेष्ठो ह्लादिनीं वचनक्षमाम् । त्रासनीं धार्तराष्ट्राणां मृदुपूर्वां सुदारुणाम् ॥ १६ ॥ वाचं तां वचनार्हस्य शिक्षाक्षरसमन्विताम् । अश्रौषमहमिष्टार्थां पश्चाद्धृदयहारिणीम् ॥ १७ ॥

वासुदेव उवाच । सञ्जयेदं वचो ब्रूया धृतराष्ट्रं मनीषिणम् । कुरुमुख्यस्य भीष्मस्य द्रोणस्यापि च शृण्वतः ॥ १८ ॥ आवयोर्वचनात् सूत ज्येष्ठानप्यभिवादयन् । यवीयसश्च कुशलं पश्चात् पृष्ट्वैवमुत्तरम् ॥ १९ ॥ यजध्वं विविधैर्यज्ञैर्विप्रेभ्यो दत्तदक्षिणाः । पुत्रैर्दारैश्च मोदध्वं महद्वो भयमागतम् ॥ २० ॥ अर्थांस्त्यजत पात्रेभ्यः सुतान् प्राप्नुत कामजान् । प्रियं प्रियेभ्यश्चरत राजा हि त्वरते जये ॥ २१ ॥ ऋणमेतत् प्रवृद्धं मे हृदयान्नापसर्पति । यद्गोविन्देति चुक्रोश कृष्णा मां दूरवासिनम् ॥ २२ ॥ तेजोमयं दुराधर्षं गाण्डीवं यस्य कार्मुकम् । मद्द्वितीयेन तेनेह वैरं वः सव्यसाचिना ॥ २३ ॥ मद्द्वितीयं पुनः पार्थं कः प्रार्थयितुमिच्छति । यो न कालपरीतो वाप्यपि साक्षात् पुरन्दरः ॥ २४ ॥ बाहुभ्यामुद्वहेत् भूमिं दहेत् क्रुद्ध इमाः प्रजाः । पातयेत् त्रिदिवाद्देवान् योऽर्जुनं समरे जयेत् ॥ २५ ॥ देवासुरमनुष्येषु यक्षगन्धर्वभोगिषु । न तं पश्याम्यहं युद्धे पाण्डवं योऽभ्ययाद्रणे ॥ २६ ॥ यत्तद्विराटनगरे श्रूयते महदद्भुतम् । एकस्य च बहूनाञ्च पर्याप्तं तन्निदर्शनम् ॥ २७ ॥ एकेन पाण्डुपुत्रेण विराटनगरे यदा । भग्नाः पलायन्त दिशः पर्याप्तं तन्निदर्शनम् ॥ २८ ॥ बलं वीर्यञ्च तेजश्च शीघ्रता लघुहस्तता । अविषादश्च धैर्यञ्च पार्थान्नान्यत्र विद्यते ॥ २९ ॥ इत्यब्रवीद्धृषीकेशः पार्थमुद्धर्षयन् गिरा

गर्ज्जन् समयवर्षीव गगने पाकशासनः ॥ ३० ॥ कौरवस्य वचः श्रुत्वा किरीटी श्वेतवाहनः। अर्ज्जुनस्तन्महद्वाक्यमब्रवीद्रोमहर्षणम् ॥ ३१ ॥

इति उद्योगपर्व्वणि यानसन्धिपर्व्वणि सञ्जयवाक्ये अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

---

वैशम्पायन उवाच। सञ्जयस्य वचः श्रुत्वा प्रज्ञाचक्षुर्जनेश्वरः। ततः सङ्ख्यातुमारेभे तद्वचो गुणदोषतः ॥ १ ॥ प्रसङ्ख्याय च सौक्ष्म्येण गुणदोषान् विचक्षणः। यथावन्मतितत्त्वेन जयकामः सुतान् प्रति ॥ २ ॥ बलाबलं विनिश्चित्य याथातथ्येन बुद्धिमान्। शक्तिं सङ्ख्यातुमारेभे तदा वै मनुजाधिपः ॥ ४ ॥ देवमानुषयोः शक्त्या तेजसा चैव पाण्डवान्। कुरून् शक्त्याल्पतरया दुर्य्योधनमथाब्रवीत् ॥ ५ ॥ दुर्य्योधनेयं चिन्ता मे शश्वन्न व्युपशाम्यति। सत्यं ह्येतदहं मन्ये प्रत्यक्षं नानुमानतः ॥ ६ ॥ आत्मजेषु परं स्नेहं सर्व्वभूतानि कुर्व्वते। प्रियाणि चैषां कुर्व्वन्ति यथाशक्ति हितानि च ॥७॥ एवमेवोपकर्त्तॄणां प्रायशो लक्षयामहे। इच्छन्ति बहुलं सन्तः प्रतिकर्त्तुं महत् प्रियम् ॥ ८ ॥ अग्निः साचिव्यकर्त्ता स्यात् खाण्डवे तत् कृतं स्मरन्। अर्ज्जुनस्यापि भीमेऽस्मिन् कुरुपाण्डुसमागमे ॥ ९ ॥ जातिगृद्ध्याभिपन्नाय पाण्डवानामनेकशः। धर्म्मादयः समेष्यन्ति समाहूता दिवौकसः ॥ १० ॥ भीष्मद्रोणकृपादीनां भयादशनिसम्मितम्। दिदृक्षिषन्तः संरक्षां गमिष्यन्तीति मे मतिः ॥ ११ ॥ ते देवैः सहिताः पार्था न शक्याः प्रतिवीक्षितुम्। मानुषेण नरव्याघ्रा वीर्य्यवन्तोऽस्त्रपारगाः ॥१२॥ दुरासदं यस्य दिव्यं गाण्डीवं धनुरुत्तमम्। वारुणौ चाक्षयौ दिव्यौ शरपूर्णौ महेषुधी ॥ १३ ॥ वानरश्च ध्वजे दिव्यो निःसङ्गी

धूमवद्गति। रथस्य चतुरन्ताया यस्य नास्ति समः क्षितौ ॥१४॥
महामेघनिभस्यापि निर्घोषः श्रूयते जनैः। महाशनिसमः शब्द
भावयाणां भयङ्करः ॥ १५ ॥ यञ्चातिमानुषं वीर्यं कृतस्नो लोको
व्यवस्यति। देवानामपि जेतारं यं विदुः पार्थिवा रणे ॥ १६ ॥
शतानि पञ्च चैवैषून् यो गृह्णन्नेव दृश्यते। निमेषान्तरमात्रेण
मुञ्चन् दूरञ्च पातयन् ॥ १७ ॥ यमाह भीष्मो द्रोणश्च कृपो द्रौणि
स्तथैव च। मद्रराजस्तथा शल्यो मध्यस्था ये च मानवाः ॥ १८ ॥
युद्धायावस्थितं पार्थं पार्थिवैरतिमानुषैः। अशक्यं रथशार्दूल
पराजेतुमरिन्दमम् ॥ १९ ॥ यद्दश बाहुवीर्येण कार्त्तवीर्यस्य
पाण्डवम्। क्षिपत्येकेन वेगेन पञ्चबाणशतानि यः ॥ २० ॥ तम
र्जुनं महेष्वासं महेन्द्रोपेन्द्रविक्रमम्। निघ्नन्तमिव पश्यामि विमर्द
ऽस्मिन्महाहवे ॥ २१ ॥ इत्येवं चिन्तयन् कृतस्नमहोरात्राणि
भारत। अनिद्रो निःसुखश्चास्मि कुरूणां शमचिन्तया ॥ २२ ॥
क्षयोदयोऽयं सुमहान् कुरूणां प्रत्युपस्थितः। अस्य चेत् कलह
स्यान्तः शमादन्यो न विद्यते ॥ २३ ॥ शमो मे रोचते नित्य
पार्थैस्तात न विग्रहः। कुरुभ्यो हि सदा मन्ये पाण्डवान् शक्ति
मत्तरान् ॥ २४ ॥

इति उद्योगपर्वणि यानसन्धिपर्वणि धृतराष्ट्रविवेचने
एकोनषष्टोऽध्यायः ॥ ५९ ॥

---

वैशम्पायन उवाच। पितुरेतद्वचः श्रुत्वा धार्त्तराष्ट्रोऽत्यम
र्षणः। आधाय विपुलं क्रोधं पुनरेवेदमब्रवीत् ॥ १ ॥ अशक्या
देवसचिवाः पार्थाः स्युरिति यद्भवान्। मन्यते तद्भयं व्येतु भवतो
राजसत्तम ॥ २ ॥ अकामद्वेषसंयोगात् लोभात् द्रोहाच्च भारत।
उपेक्षया च भावानां देवा देवत्वमाप्नुवन् ॥ ३ ॥ इति द्वैपायनो

व्यासो नारदश्च महातपाः । जामदग्न्याय रामो न कथामक-
थयत् पुरा ॥ ४ ॥ नैव मानुषवद्देवाः प्रवर्त्तन्ते कदाचन । कामात्
क्रोधात् तथा लोभात् द्वेषाच्च भरतर्षभ ॥ ५ ॥ यदा ह्यग्निश्च
वायुश्च धर्म्म इन्द्रोऽश्विनावपि । कामयोगात् प्रवर्त्तेरन्न पार्थो
दुःखमाप्नुयुः ॥ ६ ॥ तस्मान्न भवता चिन्ता कार्य्यैषा स्यात् कथ-
ञ्चन । देवेष्वपेक्षका ह्येते पञ्चपाण्डवेषु भारत ॥ ७ ॥ अथ चेत्
कामसंयोगात् द्वेषो लोभश्च लक्ष्यते । देवेषु दैवप्रामाण्यान्नैषां
तद्विक्रमिष्यति ॥ ८ ॥ मयाभिमन्त्रितः शश्वज्जातवेदाः प्रशाम्यति ।
दिधक्षुः सकलांल्लोकान् परिक्षिप्य समन्ततः ॥ ९ ॥ यद्वा परमकं
तेजो येन युक्ता दिवौकसः । ममाप्यनुपमं भूयो देवेभ्यो विद्धि
भारत ॥ १० ॥ विदीर्य्यमाणां वसुधां गिरीणां शिखराणि च ।
लोकस्य पश्यतो राजन् स्थापयाम्यभिमन्त्रणात् ॥ ११ ॥ चेतना-
चेतनस्यास्य जङ्गमस्थावरस्य च । विनाशाय समुत्पन्नं महाघोरं
महास्वनम् ॥ १२ ॥ अश्मवर्षञ्च वायुञ्च शमयामीह नित्यशः ।
जगतः पश्यतोऽभीक्ष्णं भूतानामनुकम्पया ॥ १३ ॥ स्तम्भिता-
स्वप्सु गच्छन्ति मया रथपदातयः । देवासुराणां भावानामह-
मेकः प्रवर्त्तिता ॥ १४ ॥ अक्षौहिणीभिर्यान् देशान् यामि कार्य्येण
केनचित् । तत्राश्वा मे प्रवर्त्तन्ते यत्र यत्राभिकामये ॥ १५ ॥
भयानकानि विषये व्यालादीनि न सन्ति मे । मन्त्रगुप्तानि भूतानि
न हिंसन्ति भयङ्कराः ॥ १६ ॥ निकामवर्षी पर्जन्यो राजन्
विषयवासिनाम् । धर्मिष्ठाश्च प्रजाः सर्वा ईतयश्च न सन्ति मे ॥१७॥
अश्विनावथ वायुग्नी मरुद्भिः सह वृत्रहा । धर्मश्चैव, मया द्विष्टान्
नोत्सहन्ते,भिरक्षितुम् ॥ १८ ॥ यदि ह्येते समर्थाः स्युर्मद्द्विष-
स्त्रातुमञ्जसा । न स्म त्रयोदशसमाः पार्था दुःखमवाप्नुयुः ॥१९॥
नैव देवा न गन्धर्वा नासुरा न च राक्षसाः । शक्तास्त्रातुं मया
द्विष्टं सत्यमेतद् ब्रवीमि ते ॥ २० ॥ यदभिध्याम्यहं शश्वत् शुभं

वा यदि वाशुभम्। नैतद्विपन्नपूर्वं मे मित्रेष्वरिषु चोभयोः ॥२१॥ भविष्यतीदमिति वा यत् ब्रवीमि परन्तप। नान्यथा भूतपूर्वञ्च सत्यवागिति मा विदुः ॥ २२ ॥ लोकसाक्षिकमेतन्मे माहात्म्यं दिक्षु विश्रुतम्। आश्वासनार्थं भवतः प्रोक्तं न श्लाघया नृप ॥२३॥ न ह्यहं श्लाघनो राजन् भूतपूर्वः कदाचन। असदाचरितं ह्येतद्यदात्मानं प्रशंसति ॥ २४ ॥ पाण्डवांश्चैव मत्स्यांश्च पाञ्चालान् केकयैः सह। सात्यकिं वासुदेवञ्च श्रोतासि विजितान् मया ॥ २५ ॥ सरितः सागरं प्राप्य यथा नश्यन्ति सर्वशः। तथैव ते विनङ्क्ष्यन्ति मामासाद्य सहान्वयाः ॥ २६ ॥ परा बुद्धिः परं तेजो वीर्यञ्च परमं मम। परा विद्या परो योगो मम तेभ्यो विशिष्यते ॥ २७ ॥ पितामहश्च द्रोणश्च कृपः शल्यः शलस्तथा। अस्त्रेषु यत् प्रजानन्ति सर्वं तन्मयि विद्यते ॥ २८ ॥ इत्युक्त्वा सञ्जयं भूयः पर्य्यपृच्छत भारत। ज्ञात्वा युयुत्सोः कार्य्याणि प्राप्तकालमरिन्दमः ॥ २९ ॥

इति उद्योगपर्वणि यानसन्धिपर्वणि दुर्योधनवाक्ये षष्टितमोऽध्यायः ॥ ६० ॥

---

ममैष भारः ॥ ४ ॥ निमेषमात्रात्तमृषेः प्रसादमवाप्य पाञ्चाल-करूपमत्स्यान् । निहत्य पार्थान् सह पुत्रपौत्रैर्लोकानहं शस्त्र-जितान् प्रपत्स्ये ॥ ५ ॥ पितामहस्तिष्ठतु ते समीपे द्रोणश्च सर्वे च नरेन्द्रमुख्याः । यथा प्रधानेन बलेन गत्वा पार्थान् हनिष्यामि ममैष भारः ॥ ६ ॥ एवं ब्रुवन्तं तमुवाच भीष्मः किं कत्थसे काल-परीतबुद्धे । न कर्ण जानासि यथा प्रधाने हते हताः स्युर्धृत-राष्ट्रपुत्राः ॥ ७ ॥ यत् खाण्डवं दाहयता कृतं हि कृष्णद्वितीयेन धनञ्जयेन । श्रुत्वैव तत् कर्म नियन्तुमात्मा शक्यस्त्वया वै सह बान्धवेन ॥ ८ ॥ याञ्चापि शक्तिं त्रिदशाधिपस्ते ददौ महात्मा भगवान्महेन्द्रः । भस्मीकृतां तां समरे विशीर्णां चक्राहतां द्रक्ष्यसि केशवेन ॥ ९ ॥ यस्ते शरः सर्पमुखो विभाति सदाग्र्यमाल्यैर्महितः प्रयत्नात् । स पाण्डुपुत्राभिहतः शरौघैः सह त्वया यास्यति कर्ण नाशम् ॥ १० ॥ बाणस्य भौमस्य च कर्ण हन्ता किरीटिनं रक्षति वासुदेवः । यस्त्वादृशानाञ्च वरीयसाञ्च हन्ता रिपूणां तुमुले प्रगाढ़े ॥ ११ ॥

कर्ण उवाच । असंशयं वृष्णिपतिर्यथोक्तस्तथा च भूयांश्च ततो महात्मा । अहं यदुक्तं परुषन्तु किञ्चित् पितामहस्तस्य फलं शृणोतु ॥ १२ ॥ न्यस्यामि शस्त्राणि न जातु सङ्ख्ये पितामहो द्रक्ष्यति मां सभायाम् । त्वयि प्रशान्ते तु मम प्रभावं द्रक्ष्यन्ति सर्वे भुवि भूमिपालाः ॥ १३ ॥

वैशम्पायन उवाच । इत्येवमुक्त्वा स महाधनुष्मान् हित्वा सभां स्वं भवनं जगाम । भीष्मस्तु दुर्य्योधनमेव राजन् मध्ये कुरूणां प्रहसन्नुवाच ॥ १४ ॥ सत्यप्रतिज्ञः किल सूतपुत्रस्तथा स भारं विषहेत कस्मात् । व्यूहं प्रतिव्यूह्य शिरांसि भित्त्वा लोकक्षयं पश्यत भीमसेनात् ॥ १५ ॥ आवन्त्यकालिङ्गजयद्रथेषु चेदिध्वजे तिष्ठति बाह्लिके च । अहं हनिष्यामि सदा परेषां सहस्रशश्चायुत-

तमस्य योधान् ॥ १६ ॥ यदैव रामे भगवत्यनिन्द्ये ब्रह्म ब्रुवाणः कृतवांस्तदस्त्रम् । तदैव धर्मश्च तपश्च नष्टं वैकर्त्तनस्याधमपूरुषस्य ॥ १७ ॥ तथोक्तवाक्ये नृपतीन्द्र भीष्मे निक्षिप्य शस्त्राणि गते च कर्णे । वैचित्रवीर्य्यस्य सुतोऽल्पबुद्धिर्दुर्य्योधनः शान्तनवं बभाषे ॥ १८ ॥

इति उद्योगपर्व्वणि यानसन्धिपर्व्वणि विदुरवाक्ये द्विषष्टोऽध्यायः ॥ ६२ ॥

---

दुर्य्योधन उवाच । सदृशानां मनुष्येषु सर्व्वेषां तुल्यजन्मनाम् । कथमेकान्ततस्तेषां पार्थानां मन्यसे जयम् ॥ १ ॥ वयञ्च तेऽपि तुल्या वै वीर्य्येण च पराक्रमैः । समेन वयसा चैव प्रातिभेन श्रुतेन च ॥ २ ॥ अस्त्रेण योधयोग्यासु शीघ्रत्वे कौशले तथा । सर्व्वे स्म समजातीयाः सर्व्वे मानुषयोनयः ॥ ३ ॥ पितामह विजानीषे पार्थेषु विजयं कथम् । नाहं भवति न द्रोणे न कृपे न च बाह्लिके ॥ ४ ॥ अन्येषु च नरेन्द्रेषु पराक्रम्य समारभे । अहं वैकर्त्तनः कर्णो भ्राता दुःशासनश्च मे ॥ ५ ॥ पाण्डवान् समरे पञ्च हनिष्यामः शितैः शरैः । ततो राजन्महायज्ञैर्विविधैर्भूरिदक्षिणैः ॥ ६ ॥ ब्राह्मणांस्तर्पयिष्यामि गोभिरश्वैर्धनेन च । यदा परिकरिष्यन्ति ऐणेयानिव तन्तुना ॥ ७ ॥ अतरित्तानिव जले बाहुभिर्मामका रणे । पश्यन्तस्ते परांस्तत्र रथनागसमाकुलान् । तदा दर्पं विमोक्ष्यन्ति पाण्डवाः स च केशवः ॥ ८ ॥

विदुर उवाच । इह निःश्रेयसं प्राहुर्वृद्धा निश्चितदर्शिनः । ब्राह्मणस्य विशेषेण दमो धर्म्मः सनातनः ॥ ९ ॥ तस्य दानं क्षमा सिद्धिर्यथावदुपपद्यते । दमो दान तपो ज्ञानमधीतञ्चानुवर्त्तते ॥ १० ॥ दमस्तेजो वर्द्धयति पवित्रं दम उत्तमम् । विपाप्मा वृद्धतेजास्तु पुरुषो विन्दते महत् ॥ ११ ॥ क्रव्यादेभ्य इव भूताना-

महान्तेभ्यः सदा भयम्। तेषाञ्च प्रतिषेधार्थं क्षत्रं सृष्टं स्वयं-
भुवा ॥ १२ ॥ आश्रमेषु चतुर्ष्वाहुर्दममेवोत्तमं व्रतम्। तस्य लिङ्गं
प्रवक्ष्यामि येषां समुदयो दम ॥ १३ ॥ क्षमा धृतिरहिंसा च
समता सत्यमार्जवम्। इन्द्रियाभिजयो धैर्यं मार्दवं ह्रीरचाप-
लम् ॥ १४ ॥ अकार्पण्यमसंरम्भः सन्तोषः श्रद्दधानता। एतानि
यस्य राजेन्द्र स दान्तः पुरुषः स्मृतः ॥ १५ ॥ कामो लोभश्च
दर्पश्च मन्युर्निद्रा विकत्थनम्। मान ईर्ष्या च शोकश्च नैतद्दान्तो
निषेवते ॥ १६ ॥ अजिह्ममशठं शुद्धमेतद्दान्तस्य लक्षणम्। अलो-
लुपस्तथाल्पेप्सुः कामानामविचिन्तिता ॥ १७ ॥ समुद्रकल्पः पुरुषः
स दान्तः परिकीर्त्तितः। सुवृत्तः शीलसम्पन्नः प्रसन्नात्मात्मविद्-
बुधः ॥ १८ ॥ प्राप्येह लोके सम्मानं सुगतिं प्रेत्य गच्छति। अभयं
यस्य भूतेभ्यः सर्वेषामभयं यतः ॥ १९ ॥ स वै परिणतप्रज्ञः
प्रख्यातो मनुजोत्तमः। सर्वभूतहितो मैत्रस्तस्मान्नोद्विजते जनः
॥ २० ॥ समुद्र इव गम्भीरः प्रज्ञातृप्तः प्रशाम्यति। कर्मणा चरितं
पूर्वं सद्भिराचरितञ्च यत् ॥ २१ ॥ तदेवास्थाय मोदन्ते दान्ताः
शमपरायणाः। नैष्कर्म्यं वा समास्थाय ज्ञानतृप्तो जितेन्द्रियः
॥ २२ ॥ कालाकाङ्क्षी चरेल्लोके ब्रह्मभूयाय कल्पते। शकुनीना-
मिवाकाशे पदं नैवोपलभ्यते ॥ २३ ॥ एवं प्रज्ञानतृप्तस्य मुनेर्वर्त्म
न दृश्यते। उत्सृज्य वा गृहान् यस्तु मोक्षमेवाभिमन्यते।
लोकास्तेजोमयास्तस्य कल्पन्ते शाश्वता दिवि ॥ २४ ॥

इति उद्योगपर्वणि यानसन्धिपर्वणि विदुरवाक्ये
द्विषष्टोऽध्यायः ॥ ६२ ॥

---

विदुर उवाच। शकुनीनामिहार्थाय पाशं भूमावयोजयत्।
कश्चिच्छाकुनिकस्तात पूर्वेषामिति शुश्रुम ॥ १ ॥ तस्मिन् द्वौ शकुनौ

बद्धौ युगपत् सहचारिणौ। तावुपादाय तं पाशं जग्मतुः ख-
चरावुभौ ॥ २ ॥ तौ विहायसमाक्रान्तौ दृष्ट्वा शाकुनिकस्तदा।
अन्वधावदनिर्विण्णो येन येन स्म गच्छतः ॥ ३ ॥ तथा तमनु-
धावन्तं मृगयुं शकुनार्थिनम्। आश्रमस्थो मुनिः कश्चिद्ददर्शाथ
कृताह्निकः ॥ ४ ॥ तावन्तरीक्षगौ शीघ्रमनुयान्तं महीचरम्।
श्लोकेनानेन कौरव्य पप्रच्छ स मुनिस्तदा ॥ ५ ॥ विचित्रमिद-
माश्चर्यं मृगहन् प्रतिभाति मे। प्लवमानौ हि खचरौ पदाति-
रनुधावसि ॥ ६ ॥

शाकुनिक उवाच। पाशमेकमुभावेतौ सहितौ हरतो मम।
यत्र वै विवदिष्येते तत्र मे वशमेष्यतः ॥ ७ ॥

विदुर उवाच। तौ विवादमनुप्राप्तौ शकुनौ मृत्युसन्धितौ।
विगृह्य च सुदुर्बुद्धी पृथिव्यां सन्निपेततुः ॥ ८ ॥ तौ युध्यमानौ
संरब्धौ मृत्युपाशवशानुगौ। उपसृत्यापरिज्ञातो जग्राह मृगहा
तदा ॥ ९ ॥ एवं ये ज्ञातयोऽर्थेषु मिथो गच्छन्ति विग्रहम्।
तेऽमित्रवशमायान्ति शकुनाविव विग्रहात् ॥ १० ॥ सम्भोजनं
सङ्कथनं सम्प्रश्नोऽथ समागमः। एतानि ज्ञातिकार्य्याणि न
विरोधः कदाचन ॥ ११ ॥ ये स्म काले सुमनसः सर्वे वृद्धानुपा-
सते। सिंहगुप्तमिवारण्यमप्रधृष्या भवन्ति ते ॥ १२ ॥ येऽर्थं
सततमासाद्य दीना इव समासते। श्रियं ते सम्प्रयच्छन्ति द्विषद्भ्यो
भरतर्षभ ॥ १३ ॥ धूमायन्ते व्यपेतानि ज्वलन्ति सहितानि च।
धृतराष्ट्रोल्मुकानीव ज्ञातयो भरतर्षभ ॥ १४ ॥ इदमन्यत् प्र-
वक्ष्यामि यथा दृष्टं गिरौ मया। श्रुत्वा तदपि कौरव्य यथा श्रेय-
स्तथा कुरु ॥ १५ ॥ वयं किरातैः सहिता गच्छामो गिरिमुत्तरम्।
ब्राह्मणैर्देवकल्पैश्च विद्याजम्भकवार्त्तिकैः ॥ १६ ॥ कुञ्जभूतं गिरिं
सर्वमभितो गन्धमादनम्। दीप्यमानौषधिगणं सिद्धगन्धर्वसेवि-
तम् ॥ १७ ॥ तत्रापश्याम वै सर्वे मधु पीतजमाक्षिकम्। मरुप्रप-

विषमे निविष्टं कुम्भसम्मितम् ॥ १८ ॥ आशीविषैरक्ष्यमाणं कुबेर-दयितं भृशम् । यत् प्राप्य पुरुषो मर्त्योऽप्यमरत्वं नियच्छति ॥१९॥ अचक्षुर्लभते चक्षुर्वृद्धो भवति वै युवा । इति ते कथयन्ति स्म ब्राह्मणा जम्भसाधकाः ॥ २० ॥ ततः किरातास्तदृष्ट्वा प्रार्थयन्तो महीपते। विनेशुर्विषमे तस्मिन् ससर्पे गिरिगह्वरे ॥ २१ ॥ तथैव तव पुत्रोऽयं पृथिवीमेक इच्छति । मधु पश्यति सम्मोहात् प्रपातं नानुपश्यति ॥ २२ ॥ दुर्य्योधनो योद्धुमना समरे सव्यसाचिना । न च पश्यामि तेजोऽस्य विक्रमं वा तथाविधम् ॥ २३ ॥ एकेन रथमास्थाय पृथिवी येन निर्ज्जिता । भीष्मद्रोणप्रभृतयः सन्त्रस्ताः साधुयायिनः ॥ २४ ॥ विराटनगरे भग्ना किन्नु तत् विस्मृतं तव । प्रतीक्षमाणो यो वीरः क्षमते वीक्षितं तव ॥ २५ ॥ द्रुपदो मत्स्य-राजश्च संक्रुद्धश्च धनञ्जयः । न शेषयेयुः समरे वातयुक्ता इवा-ग्नयः ॥ २६ ॥ अङ्के कुरुष्व राजानं धृतराष्ट्र युधिष्ठिरम् । युध्य-तोर्हि द्वयोर्युद्धे नैकान्तेन भवेज्जयः ॥२७॥

इति उद्योगपर्व्वणि यानसन्धिपर्व्वणि विदुरवाक्ये
त्रिषष्टोऽध्यायः ॥ ६३ ॥

---

धृतराष्ट्र उवाच । दुर्य्योधन विजानीहि यत् त्वां वक्ष्यामि पुत्रक । उत्पथं मन्यसे मार्गमनभिज्ञ इवाध्वगः ॥ १ ॥ पञ्चानां पाण्डुपुत्राणां यत्तेजः प्रजिहीर्षसि । पञ्चानामिव भूतानां महतां लोकधारिणाम् ॥ २ ॥ युधिष्ठिरं हि कौन्तेयं परं धर्ममिहा-स्थितम् । परां गतिमसंप्रेक्ष्य न त्वं जेतुमिहार्हसि ॥ ३ ॥ भीम-सेनन्तु कौन्तेय यस्य नास्ति समो बले । रणान्तकं तर्ज्जयसे महावातमिव-द्रुमः ॥ ४ ॥ सर्वशस्त्रभृतां श्रेष्ठं मेरुं शिखरिणा-मिव । युधि गाण्डीवधन्वानं को नु युध्येत बुद्धिमान् ॥ ५ ॥ धृष्ट-

द्युम्नश्च पाञ्चाल्य कमिवाद्य न शातयेत्। यत्तु मध्ये शरान् मुञ्चन् देवराड्घनानिव ॥ ६ ॥ सात्यकिश्चापि दुर्धर्षः सम्मतोऽन्धकवृष्णिषु। ध्वंसयिष्यति ते सेनां पाण्डवेयहिते रतः ॥ ७ ॥ यः पुनः प्रतिमानेन त्रीँल्लोकानतिरिच्यते। तं कृष्णं पुण्डरीकाक्षं कोऽनु युध्येत बुद्धिमान् ॥ ८ ॥ एकतो ह्यस्य दाराश्च ज्ञातयश्च सबान्धवाः। आत्मा च पृथिवी चेयमेकतश्च धनञ्जयः ॥ ९ ॥ वासुदेवोऽपि दुर्धर्षो यतात्मा यस्य पाण्डव। अविषह्यं पृथिव्यापि तद्बलं यत्र केशवः ॥ १० ॥ तिष्ठ तात सतां वाक्ये सुहृदामर्थवादिनाम्। वृद्धं शान्तनवं भीष्मं तितिक्षस्व पितामहम् ॥ ११ ॥ माञ्च ब्रुवाणं शुश्रूष कुरूणामर्थदर्शिनम्। द्रोणं कृपं विकर्णञ्च महाराजञ्च बाह्लिकम् ॥ १२ ॥ एते ह्यपि यथैवाहं गन्तुमर्हसि तांस्तथा। सर्वे धर्मविदो ह्येते तुल्यस्नेहाश्च भारत ॥ १३ ॥ यत्तद्विराटनगरे सह भ्रातृभिरग्रतः। उत्सृज्य गाः सुसम्भ्रान्तं बलं ते समशीर्यत ॥ १४ ॥ यच्चैव नगरे तस्मिन् श्रूयते महदद्भुतम्। एकस्य च बहूनाञ्च पर्य्याप्तं तन्निदर्शनम् ॥ १५ ॥ अर्जुनस्तु तथाकार्षीत् किं पुनः सर्व एव ते। स भ्रातॄनभिजानीहि भर्त्यांश्च परिपालय ॥ १६ ॥

इति उद्योगपर्वणि यानसन्धिपर्वणि धृतराष्ट्रवाक्ये
चतुःषष्टोऽध्यायः ॥ ६४ ॥

---

वैशम्पायन उवाच। एवमुक्त्वा महाप्राज्ञो धृतराष्ट्रः सुयोधनम्। पुनरेव महाभागः सञ्जयं पर्य्यपृच्छत ॥ १ ॥ ब्रूहि सञ्जय यच्छेषं वासुदेवादनन्तरम्। यदर्जुन उवाच त्वां परं कौतूहलं हि मे ॥ २ ॥

सञ्जय उवाच। वासुदेववचः श्रुत्वा कुन्तीपुत्रो धनञ्जयः

उवाच काले दुर्द्धर्षो वासुदेवस्य शृण्वतः ॥ ३ ॥ पितामहं शान्तनवं धृतराष्ट्रञ्च सञ्जय। द्रोणं कृपञ्च कर्णञ्च महाराजञ्च बाह्लिकम् ॥ ४ ॥ द्रौणिञ्च सोमदत्तञ्च शकुनिं चापि सौवलम्। दुःशासनं शलञ्चैव पुरुमित्रं विविंशतिम् ॥ ५ ॥ विकर्णं चित्रसेनञ्च जयत्सेनञ्च पार्थिवम्। विन्दानुविन्दावावन्त्यौ दुर्मुखञ्चापि कौरवम् ॥ ६ ॥ सैन्धवं दुःसहञ्चैव भूरिश्रवसमेव च। भगदत्तञ्च राजानं जलसन्धञ्च पार्थिवम् ॥ ७ ॥ ये चाप्यन्ये पार्थिवास्तत्र योद्धुं समागता कौरवाणां प्रियार्थम्। मुमूर्षवः पाण्डवाग्नौ प्रदीप्ते समानीता धार्त्तराष्ट्रेण होतुम् ॥ ८ ॥ यथान्यायं कौशलं वन्दनञ्च समागता मद्वचनेन वाच्याः। इदं ब्रूयाः सञ्जय राजमध्ये सुयोधनं पापकृतां निधानम् ॥ ९ ॥ अमर्षणं दुर्मतिं राजपुत्रं पापात्मानं धार्त्तराष्ट्रं सुलुब्धम्। सर्वं ममैतद् वचनं समग्रं सहामात्यं सञ्जय श्रावयेथाः ॥ १० ॥ एवं प्रतिष्ठाप्य धनञ्जयो

वैशम्पायन उवाच। दुर्योधने धार्त्तराष्ट्रे तद्वचो नाभिनन्दति। तूष्णीम्भूतेषु सर्वेषु समुत्तस्थुर्नरर्षभाः ॥ १॥ उत्थितेषु महाराज पृथिव्या सर्वराजसु। रहिते सञ्जयं राजा परिप्रष्टुं प्रचक्रमे ॥ २॥ आशंसमानो विजयं तेषां पुत्रवशानुगः। आत्मनश्च परेषाञ्च पाण्डवानाञ्च निश्चयम् ॥ ३॥

धृतराष्ट्र उवाच। गावल्गणे ब्रूहि नः सारफल्गु स्वसेनायां यावदिहास्ति किञ्चित्। त्वं पाण्डवानां निपुणं वेत्थ सर्वं किमेषां ज्यायः किमु तेषां कनीयः ॥ ४॥ त्वमेतयोः सारवित् सर्वदर्शी धर्मार्थयोर्निपुणो निश्चयज्ञः। स मे पृष्टः सञ्जय ब्रूहि सर्वं युध्यमानाः कतरेऽस्मिन् न सन्ति ॥ ५॥

सञ्जय उवाच। न त्वा ब्रूयां रहिते जातु किञ्चिदसूया हि त्वां प्रविशेत राजन्। आनयस्व पितरं महाव्रतं गान्धारीञ्च महिषीमाजमीढ ॥ ६॥ तौ तेऽसूयां विनयेतां नरेन्द्र धर्मज्ञौ तौ निपुणौ निश्चयज्ञौ। तयोस्तु त्वां सन्निधौ तद्वदेयं कृत्स्नं मतं केशवपार्थयोर्यत् ॥ ७॥

वैशम्पायन उवाच। इत्युक्तेन च गान्धारी व्यासश्चात्राजगाम ह। आनीतौ विदुरेणेह सभां शीघ्रं प्रवेशितौ ॥ ८॥ ततस्तन्मतमाज्ञाय सञ्जयस्यात्मजस्य च। अभ्युपेत्य महाप्राज्ञः कृष्णद्वैपायनोऽब्रवीत् ॥ ९॥

व्यास उवाच। संपृच्छते धृतराष्ट्राय सञ्जय आचक्ष्व सर्वं यावदेषोऽनुयुङ्क्ते। सर्वं तावद्वेत्थ तस्मिन् यथावद्यथातत्त्वं वासुदेवेऽर्जुने च ॥ १०॥

इति उद्योगपर्वणि यानसन्धिपर्वणि सञ्जयवाक्ये षडधिकषष्टोऽध्यायः ॥ ६६॥

---

सञ्जय उवाच। अर्जुनो वासुदेवश्च धन्विनौ परमार्च्चितौ। कामादन्यत्र सम्भूतौ सर्वभावाय सम्मतौ ॥ १ ॥ व्यामान्तरं समास्थाय यथायुक्तं मनस्विनः। चक्रं तद्वासुदेवस्य मायया वर्त्तते विभोः ॥ २ ॥ सापह्नवं कौरवेषु पाण्डवानां सुसम्मतम्। साराऽसारबलं ज्ञातुं तेजःपुञ्जावभासितम् ॥ ३ ॥ नरकं शम्बरञ्चैव कंसं चैद्यञ्च माधव। जितवान् घोरसङ्काशान् क्रीड़न्निव महाबलः ॥ ४ ॥ पृथिवीञ्चान्तरीक्षञ्च द्याञ्चैव पुरुषोत्तमः। मनसैव विशिष्टात्मा नयत्यात्मवशं वशी ॥ ५ ॥ भूयो भूयश्च यद्राजन् पृच्छसे पाण्डवान् प्रति। साराऽसारं बलं ज्ञातुं तत् समासेन मे शृणु ॥ ६ ॥ एकतो वा जगत् कृत्स्नमेकतो वा जनार्द्दनः। सारतो जगतः कृत्स्नादतिरिक्तो जनार्द्दनः ॥ ७ ॥ भस्म कुर्य्याज्जगदिदं मनसैव जनार्द्दनः। न च कृत्स्नं जगच्छक्तं भस्मीकर्त्तुं जनार्द्दनम् ॥ ८ ॥ यतः सत्यं यतो धर्मो यतो ह्रीरार्ज्जवं यतः। ततो भवति गोविन्दो यतः कृष्णस्ततो जयः ॥ ९ ॥ पृथिवीं चान्तरीक्षञ्च दिवञ्च पुरुषोत्तमः। विचेष्टयति भूतात्मा क्रीड़न्निव जनार्द्दनः ॥ १० ॥ स कृत्वा पाण्डवान् सत्रं लोकं सम्मोहयन्निव। अधर्मनिरतान् मूढ़ान् दग्धुमिच्छति ते सुतान् ॥ ११ ॥ कालचक्रं जगच्चक्रं युगचक्रञ्च केशवः। आत्मयोगेन भगवान् परिवर्त्तयतेऽनिशम् ॥ १२ ॥ कालस्य च हि मृत्योश्च जङ्गमस्थावरस्य च। ईशते भगवानेकः सत्यमेतत् ब्रवीमि ते ॥ १३ ॥ ईशन्नपि महायोगी सर्वस्य जगतो हरिः। कर्माण्यारभते कर्त्तुं कीनाश इव वर्द्धनः ॥ १४ ॥ तेन वञ्चयते लोकान्मायायोगेन केशवः। ये तमेव प्रपद्यन्ते तेन मुह्यन्ति मानवाः ॥ १५ ॥

इति उद्योगपर्व्वणि यानसन्धिपर्व्वणि सञ्जयवाक्ये सप्तषष्टोऽध्यायः ॥ ६७ ॥

---

धृतराष्ट्र उवाच। कथं त्वं माधवं वेत्थ सर्वलोकमहेश्वरम्।
कथमेनं न वेदाहं तन्ममाचक्ष्व सञ्जय ॥ १ ॥

सञ्जय उवाच। शृणु राजन्न ते विद्या मम विद्या न हीयते।
विद्याहीनो तमोध्वस्तो नाभिजानासि केशवम् ॥ २ ॥ विद्यया
तात जानामि त्रियुगं मधुसूदनम्। कर्त्तारमकृतं देवं भूतानां
प्रभवाप्ययम् ॥ ३ ॥

धृतराष्ट्र उवाच। गावल्गणेऽत्र का भक्तिर्या ते नित्या जना-
र्द्दने। यया त्वमभिजानासि त्रियुगं मधुसूदनम् ॥ ४ ॥

सञ्जय उवाच। मायां न सेवे भद्रं ते न वृथा धर्ममाचरे।
शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्द्दनम् ॥ ५ ॥

धृतराष्ट्र उवाच। दुर्योधन हृषीकेशं प्रपद्यस्व जनार्द्दनम्।
आप्तो नः सञ्जयस्तात शरणं गच्छ केशवम् ॥ ६ ॥

दुर्योधन उवाच। भगवान्देवकीपुत्रो लोकांश्चेन्निहनिष्यति।
प्रवदन्नर्जुने सख्यं नाहं गच्छेऽद्य केशवम् ॥ ७ ॥

धृतराष्ट्र उवाच। अवाक् गान्धारि पुत्रस्ते गच्छत्येष दुर्-
मतिः। ईर्षुर्दुरात्मा मानी च श्रेयसां वचनातिगः ॥ ८ ॥

गान्धार्युवाच। ऐश्वर्यकाम दुष्टात्मन् वृद्धानां शासनातिग।
ऐश्वर्यजीविते हित्वा पितरं माञ्च बालिश ॥ ९ ॥ वर्द्धयन् दुर्हृदां
प्रीतिं माञ्च शोकेन दाहयन्। निहतो भीमसेनेन स्मर्त्तासि वचनं
पितुः ॥ १० ॥

व्यास उवाच। प्रियोऽसि राजन् कृष्णस्य धृतराष्ट्र निबोध
मे। यस्य ते सञ्जयो दूतो यस्त्वां श्रेयसि योक्ष्यते ॥ ११ ॥
जानात्येष हृषीकेशं पुराणं यच्च वै परम्। शुश्रूषमाणमेकाग्रं
मोक्ष्यते महतो भयात् ॥ १२ ॥ वैचित्रवीर्य्य पुरुषाः क्रोधहर्ष-
समावृताः। सिता बहुविधैः पाशैर्ये न तुष्टाः स्वकैर्धनैः ॥ १३ ॥
यमस्य वशमायान्ति काममूढ़ा पुनः पुनः। अन्धनेत्रा यथैवान्धा

नीयमानाः स्वकर्मभिः ॥ १४ ॥ एष एकायनः पन्था येन यान्ति, मनीषिणः। तं दृष्ट्वा मृत्युमत्येति महांस्तत्र न सज्जति ॥ १५ ॥

धृतराष्ट्र उवाच। अङ्ग सञ्जय मे शंस पन्थानमकुतोभयम्। येन गत्वा हृषीकेशं प्राप्नुयां सिद्धिमुत्तमाम् ॥ १६ ॥

सञ्जय उवाच। नाकृतात्मा कृतात्मानं जातु विद्याज्जनार्दनम्। आत्मनस्तु क्रियोपायो नान्यत्रेन्द्रियनिग्रहात् ॥ १७ ॥ इन्द्रियाणामुदीर्णानां कामत्यागोऽप्रमादतः। अप्रमादो विहिंसा च ज्ञानयोनिरसंशयम् ॥ १८ ॥ इन्द्रियाणां यमे यत्तो भव राजन्नतन्द्रितः। बुद्धिश्च ते मा च्यवतु नियच्छैनां यतस्ततः ॥ १९ ॥ एतज्ज्ञानं विदुर्विप्रा ध्रुवमिन्द्रियधारणम्। एतज्ज्ञानञ्च पन्थाश्च येन यान्ति मनीषिणः ॥ २० ॥ अप्राप्यः केशवो राजन्निन्द्रियैरजितैर्नृभिः। आगमाधिगतात् योगात् वशी तत्त्वे प्रसीदति ॥ २१ ॥

इति उद्योगपर्वणि यानसन्धिपर्वणि सञ्जयवाक्ये अष्टषष्टोऽध्यायः ॥ ६८ ॥

---

धृतराष्ट्र उवाच। भूयो मे पुण्डरीकाक्षं सञ्जयाचक्ष्व पृच्छतः। नामकर्मार्थवित्तात प्राप्नुयां पुरुषोत्तमम् ॥ १ ॥

सञ्जय उवाच। श्रुतं मे वासुदेवस्य नामनिर्वचनं शुभम्। यावत्तत्राभिजानेऽहमप्रमेयो हि केशवः ॥ २ ॥ वसनात् सर्वभूतानां वसुत्वाद्देवयोनितः। वासुदेवस्ततो वेद्यो बृहत्त्वात् विष्णुरुच्यते ॥ ३ ॥ मौनाद्ध्यानाच्च योगाच्च विद्धि भारत माधवम्। सर्वतत्त्वमयत्वाच्च मधुहा मधुसूदनः ॥ ४ ॥ कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः। विष्णुस्तद्भावयोगाच्च कृष्णो भवति सात्वतः ॥ ५ ॥ पुण्डरीकं परं धाम नित्यमक्षयमव्ययम्। तद्भावात् पुण्डरीकाक्षो दस्युत्रासाज्जनार्दनः ॥ ६ ॥ यतः सत्त्वान्न च्यवते

यच्च सत्त्वान्न क्षीयते। सत्त्वतः सात्त्वतस्तस्मादार्षभादृषभेक्षण
॥ ७ ॥ न जायते जनित्र्यायमजस्तस्मादनीकजित्। देवानां
स्वप्रकाशत्वात् दमाद्दामोदरो विभुः ॥ ८ ॥ हर्षात् सुखात्
सुखैश्वर्यात् हृषीकेशत्वमश्नुते। बाहुभ्यां रोदसी बिभ्रन्महा-
बाहुरिति स्मृतः ॥ ९ ॥ अधो न क्षीयते जातु यस्मात्तस्मादधो-
क्षजः। नराणामयनाच्चापि ततो नारायणः स्मृतः ॥ १० ॥ पूर-
णात् सदनाच्चापि ततोऽसौ पुरुषोत्तमः। असतश्च सतश्चैव सर्वस्य
प्रभवाप्ययात् ॥ ११ ॥ सर्वस्य च सदा ज्ञानात् सर्वमेतं प्रचक्षते।
सत्ये प्रतिष्ठितः कृष्णः सत्यमत्र प्रतिष्ठितम् ॥ १२ ॥ सत्यात् सत्यञ्च
गोविन्दस्तस्मात् सत्योऽपि नामतः। विष्णुर्विक्रमणाद्देवो जयना-
ज्जिष्णुरुच्यते ॥ १३ ॥ शाश्वतत्वादनन्तश्च गोविन्दो वेदनाद्
गवाम्। अतत्त्वं कुरुते तत्त्वं तेन मोहयते प्रजाः ॥ १४ ॥ एवं
विधो धर्मनित्यो भगवान्मधुसूदनः। आगन्ता हि महाबाहु-
रानृशंस्यार्थमच्युतः ॥ १५ ॥

इति उद्योगपर्वणि यानसन्धिपर्वणि सञ्जयवाक्ये
एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

---

धृतराष्ट्र उवाच। चक्षुष्मतां वै स्पृहयामि सञ्जय द्रक्ष्यन्ति
ये वासुदेवं समीपे। विभ्राजमानं वपुषा परेण प्रकाशयन्तं
प्रदिशो दिशश्च ॥ १ ॥ ईरयन्तं भारतीं भारतानामभ्यर्चनीयां
शङ्करीं सृञ्जयानाम्। बुभूषद्भिर्ग्रहणीयामनिन्द्यां परासूनामग्रह-
णीयरूपाम् ॥ २ ॥ समुद्यन्तं सात्वतमेकवीरं प्रणेतारमृष-
भं यादवानाम्। निहन्तारं क्षोभणं शात्रवाणां मुष्णन्तञ्च द्विषतां वै
यशांसि ॥ ३ ॥ द्रष्टारो हि कुरवस्तं समेता महात्मानं शत्रुह-
णं वरेण्यम्। ब्रुवन्तं वाचमनृशंसरूपां वृष्णिश्रेष्ठं मोहयन्तं मदी-

यान् ॥ ४ ॥ ऋषिं सनातनतमं विपश्चितं वाचः समुद्रं कलशं यतीनाम् । अरिष्टनेमिं गरुड़ं सुपर्णं हरिं प्रजानां भुवनस्य धाम ॥ ५ ॥ सहस्रशीर्षं पुरुषं पुराणमनादिमध्यान्तमनन्तकीर्त्तिम् । शुक्रस्य धातारमजञ्च नित्यं परं परेषां शरणं प्रपद्ये ॥ ६ ॥ त्रैलोक्यनिर्माणकरं जनित्रं देवासुराणामथ नागरक्षसाम् । नराधिपानां विदुषां प्रधानमिन्द्रानुजं तं शरणं प्रपद्ये ॥७॥

इति उद्योगपर्व्वणि यानसन्धिपर्व्वणि धृतराष्ट्रवाक्ये सप्ततितमोऽध्यायः समाप्तञ्च यानसन्धिपर्व्व ॥७०॥

---

अथ भगवद्यानपर्व्व ॥

वैशम्पायन उवाच । सञ्जये प्रतियाते तु धर्मराजो युधिष्ठिर । अभ्यभाषत दाशार्हमृषभं सर्व्वसात्वताम् ॥ १ ॥ अयं च कालः सम्प्राप्तो मित्राणां मित्रवत्सल । न च त्वदन्यं पश्यामि यो न आपत्सु तारयेत् ॥ २ ॥ त्वां हि माधवमाश्रित्य निर्भया मोघदर्पितम् । धार्त्तराष्ट्रं सहामात्यं स्वमंशमनुयुङ्क्ष्महे ॥ ३ ॥ यथा हि सर्व्वास्वापत्सु पासि वृष्णीनरिन्दम । तथा ते पाण्डवा रक्ष्याः पाह्यस्मान्महतो भयात् ॥ ४ ॥

श्रीभगवानुवाच । अयमस्मि महाबाहो ब्रूहि यत्ते विवक्षितम् । करिष्यामि हि तत् सर्व्वं यत् त्वं वक्ष्यसि भारत ॥ ५ ॥

युधिष्ठिर उवाच । श्रुतं ते धृतराष्ट्रस्य सपुत्रस्य चिकीर्षितम् । एतद्धि सकलं कृष्ण सञ्जयो मां यदब्रवीत् ॥ ६ ॥ तन्मतं धृतराष्ट्रस्य सोऽस्यात्मा विवृतान्तरः । यथोक्तं दूत आचष्टे वध्यः स्यादन्यथा ब्रुवन् ॥ ७ ॥ अप्रदानेन राज्यस्य शान्तिमस्मासु मार्गति । लुब्धः पापेन मनसा चरन्नसममात्मनः ॥ ८ ॥ यत्तत् द्वादशवर्षाणि वनेष्वध्युषिता वयम् । छद्मना शरदञ्चैका धृत-

यश्च सत्त्वान्न हीयते । सत्त्वत सात्वतस्तस्मादार्षभाद् वृषभेक्षण ॥ ७ ॥ न जायते जनित्रायमजस्तस्मादनीकजित । देवाना स्वप्रकाशत्वात दमाद्दामोदरो विभु ॥ ८ ॥ हर्षात सुखात सुखैश्वर्यात् हृषीकेशत्वमश्नुते । बाहुभ्या रोदसी बिभ्रन्महा बाहुरिति स्मृत ॥ ९ ॥ अधो न क्षीयते जातु यस्मात्तस्मादधो क्षज । नराणामयनाच्चापि ततो नारायण स्मृत ॥ १० ॥ पूर णात सदनाच्चापि ततोऽसौ पुरुषोत्तम । असतश्च सतश्चैव सर्वस्य प्रभवाप्ययात ॥ ११ ॥ सर्वस्य च सदा ज्ञानात् सर्वमेत प्रचक्षते । सत्ये प्रतिष्ठित कृष्ण सत्यमत्र प्रतिष्ठितम् ॥ १२ ॥ सत्यात सत्यश्च गोविन्दस्तस्मात सत्योऽपि नामत । विष्णुर्विक्रमणाद्देवो जयना ज्जिष्णुरुच्यते ॥ १३ ॥ शाश्वतत्वादनन्तश्च गोविन्दो वेदनात गवाम् । अतत्त्व कुरुते तत्त्व तेन मोहयते प्रजा ॥ १४ ॥ एव विधो धर्मनित्यो भगवान्मधुसूदन । आगन्ता हि महाबाहु रानृशस्यार्थमच्युत ॥ १५ ॥

इति उद्योगपर्वणि यानसन्धिपर्वणि सञ्जयवाक्ये एकोनसप्ततोऽध्याय ॥ ६९ ॥

---

धृतराष्ट्र उवाच । चक्षुष्मता वै स्पृहयामि सञ्जय द्रक्ष्यन्ति ये वासुदेव समीपे । विभ्राजमान वपुषा परेण प्रकाशयन्त प्रदिशो दिशश्च ॥ १ ॥ ईरयन्त भारतीं भारतानामभ्यर्चनीया शङ्करीं सृञ्जयानाम् । बुभूषद्भिर्ग्रहणीयामनिन्द्या परासूनामग्रह णीयरूपाम ॥ २ ॥ समुद्यन्त सात्वतमेकवीर प्रणेतारमृषभ यादवानाम । निहन्तार क्षोभण शात्रवाणा मुष्णन्तञ्च द्विषता वै यशासि ॥ ३ ॥ द्रष्टारो हि कुरवस्त समेता महात्मान शत्रुहणा वरेण्यम । ब्रुवन्त वाचमनृशसरूपा वृष्णिश्रेष्ठ मोहयन्त मदी

यान् ॥ ४ ॥ ऋषिं सनातनतमं विपश्चितं वाचः समुद्रं कलशं यतीनाम् । अरिष्टनेमिं गरुडं सुपर्णं हरिं प्रजानां भुवनस्य धाम ॥ ५ ॥ सहस्रशीर्षं पुरुषं पुराणमनादिमध्यान्तमनन्तकीर्त्तिम् । शुक्रस्य धातारमजं नित्यं परं परेषां शरणं प्रपद्ये ॥ ६ ॥ त्रैलोक्यनिर्माणकरं जनित्रं देवासुराणामथ नागरक्षसाम् । नराधिपानां विदुषां प्रधानमिन्द्रानुजं तं शरणं प्रपद्ये ॥७॥

इति उद्योगपर्वणि यानसन्धिपर्वणि धृतराष्ट्रवाक्ये सप्ततितमोऽध्यायः समाप्तञ्च यानसन्धिपर्व ॥७०॥

---

अथ भगवद्यानपर्व ॥

वैशम्पायन उवाच। सञ्जये प्रतियाते तु धर्मराजो युधिष्ठिरः। अभ्यभाषत दाशार्हमृषभं सर्वसात्वताम् ॥ १ ॥ अयं स कालः सम्प्राप्तो मित्राणां मित्रवत्सल। न च त्वदन्यं पश्यामि यो न आपत्सु तारयेत् ॥ २ ॥ त्वां हि माधवमाश्रित्य निर्भया मोघदर्पितम्। धार्त्तराष्ट्रं सहामात्यं स्वमंशमनुयुङ्क्ष्महे ॥ ३ ॥ यथा हि सर्वास्वापत्सु पासि वृष्णीनरिन्दम। तथा ते पाण्डवा रक्ष्या पाह्यस्मान्महतो भयात् ॥ ४ ॥

श्रीभगवानुवाच। अयमस्मि महाबाहो ब्रूहि यत्ते विवक्षितम्। करिष्यामि हि तत् सर्वं यत् त्वं वक्ष्यसि भारत ॥ ५ ॥

युधिष्ठिर उवाच। श्रुतं ते धृतराष्ट्रस्य सपुत्रस्य चिकीर्षितम्। एतद्धि सकलं कृष्ण सञ्जयो मां यदब्रवीत् ॥ ६ ॥ तन्मतं धृतराष्ट्रस्य सोऽस्यात्मा विवृतान्तरः। यथोक्तं दूत आचष्टे वध्यः स्यादन्यथा ब्रुवन् ॥ ७ ॥ अप्रदानेन राज्यस्य शान्तिमस्मासु मार्गति। लुब्धः पापेन मनसा चरन्नसममात्मनः ॥ ८ ॥ यत्तत् द्वादशवर्षाणि वनेष्वध्युषिता वयम्। छद्मना शरदञ्चैकां धृत-

राष्ट्रस्य शासनात् ॥ ९ ॥ स्थिता नः समये तस्मिन् धृतराष्ट्र इति प्रभो । नाहाद्य समयं कृष्ण तद्धि नो ब्राह्मणा विदुः ॥ १० ॥ वृद्धो राजा धृतराष्ट्रः स्वधर्मं नानुपश्यति । वश्यत्वात् पुत्रगृद्धित्वान्मन्दस्यान्वेति शासनम् ॥ ११ ॥ सुयोधनमते तिष्ठन्राजास्मासु जनार्दन । मिथ्या चरति लुब्धः सन् चरन् हि प्रियमात्मनः ॥१२॥ इतो दुःखतरं किन्नु यदहं मातरन्ततः । संविधातुं न शक्नोमि मित्राणां वा जनार्दन ॥ १३ ॥ काशिभिश्चेदिपाञ्चालैर्मत्स्यैश्च मधुसूदन । भवता चैव नाथेन पञ्च ग्रामा वृता मया ॥ १४ ॥ अविस्थलं वृकस्थलं माकन्दी वारणावतम् । अवसानञ्च गोविन्द कञ्चिदेवात्र पञ्चमम् ॥ १५ ॥ पञ्च नस्तात दीयन्तां ग्रामा वा नगराणि वा । वसेम सहिता येषु मा च नो भरता नशन् ॥ १६ ॥ न च तानपि दुष्टात्मा धार्तराष्ट्रोऽनुमन्यते । स्वाम्यमात्मनि मत्वासावतो दुःखतरन्नु किम् ॥ १७ ॥ कुले जातस्य वृद्धस्य परवित्तेषु गृध्यतः । लोभः प्रज्ञानमाहन्ति प्रज्ञा हन्ति हता ह्रियम् ॥ १८ ॥ ह्रीर्हता बाधते धर्मं धर्मो हन्ति हतः श्रियम् । श्रीर्हता पुरुषं हन्ति पुरुषस्याधनं वधः ॥ १९ ॥ अधनाद्धि निवर्तन्ते ज्ञातयः सुहृदो द्विजाः । अपुष्पादफलात् वृक्षात् यथा कृष्ण पतत्रिणः ॥ २० ॥ एतच्च मरणं तात यदस्मात् पतितादिव । ज्ञातयो विनिवर्तन्ते प्रेतसत्त्वादिवासवः ॥ २१ ॥ नातः पापीयसीं काञ्चिदवस्थां शम्बरोऽब्रवीत् । यत्र नैवाद्य न प्रातर्भोजनं प्रतिदृश्यते ॥ २२ ॥ धनमाहुः परं धर्मं धने सर्वं प्रतिष्ठितम् । जीवन्ति धनिनो लोके मृता ये त्वधना नराः ॥ २३ ॥ ये धनादपकर्षन्ति नरं स्वबलमास्थिताः । ते धर्ममर्थं कामञ्च प्रमथ्नन्ति नरञ्च तम् ॥ २४ ॥ एतामवस्थां प्राप्यैके मरणं वव्रिरे जनाः । ग्रामायैके वनायैके नाशायैके प्रवव्रजुः ॥ २५ ॥ उन्मादमेके पुष्यन्ति यान्त्यन्ये द्विषतां वशम् । दास्यमेके च गच्छन्ति परेषा-

मर्थहेतुना ॥ २६ ॥ आपदेवास्य मरणात् पुरुषस्य गरीयसी । श्रियो विनाशस्तद्धास्य निमित्तं धर्मकामयोः ॥ २७ ॥ यदस्य धर्म्यं मरणं शाश्वतं लोकवर्त्म तत् । समन्तात् सर्वभूतानां न तदत्येति कश्चन ॥ २८ ॥ न तथा बाध्यते कृष्ण प्रकृत्या निर्धनो जनः । यथा भद्रां श्रियं प्राप्य तया हीनः सुखैधितः ॥ २९ ॥ स तदात्मापराधेन सम्प्राप्तो व्यसनं महत् । सेन्द्रान् गर्हयते देवानात्मानञ्च कथञ्चन ॥ ३० ॥ न चास्य सर्वशास्त्राणि प्रभवन्ति निवर्हणे । सोऽभिक्रुध्यति भृत्यानां सुहृदश्चाभ्यसूयति ॥ ३१ ॥ तन्तदा मन्युरेवेति स भूयः सम्प्रमुह्यति । स मोहवशमापन्नः क्रूरं कर्म निषेवते ॥ ३२ ॥ पापकर्मतया चैव सङ्करं तेन पुष्यति । सङ्करो नरकायैव सा काष्ठा पापकर्मणाम् ॥ ३३ ॥ न चेत् प्रबुध्यते कृष्ण नरकायैव गच्छति । तस्य प्रबोधः प्रज्ञैव प्रज्ञाचक्षुस्तरिष्यति ॥ ३४ ॥ प्रज्ञालाभे हि पुरुषः शास्त्राण्येवान्ववेक्षते । शास्त्रनिष्ठः पुनर्धर्मं तस्य ह्रीरङ्गमुत्तमम् ॥ ३५ ॥ ह्रीमान् हि पापं प्रद्वेष्टि तस्य श्रीरभिवर्द्धते । श्रीमान् स यावद्भवति तावद्भवति पूरुषः ॥ ३६ ॥ धर्मनित्यः प्रशान्तात्मा कार्ययोगवहः सदा । नाधर्मे कुरुते बुद्धिं न च पापे प्रवर्त्तते । ३७ ॥ अह्रीको वा विमूढो वा नैव स्त्री न पुनः पुमान् । नास्याधिकारो धर्मेऽस्ति यथा शूद्रस्तथैव सः ॥ ३८ ॥ ह्रीमान् नमति देवांश्च पितॄनात्मानमेव च । तेनामृतत्वं व्रजति सा काष्ठा पुण्यकर्मणाम् ॥ ३९ ॥ तदिदं मयि ते दृष्टं प्रत्यक्षं मधुसूदन । यथा राज्यात् परिभ्रष्टो वसामि वसतीरिमाः । ४० ॥ ते वयं न श्रियं हातुमलं न्यायेन केनचित् । अत्र नो यतमानानां वधश्चेदपि साधु तत् ॥ ४१ ॥ तत्र नः प्रथमः कल्पो यद्वयं ते च माधव । प्रशान्ताः समभूताश्च श्रियं तामश्नुवीमहि ॥ ४२ ॥ तत्रैषा परमा काष्ठा रौद्रकर्मक्षयोदया । यद्वयं कौरवान् हत्वा तानि राष्ट्राण्यवाप्नुम ॥४३॥

ये पुनः स्युरसम्बद्धा अनार्याः कृष्ण शत्रवः। तेषामप्यवधः कार्यः किं पुनर्ये स्युरीदृशाः ॥ ४४ ॥ ज्ञातयश्चैव भूयिष्ठाः सहायो गुरवश्च नः। तेषां वधोऽतिपापीयान् किं नु युद्धेऽस्ति शोभनम् ॥ ४५ ॥ पापः क्षत्रियधर्मोऽयं वयञ्च क्षत्रबन्धवः। स नोऽस्वधर्मो धर्मो वा वृत्तिरन्या विगर्हिता ॥ ४६ ॥ शूद्रः करोति शुश्रूषां वैश्यो विपणिजीविकाम्। वयं वधेन जीवाम कपालं ब्राह्मणैर्वृतम् ॥ ४७ ॥ क्षत्रियान् क्षत्रियो हन्ति मत्स्यो मत्स्येन जीवति। श्वा श्वानं हन्ति दाशार्ह पश्य धर्मो यथागतः ॥४८॥ युद्धे कृष्ण कलिर्नित्यं प्राणाः सीदन्ति संयुगे बलन्तु नीतिमाधाय युद्धे जयपराजयौ ॥ ४९ ॥ नात्मच्छन्देन भूतानां जीवितं मरणं तथा। नाप्यकाले सुखं प्राप्यं दुःखं वापि यदूत्तम ॥ ५० ॥ एको ह्यपि बहून् हन्ति घ्नन्त्येकं बहवोऽप्युत। शूरं कापुरुषो हन्ति अयशस्वी यशस्विनम् ॥ ५१ ॥ जयो नैवोभयोर्दृष्टो नोभयोश्च पराजयः। तथैवापचयो दृष्टो व्यपयाने क्षयव्ययौ ॥ ५२ ॥ सर्वथा वृजिनं युद्धं को घ्नन्न प्रतिहन्यते। हतस्य च हृषीकेश समौ जयपराजयौ ॥ ५३ ॥ पराजयश्च मरणात् मन्ये नैव विशिष्यते। यस्य स्याद्विजयः कृष्ण तस्याप्यपचयो ध्रुवम् ॥ ५४ ॥ अन्ततो दयितं घ्नन्ति केचिदप्यपरे जनाः। तस्याङ्ग बलहीनस्य पुत्रान् भ्रातॄनपश्यतः ॥ ५५ ॥ निर्वेदो जीविते कृष्ण सर्वतश्चोपजायते। ये ह्येव धीरा ह्रीमन्त आर्याः करुणवेदिनः ॥ ५६ ॥ त एव युद्धे हन्यन्ते यवीयान्मुच्यते जनः। हत्वाप्यनुशयो नित्यं परानपि जनार्दन ॥ ५७ ॥ अनुबन्धश्च पापोऽत्र शेषश्चाप्यवशिष्यते। शेषो हि बलमासाद्य न शेषमवशेषयेत् ॥ ५८ ॥ सर्वोच्छेदे च यतते वैरस्यान्तविधित्सया। जयो वैरं प्रसृजति दुःखमास्ते पराजितः ॥ ५९ ॥ सुखं प्रशान्तः स्वपिति हित्वा जयपराजयौ। जातवैरश्च पुरुषो दुःखं स्वपिति नित्यदा ॥ ६० ॥

अनिर्व्वतेन मनसा सर्पं इव वेश्मनि । उत्सादयति यः सर्व्वं यशसा स विमुच्यते ॥ ६१ ॥ अकीर्त्तिं सर्व्वभूतेषु शाश्वतीं स नियच्छति । न हि वैराणि शाम्यन्ति दीर्घकालं धृतान्यपि ॥६२॥ आख्यातारश्च विद्यन्ते पुमांश्चेद्विद्यते कुले । न चापि वैरं वैरेण केशव व्युपशाम्यति ॥ ६३ ॥ हविषाग्निर्यथा कृष्ण भूय एवाभिवर्द्धते । अतोऽन्यथा नास्ति शान्तिर्नित्यमन्तरमन्ततः ॥ ६४ ॥ अन्तरं लिप्समानानामयं दोषो निरन्तरः । पौरुषेयो हि बलवानाधिर्हृदयबाधनः ॥ ६५ ॥ तस्य त्यागेन वा शान्तिर्मरणेनापि वा भवेत् । अथ वा मूलघातेन द्विषतां मधुसूदन ॥ ६६ ॥ फलनिर्वृत्तिरिद्धा स्यात्तन्नृशंसतरं भवेत् । या तु त्यागेन शान्तिः स्यात्तदृते वध एव सः ॥ ६७ ॥ संशयाच्च समुच्छेदात् द्विषतामात्मनस्तथा । न च त्यक्तुं तदिच्छामो न चेच्छामः कुलक्षयम् ॥ ६८ ॥ अत्र या प्रणिपातेन शान्तिः सैव गरीयसी । सर्व्वथा यतमानानामयुद्धमभिकाङ्क्षताम् ॥ ६९ ॥ सान्त्वे प्रतिहते युद्धं प्रसिद्धं नापराक्रमः । प्रतिघातेन सान्त्वस्य दारुणं सम्प्रवर्त्तते ॥ ७० ॥ तच्छुनामिव सम्पाते पण्डितैरुपलक्षितम् । लाङ्गूलचालनं चूड़ा प्रतिवाचो विवर्त्तनम् ॥ ७१ ॥ दन्तदर्शनमारावस्ततो युद्धं प्रवर्त्तते । तत्र यो बलवान् कृष्ण जित्वा सोऽत्ति तदामिषम् ॥ ७२ ॥ एवमेव मनुष्येषु विशेषो नास्ति कश्चन । सर्व्वथा त्वेतदुचितं दुर्व्वलेषु बलीयसाम् ॥ ७३ ॥ अनादरो विरोधश्च प्रणिपाती हि दुर्व्वलः । पिता राजा च वृद्धश्च सर्व्वथा मानमर्हति ॥ ७४ ॥ तस्मान्मान्यश्च पूज्यश्च धृतराष्ट्रो जनार्द्दन । पुत्रस्नेहश्च बलवान् धृतराष्ट्रस्य माधव ॥ ७५ ॥ स पुत्रवशमापन्न प्रणिपातं प्रहास्यति । तत्र किं मन्यसे कृष्ण प्राप्तकालमनन्तरम् ॥ ७६ ॥ कथमर्थाच्च धर्माच्च न हीयेमहि माधव । ईदृशे ह्यर्थकृच्छ्रेऽस्मिन् कमन्यं मधुसूदन ॥ ७७ ॥ उपसम्प्रष्टुमिच्छामि

लाहते पुरुषोत्तम। प्रियश्च प्रियकामश्च गतिज्ञः सर्वकर्मणाम्। को हि कृष्णास्ति नस्त्वादृक् सर्वनिश्चयतत्त्ववित्॥ ७८॥

वैशम्पायन उवाच। एवमुक्तः प्रत्युवाच धर्मराजं जनार्दनः। उभयोरेव वामर्थं यास्यामि कुरुसंसदम्॥ ७९॥ शमं तत्र लभेयञ्चेत् युष्मदर्थमहापयन्। पुण्यं मे सुमहद्राजंश्चरितं स्यान्महाफलम्॥ ८०॥ मोचयेयं मृत्युपाशात् संरब्धान् कुरुसृञ्जयान्। पाण्डवान् धार्त्तराष्ट्रांश्च सर्वाञ्च पृथिवीमिमाम्॥ ८१॥

युधिष्ठिर उवाच। न ममैतन्मतं कृष्ण यत्त्वं यायाः कुरून् प्रति। सुयोधनः सूक्तमपि न करिष्यति ते वचः॥ ८२॥ समेतं पार्थिवं चत्र दुर्य्योधनवशानुगम्। तेषां मध्यावतरणं तव कृष्ण न रोचये॥ ८३॥ न हि नः प्रीणयत् द्रव्यं न देवत्वं कुतः सुखम्। न च सर्वामरैश्वर्य्यं तव द्रोहेण माधव॥ ८४॥

श्रीभगवानुवाच। जानाम्येतां महाराज धार्त्तराष्ट्रस्य पापताम्। अवाच्यास्तु भविष्यामः सर्वलोके महीक्षिताम्॥ ८५॥ न चापि मम पर्य्याप्ताः सहिताः सर्वपार्थिवाः। क्रुद्धस्य संयुगे स्थातुं सिंहस्येवेतरे मृगाः॥ ८६॥ अथ चेत्ते प्रवर्त्तेरन् मयि किञ्चिदसाम्प्रतम्। निर्द्दहेयं कुरून् सर्वानिति मे धीयते मतिः॥ ८७॥ न जातु गमनं तत्र भवेत् पार्थ निरर्थकम्। अर्थप्राप्तिः कदाचित् स्यादन्ततो वाप्यवाच्यता॥ ८८॥

युधिष्ठिर उवाच। यत्तुभ्यं रोचते कृष्ण स्वस्ति प्राप्नुहि कौरवान्। कृतार्थं स्वस्तिमन्तं त्वा द्रक्ष्यामि पुनरागतम्॥ ८९॥ विष्वक्सेन कुरून् गत्वा भारतान् शमयेः प्रभो। यथा सर्वे सुमनसः सह स्याम सुचेतसः॥ ९०॥ भ्राता चासि सखा चासि वीभत्सोर्मम च प्रियः। सौहृदेनाविशङ्क्योऽसि स्वस्ति प्राप्नुहि भूतये॥ ९१॥ अस्मान् वेत्थ परान् वेत्थ वेत्थार्थान् वेत्थ भाषितुम्। यद्यदस्मद्धितं कृष्ण तत्तदाच्य सुयोधनः॥ ९२॥

यद्यद्धर्मेण संयुक्तमुपपद्येद्धितं वचः । तत्तत् केशव भाषेथाः सान्त्वं वा यदि वेतरत् ॥ ८३ ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि युधिष्ठिरवाक्ये एकसप्ततोऽध्यायः ॥ ७१ ॥

---

श्रीभगवानुवाच । सञ्जयस्य श्रुतं वाक्यं भवतश्च श्रुतं मया । सर्वं जानाम्यभिप्रायं यस्तेषां भवतश्च यः ॥ १ ॥ तव धर्माश्रिता बुद्धिस्तेषां वैराश्रया मतिः । यदयुद्धेन लभ्येत तत्ते बहुमतं भवेत् ॥ २ ॥ न चैवं नैष्ठिकं कर्म क्षत्रियस्य विशाम्पते । आहुराश्रमिणः सर्वे न भैक्ष्यं क्षत्रियश्चरेत् ॥ ३ ॥ जयो वधो वा संग्रामे धात्रा दिष्टः सनातन । स्वधर्मः क्षत्रियस्यैष कार्पण्यं न प्रशस्यते ॥ ॥ ॥ न हि कार्पण्यमास्थाय शक्या वृत्तिर्युधिष्ठिर । विक्रमस्व महाबाहो जहि शत्रून् परन्तप ॥ ५ ॥ अतिगृद्धाः कृतस्नेहा दीर्घकालं सहोषिताः । कृतमित्राः कृतबला धार्त्तराष्ट्राः परन्तप ॥ ६ ॥ न पर्य्यायोऽस्ति यत् साम्यं त्वयि कुर्य्युर्विशाम्पते । बलवत्तां हि मन्यन्ते भीष्मद्रोणकृपादिभिः ॥ ७ ॥ यावच्च मार्द्दवेनैतान्राजन्नुपचरिष्यसि । तावदेते हरिष्यन्ति तव राज्यमरिन्दम ॥ ८ ॥ नानुक्रोशान्न कार्पण्यान्न च धर्मार्थकारणात् । अलं कर्त्तुं धार्त्तराष्ट्रास्तव काममरिन्दम ॥ ९ ॥ एतदेव निमित्तं ते पाण्डवास्तु यथा त्वयि । नान्वतप्यन्त कौपीनं तावत् कृत्वापि दुष्करम् ॥ १० ॥ पितामहस्य द्रोणस्य विदुरस्य च धीमतः । ब्राह्मणानाञ्च साधूनां राज्ञश्च नगरस्य च ॥ ११ ॥ पश्यतां कुरुमुख्यानां सर्वेषामेव तत्त्वतः । दानशीलं मृदुं दान्तं धर्मशीलमनुव्रतम् ॥ १२ ॥ यत्त्वामुपधिना राजन् द्यूते वञ्चितवांस्तदा । न चापत्रपते तेन नृशंसः स्वेन कर्मणा ॥ १३ ॥ तथा शीलसमा-

चारे राजन् मा प्रणयं कृथा। बध्यास्ते सर्वलोकस्य किं पुन-
स्तव भारत॥ १४॥ वाग्भिस्त्वप्रतिरूपाभिरतुदत्त्वा सहानुजम्।
श्लाघमानः प्रहृष्टः सन् भ्रातृभिः सह भारत॥ १५॥ एतावत्
पाण्डवानां हि नास्ति किञ्चिदिह स्वकम्। नामधेयञ्च गोत्रञ्च
तदप्येषां न विद्यते॥ १६॥ कालेन महता चैषां भविष्यति परा-
भवः। प्रकृतिं ते भजिष्यन्ति नष्टप्रकृतयो मयि॥ १७॥ दुःशा
सनेन पापेन तदा द्यूते प्रवर्त्तिते। अनाथवत्तदा देवी द्रौपदी
सुदुरात्मना॥ १८॥ आकृष्य केशे रुदती सभायां राजसंसदि।
भीष्मद्रोणप्रमुखतो गौरिति व्याहृता मुहुः॥ १९॥ भवता
वारिता सर्वे भ्रातरो भीमविक्रमाः। धर्मपाशनिबद्धाश्च न किञ्चित्
प्रतिपेदिरे॥ २०॥ एताश्चान्याश्च परुषा वाचः स समुदीरयन्।
श्लाघते ज्ञातिमध्ये स्म त्वयि प्रव्रजिते वनम्॥ २१॥ ये तत्रासन्
समानीतास्ते दृष्ट्वा त्वामनागसम्। अश्रुकण्ठा रुदन्तश्च सभायां
मासते तदा॥ २२॥ न चैनमभ्यनन्दंस्ते राजानो ब्राह्मणैः सह।
सर्वे दुर्योधनं तत्र निन्दन्ति स्म सभासदः॥ २३॥ कुलीनस्य च
या निन्दा वधो वामित्रकर्षण। महागुणो वधो राजन्न तु निन्दा
कुजीविका॥ २४॥ तदैव निहतो राजन् यदैव निरपत्रपः।
निन्दितश्च महाराज पृथिव्यां सर्वराजभिः॥ २५॥ ईषत्कार्यो
वधस्तस्य यस्य चारित्रमीदृशम्। प्रस्कन्देन प्रतिस्तब्धश्छिन्नमूल
इव द्रुमः॥ २६॥ वध्यः सर्प इवानार्यः सर्वलोकस्य दुर्मतिः।
जह्येनं त्वममित्रघ्न मा राजन् विचिकित्सिथाः॥ २७॥ सर्वथा
त्वत्क्षमस्त्वेतद् रोचते च ममानघ। यत्त्वं पितरि भीष्मे च प्रणि-
पातं समाचरेः॥ २८॥ अहन्तु सर्वलोकस्य गत्वा छेत्स्यामि
संशयम्। येषामस्ति द्विधाभावो राजन् दुर्योधनं प्रति॥ २९॥
मध्ये राज्ञामहं तत्र प्रातिपौरुषिकान् गुणान्। तव सङ्कीर्त्तयि-
ष्यामि ये च तस्य व्यतिक्रमाः॥ ३०॥ ब्रुवतस्तत्र मे वाक्यं धर्मार्थ-

सहितं हितम्। निशम्य पार्थिवा सर्वे नानाजनपदेश्वराः ॥३१॥
त्वयि सम्प्रतिपत्स्यन्ते धर्मात्मा सत्यवागिति। तस्मिंश्चाधिगमि-
ष्यन्ति यथा लोभात्प्रवर्त्तते ॥३२॥ गर्हयिष्यामि चैवैनं पौरजान-
पदेष्वपि। वृद्धवालानुपादाय चातुर्वर्ण्ये समागते ॥ ३३ ॥ धर्मं
वै याचमानस्त्वं नाधर्मं तत्र लप्स्यसे। कुरून् विगर्हयिष्यन्ति
धृतराष्ट्रञ्च पार्थिवाः ॥ ३४ ॥ तस्मिंल्लोकपरित्यक्ते किं कार्य्यमव-
शिष्यते। हते दुर्य्योधने राजन् यदन्यत् क्रियतामिति ॥ ३५ ॥
यात्वा चाहं कुरून् सर्वान् युष्मदर्थमहापयन्। यतिष्ये प्रशमं
कर्त्तुं लक्षयिष्ये च चेष्टितम् ॥ ३६ ॥ कौरवाणां प्रवृत्तिञ्च गत्वा
युद्धाधिकारिकाम्। निशम्य विनिवर्त्तिष्ये जयाय तव भारत ॥३७॥
सर्वथा युद्धमेवाहमाशंसामि परैः सह। निमित्तानि हि सर्वाणि
यथा प्रादुर्भवन्ति वै ॥ ३८ ॥ मृगाः शकुन्ताश्च नदन्ति घोरं
हस्त्यश्वमुख्येषु निशामुखेषु। घोराणि रूपाणि तथैव चाग्नि-
र्वर्णान् बहून् पुष्यति घोररूपान् ॥ ३९ ॥ मनुष्यलोकक्षयकृत्
सुघोरो नो चेदनुप्राप्त इहान्तकः स्यात्। शस्त्राणि यन्त्रं कवचा-
न्रथांश्च नागान् हयाश्च प्रतिपादयित्वा ॥ ४० ॥ योधाश्च सर्वे कृत-
निश्चयास्ते भवन्तु हस्त्यश्वरथेषु युक्ताः। सांग्रामिकं ते यदु-
पार्ज्जनीयं सर्वं समग्रं कुरु तन्नरेन्द्र ॥ ४१ ॥ दुर्य्योधनो न ह्यल-
मद्य दातुं जीवंस्तवैतन्नृपते कथञ्चित्। यत्ते पुरस्तादभवत्
समृद्धं द्यूते जितं पाण्डवमुख्यराज्यम् ॥ ४२ ॥

इति उद्योगपर्व्वणि भगवद्यानपर्व्वणि श्रीकृष्णवाक्ये
द्विसप्ततोऽध्यायः ॥ ७२ ॥

---

भीमसेन उवाच। यथा यथैव शान्तिः स्यात् कुरूणां मधु-
सूदन। तथा तथैव भाषेथा मा स्म युद्धेन भीषयीः ॥ १ ॥

अमर्षी जातसंरम्भः श्रेयोद्वेषी महामनाः। नोग्रं दुर्य्योधनो वाच्यः सान्त्वेनैनं समाचरेः॥ २॥ प्रकृत्या पापसत्त्वश्च तुल्यचेतास्तु दस्युभिः। ऐश्वर्य्यमदमत्तश्च कृतवैरश्च पाण्डवैः॥ ३॥ अदीर्घदर्शी निष्ठूरो चैष्ठा क्रूरपराक्रम। दीर्घमन्युरनेयश्च पापात्मा निकृतिप्रियः॥ ४॥ म्रियेतापि न भज्येत नैव जह्यात् स्वकम्मतम्। तादृशेन शमः कृष्ण मन्ये परमदुष्करः॥ ५॥ सुहृदामप्यवाचीनस्त्यक्तधर्मा प्रियानृतः। प्रतिहन्त्येव सुहृदां वाचश्चैव मनांसि च॥ ६॥ स मन्युवशमापन्नः स्वभावं दुष्टमास्थितः। स्वभावात् पापमभ्येति तृणैश्छन्न इवोरगः॥ ७॥ दुर्य्योधनो हि यत्सेनः सर्वदा विदितस्तव। यच्छीलो यत्स्वभावश्च यद्बलो यत्पराक्रमः॥ ८॥ पुरा प्रसन्नाः कुरवः सहपुत्रास्तथा वयम्। इन्द्रज्येष्ठा इवाभूम मोदमानाः सबान्धवाः॥ ९॥ दुर्य्योधनस्य क्रोधेन भारता मधुसूदन। धक्ष्यन्ते शिशिरापाये वनानीव हुताशनैः॥ १०॥ अष्टादशेमे राजानः प्रख्याता मधुसूदन। ये समुच्चिच्छिदुर्ज्ञातीन् सुहृदश्च सबान्धवान्॥ ११॥ असुराणां समृद्धानां ज्वलतामिव तेजसा। पर्य्यायकाले धर्मस्य प्राप्ते कलिरजायत॥ १२॥ हैहयानामुदावर्त्तो नीपानां जनमेजय। बहुलस्तालजङ्घानां कृमीणामुद्धतो वसुः॥ १३॥ अजबिन्दुः सुवीराणां सुराष्ट्राणां रुषर्द्धिकः। अर्कजश्च बलीहानां चीनानां धौतमूलक॥ १४॥ हयग्रीवो विदेहानां वरयुश्च महौजसाम्। बाहुः सुन्दरवंशानां दीप्ताक्षाणां पुरूरवाः॥ १५॥ सहजश्चेदिमत्स्यानां प्रवीराणां वृषध्वजः। धारणश्चन्द्रवत्सानां मुकुटानां विगाहनः॥ १६॥ शमश्च नन्दिवेगानामित्येते कुलपांसनाः। युगान्ते कृष्ण सम्भूताः कुलेषु पुरुषाधमाः॥ १७॥ अप्ययं नः कुरूणां स्याद्युगान्ते कालसंभृतः। दुर्य्योधन कुलाङ्गारो जघन्यः पापपूरुषः॥ १८॥ तस्मान्मृदु शनैर्ब्रूया धर्मार्थसहितं हितम्।

कामानुबन्धबहुलं नोग्रमुग्रपराक्रम ॥ १९ ॥ अपि दुर्योधनं कृष्ण सर्व्वे वयमधश्चराः । नीचैर्भूत्वानुयास्यामो मा स्म नो भारता नशन् ॥ २० ॥ अप्युदासीनवृत्तिः स्याद्यथा नः कुरुभिः सह । वासुदेव तथा कार्य्यं न कुरूननय स्पृशेत् ॥ २१ ॥ वाच्यः पितामहो वृद्धो ये च तस्य सभासदः । भ्रातॄणामस्तु सौभ्रात्रं धार्त्तराष्ट्रः प्रशाम्यताम् ॥ २२ ॥ अहमेतद्ब्रवीम्येवं राजा चैव प्रशंसति । अर्जुनो नैव युद्धार्थी भूयसी हि दयार्जुने ॥ २३ ॥

इति उद्योगपर्व्वणि भगवद्यानपर्व्वणि भीमवाक्ये त्रिसप्ततोऽध्यायः ॥७३॥

---

वैशम्पायन उवाच । एतत् श्रुत्वा महाबाहुः केशवः प्रहसन्निव । अभूतपूर्व्वं भीमस्य मार्द्दवोपहितं वचः ॥ १ ॥ गिरेरिव लघुत्वं तत् शीतत्वमिव पावके । मत्वा रामानुजः शौरिः शार्ङ्गधन्वा वृकोदरम् ॥ २ ॥ सन्तेजयंस्तदा वाग्भिर्मातरिश्वेव पावकम् । उवाच भीममासीनं कृपयाभिपरिप्लुतम् ॥ ३ ॥

श्रीभगवानुवाच । त्वमन्यदा भीमसेन युद्धमेव प्रशंससि । वधाभिनन्दिनः क्रूरान् धार्त्तराष्ट्रान्मिमर्द्दिषुः ॥ ४ ॥ न च स्वपिषि जागर्षि न्युब्जः शेषे परन्तप । घोरामशान्तां रुषतीं सदा वाचं प्रभाषसे ॥ ५ ॥ निःश्वसन्नग्निवर्णेन सन्तप्तः स्वेन मन्युना । अप्रशान्तमना भीम सधूम इव पावकः ॥ ६ ॥ एकान्ते निःश्वसन् शेषे भारार्त्त इव दुर्बलः । अपि त्वां केचिदुन्मत्तं मन्यन्तेऽतद्विदो जनाः ॥ ७ ॥ आरुज्य वृक्षान्निर्मूलान् गजः परिरुजन्निव । निघ्नन् पद्भिः क्षितिं भीम निःश्वसन् परिधावसि ॥ ८ ॥ नास्मिन् जनेन रमसे रहः क्षिपसि पाण्डव । नान्यन्निशि दिवा चापि कदाचिदभिनन्दसि ॥ ९ ॥ अकस्मात् स्मयमानश्च रहस्यास्से रुदन्निव ।

जान्वोर्मूर्द्धानमाधाय विरमास्से प्रमीलित ॥ १० ॥ अभृकुटिञ्च पुन कुर्वन्नोष्ठौ च विदशन्निव। अभीक्ष्णं दृश्यसे भीम सर्वं तन्मन्यु-कारितम् ॥ ११ ॥ यथा पुरस्तात् सविता दृश्यते शुक्रमुच्चरन्। यथा च पश्चान्निर्मुक्तो ध्रुव पर्य्येति रश्मिमान् ॥ १२ ॥ तथा तथ्य ब्रवीम्येतत् नास्ति तस्य व्यतिक्रम । हन्ताहं गदयाभ्येत्य दुर्य्योधनममर्षणम् ॥ १३ ॥ इति स्म मध्ये भ्रातृणा सत्येनालभसे गदाम। तस्य ते प्रशमे बुद्धिर्धीयतेऽद्य परन्तप १४ ॥ अहो युद्धाभिकाङ्क्षाणा युद्धकाल उपस्थिते। चेतासि विप्रतीपानि यस्मात् भीम भीर्विन्दति ॥ ५ ॥ अहो पार्थ निमित्तानि विपरीतानि पश्यसि स्वप्नान्ते जागरान्ते च तस्मात प्रशममिच्छसि ॥ १६ ॥ अहो नाशसे किञ्चित् पुस्त्वं क्लीव एवात्मनि। कश्मलेनाभिपन्नोऽसि तेन ते विकृतं मन ॥ १७ ॥ उद्वेपते ते हृदय मनस्ते प्रतिसीदति। ऊरुस्तम्भगृहीतोऽसि तस्मात प्रशममिच्छसि ॥ ८॥ अनित्य किल मर्त्यस्य चित्त चलाचलम्। वातवेगप्रचलिता अष्ठीला शाल्मलेरिव ॥ १९ ॥ तवैषा विकृता बुद्धिर्गवा वागिव मानुषी। मनासि पाण्डुपुत्राणा मज्जयत्यप्लवानिव २० ॥ इदं मे महदाश्चर्य्यं पर्वतस्येव सर्पणम। यदीदृश प्रभाषेथा भीम सेनासम वच ॥ २१ ॥ स दृष्ट्वा स्वानि कर्माणि कुले जन्म च भारत। उत्तिष्ठस्व विषाद मा कृथा वीर स्थिरो भव ॥ २२ ॥ न चैतदनुरूप ते यत्ते ग्लानिररिन्दम। यदोजसा न लभते क्षत्रियो न तदश्नुते ॥ २३ ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि श्रीकृष्णवाक्ये चतु सप्ततोऽध्याय ॥ ७४ ॥

---

वैशम्पायन उवाच। तथोक्तो वासुदेवेन नित्यमन्युरमर्षणः।
सदश्ववत् समाधावत् बभाषे तदनन्तरम्॥ १॥

भीमसेन उवाच। अन्यथा मां चिकीर्षन्तमन्यथा मन्यसेऽच्युत। प्रणीतभावमत्यर्थं युधि सत्यपराक्रमम्॥ २॥ वेत्सि दाशार्ह स त्वं मे दीर्घकालं सहोषित। उत वा नानुजानासि प्लवन् ह्रद इवाप्लवम्॥ ३॥ तस्मादनभिरूपाभिर्वाग्भिर्मां त्वं समर्च्छसि। कथं हि भीमसेनं मां जानन् कश्चन माधव॥ ४॥ ब्रूयादप्रतिरूपाणि यथा मां वक्तुमर्हसि। तस्मादिदं प्रवक्ष्यामि वचनं वृष्णिनन्दन॥ ५॥ आत्मनः पौरुषञ्चैव बलञ्च न समं परैः। सर्वथानार्य्यकर्म्मैतत् प्रशंसा स्वयमात्मनः॥ ६॥ अतिवादापविद्धस्तु वक्ष्यामि बलमात्मनः। पश्येमे रोदसी कृष्ण ययोरासन्निमाः प्रजाः॥ ७॥ अचले चाप्रतिष्ठे चाप्यनन्ते सर्व्वमातरौ। यदीमे सहसा क्रुद्धे समेयातां शिले इव॥ ८॥ अहमेते निगृह्णीयां बाहुभ्यां सचराचरे। पश्यैतदन्तरं बाह्वोर्म्महापरिघयोरिव॥९॥ य एतत् प्राप्य मुच्येत न तं पश्यामि पूरुषम्। हिमवांश्च समुद्रश्च वज्री च बलभित् स्वयम्॥ १०॥ मयाभिपन्नं त्रायेरन् बलमास्थाय न त्रयः। युद्धार्हान् क्षत्रियान् सर्व्वान् पाण्डवेष्वाततायिनः॥११॥ अधःपादतले चैनानधितिष्ठामि भूतले। न हि त्वं नाभिजानासि मम विक्रममच्युत॥ १२॥ यथा मया विनिर्ज्जित्य राजानो वशगाः कृताः। अथ चेन्मां न जानासि सूर्य्यस्येवोद्यतः प्रभाम्॥ १३॥ विगाढ़े युधि सम्बाधे वेत्स्यसे मां जनार्द्दन। परुषैराक्षिपस्येवं व्रणं पूतिमिवोन्नयन्॥ १४॥ यथामति ब्रवीम्येतत् विद्धि मामधिकं ततः। द्रष्टासि युधि सम्बाधे प्रवृत्ते वैशसेऽहनि॥ १५॥ मया प्रणुन्नान्मातङ्गान्रथिनः सादिनस्तथा। तथा नरानभिक्रुद्धं निघ्नन्तं क्षत्रियर्षभान्॥ १६॥ द्रष्टा मां त्वञ्च लोकश्च विकर्षन्तं वराचरान्। न मे सीदन्ति मज्जानो न ममोद्वेपते

मन ॥ १७ ॥ सर्वलोकादभिक्रुद्धान्न भयं विद्यते मम । किन्तु सौहृदमेवैतत् कृपया मधुसूदन । सर्वांस्तितिक्षे सङ्क्लेशान्मा स्म नो भरता नशन् ॥ १८ ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि भीमवाक्ये पञ्चसप्ततोऽध्याय ॥ ७५ ॥

---

श्रीभगवानुवाच । भावं जिज्ञासमानोऽहं प्रणयादिदमब्रुवम् ।० न चाक्षेपान्न पाण्डित्यान्न क्रोधान्न विवक्षया ॥ १ ॥ वेदाहं तव माहात्म्यमुत ते वेद यद्बलम् । उत ते वेद कर्माणि न त्वां परिभवाम्यहम् ॥ २ ॥ यथा चात्मनि कल्याणं सम्भावयसि पाण्डव । सहस्रगुणमप्येतत् त्वयि सम्भावयाम्यहम् ॥ ३ ॥ यादृशे च कुले जन्म सर्वराजाभिपूजिते । बन्धुभिश्च सुहृद्भिश्च भीम त्वमसि तादृश । ४ ॥ जिज्ञासन्तो हि धर्मस्य सन्दिग्धस्य वृकोदर । पर्य्यायं नाध्यवस्यन्ति दैवमानुषयोर्जनाः ॥ ५ ॥ स एव हेतुर्भूत्वा हि पुरुषस्यार्थसिद्धिषु । विनाशेऽपि स एवास्य सन्दिग्धं कर्म पौरुषम् ॥ ६ ॥ अन्यथा परिदृष्टानि कविभिर्दोषदर्शिभिः । अन्यथा परिवर्त्तन्ते वेगा इव नभस्वत ॥ ७ ॥ सुमन्त्रितं सुनीतञ्च न्यायतश्चोपपादितम् । कृतं मानुष्यकं कर्म दैवेनापि विरुध्यते ॥ ८ ॥ दैवमप्यकृतं कर्म पौरुषेण विहन्यते । शीतमुष्णं तथा वर्षं क्षुत्पिपासे च भारत ॥ ९ ॥ यदन्यद्दिष्टभावस्य पुरुषस्य स्वयं कृतम् । तस्मादनुपरोधश्च विद्यते तत्र लक्षणम् ॥ १० ॥ लोकस्य नान्यतो वृत्तिः पाण्डवान्यत्र कर्मणः । एवं बुद्धिः प्रवर्त्तेत फलं स्यादुभयान्वये ॥ ११ ॥ य एवं कृतबुद्धिः सन् कर्मस्वेव प्रवर्त्तते । नासिद्धौ व्यथते तस्य न सिद्धौ हर्षमश्नुते ॥ १२ ॥ तत्रेयमनुमात्रा मे भीमसेन विवक्षिता । नैकान्तसिद्धिर्मन्तव्या शत्रुभिः सह सयुगे ॥१३॥

नातिप्रहीणरश्मिः स्यात्तथा भावविपर्य्यये। विषादमर्च्छ्ट्ग्लानिं वाप्येतदर्थं ब्रवीमि ते ॥ १४ ॥ श्वो भूते धृतराष्ट्रस्य समीपं प्राप्य पाण्डव। यतिष्ये प्रशमं कर्त्तुं युष्मदर्थमहापयन् ॥ १५ ॥ शमं चेत्ते करिष्यन्ति ततोऽनन्तं यशो मम। भवताञ्च कृतः कामस्तेषाञ्च श्रेय उत्तमम् ॥ १६ ॥ ते चेदभिनिवेक्ष्यन्ति नाभ्युपैष्यन्ति मे वचः। कुरवो युद्धमेवात्र घोरं कर्म भविष्यति ॥ १७ ॥ अस्मिन् युद्धे भीमसेन त्वयि भारः समाहितः। धूरर्जुनेन धार्य्या स्यात् वोढव्य इतरो जनः ॥ १८ ॥ अहं हि यन्ता बीभत्सोर्भविता संयुगे सति। धनञ्जयस्यैष कामो न हि युद्धं न कामये ॥ १९ ॥ तस्मादाशङ्कमानोऽहं वृकोदर मतिं तव। गदतः क्लीवया वाचा तेजस्ते समदीदिपम् ॥ २० ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि श्रीकृष्णवाक्ये
षट्सप्ततोऽध्यायः ॥ ७६ ॥

---

अर्जुन उवाच। उक्तं युधिष्ठिरेणैव यथा वाच्यं जनार्द्दन। तव वाक्यन्तु मे श्रुत्वा प्रतिभाति परन्तप ॥ १ ॥ नैव प्रशममत्र त्वं मन्यसे सुकरं प्रभो। लोभाद्वा धृतराष्ट्रस्य दैन्याद्वा समुपस्थितात् ॥ २ ॥ अफलं मन्यसे वापि पुरुषस्य पराक्रमम्। न चान्तरेण कर्म्माणि पौरुषेण फलोदयः ॥ ३ ॥ तदिदं भाषितं वाक्यं तथा च न तथैव तत्। न चैतदेवं द्रष्टव्यमसाध्यमपि किञ्चन ॥ ४ ॥ किञ्चैतन्मन्यसे कृच्छ्रमस्माकमवसादकम्। कुर्व्वन्ति तेषां कर्म्माणि येषां नास्ति फलोदयः ॥ ५ ॥ संपाद्यमानं सम्यक् च स्यात् कर्म सफलं प्रभो। स तथा कृष्ण वर्त्तस्व यथा शर्म भवेत् परैः ॥ ६ ॥ पाण्डवानां कुरूणाञ्च भवान्नः प्रथमः सुहृत। सुराणामसुराणाञ्च यथा वीरः प्रजापतिः ॥ ७ ॥ कुरूणां पाण्ड-

वानाञ्च प्रतिपतस्व निरामयम। अस्माद्भितमनुष्ठानं मन्ये तव न दुष्करम ॥ ८ ॥ एवञ्च कार्य्यतामेति कार्य्यं तव जनार्द्दन। गमनादेवमेव त्वं करिष्यसि जनार्द्दन ॥ ९ ॥ चिकीर्षितमथान्यत्ते तस्मिन् वीर दुरात्मनि। भविष्यति च तत सर्वं यथा तव चिकीर्षितम् ॥ १० ॥ शर्म्म तैः सह वा नोऽस्तु तव वा यच्चिकीर्षितम्। विचार्य्यमाणो यः कामस्तव कृष्ण स नो गुरुः ॥ ११ ॥ न स नार्हति दुष्टात्मा बध ससुतबान्धव। येन धर्मसुते दृष्ट्वा न सा श्रीरुपमर्षिता ॥ १२ ॥ यच्चाप्यपश्यतोपाय धर्मिष्ठं मधुसूदन। उपायेन नृशंसेन हृता दुर्य्यूतदेविना ॥ १३ ॥ कथं हि पुरुषो जातः क्षत्रियेषु धनुर्द्धर। समाहूतो निवर्त्तेत प्राणत्यागेऽप्युपस्थिते ॥ १४ ॥ अधर्म्मेण जितान् दृष्ट्वा वने प्रव्रजितास्तथा। वध्यता मम वार्ष्णेय निर्गतोऽसौ सुयोधन ॥ १५ ॥ न चैतदद्भुतं कृष्ण मित्रार्थे यच्चिकीर्षसि। क्रिया कथन्नु मुख्या स्यात मृदुना वेतरेण वा ॥ १६ ॥ अथ वा मन्यसे ज्यायान् बधस्तेषामनन्तरम। तदेव क्रियतामाशु न विचार्य्यमतस्त्वया ॥ १७ ॥ जानासि हि यथा तेन द्रौपदी पापबुद्धिना। परिक्लिष्टा सभामध्ये तच्च तस्योपमर्षितम् ॥ १८ ॥ स नाम सम्यग्वर्त्तेत पाण्डवेष्विति माधव। न मे सञ्जायते बुद्धिर्वीजमुप्तमिवोषरे ॥ १९ ॥ तस्माद्यन्मन्यसे युक्तं पाण्डवाना हितञ्च यत। तदाशु कुरु वार्ष्णेय यन्न कार्य्यमनन्तरम् ॥ २० ॥

इति उद्योगपर्व्वणि भगवद्यानपर्व्वणि अर्जुनवाक्ये सप्तसप्ततोऽध्याय ॥ ७७ ॥

---

श्रीभगवानुवाच। एवमेतन्महाबाहो यथा वदसि पाण्डव। पाण्डवाना कुरुणाञ्च प्रतिपत्स्येत् निरामयम् ॥ १ ॥ सर्वं त्विद

ममापन्नं बीभत्सो कर्म्मणोर्द्वयोः। क्षेत्रं हि रसवच्छुद्धं कर्म्मणै-
वोपपादितम् ॥ २ ॥ ऋते वर्षान्न कौन्तेय जातु निर्व्वर्त्तयेत फलम्।
तत्र वै पौरुषं ब्रूयुरासेकं यत्नकारितम् ॥ ३ ॥ तत्र चापि ध्रुवं
पश्येच्छोषणं दैवकारितम्। तदिदं निश्चितं बुद्ध्या पूर्व्वैरपि महा-
त्मभिः ॥ ४ ॥ दैवे च मानुषे चैव संयुक्तं लोककारणम्। अहं हि
तत् करिष्यामि परं पुरुषकारतः ॥ ५ ॥ दैवन्तु न मया शक्यं कर्म्म
कर्त्तुं कथञ्चन। स हि धर्म्मञ्च लोकञ्च त्यक्त्वा चरति दुर्म्मतिः ॥ ६ ॥
न हि सन्तप्यते तेन तथा रूपेण कर्म्मणा। तथापि बुद्धिं पापिष्ठां
वर्द्धयन्त्यस्य मन्त्रिणः ॥ ७ ॥ शकुनिः सूतपुत्रश्च भ्राता दुःशासन-
स्तथा। स हि त्यागेन राज्यस्य न शमं समुपैष्यति ॥ ८ ॥ अन्त-
रेण वधं पार्थ सानुबन्धः सुयोधनः। न चापि प्रणिपातेन त्यक्तु-
मिच्छति धर्म्मराट् ॥ ९ ॥ याच्यमानश्च राज्यं स न प्रदास्यति
दुर्म्मतिः। न तु मन्ये स तद्वाच्यो यद्युधिष्ठिरशासनम् ॥ १० ॥
उक्तं प्रयोजनं यत्तु धर्म्मराजेन भारत। तथा पापस्तु तत् सर्व्वं
न करिष्यति कौरव ॥ ११ ॥ तस्मिंश्चाक्रियमाणेऽसौ लोकवध्यो
भविष्यति। मम चापि स वध्यो हि जगतश्चापि भारत ॥ १२ ॥
येन कौमारके यूयं सर्व्वे विप्रकृताः सदा। विप्रलुप्तञ्च वो राज्यं
नृशंसेन दुरात्मना ॥ १३ ॥ न चोपशाम्यते पापः श्रियं दृष्ट्वा
युधिष्ठिरे। असकृच्चाप्यहं तेन त्वत् कृते पार्थ भेदितः ॥ १४ ॥
न मया तद्गृहीतञ्च पापं तस्य चिकीर्षितम्। जानासि हि महा-
बाहो त्वमप्यस्य परं मतम् ॥ १५ ॥ प्रियं चिकीर्षमाणञ्च धर्म्म-
राजस्य मामपि। स जानंस्तस्य चात्मानं मम चैव परं मतम् ॥ १६ ॥
अजानन्निव मां कस्मादर्ज्जुनाद्याभिशङ्कसे। यच्चापि परमं दिव्यं
तच्चाप्यनुगतं त्वया ॥ १७ ॥ विधानविहितं पार्थ कथं कर्म्म भवेत्
परैः। यत्तु वाचा मया शक्यं कर्म्मणा वापि पाण्डव ॥ १८ ॥
करिष्ये तदहं पार्थ न त्वाशंसे शमं परैः। कथं गोहरणे ह्युक्तो

नैतत्कर्म तथा हितम ॥ १८ ॥ याच्यमानोऽपि भीमेन सम्वत-सरगतेऽध्वनि। तदैव ते पराभूता यदा सङ्कुलिताश्त्वया ॥ २० ॥ लवण चणायथापि न च तुष्ट सुयोधन। सर्वथा तु मया कार्य्यं धर्मराजस्य शासनम। विभाव्यं तस्य भूयश्च कर्म पाप दुरात्मन ॥ २१ ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि श्रीकृष्णवाक्ये अष्टसप्ततोऽध्याय ॥ ७८ ॥

---

नकुल उवाच। उक्तं बहुविध वाक्यं धर्मराजेन माधव। धर्मज्ञेन वदान्येन श्रुतञ्चैवेह तत्त्वया ॥ १ ॥ मतमाज्ञाय राजश्च भीमसेनेन माधव। संशयो बाहुवीर्य्यश्च ख्यापितं माधवात्मन ॥ २ ॥ तदैव फाल्गुनेनापि यदुक्तं तत्त्वया श्रुतम्। आत्मनश्च मत वीर कथित भवतासकृत ॥ ३ ॥ सर्वमेतदतिक्रम्य श्रुत्वा पर-मत भवान्। यत प्राप्तकाल मन्येथास्तत कुर्य्या पुरुषोत्तम ॥ ४ ॥ तस्मिंस्तस्मिन्निमित्ते हि मत भवति केशव। प्राप्तकाल मनुष्येण स्वम कार्य्यमरिन्दम ॥ ५ ॥ अन्यथा चिन्तितो ह्यर्थः पुनर्भवति सोऽन्यथा। अनित्यमतयो लोके नरा पुरुषसत्तम ॥ ६ ॥ अन्यथा-बुद्धयो ह्यासन्नस्मासु वनवासिषु। अदृश्येष्वन्यथा कृष्ण दृश्येषु पुनरन्यथा ॥ ७ ॥ अस्माकमपि वार्ष्णेय वने विचरतां तदा। न तथा प्रणयो राज्ये यथा सम्प्रति वर्त्तते ॥ ८ ॥ निवृत्तवनवासान्त श्रुत्वा वीर समागता। अक्षौहिण्यो हि सप्तेमास्त्वत्प्रसादा-ज्जनार्द्दन ॥ ९ ॥ इमान् हि पुरुषव्याघ्रानचिन्त्यबलपौरुषान्। आत्तशस्त्रान्रणे दृष्ट्वा न व्यथेदिह क पुमान् ॥ १० ॥ स भवान् कुरुमध्ये च सान्त्वपूर्वं भयोत्तरम्। ब्रूयाद्वाक्यं यथा मन्दो न व्यथेत सुयोधन ॥ ११ ॥ युधिष्ठिर भीमसेन बीभत्सञ्चापरा

जितम् । सहदेवञ्च माद्रेव लाञ्च रामञ्च केशव ॥ १२ ॥ सात्य-
किञ्च महावीर्य्यं विराटञ्च सहाभुजम् । द्रुपदञ्च महामात्यं
धृष्टद्युम्नञ्च माधव ॥ १३ ॥ काशिराजञ्च विक्रान्तं धृष्टकेतुञ्च
चेदिपम् । मांसशोणितभृन्मर्त्यः प्रतियुध्येत को युधि ॥ १४ ॥
स भवान् गमनादेव साधयिष्यत्यसंशयम् । इष्टमर्थं महाबाहो
धर्म्मराजस्य केवलम् ॥ १५ ॥ विदुरश्चैव भीष्मश्च द्रोणश्च सह-
बाह्लिक । श्रेयः समर्था विज्ञातमुच्यमानास्त्वयानघ ॥ १६ ॥ ते
चैनमनुनेष्यन्ति धृतराष्ट्रं जनाधिपम् । तञ्च पापसमाचारं सहा-
मात्यं सुयोधनम् ॥ १७ ॥ श्रोता चार्थस्य विदुरस्त्वञ्च वक्ता जना-
र्द्दन । कमिवार्थं विवर्त्तन्तं स्थापयेता न वर्त्मनि ॥ १८ ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि नकुलवाक्ये
एकोनाशीतोऽध्यायः ॥ ७९ ॥

---

सहदेव उवाच । यदि तत् कथितं राज्ञा धर्म एष सना-
तन । यथा च युद्धमेव स्यात्तथा कार्य्यमरिन्दम ॥ १ ॥ यदि
प्रशममिच्छेयु कुरव पाण्डवै सह । तथापि युद्धं दाशार्ह
योजयेथा सहैव तैः ॥ २ ॥ कथन्नु दृष्ट्वा पाञ्चालीं तथा कृष्णा
सभागताम् । अवधेन प्रशाम्येत मम मन्युः सुयोधने ॥ ३ ॥
यदि भीमार्जुनौ कृष्ण धर्म्मराजश्च धार्म्मिकाः । धर्म्ममुत्सृज्य
तेनाहं योद्धुमिच्छामि संयुगे ॥ ४ ॥

सात्यकिरुवाच । सत्यमाह महाबाहो सहदेवो महामतिः ।
दुर्य्योधनवधे शान्तिस्तस्य कोपस्य मे भवेत ॥ ५ ॥ न जानासि
यथा दृष्ट्वा चीराजिनधरान् वने । तवापि मन्युरुद्भूतो दुःखि-
तान् प्रेक्ष्य पाण्डवान् ॥ ६ ॥ तस्मान्माद्रीसुत शूरो यदाह रण-
कर्कश । वचनं सर्व्वयोधाना तन्मत पुरुषोत्तम ॥ ७ ॥

वैशम्पायन उवाच। एवं वदति वाक्यन्तु युयुधाने महामतौ। सुभीमः सिंहनादोऽभूत योधानां तत्र सर्वशः ॥ ८ ॥ सर्वे हि सर्वशो वीरास्तद्वचः प्रत्यपूजयन्। साधुसाध्विति शैनेयं हर्षयन्तो युयुत्सवः ॥ ९ ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि सहदेववाक्ये अशीतितमोऽध्यायः ॥ ८० ॥

---

वैशम्पायन उवाच। राज्ञस्तद्वचनं श्रुत्वा धर्मार्थसहितं हितम्। कृष्णा दाशार्हमासीनमब्रवीच्छोककर्षिता ॥ १ ॥ सुता द्रुपदराजस्य असितायतमूर्द्धजा। सम्पूज्य सहदेवञ्च सात्यकिञ्च महारथम् ॥ २ ॥ भीमसेनञ्च संशान्तं दृष्ट्वा परमदुर्मनाः। अश्रुपूर्णेक्षणा वाक्यमुवाचेदं मनस्विनी ॥ ३ ॥ विदितं ते महाबाहो धर्मज्ञ मधुसूदन। यथा निकृतिमास्थाय भ्रंशिताः पाण्डवाः सुखात् ॥ ४ ॥ धृतराष्ट्रस्य पुत्रेण सामात्येन जनार्द्दन। यथा च सञ्जयो राज्ञा मन्त्रं रहसि श्रावितः ॥ ५ ॥ युधिष्ठिरेण दाशार्ह तच्चापि विदितं तव। यथोक्तः सञ्जयश्चैव तच्च सर्वं श्रुतं त्वया ॥६॥ पञ्च नस्तात दीयन्तां ग्रामा इति महाद्युते। अविस्थलं वृकस्थलं माकन्दीं वारणावतम् ॥ ७ ॥ अवसानं महाबाहो कञ्चिदेकञ्च पञ्चमम्। इति दुर्य्योधनो वाच्यः सुहृदश्चास्य केशव ॥ ८ ॥ तच्चापि नाकरोद्वाक्यं श्रुत्वा कृष्ण सुयोधनः। युधिष्ठिरस्य दाशार्ह ह्रीमतः सन्धिमिच्छतः ॥ ९ ॥ अप्रदानेन राज्यस्य यदि कृष्ण सुयोधनः। सन्धिमिच्छेन्न कर्त्तव्यस्तत्र गत्वा कथञ्चन ॥ १० ॥ शक्ष्यन्ति हि महाबाहो पाण्डवाः सृञ्जयैः सह। धार्त्तराष्ट्रबलं घोरं क्रुद्धं प्रतिसमासितुम् ॥ ११ ॥ न हि साम्ना न दानेन शक्योऽर्थस्तेषु कश्चन। तस्मात्तेषु न कर्त्तव्या कृपा ते मधुसूदन ॥ १२ ॥

साम्ना दानेन वा कृष्ण ये न शाम्यन्ति शत्रवः । योक्तव्यस्तेषु दण्डः स्यात् जीवितं परिरक्षता ॥ १३ ॥ तस्मात्तेषु महादण्डः क्षेप्तव्यः क्षिप्रमच्युत । त्वया चैव महाबाहो पाण्डवैः सह सृञ्जयैः ॥ १४ ॥ एतत् समर्थं पार्थानां तव चैव यशस्करम् । क्रियमाणं भवेत् कृष्ण क्षत्रस्य च सुखावहम् ॥ १५ ॥ क्षत्रियेण हि हन्तव्यः क्षत्रियो लोभमास्थितः । अक्षत्रियो वा दाशार्ह स्वधर्ममनुतिष्ठता ॥ १६ ॥ अन्यत्र ब्राह्मणात्तात सर्वपापेष्ववस्थितात् । गुरुर्हि सर्ववर्णानां ब्राह्मणः प्रसृताग्रभुक् ॥ १७ ॥ यथावध्ये भवेद्दोषो वध्यमाने जनार्द्दन । स वध्यस्यावधे दृष्ट इति धर्मविदो विदुः ॥ १८ ॥ यथा त्वां न स्पृशेदेष दोषः कृष्ण तथा कुरु । पाण्डवैः सह दाशार्ह सृञ्जयैः सह सैनिकैः ॥ १९ ॥ पुनरुक्तञ्च वक्ष्यामि विश्रम्भेण जनार्द्दन । का नु सीमन्तिनी मादृक् पृथिव्यामस्ति केशव ॥ २० ॥ सुता द्रुपदराजस्य वेदीमध्यात् समुत्थिता । धृष्टद्युम्नस्य भगिनी तव कृष्ण प्रिया सखी ॥ २१ ॥ आजमीढकुलं प्राप्ता स्नुषा पाण्डोर्महात्मनः । महिषी पाण्डुपुत्राणां पञ्चेन्द्रसमवर्च्चसाम् ॥ २२ ॥ सुता मे पञ्चभिर्वीरैः पञ्च जाता महारथाः । अभिमन्युर्यथा कृष्ण तथा ते तव धर्मतः ॥ २३ ॥ साहं केशग्रहं प्राप्ता परिक्लिष्टा सभाङ्गता । पश्यतां पाण्डुपुत्राणां त्वयि जीवति केशव ॥ २४ ॥ जीवत्सु पाण्डुपुत्रेषु पाञ्चालेष्वथ वृष्णिषु । दासीभूतास्मि पापानां सभामध्ये व्यवस्थिता ॥ २५ ॥ निरमर्षेष्वचेष्टेषु प्रेक्षमाणेषु पाण्डुषु । पाहि मामिति गोविन्द मनसा चिन्तितोऽसि मे ॥ २६ ॥ यत्र मां भगवान्राजा श्वशुरो वाक्यमब्रवीत् । वरं वृणीष्व पाञ्चालि वरार्हासि मतासि मे ॥ २७ ॥ अदासाः पाण्डवाः सन्तु सरथाः सायुधा इति । मयोक्ते यत्र निर्मुक्ता वनवासाय केशव ॥ २८ ॥ एवंविधानां दुःखानामभिज्ञोऽसि जनार्द्दन । त्रायस्व पुण्डरीकाक्ष सभर्त्तृज्ञातिबान्ध-

वाम् ॥ २९ ॥ नन्वहं कृष्णा भीष्मस्य धृतराष्ट्रस्य चोभयो । स्नुषा भवामि धर्मेण साहं दासीकृता बलात् ॥ ३० ॥ धिक् पार्थस्य धनुष्मत्ता भीमसेनस्य धिग्बलम् । यत्र दुर्य्योधन कृष्ण मुहूर्त्तमपि जीवति ॥ ३१ ॥ यदि तेऽहमनुग्राह्या यदि तेऽस्ति कृपा मयि । धार्त्तराष्ट्रेषु वै कोप सर्व्वं कृष्ण विधीयताम ॥ ३२ ॥

वैशम्पायन उवाच । इत्युक्ता मृदुसंहार वृजिनाग्र सुदर्शनम् । सुनीलमसितापाङ्गी सर्व्वगन्धाधिवासितम ॥ ३३ ॥ सर्व्वलक्षणसम्पन्न महाभुजगवर्च्चसम् । केशपक्ष वरारोहा गृह्य वामेन पाणिना ॥ ३४ ॥ पद्माक्षी पुण्डरीकाक्षमुपेत्य गजगामिनी । अश्रुपूर्णेक्षणा दीना कृष्णा वचनमब्रवीत् ॥ ३५ ॥ अयन्ते पुण्डरीकाक्ष दुःशासनकरोद्धृत । स्मर्त्तव्य सर्व्वकार्य्येषु परेषा सन्धिमिच्छताम् ॥ ३६ ॥ यदि भीमार्ज्जुनौ कृष्ण कृपणौ सन्धिकामुकौ । पिता मे योत्स्यते वृद्ध सह पुत्त्रैर्म्महारथै ॥ ३७ ॥ पञ्च चैव महावीर्य्या पुत्त्रा मे मधुसूदन । अभिमन्युं पुरस्कृत्य योत्स्यन्ते कुरुभि सह ॥ ३८ ॥ दुःशासनभुज श्याम संछिन्न पांशुगुण्ठितम् । यद्यहन्तु न पश्यामि का शान्तिर्हृदयस्य मे ॥ ३९ ॥ त्रयोदश हि वर्षाणि प्रतीक्षन्त्या गतानि मे । निधाय हृदये मन्यु प्रदीप्तमिव पावकम् ॥ ४० ॥ विदीर्य्यते मे हृदय भीमवाक्शल्यपीडितम् । योऽयमद्य महाबाहुर्धर्म्ममेवानुपश्यति ॥ ४१ ॥ इत्युक्त्वा बाष्पसन्नेन कण्ठेनायतलोचना । रुरोद कृष्णा सोत्कम्पं सस्वन बाष्पगद्गदम् ॥ ४२ ॥ स्तनौ पीनायतश्रोणी सहितावभिवर्षती । द्रवीभूतमिवात्युष्ण मुञ्चती वारि नेत्रजम् ॥ ४३ ॥ तामुवाच महाबाहु केशव परिसान्त्वयन् । अचिरात् द्रक्ष्यसे कृष्णे रुदती भरतस्त्रिय ॥४४॥ एव ता भीरु रोत्स्यन्ति निहतज्ञातिबान्धवा । हतमित्रा हतबला येषा क्रुद्धासि भामिनि ॥ ४५ ॥ अहञ्च तत् करिष्यामि भीमार्ज्जुनयमै सह । युधिष्ठिरनियोगेन दैवाच्च विधि-

निर्म्मितास् ॥ ४६ ॥ धार्त्तराष्ट्राः कालपक्वा न चेत् शृण्वन्ति मे वचः । शेष्यन्ते निहता भूमौ श्वशृगालादनीकृताः ॥ ४७ ॥ चलेद्धि हिमवान् शैलो मेदिनी शतधा चलेत । द्यौः पतेच्च सनक्षत्रा न मे मोघं वचो भवेत् ॥ ४८ ॥ सत्यं ते प्रतिजानामि कृष्णे वाष्पो निगृह्यताम् । हतामित्रान् श्रियायुक्तानचिराद्द्रक्ष्यसे पतीन् ॥ ४९ ॥

इति उद्योगपर्व्वणि भगवद्यानपर्व्वणि श्रीकृष्णवाक्ये एकाशीतोऽध्यायः ॥८१॥

---

अर्जुन उवाच । कुरूणामद्य सर्व्वेषां भवान् सुहृदनुत्तमः । सम्बन्धी दयितो नित्यमुभयोः पक्षयोरपि ॥ १ ॥ पाण्डवैर्धार्त्तराष्ट्राणां प्रतिपाद्यमनामयम् । समर्थः प्रशमञ्चैव कर्त्तुमर्हसि केशव ॥ २ ॥ त्वमितः पुण्डरीकाक्ष सुयोधनममर्षणम् । शान्त्यर्थं भारतं ब्रूया यत्तत् वाच्यममित्रहन् ॥ ३ ॥ त्वया धर्म्मार्थयुक्तञ्चेदुक्तं शिवमनामयम् । हितं नादास्यते बालो दिष्टस्य वशमेष्यति ॥ ४ ॥

श्रीभगवानुवाच । धर्म्म्यमस्मद्धितञ्चैव कुरूणां यदनामयम् । एष यास्यामि राजानं धृतराष्ट्रमभीप्सया ॥ ५ ॥

वैशम्पायन उवाच । ततो व्यपेते तमसि सूर्य्ये विमल उद्गते । मैत्रे मुहूर्त्ते सम्प्राप्ते मृद्वर्च्चिषि दिवाकरे ॥ ६ ॥ कौमुदे मासि रेवत्यां शरदन्ते हिमागमे । स्फीतसस्यसुखे काले कल्यः सत्त्ववतां वरः ॥ ७ ॥ मङ्गल्याः पुण्यनिर्घोषा वाचः शृण्वंश्च सूनृताः । ब्राह्मणानां प्रतीतानामृषीणामिव वासवः ॥ ८ ॥ कृत्वा पौर्व्वाह्णिकं कृत्यं स्नातः शुचिरलङ्कृतः । उपतस्थे विवस्वन्तं पावकञ्च जनार्द्दनः ॥ ९ ॥ ऋषभं पृष्ठ आलभ्य ब्राह्मणानभिवाद्य च ।

अग्निं प्रदक्षिणं कृत्वा पश्यन् कल्याणमग्रतः ॥ १० ॥ तत प्रतिज्ञाय वचनं पाण्डवस्य जनार्दनः। शिनेर्नप्तारमासीनमभ्यभाषत सात्यकिम् ॥ ११ ॥ रथ आरोप्यतां शङ्खश्चक्रञ्च गदया सह। उपासङ्गाश्च शक्त्यश्च सर्वप्रहरणानि च ॥ १२ ॥ दुर्योधनो हि दुष्टात्मा कर्णश्च सहसौबलः। न च शत्रुरवज्ञेयो दुर्बलोऽपि बलीयसा ॥ १३ ॥ ततस्तन्मतमाज्ञाय केशवस्य पुरःसराः। प्रसस्रुर्योजयिष्यन्तो रथं चक्रगदाभृतः ॥ १४ ॥ तं दीप्तमिव कालाग्निमाकाशगमिवाशुगम्। चन्द्रसूर्यप्रकाशाभ्यां चक्राभ्यां समलङ्कृतम् ॥ १५ ॥ अर्धचन्द्रैश्च चन्द्रैश्च मत्स्यैः समृगपक्षिभिः। पुष्पैश्च विविधैश्चित्रं मणिरत्नैश्च सर्वशः ॥ १६ ॥ तरुणादित्यसङ्काशं बृहन्तं चारुदर्शनम्। मणिहेमविचित्राङ्गं सुध्वजं सुपताकिनम् ॥ १७ ॥ सूपस्करमनाधृष्यं वैयाघ्रपरिवारणम्। यशोघ्नं प्रत्यमित्राणां यदूनां नन्दिवर्द्धनम् ॥ १८ ॥ वाजिभिः शैब्यसुग्रीवमेघपुष्पबलाहकैः। स्नातैः सम्पादयामासुः सम्पन्नैः सर्वसम्पदा। ॥ १९ ॥ महिमानन्तु कृष्णस्य भूय एवाभिवर्द्धयन्। सुघोषः पतगेन्द्रेण ध्वजेन युयुजे रथः ॥ २० ॥ तं मेरुशिखरप्रख्यं मेघदुन्दुभिनिस्वनम्। आरुरोह रथं शौरिर्विमानमिव कामगम् ॥ २१ ॥ तत सात्यकिमारोप्य प्रययौ पुरुषोत्तमः। पृथिवीञ्चान्तरीक्षञ्च रथघोषेण नादयन् ॥ २२ ॥ व्यपोढाभ्रस्ततः कालः क्षणेन समपद्यत। शिवश्चानुववौ वायुः प्रशान्तमभवद्रजः ॥ २३ ॥ प्रदक्षिणानुलोमाश्च मङ्गल्या मृगपक्षिणः। प्रयाणे वासुदेवस्य बभूवुरनुयायिनः ॥ २४ ॥ मङ्गलार्थपदैः शब्दैरन्ववर्त्तन्त सर्वशः। सारसाः शतपत्राश्च हंसाश्च मधुसूदनम् ॥ २५ ॥ मन्त्राहुतिमहाहोमैर्हूयमानश्च पावकः। प्रदक्षिणशिखो भूत्वा विधूमः समपद्यत ॥ २६ ॥ वशिष्ठो वामदेवश्च भूरिद्युम्नो गयः क्रथः। शुक्रनारदवाल्मीका मरुतः कुशिको भृगुः ॥ २७ ॥ देवाब्रह्म

पर्य्ययैव कृपा यदुसुखावहम् । प्रदक्षिणमवर्त्तन्त सहिता वासवानुजम ॥ २८ ॥ एवमेतैर्म्महाभागैर्म्महर्षिगणसाधुभिः । पूजितः प्रययौ कृष्णः कुरूणां सदनं प्रति ॥ २९ ॥ तं प्रयान्तमनुप्रायात् कुन्तीपुत्रो युधिष्ठिरः । भीमसेनार्जुनौ चोभौ माद्रीपुत्रौ च पाण्डवौ ॥ ३० ॥ चेकितानश्च विक्रान्तो धृष्टकेतुश्च चेदिपः । द्रुपदः काशिराजश्च शिखण्डी च महारथः ॥ ३१ ॥ धृष्टद्युम्नः सपुत्रश्च विराटः कैकयैः सह । संसाधनार्थं प्रययुः क्षत्रियाः क्षत्रियर्षभम् ॥ ३२ ॥ ततोऽनुव्रज्य गोविन्दं धर्म्मराजो युधिष्ठिरः । राज्ञां सकाशे द्युतिमानुवाचेदं वचस्तदा ॥ ३३ ॥ यो वै न कामान्न क्रोधान्न भयान्नार्थकारणात् । अन्यायमनुवर्त्तेत स्थिरबुद्धिरलोलुपः ॥ ३४ ॥ धर्म्मज्ञो धृतिमान् प्राज्ञः सर्व्वभूतेषु केशव । ईश्वरः सर्व्वभूतानां देवदेवः सनातनः ॥ ३५ ॥ तं सर्व्वगुणसम्पन्नं श्रीवत्सकृतलक्षणम् । सम्परिष्वज्य कौन्तेयः सन्देष्टुमुपचक्रमे ॥ ३६ ॥

युधिष्ठिर उवाच । या सा बाल्यात् प्रभृत्यस्मान् पर्य्यवर्द्धयता बला । उपवासतपःशीला सदा स्वस्त्ययने रता ॥ ३७ ॥ देवतातिथिपूजासु गुरुशुश्रूषणे रता । वत्सला प्रियपुत्रा च प्रियास्माकं जनार्द्दन ॥ ३८ ॥ सुयोधनभयात् या नोऽत्रायतामित्रकर्षण । महतो मृत्युसम्बाधादुत्तरन्नौरिवार्णवात् ॥ ३९ ॥ अस्मत्कृते च सततं यया दुःखानि माधव । अनुभूतान्यदुःखार्हा तां स्म पृच्छेरनामयम् ॥ ४० ॥ भृशमाश्वासयेश्चैनां पुत्रशोकपरिप्लुताम् । अभिवाद्य स्वजेथास्त्वं पाण्डवान् परिकीर्त्तयन् ॥ ४१ ॥ ऊढात् प्रभृति दुःखानि श्वशुराणामरिन्दम । निकारान् न तदर्हा च पश्यन्ती दुःखमश्नुते ॥ ४२ ॥ अपि जातु स कालः स्यात् कृष्ण दुःखविपर्य्ययः । यदहं मातरं क्लिष्टां सुखं दद्यामरिन्दम ॥४३॥ प्रव्रजन्तोऽभिधावन्तीं कृपणां पुत्रगृद्धिनीम् । रुदतीमपहायैनामगच्छाम वयं वनम् ॥ ४४ ॥ न नूनं म्रियते दुःखैः सा चेज्जीवति

केशव। तथा पुत्राधिभिर्गाढ़मार्त्ता ध्यानपरतृता ॥ ४५ ॥ अभिवाद्याथ सा कृष्ण त्वया मद्वचनाद्विभो। धृतराष्ट्रश्च कौरव्यो राजानश्च वयोऽधिकाः ॥ ४६ ॥ भीष्मं द्रोणं कृपञ्चैव महाराजञ्च वाह्लिकम्। द्रौणिञ्च सोमदत्तञ्च सर्वांश्च भरतान् प्रति ॥ ४७ ॥ विदुरञ्च महाप्राज्ञं कुरूणां मन्त्रधारिणम्। अगाधबुद्धिं धर्मज्ञं स्वजेथा मधुसूदन ॥ ४८ ॥ इत्युक्त्वा केशवं तत्र राजमध्ये युधिष्ठिरः। अनुज्ञातो निववृते कृष्णं कृत्वा प्रदक्षिणम् ॥ ४९ ॥ प्रव्रजन्नेव बीभत्सुः सखायं पुरुषर्षभम्। अब्रवीत् परवीरघ्नं दाशार्हमपराजितम् ॥ ५० ॥ यदस्माकं विभो वृत्तं पुरा वै मन्त्रनिश्चये। अर्द्धराज्यस्य गोविन्द विदितं सर्वराजसु ॥ ५१ ॥ तच्चेद्दद्यादसङ्गेन सत्कृत्यानवमन्य च। प्रियं मे स्यान्महाबाहो मुच्येरन् महतो भयात् ॥ ५२ ॥ अतथ्येदन्यथा कर्त्ता धार्त्तराष्ट्रोऽनुपायवित्। अन्तं नूनं करिष्यामि क्षत्रियाणां जनार्द्दन ॥ ५३ ॥ एवमुक्ते पाण्डवेन समाहृष्यद्वृकोदरः। मुहुर्मुहुः क्रोधवशात् प्रावेपत च पाण्डवः ॥ ५४ ॥ वेपमानश्च कौन्तेयः प्राक्रोशन्महतो रवान्। धनञ्जयवचः श्रुत्वा हर्षोत्सिक्तमना भृशम् ॥ ५५ ॥ तस्य तं निनदं श्रुत्वा सम्प्रावेपन्त धन्विनः। वाहनानि च सर्वाणि शकृन्मूत्रे प्रसुस्रुवुः ॥ ५६ ॥ इत्युक्त्वा केशवं तत्र तथा चोक्त्वा विनिश्चयम्। अनुज्ञातो निववृते परिष्वज्य जनार्द्दनम् ॥ ५७ ॥ तेषु राजसु सर्वेषु निवृत्तेषु जनार्द्दनः। तूर्णमभ्यागमद्धृष्टः शैब्यसुग्रीववाहनः ॥ ५८ ॥ ते हया वासुदेवस्य दारुकेण प्रचोदिताः। पन्थानमाचेमुरिव ग्रसमाना इवाम्बरम् ॥ ५९ ॥ अथापश्यन्महावाहुरृषीनध्वनि केशवः। ब्राह्म्या श्रिया दीप्यमानान् स्थितानुभयतः पथि ॥ ६० ॥ सोऽवतीर्य्य रथात् तूर्णमभिवाद्य जनार्द्दनः। यथावत्तानृषीन् सर्वानभ्यभाषत पूजयन् ॥ ६१ ॥ कच्चिल्लोकेषु कुशलं कच्चिद्धर्मः स्वनुष्ठितः। ब्राह्मणानां त्रयो वर्णा

कच्चित्तिष्ठन्ति शासने ॥ ६२ ॥ तेभ्यः प्रयुज्य तां पूजां प्रोवाच मधुसूदनः । भगवन्तः क्व संसिद्धाः का वीथी भवतामिह ॥ ६४ ॥ किं वा कार्य्यं भगवतामहं किं करवाणि वः । केनार्थेनेह सम्प्राप्ता भगवन्तो महीतलम् ॥ ६५ ॥ तमब्रवीज्जामदग्न्य उपेत्य मधुसूदनम् । परिष्वज्य च गोविन्दं सुरासुरपतेः सखा ॥ ६६ ॥ देवर्षयः पुण्यकृतो ब्राह्मणाश्च बहुश्रुताः । राजर्षयश्च दाशार्ह मानयन्तस्तपस्विनः ॥ ६७ ॥ देवासुरस्य द्रष्टारः पुराणस्य महीपते । समेतं पार्थिवं चत्रं दिदृचन्तश्च सर्वतः ॥ ६८ ॥ सभासदश्च राजानस्त्वाञ्च सत्यं जनार्द्दनम् । एतन्महाप्रेक्षणीयं द्रष्टुं गच्छाम केशव ॥ ६८ ॥ धर्मार्थसहिता वाचः श्रोतुमिच्छाम माधव । त्वयोच्यमानाः कुरुषु राजमध्ये परन्तप ॥ ६९ ॥ भीष्मद्रोणादयश्चैव विदुरश्च महामतिः । त्वञ्च यादवशार्दूल सभायां वै समेष्यथ ॥ ७० ॥ तव वाक्यानि दिव्यानि तथा तेषाञ्च माधव । श्रोतुमिच्छाम गोविन्द सत्यानि च हितानि च ॥ ७१ ॥ आपृष्टोऽसि महाबाहो पुनर्द्रक्ष्यामहे वयम् । या ह्यभीस्तेन वै वीर द्रक्ष्यामस्त्वां सभागतम् । आसीनमासने दिव्ये बलतेजःसमागतम् ॥ ७२ ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि भगवद्याने
द्व्यशीतोऽध्यायः ॥ ८२ ॥

---

वैशम्पायन उवाच । प्रयान्तं देवकीपुत्रं परवीररुजो दश । महारथा महाबाहुमन्वयुः शस्त्रपाणयः ॥ १ ॥ पदातीनां सहस्रञ्च सादिनाञ्च परन्तप । भोज्यञ्च विपुलं राजन् प्रेष्याश्च शतशोऽपरे ॥ २ ॥

जनमेजय उवाच । कथं प्रयातो दाशार्हो महात्मा मधुसूदनः । कानि वा व्रजतस्तस्य निमित्तानि महौजसः ॥ ३ ॥

वैशम्पायन उवाच। तस्य प्रयाणे यान्यासन्निमित्तानि महा
त्मन। तानि मे शृणु सर्वाणि दैवान्यौत्पातिकानि च॥ ४॥
अनभ्रेऽशनि निर्घोषः सविद्युत समजायत। अन्वगेव च पर्जन्य
प्रावर्षद्विघने भृशम॥ ५॥ प्रत्यगूहुर्महानद्यः प्राङ्मुखाः सिन्धु-
सप्तमाः। विपरीता दिशः सर्वा न प्राज्ञायत किञ्चन॥ ६॥
प्राज्वलन्नग्नयो राजन् पृथिवी समकम्पत। उदपानाश्च कुम्भाश्च
प्रासिञ्चञ्छतशो जलम॥ ७॥ तमः संवृतमप्यासीत सर्व जगदिद
तथा। न दिशो नादिशो राजन प्राज्ञायन्त स्म रेणुना॥ ८॥
प्रादुरासीन्महाञ्छब्द खे शरीरं न दृश्यते। सर्वेषु राजन् राष्ट्रेषु
तदद्भुतमिवाभवत॥ ९॥ प्रामथ्नाद्धास्तिनपुरं वातो दक्षिण
पश्चिम। आरुजन् गणशो वृक्षान् परुषोऽशनिनिस्वन॥ १०॥
यत्र यत्र च वार्ष्णेयो वर्तते पथि भारत। तत्र तत्र सुखो वायु
सर्वञ्चासीत प्रदक्षिणम्॥ ११॥ ववर्ष पुष्पवर्षञ्च कमलानि च
भूरिशः। समश्च पन्था निर्दु:खो व्यपेतकुशकण्टक॥ १२॥
संस्तुतो ब्राह्मणैर्गीर्भिस्तत्र तत्र महस्रश। अर्च्यते मधुपर्कैश्च
वसुभिश्च वसुप्रद॥ १३॥ त किरन्ति महात्मान वन्यै पुष्पै
सुगन्धिभि। स्त्रियः पथि समागम्य सर्वभूतहिते रतम्॥ १४॥
स शालिभवनं रम्यं सर्वसस्यसमाचितम्। सुखं परमधर्मिष्ठ
मभ्यगाद्भरतर्षभ॥ १५॥ पश्यन् बहुपशून् ग्रामान् रम्यान् हृदय
तोषणान्। पुराणि च व्यतिक्रामन्राष्ट्राणि विविधानि च॥ १६॥
नित्य हृष्टा सुमनसो भारतैरभिरक्षित। नोद्विग्ना पर
चक्राणां व्यसनानामकोविदा॥ १७। उपप्लव्यादथागम्य जना
पुरनिवासिन। पथ्यतिष्ठन्त सहिता विष्वक्सेनदिदृक्षया॥ १८॥
ते तु सर्वे समायान्तमग्निमिद्धमिव प्रभुम। अर्चयामासुरर्चार्ह
देशेऽतिथिमुपस्थितम्॥ १९॥ वृकस्थल समासाद्य केशव पर
वीरहा। प्रकीर्णरश्मावादित्ये व्योम्नि वै लोहितायति॥ २०॥

अवतीर्य्य रथात्तूर्णं कृत्वा शौचं यथाविधि । रथमोचनमादिश्य
सन्ध्यामुपविवेश ह ॥ २१ ॥ दारुकोऽपि हयान्मुक्त्वा परिचर्य्य च
शास्त्रतः । मुमोच सर्व्वयोक्त्रादि मुक्त्वा चैतानवासृजत ॥ २२ ॥
अभ्यतीत्य तु तत् सर्व्वमुवाच मधुसूदनः । युधिष्ठिरस्य कार्य्यार्थ-
मिह वत्स्यामहे क्षपाम ॥ २३ ॥ तस्य तन्मतमाज्ञाय चक्रुरावसथं
नराः । क्षणेन चान्नपानानि गुणवन्ति समार्ज्जयन् ॥ २४ ॥
तस्मिन् ग्रामे प्रधानास्तु य आसन् ब्राह्मणा नृप । आर्य्याः
कुलीना ह्रीमन्तो ब्राह्मीं वृत्तिमनुष्ठिताः ॥ २५ ॥ तेऽभिगम्य
महात्मानं हृषीकेशमरिन्दमम् । पूजाञ्चक्रुर्यथान्यायमाशीर्मङ्गल-
संयुताम् ॥ २५ ॥ ते पूजयित्वा दाशार्हं सर्व्वलोकेषु पूजितम् ।
न्यवेदयन्त वेश्मानि रत्नवन्ति महात्मने ॥ २७ ॥ तान् प्रभुः कृत-
मित्युक्त्वा सत्कृत्य च यथार्हतः । अभ्येत्य चैषां वेश्मानि पुन-
रायात् सहैव तैः ॥ २८ ॥ सुमृष्टं भोजयित्वा तु ब्राह्मणांस्तत्र
केशवः । भुक्त्वा च सह तैः सर्व्वैरवसत्तां क्षपां सुखम् ॥ २९ ॥

इति उद्योगपर्व्वणि भगवद्यानपर्व्वणि भगवद्याने
त्र्यशीतोऽध्यायः ॥ ८३ ॥

---

वैशम्पायन उवाच । तथा दूतैः समाज्ञाय प्रयान्तं मधु-
सूदनम् । धृतराष्ट्रोऽब्रवीत् भीष्ममर्च्चयित्वा महाभुजम् ॥ १ ॥
द्रोणञ्च सञ्जयञ्चैव विदुरञ्च महामतिम् । दुर्य्योधनं सहामात्यं
हृष्टरोमाब्रवीदिदम् ॥ २ ॥ अद्भुतं महदाश्चर्य्यं श्रूयते कुरु-
नन्दन । स्त्रियो बालाश्च वृद्धाश्च कथयन्ति गृहे गृहे ॥ ३ ॥ सत्-
कृत्याचक्षते चान्ये तथैवान्ये समागताः । पृथग्वादाश्च वर्त्तन्ते
चत्वरेषु सभासु च ॥ ४ ॥ उपयास्यति दाशार्हः पाण्डवार्थे परा-
क्रमी । स नो मान्यश्च पूज्यश्च सर्व्वथा मधुसूदनः ॥ ५ ॥ तस्मिन्

हि यावा लोकस्य भूतानामीश्वरो हि स। तस्मिन् धृतिश्च
वीर्य्यञ्च प्रज्ञा चौजश्च माधवे ॥ ६ ॥ स तो मान्यो नरश्रेष्ठ स हि
धर्म्मः सनातन। पूजितो हि सुखाय स्यादसुख स्यादपूजित ॥७॥
स चेत्तुष्यति दाशार्ह उपचारैररिन्दम। कृष्णात् सर्वानभिप्रायान्
प्राप्स्याम सर्वराजसु ॥ ८ ॥ तस्य पूजार्थमद्यैव संविधत्स्व पर-
न्तप। सभा पथि विधीयन्ता सर्वकामसमन्विता ॥ ९ ॥ यथा
प्रीतिर्महाबाहो त्वयि जायेत तस्य वै। तथा कुरुष्व गान्धारे
कथ वा भीष्म मन्यसे ॥ १० ॥ ततो भीष्मादय सर्वे धृतराष्ट्रं
जनाधिपम्। ऊचु परममित्येव पूजयन्तोऽस्य तद्वच ॥ ११ ॥
तेषामनुमतं ज्ञात्वा राजा दुर्य्योधनस्तदा। सभावास्तूनि रम्याणि
प्रदेष्टुमुपचक्रमे ॥ १२ ॥ ततो देशेषु सर्वेषु रमणीयेषु भागश।
आसनानि विचित्राणि युक्तानि विविधैर्गुणै। स्त्रियो गन्धानल-
ङ्कारान् सूक्ष्माणि वसनानि च ॥ १३ ॥ गुणवन्त्यन्नपानानि
भोज्यानि विविधानि च। माल्यानि च सुगन्धीनि तानि राजा
ददौ तत ॥ १४ ॥ विशेषतश्च वासार्थं सभा ग्रामे वृकस्थले।
विदधे कौरवो राजा बहुरत्ना मनोरमाम ॥ १५ ॥ एतद्विधाय
वै सर्वं देवार्हमतिमानुषम्। आचख्यौ धृतराष्ट्राय राजा दुर्य्यो
धनस्तदा ॥ १६ ॥ ता सभा केशव सर्वा रत्नानि विविधानि
च। असमीक्ष्यैव दाशार्ह उपायात कुरुसद्म तत् ॥ १७ ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि भगवद्याने
चतुरशीतोऽध्याय ॥ ८४ ॥

---

धृतराष्ट्र उवाच। उपप्लव्यादिह चत्तरुपायातो जनार्द्दन।
वृकस्थले निवसति स च प्रातरिहैष्यति ॥ १ ॥ आहुकानामधि
पति पुरोग सर्वसात्वताम्। महामना महावीर्य्यो महासत्त्वो

जनार्द्दनः ॥ २ ॥ स्फीतस्य वृष्णिराष्ट्रस्य भर्त्ता गोप्ता च माधवः। त्रयाणामपि लोकानां भगवान् प्रपितामहः ॥ ३ ॥ वृष्ण्यन्धकाः सुमनसो तस्य प्रज्ञामुपासते। आदित्या वसवो रुद्रा यथा बुद्धिं बृहस्पतेः ॥ ४ ॥ तस्मै पूजां प्रवक्ष्यामि दाशार्हाय महात्मने। प्रत्यक्षं तव धर्मज्ञ तां मे कथयतः शृणु ॥ ५ ॥ एकवर्णैः सुकृष्णाङ्गैर्वाह्लिजातैर्हयोत्तमैः। चतुर्युक्तान्रथांस्तस्मै रौक्मान् दास्यामि षोड़श ॥ ६ ॥ नित्यप्रभिन्नान्मातङ्गानीषादन्तान् प्रहारिणः। अष्टानुचरमेकैकमष्टौ दास्यामि कौरव ॥ ७ ॥ दासीनामप्रजातानां शुभानां रुक्मवर्च्चसाम्। शतमस्मै प्रदास्यामि दासानामपि तावतः ॥ ८ ॥ आविकञ्च सुखस्पर्शं पार्व्वतीयैरुपाहृतम्। तदप्यस्मै प्रदास्यामि सहस्राणि दशाष्ट च ॥ ९ ॥ वाजिनाञ्च सहस्राणि चीनदेशोद्भवानि च। तान्यप्यस्मै प्रदास्यामि यावदर्हति केशव ॥ ११॥ दिवा रात्रौ च भात्येष सुतेजा विमलो मणिः। तमप्यस्मै प्रदास्यामि तमर्हति हि केशव ॥ १२ ॥ एकेनाभिपतत्यह्ना योजनानि चतुर्द्दश। यानमश्वतरीयुक्तं दास्ये तस्मै तदप्यहम् ॥ १३ ॥ यावन्ति वाहनान्यस्य यावन्तः पुरुषाश्च ते। ततोऽष्टगुणमप्यस्मै भोज्यं दास्याम्यहं सदा ॥ १४ ॥ मम पुत्राश्च पौत्राश्च सर्व्वे दुर्य्योधनादृते। प्रत्युद्यास्यन्ति दाशार्हं रथैर्म्मृष्टैः स्वलङ्कृताः ॥ १५ ॥ स्वलङ्कृताश्च कल्याण्यः पादैरेव सहस्रशः। वारमुख्या महाभागं प्रत्युद्यास्यन्ति केशवम् ॥ १६ ॥ नगरादपि याः काश्चित् गमिष्यन्ति जनार्द्दनम्। द्रष्टुं कन्याश्च कल्याण्यस्ताश्च यास्यन्त्यनावृताः ॥ १७ ॥ सस्त्रीपुरुषबालञ्च नगरं मधुसूदनम्। उदीक्षता महात्मानं भानुमन्तमिव प्रजाः ॥ १८ ॥ महाध्वजपताकाश्च क्रियन्तां सर्व्वतो दिशः। जलावसिक्तो विरजाः पन्थास्तस्येति चान्वशात् ॥ १९ ॥ दुःशासनस्य च गृहं दुर्य्योधनगृहाद्वरम्। तदस्य क्रियतां क्षिप्रं सुसंमृष्टमलङ्कृतम् ॥ २० ॥ एतद्धि रुचिराकारैः प्रासादैः-

रूपशोभितम्। शिवञ्च रमणीयञ्च सर्वर्त्तुषु महाधनम् ॥ २१ ॥
सर्वमस्मिन् गृहे रत्नं मम दुर्योधनस्य च। यद्यदर्हति वार्ष्णेय-
स्तत्तद्देयमसंशयम् ॥ २२ ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि धृतराष्ट्रवाक्ये
पञ्चाशीतोऽध्याय ॥ ८५ ॥

---

विदुर उवाच। राजन बहुमतश्चासि त्रैलोक्यस्यापि सत्तम।
सम्भावितश्च लोकस्य सम्मतश्चासि भारत ॥ १ ॥ तत्त्वमेव गते
ब्रूया पश्चिमे वयसि स्थित। शास्त्राद्वा सुप्रतर्काद्वा सुस्थिर
स्थविरो ह्यसि ॥ २ ॥ लेखाश्मनीव भा सूर्य्ये महोर्म्मिरिव सागरे।
धर्मस्त्वयि तथा राजन्निति व्यवसिता प्रजा ॥ ३ ॥ सदैव
भावितो लोको गुणौघैस्तव पार्थिव। गुणाना रक्षणे नित्यं
प्रयतस्व सवान्धव ॥ ४ ॥ आर्जवं प्रतिपद्यस्व मा बाल्याद्बहु
नौनश। राजन् पुत्रांश्च पौत्रांश्च सुहृदश्चैव सुप्रियान् ॥ ५ ॥
यत्त्वमिच्छसि कृष्णाय राजन्नतिथये बहु। एतदन्यच्च दाशार्ह
पृथिवीमपि चार्हति ॥ ६ ॥ न तु त्वं धर्ममुद्दिश्य तस्य वा प्रिय
कारणात। एतदिच्छसि कृष्णाय सत्येनात्मानमालभे ॥ ७ ॥
मायैषा सत्यमेवैतच्छद्मैतद्भूरिदक्षिण। जानामि त्वन्मतं राजन्
गूढं बाह्येन कर्मणा ॥ ८ ॥ पञ्च पञ्चैव लिप्सन्ति ग्रामकान्
पाण्डवा नृप। न च दित्ससि तेभ्यस्तांस्तच्छमं क करिष्यसि ॥ ९ ॥
अर्थेन तु महाबाहुं वार्ष्णेयं त्वं जिहीर्षसि। अनेन चाप्युपायेन
पाण्डवेभ्यो विभेत्स्यसि ॥ १० ॥ न च वित्तेन शक्योऽसौ नोद्य
मेन न गर्हया। अन्यो धनञ्जयात कर्त्तुमेतत्तत्त्वं ब्रवीमि ते ॥ ११ ॥
वेद कृष्णस्य माहात्म्यं वेदास्य दृढभक्तिताम। अत्याज्यमस्य
जानामि प्राणैस्तुल्य धनञ्जयम् ॥ १२ ॥ अन्यत कुम्भादपां पूर्ण

दन्यत् पादावसेचनात्। अन्यत् कुशलसम्प्रश्नान्नैषिष्यति जनार्द्दनः॥ १३॥ यत्तस्य प्रियमातिथ्यं मानार्हस्य महात्मनः। तदस्मै क्रियतां राजन् मानार्होऽसौ जनार्द्दनः॥ १४॥ यमर्थं समान कल्याणं कुरूनभ्येति केशवः। येनैव राजन्नर्थेन तदेवास्मा उपाकुरु॥ १५॥ शममिच्छति दाशार्हस्तव दुर्य्योधनस्य च। पाण्डवानाञ्च राजेन्द्र तदस्य वचनं कुरु॥ १६॥ पितासि राजन् पुत्रास्ते वृद्धस्त्वं शिशव परे। वर्त्तस्व पितृवत्तेषु वर्त्तन्ते ते हि पुत्रवत्॥ १७॥

इति उद्योगपर्व्वणि भगवद्यानपर्व्वणि विदुरवाक्ये षड्शीतोऽध्याय॥ ८६॥

---

दुर्य्योधन उवाच। यदाह विदुरः कृष्णे सर्व्वं तत् सत्यमच्युते। अनुरक्तो ह्यसंहार्य्यः पार्थान् प्रति जनार्द्दनः॥ १॥ यत्तत्सत्कारसंयुक्तं देयं वसु जनार्द्दने। अनेकरूपं राजेन्द्र न तद्देयं कदाचन॥ २॥ देशः कालस्तथायुक्तो न हि नार्हति केशव। मंस्यत्यधोक्षजो राजन् भयादर्चति मामिति॥ ३॥ अवमानश्च यत्र स्यात् क्षत्रियस्य विशाम्पते। न तत् कुर्य्यात् बुधः कार्य्यमिति मे निश्चिता मतिः॥ ४॥ स हि पूज्यतमो लोके कृष्णः पृथुललोचनः। त्रयाणामपि लोकानां विदितं मम सर्व्वथा॥ ५॥ न तु तस्मै प्रदेयं स्यात् तथा कार्य्यगतिः प्रभो। विग्रहः समुपारब्धो न हि शाम्यत्यविग्रहात्॥ ६॥

वैशम्पायन उवाच। तस्य तद्वचनं श्रुत्वा भीष्मः कुरुपितामहः। वैचित्रवीर्य्यं राजानमिदं वचनमब्रवीत॥ ७॥ सत्कृतोऽसत्कृतो वापि न क्रुध्येत जनार्द्दनः। नालमेनमवज्ञातुं नावज्ञेयो हि केशव॥ ८॥ यत्तु कार्य्यं महाबाहो मनसा कार्य्यतां

गतम्। सर्वोपायैर्न तच्छक्यं केनचित् कर्त्तुमन्यथा ॥ ९ ॥ स यत ब्रूयात महाबाहुस्तत कार्य्यमविशङ्कया। वासुदेवेन तीर्थेन चिप्रं सन्धास्य पाण्डवैः ॥ १० ॥ धर्म्म्यमर्थ्यञ्च धर्मात्मा ध्रुवं वक्ता जनार्द्दन। तस्मिन् वाच्या प्रिया वाचो भवता बान्धवैः सह ॥ ११॥

दुर्य्योधन उवाच। न पर्य्याप्तोऽस्ति यद्राजन् श्रियं निष्के वलामहम्। तैः सहेमामुपाश्नीया यावज्जीवं पितामह ॥ १२ ॥ इदन्तु सुमहत् कार्य्यं शृणु मे यत समर्थितम। परायणं पाण्डवाना नियंस्यामि जनार्द्दनम ॥ १३ ॥ तस्मिन् वद्धे भविष्यन्ति वृष्णय पृथिवी तथा। पाण्डवाश्च विधेया मे स च प्रातरिहैष्यति ॥ १४ ॥ अत्रोपायान् यथा सम्यङ् न बुध्येत जनार्द्दन। न चापायो भवेत् कश्चित्तद्भवान् प्रब्रवीतु मे ॥ १५ ॥

वैशम्पायन उवाच। तस्य तद्वचनं श्रुत्वा घोरं कृष्णाभि सन्धितम। धृतराष्ट्र सहामात्यो व्यथितो विमनाभवत ॥ १६ ॥ ततो दुर्य्योधनमिदं धृतराष्ट्रोऽब्रवीदच। मैवं वोच प्रजापाल नैष धर्म्मः सनातन ॥ १७ ॥ दूतश्च हि हृषीकेश सम्बन्धी च प्रियश्च न। अपाप कौरवेयेषु स कथं बन्धमर्हति ॥ १८ ॥

भीष्म उवाच। परीतस्तव पुत्रोऽयं धृतराष्ट्र सुमन्दधी। वृणोत्यनर्थं नैवार्थं याच्यमान सुहृज्जनैः ॥ १९ ॥ इममुत्पथि वर्त्तन्तं पापं पापानुबन्धिनम्। वाक्यानि सुहृदा हित्वा त्वमस्यानुवर्त्तसे ॥ २० ॥ कृष्णमक्लिष्टकर्म्माणमासाद्याय सुदुर्मति। तव पुत्र सहामात्य क्षणेन न भविष्यति ॥ २१ ॥ पापस्यास्य नृशंसस्य त्यक्तधर्म्मस्य दुर्मते। नोत्सहेऽनर्थसंयुक्ता श्रोतुं वाच कथञ्चन ॥ २२ ॥ इत्युक्त्वा भरतश्रेष्ठो वृद्ध परममन्युमान्। उत्थाय तस्मात प्रातिष्ठद्भीष्म सत्यपराक्रम ॥ २३ ॥

इति उद्योगपर्व्वणि भगवद्यानपर्व्वणि दुर्य्योधनवाक्ये अष्टाशीतोऽध्याय ॥ ८८ ॥

वैशम्पायन उवाच। प्रातरुत्थाय कृष्णस्तु कृतवान् सर्व्व-माह्निकम्। ब्राह्मणैरभ्यनुज्ञात प्रययौ नगरं प्रति ॥ १ ॥ तं प्रयान्त महाबाहुमनुज्ञाप्य महाबलम्। पर्य्यवर्त्तन्त ते सर्व्वे वृक-स्थलनिवासिनः ॥ २ ॥ धार्त्तराष्ट्राः समायान्तं प्रत्युज्जग्मुः स्वलङ्कृताः। दुर्य्योधनादृते सर्व्वे भीष्मद्रोणकृपादयः ॥ ३ ॥ पौराश्च बहुला राजन् हृषीकेशं दिदृक्षवः। यानैर्बहुविधैरन्ये पद्भिरेव तथापरे ॥ ४ ॥ स वै पथि समागम्य भीष्मेणाक्लिष्टकर्म्मणा। द्रोणेन धार्त्तराष्ट्रैश्च तैर्वृतो नगरं ययौ ॥ ५ ॥ कृष्णसम्मान-नार्थञ्च नगरं समलङ्कृतम्। बभूव राजमार्गश्च बहुरत्नसमाचितः ॥ ६ ॥ न च कश्चिद्गृहे राजंस्तदासीत् भरतर्षभ। न स्त्री न वृद्धो न शिशुर्वासुदेवदिदृक्षया ॥ ७ ॥ राजमार्गे नरास्तस्मिन् संस्तुवन्त्यवनिं गताः। तस्मिन् काले महाराज हृषीकेशप्रवेशने ॥ ८ ॥ आवृतानि वरस्त्रीभिर्गृहाणि सुमहान्त्यपि। प्रचलन्तीव भारेण दृश्यन्ते स्म महीतले ॥ ९ ॥ यथा च गतिमन्तस्ते वासु-देवस्य वाजिनः। प्रनष्टगतयोऽभूवन्राजमार्गे नरैर्वृते ॥ १० ॥ स गृहं धृतराष्ट्रस्य प्राविशच्छत्रुकर्षणः। पाण्डुरं पुण्डरीकाक्षः प्रासादैरुपशोभितम् ॥ ११ ॥ तिस्रः कक्षा व्यतिक्रम्य केशवो राजवेश्मनः। वैचित्रवीर्य्यं राजानमभ्यगच्छदरिन्दम ॥ १२ ॥ अभ्यागच्छति दाशार्हे प्रज्ञाचक्षुर्नराधिप। सहैव द्रोणभीष्मा-भ्यामुदतिष्ठन्महायशाः ॥ १३ ॥ कृपश्च सोमदत्तश्च महाराजश्च बाह्लिकः। आसनेभ्योऽचलन् सर्व्वे पूजयन्तो जनार्द्दनम् ॥ १४ ॥ ततो राजानमासाद्य धृतराष्ट्रं यशस्विनम्। स भीष्मं पूजयामास वार्ष्णेयो वाग्भिरञ्जसा ॥ १५ ॥ तेषु धर्म्मानुपूर्व्वीन्तां प्रयुज्य मधुसूदनः। यथावयः समीयाय राजभि सह माधवः ॥ १६ ॥ अथ द्रोणं सबाह्लीकं सपुत्रञ्च यशस्विनम्। कृपञ्च सोमदत्तञ्च समीयाय जनार्द्दन ॥ १७ ॥ तत्रासीदूर्ज्जितं मृष्टं काञ्चनं महा-

दासनम्। आसनाद्धृतराष्ट्रस्य तत्रोपाविशदच्युतः ॥ १८ ॥ अथ गां मधुपर्कञ्चाप्युदकञ्च जनार्द्दनम्। उपजह्रुर्यथान्यायं धृतराष्ट्रपुरोहिताः ॥ १९ ॥ कृतातिथ्यस्तु गोविन्दः सर्वान् परिहसन् कुरून्। आस्ते साम्बन्धिकं कुर्वन् कुरुभिः परिवारितः ॥ २० ॥ सोऽर्च्चितो धृतराष्ट्रेण पूजितश्च महायशाः। राजानं समनुज्ञाप्य निरक्रामदरिन्दमः ॥ २१ ॥ तैः समेत्य यथान्यायं कुरुभिः कुरुसंसदि। विदुरावसथं रम्यमुपातिष्ठत माधवः ॥२२॥ विदुरः सर्वकल्याणैरभिगम्य जनार्द्दनम्। अर्च्चयामास दाशार्हं सर्वकामैरुपस्थितम् ॥ २३ ॥ या मे प्रीतिः पुष्कराक्ष तद्दर्शनसमुद्भवा। सा किमाख्यायते तुभ्यमन्तरात्मासि देहिनाम् ॥२४॥ कृतातिथ्यन्तु गोविन्दं विदुरः सर्वधर्मवित्। कुशलं पाण्डुपुत्राणामपृच्छन्मधुसूदनम् ॥ २५ ॥ प्रीयमाणस्य सुहृदो विदुषो बुद्धिसत्तमः। धर्मार्थनित्यस्य सतो गतरोषस्य धीमतः ॥ २६ ॥ तस्य सर्वं सविस्तारं पाण्डवानां विचेष्टितम्। क्षत्तुराचष्ट दाशार्हः सर्वप्रत्यक्षदर्शिवान् ॥ २७ ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि विदुरभगवत्संवादे अष्टाशीतोऽध्यायः ॥ ८८ ॥

---

वैशम्पायन उवाच। अथोपगम्य विदुरमपराह्णे जनार्द्दनः। पितृष्वसारं स पृथामभ्यगच्छदरिन्दम ॥ १ ॥ सा दृष्ट्वा कृष्णमायान्तं प्रसन्नादित्यवर्च्चसम्। कण्ठे गृहीत्वा प्राक्रोशत् स्मरन्ती तनयान् पृथक् ॥ २ ॥ तेषां सत्त्ववतां मध्ये गोविन्दं सहचारिणम्। चिरस्य दृष्ट्वा वार्ष्णेयं वाष्पमाहारयत् पृथा ॥ ३ ॥ साब्रवीत् कृष्णमासीनं कृतातिथ्यं युधाम्पतिम्। वाष्पगद्गदपूर्णेन मुखेन परिशुष्यता ॥ ४ ॥ ये ते बाल्यात् प्रभृत्येव गुरुशुश्रूषणे

रता । परस्परस्य सुहृदः सम्मताः समचेतसः ॥ ५ ॥ निकृत्या भ्रंशिता राज्यात्त्वनार्हा निर्जनं गताः । विनीतक्रोधहर्षाश्च ब्राह्मण्याः सत्यवादिनः ॥ ६ ॥ त्यक्त्वा प्रियसुखे पार्था रुदन्तीमपहाय माम् । अहार्षुश्च वनं यान्तः समूलं हृदयं मम ॥ ७ ॥ अतदर्हा महात्मानः कथं केशव पाण्डवाः । ऊषुर्महावने तात सिंहव्याघ्रगजाकुले ॥ ८ ॥ बाला विहीनाः पित्रा ते मया सततलालिताः । अपश्यन्तश्च पितरौ कथमूषुर्महावने ॥ ९ ॥ शङ्खदुन्दुभिनिर्घोषैर्मृदङ्गैर्वैणवनिस्वनैः । पाण्डवाः समबोध्यन्त बाल्यात् प्रभृति केशव ॥ १० ॥ ये स्म वारणशब्देन हयानां हेषितेन च । रथनेमिनिनादैश्च व्यबोध्यन्त तदा गृहे ॥ ११ ॥ शङ्खभेरीनिनादेन वेणुवीणानुनादिना । पुण्याहघोषमिश्रेण पूज्यमाना द्विजातिभिः ॥ १२ ॥ वस्त्रै रत्नैरलङ्कारैः पूजयन्तो द्विजन्मनः । गीर्भिर्मङ्गलयुक्ताभिर्ब्राह्मणानां महात्मनाम् ॥ १३ ॥ अर्चितैरर्चनार्हैश्च स्तुवद्भिरभिनन्दिताः । प्रासादाग्रेष्वबोध्यन्त राङ्कवाजिनशायिनः ॥ १४ ॥ क्रूरं स्म नितरां श्रुत्वा श्वापदानां महावने न स्मोपयान्ति निद्रान्ते न तदर्हा जनार्दन ॥ १५ ॥ भेरीमृदङ्गनिनदैः शङ्खवैणवनिस्वनैः । स्त्रीणां गीतनिनादैश्च मधुरैर्मधुसूदन ॥ १६ ॥ वन्दिमागधसूतैश्च स्तुवद्भिर्बोधिताः कथम् । महावनेष्वबुध्यन्त श्वापदानां रुतेन च ॥ १७ ॥ ह्रीमान् सत्यधृतिर्दान्तो भूतानामनुकम्पिता । कामद्वेषौ वशे कृत्वा सतां वर्त्मानुवर्त्तते ॥ १८ ॥ अम्बरीषस्य मान्धातुर्ययातेर्नहुषस्य च । भरतस्य दिलीपस्य शिबेरौशीनरस्य च ॥ १९ ॥ राजर्षीणां पुराणानां धुरं धत्ते दुरुद्वहाम् । शीलवृत्तोपसम्पन्नो धर्मज्ञः सत्यसङ्गरः ॥ २० ॥ राजा सर्व्वगुणोपेतस्त्रैलोक्यस्यापि यो भवेत् । अजातशत्रुर्धर्मात्मा शुद्धजाम्बूनदप्रभः ॥ २१ ॥ श्रेष्ठः कुरुषु सर्व्वेषु धर्मतः श्रुतवृत्ततः । प्रियदर्शी दीर्घभुजः कथं कृष्ण युधिष्ठिरः ॥ २२ ॥ यः स नागा-

युतप्राणो वातरंहा महाबल। सामर्षं पाण्डवो नित्यं प्रियो भ्रातुः प्रियङ्करः ॥ २३ ॥ कीचकस्य तु सज्ञातेर्यो हन्ता मधुसूदन। शूरः क्रोधवशानाञ्च हिडिम्बस्य बकस्य च ॥ २४ ॥ पराक्रमे शक्रसमो मातरिश्वसमो बले। महेश्वरसमः क्रोधे भीमः प्रहरतांवरः ॥ २५ ॥ क्रोधं बलममर्षञ्च यो निधाय परन्तप। जितात्मा पाण्डवोऽमर्षी भ्रातुस्तिष्ठति शासने ॥ २६ ॥ तेजोराशिं महात्मानं वरिष्ठममितौजसम्। भीमं प्रदर्शनेनापि भीमसेनं जनार्द्दन ॥ २७ ॥ तत्समाचक्ष्व वार्ष्णेय कथमद्य वृकोदरः। आस्ते परिघबाहुः स मध्यमः पाण्डवो बली ॥ २८ ॥ अर्जुनेनार्जुनो यः स कृष्ण बाहुसहस्रिणा। द्विबाहुः स्पर्द्धते नित्यमतीतेनापि केशव ॥ २९ ॥ चिपत्येकेन वेगेन पञ्च बाणशतानि यः। इष्वस्त्रे सदृशो राज्ञः कार्त्तवीर्य्यस्य पाण्डव ॥ ३० ॥ तेजसादित्यसदृशो महर्षिसदृशो दमे। चमया पृथिवीतुल्यो महेन्द्रसमविक्रमः ॥ ३१ ॥ आधिराज्यं महद्दीप्तं प्रथितं मधुसूदन। आहृतं येन वीर्य्येण कुरूणां सर्वराजसु ॥ ३२ ॥ यस्य बाहुबलं सर्वे पाण्डवाः पर्य्युपासते। स सर्वरथिनां श्रेष्ठः पाण्डवः सत्यविक्रमः ॥ ३३ ॥ यं गत्वाभिमुखः सङ्ख्ये न जीवन् कश्चिदाव्रजेत्। यो जेता सर्वभूतानामजेयो जिष्णुरच्युत ॥ ३४ ॥ योऽपाश्रयः पाण्डवानां देवानामिव वासवः। स ते भ्राता सखा चैव कथमद्य धनञ्जयः ॥ ३५ ॥ दयावान् सर्वभूतेषु ह्रीनिषेवो महास्त्रवित्। मृदुश्च सुकुमारश्च धार्मिकश्च प्रियश्च मे ॥ ३६ ॥ सहदेवो महेष्वासः शूरः समितिशोभनः। भ्रातॄणां कृष्ण शुश्रूषुर्धर्मार्थकुशलो युवा ॥ ३७ ॥ सदैव सहदेवस्य भ्रातरो मधुसूदन। वृत्तं कल्याणवृत्तस्य पूजयन्ति महात्मनः ॥ ३८ ॥ ज्येष्ठापचायिनं वीरं सहदेवं युधाम्पतिम्। शुश्रूषुं मम वार्ष्णेय माद्रीपुत्रं प्रचक्ष्व मे ॥ ३९ ॥ सुकुमारो युवा शूरो दर्शनीयश्च पाण्डवः। भ्रातॄणा-

त्वेव सर्वेषां प्रियः प्राणो बहिश्चरः ॥ ४० ॥ चित्रयोधी च नकुलो
महेष्वासो महाबलः । कच्चित् स कुशली कृष्ण वत्सो मम सुखै-
धितः ॥ ४१ ॥ सुखोचितमदुःखार्हं सुकुमारं महारथम् । अपि
जातु महाबाहो पश्येयं नकुलं पुनः ॥ ४२ ॥ पक्ष्मसम्पातजे काले
नकुलेन विनाकृता । न लभामि धृतिं वीर साद्य जीवामि पश्य
माम् ॥ ४३ ॥ सर्वैः पुत्रैः प्रियतरा द्रौपदी मे जनार्दन । कुलीना
रूपसम्पन्ना सर्वैः समुदिता गुणैः ॥ ४४ ॥ पुत्रलोकात् पतिलोकं
वृणाना सत्यवादिनी । प्रियान् पुत्रान् परित्यज्य पाण्डवाननु-
रुध्यते ॥ ४५ ॥ महाभिजनसम्पन्ना सर्वकामैः सुपूजिता । ईश्वरी
सर्वकल्याणी द्रौपदी कथमच्युत ॥ ४६ ॥ पतिभिः पञ्चभिः शूरै-
रग्निकल्पैः प्रहारिभिः । उपपन्ना महेष्वासैर्द्रौपदी दुःखभागिनी
॥ ४७ ॥ चतुर्दशमिदं वर्षं यन्नापश्यमरिन्दम । पुत्राधिभिः
परिद्यूनां द्रौपदीं सत्यवादिनीम् ॥ ४८ ॥ न नूनं कर्मभिः पुण्यै-
रश्नुते पुरुषः सुखम् । द्रौपदी चेत्तथा वृत्ता नाश्नुते सुखमव्ययम्
॥ ४९ ॥ न प्रियो मम कृष्णायाः बीभत्सुर्न युधिष्ठिरः । भीमसेनो
यमौ वापि यदपश्यं सभागताम् ॥ ५० ॥ न मे दुःखतरं किञ्चित्
भूतपूर्वं ततोऽधिकम् । स्त्रीधर्मिणीं द्रौपदीं यत् श्वशुराणां
समीपगाम् ॥ ५१ ॥ आनायितामनार्य्येण क्रोधलोभानुवर्त्तिना ।
सर्वे प्रैक्षन्त कुरव एकवस्त्रां सभागताम् ॥ ५२ ॥ तत्रैव धृतराष्ट्रश्च
महाराजश्च वाह्लिकः । कृपश्च सोमदत्तश्च निर्विण्णाः कुरवस्तथा
॥ ५३ ॥ तस्यां संसदि सर्वस्यां क्षत्तारं पूजयाम्यहम् । वृत्तेन हि
भवत्यार्य्यो न धनेन न विद्यया ॥ ५४ ॥ तस्य कृष्ण महाबुद्धे-
र्गम्भीरस्य महात्मनः । क्षत्तुः शीलमलङ्कारो लोकान् विष्टभ्य
तिष्ठति ॥ ५५ ॥

वैशम्पायन उवाच । सा शोकार्त्ता च हृष्टा च दृष्ट्वा गोविन्द-
मागतम् । नानाविधानि दुःखानि सर्वाण्येवान्वकीर्त्तयत् ॥ ५६ ॥

पूर्वैराचरितं यत्तत् कुराजभिररिन्दम । अक्षद्यूतं मृगवधः कच्चि-
देषां सुखावहम् ॥ ५७ ॥ तन्मां दहति यत् कृष्णा सभायां कुरु
सन्निधौ । धार्त्तराष्ट्रैः परिक्लिष्टा यथा न कुशलं तथा ॥ ५८ ॥
निर्वासनञ्च नगरात् प्रव्रज्या च परन्तप । नानाविधानां दुःखा-
नामभिज्ञास्मि जनार्द्दन ॥ ५९ ॥ अज्ञातचर्य्या बालानामवरोधश्च
माधव । न मे क्लेशतमं तस्मात् पुत्रैः सह परन्तप ॥ ६० ॥ दुर्य्यो-
धनेन निकृता वर्षमद्य चतुर्द्दशम । दुःखादपि सुखं न स्यात्
यदि पुण्यफलक्षयः ॥ ६१ ॥ न मे विशेषो जात्वासीद्धार्त्तराष्ट्रेषु
पाण्डवैः । तेन सत्येन कृष्ण त्वां हतामित्रं श्रियावृतम् ॥ ६२ ॥
अस्माद्विमुक्तं संग्रामात् पश्येयं पाण्डवैः सह । नैव शक्याः पराः
जेतुं सत्त्वं ह्येषां तथाविधम् ॥ ६३ ॥ पितरन्त्वेव गर्हेयं नात्मानं
न सुयोधनम् । येनाहं कुन्तिभोजाय धनं वृत्तैरिवार्पिता ॥ ६४ ॥
बालां मामार्य्यकस्तुभ्यं क्रीडन्तीं कन्दुहस्तिकाम् । प्रदात्
कुन्तिभोजाय सखा सख्ये महात्मने ॥ ६५ ॥ साहं पित्रा च
निकृता श्वशुरैश्च परन्तप । अत्यन्तदुःखिता कृष्ण किं जीवितफलं
मम ॥ ६६ ॥ यन्मां वागब्रवीन्नक्तं सूतके सव्यसाचिनः । पुत्रस्ते
पृथिवीं जेता यशश्चास्य दिवं स्पृशेत् ॥ ६७ ॥ हत्वा कुरून्
महाजन्ये राज्यं प्राप्य धनञ्जयः । भ्रातृभिः सह कौन्तेयस्त्रीन्
मेधानाहरिष्यति ॥ ६८ ॥ नाहन्तामभ्यसूयामि नमो धर्म्माय
वेधसे । कृष्णाय महते नित्यं धर्म्मो धारयति प्रजाः ॥ ६९ ॥
धर्म्मश्चेदस्ति वार्ष्णेय तथा वागभ्यभाषत । त्वञ्चापि तत्तथा कृष्ण
सर्व्वं सम्पादयिष्यसि ॥ ७० ॥ न मां माधव वैधव्यं नार्थनाशो न
वैरता । तथा शोकाय दहति यथा पुत्रैर्विनाभवः ॥ ७१ ॥
याहं गाण्डीवधन्वानं सर्व्वशस्त्रभृतां वरम् । धनञ्जयं न पश्यामि
का शान्तिर्हृदयस्य मे ॥ ७२ ॥ इदं चतुर्द्दशं वर्षं यन्नापश्यं युधि-
ष्ठिरम् । धनञ्जयञ्च गोविन्द यमौ तञ्च वृकोदरम् ॥ ७३ ॥

जीवनाशं प्रनष्टानां श्राद्धं कुर्वन्ति मानवाः। अर्थतस्ते मम मृतास्तेषाश्चाहं जनार्द्दन ॥ ७४ ॥ ब्रूया माधव राजानं धर्मात्मानं युधिष्ठिरम्। भूयांस्ते हीयते धर्मो मा पुत्रक वृथा कृथाः ॥ ७५ ॥ पराश्रया वासुदेव या जीवति धिगस्तु ताम्। वृत्तेः कार्पण्यलब्धाया अप्रतिष्ठैव ज्यायसी ॥ ७६ ॥ अथो धनञ्जयं ब्रूया नित्योद्युक्तं वृकोदरम्। यदर्थं क्षत्रिया सूते तस्य कालोऽयमागत ॥ ७७ ॥ अस्मिंश्चेदागते काले मिथ्या चातिक्रमिष्यति। लोकसम्भाविता सन्तः सुनृशंसं करिष्यथ ॥ ७८ ॥ नृशंसेन च वो युक्तांस्त्यजेयं शाश्वतीः समाः। काले हि समनुप्राप्ते त्यक्तव्यमपि जीवनम् ॥ ७९ ॥ माद्रीपुत्रौ च वक्तव्यौ क्षत्रधर्मरतौ सदा। विक्रमेणार्जितान् भोगान् वृणीतं जीवितादपि ॥ ८० ॥ विक्रमाधिगता ह्यर्थाः क्षत्रधर्मेण जीवतः। मनो मनुष्यस्य सदा प्रीणन्ति पुरुषोत्तम ॥ ८१ ॥ गत्वा ब्रूहि महाबाहो सर्वशस्त्रभृताम्वरम्। अर्जुनं पाण्डवं वीरं द्रौपद्याः पदवीञ्चर ॥ ८२ ॥ विदितौ हि तवात्यन्तं क्रुद्धौ तौ यथान्तकौ। भीमार्जुनौ नयेतां हि देवानपि परां गतिम् ॥ ८३ ॥ तयोश्चैतदवज्ञानं यत् सा कृष्णा सभां गता। दुःशासनश्च कर्णश्च परुषाण्यभ्यभाषताम् ॥ ८४ ॥ दुर्योधनो भीमसेनमभ्यगच्छन्मनस्विनम्। पश्यतां कुरुमुख्यानां तस्य द्रक्ष्यति यत् फलम् ॥ ८५ ॥ न हि वैरं समासाद्य प्रशाम्यति वृकोदरः। सुचिरादपि भीमस्य न हि वैरं प्रशाम्यति ॥ ८६ ॥ यावदन्तं न नयति शात्रवाञ्छत्रुकर्षण। न दुःखं राज्यहरणं न च द्यूते पराजयः ॥ ८७ ॥ प्रव्राजनन्तु पुत्राणां न मे तद् दुःखकारणम्। यत्तु सा बृहती श्यामा एकवस्त्रा सभां गता ॥ ८८ ॥ अशृणोत् परुषा वाच किन्नु दुःखतरं ततः। स्त्रीधर्मिणी वरारोहा क्षत्रधर्मरता सदा ॥ ८९ ॥ नाध्यगच्छत्तदा नाथं कृष्णा नाथवती सती। यस्या मम सपुत्रायास्त्वं नाथो मधुसूदन ॥ ९० ॥

रामश्च बलिना श्रेष्ठ प्रद्युम्नश्च महारथ । साहमेवंविध दुःखं सहेय पुरुषोत्तम । भीमे जीवति दुर्द्धर्षे विजये चापलायिनि ॥९१॥

वैशम्पायन उवाच । तत आश्वासयामास पुत्राधिभिरभिप्लुताम । पितृष्वसार शोचन्तो शौरि पार्थसख पृथाम् ॥९२॥

वासुदेव उवाच । का तु सीमन्तिनो त्वादृक् लोकेष्वस्ति पितृष्वस । शूरस्य राज्ञो दुहिता आजमीढकुलं गता ॥ ९३ ॥ महाकुलीना भवती ह्रदात ह्रदमिवागता । ईश्वरी सर्वकल्याणी भर्त्रा परमपूजिता ॥ ९४ । वीरसूर्वीरपत्नी त्व सर्वैः समुदिता गुणे । सुखदुःखे महाप्राज्ञे त्वादृशी सोढुमर्हति ॥ ९५ ॥ निद्रा तन्द्री क्रोधहर्षौ क्षुत्पिपासे हिमातपौ । एतानि पार्था निर्जित्य नित्य वीरसुखे रता ॥ ९६ ॥ त्यक्तग्रामसुखा पार्था नित्य वीरसुखप्रिया । न ते स्वल्पेन तुष्येयुर्महोत्साहा महाबला ॥ ९७ ॥ अन्त धीरा निषेवन्ते मध्यं ग्राम्यसुखप्रिया । उत्तमांश्च परिक्लेशान भोगाश्चातीव मानुषान् ॥ ९८ ॥ अन्तेषु रेमिरे धीरा न ते मध्येषु रेमिरे । अन्त प्राप्तिं सुखामाहुर्दुःख मन्तरमेतयो ॥ ९९ ॥ अभिवादयन्ति भवती पाण्डवा सह कृष्णया । आत्मानञ्च कुशलिन निवेद्याहुरनामयम ॥ १०० ॥ अरोगान् सर्वसिद्धार्थान् क्षिप्रन्द्रक्ष्यति पाण्डवान् । ईश्वरान् सर्वलोकस्य हतामित्रान् श्रियावृतान् ॥ १०१ ॥ एवमाश्वासिता कुन्ती प्रत्युवाच जनार्द्दनम् । पुत्राधिभिरभिध्वस्ता निगृह्याबुद्धिजं तम ॥ १०२ ॥

कुन्त्युवाच । यद्यत्तेषा महाबाहो पथ्य स्यान्मधुसूदन । यथा यथा त्व मन्येथा कुर्य्या कृष्ण तथा तथा ॥ १०३ ॥ अविलोपेन धर्मस्य अनिकृत्या परन्तप । प्रभावज्ञास्मि ते कृष्ण सत्य स्याभिजनस्य च ॥ १०४ ॥ व्यवस्थायाञ्च मित्रेषु बुद्धिविक्रमयो स्तथा । त्वमेव न कुले धर्मस्त्व सत्य त्व तपो महत ॥ १०५ ॥

त्वं भाता त्वं महत् ब्रह्म त्वयि सर्वं प्रतिष्ठितम् । यथैवात्थ तथैवैतत् त्वयि सत्यं भविष्यति ॥ १०६ ॥

वैशम्पायन उवाच । तामामन्त्र्य च गोविन्दः कृत्वा चाभिप्रदक्षिणम् । प्रातिष्ठत महाबाहुर्दुर्य्योधनगृहान् प्रति ॥ १०७ ॥

इति उद्योगपर्व्वणि भगवद्यानपर्व्वणि कुन्तीकृष्णसंवादे एकोननवतोऽध्यायः ॥ ८९ ॥

---

वैशम्पायन उवाच । पृथामामन्त्र्य गोविन्दः कृत्वा चाभिप्रदक्षिणम् । दुर्य्योधनगृहं शौरिरभ्यगच्छदरिन्दमः ॥ १ ॥ लक्ष्म्या परमया युक्तं पुरन्दरगृहोपमम् । विचित्रैरासनैर्युक्तं प्रविवेश जनार्द्दनः ॥ २ ॥ तस्य कक्ष्या व्यतिक्रम्य तिस्रो द्वास्थैरवारितः । ततोऽभ्रघनसङ्काशं गिरिकूटमिवोच्छ्रितम् ॥ ३ ॥ श्रिया ज्वलन्तं प्रासादमारुरोह महायशाः । तत्र राजसहस्रैश्च कुरुभिश्चाभिसंवृतम् ॥ ४ ॥ धार्त्तराष्ट्रं महाबाहुं ददर्शासीनमासने । दुःशासनञ्च कर्णञ्च शकुनिञ्चापि सौबलम् ॥ ५ ॥ दुर्य्योधनसमीपे तानासनस्थान् ददर्श सः । अभ्यागच्छति दाशार्हे धार्त्तराष्ट्रो महायशाः ॥ ६ ॥ उदतिष्ठत सहामात्यः पूजयन्मधुसूदनम् । समेत्य धार्त्तराष्ट्रेण सहामात्येन केशव ॥ ७ ॥ राजभिस्तत्र वार्ष्णेयः समागच्छत् यथावयः । तत्र जाम्बूनदमयं पर्य्यङ्कं सुपरिष्कृतम् ॥ ८ ॥ विविधास्तरणास्तीर्णमभ्युपाविशदच्युतः । तस्मिन् गां मधुपर्कञ्चाप्युदकञ्च जनार्द्दने ॥ ९ ॥ निवेदयामास तदा गृहान्राज्यञ्च कौरवः । तत्र गोविन्दमासीनं प्रसन्नादित्यवर्च्चसम् ॥ १० ॥ उपासाञ्चक्रिरे सर्व्वे कुरवो राजभिः सह । ततो दुर्य्योधनो राजा वार्ष्णेयं जयतां वरम् ॥ ११ ॥ न्यमन्त्रयत् भोजनेन नाभ्यनन्दच्च केशवः । ततो दुर्य्योधन ६

कुरुसत्तम ॥ १२ ॥ मृदुपूर्वं शठोदर्कं कस्मान्नाभाय कौरव। कस्मादन्नानि पानानि वासांसि शयनानि च ॥ १३ ॥ त्वदर्थमुपनीतानि नाग्रहीस्त्वं जनार्दन। उभयोश्चाददत् साह्यमुभयोश्च हिते रत ॥ १४ ॥ सम्बन्धी दयितश्चासि धृतराष्ट्रस्य माधव। त्वं हि गोविन्द धर्मार्थौ वेत्थ तत्त्वेन सर्वश । तत्र कारणमिच्छामि श्रोतुञ्चक्रगदाधर ॥ १५ ॥

वैशम्पायन उवाच। स एवमुक्तो गोविन्द प्रत्युवाच महामना। उद्यन्मेघस्वन काले प्रगृह्य विपुल भुजम ॥ १६ ॥ अनम्बूकृतमग्रस्तमनिरस्तमसङ्कुलम्। राजीवनेत्रो राजान हेतुमद्वाक्यमुत्तमम ॥ १७ ॥ कृतार्था भुञ्जते दूता पूजा गृह्णन्ति चैव ह। कृतार्थं मा सहामात्य समर्चिष्यसि भारत ॥ १८ ॥ एवमुक्त प्रत्युवाच धार्त्तराष्ट्रो जनार्दनम। न युक्त भवतास्मासु प्रतिपत्तुमसाम्प्रतम् ॥ १९ ॥ कृतार्थं चाकृतार्थञ्च त्वा वय मधुसूदन। यतामहे पूजयितुं दाशार्ह न च शक्नुम ॥ २० ॥ न च तत्कारण विद्मो यस्मिन्नो मधुसूदन। पूजा कृता प्रीयमाणैर्नामस्था पुरुषोत्तम ॥ २१ ॥ वैरं नो नास्ति भवता गोविन्द न च विग्रह। स भवान् प्रसमीक्ष्यैतत नेदृश वक्तुमर्हति ॥ २२ ॥ एवमुक्त प्रत्युवाच धार्त्तराष्ट्र जनार्दन। अभिवीक्ष्य सहामात्य दाशार्ह प्रहसन्निव ॥ २३ ॥ नाह कामान्न सरम्भान्न द्वेषान्नार्थकारणात्। न हेतुवादाल्लोभाद्वा धर्म जह्या कथञ्चन ॥ २४ ॥ सम्प्रीतिभोज्यान्यन्नानि आपद्भोज्यानि वा पुन। न च सम्प्रीयसे राजन्नैवापद्गता वयम् ॥ २५ ॥ अकस्मात् द्वेक्षि वै राजन् जन्मप्रभृति पाण्डवान्। प्रियानुवर्त्तिनो भ्रातॄन् सर्वैं समुदितान् गुणै ॥ २६ ॥ अकस्माच्चैव पार्थाना द्वेषणं नोपपद्यते। धर्मे स्थिता पाण्डवेया कस्तान् किं वक्तुमर्हति ॥ २७ ॥ यस्तान् द्वेष्टि स मां द्वेष्टि यस्तानन्नु स मामनु। ऐकात्म्यं मा गत विद्धि पाण्डवैर्धर्म

धारिभिः ॥ २८ ॥ कामक्रोधानुवर्त्ती हि यो मोहाद्विरुरुत्सति। गुणवन्तञ्च यो द्वेष्टि तमाहुः पुरुषाधमम् ॥ २९ ॥ स कल्याण-गुणान् ज्ञातीन् मोहाल्लोभाद्दिदृक्षते। सोऽजितात्माजितक्रोधो न चिरं तिष्ठति श्रियम् ॥ ३० ॥ अथ यो गुणसम्पन्नान् हृदय-स्याप्रियानपि। प्रियेण कुरुते वश्यांश्चिरं यशसि तिष्ठति ॥ ३१ ॥ सर्वमेतन्न भोक्तव्यमन्नं दुष्टाभिसंहितम्। क्षत्तुरेकस्य भोक्तव्य-मिति मे धीयते मतिः ॥ ३२ ॥ एवमुक्त्वा महाबाहुर्दुर्य्योधनममर्षणम्। निश्चक्राम ततः शुभ्राद्धार्त्तराष्ट्रनिवेशनात् ॥ ३३ ॥ निर्याय च महाबाहुर्वासुदेवो महामनाः। निवेशाय ययौ वेश्म विदुरस्य महात्मनः ॥ ३४ ॥ तमभ्यगच्छद्द्रोणश्च कृपो भीष्मोऽथ बाह्लिकः। कुरवश्च महाबाहुं विदुरस्य गृहे स्थितम् ॥ ३५ ॥ त ऊचुर्माधवं वीरं कुरवो मधुसूदनम्। निवेदयाम वार्ष्णेय स-रत्नांस्ते गृहान् वयम् ॥ ३६ ॥ तानुवाच महातेजाः कौरवान् मधुसूदनः। सर्वे भवन्तो गच्छन्तु सर्वा मेऽपचितिः कृता ॥ ३७ ॥ यातेषु कुरुषु क्षत्ता दाशार्हमपराजितम्। अभ्यर्चयामास तदा सर्वकामैः प्रयत्नवान् ॥ ३८ ॥ ततः क्षत्तान्नपानानि शुचीनि गुण-वन्ति च। उपाहरदनेकानि केशवाय महात्मने ॥ ३९ ॥ तै-स्तर्पयित्वा प्रथमं ब्राह्मणान्मधुसूदनः। वेदविद्भ्यो ददौ कृष्णः परमद्रविणान्यपि ॥ ४० ॥ ततोऽनुयायिभिः सार्द्धं मरुद्भिरिव वासवः। विदुरान्नानि बुभुजे शुचीनि गुणवन्ति च ॥ ४१ ॥

इति उद्योगपर्व्वणि भगवद्यानपर्व्वणि श्रीकृष्णदुर्य्योधन संवादे नवतितमोऽध्यायः ॥ ९० ॥

---

वैशम्पायन उवाच। तं भुक्तवन्तमाश्वस्तं निशायां विदुरो-ऽब्रवीत्। नेदं सम्यग्व्यवसितं केशवागमनं तव ॥ १ ॥ अर्थधर्मा-

तिगो मन्द सरम्भी च जनार्द्दन। मानघ्नो मानकामश्च वृद्धानां शासनातिग ॥ २॥ धर्मशास्त्रातिगो मूढो दुरात्मा प्रग्रहङ्गत। अनेय श्रेयसा मन्दो धार्त्तराष्ट्रो जनार्द्दन ॥ ३॥ कामात्मा प्राज्ञमानी च मित्रध्रुक् सर्वशङ्कित। अकर्त्ता चाकृतज्ञश्च त्यक्तधर्मा प्रियानृत ॥ ४॥ मूढश्चाकृतबुद्धिश्च इन्द्रियाणामनीश्वर। कामानुसारी कृत्येषु सर्व्वकृतनिश्चय ॥ ५॥ एतैश्चान्यैश्च बहुभिर्दोषैरेष समन्वित। त्वयोच्यमान श्रेयोऽपि सरम्भान्न ग्रहीष्यति ॥६॥ भीष्मे द्रोणे कृपे कर्णे द्रोणपुत्रे जयद्रथे। भूयसीं वर्त्तते वृत्तिं न शमे कुरुते मन ॥ ७॥ निश्चित धार्त्तराष्ट्राणा सकर्णानां जनार्द्दन। भीष्मद्रोणमुखान् पार्थो न शक्ता प्रतिवीक्षितुम् ॥८॥ सेनासमुदय कृत्वा पार्थिव मधुसूदन। कृतार्थं मन्यते बाल आत्मानमविचक्षण ॥ ९॥ एक कर्ण परान् जेतु समर्थ इति निश्चितम्। धार्त्तराष्ट्रस्य दुर्बुद्धे स शम नोपयास्यति ॥ १०॥ सविच्च धार्त्तराष्ट्राणा सर्व्वेषामेव केशव। शमे प्रयतमानस्य तव सौभ्रात्रकाङ्क्षिण ॥ ११॥ न पाण्डवानामस्माभि प्रतिदेय यथोचितम्। इति व्यवसितास्तेषु वचन स्यान्निरर्थकम् ॥ १२॥ यत्र सूक्त दुरुक्तञ्च सम स्यान्मधुसूदन। न तत्र प्रलपेत् प्राज्ञो बधिरेष्विव गायन ॥ १३॥ अविजानत्सु मूढेषु निर्मर्य्यादेषु माधव। न त्व वाक्य ब्रुवन् युक्तश्चाण्डालेषु द्विजो यथा ॥ १४॥ सोऽय बलस्थो मूढश्च न करिष्यति ते वच। तस्मिन्निरर्थक वाक्यमुक्त सम्पत्स्यते तव ॥ १५॥ तेषा समुपविष्टाना सर्व्वेषा पापचेतसाम्। तव मध्यावतरण मम कृष्ण न रोचते ॥ १६॥ दुर्बुद्धीनामशिष्टानां बहूना दुष्टचेतसाम्। प्रतीप वचन मध्ये तव कृष्ण न रोचते ॥१७॥ अनुपासितवृद्धत्वात् श्रियो दर्पाच्च मोहित। वयोदर्पादमर्षाच्च न ते श्रेयो ग्रहीष्यति ॥ १८॥ बल बलवदप्यस्य यदि वक्ष्यसि माधव। त्वय्यस्य महती शङ्का न करिष्यति ते वच ॥ १९॥

नेदमद्य युधा शक्यमिन्द्रेणापि सहामरैः । इति व्यवसिता सर्व्वे धार्त्तराष्ट्रा जनार्द्दन ॥ २० ॥ तेष्वेवमुपपन्नेषु कामक्रोधानुवर्त्तिषु । समर्थमपि ते वाक्यमसमर्थं भविष्यति ॥ २१ ॥ मध्ये तिष्ठन् हस्त्यनीकस्य मन्दो रथाश्वयुक्तस्य बलस्य मूढ़ः । दुर्य्योधनो मन्यते वीतभीतिः कृतस्त्वा मयेयं पृथिवी जितेति ॥ २२ ॥ आशंसते वै धृतराष्ट्रस्य पुत्रो महाराज्यमसपत्नं पृथिव्याम् । तस्मिन् शमः केवलो नोपलभ्यो बद्धं सन्तं मन्यते लब्धमर्थम् ॥ २३ ॥ पर्य्यस्तेयं पृथिवी कालपक्वा दुर्य्योधनार्थं पाण्डवान् योद्धुकामाः । समागताः सर्व्वयोधाः पृथिव्यां राजानश्च क्षितिपालैः समेता ॥ २४ ॥ सर्व्वे चैते कृतवैराः पुरस्तात् त्वया राजानो हृतसाराश्च कृष्ण । तवोद्वेगात् संश्रिता धार्त्तराष्ट्रान् सुसंहताः सह कर्णेन वीराः ॥ २५ ॥ त्यक्तात्मान सह दुर्य्योधनेन हृष्टा योद्धुं पाण्डवान् सर्व्वयोधाः । तेषां मध्ये प्रविशेथा यदि त्वं न तन्मतं मम दाशार्हवीर ॥ २६ ॥ तेषां समुपविष्टानां बहूनां दुष्टचेतसाम् । कथं मध्ये प्रपद्येथा शत्रूणां शत्रुकर्षण ॥ २७ ॥ सर्व्वथा त्वं महाबाहो देवैरपि दुरुत्सहः । प्रभावं पौरुषं बुद्धिं जानामि तव शत्रुहन् ॥ २८ ॥ या मे प्रीतिः पाण्डवेषु भूयः सा त्वयि माधव । प्रेम्णा च बहुमानाच्च सौहृदाच्च ब्रवीम्यहम् ॥ २९ ॥ या मे प्रीतिः पुष्कराक्ष त्वद्दर्शनसमुद्भवा । सा किमाख्यायते तुभ्यमन्तरात्मासि देहिनाम् ॥ ३० ॥

इति उद्योगपर्व्वणि भगवद्यानपर्व्वणि श्रीकृष्णविदुर-
संवादे एकनवतोऽध्यायः ॥ ९१ ॥

---

श्रीभगवानुवाच । यथा ब्रूयान्महाप्राज्ञो यथा ब्रूयाद्विचक्षण । यथा वाच्यस्त्वद्विधेन भवता मद्विध सुहृत् ॥ १ ॥

धर्मार्थयुक्तं तथ्यञ्च यथा त्वय्युपपद्यते । तथा वचनमुक्तोऽस्मि
त्वयैतत पितृमातृवत ॥ २ ॥ सत्यं प्राप्तञ्च युक्तञ्चाप्येवमेव यथात्थ
माम । शृणुष्वागमने हेतुं विदुरावहितो भव ॥ ३ ॥ दौरात्म्यं
धार्त्तराष्ट्रस्य क्षत्रियाणाञ्च वैरताम् । सर्वमेतदहं जानन् क्षत्त
प्राप्तोऽद्य कौरवान् ॥ ४ ॥ पर्य्यस्तां पृथिवीं सर्वां साश्वां सरथ
कुञ्जराम् । यो मोचयेत मृत्युपाशात प्राप्नुयाद्धर्ममुत्तमम ॥ ५ ॥
धर्मकार्य्ये यतन् शक्त्या नोचेत प्राप्नोति मानव । प्राप्तो भवति
तत पुण्यमत्र मे नास्ति संशय ॥ ६ ॥ मनसा चिन्तयन पाप
कर्मणा नाभिरोचयेत । न प्राप्नोति फलं तस्येत्येवं धर्मविदो
विदु ॥ ७ ॥ सोऽहं यतिष्ये प्रशमे क्षत्त कर्त्तुममायया । कुरूणा
सृञ्जयानाञ्च संग्रामे विनशिष्यताम् ॥ ८ ॥ सेयमापन्महाघोरा
कुरुष्वेव समुत्थिता । कर्णदुर्य्योधनकृता सर्वे ह्येते तदन्वया ॥९॥
व्यसने क्लिश्यमानं हि यो मित्रं नाभिपद्यते । अनुनीय यथाशक्ति
त नृशंसं विदुर्बुधा ॥ १० ॥ आकेशग्रहणात मित्रमकार्य्यात
सन्निवर्त्तयन् । अवाच्य कस्यचिद्भवति कृतयत्नो यथाबलम् ॥ ११ ॥
तत समर्थं शुभं वाक्यं धर्मार्थसहितं हितम धार्त्तराष्ट्र सहा
मात्यो ग्रहीतुं विदुरार्हति ॥ १२ ॥ हितं हि धार्त्तराष्ट्राणा
पाण्डवानान्तथैव च । पृथिव्यां क्षत्रियाणाञ्च यतिष्येऽहममायया
॥ १३ ॥ हितं प्रयतमानं मां शङ्केद्दुर्य्योधनो यदि । हृदयस्य
च मे प्रीतिरानृण्यञ्च भविष्यति ॥ १४ ॥ ज्ञातीनां हि मिथो
भेदे यन्मित्रं नाभिपद्यते । सर्वयत्नेन माध्यस्थ्यं न तन्मित्रं
विदुर्बुधा ॥ १५ ॥ न मां ब्रूयुरधर्मिष्ठा मूढा ह्यसुहृदस्तथा ।
शक्तो नावारयत कृष्ण संरब्धान् कुरुपाण्डवान् ॥ १६ ॥ उभयो
साधयन्नर्थमहमागत इत्युत तत्र यत्नमहं कृत्वा गच्छेयं नृष्व
वाच्यताम् ॥ १७ ॥ मम धर्मार्थयुक्तं हि श्रुत्वा वाक्यमनामयम् ।
न चेन्नादास्यते बालो दिष्टस्य वशमेष्यति ॥ १८ ॥ अधापयन्

पाण्डवार्थं यथावच्छमं कुरूणां यदि वारयेयम्। पुण्यञ्च मे स्याच्चरितं महात्मन् मुच्येरंश्च कुरवो मृत्युपाशात ॥ १८ ॥ अपि वाचं भाषमाणस्य काव्यां धर्मारामामर्थवतीमहिंस्राम्। अवेचेरन् धार्त्तराष्ट्रा शमार्थं माञ्च प्राप्तं कुरवः पूजयेयुः ॥ २० ॥ न चापि मम पर्य्याप्ताः सहिता कुरुपार्थिवाः। क्रुद्धस्य प्रमुखे स्थातुं सिंहस्येवेतरे मृगाः ॥ २१ ॥

वैशम्पायन उवाच। इत्येवमुक्त्वा वचनं वृष्णीनामृषभस्तदा। शयने सुखसंस्पर्शे शिश्ये यदुसुखावहः ॥ २२ ॥

इति उद्योगपर्व्वणि भगवद्यानपर्व्वणि श्रीकृष्णविदुर-
संवादे द्विनवतोऽध्यायः ॥ ९२ ॥

---

वैशम्पायन उवाच। तथा कथयतोरेवं तयोर्बुद्धिमतोस्तदा। शिवा नक्षत्रसम्पन्ना सा व्यतीयाय शर्वरी ॥ १ ॥ धर्मार्थकामयुक्ताश्च विचित्रार्थपदाक्षराः। शृण्वतो विविधा वाचो विदुरस्य महात्मनः ॥ २ ॥ कथाभिरनुरूपाभि कृष्णस्यामिततेजसः। अकामस्येव कृष्णस्य सा व्यतीयाय शर्वरी ॥ ३ ॥ ततस्तु स्वरसम्पन्ना बहवः सूतमागधाः। शङ्खदुन्दुभिनिर्घोषैः केशवं प्रत्यबोधयन् ॥ ४ ॥ तत उत्थाय दाशार्हं ऋषभः सर्वसात्वताम्। सर्वमावश्यकञ्चक्रे प्रातःकार्य्यं जनार्द्दनः ॥ ५ ॥ कृतोदकानुजप्यश्च हुताग्निः समलङ्कृतः। ततश्चादित्यमुद्यन्तमुपातिष्ठत माधवः ॥ ६ ॥ अथ दुर्य्योधनः कृष्णं शकुनिश्चापि सौवलः। सन्ध्यां तिष्ठन्तमभ्येत्य दाशार्हमपराजितम् ॥ ७ ॥ आचचेतान्तु कृष्णस्य धृतराष्ट्रं सभागतम्। कुरूंश्च भीष्मप्रमुखान् राज्ञः सर्वांश्च पार्थिवान् ॥ ८ ॥ त्वामर्थयन्ते गोविन्द दिवि शक्रमिवामराः। तावभ्यनन्दद्गोविन्दः साम्ना परमवल्गुना ॥ ९ ॥ ततो विमल

आदित्ये ब्राह्मणेभ्यो जनार्द्दनः। ददौ हिरण्यं वासांसि गा-
श्चाश्वांश्च परन्तपः॥ १०॥ विसृज्य बहुरत्नानि दाशार्हमपरा-
जितम्। तिष्ठन्तमुपसंगम्य ववन्दे सारथिस्तदा॥ ११॥ ततो
रथेन शुभ्रेण महता किङ्किणीकिना। हयोत्तमयुजा शीघ्र-
मुपातिष्ठत दारुकः॥ १२॥ तमुपास्थितमाज्ञाय रथं दिव्यं
महामनाः। महाभ्रघननिर्घोषं सर्व्वरत्नविभूषितम्॥ १३॥ अग्निं
प्रदक्षिणं कृत्वा ब्राह्मणांश्च जनार्द्दनः। कौस्तुभं मणिमामुच्य
श्रिया परमया ज्वलन्॥ १४॥ कुरुभिः संवृतः कृष्णो वृष्णिभि-
श्चाभिरक्षितः। आतिष्ठत रथं शौरिः सर्व्वयादवनन्दन॥ १५॥
अन्वारुरोह दाशार्हं विदुरः सर्व्वधर्मवित्। सर्व्वप्राणभृतां श्रेष्ठं
सर्व्वबुद्धिमतां वरम्॥ १६॥ ततो दुर्य्योधनः कृष्णं शकुनिश्चापि
सौबलः। द्वितीयेन रथेनैनमन्वयातां परन्तपम्॥ १७॥ सात्यकिः
कृतवर्म्मा च वृष्णीनाञ्चापरे रथाः। पृष्ठतोऽनुययुः कृष्णं गजै-
रश्वैरथैरपि॥ १८॥ तेषां हैमपरिष्कारैर्युक्ताः परमवाजिभिः।
गच्छतां घोषिणश्चित्रा रथा राजन् विरेजिरे॥ १९॥ संमृष्ट-
संसिक्तरजं प्रतिपेदे महापथम्। राजर्षिचरितं काले कृष्णो
धीमान् श्रिया ज्वलन्॥ २०॥ ततः प्रयाते दाशार्हे प्रावाद्यन्तैक-
पुष्कलाः। शङ्खाश्च दध्मिरे तत्र वाद्यान्यन्यानि यानि च॥ २१॥
प्रवीराः सर्व्वलोकस्य युवानः सिंहविक्रमाः। परिवार्य्य रथं शौरे-
रगच्छन्त परन्तपाः॥ २२॥ ततोऽन्ये बहुसाहस्रा विचित्रा-
द्भुतवाससः। असिप्रासायुधधराः कृष्णस्यासन् पुरःसराः॥ २३॥
गजाः पञ्चशतास्तत्र रथाश्चासन् सहस्रशः। प्रयान्तमन्वयुर्व्वीरं
दाशार्हमपराजितम्॥ २४॥ पुरं कुरूणां संवृत्तं द्रष्टुकामं जना-
र्द्दनम्। सबालवृद्धं सस्त्रीकं रथ्यागतमरिन्दम॥ २५॥ वेदिका-
माश्रिताभिश्च समाक्रान्तान्यनेकशः। प्रचलन्तीव भारेण योषिद्भि-
र्भवनान्युत॥ २६॥ स पूज्यमानः कुरुभिः संशृण्वन् मधुराः

कथाः । यथार्हं प्रतिसत्कुर्वन् प्रेक्षमाणः शनैर्ययौ ॥ २७ ॥ ततः सभां समासाद्य केशवस्यानुयायिनः । सशङ्खैर्वेणुनिर्घोषैर्दिशः सर्वा व्यनादयन् ॥ २८ ॥ ततः सा समितिः सर्वा राज्ञाममिततेजसाम् । सम्प्राकम्पत हर्षेण कृष्णागमनकाङ्क्षया ॥ २९ ॥ ततोऽभ्याशगते कृष्णे समहृष्यन्नराधिपाः । श्रुत्वा तं रथनिर्घोषं पर्ज्जन्यनिनदोपमम् ॥ ३० ॥ आसाद्य तु सभाद्वारमृषभः सर्वसात्वताम् । अवतीर्य्य रथाच्छौरिः कैलासशिखरोपमात् ॥ ३१ ॥ नवमेघप्रतीकाशां ज्वलन्तीमिव तेजसा । महेन्द्रसदनप्रख्यां प्रविवेश सभां ततः ॥ ३२ ॥ पाणौ गृहीत्वा विदुरं सात्यकिञ्च महायशाः । ज्योतींष्यादित्यवद्राजन् कुरून् प्राच्छादयन् श्रिया ॥३३॥ अग्रतो वासुदेवस्य कर्णदुर्य्योधनावुभौ । वृष्णयः कृतवर्म्मा चाप्यासन् कृष्णस्य पृष्ठतः ॥ ३४ ॥ धृतराष्ट्रं पुरस्कृत्य भीष्मद्रोणादयस्ततः । आसनेभ्योऽचलन् सर्व्वे पूजयन्तो जनार्द्दनम् ॥३५॥ अभ्यागच्छति दाशार्हे प्रज्ञाचक्षुर्नरेश्वरः । सहैव द्रोणभीष्माभ्यामुदतिष्ठन्महायशाः ॥ ३६ ॥ उत्तिष्ठति महाराजे धृतराष्ट्रे जनेश्वरे । तानि राजसहस्राणि समुत्तस्थुः समन्ततः ॥ ३७ ॥ आसनं सर्व्वतोभद्रं जाम्बूनदपरिष्कृतम् । कृष्णार्थे कल्पितं तत्र धृतराष्ट्रस्य शासनात् ॥ ३८ ॥ स्मयमानस्तु राजानं भीष्मद्रोणौ च माधव. । अभ्यभाषत धर्म्मात्मा राज्ञश्चान्यान् यथावयः ॥ ३९ ॥ तत्र केशवमानर्च्चुः सम्यगभ्यागतं सभाम् । राजानः पार्थिवाः सर्व्वे कुरवश्च जनार्द्दनम् ॥ ४० ॥ तत्र तिष्ठन् स दाशार्हो राजमध्ये परन्तप. । अपश्यदन्तरीक्षस्थान् ऋषीन् परपुरञ्जय ॥४१॥ ततस्तानभिसम्प्रेक्ष्य नारदप्रमुखानृषीन् । अभ्यभाषत दाशार्हो भीष्मं शान्तनवं शनैः ॥ ४२ ॥ पार्थिवीं समितिं द्रष्टुमृषयोऽभ्यागता नृप । निमन्त्र्यतामासनैश्च सत्कारेण च भूयसा ॥ ४३ ॥ नैतेष्वनुपविष्टेषु शक्यं केनचिदासितुम् । पूजा प्रयुज्यतामाशु

मुनीनां भावितात्मनाम् ॥ ४४ ॥ ऋषींश्शान्तनवो दृष्ट्वा सभा-
द्वारमुपस्थितान्। त्वरमाणस्ततो भृत्यानासनानीत्यचोदयत् ॥४५॥
आसनान्यथ मृष्टानि महान्ति विपुलानि च। मणिकाञ्चनचित्राणि
समाजह्रुस्ततस्ततः ॥ ४६ ॥ तेषु तत्रोपविष्टेषु गृहीतार्घ्येषु
भारत। निषसादासने कृष्णो राजानश्च यथासनम् ॥ ४७ ॥
दुःशासनः सात्यकये ददावासनमुत्तमम्। विविंशतिर्ददौ पीठं
काञ्चनं कृतवर्म्मणे ॥ ४८ ॥ अविदूरन्तु कृष्णस्य कर्णदुर्योधना-
वुभौ। एकासने महात्मानौ निषीदतुरमर्षणौ ॥ ४९ ॥ गान्धार-
राजः शकुनिर्गान्धारैरभिरक्षितः। निषसादासने राजा सह-
पुत्रो विशाम्पते ॥ ५० ॥ विदुरो मणिपीठे तु शुक्लस्पर्द्ध्याजिनो-
त्तरे। संस्पृशन्नासनं शौरेर्महामतिरुपाविशत् ॥ ५१ ॥ चिरस्य
दृष्ट्वा दाशार्हं राजानः सर्व एव ते। अमृतस्येव नातृप्यन् प्रेक्ष-
माणा जनार्द्दनम् ॥ ५२ ॥ अतसीपुष्पसङ्काशः पीतवासा जना-
र्द्दनः। व्यभ्राजत सभामध्ये हेम्नीवोपहितो मणिः ॥ ५३ ॥ तत-
स्तूष्णीं सर्व्वमासीत् गोविन्दगतमानसम्। न तत्र कश्चित् किञ्चिद्वा
व्याजहार पुमान् क्वचित् ॥ ५४ ॥

इति उद्योगपर्व्वणि भगवद्यानपर्व्वणि भगवदुपवेशे
त्रिनवतोऽध्यायः ॥ ९३ ॥

---

वैशम्पायन उवाच। तेष्वासीनेषु सर्व्वेषु तूष्णीम्भूतेषु राजसु।
वाक्यमभ्याददे कृष्णः सुदंष्ट्रो दुन्दुभिस्वनः ॥ १ ॥ जीमूत इव
घर्म्मान्ते सर्व्वां संश्रावयन् सभाम्। धृतराष्ट्रमभिप्रेक्ष्य समभाषत
माधवः ॥ २ ॥

श्रीभगवानुवाच। कुरूणां पाण्डवानाञ्च शमः स्यादिति
भारत। अप्रणाशेन वीराणामेतद्याचितुमागतः ॥ ३ ॥ राज-

न्नान्यत् प्रवक्तव्यं तव नै श्रेयसं वचः । विदितं ह्येव ते सर्वं वेदितव्यमरिन्दम ॥ ४ ॥ इदं ह्यद्य कुलं श्रेष्ठं सर्वराजसु पार्थिव । श्रुतवृत्तोपसम्पन्नं सर्वैः समुदितैर्गुणैः ॥ ५ ॥ कृपानुकम्पा कारुण्यमानृशंस्यञ्च भारत । तथार्जवं क्षमा सत्यं कुरुष्वेतद्विशिष्यते ॥६॥ तस्मिन्नेवंविधे राजन् कुले महति तिष्ठति । त्वन्निमित्तं विशेषेण नेह युक्तमसाम्प्रतम् ॥ ७ ॥ त्वं हि धारयिता श्रेष्ठः कुरूणां कुरुसत्तम । मिथ्याप्रचरतां तात बाह्येष्वभ्यन्तरेषु च ॥ ८ ॥ ते पुत्रास्तव कौरव्य दुर्य्योधनपुरोगमाः । धर्मार्थौ पृष्ठतः कृत्वा प्रचरन्ति नृशंसवत् ॥ ९ ॥ अशिष्टा गतमर्य्यादा लोभेन हृतचेतसः । स्वेषु बन्धुषु मुख्येषु तद्वेत्थ पुरुषर्षभ ॥ १० ॥ सेयमापन्महाघोरा कुरुष्वेव समुत्थिता । उपेक्ष्यमाणा कौरव्य पृथिवीं घातयिष्यति ॥ ११ ॥ शक्या चेयं शमयितुं त्वञ्चेदिच्छसि भारत । न दुष्करो ह्यत्र शमो मतो मे भरतर्षभ ॥ १२ ॥ त्वय्यधीनः शमो राजन् मयि चैव विशाम्पते । पुत्रान् स्थापय कौरव्य स्थापयिष्याम्यहं परान् ॥ १३ ॥ आज्ञा तव हि राजेन्द्र कार्य्या पुत्रैः सहान्वयैः । हितम्बलवदप्येषां तिष्ठतां तव शासने ॥ १४ ॥ तव चैव हितं राजन् पाण्डवानामथो हितम् । शमैः प्रयतमानस्य तव शासनकाङ्क्षिणः ॥ १५ ॥ स्वयं निष्फलमालक्ष्य संविधत्स्व विशाम्पते । सहायभूता भरतास्तवैव स्युर्जनेश्वर ॥ १६ ॥ धर्मार्थयोस्तिष्ठ राजन् पाण्डवैरभिरक्षितः न हि शक्यास्तथाभूता यत्नादपि नराधिप ॥ १७ ॥ न हि त्वां पाण्डवैर्जेतुं रक्ष्यमाणं महात्मभिः । इन्द्रोऽपि देवैः सहितः प्रसहेत कुतो नृपाः ॥ १८ ॥ यत्र भीष्मश्च द्रोणश्च कृप कर्णो विविंशतिः । अश्वत्थामा विकर्णश्च सोमदत्तोऽथ वाह्लिकः ॥ १९ ॥ सैन्धवश्च कलिङ्गश्च काम्बोजश्च सुदक्षिणः । युधिष्ठिरो भीमसेनः सव्यसाची यमौ तथा ॥ २० ॥ सात्यकिश्च महातेजा युयुत्सुश्च महारथ । को नु तान् विपरीतात्मा

भरतर्षभ ॥ २१ ॥ लोकस्येश्वरतां भूय शत्रुभिश्चाप्यधृष्यताम् ।
प्राप्स्यसि त्वममित्रघ्न सहितः कुरुपाण्डवैः ॥ २२ ॥ तस्य ते
पृथिवीपालास्त्वत्समाः पृथिवीपते । श्रेयांसश्चैव राजानः सन्धा-
स्यन्ते परन्तप ॥ २३ ॥ स त्वं पुत्रैश्च पौत्रैश्च पितृभिर्भ्रातृभिस्तथा ।
सुहृद्भिः सर्वतो गुप्तः सुखं शक्ष्यसि जीवितुम् ॥ २४ ॥ एतानेव
पुरोधाय सत्कृत्य च यथा पुरा । अखिलां भोक्ष्यसे सर्वां पृथिवीं
पृथिवीपते ॥ २५ ॥ एतैर्हि सहितैः सर्वैः पाण्डवैः स्वैश्च भारत ।
अन्यान् विजेष्यसे शत्रूनेष स्वार्थस्तवार्थिनः ॥ २६ ॥ तैरेवोपा-
र्ज्जितां भूमिं भोक्ष्यसे च परन्तप । यदि सम्पत्स्यसे पुत्रैः सहा-
मात्यैर्नराधिप ॥ २७ ॥ संयुगे वै महाराज दृश्यते सुमहान्
क्षयः । क्षये चोभयतो राजन् कं धर्ममनुपश्यसि ॥ २८ ॥ पाण्डवै-
र्निहतैः सङ्ख्ये पुत्रैर्वापि महाबलैः । यद्विन्देथाः सुखं राजं-
स्तद्ब्रूहि भरतर्षभ ॥ २९ ॥ शूराश्च हि कृतास्त्राश्च सर्वे युद्धाभि-
काङ्क्षिणः । पाण्डवास्तावकाश्चैव तांस्त्वं महतो भयात् ॥ ३० ॥
न पश्येम कुरून् सर्वान् पाण्डवांश्चैव संयुगे । क्षीणानुभयतः
शूरान् रथिनो रथिभिर्हतान् ॥ ३१ ॥ समवेताः पृथिव्यां हि
राजानो राजसत्तम । अमर्षवशमापन्ना नाशयेयुरिमाः प्रजाः
॥ ३२ ॥ त्राहि राजन्निमं लोकं न नश्येयुरिमाः प्रजाः । त्वयि
प्रकृतिमापन्ने शेषः स्यात् कुरुनन्दन ॥ ३३ ॥ शुक्ला वदान्या
ह्रीमन्त आर्य्याः पुण्याभिजानयः । अन्योन्यसचिवा राजंस्तान्
पाहि महतो भयात् ॥ ३४ ॥ शिवेनेमे भूमिपालाः समागम्य
परस्परम् । सह भुक्त्वा च पीत्वा च प्रतियान्तु यथागृहम् ॥ ३५ ॥
सुहृदश्च सत्कृत्य सत्कृता भरतर्षभ । अमर्षञ्च निराकृत्य
वैराणि च परन्तप ॥ ३६ ॥ हार्दं यत् पाण्डवेष्वासीत् प्राप्तेऽस्मि-
न्नायुषः क्षये । तदेव ते भवत्वद्य सन्धत्स्व भरतर्षभ ॥ ३७ ॥
बाला विहीनाः पित्रा ते त्वयैव परिवर्द्धिताः । तान् पालय यथा

न्यायं पुत्राय भरतर्षभ ॥ ३८ ॥ भवतैव हि रच्यास्ते व्यसनेषु विशेषतः। मा ते धर्मस्तथैवार्थो नश्येत भरतर्षभ ॥ ३९ ॥ आहुस्त्वां पाण्डवा राजन्नभिवाद्य प्रसाद्य च। भवत शासनाद्दुःखमनुभूतं सहानुगैः ॥ ४० ॥ द्वादशेमानि वर्षाणि वने निर्व्युषितानि नः। त्रयोदशं तथाज्ञातैः सजने परिवत्सरम् ॥ ४१ ॥ स्थाता नः समये तस्मिन् पितेति कृतनिश्चयाः। नाहास्म समयं तात तच्च नो ब्राह्मणा विदुः ॥ ४२ ॥ तस्मिन्नः समये तिष्ठ स्थितानां भरतर्षभ। नित्यं संक्लेशिता राजन् स्वमंशं लभेमहि ॥ ४३ ॥ त्वं धर्ममर्थं सञ्जानन् सम्यङ्नस्त्रातुमर्हसि। गुरुत्वं भवति प्रेक्ष्य बहून् क्लेशान् तितिक्ष्महे ॥ ४४ ॥ स भवान् मातृपितृवदस्मासु प्रतिपद्यताम्। गुरोर्गरीयसी वृत्तिर्या च शिष्यस्य भारत ॥ ४५ ॥ वर्त्तामहे त्वयि च तां त्वञ्च वर्त्तस्व नस्तथा। पित्रा स्थापयितव्या हि वयमुत्पथमास्थिताः ॥ ४६ ॥ संस्थापय पथिष्वस्मांस्तिष्ठ धर्मे स्ववर्त्मनि। आहुश्चेमां परिषदं पुत्रास्ते भरतर्षभ ॥ ४७ ॥ धर्मज्ञेषु सभासत्सु नेह युक्तमसाम्प्रतम्। यत्र धर्मो ह्यधर्मेण सत्यं यत्रानृतेन च ॥ ४८ ॥ हन्यते प्रेक्षमाणानां हतास्तत्र सभासदः। विद्धो धर्मो ह्यधर्मेण सभां यत्र प्रपद्यते ॥ ४९ ॥ न चास्य शल्यं कृन्तन्ति विद्धास्तत्र सभासदः। धर्म एतानारुजति यथा नद्यनुकूलजान् ॥ ५० ॥ ये धर्ममनुपश्यन्तस्तूष्णीं ध्यायन्त आसते। ते सत्यमाहुर्धर्म्यञ्च न्याय्यञ्च भरतर्षभ ॥ ५१ ॥ शक्य किमन्यद्वक्तुं ते दानादन्यज्जनेश्वर। ब्रुवन्तु वा महीपालाः सभायां ये समासते ॥ ५२ ॥ धर्मार्थौ सम्प्रधार्य्यैव यदि सत्यं ब्रवीम्यहम्। प्रमुञ्चेमान् मृत्युपाशात् क्षत्रियान् पुरुषर्षभ ॥ ५३ ॥ प्रशाम्य भरतश्रेष्ठ मा मन्युवशमन्वगाः। पित्र्यन्तेभ्यः प्रदायांशं पाण्डवेभ्यो यथोचितम् ॥ ५४ ॥ ततः सपुत्रः सिद्धार्थो भुङ्क्ष्व भोगान् परन्तप। अजातशत्रुं जानीषे स्थितं

धर्मं सतां सदा ॥ ५५ ॥ सपुत्रे त्वयि वृत्तिश्च वर्त्तते या नराधिप ।
दाक्षितश्च निरस्तश्च त्वामेवोपाश्रित पुनः ॥ ५६ ॥ इन्द्रप्रस्थं त्वये-
वासौ सपुत्रेण विवासितः । स तत्र निवसन् सर्वान् वशमानीय
पार्थिवान् ॥ ५७ ॥ त्वन्मुखानकरोद्राजन्न च त्वामत्यवर्त्तत ।
तस्यैवं वर्त्तमानस्य सौबलेन जिहीर्षता ॥ ५८ ॥ राष्ट्राणि धन-
धान्यञ्च प्रयुक्तः परमोपधिः । स तामवस्थां सम्प्राप्य कृष्णां प्रेक्ष्य
सभां गताम् । ५९ ॥ क्षत्रधर्मादमेयात्मा नाकम्पत युधिष्ठिरः ।
अहन्तु तव तेषाञ्च श्रेय इच्छामि भारत ॥ ६० ॥ धर्मादर्थात्
सुखाच्चैव मा राजन्नीनशः प्रजा । अनर्थमर्थं मन्वानोऽप्यर्थञ्चा-
नर्थमात्मनः ॥ ६१ ॥ लोभेऽतिप्रसृतान् पुत्रान्निगृह्णीष्व विशा-
म्पते । स्थिता शुश्रूषितुं पार्थाः स्थिता योद्धुमरिन्दमाः । यत्ते
पथ्यतमं राजंस्तस्मिंस्तिष्ठ परन्तप ॥ ६२ ॥

वैशम्पायन उवाच । तद्वाक्यं पार्थिवाः सर्वे हृदयैः सम-
पूजयन् । न तत्र कश्चिद्वक्तुं हि वाचं प्राक्रामदग्रतः ॥ ६३ ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि भगवद्वाक्ये
चतुर्नवतोऽध्यायः ॥ ९४ ॥

---

वैशम्पायन उवाच । तस्मिन्नभिहिते वाक्ये केशवेन महा-
त्मना । स्तिमिता हृष्टरोमाण आसन् सर्वे सभासदः ॥ १ ॥
कश्चिदुत्तरमेतेषां वक्तुं नोत्सहते पुमान् । इति सर्वे मनोभिस्ते
चिन्तयन्ति स्म पार्थिवाः ॥ २ ॥ तथा तेषु च सर्वेषु तूष्णीम्भूतेषु
राजसु । जामदग्न्य इदं वाक्यमब्रवीत् कुरुसंसदि ॥ ३ ॥ इमां
मे सोपमां वाचं शृणु सत्यमशङ्कितः । तां श्रुत्वा श्रेय आदत्स्व
यदि साध्विति मन्यसे ॥ ४ ॥ राजा दम्भोद्भवो नाम सार्वभौम-
पुराभवत् । अखिलां बुभुजे महीं पृथिवीमिति नः श्रुतम् ॥ ५ ॥

स स्म नित्यं निशापाये प्रातरुत्थाय वीर्य्यवान् । ब्राह्मणान् क्षत्रियांश्चैव पृच्छन्नास्ते महारथ ॥ ६ ॥ अस्ति कश्चिद्विशिष्टो वा मद्विधो वा भवेत् युधि । शूद्रो वैश्यः क्षत्रियो वा ब्राह्मणो वापि शस्त्रभृत् ॥ ७ ॥ इति ब्रुवन्नन्वचरत् स राजा पृथिवीमिमाम् । दर्पेण महता मत्तः कञ्चिदन्यमचिन्तयन् ॥ ८ ॥ तञ्च वैद्या अक्कपणा ब्राह्मणाः सर्वतोऽभयाः । प्रत्यषेधन्त राजानं श्लाघमानं पुनः पुनः ॥ ९ ॥ निषिध्यमानोऽप्यसकृत् पृच्छत्येवं स वै द्विजान् । अतिमानं श्रिया मत्तं तमूचुर्ब्राह्मणास्तदा ॥ १० ॥ तपस्विनो महात्मानो वेदव्रतसमन्विताः । उदीर्य्यमाणं राजानं क्रोधदीप्ता द्विजातयः ॥ ११ ॥ अनेकजयिनौ सङ्ख्ये यौ वै पुरुषसत्तमौ । तयोस्त्वं न समो राजन् भवितासि कदाचन ॥ १२ ॥ एवमुक्तः स राजा तु पुनः पप्रच्छ तान् द्विजान् । क्व तौ वीरौ क्वजन्मानौ किंकर्म्माणौ च कौ च तौ ॥ १३ ॥

ब्राह्मणा ऊचुः । नरो नारायणश्चैव तापसाविति नः श्रुतम् । आयातौ मानुषे लोके ताभ्यां युद्धस्व पार्थिव ॥ १४ ॥ श्रूयेते तौ महात्मानौ नरनारायणावुभौ । तपो घोरमनिर्द्देश्यं तप्येते गन्धमादने ॥ १५ ॥ स राजा महतीं सेनां योजयित्वा षड़ङ्गिनीम् । असृष्यमाणः सम्प्रायात यत्र तावपराजितौ ॥ १६ ॥ स गत्वा विषमं घोरं पर्वतं गन्धमादनम् । मृगयाणोऽन्वगच्छत तौ तापसौ वनमाश्रितौ ॥ १७ ॥ तौ दृष्ट्वा क्षुत्पिपासाभ्यां कृशौ धमनिसन्ततौ । शीतवातातपैश्चैव कर्षितौ पुरुषोत्तमौ ॥ १८ ॥ अभिगम्योपसङ्गृह्य पर्य्यपृच्छदनामयम् । तमर्च्चित्वा फलैर्मूलैरासनेनोदकेन च ॥ १९ ॥ न्यमन्त्रयेतां राजानं किङ्कार्य्यं क्रियतामिति । ततस्तामानुपूर्वीं स पुनरेवान्वकीर्त्तयत ॥ २० ॥ बाहुभ्यां मे जिता भूमिर्निहताः सर्व्वशत्रवः । भवद्भ्यां युद्धमाकाङ्क्षन्नुपयातोऽस्मि पर्व्वतम् । आतिथ्यं दीयतामेतत् काङ्क्षितं मे चिरं प्रति ॥ २१ ॥

नरनारायणावूचतु । अपेतक्रोधलोभोऽयमाश्रमो राजसत्तम । न ह्यस्मिन्नाश्रमे युद्ध कुत शस्त्र कुतोऽनृजु । अन्यत्र युद्धमाकाङ्क्ष्व बहव क्षत्रिया क्षितौ ॥ २२ ॥

राम उवाच । उच्यमानस्तथापि स्म भूय एवाभ्यभाषत । पुन पुन क्षम्यमाण सान्त्व्यमानश्च भारत ॥ २३ ॥ दम्भोद्भवो युद्धमिच्छन्नाह्वयत्येव तापसौ । ततो नरस्त्विषीकाणा मुष्टिमादाय भारत ॥ २४ ॥ अब्रवीदेहि युध्यस्व युद्धकामुक क्षत्रिय । सर्वशस्त्राणि चादत्स्व योजयस्व च वाहिनीम् । अहं हि ते विनेष्यामि युद्धश्रद्धामित परम् ॥ २५ ॥

दम्भोद्भव उवाच । यद्येतदस्त्रमस्मासु युक्तं तापस मन्यसे । एतेनापि त्वया योत्स्ये युद्धार्थी ह्यहमागत ॥ २६ ॥

राम उवाच । इत्युक्त्वा शरवर्षेण सर्वत समवाकिरत् । दम्भोद्भवस्तापसन्त जिघांसु सहसैनिक ॥ २७ ॥ तस्य तानस्यतो घोरानिषून् परतनुच्छिद । कदर्थीकृत्य स मुनिरिषीकाभि समार्पयत ॥ २८ ॥ ततोऽस्मै प्रासृजत् घोरमैषीकमपराजितम् । अस्त्रमप्रतिसन्धेयं तदद्भुतमिवाभवत ॥ २९ ॥ तेषामक्षीणि कर्णांश्च नासिकाश्चैव मायया । निमित्तवेधी स मुनिरिषीकाभि समार्पयत ॥ ३० ॥ स दृष्ट्वा श्वेतमाकाशमिषीकाभि समाचितम् । पादयोर्न्यपतत राजा स्वस्ति मेऽस्त्विति चाब्रवीत ॥ ३१ ॥ तमब्रवीन्नरो राजञ्छरण्य शरणैषिणाम् । ब्रह्मण्यो भव धर्मात्मा मा च स्मैवं पुन कृथा ॥ ३२ ॥ नैतादृक् पुरुषो राजन् क्षत्रधर्ममनुस्मरन् । मनसा नृपशार्दूल भवेत परपुरञ्जय ॥ ३३ ॥ मा च दर्पसमाविष्ट क्षेप्सी काश्चित् कथञ्चन । अल्पीयास विशिष्ट वा तत्ते राजन् समाहितम् ॥ ३४ ॥ कृतप्रज्ञो वीतलोभो निरहङ्कार आत्मवान् । दान्त क्षान्तो मृदु सौम्य प्रजा पालय पार्थिव ॥ ३५ ॥ मा स्म भूय क्षिपे कञ्चिदविदित्वा बलाबलम् ।

अनुज्ञात स्वस्ति गच्छ मैवं भूय समाचरेः ॥ ३६ ॥ कुशलं ब्राह्मणान् पृच्छेरावयोर्वचनाद्भृशम् । ततो राजा तयो पादावभिवाद्य महात्मनो ॥ ३७ ॥ प्रत्याजगाम स्वपुरं धर्मञ्चैवाचरद्भृशम् । सुमहच्चापि तत् कर्म यन्नरेण कृतं पुरा ॥ ३८ ॥ ततो गुणै सुबहुभि श्रेष्ठो नारायणोऽभवत । तस्माद्यावद्धनु श्रेष्ठे गाण्डीवेऽस्त्रं न युज्यते ॥ ३९ ॥ तावत् त्वं मानमुत्सृज्य गच्छ राजन् धनञ्जयम् । काकुदीक शुकं नाकमक्षिसन्तर्जनं तथा ॥ ४० ॥ सन्तानं नर्त्तकं घोरमास्यमोदकमष्टमम् । एतैर्विद्धाः सर्व एव मरणं यान्ति मानवा ॥ ४१ ॥ कामक्रोधौ लोभमोहौ मदमानौ तथैव च । मात्सर्य्याहंकृती चैव क्रमादेतदुदाहृताः ॥ ४२ ॥ उन्मत्ताश्च विचेष्टन्ते नष्टसञ्ज्ञा विचेतस । स्वपन्ति च प्लवन्ते च छर्द्दयन्ति च मानवा ॥ ४३ ॥ मूत्रयन्ते च सतत रुदन्ति च हसन्ति च । निर्म्माता सर्वलोकानामीश्वर सर्वकर्म्मवित् ॥४४॥ यस्य नारायणो बन्धु रर्जुनो दु सहो युधि । कस्तमुत्सहते जेतुं त्रिषु लोकेषु भारत ॥ ४५ ॥ वीर कपिध्वज जिष्णु यस्य नास्ति समो युधि । असङ्ख्येया गुणा पार्थे तद्विशिष्टो जनार्द्दन ॥ ४६ ॥ त्वमेव भूयो जानासि कुन्तीपुत्रं धनञ्जयम् । नरनारायणौ यौ तौ तावेवार्ज्जुनकेशवौ ॥ ४७ ॥ विजानीहि महाराज प्रवरौ पुरुषोत्तमौ । यद्येतदेवं जानासि न च मामभिशङ्कसे ॥ ४८ ॥ आर्य्यां मति समास्थाय शाम्य भारत पाण्डवै । अथ चेन्मन्यसे श्रेयो न मे भेदो भवेदिति ॥ ४९ ॥ प्रशाम्य भरतश्रेष्ठ मा च युद्धे मन कृथा । भवतश्च कुरुश्रेष्ठ कुलं बहुमत भुवि । तत्तथैवास्तु भद्रं ते स्वार्थमेवोपचिन्तय । ५० ॥

इति उद्योगपर्व्वणि भगवद्यानपर्व्वणि जामदग्न्यवाक्ये पञ्चनवतोऽध्याय ॥ ९५ ॥

---

वैशम्पायन उवाच। जामदग्न्यवच श्रुत्वा कण्वोऽपि भगवान्रुपि। दुर्य्योधनमिद वाक्यमब्रवीत कुरुसंसदि ॥ १ ॥

कण्व उवाच। अक्षयश्चाव्ययश्चैव ब्रह्मा लोकपितामह। तथैव भगवन्तौ तौ नरनारायणावृषी ॥ २ ॥ आदित्यानां हि सर्वेषा विष्णुरेक सनातन। अजय्यश्चाव्ययश्चैव शाश्वत प्रभुरीश्वर ॥ ३ ॥ निमित्तमरणास्त्वन्ये चन्द्रसूर्य्यमहीजलम्। वायुरग्निस्तथाकाश ग्रहास्तारागणास्तथा ॥ ४ ॥ ते च क्षयान्ते जगती हित्वा लोकत्रयं सदा। क्षयं गच्छन्ति वै सर्वे सृज्यन्ते च पुन पुन ॥ ५ ॥ मुहूर्त्तमरणास्त्वन्ये मानुषा मृगपक्षिण। तैर्य्यग्योन्याश्च ये चान्ये जीवलोकचरास्तथा ॥ ६ ॥ भूयिष्ठेन च राजान श्रिय भुक्त्वायुष क्षये। तरुणा प्रतिपद्यन्ते भोक्तु सुकृतदुष्कृते ॥ ७ ॥ स भवान् धर्मपुत्रेण शम कर्त्तुमिहार्हति। पाण्डवा कुरवश्चैव पालयन्तु वसुन्धराम् ॥ ८ ॥ बलवानहमित्येवं न मन्तव्यं सुयोधन। बलवन्तो बलिभ्यो हि दृश्यन्ते पुरुषर्षभ ॥ ९ ॥ न बलं बलिना मध्ये बल भवति कौरव। बलवन्तो हि ते सर्वे पाण्डवा देवविक्रमा ॥ १० ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम। मातलेर्दातुकामस्य कन्या मृगयतो वरम ॥ ११ ॥ मतस्त्रिलोकराजस्य मातलिर्नाम सारथि। तस्यैकैव कुले कन्या रूपतो लोकविश्रुता ॥ १२ ॥ गुणकेशीति विख्याता नाम्ना सा देवरूपिणी। श्रिया च वपुषा चैव स्त्रियोऽन्या सातिरिच्यते ॥ १३ ॥ तस्या प्रदानसमय मातलि सह भार्य्यया। ज्ञात्वा विमम्रशे राजस्तत्पर परिचिन्तयन् ॥ १४ ॥ धिक् खलु लघुशीलानामुच्छ्रिताना यशस्विनाम। नराणा मृदुसत्त्वाना कुले कन्याप्ररोहणम् ॥ १५ ॥ मातु कुलं पितृकुलं यत्र चैव प्रदीयत। कुलत्रयं संशयितं कुरुते कन्यका सताम् ॥ १६ ॥ देव-

मानुषलोकौ द्वौ मानुषेणैव चक्षुषा । अवगाह्यैव विचितौ न च मे रोचते वरः ॥ १७ ॥

कण्व उवाच । न देवान्नैव दितिजान्न गन्धर्वान्न मानुषान् । अरोचयद्वरकृते तथैव बहुलानृषीन् ॥ १८ ॥ भार्य्यया तु स संमन्त्र्य सह रात्रौ सुधर्मया । मातलिर्नागलोकाय चकार गमने मतिम् ॥ १९ ॥ न मे देवमनुष्येषु गुणकेश्या समो वरः । रूपतो दृश्यते कश्चिन्नागेषु भविता ध्रुवम् ॥ २० ॥ इत्यामन्त्र्य सुधर्मां स कृत्वा चाभिप्रदक्षिणम् । कन्यां शिरस्युपाघ्राय प्रविवेश महीतलम् ॥ २१ ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि मातलीयोपाख्याने पञ्चनवतोऽध्यायः ॥ ९५ ॥

---

कण्व उवाच । मातलिस्तु व्रजन्मार्गे नारदेन महर्षिणा । वरुणं गच्छता द्रष्टुं समागच्छद्यदृच्छया ॥ १ ॥ नारदोऽथाब्रवीदेनं क्व भवान् गन्तुमुद्यतः । स्वेन वा सूत कार्य्येण शासनाद्वा शतक्रतोः ॥ २ ॥ मातलिर्नारदेनैवं सम्पृष्टः पथि गच्छता । यथावत् सर्वमाचष्ट स्वकार्य्यं वरुणं प्रति ॥ ३ ॥ तमुवाचाथ स मुनिर्गच्छाव सहिताविति । सलिलेशदिदृक्षार्थमहमप्युद्यतो दिवः ॥ ४ ॥ अहन्ते सर्वमाख्यास्ये दर्शयन् वसुधातलम् । दृष्ट्वा तत्र वरं कञ्चिद्रोचयिष्याव मातले ॥ ५ ॥ अवगाह्य ततो भूमिमुभौ मातलिनारदौ । ददृशाते महात्मानौ लोकपालमपाम्पतिम् ॥ ६ ॥ तत्र देवर्षिसदृशीं पूजां स प्राप नारदः । महेन्द्रसदृशीञ्चैव मातलिः प्रत्यपद्यत ॥ ७ ॥ तावुभौ प्रीतमनसौ कार्य्यवन्तौ निवेद्य ह । वरुणेनाभ्यनुज्ञातौ नागलोकं विचेरतुः ॥ ८ ॥ नारदः

सर्वभूतानामन्तर्भूमिनिवासिनाम्। जानंश्चकार व्याख्यानं यन्तुः सर्वमशेषत ॥ ८ ॥

नारद उवाच। दृष्टस्ते वरुणः सूत पुत्रपौत्रसमावृत। पश्योदकपतेः स्थानं सर्वतोभद्रमृद्धिवत् ॥ १० ॥ एष पुत्रो महाप्राज्ञो वरुणस्येह गोपतेः। एष वै शीलवृत्तेन शौचेन च विशिष्यते ॥ ११ ॥ एषोऽस्य पुत्रोऽभिमतः पुष्करः पुष्करेक्षण। रूपवान् दर्शनीयश्च सोमपुत्र्या वृतः पतिः ॥ १२ ॥ ज्योत्स्नाकालीति यामाहुर्द्वितीयां रूपत श्रियम्। अदितेश्चैव यः पुत्रो ज्येष्ठः श्रेष्ठः कृतः स्मृतः ॥ १३ ॥ भवनं पश्य वारुण्यं यदेतत् सर्वकाञ्चनम्। यत् प्राप्य सुरतां प्राप्ताः सुराः सुरपतेः सखे ॥ १४ ॥ एतानि हृतराज्यानां दैतेयानां स्म मातले। दीप्यमानानि दृश्यन्ते सर्वप्रहरणान्युत ॥ १५ ॥ अक्षयानि किलैतानि विवर्त्तन्ते स्म मातले। अनुभावप्रयुक्तानि सुरैरवजितानि ह ॥ १६ ॥ अत्र राक्षसजात्यश्च दैत्यजात्यश्च मातले। दिव्यप्रहरणाश्चासन् सर्वदैवतनिर्जिताः ॥ १७ ॥ अग्निरेष महार्चिष्मान् जागर्त्ति वारुणे ह्रदे। वैष्णवचक्रमाविद्धं विधूमेन हविष्मता ॥ १८ ॥ एष गाण्डीमयश्चापो लोकसंहारसंभृत। रक्षते दैवतैर्नित्यं यतस्तद्गाण्डिवं धनुः ॥ १९ ॥ एष कृत्ये समुत्पन्ने तत्तद्धारयते बलम्। सहस्रशतसङ्ख्येन प्राणेन सततं ध्रुवः ॥ २० ॥ अशास्यानपि शास्त्येष रक्षोबन्धुषु राजसु। सृष्टः प्रथमतश्चण्डो ब्रह्मणा ब्रह्मवादिना ॥ २१ ॥ एतच्छस्त्रं नरेन्द्राणां महच्छक्रेण भाषितम्। पुत्राः सलिलराजस्य धारयन्ति महोदयम् ॥ २२ ॥ एतत् सलिलराजस्य छत्रं छत्रगृहे स्थितम्। सर्वतः सलिलं शीतं जीमूत इव वर्षति ॥ २३ ॥ एतच्छत्रात् परिभ्रष्टं सलिलं सोमनिर्मलम्। तमसा मूर्च्छितं भाति येन नार्च्छति दर्शनम् ॥ २४ ॥ बहून्यद्भुत-

रूपाणि द्रष्टव्यानीह मातले । तव कार्य्योपरोधस्तु तस्माद्गच्छाव मा चिरम् ॥ २५ ॥

इति उद्योगपर्व्वणि भगवद्यानपर्व्वणि मातलीयोपाख्याने सप्तनवतोऽध्यायः ॥ ९७ ॥

---

नारद उवाच । एतत्तु नागलोकस्य नाभिस्थाने स्थितं पुरम् । पातालमिति विख्यातं दैत्यदानवसेवितम् ॥ १ ॥ इदमद्भिः समं प्राप्ता ये केचित् ध्रुवजङ्गमाः । प्रविशन्तो महानादं नदन्ति भयपीड़िताः ॥ २ ॥ अत्रासुरोऽग्निः सततं दीप्यते वारिभोजनः । व्यापारेण धृतात्मानं निबद्धं समबुध्यत ॥ ३ ॥ अत्रामृतं सुरैः पीत्वा निहित निहितारिभि । अतः सोमस्य हानिश्च वृद्धिश्चैव प्रदृश्यते ॥ ४ ॥ अत्रादित्यो हयशिराः काले पर्व्वणि पर्व्वणि । उत्तिष्ठति सुवर्णाख्यं वाग्भिरापूरयञ्जगत् ॥ ५ ॥ यस्मादत्र समस्तास्ताः पतन्ति जलमूर्त्तयः । तस्मात् पातालमित्येव ख्यायते पुरमुत्तमम् ॥ ६ ॥ ऐरावतोऽस्मात् सलिलं गृहीत्वा जगतो हितः । मेघेष्वामुञ्चते शीतं यन्महेन्द्रः प्रवर्षति ॥ ७ ॥ अत्र नानाविधाकारास्तिमयो नैकरूपिणः । अप्सु सोमप्रभां पीत्वा वसन्ति जलचारिणः ॥ ८ ॥ अत्र सूर्य्यांशुभिर्भिन्नाः पातालतलमाश्रिता । मृता दिवसतः सूत पुनर्जीवन्ति वै निशि ॥ ९ ॥ उदयन्नित्यशश्चात्र चन्द्रमा रश्मिवाङ्मिः । अमृतं स्पृश्य संस्पर्शात् सञ्जीवयति देहिनः ॥ १० ॥ अत्र ते धर्म्मनिरता बद्धाः कालेन पीड़िताः । दैतेया निवसन्ति स्म वासवेन हृतश्रियः ॥ ११ ॥ अत्र भूतपतिर्नाम सर्व्वभूतमहेश्वरः । भूतये सर्व्वलोकानामाचरत्तप उत्तमम् ॥ १२ ॥ अत्र गोव्रतिनो विप्राः स्वाध्यायाम्नायकर्षिता । त्यक्तप्राणा जितस्वर्गा निवसन्ति महर्षयः ॥ १३ ॥ यत्र तत्र शयो

नित्य येन केनचिदाशित । येन केनचिदाच्छन्न स गोव्रत इहोच्यते ॥ १४ ॥ ऐरावणो नागराजो वामन कुमुदोऽञ्जन । प्रसूता सुप्रतीकस्य वंशे वारणसत्तमा ॥ १५ ॥ पश्य यद्यत्र ते कश्चिद्रोचते गुणतो वर । वरयिष्यामि त गत्वा यत्नमास्थाय मातले ॥ १६ ॥ अण्डमेतज्जले न्यस्त दीप्यमानमिव श्रिया । आप्रजाना निसर्गाद्वै नोद्भिद्यति न सर्पति ॥ १७ ॥ नास्य जाति निसर्गं वा कथ्यमान शृणोमि वै । पितर मातरञ्चापि नास्य जानाति कश्चन ॥ १८ ॥ अत किल महानग्निरन्तकाले समुत्थित । धक्ष्यते मातले सर्वं त्रैलोक्य सचराचरम् ॥ १९ ॥ मातलिस्त्वब्रवीत् श्रुत्वा नारदस्याथ भाषितम् । न मेऽत्र रोचते कश्चिदन्यतो व्रज मा चिरम् ॥ २० ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि मातलीयोपाख्याने अष्टनवतोऽध्याय ॥ ९८ ॥

---

नारद उवाच । हिरण्यपुरमित्येव ख्यात पुरवर महत् । दैत्याना दानवानाञ्च मायाशतविचारिणाम् ॥ १ ॥ अनल्पेन प्रयत्नेन निर्मित विश्वकर्मणा । मयेन मनसा सृष्ट पातालतलमाश्रितम् ॥ २ ॥ अत्र मायासहस्राणि विकुर्वाणा महौजस । दानवा निवसन्ति स्म शूरा दत्तवरा पुरा ॥ ३ ॥ नैते शक्रेण नान्येन यमेन वरुणेन वा । शक्यन्ते वशमानेतु तथैव धनदेन च ॥ ४ ॥ असुरा कालखञ्जाश्च तथा विष्णुपदोद्भवा । नैर्ऋता यातुधानाश्च ब्रह्मपादोद्भवाश्च ये ॥ ५ ॥ दंष्ट्रिणो भीमवेगाश्च वातवेगपराक्रमा । मायावीर्योपसम्पन्ना निवसन्त्यत्र मातले ॥ ६ ॥ निवातकवचा नाम दानवा युद्धदुर्मदा । जानासि च यथा शक्रो नैतान् शक्नोति बाधितुम् ॥ ७ ॥ बहुशो मातले त्वञ्च तव पुत्रश्च




गोमुखः। निर्भग्नो देवराजस्य सहपुत्रः शचीपतेः ॥ ८ ॥ पश्य वेश्मानि रौक्माणि मातले राजतानि च। कर्मणा विधियुक्तेन युक्तान्युपगतानि च ॥ ९ ॥ वैदूर्य्यमणिचित्राणि प्रवालरुचिराणि च। अर्कस्फटिकशुभ्राणि वज्रसारोज्ज्वलानि च ॥ १० ॥ पार्थिवानीव चाभान्ति पद्मरागमयानि च। शैलानीव च दृश्यन्ते दारवाणीव चाप्युत ॥ ११ ॥ सूर्य्यरूपाणि चाभान्ति दीप्ताग्निसदृशानि च। मणिजालविचित्राणि प्रांशूनि निविड़ानि च ॥ १२ ॥ नैतानि शक्यं निर्द्देष्टुं रूपतो द्रव्यतस्तथा। गुणतश्चैव सिद्धानि प्रमाणगुणवन्ति च ॥ १३ ॥ आक्रीड़ान् पश्य दैत्यानां तथैव शयनान्युत। रत्नवन्ति महार्हाणि भाजनान्यासनानि च ॥ १४ ॥

वर्द्धितानि प्रसूत्या वै विनताकुलकर्त्तृभिः ॥ ३ ॥ पक्षिराजाभि-
जात्यानां सहस्राणि शतानि च । कश्यपस्य ततो वंशे जातै-
र्भूतिविवर्द्धनैः ॥ ४ ॥ सर्वे ह्येते श्रिया युक्ताः सर्वे श्रीवत्सलक्षणाः ।
सर्वे श्रियमभीप्सन्तो धारयन्ति बलान्युत ॥ ५ ॥ कर्म्मणा क्षत्रिया-
श्चैते निर्घृणा भोगिभोजिनः । ज्ञातिसङ्क्षयकर्त्तृत्वात् ब्राह्मण्यं
न लभन्ति वै ॥ ६ ॥ नामानि चैषां वक्ष्यामि यथा प्राधान्यतः
शृणु । मातले श्लाघ्यमेतद्धि कुलं विष्णुपरिग्रहम् ॥ ७ ॥ दैवतं
विष्णुरेतेषां विष्णुरेव परायणम् । हृदि चैषां सदा विष्णुर्विष्णु-
रेव सदा गतिः ॥ ८ ॥ सुवर्णचूड़ो नागाशी दारुणश्चण्डतुण्डकः ।
अनिलश्चानलश्चैव विशालाक्षोऽथ कुण्डली ॥ ९ ॥ पङ्कजिद्वज्र-
निष्कम्भो वैनतेयोऽथ वामनः । वातवेगो दिशाचक्षुर्निमेषो-
ऽनिमिषस्तथा ॥ १० ॥ त्रिवारः सप्तवारश्च वाल्मीकिर्द्वीपक-
स्तथा । दैत्यद्वीपः सरिद्द्वीपः सारसः पद्मकेतनः ॥ ११ ॥ सुमुख-
श्चित्रकेतुश्च चित्रबर्हस्तथानघः । मेघकृत् कुमुदो दक्षः सर्पान्तः
सोमभोजनः ॥ १२ ॥ गुरुभारः कपोतश्च सूर्य्यनेत्रश्चिरान्तकः ।
विष्णुधर्म्मा कुमारश्च पारिबर्हो हरिस्तथा ॥ १३ ॥ सुस्वरो मधु-
पर्कश्च हेमवर्णस्तथैव च । मलयो मातरिश्वा च निशाकरदिवा-
करौ ॥ १४ ॥ एते प्रदेशमात्रेण मयोक्ता गरुड़ात्मजाः । प्राधा-
न्यतस्ते यशसा कीर्त्तिताः प्राणतश्च ये ॥ १५ ॥ यद्यत्र न रुचिः
काचिदेहि गच्छाव मातले । तं नयिष्यामि देशं त्वां वरं यत्रोप-
लप्स्यते ॥ १६ ॥

इति उद्योगपर्व्वणि भगवद्यानपर्व्वणि मातलीयोपाख्याने
शततमोऽध्यायः ॥ १०० ॥

---

नारद उवाच । इदं रसातलं नाम सप्तमं पृथिवीतलम् । यत्रास्ते सुरभिर्माता गवाममृतसम्भवा ॥ १ ॥ चरन्ती सततं क्षीरं पृथिवीसारसम्भवम् । षण्णां रसानां सारेण रसमेकमनुत्तमम् ॥ २ ॥ अमृतेनाभितृप्तस्य सारमुद्गिरतः पुरा । पितामहस्य वदनादुदतिष्ठदनिन्दिता ॥ ३ ॥ यस्याः क्षीरस्य धारायाः निपतन्त्या महीतले । ह्रदः कृतः क्षीरनिधिः पवित्रं परमुच्यते ॥ ४ ॥ पुष्पितस्येव फेनेन पर्य्यन्तमनुवेष्टितम् । पिबन्तो निवसन्त्यत्र फेनपा मुनिसत्तमाः ॥ ५ ॥ फेनपा नाम ते ख्याताः फेनाहाराश्च मातले । उग्रे तपसि वर्त्तन्ते येषां बिभ्यति दैवताः ॥६॥ अस्यायतस्तो धेन्वोऽन्या दिक्षु सर्व्वासु मातले । निवसन्ति दिशां पाल्यो धारयन्त्यो दिशः स्मृता ॥ ७ ॥ पूर्व्वां दिशं धारयते सुरूपा नाम सौरभी । दक्षिणां हंसिका नाम धारयत्यपरां दिशम् ॥८॥ पश्चिमा वारुणी दिक् च धार्य्यते वै सुभद्रया । महानुभावया नित्यं मातले विश्वरूपया ॥ ९ ॥ सर्व्वकामदुघा नाम धेनुर्धारयते दिशम् । उत्तरां मातले धर्म्यां तथैलविलसंज्ञिताम् ॥ १० ॥ आसान्तु पयसा मिश्रं पयो निर्मथ्य सागरे । मन्थानं मन्दरं कृत्वा देवैरसुरसंहितैः ॥ ११ ॥ उद्धृता वारुणी लक्ष्मीरमृतञ्चापि मातले । उच्चैःश्रवाश्चाश्वराजो मणिरत्नञ्च कौस्तुभम् ॥१२॥ सुधाहारेषु च सुधां स्वधाभोजिषु च स्वधाम् । अमृतञ्चामृताशेषु सुरभी क्षरते पयः ॥ १३ ॥ अत्र गाथा पुरा गीता रसातलनिवासिभिः । पौराणी श्रूयते लोके गीयते या मनीषिभिः ॥१४॥ न नागलोके न स्वर्गे न विमाने त्रिविष्टपे । परिवासः सुखस्तादृग्रसातलतले यथा ॥ १५ ॥

इति उद्योगपर्व्वणि भगवद्यानपर्व्वणि मातलीयोपाख्याने एकाधिकशततमोऽध्यायः ॥ १०१ ॥

---

नारद उवाच । इयं भोगवती नाम पुरी वासुकिपालिता । यादृशी देवराजस्य पुरी वर्य्यामरावती ॥ १ ॥ एष शेषः स्थितो नागो येनेयं धार्य्यते सदा । तपसा लोकमुख्येन प्रभावमहिता मही ॥ २ ॥ श्वेताचलनिभाकारो दिव्याभरणभूषितः । सहस्रं धारयन् मूर्ध्नां ज्वालाजिह्वो महाबलः ॥ ३ ॥ इह नानाविधाकारा नानाविधविभूषणाः । सुरसायाः सुता नागा निवसन्ति गतव्यथाः ॥ ॥ ॥ मणिस्वस्तिकचक्राङ्काः कमण्डलुकलक्षणाः । सहस्रसङ्ख्या बलिनः सर्वे रौद्राः स्वभावतः ॥ ५ ॥ सहस्रशिरसः केचित् केचित् पञ्चशताननाः । शतशीर्षास्तथा केचित् केचित् त्रिशिरसोऽपि च ॥ ६ ॥ द्विपञ्चशिरसः केचित् केचित् सप्तमुखास्तथा । महाभोगा महाकायाः पर्वताभोगभोगिनः ॥ ७ ॥ बहूनीह सहस्राणि प्रयुतान्यर्बुदानि च । नागानामेकवंशानां यथाश्रेष्ठन्तु मे शृणु ॥ ८ ॥ वासुकिस्तक्षकश्चैव कर्कोटकधनञ्जयौ । कालियो नहुषश्चैव कम्बलाश्वतरावुभौ ॥ ९ ॥ वाह्यकुण्डो मणिर्नागस्तथैवापूरणः खगः । वामनश्चैलपत्रश्च कुकुरः कुकुणस्तथा ॥ १० ॥ आर्य्यको नन्दकश्चैव तथा कलशपोतकौ । कैलासकः पिञ्जरको नागश्चैरावतस्तथा ॥ ११ ॥ सुमनोमुखो दधिमुखः शङ्खो नन्दोपनन्दकौ । आप्तः कोटरकश्चैव शिखी निष्ठुरकस्तथा ॥ १२ ॥ तित्तिरिर्हस्तिभद्रश्च कुमुदो माल्यपिण्डकः । द्वौ पद्मौ पुण्डरीकश्च पुष्पो मुद्गरपर्णकः ॥ १३ ॥ करवीरः पिठरकः सम्वृत्तो वृत्त एव च । पिण्डारो बिल्वपत्रश्च मूषिकादः शिरीषकः ॥ १४ ॥ दिलीपः शङ्खशीर्षश्च ज्योतिष्कोऽथापराजितः । कौरव्यो धृतराष्ट्रश्च कुहरः कृशकस्तथा ॥ १५ ॥ विरजा धारणश्चैव सुबाहुर्मुखरो जयः । बधिरान्धौ विशुण्डिश्च विरसः सुरसस्तथा ॥ १६ ॥ एते चान्ये च बहवः कश्यपस्यात्मजाः स्मृताः । मातले पश्य यद्यत्र कश्चित्ते रोचते वरः ॥ १७ ॥

कण्व उवाच। मातलिस्त्वेवमव्यग्रः सततं सन्निरीक्ष्य वै। पप्रच्छ नारदं तत्र प्रीतिमानिव चाभवत्॥ १८॥ स्थितो य एष पुरतः कौरव्यस्यार्य्यकस्य तु। द्युतिमान् दर्शनीयश्च कस्यैष कुलनन्दन॥ १९॥ कः पिता जननी चास्य कतमस्यैष भोगिनः। वंशस्य कस्यैष महान् केतुभूत इव स्थितः॥ २०॥ प्रणिधानेन धैर्य्येण रूपेण वयसा च मे। मनः प्रविष्टो देवर्षे गुणकेश्याः पतिर्वरः॥ २१॥

कण्व उवाच। मातलिं प्रीतमनसं दृष्ट्वा सुमुखदर्शनात्। निवेदयामास तदा माहात्म्यं जन्म कर्म च॥ २२॥

नारद उवाच। ऐरावतकुले जातः सुमुखो नाम नागराट्। आर्य्यकस्य मतः पौत्रो दौहित्रो वामनस्य च॥ २३॥ एतस्य हि पिता नागश्चिकुरो नाम मातले। न चिराद्वैनतेयेन पञ्चत्वमुपपादितः॥ २४॥ ततोऽब्रवीत् प्रीतमना मातलिर्नारदं वचः। एष मे रुचितस्तात जामाता भुजगोत्तमः॥ २५॥ क्रियतामत्र यत्नो हि प्रीतिमानस्म्यनेन वै। अस्मै नागाय वै दातुं प्रियां दुहितरं मुने॥ २६॥

इति उद्योगपर्वणि भगवद्यानपर्वणि मातलीयोपाख्याने द्व्यधिकशततमोऽध्यायः॥१०२॥

---

नारद उवाच। सूतोऽयं मातलिर्नाम शक्रस्य दयितः सुहृत्। शुचिः शीलगुणोपेतस्तेजस्वी वीर्य्यवान् बली॥ १॥ शक्रस्यायं सखा चैव मन्त्री सारथिरेव च। अल्पान्तरप्रभावश्च वासवेन रणे रणे॥ २॥ अयं हरिसहस्रेण युक्तं जैत्रं रथोत्तमम्। देवासुरेषु युद्धेषु मनसैव प्रयच्छति॥ ३॥ अनेन विजितानश्वैर्दोर्भ्यां जयति वासवः। अनेन बलभित् पूर्वं प्रहृते प्रहरत्यसौ॥ ४॥

अस्य कन्या वरारोहा रूपेणासदृशी भुवि। सत्यशीलगुणोपेता गुणकेशीति विश्रुता ॥ ५ ॥ तस्यास्य व्रजाचरतस्त्रैलोक्यममरद्युते। सुमुखो भवत पौत्रो रोचते दुहितु पति ॥ ६ ॥ यदि ते रोचते सम्यग्भुजगोत्तम मा चिरम्। क्रियतामार्य्यक क्षिप्र बुद्धि कन्यापरिग्रहे ॥ ७ ॥ यथा विष्णुकुले लक्ष्मीर्यथा स्वाहा विभावसो। कुले तव तथैवास्तु गुणकेशी सुमध्यमा ॥ ८ ॥ पौत्रस्यार्थे भवास्तस्मात गुणकेशी प्रतीच्छतु। सदृशीं प्रतिरूपस्य वासवस्य शचीमिव ॥ ९ ॥ पितृहीनमपि ह्येन गुणतो वरयामहे। बहुमानाच्च भवतस्तथैवैरावतस्य च ॥ १० ॥ सुमुखस्य गुणैरेव शीलशौचदमादिभि। अभिगम्य स्वयं कन्यामयं दातु समुद्यत। मातलिस्तस्य सम्मान कर्त्तुमर्हो भवानपि ॥ ११ ॥

कण्व उवाच। स तु दीन प्रहृष्टश्च प्राह नारदमार्य्यक। व्रियमाणे तथा पौत्रे पुत्रे च निधन गते ॥ १२ ॥

आर्य्यक उवाच। न मे नैतत बहु मत महर्षे वचन तव। सखा शक्रस्य संयुक्त कस्याय नेप्सितो भवेत ॥ १३ ॥ कारणस्य तु दौर्बल्यात चिन्तयामि महामुने। अस्य देहकरस्तात मम पुत्रो महाद्युते ॥ १४ ॥ भक्षितो वैनतेयेन दुःखार्त्तास्तेन वै वयम्। पुनरेव च तेनोक्त वैनतेयेन गच्छता ॥ १५ ॥ मासेनान्येन सुमुख भक्षयिष्य इति प्रभो। ध्रुव तथा तद्भविता जानीमस्तस्य निश्चयम्। तेन हर्षं प्रनष्टो मे सुपर्णवचनेन वै ॥ १६ ॥

कण्व उवाच। मातलिस्त्वब्रवीदेन बुद्धिरत्र कृता मया। जामातृभावेन वृत सुमुखस्तव पुत्रज ॥ १७ ॥ सोऽय मया च सहितो नारदेन च पन्नग। त्रिलोकेश सुरपति गत्वा पश्यतु वासवम् ॥ १८ ॥ शेषेणैवास्य कार्य्येण प्रज्ञास्याम्यहमायुष। सुपर्णस्य विघाते च प्रयतिष्यामि सत्तम ॥ १९ ॥ सुमुखश्च मया सार्द्ध देवेशमभिगच्छतु। कार्य्यसंसाधनार्थाय स्वस्ति तेऽस्तु

भुजङ्गम ॥ २० ॥ ततस्ते सुमुखं दृष्ट्वा सर्व एव महौजसः। ददृशुः शक्रमासीनं देवराजं महाद्युतिम् ॥ २१ ॥ सङ्गत्या तत्र भगवान् विष्णुरासीच्चतुर्भुजः। ततस्तत् सर्वमाचख्यौ नारदो मातलिं प्रति ॥ २२ ॥

वैशम्पायन उवाच। ततः पुरन्दरं विष्णुरुवाच भुवनेश्वरम्। अमृतं दीयतामस्मै क्रियताममरैः समः ॥ २३ ॥ मातलिर्नारदश्चैव सुमुखश्चैव वासव। लभतां भवतः कामात् काममेतं यथेप्सितम् ॥ २४ ॥ पुरन्दरोऽथ सञ्चिन्त्य वैनतेयपराक्रमम्। विष्णुमेवाब्रवीदेनं भवानेव ददात्विति ॥ २५ ॥

विष्णुरुवाच। ईशस्त्वं सर्वलोकानां चराणामचराश्च ये। त्वया दत्तमदत्तं कः कर्त्तुमुत्सहते विभो ॥ २६ ॥ प्रादाच्छक्रस्ततस्तस्मै पन्नगायायुरुत्तमम्। न त्वेनममृतप्राशं चकार बलवृत्रहा ॥ २७ ॥ लब्ध्वा वरन्तु सुमुखः सुमुखः सम्बभूव ह। कृतदारो यथाकामं जगाम च गृहान् प्रति ॥ २८ ॥ नारदस्त्वार्य्यकश्चैव कृतकार्य्यौ मुदा युतौ। अभिजग्मतुरभ्यर्च्च देवराजं महाद्युतिम् ॥ २९ ॥

इति उद्योगपर्व्वणि भगवद्यानपर्व्वणि मातलीयोपाख्याने त्र्यधिकशततमोऽध्यायः ॥१०३॥

---

कण्व उवाच। गरुड़स्तत्र शुश्राव यथावृत्तं महाबलः। आयुःप्रदानं शक्रेण कृतं नागस्य भारत ॥ १ ॥ पक्षवातेन महता रुद्ध्वा त्रिभुवनं खगः। सुपर्णः परमक्रुद्धो वासवं समुपाद्रवत् ॥२॥

गरुड़ उवाच। भगवन् किमवज्ञानाद्वृत्तिः प्रतिहता मम। कामकारं वरं दत्त्वा पुनश्चलितवानसि ॥ ३ ॥ निसर्गात् सर्वभूतानां सर्वभूतेश्वरेण मे। आहारो विहितो धात्रा किमर्थं

वार्य्यते त्वया॥ ४॥ इतश्चैव महानागः स्थापितः समयश्च मे। अनेन च मया देव भर्त्तव्यः प्रसवो महान्॥ ५॥ एतस्मिंस्तु तथा-भूते नान्यं हिंसितुमुत्सहे। क्रीड़से कामकारेण देवराज यथे-च्छकम्॥ ६॥ सोऽहं प्राणान् विमोच्यामि तथा परिजनो मम। दृष्टे च भत्या मम शक्र प्रीतिमान् भव वासव॥ ७॥ एतच्चैवाह-मर्हामि भूयश्च बलवत्तरम्। त्रैलोक्यस्येश्वरो योऽहं परभृत्यत्व-मागतः॥ ८॥ त्वयि तिष्ठति देवेश न विष्णुः कारणं मम। त्रैलोक्यराज राज्यं हि त्वयि वासव शाश्वतम्॥ ९॥ ममापि दक्षस्य सुता जननी कश्यपः पिता। अहमप्युत्सहे लोकान् सम-न्ताद्वोढुमञ्जसा॥ १०॥ असह्यं सर्वभूतानां ममापि विपुलं बलम्। मयापि सुमहत् कर्म कृतं दैतेयविग्रहे॥ ११॥ श्रुतश्रीः श्रुतसेनश्च विवस्वान् रोचनामुखः। प्रसृत कालकाञ्च मयापि दितिजा हताः॥ १२॥ यत्तु ध्वजस्थानगतो यत्नात् परिचरा-म्यहम्। वहामि चैवानुजन्ते तेन मामवमन्यसे॥ १३॥ कोऽन्यो भारसहो ह्यस्ति कोऽन्योऽस्ति बलवत्तरः। मया योऽहं विशिष्टः सन् वहामीमं सबान्धवम्॥ १४॥ अवज्ञाय तु यत्तोऽहं भोजना-द्व्यवरोपितः। तेन मे गौरवं नष्टं त्वत्तश्चास्माच्च वासव॥ १५॥ अदित्यां य इमे जाता बलविक्रमशालिनः। त्वमेषां किल सर्वेषां बलेन बलवत्तरः॥ १६॥ सोऽहं पक्षैकदेशेन वहामि त्वां गत-क्लमः। विमृश त्वं शनैस्तात कोऽन्वत्र बलवानिति॥ १७॥

कण्व उवाच। स तस्य वचनं श्रुत्वा खगस्योदर्कदारुणम्। अक्षोभ्यं क्षोभयंस्तार्क्ष्यमुवाच रथचक्रभृत्॥ १८॥ गरुत्मन्मन्यसे-ऽऽत्मानं बलवन्तं सुदुर्बल। अलमस्मत्समक्षन्ते स्तोतुमात्मान-मण्डज॥ १९॥ त्रैलोक्यमपि मे कृत्स्नमशक्तं देहधारणे। अह-मेवात्मनात्मानं वहामि त्वाञ्च धारये॥ २०॥ इमं तावन्ममैकं त्वं बाहुं सव्येतरं वह। यद्येनं धारयस्येनं सफलं ते विकत्थितम्॥ २१॥

ततं स भगवांस्तस्य स्कन्धे बाहुं समासजत्। निपपात स
भारार्त्तो विकलो नष्टचेतनः ॥ २२ ॥ यावान् हि भारः कृतस्नायाः
पृथिव्याः पर्वतैः सह। एकस्या देहशाखायास्तावद्भारममन्यत
॥ २३ ॥ न त्वेनं पीड़यामास बलेन बलवत्तरः। ततो हि जीवितं
तस्य न व्यनीनशदच्युतः ॥ २४ ॥ व्यात्तास्यः स्रस्तकायश्च विचेता
विह्वलः खगः। मुमोच पत्राणि तदा गुरुभारप्रपीड़ितः ॥ २५ ॥
स विष्णुं शिरसा पक्षी प्रणम्य विनतासुतः। विचेता विह्वलो
दीनः किञ्चिद्वचनमब्रवीत ॥ २६ ॥ भगवन् लोकसारस्य सदृशेन
वपुष्मता। भुजेन स्वैरमुक्तेन निष्पिष्टोऽस्मि महाबल ॥ २७ ॥
क्षन्तुमर्हसि मे देव विह्वलस्याल्पचेतसः। बलदर्पविदग्धस्य
पक्षिणो ध्वजवासिनः ॥ २८ ॥ न हि ज्ञातं बलं देव मया ते
परमं विभो। तेन मन्याम्यहं वीर्य्यमात्मनो न समं परैः ॥ २९ ॥
ततश्चक्रे स भगवान् प्रसादं वै गरुत्मतः। मैवं भूय इति स्नेहात्
तदा चैनमुवाच ह ॥ ३० ॥ पदाङ्गुष्ठेन चिक्षेप सुमुखं गरुड़ो-
रसि। ततः प्रभृति राजेन्द्र सह सर्पेण वर्त्तते ॥ ३१ ॥ एवं
विष्णुबलाक्रान्तो गर्वनाशमुपागतः। गरुड़ो बलवान् राजन्
वैनतेयो महायशाः ॥ ३२ ॥

कण्व उवाच। तथा त्वमपि गान्धारे यावत् पाण्डुसुतान्रणे।
नासादयसि तान् वीरास्तावज्जीवसि पुत्रक ॥ ३३ ॥ भीमः
प्रहरतां श्रेष्ठो वायुपुत्रो महाबलः। धनञ्जयश्चेन्द्रसुतो न हन्या-
तान्तु कं रणे ॥ ३४ ॥ विष्णुर्वायुश्च शक्रश्च धर्मस्तौ चाश्विना-
वुभौ। एते देवास्त्वया केन हेतुना वीक्षितुं क्षमाः ॥ ३५ ॥
तदलन्ते विरोधेन शमं गच्छ नृपात्मज। वासुदेवेन तीर्थेन कुलं
रक्षितुमर्हसि ॥ ३६ ॥ प्रत्यक्षदर्शी सर्वस्य नारदोऽयं महातपाः।
माहात्म्यस्य तदा विष्णोः सोऽयञ्चक्रगदाधरः ॥ ३७ ॥

वैशम्पायन उवाच। दुर्य्योधनस्तु तत श्रुत्वा निश्वसन्

भ्रुकुटीमुख। राधेयमभिसम्प्रेक्ष्य जहास स्वनवत्तदा॥ ३८॥ कदर्थीकृत्य तद्वाक्यमृषि कण्वस्य दुर्मति। ऊरुं गजकराकारं ताड़यन्निदमब्रवीत॥ ३९॥ यथैवेश्वरसृष्टोऽस्मि यद्भावी या च मे गति। तथा महर्षे वर्त्तामि किं प्रलाप करिष्यति॥ ४०॥

इति उद्योगपर्वणि भगवद्यानपर्वणि मातलीयोपाख्याने चतुरधिकशततमोऽध्याय॥ १०४॥

---

जनमेजय उवाच। अनर्थे जातनिर्बन्धं परार्थे लोभमोहितम। अनार्य्येकेष्वभिरतं मरणे कृतनिश्चयम्॥ १॥ ज्ञातीनां दुःखकर्त्तारं बन्धूना शोकवर्द्धनम्। सुहृदा क्लेशदातारं द्विषतां हर्षवर्द्धनम॥ २॥ कथ नैनं विमार्गस्थं वारयन्तीह बान्धवा। सौहृदाद्वा सुहृत स्निग्धो भगवान् वा पितामह॥ ३॥

वैशम्पायन उवाच। उक्तं भगवता वाक्यमुक्त भीष्मेण यत् क्षमम्। उक्ता बहुविधञ्चैव नारदेनापि तत् शृणु॥ ४॥

नारद उवाच। दुर्लभो वै सुहृच्छ्रोता दुर्लभश्च हित सुहृत। तिष्ठते हि सुहृत यत्र न बन्धुस्तत्र तिष्ठति॥ ५॥ श्रोतव्यमपि पश्यामि सुहृदा कुरुनन्दन। न कर्त्तव्यश्च निर्बन्धो निर्बन्धो हि सुदारुण॥ ६॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम्। यथा निर्बन्धत प्राप्तो गालवेन पराजय॥ ७॥ विश्वामित्र तपस्यन्तं धर्मो जिज्ञासया पुरा। अभ्यागच्छत् स्वयं भूत्वा वशिष्ठो भगवानृषि॥ ८॥ सप्तर्षीणामन्यतम वेषमास्थाय भारत। बुभुक्षु क्षुधितो राजन्नाश्रमं कौशिकस्य तु॥ ९॥ विश्वामित्रोऽथ सम्भ्रान्त श्रपयामास वै चरुम्। परमान्नस्य यत्नेन न च त प्रत्यपालयत॥ १०॥ अन्नं तेन यदा भुक्तमन्यैर्दत्त तपस्विभि। अथ गृह्यान्नमत्युष्णं विश्वामित्रोऽप्युपागमत॥ ११॥ भुक्तं मे

तिष्ठ तावत्त्वमित्युक्त्वा भगवान् ययौ। विश्वामित्रस्ततो राजन् स्थित एव महाद्युतिः॥ १२॥ भक्तं प्रगृह्य मूर्द्ध्नि वै बाहुभ्यां संशितव्रतः। स्थितः स्थाणुरिवाभ्यासे निश्चेष्टो मारुताशनः॥१३॥ तस्य शुश्रूषणे यत्नमकरोत् गालवो मुनि। गौरवाद्बहुमानाच्च हार्द्देन प्रियकाम्यया॥ १४॥ अथ वर्षशते पूर्णे धर्मः पुनरुपागमत्। वाशिष्ठं वेशमास्थाय कौशिकं भोजनेप्सया॥ १५॥ स दृष्ट्वा शिरसा भक्तं ध्रियमाणं महर्षिणा। तिष्ठता वायुभक्षेण विश्वामित्रेण धीमता॥ १६॥ प्रतिगृह्य ततो धर्मस्तथैवोष्णं तथा नवम्। भुक्त्वा प्रीतोऽस्मि विप्रर्षे तमुक्त्वा स मुनिर्गतः॥१७॥ क्षत्रभावादपगतो ब्राह्मणत्वमुपागतः। धर्मस्य वचनात् प्रीतो विश्वामित्रस्तथाभवत्॥ १८॥ विश्वामित्रस्तु शिष्यस्य गालवस्य तपस्विनः। शुश्रूषया च भक्त्या च प्रीतिमानित्युवाच ह॥ १९॥ अनुज्ञातो मया वत्स यथेष्टं गच्छ गालव। इत्युक्तः प्रत्युवाचेदं गालवो मुनिसत्तमम्॥ २०॥ प्रीतो मधुरया वाचा विश्वामित्रं महाद्युतिम्। दक्षिणां काः प्रयच्छामि भवते गुरुकर्म्मणि॥२१॥ दक्षिणाभिरुपेतं हि कर्म सिध्यति मानवम्। दक्षिणानां हि दाता वै अपवर्गेण युज्यते॥ २२॥ स्वर्गे क्रतुफलं तद्धि दक्षिणा शान्तिरुच्यते। किमाहरामि गुर्व्वर्थं ब्रवीतु भगवानिति॥ २३॥ न जानंस्तेन भगवान् जितः शुश्रूषणेन वै। विश्वामित्रस्तमसकृद्गच्छ गच्छेत्यचोदयत्॥ २४॥ असकृद्गच्छ गच्छेति विश्वामित्रेण भाषितः। किं ददामीति बहुशो गालवः प्रत्यभाषत॥ २५॥ निर्बन्धतस्तु बहुशो गालवस्य तपस्विनः। किञ्चिदागतसंरम्भो विश्वामित्रोऽब्रवीदिदम्॥ २६॥ एकतः श्यामकर्णानां हयानां चन्द्रवर्चसाम्। अष्टौ शतानि मे देहि गच्छ गालव मा चिरम्॥२७॥

इति उद्योगपर्व्वणि भगवद्यानपर्व्वणि गालवचरिते पञ्चाधिकशततमोऽध्यायः॥ १०५॥

नारद उवाच। एवमुक्तस्तदा तेन विश्वामित्रेण धीमता।
नास्ते न शेते नाहारं कुरुते गालवस्तदा ॥ १ ॥ त्वगस्थिभूतो
हरिणश्चिन्ताशोकपरायणः। शोचमानोऽतिमात्रं स दह्यमानश्च
मन्युना ॥ २ ॥ गालवो दुःखितो दुःखाद्विललाप सुयोधन। कुतः
पुष्टानि मित्राणि कुतोऽर्थाः सञ्चयः कुतः ॥ ३ ॥ हयानाञ्चन्द्र
शुभ्राणां शतान्यष्टौ कुतो मम। कुतो मे भोजने श्रद्धा सुखश्रद्धा
कुतश्च मे ॥ ४ ॥ श्रद्धा मे जीवितस्यापि छिन्ना किं जीवितेन मे।
अहं पारे समुद्रस्य पृथिव्या वा परम्परात् ॥ ५ ॥ गत्वात्मानं
विमुञ्चामि किं फलं जीवितेन मे। अधनस्याकृतार्थस्य त्यक्तस्य
विविधैः फलैः ॥ ६ ॥ ऋणं धारयमाणस्य कुतः सुखमनीहया।
सुहृदां हि धनं भुक्त्वा कृत्वा प्रणयमीप्सितम् ॥ ७ ॥ प्रतिकर्त्तुं
मशक्तस्य जीवितान्मरणं वरम्। प्रतिश्रुत्य करिष्येति कर्त्तव्यं
तदकुर्वतः ॥ ८ ॥ मिथ्यावचनदग्धस्य इष्टापूर्त्तं प्रणश्यति। न
रूपमनृतस्यास्ति नानृतस्यास्ति सन्ततिः ॥ ९ ॥ नानृतस्याधि
पत्यञ्च कुत एव गतिः शुभा। कुतः कृतघ्नस्य यशः कुतः स्थानं
कुतः सुखम् ॥ १० ॥ अश्रद्धेयः कृतघ्नो हि कृतघ्ने नास्ति निष्कृतिः।
न जीवत्यधनः पापः कुतः पापस्य तन्त्रणम् ॥ ११ ॥ पापो ध्रुव-
मवाप्नोति विनाशं नाशयन् कृतम्। सोऽहं पापः कृतघ्नश्च कृपण-
श्चानृतोऽपि च ॥ १२ ॥ गुरोर्यः कृतकार्य्यः सन्स्तत् करोमि न
भाषितम्। सोऽहं प्राणान् विमोक्ष्यामि कृत्वा यत्नमनुत्तमम् ॥१३॥
अर्थना न मया काचित् कृतपूर्वा दिवौकसाम्। मानयन्ति च
मां सर्वे त्रिदशा यज्ञसंस्तरे ॥ १४ ॥ अहन्तु विबुधश्रेष्ठं देवं
त्रिभुवनेश्वरम्। विष्णुं गच्छाम्यहं कृष्णं गतिं गतिमतां वरम्
॥ १५ ॥ भोगा यस्मात् प्रतिष्ठन्ति व्याप्य सर्वान् सुरासुरान्।
प्रणतो द्रष्टुमिच्छामि कृष्णं योगिनमव्ययम् ॥ १६ ॥ एवमुक्ते
सखा तस्य गरुडो विनतात्मजः। दर्शयामास तं प्राह संहृष्टः

प्रियकाम्यया ॥ १७ ॥ सुहृद्भवान् मम मतः सुहृदां यः मतः सुहृत्। ईप्सितेनाभिलाषेण योक्तव्यो विभवे सति ॥ १८ ॥ विभवश्चास्ति मे विप्र वासवावरजो द्विज। पूर्व्वमुक्तस्त्वदर्थञ्च कृतः कामश्च तेन मे ॥ १९ ॥ स भवानेतु गच्छाव नयिष्ये त्वां यथासुखम्। दिशं पारं पृथिव्या वा गच्छ गालव मा चिरम् ॥ २० ॥

इति उद्योगपर्व्वणि भगवद्यानपर्व्वणि गालवचरिते षडधिकशततमोऽध्यायः ॥ १०६ ॥

---

सुपर्ण उवाच। अनुशिष्टोऽस्मि देवेन गालव ज्ञानयोनिना। ब्रूहि कामन्तु कां यामि द्रष्टुं प्रथमतो दिशम् ॥ १ ॥ पूर्व्वां वा दक्षिणां वाहमथ वा पश्चिमां दिशम्। उत्तरां वा द्विजश्रेष्ठ कुतो गच्छामि गालव ॥ २ ॥ यस्यामुदयते पूर्व्वं सर्व्वलोकप्रभावनः। सविता यत्र सन्ध्यायां साध्यानां वर्त्तते तपः ॥ ३ ॥ यस्यां पूर्व्वं मतिर्याता यया व्याप्तमिदं जगत्। चक्षुषी यत्र धर्म्मस्य यत्र चैव प्रतिष्ठितः ॥ ४ ॥ हुतं यतो हुतं हव्यं सर्पते सर्व्वतो दिशम्। एतद्द्वारं द्विजश्रेष्ठ दिवसस्य तथाध्वनः ॥ ५ ॥ यत्र पूर्व्वं प्रसूता वै दाक्षायण्यः प्रजाः स्त्रियः। यस्यां दिशि प्रवृद्धाश्च कश्यपस्यात्मसम्भवाः ॥ ६ ॥ यतो मूलं सुराणां श्रीर्यत्र शक्रोऽभ्यषिच्यत। सुरराज्येन विप्रर्षे देवैश्चात्र तपश्चितम् ॥ ७ ॥ एतस्मात् कारणात् ब्रह्मन् पूर्व्वेत्येषा दिगुच्यते। तस्मात् पूर्व्वतरे काले पूर्व्वमेवावृता सुरैः ॥ ८ ॥ अतएव च पूर्व्वेषां पूर्व्वामाशां प्रचक्षते। पूर्व्वं सर्व्वाणि कार्य्याणि दैवानां सुखमीप्सताम् ॥ ९ ॥ अत्र वेदान् जगौ पूर्व्वं भगवान् लोकभावनः। अत्रैवोक्ता सवित्रासीत् सावित्री ब्रह्मवादिषु ॥ १० ॥ अत्र दत्तानि सूर्य्येण यजूंषि द्विजसत्तम। अत्र लब्धवरः सोमः सुरैः क्रतुषु पीयते ॥ ११ ॥ अत्र तृप्ता हुतवहाः

स्वा योनिमुपयुज्यते। अत्र पातालमाश्रित्य वरुणः श्रियमाप च ॥ १२ ॥ अत्र पूर्वं वशिष्ठस्य पौराणस्य द्विजर्षभ। सूतिश्चैव प्रतिष्ठा च निधनञ्च प्रकाशते ॥ १३ ॥ ओङ्कारस्यात्र जायन्ते सूतयो दशतीर्दश। पिबन्ति मुनयो यत्र हविर्धूमं स्म धूमपा ॥ १४ ॥ प्रोक्षिता यत्र बहवो वराहाद्या मृगा वने। शक्रेण यज्ञभागार्थे दैवतेषु प्रकल्पिताः ॥ १५ ॥ अत्राहिता कृतघ्नाश्च मानुषाश्चासुराश्च ये। उदयंस्तान् हि सर्वान् वै क्रोधाद्धन्ति विभावसुः ॥ १६ ॥ एतद्द्वारं त्रिलोकस्य स्वर्गस्य च सुखस्य च। एष पूर्वो दिशा भागो विशावोऽत्र यदीच्छसि ॥ १७ ॥ प्रियं कार्यं हि मे तस्य यस्यास्मि वचने स्थितः। ब्रूहि गालव यास्यामि शृणु चाप्यपरां दिशम् ॥ १८ ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि गालवचरिते, सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥

---

सुपर्ण उवाच। इयं विवस्वता पूर्वं श्रौतेन विधिना किल। गुरवे दक्षिणा दत्ता दक्षिणेत्युच्यते च दिक् ॥ १ ॥ अत्र लोकत्रयस्यास्य पितृपक्षः प्रतिष्ठितः। अत्रोष्मपानां देवानां निवासः श्रूयते द्विज ॥ २ ॥ अत्र विश्वे सदा देवाः पितृभिः सार्द्धमासते। इज्यमानाः स्म लोकेषु सम्प्राप्तास्तुल्यभागताम् ॥ ३ ॥ एतद् द्वितीयं धर्मस्य द्वारमाचक्षते द्विज। त्रुटिशो लवशश्चात्र गण्यते कालनिश्चयः ॥ ४ ॥ अत्र देवर्षयो नित्यं पितृलोकर्षयस्तथा। तथा राजर्षयः सर्वे निवसन्ति गतव्यथाः ॥ ५ ॥ अत्र धर्मञ्च सत्यञ्च कर्म चात्र निगद्यते। गतिरेषा द्विजश्रेष्ठ कर्मणामात्मशायिनाम् ॥ ६ ॥ एषा दिक् सा द्विजश्रेष्ठ यां सर्वः प्रतिपद्यते। वृता त्वनवबोधेन सुखं तेन न गम्यते ॥ ७ ॥ नैरृतानां सह-

सोऽपि वह्न्यत्र दिनर्षभ । दृष्टानि प्रतिकूलानि द्रष्टव्यान्यकृतात्मभिः ॥ ८ ॥ अत्र मन्दरकुञ्जेषु विप्रर्षिसदनेषु च । गायन्ति गाथा गन्धर्वाश्चित्तबुद्धिहरा द्विज ॥ ९ ॥ अत्र सामानि गाथाभिः श्रुत्वा गीतानि रैवतः । गतदारो गतामात्यो गतराज्यो वनं गतः ॥ १० ॥ अत्र सावर्णिना चैव यवक्रीतात्मजेन च । मर्य्यादा स्थापिता ब्रह्मन् यां सूर्य्यो नातिवर्त्तते ॥ ११ ॥ अत्र राक्षसराजेन पौलस्त्येन महात्मना । रावणेन तपश्चर्त्वा सुरेभ्योऽमरता वृता ॥ १२ ॥ अत्र वृत्तेन वृत्रोऽपि शक्रशत्रुत्वमीयिवान् । अत्र सर्व्वासवः प्राप्ताः पुनर्गच्छन्ति पञ्चधा ॥ १३ ॥ अत्र दुष्कृतकर्म्माणो नराः पच्यन्ति गालव । अत्र वैतरणी नाम नदी वैतरणैर्वृता ॥ १४ ॥ अत्र गत्वा सुखस्यान्तं दुःखस्यान्तं प्रपद्यते । अत्रावृत्तो दिनकरः सुरसं क्षरते पयः ॥ १५ ॥ काष्ठाञ्चासाद्य वासिष्ठीं हिममुत्सृजते पुनः । अत्राहं गालव पुरा क्षुधार्त्तः परिचिन्तयन् ॥ १६ ॥ लब्धवान् युध्यमानौ द्वौ बृहन्तौ गजकच्छपौ । अत्र चक्रधनुर्न्नाम सूर्य्याज्जातो महानृषिः ॥ १७ ॥ विदुर्यं कपिलं देवं येनार्त्ताः सगरात्मजाः । अत्र सिद्धा शिवा नाम ब्राह्मणा वेदपारगा ॥ १८ ॥ अधीत्य सकलान् वेदान् लेभे सन्देहमक्षयम् । अत्र भोगवती नाम पुरी वासुकिपालिता ॥ १९ ॥ तक्षकेण च नागेन तथैवैरावतेन च । अत्र निर्य्याणकालेऽपि तमः सम्प्राप्यते महत् ॥ २० ॥ अभेद्यं भास्करेणापि स्वयं वा कृष्णवर्त्मना । एवं तस्यापि ते मार्गः परिवार्य्यस्य गालव । ब्रूहि मे यदि गन्तव्यं प्रतीचीं शृणु चापरम् ॥ २१ ॥

इति उद्योगपर्व्वणि भगवद्यानपर्व्वणि गालवचरिते
अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

सुपर्ण उवाच। इयं दिग्दयिता राज्ञो वरुणस्य तु गोपतेः।
सदा सलिलराजस्य प्रतिष्ठा चादिरेव च ॥ १ ॥ अत्र पश्चादहः
सूर्यो विसर्जयति गाः स्वयम्। पश्चिमेत्यभिविख्याता दिगियं
द्विजसत्तम ॥ २ ॥ यादसामत्र राज्येन सलिलस्य च गुप्तये।
कश्यपो भगवान् देवो वरुणस्याभ्यचोदयत् ॥ ३ ॥ अत्र पीत्वा
समस्तान् वै वरुणस्य रसांस्तु षट्। जायते तरुणः सोमः शुक्ल-
स्यादौ तमिस्रहा ॥ ४ ॥ अत्र पश्चात्कृता दैत्या वायुना संयता-
स्तदा। निःश्वसन्तो महावातैरर्दिताः सुषुपुर्द्विज ॥ ५ ॥ अत्र
सूर्यं प्रणयिनं प्रतिगृह्णाति पर्वतः। अस्तो नाम यतः सन्ध्या
पश्चिमा प्रतिसर्पति ॥ ६ ॥ अतो रात्रिश्च निद्रा च निर्गता दिवस-
क्षये। जायते जीवलोकस्य हर्तुमर्धमिवायुषः ॥ ७ ॥ अत्र देवीं
दितिं सुप्तामात्मप्रसवधारिणीम्। विगर्भामकरोच्छक्रो यत्र जाता
मरुद्गणाः ॥ ८ ॥ अत्र मूलं हिमवतो मन्दरं याति शाश्वतम्।
अपि वर्षसहस्रेण न चान्तोऽस्याधिगम्यते ॥ ९ ॥ अत्र काञ्चन-
शैलस्य काञ्चनाम्बुरुहस्य च। उदधेस्तीरमासाद्य सुरभिः क्षरते
पयः ॥ १० ॥ अत्र मध्ये समुद्रस्य कबन्धः प्रतिदृश्यते। स्वर्भानोः
सूर्यकल्पस्य सोमसूर्यौ जिघांसतः ॥ ११ ॥ सुवर्णशिरसोऽप्यत्र
हरिरोम्णः प्रगायतः। अदृश्यस्याप्रमेयस्य श्रूयते विपुलो ध्वनिः
॥ १२ ॥ अत्र ध्वजवती नाम कुमारी हरिमेधसः। आकाशे
तिष्ठतिष्ठेति तस्थौ सूर्यस्य शासनात् ॥ १३ ॥ अत्र वायुस्तथा
वह्निरापः खञ्चापि गालव। आह्निकञ्चैव नैशञ्च दुःखस्पर्शं विमु-
ञ्चति ॥ १४ ॥ अतः प्रभृति सूर्यस्य तिर्यगावर्तते गतिः। अत्र
ज्योतींषि सर्वाणि विशन्त्यादित्यमण्डलम् ॥ १५ ॥ अष्टाविंशति-
रात्रञ्च चङ्क्रम्य सह भानुना। निष्पतन्ति पुनः सूर्यात् सोम-
संयोगयोगतः ॥ १६ ॥ अत्र नित्यं स्रवन्तीनां प्रभवः सागरो-
दयः। अत्र लोकत्रयस्यापस्तिष्ठन्ति वरुणालये ॥ १७ ॥ अत्र

पन्नगराजस्याप्यनन्तस्य निवेशनम् । अनादिनिधनस्यात्र विष्णोः स्थानमनुत्तमम् ॥ १८ ॥ अत्रानलसखस्यापि पवनस्य निवेशनम् । महर्षेः कश्यपस्यात्र मारीचस्य निवेशनम् ॥ १९ ॥ एष ते पश्चिमो मार्गो दिग्द्वारेण प्रकीर्त्तितः । ब्रूहि गालव गच्छावो कां दिशं द्विजसत्तम ॥ २० ॥

इति उद्योगपर्व्वणि भगवद्यानपर्व्वणि गालवचरिते नवाधिकशततमोऽध्यायः ॥ १०९ ॥

---

सुपर्ण उवाच । यस्मादुत्तार्य्यते पापात् यस्मान्निःश्रेयसोऽश्नुते । अस्मादुत्तारणबलादुत्तरेत्युच्यते द्विज ॥ १ ॥ उत्तरस्य हिरण्यस्य परिवार्य्यस्य गालव । मार्गः पश्चिमपूर्व्वाभ्यां दिग्भ्यां वै मध्यमः स्मृतः ॥ २ ॥ अस्यां दिशि वरिष्ठायामुत्तरायां द्विजर्षभ । नासौम्यो नाविधेयात्मा नाधर्म्मो वसते जनः ॥ ३ ॥ अत्र नारायणः कृष्णो जिष्णुश्चैव नरोत्तमः । वदर्य्यामाश्रमपदे तथा ब्रह्मा च शाश्वतः ॥ ४ ॥ अत्र वै हिमवत्पृष्ठे नित्यमास्ते महेश्वरः । प्रकृत्या पुरुषः सार्द्धं युगान्ताग्निसमप्रभः ॥ ५ ॥ न स दृश्यो मुनिगणैस्तथा देवैः सवासवैः । गन्धर्व्वयक्षसिद्धैर्व्वा नरनारायणावृते ॥ ६ ॥ अत्र विष्णुः सहस्राक्षः सहस्रचरणोऽव्ययः । सहस्रशिरसः श्रीमानेकः पश्यति मायया ॥ ७ ॥ अत्र राज्येन विप्राणां चन्द्रमाश्चाप्यषिच्यत । अत्र गङ्गां महादेवः पतन्तीं गगनाच्च्युताम् ॥ ८ ॥ प्रतिगृह्य ददौ लोके मानुषे ब्रह्मवित्तम । अत्र देव्या तपस्तप्तं महेश्वरपरीप्सया ॥ ९ ॥ अत्र कामश्च रोषश्च शैलश्चोमा च सम्बभुः । अत्र राक्षसयक्षाणां गन्धर्व्वाणाञ्च गालव ॥ १० ॥ आधिपत्येन कैलासे धनदोऽप्यभिषेचित. । अत्र चैत्ररथं

सम्यगत्र वैखानसाश्रमः ॥ ११ ॥ अत्र मन्दाकिनी चैव मन्दरश्च द्विजर्षभ। अत्र सौगन्धिकवनं नैर्ऋतैरपि रक्ष्यते ॥ १२ ॥ शाड्वलं कदलीस्कन्धमत्र सन्तानका नगाः। अत्र संयमनित्यानां सिद्धानां स्वैरचारिणाम् ॥ १३ ॥ विमानान्यनुरूपाणि कामभोग्यानि गालव। अत्र ते ऋषयः सप्त देवी चारुन्धती तथा ॥ १४ ॥ अत्र तिष्ठति वै स्वातिरत्रास्या उदयः स्मृतः। अत्र यज्ञं समारुह्य ध्रुवं स्थाता पितामहः ॥ १५ ॥ ज्योतींषि चन्द्रसूर्यौ च परिवर्त्तन्ति नित्यशः। अत्र गायन्तिकाद्वारं रक्षन्ति द्विजसत्तम ॥१६॥ धामनामा महात्मानो मुनयः सत्यवादिनः। न तेषां ज्ञायते सूतिर्नाकृतिर्न तपश्चितम् ॥ १७ ॥ परिवर्त्तसहस्राणि कामभोज्यानि गालव। यथा यथा प्रविशति तस्मात् परतरं नरः ॥ १८ ॥ तथा तथा द्विजश्रेष्ठ प्रविलीयति गालव। नैतत् केनचिदन्येन गतपूर्वं द्विजर्षभ ॥ १९ ॥ ऋते नारायणं देवं नरं वा जिष्णुमव्ययम्। अत्र कैलासमित्युक्तं स्थानमैलविलस्य तत् ॥ २० ॥ अत्र विद्युत्प्रभा नाम जज्ञिरेऽप्सरसो दश। अत्र विष्णुपदं नाम क्रमता विष्णुना कृतम् ॥ २१ ॥ त्रिलोकविक्रमे ब्रह्मन्नुत्तरां दिशमाश्रितम्। अत्र राज्ञा मरुत्तेन यज्ञेनेष्टं द्विजोत्तम ॥ २२ ॥ उशीरबीजे विप्रर्षे यत्र जाम्बूनदं सरः। जीमूतस्यात्र विप्रर्षे उपतस्थे महात्मनः ॥ २३ ॥ साक्षाद्धैमवतः पुण्यो विमलः कनकाकरः। ब्राह्मणेषु च यत् कृत्स्नं स्वयं कृत्वा धनं महत् ॥२४॥ वव्रे धनं महर्षिः स जैमूतं तद्धनं ततः। अत्र नित्यं दिशां पालाः सायं प्रातर्द्विजर्षभाः ॥ २५ ॥ कस्य कार्य्यं किमिति वै परिक्रोशन्ति गालव। एवमेषा द्विजश्रेष्ठ गुणैरन्यैर्दिगुत्तरा ॥ २६ ॥ उत्तरेति परिख्याता सर्वकर्मसु चोत्तरा। एता विस्तरशस्तात तव सङ्कीर्त्तिता दिशः ॥ २७ ॥ चतस्रः क्रमयोगेन कामाशाङ्गन्तु-

मिच्छसि । उद्यतोऽहं द्विजश्रेष्ठ तव दर्शयितुं दिश । पृथिवी-श्चाखिला ब्रह्मंस्तस्मादारोह मां द्विज ॥ २८ ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि गालवचरिते
दशाधिकशततमोऽध्याय ॥ ११० ॥

---

गालव उवाच । गरुत्मन् भुजगेन्द्रारे सुपर्ण विनतात्मज । नय मां तार्क्ष्य पूर्वेण यत्र धर्मस्य चक्षुषी ॥ १ ॥ पूर्वमेतां दिशं गच्छ या पूर्वं परिकीर्त्तिता । दैवतानां हि सान्निध्यं यत्र कीर्त्तितवानसि ॥ २ ॥ अत्र सत्यञ्च धर्मश्च त्वया सम्यक् प्रकीर्त्तितः । इच्छेयन्तु समागन्तुं समस्तैर्दैवतैरहम् । भूयश्च तान् सुरान् द्रष्टुमिच्छेयमरुणानुज ॥ ३ ॥

नारद उवाच । तमाह विनतासूनुरारोहस्वेति वै द्विजम् । आरुरोहाथ स मुनिर्गरुड़ं गालवस्तदा ॥ ४ ॥

गालव उवाच । क्रममाणस्य ते रूपं दृश्यते पन्नगाशन । भास्करस्येव पूर्वाह्णे सहस्रांशोर्विवस्वतः ॥ ५ ॥ पक्षवातप्रणुन्नानां वृक्षाणामनुगामिनाम् । प्रस्थितानामिव समं पश्यामीह गतिं खग ॥ ६ ॥ ससागरवनामुर्वीं सशैलवनकाननाम् । आकर्षन्निव चाभासि पक्षवातेन खेचर ॥ ७ ॥ समीननागनक्रञ्च खमिवारोप्यते जलम् । वायुना चैव महता पक्षवातेन चानिशम् ॥ ८ ॥ तुल्यरूपाननान् मत्स्यांस्तथा तिमितिमिङ्गिलान् । नागांश्च नर-वक्त्रांश्च पश्याम्युन्मथितानिव ॥ ९ ॥ महार्णवस्य च रवैः श्रोत्रे मे बधिरे कृते । न शृणोमि न पश्यामि नात्मनो वेद्मि कारणम् ॥ १० ॥ शनैः स तु भवान् यातु ब्रह्मवध्यामनुस्मरन् । न दृश्यते रविस्तात न दिशो न च खं खग ॥ ११ ॥ तम एव तु पश्यामि शरीरं ते न लक्षये । मणीव जात्यौ पश्यामि चक्षुषी

मण्डज ॥ १२ ॥ शरीरन्तु न पश्यामि तव चैवात्मनश्च ह । पदे पदे तु पश्यामि शरीरादग्निमुत्थितम् ॥ १३ ॥ स मे निर्वाप्य सहसा चक्षुषी शाम्यते पुनः । तन्नियच्छ महावेगं गमने विनतात्मज ॥ १४ ॥ न मे प्रयोजनं किञ्चिद्गमने पन्नगाशन । सन्निवर्त्त महाभाग न वेगं विषहामि ते ॥ १५ ॥ गुरवे संश्रुतानीह शतान्यष्टौ हि वाजिनाम् । एकतः श्यामकर्णानां शुभ्राणाञ्चन्द्रवर्चसाम् । ॥ १६ ॥ तेषाञ्चैवापवर्गाय मार्गं पश्यामि नाण्डज । ततोऽयं जीवितत्यागे दृष्टो मार्गो मयात्मनः ॥ १७ ॥ नैव मेऽस्ति धनं किञ्चिन्न धनेनान्वितः सुहृत् । न चार्थेनापि महता शक्यमेतदपोहितुम् ॥ १८ ॥

नारद उवाच । एवं बहु च दीनञ्च ब्रुवाणं गालवं तदा । प्रत्युवाच व्रजन्नेव प्रहसन् विनतात्मजः ॥ १९ ॥ नातिप्रज्ञोऽसि विप्रर्षे योऽत्मानं त्यक्तुमिच्छसि । न चापि कृत्रिमः कालः कालो हि परमेश्वरः ॥ २० ॥ किमहं पूर्वमेवेह भवता नाभिचोदितः । उपायोऽत्र महानस्ति येनैतदुपपद्यते ॥ २१ ॥ तदेष ऋषभो नाम पर्वतः सागरान्तिके । अत्र विश्रम्य भुक्त्वा च निवर्त्तिष्याव गालव ॥ २२ ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि गालवचरिते
एकादशाधिकशततमोऽध्यायः ॥ १११ ॥

---

नारद उवाच । ऋषभस्य ततः शृङ्गे निपत्य द्विजपक्षिणौ । शाण्डिलीं ब्राह्मणीं तत्र ददृशाते तपोऽन्विताम् ॥ १ ॥ अभिवाद्य सुपर्णस्तु गालवश्चाभिपूज्य ताम् । तया च स्वागतेनोक्तौ विष्टरे सन्निषीदतुः ॥ २ ॥ सिद्धमन्नं तया दत्तं बलिमन्त्रोपबृंहितम् । भुक्त्वा तृप्तावुभौ भूमौ सुप्तौ तावत्तु मोहितौ ॥ ३ ॥

मुहूर्त्तात् प्रतिबुद्धस्तु सुपर्णो गमनेप्सया । अथ भ्रष्टतनूजाङ्गमात्मानं ददृशे खग ॥ ४ ॥ मांसपिण्डोपमो भूत्वा मुखपादान्वित खग । गालवस्तं तथा दृष्ट्वा विमना पर्य्यपृच्छत ॥ ५ ॥ किमिदं भवता प्राप्तमिहागमनज फलम् । वासोऽयमिह कालन्तु कियन्त नौ भविष्यति ॥ ६ ॥ किन्नु ते मनसा ध्यातमशुभं धर्म्मदूषणम् । न ह्ययं भवत सल्पो व्यभिचारो भविष्यति ॥ ७ ॥ सुपर्णोऽथाब्रवीत् विप्रं प्रतिध्यातं मया द्विज । इमां सिद्धामितो नेतुं तत्र यत्र प्रजापति ॥ ८ ॥ यत्र देवो महादेवो यत्र विष्णुः सनातन । यत्र धर्म्मश्च यज्ञश्च तत्रेयं निवसेदिति ॥ ९ ॥ सोऽहं भगवतीं याचे प्रणत प्रियकाम्यया । मयैतन्नाम प्रध्यातं मनसा शोचता किल ॥ १० ॥ तदेवं बहुमानात्ते मयेहानीप्सितं कृतम् । सुकृतं दुष्कृतं वा त्वं माहात्म्यात् क्षन्तुमर्हसि ॥ ११ ॥ सा तौ तदाब्रवीत्तुष्टा पतगेन्द्रद्विजर्षभौ । न भेतव्यं सुपर्णोऽसि सुपर्ण त्यज सम्भ्रमम् ॥ १२ ॥ निन्दितास्मि त्वया वत्स न च निन्दा क्षमाम्यहम् । लोकेभ्य स परिभ्रश्येत् यो मां निन्देत पापकृत ॥ १३ ॥ हीनया लक्षणै सर्वैस्तथा निन्दितया मया । आचारं प्रतिगृह्णन्त्या सिद्धि प्राप्तेयमुत्तमा ॥ १४ ॥ आचार फलते धर्म्ममाचार फलते धनम् । आचारात् श्रियमाप्नोति आचारो हन्त्यलक्षणम् ॥ १५ ॥ तदायुष्मन् खगपते यथेष्टं गम्यतामित । न च ते गर्हणीया हि गर्हितव्या स्त्रिय क्वचित ॥ १६ ॥ भवितासि यथापूर्वं बलवीर्य्यसमन्वित । बभूवतुस्ततस्तस्य पक्षौ द्रविणवत्तरौ ॥ १७ ॥ अनुज्ञातस्तु शाण्डिल्या यथागतमुपागमत । नैव चासादयामास तथारूपास्तुरङ्गमान् ॥ १८ ॥ विश्वामित्रोऽथ तं दृष्ट्वा गालवञ्चाध्वनि स्थितम् । उवाच वदता श्रेष्ठो वैनतेयस्य सन्निधौ ॥१९॥ यस्त्वया स्वयमेवार्थं प्रतिज्ञातो मयि द्विज । तस्य कालोऽपवर्गस्य यथा वा मन्यते भवान् ॥ २० ॥ प्रतीक्षिष्याम्यहं कालमेतावन्तं

तथापरम् । यथा संविध्यते विप्र स मार्गस्तु निशम्यताम् ॥ २१ ॥ सुपर्णोऽथाब्रवीद्दीनं गालवं भृशदुःखितम् । प्रत्यक्षं खल्विदानीं मे विश्वामित्रो यदुक्तवान् ॥ २२ । तदागच्छ द्विजश्रेष्ठ मन्त्रयिष्याव गालव । नादत्त्वा गुरवे शक्यं कृत्स्नमर्थं त्वयाचितुम् ॥ २३ ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि गालवचरिते द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥

---

नारद उवाच । अथाह गालवन्दीनं सुपर्णः पततां वरः । निर्मितं वह्निना भूमौ वायुना वीजितं तथा ॥ १ ॥ यस्माद्धिरण्मयं सर्वं हिरण्यन्तेन चोच्यते । धत्ते धारयते वेदमेतस्मात् कारणाद्धनम् ॥ २ ॥ तदेतु त्रिषु लोकेषु धन तिष्ठति शाश्वतम् । नित्यं प्रोष्ठपदाभ्याश्च शुक्रे धनपतौ तथा ॥ ३ ॥ मनुष्येभ्यः समादत्ते शुक्रश्चित्तार्जितं धनम् । अजैकपादहिर्ब्रध्नैः रक्ष्यते धनदेन च ॥ ४ ॥ एवं न शक्यते लब्धुमलब्धव्यं द्विजर्षभ । ऋते च धनमश्वानां नावाप्तिर्विद्यते तव ॥ ५ ॥ स त्वं याचाव राजानं कञ्चिद्राजर्षिवंशजम् । अपीड्य राजा पौरान् हि यो नौ कुर्य्यात् कृतार्थिनौ ॥ ६ ॥ अस्ति सोमान्ववाये मे जातः कश्चिन्नृप सखा । अभिगच्छावहे तं वै तस्यास्ति विभवो भुवि ॥ ७ ॥ ययातिर्नाम राजर्षिर्नाहुषः सत्यविक्रमः । स दास्यति मया चोक्तो भवता चार्थितः स्वयम् ॥ ८ ॥ विभवश्चास्य सुमहानासीद्धनपतेरिव । एवं गुरुधनं विद्वन् दानेनैव विशोधय ॥ ९ ॥ तथा तौ कथयन्तौ च चिन्तयन्तौ च यत् क्षमम् । प्रतिष्ठाने नरपतिं ययातिं प्रत्युपस्थितौ ॥ १० ॥ प्रतिगृह्य च सत्कारैरर्घ्यं पाद्यादिकं वरम् । पृष्टश्चागमने हेतुमुवाच विनतासुतः ॥ ११ ॥ अयं मे नाहुष सखा गालवस्तपसो निधिः । विश्वामित्रस्य शिष्योऽभूद्वर्षाण्ययुतशो नृप

॥ १२ ॥ सोऽयं तेनाभ्यनुज्ञात उपकारेप्सया द्विज। तमाह
भगवान् काले ददानि गुरुदक्षिणाम् ॥ १३ ॥ असकृत्तेन चोक्तेन
किञ्चिदागतमन्युना। अयमुक्तः प्रयच्छेति जानता विभवं लघु
॥ १४ ॥ एकतः श्यामकर्णानां शुभ्राणां शुद्धजन्मनाम्। अष्टौ
शतानि मे देहि हयानाञ्चन्द्रवर्चसाम् ॥ १५ ॥ गुर्व्वर्थो दीयता-
मेष यदि गालव मन्यसे। इत्येवमाह सक्रोधो विश्वामित्रस्तपो-
धनः ॥ १६ ॥ सोऽयं शोकेन महता तप्यमानो द्विजर्षभः।
अशक्तः प्रतिकर्त्तुं तत् भवन्तं शरणं गतः ॥ १७ ॥ प्रतिगृह्य नर-
व्याघ्र त्वत्तो भिक्षां गतव्यथः। कृत्वापवर्गं गुरवे चरिष्यति मह-
त्तपः ॥ १८ ॥ तपसः संविभागेन भवन्तमपि योक्ष्यते। स्वेन
राजर्षितपसा पूर्णं त्वां पूरयिष्यति ॥ १९ ॥ यावन्ति रोमाणि
हये भवन्तीह नरेश्वर। तावतो वाजिनो लोकान् प्राप्नुवन्ति
महीपते ॥ २० ॥ पात्रं प्रतिग्रहस्यायं दातुं पात्रं तथा भवान्।
शङ्खे क्षीरमिवासक्तं भवत्वेतत्तथोपमम् ॥ २१ ॥

इति उद्योगपर्व्वणि भगवद्यानपर्व्वणि गालवचरिते
त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

---

नारद उवाच। एवमुक्तः सुपर्णेन तथ्यं वचनमुत्तमम्।
विमृश्यावहितो राजा निश्चित्य च पुनः पुनः ॥ १ ॥ यष्टा क्रतु-
सहस्राणां दाता दानपतिः प्रभुः। ययातिः सर्व्वकाशीश इदं
वचनमब्रवीत् ॥ २ ॥ दृष्ट्वा प्रियसखं तार्क्ष्यं गालवञ्च द्विजर्षभम्।
निदर्शनञ्च तपसा भिक्षां श्लाघ्याञ्च कीर्त्तिताम् ॥ ३ ॥ अतीत्य च
नृपानन्यानादित्यकुलसम्भवान्। मत्सकाशमनुप्राप्तावेतौ बुद्धि-
मवेक्ष्य च ॥ ४ ॥ अद्य मे सफलं जन्म तारितञ्चाद्य मे कुलम्।
अद्यायं तारितो देशो मम तार्क्ष्य त्वयानघ ॥ ५ ॥ वक्तुमिच्छामि
तु सखे यथा जानासि मां पुरा। न तथा वित्तवानस्मि

वित्तञ्च मे सखे ॥ ६ ॥ न च शक्तोऽस्मि ते कर्त्तुं मोघमागमनं खग। न चाशामस्य विप्रर्षेर्वितथीकर्त्तुमुत्सहे ॥ ७ ॥ तत्तु दास्यामि यत् कार्य्यमिदं सम्पादयिष्यति। अभिगम्य हताशो हि निवृत्तो दहते कुलम् ॥ ८ ॥ नातः परं वैनतेय किञ्चित् पापिष्ठमुच्यते। यथाशानाशनं लोके देहि नास्तीति यद्वचः ॥ ९ ॥ हताशो ह्यकृतार्थः सन् हतसम्भावितो नरः। हिनस्ति तस्य पुत्रांश्च पौत्रांश्चाकुर्वतो हितम् ॥ १० ॥ तस्माच्चतुर्णां वंशानां स्थापयित्री सुता मम। इयं सुरसुतप्रख्या सर्वधर्मोपचायिनी ॥ ११ ॥ सदा देवमनुष्याणामसुराणाञ्च गालव। काङ्क्षिता रूपतो बाला सुता मे प्रतिगृह्यताम् ॥ १२ ॥ अस्याः शुल्कं प्रदास्यन्ति नृपा राज्यमपि ध्रुवम्। किं पुनः श्यामकर्णानां हयानां द्वे चतुःशते ॥ १३ ॥ स भवान् प्रतिगृह्णातु ममैतां माधवीं सुताम्। अहं दौहित्रवान् स्यां वै वर एष मम प्रभो ॥ १४ ॥ प्रतिगृह्य च तां कन्यां गालवः सह पक्षिणा। पुनर्द्रक्ष्याव इत्युक्त्वा प्रतस्थे सह कन्यया ॥ १५ ॥ उपलब्धमिदं द्वारमश्वानामिति चाण्डजः। उक्त्वा गालवमापृच्छ्य जगाम भवनं स्वकम् ॥ १६ ॥ गते पतङ्गराजे तु गालवः सह कन्यया। चिन्तयानः क्षमं दाने राज्ञां वै शुल्कतोऽगमत् ॥ १७ ॥ सोऽगच्छन्मनसेक्ष्वाकुं हर्य्यश्वं राजसत्तमम्। अयोध्यायां महावीर्य्यं चतुरङ्गबलान्वितम् ॥ १८ ॥ कोषधान्यबलोपेतं प्रियपौरं द्विजप्रियम्। प्रजाभिकामं शाम्यन्तं कुर्वाणन्तप उत्तमम् ॥ १९ ॥ तमुपागम्य विप्रः स हर्य्यश्वं गालवोऽब्रवीत्। कन्येयं मम राजेन्द्र प्रसवैः कुलवर्द्धिनी ॥ २० ॥ इयं शुल्केन भार्य्यार्थे हर्य्यश्व प्रतिगृह्यताम्। शुल्कं ते कीर्त्तयिष्यामि तत् श्रुत्वा सम्प्रधार्य्यताम् ॥ २१ ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि गालवचरिते चतुर्द्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

नारद उवाच। हर्य्यश्वस्त्वब्रवीद्राजा विचिन्त्य बहुधा ततः। दीर्घमुष्णञ्च निश्वस्य प्रजाहेतोर्नृपोत्तमः ॥ १ ॥ उन्नतेषून्नता षट्सु सूक्ष्मा सूक्ष्मेषु सप्तसु। विगम्भीरा विगम्भीरेष्वियं रक्ता सुपञ्चसु ॥ २ ॥ बहुदेवासुरालोका बहुगन्धर्वदर्शना। बहुलक्षण-सम्पन्ना बहुप्रसवधारिणी ॥ ३ ॥ समर्थेयं जनयितुश्चक्रवर्त्तिन-मात्मजम्। ब्रूहि शुल्कं द्विजश्रेष्ठ समीक्ष्य विभवं मम ॥ ४ ॥

गालव उवाच। एकतः श्यामकर्णानां शतान्यष्टौ प्रयच्छ मे। हयानाश्चन्द्रशुभ्राणां देशजानां वपुष्मताम् ॥ ५ ॥ ततस्तव भवित्रीयं पुत्राणां जननी शुभा। अरणीव हुताशानां योनिरायत-लोचना ॥ ६ ॥

नारद उवाच। स तत् श्रुत्वा वचो राजा हर्य्यश्वः काम-मोहितः। उवाच गालवं दीनो राजर्षिर्ऋषिसत्तमम् ॥ ७ ॥ द्वे मे शते सन्निहिते हयानां यद्विधास्तव। एष्टव्याः शतशस्त्वन्ये चरन्ति मम वाजिनः ॥ ८ ॥ सोऽहमेकमपत्यं वै जनयिष्यामि गालव। अस्यामेतं भवान् कामं सम्पादयतु मे वरम् ॥ ९ ॥ एतत् श्रुत्वा च सा कन्या गालवं वाक्यमब्रवीत्। मम दत्तो वरः कश्चित् केनचित् ब्रह्मवादिना ॥ १० ॥ प्रसूत्यन्ते प्रसूत्यन्ते कन्यैव त्वं भविष्यसि। स त्वं ददस्व मां राज्ञे प्रतिगृह्य हयोत्तमान् ॥ ११ ॥ नृपेभ्यो हि चतुर्भ्यस्ते पूर्णान्यष्टौ शतानि मे। भवि-ष्यन्ति तथा पुत्रा मम चत्वार एव च ॥ १२ ॥ क्रियतामुपसंहारो गुर्व्वर्थो द्विजसत्तम। एषा तावत् मम प्रज्ञा यथा वा मन्यसे द्विज ॥ १३ ॥ एवमुक्तस्तु स मुनिः कन्यया गालवस्तदा। हर्य्यश्वं पृथिवीपालमिदं वचनमब्रवीत ॥ १४ ॥ इयं कन्या नरश्रेष्ठ हर्य्यश्व प्रतिगृह्यताम्। चतुर्भागेन शुल्कस्य जनयस्वैकमात्मजम् ॥ १५ ॥ प्रतिगृह्य स तां कन्यां गालवं प्रतिनन्द्य च। देशकाले च लब्धवान् सुतमीप्सितम् ॥ १६ ॥ ततो

नाम वसुभ्यो वसुमत्तरः । वसुप्रभो नरपतिः स बभूव वसुप्रदः ॥ १७ ॥ अथ काले पुनर्धीमान् गालवः प्रत्युपस्थितः । उपसङ्गम्य चोवाच हर्य्यश्वं प्रीतमानसम् ॥ १८ ॥ जातो नृप सुतस्तेऽयं बालो भास्करसन्निभः । कालो गन्तुं नरश्रेष्ठ भिक्षार्थमपरं नृपम ॥ १९ ॥ हर्य्यश्वः सत्यवचने स्थितः स्थित्वा च पौरुषे । दुर्लभत्वाद्धयानाञ्च प्रददौ माधवीं पुनः ॥ २० ॥ माधवी च पुनर्दीप्तां परित्यज्य नृपश्रियम् । कुमारी कामतो भूत्वा गालवं पृष्ठतोऽन्वगात् ॥ २१ ॥ त्वय्येव तावत्तिष्ठन्तु हया इत्युक्तवान् द्विजः । प्रययौ कन्यया सार्द्धं दिवोदासं प्रजेश्वरम् ॥ २२ ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि गालवचरिते पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥

---

गालव उवाच । महावीर्य्यो महीपालः काशीनामीश्वरः प्रभुः । दिवोदास इति ख्यातो भैमसेनिर्नराधिपः ॥ १ ॥ तत्र गच्छावहे भद्रे शनैरागच्छ मा शुचः । धार्मिकः संयमे युक्तः सत्ये चैव जनेश्वरः ॥ २ ॥

नारद उवाच । तमुपागम्य स मुनिर्न्यायतस्तेन सत्कृतः । गालवः प्रसवस्यार्थे तं नृपं प्रत्यचोदयत् ॥ ३ ॥

दिवोदास उवाच । श्रुतमेतन्मया पूर्वं किमुक्त्वा विस्तरं द्विज । काङ्क्षितो हि ममैषोऽर्थः श्रुत्वैव द्विजसत्तम ॥ ४ ॥ एतच्च मे बहु मतं यदुत्सृज्य नराधिपान् । मामेवमुपयातोऽसि भावि चैतदसंशयम् ॥ ५ ॥ स एव विभवोऽस्माकमश्वानामपि गालव । अहमप्येकमेवास्यां जनयिष्यामि पार्थिवम् ॥ ६ ॥ तथेत्युक्त्वा द्विजश्रेष्ठ प्रादात् कन्यां महीपतेः । विधिपूर्वञ्च तां राजा कन्यां प्रतिगृहीतवान् ॥ ७ ॥ रेमे स तस्यां राजर्षिः प्रभावत्यां यथा

रविः । स्वाहायाञ्च यथा वह्निर्यथा शच्याञ्च वासवः ॥ ८ ॥ यथा चन्द्रश्च रोहिण्यामूर्मिलायां यथा यमः । वरुणश्च यथा गौर्य्यां यथा चर्द्ध्यां धनेश्वरः ॥ ९ ॥ यथा नारायणो लक्ष्म्यां जाह्नव्याञ्च यथोदधिः । यथा रुद्रश्च रुद्राण्यां यथा वेद्यां पितामहः ॥ १० ॥ अदृश्यन्त्याञ्च वाशिष्ठो वशिष्ठश्चाक्षमालया । च्यवनश्च सुकन्यायां पुलस्त्यः सन्ध्यया यथा ॥ ११ ॥ अगस्त्यश्चापि वैदर्भ्यां सावित्र्यां सत्यवान् यथा । यथा भृगुः पुलोमायामदित्यां कश्यपो यथा ॥ १२ ॥ रेणुकायां यथार्च्चीको हैमवत्याञ्च कौशिकः । बृहस्पतिश्च तारायां शुक्रश्च शतपर्वया ॥ १३ ॥ यथा भूम्यां भूमिपतिरुर्वश्याञ्च पुरूरवाः । ऋचीकः सत्यवत्याञ्च सरस्वत्यां यथा मनुः ॥ १४ ॥ शकुन्तलायां दुःषन्तो धृत्यां धर्मश्च शाश्वतः । दमयन्त्यां नलश्चैव सत्यवत्याञ्च नारदः ॥ १५ ॥ जरत्कारुर्ज्जरत्कार्वां पुलस्त्यश्च प्रतीच्यया । मेनकायां यथोर्णायुस्तुम्बुरुश्चैव रम्भया ॥ १६ ॥ वासुकिः शतशीर्षायां कुमार्य्याञ्च धनञ्जयः । वैदेह्याञ्च यथा रामो रुक्मिण्याञ्च जनार्द्दनः ॥ १७ ॥ तथा तु रममाणस्य दिवोदासस्य भूपतेः । माधवी जनयामास पुत्रमेकं प्रतर्द्दनम् ॥ १८ ॥ अथाजगाम भगवान् दिवोदासं स गालवः । समये समनुप्राप्ते वचनञ्चेदमब्रवीत् ॥ १९ ॥ निर्यातयतु मे कन्यां भवांस्तिष्ठन्तु वाजिनः । यावदन्यत्र गच्छामि शुल्कार्थं पृथिवीपते ॥ २० ॥ दिवोदासोऽथ धर्म्मात्मा समये गालवस्य ताम् । कन्यां निर्यातयामास स्थितः सत्ये महीपतिः ॥ २१ ॥

इति उद्योगपर्व्वणि भगवद्यानपर्व्वणि गालवचरिते षोड़शाधिकशततमोऽध्यायः ॥ ११६ ॥

---

नारद उवाच। तथैव तां श्रियं त्यक्त्वा कन्या भूत्वा यशस्विनी। माधवी गालवं विप्रमन्वयात् सत्यसङ्गरात्॥ १॥ गालवो विमृशन्नेव स्वकार्य्यगतमानसः। जगाम भोजनगरं द्रष्टुमौशीनरं नृपम्॥ २॥ तमुवाचाथ गत्वा स नृपतिं सत्यविक्रमम्। इयं कन्या सुतौ द्वौ ते जनयिष्यति पार्थिवौ॥ ३॥ अस्यां भवानवाप्तार्थो भविता प्रेत्य चेह च। सोमार्कप्रतिसङ्काशौ जनयित्वा सुतौ नृप॥ ४॥ शुल्कन्तु सर्व्वधर्म्मज्ञ हयानाञ्चन्द्रवर्च्चसाम्। एकतःश्यामकर्णानां देयं मह्यं चतुःशतम्॥ ५॥ गुर्व्वर्थोऽयं समारम्भो न हयैः कृत्यमस्ति मे। यदि शक्यं महाराज क्रियतामविचारितम्॥ ६॥ अनपत्योऽसि राजर्षे पुत्रौ जनय पार्थिव। पितॄन् पुत्रप्लवेन त्वमात्मानञ्चैव तारय॥ ७॥ न पुत्रफलभोक्ता हि राजर्षे पात्यते दिवः। न याति नरकं घोरं यथा गच्छन्त्यनात्मजाः॥ ८॥ एतच्चान्यच्च विविधं श्रुत्वा गालवभाषितम्। उशीनरः प्रतिवचो ददौ तस्य नराधिप॥ ९॥ श्रुतवानस्मि ते वाक्यं यथा वदसि गालव। विधिस्तु बलवान् ब्रह्मन् प्रवणं हि मनो मम॥ १०॥ शते द्वे तु ममाश्वानामीदृशानां द्विजोत्तम। इतरेषां सहस्राणि सुबहूनि चरन्ति मे॥ ११॥ अहमप्येकमेवास्यां जनयिष्यामि गालव। पुत्रं द्विज गतं मार्गं गमिष्यामि परैरहम्॥ १२॥ मूल्येनापि समं कुर्य्यां तवाहं द्विजसत्तम। पौरजानपदार्थन्तु ममार्थो नात्मभोगतः॥ १३॥ कामतो हि धनं राजा पारक्यं यः प्रयच्छति। न स धर्म्मेण धर्म्मात्मन् युज्यते यशसा न च॥ १४॥ सोऽहं प्रतिग्रहीष्यामि ददात्वेतां भवान्मम। कुमारीं देवगर्भाभामेकपुत्रभवाय मे॥ १५॥ तथा तु बहुधा कन्यामुक्तवन्तं नराधिपम्। उशीनरं द्विजश्रेष्ठो गालवः प्रत्यपूजयत्॥१६॥ उशीनरं प्रतिग्राह्य गालवः प्रययौ वनम्। रेमे स तां समासाद्य कृतपुण्य इव श्रियम्॥ १७॥ कन्दरेषु च शैलानां नदीनां

निर्झरेषु च । वातायनविमानेषु तथा गर्भगृहेषु च ॥ १८ ॥ उद्यानेषु विचित्रेषु वनेषूपवनेषु च । हर्म्म्येषु रमणीयेषु प्रासादशिखरेषु च ॥ १९ ॥ ततोऽस्य समये जज्ञे पुत्त्रो बालरविप्रभ । शिविर्नाम्नाभिविख्यातो य स पार्थिवसत्तम ॥ २० ॥ उपस्थाय च तं विप्रो गालव प्रतिगृह्य च । कन्यां प्रयातस्तां राजन् दृष्टवान् विनतात्मजम् ॥ २१ ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि गालवचरिते
सप्तदशाधिकशततमोऽध्याय ॥ ११७ ॥

---

नारद उवाच । गालवं वैनतेयोऽथ प्रहसन्निदमब्रवीत् । दिष्ट्या कृतार्थं पश्यामि भवन्तमिह वै द्विज ॥ १ ॥ गालवस्तु वच. श्रुत्वा वैनतेयेन भाषितम् । चतुर्भागावशिष्टन्तदाचख्यौ कार्य्यमस्य हि ॥ २ ॥ सुपर्णस्त्वब्रवीदेनं गालवं वदता वर । प्रयत्नस्ते न कर्त्तव्यो नैष सम्पत्स्यते तव ॥ ३ ॥ पुरा हि कान्यकुब्जे वै गाधे सत्यवतीं सुताम् । भार्य्यार्थेऽवरयत् कन्यामृचीकस्तेन भाषितः ॥ ४ ॥ एकत श्यामकर्णाना हयानाञ्चन्द्रवर्चसाम् । भगवन्दीयतां मह्यं सहस्रमिति गालव ॥ ५ ॥ ऋचीकस्तु तथेत्युक्त्वा वरुणस्यालय गत । अश्वतीर्थे हयान् लब्ध्वा दत्तवान् पार्थिवाय वै ॥६॥ इष्ट्वा ते पुण्डरीकेण दत्ता राज्ञा द्विजातिषु । तेभ्यो द्वे द्वे शते क्रीत्वा प्राप्ते ते पार्थिवैस्तदा ॥ ७ ॥ अपराण्यपि चत्वारि शतानि द्विजसत्तम । नीयमानानि सन्तारे हृतान्यासन्वितस्तया ॥ ८ ॥ एव न शक्यमप्राप्यं प्राप्तु गालव कर्हिचित् । इमामश्वशताभ्या वै द्वाभ्या तस्मै निवेदय ॥ ९ ॥ विश्वामित्राय धर्मात्मन् षड्भिरश्वशतै सह । ततोऽसि गतसम्मोह कृतकृत्यो द्विजोत्तम ॥ १० ॥ गालवस्तं तथेत्युक्त्वा सुपर्णसहितस्तत । आदायाश्वाश्च कन्याञ्च

दामान्तां रथमारोप्य माधवीम् । पुरुयदुश्च भगिनीमाश्रमे पर्य्य-
धावताम् ॥ २ ॥ नागयक्षमनुष्याणां गन्धर्व्वमृगपक्षिणाम् । शैल-
द्रुमवनौकानामासीत्तत्र समागमः ॥ ३ ॥ नानापुरुषदेशानां-
मीश्वरैश्च समाकुलम् । ऋषिभिर्ब्रह्मकल्पैश्च समन्तादावृतं वनम्
॥ ४ ॥ निर्द्दिश्यमानेषु तु सा वरेषु वरवर्णिनी । वरानुत्क्रम्य
सर्व्वांस्तान् वरं वृतवती वनम् ॥ ५ ॥ अवतीर्य्य रथात् कन्या नम-
स्कृत्य च बन्धुषु । उपगम्य वनं पुण्यं तपस्तेपे ययातिजा ॥६॥
उपवासैश्च विविधैर्द्दीक्षाभिर्नियमैस्तथा । आत्मनो लघुतां कृत्वा
बभूव मृगचारिणी ॥ ७ ॥ वैदूर्य्याङ्कुरकल्पानि मृदूनि हरितानि
च । चरन्ती शष्पमुख्यानि तिक्तानि मधुराणि च ॥ ८ ॥ स्रवन्ती-
नाञ्च पुण्यानां सुरसानि शुचीनि च । पिबन्ती वारिमुख्यानि
शीतानि विमलानि च ॥ ९ ॥ वनेष्वमृगराजेषु व्याघ्रविप्रोषितेषु
च । दावाग्निविप्रयुक्तेषु शून्येषु गहनेषु च ॥ १० ॥ चरन्ती
हरिणैः सार्द्धं मृगीव वनचारिणी । चचार विपुलं धर्म्मं ब्रह्म-
चर्य्येण संवृतम् ॥ ११ ॥ ययातिरपि पूर्व्वेषां राज्ञां वृत्तमनुष्ठितः
बहुवर्षसहस्रायुर्युयुजे कालधर्म्मणा ॥ १२ ॥ पूरुर्यदुश्च द्वौ वंशौ
वर्द्धमानौ नरोत्तमौ । ताभ्यां प्रतिष्ठितो लोके परलोके च नाहुषः
॥ १३ ॥ महीयते नरपतिर्ययातिः स्वर्गमास्थितः । महर्षिकल्पो
नृपतिः स्वर्गाग्र्यफलभुग्विभुः ॥ १४ ॥ बहुवर्षसहस्राख्ये काले
बहुगुणे गते । राजर्षिषु निषण्णेषु महीयःसु महर्षिषु ॥ १५ ॥
अवमेने नरान् सर्व्वान् देवानृषिगणांस्तथा । ययातिर्मूढविज्ञानो
विस्मयाविष्टचेतन ॥ १६ ॥ ततस्तं बुबुधे देवः शक्रो बलनिसू-
दनः । ते च राजर्षयः सर्व्वे धिग्धिगित्येवमब्रुवन् ॥ १७ ॥ विचा-
र्य्य समुत्पन्नो निरीक्ष्य नहुषात्मजम् । को न्वयं कस्य वा राज्ञः
कथं वा स्वयमागत ॥ १८ ॥ कर्म्मणा केन सिद्धोऽयं क्व वानेन
तपश्चितम् । कथं वा ज्ञायते स्वर्गे केन वा ज्ञायतेऽप्युत ॥ १९ ॥

विश्वामित्रमुपागमत ॥ ११ ॥ अश्वाना काङ्क्षितार्थाना षड्मानि शतानि वै। अतद्दर्धेन कन्येयं भवता प्रतिगृह्यताम् ॥१२॥ अस्या राजर्षिभि पुत्रा जाता वै धार्मिकास्त्रय। चतुर्थं जनयत्वेकं भवानपि नरोत्तमम् ॥ १३ ॥ पूर्णान्येवं शतान्यष्टौ तुरगाना भवन्तु ते। भवतो ह्यनृणो भूत्वा तप कुर्यां यथासुखम् ॥ १४ ॥ विश्वामित्रस्तु तं दृष्ट्वा गालवं सह पक्षिणा। कन्याञ्च ता वरारोहामिदमित्यब्रवीद्वच ॥ १५ ॥ किमियं पूर्वमेवेह न दत्ता मम गालव। पुत्रा ममैव चत्वारो भवेयु कुलभावना ॥ १६ ॥ प्रतिगृह्णानि ते कन्यामेकपुत्रफलाय वै। अश्वाश्चाश्रममासाद्य चरन्तु मम सर्वश ॥ १७ ॥ स तया रममाणोऽथ विश्वामित्रो महाद्युति। आत्मजं जनयामास माधवीपुत्रमष्टकम् ॥ १८ ॥ जातमात्रं सुतं तञ्च विश्वामित्रो महामुनि। संयोज्यार्थैस्तथा धर्मैरश्वैस्तै समयोजयत ॥ १९ ॥ अथाष्टक पुरं प्रायात् तदा सोमपुरप्रभम। निर्यात्य कन्या शिष्याय कौशिकोऽपि वनं ययौ ॥ २० ॥ गालवोऽपि सुपर्णेन सह निर्यात्य दक्षिणाम्। मनसाभिप्रतीतेन कन्यामिदमुवाच ह ॥ २१ ॥ जातो दानपति पुत्रस्त्वया शूरस्तथापर। सत्यधर्मरतश्चान्यो यज्वा चापि तथापर ॥ २२ ॥ तदा गच्छ वरारोहे तारितस्ते पिता सुतै। चत्वारश्चैव राजानस्तथा चाहं सुमध्यमे ॥ २३ ॥ गालवस्त्वभ्यनुज्ञाय सुपर्णं पन्नगाशनम्। पितुर्निर्यात्य ता कन्या प्रययौ वनमेव ह ॥ २४ ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि गालवचरिते अष्टादशाधिकशततमोऽध्याय ॥ ११८ ॥

---

नारद उवाच। स तु राजा पुनस्तस्या कर्तुकाम स्वयम्वरम्। उपगम्याश्रमपदं गङ्गायमुनसङ्गमे ॥ १ ॥ गृहीतमाल्य

द्दामान्तां रथमारोप्य माधवीम्। पुरुयदुश्च भगिनीमाश्रमे पर्य्यधावताम् ॥ २ ॥ नागयक्षमनुष्याणां गन्धर्व्वमृगपक्षिणाम्। शैलद्रुमवनौकानामासीत्तत्र समागमः ॥ ३ ॥ नानापुरुषदेशानामीश्वरैश्च समाकुलम्। ऋषिभिर्ब्रह्मकल्पैश्च समन्तादावृतं वनम् ॥ ४ ॥ निर्दिश्यमानेषु तु सा वरेषु वरवर्णिनी। वरानुत्क्रम्य सर्व्वांस्तान् वरं वृतवती वनम् ॥ ५ ॥ अवतीर्य्य रथात् कन्या नमस्कृत्य च बन्धुषु। उपगम्य वनं पुण्यं तपस्तेपे ययातिजा ॥६॥ उपवासैश्च विविधैर्दीक्षाभिर्नियमैस्तथा। आत्मनो लघुतां कृत्वा बभूव मृगचारिणी ॥ ७ ॥ वैदूर्य्याङ्कुरकल्पानि मृदूनि हरितानि च। चरन्ती शष्पमुख्यानि तिक्तानि मधुराणि च ॥ ८ ॥ स्रवन्तीनाञ्च पुण्यानां सुरसानि शुचीनि च। पिबन्ती वारिमुख्यानि शीतानि विमलानि च ॥ ९ ॥ वनेषु मृगराजेषु व्याघ्रविप्रोषितेषु च। दावाग्निविप्रयुक्तेषु शून्येषु गहनेषु च ॥ १० ॥ चरन्ती हरिणैः सार्द्धं मृगीव वनचारिणी। चचार विपुलं धर्म्मं ब्रह्मचर्य्येण संवृतम् ॥ ११ ॥ ययातिरपि पूर्व्वेषां राज्ञां वृत्तमनुष्ठित बहुवर्षसहस्रायुर्युयुजे कालधर्म्मणा ॥ १२ ॥ पूरुर्यदुश्च द्वौ वंशौ वर्द्धमानौ नरोत्तमौ। ताभ्यां प्रतिष्ठितो लोके परलोके च नाहुषः ॥ १३ ॥ महीयते नरपतिर्ययातिः स्वर्गमास्थितः। महर्षिकल्पो नृपतिः स्वर्गाग्र्यफलभुग्विभुः ॥ १४ ॥ बहुवर्षसहस्राख्ये काले बहुगुणे गते। राजर्षिषु निषण्णेषु महीयःसु महर्षिषु ॥ १५ ॥ अवमेने नरान् सर्व्वान् देवानृषिगणांस्तथा। ययातिर्मूढविज्ञानो विस्मयाविष्टचेतन ॥ १६ ॥ ततस्तं बुबुधे देवः शक्रो वलनिसूदनः। ते च राजर्षयः सर्व्वे धिग्धिगित्येवमब्रुवन् ॥ १७ ॥ विचारश्च समुत्पन्नो निरीक्ष्य नहुषात्मजम्। को न्वयं कस्य वा राज्ञः कथं वा स्वर्गमागत ॥ १८ ॥ कर्म्मणा केन सिद्धोऽयं क्व वानेन तपश्चितम्। कथं वा ज्ञायते स्वर्गे केन वा ज्ञायतेऽप्युत ॥ १९ ॥

एवं विचरयन्तस्ते राजानं स्वर्गवासिनः । दृष्ट्वा पप्रच्छुरन्योऽन्यं ययातिं नृपतिं प्रति ॥ २० ॥ विमानपालाः शतशः स्वर्गद्वाराभिरक्षिणः । पृष्टा आसनपालाश्च न जानीमेत्यथाब्रुवन् ॥ २१ ॥ सर्वे ते ह्यावृतज्ञाना नाभ्यजानन्त तं नृपम् । स मुहूर्त्तादथ नृपो हतौजाश्चाभवत्तदा ॥ २२ ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि ययातिमोहे एकोनविंशाधिकशततमोऽध्यायः ॥ ११९ ॥

---

नारद उवाच । अथ प्रचलितः स्थानादासनाच्च परिच्युतः । कम्पितेनैव मनसा धर्षितः शोकवह्निना ॥ १ ॥ म्लानस्रग्भ्रष्टविज्ञानः प्रभ्रष्टमुकुटाङ्गदः । विघूर्णन् स्रस्तसर्वाङ्गः प्रभ्रष्टाभरणाम्बरः ॥ २ ॥ अदृश्यमानस्तान् पश्यन्नपश्यंश्च पुनः पुनः । शून्यः शून्येन मनसा प्रतिपत्स्यन्महीतलम् ॥ ३ ॥ किं मया मनसा ध्यातमशुभं धर्मदूषणम् । येनाहं चलितः स्थानादिति राजा व्यचिन्तयत् ॥ ४ ॥ ते तु तत्रैव राजानः सिद्धाश्चाप्सरसस्तथा । अपश्यन्त निरालम्बं तं ययातिं परिच्युतम् ॥ ५ ॥ अथैत्य पुरुषः कश्चित् क्षीणपुण्यनिपातकः । ययातिमब्रवीद्राजन् देवराजस्य शासनात् ॥ ६ ॥ अतीव मदमत्तस्त्वं न कञ्चिन्नावमन्यसे । मानेन भ्रष्टः स्वर्गस्ते नार्हस्त्वं पार्थिवात्मज ॥ ७ ॥ न च प्रज्ञायसे गच्छ पतस्वेति तमब्रवीत् । पतेयं सत्स्विति वचस्त्रिरुक्त्वा नहुषात्मज ॥ ८ ॥ पतिष्यंश्चिन्तयामास गतिं गतिमतां वरः । एतस्मिन्नेव काले तु नैमिषे पार्थिवर्षभान् ॥ ९ ॥ चतुरोऽपश्यत नृपांस्तेषां मध्ये पपात ह । प्रतर्दनो वसुमना शिबिरौशीनरोऽष्टकः ॥ १० ॥ वाजपेयेन यज्ञेन तर्पयन्ति सुरेश्वरम् । तेषामध्वरजं धूमं स्वर्गद्वारमुपस्थितम् ॥ ११ ॥ ययातिरुपजिघ्रन् वै निपपात महीं

प्रति। भूमौ स्वर्गेण सम्बद्धां नदीं धूममयीमिव ॥ १२ ॥ गङ्गां गामिव गच्छन्तीमालम्ब्य जगतीपतिः। श्रीमत्स्ववभृताग्रेग्रय चतुर्षु प्रतिबन्धषु ॥ १३ ॥ मध्ये निपतितो राजा लोकपालोपमेषु सः। चतुर्षु कृतकल्पेषु राजसिंहमहाग्निषु ॥ १४ ॥ पपात मध्ये राजर्षि र्ययातिः पुण्यसङ्क्षये। तमाहुः पार्थिवाः सर्वे दीप्यमानमिव श्रिया ॥ १५ ॥ को भवान् कस्य वा बन्धुर्देशस्य नगरस्य वा। यक्षो वाप्यथ वा देवो गन्धर्वो राक्षसोऽपि वा। न हि मानुषरूपोऽसि को वार्थः काङ्क्षते त्वया ॥ १६ ॥

ययातिरुवाच। ययातिरस्मि राजर्षिः क्षीणपुण्यश्च्युतो दिवः। पतेयं सत्स्विति ध्यायन् भवत्सु विनिपातितः ॥ १७ ॥

राजान ऊचुः। सत्यमेतद्भवतु ते काङ्क्षितं पुरुषर्षभ। सर्वेषां नः क्रतुफलं धर्मश्च प्रतिगृह्यताम् ॥ १८ ॥

ययातिरुवाच। नाहं प्रतिग्रहधनो ब्राह्मणः क्षत्रियो ह्यहम्। न च मे प्रवणा बुद्धिः परपुण्यविनाशने ॥ १९ ॥

नारद उवाच। एतस्मिन्नेव काले तु मृगचर्य्याक्रमागताम्। माधवीं प्रेक्ष्य राजानस्तेऽभिवाद्येदमब्रुवन् ॥ २० ॥ किमागमनकृत्यन्ते किं कुर्मः शासनं तव। आज्ञाप्या हि वयं सर्वे तव पुत्रास्तपोधने ॥ २१ ॥ तेषां तद्भाषितं श्रुत्वा माधवी परया मुदा। पितरं समुपागच्छत् ययातिं सा ववन्द च ॥ २२ ॥ स्पृष्ट्वा मूर्द्धनि तान् पुत्रांस्तापसी वाक्यमब्रवीत्। दौहित्रास्तव राजेन्द्र मम पुत्रा न ते पराः ॥ २३ ॥ इमे त्वां तारयिष्यन्ति दृष्टमेतत् पुरातने। अहं ते दुहिता राजन् माधवी मृगचारिणी ॥ २४ ॥ मयाप्युपचितो धर्मस्ततोऽर्द्धं प्रतिगृह्यताम्। यस्माद्राजन् नराः सर्वे अपत्यफलभागिनः ॥ २५ ॥ तस्मादिच्छन्ति दौहित्रान् यथा त्वं वसुधाधिप। ततस्ते पार्थिवाः सर्वे शिरसा जननीं तदा ॥ २६ ॥ अभिवाद्य नमस्कृत्य मातामहमथाब्रुवन्। उच्चैरनुपमैः

स्निग्धैः स्वरैरापूर्य्य मेदिनीम ॥ २७ ॥ मातामहं नृपतयस्तार
यन्तो दिवमुत्तम। अथ तस्मादुपगतो गालवोऽप्याह पार्थिवम्।
तपसो मेऽष्टभागेन स्वर्गमारोहता भवान् ॥ २८ ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि ययातिभ्रंशे
विंशत्यधिकशततमोऽध्याय ॥ १२० ॥

---

नारद उवाच। प्रत्यभिज्ञातमात्रोऽथ सद्भिस्तैर्नरपुङ्गव।
समारुरोह नृपतिरस्पृशन् वसुधातलम् ॥ १ ॥ ययातिर्दिव्य
संस्थानो बभूव विगतज्वर। दिव्यमाल्याम्बरधरो दिव्याभरण-
भूषित ॥ २ ॥ दिव्यगन्धगुणोपेतो न पृथ्वीमस्पृशत् पदा। ततो
वसुमना पूर्वमुच्चैरुच्चारयन् वच ॥ ३ ॥ ख्यातो दानपतिर्लोके
व्याजहार नृपं तदा। प्राप्तवानस्मि यल्लोके सर्ववर्णेष्वगर्हया ॥४॥
तदप्यथ च दास्यामि तेन संयुज्यता भवान्। यत् फल दान
शीलस्य क्षमाशीलस्य यत फलम् ॥ ५ ॥ यच्च मे फलमाधाने तेन
संयुज्यता भवान्। तत प्रतर्द्दनोऽप्याह वाक्यं क्षत्रियपुङ्गव ॥६॥
यथा धर्मरतिर्नित्यं नित्य युद्धपरायण। प्राप्तवानस्मि यल्लोके
क्षात्रवंशोद्भव यश ॥ ७ ॥ वीरशब्दफलञ्चैव तेन संयुज्यतां
भवान्। शिबिरौशीनरो धीमानुवाच मधुरा गिरम् ॥ ८ ॥ यथा
बालेषु नारीषु वैहार्य्येषु तथैव च। सङ्गरेषु निपातेषु तथापद्व्य-
सनेषु च ॥ ९ ॥ अनृतं नोक्तपूर्वं मे तेन सत्येन ख व्रज। यथा
प्राणाश्च राज्यञ्च राजन् कर्म सुखानि च ॥ १० ॥ त्यजेय न पुन
सत्य तेन सत्येन ख व्रज। यथा सत्येन मे धर्मो यथा सत्येन
पावक ॥ ११ ॥ प्रीत शतक्रतुश्चैव तेन सत्येन ख व्रज। अष्टक
स्त्वथ राजर्षि कौशिको माधवीसुत ॥ १२ ॥ अनेकशतयज्वान
नाहुषं प्राह धर्मवित्। शतश पुण्डरीका मे गोसवाश्चरिता

प्रभो ॥ १३ ॥ क्रतवो वाजपेयाश्च तेषां फलमवाप्नुहि । न मे रत्नानि न धनं न तथान्ये परिच्छदाः ॥ १४ ॥ क्रतुष्वनुपयुक्तानि तेन सत्येन खं व्रज । यथा यथा हि जल्पन्ति दौहित्रास्तं नराधिपम् ॥ १५ ॥ तथा तथा वसुमतीं त्यक्त्वा राजा दिवं ययौ । एवं सर्व्वे समस्तास्ते राजानः सुकृतैस्तदा ॥ १६ ॥ ययातिं स्वर्गतो भ्रष्टं तारयामासुरञ्जसा । दौहित्राः स्वेन धर्म्मेण यज्ञदानकृतेन वै ॥ १७ ॥ चतुर्षु राजवंशेषु सम्भूताः कुलवर्द्धनाः । मातामहं महाप्राज्ञं दिवमारोपयन्ति ते ॥ १८ ॥

राजान ऊचुः । राजधर्म्मगुणोपेताः सर्व्वधर्म्मगुणान्विताः । दौहित्रास्ते वयं राजन् दिवमारोह पार्थिव ॥ १९ ॥

इति उद्योगपर्व्वणि भगवद्यानपर्व्वणि ययातिस्वर्गारोहणे एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥

---

नारद उवाच । सद्भिरारोपितः स्वर्गं पार्थिवैर्भूरिदक्षिणैः । अभ्यनुज्ञाय दौहित्रान् ययातिर्दिवमास्थितः ॥ १ ॥ अभिवृष्टश्च वर्षेण नानापुष्पसुगन्धिना । परिष्वक्तश्च पुण्येन वायुना पुण्यगन्धिना ॥ २ ॥ अचलं स्थानमासाद्य दौहित्रफलनिर्ज्जितम् । कर्म्मभिः स्वैरुपचितो जज्वाल परया श्रिया ॥ ३ ॥ उपगीतोपनृत्तश्च गन्धर्व्वाप्सरसां गणैः । प्रीत्या प्रतिगृहीतश्च स्वर्गे दुन्दुभिनिस्वनैः ॥ ४ ॥ अभिष्टुतश्च विविधैर्देवराजर्षिचारणैः । अर्च्चितश्चोत्तमार्घ्येण दैवतैरभिनन्दितः ॥ ५ ॥ प्राप्तः स्वर्गफलञ्चैव तमुवाच पितामहः । निर्वृतं शान्तमनसं वचोभिस्तर्पयन्निव ॥ ६ ॥ चतुष्पादस्त्वया धर्म्मश्चितो लोक्येन कर्म्मणा । अक्षयस्तव लोकोऽयं कीर्त्तिश्चैवाक्षया दिवि ॥ ७ ॥ पुनस्तवैव राजर्षे सुकृतेन विघा

तितम। आवृतं तमसा चैव सर्वेषां स्वर्गवासिनाम् ॥ ८ ॥ येन त्वां नाभिजानन्ति ततोऽस्यासोऽसि पातितः। प्रीत्यैव चासि दौहित्रैस्तारितस्त्वमिहागतः ॥ ९ ॥ स्थानञ्च प्रतिपन्नोऽसि कर्मणा स्वेन निर्जितम्। अचलं शाश्वतं पुण्यमुत्तमं ध्रुवमव्ययम् ॥१०॥

ययातिरुवाच। भगवन् संशयो मेऽस्ति कश्चित्तं छेत्तुमर्हसि। न त्वन्यमहमर्हामि प्रष्टुं लोकपितामह ॥ ११ ॥ बहुवर्षसहस्रान्तं प्रजापालनवर्द्धितम्। अनेकक्रतुदानौघैरर्ज्जितं मे महत् फलम् ॥ १२ ॥ कथं तदल्पकालेन क्षीणं येनास्मि पातितः। भगवन् वेत्थ लोकांश्च शाश्वतान् मम निर्मितान्। कथं नु मम तत् सर्वं विप्रनष्टं महाद्युते ॥ १३ ॥

पितामह उवाच। बहुवर्षसहस्रान्तं प्रजापालनवर्द्धितम्। अनेकक्रतुदानौघैर्यत्त्वयोपार्ज्जितं फलम् ॥ १४ ॥ तदनेनैव दोषेण क्षीणं येनासि पातितः। अभिमानेन राजेन्द्र धिक्कृतः स्वर्गवासिभिः ॥ १५ ॥ नायं मानेन राजर्षे न बलेन न हिंसया। न शाठ्येन न मायाभिर्लोको भवति शाश्वतः ॥ १६ ॥ नावमान्यास्त्वया राजन्नवमोत्कृष्टमध्यमाः। न हि मानप्रदग्धानां कश्चिदस्ति शमः क्वचित् ॥ १७ ॥ पतनारोहणमिदं कथयिष्यन्ति ये नराः। विषमाण्यपि ते प्राप्तास्तरिष्यन्ति न संशयः ॥ १८ ॥

नारद उवाच। एष दोषोऽभिमानेन पुरा प्राप्तो ययातिना। निर्बन्धतोऽतिमात्रञ्च गालवेन महीपते ॥ १९ ॥ श्रोतव्यं हितकामानां सुहृदां हितमिच्छता। न कर्त्तव्यो हि निर्बन्धो निर्बन्धो हि क्षयोदयः ॥ २० ॥ तस्मात्त्वमपि गान्धारे मानं क्रोधञ्च वर्ज्जय। सन्धत्स्व पाण्डवैर्वीर संरम्भं त्यज पार्थिव ॥ २१ ॥ ददाति यत् पार्थिव यत् करोति यद्वा तपस्तप्यति यज्जुहोति। न तस्य नाशोऽस्ति न चापकर्षो नान्यस्तदश्नाति स एव कर्त्ता ॥ २२ ॥ इदं महाख्यानमनुत्तमं हितं बहुश्रुतानां गतरोष

रागिणाम्। समीक्ष्य लोके बहुधा प्रधारितं त्रिवर्गदृष्टिः पृथिवी-
मुपाश्नुते ॥ २३ ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि ययातिस्वर्गारोहणे
द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

---

धृतराष्ट्र उवाच। भगवन्नेवमेवैतत् यथा वदसि नारद।
इच्छामि चाहमप्येवं न त्वीशो भगवन्नहम् ॥ १ ॥
वैशम्पायन उवाच। एवमुक्त्वा तत कृष्णमभ्यभाषत कौरवः।
स्वर्ग्यं लोक्यञ्च मामात्थ धर्म्यं न्याय्यञ्च केशव ॥ २ ॥ न त्वहं स्ववश-
स्तात क्रियमाणं न मे प्रियम्। अङ्ग दुर्य्योधनं कृष्ण मन्दं शास्त्रा-
तिगं मम ॥ ३ ॥ अनुनेतुं महाबाहो यतस्व पुरुषोत्तम। न
शृणोति महाबाहो वचनं साधु भाषितम् ॥ ४ ॥ गान्धार्य्याश्च
हृषीकेश विदुरस्य च धीमतः। अन्येषाञ्चैव सुहृदां भीष्मादीनां
हितैषिणाम् ॥ ५ ॥ स त्वं पापमतिं क्रूरं पापचित्तमचेतनम्।
अनुशाधि दुरात्मानं स्वयं दुर्य्योधनं नृपम्। सुहृत्कार्य्यन्तु
सुमहत् कृतन्ते स्याज्जनार्द्दन ॥ ६ ॥
वैशम्पायन उवाच। ततोऽभ्यावृत्त्य वार्ष्णेयो दुर्य्योधनममर्-
र्षणम्। अब्रवीन्मधुरां वाचं सर्वधर्मार्थतत्त्ववित् ॥ ७ ॥ दुर्य्यो-
धन निबोधेदं मद्वाक्यं कुरुसत्तम। शमार्थं ते विशेषेण सानु-
बन्धस्य भारत ॥ ८ ॥ महाप्राज्ञकुले जातः साध्वेतत् कर्त्तुमर्हसि।
श्रुतवृत्तोपसम्पन्नः सर्वैः समुदितो गुणैः ॥ ९ ॥ दौष्कुलेया दुरा-
त्मानो नृशंसा निरपत्रपाः। त एतदीदृशं कुर्य्युर्यथा त्वं तात
मन्यसे ॥ १० ॥ धर्मार्थयुक्ता लोकेऽस्मिन् प्रवृत्तिर्लक्ष्यते सताम्।
असतां विपरीता तु लक्ष्यते भरतर्षभ ॥ ११ ॥ विपरीता त्वियं

वृत्तिरसकृदुच्यते त्वयि। अधर्मश्चानुबन्धोऽत्र घोरः प्राणहरो
महान् ॥ १२ ॥ अनिष्टस्यानिमित्तस्य न च शक्यस्य भारत। तमनर्थं
परिहरन्नात्मश्रेयः करिष्यसि ॥ १३ ॥ भ्रातॄणामथ भृत्यानां
मित्राणाञ्च परन्तप। अधर्म्यादयशस्याच्च कर्मणस्त्वं प्रमोक्ष्यसे
॥ १४ ॥ प्राज्ञैः शूरैर्महोत्साहैरात्मवद्भिर्बहुश्रुतैः। सम्वृतश्च
पुरुषव्याघ्र पाण्डवैर्भरतर्षभ ॥ १५ ॥ तद्धितञ्च प्रियञ्चैव धृत-
राष्ट्रस्य धीमतः। पितामहस्य द्रोणस्य विदुरस्य महामतेः ॥ १६ ॥
कृपस्य सोमदत्तस्य वाह्लीकस्य च धीमतः। अश्वत्थाम्नो विक-
र्णस्य सञ्जयस्य विविंशतेः ॥ १७ ॥ ज्ञातीनाञ्चैव भूयिष्ठं मित्रा-
णाञ्च परन्तप। शमे शर्म भवेत्तात सर्वस्य जगतस्तथा ॥ १८ ॥
ह्रीमानसि कुले जातः श्रुतवाननृशंसवान्। तिष्ठ तात पितुः शास्त्रे
मातुश्च भरतर्षभ ॥ १९ ॥ एतत् श्रेयो हि मन्यन्ते पिता यच्छास्ति
भारत। उत्तमापद्गतः सर्वः पितुः स्मरति शासनम् ॥ २० ॥ रोचते
ते पितुस्तात पाण्डवैः सह सङ्गमः। सामात्यस्य कुरुश्रेष्ठ तत्तुभ्यं
तात रोचताम् ॥ २१ ॥ श्रुत्वा यः सुहृदां शास्त्रं मर्त्यो न प्रति-
पद्यते। विपाकान्ते दहत्येनं किम्पाकमिव भक्षितम् ॥ २२ ॥
यस्तु निःश्रेयसं वाक्यं मोहान्न प्रतिपद्यते। स दीर्घसूत्री हीनार्थः
पश्चात्तापेन युज्यते ॥ २३ ॥ यस्तु निःश्रेयसं श्रुत्वा प्राक् तदेवा-
भिपद्यते। आत्मनो मतमुत्सृज्य स लोके सुखमेधते ॥ २४ ॥
योऽर्थकामस्य वचनं प्रातिकूल्यान्न मृष्यते। शृणोति प्रतिकूलानि
द्विषतां वशमेति सः ॥ २५ ॥ सतां मतमतिक्रम्य योऽसतां वर्त्तते
मते। शोचन्ते व्यसने तस्य सुहृदो नचिरादिव ॥ २६ ॥ मुख्या-
नमात्यानुत्सृज्य यो निहीनान्निषेवते। स घोरामापदं प्राप्य
नोत्तारमधिगच्छति ॥ २७ ॥ योऽसत्सेवी वृथाचारो न श्रोता
सुहृदां सताम्। परान् वृणीते स्वान् द्वेष्टि तं गौस्त्यजति भारत
॥ २८ ॥ स त्वं विरुध्य तैर्वीरैरन्येभ्यस्त्राणमिच्छसि। अति-

छेभ्योऽसमर्थेभ्यो मूढ़ेभ्यो भरतर्षभ ॥ २९ ॥ को हि मन्त्रसमान् ज्ञातीनतिक्रम्य महारथान्। अन्येभ्यस्त्राणमाकांक्षेत्त्वदन्यो भुवि मानवः ॥ ३० ॥ जन्मप्रभृति कौन्तेया नित्यं विनिकृतास्त्वया। न च ते जातु कुप्यन्ति धर्मात्मानो हि पाण्डवाः ॥ ३१ ॥ मिथ्योपचरितास्तात जन्मप्रभृति बान्धवाः। त्वयि सम्यङ्महाबाहो प्रतिपन्ना यशस्विनः ॥ ३२ ॥ त्वयापि प्रतिपत्तव्यं तथैव भरतर्षभ। स्वेषु बन्धुषु मुख्येषु मा मन्युवशमन्वगाः ॥ ३३ ॥ त्रिवर्गयुक्तः प्राज्ञानामारम्भो भरतर्षभ। धर्मार्थावनुरुध्यन्ते त्रिवर्गासम्भवे नराः ॥ ३४ ॥ पृथक् च विनिविष्टानां धर्मं धीरोऽनुरुध्यते। मध्यमोऽर्थं कलिं बाल: काममेवानुरुध्यते ॥ ३५ ॥ इन्द्रियैः प्राकृतो लोभाद्धर्मं विप्रजहाति यः। कामार्थावनुपायेन लिप्समानो विनश्यति ॥ ३६ ॥ कामार्थौ लिप्समानस्तु धर्ममेवादितश्चरेत्। न हि धर्मादपैत्यर्थः कामो वापि कदाचन ॥ ३७ ॥ उपायं धर्ममेवाहुस्त्रिवर्गस्य विशाम्पते। लिप्समानो हि तेनाशु कक्षेऽग्निरिव वर्द्धते ॥ ३८ ॥ स त्वं तातानुपायेन लिप्ससे भरतर्षभ। आधिराज्यं महद्दीप्तं प्रथितं सर्व्वराजसु ॥ ३९ ॥ आत्मानं तक्षति ह्येष वनं परशुना यथा। यः सम्यग्वर्त्तमानेषु मिथ्या राजन् प्रवर्त्तते ॥ ४० ॥ न तस्य हि मतिं छिन्द्यात् यस्य नेच्छेत् पराभवम्। अविच्छिन्नमतेरस्य कल्याणे धीयते मतिः ॥ ४१ ॥ आत्मवान्नावमन्येत त्रिषु लोकेषु भारत। अप्यन्यं प्राकृतं किञ्चित् किमु तान् पाण्डवर्षभान् ॥ ४२ ॥ अमर्षवशमापन्नो न किञ्चिद्बुध्यते जनः। छिद्यते ह्याततं सर्वं प्रमाणं पश्य भारत ॥ ४३ ॥ श्रेयस्ते दुर्ज्जनात्तात पाण्डवैः सह सङ्गतम्। तैर्हि सम्प्रीयमाणस्त्वं सर्वान् कामानवाप्स्यसि ॥ ४४ ॥ पाण्डवैर्निर्ज्जितां भूमिं भुञ्जानो राजसत्तम। पाण्डवान् पृष्ठतः कृत्वा त्राणमाकांक्षसेऽन्यतः ॥ ४५ ॥ दुःशासने दुर्विषहे कर्णे चापि ससौबले। एते-

स्वैश्वर्य्यमाधाय भूमिमिच्छसि भारत ॥ ४६ ॥ न चैते तव पर्य्याप्ता ज्ञाने धर्मार्थयोस्तथा। विक्रमे चाप्यपर्य्याप्ता पाण्डवान् प्रति भारत ॥ ४७ ॥ न हीमे सर्वराजान पर्य्याप्ता सहिता स्तथा। क्रुद्धस्य भीमसेनस्य प्रेचितु मुखमाहवे ॥ ४८ ॥ इदं सन्निहित तात समग्र पार्थिवं बलम्। अयं भीष्मस्तथा द्रोण कर्णश्चायं तथा कृप ॥ ४९ ॥ भूरिश्रवा सौमदत्तिरश्वत्थामा जयद्रथ। अशक्ता सर्वं एवैते प्रतियोद्धुं धनञ्जयम ॥ ५० ॥ अजेयो ह्यर्जुन सक्रुद्ध सर्वैरपि सुरासुरै। मानुषैरपि गन्धर्वैर्मा युद्धे चेत आधिथा ॥ ५१ ॥ दृश्यता वा पुमान् कश्चित समग्रे पार्थिवे बले। योऽर्जुन समरे प्राप्य स्वस्तिमानाव्रजेत गृहान् ॥ ५२ ॥ किन्ते जनक्षयेणेह कृतेन भरतर्षभ। यस्मिन् जिते जित ते स्यात पुमानेक स दृश्यताम् ॥ ५३ ॥ य स देवान सगन्धर्वान् सयक्षासुरपन्नगान्। अजयत खाण्डवप्रस्थे कस्त युद्धेत पाण्डवम् ॥ ५४ ॥ तथा विराटनगरे श्रूयते महदद्भुतम। एकस्य च बहूनाञ्च पर्य्याप्त तन्निदर्शनम् ॥ ५५ ॥ युद्धे येन महादेव साक्षात सन्तोषित शिव। तमजेयमनाधृष्य विजेतु जिष्णुमच्युतम् ॥ ५६ ॥ आशसमीह समरे वीरमर्जुनमूर्जितम। यद्वितीय पुन पार्थं क प्रार्थयितुमर्हति ॥ ५७ ॥ युद्धे प्रतीपमायान्तमपि साक्षात पुरन्दर। बाहुभ्यामुद्धरेत भूमिं दहेत क्रुद्ध इमा प्रजा ॥ ५८ ॥ पातयेत त्रिदिवाद्देवान् योऽर्जुन समरे जयेत। पश्य पुत्रास्तथा भ्रातॄन् ज्ञातीन् सम्बन्धिनस्तथा ॥ ५९ ॥ त्वत् कृते न विनश्येयुरिमे भरतसत्तमा। अस्तु शेष कौरवाणा मा पराभूदिद कुलम् ॥ ६० ॥ कुलघ्न इति नोच्येथा नष्टकीर्त्ति र्नराधिप। त्वामेव स्थापयिष्यन्ति यौवराज्ये महारथा ॥ ६१ ॥ महाराज्येऽपि पितरं धृतराष्ट्रं जनेश्वरम्। मा तात श्रिय मायान्तीमवमस्था समुद्यताम् ॥ ६२ ॥ अर्द्ध प्रदाय पार्थेभ्यो

महतीं श्रियमाप्नुहि । पाण्डवैः सङ्गमं कृत्वा कृत्वा च सुहृदां वच । संप्रीयमाणो मित्रैश्च चिरं भद्राण्यवाप्स्यसि ॥ ६३ ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि भगवद्वाक्ये
त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥

---

वैशम्पायन उवाच । ततः शान्तनवो भीष्मो दुर्य्योधनममर्षणम् । केशवस्य वच श्रुत्वा प्रोवाच भरतर्षभ ॥ १ ॥ कृष्णेन वाक्यमुक्तोऽसि सुहृदां शममिच्छता । अन्वपद्यस्व तत्तात मा मन्युवशमन्वगाः ॥ २ ॥ अकृत्वा वचनं तात केशवस्य महात्मनः । श्रेयो न जातु न सुखं न कल्याणमवाप्स्यसि ॥ ३ ॥ धर्म्यमर्थ्यं महाबाहुराह त्वां तात केशवः । तदर्थमभिपद्यस्व मा राजन्नीनशः प्रजाः ॥ ४ ॥ ज्वलितां त्वमिमां लक्ष्मीं भारतीं सर्वराजसु । जीवतो धृतराष्ट्रस्य दौरात्म्यात् भ्रंशयिष्यसि ॥ ५ ॥ आत्मानञ्च सहामात्यं सपुत्रभ्रातृबान्धवम् । अहमित्यनया बुद्ध्या जीवितात् भ्रंशयिष्यसि ॥ ६ ॥ अतिक्रामन् केशवस्य तथ्यं वचनमर्थवत् । पितुश्च भरतश्रेष्ठ विदुरस्य च धीमतः ॥ ७ ॥ मा कुलघ्नः कुपुरुषो दुर्मतिः कापथङ्गम । मातरं पितरञ्चैव मा मज्जीः शोकसागरे ॥ ८ ॥ अथ द्रोणोऽब्रवीत्तत्र दुर्य्योधनमिदं वचः । अमर्षवशमापन्नं निश्वसन्तं पुन पुन ॥ ९ ॥ धर्मार्थयुक्तं वचनमाह त्वां तात केशवः । तथा भीष्मः शान्तनवस्तज्जुषस्व नराधिप ॥ १० ॥ प्राज्ञौ मेधाविनौ दान्तावर्थकामौ बहुश्रुतौ । आहतुस्त्वां हितं वाक्यं तज्जुषस्व नराधिप ॥ ११ ॥ अनुतिष्ठ महाप्राज्ञ कृष्णभीष्मौ यदूचतुः । माधवं बुद्धिमोहेन मावमंस्थाः परन्तप ॥ १२ ॥ ये त्वां प्रोत्साहयन्त्येते नैते कृत्याय कर्हिचित् । वैरं परेषां ग्रीवायां प्रतिमोच्यन्ति संयुगे ॥ १३ ॥ मा जीघनः प्रजाः सर्वाः पुत्रान्

भ्रातृंस्तथैव च। वासुदेवार्जुनौ यत्र विद्यजेयं बलं च तत्
॥ १४ ॥ एतच्चैव मतं सत्यं सुहृदो कृष्णभीष्मयो। यदि
नादास्यसे तात पश्चात्तप्स्यसि भारत ॥ १५ ॥ यथोक्त जाम
दग्न्येन भूयानेव ततोऽर्जुन। कृष्णो हि देवकीपुत्रो देवैरपि
सुदुःसह ॥ १६ ॥ किन्ते सुखप्रियेणेह प्रोक्तेन भरतर्षभ। एतत्ते
सर्वमाख्यातं यथेच्छसि तथा कुरु। न हि त्वामुत्सहे वक्तुं भूयो
भरतसत्तम ॥ १७ ॥

वैशम्पायन उवाच। तस्मिन् वाक्यान्तरे वाक्यं क्षत्तापि
विदुरोऽब्रवीत। दुर्योधनमभिप्रेक्ष्य धार्तराष्ट्रममर्षणम् ॥ १८ ॥
दुर्योधन न शोचामि त्वामहं भरतर्षभ। इमौ तु वृद्धौ शोचामि
गान्धारी पितरञ्च ते ॥ १९ ॥ यावनाथौ चरिष्येते त्वया नाथेन
दुर्हृदा। हतमित्रौ हतामात्यौ लूनपक्षाविवाण्डजौ ॥ २० ॥
भिक्षुकौ विचरिष्येते शोचन्तौ पृथिवीमिमाम्। कुलघ्नमीदृशं पाप
जनयित्वा कुपूरुषम् ॥ २१ ॥ अथ दुर्योधनं राजा धृतराष्ट्रो
ऽभ्यभाषत। आसीनं भ्रातृभिः सार्द्धं राजभिः परिवारितम् ॥२२॥
दुर्योधन निबोधेदं शौरिणोक्तं महात्मना। आदत्स्व शिव
मत्यन्तं योगक्षेममवव्ययम् ॥ २३ ॥ अनेन हि सहायेन कृष्णे
नाक्लिष्टकर्मणा। इष्टान् सर्वानभिप्रायान् प्राप्स्यामः सर्वराजसु
॥ २४ ॥ सुसंहितः केशवेन तात गच्छ युधिष्ठिरम्। चर स्वस्त्य
यनं कृत्स्नं भरतानामनामयम् ॥ २५ ॥ वासुदेवेन तीर्थेन तात
गच्छस्व सङ्गमम्। कालप्राप्तमिदं मन्ये मा त्वं दुर्योधनातिगाः
॥ २६ ॥ शमञ्चेत् याचमानं त्वं प्रत्याख्यास्यसि केशवम्। त्वदर्थ
मभिजल्पन्तं न तवास्त्यपराभवः ॥ २७ ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि धृतराष्ट्रवाक्ये
चतुर्विंशाधिकशततमोऽध्यायः ॥ १२४ ॥

---

वैशम्पायन उवाच । धृतराष्ट्रवचः श्रुत्वा भीष्मद्रोणौ सम-
व्ययौ । दुर्य्योधनमिदं वाक्यमूचतुः शासनातिगम् ॥ १ ॥ यावत्
कृष्णावसंनद्धौ यावत्तिष्ठति गाण्डिवम् । यावद्धौम्यो न मेधाग्नौ
जुहोतीह द्विषद्बलम् ॥ २ ॥ यावन्न प्रेक्षते क्रुद्धः सेनां तव
युधिष्ठिरः । ह्रीनिषेवो महेष्वासस्तावच्छाम्यतु वैशसम् ॥ ३ ॥
यावन्न दृश्यते पार्थः स्वेष्वनीकेष्ववस्थितः । भीमसेनो महेष्वास-
स्तावच्छाम्यतु वैशसम् ॥ ४ ॥ यावन्न चरते मार्गान् पृतना-
मभिधर्षयन् । भीमसेनो गदापाणिस्तावच्छाम्यतु पाण्डवैः ॥ ५ ॥
यावन्न शातयत्याजौ शिरांसि गजयोधिनाम् । गदया वीर-
घातिन्या फलानीव वनस्पतेः ॥ ६ ॥ कालेन परिपक्वानि ताव-
च्छाम्यतु वैशसम् । नकुलः सहदेवश्च धृष्टद्युम्नश्च पार्षतः ॥ ७ ॥
विराटश्च शिखण्डी च शैशुपालिश्च दंशितः । यावन्न प्रविशन्त्येते
नक्रा इव महार्णवम् ॥ ८ ॥ कृतास्त्राः क्षिप्रमस्यन्तस्तावच्छाम्यतु
वैशसम् । यावन्न सुकुमारेषु शरीरेषु महीक्षिताम् ॥९॥ गार्द्ध-
पत्राः पतन्त्युग्रास्तावच्छाम्यतु वैशसम् । चन्दनागुरुदिग्धेषु हार-
निष्कधरेषु च ॥ १० ॥ नोरःसु यावद्योधानां महेष्वासैर्महे-
षवः । कृतास्त्रैः क्षिप्रमस्यद्भिर्दूरपातिभिरायसाः ॥ ११ ॥ अभि-
लक्ष्यैर्निपात्यन्ते तावच्छाम्यतु वैशसम् । अभिवादयमानं त्वां
शिरसा राजकुञ्जरः ॥ १२ ॥ पाणिभ्यां प्रतिगृह्णातु धर्म्मराजो
युधिष्ठिरः । ध्वजाङ्कुशपताकाङ्कं दक्षिणं ते सुदक्षिणः ॥ १३ ॥
स्कन्धे निक्षिपतां बाहुं शान्तये भरतर्षभ । रत्नौषधिसमेतेन
रत्नाङ्गुलितलेन च ॥ १४ ॥ उपविष्टस्य पृष्ठन्ते पाणिना परि-
मार्ज्जतु । शालस्कन्धो महाबाहुस्त्वां स्वजानो वृकोदरः ॥ १५ ॥
साम्नाभिवदतां चापि शान्तये भरतर्षभ । अर्ज्जुनेन यमाभ्याञ्च
त्रिभिस्तैरभिवादित ॥ १६ ॥ मूर्द्धि तान् समुपाघ्राय प्रेम्णाभि-
वद पार्थिव । दृष्ट्वा त्वां पाण्डवैर्वीरैर्भ्रातृभिः सह सङ्गतम् ॥१७॥

यावद्दानन्दजान्यूणि प्रमुञ्चन्तु नराधिपा। भुञ्जता राजधानीषु सर्वसम्पन्नहीचिताम। पृथिवी भ्रातृभावेन भुज्यता विज्वरो भव॥ १८॥

इति उद्योगपर्वणि भगवद्यानपर्वणि भीष्मद्रोणवाक्ये पञ्चविंशत्यधिकशततमोऽध्यायः॥ १२५॥

---

वैशम्पायन उवाच। श्रुत्वा दुर्योधनो वाक्यमप्रियं कुरुसंसदि। प्रत्युवाच महाबाहुं वासुदेवं यशस्विनम्॥ १॥ प्रसमीक्ष्य भवानेतद्वक्तुमर्हति केशव। मामेव हि विशेषेण विभाष्य परिगर्हसे॥ २॥ भक्तिवादेन पार्थानामकस्मान्मधुसूदन। भवान् गर्हयते नित्यं किं समीक्ष्य बलाबलम्॥ ३॥ भवान् क्षत्ता च राजा वाप्याचार्यो वा पितामहः। मामेव परिगर्हन्ते नान्यं कञ्चन पार्थिवम्॥ ४॥ न चाहं लक्षये कच्चिद्व्यभिचारमिहात्मन। अथ सर्वे भवन्तो मां विद्विषन्ति सराजकाः॥ ५॥ न चाहं कञ्चिदत्यर्थमपराधमरिन्दम। विचिन्तयन् प्रपश्यामि सुसूक्ष्ममपि केशव॥ ६॥ प्रियाभ्युपगते द्यूते पाण्डवा मधुसूदन। जिताः शकुनिना राज्यं तत्र किं मम दुष्कृतम्॥ ७॥ यत् पुनर्द्रविणं किञ्चित्तत्राजीयन्त पाण्डवाः। तेभ्य एवाभ्यनुज्ञातं तत्तदा मधुसूदन॥ ८॥ अपराधो न चास्माकं यत्ते ह्यक्षैः पराजिताः। अजेया जयतां श्रेष्ठ पार्थाः प्रव्रजिता वनम्॥ ९॥ केन वाप्यपवादेन विरुध्यन्त्यरिभिः सह। अशक्ताः पाण्डवाः कृष्ण प्रहृष्टाः प्रत्यमित्रवत्॥ १०॥ किमस्माभिः कृतं तेषां कस्मिन् वा पुनरागसि। धार्त्तराष्ट्रान् जिघांसन्ति पाण्डवाः सृञ्जयैः सह॥ ११॥ न चापि वयमुग्रेण कर्मणा वचनेन वा। प्रभ्रष्टाः प्रणमामेह भयादपि शतक्रतुम्॥ १२॥ न च तं कृष्ण पश्यामि

चत्रधर्ममनुष्ठितम्। इत्तरेत युधा जेतुं यो नः शत्रुर्निवर्हणः ॥ १३ ॥ न हि भीष्मकृपद्रोणा शक्या मधुसूदन। देवैरपि युधा जेतुं शक्याः किमुत पाण्डवैः ॥ १४ ॥ स्वधर्ममनुपश्यन्तो यदि माधव संयुगे। अस्त्रेण निधनङ्काले प्राप्स्यामः स्वर्गमेव तत् ॥ १५ ॥ मुख्यश्चैवैष नो धर्मः चत्रियाणां जनार्द्दन। यच्छयीमहि संग्रामे शरतल्पगता वयम् ॥ १६ ॥ ते वयं वीरशयनम्प्राप्स्यामो यदि संयुगे। अप्रणम्यैव शत्रूणां न नस्तप्स्यति माधव ॥ १७ ॥ कश्च जातु कुले जातः चत्रधर्मेण वर्त्तयन्। भयाद्वृत्तिं समीच्यैव प्रणमेदिह कर्हिचित् ॥ १८ ॥ उद्यच्छेदेव न नमेदुद्यमो ह्येव पौरुषम्। अप्यपर्व्वणि भज्येत न नमेदिह कर्हिचित् ॥ १९ ॥ इति मातङ्गवचनं परीप्सन्ति हितेप्सवः। धर्माय चैव प्रणमेद्ब्राह्मणेभ्यश्च मद्विधः ॥ २० ॥ अचिन्तयन् कस्यचिदन्यं यावज्जीवन्तथाचरेत्। एष धर्मः चत्रियाणां मतमेतच्च मे सदा ॥ २१ ॥ राज्यांशश्चाभ्यनुज्ञातो यो मे पित्रा पुराभवत्। न स लभ्यः पुनर्जातु मयि जीवति केशव ॥ २२ ॥ यावच्च राजा ध्रियते धृतराष्ट्रो जनार्द्दन। न्यस्तशस्त्रा वयं ते वाप्युपजीवाम माधव ॥ २३ ॥ अप्रदेयं पुरा दत्तं राज्यं परवतो मम। अज्ञानाद्वा भयाद्वापि मयि बाले जनार्द्दन ॥ २४ ॥ न तदद्य पुनर्लभ्यं पाण्डवैर्वृष्णिनन्दन। ध्रियमाणे महाबाहौ मयि सम्प्रति केशव ॥ २५ ॥ यावद्धि तीक्ष्णया सूच्या विध्येदग्रेण केशव। तावदप्यपरित्याज्यं भूमेर्नः पाण्डवान् प्रति ॥ २६ ॥

इति उद्योगपर्व्वणि भगवद्यानपर्व्वणि दुर्य्योधनवाक्ये षड्‌त्रिंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥

---

वैशम्पायन उवाच। तत प्रहस्य दाशार्हः क्रोधपर्य्याकुलेक्षणः। दुर्य्योधनमिदं वाक्यमब्रवीत् कुरुसंसदि ॥ १ ॥ लप्स्यसे

वीरमयनं काममेतदवाप्स्यसि । स्थिरो भव महामात्यो विमर्दो भविता महान् ॥ २ ॥ यच्चैव मन्यसे मूढ न मे कश्चित् व्यतिक्रम । पाण्डवेष्विति तत सर्वं निबोधत नराधिपा ॥ ३ ॥ श्रिया सन्तप्यमानेन पाण्डवाना महात्मनाम् । त्वया दुर्मन्त्रितं द्यूतं सौबलेन च भारत ॥ ४ ॥ कथञ्च ज्ञातयस्तात श्रेयास शाधु सम्मता । अथान्याय्यमुपस्थातु जिह्मेनाजिह्मचारिण ॥ ५ ॥ अद्यद्यूत महाप्राज्ञ सता मतिविनाशनम् । असता तत्र जायन्ते भेदाश्च व्यसनानि च ॥ ६ ॥ तदिद व्यसन घोर त्वया द्यूतमुख कृतम् । असमीक्ष्य सदाचारै सार्द्धं पापानुबन्धने ॥ ७ ॥ कश्चान्यो भ्रातृभार्य्या वै विप्रकर्त्तुं तथार्हति । आनीय च सभा व्यक्ता यथोक्ता द्रौपदी त्वया ॥ ८ ॥ कुलीना शीलसम्पन्ना प्राणेभ्योऽपि गरीयसी । महिषी पाण्डुपुत्राणा तथा विनिकृता त्वया ॥ ९ ॥ जानन्ति कुरव सर्वं यथोक्ता कुरुसंसदि । दुःशासनेन कौन्तेया प्रव्रजन्त परन्तपा ॥ १० ॥ सम्यग्वृत्तेष्वलुब्धेषु सततं धर्मचारिषु । स्वेषु बन्धुषु क साधुयरेदेवमसाम्प्रतम् ॥ ११ ॥ नृशंसानामनार्य्याणा पुरुषाणाञ्च भाषणम् । कर्णदुःशासनाभ्याञ्च त्वया च बहुश कृतम् ॥ १२ ॥ सह मात्रा प्रदग्धुन्तान् बालकान् वारणावते । आस्थित परमं यत्न न समृद्धञ्च तत्तव ॥ १३ ॥ ऊषुश्च सुचिर काल प्रच्छन्ना पाण्डवास्तदा । मात्रा सहैकचक्राया ब्राह्मणस्य निवेशने ॥ १४ ॥ विविधा सर्पबन्धैश्च यतिता पाण्डवास्त्वया । सर्वोपायैर्विनाशाय न समृद्धञ्च तत्तव ॥ १५ ॥ एवं बुद्धि पाण्डवेषु मिथ्यावृत्ति सदा भवान् । वदन्ते नापराधोऽस्ति पाण्डवेषु महात्मसु ॥ १६ ॥ यच्चैभ्यो याचमानेभ्य पितृ्यमंशं न दित्ससि । तच्च पाप प्रदातासि भ्रष्टैश्वर्य्यो निपातित ॥ १७ ॥ कृत्वा बहून्यकर्माणि पाण्डवेषु नृशंसवत । मिथ्यावृत्तिरनार्य्य सन्नद्य विप्रतिपद्यसे ॥ १८ ॥ मातापितृभ्या भीष्मेण

द्रोणेन विदुरेण च। शाम्येति मुद्गरक्तोऽपि न च शाम्यसि पार्थिव ॥ १९ ॥ शमे हि सुमहांल्लाभस्तव पार्थस्य चोभयोः । न च रोचयसे राजन् किमन्यत् बुद्धिलाघवात् ॥ २० ॥ न शर्म्म प्राप्स्यसे राजन्नुत्क्रम्य सुहृदां वचः । अधर्म्यमयशस्यञ्च क्रियते पार्थिव त्वया ॥ २१ ॥

वैशम्पायन उवाच । एवं ब्रुवति दाशार्हे दुर्य्योधनममर्षणम् । दुःशासन इदं वाक्यमब्रवीत् कुरुसंसदि ॥ २२ ॥ न चेत् सन्धास्यसे राजन् स्वेन कामेन पाण्डवैः । बद्धा किल त्वां दास्यन्ति कुन्तीपुत्राय कौरवाः ॥ २३ ॥ वैकर्त्तनं त्वाञ्च माञ्चैवैतान्मनुजर्षभ । पाण्डवेभ्यः प्रदास्यन्ति भीष्मो द्रोणः पिता च ते ॥ २४ ॥

वैशम्पायन उवाच । भ्रातुरेतद्वचः श्रुत्वा धार्त्तराष्ट्रः सुयोधनः । क्रुद्धः प्रातिष्ठितोत्थाय महानाग इव श्वसन् ॥ २५ ॥ विदुरं धृतराष्ट्रञ्च महाराजञ्च वाह्लिकम् । कृपञ्च सोमदत्तञ्च भीष्मं द्रोणं जनार्द्दनम् ॥ २६ ॥ सर्वानेताननादृत्य दुर्मतिर्निरपत्रपः । अशिष्टवदमर्य्यादो मानी मान्यावमानिता ॥ २७ ॥ तं प्रस्थितमभिप्रेक्ष्य भ्रातरो मनुजर्षभम् । अनुजग्मुः सहामात्या राजानश्चापि सर्वशः ॥२८॥ सभायामुत्थितं क्रुद्धं प्रस्थितं भ्रातृभिः सह । दुर्य्योधनमभिप्रेक्ष्य भीष्मः शान्तनवोऽब्रवीत् ॥ २९ ॥ धर्म्मार्थावभिसंत्यज्य संरम्भं योऽनुमन्यते । हसन्ति व्यसने तस्य दुर्हृदो न चिरादिव ॥ ३० ॥ दुरात्मा राजपुत्रोऽयं धार्त्तराष्ट्रोऽनुपायवित् । मिथ्याभिमानी राज्यस्य क्रोधलोभवशानुगः ॥३१॥ कालपक्वमिदं मन्ये सर्वक्षत्रं जनार्द्दन । सर्वे ह्यनुसृता मोहात् पार्थिवाः सह मन्त्रिभिः ॥ ३२ ॥ भीष्मस्याथ वचः श्रुत्वा दाशार्हः पुष्करेक्षणः । भीष्मद्रोणमुखान् सर्वानभ्यभाषत वीर्य्यवान् ॥३३॥ सर्वेषां कुरुवृद्धानां महानयमतिक्रमः । प्रसह्य मन्दमैश्वर्य्ये न नियच्छत यन्नृपम् ॥ ३४ ॥ तत्र कार्य्यमहं मन्ये कालप्राप्तमरि-

न्तमा। क्रियमाणे भवेत श्रेयस्तत सर्वं शृणुतानधा ॥ ३५॥ प्रत्यक्षमेतत भवता यद्वक्ष्यामि हित वच। भवतामानुकूल्येन यदि रोचेत भारता ॥ ३६॥ भोजराजस्य वृद्धस्य दुराचारो ह्यना त्मवान्। जीवत पितुरैश्वर्यं हृत्वा मृत्युवशङ्गत ॥ ३७॥ उग्र सेनसुत कस परित्यक्त स्वबान्धवै। ज्ञातीना हितकामेन मया शस्तो महामृधे ॥ ३८॥ आहुक पुनरस्माभिर्ज्ञातिभिश्चापि सत कृत। उग्रसेन कृतो राजा भोजराज्यस्य वर्द्धन ॥ ३९॥ कस मेक परित्यज्य कुलार्थे सर्वयादवा। सम्भूय सुखमेधन्ते भार ताम्धकवृष्णय ॥ ४०॥ अपि चाप्यवदद्राजन् परमेष्ठी प्रजा पति। व्यूढे देवासुरे युद्धेऽभ्युद्यतेष्वायुधेषु च ॥ ४१॥ द्वैधी भूतेषु लोकेषु विनश्यत्सु च भारत। अब्रवीत सृष्टिमान् देवो भगवान् लोकभावन ॥ ४२॥ पराभविष्यन्त्यसुरा दैतेया दान वैश्च। आदित्या वसवो रुद्रा भविष्यन्ति दिवौकस ॥ ४३॥ देवासुरमनुष्याश्च गन्धर्वोरगराक्षसा। अस्मिन् युद्धे सुसक्रुद्धा हनिष्यन्ति परस्परम् ॥ ४४॥ इति मत्वाब्रवीद्धर्मं परमेष्ठी प्रजा पति। वरुणाय प्रयच्छैतान् बद्धा दैतेयदानवान् ॥ ४५॥ एव मुक्तस्ततो धर्मो नियोगात् परमेष्ठिन। वरुणाय ददौ सर्वान् बद्धा दैतेयदानवान् ॥ ४६॥ तान् बद्धा धर्मपाशैश्च स्वैश्च पाशै र्जलेश्वर। वरुण सागरे यत्तो नित्यं रक्षति दानवान् ॥४७॥ तथा दुर्य्योधन कर्णं शकुनिञ्चापि सौबलम्। बद्धा दु शासन चापि पाण्डवेभ्य प्रयच्छत ॥ ४८॥ त्यजेत कुलार्थे पुरुष ग्रामस्यार्थे कुल त्यजेत। ग्राम जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ ४९॥ राजन् दुर्य्योधन बद्धा तत समाध्य पाण्डवै। तत् कृते न विन शेयु क्षत्रिया क्षत्रियर्षभ ॥ ५०॥

इति उद्योगपर्वणि भगवद्यानपर्वणि श्रीकृष्णवाक्ये सप्तविंशत्यधिकशततमोऽध्याय। १२७॥

वैशम्पायन उवाच। कृष्णस्य तु वचः श्रुत्वा धृतराष्ट्रो जनेश्वरः। विदुरं सर्व्वधर्मज्ञं त्वरमाणोऽभ्यभाषत ॥ १ ॥ गच्छ तात महाप्राज्ञां गान्धारीं दीर्घदर्शिनीम्। आनयेह तया सार्द्धमनुनेष्यामि दुर्मतिम् ॥ २ ॥ यदि सापि दुरात्मानं शमयेत् दुष्टचेतसम्। अपि कृष्णस्य सुहृदस्तिष्ठेम वचने वयम् ॥ ३ ॥ अपि लोभाभिभूतस्य पन्थानमनुदर्शयेत्। दुर्बुद्धेर्दुःसहायस्य शमार्थं ब्रुवती वचः ॥ ४ ॥ अपि नो व्यसनं घोरं दुर्य्योधनकृतं महत्। शमयेच्चिररात्राय योगक्षेमवदव्ययम् ॥ ५ ॥ राज्ञस्तु वचनं श्रुत्वा विदुरो दीर्घदर्शिनीम्। आनयामास गान्धारीं धृतराष्ट्रस्य शासनात् ॥ ६ ॥

धृतराष्ट्र उवाच। एष गान्धारि पुत्रस्ते दुरात्मा शासनातिगः। ऐश्वर्य्यलोभादैश्वर्य्यं जीवितञ्च प्रहास्यति ॥ ७ ॥ अशिष्टवदमर्य्यादः पापैः सह दुरात्मवान्। सभाया निर्गतो मूढो व्यतिक्रम्य सुहृद्वचः ॥ ८ ॥

वैशम्पायन उवाच। सा भर्त्तुर्वचनं श्रुत्वा राजपुत्री यशस्विनी। अन्विच्छन्ती महत् श्रेयो गान्धारी वाक्यमब्रवीत् ॥९॥

गान्धार्य्युवाच। आज्ञापय सुतं क्षिप्रं राज्यकामुकमातुरम्। न हि राज्यमशिष्टेन शक्यं धर्मार्थलोपिना ॥ १० ॥ आप्तुमाप्तं तथापीदमविनीतेन सर्व्वथा। त्वं ह्येवात्र भृशं गर्ह्यो धृतराष्ट्र सुतप्रिय ॥ ११ ॥ यो जानन् पापतामस्य तत् प्रज्ञामनुवर्त्तसे। स एष काममन्युभ्यां प्रलब्धो लोभमास्थितः ॥ १२ ॥ अशक्योऽद्य त्वया राजन् विनिवर्त्तयितुं बलात्। राष्ट्रप्रदाने मूढस्य बालिशस्य दुरात्मनः ॥ १३ ॥ दुःसहायस्य लुब्धस्य धृतराष्ट्रोऽश्नुते फलम्। कथं हि स्वजने भेदमुपेक्षेत महीपतिः ॥ १४ ॥ भिन्नं हि स्वजनेन त्वां प्रहसिष्यन्ति शत्रवः। या हि शक्या महाराज साम्ना दानेन वा पुनः। निस्तर्त्तुमापदः स्वेषु दण्डं कस्तत्र पातयेत् ॥१५॥

वैशम्पायन उवाच। शासनाद्धृतराष्ट्रस्य दुर्योधनममर्षणम्। मातुश्च वचनात् क्षत्ता सभां प्रावेशयत् पुनः ॥ १६ ॥ स मातुर्वचनाकाङ्क्षी प्रविवेश पुनः सभाम्। अभिताम्रेक्षणः क्रोधान्निश्वसन्निव पन्नगः ॥ १७ ॥ तं प्रविष्टमभिप्रेक्ष्य पुत्रमुत्पथमास्थितम्। विगर्हमाणा गान्धारी समर्थं वाक्यमब्रवीत् ॥ १८ ॥ दुर्योधन निबोधेदं वचनं मम पुत्रक। हितं ते सानुबन्धस्य तथा यत्या सुखोदयम् ॥ १९ ॥ दुर्योधन यदाह त्वां पिता भरतसत्तम। भीष्मो द्रोणः कृपः क्षत्ता सुहृदां कुरु तद्वचः ॥ २० ॥ भीष्मस्य तु पितुश्चैव मम चापचितिः कृता। भवेद्द्रोणमुखानाञ्च सुहृदां मान्यता त्वया ॥ २१ ॥ न हि राज्यं महाप्राज्ञ स्वेन कामेन शक्यते। अवाप्तुं रक्षितुं वापि भोक्तुं भरतसत्तम ॥ २२ ॥ न ह्यवश्येन्द्रियो राज्यमश्नीयाद्दीर्घमन्तरम्। विजितात्मा च मेधावी स राज्यमभिपालयेत् ॥ २३ ॥ कामक्रोधौ हि पुरुषमर्थेभ्यो व्यपकर्षतः। तौ तु शत्रू विनिर्जित्य राजा विजयते महीम् ॥ २४ ॥ लोकेश्वरप्रभुत्वं हि महदेतद्दुरात्मभिः। राज्यं नामेप्सितं स्थानं न शक्यमभिरक्षितुम् ॥ २५ ॥ इन्द्रियाणि महत् प्रेप्सुर्नियच्छेदर्थधर्मयोः। इन्द्रियैर्नियतैर्बुद्धिर्वर्द्धतेऽग्निरिवेन्धनैः ॥ २६ ॥ अविधेयानि हीमानि व्यापादयितुमप्यलम्। अविधेया इवादान्ता हयाः पथि कुसारथिम् ॥ २७ ॥ अविजित्य य आत्मानममात्यान् विजिगीषते। अमित्रान् वा जितामात्यः सोऽवशः परिहीयते ॥ २८ ॥ आत्मानमेव प्रथमं देशरूपेण योजयेत्। ततोऽमात्यानमित्रांश्च न मोघं विजिगीषते ॥ २९ ॥ वश्येन्द्रियं जितामात्यं धृतदण्डं विकारिषु। परीक्ष्यकारिणं धीरमत्यर्थं श्रीर्निषेवते ॥ ३० ॥ क्षुद्राक्षेणेव जालेन झषावपिहितावुभौ। कामक्रोधौ शरीरस्थौ प्रज्ञानं तौ विलुम्पतः ॥ ३१ ॥ याभ्यां हि देवाः स्वर्यातुः स्वर्गस्य पिदधुर्मुखम्।

विध्यतोऽनुपरागस्य कामक्रोधौ स्म वर्द्धितौ ॥ ३२ ॥ कामं क्रोधञ्च लोभञ्च दम्भं दर्पञ्च भूमिप । सम्यग्विजेतुं यो वेद स महीमभिजायते ॥ ३३ ॥ सततं विग्रहे युक्त इन्द्रियाणां भवेन्नृपः । ईप्सन्नर्थञ्च धर्मञ्च द्विषतांञ्च पराभवम् ॥ ३४ ॥ कामाभिभूतः क्रोधाद्वा यो मिथ्या प्रतिपद्यते । स्वेषु चान्येषु वा तस्य न सहाया भवन्त्युत ॥ ३५ ॥ एकीभूतैर्महाप्राज्ञैः शूरैररिनिवर्हणैः । पाण्डवैः पृथिवीं तात भोक्ष्यसे सहितः सुखी ॥ ३६ ॥ यथा भीष्मः शान्तनवो द्रोणश्चापि महारथः । आहतुस्तात तत् सत्यमजेयौ कृष्णपाण्डवौ ॥ ३७ ॥ प्रपद्यस्व महाबाहुं कृष्णमक्लिष्टकारिणम् । प्रसन्नो हि सुखाय स्यादुभयोरेव केशवः । ३८ ॥ सुहृदामर्थकामानां यो न तिष्ठति शासने । प्राज्ञानां कृतविद्यानां स नरः शत्रुनन्दन ॥ ३९ ॥ न युद्धे तात कल्याणं न धर्मार्थौ कुतः सुखम् । न चापि विजयो नित्यं मा युद्धे चेत आधिथाः ॥ ४० ॥ भीष्मेण हि महाप्राज्ञ पित्रा ते वाह्लिकेन च । दत्तोंऽशः पाण्डुपुत्राणां भेदात् भीतैररिन्दम ॥ ४१ ॥ तस्य चैतत् प्रदानस्य फलमद्यानुपश्यसि । यद्भुङ्क्षे पृथिवीं कृत्स्नां शूरैर्निहतकण्टकाम् ॥ ४२ ॥ प्रयच्छ पाण्डुपुत्राणां यथोचितमरिन्दम । यदीच्छसि सहामात्यो भोक्तुमर्द्धं महीमिमाम् ॥ ४३ ॥ अलमर्द्धं पृथिव्यास्ते सहामात्यस्य जीवनम् । सुहृदां वचने तिष्ठन् यशः प्राप्स्यसि भारत ॥ ४४ ॥ श्रीमद्भिरात्मवद्भिस्तैर्बुद्धिमद्भिर्जितेन्द्रियैः । पाण्डवैर्विग्रहस्तात भ्रंशयेन्महतः सुखात् ॥ ४५ ॥ निगृह्य सुहृदां मन्युं शाधि राज्यं यथोचितम् । स्वमंशं पाण्डुपुत्रेभ्य प्रदाय भरतर्षभ ॥ ४६ ॥ अलमङ्ग निकारोऽयं त्रयोदशसमा कृत । शमयैनं महाप्राज्ञ कामक्रोधसमेधितम् ॥ ४७ ॥ न चैव शक्त पार्थानां यस्त्वमर्थमभीप्ससि । सूतपुत्रो दृढ़क्रोधो भ्राता दुःशासनश्च ते ॥ ४८ ॥ भीष्मे द्रोणे कृपे कर्णे भीमसेने

धनञ्जये। धृष्टद्युम्ने च सक्रुद्धे न स्युः सर्वाः प्रजा ध्रुवम्॥४८॥ यमप्रवयमापन्नो मा कुरूंस्तात जीघन। एषा हि पृथिवी कृत्स्ना मागमत्त्वत्कृते वधम्॥५०॥ यच्च त्वं मन्यसे मूढ़ भीष्म द्रोणकृपादयः। योत्स्यन्ते सर्वशक्त्येति नैतदद्योपपद्यते॥५१॥ समं हि राज्यं प्रीतिश्च स्थानं हि विदितात्मनां। पाण्डवेष्वथ युष्मासु धर्मस्त्वभ्यधिकस्ततः॥५२॥ राजपिण्डभयादेते यदि हास्यन्ति जीवितम्। न हि शक्ष्यन्ति राजानं युधिष्ठिरमुदीक्षितुम्॥५३॥ न लोभादर्थसम्पत्तिर्नराणामिह दृश्यते। तदलं तात लोभेन प्रशाम्य भरतर्षभ॥५४॥

इति उद्योगपर्वणि भगवद्यानपर्वणि गान्धारीवाक्ये अष्टाविंशाधिकशततमोऽध्यायः॥१२८॥

---

वैशम्पायन उवाच। तत्तु वाक्यमनादृत्य सोऽर्थवन्मातृभाषितम्। पुनः प्रतस्थे संरम्भात् सकाशमकृतात्मनाम्॥१॥ ततः सभाया निर्गम्य मन्त्रयामास कौरवः। सौबलेन मताक्षेण राज्ञा शकुनिना सह॥२॥ दुर्य्योधनस्य कर्णस्य शकुनेः सौबलस्य च। दुःशासनचतुर्थानामिदमासीद्विचेष्टितम्॥३॥ पुरायमस्मान् गृह्णाति क्षिप्रकारी जनार्दनः। सहितो धृतराष्ट्रेण राज्ञा शान्तनवेन च॥४॥ वयमेव हृषीकेशं निगृह्णीम बलादिव। प्रसह्य पुरुषव्याघ्रमिन्द्रो वैरोचनिं यथा॥५॥ श्रुत्वा गृहीतं वार्ष्णेयं पाण्डवा हतचेतसः। निरुत्साहा भविष्यन्ति भग्नदंष्ट्रा इवोरगाः॥६॥ अयं ह्येषां महाबाहुः सर्वेषां शर्म वर्म च। अस्मिन् गृहीते वरदे ऋषभे सर्वसात्वताम्॥७॥ निरुद्यमा भविष्यन्ति पाण्डवाः सोमकैः सह। तस्मादयमिहैवैनं केशवं क्षिप्रकारिणम्॥८॥ क्रोशतो धृतराष्ट्रस्य बद्ध्वा योत्स्यामहे

रिपून् । तेषां पापमभिप्रायं पापानां दुष्टचेतसाम् ॥ ९ ॥ इङ्गितज्ञः कविः क्षिप्रमन्वबुध्यत सात्यकिः । तदर्थमभिनिष्क्रम्य हार्द्दिक्येन सहास्थितः ॥ १० ॥ अब्रवीत् कृतवर्म्माणं क्षिप्रं योजय वाहिनीम् । व्यूढानीकः सभाद्वारमुपतिष्ठस्व दंशितः ॥ ११ ॥ यावदाख्याम्यहञ्चैतत् कृष्णायाक्लिष्टकारिणे । स प्रविश्य सभां वीरः सिंहो गिरिगुहामिव ॥ १२ ॥ आचष्ट तमभिप्रायं केशवाय महात्मने । धृतराष्ट्रन्ततश्चैव विदुरञ्चान्वभाषत ॥ १३ ॥ तेषामेतमभिप्रायमाचचक्षे स्मयन्निव । धर्म्मादर्थाच्च कामाच्च कर्म्म साधुविगर्हितम् ॥ १४ ॥ मन्दाः कर्त्तुमिहेच्छन्ति न चावाप्यं कथञ्चन । पुरा विकुर्व्वते मूढाः पापात्मानः समागताः ॥ १५ ॥ धर्षिता काममन्युभ्यां क्रोधलोभवशानुगाः । इमं हि पुण्डरीकाक्षं जिघृक्षन्त्यल्पचेतसः ॥ १६ ॥ पटेनाग्निं प्रज्वलितं यथा बाला यथा जड़ाः । सात्यकेस्तद्वचः श्रुत्वा विदुरो दीर्घदर्शिवान् ॥ १७ ॥ धृतराष्ट्रं महाबाहुमब्रवीत् कुरुसंसदि । राजन् परीतकालास्ते पुत्राः सर्व्वे परन्तप ॥ १८ ॥ अयशस्यमशक्यञ्च कर्त्तुं कर्म्म समुद्यताः । इमं हि पुण्डरीकाक्षमभिभूय प्रसह्य च ॥ १९ ॥ निग्रहीतुं किलेच्छन्ति सहिता वासवानुजम् । इमं पुरुषशार्दूलमप्रधृष्यं दुरासदम् ॥ २० ॥ आसाद्य न भविष्यन्ति पतङ्गा इव पावकम् । अयमिच्छन् हि तान् सर्व्वान् युध्यमानान् जनार्द्दनः ॥ २१ ॥ सिंहो नागानिव क्रुद्धो गमयेत् यमसादनम् । न त्वयं निन्दितं कर्म्म कुर्य्यात् पापं कथञ्चन ॥ २२ ॥ न च धर्म्मादपक्रामेदच्युतः पुरुषोत्तमः । विदुरेणैवमुक्ते तु केशवो वाक्यमब्रवीत् ॥ २३ ॥ धृतराष्ट्रमभिप्रेक्ष्य सुहृदां शृण्वतां मिथः । राजन्नेते यदि क्रुद्धा मां निगृह्णीयुरोजसा ॥ २४ ॥ एते वा मामहं वैतानन् जानीहि पार्थिव । एतान् हि सर्व्वान् संरब्धान् नियन्तुमहमुत्सहे ॥ २५ ॥ न चाहं निन्दितं कर्म्म कुर्य्यां पापं

कथञ्चन। पाण्डवार्थं हि लुभ्यन्तः स्वार्थान् हास्यन्ति ते सुताः ॥ २६ ॥ एते चेदेवमिच्छन्ति कृतकार्यो युधिष्ठिरः। अद्यैव च्छद्मनैनाथ ये चैनाननुभारत ॥ २७ ॥ निगृह्य राजन् पार्थेभ्यो दद्यां किं दुष्कृतं भवेत्। इदन्तु न प्रवर्त्तेयं निन्दितं कर्म भारत ॥ २८ ॥ सन्निधौ ते महाराज क्रोधजं पापबुद्धिजम्। एष दुर्योधनो राजन् यथेच्छति तथास्तु तत् ॥ २९ ॥ अहन्तु सर्वाननयाननुजानामि ते नृप। एतत् श्रुत्वा तु विदुरं धृतराष्ट्रोऽभ्यभाषत ॥ ३० ॥ क्षिप्रमानय तं पापं राज्यलुब्धं सुयोधनम्। सहमित्रं सहामात्यं ससोदर्यं सहानुगम् ॥ ३१ ॥ शक्नुयां यदि पन्थानमवतारयितुं पुनः। ततो दुर्योधनं क्षत्ता पुनः प्रावेशयत् सभाम् ॥ ३२ ॥ अकामं भ्रातृभिः सार्द्धं राजभिः परिवारितम्। अथ दुर्योधनं राजा धृतराष्ट्रोऽभ्यभाषत ॥ ३३ ॥ कर्णदुःशासनाभ्याञ्च राजभिश्चाभिसंवृतम्। नृशंस पापभूयिष्ठ क्षुद्रकर्मसहायवान् ॥ ३४ ॥ पापैः सहायैः संहत्य पापं कर्म चिकीर्षसि। अशक्यमयशस्यञ्च सद्भिरपि विगर्हितम् ॥ ३५ ॥ यथा त्वादृशको मूढो व्यवस्येत् कुलपांसनः। त्वमिमं पुण्डरीकाक्षमप्रधृष्यं दुरासदम् ॥ ३६ ॥ पापैः सहायैः संहत्य निग्रहीतुं किलेच्छसि। यो न शक्यो बलात् कर्त्तुं देवैरपि सवासवैः ॥ ३७ ॥ तं त्वं प्रार्थयसे मन्द बालश्चन्द्रमसं यथा। देवैर्मनुष्यैर्गन्धर्वैरसुरैरुरगैश्च यः ॥ ३८ ॥ न सोढुं समरे शक्यस्तं न बुध्यसि केशवम्। दुर्ग्राह्यः पाणिना वायुर्दुःस्पर्शः पाणिना शशी ॥ ३९ ॥ दुर्द्धरा पृथिवी मूर्द्ध्ना दुर्ग्राह्यः केशवो बलात्। इत्युक्ते धृतराष्ट्रेण क्षत्तापि विदुरोऽब्रवीत्। दुर्योधनमभिप्रेक्ष्य धार्त्तराष्ट्रममर्षणम् ॥ ४० ॥

विदुर उवाच। दुर्योधन निबोधेदं वचनं मम साम्प्रतम्। सौभद्वारे वानरेन्द्रो द्विविदो नाम नामतः ॥ ४१ ॥ शिलावर्षेण महता छादयामास केशवम्। ग्रहीतुकामो विक्रम्य सर्वयत्नेन

माधवम् ॥ ४२ ॥ ग्रहीतुं नायकस्तव तं त्वं प्रार्थयसे बलात् । निर्मोचने षट्सहस्राः पाशैर्बद्धा महासुराः ॥ ४३ ॥ ग्रहीतुं नाशकंश्चैनं तं त्वं प्रार्थयसे बलात् । प्राग्ज्योतिषगतं शौरिं नरकः सह दानवैः ॥ ४४ ॥ ग्रहीतुं नाशकस्तत्र तं त्वं प्रार्थयसे बलात् । अनेन हि हता बाल्ये पूतना शकुनी तथा ॥ ४५ ॥ गोवर्द्धनो धारितश्च गवार्थं भरतर्षभ । अरिष्टो धेनुकश्चैव चाणूरश्च महाबलः ॥ ४६ ॥ अश्वराजश्च निहतः कंसश्चारिष्टमाचरन् । जरासन्धश्च वक्रश्च शिशुपालश्च वीर्य्यवान् ॥ ४७ ॥ बाणश्च निहतः सङ्ख्ये राजानश्च निसूदिताः । वरुणो निर्जितो राजा पावकश्चामितौजसा ॥ ४८ ॥ पारिजातञ्च हरता जितः साक्षाच्छचीपतिः । अयं कर्त्ता न क्रियते कारणञ्चापि पौरुषे ॥ ४९ ॥ यद्यदिच्छेदयं शौरिस्तत्तत् कुर्य्यादयत्नतः । एकार्णवे च स्वपता निहतौ मधुकैटभौ ॥ ५० ॥ जन्मान्तरमुपागम्य हयग्रीवस्तथा हतः । तं न बुध्यसि गोविन्दं घोरविक्रममच्युतम् ॥ ५१ ॥ आशीविषमिव क्रुद्धं तेजोराशिमनिन्दितम् । प्रधर्षयन्महाबाहुं कृष्णमक्लिष्टकारिणम् । पतङ्गोऽग्निमिवासाद्य सामात्यो न भविष्यसि ॥ ५२ ॥

इति उद्योगपर्व्वणि भगवद्यानपर्व्वणि विदुरवाक्ये एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥



वैशम्पायन उवाच । विदुरेणैवमुक्तस्तु केशवः शत्रुपूगहा । दुर्य्योधनं धार्त्तराष्ट्रमभ्यभाषत वीर्य्यवान् ॥ १ ॥ एकोऽहमिति यन्मोहान्मन्यसे मां सुयोधन । परिभूय सुदुर्बुद्धे ग्रहीतुं मां चिकीर्षसि ॥ २ ॥ इहैव पाण्डवाः सर्वे तथैवान्धकवृष्णयः । इहादित्याश्च

रुद्राश्च वसवश्च सहर्षिभिः ॥ ३ ॥ एवमुक्त्वा जहासोच्चैः केशवः
परवीरहा । तस्य संस्मयतः शौरेर्विद्युद्रूपा महात्मनः ॥४॥ अङ्गुष्ठ
मात्रास्त्रिदशा मुमुचुः पावकार्चिषः । अस्य ब्रह्मा ललाटस्थो रुद्रो
वक्षसि चाभवत् ॥ ५ ॥ लोकपाला भुजेष्वासन्नग्निरास्यादजायत ।
आदित्याश्चैव साध्याश्च वसवोऽथाश्विनावपि ॥ ६ ॥ मरुतश्च सहे
न्द्रेण विश्वेदेवास्तथैव च । बभूवुश्चैव रूपाणि यक्षगन्धर्वरक्षसाम्
॥ ७ ॥ प्रादुरास्तां तथा दोर्भ्यां सङ्कर्षणधनञ्जयौ । दक्षिणे
ऽथार्जुनो धन्वी हली रामश्च सव्यतः ॥ ८ ॥ भीमो युधिष्ठिरश्चैव
माद्रीपुत्रौ च पृष्ठतः । अन्धका वृष्णयश्चैव प्रद्युम्नप्रमुखास्ततः ॥९॥
अग्रे बभूवुः कृष्णस्य समुद्यतमहायुधाः । शङ्खचक्रगदाशक्तिशार्ङ्ग
लाङ्गलनन्दकाः ॥ १० ॥ अदृश्यन्तोद्यतान्येव सर्वप्रहरणानि च ।
नानाबाहुषु कृष्णस्य दीप्यमानानि सर्वशः ॥ ११ ॥ नेत्राभ्यां न
स्तश्चैव श्रोत्राभ्याञ्च समन्ततः । प्रादुरासन्महारौद्राः सधूमाः
पावकार्चिषः ॥ १२ ॥ रोमकूपेषु च तथा सूर्यस्येव मरीचयः ।
तं दृष्ट्वा घोरमात्मानं केशवस्य महात्मनः ॥ १३ ॥ न्यमीलयन्त
नेत्राणि राजानस्त्रस्तचेतसः । ऋते द्रोणञ्च भीष्मञ्च विदुरञ्च
महामतिम् ॥ १४ ॥ सञ्जयञ्च महाभागमृषींश्चैव तपोधनान् ।
प्रादात्तेषां स भगवान् दिव्यञ्चक्षुर्जनार्दनः ॥ १५ ॥ तद्दृष्ट्वा मह
दाश्चर्यं माधवस्य सभातले । देवदुन्दुभयो नेदुः पुष्पवर्षं पपात
च ॥ १६ ॥

त्वया ॥ २० ॥ लब्धचक्षुषमासीनं धृतराष्ट्रं नराधिपाः । विस्मिता ऋषिभिः सार्द्धं तुष्टुवुर्मधुसूदनम् ॥ २१ ॥ चचाल च मही कृत्स्ना सागरश्चापि चुक्षुभे । विस्मयं परमं जग्मुः पार्थिवा भरतर्षभ । २२ ॥ ततः स पुरुषव्याघ्रः सञ्जहार वपुः स्वकम् । तां दिव्यामद्भुतां चित्रामृद्धिमत्तामरिन्दमः ॥ २३ ॥ ततः सात्यकिमादाय पाणौ हार्द्दिक्यमेव च । ऋषिभिस्तैरनुज्ञातो निर्ययौ मधुसूदनः । २४ ॥ ऋषयोऽन्तर्हिता जग्मुस्ततस्ते नारदादयः । तस्मिन् कोलाहले वृत्ते तदद्भुतमिवाभवत् ॥ २५ ॥ तं प्रस्थितमभिप्रेक्ष्य कौरवाः सह राजभिः । अनुजग्मुर्नरव्याघ्रं देवा इव शतक्रतुम् ॥ २६ ॥ अचिन्तयन्नमेयात्मा सर्वं तद्राजमण्डलम् । निश्चक्राम ततः शौरिः सधूम इव पावकः ॥ २७ ॥ ततो रथेन शुभ्रेण महता किङ्किणीकिना । हेमजालविचित्रेण लघुना मेघनादिना ॥ २८ ॥ सूपस्करेण शुभ्रेण वैयाघ्रेण वरूथिना । शैव्यसुग्रीवयुक्तेन प्रत्यदृश्यत दारुकः ॥ २९ ॥ तथैव रथमास्थाय कृतवर्म्मा महारथः । वृष्णीनां सम्मतो वीरो हार्द्दिक्यः समदृश्यत ॥ ३० ॥ उपस्थितरथं शौरिं प्रयास्यन्तमरिन्दमम् । धृतराष्ट्रो महाराजः पुनरेवाभ्यभाषत ॥ ३१ ॥ यावद्बलं मे पुत्रेषु पश्यतस्ते जनार्द्दन । प्रत्यक्षन्ते न ते किञ्चित् परोक्षं शत्रुकर्षण ॥३२॥ कुरूणां शममिच्छन्तं यतमानञ्च केशव । विदित्वैतामवस्थां मे नाभिशङ्कितुमर्हसि ॥ ३३ ॥ न मे पापोऽस्त्यभिप्रायः पाण्डवान् प्रति केशव । ज्ञातमेव हि ते वाक्यं यन्मयोक्तः सुयोधनः ॥ ३४ ॥ जानन्ति कुरवः सर्वे राजानश्चैव पार्थिवाः । शमे प्रयतमानं मां सर्वयत्नेन माधव ॥ ३५ ॥

वैशम्पायन उवाच । ततोऽब्रवीन्महाबाहुर्धृतराष्ट्रं जनेश्वरम् । द्रोणं पितामहं भीष्मं क्षत्तारं वाह्लिकं कृपम् ॥ ३६ ॥ प्रत्यक्षमेतद्भवतां यद् वृत्तं कुरुसंसदि । यथा चाशिष्टवन्मन्दो रोषा-

दय समुत्थित ॥ ३७ ॥ वदत्यनीयमात्मानं धृतराष्ट्रो महीपति । आपृच्छे भरत सर्वान् गमिष्यामि युधिष्ठिरम् ॥ ३८ ॥ आमन्त्रा प्रस्थितं शौरिं रथस्थं पुरुषर्षभम् । अनुजग्मुर्महेष्वासा प्रवीरा भरतर्षभा ॥ ३९ ॥ भीष्मो द्रोण कृप चत्ता धृतराष्ट्रोऽथ वाह्लिक । अश्वत्थामा विकर्णश्च युयुत्सुश्च महारथ ॥ ४० ॥ ततो रथेन शुभ्रेण महता किङ्किणीकिना । कुरूणां पश्यता द्रष्टुं स्वसारं स्वपितुर्ययौ ॥ ४१ ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि विश्वरूपदर्शने त्रिंशदधिकशततमोऽध्याय ॥ १३० ॥

---

वैशम्पायन उवाच । प्रविश्याथ गृहं तस्याश्चरणावभिवाद्य च । आचख्यौ तत समासेन यद्वृत्तं कुरुसंसदि ॥ १ ॥

वासुदेव उवाच । उक्तं बहुविधं वाक्यं ग्रहणीयं सहेतुकम् । ऋषिभिश्चैव च मया न चासौ तद्गृहीतवान् ॥ २ ॥ कालपक्क मिदं सर्वं सुयोधनवशानुगम् । आपृच्छे भवतीं शीघ्रं प्रयास्ये पाण्डवान् प्रति ॥ ३ ॥ किं वाच्या पाण्डवेयास्ते भवत्या वचना न्मया । तद्ब्रूहि त्वं महाप्राज्ञे शुश्रूषे वचनं तव ॥ ४ ॥

कुन्त्युवाच । ब्रूया केशव राजानं धर्मात्मानं युधिष्ठिरम् । भूयास्ते हीयते धर्मो मा पुत्रक वृथा कृथा ॥ ५ ॥ श्रोत्रियस्येव ते राजन् मन्दकस्याविपश्चित । अनुवाकहता बुद्धिर्धर्ममेवैक मीक्षते ॥ ६ ॥ अङ्गावेक्षस्व धर्मं त्वं यथा सृष्ट स्वयम्भुवा । बाहुत क्षत्रिय सृष्टो बाहुवीर्योपजीविता ॥ ७ ॥ क्रूराय कर्मणे नित्य प्रजाना परिपालने । शृणु चात्रोपमामेकां या वृद्धेभ्य श्रुता मया ॥ ८ ॥ मुचुकुन्दस्य राजर्षेरददत् पृथिवीमिमाम् । पुरा वैश्रवण प्रीतो न चासौ तद्गृहीतवान् ॥ ९ ॥ बाहुवीर्यार्जित

राज्यमश्नीयामिति कामये । ततो वैश्रवणः प्रीतो विस्मितः समपद्यत ॥ १० ॥ मुचुकुन्दस्ततो राजा सोऽन्वशासद्वसुन्धराम् । बाहुवीर्य्यार्ज्जितां सम्यक् चत्रधर्ममनुव्रतः ॥ ११ ॥ यं हि धर्मं चरन्तीह प्रजा राज्ञा सुरक्षिताः । चतुर्थं तस्य धर्मस्य राजा विन्देत भारत ॥ १२ ॥ राजा चरति चेद्धर्मं देवत्वायैव कल्पते । स चेदधर्मञ्चरति नरकायैव गच्छति ॥ १३ ॥ दण्डनीतिः स्वधर्मेण चातुर्वर्ण्यं नियच्छति । प्रयुक्ता स्वामिना सम्यगधर्मेभ्यश्च यच्छति ॥ १४ ॥ दण्डनीत्या यदा राजा सम्यक्कार्त्स्न्येन वर्त्तते । तदा कृतयुगं नाम कालः श्रेष्ठः प्रवर्त्तते ॥ १५ ॥ कालो वा कारणं राज्ञो राजा वा कालकारणम् । इति ते संशयो माभूद्राजा कालस्य कारणम् ॥ १६ ॥ राजा कृतयुगस्रष्टा त्रेतायां द्वापरस्य च । युगस्य च चतुर्थस्य राजा भवति कारणम् ॥ १७ ॥ कृतस्य करणाद्राजा स्वर्गमत्यन्तमश्नुते । त्रेतायाः करणाद्राजा स्वर्गं नात्यन्तमश्नुते ॥ १८ ॥ प्रवर्त्तनात् द्वापरस्य यथाभागमुपाश्नुते । कलेः प्रवर्त्तनाद्राजा पापमत्यन्तमश्नुते ॥ १९ ॥ ततो वसति दुष्कर्मा नरके शाश्वतीः समाः । राजदोषेण हि जगत् स्पृश्यते जगतः स च ॥ २० ॥ राजधर्मानवेक्षस्व पितृपैतामहोचितान् । नैतद्राजर्षिवृत्तं हि यत्र त्वं स्थातुमिच्छसि ॥ २१ ॥ न हि वैक्लव्यसंसृष्ट आनृशंस्यव्यवस्थित । प्रजापालनसम्भूतं फलं किञ्चिन्न लप्स्यसे ॥ २२ ॥ न ह्येतामाशिषं पाण्डुर्न चाहं न पितामहः । प्रयुक्तवन्तः पूर्वं ते यया चरसि मेधया ॥ २३ ॥ यज्ञो दानं तपः शौर्य्यं प्रज्ञा सन्तानमेव च । माहात्म्यं बलमोजश्च नित्यमाशंसितं मया ॥ २४ ॥ नित्यं स्वाहा स्वधा नित्यं दद्युर्मानुषदेवताः । दीर्घमायुर्धनं पुत्रान् सम्यगाराधिताः शुभाः ॥ २५ ॥ पुत्रेष्वाशासते नित्यं पितरो दैवतानि च । दानमध्ययनं यज्ञः प्रजानां परिपालनम् ॥ २६ ॥ एतद्धर्ममधर्मं वा जन्मनैवाभ्यजायथाः ।

ते तु वैद्या कुले जाता अवृत्त्या तात पीड़िता ॥ २७ ॥ यत्र दानपतिं शूर क्षुधिता पृथिवीचरा। प्राप्य तुष्टा प्रतिष्ठन्त धर्मं कोऽभ्यधिकस्ततः ॥ २८ ॥ दानेनान्य बलेनान्य तथा सूनृतया परम्। सर्वत प्रतिगृह्णीयाद्राज्य प्राप्येह धार्मिक ॥ २९ ॥ ब्राह्मण प्रचरेत भैक्ष्य क्षत्रिय परिपालयेत। वैश्यो धनार्जन कुर्यात् शूद्र परिचरेत्त तान् ॥ ३० ॥ भैक्ष्य विप्रतिषिद्धन्ते कृषिर्नैवोपपद्यते। क्षत्रियोऽसि क्षतात त्राता बाहुवीर्योप जीविता ॥ ३१ ॥ उद्धम्य सुरमुत्कर्षैदाजानेयकृत स्मरन्। कुरु सत्त्वस्य मानस्य विद्धि पौरुषमात्मन ॥ ३२ ॥ पितृग्रमश्च महा बाहो निमग्न पुनरुद्धर। साम्ना भेदेन दानेन दण्डेनाथ नयेन वा ॥ ३३ ॥ ततो दु खतर किन्तु यदहं हीनबान्धवा। पर पिण्डमुदीक्षे वै त्वा सूत्वा मित्रनन्दनम् ॥ ३४ ॥ युध्यस्व राज धर्मेण मा निमज्जी पितामहान्। मा गम क्षीणपुण्यस्य सानुज पापिकां गतिम् ॥ ३५ ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि कुन्तीवाक्ये एकत्रिंशदधिकशततमोऽध्याय ॥ १३१ ॥

---

कुन्त्युवाच। अत्राप्युदाहरन्तीममितिहास पुरातनम्। विदु लायाश्च संवाद पुत्रस्य च परन्तप ॥ १ ॥ तत श्रेयश्च भूयश्च यथावद्वक्तुमर्हति। यशस्विनी मन्युमती कुले जाता विभावरी ॥ २ ॥ क्षत्रधर्मरता दान्ता विदुला दीर्घदर्शिनी। विश्रुता राजसंसत्सु श्रुतवाक्या बहुश्रुता ॥ ३ ॥ विदुला नाम राजन्या जगर्हे पुत्रमौरसम्। निर्जित सिन्धुराजेन शयान दीनचेतसम् ॥ ४ ॥

विदुलोवाच। अनन्दन ममाजात द्विषता हर्षवर्धन। न मया त्व पित्रा च जात क्वाभ्यागतो ह्यसि ॥ ५ ॥ निर्मन्यु

श्वाप्यनङ्गेन पुरुषः क्लीवसाधनः। यावज्जीवं निराशोऽसि कल्याणाय धुरं वह ॥ ६ ॥ मात्मानमवमन्यस्व मैनमल्पेन बीभरः। मनः कृत्वा सुकल्याणं मा भैस्त्वं प्रतिसंहर ॥ ७ ॥ उत्तिष्ठ हे कापुरुष मा शेष्वैवं पराजितः। अमित्रान्नन्दयन् सर्वान्निर्मानो बन्धु शोकदः ॥ ८ ॥ सुपूरा वै कुनदिका सुपूरो मूषिकाञ्जलिः। सुसन्तोषः कापुरुषः स्वल्पकेनैव तुष्यति ॥ ९ ॥ अप्यहेराहरन् दंष्ट्रां मा श्वेव निधनं व्रज। अपि वा संशयं प्राप्य जीवितेऽपि पराक्रमेः ॥ १० ॥ अप्यरेः श्येनवच्छिद्रं पश्येस्त्वं विपरिक्रमन्। विनदन् वाथ वा तूष्णीं व्योम्नि वापरिशङ्कितः ॥ ११ ॥ त्वमेवं प्रेतवच्छेषे कस्माद्वज्रहतो यथा। उत्तिष्ठ हे कापुरुष मा स्वाप्सीः शत्रुनिर्जितः ॥ १२ ॥ मास्तं गमस्त्वं कृपणो विश्रूयस्व स्वकर्मणा। मा मध्ये मा जघन्ये त्वं माधोभूस्तिष्ठ चोर्जितः ॥ १३ ॥ अलातं तिन्दुकस्येव मुहूर्त्तमपि हि ज्वल। मा तुषाग्निरिवानर्चिर्धूमायस्व जिजीविषुः ॥ १४ ॥ मुहूर्त्तं ज्वलितं श्रेयो न च धूमायितञ्चिरम्। मा ह स्म कस्यचिद्गेहे जनी राज्ञः खरो मृदुः ॥ १५ ॥ कृत्वा मानुष्यकं कर्म सृत्वाजिं यावदुत्तमम्। धर्मस्यानृण्यमाप्नोति न चात्मानं विगर्हते ॥ १६ ॥ अलब्ध्वा यदि वा लब्ध्वा नानुशोचति पण्डितः। आनन्तर्य्यञ्चारभते न प्राणानां धनायते ॥ १७ ॥ उद्भावयस्व वीर्य्यं वा तां वा गच्छ ध्रुवां गतिम्। धर्मं पुत्राग्रतः कृत्वा किन्निमित्तं हि जीवसि ॥ १८ ॥ इष्टापूर्त्तं हि ते क्लीव कीर्त्तिश्च सकला हता। विच्छिन्नं भोगमूलं ते किन्निमित्तं हि जीवसि ॥ १९ ॥ शत्रुर्निमज्जता ग्राह्यो जङ्घायां प्रपतिष्यता। विपरिच्छिन्नमूलोऽपि न विषीदेत् कथञ्चन ॥ २० ॥ उद्यम्य धुरमुत्कर्षेदाजानेयकृतं स्मरन्। कुरु सत्त्वञ्च मानञ्च विद्धि पौरुषमात्मनः ॥ २१ ॥ उद्भावय कुलं मग्नं त्वत्कृते स्वयमेव हि। यस्य वृत्तं न जल्पन्ति मानवा महदद्भु-

तम् ॥ २२ ॥ राशिवर्द्धनमात्र स नैव स्त्री न पुन पुमान् । दाने
तपसि सत्ये च यस्य नोच्चारित यश ॥ २३ ॥ विद्यायामर्थलाभे
वा मातुरुच्चार एव स । श्रुतेन तपसा वापि श्रिया वा विक्रमेण
वा ॥ २४ ॥ जनान् योऽभिभवत्यन्यान् कर्मणा हि स वै पुमान् ।
न त्वेव जाल्मीं कापालीं वृत्तिमेषितुमर्हसि ॥ २५ ॥ नृशंस्या
मयशस्याञ्च दु खां कापुरुषोचिताम् । यमेनमभिनन्देयुरमित्रा
पुरुष कृशम् ॥ २६ ॥ लोकस्य समवज्ञात निहीनासनवाससम् ।
अहो लाभकरं हीनमल्पजीवनमल्पकम् ॥ २७ ॥ नेदृश बन्धु-
मासाद्य बान्धव सुखमेधते । अवृत्त्यैव विपत्स्यामो वय राष्ट्रात्
प्रवासिता ॥ २८ ॥ सर्वकामरसैर्हीना स्थानभ्रष्टा नकिञ्चना ।
अवर्णकारिण सत्सु कुलवंशस्य नाशनम् ॥ २९ ॥ कलिं पुत्र
प्रवादेन सञ्जय त्वामजीजनम् । निरामर्ष निरुत्साह निर्वीर्य्य
मरिनन्दनम् ॥ ३० ॥ मा स्म सीमन्तिनी काचित् जनयेत पुत्र-
मीदृशम् । मा धूमाय ज्वलात्यन्तमाक्रम्य जहि शात्रवान् ॥ ३१ ॥
ज्वल मूर्द्धन्यमित्राणा मुहूर्त्तमपि वा क्षणम । एतावानेव पुरुषो
यदमर्षी यदक्षमी ॥ ३२ ॥ क्षमावान्निरमर्षश्च नैव स्त्री न पुन
पुमान् । सन्तोषो वै श्रिय हन्ति तथानुक्रोश एव च ॥ ३३ ॥
अनुत्थानभये चोभे निरीहो नाश्नुते महत् । एभ्यो निकृतिपापेभ्य
प्रमुञ्चात्मानमात्मना ॥ ३४ ॥ आयस हृदय कृत्वा मृगयस्व पुन
स्वकम । पुर विषहते यस्मात तस्मात पुरुष उच्यते ॥ ३५ ॥
तमाहुर्व्यर्थनामान स्त्रीवत् य इह जीवति । शूरस्योर्जितचित्तस्य
सिंहविक्रान्तचारिण ॥ ३६ ॥ दिष्टभाव गतस्यापि विघसे मोदते
प्रजा । य आत्मन प्रियसुखे हित्वा मृगयते श्रियम् । अमात्या
नामथो हर्षमादधात्यचिरेण स ॥ ३७ ॥

पुत्र उवाच । किं नु ते मामपश्यन्त्या पृथिव्या अपि सर्वया ।
किमाभरणकृत्यन्ते किं भोगैर्जीवितेन वा ॥ ३८ ॥

मातोवाच । अनादृतानां ये लोका हियन्तस्तानवाप्नुयुः ।
ये त्वादृतात्मनां लोकाः सुहृदस्तान् व्रजन्तु नः ॥ ३९ ॥ भृत्यै-
र्विहीयमानानां परपिण्डोपजीविनाम् । कृपणानामसत्त्वानां मा
वृत्तिमनुवर्त्तयाः ॥ ४० ॥ अनु त्वां तात जीवन्तु ब्राह्मणा सुहृद-
स्तथा । पर्ज्जन्यमिव भूतानि देवा इव शतक्रतुम् ॥ ४१ ॥ यमा-
जीवन्ति पुरुषं सर्वभूतानि सञ्जय । पक्वद्रुममिवासाद्य तस्य
जीवितमर्थवत् ॥ ४२ ॥ यस्य शूरस्य विक्रान्तैरेधन्ते बान्धवाः
सुखम् । त्रिदशा इव शक्रस्य साधु तस्येह जीवितम् ॥ ४३ ॥
स्वबाहुबलमाश्रित्य योऽभ्युज्जीवति मानवः । स लोके लभते
कीर्त्तिं परत्र च शुभां गतिम् ॥ ४४ ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि विदुलापुत्रानुशासने
द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥



विदुलोवाच । अथैतस्यामवस्थायां पौरुषं हातुमिच्छसि ।
निहीनसेवितं मार्गं गमिष्यस्यचिरादिव ॥ १ ॥ यो हि तेजो
यथाशक्ति न दर्शयति विक्रमात् । क्षत्रियो जीविताकाङ्क्षी स्तेन
इत्येव तं विदुः ॥ २ ॥ अर्थवन्त्युपपन्नानि वाक्यानि गुणवन्ति च ।
नैव सम्प्राप्नुवन्ति त्वां मुमूर्षुमिव भेषजम् ॥ ३ ॥ सन्ति वै सिन्धु-
राजस्य सन्तुष्टा न तथा जनाः । दौर्बल्यादासते मूढा व्यसनौघ-
प्रतीक्षिणः ॥ ४ ॥ सहायोपचितिं कृत्वा व्यवसायं ततस्ततः ।
अनुदुष्येयुरपरे पश्यन्तस्तव पौरुषम् ॥ ५ ॥ तैः कृत्वा सह सङ्घातं
गिरिदुर्गालयञ्चर । कालव्यसनमाकाङ्क्षन्नेवायमजरामरः ॥ ६ ॥
सञ्जयो नामतश्च त्वं न च पश्यामि तत् त्वयि । अन्वर्थनामा भव
मे पुत्र मा व्यर्थनामकः ॥ ७ ॥ सम्यग्दृष्टिर्महाप्राज्ञो बालं त्वा
ब्राह्मणोऽब्रवीत् । अयं प्राप्य महत् कृच्छ्रं पुनर्वृद्धिं गमिष्यति

॥ ८ ॥ तस्य स्मरन्ती वचनमाप्स्यसे विजयं तव। तस्मात्तात ब्रवीमि त्वां वक्ष्यामि च पुनः पुनः ॥ ९ ॥ यस्य ह्यर्थाभिनिर्वृत्तौ भवन्त्याप्यायिताः परे। तस्यार्थसिद्धिर्नियता नयेष्वर्थानुसारिणः ॥ १० ॥ समृद्धिरसमृद्धिर्वा पूर्वेषां मम सञ्जय। एवं विद्वान् युद्धमना भव मा प्रत्युपाहर ॥ ११ ॥ नातः पापीयसीं काञ्चिदवस्थां शम्बरोऽब्रवीत्। यत्र नैवाद्य न प्रातर्भोजनं प्रतिदृश्यते ॥ १२ ॥ पतिपुत्रवधादेतत् परमं दुःखमब्रवीत्। दारिद्र्यमिति यत् प्रोक्तं पर्य्यायमरणं हि तत् ॥ १३ ॥ अहं महाकुले जाता ह्रदाद्ध्रदमिवागता। ईश्वरी सर्वकल्याणी भर्त्रा परमपूजिता ॥ १४ ॥ महार्हमाल्याभरणां सुमृष्टां वरवाससम्। पुरा दृष्ट्वा सुहृद्वर्गो मामपश्यत् सुदुर्गताम् ॥ १५ ॥ यदा माञ्चैव भार्य्याञ्च द्रष्टासि भृशदुर्बलाम्। न तदा जीवितेनार्थो भविता तव सञ्जय ॥ १६ ॥ दासकर्मकरान् भृत्यानाचार्य्यर्त्विक्पुरोहितान्। अवृत्त्यास्मान् प्रजहतो दृष्ट्वा किं जीवितेन ते ॥ १७ ॥ यदि कृत्यं न पश्यामि तवाद्याहं यथा पुरा। श्लाघनीयं यशस्यञ्च का शान्तिर्हृदयस्य मे ॥ १८ ॥ नेति चेद्ब्राह्मणं ब्रूयां दीर्य्येत हृदयं मम। न ह्यहं न च मे भर्त्ता नेति ब्राह्मणमुक्तवान् ॥ १९ ॥ वयमाश्रयणीयाः स्म न श्रोतारः परस्य च। नान्यमानाद्य जीवन्ती परित्यक्ष्यामि जीवितम् ॥ २० ॥ अपारे भव नः पारमप्लवे भव नः प्लवः। कुरुष्व स्थानमस्थाने मृतान् सञ्जीवयस्व नः ॥ २१ ॥ सर्वे ते शत्रवः सह्या न चेज्जीवितुमर्हसि। अथ चेदीदृशीं वृत्तिं क्लीवामभ्युपपद्यसे ॥ २२ ॥ निर्विण्णात्मा हतमना मुञ्चैतां पापजीविकाम्। एकशत्रुवधेनैव शूरो गच्छति विश्रुतिम् ॥ २३ ॥ इन्द्रो वृत्रवधेनैव महेन्द्रः समपद्यत। माहेन्द्रञ्च ग्रहं लेभे लोकानाञ्चेश्वरोऽभवत् ॥ २४ ॥ नाम विश्राव्य वै सङ्ख्ये शत्रूनाहूय दंशितान्। सेनाग्रञ्चापि विद्राव्य हत्वा वा पुरुषं वरम् ॥ २५ ॥

यदैव लभते वीरः सुयुद्धेन महत् यशः। तदैव प्रव्यथन्तेऽस्य शत्रवो विनमन्ति च॥ ३६॥ त्यक्तात्मानं रणे दक्षं शूरं कापुरुषा जनाः। अवशाः पूरयन्ति स्म सर्वकामसमृद्धिभिः॥ ३७॥ राज्यं चाप्युग्रविभ्रंशं संशयो जीवितस्य वा। न लब्धस्य हि शत्रोर्वै शेषं कुर्वन्ति साधवः॥ ३८॥ स्वर्गद्वारोपमं राज्यमथवाप्यमृतोपमम्। रुद्धमेकायने मत्वा पतोल्मुक इवारिषु॥ ३९॥ जहि शत्रून् रणे राजन् स्वधर्ममनुपालय। मा त्वाद्दर्श सुकृपणं शत्रूणां भयवर्द्धनम्॥ ४०॥ अस्मदीयैश्च शोचद्भिर्नदद्भिश्च परैर्वृतम्। अपि त्वां नानुपश्येयं दीना दीनमिव स्थितम्॥ ४१॥ हृष्य सौवीरकन्याभिः श्लाघ्यः स्वार्थैर्यथा पुरा। मा च सैन्धवकन्यानामवसन्नो वशङ्गमः॥ ४२॥ युवा रूपेण सम्पन्नो विद्ययाभिजनेन च। यस्त्वादृशो विकुर्वीत यशस्वी लोकविश्रुतः॥ ४३॥ अनड्वानिव वोढव्यो मन्ये मरणमेव तत्। यदि त्वामनुपश्यामि परस्य प्रियवादिनम्॥ ४४॥ पृष्ठतोऽनुव्रजन्तं वा का शान्तिर्हृदयस्य मे। नास्मिन् जातु कुले जातो गच्छेत् योऽन्यस्य पृष्ठतः॥ ४५॥ न त्वं परस्यानुचरस्तात जीवितुमर्हसि। अहं हि क्षत्रहृदयं वेद यत् परिशाश्वतम्॥ ४६॥ पूर्वैः पूर्वतरैः प्रोक्तं परैः परतरैरपि। शाश्वतञ्चाव्ययञ्चैव प्रजापतिविनिर्मितम्॥ ४७॥ यो वै कश्चिदिहाजातः क्षत्रियः क्षत्रधर्मवित्। भयात् वृत्तिं समीक्ष्यैव न नमेदिह कस्यचित्॥ ४८॥ उद्यच्छेदेव न नमेदुद्यमो ह्येव पौरुषम्। अप्यपर्वणि भज्येत न नमेतेह कस्यचित्॥ ४९॥ मातङ्गो मत्त इव च परीयात् स महामनाः। ब्राह्मणेभ्यो नमेन्नित्यं धर्मायैव च सञ्जय॥ ५०॥ नियच्छन्नितरान् वर्णान् विनिघ्नन् सर्वदुष्कृतः। ससहायोऽसहायो वा यावज्जीवं तथा भवेत्॥ ५१॥

इति उद्योगपर्वणि भगवद्यानपर्वणि विदुलापुत्रानुशासने त्रयस्त्रिंशदधिकशततमोऽध्यायः॥ १३३॥

पुत्र उवाच। कृष्णायसस्येव च ते संहृत्य हृदयं कृतम्। मम मातस्त्वकरुणे वैरप्रज्ञे ह्यमर्षणे॥१॥ अहो क्षत्रसमाचारो यत्र मामितरं यथा। नियोजयसि युद्धाय परमातेव मान्तथा॥२॥ ईदृश वचन ब्रूयात भवती पुत्रमेकजम्। किन्नु ते मामपश्यन्त्या पृथिव्या अपि सर्वया॥३॥ किमाभरणकृत्येन किम्भोगैर्जीवितेन वा। मयि वा सङ्गरहिते प्रियपुत्रे विशेषतः॥४॥

मातोवाच। सर्वावस्था हि विदुषा तात धर्मार्थकारणात्। तावेवाभिसमीक्ष्याह सञ्जय त्वामचूचुदम्॥५॥ स समीक्ष्य क्रमोपेतो मुख्यः कालोऽयमागतः। अस्मिंश्चेदागते काले कार्ये न प्रतिपद्यसे॥६॥ असम्भावितरूपस्त्वमानृशंस करिष्यसि। तं त्वामयशसा स्पृष्टं न ब्रूया यदि सञ्जय॥७॥ खरीवात्सल्यमाहुस्तन्निःसामर्थ्यमहेतुकम्। सद्भिर्विगर्हितं मार्गं त्यज मूर्खनिषेवितम्॥८॥ अविद्या वै महत्यस्ति यामिमाः संश्रिताः प्रजाः। तव स्यात् यदि सद्वृत्तं तेन मे त्वं प्रियो भवेः॥९॥ धर्मार्थगुणयुक्तेन नेतरेण कथञ्चन। दैवमानुषयुक्तेन सद्भिराचरितेन च॥१०॥ यो ह्येवमविनीतेन रमते पुत्रनप्तृणा। अनुत्थानवता चापि दुर्विनीतेन दुर्धिया॥११॥ रमते यस्तु पुत्रेण मोघं तस्य प्रजाफलम्। अकुर्वन्तो हि कर्माणि कुर्वन्तो निन्दितानि च॥१२॥ सुखं नैवेह नामुत्र लभन्ते पुरुषाधमाः। युद्धाय क्षत्रियः सृष्टः सञ्जयेह जयाय च॥१३॥ जयन् वा बध्यमानो वा प्राप्नोतीन्द्रसलोकताम्। न शक्रभवने पुण्ये दिवि तत् विद्यते सुखम्॥१४॥ यदमित्रान् वशे कृत्वा क्षत्रियः सुखमेधते। मन्युना दह्यमानेन पुरुषेण मनस्विना॥१५॥ निकृतेनेह बहुशः शत्रून् प्रति जिगीषया। आत्मानं वा परित्यज्य शत्रुं वा विनिपात्य च॥१६॥ अतोऽन्येन प्रकारेण शान्तिरस्य कुतो भवेत्। इह प्राज्ञो हि पुरुषः स्वल्पमप्रियमिच्छति॥१७॥ यस्य स्वल्पं प्रियं लोके

ध्रुवं तस्याल्पमप्रियम्। प्रियाभावाच्च पुरुषो नैव प्राप्नोति शोभनम्। ध्रुवञ्चाभावमभ्येति गत्वा गङ्गेव सागरम्॥ १८॥

पुत्र उवाच। नेयं मतिस्त्वया वाच्या मातः पुत्रे विशेषतः। कारुण्यमेवात्र पश्य भूत्वेह जड़मूकवत्॥ १९॥

मातोवाच। अतो मे भूयसी नन्दिर्यद्देवमनुपश्यसि। चोद्यं मां चोदयस्येतत् भृशं वै चोदयामि ते॥ २०॥ अथ त्वां पूजयिष्यामि हत्वा वै सर्व्वसैन्धवान्। अहं पश्यामि विजयं कृत्स्नं भाविनमेव ते॥ २१॥

पुत्र उवाच। अकोषस्यासहायस्य कुतः सिद्धिर्जयो मम। इत्यवस्थां विदित्वैतामात्मनात्मनि दारुणाम्॥ २२॥ राज्याद्भावो निवृत्तो मे त्रिदिवादिव दुष्कृतः। ईदृशं भवती कञ्चिदुपायमनुपश्यति॥ २३॥ तन्मे परिणतप्रज्ञे सम्यक् प्रब्रूहि पृच्छते। करिष्यामि हि तत् सर्व्वं यथावदनुशासनम्॥ २४॥

मातोवाच। पुत्र नात्मावमन्तव्यः पूर्व्वाभिरसमृद्धिभिः। अभूत्वा हि भवन्त्यर्था भूत्वा नश्यन्ति चापरे॥ २५॥ अमर्षेणैव चाप्यर्था नारब्धव्याः सुबालिशैः। सर्व्वेषां कर्म्मणां तात फले नित्यमनित्यता॥ २६॥ अनित्यमिति जानन्तो न भवन्ति भवन्ति च। अथ ये नैव कुर्व्वन्ति नैव जातु भवन्ति ते॥ २७॥ ऐकगुण्यमनीहायामभावः कर्म्मणां फलम्। अथ द्वैगुण्यमीहायां फलं भवति वा न वा॥ २८॥ यस्य प्रागेव विदिता सर्व्वार्थानामनित्यता। नुदेद्वृद्धिसमृद्धी स प्रतिकूले नृपात्मज॥ २९॥ उत्थातव्यं जागृतव्यं योक्तव्यं भूतिकर्म्मसु। भविष्यतीत्येव मनः कृत्वा सततमव्यथैः॥ ३०॥ मङ्गलानि पुरस्कृत्य ब्राह्मणांश्चेश्वरैः सह। प्राज्ञस्य नृपतेराशु वृद्धिर्भवति पुत्रक॥ ३१॥ अभिवर्त्तति लक्ष्मीस्तं प्राचीमिव दिवाकरः। निदर्शनान्युपायांश्च बहून्युद्धर्षणानि च॥ ३२॥ अनुदर्शितरूपोऽसि पश्यामि कुरु पौरुषम्। पुरु-

प्रार्थमभिप्रेत समाहर्त्तुमिहार्हसि ॥ ३३ ॥ क्रुद्धान् लुब्धान् परि
क्षीणानवलिप्तान् विमानितान्। स्पर्द्धिनश्चैव ये केचित्तान् युक्त
उपधारय ॥ ३४ ॥ एतेन त्वं प्रकारेण महतो भेत्स्यसे गणान्।
महावेग इवोद्धूतो मातरिश्वा बलाहकान् ॥ ३५ ॥ तेषामग्र
प्रदायी स्या कल्योत्थायी प्रियंवद। ते त्वां प्रियं करिष्यन्ति
पुरोधास्यन्ति च ध्रुवम् ॥ ३६ ॥ यदैव शत्रु जानीयात सपत्नं
त्यक्तजीवितम। तदैवास्मादुद्विजते सर्पाद् वेश्मगतादिव ॥ ३७ ॥ तं
विदित्वा पराक्रान्त वशे न कुरुते यदि। निर्वादैर्निर्वदेदेनमन्तत
स्तद्भविष्यति ॥ ३८ ॥ निर्वादादास्पदं लब्ध्वा धनवृद्धिर्भविष्यति।
धनवन्त हि मित्राणि भजन्ते चाश्रयन्ति च ॥ ३९ ॥ स्खलितार्थं
पुनस्तानि सन्त्यजन्ति च बान्धवा। अप्यस्मिन्नाश्वसन्ते च जुगुप्
सन्ते च तादृशम् ॥ ४० ॥ शत्रु कृत्वा य सहाय विश्वासमुप
गच्छति। अत सम्भाव्यमेवैतत यद्राज्य प्राप्नुयादिति ॥ ४१ ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि विदुलापुत्रानुशासने
चतुस्त्रिंशदधिकशततमोऽध्याय ॥ १३४ ॥

---

मातोवाच। नैव राज्ञा दर कार्यो जातु कस्याञ्चिदापदि।
अथ चेदपि दीर्णः स्यान्नैव वर्त्तेत दीर्णवत् ॥ १ ॥ दीर्णं हि
दृष्ट्वा राजानं सर्वमेवानुदीर्य्यते। राष्ट्र बलममात्याश्च पृथक्
कुर्वन्ति ते महीम् ॥ २ ॥ शत्रूनेके प्रपद्यन्ते प्रजहत्यपरे पुन।
अन्ये तु प्रजिहीर्षन्ति ये पुरस्ताद्विमानिता ॥ ३ ॥ य एवा
त्यन्तसुहृदस्त एवं पर्य्युपासते। अशक्तय स्वस्तिकामा बद्धवत्सा
इला इव ॥ ४ ॥ शोचन्तमनुशोचन्ति पतितानिव बान्धवान्।
अपि ते पूजिता पूर्वमपि ते सुहृदो मता ॥ ५ ॥ ये राष्ट्र
मभिमन्यन्ते राज्ञो व्यसनमीयुष। मा दीदरस्त्वं सुहृदो मा त्वां

दीर्घं महासिषुः ॥ ६ ॥ प्रभावं पौरुषं बुद्धिं जिज्ञासन्त्या मया तव। विदधत्या समाश्वासमुक्तं तेजो विवृद्धये ॥ ७ ॥ यद्येतत् संविजानासि यदि सम्यग्ब्रवीम्यहम्। कृत्वा सौम्यमिवात्मानं जयायोत्तिष्ठ सञ्जय ॥ ८ ॥ अस्ति नः कोषनिचयो महानविदितस्तव। तमहं वेद नान्यस्तमुपसम्पादयामि ते ॥ ९ ॥ सन्ति नैकशता भूयः सुहृदस्तव सञ्जय। सुखदुःखसहा वीर शताहा ह्यनुवर्त्तिनः ॥ १० ॥ तादृशा हि सहाया वै पुरुषस्य बुभूषतः। इष्टं जिहीर्षतः किञ्चित् सचिवाः शत्रुकर्षण ॥ ११ ॥ तस्यास्त्वीदृशकं वाक्यं श्रुत्वापि स्वल्पचेतसः। तमस्त्वपागमत्तस्य सुचित्रार्थपदाक्षरम् ॥ १२ ॥

पुत्र उवाच। उदके भूरियं धार्य्या मर्त्तव्यं प्रवणे मया। यस्य मे भवती नेत्री भविष्यद्भूतिदर्शिनी ॥ १३ ॥ अहं हि वचनं त्वत्तः शुश्रूषुरपरापरम्। किञ्चित् किञ्चित् प्रतिवदंस्तूष्णीमासं मुहुर्मुहुः ॥ १४ ॥ अतृप्यन्नमृतस्येव कृच्छ्राल्लब्धस्य बान्धवान्। उद्यच्छाम्येष शत्रूणां नियमाय जयाय च ॥ १५ ॥

कुन्त्युवाच। सदश्व इव स क्षिप्तः प्रणुन्नो वाक्यसायकैः। तच्चकार तथा सर्वं यथावदनुशासनम् ॥ १६ ॥ इदमुद्धर्षणं भीमं तेजोवर्द्धनमुत्तमम्। राजानं श्रावयेन्मन्त्री सीदन्तं शत्रुपीड़ितम् ॥ १७ ॥ जयो नामेतिहासोऽयं श्रोतव्यो विजिगीषुणा। महीं विजयते क्षिप्रं श्रुत्वा शत्रूंश्च मर्द्दति ॥ १८ ॥ इदं पुंसवनञ्चैव वीराजननमेव च। अभीक्ष्णं गर्भिणी श्रुत्वा ध्रुवं वीरं प्रजायते ॥ १९ ॥ विद्याशूरं तपःशूरं दानशूरं तपस्विनम्। ब्राह्म्या श्रिया दीप्यमानं साधुवादे च सम्मतम् ॥ २० ॥ अर्च्चिष्मन्तं बलोपेतं महाभागं महारथम्। धृतिमन्तमनाधृष्यं जेतारमपराजितम् ॥ २१ ॥ नियन्तारमसाधूनां

गोप्तारं धर्मचारिणीम् । ईदृशं क्षत्रिया सूते वीरं सत्यपराक्रमम् ॥ २२ ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि कुन्तीवाक्ये
पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥

---

कुन्त्युवाच । अर्जुनं केशव ब्रूयास्त्वयि जाते स्म सूतके । उपोपविष्टा नारीभिराश्रमे परिवारिता ॥ १ ॥ अथान्तरीक्षे वागासीद्दिव्यरूपा मनोरमा । सहस्राक्षसमः कुन्ति भविष्यत्येष ते सुतः ॥ २ ॥ एष जेष्यति संग्रामे कुरून् सर्वान् समागतान् । भीमसेनद्वितीयश्च लोकमुद्वर्त्तयिष्यति ॥ ३ ॥ पुत्रस्ते पृथिवीं जेता यशश्चास्य दिवं स्पृशेत् । हत्वा कुरूंश्च संग्रामे वासुदेवसहायवान् ॥ ४ ॥ पित्र्यमंशं प्रनष्टञ्च पुनरप्युद्धरिष्यति । भ्रातृभिः सहितः श्रीमांस्त्रीन्मेधानाहरिष्यति ॥ ५ ॥ तं सत्यसन्धो बीभत्सुः सव्यसाची यथाच्युत । तथा त्वमेव जानासि बलवन्तं दुरासदम् ॥ ६ ॥ तथा तदस्तु दाशार्ह यथा वागभ्यभाषत । धर्मश्चेदस्ति वार्ष्णेय तथा सत्यं भविष्यति ॥ ७ ॥ त्वञ्चापि तत्तथा कृष्ण सर्वं सम्पादयिष्यसि । नाहं तदभ्यसूयामि यथा वागभ्यभाषत ॥ ८ ॥ नमो धर्माय महते धर्मो धारयते प्रजाः । एतद्धनञ्जयो वाच्यो नित्योद्युक्तो वृकोदरः ॥ ९ ॥ यदर्थं क्षत्रिया सूते तस्य कालोऽयमागतः । न हि वैरं समासाद्य सीदन्ति पुरुषर्षभाः ॥ १० ॥ विदिता ते सदा बुद्धिर्भीमस्य न प्रशाम्यति । यावदन्तं न कुरुते शत्रूणां शत्रुकर्षण ॥ ११ ॥ सर्वधर्मविशेषज्ञा स्नुषा पाण्डोर्महात्मनः । ब्रूया माधव कल्याणीं कृष्ण कृष्णां यशस्विनीम् ॥ १२ ॥ युक्तमेतन्महाभागे कुले जातं यशस्विनि । यन्मे पुत्रेषु सर्वेषु यथावत्त्वमवर्त्तिथाः ॥ १३ ॥ माद्रीपुत्रौ च वक्तव्यौ क्षत्रधर्मरतौ

वुभौ । विक्रमेणार्ज्जितान् भोगान् वृणीतं जीवितादपि ॥ १४ ॥ विक्रमाधिगता ह्यर्थाः क्षत्रधर्म्मेण जीवतः । मनो मनुष्यस्य सदा प्रीणन्ति पुरुषोत्तम ॥ १५ ॥ यत्र वः प्रेक्षमाणानां सर्वधर्मोपचायिनाम् । पाञ्चाली परुषाण्युक्ता को नु तत् क्षन्तुमर्हति ॥१६॥ न राज्यहरणं दुःखं द्यूते चापि पराजयः । प्रव्राजनं सुतानां वा न मे तत् दुःखकारणम् ॥ १७ ॥ यत्तु सा वृहती श्यामा सभायां रुदती तदा । अश्रौषीत् परुषा वाचस्तन्मे दुःखतरं मतम् ॥ १८ ॥ स्त्रीधर्म्मिणी वरारोहा क्षत्रधर्मरता सदा । नाध्यागच्छत्तदा नाथं कृष्णा नाथवती सती ॥ १९ ॥ तं वै ब्रूहि महावाहो सर्वशस्त्रभृतां वरम् । अर्ज्जुनं पुरुषव्याघ्रं द्रौपद्याः पदवीचर ॥ २० ॥ विदितौ हि तवात्यन्तं क्रुद्धाविव यमान्तकौ । भीमार्ज्जुनौ नयेतां हि देवानपि परां गतिम् ॥ २१ ॥ तयोश्चैतदवज्ञानं यत् सा कृष्णा सभागता । दुःशासनश्च यद्भीमं कटुकान्यभ्यभाषत ॥ २२ ॥ पश्यतां कुरुवीराणां तत् संस्मारयेः पुनः । पाण्डवान् कुशलं पृच्छेः सपुत्रान् कृष्णया सह ॥ २३ ॥ माञ्च कुशलिनीं ब्रूयास्तेषु भूयो जनार्दन । अरिष्टं गच्छ पन्थानं पुत्रान्मे प्रतिपालय ॥ २४ ॥

वैशम्पायन उवाच । अभिवाद्याथ तां कृष्णः कृत्वा चाभिप्रदक्षिणम् । निश्चक्राम महावाहुः सिंहखेलगतिस्ततः ॥ २५ ॥ ततो विसर्ज्जयामास भीष्मादीन् कुरुपुङ्गवान् । आरोप्याथ रथे कर्णं प्रायात सात्यकिना सह ॥ २६ ॥ ततः प्रयाते दाशार्हे कुरवः सङ्गता मिथः । जजल्पुर्महदाश्चर्य्यं केशवे परमाद्भुतम् ॥ २७ ॥ प्रमूढा पृथिवी सर्वा मृत्युपाशवशीकृता । दुर्य्योधनस्य वालिश्यान्नैतदस्तीति चाब्रुवन् ॥ २८ ॥ ततो निर्य्याय नगरात् प्रययौ पुरुषोत्तमः । मन्त्रयामास च तदा कर्णेन सुचिरं सह ॥ २९ ॥ विसर्ज्जयित्वा राधेयं सर्वयादवनन्दनः । ततो जवेन

महता तूर्य्यमश्वानचोदयत ॥ ३० ॥ ते पिवन्त इवाकाश दारुकेण प्रचोदिता । हया जग्मुर्महावेगा मनोमारुतरंहस ॥३१॥ ते व्यतीत्य महाध्वान क्षिप्र श्येना इवाशुगा । उच्चैर्जग्मुरुपप्लव्य माद्दर्धन्वानमावहन् ॥ ३२ ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि श्रीकृष्णप्रत्यागमने षट्त्रिंशदधिकशततमोऽध्याय ॥ १३६ ॥

---

वैशम्पायन उवाच । कुन्त्यास्तु वचन श्रुत्वा भीष्मद्रोणौ महारथौ । दुर्योधनमिद वाक्यमूचतु शासनातिगम् ॥ १ ॥ श्रुत ते पुरुषव्याघ्र कुन्त्या कृष्णस्य सन्निधौ । वाक्यमर्थवदव्यग्रमुक्त धर्म्यमनुत्तमम ॥ २ ॥ तत् करिष्यन्ति कौन्तेया वासुदेवस्य सम्मतम् । न हि ते जातु शाम्येरन्नृते राज्येन कौरव ॥ ३ ॥ क्लेशिता हि त्वया पार्था धर्मपाशसितास्तदा । सभाया द्रौपदी चैव तैश्च तन्मर्षित तव ॥ ४ ॥ कृतास्त्र ह्यर्जुन प्राप्य भीमञ्च कृतनिश्चयम । गाण्डीवञ्चेषुधी चैव रथञ्च ध्वजमेव च ॥ ५ ॥ नकुल सहदेवञ्च बलवीर्य्यसमन्वितौ । सहाय वासुदेवञ्च न क्षस्यति युधिष्ठिर ॥ ६ ॥ प्रत्यक्षन्ते महाबाहो यथा पार्थेन धीमता । विराटनगरे पूर्व सर्वे स्म युधि निर्जिता ॥ ७ ॥ दानवा घोरकर्म्माणो निवातकवचा युधि । रौद्रमस्त्र समादाय दग्धा वानरकेतुना ॥ ८ ॥ कर्णप्रभृतयश्चेमे त्वञ्चापि कवची रथी । मोक्षितो घोषयात्राया पर्य्याप्त तन्निदर्शनम् ॥ ९ ॥ प्रशाम्य भरतश्रेष्ठ भ्रातृभि सह पाण्डवै । रक्षेमा पृथिवी सर्वा मृत्योर्दंष्ट्रान्तर गताम् ॥ १० ॥ ज्येष्ठो भ्राता धर्मशीलो वत्सल श्लक्ष्णवाक कवि । त गच्छ पुरुषव्याघ्र व्यपनीयेह किल्बिषम् ॥ ११ ॥ दृष्टश्च त्व पाण्डवेन व्यपनीतशरासन । प्रशान्तभ्रुकुटि श्रीमान्

कृता शान्तिः कुलस्य नः ॥ १२ ॥ तमभ्येत्य महामात्यः परिष्वज्य नृपात्मजम्। अभिवाद्य राजानं यथापूर्वमरिन्दम ॥१३॥ अभिवादयमानं त्वां पाणिभ्यां भीमपूर्वजः। प्रतिगृह्णातु सौहार्दात् कुन्तीपुत्रो युधिष्ठिरः ॥ १४ ॥ सिंहस्कन्धोरुबाहुस्त्वां वृत्तायतमहाभुजः। परिष्वजतु बाहुभ्यां भीमः प्रहरतां वरः ॥१५॥ कम्बुग्रीवो गुडाकेशस्ततस्त्वां पुष्करेक्षणः। अभिवादयतां पार्थः कुन्तीपुत्रो धनञ्जयः ॥ १६ ॥ आश्विनेयौ नरव्याघ्रौ रूपेणाप्रतिमौ भुवि। तौ च त्वां गुरुवत् प्रेम्णा पूजया प्रत्युदीयताम् ॥ १७ ॥ मुञ्चन्त्वानन्दजाश्रूणि दाशार्हप्रमुखा नृपाः। सङ्गच्छ भ्रातृभिः सार्द्धं मानं सन्त्यज्य पार्थिव ॥ १८ ॥ प्रशाधि पृथिवीं कृत्स्नां ततस्त्वं भ्रातृभिः सह। समालिङ्ग्य च हर्षेण नृपा यान्तु परस्परम् ॥ १९ ॥ अलं युद्धेन राजेन्द्र सुहृदां शृणु कारणम्। ध्रुवं विनाशो युद्धे हि क्षत्रियाणां प्रदृश्यते ॥ २० ॥ ज्योतींषि प्रतिकूलानि दारुणा मृगपक्षिणः। उत्पाता विविधा वीर दृश्यन्ते क्षत्रनाशनाः ॥ २१ ॥ विशेषत इहास्माकं निमित्तानि निवेशने। उल्काभिर्हि प्रदीप्ताभिर्बाध्यते पृतना तव ॥ २२ ॥ वाहनान्यप्रहृष्टानि रुदन्तीव विशाम्पते। गृध्रास्ते पर्य्युपासन्ते सैन्यानि च समन्ततः ॥ २३ ॥ नगरं न यथा पूर्वं तथा राजनिवेशनम्। शिवाशिवनिर्घोषा दीप्तां सेवन्ति वै दिशम् ॥२४॥ कुरु वाक्यं पितुर्मातुरस्माकञ्च हितैषिणाम्। त्वय्यायत्तो महाबाहो शमो व्यायाम एव च ॥ २५ ॥ न चेत् करिष्यसि वचः सुहृदामरिकर्षण। तप्स्यसे वाहिनीं दृष्ट्वा पार्थवाणप्रपीड़िताम्॥२६॥ भीमस्य च महानादं नदत शुष्मिणो रणे। श्रुत्वा स्मर्त्तासि मे वाक्यं गाण्डीवस्य च निस्वनम्। यद्येतदपसव्यन्ते वचो मम भविष्यति ॥ २७ ॥

इति उद्योगपर्व्वणि भगवद्यानपर्व्वणि भीष्मद्रोणवाक्ये सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥

वैशम्पायन उवाच। एवमुक्तस्तु विमनास्तिर्य्यग्दृष्टिरधोमुखः। संहृत्य च भ्रुवोर्मध्यं न किञ्चित् व्याजहार ह ॥ १ ॥ तं वै विमनसं दृष्ट्वा सम्प्रेक्ष्यान्योन्यमन्तिकात्। पुनरेवोत्तरं वाक्यमुक्तवन्तौ नरर्षभौ ॥ २ ॥

भीष्म उवाच। शुश्रूषुमनसूयञ्च ब्रह्मण्यं सत्यवादिनम् प्रतियोत्स्यामहे पार्थमतो दुःखतरं नु किम् ॥ ३ ॥

द्रोण उवाच। अश्वत्थाम्नि यथा पुत्रे भूयो मम धनञ्जये बहुमानः परो राजन् सन्नतिश्च कपिध्वजे ॥ ४ ॥ तञ्च पुत्रात् प्रियतमं प्रतियोत्स्ये धनञ्जयम्। क्षात्रं धर्ममनुष्ठाय धिगस्तु क्षत्रजीविकाम् ॥ ५ ॥ यस्य लोके समो नास्ति कश्चिदन्यो धनुर्धरः। मत्प्रसादात् स बीभत्सुः श्रेयानन्यैर्धनुर्धरैः ॥ ६ ॥ मित्रध्रुक् दुष्टभावश्च नास्तिकोऽथानृजुः शठः। न सत्सु लभते पूजां यज्ञे मूर्ख इवागतः ॥ ७ ॥ वार्य्यमाणोऽपि पापेभ्यः पापात्मा पापमिच्छति। चोद्यमानोऽपि पापेन शुभात्मा शुभमिच्छति ॥८॥ मिथ्योपचरिता ह्येते वर्त्तमाना ह्यनुप्रिये। अहितत्वाय कल्पन्ते दोषा भरतसत्तम ॥ ९ ॥ त्वमुक्तः कुरुवृद्धेन मया च विदुरेण च। वासुदेवेन च तथा श्रेयो नैवाभिपद्यसे ॥ १० ॥ अस्ति मे बलमित्येव सहसा त्वं तितीर्षसि। सग्राहनक्रमकरं गङ्गावेगमिवार्णवम् ॥ ११ ॥ वास एव यथा त्यक्तं प्रावृण्वानोऽद्य मन्यसे। स्रजं त्यक्तामिव प्राप्य लोभात् यौधिष्ठिरीं श्रियम् ॥१२॥ द्रौपदीसहितं पार्थं सायुधैर्भ्रातृभिर्वृतम्। वनस्थमपि राज्यस्थं पाण्डवं को विजेष्यति ॥ १३ ॥ निदेशे यस्य राजानः सर्व्वे तिष्ठन्ति किङ्कराः। तमैलविलमासाद्य धर्म्मराजो व्यराजत ॥ १४ ॥ कुवेरसदनं प्राप्य ततो रत्नान्यवाप्य च। स्फीतमाक्रम्य ते राष्ट्रं राज्यमिच्छन्ति पाण्डवाः ॥ १५ ॥ दत्तं हुतमधीतञ्च ब्राह्मणास्तर्पिता धनैः। आवयोर्गतमायुश्च कृतकृत्यौ हि विद्धि नौ ॥१६॥

त्वन्तु हित्वा सुखं राज्यं मित्राणि च धनानि च। विग्रहं पाण्डवैः कृत्वा महद्व्यसनमाप्स्यसि ॥ १७ ॥ द्रौपदी यस्य चाशास्ते विजयं सत्यवादिनी। तपोधीरव्रता देवी कथं जेष्यसि पाण्डवम् ॥ १८ ॥ मन्त्री जनार्द्दनो यस्य भ्राता यस्य धनञ्जयः। सर्व्वशस्त्रभृतां श्रेष्ठः कथं जेष्यसि पाण्डवम् ॥ १९ ॥ सहाया ब्राह्मणा यस्य धृतिमन्तो जितेन्द्रियाः। तमुग्रतपसं वीरं कथं जेष्यसि पाण्डवम् ॥ २० ॥ पुनरुक्तञ्च वक्ष्यामि यत् कार्य्यं भूतिमिच्छता। सुहृदा मज्जमानेषु सुहृत्सु व्यसनार्णवे ॥ २१ ॥ अलं युद्धेन तैर्वीरैः शाम्य त्वं कुरुवृद्धये। मा गमः ससुतामात्य सबलश्च पराभवम् ॥ २२ ॥

इति उद्योगपर्व्वणि भगवद्यानपर्व्वणि भीष्मद्रोणवाक्ये अष्टत्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥

---

धृतराष्ट्र उवाच। राजपुत्रैः परिवृतस्तथामात्यैश्च सञ्जय। उपारोप्य रथे कर्णं निर्यातो मधुसूदनः ॥ १ ॥ किमब्रवीदमेयात्मा राधेयं परवीरहा। कानि सान्त्वानि गोविन्दः सूतपुत्रे प्रयुक्तवान् ॥ २ ॥ ओघमेघस्वनः काले कृष्णः कर्णमथाब्रवीत्। मृदु वा यदि वा तीक्ष्णं तन्ममाचक्ष्व सञ्जय ॥ ३ ॥

सञ्जय उवाच। आनुपूर्व्व्येण वाक्यानि तीक्ष्णानि च मृदूनि च। प्रियाणि धर्म्मयुक्तानि सत्यानि च हितानि च ॥ ४ ॥ हृदयग्रहणीयानि राधेयं मधुसूदनः। यान्यब्रवीदमेयात्मा तानि मे शृणु भारत ॥ ५ ॥

वासुदेव उवाच। उपासितास्ते राधेय ब्राह्मणा वेदपारगाः। तत्त्वार्थं परिपृष्टाश्च नियतेनानसूयया ॥ ६ ॥ त्वमेव कर्ण जानासि वेदवादान् सनातनान्। त्वमेव धर्म्मशास्त्रेषु सूक्ष्मेषु

परिनिष्ठितः ॥ ७ ॥ कानीनश्च सहोढश्च कन्यायां यश्च जायते।
वोढारं पितरं तस्य प्राहुः शास्त्रविदो जनाः ॥ ८ ॥ सोऽसि कर्ण
तथा जातः पाण्डोः पुत्रोऽसि धर्मतः । निग्रहाद्धर्मशास्त्राणामेहि
राजा भविष्यसि ॥ ९ ॥ पितृपक्षे च ते पार्था मातृपक्षे च वृष्णयः।
द्वौ पक्षावभिजानीहि त्वमेतौ पुरुषर्षभ ॥ १० ॥ मया सार्द्धमितो
यातमद्य त्वां तात पाण्डवाः । अभिजानन्तु कौन्तेयं पूर्वजातं
युधिष्ठिरात् ॥ ११ ॥ पादौ तव ग्रहीष्यन्ति भ्रातरः पञ्च पाण्डवाः।
द्रौपदेयास्तथा पञ्च सौभद्रश्चापराजितः ॥ १२ ॥ राजानो राज-
पुत्राश्च पाण्डवार्थे समागताः । पादौ तव ग्रहीष्यन्ति सर्वे चान्धक-
वृष्णयः ॥ १३ ॥ हिरण्मयांश्च ते कुम्भान्राजतान् पार्थिवांस्तथा।
ओषध्यः सर्वबीजानि सर्वरत्नानि वीरुधः ॥ १४ ॥ राजन्या
राजकन्याश्चाप्यानयन्त्वभिषेचनम् । षष्ठे त्वां च तथा काले द्रौप-
द्युपगमिष्यति ॥ १५ ॥ अग्निं जुहोतु वै धौम्यः संशितात्मा
द्विजोत्तमः । अद्य त्वामभिषिञ्चन्तु चातुर्वैद्या द्विजातयः ॥ १६ ॥
पुरोहितः पाण्डवानां ब्रह्मकर्मण्यवस्थितः । तथैव भ्रातरः पञ्च
पाण्डवाः पुरुषर्षभाः ॥ १७ ॥ द्रौपदेयास्तथा पञ्च पाञ्चालाश्चेदय-
स्तथा । अहञ्च त्वाभिषेक्ष्यामि राजानं पृथिवीपतिम् ॥ १८ ॥
युवराजस्तु ते राजा धर्मपुत्रो युधिष्ठिरः । गृहीत्वा व्यजनं श्वेतं
धर्मात्मा संशितव्रतः ॥ १९ ॥ उपान्वारोहतु रथं कुन्तीपुत्रो
युधिष्ठिरः । छत्रञ्च ते महाश्वेतं भीमसेनो महाबलः ॥ २० ॥
अभिषिक्तस्य कौन्तेयो धारयिष्यति मूर्द्धनि । किङ्किणीशत-
निर्घोषं वैयाघ्रपरिवारणम् ॥ २१ ॥ रथं श्वेतहयैर्युक्तमर्जुनो
वाहयिष्यति । अभिमन्युश्च ते नित्यं प्रत्यासन्नो भविष्यति ॥ २२ ॥
नकुलः सहदेवश्च द्रौपदेयाश्च पञ्च ये । पाञ्चालास्त्वानुयास्यन्ति
शिखण्डी च महारथः ॥ २३ ॥ अहञ्च त्वानुयास्यामि सर्वे चान्धक-
वृष्णयः । दाशार्हाः परिवारास्ते दाशार्णाश्च विशाम्पते ॥ २४ ॥

भुङ्क्ष्व राज्यं महाबाहो भ्रातृभिः सह पाण्डवैः । जपैर्होमैश्च
संयुक्तो मङ्गलैश्च पृथग्विधैः ॥ २५ ॥ पुरोगमाश्च ते सन्तु द्रविडाः
सह कुन्तलैः । अन्ध्रास्तालचराश्चैव चुचुपा वेणुपास्तथा ॥ २६ ॥
स्तुवन्तु त्वाद्य बहुभिः स्तुतिभिः सूतमागधाः । विजयं वसु-
षेणस्य घोषयन्तु च पाण्डवाः ॥ २७ ॥ स त्वं परिवृतः पार्थै-
र्नक्षत्रैरिव चन्द्रमाः । प्रशाधि राज्यं कौन्तेय कुन्तीं च प्रति-
नन्दय ॥ २८ ॥ मित्राणि ते प्रहृष्यन्तु व्यथन्तु रिपवस्तथा ।
सौभ्रात्रं चैव तेऽद्यास्तु भ्रातृभिः सह पाण्डवैः ॥ २९ ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि भगवद्वाक्ये
एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥

---

कर्ण उवाच । असंशयं सौहृदान्मे प्रणयाच्चाथ केशव ।
सख्येन चैव वार्ष्णेय श्रेयस्कामतयैव च ॥ १ ॥ सर्वं चैवाभिजानामि
पाण्डोः पुत्रोऽस्मि धर्मतः । निग्रहाद्धर्मशास्त्राणां यथा त्वं कृष्ण
मन्यसे ॥ २ ॥ कन्या गर्भं समाधत्त भास्करान्मां जनार्दन ।
आदित्यवचनाच्चैव जातं मां सा व्यसर्जयत् ॥ ३ ॥ सोऽस्मि कृष्ण
तथा जातः पाण्डोः पुत्रोऽस्मि धर्मतः । कुन्त्या त्वहमपाकीर्णो
यथा न कुशलं तथा ॥ ४ ॥ सूतो हि मामधिरथो दृष्ट्वैवाभ्य-
नयत् गृहान् । राधायाश्चैव मां प्रादात् सौहार्दान्मधुसूदन ॥ ५ ॥
मत्स्नेहाच्चैव राधायाः सद्यः क्षीरमवातरत् । सा मे मूत्रं
पुरीषं च प्रतिजग्राह माधव ॥ ६ ॥ तस्याः पिण्डव्यपनयं कुर्या-
दस्मद्विधः कथम् । धर्मविद्धर्मशास्त्राणां श्रवणे सततं रतः ॥ ७ ॥
तथा मामभिजानाति सूतश्चाधिरथः सुतम् । पितरं चाभिजानामि
तमहं सौहृदात् सदा ॥ ८ ॥ स हि मे जातकर्मादि कारया-
मास माधव । शास्त्रदृष्टेन विधिना पुत्रप्रीत्या जनार्दन ॥ ९ ॥

नाम वै वसुषेणेति कारयामास वै द्विजै.। भार्य्याश्चोढा मम प्राप्ते यौवने तत्परिग्रहात्॥ १०॥ तासु पुत्राश्च पौत्राश्च मम जाता जनार्द्दन। तासु मे हृदयं कृष्ण सञ्जातं कामबन्धनम्॥११॥ न पृथिव्या सकलया न सुवर्णस्य राशिभिः। हर्षाद् भयाद्दा गोविन्द मिथ्या कर्त्तुं तदुत्सहे॥ १२॥ धृतराष्ट्रकुले कृष्ण दुर्य्योधनसमाश्रयात्। मया त्रयोदश समा भुक्तं राज्यमकण्टकम्॥१३॥ इष्टञ्च बहुभिर्यज्ञैः सह सूतैर्मयासकृत्। आवाहाश्च विवाहाश्च सह सूतैर्मया कृताः॥ १४॥ माञ्च कृष्ण समासाद्य कृत यत्नसमुद्यमः। दुर्य्योधनेन वार्ष्णेय विग्रहश्चापि पाण्डवैः॥ १५॥ तस्माद्रणे द्वैरथे मां प्रत्युद्यातारमच्युत। कृतवान् परमं कृष्ण प्रतीपं सव्यसाचिनः॥ १६॥ वधाद्बन्धाद्भयाद्दापि लोभाद्दापि जनार्द्दन। अनृतं नोत्सहे कर्त्तुं धार्त्तराष्ट्रस्य धीमत॥ १७॥ यदि ह्यद्य न गच्छेयं द्वैरथं सव्यसाचिना। अकीर्त्तिः स्याद् हृषीकेश मम पार्थस्य चोभयो.॥ १८॥ असंशयं हितार्थाय ब्रूयास्त्वं मधुसूदन। सर्वञ्च पाण्डवाः कुर्य्युस्त्वद्दशित्वान्न संशयः॥ १९॥ मन्त्रस्य नियमं कुर्य्यास्त्वमत्र मधुसूदन। एतदत्र हितं मन्ये सर्वं यादवनन्दन॥ २०॥ यदि जानाति मां राजा धर्म्मात्मा संयतेन्द्रिय। कुन्त्याः प्रथमजं पुत्रं न स राज्यं ग्रहीष्यति॥ २१॥ प्राप्य चापि महद्राज्यं तदहं मधुसूदन। स्फीतं दुर्य्योधनायैव सम्प्रदद्यामरिन्दम॥ २२॥ स एव राजा धर्म्मात्मा शाश्वतोऽस्तु युधिष्ठिरः। नेता यस्य हृषीकेशो योद्धा यस्य धनञ्जयः॥ २३॥ पृथिवी तस्य राष्ट्रञ्च यस्य भीमो महारथः। नकुलः सहदेवश्च द्रौपदेयाश्च माधव॥ २४॥ धृष्टद्युम्नश्च पाञ्चाल्य. सात्यकिश्च महारथ.। उत्तमौजा युधामन्युः सत्यधर्म्मा च सौमकि.॥ २५॥ चैद्यश्च चेकितानश्च शिखण्डी चापराजितः। इन्द्रगोपकवर्णाश्च केकया भ्रातरस्तथा॥२६॥ इन्द्रायुधसवर्णाश्वः कुन्तिभोजो महा-

मनाः। मातुलो भीमसेनस्य श्येनजिच्च महारथः ॥ २७ ॥ शङ्खः पुत्रो विराटस्य निखिलस्त्वं जनार्द्दन। महानयं कृष्ण कृतः चत्रस्य समुदानयः ॥ २८ ॥ राज्यं प्राप्तमिदं दीप्तं प्रथितं सर्व्वराजसु। धार्त्तराष्ट्रस्य वार्ष्णेय महायज्ञो भविष्यति ॥ २९ ॥ अस्य यज्ञस्य वेत्ता त्वं भविष्यसि जनार्द्दन। आध्वर्य्यवञ्च ते कृष्ण क्रतावस्मिन् भविष्यति ॥ ३० ॥ होता चैवात्र बीभत्सुः सन्नद्धः स कपिध्वजः। गाण्डीवं स्रुक् तथा चाज्यं वीर्य्यं पुंसां भविष्यति ॥ ३१ ॥ ऐन्द्रं पाशुपतं ब्राह्मं स्थूणाकर्णञ्च माधव। मन्त्रास्तत्र भविष्यन्ति प्रयुक्ताः सव्यसाचिना ॥ ३२ ॥ अनुयातश्च पितरमधिको वा पराक्रमे। गीतं स्तोत्रं स सौभद्रः सम्यक् तत्र भविष्यति ॥ ३३ ॥ उद्गातात्र पुनर्भीमः प्रस्तोता सुमहाबलः। विनदन् स नरव्याघ्रो नागानीकान्तकृद्रणे ॥ ३४ ॥ स चैव तत्र धर्म्मात्मा शश्वद्राजा युधिष्ठिरः। जपहोमैः संयुक्तो ब्रह्मत्वं कारयिष्यति ॥ ३५ ॥ शङ्खशब्दाः समुरजा भेर्य्यश्च मधुसूदन। उत्कृष्टः सिंहनादश्च सुब्रह्मण्यो भविष्यति ॥ ३६ ॥ नकुलः सहदेवश्च माद्रीपुत्रौ यशस्विनौ। शामित्रं तौ महावीर्य्यौ सम्यक् तत्र करिष्यतः ॥३७॥ कल्माषदण्डा गोविन्द विमला रथपङ्क्तयः। यूपाः समुपकल्पन्तामस्मिन् यज्ञे जनार्द्दन ॥ ३८ ॥ कर्णिनालीकनाराचा वत्सदन्तोपबृंहणाः। तोमराः सोमकलशाः पवित्राणि धनूंषि च ॥ ३९ ॥ असयोऽत्र कपालानि पुरोडाशाः शिरांसि च। हविस्तु रुधिरं कृष्ण तस्मिन् यज्ञे भविष्यति ॥ ४० ॥ इध्माः परिधयश्चैव शक्तयो विमला गदाः। सदस्या द्रोणशिष्याश्च कृपस्य च शरद्वतः ॥ ४१ ॥ इषवोऽत्र परिस्तोमा मुक्ता गाण्डीवधन्वना। महारथप्रयुक्ताश्च द्रोणद्रौणिप्रचोदिताः ॥ ४२ ॥ प्रतिप्रास्थानिकं कर्म्म सात्यकिस्तु करिष्यति। दीक्षितो धार्त्तराष्ट्रोऽत्र पत्नी चास्य महाचमूः ॥ ४३ ॥ घटोत्कचोऽत्र शामित्रं करिष्यति महाबलः।

अतिरात्रे महावाहो विततं यज्ञकर्मणि ॥ ४४ ॥ दक्षिणा तस्य यज्ञस्य धृष्टद्युम्नः प्रतापवान् । वैतानिके कर्ममुखे जातो यः कृष्ण पावकात् ॥ ४५ ॥ यदब्रुवमहं कृष्ण कटुकानि स्म पाण्डवान् । प्रियार्थं धार्त्तराष्ट्रस्य तेन तप्ये ह्यकर्मणा ॥ ४६ ॥ यदा द्रक्ष्यसि मां कृष्ण निहतं सव्यसाचिना । पुनश्चितिस्तदा चास्य यज्ञस्याथ भविष्यति ॥ ४७ ॥ दुःशासनस्य रुधिरं यदा पास्यति पाण्डवः । आनर्दं नर्दतः सम्यक् तदा सुत्यं भविष्यति ॥ ४८ ॥ यदा द्रोणञ्च भीष्मञ्च पाञ्चाल्यौ पातयिष्यतः । तदा यज्ञावसानन्तत् भविष्यति जनार्द्दन ॥ ४९ ॥ दुर्योधनं यदा हन्ता भीमसेनो महाबलः । तदा समाप्स्यते यज्ञो धार्त्तराष्ट्रस्य माधव ॥ ५० ॥ स्नुषाश्च प्रस्नुषाश्चैव धृतराष्ट्रस्य सङ्गताः । हतेश्वरा नष्टपुत्रा हतनाथाश्च केशव ॥ ५१ ॥ रुदन्त्यः सह गान्धार्य्या श्वगृध्रकुरराकुले । स यज्ञेऽस्मिन्नवभृथो भविष्यति जनार्द्दन ॥५२॥ विद्यावृद्धा वयोवृद्धा क्षत्रियाः क्षत्रियर्षभ । वृथा मृत्युं न कुर्वीरंस्त्वत्कृते मधुसूदन ॥ ५३ ॥ शस्त्रेण निधनं गच्छेत् समृद्धं क्षत्रमण्डलम् । कुरुक्षेत्रे पुण्यतमे त्रैलोक्यस्यापि केशव ॥ ५४ ॥ तदत्र पुण्डरीकाक्ष विधत्स्व यदभीप्सितम् । यथा कार्त्स्न्येन वार्ष्णेय क्षत्रं स्वर्गमवाप्नुयात् ॥ ५५ ॥ यावत् स्थास्यन्ति गिरयः सरितश्च जनार्द्दन । तावत् कीर्त्तिभवः शब्दः शाश्वतोऽयं भविष्यति ॥ ५६ ॥ ब्राह्मणाः कथयिष्यन्ति महाभारतमाहवम् । समागमेषु वार्ष्णेय क्षत्रियाणां यशोधनम् ॥ ५७ ॥ समुपानय कौन्तेयं युद्धाय मम केशव । मन्त्रसंवरणं कुर्वन्नित्यमेव परन्तप ॥ ५८ ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि कर्णवाक्ये चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥

---

सञ्जय उवाच। कर्णस्य वचनं श्रुत्वा केशवः परवीरहा। उवाच प्रहसन् वाक्यं स्मितपूर्वमिदं यथा ॥ १ ॥

भगवानुवाच। अपि त्वां न लभेत् कर्ण राज्यलम्भोपपादनम्। मया दत्तां हि पृथिवीं न प्रशासितुमिच्छसि ॥ २ ॥ ध्रुवो जयः पाण्डवानामितीदं न संशयः कश्चन विद्यतेऽत्र। जयध्वजो दृश्यते पाण्डवस्य समुच्छ्रितो वानरकेतुरुग्रः ॥ ३ ॥ दिव्या माया विहिता भौमनेन समुच्छ्रिता इन्द्रकेतुप्रकाशाः। दिव्यानि भूतानि जयावहानि दृश्यन्ति चैवात्र भयानकानि ॥ ४ ॥ न सज्जते शैलवनस्पतिभ्य ऊर्द्ध्वं तिर्य्यग्योजनमात्ररूपः। श्रीमान् ध्वजः कर्ण धनञ्जयस्य समुच्छ्रितः पावकतुल्यरूपः ॥ ५ ॥ यदा द्रक्ष्यसि संग्रामे श्वेताश्वं कृष्णसारथिम्। ऐन्द्रमस्त्रं विकुर्व्वाणमुभे चाप्यग्निमारुते ॥ ६ ॥ गाण्डीवस्य च निर्घोषं विस्फूर्ज्जितमिवाशनेः। न तदा भविता त्रेता न कृतं द्वापरं न च ॥ ७ ॥ यदा द्रक्ष्यसि संग्रामे कुन्तीपुत्रं युधिष्ठिरम्। जपहोमसमायुक्तं स्वां रक्षन्तं महाचमूम् ॥ ८ ॥ आदित्यमिव दुर्द्धर्षं तपन्तं शत्रुवाहिनीम्। न तदा भविता त्रेता न कृतं द्वापरं न च ॥ ९ ॥ यदा द्रक्ष्यसि संग्रामे भीमसेनं महाबलम्। दुःशासनस्य रुधिरं पीत्वा नृत्यन्तमाहवे ॥ १० ॥ प्रभिन्नमिव मातङ्गं प्रतिद्विरदघातिनम्। न तदा भवति त्रेता न कृतं द्वापरं न च ॥ ११ ॥ यदा द्रक्ष्यसि संग्रामे द्रोणं शान्तनवं कृपम्। सुयोधनञ्च राजानं सैन्धवञ्च जयद्रथम् ॥ १२ ॥ युद्धायापततस्तूर्णं वारितान् सव्यसाचिना। न तदा भवति त्रेता न कृतं द्वापरं न च ॥ १३ ॥ यदा द्रक्ष्यसि संग्रामे माद्रीपुत्रौ महाबलौ। वाहिनीं धार्त्तराष्ट्राणां क्षोभयन्तौ गजाविव ॥ १४ ॥ विगाढ़े शस्त्रसम्पाते परवीररथारुजौ। न तदा भविता त्रेता न कृतं द्वापरं न च ॥ १५ ॥ ब्रूयाः कर्ण इतो गत्वा द्रोणं शान्तनवं कृपम्। सौम्यो

ऽयं वर्त्तते माध सुप्रापयवसेन्धन ॥ १६ ॥ सर्वौषधिवनस्फीत फलवानल्पमक्षिक । निष्पङ्को रसवत्तोयो नात्युष्ण शिशिर सुख ॥ १७ ॥ सप्तमाच्चापि दिवसादमावास्या भविष्यति। सङ्ग्रामो युज्यना तस्या तामाहु शक्रदेवताम् ॥ १८ ॥ तथा राज्ञो वदे सर्वान् ये युद्धायाभ्युपागता । यदो मनीषित तद्वै सर्वं सम्पादयाम्यहम् ॥ १९ ॥ राजानो राजपुत्राश्च दुर्योधनवशानुगा। प्राप्य शस्त्रेण निधन प्राप्स्यन्ति गतिमुत्तमाम् ॥ २० ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि भगवद्वाक्ये एकचत्वारिंशदधिकशततमोऽध्याय ॥ १४१ ॥

---

सञ्जय उवाच । केशवस्य तु तद्वाक्यं कर्ण श्रुत्वा हितं शुभम। अब्रवीदभिसम्पूज्य कृष्ण त मधुसूदनम् ॥ १ ॥ जानन्मा किं महाबाहो सम्मोहयितुमिच्छसि। योऽय पृथिव्या कार्त्स्न्येन विनाश समुपस्थित ॥ २ ॥ निमित्त तत्र शकुनिरह दु शासनस्तथा । दुर्योधनश्च नृपतिर्धृतराष्ट्रसुतोऽभवत् ॥ ३ ॥ असंशयमिद कृष्ण महद्युद्धमुपस्थितम्। पाण्डवाना कुरूणाञ्च घोर रुधिरकर्दमम् ॥ ४ ॥ राजानो राजपुत्राश्च दुर्योधनवशानुगा। रणे शस्त्राग्निना दग्धा प्राप्स्यन्ति यमसादनम् ॥ ५ ॥ स्वप्ना हि बहवो घोरा दृश्यन्ते मधुसूदन। निमित्तानि च घोराणि तथोत्पाता सुदारुणा ॥ ६ ॥ पराजय धार्त्तराष्ट्रे विजयञ्च युधिष्ठिरे। शसन्त इति वार्ष्णेय विविधा रोमहर्षणा ॥ ७ ॥ प्राजापत्य हि नक्षत्र ग्रहस्तीक्ष्णो महाद्युति । शनैश्चर पीडयति पीडयन् प्राणिनोऽधिकम् ॥ ८ ॥ कृत्वा चाङ्गारको वक्र ज्येष्ठाया मधुसूदन । अनुराधा प्रार्थयते मैत्रं संशमयन्निव ॥९॥ नून महद्भय कृष्ण कुरूणा समुपस्थितम्। विशेषेण हि वार्ष्णेय

र्वा पीड़यते ग्रहः ॥ १० ॥ सोमस्य लक्ष्म व्यावृत्तं राहुरर्क-
मुपैति च । दिवश्चोल्का पतन्त्येताः सनिर्घाताः सकम्पनाः ॥ ११॥
नष्टनन्ति च मातङ्गा मुञ्चन्त्यश्रूणि वाजिनः । पानीयं यवसञ्चापि
नाभिनन्दन्ति माधव ॥ १२ ॥ प्रादुर्भूतेषु चैतेषु भयमाहुरुप-
स्थितम् । निमित्तेषु महावाहो दारुणं प्राणिनाशनम् ॥ १३ ॥
अल्पे भुक्ते पुरीषञ्च प्रभूतमिह दृश्यते । वाजिनां वारणानाञ्च
मनुष्याणाञ्च केशव ॥ १४ ॥ धार्त्तराष्ट्रेषु सैन्येषु सर्वेषु मधु-
सूदन । पराभवस्य तल्लिङ्गमिति प्राहुर्मनीषिणः ॥ १५ ॥ प्रहृष्टं
वाहनं कृष्ण पाण्डवानां प्रचक्षते । प्रदक्षिणा मृगाश्चैव तत्तेषां
जयलक्षणम् ॥ १६ ॥ अपसव्या मृगाः सर्वे धार्त्तराष्ट्रस्य केशव ।
वाचश्चाप्यशरीरिण्यस्तत् पराभवलक्षणम् ॥ १७ ॥ मयूरा पुष्प-
शकुना हंससारसचातकाः । जीवञ्जीवकसङ्घाश्चाप्यनुगच्छन्ति
पाण्डवान् ॥ १८ ॥ गृध्राः कङ्का वका श्येना यातुधानास्तथा
वृकाः । मक्षिकाणाञ्च सङ्घाता अनुधावन्ति कौरवान् ॥ १९ ॥
धार्त्तराष्ट्रस्य सैन्येषु भेरीणां नास्ति निस्वनः । अनाहताः पाण्ड-
वानां नदन्ति पटहाः किल ॥ २० ॥ उदपानाश्च नर्द्दन्ति यथा
गोवृषभास्तथा । धार्त्तराष्ट्रस्य सैन्येषु तत् पराभवलक्षणम् ॥ २१ ॥
मांसशोणितवर्षञ्च वृष्टं देवेन माधव । तथा गन्धर्वनगरं भानु-
मत् समुपस्थितम् ॥ २२ ॥ सप्राकारं सपरिखं सवप्रञ्चारुतोरणम् ।
कृष्णश्च परिघस्तत्र भानुमावृत्य तिष्ठति ॥ २३ ॥ उदयास्तमने
सन्ध्ये वेदयन्तो महद्भयम् । एकपक्षाक्षिचरणा नर्द्दन्तो घोर-
दर्शनम् ॥ २४ ॥ पक्षिणो व्यसृजन् घोरं तत् पराभवलक्षणम् ।
शिवा च वाशते घोरं तत् पराभवलक्षणम् ॥ २५ ॥ कृष्णग्रीवाश्च
शकुना रक्तपादा भयानका । सन्ध्यामभिमुखा यान्ति तत्
पराभवलक्षणम् ॥ २६ ॥ ब्राह्मणान् प्रथमं द्वेष्टि गुरूंश्च मधु-
सूदन । भृत्यान् भक्तिमतश्चापि तत् पराभवलक्षणम् ॥ २७ ॥

पूर्वादिग्लोहिताकारा शस्त्रवर्णा च दक्षिणा। आमपात्रप्रतीकाशा पश्चिमा मधुसूदन ॥ २८ ॥ प्रदीप्ताश्च दिशः सर्वा धार्त्तराष्ट्रस्य माधव। महद्भयं वेदयन्ति तस्मिन्नुत्पातदर्शने ॥ २९ ॥ सहस्रपादं प्रासादं स्वप्नान्ते स्म युधिष्ठिर। अधिरोहन्मया दृष्टः सह भ्रातृभिरच्युत ॥ ३० ॥ श्वेतोष्णीषाश्च दृश्यन्ते सर्वे ते वै सुवाससः। आसनानि च शुभ्राणि सर्वेषामुपलक्षये ॥ ३१ ॥ तव चापि मया कृष्ण स्वप्नान्ते रुधिराविला। अस्त्रेण पृथिवी दृष्टा परिक्षिप्ता जनार्द्दन ॥ ३२ ॥ अस्थिसञ्चयमारूढश्चामितौजा युधिष्ठिरः। सुवर्णपात्र्यां संहृष्टो भुक्तवान् घृतपायसम् ॥ ३३ ॥ युधिष्ठिरो मया दृष्टो ग्रसमानो वसुन्धराम्। त्वया दत्तामिमां व्यक्तं भोक्ष्यते स वसुन्धराम् ॥ ३४ ॥ उच्चपर्वतमारूढो भीमकर्म्मा वृकोदरः। गदापाणिर्नरव्याघ्रो ग्रसन्निव महीमिमाम् ॥ ३५ ॥ क्षपयिष्यति नः सर्वान् स सुव्यक्तं महारणे। विदितं मे हृषीकेश यतो धर्म्मस्ततो जयः ॥ ३६ ॥ पाण्डरं गजमारूढो गाण्डीवी स धनञ्जयः। त्वया सार्द्धं हृषीकेश श्रिया परमया ज्वलन् ॥ ३७ ॥ यूयं सर्वान् वधिष्यध्वं तत्र मे नास्ति संशयः। पार्थिवान् समरे कृष्ण दुर्योधनपुरोगमान् ॥ ३८ ॥ नकुलः सहदेवश्च सात्यकिश्च महारथः। शुक्लकेयूरकवचाः शुक्लमाल्याम्बरावृताः ॥ ३९ ॥ अधिरूढा नरव्याघ्रा नरवाहनमुत्तमम्। त्रय एते मया दृष्टाः पाण्डरच्छत्रवाससः ॥ ४० ॥ श्वेतोष्णीषाश्च दृश्यन्ते त्रय एते जनार्द्दन। धार्त्तराष्ट्रेषु सैन्येषु तान् विजानीहि केशव ॥ ४१ ॥ अश्वत्थामा कृपश्चैव कृतवर्म्मा च सात्वतः। रक्तोष्णीषाश्च दृश्यन्ते सर्वे माधव पार्थिवाः ॥ ४२ ॥ उष्ट्रप्रयुक्तमारूढौ भीष्मद्रोणौ महारथौ। मया सार्द्धं महाबाहो धार्त्तराष्ट्रेण वा विभो ॥ ४३ ॥ अगस्त्यशास्तां च दिशं प्रयाताः स्म जनार्द्दन। अचिरेणैव कालेन प्राप्स्यामो यमसादनम् ॥ ४ ॥ अहञ्चान्ये

च राजानो यत्र तत् चक्रमण्डलम् । गाण्डीवाग्निं प्रवेक्ष्याम इति मे नास्ति संशयः ॥ ४५ ॥

कृष्ण उवाच । उपस्थितविनाशेयं नूनमद्य वसुन्धरा । यथा हि मे वचः कर्ण नोपैति हृदयं तव ॥ ४६ ॥ सर्व्वेषां तात भूतानां विनाशे प्रत्युपस्थिते । अनयो नयसङ्काशो हृदयान्नापसर्पति ॥४७॥

कर्ण उवाच । अपि त्वां कृष्ण पश्याम जीवन्तोऽस्मान्महारणात् । समुत्तीर्णा महाबाहो वीरक्षयविनाशनात् ॥ ४८ ॥ अथ वा सङ्गमः कृष्ण स्वर्गे नो भविता ध्रुवम् । तत्रेदानीं समेष्यामः पुनः सार्द्धं त्वयानघ ॥ ४९ ॥

सञ्जय उवाच । इत्युक्ता माधवं कर्णः परिष्वज्य च पीडितम् । विसर्ज्जितः केशवेन रथोपस्थादवातरत् ॥ ५० ॥ ततः स्वरथमास्थाय जाम्बूनदविभूषितम् । सहास्माभिर्न्निववृते राधेयो दीनमानसः ॥ ५१ ॥ ततः शीघ्रतरं प्रायात् केशवः सहसात्यकिः । पुनरुच्चारयन् वाणीं याहि याहीति सारथिम् ॥ ५२ ॥

इति उद्योगपर्व्वणि भगवद्यानपर्व्वणि कृष्णकर्णसंवादे द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥

---

वैशम्पायन उवाच । असिद्धानुनये कृष्णे कुरुभ्यः पाण्डवान् गते । अभिगम्य पृथां क्षत्ता शनैः शोचन्निवाब्रवीत् ॥ १ ॥ जानासि मे जीवपुत्रि भावं नित्यमविग्रहे । क्रोशतो न च गृह्णीते वचनं मे सुयोधनः ॥ २ ॥ उपपन्नो ह्यसौ राजा चेदिपाञ्चालकैकयैः । भीमार्ज्जुनाभ्यां कृष्णेन युयुधानयमैरपि ॥ ३ ॥ उपप्लव्ये निविष्टोऽपि धर्म्ममेव युधिष्ठिरः । काङ्क्षते ज्ञातिसौहार्द्दाद्बलवान् दुर्ब्बलो यथा ॥ ४ ॥ राजा तु धृतराष्ट्रोऽयं वयोवृद्धो न शाम्यति । मत्तः पुत्रमदेनैव विधर्म्मे पथि वर्त्तते ॥ ५ ॥ जयद्रथस्य कर्णस्य तथा

दुःशासनस्य च। सौबलस्य च दुर्बुद्धा मिथो भेदः प्रपत्स्यते ॥६॥ अधर्मेण हि धर्मिष्ठे कृतं वैकार्य्यमीदृशम्। येषां तेषामयं धर्मः सानुबन्धो भविष्यति ॥ ७ ॥ क्रियमाणे बलाद्धर्मे कुरुभिः को न संज्वरेत्। असाम्ना केशवे याते समुद्योच्यन्ति पाण्डवाः ॥ ८ ॥ ततः कुरूणामनयो भविता वीरनाशनः। चिन्तयन्ती लभे निद्रा-मह.सु च निशासु च ॥ ९ ॥ श्रुत्वा तु कुन्ती तद्वाक्यमर्थकामेन भाषितम्। सा निःश्वसन्ती दुःखार्त्ता मनसा विममर्श ह ॥ १० ॥ धिगस्त्वर्थं यत् कृतेऽयं महान् ज्ञातिवधः कृतः। वर्त्स्यते सुहृदाञ्चैव युद्धेऽस्मिन् वै पराभवः ॥ ११ ॥ पाण्डवाश्चेदिपाञ्चाला यादवाश्च समागताः। भारतैः सह योत्स्यन्ति किन्तु दुःखमतः परम् ॥ १२ ॥ पश्ये दोषं ध्रुवं युद्धे तथायुद्धे पराभवम्। अध-नस्य मृतं श्रेयो न हि ज्ञातिक्षयो जयः ॥ १३ ॥ इति मे चिन्त-यन्त्या वै हृदि दुःखं प्रवर्त्तते। पितामहः शान्तनव आचार्य्यश्च युधाम्पतिः ॥ १४ ॥ कर्णश्च धार्त्तराष्ट्रार्थं वर्द्धयन्ति भयं मम। नाचार्य्यः कामवान् शिष्यैर्द्रोणो युध्येत जातुचित् ॥ १५ ॥ पाण्ड-वेषु कथं हार्द्दं कुर्य्यान्न च पितामहः। अयन्तु को वृथादृष्टि-र्धार्त्तराष्ट्रस्य दुर्मतेः ॥ १६ ॥ मोहानुवर्त्ती सततं पापो द्वेष्टि च पाण्डवान्। महत्यनर्थे निर्बन्धी बलवांश्च विशेषतः ॥ १७ ॥ कर्णः सदा पाण्डवानां तन्मे दहति सम्प्रति। आशंसे त्वद्य कर्णस्य मनोऽहं पाण्डवान् प्रति ॥ १८ ॥ प्रसादयितुमासाद्य दर्शयन्ती यथातथम्। तोषितो भगवान् यत्र दुर्वासा मे वरं ददौ ॥ १९ ॥ आह्वानं मन्त्रसंयुक्तं वसन्त्याः पितृवेश्मनि। साहमन्तःपुरे राज्ञः कुन्तिभोजपुरस्कृता ॥ २० ॥ चिन्तयन्ती बहुविधं हृदयेन विदू-यता। बलाबलञ्च मन्त्राणां ब्राह्मणस्य च वाग्बलम् ॥ २१ ॥ स्त्रीभावाद्बालभावाच्च चिन्तयन्ती पुनःपुनः। धात्र्या विश्रब्धया गुप्ता सखीजनवृता तदा ॥ २२ ॥ दोषं परिहरन्ती च पितु-

यारिप्रारचिणी । कथन्तु सुकृतं मे स्यान्नापराधवती कथम् ॥२३॥ भवेयमिति सञ्चिन्त्य ब्राह्मणं तं नमस्य च । कौतूहलात्तु तं लब्ध्वा बालिश्यादचरन्तदा ॥ २४ ॥ कन्या सती देवमर्कमाघादयमच्युततः । योऽसौ कानीनगर्भो मे पुत्रवत् परिरचितः ॥ २५ ॥ कस्मान्न कुर्य्यादचनं पथ्यं भ्रातृहितं तथा । इति कुन्ती विनिश्चित्य कार्य्यनिश्चयमुत्तमम् ॥ २६ ॥ कार्य्यार्थमभिनिश्चित्य ययौ भागीरथीं प्रति । आत्मजस्य ततस्तस्य घृणिनः सत्यसङ्गिनः ॥ २७ ॥ गङ्गातीरे पृथाश्रौषीद्वेदाध्ययननिस्वनम् । प्राङ्मुखस्योर्द्ध्वबाहोः सा पर्य्यतिष्ठत पृष्ठतः ॥ २८ ॥ जप्यावसानं कार्य्यार्थं प्रतीचन्ती तपस्विनी । अतिष्ठत् सूर्य्यतापार्त्ता कर्णस्योत्तरवाससि ॥ २९ ॥ कौरव्यपत्नी वार्ष्णेयी पद्ममालेव शुष्यती । आपृष्ठतापात्त्वम्प्य स परिवृत्य यतव्रतः ॥ ३० ॥ दृष्ट्वा कुन्तीमुपातिष्ठदभिवाद्य कृताञ्जलिः । यथान्यायं महातेजा मानी धर्मभृतां वरः । उत्स्मयन् प्रणतः प्राह कुन्तीं वैकर्त्तनो वृषः ॥ ३१ ॥

इति उद्योगपर्व्वणि भगवद्यानपर्व्वणि कुन्तीकर्णसमागमे त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥

---

कर्ण उवाच । राधेयोऽहमाधिरथिः कर्णस्त्वामभिवादये । प्राप्ता किमर्थं भवती ब्रूहि किं करवाणि ते ॥ १ ॥

कुन्त्युवाच । कौन्तेयस्त्वं न राधेयो न तवाधिरथः पिता । नासि सूतकुले जातः कर्ण तद्विद्धि मे वचः ॥ २ ॥ कानीनस्त्वं मया जातः पूर्व्वजः कुचिणा धृतः । कुन्तिराजस्य भवने जातस्त्वमसि पुत्रक ॥ ३ ॥ प्रकाशकर्मा तपनो योऽयं देवो विरोचनः । अजीजनत् त्वां मय्येष कर्ण शस्त्रभृतां वरम् ॥ ४ ॥ कुण्डली बद्धकवचो देवगर्भः श्रियावृतः । जातस्त्वमसि दुर्द्धर्षो मया पुत्र

दुःशासनस्य च। सौवलस्य च दुर्बुद्धा मिथो भेदः प्रपत्स्यते ॥६॥ अधर्मेण हि धर्मिष्ठे कृतं वैकार्थ्यमीदृशम्। येषां तेषामयं धर्मः सानुबन्धो भविष्यति ॥ ७ ॥ ह्रियमाणे बलाद्धर्मे कुरुभिः को न संज्वरेत्। असाम्ना केशवे याते समुद्योक्ष्यन्ति पाण्डवाः ॥ ८ ॥ ततः कुरूणामनयो भविता वीरनाशनः। चिन्तयन्त्य लभे निद्रामहःसु च निशासु च ॥ ९ ॥ श्रुत्वा तु कुन्ती तद्वाक्यमर्थकामेन भाषितम्। सा निःश्वसन्ती दुःखार्त्ता मनसा विममर्श ह ॥ १० ॥ धिगस्त्वर्थं यत् कृतेऽयं महान् ज्ञातिवधः कृतः। वर्त्स्यते सुहृदाञ्चैव युद्धेऽस्मिन् वै पराभवः ॥ ११ ॥ पाण्डवाश्चेदिपाञ्चाला यादवाश्च समागताः। भारतैः सह योत्स्यन्ति किन्नु दुःखमतः परम् ॥ १२ ॥ पश्ये दोषं ध्रुवं युद्धे तथायुद्धे पराभवम्। अधनस्य मृतं श्रेयो न हि ज्ञातिक्षयो जयः ॥ १३ ॥ इति मे चिन्तयन्त्या वै हृदि दुःखं प्रवर्त्तते। पितामहः शान्तनव आचार्य्यश्च युधाम्पतिः ॥ १४ ॥ कर्णश्च धार्त्तराष्ट्रार्थं वर्द्धयन्ति भयं मम। नाचार्य्यः कामवान् शिष्यैर्द्रोणो युध्येत जातुचित् ॥ १५ ॥ पाण्डवेषु कथं हार्द्दं कुर्य्यान्न च पितामहः। अयन्त्वेको वृथादृष्टिर्धार्त्तराष्ट्रस्य दुर्मतेः ॥ १६ ॥ मोहानुवर्त्ती सततं पापो द्वेष्टि च पाण्डवान्। महत्यनर्थे निर्बन्धी बलवांश्च विशेषतः ॥ १७ ॥ कर्णः सदा पाण्डवानां तन्मे दहति सम्प्रति। आशंसे त्वद्य कर्णस्य मनोऽहं पाण्डवान् प्रति ॥ १८ ॥ प्रसादयितुमासाद्य दर्शयन्ती यथातथम्। तोषितो भगवान् यत्र दुर्वासा मे वरं ददौ ॥ १९ ॥ आह्वानं मन्त्रसंयुक्तं वसन्त्याः पितृवेश्मनि। साहमन्तःपुरे राज्ञः कुन्तिभोजपुरस्कृता ॥ २० ॥ चिन्तयन्ती बहुविधं हृदयेन विदूयता। बलाबलञ्च मन्त्राणां ब्राह्मणस्य च वाग्बलम् ॥ २१ ॥ स्त्रीभावाद्बालभावाच्च चिन्तयन्ती पुनःपुनः। धात्र्या विश्वस्तया गुप्ता सखीजनवृता तदा ॥ २२ ॥ दोषं परिहरन्ती च पितु-

याचिताः स्वचिणी। कथन्तु सुकृतं मे स्यान्नापराधवती कथम् ॥२३॥
भवेयमिति सञ्चिन्त्य ब्राह्मणं तं नमस्य च। कौतूहलात्तु तं लब्धा
वालिश्यादचरन्तदा ॥ २४ ॥ कन्या सती देवमर्कमासादयमहृ-
न्ततः। योऽसौ कानीनगर्भो मे पुत्रवत् परिरचितः ॥ २५ ॥
कस्मान्न कुर्य्याद्वचनं पथ्यं भ्रातृहितं तथा। इति कुन्ती विनि-
श्चित्य कार्य्यनिश्चयमुत्तमम् ॥ २६ ॥ कार्य्यार्थमभिनिश्चित्य ययौ
भागीरथीं प्रति। आत्मजस्य ततस्तस्य घृणिनः सत्यसङ्गिनः
॥ २७ ॥ गङ्गातीरे पृथाश्रौषीद्वेदाध्ययननिस्वनम्। प्राङ्मुख-
स्योर्द्धबाहोः सा पर्य्यतिष्ठत पृष्ठतः ॥ २८ ॥ जप्यावसानं कार्य्यार्थं
प्रतीचन्ती तपस्विनी। अतिष्ठत् सूर्य्यतापार्त्ता कर्णस्योत्तरवाससि
॥ २९ ॥ कौरव्यपत्नी वार्ष्णेयी पद्ममालेव शुष्यती। आपृष्ठतापा-
ज्जप्त्वा स परिवृत्य यतव्रतः ॥ ३० ॥ दृष्ट्वा कुन्तीमुपातिष्ठदभि-
वाद्य कृताञ्जलिः। यथान्यायं महातेजा मानी धर्म्मभृतां वरः।
उत्स्मयन् प्रणतः प्राह कुन्तीं वैकर्त्तनो वृषः ॥ ३१ ॥

इति उद्योगपर्व्वणि भगवद्यानपर्व्वणि कुन्तीकर्णसमागमे
त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥



पितुर्गृहे ॥ ५ ॥ स त्वं भ्रातृनसम्बुध्य मोहाद्यदुपसेवसे । धार्त्त
राष्ट्र न तद्युक्त त्वयि पुत्र विशेषत ॥ ६ ॥ एतद्धर्मफल पुत्र
नराणा धर्मनिश्चये । यत्तुष्यन्यस्य पितरौ माता चाप्येकदर्शिनी
॥ ७ ॥ अर्जुनेनार्ज्जिता पूर्वं हृता लोभादसाधुभि । आच्छिद्य
धार्त्तराष्ट्रेभ्यो भुङ्क्ष्व यौधिष्ठिरी श्रियम् ॥ ८ ॥ अद्य पश्यन्तु
कुरव कर्णार्जुनसमागमम् । सौभ्रात्रेण समालक्ष्य सन्नमन्ता
मसाधव ॥ ९ ॥ कर्णार्जुनौ वै भवेता यथा रामजनार्द्दनौ ।
असाध्य किन्नु लोके स्यात युवयो सहितात्मनो ॥ १० ॥ कर्ण
शोभिष्यसे नून पञ्चभिर्भ्रातृभिर्वृत । वेदै परिवृतो ब्रह्मा वेद्या
मिव महाध्वरे ॥ ११ ॥ उपपन्नो गुणै सर्वै ज्येष्ठ श्रेष्ठेषु बन्धुषु ।
सूतपुत्रेति मा शब्द पार्थस्त्वमसि वीर्य्यवान् ॥ १२ ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि कुन्तीकर्णसमागमे
चतुश्चत्वारिंशदधिकशततमोऽध्याय ॥ १४४ ॥

---

वैशम्पायन उवाच । तत सूर्य्यान्निश्चरिता कर्ण शुश्राव
भारतीम् । दुरत्यया प्रणयिनी पितृवत भास्करेरिताम् ॥ १ ॥
सत्यमाह पृथा वाक्य कर्ण मातृवच कुरु । श्रेयस्ते स्यान्नरव्याघ्र
सर्वमाचरतस्तथा ॥ २ ॥

वैशम्पायन उवाच । एवमुक्तस्य माता च स्वय पिता च
भानुना । चचाल नैव कर्णस्य मति सत्यधृतेस्तदा ॥ ३ ॥

कर्ण उवाच । न चैतत् श्रद्दधे वाक्य क्षत्रिये भाषित त्वया ।
धर्मद्वार ममैतत स्यान्नियोगकरण तव ॥ ४ ॥ अकरोन्मयि यत
पाप भवती सुमहात्ययम् । अपाकीर्णोऽस्मि यन्मातस्तद्यश
कीर्त्तिनाशनम् ५ ॥ अहञ्चेत् क्षत्रियो जातो न प्राप्त क्षत्रसत्
क्रियाम् । त्वत्कृते किन्नु पापीय शत्रु कुर्य्यात्ममाहितम् ॥ ६ ॥

क्रियाकाले त्वनुक्रोशमङ्गला त्वमिमं मम। हीनसंस्कारसमयमद्य मां समनूनुदः ॥ ७ ॥ न वै मम हितं पूर्वं मातृवच्चेष्टितं त्वया। सा मां सम्बोधयस्यद्य केवलात्महितैषिणी ॥ ८ ॥ कृष्णेन सहितात् को वै न व्यथेत धनञ्जयात्। कोऽद्य भीतं न मां विद्यात् पार्थानां समितिं गतम् ॥ ९ ॥ अभ्राता विदितः पूर्वं युद्धकाले प्रकाशितः। पाण्डवान् यदि गच्छामि किं मां चत्रं वदिष्यति ॥ १० ॥ सर्व्वकामैः संविभक्तः पूजितश्च यथासुखम्। अहं वै धार्त्तराष्ट्राणां कुर्य्यां तदफलं कथम् ॥ ११ ॥ उपनह्य परैर्वैरं ये मां नित्यमुपासते। नमस्कुर्वन्ति च सदा वसवो वासवं यथा ॥ १२ ॥ मम प्राणेन ये शत्रून् शक्ताः प्रतिसमासितुम्। मन्यन्ते ते कथं तेषामहं छिन्द्यां मनोरथम् ॥ १३ ॥ मया प्लवेन संग्रामं तितीर्षन्ति दुरत्ययम्। अपारे पारकामा ये त्यजेयं तानहं कथम् ॥ १४ ॥ अयं हि कालः सम्प्राप्तो धार्त्तराष्ट्रोपजीविनाम्। निर्व्वेष्टव्यं मया तत्र प्राणानपरिरक्षता ॥ १५ ॥ कृतार्थाः सुभृता ये हि कृत्यकाले ह्युपस्थिते। अनवेक्ष्य कृतं पापा विकुर्व्वन्त्यनवस्थिताः ॥ १६ ॥ राजकिल्बिषिणां तेषां भर्तृपिण्डापहारिणाम्। नैवायं न परो लोको विद्यते पापकर्म्मणाम् ॥ १७ ॥ धृतराष्ट्रस्य पुत्राणामर्थे योत्स्यामि ते सुतैः। बलञ्च शक्तिमास्थाय न वै त्वय्यनृतं वदे ॥ १८ ॥ आनृशंस्यमथो वृत्तं रक्षन् सत्पुरुषोचितम्। अतोऽर्थकरमप्येतन्न करोम्यद्य ते वचः ॥ १९ ॥ न च तेषां समारम्भो मयि मोघो भविष्यति। वध्यान् विषह्यान् संग्रामे न हनिष्यामि ते सुतान् ॥ २० ॥ युधिष्ठिरञ्च भीमञ्च यमौ चैवार्जुनादृते। अर्जुनेन समं युद्धं मम यौधिष्ठिरे बले ॥ २१ ॥ अर्जुनं हि निहत्याजौ सम्प्राप्तं स्यात् फलं मया। यशसा वापि युज्येयं निहतः सव्यसाचिना ॥ २२ ॥ न ते जातु विनङ्क्ष्यन्ति पुत्रा पञ्च यशस्विनि। निरर्जुनाः सकर्णा वा सार्जुना वा हते

मयि ॥ २३ ॥ इति कर्णवचः श्रुत्वा कुन्ती दुःखात् प्रवेपती। उवाच पुत्रमाश्लिष्य कर्णं धैर्य्यादकम्पनम् ॥ २४ ॥ एवं वै भाव्यमेतेन क्षयं यास्यन्ति कौरवाः। यथा त्वं भाषसे कर्ण दैवन्तु बलवत्तरम् ॥ २५ ॥ त्वया चतुर्णां भ्रातॄणामभयं शत्रुकर्षण। दत्तं तत् प्रतिजानीहि सङ्गरप्रतिमोचनम् ॥ २६ ॥ अनामयं स्वस्ति चेति पृथाथो कर्णमब्रवीत्। तां कर्णोऽथ तथेत्युक्त्वा ततस्तौ जग्मतुः पृथक् ॥ २७ ॥

इति उद्योगपर्व्वणि भगवद्यानपर्व्वणि कुन्तीकर्णसमागमे पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥

---

वैशम्पायन उवाच। आगम्य हास्तिनपुरादुपप्लव्यमरिन्दमः। पाण्डवानां यथावृत्तं केशवः सर्वमुक्तवान् ॥ १ ॥ सम्भाष्य सुचिरं कालं मन्त्रयित्वा पुनः पुनः। स्वमेव भवनं शौरिर्विश्रामार्थं जगाम ह ॥ २ ॥ विसृज्य सर्वान् नृपतीन् विराटप्रमुखांस्तदा। पाण्डवा भ्रातरः पञ्च भानावस्तं गते सति ॥ ३ ॥ सन्ध्यामुपास्य ध्यायन्तस्तमेव गतमानसाः। आनाय्य कृष्णं दाशार्हं पुनर्मन्त्रममन्त्रयन् ॥ ४ ॥

युधिष्ठिर उवाच। त्वया नागपुरं गत्वा सभायां धृतराष्ट्रजः। किमुक्तः पुण्डरीकाक्ष तन्न शंसितुमर्हसि ॥ ५ ॥

वासुदेव उवाच। मया नागपुरं गत्वा सभायां धृतराष्ट्रजः। तथ्यं पथ्यं हितञ्चोक्तो न च गृह्णाति दुर्मतिः ॥ ६ ॥

युधिष्ठिर उवाच। तस्मिन्नुत्पथमापन्ने कुरुवृद्धः पितामहः। किमुक्तवान् हृषीकेश दुर्योधनममर्षणम् ॥ ७ ॥ आचार्यो वा महाभागो भारद्वाजः किमब्रवीत्। पिता वा धृतराष्ट्रस्तं गान्धारी वा किमब्रवीत् ॥ ८ ॥ पिता यवीयानस्माकं क्षत्ता धर्मविदां

वरः । पुत्रयो कामिमन्त्राः किमाह धृतराष्ट्रजम् ॥ ९ ॥ किन्नु सर्वे नृपतयः सभायां ये समासते । उक्तवन्तो यथातत्त्वं तद्ब्रूहि त्वं जनार्दन ॥ १० ॥ उक्तवान् भगवान् सर्वं वचनं कुरुमुख्ययोः । धार्त्तराष्ट्रस्य तेषां हि वचनं कुरुसंसदि ॥ ११ ॥ कामलोभाभिभूतस्य मन्दस्य प्राज्ञमानिनः । अप्रियं हृदये मह्यं तन्न तिष्ठति केशव ॥ १२ ॥ तेषां वाक्यानि गोविन्द श्रोतुमिच्छाम्यहं विभो । यथा च नाभिपद्येत कालस्तात तथा कुरु । भवान् हि नो गतिः कृष्ण भवान्नाथो भवान् गुरुः ॥ १३ ॥

वासुदेव उवाच । शृणु राजन् यथा वाक्यमुक्तो राजा सुयोधनः । मध्ये कुरूणां राजेन्द्र सभायां तन्निबोध मे ॥ १४ ॥ मया विश्राविते वाक्ये जहास धृतराष्ट्रजः । अथ भीष्मः सुसंक्रुद्ध इदं वचनमब्रवीत् ॥ १५ ॥ दुर्योधन निबोधेदं कुलार्थे यद्ब्रवीमि ते । तच्छ्रुत्वा राजशार्दूल स्वकुलस्य हितं कुरु ॥ १६ ॥ मम तात पिता राजन् शान्तनुर्लोकविश्रुतः । तस्याहमेक एवासं पुत्रः पुत्रवतां वर ॥ १७ ॥ तस्य बुद्धिः समुत्पन्ना द्वितीयः स्यात् कथं सुतः ॥ १८ ॥ एकं पुत्रमपुत्रं वै प्रवदन्ति मनीषिणः ॥ १८ ॥ न चोच्छेदं कुलं यायात् विस्तीर्य्येत कथं यशः । तस्याहमीप्सितं बुद्ध्वा कालीं मातरमाहरम् ॥ १९ ॥ प्रतिज्ञां दुष्करां कृत्वा पितुरर्थे कुलस्य च । अराजा चोर्द्ध्वरेताश्च यथा सुविदितं तव ॥ २० ॥ प्रतीतो निवसाम्येष प्रतिज्ञामनुपालयन् । तस्यां जज्ञे महाबाहुः श्रीमान् कुरुकुलोद्वहः ॥ २१ ॥ विचित्रवीर्य्यो धर्मात्मा कनीयान्मम पार्थिव । स्वर्य्यातेऽहं पितरि तं स्वराज्ये संन्यवेशयम् ॥ २२ ॥ विचित्रवीर्य्यं राजानं भृत्यो भूत्वा ह्यधश्चरः । तस्याहं सदृशान् दारान्राजेन्द्र समुपाहरम् ॥ २३ ॥ जित्वा पार्थिवसङ्घातमपि ते बहुशः श्रुतम् । ततो रामेण समरे द्वन्द्वयुद्धमुपागमम् ॥ २४ ॥ स हि रामभयादेभिर्नागरैर्विप्रवासितः । दारे-

व्यतिप्रसक्ताय यक्ष्माय समपद्यत ॥ २५ ॥ यदा त्वराजके राष्ट्रे न ववर्ष सुरेश्वर। तदाभ्यधावन्मामेव प्रजा क्षुद्भयपीड़िता ॥२६॥

प्रजा ऊचु। उपक्षीणा प्रजा सर्वा राजा भव भवाय न। ईती प्रणुद भद्रन्ते शान्तनो कुलवर्द्धन ॥ २७ ॥ पीड्यन्ते ते प्रजा सर्वा व्याधिभिश्च भ्रदारुणै। अल्पावशिष्टा गाङ्गेय ता परित्रातुमर्हसि ॥ २८ ॥ आधीन् प्रणुद वीर त्व प्रजा धर्म्मेण पालय। त्वयि जीवति मा राष्ट्र विनाशमुपगच्छतु ॥ २९ ॥

भीष्म उवाच। प्रजाना क्रोशतीना वै नैवाक्षुभ्यत मे मन। प्रतिज्ञा रक्षमाणस्य सद्वृत्त स्मरतस्तथा ॥ ३० ॥ तत पौरा महाराज माता काली च मे शुभा। भृत्या पुरोहिताचार्य्या ब्राह्मणाश्च बहुश्रुता ॥ ३१ ॥ मामूचुर्भृशसन्तप्ता भव राजेति सन्ततम। प्रतीपरक्षित राष्ट्र त्वा प्राप्य विनशिष्यति ॥ ३२ ॥ स त्वमस्मद्धितार्थं वै राजा भव महामते। इत्युक्त प्राञ्जलिर्भूत्वा दुखितो भृशमातुर ॥ ३३ ॥ तेभ्यो न्यवेदयन्तत्र प्रतिज्ञा पितृ-गौरवात्। ऊर्द्ध्वरेता ह्यराजा च कुलस्यार्थे पुन पुन ॥ ३४ ॥ विशेषतस्त्वदर्थञ्च धुरि मा मा नियोजय। ततोऽह प्राञ्जलि र्भूत्वा मातर सम्प्रसादयम ॥ ३५ ॥ नाम्ब शान्तनुना जात कौरव वशमुद्वहन्। प्रतिज्ञा वितथा कुर्य्यामिति राजन् पुन पुन ॥ ३६ ॥ विशेषतस्त्वदर्थञ्च प्रतिज्ञा कृतवानहम्। अह प्रेष्यश्च दासश्च तवाम्ब सुतवत्सले ॥ ३७ ॥ एव तामनुनीयाह मातर जनमेव च। अयाच भ्रातृदारेषु तदा व्यास महामुनिम् ॥ ३८ ॥ सह माता महाराज प्रसाद्य तमृषि तदा। अपत्यार्थं महाराज प्रसाद कृतवाश्च स ॥ ३९ ॥ त्रीन् स पुत्रानजनयत् तदा भरतसत्तम। अन्ध करणहीनत्वान्नैव राजा पिता तव ॥ ४० ॥ राजा तु पाण्डुरभवन्महात्मा लोकविश्रुत। स राजा तस्य ते पुत्रा पितुर्दायाद्यहारिण ॥ ४१ ॥ मा तात कलह

कार्यो राज्यस्यार्द्धं प्रदीयताम्। मयि जीवति राज्यं कः संप्रशासेत् पुमानिह ॥ ४२ ॥ मावमंस्था वचो मह्यं शममिच्छामि वः सदा। न विशेषोऽस्ति मे पुत्र त्वयि तेषु च पार्थिव ॥ ४३ ॥ मतमेतत् पितुस्तुभ्यं गान्धार्या विदुरस्य च। श्रोतव्यं खलु वृद्धानां नाभिशङ्कीर्वचो मम। नाशयिष्यसि मा सर्वमात्मानं पृथिवीं तथा ॥ ४४ ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि भगवद्वाक्ये षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥

---

वासुदेव उवाच। भीष्मेणोक्ते ततो द्रोणो दुर्य्योधनमभाषत। मध्ये नृपाणां भद्रन्ते वचनं वचनक्षमः ॥ १ ॥

द्रोण उवाच। प्रातीपः शान्तनुस्तात कुलस्यार्थे यथा स्थितः। यथा देवव्रतो भीष्मः कुलस्यार्थे स्थितोऽभवत् ॥ २ ॥ तथा पाण्डुर्नरपतिः सत्यसन्धो जितेन्द्रियः। राजा कुरूणां धर्मात्मा सुव्रतः सुसमाहितः ॥ ३ ॥ ज्येष्ठाय राज्यमदद्द्धृतराष्ट्राय धीमते। यवीयसे तथा क्षत्रे कुरूणां वंशवर्द्धनः ॥ ४ ॥ ततः सिंहासने राजन् स्थापयित्वैनमच्युतम्। वनं जगाम कौरव्यो भार्य्याभ्यां सहितो नृपः ॥ ५ ॥ नीचैः स्थित्वा तु विदुर उपास्ते स्म विनीतवत्। प्रेष्यवत् पुरुषव्याघ्रो वालव्यजनमुत्क्षिपन् ॥ ६ ॥ ततः सर्वाः प्रजास्तात धृतराष्ट्रं जनेश्वरम्। अन्वपद्यन्त विधिवत् यथा पाण्डुं जनाधिपम् ॥ ७ ॥ विसृज्य धृतराष्ट्राय राज्यं स विदुराय च। चचार पृथिवीं पाण्डुः सर्वां परपुरञ्जयः ॥८॥ कोषसम्वलने दाने भृत्यानाञ्चान्ववेक्षणे। भरणे चैव सर्वस्य विदुरः सत्यसङ्गरः ॥ ९ ॥ सन्धिविग्रहसंयुक्तो राज्ञः संवाहनक्रिया। अवैक्षत महातेजा भीष्मः परपुरञ्जयः ॥ १० ॥ सिंहा-

सनस्थो नृपतिर्धृतराष्ट्रो महाबल। अन्वास्यमान सततं विदुरेण महात्मना ॥ ११ ॥ कथं तस्य कुले जात कुलभेद व्यवस्यसि। सम्भूय भ्रातृभि सार्द्धं भुङ्क्ष्व भोगान् जनाधिप ॥ १२ ॥ ब्रवीम्यहन्न कार्पण्यात नार्थहेतो कथञ्चन। भीष्मेण दत्त मिच्छामि न त्वया राजसत्तम ॥ १३ ॥ नाहं त्वत्तोऽभिकाङ्क्षिष्ये वृत्त्युपायं जनाधिप। यतो भीष्मस्ततो द्रोणो यद्भीष्मस्त्वाह तत् कुरु ॥ १४ ॥ दीयतां पाण्डुपुत्रेभ्यो राज्यार्द्धमरिकर्षण। सममाचार्य्यकं तात तव तेषाञ्च मे सदा ॥ १५ ॥ अश्वत्थामा यथा मह्यं तथा श्वेतहयो मम। बहुना किं प्रलापेन यतो धर्मस्ततो जय ॥ १६ ॥

वासुदेव उवाच। एवमुक्ते महाराज द्रोणेनामिततेजसा। व्याजहार ततो वाक्यं विदुर सत्यसङ्गर। पितुर्वदनमन्वीक्ष्य परिवृत्य च धर्मवित् ॥ १७ ॥

विदुर उवाच। देवव्रत निबोधेद वचनं मम भाषत। प्रनष्ट कौरवो वंशस्त्वया यत् पुनरुद्धृत ॥ १८ ॥ तन्मे विलपमानस्य वचन समुपेक्षसे। कोऽयं दुर्योधनो नाम कुलेऽस्मिन् कुलपांसन ॥ १९ ॥ तस्य लोभाभिभूतस्य मतिं समनुवर्त्तसे। अनार्य्यस्याकृतज्ञस्य लोभेन हृतचेतस ॥ २० ॥ अतिक्रामति य शास्त्रं पितुर्धर्मार्थदर्शिन। एते नश्यन्ति कुरवो दुर्योधनकृतेन वै ॥ २१ ॥ यथा ते न प्रणश्येयुर्महाराज तथा कुरु। माञ्चैव धृतराष्ट्रञ्च सर्वमेव महीपते ॥ २२ ॥ चित्रकार इवालेख्य कृत्वा स्थापितवानसि। प्रजापति प्रजा सृष्ट्वा यथा संहरते तथा ॥ २३ ॥ नोपेक्षस्व महाबाहो पश्यमान कुलक्षयम्। अथ तेऽद्य मतिर्नष्टा विनाशे प्रत्युपस्थिते ॥ २४ ॥ वनं गच्छ मया सार्द्धं धृतराष्ट्रेण चैव च। बद्ध्वा वा निकृतिप्रज्ञं धार्त्तराष्ट्रं सुदुर्मतिम् ॥ २५ ॥ साधीदं राज्यमद्याशु पाण्डवैरभिरक्षितम्। प्रसीद

राजशार्दूल विनाशो दृश्यते महान् ॥ २६ ॥ पाण्डवानां कुरूणाञ्च राज्ञामभिततेजसाम् । विररामैवमुक्त्वा तु विदुरो दीनमानस. । प्रध्यायमानः स तदा नि.श्वसंश्च पुन. पुन ॥ २७ ॥ ततोऽथ राज्ञ' सुबलस्य पुत्री धर्मार्थयुक्तं कुलनाशभीता । दुर्य्योधनं पापमतिं नृशंसं राज्ञां समक्षं सुतमाह कोपात् ॥ २८ ॥ ये पार्थिवा राजसभां प्रविष्टा ब्रह्मर्षयो ये च सभासदोऽन्ये । शृण्वन्तु वक्ष्यामि तवापराधं पापस्य सामात्यपरिच्छदस्य ॥ २९ ॥ राज्यं कुरूणामनुपूर्वभोज्यं क्रमागतो न. कुलधर्म एषः । त्वं पाप बुद्धेऽतिनृशंसकर्मन् राज्यं कुरूणामनयाद्विहंसि ॥ ३० ॥ राज्ये स्थितो धृतराष्ट्रो मनीषी तस्यानुजो विदुरो दीर्घदर्शी । एतावतिक्रम्य कथं नृपत्वं दुर्य्योधन प्रार्थयसेऽद्य मोहात ॥ ३१ ॥ राजा च क्षत्ता च महानुभावौ भीष्मे स्थिते परवन्तौ भवेताम् । अयन्तु धर्मज्ञतया महात्मा न राज्यकामो नृवरो नदीज ॥ ३२ ॥ राज्यन्तु पाण्डोरिदमप्रधृष्यं तस्याद्य पुत्रा प्रभवन्ति नान्ये । राज्यं तदेतन्निखिलं पाण्डवाना पैतामहं पुत्रपौत्रानुगामि ॥ ३३ ॥ यद्वै ब्रूते कुरुमुख्यो महात्मा देवव्रत' सत्यसन्धो मनीषी । सर्वं तदस्माभिरहत्य कार्य्यं राज्यं स्वधर्मं परिपालयद्भिः ॥ ३४ ॥ अनुज्ञया चाथ महाव्रतस्य ब्रूयान्नृपोऽय विदुरस्तथैव । कार्य्यं भवेत्तत् सुहृदान्नियुक्त धर्मं पुरस्कृत्य सुदीर्घकालम् ॥ ३५ ॥ न्यायागत राज्यमिदं कुरूणा युधिष्ठिर शास्तु वै धर्मपुत्र. । प्रचोदितो धृतराष्ट्रेण राज्ञा पुरस्कृत शान्तनवेन चैव ॥ ३६ ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि श्रीकृष्णवाक्ये सप्तचत्वारिंशदधिकशततमोऽध्याय ॥ १४७ ॥

---

वासुदेव उवाच। एवमुक्ते तु गान्धार्या धृतराष्ट्रो जनेश्वरः। दुर्योधनमुवाचेदं राज्ञां मध्ये जनाधिप ॥ १ ॥ दुर्योधन निबोधेदं यत्त्वां वक्ष्यामि पुत्रक। तथा तत् कुरु भद्रं ते यद्यस्ति पितृगौरवम् ॥ २ ॥ सोमः प्रजापतिः पूर्वं कुरूणां वंशवर्द्धनः। सोमाद्बभूव षष्ठोऽयं ययातिर्नहुषात्मजः ॥ ३ ॥ तस्य पुत्रा बभूवुर्हि पञ्च राजर्षिसत्तमाः। तेषां यदुर्महातेजा ज्येष्ठः समभवत् प्रभुः ॥ ४ ॥ पूरुर्यवीयांश्च ततो योऽस्माकं वंशवर्द्धनः। शर्मिष्ठया संप्रसूतो दुहित्रा वृषपर्वणः ॥ ५ ॥ यदुश्च भरतश्रेष्ठ देवयान्याः सुतोऽभवत्। दौहित्रस्तात शुक्रस्य काव्यस्यामिततेजसः ॥ ६ ॥ यादवानां कुलकरो बलवान् वीर्यसम्मतः। अवमेने स तु क्षत्रं दर्पपूर्णः सुमन्दधीः ॥ ७ ॥ न चातिष्ठत् पितुः शास्त्रे बलदर्पविमोहितः। अवमेने च पितरं भ्रातॄंश्चाप्यपराजितः ॥ ८ ॥ पृथिव्यां चतुरन्तायां यदुरेवाभवद्बली। वशे कृत्वा स नृपतीन् न्यवसन्नागसाह्वये ॥ ९ ॥ तं पिता परमक्रुद्धो ययातिर्नहुषात्मजः। शशाप पुत्रं गान्धारे राज्याच्चापि व्यरोपयत् ॥ १० ॥ ये चैनमन्ववर्त्तन्त भ्रातरो बलदर्पितम्। शशाप तानपि क्रुद्धो ययातिस्तनयानथ ॥ ११ ॥ यवीयांसं ततः पूरुं पुत्रं स्ववशवर्त्तिनम्। राज्ये निवेशयामास विधेयं नृपसत्तम ॥ १२ ॥ एवं ज्येष्ठोऽप्यथोत्सिक्तो न राज्यमभिजायते। यवीयांसोऽपि जायन्ते राज्यं वृद्धोपसेवया ॥ १३ ॥ तथैव सर्वधर्मज्ञः पितुर्मम पितामहः। प्रतीपः पृथिवीपालस्त्रिषु लोकेषु विश्रुतः ॥१४॥ तस्य पार्थिवसिंहस्य राज्यं धर्मेण शासतः। त्रयः प्रजज्ञिरे पुत्रा देवकल्पा यशस्विनः ॥ १५ ॥ देवापिरभवज्ज्येष्ठो बाह्लीकस्तदनन्तरम्। तृतीयः शान्तनुस्तात धृतिमान् मे पितामहः ॥ १६ ॥ देवापिस्तु महातेजास्त्वग्दोषी राजसत्तम। धार्मिकः सत्यवादी च पितुः शुश्रूषणे रतः ॥ १७ ॥ पौरजानपदानाञ्च सम्मतः

साधुसत्कृत । सर्व्वेषां बालवृद्धानां देवापिर्हृदयङ्गम ॥ १८ ॥
वदान्यः सत्यसन्धश्च सर्व्वभूतहिते रत । वर्त्तमान पितु शास्त्रे
ब्राह्मणानां तथैव च ॥ १९ ॥ वाह्लीकश्च प्रियो भ्राता शान्तनोश्च
महात्मन । सौभ्रात्रञ्च परं तेषां सहितानां महात्मनाम् ॥ २० ॥
अथ कालस्य पर्य्याये वृद्धो नृपतिसत्तम । सम्भारानभिषेकार्थं
कारयामास शास्त्रत ॥ २१ ॥ कारयामास सर्व्वाणि मङ्गलार्थानि
वै विभु । त ब्राह्मणाश्च वृद्धाश्च पौरजानपदै सह ॥ २२ ॥
सर्व्वे निवारयामासुर्देवापेरभिषेचनम् । स तच्छ्रुत्वा तु नृपति-
रभिषेकनिवारणम् ॥ २३ ॥ अश्रुकण्ठोऽभवद्राजा पर्य्यशोचत
चात्मजम् । एव वदान्यो धर्म्मज्ञ सत्यसन्धश्च सोऽभवत् ॥ २४ ॥
प्रिय प्रजानामपि स त्वग्दोषेण प्रदूषित । हीनाङ्गं पृथिवी-
पाल नाभिनन्दन्ति देवता ॥ २५ ॥ इति कृत्वा नृपश्रेष्ठ प्रत्य-
षेधन् द्विजर्षभा । तत प्रव्यथिताङ्गोऽसौ पुत्रशोकसमन्वित ॥२६॥
निवारितं नृप दृष्ट्वा देवापि संश्रितो वनम् । वाह्लीको मातुल-
कुलं त्यक्त्वा राज्य समाश्रित ॥ २७ ॥ पितृभ्रातॄन् परित्यज्य
प्राप्तवान् परमर्द्धिमत् । वाह्लीकेन त्वनुज्ञात शान्तनुर्लोकविश्रुत
॥ २८ ॥ पितर्य्युपरते राजन् राज्यकाममकारयत् । तथैवाहं
मतिमता परिचिन्त्येह पाण्डुना ॥ २९ ॥ ज्येष्ठ प्रभ्रंशितो राज्यात्
हीनाङ्ग इति भारत । पाण्डुस्तु राज्यं सम्प्राप्त कनीयानपि
सन्नृप ॥ ३० ॥ विनाशे तस्य पुत्राणामिदं राज्यमरिन्दम ।
मय्यभागिनि राज्याय कथं त्वं राज्यमिच्छसि । अराजपुत्रो
ह्यस्वामी परस्व हर्त्तुमिच्छसि ॥ ३१ ॥ युधिष्ठिरो राजपुत्रो
महात्मा न्यायागतं राज्यमिदञ्च तस्य । स कौरवस्यास्य कुलस्य
भर्त्ता प्रशासिता चैव महानुभाव ॥ ३२ ॥ स सत्यसन्ध स तथा-
प्रमत्त शास्त्रे स्थितो बन्धुजनस्य साधु । प्रिय प्रजानां सुहृदा-
नुकम्पी जितेन्द्रिय साधुजनस्य भर्त्ता ॥ ३३ ॥ क्षमा तितिक्षा

दम आर्जवञ्च सत्यव्रतत्वं श्रुतमप्रमादः । भूतानुकम्पा ह्यनुशासनञ्च युधिष्ठिरे राजगुणाः समस्ताः ॥ ३४ ॥ अराजपुत्रस्त्वमनार्य्यवृत्तो लुब्धः सदा बन्धुषु पापबुद्धिः । क्रमागतं राज्यमिदं परेषां हर्तुं कथं यच्छसि दुर्विनीत ॥ ३५ ॥ प्रयच्छ राज्यार्द्धमपेतमोहः सवाहनं त्वं सपरिच्छदञ्च । ततोऽवशेषं तव जीवितस्य सहानुजस्यैव भवेन्नरेन्द्र ॥ ३६ ॥

इति उद्योगपर्वणि भगवद्यानपर्वणि कृष्णवाक्ये अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥१४८॥

---

वासुदेव उवाच । एवमुक्ते तु भीष्मेण द्रोणेन विदुरेण च । गान्धार्य्या धृतराष्ट्रेण न वै मन्दोऽन्वबुध्यत ॥ १ ॥ अवधूयोत्थितो मन्दः क्रोधसंरक्तलोचनः । अन्वद्रवन्त तं पश्चात् राजानस्त्यक्तजीविताः ॥ २ ॥ आज्ञापयच्च राज्ञस्तान् पार्थिवान् नष्टचेतस । प्रयाध्वं वै कुरुक्षेत्रं पुष्योऽद्येति पुनः पुनः ॥ ३ ॥ ततस्ते पृथिवीपालाः प्रययुः सहसैनिकाः । भीष्मं सेनापतिं कृत्वा संहृष्टाः कालचोदिताः ॥ ४ ॥ अक्षौहिण्यो दशैका च कौरवाणां समागताः । तासां प्रमुखतो भीष्मस्तालकेतुर्व्यरोचत ॥ ५ ॥ यदत्र युक्तं प्राप्तञ्च तद्विधत्स्व विशाम्पते । उक्तं भीष्मेण तद्वाक्यं द्रोणेन विदुरेण च ॥ ६ ॥ गान्धार्य्या धृतराष्ट्रेण समक्षं मम भारत । एतत्ते कथितं राजन् यद्वृत्तं कुरुसंसदि ॥ ७ ॥ साम्यमादौ प्रयुक्तं मे राजन् सौभ्रात्रमिच्छता । अभेदायास्य वंशस्य प्रजानाञ्च विवृद्धये ॥ ८ ॥ पुनर्भेदश्च मे युक्तो यदा साम्ना न गृह्यते । कर्म्मानुकीर्त्तनञ्चैव देवमानुषसंहितम् ॥ ९ ॥ यदा नाद्रियते वाक्यं सामपूर्वं सुयोधनः । तदा मया समानीय भेदिताः सर्वपार्थिवाः ॥ १० ॥ अद्भुतानि च घोराणि दारुणानि च भारत ।

अमानुषाणि कर्माणि दर्शितानि मया विभो ॥ ११ ॥ निर्भर्त्स्यित्वा राधस्तास्तृणीकृत्य सुयोधनम्। राधेयं भीषयित्वा च सौबलञ्च पुनः पुनः ॥ १२ ॥ द्यूततो धार्त्तराष्ट्राणां निन्दां कृत्वा तथा पुनः। भेदयित्वा नृपान् सर्व्वान् वाग्भिर्मन्त्रेण चासकृत् ॥ १३ ॥ पुनः सामाभिसंयुक्तं सम्प्रदानमथाब्रुवम्। अभेदात् कुरुवंशस्य कार्य्ययोगात्तथैव च ॥ १४ ॥ ते शूरा धृतराष्ट्रस्य भीष्मस्य विदुरस्य च। तिष्ठेयुः पाण्डवाः सर्व्वे हित्वा मानमधश्चराः ॥ १५ ॥ प्रयच्छन्तु च ते राज्यमनीशास्ते भवन्तु च। यथाह राजा गाङ्गेयो विदुरश्च हितं तव ॥ १६ ॥ सर्व्वं भवतु ते राज्यं पञ्च ग्रामान् विसर्ज्जय। अवश्यं भरणीया हि पितुस्ते राजसत्तम ॥ १७ ॥ एवमुक्तोऽपि दुष्टात्मा नैव भावं व्यसृजत। दण्डञ्चतुर्थं पश्यामि तेषु पापेषु नान्यथा ॥ १८ ॥ निर्य्यातास्य विनाशाय कुरुदेवं नराधिपाः। एतत्ते कथितं राजन् यद्वृत्तं कुरुसंसदि ॥ १९ ॥ न ते राज्यं प्रयच्छन्ति विना युद्धेन पाण्डव। विनाशहेतवः सर्व्वे प्रत्युपस्थितमृत्यवः ॥ २० ॥

इति उद्योगपर्व्वणि भगवद्यानपर्व्वणि भगवद्वाक्ये एकोनपञ्चाशदधिकशततमोऽध्यायः ॥ १४९ ॥ समाप्तञ्च भगवद्यानपर्व्व ॥

---

## अथ सैन्यनिर्य्याणपर्व्व ॥

वैशम्पायन उवाच। जनार्द्दनवचः श्रुत्वा धर्मराजो युधिष्ठिरः। भ्रातॄनुवाच धर्म्मात्मा समक्षं केशवस्य ह ॥ १ ॥ श्रुतं भवद्भिर्यद्वृत्तं सभायां कुरुसंसदि। केशवस्यापि यद्वाक्यं तत सर्व्वमवधारितम् ॥ २ ॥ तस्मात् सेनाविभागं मे कुरुध्वं नरसत्तमाः। अक्षौहिण्यश्च सप्तैताः समेता विजयाय वै ॥ ३ ॥ तासां ये पतयः सप्त विख्यातास्तान्निबोधत। द्रुपदश्च विराटश्च धृष्टद्युम्नशिख-

ण्डिनौ ॥ ४ ॥ सात्यकिश्चेकितानश्च भीमसेनश्च वीर्य्यवान्। एते सेनाप्रणेतारो वीराः सर्वे तनुत्यजः ॥ ५ ॥ सर्वे वेदविद शूराः सर्वे सुचरितव्रताः । ह्रीमन्तो नीतिमन्तश्च सर्वे युद्धविशारदाः ॥ ६ ॥ इष्वस्त्रकुशलाः सर्वे तथा सर्वास्त्रयोधिनः । सप्तानामपि यो नेता सेनानां प्रविभागवित् ॥ ७ ॥ यः सहेत रणे भीष्मं शरार्चिं पावकोपमम् । तन्तावत् सहदेवाद्य प्रब्रूहि कुरुनन्दन। स्वमतं पुरुषव्याघ्र को नः सेनापतिः क्षमः ॥ ८ ॥

सहदेव उवाच । संयुक्त एकदुःखश्च वीर्य्यवांश्च महीपतिः । यं समाश्रित्य धर्मज्ञ स्वमंशमनुयुञ्ज्महे ॥ ९ ॥ मत्स्यो विराटो बलवान् कृतास्त्रो युद्धदुर्मदः । प्रसहिष्यति संग्रामे भीष्मं तांश्च महारथान् ॥ १० ॥

वैशम्पायन उवाच । तथोक्ते सहदेवेन वाक्ये वाक्यविशारदः । नकुलोऽनन्तरं तस्मादिदं वचनमब्रवीत् ॥ ११ ॥ वयसा शास्त्रतो धैर्य्यात् कुलेनाभिजनेन च । ह्रीमान् बलान्वितः श्रीमान् सर्वशास्त्रविशारदः ॥ १२ ॥ वेद शास्त्रं भरद्वाजाद्दुर्धर्षः सत्यसङ्गरः । यो नित्यं स्पर्द्धते द्रोणं भीष्मञ्चैव महाबलम् ॥ १३ ॥ श्लाघ्यः पार्थिववंशस्य प्रमुखे वाहिनीपतिः । पुत्रपौत्रैः परिवृतः शतशाख इव द्रुमः ॥ १४ ॥ यस्तताप तपो घोरं सदारः पृथिवीपतिः । रोषात् द्रोणविनाशाय वीरः समितिशोभनः ॥ १५ ॥ पितेवास्मान् समाधत्ते यः सदा पार्थिवर्षभः । श्वशुरो द्रुपदोऽस्माकं सेनाग्रं सम्प्रकर्षतु ॥ १६ ॥ स द्रोणभीष्मावायान्तौ सहेदिति मतिर्मम । स हि दिव्यास्त्रविद्राजा सखा चाङ्गिरसो नृपः ॥ १७ ॥ माद्रीसुताभ्यामुक्ते तु स्वमते कुरुनन्दनः । वासविः सव्यसाच्यब्रवीद्वचः ॥ १८ ॥ योऽयं तपःप्रभावेन ऋषिसन्तोषणेन च । दिव्यः पुरुष उत्पन्नो ज्वालावर्णो महाभुजः ॥ १९ ॥ धनुष्मान् कवची खड्गी रथमारुह्य दंशितः ।

दिव्यै र्हयवरैर्युक्तैरग्निकुण्डात् समुत्थितः ॥ २० ॥ गर्ज्जन्निव महा-
मेघो रथघोषेण वीर्य्यवान्। सिंहसंहननो वीरः सिंहतुल्यपरा-
क्रमः ॥ २१ ॥ सिंहोरस्कः सिंहभुज सिंहवक्षा महाबलः। सिंह-
प्रगर्ज्जनो वीरः सिंहस्कन्धो महाद्युतिः ॥ २२ ॥ सुभ्रूः सुदंष्ट्रः
सुहनु सुबाहुः सुमुखोऽकृशः। सुजत्रुः सुविशालाक्षः सुपादः
सुप्रतिष्ठितः ॥ २३ ॥ अभेद्य सर्व्वशस्त्राणां प्रभिन्न इव वारणः।
जज्ञे द्रोणविनाशाय सत्यवादी जितेन्द्रियः ॥ २४ ॥ धृष्टद्युम्न-
महं मन्ये सहेद्भीष्मस्य सायकान्। वज्राशनिसमस्पर्शान् दीप्ता-
स्यानुरगानिव ॥ २५ ॥ यमदूतसमान् वेगे निपाते पावकोपमान्।
रामेणाजौ विषहितान् वज्रनिष्पेषदारुणान् ॥ २६ ॥ पुरुषं तं
न पश्यामि यः सहेत महाव्रतम्। धृष्टद्युम्नमृते राजन्निति मे
धीयते मतिः ॥ २७ ॥ क्षिप्रहस्तश्चित्रयोधी मतः सेनापतिर्मम।
अभेद्यकवचः श्रीमान् मातङ्ग इव यूथपः ॥ २८ ॥

भीमसेन उवाच। बधार्थं यः समुत्पन्न शिखण्डी द्रुपदा-
त्मजः। वदन्ति सिद्धा राजेन्द्र ऋषयश्च समागताः ॥ २९ ॥ यस्य
संग्राममध्ये तु दिव्यमस्त्रं प्रकुर्व्वतः। रूपं द्रक्ष्यन्ति पुरुषा राम-
स्येव महात्मनः ॥ ३० ॥ न तं युद्धे प्रपश्यामि यो भिन्द्यात्तं
शिखण्डिनम्। शस्त्रेण समरे राजन् सन्नद्धं स्यन्दने स्थितम्
॥ ३१ ॥ द्वैरथे समरे नान्यो भीष्मं हन्यान्महाव्रतम्। शिख-
ण्डिनमृते वीरं स मे सेनापतिर्मतः ॥ ३२ ॥

युधिष्ठिर उवाच। सर्व्वस्य जगतस्तात सारासारं बलाबलम्।
सर्व्वं जानाति धर्म्मात्मा मतमेषाञ्च केशवः ॥ ३३ ॥ यमाह कृष्णो
दाशार्हः सोऽस्तु सेनापतिर्मम। कृतास्त्रोऽप्यकृतास्त्रो वा वृद्धो
वा यदि वा युवा ॥ ३४ ॥ एष नो विजये मूलमेष तात विप-
र्य्यये। अत्र प्राणाश्च राज्यञ्च भावाभावौ सुखासुखे ॥ ३५ ॥ एष
धाता विधाता च सिद्धिरत्र प्रतिष्ठिता। यमाह कृष्णो दाशार्हः

सोऽस्तु नो वाहिनीपति ॥ ३६ ॥ ब्रवीतु वदतां श्रेष्ठो निशा समभिवर्त्तते । ततः सेनापतिं कृत्वा कृष्णस्य वशवर्त्तिनः ॥ ३७ ॥ रात्रेः शेषे व्यतिक्रान्ते प्रयास्यामो रणाजिरम् । अधिवासितशस्त्राश्च कृतकौतुकमङ्गला ॥ ३८ ॥

वैशम्पायन उवाच । तस्य तद्वचनं श्रुत्वा धर्मराजस्य धीमतः । अब्रवीत् पुण्डरीकाक्षो धनञ्जयमवेक्ष्य ह ॥ ३९ ॥ ममाप्येते महाराज भवद्भिर्य उदाहृता । नेतारस्तव सेनाया मता विक्रान्तयोधिनः ॥ ४० ॥ सर्वं एव समर्था हि तव शत्रुं प्रबाधितुम् । इन्द्रस्यापि भयं ह्येते जनयेयुर्महाहवे ॥ ४१ ॥ किं पुनर्धार्त्तराष्ट्राणां लुब्धानां पापचेतसाम् । मयापि हि महाबाहो त्वत्प्रियार्थं महाहवे ॥ ४२ ॥ कृतो यत्नो महांस्तत्र शमः स्यादिति भारत । धर्मस्य गतमानृण्यं न स्म वाच्या विवक्षताम् ॥ ४३ ॥ कृतार्थं मन्यते बाल आत्मानमविचक्षणः । धार्त्तराष्ट्रो बलस्थञ्च मन्यत्यात्मानमातुरः ॥ ४४ ॥ युज्यतां वाहिनी साधु वधसाध्या हि मे मताः । न धार्त्तराष्ट्राः शक्ष्यन्ति स्थातुं दृष्ट्वा धनञ्जयम् ॥ ४५ ॥ भीमसेनञ्च सक्रुद्धं यमौ चापि यमोपमौ । युयुधानद्वितीयञ्च धृष्टद्युम्नममर्षणम् ॥ ४६ ॥ अभिमन्युं द्रौपदेयान् विराटद्रुपदावपि । अक्षौहिणीपतींश्चान्यान्नरेन्द्रान् भीमविक्रमान् ॥ ४७ ॥ सारवद्बलमस्माकं दुष्प्रधर्षं दुरासदम् । धार्त्तराष्ट्रबलं सङ्ख्ये हनिष्यति न संशयः । धृष्टद्युम्नमहं मन्ये सेनापतिमरिन्दम ॥ ४८ ॥

पत्तिगजोदग्रं महोर्म्मिभिरिवाकुलम् । यावतामाश्रयानानां तनुत्राणञ्च बध्नताम् ॥ ५२ ॥ प्रयास्यतां पाण्डवानां ससैन्यानां समन्ततः । गङ्गेव पूर्णा दुर्द्धर्षा समदृश्यत वाहिनी ॥ ५३ ॥ अग्रानीके भीमसेनो माद्रीपुत्रौ च दंशितौ । सौभद्रो द्रौपदेयाश्च धृष्टद्युम्नश्च पार्षतः ॥ ५४ ॥ प्रभद्रकाश्च पाञ्चाला भीमसेनमुखा ययुः । ततः शब्दः समभवत् समुद्रस्येव पर्व्वणि ॥ ५५ ॥ हृष्टानां सम्प्रयातानां घोषो दिवमिवास्पृशत् । प्रहृष्टा दंशिता योधाः परानीकविदारणाः ॥ ५६ ॥ तेषां मध्ये ययौ राजा कुन्तीपुत्रो युधिष्ठिरः । शकटापणवेशाश्च यानयुग्यञ्च सर्व्वशः ॥ ५७ ॥ कोषयन्त्रायुधञ्चैव ये च वैद्याश्चिकित्सकाः । फल्गु यच्च बलं किञ्चित् यच्चापि कृशदुर्व्वलम् ॥ ५८ ॥ तत् संगृह्य ययौ राजा ये चापि परिचारकाः । उपप्लव्ये तु पाञ्चाली द्रौपदी सत्यवादिनी ॥५९॥ सह स्त्रीभिर्निववृते दासीदाससमावृता । कृत्वा मूलप्रतीकारं गुल्मैः स्थावरजङ्गमैः ॥ ६० ॥ स्कन्धावारेण महता प्रययुः पाण्डुनन्दनाः । ददतो गां हिरण्यञ्च ब्राह्मणैरभिसंवृताः ॥ ६१ ॥ स्तूयमाना ययू राजन् रथैर्मणिविभूषितैः । केकया धृष्टकेतुश्च पुत्रः काश्यस्य वा विभुः ॥ ६२ ॥ श्रेणिमान् वसुदानश्च शिखण्डी चापराजितः । हृष्टास्तुष्टाः कवचिनः सशस्त्राः समलंकृताः ॥ ६३ ॥ राजानमन्वयुः सर्व्वे परिवार्य्य युधिष्ठिरम् । जघनार्द्धे विराटश्च याज्ञसेनिश्च सौमकिः ॥ ६४ ॥ सुधर्म्मा कुन्तिभोजश्च धृष्टद्युम्नस्य चात्मजाः । रथायुतानि चत्वारि हयाः पञ्चगुणास्तथा ॥ ६५ ॥ पत्तिसैन्यं दशगुणं गजानामयुतानि षट् । अनाधृष्टिश्चेकितानो धृष्टकेतुश्च सात्यकिः ॥ ६६ ॥ परिवार्य्य ययुः सर्व्वे वासुदेवधनञ्जयौ । आसाद्य तु कुरुक्षेत्रं व्यूढानीकाः प्रहारिणः ॥ ६७ ॥ पाण्डवाः समदृश्यन्त नर्दन्तो वृषभा इव । तेऽवगाह्य कुरुक्षेत्रं शङ्खान् दध्मुररिन्दमाः ॥ ६८ ॥ तथैव दध्मतु शङ्खं वासुदेव

ज्याधनुर्वर्मशस्त्राणां तथैव मधुसर्पिषोः । समर्ज्जरसपांशूनां राशय पर्वतोपमाः ॥ १३ ॥ बहूदकं सुयवसं तुषाङ्गारसमन्वितम् । शिविरे शिविरे राजा सञ्चकार युधिष्ठिरः ॥ १४ ॥ महायन्त्राणि नाराचास्तोमराणि परश्वधा । धनूंषि कवचादीनि यष्टयस्तूण-संयुताः ॥ १५ ॥ गजाः कण्टकसन्नाहा लोहवर्मोत्तरच्छदा । दृश्यन्ते तत्र गिर्य्याभाः सहस्रशतयोधिनः ॥ १६ ॥ निविष्टान् पाण्डवांस्तत्र ज्ञात्वा मित्राणि भारत । अभिसस्रुर्यथोद्देशं सबलाः सहवाहनाः ॥ १७ ॥ चरितब्रह्मचर्य्यास्ते सोमपा भूरिदक्षिणाः । जयाय पाण्डुपुत्राणां समाजग्मुर्महीक्षितः ॥ १८ ॥

इति उद्योगपर्वणि सैन्यनिर्याणपर्वणि शिविरादिनिर्माणे एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥

---

जनमेजय उवाच । युधिष्ठिरं सहानीकमुपायान्तं युयुत्सया । सन्निविष्टं कुरुक्षेत्रे वासुदेवेन पालितम् ॥ १ ॥ विराट-द्रुपदाभ्याञ्च सपुत्राभ्यां समन्वितम् । कैकेयैर्वृष्णिभिश्चैव पार्थिवैः शतशो वृतम् ॥ २ ॥ महेन्द्रमिव चादित्यैरभिगुप्तं महारथैः । श्रुत्वा दुर्य्योधनो राजा किं कार्य्यं प्रत्यपद्यत ॥ ३ ॥ एतदिच्छाम्यहं श्रोतुं विस्तरेण महामते । सम्भ्रमे तुमुले तस्मिन् यदासीत् कुरुजाङ्गले ॥ ४ ॥ व्यथयेयुरिमे देवान् सेन्द्रानपि समागमे । पाण्डवा वासुदेवश्च विराटद्रुपदौ तथा ॥ ५ ॥ धृष्टद्युम्नश्च पाञ्चाल्यः शिखण्डी च महारथ । युधामन्युश्च विक्रान्तो देवैरपि दुरासदः ॥ ६ ॥ एतदिच्छाम्यहं श्रोतुं विस्तरेण तपोधन । कुरूणां पाण्डवानाञ्च यद्यदासीद्विचेष्टितम् ॥ ७ ॥

वैशम्पायन उवाच । प्रतियाते तु दाशार्हे राजा दुर्य्योधनस्तदा । कर्णं दुःशासनञ्चैव शकुनिञ्चाब्रवीदिदम् ॥ ८ ॥ अकृ-

धनञ्जयौ । पाञ्चजन्यस्य निर्घोषं विस्फूर्जितमिवाशनेः ॥ ६९ ॥
निशम्य सर्वसैन्यानि समहृष्यन्त सर्वशः । शङ्खदुन्दुभिसंसृष्टः
सिंहनादस्तरस्विनाम् । पृथिवीञ्चान्तरीक्षञ्च सागरांश्चानुनाद-
यन् ॥ ७० ॥

इति उद्योगपर्वणि सैन्यनिर्याणपर्वणि कुरुक्षेत्रप्रवेशे
पञ्चाशदधिकशततमोऽध्यायः ॥ १५० ॥

---

वैशम्पायन उवाच । ततो देशे समे स्निग्धे प्रभूतयवसेन्धने ।
निवेशयामास तदा सेनां राजा युधिष्ठिरः ॥ १ ॥ परिहृत्य
श्मशानानि देवतायतनानि च । आश्रमांश्च महर्षीणां तीर्था-
न्यायतनानि च ॥ २ ॥ मधुरानूषरे देशे शुचौ पुण्ये महामतिः ।
निवेशं कारयामास कुन्तीपुत्रो युधिष्ठिरः ॥ ३ ॥ ततश्च पुनरुत्थाय
सुखं विश्रान्तवाहनः । प्रययौ पृथिवीपालैर्वृतः शतसहस्रशः ॥४॥
विद्राव्य शतशो गुल्मान् धार्त्तराष्ट्रस्य सैनिकान् । पर्यक्रामत्
समन्ताच्च पार्थेन सह केशवः ॥ ५ ॥ शिबिरं मापयामास धृष्ट-
द्युम्नश्च पार्षतः । सात्यकिश्च रथोदारो युयुधानश्च वीर्यवान् ॥६॥
आसाद्य सरितं पुण्यां कुरुक्षेत्रे हिरण्वतीम् । सूपतीर्थां शुचि-
जलां शर्करापङ्कवर्जिताम् ॥ ७ ॥ खानयामास परिखां केशव-
स्तत्र भारत । गुप्त्यर्थमपि चादिश्य बलं तत्र न्यवेशयत् ॥ ८ ॥
विधिर्यः शिबिरस्यासीत् पाण्डवानां महात्मनाम् । तद्विधानि
नरेन्द्राणां कारयामास केशवः ॥ ९ ॥ प्रभूततरकाष्ठानि दुरा-
धर्षतराणि च । भक्ष्यभोज्यान्नपानानि शतशोऽथ सहस्रशः ॥१०॥
शिबिराणि महार्हाणि राज्ञां तत्र पृथक् पृथक् । विमानानीव
राजेन्द्र निविष्टानि महीतले ॥ ११ ॥ तत्रासन् शिल्पिनः प्राज्ञाः
शतशो दत्तवेतनाः । सर्वोपकरणैर्युक्ता वैद्याः शास्त्रविशारदाः ॥१२॥

ज्याधनुर्वर्मशस्त्राणां तथैव मधुसर्पिषोः । ससर्ज्जरसपांशूनां राशयः पर्वतोपमाः ॥ १३ ॥ बहूदकं सुयवसं तुषाङ्गारसमन्वितम् । शिबिरे शिबिरे राजा सञ्चकार युधिष्ठिरः ॥ १४ ॥ महायन्त्राणि नाराचास्तोमराणि परश्वधाः । धनूंषि कवचादीनि यष्टयस्तूण-संयुताः ॥ १५ ॥ गजाः कण्टकसन्नाहा लोहवर्मोत्तरच्छदाः । दृश्यन्ते तत्र गिर्य्याभाः सहस्रशतयोधिनः ॥ १६ ॥ निविष्टान् पाण्डवांस्तत्र ज्ञात्वा मित्राणि भारत । अभिसस्रुर्यथोद्देशं सबलाः सहवाहनाः ॥ १७ ॥ चरितब्रह्मचर्य्यास्ते सोमपा भूरिदक्षिणाः । जयाय पाण्डुपुत्राणां समाजग्मुर्महीक्षितः ॥ १८ ॥

इति उद्योगपर्वणि सैन्यनिर्याणपर्वणि शिबिरादिनिर्माणे एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥



जनमेजय उवाच । युधिष्ठिरं सहानीकमुपायान्तं युयुत्सया । सन्निविष्टं कुरुक्षेत्रे वासुदेवेन पालितम् ॥ १ ॥ विराटद्रुपदाभ्याञ्च सपुत्राभ्यां समन्वितम् । कैकेयैर्वृष्णिभिश्चैव पार्थिवैः शतशो वृतम् ॥ २ ॥ महेन्द्रमिव चादित्यैरभिगुप्तं महारथैः । श्रुत्वा दुर्योधनो राजा किं कार्य्यं प्रत्यपद्यत ॥ ३ ॥ एतदिच्छाम्यहं श्रोतुं विस्तरेण महामते । सम्भ्रमे तुमुले तस्मिन् यदासीत् कुरुजाङ्गले ॥ ४ ॥ व्यथयेयुरिमे देवान् सेन्द्रानपि समागमे । पाण्डवा वासुदेवश्च विराटद्रुपदौ तथा ॥ ५ ॥ धृष्टद्युम्नश्च पाञ्चाल्यः शिखण्डी च महारथः । युधामन्युश्च विक्रान्तो देवैरपि दुरासदः ॥ ६ ॥ एतदिच्छाम्यहं श्रोतुं विस्तरेण तपोधन । कुरूणां पाण्डवानाञ्च यद्यदासीद्विचेष्टितम् ॥ ७ ॥

वैशम्पायन उवाच । प्रतियाते तु दाशार्हे राजा दुर्योधनस्तदा । कर्णं दुःशासनञ्चैव शकुनिञ्चाब्रवीदिदम् ॥ ८ ॥ अकृ-

तेनैव कार्य्येण गत पार्थानथोचत । स एनामन्युनाविष्टो ध्रुवं
धक्ष्यत्यसंशयम् ॥ ९ ॥ द्वेष्टो हि वासुदेवस्य पाण्डवैर्मम विग्रह ।
भीमसेनार्जुनौ चैव दाशार्हस्य मते स्थितौ ॥ १० ॥ अजातशत्रु
रत्यर्थं भीमसेनवशानुग । निकृतश्च मया पूर्वं सह सर्वैं सहो
दरै ॥ ११ ॥ विराटद्रुपदौ चैव कृतवैरौ मया सह । तौ च
सेनाप्रणेतारौ वासुदेववशानुगौ ॥ १२ ॥ भविता विग्रह सोऽय
तुमुलो लोमहर्षण । तस्मात सांग्रामिक सर्वं कारयध्वमत
न्द्रिता ॥ १३ ॥ शिविराणि कुरुक्षेत्रे क्रियन्ता वसुधाधिपा ।
सुपर्य्याप्तावकाशानि दुरादेयानि शत्रुभि ॥ १४ ॥ आसन्नजल
काष्ठानि शतशोऽथ सहस्रश । अच्छेद्याहारमार्गाणि रत्नो-
च्चयचितानि च ॥ १५ ॥ विविधायुधपूर्णानि पताकाध्वजवन्ति
च । समाश्च तेषा पन्थान क्रियन्ता नगराद्बहि ॥ १६ ॥ प्रयाण
घुष्यतामद्य श्वो भूत इति मा चिरम् । ते तथेति प्रतिज्ञाय श्वो
भूते चक्रिरे तथा ॥ १७ ॥ हृष्टरूपा महात्मानो निवासाय मही
क्षिताम् । ततस्ते पार्थिवा सर्वे तच्छ्रुत्वा राजशासनम् ॥ १८ ॥
आसनेभ्यो महार्हेभ्य उदतिष्ठन्नमर्षिता । बाहून् परिघसङ्का
शान् संस्पृशन्त शनै शनै ॥ १९ ॥ काञ्चनाङ्गददीप्तांश्च चन्दना
गुरुभूषितान् । उष्णीषाणि नियच्छन्त पुण्डरीकनिभै करै
॥ २० ॥ अन्तरीयोत्तरीयाणि भूषणानि च सर्वश । ते रथा
न्रथिन श्रेष्ठा हयांश्च हयकोविदा ॥ २१ ॥ सज्जयन्ति स्म नागांश्च
नागशिक्षास्वनुष्ठिता । अथ वर्माणि चित्राणि काञ्चनानि बहूनि
च ॥ २२ ॥ विविधानि च शस्त्राणि चक्रु सर्वाणि सर्वश । पदा
तयश्च पुरुषा शस्त्राणि विविधानि च ॥ २३ ॥ उपजह्रु शरी
रेषु हेमचित्राण्यनेकश । तदुत्सव इवोदग्रं सम्प्रहृष्टनराकुलम्
॥ २४ ॥ नगर धार्त्तराष्ट्रस्य भारतासीत् समाकुलम् । जनौघ
सलिलावर्त्तो रथनागाश्वमीनवान् ॥ २५ ॥ शङ्खदुन्दुभिनिर्घोष

कोपसञ्चयरत्नवान्। चित्राभरणवर्म्मोर्म्मिः शस्त्रनिर्म्मलफेनवान् ॥२६॥ प्रासादमालाद्रिवृतो रथ्यापणमहाह्रदः। योधचन्द्रोदयोद्भूतः कुरुराजमहार्णवः। व्यदृश्यत तदा राजंश्चन्द्रोदय इवार्णवः ॥२७॥

इति उद्योगपर्व्वणि सैन्यनिर्य्याणपर्व्वणि दुर्य्योधनसैन्यसञ्ज्ञायां द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥

---

वैशम्पायन उवाच। वासुदेवस्य तद्वाक्यमनुस्मृत्य युधिष्ठिरः। पुनः पप्रच्छ वार्ष्णेयं कथं मन्दोऽब्रवीदिदम् ॥ १ ॥ अस्मिन्नभ्यागते काले किन्नु नः क्षममच्युत। कथञ्च वर्त्तमाना वै स्वधर्म्मान्न च्यवेमहि ॥ २ ॥ दुर्य्योधनस्य कर्णस्य शकुनेः सौवलस्य च। वासुदेव मतज्ञोऽसि मम सभ्रातृकस्य च ॥ ३ ॥ विदुरस्यापि तद्वाक्यं श्रुतं भीष्मस्य चोभयोः। कुन्त्याश्च विपुलप्रज्ञ प्रज्ञा कार्त्स्न्येन ते श्रुता ॥ ४ ॥ सर्व्वमेतदतिक्रम्य विचार्य्य च पुनः पुनः। क्षेमं यन्नो महाबाहो तत् ब्रवीह्यविचारयन् ॥ ५ ॥ श्रुत्वैतत् धर्म्मराजस्य धर्म्मार्थसहितं वच। मेघदुन्दुभिनिर्घोषः कृष्णो वाक्यमथाब्रवीत् ॥ ६ ॥

श्रीकृष्ण उवाच। उक्तवानस्मि यद्वाक्यं धर्म्मार्थसहितं हितम्। न तु तन्निकृतिप्रज्ञे कौरव्ये प्रतितिष्ठति ॥ ७ ॥ न च भीष्मस्य दुर्म्मेधाः शृणोति विदुरस्य वा। मम वा भाषितं किञ्चित् सर्व्वमेवातिवर्त्तते ॥ ८ ॥ नैष कामयते धर्म्मं नैष कामयते यशः। जितं स मन्यते सर्व्वं दुरात्मा कर्णमाश्रितः ॥ ९ ॥ बन्धमाज्ञापयामास मम चापि सुयोधनः। न च तं लब्धवान् कामं दुरात्मा पापनिश्चयः ॥ १० ॥ न च भीष्मो न च द्रोणो युक्तं तत्राहतुर्व्वचः। सर्व्वे तमनुवर्त्तन्ते ऋते विदुरमच्युत ॥ ११ ॥ शकुनिः सौवलश्चैव कर्णदुःशासनावपि। त्वय्ययुक्तान्यभाषन्त मूढ़ा मूढ़ममर्षणम् ॥१२

किञ्च तेन मयोक्तेन यान्यभाषत कौरवः। संक्षेपेण दुरात्मासौ न युक्तं त्वयि वर्त्तते ॥ १३ ॥ पार्थिवेषु न सर्वेषु य इमे तव सैनिकाः। यत् पापं यन्न कल्याणं सर्वं तस्मिन् प्रतिष्ठितम् ॥१४॥ न चापि वयमत्यर्थं परित्यागेन कर्हिचित्। कौरवैः शममिच्छामस्तत युद्धमनन्तरम् ॥ १५ ॥

वैशम्पायन उवाच। तच्छ्रुत्वा पार्थिवाः सर्वे वासुदेवस्य भाषितम्। अब्रुवन्तो मुखं राज्ञः समुदैक्षन्त भारत ॥ १६ ॥ युधिष्ठिरस्त्वभिप्रायमभिलक्ष्य महीक्षिताम्। योगमाज्ञापयामास भीमार्जुनयमैः सह ॥ १७ ॥ ततः किलकिलाभूतमनीकं पाण्डवस्य ह। आज्ञापिते तदा योगे समहृष्यन्त सैनिकाः ॥ १८ ॥ अवध्यानां वधं पश्यन् धर्मराजो युधिष्ठिरः। निःश्वसन् भीमसेनञ्च विजयञ्चेदमब्रवीत् ॥ १९ ॥ यदर्थं वनवासश्च प्राप्तं दुःखञ्च यन्मया। सोऽयमस्मानुपैत्येव परोऽनर्थः प्रयत्नतः ॥ २० ॥ तस्मिन् यत्नः कृतोऽस्माभिः स नो हीनः प्रयत्नतः। अकृते तु प्रयत्ने ऽस्मानुपावृत्तः कलिर्महान् ॥ २१ ॥ कथं ह्यवध्यैः सङ्ग्रामस्त्वार्यैः सह भविष्यति। कथं हत्वा गुरून् वृद्धान् विजयो नो भविष्यति ॥ २२ ॥ तच्छ्रुत्वा धर्मराजस्य सव्यसाची परन्तपः। यदुक्तं वासुदेवेन श्रावयामास तद्वचः ॥ २३ ॥ उक्तवान् देवकीपुत्रः कुन्त्याश्च विदुरस्य च। वचनं तत्त्वया राजन्निखिलेनावधारितम् ॥ २४ ॥ न च तौ वक्ष्यतोऽधर्ममिति मे नैष्ठिकी मतिः। नापि युक्तञ्च कौन्तेय निवर्त्तितुमयुध्यत ॥ २५ ॥ तच्छ्रुत्वा वासुदेवोऽपि सव्यसाचिवचस्तदा। स्मयमानोऽब्रवीद्वाक्यं पार्थमेवमिति ब्रुवन् ॥ २६ ॥ ततस्ते धृतसङ्कल्पा युद्धाय सहसैनिकाः। पाण्डवेया महाराज तां रात्रिं सुखमावसन् ॥ २७ ॥

इति उद्योगपर्वणि सैन्यनिर्याणपर्वणि युधिष्ठिरार्जुनसंवादे त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥

वैशम्पायन उवाच । व्युष्टायां वै रजन्यां हि राजा दुर्यो-
धनस्ततः । व्यभजत्तान्यनीकानि दश चैकञ्च भारत ॥ १ ॥ नर-
हस्तिरथाश्वानां सारं मध्यञ्च फल्गु च । सर्व्वेष्वेतेष्वनीकेषु
सन्दिदेश नराधिपः ॥ २ ॥ सानुकर्षाः सतूणीराः सवरूथाः
सतोमराः । सोपासङ्गाः सशक्तीकाः सनिषङ्गाः सहृष्टयः ॥ ३ ॥
सध्वजाः सपताकाश्च सशरासनतोमराः । रज्जुभिश्च विचित्राभिः
सपाशाः सपरिस्तराः ॥ ४ ॥ सकचग्रहविक्षेपाः सतैलगुड़वालुकाः ।
साशीविषघटाः सर्व्वे ससर्ज्जरसपांशवः ॥ ५ ॥ सघण्टफलकाः सर्व्वे
सायोगुड़जलोपलाः । सशूलभिन्दिपालाश्च समधूच्छिष्टमुद्गराः
॥ ६ ॥ सकाण्डदण्डकाः सर्व्वे ससीरविषतोमराः । सशूर्पपिटकाः
सर्व्वे सदात्राङ्कुशतोमराः ॥ ७ ॥ सकीलकवचाः सर्व्वे वाशीवृक्षा-
दनान्विताः । व्याघ्रचर्म्मपरीवारा द्वीपिचर्म्मावृताश्च ते ॥ ८ ॥ सहृ-
ष्टयः सशृङ्गाश्च सप्रासविविधायुधाः । सकुठाराः सकुद्दालाः
सतैलक्षौमसर्पिषः ॥ ९ ॥ रुक्मजालप्रतिच्छन्ना नानामणिविभू-
षिताः । चित्रानीकाः सुवपुषो ज्वलिता इव पावकाः ॥ १० ॥
तथा कवचिनः शूराः शस्त्रेषु कृतनिश्चयाः । कुलीना हययोनिज्ञाः
सारथ्ये विनिवेशिताः ॥ ११ ॥ बद्धारिष्टा बद्धकक्षा बद्धध्वज-
पताकिनः । बद्धाभरणनिर्यूहा बद्धचर्म्मासिपट्टिशाः ॥ १२ ॥ चतु-
र्युजो रथाः सर्व्वे सर्व्वे चोत्तमवाजिनः । सप्रासर्ष्टिका सर्व्वे सर्व्वे
शतशरासनाः ॥ १३ ॥ धुर्य्ययोर्हययोरेकस्तथान्यौ पार्ष्णिसारथी ।
तौ चापि रथिना श्रेष्ठौ रथी च हयवित्तथा ॥ १४ ॥ नगराणीव
गुप्तानि दुराधर्षाणि शत्रुभिः । आसन्रथसहस्राणि हेममालानि
सर्व्वशः ॥ १५ ॥ यथा रथास्तथा नागा बद्धकक्षाः स्वलंकृताः ।
बभूवुः सप्तपुरुषा रत्नवन्त इवाद्रय ॥ १६ ॥ द्वावङ्कुशधरौ तत्र
द्वावुत्तमधनुर्द्धरौ । द्वौ वरासिधरौ राजन्नेकः शक्तिपिनाकधृक्
॥ १७ ॥ गजैर्म्मत्तैः समाकीर्णं सर्व्वमायुधकोषकैः । तद्बभूव

बलं राजन् कौरव्यस्य महात्मन ॥ १८ ॥ आमुक्तकवचैर्युक्तैः सपताकैः स्वलङ्कृतैः । सादिभिश्चोपपन्नास्तु तथा चायुतशो हयाः ॥ १९ ॥ अश्वग्राहाः सुसम्पन्ना हेमभाण्डपरिच्छदाः । अनेकशतसाहस्रा सर्वे सादिवशे स्थिताः ॥ २० ॥ नानारूपविकाराश्च नानाकवचशस्त्रिणः । पदातिनो नरास्तत्र बभूवुर्हेममालिनः ॥२१॥ रथस्यासन् दश गजा गजस्य दश वाजिनः । नरा दश हयस्यासन् पादरक्षाः समन्ततः ॥ २२ ॥ रथस्य नागाः पञ्चाशन्नागस्यासन् शतं हयाः । हयस्य पुरुषाः सप्त भिन्नसन्धानकारिणः ॥ २३ ॥ सेना पञ्चशतं नागा रथास्तावन्त एव च । दशसेना च पृतना पृतना दशवाहिनी ॥ २४ ॥ सेना च वाहिनी चैव पृतना ध्वजिनी चमूः । अक्षौहिणी च पर्य्यायैर्निरुक्ता च वरूथिनी ॥ २५ ॥ एवं व्यूढान्यनीकानि कौरवेयेण धीमता । अक्षौहिण्यो दशैका च सङ्ख्याताः सप्त चैव ह ॥ २६ ॥ अक्षौहिण्यस्तु सप्तैव पाण्डवानामभूद्बलम् । अक्षौहिण्यो दशैका च कौरवाणामभूद्बलम् ॥ २७ ॥ नराणां पञ्चपञ्चाशदेषा पत्तिर्विधीयते । सेनामुखञ्च तिस्रस्ता गुल्म इत्यभिशब्दितम् ॥ २८ ॥ त्रयो गुल्मा गणस्त्वासीत् गणास्त्वयुतशो भवेत् । दुर्य्योधनस्य सेनासु योत्स्यमाना प्रहारिणः ॥ २९ ॥ तत्र दुर्य्योधनो राजा शूरान् बुद्धिमतो नरान् । प्रसमीक्ष्य महाबाहुश्चक्रे सेनापतींस्तदा ॥ ३० ॥ पृथगक्षौहिणीनाञ्च प्रणेतॄन्नरसत्तमान् । विधिवत् पूर्व्वमानीय पार्थिवानभ्यभाषत ॥ ३१ ॥ कृपं द्रोणञ्च शल्यञ्च सैन्धवञ्च जयद्रथम् । सुदक्षिणञ्च काम्बोजं कृतवर्म्माणमेव च ॥ ३२ ॥ द्रोणपुत्रञ्च कर्णञ्च भूरिश्रवसमेव च । शकुनिं सौवलञ्चैव वाह्लीकञ्च महाबलम् ॥ ३३ ॥ दिवसे दिवसे तेषां प्रतिवेलञ्च भारत । चक्रे स विविधाः पूजाः प्रत्यक्षञ्च पुनः पुनः ॥ ३४ ॥ तथा विनियताः

सर्वे ये च तेषां पदानुगाः । बभूवुः सैनिका राजन् प्रियं राज्ञ-
श्चिकीर्षवः ॥ ३५ ॥

इति उद्योगपर्व्वणि सैन्यनिर्याणपर्व्वणि दुर्य्योधनसैन्यविभागे
चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥

---

वैशम्पायन उवाच । ततः शान्तनवं भीष्मं प्राञ्जलिर्धृत-
राष्ट्रजः । सह सर्व्वैर्महीपालैरिदं वचनमब्रवीत् ॥ १ ॥ ऋते
सेनाप्रणेतारं पृतना सुमहत्यपि । दीर्य्यते युद्धमासाद्य पिपी-
लिकपुटं यथा ॥ २ ॥ न हि जातु द्वयोर्बुद्धिः समा भवति कर्हि-
चित् । शौर्य्यञ्च बलनेतृणां स्पर्द्धते च परस्परम् ॥ ३ ॥ श्रूयते च
महाप्राज्ञ हैहयानमितौजसः । अभ्ययुर्ब्राह्मणाः सर्वे समुच्छ्रित-
कुशध्वजाः ॥ ४ ॥ तानभ्ययुस्तदा वैश्याः शूद्राश्चैव पितामह ।
एकतस्तु त्रयो वर्णा एकतः क्षत्रियर्षभाः ॥ ५ ॥ ततो युद्धेष्वभ-
ज्यन्त त्रयो वर्णाः पुनः पुनः । क्षत्रियाश्च जयन्त्येव बहुलञ्चैकतो
बलम् ॥ ६ ॥ ततस्ते क्षत्रियानेव पप्रच्छुर्द्विजसत्तमाः । तेभ्यः
शशंसुर्धर्म्मज्ञा याथातथ्यं पितामह ॥ ७ ॥ वयमेकस्य शृण्वाना
महाबुद्धिमतो रणे । भवन्तस्तु पृथक् सर्वे स्वबुद्धिवशवर्त्तिनः ॥ ८ ॥
ततस्ते ब्राह्मणाश्चक्रुरेकं सेनापतिं द्विजम् । नयेषु कुशलं शूर-
मजयन् क्षत्रियांस्ततः ॥ ९ ॥ एवं ये कुशलं शूरं हितेप्सितम-
कल्मषम् । सेनापतिं प्रकुर्वन्ति ते जयन्ति रणे रिपून् ॥ १० ॥
भवानुशनसा तुल्यो हितैषी च सदा मम । असंहार्य्यः स्थितो
धर्म्मे स नः सेनापतिर्भव ॥ ११ ॥ रश्मिवतामिवादित्यो वीरुधा-
मिव चन्द्रमाः । कुवेर इव यक्षाणां देवानामिव वासवः ॥ १२ ॥
पर्व्वतानां यथा मेरुः सुपर्णः पक्षिणां यथा । कुमार इव भूतानां
वसूनामिव हव्यवाट् ॥ १३ ॥ भवता हि वयं गुप्ताः शक्रेणेव

दिवौकस। अनाधृष्या भविष्यामस्त्रिदशानामपि ध्रुवम् ॥ १४ ॥ प्रयातु नो भवानग्रे देवानामिव पावकिः। वयं त्वामनुयास्यामः सौरभेया इवर्षभम् ॥ १५ ॥

भीष्म उवाच। एवमेतन्महाबाहो यथा वदसि भारत। यथैव हि भवन्तो मे तथैव मम पाण्डवाः ॥ १६ ॥ अपि चैव मया श्रेयो वाच्यं तेषां नराधिप। संयोद्धव्यं तवार्थाय यथा मे समयः कृतः ॥ १७ ॥ न च पश्यामि योद्धारमात्मनः सदृशं भुवि। ऋते तस्मान्नरव्याघ्रात् कुन्तीपुत्राद्धनञ्जयात् ॥ १८ ॥ स हि वेद महाबुद्धिर्दिव्यान्यस्त्राण्यनेकशः। न तु मां विवृतो युद्धे जातु युध्येत पाण्डवः ॥ १९ ॥ अहस्त्वेव क्षणेनैव निर्मनुष्यमिदं जगत्। कुर्यां शस्त्रबलेनैव ससुरासुरराक्षसम् ॥ २० ॥ न त्वेवोत्सादनीया मे पाण्डोः पुत्रा जनाधिप। तस्मात् योधान् हनिष्यामि प्रयोगेणायुतं सदा ॥ २१ ॥ एवमेषां करिष्यामि निधनं कुरुनन्दन। न चेत्ते मां हनिष्यन्ति पूर्वमेव समागमे ॥२२॥ सेनापतिस्त्वहं राजन् समयेनापरेण ते। भविष्यामि यथाकामं तन्मे श्रोतुमिहार्हसि ॥ २३ ॥ कर्णो वा युध्यतां पूर्वमहं वा पृथिवीपते। स्पर्द्धते हि सदात्यर्थं सूतपुत्रो मया रणे ॥ २४ ॥

कर्ण उवाच। नाहं जीवति गाङ्गेये राजन् योत्स्ये कथञ्चन। हते भीष्मे तु योत्स्यामि सह गाण्डीवधन्वना ॥ २५ ॥

वैशम्पायन उवाच। ततः सेनापतिञ्चक्रे विधिवत् भूरिदक्षिणम्। धृतराष्ट्रात्मजो भीष्मं सोऽभिषिक्तो व्यरोचत ॥२६॥ ततो भेरीश्च शङ्खांश्च शतशोऽथ सहस्रशः। वादयामासुरव्यग्रा वादका राजशासनात् ॥ २७ ॥ सिंहनादाश्च विविधा वाहनानाञ्च निस्वनाः। प्रादुरासीदनभ्रे च वर्षं रुधिरकर्द्दमम् ॥२८॥ निर्घाताः पृथिवीकम्पा गजबृंहितनिस्वनाः। आसंश्च सर्वयोधानां पातयन्तो मनांस्युत ॥ २९ ॥ वाचश्चाप्यशरीरिण्यो

दिवश्चोल्का प्रपेदिरे। शिवाश्च भयवेदिन्यो नेदुर्दीप्तरा भृशम्
॥ ३० ॥ सैनापत्ये यदा राजा गाङ्गेयमभिषिक्तवान्। तदैता-
न्युग्ररूपाणि बभूवुः शतशो नृप ॥ ३१ ॥ ततः सेनापतिं कृत्वा
भीष्मं परबलार्द्दनम्। वाचयित्वा द्विजश्रेष्ठान् गोभिर्निष्कैश्च
भूरिशः ॥ ३२ ॥ वर्द्धमानो जयाशीर्भिर्निर्ययौ सैनिकैर्वृतः।
आपगेयं पुरस्कृत्य भ्रातृभिः सहितस्तदा ॥ ३३ ॥ स्कन्धावारेण
महता कुरुक्षेत्रं जगाम ह। परिक्रम्य कुरुक्षेत्रं कर्णेन सह
कौरवः ॥ ३४ ॥ शिबिरं मापयामास समे देशे जनाधिप।
मधुरानूषरे देशे प्रभूतयवसेन्धने। यथैव हास्तिनपुरं तद्वच्छिबि-
रमाबभौ ॥ ३५ ॥

इति उद्योगपर्वणि सैन्यनिर्याणपर्वणि भीष्मसैन्यापत्ये
पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १५५ ॥



जनमेजय उवाच। आपगेयं महात्मानं भीष्मं शस्त्रभृतां
वरम्। पितामहं भारतानां ध्वजं सर्वमहीक्षिताम् ॥ १ ॥ बृह-
स्पतिसमं बुद्ध्या क्षमया पृथिवीसमम्। समुद्रमिव गाम्भीर्य्ये
हिमवन्तमिव स्थिरम् ॥ २ ॥ प्रजापतिमिवौदार्य्ये तेजसा भास्करो-
पमम्। महेन्द्रमिव शत्रूणां ध्वंसनं शरवृष्टिभिः ॥ ३ ॥ रणयज्ञे
प्रवितते सुभीमे लोमहर्षणे। दीक्षितश्चिररात्राय श्रुत्वा तत्र
युधिष्ठिरः ॥ ४ ॥ किमब्रवीन्महाबाहुः सर्वशस्त्रभृतां वरः।
भीमसेनार्जुनौ वापि कृष्णो वा प्रत्यभाषत ॥ ५ ॥

वैशम्पायन उवाच। आपद्धर्मार्थकुशलो महाबुद्धिर्युधिष्ठिरः।
सर्वान् भ्रातॄन् समानीय वासुदेवञ्च शाश्वतम् ॥ ६ ॥ उवाच
वदतांश्रेष्ठः सान्त्वपूर्वमिदं वचः। पर्य्याक्रामत सैन्यानि यत्ता-

स्तिष्ठत दंशिता ॥ ७ ॥ पितामहेन वो युद्धं पूर्वमेव भविष्यति। तस्मात् सप्तसु सेनासु प्रणेतॄन् मम पश्यत ॥ ८ ॥

श्रीकृष्ण उवाच। यथार्हति भवान् वक्तुमस्मिन् काले ह्युपस्थिते। तथेदमर्थवद्वाक्यमुक्तं ते भरतर्षभ ॥ ९ ॥ रोचते मे महाबाहो क्रियतां यदनन्तरम्। नायकास्तव सेनाया क्रियन्तामिह सप्त वै ॥ १० ॥

वैशम्पायन उवाच। ततो द्रुपदमानाय्य विराटं शिनिपुङ्गवम्। धृष्टद्युम्नञ्च पाञ्चाल्यं धृष्टकेतुञ्च पार्थिवं ॥ ११ ॥ शिखण्डिनञ्च पाञ्चाल्यं सहदेवञ्च मागधम्। एतान् सप्त महाभागान् वीरान् युद्धाभिकाङ्क्षिणः ॥ १२ ॥ सेनाप्रणेतॄन् विधिवदभ्यषिञ्चत युधिष्ठिरः। सर्वसेनापतिञ्चात्र धृष्टद्युम्नञ्चकार च ॥ १३ ॥ द्रोणान्तहेतोरुत्पन्नो य इद्धाज्जातवेदसः। सर्वेषामेव तेषान्तु समस्तानां महात्मनाम् ॥ १४ ॥ सेनापतिपतिञ्चक्रे गुडाकेशं धनञ्जयम्। अर्जुनस्यापि नेता च संयन्ता चैव वाजिनाम् ॥ १५॥ सङ्कर्षणानुजः श्रीमान्महाबुद्धिर्जनार्दनः। तद्दृष्ट्वोपस्थितं युद्धं समासन्नं महात्ययम् ॥ १६ ॥ प्राविशद् भवनं राजन् पाण्डवस्य हलायुधः। सहाक्रूरप्रभृतिभिर्गदसाम्बोद्धवादिभिः ॥ १७ ॥ रौक्मिणेयाहुकसुतैश्चारुदेष्णपुरोगमैः। वृष्णिमुख्यैरभिगतैर्व्याघ्रैरिव बलोत्कटैः ॥ १८ ॥ अभिगुप्तो महाबाहुर्मरुद्भिरिव वासवः। नीलकौषेयवसनः कैलासशिखरोपमः ॥ १९ ॥ सिंहखेलगतिः श्रीमान् मदरक्तान्तलोचनः। तं दृष्ट्वा धर्मराजश्च केशवश्च महाद्युतिः ॥ २० ॥ उदतिष्ठत्तदा पार्थो भीमकर्मा वृकोदरः। गाण्डीवधन्वा ये चान्ये राजानस्तत्र केचन ॥ २१ ॥ पूजयाञ्चक्रिरे ते वै समायान्तं हलायुधम्। ततस्तं पाण्डवो राजा करे पस्पर्श पाणिना ॥ २२ ॥ वासुदेवपुरोगास्तु सर्व एवाभ्यवादयन्। विराटद्रुपदौ वृद्धावभिवाद्य हलायुधः ॥ २३ ॥ युधिष्ठिरेण

सहित उपाविशदरिन्दमः । ततस्तेषूपविष्टेषु पार्थिवेषु समन्ततः ॥ २४ ॥ वासुदेवमभिप्रेक्ष्य रौहिणेयोऽभ्यभाषत । भवितायं महारौद्रो दारुणः पुरुषक्षयः ॥ २५ ॥ दिष्टमेतत् ध्रुवं मन्ये न शक्यमतिवर्त्तितुम् । अस्मात् युद्धात् समुत्तीर्णानपि वः ससुहृज्जनान् ॥ २६ ॥ अरोगानक्षतैर्देहैर्द्रष्टास्मीति मतिर्मम । समेतं पार्थिवं क्षत्रं कालपक्वमसंशयम् ॥ २७ ॥ विमर्द्दश्च महान् भावी मांसशोणितकर्द्दमः । उक्तो मया वासुदेवः पुनः पुनरुपह्वरे ॥२८॥ सम्बन्धिषु समां वृत्तिं वर्त्तस्व मधुसूदन । पाण्डवा हि यथास्माकं तथा दुर्य्योधनो नृपः ॥ २९ ॥ तस्यापि क्रियतां साह्यं स पर्य्येति पुनः पुनः । तच्च मे नाकरोद्वाक्यं त्वदर्थं मधुसूदनः ॥ ३० ॥ निविष्टः सर्व्वभावेन धनञ्जयमवेक्ष्य च । ध्रुवो जयः पाण्डवानामिति मे निश्चिता मतिः ॥ ३१ ॥ तथा ह्यभिनिवेशोऽयं वासुदेवस्य भारत । न चाहमुत्सहे कृष्णमृते लोकमुदीक्षितुम् ॥ ३२ ॥ ततोऽहमनुवर्त्तामि केशवस्य चिकीर्षितम् । उभौ शिष्यौ हि मे वीरौ गदायुद्धविशारदौ ॥ ३३ ॥ तुल्यस्नेहोऽस्म्यतो भीमे तथा दुर्य्योधने नृपे । तस्मात् यास्यामि तीर्थानि सरस्वत्या निषेवितुम् ॥ ३४ ॥ न हि शक्ष्यामि कौरव्यान्नश्यमानानुपेक्षितुम् । एवमुक्त्वा महाबाहुरनुज्ञातश्च पाण्डवैः । तीर्थयात्रां ययौ रामो निवर्त्त्य मधुसूदनम् ॥ ३५ ॥

इति उद्योगपर्व्वणि सैन्यनिर्य्याणपर्व्वणि रामगमने षट्पञ्चाशदधिकशततमोऽध्यायः ॥ १५६ ॥

---

वैशम्पायन उवाच । एतस्मिन्नेव काले तु भीष्मकस्य महात्मनः । हिरण्यरोम्णो नृपतेः साक्षादिन्द्रसखस्य वै ॥ १ ॥ आकृतीनामधिपतेर्भोजस्यातियशस्विनः । दाक्षिणात्यपतेः पुत्रो

दिक्षु रुक्मीतिविश्रुत ॥ २ ॥ य किम्पुरुषसिंहस्य गन्धमादन-
वासिन। कृतस्त्र शिष्यो धनुर्वेदं चतुष्पादमवाप्तवान् ॥ ३ ॥ यो
माहेन्द्रं धनुर्लेभे तुल्यं गाण्डीवतेजसा। शार्ङ्गेण च महाबाहु
सम्मित दिव्यलक्षणम् ॥ ४ ॥ त्रीण्येवैतानि दिव्यानि धनूंषि
दिविचारिणाम। वारुण गाण्डिवं तत्र माहेन्द्रं विजयं धनु
॥ ५ ॥ शार्ङ्गन्तु वैष्णवं प्राहुर्दिव्यं तेजोमयं धनु। धारयामास
तत कृष्ण परसेनाभयावहम् ॥ ६ ॥ गाण्डीव पावकाल्लेभे खाण्डवे
पाकशासनि। द्रुमाद्रुक्मी महातेजा विजयं प्रत्यपद्यत ॥ ७ ॥
सञ्छिद्य कौरवान् पाशान्निहत्य मुरमोजसा। निर्जित्य नरकं
भौममाहृत्य मणिकुण्डले ॥ ८ ॥ षोड़श स्त्रीसहस्राणि रत्नानि
विविधानि च। प्रतिपेदे हृषीकेश शार्ङ्गञ्च धनुरुत्तमम् ॥ ९ ॥
रुक्मी तु विजय लब्ध्वा धनुर्मेघनिभस्वनम। विभीषयन्निव जगत्
पाण्डवानभ्यवर्त्तत ॥ १० ॥ नामृष्यत पुरा योऽसौ स्वबाहुबल-
गर्वित। रुक्मिण्या हरणं वीरो वासुदेवेन धीमता ॥ ११ ॥
कृत्वा प्रतिज्ञा नाहत्वा निवर्त्तिष्ये जनार्द्दनम्। ततोऽन्वधावद्
वार्ष्णेय सर्वशस्त्रभृता वरम् ॥ १२ ॥ सेनया चतुरङ्गिण्या महत्या
दूरपातया। विचित्रायुधवर्म्मिण्या गङ्गयेव प्रवृद्धया ॥ १३ ॥ स
समासाद्य वार्ष्णेय योगिनामीश्वरं प्रभुम्। व्यंसितो व्रीड़ितो
राजन्नाजगाम स कुण्डिनम् ॥ १४ ॥ यत्रैव कृष्णेन रणे निर्जित
परवीरहा। तत्र भोजकट नाम कृतं नगरमुत्तमम् ॥ १५ ॥
सैन्येन महता तेन प्रभूतगजवाजिना। पुरं तद्भुवि विख्यात
नाम्ना भोजकटं नृप ॥ १६ ॥ स भोजराज सैन्येन महता
परिवारित। अक्षौहिण्या महावीर्य्य पाण्डवान् क्षिप्रमागमत
॥ १७ ॥ तत स कवची धन्वी तली खड्गी शरासनी।
ध्वजेनादित्यवर्णेन प्रविवेश महाचमूम् ॥ १८ ॥ विदित पाण्ड-
वेयाना वासुदेवप्रियेप्सया। युधिष्ठिरस्तु तं राजा प्रत्युद्गम्या-

भ्यपूजयत् ॥ १९ ॥ स पूजितः पाण्डुपुत्रैर्यथान्यायं सुसंस्तुतः । प्रतिगृह्य तु तान् सर्वान् विश्रान्तः सहसैनिकः ॥ २० ॥ उवाच मध्ये वीराणां कुन्तीपुत्रं धनञ्जयम् । सहायोऽस्मिन् स्थितो युद्धे यदि भीतोऽसि पाण्डव ॥ २१ ॥ करिष्यामि रणे साह्यमसह्यं तव शत्रुभिः । न हि मे विक्रमे तुल्यः पुमानस्तीह कश्चन ॥ २२ ॥ हनिष्यामि रणे भागं यन्मे दास्यसि पाण्डव । अपि द्रोणकृपौ वीरौ भीष्मकर्णावथो पुनः ॥ २३ ॥ अथ वा सर्व एवैते तिष्ठन्तु वसुधाधिपाः । निहत्य समरे शत्रूंस्तव दास्यामि मेदिनीम् ॥२४॥ इत्युक्तो धर्मराजस्य केशवस्य च सन्निधौ । शृण्वतां पार्थिवेन्द्राणामन्येषाञ्चैव सर्वशः ॥ २५ ॥ वासुदेवमभिप्रेक्ष्य धर्मराजञ्च पाण्डवम् । उवाच धीमान् कौन्तेयः प्रहस्य सखिपूर्वकम् ॥ २६ ॥ कौरवाणां कुले जातः पाण्डोः पुत्रो विशेषतः । द्रोणं व्यपदिशन् शिष्यो वासुदेवसहायवान् ॥ २७ ॥ भीतोऽस्मीति कथं ब्रूयां दधानो गाण्डिवं धनुः । युध्यमानस्य मे वीर गन्धर्वैः सुमहाबलैः ॥ २८ ॥ सहायो घोषयात्रायां कस्तदासीत् सखा मम । तथा प्रतिभये तस्मिन् देवदानवसंकुले ॥ २९ ॥ खाण्डवे युध्यमानस्य कः सहायस्तदाभवत् । निवातकवचैर्युद्धे कालकेयैश्च दानवैः ॥ ३० ॥ तत्र मे युध्यमानस्य कः सहायस्तदाभवत् । तथा विराटनगरे कुरुभिः सह सङ्गरे ॥ ३१ ॥ युध्यतो बहुभिस्तत्र कः सहायोऽभवन्मम । उपजीव्य रणे रुद्रं शक्रं वैश्रवणं यमम् ॥ ३२ ॥ वरुणं पावकञ्चैव कृपं द्रोणञ्च माधवम् । धारयन् गाण्डिवं दिव्यं धनुस्तेजोमयं दृढम् ॥ ३३ ॥ अक्षय्यशरसंयुक्तो दिव्यास्त्रपरिबृंहितः । कथमस्मद्विधो ब्रूयात् भीतोऽस्मीति यशोहरम् ॥ ३४ ॥ वचनं नरशार्दूल वज्रायुधमपि स्वयम् । नास्मि भीतो महाबाहो सहायार्थश्च नास्ति मे ॥ ३५ ॥ यथाकामं यथायोगं गच्छ वान्यत्र तिष्ठ वा । विनिवर्त्य ततो रुक्मी सेनां

सागरसन्निभाम् ॥ ३६ ॥ दुर्योधनमुपागच्छत्तथैव भरतर्षभ। तथैव चाभिगम्यैनमुवाच वसुधाधिपः ॥ ३७ ॥ प्रत्याख्यातश्च तेनापि स तदा शूरमानिना। द्वावेव तु महाराज तस्मात् युद्धाद्‌पेयतुः ॥ ३८ ॥ रौहिणेयश्च वार्ष्णेयो रुक्मी च वसुधाधिपः। गते रामे तीर्थयात्रां भीष्मकस्य सुते तथा ॥ ३९ ॥ उपाविशन् पाण्डवेया मन्त्राय पुनरेव च। समितिर्धर्मराजस्य सा पार्थिवसमाकुला। शुशुभे तारकैश्चित्रा द्यौश्चन्द्रेणेव भारत ॥ ४० ॥

इति उद्योगपर्वणि सैन्यनिर्याणपर्वणि रुक्मिप्रत्याख्याने सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥

---

मनुष्येषु निन्द्यं यः सर्व्वमाचरेत् ॥ १० ॥ स वध्यः सर्व्वलोकस्य निन्दितानि समाचरन् । निकारा मनुजश्रेष्ठ पाण्डवैस्त्वत्प्रतीक्षया ॥ ११ ॥ अनुभूताः सहामात्यैर्निकृतैरधिदेवने । हयानाञ्च गजानाञ्च राज्ञाञ्चामिततेजसाम् ॥ १२ ॥ वैशसं समरे वृत्तं यत्तन्मे शृणु सर्व्वशः । स्थिरो भूत्वा महाप्राज्ञ सर्व्वलोकक्षयोदयम् ॥ १३ ॥ यथाभूतं महायुद्धे श्रुत्वा चैकमना भव । न ह्येव कर्त्ता पुरुषः कर्म्मणोः शुभपापयोः ॥ १४ ॥ अस्वतन्त्रो हि पुरुषः कार्य्यते दारु यन्त्रवत् । केचिदीश्वरनिर्द्दिष्टाः केचिदेव यदृच्छया ॥ १५ ॥ पूर्व्वकर्म्मभिरप्यन्ये त्रैधमेतत् प्रदृश्यते । तस्मादनर्थमापन्नः स्थिरो भूत्वा निशामय ॥ १६ ॥

इति उद्योगपर्व्वणि सैन्यनिर्य्याणपर्व्वणि सञ्जयवाक्ये अष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥ समाप्तञ्च सैन्यनिर्य्याणपर्व्व ॥

---

अथ उलूकदूतागमनपर्व्व ॥

सञ्जय उवाच । हिरण्वत्यां निविष्टेषु पाण्डवेषु महात्मसु । न्यविशन्त महाराज कौरवेया यथाविधि ॥ १ ॥ तत्र दुर्य्योधनो राजा निवेश्य बलमोजसा । सम्मानयित्वा नृपतीन् न्यस्य गुल्मांस्तथैव च ॥ २ ॥ आरक्षस्य विधिं कृत्वा योधानां तत्र भारत । कर्णं दुःशासनञ्चैव शकुनिञ्चापि सौबलम् ॥ ३ ॥ आनाय्य नृपतिस्तत्र मन्त्रयामास भारत । तत्र दुर्य्योधनो राजा कर्णेन सह भारत ॥ ४ ॥ सम्भाषयित्वा कर्णेन भ्रात्रा दुःशासनेन च सौबलेन च राजेन्द्र मन्त्रयित्वा नरर्षभ ॥ ५ ॥ आहूयोपह्वरे राजन्नुलूकमिदमब्रवीत् । उलूक गच्छ कैतव्य पाण्डवान् सहसोमकान् ॥ ६ ॥ गत्वा मम वचो ब्रूहि वासुदेवस्य शृण्वतः । इदन्तत् समनुप्राप्तं वर्षपूगाभिचिन्तितम् ॥ ७ ॥ पाण्डवानां कुरूणाञ्च युद्धं

सागरसन्निभाम् ॥ ३६ ॥ दुर्योधनमुपागच्छत्तथैव भरतर्षभ।
तथैव चाभिगम्यैनमुवाच वसुधाधिप ॥ ३७ ॥ प्रत्याख्यातश्च
तेनापि स तदा शूरमानिना। द्वाविव तु महाराज तस्मात युद्धा-
दपेयतु ॥ ३८ ॥ रौहिणेयश्च वार्ष्णेयो रुक्मी च वसुधाधिप।
गते रामे तीर्थयात्रां भीष्मकस्य सुते तथा ॥ ३९ ॥ उपाविशन्
पाण्डवेया मन्त्राय पुनरेव च। समितिर्धर्मराजस्य सा पार्थिव-
समाकुला। शुशुभे तारकैश्चित्रा द्यौश्चन्द्रेणेव भारत ॥ ४० ॥

इति उद्योगपर्वणि सैन्यनिर्याणपर्वणि रुक्मिप्रत्याख्याने
सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥

---

मनुष्येषु निन्द्यं यः सर्व्वमाचरेत् ॥ १० ॥ स वध्यः सर्व्वलोकस्य निन्दितानि समाचरन् । निकारा मनुजश्रेष्ठ पाण्डवैस्त्वत्प्रतीक्षया ॥ ११ ॥ अनुभूताः सहामात्यैर्निकृतैरधिदेवने । हयानाञ्च गजानाञ्च राज्ञाञ्चामिततेजसाम् ॥ १२ ॥ वैशसं समरे वृत्तं यत्तन्मे शृणु सर्व्वशः । स्थिरो भूत्वा महाप्राज्ञ सर्व्वलोकक्षयोदयम् ॥ १३ ॥ यथाभूतं महायुद्धे श्रुत्वा चैकमना भव । न ह्येव कर्त्ता पुरुषः कर्म्मणोः शुभपापयोः ॥ १४ ॥ अस्वतन्त्रो हि पुरुषः कार्य्यते दारुयन्त्रवत् । केचिदीश्वरनिर्दिष्टाः केचिदेव यदृच्छया ॥ १५ ॥ पूर्व्वकर्म्मभिरप्यन्ये त्रैधमेतत् प्रदृश्यते । तस्मादनर्थमापन्नः स्थिरो भूत्वा निशामय ॥ १६ ॥

इति उद्योगपर्व्वणि सैन्यनिर्य्याणपर्व्वणि सञ्जयवाक्ये अष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥ समाप्तञ्च सैन्यनिर्य्याणपर्व्व ॥

---

अथ उलूकदूतागमनपर्व्व ॥

सञ्जय उवाच । हिरण्वत्यां निविष्टेषु पाण्डवेषु महात्मसु । न्यविशन्त महाराज कौरवेया यथाविधि ॥ १ ॥ तत्र दुर्य्योधनो राजा निवेश्य बलमोजसा । सम्मानयित्वा नृपतीन् न्यस्य गुल्मास्तथैव च ॥ २ ॥ आरक्षस्य विधिं कृत्वा योधानां तत्र भारत । कर्णं दुःशासनञ्चैव शकुनिञ्चापि सौवलम् ॥ ३ ॥ आनाय्य नृपतिस्तत्र मन्त्रयामास भारत । तत्र दुर्य्योधनो राजा कर्णेन सह भारत ॥ ४ ॥ सम्भाषयित्वा कर्णेन भ्रात्रा दुःशासनेन च सौबलेन च राजेन्द्र मन्त्रयित्वा नरर्षभ ॥ ५ ॥ आहूयोपह्वरे राजन्नुलूकमिदमब्रवीत् । उलूक गच्छ कैतव्य पाण्डवान् सहसोमकान् ॥ ६ ॥ गत्वा मम वचो ब्रूहि वासुदेवस्य शृण्वतः । इदन्तत् समनुप्राप्तं वर्षपूगाभिचिन्तितम् ॥ ७ ॥ पाण्डवानां कुरूणाञ्च युद्धं

लोकभयङ्करम्। यदेतत् कत्थनावाक्यं सञ्जयो महदब्रवीत् ॥८॥
वासुदेवसहायस्य गर्जतः सानुजस्य ते। मध्ये कुरूणां कौन्तेय
तस्य कालोऽयमागतः ॥ ९ ॥ यथा वः सम्प्रतिज्ञातं तत् सर्वं
क्रियतामिति। ज्येष्ठं तथैव कौन्तेयं ब्रूयास्त्वं वचनान्मम ॥१०॥
भ्रातृभिः सहितं सर्वैः सोमकैश्च सकेकयैः। कथं वा धार्मिको
भूत्वा त्वमधर्मे मनः कृथाः ॥ ११ ॥ य इच्छसि जगत् सर्वं नश्य-
मानं नृशंसवत्। अभयं सर्वभूतेभ्यो दाता त्वमिति मे मतिः ॥१२॥
श्रूयते हि पुरा गीतः श्लोकोऽयं भरतर्षभ। प्रह्लादेनाथ भद्रन्ते
हृते राज्ये तु दैवतैः ॥ १३ ॥ यस्य धर्मध्वजो नित्यं सुरा ध्वज
इवोच्छ्रितः। प्रच्छन्नानि च पापानि वैड़ालं नाम तद्व्रतम्
॥ १४ ॥ अत्र ते वर्त्तयिष्यामि आख्यानमिदमुत्तमम्। कथितं
नारदेनेह पितुर्मम नराधिप ॥ १५ ॥ मार्ज्जारः किल दुष्टात्मा
निश्चेष्टः सर्वकर्मसु। ऊर्द्ध्वबाहुः स्थितो राजन् गङ्गातीरे कदा-
चन ॥ १६ ॥ स वै कृत्वा मनः शुद्धिं प्रत्ययार्थं शरीरिणाम्।

स्थितः। स नो रक्ष महाप्राज्ञ विद्यानिव वज्रभृत् ॥ २५ ॥ एवमुक्तस्तु तैः सर्वैर्मूषिकैः स विशाम्पते। प्रत्युवाच ततः सर्वान्मूषिकान्मूषिकान्तकृत् ॥ २६ ॥ इयोर्योगं न पश्यामि तपसो रक्षणस्य च। अवश्यन्तु मया कार्य्यं वचनं भवतां हितम् ॥२७॥ युष्माभिरपि कर्त्तव्यं वचनं मम नित्यशः। तपसास्मि परिश्रान्तो दृढं नियममास्थितः ॥ २८ ॥ न चापि गमने शक्तिं काञ्चित् पश्यामि चिन्तयन्। सोऽस्मि नेयः सदा तात नदीकूलमितः परम् ॥ २९ ॥ तथेति तं प्रतिज्ञाय मूषिका भरतर्षभ। वृद्धबालमथो सर्वं मार्ज्जाराय न्यवेदयन् ॥ ३० ॥ ततः स पापो दुष्टात्मा मूषिकानथ भक्षयन्। पीवरश्च सुवर्णश्च दृढबन्धश्च जायते ॥ ३१ ॥ मूषिकाणां गणश्चात्र भृशं सङ्क्षीयतेऽथ सः। मार्ज्जारो वर्द्धते चापि तेजोबलसमन्वितः ॥ ३२ ॥ ततस्ते मूषिकाः सर्वे समेत्यान्योऽन्यमब्रुवन्। मातुलो वर्द्धते नित्यं वयं क्षीयामहे भृशम् ॥ ३३ ॥ ततः प्राज्ञतमः कश्चित् डिण्डिको नाम मूषिकः। अब्रवीत वचनं राजन् मूषिकाणां महागणम् ॥ ३४ ॥ गच्छतां वो नदीतीरं सहितानां विशेषतः। पृष्ठतोऽहं गमिष्यामि सहैव मातुलेन तु ॥ ३५ ॥ साधुसाध्विति ते सर्वे पूजयाञ्चक्रिरे तदा। चक्रुश्चैव यथान्यायं डिण्डिकस्य वचोऽर्थवत् ॥ ३६ ॥ अविज्ञानात्ततः सोऽथ डिण्डिकं ह्युपभुक्तवान्। ततस्ते सहिताः सर्वे मन्त्रयामासुरञ्जसा ॥ ३७ ॥ तत्र वृद्धतमः कश्चित् कोकिलो नाम मूषिकः। अब्रवीद्वचनं राजन् ज्ञातिमध्ये यथातथम् ॥ ३८ ॥ न मातुलो धर्म्मकामश्छद्ममात्रं कृता शिखा। न मूलफलभक्षस्य विष्ठा भवति लोमशा ॥ ३९ ॥ अस्य गात्राणि वर्द्धन्ते गणश्च परिक्षीयते। अद्य सप्ताष्टदिवसात् डिण्डिकोऽपि न दृश्यते ॥४०॥ एतच्छ्रुत्वा वचः सर्वे मूषिका विप्रदुद्रुवुः। विड़ालोऽपि स दुष्टात्मा जगामैव यथागतम् ॥ ४१ ॥ तथा त्वमपि दुष्टात्मन् वैड़ालं

व्रतमास्थित । चरसि ज्ञातिषु सदा बिडालो मूषिकेष्विव ॥४२॥ अन्यथा किल ते वाक्यमन्यथा कर्म दृश्यते । दर्शनार्थाय लोकस्य वेदस्योपशमस्य ते ॥ ४३ ॥ त्यक्त्वा छद्म त्विदं राजन् चत्रधर्मं समाश्रित । कुरु कार्य्याणि सर्वाणि धर्मिष्ठोऽसि नरर्षभ ॥ ४४ ॥ बाहुवीर्य्येण पृथिवीं लब्ध्वा भरतसत्तम । देहि दानं द्विजातिभ्यः पितृभ्यश्च यथोचितम् ॥ ४५ ॥ क्लिष्टाया वर्षपूगांश्च मातुर्मातृहिते स्थित । प्रमार्ज्ज्मश्रु रणे जित्वा संमानं परमावह ॥ ४६ ॥ पञ्च ग्रामा वृता यत्नान्नास्माभिरपवर्ज्जिता । युध्यामहे कथं सङ्ख्ये कोपयेम च पाण्डवान् ॥ ४७ ॥ खलकृते दुष्टभावस्य सन्त्यागो विदुरस्य च । जातुषे च गृहे दाहं स्मरत्वं पुरुषो भव ॥ ४८ ॥ यच्च कृष्णमवोचस्त्वमायान्तं कुरुसंसदि । अयमस्मि स्थितो राजन् शमाय समराय च ॥ ४९ ॥ तस्यायमागतः कालः समरस्य नराधिप । एतदर्थं मया सर्वं कृतमेतद् युधिष्ठिर ॥ ५० ॥ किन्तु युद्धात् परं लाभं चत्रियो बहु मन्यते । किञ्च त्वं चत्रियकुले जातः सम्प्रथितो भुवि ॥ ५१ ॥ द्रोणादस्त्राणि सम्प्राप्य कृपाच्च भरतर्षभ । तुल्ययोनौ समबले वासुदेवं समाश्रित ॥ ५२ ॥ ब्रूयास्त्वं वासुदेवञ्च पाण्डवानां समीपतः । आत्मार्थं पाण्डवार्थं च यत्तो मां प्रतियोधय ॥ ५३ ॥ सभामध्ये च यद्रूपं मायया कृतवानसि । तत्तथैव पुनः कृत्वा सार्ज्जुनो मामभिद्रव ॥ ५४ ॥ इन्द्रजालञ्च माया वै कुहका वापि भीषणा । आत्तशस्त्रस्य संग्रामे वहन्ति प्रतिगर्ज्जना ॥ ५५ ॥ वयमप्युत्सहेम द्यां खञ्च गच्छेम मायया । रसातलं विशामोऽपि ऐन्द्रं वा पुरमेव तु ॥ ५६ ॥ दर्शयन्तेव रूपाणि स्वशरीरे बहून्यपि । न तु पर्य्यायतः सिद्धिर्बुद्धिमाप्नोति मानुषीम् ॥ ५७ ॥ मनसैव हि भूतानि धातैव कुरुते वशी । यद् ब्रवीषि च वार्ष्णेय धार्त्तराष्ट्रानहं रणे ॥ ५८ ॥ घातयित्वा प्रदास्यामि पार्थेभ्यो राज्यमुत्तमम् । आचचक्षे च मे

सर्वं सञ्जयस्तव भाषितम् ॥ ५९ ॥ महितीयेन पार्थेन वैरं वः सव्यसाचिना। न सत्यसङ्गरो भूत्वा पाण्डवार्थे पराक्रमी ॥६०॥ युध्यस्वाद्य रणे यत्तः पश्यामः पुरुषो भव। यस्तु शत्रुमभिज्ञाय शुद्धं पौरुषमास्थितः ॥ ६१ ॥ करोति द्विषतां शोकं स जीवति सुजीवितम्। अकस्माच्चैव ते कृष्ण ख्यातं लोके महद्यशः ॥ ६२ ॥ अद्येदानीं विजानीमः सन्ति षण्ढा सशृङ्गकाः। मद्विधो नापि नृपतिस्त्वयि युक्तः कथञ्चन ॥ ६३ ॥ सन्नाहं संयुगं कर्त्तुं कंस-भृत्ये विशेषतः। तञ्च तूवरकं बाल्यं बह्वाशिनमविद्यकम् ॥ ६४ ॥ उलूक मद्वचो ब्रूहि असकृत् भीमसेनकम्। विराटनगरे पार्थ यस्त्वं सूदो ह्यभूः पुरा ॥ ६५ ॥ बल्लवो नाम विख्यातस्तन्ममैव हि पौरुषम्। प्रतिज्ञातं सभामध्ये न तन्मिथ्या त्वया पुरा ॥६६॥ दुःशासनस्य रुधिरं पीयतां यदि शक्यते। यद् ब्रवीषि च कौन्तेय धार्त्तराष्ट्रानहं रणे ॥ ६७ ॥ निहनिष्यामि तरसा तस्य कालो-ऽयमागतः। त्वं हि भोज्ये पुरस्कार्यो भक्ष्ये पेये च भारत ॥६८॥ क्व युद्धं क्व च भोक्तव्यं युध्यस्व पुरुषो भव। शयिष्यसि हतो भूमौ गदामालिङ्ग्य भारत ॥ ६९ ॥ तद्वृथा च सभामध्ये वल्गितं ते वृकोदर। उलूक नकुलं ब्रूहि वचनान्मम भारत ॥ ७० ॥ युध्यस्वाद्य स्थिरो भूत्वा पश्यामस्तव पौरुषम्। युधिष्ठिरानुरागञ्च द्वेषञ्च मयि भारत ॥ ७१ ॥ कृष्णायाश्च परिक्लेशं स्मरेदानीं यथा-तथम्। ब्रूयास्त्वं सहदेवञ्च राजमध्ये वचो मम ॥ ७२ ॥ युध्ये-दानीं रणे यत्तः क्लेशान् स्मर च पाण्डव। विराटद्रुपदौ चोभौ ब्रूयास्त्वं वचनान्मम ॥ ७३ ॥ न दृष्टपूर्वा भर्त्तारो भृत्यैरपि महा-गुणैः। तथार्थपतिभिर्भृत्या यतः सृष्टाः प्रजास्ततः ॥ ७४ ॥ अश्लाघ्योऽयं नरपतिर्युवयोरिति चागतम्। ते यूयं संहता भूत्वा तद्वधार्थं ममापि च ॥ ७५ ॥ आत्मार्थं पाण्डवार्थञ्च प्रयुध्यध्वं मया सह। धृष्टद्युम्नञ्च पाञ्चाल्यं ब्रूयास्त्वं वचनान्मम ॥ ७६ ॥

एष ते समय प्राप्तो लब्धव्यश्च त्वयापि सः। द्रोणमासाद्य समरे ज्ञास्यसे हितमुत्तमम् ॥ ७७ ॥ युध्यस्व ससुहृद् स्वार्थं कुरु कर्म्म सुदुष्करम्। शिखण्डिनमथो ब्रूहि उलूक वचनान्मम ॥ ७८ ॥ स्त्रीति मत्वा महाबाहुर्न हनिष्यति कौरवः। गाङ्गेयो धन्विनां श्रेष्ठो युध्येदानीं सुनिर्भयः ॥ ७९ ॥ कुरु कर्म्म रणे यत्त पश्यामः पौरुषं तव। एवमुक्त्वा ततो राजा प्रहस्योलूकमब्रवीत् ॥ ८० ॥ धनञ्जयं पुनर्ब्रूहि वासुदेवस्य शृण्वतः। अस्मान् वा त्वं पराजित्य प्रशाधि पृथिवीमिमाम् ॥ ८१ ॥ अथवा निर्जितोऽस्माभीरणे वीर शयिष्यसि। राष्ट्रान्निर्वासनक्लेशं वनवासञ्च पाण्डव ॥ ८२ ॥ कृष्णायाश्च परिक्लेशं संस्मरन् पुरुषो भव। यदर्थं क्षत्रिया सूते सर्वं तदिदमागतम् ॥ ८३ ॥ बलं वीर्यञ्च शौर्यञ्च परञ्चाप्यस्त्रलाघवम्। पौरुषं दर्शयन् युद्धे कोपस्य कुरु निष्कृतिम् ॥ ८४ ॥ परिक्लिष्टस्य दीनस्य दीर्घकालोषितस्य च। हृदयं न स्फुटेत् कस्य ऐश्वर्य्यात् भ्रंशितस्य च ॥ ८५ ॥ कुले जातस्य शूरस्य परवित्तेष्वगृध्यतः। आच्छिन्नं राज्यमाक्रम्य कोपं कस्य न दीपयेत् ॥ ८६ ॥ यत्तदुक्तं महद्वाक्यं कर्म्मणा तद्विभाव्यताम्। अकर्म्मणा कत्थितेन सन्त कुपुरुषं विदुः ॥ ८७ ॥ अमित्राणां वशे स्थानं राज्यस्य पुनरुद्धर। द्वावर्थौ युद्धकामस्य तस्मात् कुरुत पौरुषम् ॥ ८८ ॥ पराजितोऽसि द्यूतेन कृष्णा चानायिता सभाम्। शक्योऽमर्षो मनुष्येण कर्त्तुं पुरुषमानिना ॥ ८९ ॥ द्वादशैव तु वर्षाणि वने धिष्ण्यादिवासित। सम्वत्सरं विराटस्य दास्यमास्थाय चोषितः ॥ ९० ॥ राष्ट्रान्निर्वासनक्लेशं वनवासञ्च पाण्डव। कृष्णायाश्च परिक्लेशं संस्मरन् पुरुषो भव ॥ ९१ ॥ अप्रियाणाञ्च वचनं प्रब्रुवत्सु पुन पुन। अमर्षं दर्शयस्व त्वममर्षो ह्येव पौरुषम् ॥ ९२ ॥ क्रोधो बलं तथा वीर्य्यं ज्ञानयोगोऽस्त्रलाघवम्। इह ते दृश्यता पार्थ युध्यस्व पुरुषो भव ॥ ९३ ॥

लोहाभिहारो निर्वृत्तः कुरुष्वैवमकर्द्दमम्। पुष्टास्तेऽस्त्रा भृता योधाः श्वो युध्यस्व सकेशवः॥ ९४॥ असमागम्य भीमेन संयुगे किं विकत्थसे। आरुरुक्षुर्यथा मन्दः पर्व्वतं गन्धमादनम्॥ ९५॥ एवं कत्थसि कौन्तेय अकत्थन् पुरुषो भव। सूतपुत्त्रं सुदुर्द्धर्षं शल्यञ्च बलिनां वरम्॥ ९६॥ द्रोणञ्च बलिनां श्रेष्ठं शचीपतिसमं युधि। अजित्वा संयुगे पार्थ राज्यं कथमिहेच्छसि॥ ९७॥ ब्राह्मे धनुषि चाचार्य्यं वेदयोरन्तगं द्वयोः। युधि धुर्य्यमविक्षोभ्यमनीकधरमच्युतम्॥ ९८॥ द्रोणं महाद्युतिं पार्थ जेतुमिच्छसि यन्मृषा। न हि शुश्रुम वातेन मेरुमुन्मथितं गिरिम्॥ ९९॥ अनिलो वा वहेन्मेरुं द्यौर्वापि निपतेन्महीम्। युगं वा परिवर्त्तेत यद्येवं स्यात् यथात्थ माम्॥ १००॥ को ह्यस्मात् जीविताकाङ्क्षी प्राप्यास्त्रमरिमर्द्दनम्। पार्थो वा इतरो वापि कोऽन्यः स्वस्ति गृहान् व्रजेत्॥ १०१॥ कथमाभ्यामभिध्यातः संसृष्टो दारुणेन वा। रणे जीवन् प्रमुच्येत पदा भूमिमुपस्पृशन्॥ १०२॥ किं दर्दुरः कूपशयो यथेमां न बुध्यसे राजचमूं समेताम्। दुराधर्षां देवचमूप्रकाशां गुप्तां नरेन्द्रैस्त्रिदशैरिव द्याम्॥ १०३॥ प्राच्यैः प्रतीच्यैरथ दाक्षिणात्यैरुदीच्यकाम्बोजशकैः खशैश्च। शाल्वैः समत्स्यैः कुरुमध्यदेश्यैर्म्लेच्छैः पुलिन्दैर्द्रविडान्ध्रकाञ्च्यैः॥ १०४॥ नानाजनौघं युधि सम्प्रवृद्धं गाङ्गं यथा वेगमपारणीयम्। मां च स्थितं नागबलस्य मध्ये युयुत्ससे मन्द किमल्पबुद्धे॥ १०५॥ अक्षय्याविषुधी चैव अग्निदत्तञ्च ते रथम्। जानीमो हि रणे पार्थ केतुं दिव्यञ्च भारत॥ १०६॥ अकत्थमानो युध्यस्व कत्थसेऽर्ज्जुन किं बहु। पर्य्यायात् सिद्धिरेतस्य नैतत् सिध्यति कत्थनात्॥ १०७॥ यदीह कत्थनाल्लोके सिध्येत् कर्म्म धनञ्जय। सर्व्वे भवेयुः सिद्धार्थाः कत्थने को हि दुर्गतः॥ १०८॥ जानामि ते वासुदेवं सहायं जानामि ते गाण्डिवं तालमात्रम्।

जानाम्यहं त्वादृशो नास्ति योद्धा जानानस्ते राज्यमेतद्धरामि
॥ १०९ ॥ न तु पर्य्यायधर्मेण सिद्धिं प्राप्नोति मानवः । मनसै-
वानुकूलानि विधाता कुरुते वशे ॥ ११० ॥ त्रयोदश समा भुक्तं
राज्यं विलपतस्तव । भूयश्चैव प्रशासिष्ये त्वां निहत्य सबान्धवम्
॥ १११ ॥ क्व तदा गाण्डिवं तेऽभूत् यदा दासपणे जितः । क्व
तदा भीमसेनस्य बलमासीच्च फाल्गुन ॥ ११२ ॥ सगदात् भीम-
सेनाद्वा फाल्गुनाद्वा सगाण्डिवात् । न वै मोक्षस्तदा वोऽभू-
द्विना कृष्णामनिन्दिताम् ॥ ११३ ॥ सा वो दास्ये समापन्नान्
मोचयामास पार्षती । अमानुष्यं समापन्नान् दासकर्मण्यवस्थि-
तान् ॥ ११४ ॥ अवोचं यत् षण्ढतिलानहं वस्तथ्यमेव तत् ।
धृता हि वेणी पार्थेन विराटनगरे तदा ॥ ११५ ॥ सूदकर्मणि
च श्रान्तं विराटस्य महानसे । भीमसेनेन कौन्तेय यत्तु तन्मम
पौरुषम् ॥ ११६ ॥ वेणीं कृत्वा षण्ढवेश कन्या नर्त्तितवानसि ।
श्रोण्या वेण्याश्च कक्ष्याश्च संयुगे यः पलायते ॥ ११७ ॥ एवमेव
सदा दण्डं क्षत्रिया क्षत्रिये दधुः । न भयाद्वासुदेवस्य न चापि
तव फाल्गुन ॥ ११८ ॥ राज्यं प्रतिप्रदास्यामि युध्यस्व सह-
केशव । न माया ह्रीन्द्रजालं वा कुहका वापि भीषणा ॥ ११९ ॥
आत्तशस्त्रस्य संग्रामे वहन्ति प्रतिगर्ज्जना । वासुदेवसहस्रं वा
फाल्गुनानां शतानि वा ॥ १२० ॥ आसाद्य माममोघेषुं द्रवि-
ष्यन्ति दिशो दश । संयुगे गच्छ भीष्मेण भिन्धि वा शिरसा
गिरिम् ॥ १२१ ॥ तर वा त्वं महागाधं बाहुभ्यां पुरुषोदधिम् ।
शारद्वतमहामीनं विविंशतिमहोरगम् ॥ १२२ ॥ भीष्मवेगमपर्य्यन्तं
द्रोणग्राहदुरासदम् । कर्णशल्यझषावर्त्तं काम्बोजवड़वामुखम् ।
बृहद्बलमहोच्छ्रायं सौमदत्तितिमिङ्गिलम् ॥ १२३ ॥ युयुत्
सुतोय भगदत्तमारुतं श्रुतायुर्हार्दिक्यमहासमुद्रम् । दुःशासनौघं
शलशल्यमत्स्यं सुषेणचित्रायुधनागनक्रम् ॥ १२४ ॥ जयद्रथाद्रिं

पुरुमिवगाधं दुर्मर्षणोर्द्द शकुनिप्रपातम्। यस्त्वौषमन्वयमभिप्रहृ यदावगाह्य अमनष्टचेताः ॥ १२५ ॥ भविष्यसि त्वं हतसर्वबान्धवस्तदा मनस्ते परितापमेष्यति। तदा मनस्ते त्रिदिवाद्दिवाशुचेर्न्निवर्त्तिता पार्थं महीप्रशासनात्। प्रशास्य राज्यं हि सुदुर्लभं त्वया बुभूषित स्वर्गं इवातपस्विना ॥ १२६ ॥

इति उद्योगपर्वणि उलूकदूतागमनपर्वणि दुर्य्योधनवाक्ये एकोनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥

---

सञ्जय उवाच। सेनानिवेशं सम्प्राप्तः कैतव्यः पाण्डवस्य ह। समागतः पाण्डवेयैर्युधिष्ठिरमभाषत ॥ १ ॥ अभिज्ञो दूतवाक्यानां यथोक्तं ब्रुवतो मम। दुर्य्योधनसमादेशं श्रुत्वा न क्रोद्धुमर्हसि ॥ २ ॥

युधिष्ठिर उवाच। उलूक न भयन्तेऽस्ति ब्रूहि त्वं विगतज्वरः। यन्मतं धार्त्तराष्ट्रस्य लुब्धस्यादीर्घदर्शिनः ॥ ३ ॥ ततो द्युतिमता मध्ये पाण्डवानां महात्मनाम्। सृञ्जयानाञ्च मत्स्यानां कृष्णस्य च यशस्विनः ॥ ४ ॥ द्रुपदस्य सपुत्रस्य विराटस्य च सन्निधौ। भूमिपानाञ्च सर्व्वेषां मध्ये वाक्यं जगाद ह ॥ ५ ॥

उलूक उवाच। इदं त्वामब्रवीद्राजा धार्त्तराष्ट्रो महामनाः। शृण्वतां कुरुवीराणां तन्निबोध युधिष्ठिर ॥ ६ ॥ पराजितोऽसि द्यूतेन कृष्णा चानायिता सभाम्। शक्योऽमर्षो मनुष्येण कर्त्तुं पुरुषमानिना ॥ ७ ॥ द्वादशैव तु वर्षाणि वने धिष्ण्याद्विवासिताः। सम्वत्सरं विराटस्य दास्यमास्थाय चोषिताः ॥ ८ ॥ अमर्षं राज्यहरणं वनवासञ्च पाण्डव। द्रौपद्याश्च परिक्लेशं संस्मरन् पुरुषो भव ॥९॥ अशक्तेन च यच्छप्तं भीमसेनेन पाण्डव। दुःशासनस्य रुधिरं पीयतां यदि शक्यते ॥ १० ॥ लोहाभिहारो

निर्वृत्त कुरुक्षेत्रमकर्द्दमम् । मम पन्था मृतास्तेऽश्वा श्वो
युध्यस्व सकेशव ॥ ११ ॥ असमागम्य भीष्मेण संयुगे किं विक-
त्थसे । आरुरुक्षुर्यथा मन्दः पर्वतं गन्धमादनम् ॥ १२ ॥ एवं
कत्थसि कौन्तेय अकत्थन् पुरुषो भव । सूतपुत्रं सुदुर्धर्षं गत्वाद्य
बलिना वरम् ॥ १३ ॥ द्रोणाद्य बलिना श्रेष्ठ शचीपतिसमं युधि ।
अनिर्जित्य संयुगे पार्थ राज्यं कथमिहेच्छसि ॥ १४ ॥ ब्राह्मे
धनुषि चाचार्य्यं वेदयोरन्तगं द्वयोः । युधि धुर्य्यमविक्षोभ्यमनीक
धरमच्युतम् ॥ १५ ॥ द्रोणं महाद्युतिं पार्थ जेतुमिच्छसि
तन्मृषा । न हि शुश्रुम वातेन मेरुमुन्मथितं गिरिम् ॥ १६ ॥
अनिलो वा वहेन्मेरुं द्यौर्वापि निपतेन्महीम् । युगं वा परि
वर्त्तेत यद्येवं स्यात् यथात्थ माम् ॥ १७ ॥ को ह्यस्ति जीविता-
काङ्क्षी प्राप्येनमरिमर्द्दनम् । गजो वाजी रथो वापि पुनः स्वस्ति
गृहान् व्रजेत् ॥ १८ ॥ कथमाभ्यामभिध्यातः संसृष्टो दारुणेन
वा । रणे जीवन् विमुच्येत पदा भूमिमुपस्पृशन् ॥ १९ ॥ किं
दर्दुरः कूपशयो यथेमां न बुध्यसे राजचमूं समेताम् । दुराधर्षां
देवचमूप्रकाशां गुप्तां नरेन्द्रैस्त्रिदशैरिव द्याम् ॥ २० ॥ प्राच्यैः
प्रतीच्यैरथ दाक्षिणात्यैरुदीच्यकाम्बोजशकैः खशैश्च । शाल्वैः
समत्स्यैः कुरुमध्यदेशैर्म्लेच्छैः पुलिन्दैर्द्रविडान्ध्रकाञ्च्यैः ॥ २१ ॥
नानाजनौघं युधि सम्प्रवृद्धं गाङ्गं यथा वेगमपारणीयम् । मां च
स्थितं नागबलस्य मध्ये युयुत्ससे मन्द किमल्पबुद्धे ॥ २२ ॥ इत्येवं
मुक्त्वा राजानं धर्मपुत्रं युधिष्ठिरम् । अभ्याहत्तत्र पुनर्जिष्णुं
गुरुः प्रत्यभाषत ॥ २३ ॥ अकत्थमानो युध्यस्व कत्थसेऽर्जुन वि
बहु । पर्य्याप्तात् सिद्धिरेतस्य नैतत् सिध्यति कत्थनात् ॥ २४ ॥
यदीदं कत्थनाल्लोके सिध्येत कर्म धनञ्जय । सर्वे भवेयुः सिद्धार्थाः
कत्थने को हि दुर्गतः ॥ २५ ॥ जानामि ते वासुदेवं सहायं
जानामि ते गाण्डिवं तालमात्रम् । जानाम्येतत् त्वादृशो नास्ति

योद्धा जानानस्ते राज्यमेतद्धरामि ॥ २६ ॥ न तु पर्य्यायधर्म्मेण राज्यं प्राप्नोति मानुष । मनसैवानुकूलानि विधाता कुरुते वशे ॥ २७ ॥ त्रयोदशसमा भुक्तं राज्यं विलपतस्तव । भूयश्चैव प्रशासिष्ये निहत्य त्वां सबान्धवम् ॥ २८ ॥ क्व तदा गाण्डिवं तेऽभूत् यदा दासपणोर्ज्जित । क्व तदा भीमसेनस्य बलमासीच्च फाल्गुन ॥ २९ ॥ सगदाद्भीमसेनाद्वा पार्थाद्वापि सगाण्डिवात् । न वै मोक्षस्तदा वोऽभूद्विना कृष्णामनिन्दिताम् ॥ ३० ॥ सा वो दास्य समापन्नान् मोचयामास पार्षती । अमानुष्य समायुक्तान् दासकर्म्मण्यवस्थितान् ॥ ३१ ॥ अवोचं यत् षण्डतिलानहं वस्तव्यमेव तत । धृता हि वेणी पार्थेन विराटनगरे तदा ॥ ३२ ॥ सूदकर्म्मणि च श्रान्त विराटस्य महानसे । भीमसेनेन कौन्तेय यच्च तत् मम पौरुषम् ॥ ३३ ॥ एवमेतत् सदा दण्डं क्षत्रियाः क्षत्रिये दधुः । वेणीं कृत्वा षण्डवेश कन्यां नर्त्तितवानसि ॥३४॥ न भयाद्वासुदेवस्य न चापि तव फाल्गुन । राज्यं प्रतिप्रदास्यामि युध्यस्व सहकेशव ॥ ३५ ॥ न माया ह्यैन्द्रजालं वा कुहका वा विभीषणा । आत्तशस्त्रस्य मे युद्धे वहन्ति प्रतिगर्ज्जना ॥ ३६ ॥ वासुदेवसहस्रं वा फाल्गुनाना शतानि वा । आसाद्य माम मोघेषुं द्रविष्यन्ति दिशो दश ॥ ३७ ॥ संयुगं गच्छ भीष्मेण भिन्धि वा शिरसा गिरिम् । प्रतरस्व महागाधं बाहुभ्यां पुरुषोदधिम् ॥ ३८ ॥ शारद्वतमहामीनं विविंशतिझषाकुलम् । बृहद्बलमहोच्छ्राय सौमदत्तितिमिङ्गिलम् ॥ ३९ ॥ भीष्मवेगमपर्य्यन्तं द्रोणग्राहदुरासदम् । कर्णशल्यझषावर्त्तं काम्बोजवड़वामुखम् ॥ ४० ॥ जयद्रथाद्रिं पुरुमित्रगाढ़ं दुर्मर्षणोदं शकुनिप्रपातम् । शस्त्रौघमक्षय्यमतिप्रवृद्धं यदावगाह्य श्रमनष्टचेता ॥ ४१ ॥ भविष्यसि त्वं हतसर्व्वबान्धवस्तदा मनस्ते परितापमेष्यति । तदा मनस्ते त्रिदिवादिवाशुचेर्न्निवर्त्तिता पार्थ महीप्रशासनात् ।

प्रशास्य राज्यं हि सुदुर्लभं त्वया बुभूषितं स्वर्गं इवातप-
स्विना ॥ ४२ ॥

इति उद्योगपर्वणि उलूकदूतागमनपर्वणि उलूकवाक्ये
षष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥

---

सञ्जय उवाच । उलूकस्त्वर्जुनं भूयो यथोक्तं वाक्यमब्रवीत् ।
आशीविषमिव क्रुद्धं तुदन् वाक्यशलाकया ॥ १ ॥ तस्य तद्वचनं
श्रुत्वा रुषिताः पाण्डवा भृशम् । प्रागेव भृशसंक्रुद्धाः कैतव्येनापि
धर्षिताः ॥ २ ॥ आसनेषूदतिष्ठन्त बाहूंश्चैव प्रचिक्षिपुः । आशी
विषा इव क्रुद्धा वीक्षाञ्चक्रुः परस्परम् ॥ ३ ॥ अवाक्शिरा भीम
सेनः समुदैक्षत केशवम् । नेत्राभ्यां लोहितान्ताभ्यामाशीविष
इव श्वसन् ॥ ४ ॥ आर्त्तं वातात्मजं दृष्ट्वा क्रोधेनाभिहतं भृशम् ।
उत्स्मयन्निव दाशार्हः कैतव्यं प्रत्यभाषत ॥ ५ ॥ प्रयाहि शीघ्रं
कैतव्य ब्रूयाश्चैव सुयोधनम् । श्रुतं वाक्यं गृहीतोऽर्थो मतं यत्ते
तथास्तु तत् ॥ ६ ॥ एवमुक्त्वा महाबाहुः केशवो राजसत्तम ।
पुनरेव महाप्राज्ञं युधिष्ठिरमुदैक्षत ॥ ७ ॥ सृञ्जयानाञ्च सर्वेषां
कृष्णस्य च यशस्विनः । द्रुपदस्य सपुत्रस्य विराटस्य च सन्निधौ
॥ ८ ॥ भूमिपानाञ्च सर्वेषां मध्ये वाक्यं जगाद ह । उलूकोऽप्य
र्जुनं भूयो यथोक्तं वाक्यमब्रवीत् ॥ ९ ॥ आशीविषमिव क्रुद्धं
तुदन् वाक्यशलाकया । कृष्णादींश्चैव तान् सर्वान् यथोक्तं वाक्य
मब्रवीत् ॥ १० ॥ उलूकस्य तु तद्वाक्यं पापं दारुणमीरितम् ।
श्रुत्वा विचुक्षुभे पार्थो ललाटञ्चाप्यमार्जयत् ॥ ११ ॥ तदवस्थं
तदा दृष्ट्वा पार्थं सा समितिर्नृप । नामृष्यन्त महाराज पाण्ड
वानां महारथाः ॥ १२ ॥ अधिक्षेपेण कृष्णस्य पार्थस्य च महा

त्मनः । श्रुत्वा ते पुरुषव्याघ्रा क्रोधाज्ज्वलुरच्युताः ॥ १३ ॥
धृष्टद्युम्न. शिखण्डी च सात्यकिश्च महारथः । कैकेया भ्रातरः
पञ्च राक्षसश्च घटोत्कच ॥ १४ ॥ द्रौपदेयाभिमन्युश्च धृष्टकेतुश्च
पार्थिवः । भीमसेनश्च विक्रान्तो यमजौ च महारथौ ॥ १५ ॥
उत्पेतुरासनात् सर्वे क्रोधसंरक्तलोचनाः । बाहून् प्रगृह्य रुचि-
रान् रक्तचन्दनभूषितान् ॥ १६ ॥ अङ्गदैः पारिहार्य्यैश्च केयूरैश्च
विभूषितान् । दन्तान् दन्तेषु निष्पिष्य सृक्कणी परिसंलिहन्
॥ १७ ॥ तेषामाकारभावज्ञः कुन्तीपुत्रो वृकोदरः । उदतिष्ठत्
स्ववेगेन क्रोधेन प्रज्वलन्निव ॥ १८ ॥ उद्वृत्य सहसा नेत्रे दन्तान्
कटकटाय्य च । हस्तं हस्तेन निष्पिष्य उलूकं वाक्यमब्रवीत्
॥ १९ ॥ अशक्तानामिवास्माकं प्रोत्साहननिमित्तकम् । श्रुतं ते
वचनं मूर्ख यत्त्वां दुर्य्योधनोऽब्रवीत् ॥ २० ॥ तन्मे कथयतो मन्द
शृणु वाक्यं दुरासदम् । एवंत्वस्य मध्ये त्वं यद्वक्ष्यसि सुयो-
धनम् ॥ २१ ॥ शृण्वत. सूतपुत्रस्य शकुनेश्च दुरात्मन. । अस्माभिः
प्रीतिकामैस्तु भ्रातुर्ज्येष्ठस्य नित्यशः ॥ २२ ॥ मर्षितं ते दुराचार
तत्त्वं न बहु मन्यसे । प्रेषितश्च हृषीकेशः शमाकाङ्क्षी कुरून्
प्रति ॥ २३ ॥ कुलस्य हितकामेन धर्म्मराजेन धीमता । त्वं
कालचोदितो नूनं गन्तुकामो यमक्षयम् ॥ २४ ॥ गच्छस्वाहव-
मस्माभिस्तच्च श्वो भविता ध्रुवम् । मयापि च प्रतिज्ञातो वधः
सभ्रातकस्य ते ॥ २५ ॥ स तथा भविता पाप नात्र कार्य्या
विचारणा । वेलामतिक्रमेत् सद्य सागरो वरुणालय ॥ २६ ॥
पर्वताश्च विशीर्य्येयुर्मयोक्त न मृषा भवेत् । सहायस्ते यदि यमः
कुवेरो रुद्र एव वा ॥ २७ ॥ यथाप्रतिज्ञं दुर्बुद्धे प्रकरिष्यन्ति
पाण्डवा. । दु शासनस्य रुधिर पाता चास्मि यथेप्सितम् ॥२८॥
यश्चेह प्रतिसंरब्ध क्षत्रियो माभियास्यति । अपि भीष्मं पुरस्कृत्य
तं नेष्यामि यमक्षयम् ॥ २९ ॥ यच्चैतदुक्तं वचनं मया क्षत्रस्य

ससदि। यथैतद्भविता सत्यं तथैवात्मानमालभे ॥ ३० ॥ भीमसेनवच श्रुत्वा सहदेवोऽप्यमर्षण। क्रोधसंरक्तनयनस्ततो वाक्यमुवाच ह ॥ ३१ ॥ शौण्डीरशूरसद्दममनीकजनसंसदि। शृणु पाप वचो मह्यं यहाच्यो हि पिता त्वया ॥ ३२ ॥ नास्माकं भविता भेद कदाचित कुरुभि सह। धृतराष्ट्रस्य सम्बन्धी यदि न स्यात् त्वया सह ॥ ३३ ॥ त्वन्तु लोकविनाशाय धृतराष्ट्रकुलस्य च। उत्पन्नो वैरपुरुष स्वकुलघ्नश्च पापकृत् ॥ ३४ ॥ जन्मप्रभृति चास्माकं पिता ते पापपूरुष। अहितानि नृशंसानि नित्यश कर्त्तुमिच्छति ॥ ३५ ॥ तस्य वैरानुषङ्गस्य गन्तास्म्यन्तं सुदुर्गमम्। अहमादौ निहत्य त्वां शकुने सम्प्रपश्यत ॥ ३६ ॥ ततोऽस्मि शकुनिं हन्ता मिषतां सर्वधन्विनाम्। भीमस्य वचनं श्रुत्वा सहदेवस्य चोभयो ॥ ३७ ॥ उवाच फाल्गुनो वाक्यं भीमसेन स्मयन्निव। भीमसेन न ते सन्ति येषां वैरं त्वया सह ॥ ३८ ॥ मन्दा गृहेषु सुखिनो मृत्युपाशवशङ्गता। उलूकश्च न ते वाच्य परुषं पुरुषोत्तम ॥ ३९ ॥ दूता किमपराध्यन्ते यथोक्तस्यानुभाषिण। एवमुक्त्वा महाबाहुर्भीमं भीमपराक्रमम् ॥ ४० ॥ धृष्टद्युम्नमुखान् वीरान् सुहृद समभाषत। श्रुतं वस्तस्य पापस्य धार्त्तराष्ट्रस्य भाषितम् ॥ ४१ ॥ कुत्सन वासुदेवस्य मम चैव विशेषत। श्रुत्वा भवन्त संरब्धा अस्माकं हितकाम्यया ॥ ४२ ॥ प्रभावाद्वासुदेवस्य भवताञ्च प्रयत्नत। समग्रं पार्थिव क्षत्रं सर्वं न गणयाम्यहम् ॥ ४३ ॥ भवद्भि समनुज्ञातो वाक्यमस्य यदुत्तरम्। उलूके प्रापयिष्यामि यद्वक्ष्यति सुयोधनम् ॥ ४४ ॥ श्वो भूते कथितस्यास्य प्रतिवाक्यं चमूमुखे। गाण्डीवेनाभिधास्यामि क्लीवा हि वचनोत्तरा ॥ ४५ ॥ ततस्ते पार्थिवा सर्वे प्रशशंसुर्धनञ्जयम्। तेन वाक्योपचारेण विस्मिता राजसत्तमा ॥ ४६ ॥ अनुनीय च तान् सर्वान् यथान्यायं यथा

वचः। धर्मराजं तदा वाक्यं तत् प्राप्य प्रत्यभाषत ॥ ४७ ॥
आत्मानमवमन्वानो न हि स्यात् पार्थिवोत्तमः। तवोत्तरं प्रव-
क्ष्यामि तव शुश्रूषणे रतः ॥ ४८ ॥ उलूकं भरतश्रेष्ठ सामपूर्व-
मथोर्ज्जितम्। दुर्य्योधनस्य तद्वाक्यं निशम्य भरतर्षभ ॥ ४९ ॥
अतिलोहितनेत्राभ्यामाशीविष इव श्वसन्। स्मयमान इव क्रोधात्
सृक्कणी परिसंलिहन् ॥ ५० ॥ जनार्द्दनमभिप्रेक्ष्य भ्रातॄंश्चैवेद-
मब्रवीत्। अभ्यभाषत कैतव्यं प्रगृह्य विपुलं भुजम् ॥ ५१ ॥
उलूक गच्छ कैतव्य ब्रूहि तात सुयोधनम्। कृतघ्नं वैरपुरुषं
दुर्मतिं कुलपांसनम् ॥ ५२ ॥ पाण्डवेषु सदा पाप नित्यं जिह्मं
प्रवर्त्तसे। स्ववीर्य्याद्यः पराक्रम्य पाप आह्वयते परान् ॥ ५३ ॥
अभीतः पूरयन् वाक्यमेष वै क्षत्रियः पुमान्। स पाप क्षत्रियो
भूत्वा अस्मानाहूय संयुगे ॥ ५४ ॥ मान्यामान्यान् पुरस्कृत्य युद्धं
मागाः कुलाधम। आत्मवीर्य्यं समाश्रित्य भृत्यवीर्य्यञ्च कौरव
॥ ५५ ॥ आह्वयस्व रणे पार्थान् सर्व्वथा क्षत्रियो भव। परवीर्य्यं
समाश्रित्य यः समाह्वयते परान् ॥ ५६ ॥ अशक्तः स्वयमादातु-
मेतदेव नपुंसकम्। यस्त्वं परेषां वीर्य्येण आत्मानं बहु मन्यसे।
कथमेवमशक्तस्त्वमस्मान् समभिगर्ज्जसि ॥ ५७ ॥

श्रीकृष्ण उवाच। मद्वचश्चापि भूयस्ते वक्तव्यो हि सुयोधन।
श्व इदानीं प्रपद्येथाः पुरुषो भव दुर्मते ॥ ५८ ॥ मन्यसे यच्च
मूढ़ त्वं न योत्स्यति जनार्द्दन। सारथ्येन वृतः पार्थैरिति त्वं
न बिभेषि च ॥ ५९ ॥ जघन्यकालमप्येतन्न भवेत् सर्व्वपार्थिवान्।
निर्द्दहेयमहं क्रोधात् तृणानीव हुताशनः ॥ ६० ॥ युधिष्ठिर-
नियोगात्तु फाल्गुनस्य महात्मनः। करिष्ये युध्यमानस्य सारथ्यं
विजितात्मनः ॥ ६१ ॥ यद्युत्पतसि लोकांस्त्रीन् यद्याविशसि
भूतलम्। तत्र तत्रार्ज्जुनरथं प्रभाते द्रक्ष्यसे पुनः ॥ ६२ ॥
यच्चापि भीमसेनस्य मन्यसे मोघभाषितम्। दुःशासनस्य रुधिरं

पीतमद्यावधारय ॥ ६३ ॥ न त्वा समीक्षते पार्थो नापि राजा युधिष्ठिर। न भीमसेनो न यमौ प्रतिकूलप्रभाषिणम् ॥ ६४ ॥

इति उद्योगपर्व्वणि उलूकदूतागमनपर्व्वणि भगवद्वाक्ये एकषष्ट्यधिकशततमोऽध्यायः ॥ १६१ ॥

---

सञ्जय उवाच। दुर्य्योधनस्य तद्वाक्यं निशम्य भरतर्षभ। नेत्राभ्यामतिताम्राभ्यां कैतव्यं समुदैक्षत ॥ १ ॥ केशवं समभिप्रेक्ष्य गुडाकेशो महायशाः। अभ्यभाषत कैतव्यं प्रगृह्य विपुलं भुजम् ॥ २ ॥ स्ववीर्य्यं यः समाश्रित्य समाह्वयति वै परान्। अभीतो युध्यते शत्रून् स वै पुरुष उच्यते ॥ ३ ॥ परवीर्य्यं समाश्रित्य यः समाह्वयते परान्। क्षत्रबन्धुरशक्तत्वात् लोके स पुरुषाधमः ॥ ४ ॥ स त्वं परेषां वीर्य्येण मन्यसे वीर्य्यमात्मनः। स्वयं कापुरुषो मूढ परांश्च क्षेप्तुमिच्छसि ॥ ५ ॥ यस्त्वं वृद्धं सर्व्वराज्ञां हितबुद्धिं जितेन्द्रियम्। मरणाय महाप्राज्ञं दीक्षयित्वा विकत्थसे ॥ ६ ॥ भावस्ते विदितोऽस्माभिर्दुर्बुद्धे कुलपांसन। न हनिष्यति गाङ्गेयं पाण्डवो घृणयेति ह ॥ ७ ॥ यस्य वीर्य्यं समाश्रित्य धार्त्तराष्ट्र विकत्थसे। हन्तास्मि प्रथमं भीष्मं मिषतां सर्व्वधन्विनाम् ॥ ८ ॥ कैतव्य गत्वा भरतान् समेत्य सुयोधनं धार्त्तराष्ट्रं वदस्व। तथेत्युवाचार्ज्जुनः सव्यसाची निशाव्यपाये भविता विमर्द्दः ॥ ९ ॥ यद्वोऽब्रवीत् वाक्यमदीनसत्त्वो मध्ये कुरूणां हर्षयन् सत्यसन्धः। अहं हन्ता सृञ्जयानामनीकं शाल्वेयकांश्चेति ममैष भारः ॥ १० ॥ हन्तास्मि द्रोणमृतेऽपि लोकं न ते भयं विद्यते पाण्डवेभ्यः। ततो हि ते लब्धमिदं स्वराज्यमापन्नता पाण्डवाश्चेति भावः ॥ ११ ॥ स दर्पपूर्णो न समीक्षसे त्वमनर्थमात्मन्यपि वर्त्तमानम्। तस्मादहं ते प्रथमं समूहे हन्ता समर्थं

कुरुवृद्धमेव ॥ १२ ॥ सूर्य्योदये युयुत्सेनः प्रतीच्य ध्वजी रथी रक्षत सव्यसन्ध । अहं हि वः पश्यतां द्वीपमेनं भीष्मं रथात् पातयिष्यामि बाणैः ॥ १३ ॥ श्वो भूते कत्थनावाक्यं विज्ञास्यति सुयोधन । आचितं शरजालेन मया द्दृष्ट्वा पितामहम् ॥ १४ ॥ यदुक्तश्च सभामध्ये पुरुषो ह्रस्वदर्शन । क्रुद्धेन भीमसेनेन भ्राता दुःशासनस्तव ॥ १५ ॥ अधर्मज्ञो नित्यवैरी पापबुद्धिर्नृशंसवत् । सत्यप्रतिज्ञमचिरात् द्रक्ष्यसे तं सुयोधन ॥ १६ ॥ अभिमानस्य दर्पस्य क्रोधपारुष्ययोस्तथा । नैष्ठुर्य्यस्यावलेपस्य आत्मसम्भावनस्य च ॥ १७ ॥ नृशंसतायास्तैक्ष्ण्यस्य धर्मविद्वेषणस्य च । अधर्मस्याप-वादस्य वृद्धातिक्रमणस्य च ॥ १८ ॥ दर्शनस्य च वक्रस्य कृत्स्न-स्यापनयस्य च । द्रक्ष्यसि त्वं फलं तीव्रमचिरेण सुयोधन ॥१९॥ वासुदेवद्वितीये हि मयि क्रुद्धे नराधम । आशा ते जीविते, मूढ़ राज्ये वा केन हेतुना ॥ २० ॥ शान्ते भीष्मे तथा द्रोणे सूत-पुत्रे च पातिते । निराशो जीविते राज्ये पुत्रेषु च भविष्यसि ॥२१॥ भ्रातॄणां निधनं श्रुत्वा, पुत्राणाञ्च सुयोधन । भीमसेनेन निहतो दुष्कृतानि स्मरिष्यसि ॥ २२ ॥ न द्वितीयां प्रतिज्ञां हि प्रति-जानामि कैतव । सत्यं ब्रवीम्यहं ह्येतत् सर्वं सत्यं भविष्यति ॥२३॥ युधिष्ठिरोऽपि कैतव्यमुलूकमिदमब्रवीत् । उलूक मद्वचो ब्रूहि गत्वा तात सुयोधनम् ॥ २४ ॥ स्वेन वृत्तेन मे वृत्तं नाधिगन्तुं त्वमर्हसि । उभयोरन्तरं वेद सूनृतानृतयोरपि ॥ २५ ॥ न चाहं कामये पापमपि कीटपिपीलयोः । किं पुनर्ज्ञातिषु वधं कामयेयं कथञ्चन ॥ २६ ॥ एतदर्थं मया तात पञ्च ग्रामा वृताः पुरा । कथं तव सुदुर्बुद्धे न प्रेक्षे व्यसनं महत् ॥ २७ ॥ स त्वं कामपरी-तात्मा मूढ़भावाच्च कत्थसे । तथैव वासुदेवस्य न गृह्णासि हितं वचः ॥ २८ ॥ किञ्चेदानीं बहूक्तेन युध्यस्व सह बान्धवैः । मम विप्रियकर्त्तारं कैतव्य ब्रूहि कौरवम् ॥ २९ ॥ श्रुतं वाक्यं गृहीः-

तोऽर्थो मतं यत्ते तथास्तु तत्। भीमसेनस्ततो वाक्यं भूय आह नृपात्मजः ॥ ३० ॥ उलूक मद्वचो ब्रूहि दुर्मतिं पापपूरुषम्। शठं नैकृतिकं पापं दुराचारं सुयोधनम् ॥ ३१ ॥ गृध्रोदरे वा वस्तव्यं पुरे वा नागसाह्वये। प्रतिज्ञातं मया यच्च सभामध्ये नराधम ॥ ३२ ॥ कर्त्ताहं तद्वच सत्यं सत्येनैव शपामि ते। दुःशासनस्य रुधिरं हत्वा पास्याम्यहं मृधे ॥ ३३ ॥ सक्थिनी तव भङ्क्त्वैव हत्वा हि तव सोदरान्। सर्वेषां धार्त्तराष्ट्राणामहं मृत्युः सुयोधन ॥ ३४ ॥ सर्वेषां राजपुत्राणामभिमन्युरसंशयम्। कर्मणा तोषयिष्यामि भूयश्चैव वचः शृणु ॥ ३५ ॥ हत्वा सुयोधन त्वां वै सहितं सर्वसोदरैः। आक्रमिष्ये पदा मूर्द्ध्नि धर्मराजस्य पश्यत ॥ ३६ ॥ नकुलस्तु ततो वाक्यमिदमाह महीपते। उलूक ब्रूहि कौरव्यं धार्त्तराष्ट्रं सुयोधनम् ॥ ३७ ॥ श्रुतं ते गदतो वाक्यं सर्वमेव यथातथम्। तथा कर्त्तास्मि कौरव्य यथा त्वमनुशास्मि माम ॥ ३८ ॥ सहदेवोऽपि नृपते इदमाह वचोऽर्थवत्। सुयोधन मतिर्या ते तथैषा ते भविष्यति ॥ ३९ ॥ शोचिष्यसे महाराज सपुत्रज्ञातिबान्धवः। इमञ्च क्लेशमस्माकं हृष्टो यत् त्वं विकत्थसे ॥ ४० ॥ विराटद्रुपदौ वृद्धावुलूकमिदमूचतुः। दासभावं नियच्छेव साधोरिति मतिः सदा ॥ ४१ ॥ तौ च दासावदासौ वा पौरुषं यस्य यादृशम्। शिखण्डी तु ततो वाक्यमुलूकमिदमब्रवीत् ॥ ४२ ॥ वक्तव्यो भवता राजा पापेष्वभिरतः सदा। पश्य त्वं मां रणे राजन् कुर्वाणं कर्म दारुणम् ॥ ४३ ॥ यस्य वीर्य्यं समासाद्य मन्यसे विजयं युधि। तमहं पातयिष्यामि रथात् तव पितामहम् ॥ ४४ ॥ अहं भीष्मवधात् सृष्टो नूनं धात्रा महात्मना। सोऽहं भीष्मं हनिष्यामि मिषतां सर्वधन्विनाम् ॥ ४५ ॥ धृष्टद्युम्नोऽपि कैतव्यमुलूकमिदमब्रवीत्। सुयोधनो मम वचो वक्तव्यो नृपतेः सुतः ॥ ४६ ॥ अहं द्रोणं

हनिष्य मि समरां सहवान्धवम्। कर्त्ता चाहं तथा कर्म यथा नान्यः करिष्यति ॥ ४७ ॥ तमब्रवीत्धर्मराजः कारुण्यार्थं वचो महत्। नाहं ज्ञातिवधं राजन् कामयेयं कथञ्चन ॥ ४८ ॥ तवैव दोषाद्दुर्बुद्धे सर्वमेतत्त्वनागतम्। अवश्यन्तु मया कार्य्यं सर्वेषा-ञ्चरितं महत् ॥ ४९ ॥ स गच्छ मा चिरं तात उलूक यदि मन्यसे। इह वा तिष्ठ भद्रं ते वयं हि तव बान्धवाः ॥ ५० ॥ उलूकस्तु ततो राजन् धर्मपुत्रं युधिष्ठिरम्। आमन्त्र्य प्रययौ तत्र यत्र राजा सुयोधनः ॥ ५१ ॥ इत्युक्त्वा कितवो वाक्यमुपधार्य्य च यत्नतः। अनुज्ञातो निववृते पुनरेव यथागतम् ॥ ५२ ॥ उलूकस्तत आगम्य दुर्य्योधनममर्षणम्। अर्जुनस्य समादेशं यथोक्तं सर्वमब्रवीत् ॥ ५३ ॥ वासुदेवस्य भीमस्य धर्मराजस्य पौरुषम्। नकुलस्य विराटस्य द्रुपदस्य च भारत ॥ ५४ ॥ सह-देवस्य च वचो धृष्टद्युम्नशिखण्डिनोः। केशवार्जुनयोर्वाक्यं यथोक्तं सर्वमब्रवीत् ॥ ५५ ॥ कैतव्यस्य तु तद्वाक्यं निशम्य भरतर्षभः। दुःशासनञ्च कर्णञ्च शकुनिञ्चापि भारत ॥ ५६ ॥ आज्ञापयत राज्ञश्च बलं मित्रबलं तथा। यथा प्रागुदयात् सर्वे युक्तास्तिष्ठन्त्यनी-किनः ॥ ५७ ॥ ततः कर्णसमादिष्टा दूताः संत्वरिता रथैः। उष्ट्रवामीभिरप्यन्ये सदश्वैश्च महाजवैः ॥ ५८ ॥ तूर्णं परिययुः सेनां कृत्स्नां कर्णस्य शासनात्। आज्ञापयन्तो राज्ञश्च योगः प्रागुदयादिति ॥ ५९ ॥

इति उद्योगपर्वणि उलूकदूतागमनपर्वणि उलूकापयाने द्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥

---

सञ्जय उवाच। उलूकस्य वचः श्रुत्वा कुन्तीपुत्रो युधिष्ठिरः। सेनां निर्य्यापयामास धृष्टद्युम्नपुरोगमाम् ॥ १ ॥ पदातिनीं नाग

वतीं रथिनीमश्ववृन्दिनीम् । चतुर्विधबलां भीमामकम्पां पृथिवी मिव ॥ २ ॥ भीमसेनादिभिर्गुप्ता सार्जुनैश्च महारथैः । धृष्टद्युम्न वशा दुर्गां सागरस्तिमितोपमाम् ॥ ३ ॥ तस्यास्त्वग्रे महेष्वास पाञ्चाल्यो युद्धदुर्मदः । द्रोणप्रेप्सुरनीकानि धृष्टद्युम्नो व्यकर्षत ॥ ४ ॥ यथाबलं यथोत्साहं रथिनः समुपादिशत् । अर्जुनं सूत पुत्राय भीमं दुर्योधनाय च ॥ ५ ॥ धृष्टकेतुञ्च शल्याय गौतमायो त्तमौजसम् । अश्वत्थाम्ने च नकुलं शैब्यञ्च कृतवर्मणे ॥ ६ ॥ सैन्धवाय च वार्ष्णेयं युयुधानं समादिशत् । शिखण्डिनञ्च भीष्माय प्रमुखे समकल्पयत् ॥ ७ ॥ सहदेवं शकुनये चेकितानं शलाय च । द्रौपदेयांस्तथा पञ्च त्रिगर्तेभ्यः समादिशत् ॥ ८ ॥ वृष सेनाय सौभद्रं शेषाणाञ्च महीक्षिताम् । स समर्थं हि तं मेने पार्थादभ्यधिकं रणे ॥ ९ ॥ एवं विभज्य योधांस्तान् पृथक् च सह चैव ह । ज्वालावर्णो महेष्वासो द्रोणमंशमकल्पयत् ॥१०॥ धृष्टद्युम्नो महेष्वास सेनापतिपतिस्तत । विधिवत् व्यूह्य मेधावी युद्धाय धृतमानसः ॥ ११ ॥ यथोद्दिष्टानि सैन्यानि पाण्डवाना मयोजयत् । जयाय पाण्डुपुत्राणां यत्तस्तस्थौ रणाजिरे ॥ १२ ॥

इति उद्योगपर्वणि उलूकदूतागमनपर्वणि सेनापतिनियोगे विषष्ट्यधिकशततमोऽध्यायः ॥१६३॥ समाप्तञ्च उलूकदूतागमनपर्व ।

सम्प्राप्य कौरवाणां धुरन्धरः। किमचेष्टत गाङ्गेयो महाबुद्धि-पराक्रमः ॥ ४ ॥

वैशम्पायन उवाच। ततस्तत् सञ्जयस्तस्मै सर्व्वमेव न्यवेद-यत्। यथोक्तं कुरुवृद्धेन भीष्मेणामिततेजसा ॥ ५ ॥

सञ्जय उवाच। सैनापत्यमनुप्राप्य भीष्मः शान्तनवो नृप। दुर्य्योधनमुवाचेदं वचनं हर्षयन्निव ॥ ६ ॥ नमस्कृत्य कुमाराय सेनान्ये शक्तिपाणये। अहं सेनापतिस्तेऽद्य भविष्यामि न संशयः ॥ ७ ॥ सेनाकर्म्मण्यभिज्ञोऽस्मि व्यूहेषु विविधेषु च। कर्म्म कार-यितुञ्चैव भृतानप्यभृतांस्तथा ॥ ८ ॥ यात्रायाने च युद्धे च तथा प्रशमनेषु च। भृशं वेद महाराज यथा वेद बृहस्पतिः ॥ ९ ॥ व्यूहानाञ्च समारम्भान् दैवगान्धर्व्वमानुषान्। तैरहं मोहयिष्यामि पाण्डवान् व्येतु ते ज्वरः ॥ १० ॥ सोऽहं योत्स्यामि तत्त्वेन पालयंस्तव वाहिनीम्। यथावत् शास्त्रतो राजन् व्येतु ते मानसो ज्वरः ॥ ११ ॥

दुर्य्योधन उवाच। विद्यते मे न गाङ्गेय भयं देवासुरेष्वपि। समस्तेषु महाबाहो सत्यमेतत् ब्रवीमि ते ॥ १२ ॥ किं पुनस्त्वयि दुर्द्धर्षे सैनापत्ये व्यवस्थिते। द्रोणे च पुरुषव्याघ्रे स्थिते युद्धाभि-नन्दिनि ॥ १३ ॥ भवद्भ्यां पुरुषाग्र्याभ्यां स्थिताभ्यां विजयो मम। न दुर्लभं कुरुश्रेष्ठ देवराज्यमपि ध्रुवम् ॥ १४ ॥ रथसङ्ख्यान्तु कार्त्स्न्येन परेषामात्मनस्तथा। तथैवातिरथानाञ्च वेत्तु-मिच्छामि कौरव ॥ १५ ॥ पितामहो हि कुशलः परेषामात्मन-स्तथा। श्रोतुमिच्छाम्यहं सर्व्वैः सहैभिर्व्वसुधाधिपैः ॥ १६ ॥

भीष्म उवाच। गान्धारे शृणु राजेन्द्र रथसङ्ख्यां स्वके बले। ये रथाः पृथिवीपाल तथैवातिरथाश्च ये ॥ १७ ॥ बहूनीह सह-स्राणि प्रयुतान्यर्बुदानि च। रथानां तव सेनायां यथा मुख्यांस्तु मे शृणु ॥ १८ ॥ भवानग्रे रथोदारः सह सर्व्वैः सहोदरैः।

वतीं रथिनीमश्ववृन्दिनीम्। चतुर्विधबला भीमामकम्प्यां पृथिवी-
मिव ॥ २ ॥ भीमसेनादिभिर्गुप्ता सार्जुनैश्च महारथैः। धृष्टद्युम्न-
वशा दुर्गां सागरस्तिमितोपमाम् ॥ ३ ॥ तस्यास्त्वग्रे महेष्वास
पाञ्चाल्यो युद्धदुर्मदः। द्रोणप्रेप्सुरनीकानि धृष्टद्युम्नो व्यकर्षत
॥ ४ ॥ यथाबलं यथोत्साहं रथिनः समुपादिशत्। अर्जुनं सूत-
पुत्राय भीमं दुर्योधनाय च ॥ ५ ॥ धृष्टकेतुञ्च शल्याय गौतमायो-
त्तमौजसम्। अश्वत्थाम्ने च नकुलं शैव्यञ्च कृतवर्मणे ॥ ६ ॥
सैन्धवाय च वार्ष्णेयं युयुधानं समादिशत्। शिखण्डिनञ्च भीष्माय
प्रमुखे समकल्पयत् ॥ ७ ॥ सहदेवं शकुनये चेकितानं शलाय
च। द्रौपदेयांस्तथा पञ्च त्रिगर्त्तेभ्यः समादिशत् ॥ ८ ॥ वृष-
सेनाय सौभद्रं शेषाणाञ्च महीक्षिताम्। स समर्थं हि तं मेने
पार्थादभ्यधिकं रणे ॥ ९ ॥ एवं विभज्य योधांस्तान् पृथक् च
सह चैव च। ज्वालावर्णो महेष्वासो द्रोणमंशमकल्पयत ॥१०॥
धृष्टद्युम्नो महेष्वासः सेनापतिपतिस्तत। विधिवद् व्यूह्य मेधावी
युद्धाय धृतमानसः ॥ ११ ॥ यथोद्दिष्टानि सैन्यानि पाण्डवानां
न्ययोजयत्। जयाय पाण्डुपुत्राणां यत्तस्तस्थौ रणाजिरे ॥ १२ ॥

इति उद्योगपर्वणि उलूकदूतागमनपर्वणि सेनापतिनियोगे
त्रिषष्ट्यधिकशततमोऽध्यायः ॥१६३॥ समाप्तञ्च उलूकदूतागमनपर्व।

---

अथ रथातिरथसङ्ख्यानपर्व ॥

धृतराष्ट्र उवाच। प्रतिज्ञाते फाल्गुनेन वधे भीष्मस्य संयुगे।
किमकुर्वत मे मन्दाः पुत्रा दुर्योधनादयः ॥ १ ॥ हतमेव हि
पश्यामि गाङ्गेयं पितरं रणे। वासुदेवसहायेन पार्थेन दृढ
धन्वना ॥ २ ॥ स चापरिमितप्रज्ञस्तच्छ्रुत्वा पार्थभाषितम्।
किमुक्तवान् महेष्वासो भीष्मः प्रहरतां वरः ॥ ३ ॥ सैनापत्यञ्च

सम्प्राप्य कौरवाणां धुरन्धरः । किमचेष्टत गाङ्गेयो महाबुद्धि-पराक्रमः ॥ ४ ॥

वैशम्पायन उवाच । ततस्तत् सञ्जयस्तस्मै सर्व्वमेव न्यवेद-यत् । यथोक्तं कुरुवृद्धेन भीष्मेणामिततेजसा ॥ ५ ॥

सञ्जय उवाच । सेनापत्यमनुप्राप्य भीष्मः शान्तनवो नृप । दुर्य्योधनमुवाचेदं वचनं हर्षयन्निव ॥ ६ ॥ नमस्कृत्य कुमाराय सेनान्ये शक्तिपाणये । अहं सेनापतिस्तेऽद्य भविष्यामि न संशयः ॥ ७ ॥ सेनाकर्म्मण्यभिज्ञोऽस्मि व्यूहेषु विविधेषु च । कर्म्म कार-यितुञ्चैव भृतानप्यभृतांस्तथा ॥ ८ ॥ यात्रायाने च युद्धे च तथा प्रशमनेषु च । भृशं वेद महाराज यथा वेद बृहस्पतिः ॥ ९ ॥ व्यूहानाञ्च समारम्भान् दैवगन्धर्व्वमानुषान् । तैरहं मोहयिष्यामि पाण्डवान् व्येतु ते ज्वरः ॥ १० ॥ सोऽहं योत्स्यामि तत्त्वेन पालयंस्तव वाहिनीम् । यथावत् शास्त्रतो राजन् व्येतु ते मानसो ज्वरः ॥ ११ ॥

दुर्य्योधन उवाच । विद्यते मे न गाङ्गेय भयं देवासुरेष्वपि । समस्तेषु महाबाहो सत्यमेतत् ब्रवीमि ते ॥ १२ ॥ किं पुनस्त्वयि दुर्द्धर्षे सेनापत्ये व्यवस्थिते । द्रोणे च पुरुषव्याघ्रे स्थिते युद्धाभि-नन्दिनि ॥ १३ ॥ भवद्भ्यां पुरुषाग्र्याभ्यां स्थिताभ्यां विजयो मम । न दुर्लभं कुरुश्रेष्ठ देवराज्यमपि ध्रुवम् ॥ १४ ॥ रथसङ्ख्यान्तु कार्त्स्न्येन परेषामात्मनस्तथा । तथैवातिरथानाञ्च वेत्तु-मिच्छामि कौरव ॥ १५ ॥ पितामहो हि कुशलः परेषामात्मन-स्तथा । श्रोतुमिच्छाम्यहं सर्व्वैः सहैभिर्व्वसुधाधिपैः ॥ १६ ॥

भीष्म उवाच । गान्धारे शृणु राजेन्द्र रथसङ्ख्यां स्वके बले । ये रथाः पृथिवीपाल तथैवातिरथाश्च ये ॥ १७ ॥ बहूनीह सह-स्राणि प्रयुतान्यर्व्वुदानि च । रथानां तव सेनायां यथा मुख्यन्तु मे शृणु ॥ १८ ॥ भवानग्रे रथोदारः सह सर्व्वैः सहोदरैः ।

भीष्म उवाच । सुदक्षिणस्तु काम्बोजो रथ एकगुणो मतः । तवार्थसिद्धिमाकाङ्क्षन् योत्स्यते समरे परैः ॥ १ ॥ एतस्य रथसिंहस्य तवार्थे राजसत्तम । पराक्रमं यथेन्द्रस्य द्रक्ष्यन्ति कुरवो युधि ॥ २ ॥ एतस्य रथवंशे हि तिग्मवेगप्रहारिणः । काम्बोजानां महाराज शलभानामिवायती ॥ ३ ॥ नीलो माहिष्मतीवासी नीलवर्मा रथस्तव । रथवंशेन कदनं शत्रूणां वै करिष्यति ॥ ४ ॥ कृतवैरः पुरा चैव सहदेवेन मारिष । योत्स्यते सततं राजंस्तवार्थे कुरुनन्दन ॥ ५ ॥ विन्दानुविन्दावावन्त्यौ सम्मितौ रथसत्तमौ । कृतिनौ समरे तात दृढवीर्य्यपराक्रमौ ॥६॥ एतौ तौ पुरुषव्याघ्रौ रिपुसैन्यं प्रधक्ष्यतः । गदाप्रासासिनाराचैस्तोमरैश्च करच्युतैः ॥ ७ ॥ युद्धाभिकामौ समरे क्रीड़न्ताविव यूथपौ । यूथमध्ये महाराज विचरन्तौ कृतान्तवत् ॥ ८ ॥ त्रिगर्त्ता भ्रातरः पञ्च रथोदारा मता मम । कृतवैराश्च पार्थैस्ते विराटनगरे तदा ॥ ९ ॥ मकरा इव राजेन्द्र समुद्धततरङ्गिणीम् । गङ्गां विक्षोभयिष्यन्ति पार्थानां युधि वाहिनीम् ॥ १० ॥ ते रथाः पञ्च राजेन्द्र येषां सत्यरथो मुखम् । एते योत्स्यन्ति संग्रामे संस्मरन्तः पुराकृतम् ॥ ११ ॥ व्यलीकं पाण्डवेयेन भीमसेनानुजेन च । दिशो विजयता राजन् श्वेतवाहेन भारत ॥ १२ ॥ ते हनिष्यन्ति पार्थानां तानासाद्य महारथान् । वरान् वरान् महेष्वासान् क्षत्रियाणां धुरन्धरान् ॥ १३ ॥ लक्ष्मणस्तव पुत्रश्च तथा दुःशासनस्य च । उभौ तौ पुरुषव्याघ्रौ संग्रामेष्वपलायिनौ ॥ १४ ॥ तरुणौ सुकुमारौ च राजपुत्रौ तरस्विनौ । युद्धानाञ्च विशेषज्ञौ प्रणेतारौ च सर्व्वशः ॥ १५ ॥ रथौ तौ कुरुशार्दूलौ मतौ मे रथसत्तमौ । क्षत्रधर्मरतौ वीरौ महत्कर्म करिष्यतः ॥ १६ ॥ दण्डधारो महाराज रथ एको नरर्षभ । योत्स्यते तव संग्रामे स्वेन सैन्येन पालितः ॥ १७ ॥ बृहद्बलस्तथा राजा

कौशल्यो रथसत्तमः। रथो मम मतस्तात महावेगपराक्रमः ॥१८॥ एष योत्स्यति संग्रामे स्वान् बन्धून् सम्प्रहर्षयन्। उग्रायुधो महेष्वासो धार्त्तराष्ट्रहिते रतः ॥ १९ ॥ कृपः शारद्वतो राजन् रथयूथपयूथपः। प्रियान् प्राणान् परित्यज्य प्रधक्ष्यति रिपूंस्तव ॥ २० ॥ गौतमस्य महर्षेर्य आचार्य्यस्य शरद्वत। कार्त्तिकेय इवाजेयः शरस्तम्बात् सुतोऽभवत् ॥ २१ ॥ एष सेनाः सुबहुला विविधायुधकार्मुकाः। अग्निवत् समरे तात चरिष्यति विनिर्दहन् ॥ २२ ॥

इति उद्योगपर्वणि रथातिरथसङ्ख्यानपर्वणि कौरवरथातिरथसङ्ख्यायां पञ्चषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥

---

भीष्म उवाच। शकुनिर्मातुलस्तेऽसौ रथ एको नराधिप प्रयुज्य पाण्डवैर्वैरं योत्स्यते नात्र संशयः ॥ १ ॥ एतस्य सेना दुर्द्धर्षा समरे प्रतियायिनः। विविधायुधभूयिष्ठा वायुवेगसमा जवे ॥ २ ॥ द्रोणपुत्रो महेष्वासः सर्वानेवातिधन्विनः। समरे चित्रयोधी च दृढास्त्रश्च महारथः ॥ ३ ॥ एतस्य हि महाराज यथा गाण्डीवधन्वनः। शरासनविनिर्मुक्ताः संसक्ता यान्ति सायकाः ॥ ४ ॥ नैष शक्यो मया वीर संख्यातुं रथसत्तमः। निर्दहेदपि लोकांस्त्रीनिच्छन्नेष महायशाः ॥ ५ ॥ क्रोधस्तेजश्च तपसा संभृतोऽऽश्रमवासिना। द्रोणेनानुगृहीतश्च दिव्यैरस्त्रैरुदारधीः ॥ ६ ॥ दोषस्त्वस्य महानेको येनैष भरतर्षभ। न मे रथो नातिरथो मतः पार्थिवसत्तम ॥ ७ ॥ जीवितं प्रियमत्यर्थमायुष्कामः सदा द्विजः। न ह्यस्य सदृशः कश्चिदुभयोः सेनयोरपि ॥ ८ ॥ हन्यादेकरथेनैव देवानामपि वाहिनीम्। वपुष्मांस्तलघोषेण स्फोटयेदपि पर्वतान् ॥ ९ ॥ असङ्ख्येयगुणो वीरः

प्रहन्ता दारुणद्युतिः। दण्डपाणिरिवासह्यः कालवत् प्रचरिष्यति ॥ १० ॥ युगान्ताग्निसमः क्रोधात् सिंहग्रीवो महाद्युतिः। एष भारतयुद्धस्य पृष्ठं संशमयिष्यति ॥ ११ ॥ पिता त्वस्य महातेजा वृद्धोऽपि युवभिर्वरः। रणे कर्म महत् कर्त्ता अत्र मे नास्ति संशयः ॥ १२ ॥ अस्त्रवेगानिलोद्धूतः सेनाकक्षेन्धनोत्थितः। पाण्डुपुत्रस्य सैन्यानि प्रधक्ष्यति रणे धृतः ॥ १३ ॥ रथयूथपयूथानां यूथपोऽयं नरर्षभः। भरद्वाजात्मजः कर्त्ता कर्म तीव्रं हितं तव ॥ १४ ॥ सर्वमूर्द्धाभिषिक्तानामाचार्यः स्थविरो गुरुः। गच्छेदन्तं सृञ्जयानां प्रियस्त्वस्य धनञ्जयः ॥ १५ ॥ नैष जातु महेष्वासः पार्थमक्लिष्टकारिणम्। हन्यादाचार्यकं दीप्तं संस्मृत्य गुणनिर्मितम् ॥ १६ ॥ श्लाघतेऽयं सदा वीर पार्थस्य गुणविस्तरैः। पुत्रादभ्यधिकञ्चैनं भारद्वाजोऽनुपश्यति ॥ १७ ॥ हन्यादेकरथेनैव देवगन्धर्वमानुषान्। एकीभूतानपि रणे दिव्यैरस्त्रैः प्रतापवान् ॥ १८ ॥ पौरवो राजशार्दूलस्तव राजन् महारथः। मतो मम रथोदार परवीररथारुज ॥ १९ ॥ स्वेन सैन्येन महता प्रतपन् शत्रुवाहिनीम्। प्रधक्ष्यति स पाञ्चालान् कक्षमग्निगतिर्यथा ॥ २० ॥ सत्यश्रवा रथस्त्वेको राजपुत्रो बृहद्बलः। तव राजन्रिपुबले कालवत् प्रचरिष्यति ॥ २१ ॥ एतस्य योधा राजेन्द्र विचित्रकवचायुधाः। विचरिष्यन्ति संग्रामे निघ्नन्तः शात्रवांस्तव ॥ २२ ॥ वृषसेनो रथस्तेऽग्र्यः कर्णपुत्रो महारथः। प्रधक्ष्यति रिपूणान्ते बलन्तु बलिना वरः ॥ २३ ॥ जलसन्धो महातेजा राजन्रथवरस्तव। त्यक्ष्यते समरे प्राणान्माधवः परवीरहा ॥ २४ ॥ एष योत्स्यति संग्रामे गजस्कन्धविशारदः। रथेन वा महाबाहुः क्षपयन् शत्रुवाहिनीम् ॥ २५ ॥ रथ एष महाराज मतो मे राजसत्तम। त्वदर्थे त्यक्ष्यते प्राणान् सहसैन्यो महारणे ॥ २६ ॥ एष विक्रान्तयोधी च चित्रयोधी च सङ्गरे। वीतभीश्चापि ते

राजन्नुभे सह योत्स्यते॥ २७॥ वाह्लीकोऽतिरथश्चैव समरे चानिवर्त्तिन। मम राजन्मतो युद्धे शूरो वैवस्वतोपम॥ २८॥ न ह्येष समरं प्राप्य निवर्त्तेत कथञ्चन। यथा सततगो राजन् स हि हन्यात् परान्रणे॥ २९॥ सेनापतिर्महाराज सत्यवांस्ते महारथ। रणेष्वद्भुतकर्मा च रथी पररथारुज॥ ३०॥ एतस्य समरं दृष्ट्वा न व्यथन्ति कथञ्चन। उत्स्मयन्नुत्पतत्येष परान्रथपथे स्थितान्॥ ३१॥ एष चारिषु विक्रान्तं कर्म सत पुरुषोचितम्। कर्त्ता विमर्दे सुमहत् त्वदर्थे पुरुषोत्तम॥ ३२॥ अलम्बुषो राक्षसेन्द्रः क्रूरकर्मा महारथ। हनिष्यति परान् राजन् पूर्ववैरमनुस्मरन्॥ ३३॥ एष राक्षससैन्यानां सर्वेषां रथसत्तम। मायावी दृढवैरश्च समरे विचरिष्यति॥ ३४॥ प्राग्ज्योतिषाधिपो वीरो भगदत्तः प्रतापवान्। गजाङ्कुशधर-श्रेष्ठो रथे चैव विशारद॥ ३५॥ एतेन युद्धमभवत् पुरा गाण्डीव धन्वन। दिवसान् सुबहून् राजन्नुभयोर्जयगृद्धिनो॥ ३६॥ तत सखायं गान्धारे मानयन् पाकशासनम्। अकरोत संविदं तेन पाण्डवेन महात्मना॥ ३७॥ एष योत्स्यति संग्रामे गज स्कन्धविशारद। ऐरावतगतो राजा देवानामिव वासव॥ ३८॥

इति उद्योगपर्वणि रथातिरथसङ्ख्यानपर्वणि कौरवरथातिरथ सङ्ख्यायां षट्षष्ट्यधिकशततमोऽध्याय॥ १६६॥

---

भीष्म उवाच। अचलो वृषकश्चैव सहितौ भ्रातरावुभौ। रथौ तव दुराधर्षौ शत्रून् विध्वंसयिष्यत॥ १॥ बलवन्तौ नर व्याघ्रौ दृढक्रोधपरायणौ। गान्धारमुख्यौ तरुणौ दर्शनीयौ महाबलौ॥ २॥ सखा ते दयितो नित्यं य एष रणकर्कश। उत्साहयति राजंस्त्वा विग्रहे पाण्डवै सह॥ ३॥ परुष

कत्थनो नीचः कर्णो वैकर्त्तनस्तव। मन्त्री नेता च बन्धुश्च मानी चात्यन्तमुच्छ्रितः ॥ ४ ॥ एष नैव रथः कर्णो न चाप्यतिरथो रणे। वियुक्तः कवचेनैष सहजेन विचेतनः ॥ ५ ॥ कुण्डलाभ्याञ्च दिव्याभ्यां वियुक्तः सततं घृणी। अभिशापाच्च रामस्य ब्राह्मणस्य च भाषणात् ॥ ६ ॥ करणानां वियोगाच्च तेन मेऽर्द्धरथो मतः। नैष फाल्गुनमासाद्य पुनर्जीवन् विमोच्यते ॥ ७ ॥ ततोऽब्रवीत् पुनर्द्रोणः सर्व्वशस्त्रभृतां वरः। एवमेतत् यथात्थ त्वं न मिथ्यास्ति कदाचन ॥ ८ ॥ रणे रणेऽभिमानी च विमुखश्चापि दृश्यते। घृणी कर्णः प्रमादी च तेन मेऽर्द्धरथो मतः ॥ ९ ॥ एतच्छ्रुत्वा तु राधेयः क्रोधादुत्फाल्य लोचने। उवाच भीष्मं राधेयस्तुतान् वाग्भिः प्रतोदवत् ॥ १० ॥ पितामह यथेष्टं मां वाक्शरैरुपकृन्तसि। ममानागसं सदा द्वेषादेवमेव पदे पदे ॥११॥ मर्षयामि च तत्सर्व्वं दुर्य्योधनकृतेन वै। त्वन्तु मां मन्यसे मन्दं यथा कापुरुषं तथा ॥ १२ ॥ भवानर्द्धरथो मह्यं मतो वै नात्र संशयः। सर्व्वस्य जगतश्चैव गाङ्गेयो न मृषा वदेत् ॥ १३ ॥ कुरूणामहितो नित्यं न च राजावबुध्यते। को हि नाम समानेषु राजसूदारकर्म्मसु ॥ १४ ॥ तेजोवधमिदं कुर्य्यात् भेदयिषुराहवे। यथा त्वं गुणविद्वेषादपरागं चिकीर्षसि ॥ १५ ॥ न हायनैर्न पलितैर्न वित्तैर्न च बन्धुभिः। महारथत्वं सङ्ख्यातुं शक्यं क्षत्रस्य कौरव ॥ १६ ॥ बलज्येष्ठं स्मृतं क्षत्रं मन्त्रज्येष्ठा द्विजातयः। धनज्येष्ठाः स्मृता वैश्याः शूद्रास्तु वयसाधिकाः ॥१७॥ यथेच्छकं स्वयं ब्रूयाद्रथानतिरथांस्तथा। कामद्वेषसमायुक्तो मोहात् प्रकुरुते भवान् ॥ १८ ॥ दुर्य्योधन महाबाहो साधु सम्यगवेक्ष्यताम्। त्यज्यतां दुष्टभावोऽयं भीष्म किल्बिषकृत्तव ॥ १९ ॥ भिन्ना हि सेना नृपते दुःसन्धेया भवन्त्युत। मौला हि पुरुषव्याघ्र किमु नाना समुत्थिता ॥ २० ॥ एषा द्वैधं समुत्-

पन्नं योधानां युधि भारत। तेजोवधो नः क्रियते प्रत्यक्षेण विशेषतः ॥ २१ ॥ रथानां क्व च विज्ञानं क्व च भीष्मोऽल्पचेतनः। अहमावारयिष्यामि पाण्डवानामनीकिनीम् ॥ २२ ॥ आसाद्य मामसोघेषुं गमिष्यन्ति दिशो दश। पाण्डवाः सहपाञ्चालाः शार्दूलं वृषभा इव ॥ २३ ॥ क्व च युद्धं विमर्दो वा मन्त्रं सुव्याहृतानि च। क्व च भीष्मो गतवया मन्दात्मा कालचोदितः ॥२४॥ एकाकी स्पर्द्धते नित्यं सर्वेण जगता सह। न चान्यं पुरुषं किञ्चित् मन्यते मोघदर्शनः ॥ २५ ॥ श्रोतव्यं खलु वृद्धानामिति शास्त्रनिदर्शनम्। न त्वेव ह्यतिवृद्धानां पुनर्बाला हि ते मताः ॥ २६ ॥ अहमेको हनिष्यामि पाण्डवानामनीकिनीम्। सुयुद्धे राजशार्दूल यशो भीष्मं गमिष्यति ॥ २७ ॥ कृतः सेनापतिस्त्वेष त्वया भीष्मो नराधिप। सेनापतौ यशो गन्ता न तु योधान् कथञ्चन ॥ २८ ॥ नाहं जीवति गाङ्गेये योत्स्ये राजन् कथञ्चन। हते भीष्मे तु योद्धास्मि सर्वैरेव महारथैः ॥ २९ ॥

भीष्म उवाच। समुद्यतोऽयं भारो मे सुमहान् सागरोपमः। धार्त्तराष्ट्रस्य संग्रामे वर्षपूगाभिचिन्तितः ॥ ३० ॥ तस्मिन्नभ्यागते काले संग्रामे लोमहर्षणे। मिथो भेदो न मे कार्यस्तेन जीवसि सूतज ॥ ३१ ॥ न ह्यहं त्वय विक्रम्य स्थविरोऽपि शिशोस्तव। युद्धश्रद्धामहं छिन्द्यां जीविताशां च सूतज ॥ ३२ ॥ जामदग्न्येन रामेण महास्त्राणि विमुञ्चता। न मे व्यथा कृता काचित् त्वन्तु मे किं करिष्यसि ॥ ३३ ॥ कामं नैतत् प्रशंसन्ति सन्तः स्वबलसंस्तवम्। वक्ष्यामि तत्त्वं सन्तप्तो निहीनकुलपांसन ॥ ३४ ॥ समेतं पार्थिवं क्षत्रं काशिराजस्वयम्वरे। निर्जित्य ह्येकरथेनैव याः कन्यास्तरसा हृताः ॥ ३५ ॥ ईदृशानां सहस्राणि विशिष्टानामथो पुनः। मयैकेन निरस्तानि ससैन्यानि रणाजिरे ॥३६॥ त्वां प्राप्य वैरपुरुषं कुरूणामनयो महान्। उपस्थितो विना-

भ्याय यतस्व पुरुषो भव ॥ ३७ ॥ युध्यस्व समरे पार्थं येन विस्म-
हीसे मह । द्रक्ष्यामि त्वा विनिर्मुक्तमस्मात् युद्धात् सुदुर्मते ॥३८॥
तमुवाच ततो राजा धार्त्तराष्ट्रः प्रतापवान् । मां समीक्षस्व
गाङ्गेय कार्य्यं हि महदुद्यतम् ॥ ३९ ॥ चिन्त्यतामिदमेकाग्रं मम
निःश्रेयसं परम् । उभावपि भवन्तौ मे महत् कर्म करिष्यतः
॥ ४० ॥ भूयश्च श्रोतुमिच्छामि परेषां रथसत्तमान् । ये चैवा-
तिरथास्तत्र ये चैव रथयूथपाः ॥ ४१ ॥ बलाबलममित्राणां
श्रोतुमिच्छामि कौरव । प्रभातायां रजन्यां वै इदं युद्धं भवि-
ष्यति ॥ ४२ ॥

इति उद्योगपर्व्वणि रथातिरथसङ्ख्यानपर्व्वणि भीष्मकर्णकलहे
सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥

---

भीष्म उवाच । एते रथास्तवाख्यातास्तथैवातिरथा नृप ।
ये चाप्यर्द्धरथा राजन् पाण्डवानामतः शृणु ॥ १ ॥ यदि कौतू-
हलं तेऽद्य पाण्डवानां बले नृप । रथसङ्ख्यां शृणुष्व त्वं सहैभि-
र्वसुधाधिपैः ॥ २ ॥ स्वयं राजा रथोदारः पाण्डवः कुन्तिनन्दनः ।
अग्निवत् समरे तात चरिष्यति न संशयः ॥ ३ ॥ भीमसेनस्तु
राजेन्द्र रथोऽष्टगुणसम्मितः । न तस्यास्ति समो युद्धे गदया
सायकैरपि ॥ ४ ॥ नागायुतबलो मानी तेजसा न स मानुषः ।
माद्रीपुत्रौ च रथिनौ द्वावेव पुरुषर्षभौ ॥ ५ ॥ अश्विनाविव
रूपेण तेजसा च समन्वितौ । एते चमूमुखगताः स्मरन्तः क्लेश-
मुत्तमम् ॥ ६ ॥ रुद्रवत् प्रचरिष्यन्ति तत्र मे नास्ति संशयः । सर्वे
एव महात्मानः शालस्तम्भा इवोद्गताः ॥ ७ ॥ प्रादेशेनाधिकाः
पुंभिरन्यैस्ते च प्रमाणतः । सिंहसंहनना सर्वे पाण्डुपुत्रा महा-
बला ॥ ८ ॥ चरितब्रह्मचर्य्याश्च सर्वे तात तपस्विनः । ह्रीमन्तः

पुरुषव्याघ्रा व्याघ्रा इव बलोत्कटाः ॥ ९ ॥ जवे प्रहारे सम्मर्द्दे
सर्व्व एवातिमानुषाः। सर्व्वैर्जिता महीपाला दिग्जये भरतर्षभ
॥ १० ॥ न चैषां पुरुषाः केचिदायुधानि गदाः शरान्। विष-
हन्ति सदा कर्त्तुमधिज्यान्यपि कौरव ॥ ११ ॥ उद्यन्तुं वा गदां
गुर्व्वीं शरान् विक्षेप्तुमाहवे। जवे लक्ष्यस्य हरणे भोज्ये पांसु-
विकर्षणे ॥ १२ ॥ बालैरपि भवन्तस्ते सर्व्व एव विशेषिताः।
एतत् सैन्यं समासाद्य सर्व्वं एव बलोत्कटाः ॥ १३ ॥ विध्वंसयि-
ष्यन्ति रणे मास्म तैः सह सङ्गमः। एकैकमस्ते सम्मर्द्दे हन्यु-
स्सर्व्वान् महीक्षितः ॥ १४ ॥ प्रत्यक्षं तव राजेन्द्र राजसूये यथा-
भवत्। द्रौपद्याश्च परिक्लेशं द्यूते च परुषा गिरः ॥ १५ ॥ ते
स्मरन्तश्च सङ्ग्रामे चरिष्यन्ति च रुद्रवत्। लोहिताक्षो गुड़ाकेशो
नारायणसहायवान् ॥ १६ ॥ उभयोः सेनयोर्व्वीरो रथो ना-
स्तीति तादृशः। न हि देवेषु वा पूर्व्वं मनुष्येषूरगेषु च ॥ १७ ॥
राक्षसेष्वथ यक्षेषु नरेषु कुत एव तु। भूतोऽथ वा भविष्यो वा
रथः कश्चिन्मया श्रुतः ॥ १८ ॥ समायुक्तो महाराज रथः
पार्थस्य धीमतः। वासुदेवश्च संयन्ता योद्धा चैव धनञ्जयः ॥१९॥
गाण्डीवञ्च धनुर्द्दिव्यं ते चाश्वा वातरंहसः। अभेद्यं कवचं
दिव्यमक्षय्यौ च महेषुधी ॥ २० ॥ अस्त्रग्रामश्च माहेन्द्रो रौद्रः
कौवेर एव च। याम्यश्च वारुणश्चैव गदाश्चोग्रप्रदर्शनाः ॥ २१ ॥
वज्रादीनि च मुख्यानि नानाप्रहरणानि च। दानवानां सह-
स्राणि हिरण्यपुरवासिनाम् ॥ २२ ॥ हतान्येकरथेनाजौ कस्तस्य
सदृशो रथः। एष हन्याद्धि संरम्भी बलवान् सत्यविक्रमः ॥ २३ ॥
तव सेनां महाबाहुः स्वाञ्चैव परिपालयन्। अहञ्चैनं प्रत्युदीयाम्
आचार्य्यो वा धनञ्जयम् ॥ २४ ॥ न तृतीयोऽस्ति राजेन्द्र
सेनयोरुभयोरपि। य एनं शरवर्षाणि वर्षन्तमुदियाद्रथी ॥२५॥
जीमूत इव घर्म्मान्ते महावातसमीरितः। समायुक्तस्तु कौन्तेयो

वासुदेवसहायवान् । तरुणश्च कृती चैव जीर्णावावामुभावपि ॥ २६ ॥

वैशम्पायन उवाच । एतत् श्रुत्वा तु भीष्मस्य राज्ञां विध्वंसिरे तदा । काञ्चनाङ्गदिनः पीना भुजायन्दनरूषिताः ॥ २७ ॥ मनोभिः सह संवेगैः संस्मृत्य च पुरातनम् । सामर्थ्यं पाण्डवेयानां यथाप्रत्यक्षदर्शनम् ॥ २८ ॥

इति उद्योगपर्व्वणि रथातिरथसङ्ख्यानपर्व्वणि पाण्डवरथातिरथसङ्ख्यायां अष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥

---

भीष्म उवाच। द्रौपदेया महाराज सर्व्वे पञ्च महारथाः । वराटिरुत्तरश्चैव रथोदारो मतो मम ॥ १ ॥ अभिमन्युर्महाबाहू रथयूथपयूथपः । समः पार्थेन समरे वासुदेवेन चारिहा ॥ २ ॥ लघ्वस्त्रश्चित्रयोधी च मनस्वी च दृढव्रत । संस्मरन् वै परिक्लेशं स्वपितुर्विक्रमिष्यति ॥ ३ ॥ सात्यकिर्माधवः शूरो रथयूथपयूथपः । एष वृष्णिप्रवीराणाममर्षी जितसाध्वसः ॥ ४ ॥ उत्तमौजास्तथा राजन्रथोदारो मतो मम । युधामन्युश्च विक्रान्तो रथोदारो मतो मम ॥ ५ ॥ एतेषां बहुसाहस्रा रथा नागा हयास्तथा । योत्स्यन्ते ते तनूंस्त्यक्त्वा कुन्तीपुत्रप्रियेप्सया ॥ ६ ॥ पाण्डवैः सह राजेन्द्र तव सेनासु भारत । अग्निमारुतवद्राजन्नाह्वयन्त परस्परम् ॥ ७ ॥ अजेयौ समरे वृद्धौ विराटद्रुपदौ तथा । महारथौ महावीर्य्यौ मतौ मे पुरुषर्षभौ ॥ ८ ॥ वयोवृद्धावपि हि तौ क्षत्रधर्म्मपरायणौ । यतिष्येते परं शक्त्या स्थितौ वीरगते पथि ॥ ९ ॥ सम्बन्धकेन राजेन्द्र तौ तु वीर्य्यबलान्वयात् । आर्य्यव्रतौ महेष्वासौ स्नेहवीर्य्यस्थितावुभौ ॥ १० ॥ कारणं प्राप्य तु नराः सर्व्व एव महाभुजा । शूरा वा कातरा वापि

भवन्ति कुरुपुङ्गव ॥ ११ ॥ एकायनगतावेतौ पार्थिवौ दृढ-
धन्विनौ। प्राणांस्त्यक्त्वा परं शक्त्या घटितारौ परन्तप ॥ १२ ॥
पृथगक्षौहिणीभ्यान्तावुभौ संयति दारुणौ। सम्बन्धिभावं रक्षन्तौ
महत् कर्म करिष्यत ॥ १३ ॥ लोकवीरौ महेष्वासौ त्यक्तात्मानौ
च भारत। प्रत्यय परिरक्षन्तौ महत्कर्म करिष्यत ॥ १४ ॥

इति उद्योगपर्वणि रथातिरथसङ्ख्यानपर्वणि पाण्डवरथातिरथ-
सङ्ख्यायां एकोनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥

---

भीष्म उवाच। पञ्चालराजस्य सुतो राजन् परपुरञ्जय।
शिखण्डी रथमुख्यो मे मतः पार्थस्य भारत ॥ १ ॥ एष योत्स्यति
सङ्ग्रामे नाशयन् पूर्वसंस्थितिम्। परं यशो विप्रथयंस्तव सेनासु
भारत ॥ २ ॥ एतस्य बहुला सेना पञ्चालाश्च प्रभद्रकाः। तेनासौ
रथवंशेन महत्कर्म करिष्यति ॥ ३ ॥ धृष्टद्युम्नश्च सेनानीः सर्व-
सेनासु भारत। मतो मेऽतिरथो राजन् द्रोणशिष्यो महारथः
॥ ४ ॥ एष योत्स्यति सङ्ग्रामे सूदयन् वै परान् रणे। भगवानिव
सङ्क्रुद्धः पिनाकी युगसङ्क्षये ॥ ५ ॥ एतस्य तद्रथानीकं कथयन्ति
रणप्रियाः। बहुत्वात् सागरप्रख्यं देवानामिव संयुगे ॥ ६ ॥
क्षत्रधर्मा तु राजेन्द्र मतो मेऽर्द्धरथो नृप। धृष्टद्युम्नस्य तनयो
बाल्यान्नातिकृतश्रमः ॥ ७ ॥ शिशुपालसुतो वीरश्चेदिराजो महा-
रथः। धृष्टकेतुर्महेष्वासः सम्बन्धी पाण्डवस्य च ॥ ८ ॥ एष
चेदिपतिः शूरः सह पुत्रेण भारत। महारथानां सुकरं महत्
कर्म करिष्यति ॥ ९ ॥ क्षत्रधर्मरतो मह्यं मतः परपुरञ्जय।
क्षत्रदेवस्तु राजेन्द्र पाण्डवेषु रथोत्तमः ॥ १० ॥ जयन्तश्चामि-
तौजाश्च सत्यजिच्च महारथः। महारथा महात्मानः सर्वे पाञ्चाल-
सत्तमाः ॥ ११ ॥ योत्स्यन्ते समरे तात संरब्धा इव कुञ्जराः।

अजो भोजश्च विक्रान्तौ पाण्डवार्थे महारथौ ॥ १२ ॥ योत्स्येते बलिनौ शूरौ परं शक्त्या चयिष्यतः। शीघ्रास्त्रौ चित्रयोद्धारौ कृतिनौ दृढविक्रमौ ॥ १३ ॥ कैकेयाः पञ्च राजेन्द्र भ्रातरो युद्धदुर्मदाः। सर्व्वे चैव रथोदाराः सर्व्वे लोहितकध्वजाः ॥ १४ ॥ काशिकः सुकुमारश्च नीलो यश्चापरो नृप। सूर्य्यदत्तश्च शङ्खश्च मदिराश्वश्च नामतः ॥ १५ ॥ सर्व्वे एते रथोदाराः सर्व्वे चाहवलक्षणाः। सर्व्वास्त्रविदुषः सर्व्वे महात्मानो मता मम ॥ १६ ॥ वार्द्धक्षेमिर्म्महाराज मतो मम महारथः। चित्रायुधश्च नृपतिर्मतो मे रथसत्तम ॥ १७ ॥ स हि सङ्ग्रामशोभी च भक्तश्चापि किरीटिनः। चेकितानः सत्यधृतिः पाण्डवानां महारथौ ॥ १८ ॥ द्वाविमौ पुरुषव्याघ्रौ रथोदारौ मतौ मम। व्याघ्रदत्तश्च राजेन्द्र चन्द्रसेनश्च भारत ॥ १९ ॥ मतौ मम रथोदारौ पाण्डवानां न संशयः। सेनाबिन्दुश्च राजेन्द्र क्रोधहन्ता च नामतः ॥ २० ॥ यः समो वासुदेवेन भीमसेनेन वा विभो। स योत्स्यति हि विक्रम्य समरे तव सैनिकैः ॥ २१ ॥ मां च द्रोणं कृपञ्चैव यथा सम्मन्यते भवान्। तथा स समरश्लाघी मन्तव्यो रथसत्तमः ॥ २२ ॥ काश्यः परमशीघ्रास्त्रः श्लाघनीयो नरोत्तमः। रथ एकगुणो मह्यं ज्ञेयः परपुरञ्जयः ॥ २३ ॥ अयञ्च युधि विक्रान्तो मन्तव्योऽष्टगुणो रथः। सत्यजित् समरश्लाघी द्रुपदस्यात्मजो युवा ॥२४॥ गतः सोऽतिरथत्वं हि धृष्टद्युम्नेन सम्मितः। पाण्डवानां यशस्कामः परं कर्म करिष्यति ॥२५॥ अनुरक्तश्च शूरश्च रथोऽयमपरो महान्। पाण्ड्यराजो महावीर्य्यः पाण्डवानां धनुर्द्धरः ॥ २६ ॥ दृढधन्वा महेष्वासः पाण्डवानां महारथः। श्रेणिमान् कौरवश्रेष्ठो वसुदानश्च पार्थिवः। उभावेतावतिरथौ मतौ परपुरञ्जय ॥ २७ ॥

इति उद्योगपर्व्वणि रथातिरथसङ्ख्यानपर्व्वणि पाण्डवरथातिरथसङ्ख्यायां सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥

भीष्म उवाच। रोचमानो महाराज पाण्डवानां महारथ। योत्स्यतेऽमरवत् सङ्ख्ये परसैन्येषु भारत ॥ १ ॥ पुरुजित् कुन्तिभोजश्च महेष्वासो महाबल। मातुलो भीमसेनस्य स च मेऽतिरथो मत ॥ २ ॥ एष वीरो महेष्वास कृती च निपुणश्च ह। चित्रयोधी च शक्तश्च मतो मे रथपुङ्गव ॥ ३ ॥ स योत्स्यति हि विक्रम्य मघवानिव दानवै। योधा ये चास्य विख्याता सर्वे युद्धविशारदा ॥ ४ ॥ भागिनेयकृते वीर स करिष्यति सङ्गरे। सुमहत् कर्म पाण्डूनां स्थित प्रियहिते रत ॥ ५ ॥ भैमसेनिर्महाराज हैडिम्बो राक्षसेश्वर। मतो मे बहुमायावी रथयूथपयूथप ॥ ६ ॥ योत्स्यते समरे तात मायावी समरप्रिय। ये चास्य राक्षसा वीरा सचिवा वशवर्त्तिन ॥ ७ ॥ एते चान्ये च बहवो नानाजनपदेश्वरा। समेता पाण्डवस्यार्थे वासुदेवपुरोगमा ॥ ८ ॥ एते प्राधान्यतो राजन् पाण्डवस्य महात्मन। रथाश्चातिरथाश्चैव ये चान्येऽर्द्धरथा नृप ॥ ९ ॥ नेष्यन्ति समरे सेनां भीमां यौधिष्ठिरीं नृप। महेन्द्रेणेव वीरेण पाल्यमानां किरीटिना ॥ १० ॥ तैरहं समरे वीर मायाविद्भिर्जयैषिभि। योत्स्यामि जयमाकाङ्क्षन्नथ वा निधनं रणे ॥ ११ ॥ वासुदेवञ्च पार्थञ्च चक्रगाण्डीवधारिणौ। सन्ध्यागताविवार्केन्दू समेष्ये तौ रथोत्तमौ ॥ १२ ॥ ये चैव ते रथोदारा पाण्डुपुत्रस्य सैनिका। सहसैन्यानहन्तांश्च प्रतीयां रणमूर्द्धनि ॥ १३ ॥ एते रथाश्चातिरथाश्च तुभ्यं यथाप्रधानं नृप कीर्त्तिता मया। तथा परे येऽर्द्धरथाश्च केचित्तथैव तेषामपि कौरवेन्द्र ॥ १४ ॥ अर्जुनं वासुदेवञ्च ये चान्ये तत्र पार्थिवा। सर्वांस्तान् वारयिष्यामि यावद्द्रक्ष्यामि भारत ॥ १५ ॥ पाञ्चाल्यन्तु महाबाहो नाहं हन्यां शिखण्डिनम्। उद्यतेषुमथो दृष्ट्वा प्रतियुध्यन्तमाहवे ॥ १६ ॥ लोकस्तद्वेद यदहं पितुः प्रियचिकीर्षया। प्राप्तं राज्यं परि

त्यज्य ब्रह्मचर्य्यव्रते स्थितः ॥ १७ ॥ चित्राङ्गदं कौरवाणामभि-
षल्येऽभ्यषिचयम् । विचित्रवीर्य्यञ्च शिशुं यौवराज्येऽभ्यषिचयम्
॥ १८ ॥ देवव्रतत्वं विज्ञाप्य पृथिव्यां सर्वराजसु । नैव हन्यां
स्त्रियं जातु न स्त्रीपूर्वं कदाचन ॥ १९ ॥ स हि स्त्रीपूर्वको राजन्
शिखण्डी यदि ते श्रुतः । कन्या भूत्वा पुमान् जातो न योत्स्ये
तेन भारत ॥ २० ॥ सर्वांस्त्वन्यान् हनिष्यामि पार्थिवान् भरत-
र्षभ । यान् समेष्यामि समरे न तु कुन्तीसुतान्नृप ॥ २१ ॥

इति उद्योगपर्व्वणि रथातिरथसङ्ख्यानपर्व्वणि पाण्डवरथातिरथ-
सङ्ख्यायां एकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥

समाप्तञ्च रथातिरथसङ्ख्यानपर्व्व ॥

---

अम्बोपाख्यानपर्व्व ॥

दुर्य्योधन उवाच । किमर्थं भरतश्रेष्ठ नैव हन्याः शिख-
ण्डिनम् । उद्यतेषुमथो दृष्ट्वा समरेष्वाततायिनम् ॥ १ ॥ पूर्व-
मुक्त्वा महाबाहो पाञ्चालान् सहसोमकैः । हनिष्यामीति गाङ्गेय
तन्मे ब्रूहि पितामह ॥ २ ॥

भीष्म उवाच । शृणु दुर्य्योधन कथां सहैभिर्वसुधाधिपैः ।
यदर्थं युधि सम्प्रेक्ष्य नाहं हन्यां शिखण्डिनम् ॥ ३ ॥ महाराजो
मम पिता शान्तनुर्लोकविश्रुतः । दिष्टान्तमाप धर्म्मात्मा समये
भरतर्षभ ॥ ४ ॥ ततोऽहं भरतश्रेष्ठ प्रतिज्ञां परिपालयन् ।
चित्राङ्गदं भ्रातरं वै महाराज्येऽभ्यषिचयम् ॥ ५ ॥ तस्मिंश्च निधनं
प्राप्ते सत्यवत्या मते स्थितः । विचित्रवीर्य्यं राजानमभ्यषिञ्चं
यथाविधि ॥ ६ ॥ मयाभिषिक्तो राजेन्द्र यवीयानपि धर्म्मतः ।
विचित्रवीर्य्यो धर्म्मात्मा मामेव समुदैक्षत ॥ ७ ॥ तस्य दारक्रिया-
न्तात चिकीर्षुरहमप्युत । अनुरूपादिव कुलादित्येव च मनो
दधे ॥ ८ ॥ तथाश्रौषं महाबाहो तिस्रः कन्याः स्वयम्वराः ।

रूपेणाप्रतिमा सर्वा काशिराजसुतास्तदा ॥ ९ ॥ अम्बाञ्चै
वाम्बिकाञ्चैव तथैवाम्बालिकामपि । राजानश्च समाहूता पृथिव्या
भरतर्षभ ॥ १० ॥ अम्बा ज्येष्ठाभवत्तासामम्बिका त्वथ मध्यमा ।
अम्बालिका च राजेन्द्र राजकन्या यवीयसी ॥ ११ ॥ सोऽह
मेकरथेनैव गतः काशिपतेः पुरीम् । अपश्यन्ता महाबाहो तिस्र
कन्याः स्वलङ्कृताः ॥ १२ ॥ राज्ञश्चैव समाहूतान् पार्थिवान्
पृथिवीपते । ततोऽहन्तान्नृपान् सर्वानाहूय समरे स्थितान् ॥१३॥
रथमारोपयाञ्चक्रे कन्यास्ता भरतर्षभ । वीर्यशुल्काश्च ता ज्ञात्वा
समारोप्य रथं तदा ॥ १४ ॥ अवोचं पार्थिवान् सर्वानहं तत्र
समागतान् । भीष्मः शान्तनवः कन्या हरतीति पुनः पुनः ॥ १५ ॥
ते यतध्वं परं शक्त्या सर्वे मोक्षाय पार्थिवाः । प्रसह्य हि हरा
म्येष मिषतां वो नरर्षभाः ॥ १६ ॥ ततस्ते पृथिवीपालाः समुत्
पेतुरुदायुधाः । योगो योग इति क्रुद्धाः सारथीनभ्यचोदयन्
॥ १७ ॥ ते रथैर्गजसङ्काशैर्गजैश्च गजयोधिनः । पृष्ठैश्चाश्वै
र्महीपाला समुत्पेतुरुदायुधाः ॥ १८ ॥ ततस्ते मां महीपालाः
सर्व एव विशाम्पते । रथव्रातेन महता सर्वतः पर्यवारयन् ॥१९॥
तानहं शरवर्षेण समन्तात् पर्यवारयम् । सर्वान्नृपाञ्चाप्यजयं
देवराडिव दानवान् ॥ २० ॥ अपातयं शरैर्दीप्तैः प्रहसन् भरत
र्षभ । तेषामापततां चित्रान् ध्वजान् हेमपरिष्कृतान् ॥ २१ ॥
एकैकेन हि बाणेन भूमौ पातितवानहम् । हयांस्तेषां गजां
श्चैव सारथींश्चाप्यहं रणे ॥ २२ ॥ ते निवृत्ताश्च भग्नाश्च दृष्ट्वा
तल्लाघवं मम । अथाहं हास्तिनपुरमायां जित्वा महीक्षितः ॥२३॥
ततोऽहं ताश्च कन्या वै भ्रातुरर्थाय भारत । तच्च कर्म महाबाहो
सत्यवत्यै न्यवेदयम् ॥ २४ ॥

इति उद्योगपर्वणि अम्बोपाख्यानपर्वणि भीष्मकन्याहरणे
द्विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥

भीष्म उवाच । ततोऽहं भरतश्रेष्ठ मातरं वीरमातरम् ।
अभिगम्योपसंगृह्य दाशेयोमिदमब्रुवम् ॥ १ ॥ इमाः काशिपतेः
कन्या मया निर्ज्जित्य पार्थिवान् । विचित्रवीर्य्यस्य कृते वीर्य्य-
शुल्काः हृता इति ॥ २ ॥ ततो मूर्द्धान्युपाघ्राय पर्य्यश्रुनयना
नृप । आह सत्यवती हृष्टा दिष्ट्या पुत्र जितं त्वया ॥ ३ ॥
सत्यवत्यास्त्वनुमते विवाहे समुपस्थिते । उवाच वाक्यं सव्रीड़ा
ज्येष्ठा काशिपतेः सुता ॥ ४ ॥ भीष्म त्वमसि धर्म्मज्ञः सर्व्वशास्त्र-
विशारदः । श्रुत्वा च वचनं धर्म्यं मह्यं कर्त्तुमिहार्हसि ॥ ५ ॥
मया शाल्वपतिः पूर्व्वं मनसाभिवृतो वरः । तेन चास्मि वृता पूर्व्वं
रहस्यविदिते पितुः ॥ ६ ॥ कथं मामन्यकामां त्वं राजन् धर्म्म-
मतीत्य वै । वासयेथा गृहे भीष्म कौरवः सन् विशेषतः ॥ ७ ॥
एतद्बुद्ध्या विनिश्चित्य मनसा भरतर्षभ । यत् क्षमन्ते महा-
बाहो तदिहारब्धुमर्हसि ॥ ८ ॥ स मां प्रतीक्षते व्यक्तं शाल्व-
राजो विशाम्पते । तस्मान्मां त्वं कुरुश्रेष्ठ समनुज्ञातुमर्हसि ॥ ९ ॥
कृपां कुरु महाबाहो मयि धर्म्मभृतां वर । त्वं हि सत्यव्रतो वीर
पृथिव्यामिति नः श्रुतम् ॥ १० ॥

इति उद्योगपर्व्वणि अम्बोपाख्यानपर्व्वणि अम्बावाक्ये
विसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥

---

भीष्म उवाच । ततोऽहं समनुज्ञाप्य कालीं गन्धवतीं तदा ।
मन्त्रिणश्चर्त्विजश्चैव तथैव च पुरोहितान् ॥ १ ॥ समनुज्ञासिषं
कन्यामम्बां ज्येष्ठां नराधिप । अनुज्ञाता ययौ सा तु कन्या
शाल्वपतेः पुरम् ॥ २ ॥ वृद्धैर्द्विजातिभिर्गुप्ता धात्र्या चानुगता
तदा । अतीत्य च तमध्वानमासाद्य नृपतिं तथा ॥ ३ ॥ सा
समासाद्य राजानं शाल्वं वचनमब्रवीत् । आगताहं महाबाहो

त्वामुद्दिश्य महामते ॥ ४ ॥ तामब्रवीच्छाल्वपति स्मयन्निव विशा-
म्पते । त्वयान्यपूर्वया नाहं भार्य्यार्थी वरवर्णिनि ॥ ५ ॥ गच्छ
भद्रे पुनस्तत्र सकाशं भीष्मकस्य वै । नाहमिच्छामि भीष्मेण
गृहीतां त्वां प्रसह्य वै ॥ ६ ॥ त्वं हि भीष्मेण निर्जित्य नीता
प्रीतिमती तदा । परामृश्य महायुद्धे निर्जित्य पृथिवीपतीन् ।७॥
नाहं त्वय्यन्यपूर्वायां भार्य्यार्थी वरवर्णिनि । कथमस्मद्विधो राजा
परपूर्वां प्रवेशयेत ॥ ८ ॥ नारीं विदितविज्ञानः परेषां धर्म्म-
मादिशन् । यथेष्टं गम्यतां भद्रे मा त्वां कालोऽत्यगादयम् ॥ ९ ॥
अम्बा तमब्रवीद्राजन्ननङ्गशरपीडिता । मैवं वद महीपाल
नैतदेवं कथञ्चन ॥ १० ॥ नास्मि प्रीतिमती नीता भीष्मेणामित्र-
कर्षण । बलान्नीतास्मि रुदती विद्राव्य पृथिवीपतीन् ॥ ११ ॥
भजस्व मां शाल्वपते भक्तां बालामनागसम् । भक्तानां हि परि-
त्यागो न धर्म्मेषु प्रशस्यते ॥ १२ ॥ साहमामन्त्र्य गाङ्गेयं समरे-
ष्वनिवर्त्तिनम् । अनुज्ञाता च तेनैव ततोऽहं भृशमागता ॥ १३ ॥
न स भीष्मो महाबाहुर्म्मामिच्छति विशाम्पते । भ्रातृहेतोः समा-
रम्भो भीष्मस्येति श्रुतो मया ॥ १४ ॥ भगिन्यौ मम ये नीते
अम्बिकाम्बालिके नृप । प्रादाद्विचित्रवीर्य्याय गाङ्गेयो हि यवी-
यसे ॥ १५ ॥ यथा शाल्वपते नान्यं वरं ध्यायामि कथञ्चन ।
त्वामृते पुरुषव्याघ्र तथा मूर्द्धानमालभे ॥ १६ ॥ न चान्यपूर्वा
राजेन्द्र त्वामहं समुपस्थिता । सत्यं ब्रवीमि शाल्वैतत् सत्येना-
त्मानमालभे ॥ १७ ॥ भजस्व मां विशालाक्ष स्वयं कन्यामुप-
स्थिताम् । अनन्यपूर्वां राजेन्द्र त्वत्प्रसादाभिकाङ्क्षिणीम् ॥ १८ ॥
तामेवं भाषमाणान्तु शाल्वः काशिपतेः सुताम् । अत्यजद्भरत-
श्रेष्ठ जीर्णां त्वचमिवोरगः ॥ १९ ॥ एवं बहुविधैर्वाक्यैर्याच्य-
मानस्तया नृप । नाश्रद्दधच्छाल्वपतिः कन्याया भरतर्षभ ॥२०॥
ततः सा मन्युनाविष्टा ज्येष्ठा काशिपतेः सुता । अब्रवीत् साश्रु-

नयना वाष्पविप्लुतया गिरा ॥ २१ ॥ त्वया त्यक्ता गमिष्यामि यत्र तत्र विशाम्पते । तत्र मे गतयः सन्तु सन्तः सत्यं यथा ध्रुवम् ॥ २२ ॥ एवं तां भाषमाणान्तु कन्यां शाल्वपतिस्तदा । परितत्याज कौरव्य करुणं परिदेवतीम् ॥ २३ ॥ गच्छ गच्छेति तां शाल्वः पुनः पुनरभाषत । बिभेमि भीष्मात् सुश्रोणि त्वञ्च भीष्मपरिग्रहः ॥ २४ ॥ एवमुक्ता तु सा तेन शाल्वेनादीर्घदर्शिना । निश्चक्राम पुराद्दीना रुदती कुररी यथा ॥ २५ ॥

भीष्म उवाच । निष्क्रामन्ती तु नगराच्चिन्तयामास दुःखिता । पृथिव्यां नास्ति युवतिर्विषमस्था मया समा ॥ २६ ॥ बन्धुभिर्विप्रहीनास्मि शाल्वेन च निराकृता । न च शक्यं पुनर्गन्तुं मया वारणसाह्वयम् ॥ २७ ॥ अनुज्ञाता तु भीष्मेण शाल्वमुद्दिश्य कारणम् । किन्नु गर्हाम्यथात्मानमथ भीष्मं दुरासदम् ॥ २८ ॥ अथ वा पितरं मूढं यो मेऽकार्षीत् स्वयम्वरम् । ममायं स्वकृतो दोषो याहं भीष्मरथात्तदा ॥ २९ ॥ प्रवृत्ते दारुणे युद्धे शाल्वार्थं न गता पुरा । तस्येयं फलनिर्वृत्तिर्यदापन्नास्मि मूढवत् ॥ ३० ॥ धिग्भीष्मं धिक् च मे मन्दं पितरं मूढचेतसम् । येनाहं वीर्य्यशुल्केन पण्यस्त्रीव प्रवेरिता ॥ ३१ ॥ धिङ्मां धिक् शाल्वराजानं धिग्धातारमथापि वा । येषां दुर्नीतिभावेन प्राप्तास्म्यापदमुत्तमाम् ॥ ३२ ॥ सर्वथा भागधेयानि स्वानि प्राप्नोति मानवः । अनयस्यास्य तु मुखं भीष्मः शान्तनवो मम ॥ ३३ ॥ सा भीष्मे प्रतिकर्त्तव्यमहं पश्यामि साम्प्रतम् । तपसा वा युधा वापि दुःखहेतुः स मे मतः ॥ ३४ ॥ को नु भीष्मं युधा जेतुमुत्सहेत महीपतिः । एवं सा परिनिश्चित्य जगाम नगराद्बहिः ॥ ३५ ॥ आश्रमं पुण्यशीलानां तापसानां महात्मनाम् । ततस्तामवसद्रात्रिं तापसैः परिवारिता ॥ ३६ ॥ आचख्यौ च यथावृत्तं सर्वमात्मनि भारत । विस्तरेण महाबाहो निखिलेन शुचि

स्मिता ॥ ३७ ॥ हरणञ्च विसर्गञ्च शाल्वेन च विसर्ज्जनम्। तत-
स्तत्र महानासीत् ब्राह्मणः संशितव्रतः ॥ ३८ ॥ शैखावत्यस्तपो-
वृद्धः शास्त्रे चारण्यके गुरुः। आर्त्तान्तामाह स मुनिः शैखावत्यो
महातपाः ॥ ३९ ॥ निःश्वसन्तीं सतीं बालां दुःखशोकपरा-
यणाम्। एवं गते तु किं भद्रे शक्यं कर्त्तुं तपस्विभिः ॥ ४० ॥
आश्रमस्थैर्महाभागे तपोयुक्तैर्महात्मभिः। सा त्वेनमब्रवीद्राजन्
क्रियतां मदनुग्रहः ॥ ४१ ॥ प्राव्रज्यमहमिच्छामि तपस्तप्स्यामि
दुश्चरम्। मयैव यानि कर्म्माणि पूर्व्वदेहे तु मूढया ॥ ४२ ॥
कृतानि नूनं पापानि तेषामेतत् फलं ध्रुवम्। नोत्सहे तु पुन-
र्गन्तुं स्वजनं प्रति तापसाः ॥ ४३ ॥ प्रत्याख्याता निरानन्दा
शाल्वेन च निराकृता। उपदिष्टमिहेच्छामि तापस्यं वीत-
कल्मषाः ॥ ४४ ॥ युष्माभिर्द्देवसङ्काशैः कृपा भवतु वो मयि।
स तामाश्वासयत् कन्यां दृष्टान्तागमहेतुभिः। सान्त्वयामास
कार्य्यञ्च प्रतिजज्ञे द्विजैः सह ॥ ४५ ॥

इति उद्योगपर्व्वणि अम्बोपाख्यानपर्व्वणि शैखावत्याम्बसंवादे
चतुःसप्तत्यधिकशततमोऽध्यायः ॥१७४॥

---

भीष्म उवाच। ततस्ते तापसाः सर्व्वे कार्य्यवन्तोऽभवंस्तदा।
तां कन्यां चिन्तयन्तस्ते किं कार्य्यमिति धर्म्मिणः ॥ १ ॥ केचिदाहुः
पितुर्वेश्म नीयतामिति तापसाः। केचिदस्मदुपालम्भे मतिञ्चक्रुर्द्दि-
तापसाः ॥ २ ॥ केचिच्छाल्वपतिं गत्वा नियोज्यमिति मेनिरे।
नेति केचिद् व्यवस्यन्ति प्रत्याख्याता हि तेन सा ॥ ३ ॥ एवं गते
तु किं शक्यं भद्रे कर्त्तुं मनीषिभिः। पुनरूचुश्च तां सर्व्वे तापसाः
संशितव्रताः ॥ ४ ॥ अलं प्रव्रजितेनेह भद्रे शृणु हितं वचः।
इतो गच्छस्व भद्रं ते पितुरेव निवेशनम् ॥ ५ ॥ प्रतिपत्स्यति

राजा स पिता ते यदनन्तरम् । तत्र वत्स्यसि कल्याणि सुखं सर्वगुणान्विता ॥ ६ ॥ न च तेऽन्या गतिर्न्याय्या भवेत् भद्रे यथा पिता । पतिर्वापि गतिर्नार्य्याः पिता वा वरवर्णिनि ॥ ७ ॥ गतिः पतिः समस्थाया विषमे वा पिता गतिः । प्रव्रज्या हि सुदुःखेयं सुकुमार्य्या विशेषत ॥ ८ ॥ राजपुत्र्याः प्रकृत्या च कुमार्य्यास्तव भाविनि । भद्रे दोषा हि विद्यन्ते बहवो वरवर्णिनि ॥ ९ ॥ आश्रमे हि वसन्त्यास्ते न भवेयुः पितुर्गृहे । ततस्त्वन्ये ब्रुवन् वाक्यं तापसास्तां तपस्विनीम् ॥ १० ॥ त्वामिहैकाकिनीं दृष्ट्वा निर्ज्जने गहने वने । प्रार्थयिष्यन्ति राजानस्तस्मान्नैवं मनः कृथाः ॥ ११ ॥

अम्बोवाच । न शक्यं काशिनगरं पुनर्गन्तुं पितुर्गृहान् । अवज्ञाता भविष्यामि बान्धवानां न संशयः ॥ १२ ॥ उषितास्मि तथा बाल्ये पितुर्वेश्मनि तापसाः । नाहं गमिष्ये भद्रं वस्तत्र यत्र पिता मम ॥ १३ ॥ तपस्तप्तुमभीप्स्यामि तापसैः परिरक्षिता । यथा परेऽपि मे लोके न स्यादेवं महात्ययः । दौर्भाग्यं तापसश्रेष्ठास्तस्मात्तपस्याम्यहं तप. ॥ १४ ॥

भीष्म उवाच । इत्येवन्तेषु विप्रेषु चिन्तयत्सु यथातथम् । राजर्षिस्तद्वनं प्राप्तस्तपस्वी होत्रवाहनः ॥ १५ ॥ ततस्ते तापसाः सर्वे पूजयन्ति स्म तं नृपम् । पूजाभिः स्वागताद्याभिरासनेनोदकेन च ॥ १६ ॥ तस्योपविष्टस्य सतो विश्रान्तस्योपशृण्वतः । पुनरेव कथाञ्चक्रुः कन्यां प्रति वनौकस ॥ १७ ॥ अम्बायास्तां कथां श्रुत्वा काशिराजस्य भारत । राजर्षिः स महातेजा बभूवोद्विग्नमानस ॥ १८ ॥ तां तथावादिनीं श्रुत्वा दृष्ट्वा च स महातपाः । राजर्षि कृपयाविष्टो महात्मा होत्रवाहन ॥ १९ ॥ स वेपमान उत्थाय मातुस्तस्या पिता तदा । तां कन्यामङ्कमारोप्य पर्य्याश्वासयत् प्रभो ॥ २० ॥ स तामपृच्छत् कार्त्स्न्येन व्यसनोत्-

पत्तिमादित । सा च तस्मै यथावृत्त विस्तरेण न्यवेदयत ॥२१॥ तत स राजर्षिरभूत दु खशोकसमन्वित । कार्य्यञ्च प्रतिपेदे तन्मनसा सुमहातपा ॥ २२ ॥ अब्रवीत् वेपमानश्च कन्यामार्त्तां सुदु खिताम । मागा पितृगृह भद्रे मातुस्ते जनको ह्यहम् ॥२३॥ दु ख छिन्द्यामहं ते वै मयि वर्त्तस्व पुत्रिके । पर्य्याप्तं ते मनो वत्से यदेवं परिशुष्यसि ॥ २४ ॥ गच्छ मद्वचनाद्राम जामदग्न्य तपस्विनम् । रामस्ते सुमहद्दु ख शोकञ्चैवापनेष्यति ॥ २५ ॥ हनिष्यति रणे भीष्म न करिष्यति चेद्वच । तं गच्छ भार्गवश्रेष्ठ कालाग्निसमतेजसम ॥ २६ ॥ प्रतिष्ठापयिता स त्वां समे पथि महातपा । ततस्तु सुस्वर वाष्पमुत्सृजन्ती पुन पुन ॥ २७ ॥ अब्रवीत पितर मातु सा तदा होत्रवाहनम । अभिवादयित्वा शिरसा गमिष्ये तव शासनात् ॥ २८ ॥ अपि नामाद्य पश्येयमार्य्यन्त लोकविश्रुतम् । कथञ्च तीव्र दु ख मे नाशयिष्यति भार्गव । एतदिच्छाम्यहं ज्ञातु यथा यास्यामि तत्र वै ॥२९॥

इति उद्योगपर्व्वणि अम्बोपाख्यानपर्व्वणि होत्रवाहनाम्बा-
संवादे पञ्चसप्तत्यधिकशततमोऽध्याय ॥ १७५ ॥

---

होत्रवाहन उवाच । राम द्रक्ष्यसि भद्रे त्व जामदग्न्य महा वने । उग्रे तपसि वर्त्तन्तं सत्यसन्ध महाबलम् ॥ १ ॥ महेन्द्रे वै गिरिश्रेष्ठ रामो नित्यमुपास्ति ह । ऋषयो वेदविद्वांसो गन्धर्वाप्सरसस्तथा ॥ २ ॥ तत्र गच्छस्व भद्रन्ते ब्रूयाश्चैन वचो मम । अभिवाद्य च त मूर्द्ध्ना तपोवृद्धं दृढव्रतम् ॥ ३ ॥ ब्रूयाश्चैन पुनर्भद्रे यत्ते कार्य्यं मनीषितम । मयि सङ्कीर्त्तिते राम सर्वं तत्ते करिष्यति ॥ ४ ॥ मम राम सखा वत्से प्रीतियुक्त सुहृच्च मे । जमदग्निसुतो वीर सर्वशस्त्रभृतां वर ॥ ५ ॥ एव

श्रुवति कन्यान्तु पार्थिवे होत्रवाहने। अकृतव्रणः प्रादुरासी-
द्रामस्यानुचरः प्रियः ॥ ६ ॥ ततस्ते मुनयः सर्व्वे समुत्तस्थुः सह-
स्रश । स च राजा वयोवृद्धः सृञ्जयो होत्रवाहनः ॥ ७ ॥ ततो
दृष्ट्वा कृतातिथ्यमन्योन्यं ते वनौकसः । सहिता भरतश्रेष्ठ निषेदुः
परिवार्य्य तम् ॥ ८ ॥ ततस्ते कथयामासुः कथास्तास्ता मनो-
रमाः । धन्या दिव्याश्च राजेन्द्र प्रीतिहर्षमुदा युताः ॥ ९ ॥
ततः कथान्ते राजर्षिर्महात्मा होत्रवाहनः । रामं श्रेष्ठं मह-
र्षीणामपृच्छदकृतव्रणम् ॥ १० ॥ क्व सम्प्रति महाबाहो जाम-
दग्न्यः प्रतापवान् । अकृतव्रण शक्यो वै द्रष्टुं वेदविदां वरः ॥११॥

अकृतव्रण उवाच । भवन्तमेव सततं रामः कीर्त्तयति प्रभो ।
सृञ्जयो मे प्रियसखो राजर्षिरिति पार्थिव ॥ १२ ॥ इह रामः
प्रभाते श्वो भवितेति मतिर्मम । द्रष्टास्येनमिहायान्तं तव दर्शन-
काङ्क्षया ॥ १३ ॥ इयञ्च कन्या राजर्षे किमर्थं वनमागता । कस्य
चेयं तव च का भवतीच्छामि वेदितुम् ॥ १४ ॥

होत्रवाहन उवाच । दौहित्रीयं मम विभो काशिराजसुता
प्रिया । ज्येष्ठा स्वयम्बरे तस्थौ भगिनीभ्यां सहानघ ॥ १५ ॥
इयमम्बेति विख्याता ज्येष्ठा काशिपतेः सुता । अम्बिकाम्बालिके
कन्ये कनीयस्यौ तपोधन ॥ १६ ॥ समेतं पार्थिवं चात्र काशि-
पुर्य्यां ततोऽभवत् । कन्यानिमित्तं विप्रर्षे तत्रासीदुत्सवो महान्
॥ १७ ॥ ततः किल महावीर्य्यो भीष्मः शान्तनवो नृपान् ।
अधिक्षिप्य महातेजास्तिस्रः कन्या जहार ताः ॥ १८ ॥ निर्ज्जित्य
पृथिवीपालानथ भीष्मो गजाह्वयम् । आजगाम विशुद्धात्मा
कन्याभिः सह भारत ॥ १९ ॥ सत्यवत्यै निवेद्याथ विवाहं सम-
नन्तरम् । भ्रातुर्विचित्रवीर्य्यस्य समाज्ञापयत प्रभुः ॥ २० ॥ तन्तु
वैवाहिकं दृष्ट्वा कन्येयं समुपार्ज्जितम् । अब्रवीत् तत्र गाङ्गेयं
मन्त्रिमध्ये द्विजर्षभ ॥ २१ ॥ मया शाल्वपतिर्वीर मनसाभिहृतः

पति। न मामर्हसि धर्मज्ञ दातुं ध्यायमानपाम॥२२॥
तच्छ्रुत्वा वचनं भीष्मः सम्मन्त्र्य सह मन्त्रिभिः। निश्चित्य विच
र्जेमा सत्यवत्या मते स्थितः॥२३॥ अनुज्ञाता तु भीष्मेण
शाल्वं सौभपतिं ततः। कन्येयं मुदिता तत्र काले वचनमब्रवीत्
॥२४॥ विसर्ज्जितास्मि भीष्मेण धर्मं मां प्रतिपादय। मनसाभि
वृत पूर्वं मया त्वं पार्थिवर्षभ॥२५॥ प्रत्याचख्यौ च शाल्वो
ऽस्याश्चारित्रस्याभिशङ्कितः। सेयं तपोवनं प्राप्ता तापस्येऽभिरता
भृशम्॥२६॥ मया च प्रत्यभिज्ञाता वंशस्य परिकीर्त्तनात्।
अस्य दुःखस्य चोत्पत्तौ भीष्ममेवेह मन्यते॥२७॥

अम्बोवाच। भगवन्नेवमेवेह यथाह पृथिवीपतिः। शरीर
कर्त्ता मातुर्मे सृञ्जयो होत्रवाहनः॥२८॥ न ह्युत्सहे स्वनगरं
प्रतियातुं तपोधन। अपमानभयाच्चैव व्रीडया च महामुने
॥२९॥ यत्तु मां भगवान्रामो वक्ष्यति द्विजसत्तम। तन्मे कार्य्यं
तम कार्य्यमिति मे भगवन्मतिः॥३०॥

इति उद्योगपर्व्वणि अम्बोपाख्यानपर्व्वणि अकृतव्रणाम्बासमागमे
षट्सप्तत्यधिकशततमोऽध्यायः॥१७६॥

---

नाभिजानाति मे भीष्मो ब्रह्मन् शाल्वगतं मनः ॥ ५ ॥ एतद्विचार्य्य मनसा भवानेतद्विनिश्चयम् । विचिनोतु यथान्याय्यं विधानं क्रियतां तथा ॥ ६ ॥ भीष्मे वा कुरुशार्दूले शाल्वराजेऽथ वा पुनः । उभयोरेव वा ब्रह्मन् युक्तं यत् तत् समाचर ॥ ७ ॥ निवेदितं मया ह्येतद्दुःखमूलं यथातथम् । विधानं तत्र भगवन् कर्त्तुमर्हसि युक्तितः ॥ ८ ॥

अकृतव्रण उवाच । उपपन्नमिदं भद्रे यदेवं वरवर्णिनि । धर्मं प्रति वचो ब्रूयाः शृणु चेदं वचो मम ॥ ९ ॥ यदि त्वामापगेयो वै न नयेद्गजसाह्वयम् । शाल्वस्त्वां शिरसा भीरु गृह्णीयाद्रामचोदितः ॥ १० ॥ तेन त्वं निर्जिता भद्रे यस्मान्नीतासि भाविनि । संशयः शाल्वराजस्य तेन त्वयि सुमध्यमे ॥ ११ ॥ भीष्मः पुरुषमानी च जितकाशी तथैव च । तस्मात् प्रतिक्रिया युक्ता भीष्मे कारयितुं तव ॥ १२ ॥

अम्बोवाच । ममाप्येष सदा ब्रह्मन् हृदि कामोऽभिवर्त्तते । घातयेयं यदि रणे भीष्ममित्येव नित्यदा ॥ १३ ॥ भीष्मं वा शाल्वराजं वा यं वा दोषेण गच्छसि । प्रशाधि तं महाबाहो यत्कृतेऽहं सुदुःखिता ॥ १४ ॥

भीष्म उवाच । एवं कथयतामेव तेषां स दिवसो गतः । रात्रिश्च भरतश्रेष्ठ सुखशीतोष्णमारुता ॥ १५ ॥ ततो रामः प्रादुरासीत् प्रज्वलन्निव तेजसा । शिष्यैः परिवृतो राजन् जटाचीरधरो मुनिः ॥ १६ ॥ धनुष्पाणिरदीनात्मा खड्गं बिभ्रत् परश्वधी । विरजा राजशार्दूल सोऽभ्ययात् सृञ्जयं नृपम् ॥ १७ ॥ ततस्ते तापसा दृष्ट्वा स च राजा महातपाः । तस्थुः प्राञ्जलयो राजन् सा च कन्या तपस्विनी ॥ १८ ॥ पूजयामासुरव्यग्रा मधुपर्केण भार्गवम् । अर्च्चितश्च यथान्यायं निषसाद सहैव तैः ॥ १९ ॥ ततः पूर्वव्यतीतानि कथयन्तौ स्म तावुभौ । आसाता जामदग्न्यश्च

सृञ्जयस्यैव भारत॥ २०॥ तया कथान्ते राजर्षिं गुर्व्वेहं महाबलम्। उवाच मधुरं काले रामं वचनमर्थवत्॥ २१॥ रामेयं मम दौहित्री काशिराजसुता प्रभो। अस्याः शृणु यथातत्त्वं कार्य्यं कार्य्यविशारद॥ २२॥ परमं कथ्यतांश्चेति तां रामः प्रत्यभाषत। ततः साभ्यागमद्रामं ज्वलन्तमिव पावकम्॥ २३॥ ततोऽभिवाद्य चरणौ रामस्य शिरसा शुभौ। स्पृष्ट्वा पद्मदलाभाभ्यां पाणिभ्यामग्रतः स्थिता॥ २४॥ रुरोद सा शोकवती बाष्पव्याकुललोचना। प्रपेदे शरणञ्चैव शरण्यं भृगुनन्दनम्॥२५॥

राम उवाच। यथा त्वं सृञ्जयस्यास्य तथा मे त्वं नृपात्मजे। ब्रूहि यत्ते मनोदुःखं करिष्ये वचनं तव॥ २६॥

अम्बोवाच। भगवञ्छरणं त्वद्य प्रपन्नास्मि महाव्रतम्। शोकपङ्कार्णवान्मग्नां घोरादुद्धर मां विभो॥ २७॥

भीष्म उवाच। तस्याश्च दृष्ट्वा रूपञ्च वपुश्चाभिनवं पुनः। सौकुमार्य्यं परञ्चैव रामश्चिन्तापरोऽभवत्॥ २८॥ किमियं वक्ष्यतीत्येव विममर्श भृगूद्वहः। इति दध्यौ चिरं रामः कृपयाभिपरिप्लुतः॥ २९॥ कथ्यतामिति सा भूयो रामेणोक्ता शुचिस्मिता। सर्व्वमेव यथातत्त्वं कथयामास भार्गवे॥ ३०॥ तच्छ्रुत्वा जामदग्न्यस्तु राजपुत्र्या वचस्तदा। उवाच तां वरारोहां निश्चित्यार्थविनिश्चयम्॥ ३१॥

राम उवाच। प्रेषयिष्यामि भीष्माय कुरुश्रेष्ठाय भाविनि। करिष्यति वचो मह्यं श्रुत्वा च स नराधिपः॥ ३२॥ न चेत् करिष्यति वचो मयोक्तं जाह्नवीसुतः। धक्ष्याम्येनं रणे भद्रे सामात्यं शस्त्रतेजसा॥ ३३॥ अथ वा ते मतिस्तत्र राजपुत्रि निवर्त्तते। यावच्छाल्वपतिं वीरं योजयाम्यत्र कर्म्मणि॥ ३४॥

अम्बोवाच। विसर्ज्जिताहं भीष्मेण श्रुत्वैव भृगुनन्दन। शाल्वराजगतं भावं मम पूर्व्वं मनोगतम्॥ ३५॥ सौभराज

मुपेत्याहमवोचं दुर्वचं वचः । न च मां प्रत्यगृह्णात् स चारित्र-परिशङ्कितः ॥ ३६ ॥ एतत् सर्वं विनिश्चित्य स्वबुद्ध्या भृगुनन्दन । यदत्रौपयिकं कार्य्यं तच्चिन्तयितुमर्हसि ॥ ३७ ॥ मम तु व्यसनस्यास्य भीष्मो मूलं महाव्रतः । येनाहं वशमानीता समुत्क्षिप्य बलात् तदा ॥ ३८ ॥ भीष्मं जहि महाबाहो यत्कृते दुःखमीदृशम् । प्राप्ताहं भृगुशार्दूल चराम्यप्रियमुत्तमम् ॥ ३९ ॥ स हि लुब्धश्च नीचश्च जितकाशी च भार्गव । तस्मात् प्रतिक्रियां कर्त्तुं युक्ता तस्मै त्वयानघ ॥ ४० ॥ एष मे क्रियमाणाया भारतेन तदा विभो । अभवद्धृदि सङ्कल्पो घातयेयं महाव्रतम् ॥४१॥ तस्मात् कामं ममाद्येमं राम सम्पादयानघ । जहि भीष्मं महाबाहो यथा वृत्रं पुरन्दरः ॥ ४२ ॥

इति उद्योगपर्व्वणि अम्बोपाख्यानपर्व्वणि रामाम्बासंवादे सप्तसप्तत्यधिकशततमोऽध्यायः ॥ १७७ ॥

---

भीष्म उवाच । एवमुक्तस्तदा रामो जहि भीष्ममिति प्रभो । उवाच रुदतीं कन्यां चोदयन्तीं पुनः पुनः ॥ १ ॥ काश्ये न कामं गृह्णामि शस्त्रं वै वरवर्णिनि । ऋते ब्रह्मविदां हेतोः किमन्यत् करवाणि ते ॥ २ ॥ कामं भीष्मश्च शाल्वश्च मम राज्ञि वशानुगौ । भविष्यतोऽनवद्याङ्गि यत् करिष्यामि मा शुचः ॥ ३ ॥ न तु शस्त्रं ग्रहीष्यामि कथञ्चिदपि भाविनि । ऋते नियोगाद्विप्राणामेष मे समयः कृतः ॥ ४ ॥

अम्बोवाच । मम दुःखं भगवता व्यपनेयं यतस्ततः । तत्तु भीष्मप्रसूतं मे तं जहीश्वर मा चिरम् ॥ ५ ॥

राम उवाच । काशिकन्ये पुनर्ब्रूहि भीष्मस्ते चरणावुभौ । शिरसा वन्दनार्होऽपि ग्रहीष्यति गिरा मम ॥ ६ ॥

अम्बोवाच । जहि भीष्मं रणे राम गर्ज्जन्तमसुरं यथा ।
समाहूतो रणे राम मम चेदिच्छसि प्रियम् । प्रतिश्रुतञ्च यदपि
तत् सत्यं कर्त्तुमर्हसि ॥ ७ ॥

भीष्म उवाच । तयोः संवदतोरेवं राजन्रामाम्बयोस्तदा ।
ऋषिः परमधर्मात्मा इदं वचनमब्रवीत् ॥ ८ ॥ शरणागता महा-
बाहो कन्या न त्यक्तुमर्हसि । यदि भीष्मो रणे राम समाहूत-
स्त्वया मृधे ॥ ९ ॥ निर्ज्जितोऽस्मीति वा ब्रूयात् कुर्य्याद्वा वचनं
तव । कृतमस्या भवेत् कार्य्यं कन्याया भृगुनन्दन ॥ १० ॥ वाक्यं
सत्यञ्च ते वीर भविष्यति कृतं विभो । इयञ्चापि प्रतिज्ञा ते तदा
राम महामुने ॥ ११ ॥ जित्वा वै क्षत्रियान् सर्वान् ब्राह्मणेषु
प्रतिश्रुता । ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैव रणे यदि ॥ १२ ॥
ब्रह्मद्विड्भविता तं वै हनिष्यामीति भार्गव । शरणार्थं प्रपन्नानां
भीतानां शरणार्थिनाम् ॥ १३ ॥ न शक्ष्यामि परित्यागं कर्त्तुं
जीवन् कथञ्चन । यश्च कृत्स्नं रणे क्षत्रं विजेष्यति समागतम्
॥ १४ ॥ दीप्तात्मानमहं तञ्च हनिष्यामीति भार्गव । स एव
विजयी राम भीष्मः कुरुकुलोद्वहः । तेन युध्यस्व संग्रामे समेत्य
भृगुनन्दन ॥ १५ ॥

राम उवाच । स्मराम्यहं पूर्व्वकृतां प्रतिज्ञामृषिसत्तम । तथैव
च करिष्यामि यथा साम्नैव लप्स्यते ॥ १६ ॥ कार्य्यमेतन्महद्-
ब्रह्मन् काशिकन्यामनोगतम् । गमिष्यामि स्वयं तत्र कन्यामादाय
यत्र सः ॥ १७ ॥ यदि भीष्मो रणश्लाघी न करिष्यति मे वचः ।
हनिष्याम्येनमुद्रिक्तमिति मे निश्चिता मतिः ॥ १८ ॥ न हि बाणा
मयोत्सृष्टाः सज्जन्तीह शरीरिणाम् । कायेषु विदितं तुभ्यं
पुरा क्षत्रियसङ्गरे ॥ १९ ॥ एवमुक्त्वा ततो रामः सह तैर्ब्रह्म-
वादिभिः । प्रयाणाय मतिं कृत्वा समुत्तस्थौ महातपाः ॥ २० ॥
ततस्ते तामुषित्वा तु रजनीं तत्र तापसाः । हुताग्नयो जप्त

जप्याः प्रतस्थुर्मज्जिषांसया ॥ २१ ॥ अभ्यगच्छत्ततो रामः सह तैर्ब्रह्मवादिभिः । कुरुक्षेत्रं महाराज कन्यया सह भारत ॥२२॥ न्यविशन्त ततः सर्वे परिरक्ष्य सरस्वतीम् । तापसास्ते महात्मानो भृगुश्रेष्ठपुरस्कृताः ॥ २३ ॥

इति उद्योगपर्वणि अम्बोपाख्यानपर्वणि रामकुरुक्षेत्रप्राप्तौ षष्टसप्तत्यधिकशततमोऽध्यायः ॥ १७८ ॥

---

भीष्म उवाच । ततस्तृतीये दिवसे सन्दिदेश व्यवस्थितः । कुरु प्रियं स मे राजन् प्राप्तोऽस्मीति महाव्रत ॥ १ ॥ तमागतमहं श्रुत्वा विषयान्ते महाबलम् । अभ्यगच्छं जवेनाशु प्रीत्या तेजोनिधिं प्रभुम् ॥ २ ॥ गां पुरस्कृत्य राजेन्द्र ब्राह्मणैः परिवारितः । ऋत्विग्भिर्देवकल्पैश्च तथैव च पुरोहितैः ॥ ३ ॥ स मामभिगतं दृष्ट्वा जामदग्न्यः प्रतापवान् । प्रतिजग्राह तां पूजां वचनञ्चेदमब्रवीत ॥ ४ ॥

राम उवाच । भीष्म कां बुद्धिमास्थाय काशिराजसुता तदा । अकामेन त्वया नीता पुनश्चैव विसर्जिता ॥ ५ ॥ विभ्रंशिता त्वया हीयं धर्म्मादास्ते यशस्विनी । परामृष्टां त्वया हीमां को हि गन्तुमिहार्हति ॥ ६ ॥ प्रत्याख्याता हि शाल्वेन त्वया नीतेति भारत । तस्मादिमां मन्नियोगात् प्रतिगृह्णीष्व भारत ॥ ७ ॥ स्वधर्मं पुरुषव्याघ्र राजपुत्री लभत्वियम् । न युक्तस्त्ववमानोऽयं राजन् कर्त्तुं त्वयानघ ॥ ८ ॥ ततस्तं वै विमनसमुदीक्ष्याहमथाब्रुवम् । नाहमेनां पुनर्दद्यां ब्रह्मन् भ्रात्रे कथञ्चन ॥ ९ ॥ शाल्वस्याहमिति प्राह पुरा मामेव भार्गव । मया चैवाभ्यनुज्ञाता गतेयं नगरं प्रति ॥ १० ॥ न भयान्नाप्यनुक्रोशान्नार्थलोभान्न काम्यया । क्षात्रं धर्ममहं जह्यामिति मे व्रतमाहितम् ॥ ११ ॥

अथ मामब्रवीद्रामः क्रोधपर्य्याकुलेक्षणः। न करिष्यसि चेदेतद्वाक्यं मे नरपुङ्गव ॥ १२ ॥ हनिष्यामि सहामात्यं त्वामद्येति पुनः पुनः। संरम्भादब्रवीद्रामः क्रोधपर्य्याकुलेक्षणः ॥ १३ ॥ तमहं गीर्भिरिष्टाभिः पुनः पुनररिन्दम। अयाचं भृगुशार्दूलं न चैव प्रशशाम सः ॥ १४ ॥ प्रणम्य तमहं मूर्द्ध्ना भूयो ब्राह्मणसत्तमम्। अब्रुवं कारणं किन्तत् यत्त्वं युद्धमिहेच्छसि ॥ १५ ॥ इष्वस्त्रं मम बालस्य भवतैव चतुर्विधम्। उपदिष्टं महाबाहो शिष्योऽस्मि तव भार्गव ॥ १६ ॥ ततो मामब्रवीद्रामः क्रोधसंरक्तलोचनः। जानीषे मां गुरुं भीष्म गृह्णासीमां न चैव ह ॥ १७ ॥ सुतां काश्यस्य कौरव्य मत्प्रियार्थं महामते। न हि ते विद्यते शान्तिरन्यथा कुरुनन्दन ॥ १८ ॥ गृहाणेमां महाबाहो रक्षस्व कुलमात्मनः। त्वया विभ्रंशिता हीयं भर्त्तारं नाधिगच्छति ॥ १९ ॥ तथा ब्रुवन्तं तमहं रामं परपुरञ्जयम्। नैतदेवं पुनर्भावि ब्रह्मर्षे किं श्रमेण ते ॥ २० ॥ गुरुत्वं त्वयि सम्प्रेक्ष्य जामदग्न्य पुरातनम्। प्रसादये त्वां भगवंस्त्यक्तैषा तु पुरा मया ॥ २१ ॥ को जातु परभावां हि नारीं व्यालीमिव स्थिताम्। वासयेत् स्वगृहे जानन् स्त्रीणां दोषान् महात्ययान् ॥ २२ ॥ न भयाद्वासवस्यापि धर्मं जह्यां महाव्रत। प्रसीद मा वा यद्वा ते कार्य्यं तत् कुरु मा चिरम् ॥ २३ ॥ अयञ्चापि विशुद्धात्मन् पुराणे श्रूयते विभो। मरुत्तेन महाबुद्धे गीतः श्लोको महात्मना ॥ २४ ॥ गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः। उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥ २५ ॥ स त्वं गुरुरिति प्रेम्णा मया सम्मानितो भृशम्। गुरुवृत्तिं न जानीषे तस्मात् योत्स्यामि वै त्वया ॥ २६ ॥ गुरुं न हन्यां समरे ब्राह्मणञ्च विशेषतः। विशेषतस्तपोवृद्धमेवं क्षान्तं मया तव ॥ २७ ॥ उद्यतेषुमथो दृष्ट्वा ब्राह्मणं क्षत्रबन्धुवत्। यो हन्यात् समरे क्रुद्धं युध्यन्तमपलायिनम् ॥ २८ ॥ ब्रह्महत्या

न तस्य स्यादिति धर्म्मेषु निश्चयः। क्षत्रियाणां स्थितो धर्म्मे क्षत्रियोऽस्मि तपोधन ॥ २९ ॥ यो यथा वर्त्तते यस्मिंस्तस्मिन्नेव प्रवर्त्तयन्। नाधर्म्मं समवाप्नोति न चाश्रेयश्च विन्दति ॥ ३० ॥ अर्थे वा यदि वा धर्म्मे समर्थो देशकालवित्। अर्थसंशयमापन्नः श्रेयान्निःसंशयो नरः ॥ ३१ ॥ यस्मात् संशयितेऽप्यर्थे यथान्यायं प्रवर्त्तसे। तस्मात् योत्स्यामि सहितस्त्वया राम महाहवे ॥३२॥ पश्य मे बाहुवीर्य्यञ्च विक्रमञ्चातिमानुषम्। एवं गतेऽपि तु मया यच्छक्यं भृगुनन्दन ॥ ३३ ॥ तत् करिष्ये कुरुक्षेत्रे योत्स्ये विप्र त्वया सह ॥ द्वन्द्वे राम यथेष्टन्तु सज्जीभव महाद्युते ॥ ३४ ॥ यत्र त्वं निहतो राम मया शरशतार्द्दितः। प्राप्स्यसे निर्ज्जितां-ल्लोकाञ्छस्त्रपूतो महारणे ॥ ३५ ॥ स गच्छ विनिवर्त्तस्व कुरुक्षेत्रं रणप्रियम्। तत्रैष्यामि महाबाहो युद्धाय त्वां तपोधन ॥३६॥ अपि यत्र त्वया राम कृतं शौचं पुरा पितुः। तत्राहमपि हत्वा त्वां शौचं कर्त्तास्मि भार्गव ॥ ३७ ॥ तत्र राम समागच्छ त्वरितं युद्धदुर्म्मद। व्यपनेष्यामि ते दर्पं पौराणं ब्राह्मणब्रुवम् ॥ ३८ ॥ तवापि कत्थसे राम बहुशः परिवत्सरे। निर्ज्जिताः क्षत्रिया लोके मयैकेनेति तत् शृणु ॥ ३९ ॥ न तदा जातवान् भीष्मः क्षत्रियो वापि मद्विधः। पश्यात् जातानि तेजांसि तृणेषु ज्वलितं त्वया ॥ ४० ॥ यस्ते युद्धमयं दर्पं कामञ्च व्यपनाशयेत्। सोऽहं जातो महाबाहो भीष्मः परपुरञ्जयः। व्यपनेष्यामि ते दर्पं युद्धे राम न संशयः ॥ ४१ ॥

भीष्म उवाच। ततो मामब्रवीद्रामः प्रहसन्निव भारत। दिष्ट्या भीष्म मया सार्द्धं योद्धुमिच्छसि सङ्गरे ॥ ४२ ॥ अयं गच्छामि कौरव्य कुरुक्षेत्रं त्वया सह। भाषितं ते करिष्यामि तत्र गच्छ परन्तप ॥ ४३ ॥ तत्र त्वां निहतं माता मया शर-शतान्वितम्। जाह्नवी पश्यतां भीष्म गृध्रकङ्कबलाशनम् ॥ ४४ ॥

अथ मामब्रवीद्रामः क्रोधपर्य्याकुलेक्षणः। न करिष्यसि चेदेतद्वाक्यं मे नरपुङ्गव ॥ १२ ॥ हनिष्यामि सहामात्यं त्वामद्येति पुनः पुनः। संरम्भादब्रवीद्रामः क्रोधपर्य्याकुलेक्षणः ॥ १३ ॥ तमहं गीर्भिरिष्टाभिः पुनः पुनररिन्दम। अयाचं भृगुशार्दूलं न चैव प्रशशाम सः ॥ १४ ॥ प्रणम्य तमहं मूर्द्ध्ना भूयो ब्राह्मणसत्तमम्। अब्रुवं कारणं किन्तत् यत्त्वं युद्धं मयेच्छसि ॥ १५ ॥ इष्वस्त्रं मम बालस्य भवतैव चतुर्विधम्। उपदिष्टं महाबाहो शिष्योऽस्मि तव भार्गव ॥ १६ ॥ ततो मामब्रवीद्रामः क्रोधसंरक्तलोचनः। जानीषे मां गुरुं भीष्म न चेमां प्रतिगृह्णासि ह ॥ १७ ॥ सुतां काश्यस्य कौरव्य मत्प्रियार्थं महामते। न हि ते विद्यते शान्तिरन्यथा कुरुनन्दन ॥ १८ ॥ गृहाणेमां महाबाहो रक्षस्व कुलमात्मनः। त्वया विभ्रंशिता हीयं भर्त्तारं नाधिगच्छति ॥ १९ ॥ तथा ब्रुवन्तं तमहं रामं परपुरञ्जयम्। नैतदेवं पुनर्भावि ब्रह्मर्षे किं श्रमेण ते ॥ २० ॥ गुरुत्वं त्वयि सम्प्रेक्ष्य जामदग्न्य पुरातनम्। प्रसादये त्वां भगवंस्त्यक्तैषा तु पुरा मया ॥ २१ ॥ को जातु परभावां हि नारीं व्यालीमिव स्थिताम्। वासयेत गृहे जानन् स्त्रीणां दोषान् महात्ययान् ॥ २२ ॥ न भयाद्वासवस्यापि धर्मं जह्यां महाव्रत। प्रसीद मां वा यद्वा ते कार्य्यं तत् कुरु मा चिरम् ॥ २३ ॥ अयञ्चापि विशुद्धात्मन् पुराणे श्रूयते विभो। मरुत्तेन महाबुद्धे गीतः श्लोको महात्मना ॥ २४ ॥ गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः। उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥ २५ ॥ स त्वं गुरुरिति प्रेम्णा मया सम्मानितो भृशम्। गुरुवृत्तिं न जानीषे तस्माद् योत्स्यामि वै त्वया ॥ २६ ॥ गुरुं न हन्यां समरे ब्राह्मणञ्च विशेषतः। विशेषतस्तपोवृद्धमेवं क्षान्तं मया तव ॥ २७ ॥ उद्यतेषुमथो दृष्ट्वा ब्राह्मणं क्षत्रवन्धुवत्। यो हन्यात् समरे क्रुद्धं युध्यन्तमपलायिनम् ॥ २८ ॥ ब्रह्महत्या

न तस्य स्यादिति धर्म्मेषु निश्चयः । क्षत्रियाणां स्थितो धर्म्मे क्षत्रियोऽस्मि तपोधन ॥ २९ ॥ यो यथा वर्त्तते यस्मिंस्तस्मिन्नेव प्रवर्त्तयन् । नाधर्म्मं समवाप्नोति न चाश्रेयश्च विन्दति ॥ ३० ॥ अर्थे वा यदि वा धर्म्मे समर्थो देशकालवित् । अर्थसंशयमापन्नः श्रेयान्निःसंशयो नरः ॥ ३१ ॥ यस्मात् संशयितेऽप्यर्थे यथान्यायं प्रवर्त्तसे । तस्मात् योत्स्यामि सहितस्त्वया राम महाहवे ॥३२॥ पश्य मे बाहुवीर्य्यञ्च विक्रमञ्चातिमानुषम् । एवं गतेऽपि तु मया यच्छक्यं भृगुनन्दन ॥ ३३ ॥ तत् करिष्ये कुरुक्षेत्रे योत्स्ये विप्र त्वया सह ॥ द्वन्द्वे राम यथेष्टन्तु सज्जीभव महाद्युते ॥ ३४ ॥ यत्र त्वं निहतो राम मया शरशतार्दितः । प्राप्स्यसे निर्जितान् लोकांश्छस्त्रपूतो महारणे ॥ ३५ ॥ स गच्छ विनिवर्त्तस्व कुरुक्षेत्रं रणप्रियम् । तत्रैष्यामि महाबाहो युद्धाय त्वां तपोधन ॥३६॥ अपि यत्र त्वया राम कृतं शौचं पुरा पितुः । तत्राहमपि हत्वा त्वां शौचं कर्त्तास्मि भार्गव ॥ ३७ ॥ तत्र राम समागच्छ त्वरितं युद्धदुर्मद । व्यपनेष्यामि ते दर्पं पौराणं ब्राह्मणब्रुवम् ॥ ३८ ॥ यच्चापि कत्थसे राम बहुशः परिवत्सरे । निर्ज्जिताः क्षत्रिया लोके मयैकेनेति तत् शृणु ॥ ३९ ॥ न तदा जातवान् भीष्मः क्षत्रियो वापि मद्विधः । पश्चात् जातानि तेजांसि तृणेषु ज्वलितं त्वया ॥ ४० ॥ यस्ते युद्धमयं दर्पं कामञ्च व्यपनाशयेत् । सोऽहं जातो महाबाहो भीष्मः परपुरञ्जयः । व्यपनेष्यामि ते दर्पं युद्धे राम न संशयः ॥ ४१ ॥

भीष्म उवाच । ततो मामब्रवीद्रामः प्रहसन्निव भारत । दिष्ट्या भीष्म मया सार्द्धं योद्धुमिच्छसि सङ्गरे ॥ ४२ ॥ अयं गच्छामि कौरव्य कुरुक्षेत्रं त्वया सह । भाषितं ते करिष्यामि तत्र गच्छ परन्तप ॥ ४३ ॥ तत्र त्वां निहतं माता मया शरशताचितम् । जाह्नवी पश्यतां भीष्म गृध्रकङ्कबलाशनम् ॥ ४४ ॥

कृपणां त्वामभिप्रेच्य सिद्धचारणसेविता। मया विनिहतं देवी रोदतामद्य पार्थिव ॥ ४५ ॥ अतदर्हा महाभागा भगीरथसुता नदी। या त्वामजीजनन्मन्दं युद्धकामुकमातुरम् ॥ ४६ ॥ एहि गच्छ मया भीष्म युद्धकामुक दुर्मद। गृहाण सर्वं कौरव्य रथादि भरतर्षभ ॥ ४७ ॥ इति ब्रुवाणं तमहं रामं परपुरञ्जयम्। प्रणम्य शिरसा राममेवमस्त्वित्यथाब्रुवम् ॥ ४८ ॥ एवमुक्त्वा ययौ रामः कुरुक्षेत्रं युयुत्सया। प्रविश्य नगरे चाहं सत्यवत्यै न्यवेदयम् ॥ ४९ ॥ ततः कृतस्वस्त्ययनो मात्रा च प्रतिनन्दितः। द्विजातीन् वाच्य पुण्याहं स्वस्ति चैव महाद्युते ॥ ५० ॥ रथमास्थाय रुचिरं राजतं पाण्डुरैर्हयैः। सूपस्करं स्वधिष्ठानं वैयाघ्रपरिवारणम् ॥ ५१ ॥ उपपन्नं महाशस्त्रैः सर्वोपकरणान्वितम्। तत् कुलीनेन वीरेण हयशास्त्रविदा रणे ॥ ५२ ॥ युक्तं सूतेन शिष्टेन बहुशो दृष्टकर्मणा। दंशितः पाण्डुरेणाहं कवचेन वपुष्मता ॥ ५३ ॥ पाण्डुरं कार्मुकं गृह्य प्रायां भरतसत्तम। पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्द्धनि ॥ ५४ ॥ पाण्डुरैश्चापि व्यजनैर्वीज्यमानो नराधिप। शुक्लवासाः सितोष्णीषः सर्वशुक्लविभूषणः ॥ ५५ ॥ स्तूयमानो जयाशीर्भिर्निष्क्रम्य गजसाह्वयात्। कुरुक्षेत्रं रणक्षेत्रमुपायां भरतर्षभ ॥ ५६ ॥ ते हयाश्चोदितास्तेन सूतेन परमाहवे। अवहन्मां भृशं राजन् मनोमारुतरंहसः ॥ ५७ ॥ गत्वाहन्तत् कुरुक्षेत्रं स च रामः प्रतापवान्। युद्धाय सहसा राजन् पराक्रान्तौ परस्परम् ॥ ५८ ॥ ततः सन्दर्शने तिष्ठन्रामस्यातितपस्विनः। प्रगृह्य शङ्खप्रवरं ततः प्राधममुत्तमम् ॥ ५९ ॥ ततस्तत्र द्विजा राजंस्तापसाश्च वनौकसः। अपश्यन्त रणं दिव्यं देवाः सेन्द्रगणास्तदा ॥ ६० ॥ ततो दिव्यानि माल्यानि प्रादुरासंस्ततस्ततः। वादित्राणि च दिव्यानि मेघवृन्दानि चैव ह ॥ ६१ ॥ ततस्ते तापसा सर्वे

भार्गवस्यानुयायिनः । मेचकाः समपद्यन्त परिवार्य्य रणाजिरम्
॥ ६२ ॥ ततो मामब्रवीद्देवी सर्व्वभूतहितैषिणी । माता स्वरू-
पिणी राजन् किमिदं ते चिकीर्षितम् ॥ ६३ ॥ गत्वाहं जाम-
दग्न्यन्तु प्रयाचिष्ये कुरूद्वह । भीष्मेण सह मा योत्सीः शिष्ये-
णेति पुनः पुनः ॥ ६४ ॥ मा मैवं पुत्र निर्बन्धं कुरु विप्रेण पार्थिव ।
जामदग्न्येन समरे योद्धुमित्यवभर्त्सयत् ॥ ६५ ॥ किन्न वै क्षत्रिय-
हणो हरतुल्यपराक्रमः । विदितः पुत्र रामस्ते यतस्त्वं योद्धु-
मिच्छसि ॥ ६६ ॥ ततोऽहमब्रुवं देवीमभिवाद्य कृताञ्जलिः ।
सर्व्वं तद्भरतश्रेष्ठ यथावृत्तं स्वयम्वरे ॥ ६७ ॥ यथा च रामो
राजेन्द्र मया पूर्व्वं प्रचोदितः । काशिराजसुतायाश्च यथा कर्म्म
पुरातनम् ॥ ६८ ॥ ततः सा राममभ्येत्य जननी मे महानदी ।
मदर्थं तमृषिं देवी क्षमयामास भार्गवम् ॥ ६९ ॥ भीष्मेण सह
मा योत्सीः शिष्येणेति वचोऽब्रवीत् । स तु तामाह याचन्तीं
भीष्ममेव निवर्त्तय । न च मे कुरुते काममित्यहन्तमुपागमम् ॥७०॥

वैशम्पायन उवाच । ततो गङ्गा सुतस्नेहात् भीष्मं पुन-
रुपागमत् । न चास्याश्चाकरोद्वाक्यं क्रोधपर्य्याकुलेक्षणः ॥ ७१ ॥
अथादृश्यत धर्म्मात्मा भृगुश्रेष्ठो महातपाः । आह्वयामास च
तदा युद्धाय द्विजसत्तमः ॥ ७२ ॥

इति उद्योगपर्व्वणि अम्बोपाख्यानपर्व्वणि सप्ताधिके
एकोनाशीत्यधिकशततमोऽध्यायः ॥ १७९ ॥

---

भीष्म उवाच । तमहं स्मयन्निव रणे प्रत्यभाषं व्यवस्थितम् ।
भूमिष्ठं नोत्सहे योद्धुं भवन्तं रथमास्थित ॥ १ ॥ आरोह स्यन्दनं
वीर कवचञ्च महाभुज । बधान समरे राम यदि योद्धुमिहे-
च्छसि ॥ २ ॥ ततो मामब्रवीद्रामः स्मयमानो रणाजिरे । रथो

कृपया त्वामभिप्रेच्य सिद्धचारणसेविता। मया विनिहतं देवी रोदतामद्य पार्थिव ॥ ४५ ॥ अतद्दर्हा महाभागा भगीरथसुता नदी। या त्वामजीजनद्भन्दं युद्धकामुकमातुरम ॥ ४६ ॥ एहि गच्छ मया भीष्म युद्धकामुक दुर्मद। अब्राहा सर्वं कौरव्य रथादि भरतर्षभ ॥ ४७ ॥ इति ब्रुवाणं तमहं रामं परपुरञ्जयम्। प्रणम्य शिरसा राममेवमस्त्वित्यथाब्रुवम ॥ ४८ ॥ एवमुक्त्वा ययौ राम कुरुचेत्रं युयुत्सया। प्रविश्य नगरे चाह सत्यवत्यै न्यवेदयम् ॥ ४९ ॥ तत कृतस्वस्त्ययनो मात्रा च प्रतिनन्दित। द्विजातीन् वाच्य पुण्याह स्वस्ति चैव महाद्युते ॥ ५० ॥ रथमास्थाय रुचिरं राजतं पाण्डुरैर्हयै। सूपस्कर स्वधिष्ठान वैयाघ्रपरिवारणम् ॥ ५१ ॥ उपपन्नं महाशस्त्रैः सर्वोपकरणान्वितम। तत कुलीनेन वीरेण हयशास्त्रविदा रणे ॥ ५२ ॥ युक्त सूतेन शिष्टेन बहुशो दृष्टकर्मणा। दंशित पाण्डुरेणाह कवचेन वपुष्मता ॥ ५३ ॥ पाण्डुर कार्मुकं गृह्य प्रायां भरतसत्तम। पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्द्धनि ॥ ५४ ॥ पाण्डुरैश्चापि व्यजनैर्वीज्यमानो नराधिप। शुक्लवासा सितोष्णीष सर्वशुक्लविभूषण ॥ ५५ ॥ स्तूयमानो जयाशीर्भिर्निष्क्रम्य गजसाह्वयात। कुरुचेत्र रणक्षेत्रमुपायां भरतर्षभ ॥ ५६ ॥ ते हयाश्चोदितास्तेन सूतेन परमाहवे। अवहन्मां भृशं राजन्मनोमारुतरंहस ॥ ५७ ॥ गत्वाहन्तत् कुरुचेत्रं स च रामः प्रतापवान्। युद्धाय सहसा राजन् पराक्रान्तौ परस्परम् ॥ ५८ ॥ तत सन्दर्शने तिष्ठन्रामस्यातितपस्विन। प्रगृह्य शङ्खप्रवर तत प्राधममुत्तमम् ॥ ५९ ॥ ततस्तत्र द्विजा राजंस्तापसाश्च वनौकस। अपश्यन्त रणं दिव्यं देवा सेन्द्रगणास्तदा ॥ ६० ॥ ततो दिव्यानि माल्यानि प्रादुरासंस्ततस्तत। वादित्राणि च दिव्यानि मेघवृन्दानि चैव ह ॥ ६१ ॥ ततस्ते तापसा सर्वे

भार्गवस्यानुयायिनः । प्रेक्षकाः समपद्यन्त परिवार्य्य रणाजिरम्
॥ ६२ ॥ ततो मामब्रवीद्देवी सर्वभूतहितैषिणी । माता स्वरू-
पिणी राजन् किमिदं ते चिकीर्षितम् ॥ ६३ ॥ गत्वाहं जाम-
दग्न्यन्तु प्रयाचिष्ये कुरूद्वह । भीष्मेण सह मा योत्सीः शिष्ये-
णेति पुनः पुनः ॥ ६४ ॥ मा मैवं पुत्र निर्बन्धं कुरु विप्रेण पार्थिव ।
जामदग्न्येन समरे योद्धुमित्यवभर्त्सयत् ॥ ६५ ॥ किन्न वै क्षत्रिय-
हणो हरतुल्यपराक्रमः । विदितः पुत्र रामस्ते यतस्त्वं योद्धु-
मिच्छसि ॥ ६६ ॥ ततोऽहमब्रुवं देवीमभिवाद्य कृताञ्जलिः ।
सर्वं तद्भरतश्रेष्ठ यथावृत्तं स्वयम्वरे ॥ ६७ ॥ यथा च रामो
राजेन्द्र मया पूर्वं प्रचोदितः । काशिराजसुतायाश्च यथा कर्म
पुरातनम् ॥ ६८ ॥ ततः सा राममभ्येत्य जननी मे महानदी ।
मदर्थं तमृषिं देवी क्षमयामास भार्गवम् ॥ ६९ ॥ भीष्मेण सह
मा योत्सीः शिष्येणेति वचोऽब्रवीत् । स तु तामाह याचन्तीं
भीष्ममेव निवर्त्तय । न च मे कुरुते काममित्यहन्तमुपागमम् ॥ ७० ॥

वैशम्पायन उवाच । ततो गङ्गा सुतस्नेहात् भीष्मं पुन-
रुपागमत् । न चास्याश्चाकरोद्वाक्यं क्रोधपर्य्याकुलेक्षणः ॥ ७१ ॥
अथादृश्यत धर्मात्मा भृगुश्रेष्ठो महातपाः । आह्वयामास च
तदा युद्धाय द्विजसत्तमः ॥ ७२ ॥

इति उद्योगपर्वणि अम्बोपाख्यानपर्वणि गङ्गावाक्ये
एकोनाशीत्यधिकशततमोऽध्यायः ॥ १७९ ॥

---

भीष्म उवाच । तमहं स्मयन्निव रणे प्रत्यभाषं व्यवस्थितम् ।
भूमिष्ठं नोत्सहे योद्धुं भवन्तं रथमास्थितः ॥ १ ॥ आरोह स्यन्दनं
वीर कवचञ्च महाभुज । बधान समरे राम यदि योद्धुमिहे-
च्छसि ॥ २ ॥ ततो मामब्रवीद्रामः स्मयमानो रणाजिरे । रथो

मे मेदिनी भीष्म वाहा वेदा सदश्ववत ॥ ३ ॥ सूतश्च मात-रिश्वा वै कवच वेदमातर । सुसवीतो रणे ताभिर्योत्स्येऽहं कुरुनन्दन ॥ ४ ॥ एवं ब्रुवाणो गान्धारे रामो मा सत्यविक्रम । शरव्रातेन महता सर्वत प्रत्यवारयत ॥ ५ ॥ ततोऽपश्य जामदग्न्य रथमध्ये व्यवस्थितम । सर्वायुधवरे श्रीमत्यद्भुतोपमदर्शने ॥ ६ ॥ मनसा विहिते पुण्ये विस्तीर्णे नगरोपमे । दिव्याश्वयुजि सन्नद्धे काञ्चनेन विभूषिते ॥ ७ ॥ कवचेन महाबाहो सोमार्ककृतलक्षणे । धनुर्धरो बद्धतूणो बद्धगोधाङ्गुलित्रवान् ॥८॥ सारथ्य कृतवांस्तत्र युयुत्सोरकृतव्रण । सखा वेदविदत्यन्तं दयितो भार्गवस्य ह ॥ ९ ॥ आह्वयान स मा युद्धे मनो हर्षयतीव मे । पुन पुनरभिक्रोशन्नभियाहीति भार्गव ॥ १० ॥ तमादित्यमिवोद्यन्तमनाधृष्य महाबलम् । क्षत्रियान्तकर राममेकमेक समासदम् ॥ ११ ॥ ततोऽह वाणपातेषु त्रिषु वाहान्निगृह्य वै । अवतीर्य धनुर्न्यस्य पदातिरृषिसत्तमम ॥ १२ ॥ अभ्यगच्छं तदा राममार्चिष्यन् द्विजसत्तमम् । अभिवाद्य चैन विधिवदब्रुवं वाक्यमुत्तमम ॥ १३ ॥ योत्स्ये त्वया रणे राम सदृशेनाधिकेन वा । गुरुणा धर्मशीलेन जयमाशास्व मे विभो ॥ १४ ॥

राम उवाच । एवमेतत कुरुश्रेष्ठ कर्तव्य भूतिमिच्छता । धर्मो ह्येष महाबाहो विशिष्टै सह युध्यताम ॥ १५ ॥ शपेय त्वा न चेदेवमागच्छेथा विशाम्पते । युध्यस्व त्व रणे यत्तो धैर्यमालम्ब्य कौरव ॥ १६ ॥ न तु ते जयमाशासे त्वा विजेतुमह स्थित । गच्छ युध्यस्व धर्मेण प्रीतोऽस्मि चरितेन ते ॥ १७ ॥ ततोऽह त नमस्कृत्य रथमारुह्य सत्वर । प्राध्मापय रणे शङ्ख पुनर्हेमपरिष्कृतम् ॥ १८ ॥ ततो युद्ध समभवन्मम तस्य च भारत । दिवसान् सुबहून् राजन् परस्परजिगीषया ॥ १९ ॥ स मे तस्मिन्रणे पूर्व प्राहरत कङ्कपत्रिभि । षष्ट्या शतैश्च नवभि-

शराणां नतपर्व्वणाम्॥ २०॥ चत्वारस्तेन मे वाहाः सूतश्चैव विशाम्पते। प्रतिसन्दस्तथैवाहं समरे दंशितः स्थितः॥ २१॥ नमस्कृत्य च देवेभ्यो ब्राह्मणेभ्यो विशेषतः। तमहं स्मयन्निव रणे प्रत्यभाषं व्यवस्थितम्॥ २२॥ आचार्य्यता मानिता मे निर्मर्य्यादे ह्यपि त्वयि। भूयश्च शृणु मे ब्रह्मन् सम्पदं धर्म्मसंग्रहे॥ २३॥ ये ते वेदा शरीरस्था ब्राह्मण्यं यच्च ते महत्। तपश्च महता तप्तं न तेभ्यः प्रहराम्यहम्॥ २४॥ प्रहारे चत्रधर्म्मस्य यं त्वं राम समाश्रित। ब्राह्मणः चत्रियत्वं हि याति शस्त्रसमुद्यमात्॥ २५॥ पश्य मे धनुषो वीर्य्यं पश्य बाह्वोर्बलं मम। एष ते कार्मुकं वीर छिनद्मि निशितेषुणा॥ २६॥ तस्याहं निशितं भल्लं चिक्षिपे भरतर्षभ। तेनास्य धनुषः कोटिं छित्वा भूमावपातयम्॥ २७॥ तथैव च पृषत्कानां शतानि नतपर्व्वणाम्। चिक्षिपे कङ्कपत्राणां जामदग्न्यरथं प्रति॥ २८॥ काये विविक्तास्तु तदा वायुना समुदीरिताः। चेलुः चरन्तो रुधिरं नागा इव च ते शराः॥ २९॥ चतशोणितसर्व्वाङ्गः चरन् स रुधिरं रणे। बभौ रामस्तदा राजन् मेरुर्धातुमिवोत्सृजन्॥ ३०॥ हेमन्तान्तेऽशोक इव रक्तस्तवकमण्डितः। बभौ रामस्तथा राजन् प्रफुल्ल इव किंशुकः॥ ३१॥ ततोऽन्यद्धनुरादाय रामः क्रोधसमन्वितः। हेमपुङ्खान् सुनिशितान् शरांस्तान् हि ववर्ष सः॥ ३२॥ ते समासाद्य मां रौद्रा बहुधा मर्म्मभेदिनः। अकम्पयन्महावेगाः सर्पानलविषोपमाः॥ ३३॥ तमहं समवष्टभ्य पुनरात्मानमाहवे। शतसङ्ख्यैः शरैः क्रुद्धस्तदा राममवाकिरम्॥ ३४॥ शरैरग्न्यर्कसङ्काशैः शरैराशीविषोपमैः। चितैरभ्यर्हितो रामो मन्दचेता इवाभवत्॥ ३५॥ ततोऽहं कृपयाविष्टो विष्टभ्यात्मानमात्मना। धिग्धिगित्यब्रुवं युद्धं चत्रधर्म्मञ्च भारत॥ ३६॥ असकृच्चाब्रुवं राजञ्छोकवेगपरिप्लुतः। अहो बत कृतं

पाप मयैव च्चत्रधर्मणा ॥ ३७ ॥ गुरुर्हि जातिधर्मात्मा यदयं पीडितः शरैः। ततो न प्राहर भूयो जामदग्न्याय भारत ॥३८॥ अथावतत्य पृथिवीं पूषा दिवससङ्क्षये। जगामास्तं सहस्रांशु-स्ततो युद्धमुपारमत ॥ ३९ ॥

इति उद्योगपर्वणि अम्बोपाख्यानपर्वणि भीष्मरामयुद्धे भीष्मपश्चात्तापे अशीत्यधिकशततमोऽध्यायः ॥ १८० ॥

---

भीष्म उवाच। आत्मनस्तु ततः सूतो हयानाञ्च विशाम्पते। मम चापनयामास शल्यान् कुशलसम्मतः ॥ १ ॥ स्नातोपवृत्तै-स्तुरगैर्लब्धतोयैरविह्वलैः। प्रभाते चोदिते सूर्य्ये ततो युद्धमवर्त्तत ॥ २ ॥ दृष्ट्वा मां तूर्णमायान्तं दंशितं स्यन्दने स्थितम्। अकरोद्रथमत्यर्थं रामः सज्जं प्रतापवान् ॥ ३ ॥ ततोऽहं राममायान्तं दृष्ट्वा समरकाङ्क्षिणम्। धनुःश्रेष्ठं समुत्सृज्य सहसावतरं रथात् ॥ ४ ॥ अभिवाद्य तथैवाहं रथमारुह्य भारत। युयुत्सुर्जामदग्न्यस्य प्रमुखे वीतभीः स्थितः ॥ ५ ॥ ततोऽहं शरवर्षेण महता समवाकिरम्। स च मां शरवर्षेण वर्षन्तं समवाकिरत् ॥ ६ ॥ सङ्क्रुद्धो जामदग्न्यस्तु पुनरेव सुतेजितान्। स मे प्रैषीच्छरान् घोरान् दीप्तास्यानुरगानिव ॥ ७ ॥ ततोऽहं निशितैर्भल्लैः शतशोऽथ सहस्रशः। अच्छिदं सहसा राजंस्तान्शरौघान् पुनः पुनः ॥ ८ ॥ ततस्त्वस्त्राणि दिव्यानि जामदग्न्यः प्रतापवान्। मयि प्रयोजयामास तान्यहं प्रत्यषेधयम् ॥ ९ ॥ अस्त्रैरेव महाबाहो चिकीर्षन्नधिकां क्रियाम्। ततो दिवि महान्नादः प्रादुरासीत् समन्ततः ॥ १० ॥ ततोऽहमस्त्रं वायव्यं जामदग्न्ये प्रयुक्तवान्। प्रत्याजघ्ने च तद्रामो गुह्यकास्त्रेण भारत ॥ ११ ॥ ततोऽहमस्त्रमाग्नेयमनुमन्त्र्य प्रयुक्तवान्। वारुणेनैव तद्रामो

वारयामास मे विभुः ॥ १२ ॥ एवमस्त्राणि दिव्यानि रामस्याह-मवारयम् । रामश्च मम तेजस्वी दिव्यास्त्रविदरिन्दमः ॥ १३ ॥ ततो मां सव्यतो राजन् रामः कुर्व्वन् द्विजोत्तमः । उरस्यविध्यत् संक्रुद्धो जामदग्न्यः प्रतापवान् ॥ १४ ॥ ततोऽहं भरतश्रेष्ठ सन्न्यसीदं रथोत्तमे । ततो मां कश्मलाविष्टं सूतस्तूर्णमुदा-वहत् ॥ १५ ॥ ग्लायन्तं भरतश्रेष्ठ रामवाणप्रपीड़ितम् । ततो मामपयान्तं वै भृशविद्धमचेतसम् ॥ १६ ॥ रामस्यानुचरा हृष्टाः सर्व्वे दृष्ट्वा विचुक्रुशुः । अकृतव्रणप्रभृतयः काशिकन्या च भारत ॥ १७ ॥ ततस्तु लब्धसंज्ञोऽहं ज्ञात्वा सूतमथाब्रुवम् । याहि सूत यतो रामः सज्जोऽहं गतवेदनः ॥ १८ ॥ ततो मामवहत् सूतो हयैः परमशोभितैः । नृत्यद्भिरिव कौरव्य मारुतप्रतिमै-र्गतौ ॥ १९ ॥ ततोऽहं राममासाद्य वाणवर्षैश्च कौरव । अवा-किरं सुसंरब्धः संरब्धञ्च जिगीषया ॥ २० ॥ तानापतत एवासौ रामो वाणानजिह्मगान् । वाणैरेवाच्छिनत्तूर्णमेकैकं त्रिभिराहवे ॥ २१ ॥ ततस्ते मुदिताः सर्व्वे मम वाणाः सुसंशिताः । राम-वाणैर्द्विधाच्छिन्नाः शतशोऽथ सहस्रशः ॥ २२ ॥ ततः पुनः शरं दीप्तं सुप्रभं कालसम्मितम् । असृजं जामदग्न्याय रामायाहं जिघांसया ॥ २३ ॥ तेन त्वभिहतो गाढ़ं वाणवेगवशङ्गतः । मुमोह समरे रामो भूमौ च निपपात ह ॥ २४ ॥ ततो हाहाकृतं सर्व्वं रामे भूतलमाश्रिते । जगत् भारत संविग्नं यथार्कपतने भवेत् ॥ २५ ॥ तत एनं समुद्विग्ना सर्व्व एवाभिदुद्रुवुः । तपोधनास्ते सहसा काश्या च कुरुनन्दन ॥ २६ ॥ तत एनं परिष्वज्य शनै-राश्वासयंस्तदा । पाणिभिर्जलशीतैश्च जयाशीर्भिश्च कौरव ॥२७॥ ततः स विह्वलं वाक्यं राम उत्थाय चाब्रवीत् । तिष्ठ भीष्म हतोऽसीति वाणं सन्धाय कार्म्मुके ॥ २८ ॥ स मुक्तो न्यपतत्तूर्णं सव्ये पार्श्वे महाहवे । येनाहं भृशमुद्विग्नो व्याघूर्णित इव

द्रुम ॥ २९ ॥ हत्वा हयांस्ततो राम शीघ्रास्त्रेण महाहवे। अवाकिरन्मां विश्वस्तो बाणैस्तैर्लोमवाहिभिः ॥ ३० ॥ ततोऽह मपि शीघ्रास्त्रं समरप्रतिवारणम्। अवासृजं महाबाहो तेऽन्त राधिष्ठिता शराः ॥ ३१ ॥ रामस्य मम चैवाशु व्योमावृत्य सम न्ततः। न स्म सूर्यः प्रतपते शरजालसमावृतः ॥ ३२ ॥ मात रिश्वा ततस्तस्मिन् मेघरुद्ध इवाभवत्। ततो वायोः प्रकम्पाच्च सूर्य्यस्य च गभस्तिभिः ॥ ३३ ॥ अभिघातप्रभावाच्च पावकः सम जायत। ते शराः स्वसमुत्थेन प्रदीप्ताश्चित्रभानुना ॥ ३४ ॥ भूमौ सर्वे तदा राजन् भस्मभूताः प्रपेदिरे। तदा शतसहस्राणि प्रयुतान्यर्बुदानि च ॥ ३५ ॥ अयुतान्यथ खर्वाणि निखर्वाणि च कौरव। रामः शराणां सङ्क्रुद्धो मयि तूर्णं न्यपातयत् ॥ ३६ ॥ ततोऽहं तानपि रणे शरैराशीविषोपमैः। सञ्छिद्य भूमौ नृपते पातयं पन्नगानिव ॥ ३७ ॥ एवं तदभवद्युद्धं तदा भरतसत्तम। सन्ध्याकाले व्यतीते तु व्यपायात् स च मे गुरुः ॥ ३८ ॥

इति उद्योगपर्वणि अम्बोपाख्यानपर्वणि रामभीष्मयुद्धे एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥

---

भीष्म उवाच। समागतस्य रामेण पुनरेवातिदारुणम्। अन्येद्युस्तुमुलं युद्धमभवत् भरतर्षभ ॥ १ ॥ ततो दिव्यास्त्रवि च्छूरो दिव्यान्यस्त्राण्यनेकशः। अयोजयत् स धर्मात्मा दिवसे दिवसे विभुः ॥ २ ॥ तान्यहं तत्प्रतीघातैरस्त्रैरस्त्राणि भारत। व्यधमन्तुमुले युद्धे प्राणांस्त्यक्त्वा सुदुस्त्यजान् ॥ ३ ॥ अस्त्रैरस्त्रेषु बहुधा हतेष्वेव च भारत। अयुध्यत महातेजास्त्यक्तप्राणः स भृगुः ॥ ४ ॥ ततः शक्तिं प्राहिणोत् घोररूपामस्त्रे रुद्धे जाम दग्न्यो महात्मा। कालोत्सृष्टां प्रज्वलितामिवोल्कां सन्दीप्ताग्रां

तेजसा व्याप्य लोकम् ॥ ५ ॥ ततोऽहन्तामिषुभिर्दीप्यमानां समायान्तीमन्तकालार्कदीप्ताम् । छित्वा त्रिधा पातयामास भूमौ ततो ववौ पवनः पुण्यगन्धिः ॥ ६ ॥ तस्यां छिन्नायां क्रोधदीप्तोऽथ रामः शक्तीर्घोराः प्राहिणोत् द्वादशान्याः । तासां रूपं भारत नोत शक्यं तेजस्वित्वाल्लाघवाच्चैव वक्तुम् ॥ ७ ॥ किन्त्वेवाहं विह्वलः सम्प्रदिश्य दिग्भ्यः सर्वास्ता महोल्का इवाग्नेः । नानारूपास्तेजसोग्रेण दीप्ता यथादित्या द्वादश लोकसंक्षये ॥ ८ ॥ ततो जालं वाणमयं विवृत्तं सन्दृश्य भित्त्वा शरजालेन राजन् । द्वादशेषून् प्राहिणवं रणेऽहं ततः शक्तीरप्यधमं घोररूपाः ॥ ९ ॥ ततो राजन् जामदग्न्यो महात्मा शक्तीर्घोरा व्याक्षिपद्धेमदण्डाः । विचित्रिताः काञ्चनपट्टनद्धा यथा महोल्का ज्वलितास्तथा ताः ॥ १० ॥ ताश्चाप्युग्राश्चर्मणा वारयित्वा खड्गेनाजौ पातयित्वा नरेन्द्र । वाणैर्दिव्यैर्जामदग्न्यस्य सङ्ख्ये दिव्यानश्वानभ्यवर्षं ससूतान् ॥ ११ ॥ निर्मुक्तानां पन्नगानां सरूपा दृष्ट्वा शक्तीर्हेमचित्रा निकृत्ता । प्रादुश्चक्रे दिव्यमस्त्रं महात्मा क्रोधाविष्टो हैहयेशप्रमाथी ॥ १२ ॥ ततः श्रेण्यः शलभानामिवोग्राः समापेतुर्विशिखानां प्रदीप्ताः । समाचिनोच्चापि भृशं शरीरं हयान् सूतं सरथञ्चापि मह्यम् ॥ १३ ॥ रथः शरैर्मे निचितः सर्वतोऽभूत्तथा हयाः सारथिश्चैव राजन् । युगं रथेषा च तथैव चक्रे तथैवाक्षः शरकृत्तोऽथ भग्नः ॥ १४ ॥ ततस्तस्मिन् वाणवर्षे व्यतीते शरौघेण प्रत्यवर्षं गुरुन्तम् । सविक्षतो मार्गणैर्ब्रह्मराशिर्देहादजस्रं मुमुचे भूरि रक्तम् ॥ १५ ॥ यथा रामो वाणजालाभितप्तस्तथैवाहं सभृशं गाढविद्धः । ततो युद्धं व्यरमच्चापराह्णे भानावस्तं प्रतियाते महीध्रम् ॥ १६ ॥

इति उद्योगपर्वणि अम्बोपाख्यानपर्वणि रामभीष्मयुद्धे शक्तिप्रक्षेपे द्व्यशीत्यधिकशततमोऽध्यायः ॥ १८२ ॥

भीष्म उवाच। तत प्रभाते राजेन्द्र सूर्य्ये विमलतां गते। भार्गवस्य मया सार्द्धं पुनर्युद्धमवर्त्तत ॥ १ ॥ ततोऽभ्रान्ते रथे तिष्ठन् राम प्रहरतां वर। ववर्ष शरजालानि मयि मेघ इवा चले ॥ २ ॥ तत सूतो मम सुहृच्छरवर्षेण ताड़ित। अपयातो रथोपस्थान्मनो मम विषादयन् ॥ ३ ॥ तत सूतं ममात्यर्थं कश्मलं प्राविशन्महत्। पृथिव्याञ्च शराघातान्निपपात मुमोह च ॥ ४ ॥ तत सूतोऽजहत प्राणान् रामबाणप्रपीड़ित। मुहूर्त्तादिव राजेन्द्र माञ्च भीराविशत्तदा ॥ ५ ॥ तत सूते हते तस्मिन् क्षिपतस्तस्य मे शरान्। प्रमत्तमनसा राम प्राहिणो मृत्युसम्मितान् ॥ ६ ॥ तत सूतव्यसनिनं विप्लुतं मां स भार्गव। शरेणाभ्यहनत् गाढं विकृष्य बलवद्धनु ॥ ७ ॥ स मे भुजान्तरे राजन्निपतन् रुधिराशन। मयैव सह राजेन्द्र जगाम वसुधा तलम् ॥ ८ ॥ मत्वा तु निहतं रामस्ततो मां भरतर्षभ। मेघ वद्विननादोच्चैर्जहर्षे च पुन पुन ॥ ९ ॥ तथा तु पतिते राजन् मयि रामो मुदा युत। उदक्रोशन्महानादं सह तैरनुयायिभि ॥ १० ॥ मम तत्राभवन् ये तु कुरव पार्श्वत स्थिता। आगता अपि युद्धन्द्रष्टुं जनास्तत्र दिदृक्षव। आर्त्तिं परमिकां जग्मुस्ते तदा पतिते मयि ॥ ११ ॥ ततोऽपश्यं पतितो राजसिंह द्विजा नष्टौ सूर्य्यहुताशनाभान्। ते मां समन्तात परिवार्य्य तस्थु

प्रतिगृह्य चाहं तथा पितॄणां रथमभ्यरोहम् ॥ १६ ॥ स्वच्च सा मा सर्वं हयाद्योपस्कराणि च। तामहं प्राञ्जलिर्भूत्वा पुनरेव व्यसर्ज्जयम् ॥ १७ ॥ ततोऽहं स्वयमुद्यम्य हयांस्तान् वातरंहसः। अयुध्यं जामदग्न्येन निवृत्तेऽहनि भारत ॥ १८ ॥ ततोऽहं भरतश्रेष्ठ वेगवन्तं महाबलम्। अमुञ्चं समरे बाणं रामाय हृदयच्छिदम् ॥ १९ ॥ ततो जगाम वसुधां मम बाणप्रपीड़ितः। जानुभ्यां धनुरुत्सृज्य रामो मोहवशङ्गतः ॥ २० ॥ ततस्तस्मिन्निपतिते रामे भूरिसहस्रदे। आवव्रुर्जलदा व्योम क्षरन्तो रुधिरं बहु ॥ २१ ॥ उल्काश्च शतशः पेतुः सनिर्घाताः सकम्पनाः। अर्कञ्च सहसा दीप्तं स्वर्भानुरभिसंवृणोत् ॥ २२ ॥ ववुश्च वाताः परुषाश्चलिता च वसुन्धरा। गृध्रा बलाश्च कङ्काश्च परिपेतुर्मुदा युताः ॥ २३ ॥ दीप्तायां दिशि गोमायुर्दारुणं मुहुरुन्नदत्। अनाहता दुन्दुभयो विनेदुर्भृशनिःस्वनाः ॥ २४ ॥ एतदौत्पातिकं सर्वं घोरमासीद्भयङ्करम्। विसंज्ञकल्पे धरणीं गते रामे महात्मनि ॥ २५ ॥ ततो वै सहसोत्थाय रामो मामभ्यवर्त्तत। पुनर्युद्धाय कौरव्य विह्वलः क्रोधमूर्च्छितः ॥ २६ ॥ आददानो महाबाहुः कार्मुकं तालसन्निभम्। शरमप्याददानन्तं रामनेव न्यवारयन् ॥ २७ ॥ महर्षयः कृपायुक्ताः क्रोधाविष्टोऽथ भार्गवः। स मेऽहरदमेयात्मा शरं कालानलोपमम् ॥ २८ ॥ ततो रविर्मन्दमरीचिमण्डलो जगामास्तं पांशुपुञ्जावगूढः। निशा व्यगाहत् सुखशीतमारुता ततो युद्धं प्रत्यवहारयाव ॥ २९ ॥ एवं राजन्नवहारो बभूव ततः पुनर्विमलेऽभूत् सुघोरम्। कल्यं कल्यं विंशतिर्वै दिनानि तथैव चान्यानि दिनानि त्रीणि ॥ ३० ॥

इति उद्योगपर्वणि अम्बोपाख्यानपर्वणि रामभीष्मयुद्धे गङ्गावचसंग्रहे त्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥

---

भीष्म उवाच। ततोऽहं निशि राजेन्द्र प्रणम्य शिरसा तदा। ब्राह्मणानां पितृणाञ्च देवतानाञ्च सर्व्वश ॥ १ ॥ नक्तञ्चराणां भूतानां राजन्यानां विशाम्पते। शयनं प्राप्य रहित मनसा समचिन्तयम् ॥ २ ॥ जामदग्न्येन मे युद्धमिदं परमदारुणम्। अहानि च बहून्यद्य वर्त्तते सुमहात्ययम् ॥ ३ ॥ न च रामं महावीर्य्यं शक्नोमि रणमूर्द्धनि। विजेतुं समरे विप्रं जामदग्न्यं महाबलम् ॥ ४ ॥ यदि शक्यो मया जेतुं जामदग्न्यः प्रतापवान्। दैवतानि प्रसन्नानि दर्शयन्तु निशां मम ॥ ५ ॥ ततो निशि च राजेन्द्र प्रसुप्तः शरविक्षत। दक्षिणेनेह पार्श्वेन प्रभातसमये तदा ॥ ६ ॥ ततोऽहं विप्रमुख्यैस्तैर्यैरस्मि पतितो रथात। उत्थापितो धृतश्चैव माभैरिति च सान्त्वित ॥ ७ ॥ त एव मां महाराज स्वप्ने दर्शनमेत्य वै। परिवार्य्याब्रुवन् वाक्यं तन्निबोध कुरूद्वह ॥ ८ ॥ उत्तिष्ठ माभैर्गाङ्गेय ॥ भयं तेऽस्ति किञ्चन। रक्षामहे त्वां कौरव्य स्वशरीरं हि नो भवान् ॥ ९ ॥ न त्वां रामो रणे जेता जामदग्न्यः कथञ्चन। त्वमेव समरे रामं विजेता भरतर्षभ ॥ १० ॥ इदमस्त्रं सुदयितं प्रत्यभिज्ञास्यते भवान्। विदितं हि तवाप्येतत् पूर्व्वस्मिन् देहधारणे ॥ ११ ॥ प्राजापत्यं विश्वकृतं प्रस्वापं नाम भारत। न हीदं वेद रामोऽपि पृथिव्यां वा पुमान् क्वचित ॥ १२ ॥ तत् स्मरस्व महाबाहो भृशं सयोजयस्व च। उपस्थास्यति राजेन्द्र स्वयमेव तवानघ ॥ १३ ॥ येन सर्व्वान् महावीर्य्यान् प्रशासिष्यसि कौरव। न च रामः क्षयं गन्ता तेनास्त्रेण नराधिप ॥ १४ ॥ एनसा न तु सयोगं प्राप्स्यसे जातु मानद। स्वप्स्यते जामदग्न्योऽसौ त्वद्बाणबलपीड़ित ॥ १५ ॥ ततो जित्वा त्वमेवैनं पुनरुत्थापयिष्यसि। अस्त्रेण दयितेनाजौ भीष्मसम्बोधनेन वै ॥ १६ ॥ एवं कुरुष्व कौरव्य प्रभाते रथमास्थित। प्रसुप्तं वा मृतं वेति तुल्य

मन्यामहे वयम् ॥ १७ ॥ न च रामेण मर्त्तव्यं कदाचिदपि पार्थिव । ततः समुत्पन्नमिदं प्रस्वापं युज्यतामिति ॥ १८ ॥ इत्युक्त्वान्तर्हिता राजन् सर्व एव द्विजोत्तमाः । अष्टौ सदृशरूपास्ते सर्वे भास्वरमूर्त्तयः ॥ १९ ॥

इति उद्योगपर्व्वणि अम्बोपाख्यानपर्व्वणि रामभीष्मयुद्धे स्वप्नोपदर्शे चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥

---

भीष्म उवाच । ततो रात्रौ व्यतीतायां प्रतिबुद्धोऽस्मि भारत । ततः सञ्चिन्त्य वै स्वप्नमवापं हर्षमुत्तमम् ॥ १ ॥ ततः समभवत् युद्धं मम तस्य च भारत । तुमुलं सर्वभूतानां लोमहर्षणमद्भुतम् ॥ २ ॥ ततो बाणमयं वर्षं ववर्ष मयि भार्गवः । न्यवारयमहं तच्च शरजालेन भारत ॥ ३ ॥ ततः परमसंक्रुद्धः पुनरेव महातपाः । ह्यस्तनेन च कोपेन शक्तिं वै प्राहिणोन्मयि ॥ ४ ॥ इन्द्राशनिसमस्पर्शां यमदण्डसमप्रभाम् । ज्वलन्तीमग्निवत् सङ्ख्ये लेलिहानां समन्ततः ॥ ५ ॥ ततो भरतशार्दूल धिष्ण्यमाकाशगं यथा । सा मामभ्यवधीत्तूर्णं जत्रुदेशे कुरूद्वह ॥ ६ ॥ अथासृगस्रवत् घोरं गिरेर्गैरिकधातुवत् । रामेण सुमहाबाहो क्षतस्य क्षतजेक्षण ॥ ७ ॥ ततोऽहं जामदग्न्याय भृशं क्रोधसमन्वितः । चिक्षेप मृत्युसङ्काशं बाणं सर्पविषोपमम् ॥ ८ ॥ स तेनाभिहतो वीरो ललाटे द्विजसत्तमः । अशोभत महाराज सशृङ्ग इव पर्वतः ॥ ९ ॥ स संरब्धः समावृत्य शरं कालान्तकोपमम् । सन्दधे बलवत् कृष्य घोरं शत्रुनिबर्हणम् ॥ १० ॥ स वक्षसि पपातोग्रः शरो व्याल इव श्वसन् । मही राजंस्ततश्चाहमगमं रुधिराविलः ॥ ११ ॥ संप्राप्य तु पुनः संज्ञां जामदग्न्याय धीमते । प्राहिणुं विमलां शक्तिं ज्वलन्तीमशनीमिव ॥ १२ ॥ सा तस्य द्विजमुख्यस्य निपपात भुजान्तरे । विह्वलश्चाभवद्राजन्

वेपथुश्चैनमाविशत ॥ १३ ॥ तत एन परिष्वज्य सखा विप्रो महा-
तपा । अकृतव्रण शुभैर्वाक्यैराश्वासयदनेकधा ॥ १४ ॥ समा
श्वस्तस्ततो राम क्रोधामर्षसमन्वित । प्रादुश्चक्रे तदा ब्राह्मं
परमास्त्र महाव्रतम् ॥ १५ ॥ ततस्तत प्रतिघातार्थं ब्राह्ममेवास्त्र-
मुत्तमम । मया प्रयुक्तं जज्वाल युगान्तमिव दर्शयत ॥ १६ ॥
तयोर्ब्रह्मास्त्रयोरासीदन्तरा वै समागम । असम्प्राप्यैव रामञ्च
माञ्च भारतसत्तम ॥ १७ ॥ ततो व्योम्नि प्रादुरभूत्तेज एव हि
केवलम । भूतानि चैव सर्वाणि जग्मुरार्त्ति विशाम्पते ॥ १८ ॥
ऋषयश्च सगन्धर्वा देवताश्चैव भारत । सन्ताप परम जग्मु, रस्त्र
तेजोऽभिपीड़िता ॥ १९ ॥ ततश्चचाल पृथिवी सपर्वतवनद्रुमा ।
सन्तप्तानि च भूतानि विषाद जग्मुरुत्तमम ॥२०॥ प्रजज्वाल नभो
राजन् धूमायन्ते दिशो दश । न स्थातुमन्तरिक्षे च शेकुराकाशगा-
स्तदा ॥२१॥ ततो हाहाकृते लोके सदेवासुरराक्षसे । इदमन्तर
मित्येव मोक्तुकामोऽस्मि भारत ॥२२॥ प्रस्वापमस्त्रं त्वरितो वचनाद्
ब्रह्मवादिनाम । विचिन्त्य तदस्त्रं मे मनसि प्रत्यभात्तदा ॥ २३ ॥

इति उद्योगपर्वणि अम्बोपाख्यानपर्वणि रामभीष्मयुद्धे ब्रह्मास्त्र
प्रयोगे पञ्चाशीत्यधिकशततमोऽध्याय ॥ १८५ ॥

---

यैष नारदस्तस्तथा कुरु । एतद्धि परमं श्रेयो लोकानां भरतर्षभ ॥ ६ ॥ ततश्च प्रतिसंहृत्य तदस्त्रं स्वापनं महत् । ब्रह्मास्त्रं दीपयाञ्चक्रे तस्मिन् युधि यथाविधि ॥ ७ ॥ ततो रामो रुषितो राजसिंह दृष्ट्वा तदस्त्रं विनिवर्त्तितं वै । जितोऽस्मि भीष्मेति सुमन्दबुद्धिरित्येव वाक्यं सहसा व्यमुञ्चत् ॥ ८ ॥ ततोऽपश्यत् पितरं जामदग्न्यः पितुस्तथा पितरञ्चास्य मान्यम् । ते तत्र चैनं परिवार्य्य तस्थुरूचुश्चैनं सान्त्वपूर्वं तदानीम् ॥ ९ ॥

पितर ऊचुः । मास्मैवं साहसं तात पुनः कार्षीः कथञ्चन । भीष्मेण संयुगं गन्तुं क्षत्रियेण विशेषतः ॥ १० ॥ क्षत्रियस्य तु धर्मोऽयं यद्युद्धं भृगुनन्दन । स्वाध्यायो व्रतचर्या च ब्राह्मणानां परं धनम् ॥ ११ ॥ इदं निमित्ते कस्मिंश्चिदस्माभिः प्रागुदाहृतम् । शस्त्रधारणमत्युग्रं तच्चाकार्य्यं कृतं त्वया ॥ १२ ॥ वत्स पर्य्याप्तमेतावत् भीष्मेण सह संयुगे । विमर्द्दस्ते महाबाहो व्यपयाहि रणादतः ॥ १३ ॥ पर्य्याप्तमेतत् भद्रन्ते तव कार्मुकधारणम् । विसर्ज्जयैतद्दुर्द्धर्षं तपस्तप्यस्व भार्गव ॥ १४ ॥ एष भीष्मः शान्तनवो देवैः सर्व्वैर्निवारितः । निवर्त्तस्व रणादस्मादिति चैव प्रचोदित ॥ १५ ॥ रामेण सह मा योत्सीर्गुरुणेति पुनः पुनः । न हि रामो रणे जेतुं त्वया न्याय्यः कुरूद्वह ॥ १६ ॥ मानं कुरुष्व गाङ्गेय ब्राह्मणस्य रणाजिरे । वयन्तु गुरवस्तुभ्यं तस्मात् त्वां वारयामहे ॥ १७ ॥ भीष्मो वसूनामन्यतमो दिष्ट्या जीवसि पुत्रक । गाङ्गेयः शान्तनोः पुत्रो वसुरेष महायशाः ॥ १८ ॥ कथं शक्यस्त्वया जेतुं निवर्त्तस्वेह भार्गव । अर्ज्जुनः पाण्डवश्रेष्ठः पुरन्दरसुतो बली । भीष्ममृत्युर्यथाकालं विहितो वै स्वयम्भुवा ॥१९॥

भीष्म उवाच । एवमुक्तः स्वपितृभिः पितृन्रामोऽब्रवीदिदम् । नाहं युधि निवर्त्तेयमिति मे व्रतमाहितम् ॥ २० ॥ न निवर्त्तितपूर्वञ्च कदाचिद्रणमूर्द्धनि । निवर्त्त्यतामापगेयः कामं युद्धात्

पितामह ॥ २१ ॥ न त्वहं विनिवर्त्तिष्ये युद्धादस्मात् कथञ्चन।
ततस्ते मुनयो राजन्नृचीकप्रमुखास्तदा ॥ २२ ॥ नारदेनैव सहिता
समागम्येदमब्रुवन्। निवर्त्तस्व रणात्तात मानयस्व द्विजोत्तमम्
॥ २३ ॥ इत्यवोचमहन्तांश्च चात्रधर्मव्यपेक्षया। मम व्रतमिदं
लोके नाहं युद्धात् कदाचन ॥ २४ ॥ विमुखो विनिवर्त्तेय
पृष्ठतोऽभ्याहतः शरैः। नाहं लोभान्न कार्पण्यान्न भयान्नार्थ-
कारणात् ॥ २५ ॥ त्यजेयं शाश्वतं धर्ममिति मे निश्चिता मतिः।
ततस्ते मुनयः सर्वे नारदप्रमुखा नृप ॥ २६ ॥ भागीरथी च
मे माता रणमध्यं प्रपेदिरे। तथैवात्तशरो धन्वी तथैव दृढ़-
निश्चयः ॥ २७ ॥ स्थिरोऽहमाहवे योद्धुं ततस्ते राममब्रुवन्।
समेत्य सहिता भूयः समरे भृगुनन्दनम् ॥ २८ ॥ नावनीतं हि
हृदयं विप्राणां शाम्य भार्गव। राम राम निवर्त्तस्व युद्धादस्मात्
द्विजोत्तम ॥ २९ ॥ अवध्यो वै त्वया भीष्मस्त्वञ्च भीष्मस्य भार्गव।
एवं ब्रुवन्तस्ते सर्वे प्रतिरुध्य रणाजिरम् ॥ ३० ॥ न्यासयाञ्चक्रिरे
शस्त्रं पितरो भृगुनन्दनम्। ततोऽहं पुनरेवाथ तानष्टौ ब्रह्म-
वादिनः ॥ ३१ ॥ अद्राक्षं दीप्यमानान् वै ग्रहानष्टाविवोदितान्।
ते मां सप्रणयं वाक्यमब्रुवन् समरे स्थितम् ॥ ३२ ॥ प्रैहि
रामं महाबाहो गुरुं लोकहितं कुरु। दृष्ट्वा निवर्त्तितं रामं
सुहृद्वाक्येन तेन वै ॥ ३३ ॥ लोकानाञ्च हितं कुर्वन्नहमप्याददे
वचः। ततोऽहं राममासाद्य ववन्दे भृशविक्षतः ॥ ३४ ॥ राम-
स्त्वभ्युत्स्मयन् प्रेम्णा मामुवाच महातपाः। त्वत्समो नास्ति
लोकेऽस्मिन् क्षत्रियः पृथिवीतले ॥ ३५ ॥ गम्यतां भीष्म युद्धेऽस्मिं-
स्तोषितोऽहं भृशं त्वया। मम चैव समक्षं तां कन्यामाहूय भार्गवः।
उक्तवान् दीनया वाचा मध्ये तेषां महात्मनाम् ॥ ३६ ॥

इति उद्योगपर्वणि अम्बोपाख्यानपर्वणि रामभीष्मयुद्धनिवृत्तौ
षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥

राम उवाच । प्रत्यक्षमेतल्लोकानां सर्व्वेषामेव भाविनि। यथाशक्त्या मया युद्धं कृतं वै पौरुषं परम् ॥ १ ॥ न चैवमपि शक्नोमि भीष्मं शस्त्रभृतां वरम्। विशेषयितुमत्यर्थमुत्तमास्त्राणि दर्शयन् ॥ २ ॥ एषा मे परमा शक्तिरेतन्मे परमं बलम्। यथेष्टं गम्यतां भद्रे किमन्यद्वा करोमि ते ॥ ३ ॥ भीष्ममेव प्रपद्यस्व न तेऽन्या विद्यते गतिः। निर्ज्जितो ह्यस्मि भीष्मेण महास्त्राणि प्रमुञ्चता ॥ ४ ॥ एवमुक्त्वा ततो रामो विनिःश्वस्य महामनाः। तूष्णीमासीत्ततः कन्या प्रोवाच भृगुनन्दनम् ॥ ५ ॥ भगवन्नेवमेवैतत् यथाह भगवांस्तथा। अजेयो युधि भीष्मोऽयमपि देवैरुदारधीः ॥ ६ ॥ यथाशक्ति यथोत्साहं मम कार्य्यं कृतं त्वया। अनिवार्य्यं रणे वीर्य्यमस्त्राणि विविधानि च ॥ ७ ॥ न चैव शक्यते युद्धे विशेषयितुमन्ततः। न चाहमेनं यास्यामि पुनर्भीष्मं कथञ्चन ॥ ८ ॥ गमिष्यामि तु तत्राहं यत्र भीष्मं तपोधन। समरे पातयिष्यामि स्वयमेव भृगूद्वह ॥ ९ ॥ एवमुक्त्वा ययौ कन्या रोषव्याकुललोचना। तापस्ये धृतसङ्कल्पा सा मे चिन्तयती वधम् ॥ १० ॥ ततो महेन्द्रं सह तैर्मुनिभिर्भृगुसत्तम। यथागतं तथा सोऽगात् मामुपामन्त्र्य भारत ॥ ११ ॥ ततो रथं समारुह्य स्तूयमानो द्विजातिभिः। प्रविश्य नगरं मात्रे सत्यवत्यै न्यवेदयम् ॥ १२ ॥ यथावृत्तं महाराज सा च मां प्रत्यनन्दत। पुरुषांश्चादिशं प्राज्ञान् कन्यावृत्तान्तकर्म्मणि ॥ १३ ॥ दिवसे दिवसे ह्यस्या गतिं जल्पितचेष्टितम्। प्रत्याहरंश्च ते युक्ताः स्थिताः प्रियहिते सदा ॥ १४ ॥ यदैव हि वनं प्रायात् सा कन्या तपसे धृता। तदैव व्यथितो दीनो गतचेता इवाभवम् ॥ १५ ॥ न हि मां क्षत्रियः कश्चित् वीर्य्येण व्यजयत् युधि। ऋते ब्रह्मविदस्तात तपसा संशितव्रतात ॥ १६ ॥ अपि चैतन्मया राजन्नारदे विनिवेदितम्। व्यासे चैव तथा कार्य्यं तौ चोभौ माम-

वोचताम् ॥ १७ ॥ न विषादस्त्वया कार्यो भीष्म काशिसुतां प्रति । दैवं पुरुषकारेण को निवर्त्तितुमुत्सहेत् ॥ १८ ॥ सा कन्या तु महाराज प्रविश्याश्रममण्डलम् । यमुनातीरमाश्रित्य तपस्तेपेऽतिमानुषम् ॥ १९ ॥ निराहारा कृशा रूक्षा जटिला मलपङ्किनी । षण्मासान् वायुभक्षा च स्थाणुभूता तपोधना ॥ २० ॥ यमुनाजलमाश्रित्य सम्वत्सरमथापरम् । उपवासनिराहारा धारयामास भाविनी ॥ २१ ॥ शीर्णपर्णेन चैकेन पारयामास सा परम् । सम्वत्सरं तीव्रकोपा पादाङ्गुष्ठाग्रधिष्ठिता ॥२२॥ एवं-द्वादशवर्षाणि तापयामास रोदसी । निवर्त्यमानापि च सा ज्ञातिभिर्नैव शक्यते ॥ २३ ॥ ततोऽगमत् वत्सभूमिं सिद्धचारणसेविताम् । आश्रमं पुण्यशीलानां तापसानां महात्मनाम् ॥ २४ ॥ तत्र-पुण्येषु तीर्थेषु सा- प्लुताङ्गी दिवानिशम् । व्यचरत् काशिकन्या सा यथाकामविचारिणी ॥ २५ ॥ नन्दाश्रमे महाराज तथोलूकाश्रमे शुभे । च्यवनस्याश्रमे चैव ब्रह्मणः स्थान एव च ॥ २६ ॥ प्रयागे देवयजने देवारण्येषु चैव ह । भोगवत्यां महाराज कौशिकन्याश्रमे तथा ॥ २७ ॥ माण्डव्यस्याश्रमे राजन् दिलीपस्याश्रमे तथा । रामह्रदे च कौरव्य पैलगर्गस्य चाश्रमे ॥ २८ ॥ एतेषु तीर्थेषु तदा काशिकन्या विगाहते । चाप्लावयत गात्राणि- व्रतमास्थाय दुष्करम् ॥ २९ ॥ तामब्रवीच्च कौरव्य मम माता जले स्थिता । किमर्थं क्लिश्यसे भद्रे तथ्यमेव ब्रवीहि मे ॥ ३० ॥ सैनामथाब्रवीद्राजन् कृताञ्जलिरनिन्दिता । भीष्मेण समरे रामो निर्जितश्चारुलोचने ॥ ३१ ॥ कोऽन्यस्तमुत्सहेज्जेतुमुद्यतेषुं महीपतिः । साहं भीष्मविनाशाय तपस्तप्स्ये सुदारुणम् ॥ ३२ ॥ विचरामि महीं देवि यथा हन्यामहं नृपम् । एतत् व्रतफलं देवि परमस्मिन् यथा हि मे ॥ ३३ ॥ ततोऽब्रवीत् सागरगा जिह्मं चरसि भाविनि । नैषकामोऽनवद्याङ्गि शक्य

प्राप्तुं त्वयाबले ॥ ३४ ॥ यदि भीष्मविनाशाय काश्ये चरसि वै व्रतम्। व्रतस्था च शरीरं त्वं यदि नाम वियोक्ष्यसि ॥ ३५ ॥ नदी भविष्यसि शुभे कुटिला वार्षिकोदका। दुस्तीर्था न तु विज्ञेया वार्षिकी नाष्टमासिकी ॥ ३६ ॥ भीमग्राहवती घोरा सर्व्वभूतभयङ्करी। एवमुक्त्वा ततो राजन् काशिकन्यां न्यवर्त्तत ॥ ३७ ॥ माता मम महाभागा स्मयमानेव भाविनी। कदाचिदृष्टसे मासि कदाचिद्दशमे तथा ॥ ३८ ॥ न प्राश्नोतोदकमपि पुनः सा वरवर्णिनी। सा वत्सभूमिं कौरव्य तीर्थलोभात्ततस्ततः ॥ ३९ ॥ पतिता परिधावन्ती पुनः काशिपतेः सुता। सा नदी वत्सभूम्यान्तु प्रथिता चेति भारत ॥ ४० ॥ वार्षिकी ग्राहबहुला दुस्तीर्था कुटिला तथा। सा कन्या तपसा तेन देहार्द्धेन व्यजायत। नदी च राजन् वत्सेषु कन्या चैवाभवत्तदा ॥ ४१ ॥

इति उद्योगपर्व्वणि अम्बोपाख्यानपर्व्वणि अम्बातपस्यायां सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥

---

भीष्म उवाच। ततस्ते तापसाः सर्व्वे तपसे धृतनिश्चयाः। दृष्ट्वा न्यवर्त्तयंस्तात किं कार्य्यमिति चाब्रुवन् ॥ १ ॥ तानुवाच ततः कन्या तपोवृद्धानृषींस्तथा। निराकृतास्मि भीष्मेण भ्रंशिता पतिधर्म्मतः ॥ २ ॥ बधार्थं तस्य दीक्षा मे न लोकार्थं तपोधनाः। निहत्य भीष्मं गच्छेयं शान्तिमित्येव निश्चयः ॥ ३ ॥ यत् कृते दुःखवसतिमिमां प्राप्तास्मि शाश्वतीम्। पतिलोकाद्विहीना च नैव स्त्री न पुमानिह ॥ ४ ॥ नाहत्वा युधि गाङ्गेयं निवर्त्तिष्ये तपोधनाः। एष मे हृदि सङ्कल्पो यदिदं कथितं मया ॥ ५ ॥ स्त्रीभावे परिनिर्विण्णा पुंस्त्वार्थे कृतनिश्चया। भीष्मे प्रतिचिकी-

पामि नास्ति वार्य्यति वै पुन ॥ ६ ॥ ता देवो दर्शयामास शूल पाणिरुमापति । मध्ये तेषा महर्षीणा स्वेन रूपेण तापसीम् ॥ ७ ॥ छन्द्यमाना वरेणाथ सा वव्रे मतपराजयम । हनि-ष्यसीति ता देव प्रत्यु वाच मनस्विनीम ॥ ८ ॥ तत सा पुनरेवाथ कन्या रुद्रमुवाच ह । उपपद्येत कथ देव स्त्रियो युधि जयो मम ॥ ९ ॥ स्त्रीभावेन च मे गाढं मन शान्तमुपागते । प्रति-श्रुतश्च भूतेश त्वया भीष्मपराजय ॥ १० ॥ यथा स सत्यो भवति तथाकुरु वृषध्वज । यथा हन्या समागम्य भीष्म शान्तनवं युधि ॥ ११ ॥ तामुवाच महादेव कन्या किल वृषध्वज । न मे वागनृतं प्राह सत्य भद्रे भविष्यति ॥ १२ ॥ हनिष्यसि रणे भीष्मं पुरुषत्वञ्च लप्स्यसे । स्मरिष्यसि च तत सर्वं देहमन्य गता सती ॥ १३ ॥ द्रुपदस्य कुले जाता भविष्यसि महारथ । शीघ्रा-स्त्रश्चित्रयोधी च भविष्यसि सुसम्मत ॥ १४ ॥ यथोक्तमेव कल्याणि सर्वमेतत भविष्यति । भविष्यसि पुमान् पश्चात कस्मा-च्चित् कालपर्य्ययात ॥ १५ ॥ एवमुक्त्वा महादेव कपर्द्दी वृषभ-ध्वज । पश्यतामेव विप्राणा तत्रैवान्तरधीयत ॥ १६ ॥ तत सा पश्यता तेषा महर्षीणामनिन्दिता । समाहृत्य वनात्तस्मात् काष्ठानि वरवर्णिनी ॥ १७ ॥ चिता कृत्वा सुमहती प्रदाय च हुताशनम । प्रदीप्तेऽग्नौ महाराज रोषदीप्तेन चेतसा ॥ १८ ॥ उक्त्वा भीष्मवधायेति प्रविवेश हुताशनम । ज्येष्ठा काशिसुता राजन् यमुनामभितो नदीम ॥ १९ ॥

इति उद्योगपर्वणि अम्बोपाख्यानपर्वणि अम्बाहुताशनप्रवेशे अष्टाशीत्यधिकशततमोऽध्याय ॥१८८॥

---

दुर्य्योधन उवाच। कथं शिखण्डी गाङ्गेय कन्या भूत्वा पुरा तदा। पुरुषोऽभूत् युधिश्रेष्ठ तन्मे ब्रूहि पितामह ॥ १ ॥

भीष्म उवाच। भार्य्या तु तस्य राजेन्द्र द्रुपदस्य महीपते.। महिषी दयिता ह्यासीदपुत्रा च विशाम्पते ॥ २ ॥ एतस्मिन्नेव काले तु द्रुपदो वै महीपति.। अपत्यार्थं महाराज तोषयामास शङ्करम् ॥ ३ ॥ अस्मद्वधार्थं निश्चित्य तपोघोरं समास्थित.। ऋते कन्यां महादेव पुत्रो मे स्यादिति ब्रुवन् ॥ ४ ॥ भगवन् पुत्रमिच्छामि भीष्मं प्रतिचिकीर्षया। इत्युक्तो देवदेवेन स्त्रीपुमांस्ते भविष्यति ॥ ५ ॥ निवर्त्तस्व महीपाल नैतत् जात्वन्यथा भवेत्। स तु गत्वा च नगरं भार्य्यामिदमुवाच ह ॥ ६ ॥ कृतो यत्नो महादेवि तपसाराधितो मया। कन्या भूत्वा पुमान् भावी इति चोक्तोऽस्मि शम्भुना ॥ ७ ॥ पुन पुनर्याच्यमानो दिष्टमित्यब्रवीच्छिव। न तदन्यच्च भविता भवितव्यं हि तत्तथा ॥ ८ ॥ ततः सा नियता भूत्वा ऋतुकाले मनस्विनी। पत्नी द्रुपदराजस्य द्रुपदं प्रविवेश ह ॥ ८ ॥ लेभे गर्भं यथाकाल विधिदृष्टेन कर्म्मणा। पार्षतस्य महीपाल यथा मा नारदोऽब्रवीत् ॥ १० ॥ ततो दधार सा देवी गर्भं राजीवलोचना। तां स राजा प्रियां भार्य्यां द्रुपदः कुरुनन्दन ॥ ११ ॥ पुत्रस्नेहान्महाबाहु सुखं पर्य्यचरत्तदा। सर्वानभिप्रायकृतान् भार्य्यालभत कौरव ॥ १२ ॥ अपुत्रस्य सतो राज्ञो द्रुपदस्य महीपते.। यथाकालन्तु सा देवी महिषी द्रुपदस्य ह ॥ १३ ॥ कन्या प्रवररूपान्तु प्राजायत नराधिप। अपुत्रस्य तु राज्ञ सा द्रुपदस्य मनस्विनी ॥ १४ ॥ ख्यापयामास राजेन्द्र पुत्रो ह्येष ममेति वै। तत. स राजा द्रुपदः प्रच्छन्नाया नराधिप ॥ १५ ॥ पुत्रवत् पुत्रकार्य्याणि सर्वाणि समकारयत्। रक्षणञ्चैव मन्त्रस्य महिषी द्रुपदस्य सा ॥ १६ ॥ चकार सर्वयत्नेन ब्रुवाणा पुत्र इत्युत। न च ता वेद नगरे कश्चिदन्यत्र

पार्षतात ॥ १७ ॥ श्रद्दधानो हि तद्वाक्यं देवस्याच्युततेजस।
छादयामास तां कन्यां पुमानिति च सोऽब्रवीत ॥ १८ ॥ जात-
कर्माणि सर्वाणि कारयामास पार्थिव। पुम्वद्विधानयुक्तानि
शिखण्डीति च तां विदुः ॥ १९ ॥ अहमेकस्तु चारेण वचना
न्नारदस्य च। ज्ञातवान् देववाक्येन अम्बायास्तपसा तथा ॥२०॥

इति उद्योगपर्वणि अम्बोपाख्यानपर्वणि शिखण्ड्युत्पत्तौ
एकोननवत्यधिकशततमोऽध्यायः ॥ १८९ ॥

---

भीष्म उवाच। चकार यत्नं द्रुपदः सुताया सर्वकर्मसु।
ततो लेख्यादिषु तथा शिल्पेषु च परन्तप ॥ १ ॥ इष्वस्त्रे चैव
राजेन्द्र द्रोणशिष्यो बभूव ह। तस्य माता महाराज राजानं
वरवर्णिनी ॥ २ ॥ चोदयामास भार्य्यार्थे कन्यायाः पुत्रवत्तदा।
ततस्तां पार्षतो दृष्ट्वा कन्यां सम्प्राप्तयौवनाम्। स्त्रियं मत्वा
ततश्चिन्तां प्रपेदे सह भार्य्यया ॥ ३ ॥

द्रुपद उवाच। कन्या ममेयं सम्प्राप्ता यौवनं शोकवर्द्धिनी।
मया प्रच्छादिता चेयं वचनात् शूलपाणिनः ॥ ४ ॥

भार्य्योवाच। न तन्मिथ्या महाराज भविष्यति कथञ्चन।
त्रैलोक्यकर्त्ता कस्मादि तथा वक्तुमिहार्हति ॥ ५ ॥ यदि ते
रोचते राजन् वक्ष्यामि शृणु मे वचः। श्रुत्वेदानीं प्रपद्येथाः स्वां
मतिं पृषतात्मज ॥ ६ ॥ क्रियतामस्य यत्नेन विधिवद्दारसंग्रहः।
भविता तद्वचः सत्यमिति मे निश्चिता मतिः ॥ ७ ॥ ततस्तौ निश्चयं
कृत्वा तस्मिन् कार्य्येऽथ दम्पती। वरयाञ्चक्रतु कन्यां दशार्णाधि-
पते सुताम् ॥ ८ ॥ ततो राजा द्रुपदो राजसिंहः सर्व्वान् राज्ञः
कुलतः सन्निशाम्य। दशार्णकस्य नृपतेस्तनूजां शिखण्डिने
वरयामास दारान् ॥ ९ ॥ हिरण्यवर्म्मेति नृपो योऽसौ दाशा

र्थक. स्मृतः । स च प्रादात्महीपालः कन्यां तस्मै शिखण्डिने ॥१०॥ स च राजा दशार्णेषु महानासीत् सुदुर्ज्जयः । हिरण्यवर्म्मा दुर्द्धर्षो महासेनो महामनाः ॥ ११ ॥ कृते विवाहे तु तदा सा कन्या राजसत्तम । यौवनं समनुप्राप्ता सा च कन्या शिखण्डिनी ॥ १२ ॥ कृतदारः शिखण्डी च काम्पिल्यं पुनरागमत् । ततः सा वेद तां कन्यां कञ्चित्कालं स्त्रियं किल ॥ १३ ॥ हिरण्यवर्म्मणः कन्या ज्ञात्वा तान्तु शिखण्डिनीम् । धात्रीणाञ्च सखीनाञ्च व्रीड़माना न्यवेदयत् ॥ १४ ॥ कन्यां पाञ्चालराजस्य सुतां तान्तु शिखण्डिनीम । ततस्ता राजशार्दूल धात्र्यो दाशार्णिकास्तदा ॥ १५ ॥ जग्मुरार्त्तिं परां प्रेष्या. प्रेषयामासुरेव च । ततो दशार्णाधिपते प्रेष्याः सर्व्वा न्यवेदयन् ॥ १६ ॥ विप्रलम्भं यथावृत्तं स च चुक्रोध पार्थिव । शिखण्ड्यपि महाराज पुंवद्राजकुले तदा ॥ १७ ॥ विजहार मुदा युक्तः स्त्रीत्वमेव तिरोदधन् । ततः कतिपयाहस्य तच्छ्रुत्वा भरतर्षभ ॥ १८ ॥ हिरण्यवर्म्मा राजेन्द्र रोषादार्त्तिं जगाम ह । ततो दाशार्णको राजा तीव्रकोपसमन्वित. ॥ १९ ॥ दूतं प्रस्थापयामास द्रुपदस्य निवेशनम् । ततो द्रुपदमासाद्य दूत काञ्चनवर्म्मण ॥ २० ॥ एक एकान्तमुत्सार्य्य रहो वचनमब्रवीत् । दशार्णराजो राजंस्त्वामिदं वचन मब्रवीत् ॥ २१ ॥ अभिषङ्गात् प्रकुपितो विप्रलब्धस्त्वयानघ । अवमन्यसे मा नृपते नूनं दुर्मन्त्रितं तव ॥ २२ ॥ यन्मे कन्या स्वकन्यार्थे मोहात याचितवानसि । तस्याद्य विप्रलम्भस्य फलं प्राप्नुहि दुर्मते । एष त्वां सजनामात्यमुद्धरामि स्थिरो भव ॥२३॥

इति उद्योगपर्व्वणि अम्बोपाख्यानपर्व्वणि हिरण्यवमदूतप्रेषणे नवत्यधिकशततमोऽध्यायः ॥ १९० ॥

भीष्म उवाच। एवमुक्तस्य दूतेन द्रुपदस्य तदा नृप। चोर
स्येव गृहीतस्य न प्रावर्त्तत भारती ॥ १ ॥ स यत्नमकरोत् तीव्र
सम्बन्धिष्वनुमानने। दूतैर्मधुरसम्भाषैर्नैतदस्तीति सन्दिशन् ॥२॥
स राजा भूय एवाथ ज्ञात्वा तत्त्वमथागमत्। कन्येति पञ्चाल
सुता त्वरयाणो विनिर्ययौ ॥ ३ ॥ ततः सम्प्रेषयामास मित्राणा
ममितौजसाम्। दुहितुर्विप्रलम्भं तं धात्रीणां वचनात्तदा ॥ ४ ॥
ततः समुदयं कृत्वा बलानां राजसत्तम। अभियाने मतिं चक्रे
द्रुपदं प्रति भारत ॥ ५ ॥ ततः सम्मन्त्रयामास मन्त्रिभिः स
महीपतिः। हिरण्यवर्मा राजेन्द्र पाञ्चाल्यं पार्थिवं प्रति ॥ ६ ॥
तत्रैव निश्चितं तेषामभूद्राज्ञां महात्मनाम्। तथ्यं भवति चेदेत
तत्कन्या राजन् शिखण्डिनी ॥ ७ ॥ बद्ध्वा पञ्चालराजानमान
यिष्यामहे वयम्। अन्यं राजानमाधाय पाञ्चालेषु नरेश्वरम् ॥८॥
घातयिष्याम नृपतिं पाञ्चालं सशिखण्डिनम्। तत्तदा दूतं
माज्ञाय पुनर्दूतान्नराधिप। प्रास्थापयत् पार्षताय निहन्मीति
स्थिरो भव ॥ ९ ॥

संविधास्याम्यहं तथा ॥ १६ ॥ अहं हि संशयं प्राप्तो बाला चेयं शिखण्डिनी । तत्र राज्ञि महत् कृच्छ्रं सम्प्राप्ता वरवर्णिनी ॥ १७ ॥ . सा त्वं सर्वविमोक्षाय तत्त्वमाख्याहि पृच्छत ।
तथा विदध्यां सुश्रोणि कृत्यमाशु शुचिस्मिते ॥ १८ ॥ शिखण्डिनि च मामैस्त्वं विधास्ये तत्र तत्त्वतः । कृपयाहं वरारोहे वञ्चितः पुत्रधर्मतः ॥ १९ ॥ मया दाशार्णको राजा वञ्चितः स महीपतिः । तदाचक्ष्व महाभागे विधास्ये तत्र यद्धितम् ॥ २० ॥ जानता हि नरेन्द्रेण ख्यापनार्थं परस्य वै । प्रकाशञ्चोदिता देवी प्रत्युवाच महीपतिम् ॥ २१ ॥

इति उद्योगपर्वणि अम्बोपाख्यानपर्वणि द्रुपदप्रश्ने एकनवत्यधिकशततमोऽध्यायः ॥१९१॥



भीष्म उवाच । ततः शिखण्डिनो माता यथातत्त्वं नराधिप । आचचक्षे महाबाहो भर्त्रे कन्यां शिखण्डिनीम् ॥ १ ॥ अपुत्रया महाराज सपत्नीनां भयादिदम् । कन्या शिखण्डिनी जाता पुरुषो वै निवेदित. ॥ २ ॥ त्वया चैव नरश्रेष्ठ तन्मे प्रीत्यानुमोदितम् । पुत्रकर्म कृतञ्चैव कन्याया· पार्थिवर्षभ ॥ ३ ॥ भार्य्या चोढा त्वया राजन् दशार्णाधिपते· सुता । मया च प्रत्यभिहितं देववाक्यार्थदर्शनात् । कन्या भूत्वा पुमान् भावीत्येवञ्चैतदुपेक्षितम् ॥ ४ ॥ एतत् श्रुत्वा द्रुपदो यज्ञसेन· सर्वं तत्त्वं मन्त्रविज्ञो निवेद्य । मन्त्रं राजा मन्त्रयामास राजन् यथायुक्तं रक्षणे वै प्रजानाम् ॥ ५ ॥ सम्बन्धकञ्चैव समर्थ्य तस्मिन् दाशार्णके वै नृपतौ नरेन्द्र· । स्वयं कृत्वा विप्रलम्भं यथावत् मन्त्रैकाग्रो निश्चयं वै जगाम ॥ ६ ॥ स्वभावगुप्तं नगरमापत्काले तु भारत । गोपयामास राजेन्द्र सर्वत· समलंकृतम् ॥ ७ ॥ आर्त्तिञ्च

परमा राजा सगाम सह भार्य्यया। दशार्णपतिना सार्द्धं विरोधे भरतर्षभ ॥ ८॥ कथं सम्बन्धिना सार्द्धं न मे स्यात विग्रहो महान्। इति सञ्चिन्त्य मनसा दैवतामर्च्चयत तदा ॥ ९॥ तन्तु दृष्ट्वा तदा राजन् देवी देवपरन्तदा। अर्च्चां प्रयुञ्जानमथो भार्य्यावचनमब्रवीत ॥ १०॥ देवानां प्रतिपत्तिश्च सत्यं साधुमता सताम्। किमु दुःखार्णवं प्राप्य तस्मादर्च्चयतां गुरून् ॥ ११॥ दैवतानि च सर्व्वाणि पूज्यन्तां भूरिदक्षिणम्। अग्नयश्चापि हूयन्तां दाशार्णप्रतिषेधने ॥ १२॥ अयुद्धेन निवृत्तिञ्च मनसा चिन्तय प्रभो। दैवतानां प्रसादेन सर्व्वमेतद्भविष्यति ॥ १३॥ मन्त्रिभिर्मन्त्रितं सार्द्धं त्वया पृथुललोचन। पुरस्यास्याविनाशाय तथ राजंस्तथा कुरु ॥ १४॥ दैवं हि मानुषोपेतं भृशं सिध्यति पार्थिव। परस्परविरोधाद्धि सिद्धिरस्ति न चैतयोः ॥ १५॥ तस्माद्विधाय नगरे विधानं सचिवैः सह। अर्च्चयस्व यथाकामं दैवतानि विशाम्पते ॥ १६॥ एवं सम्भाषमाणौ तु दृष्ट्वा शोकपरायणौ। शिखण्डिनी तदा कन्या व्रीड़ितेव तपस्विनी ॥ १७॥ ततः सा चिन्तयामास मत्कृते दुःखितावुभौ। इमाविति ततश्चक्रे मतिं प्राणविनाशने ॥ १८॥ एवं सा निश्चयं कृत्वा भृशं शोकपरायणा। निर्ज्जगाम गृहं त्यक्त्वा गहनं निर्ज्जनं वनम् ॥ १९॥ यक्षेणर्द्धिमता राजन् स्थूणाकर्णेन पालितम्। तद्भयादेव च जनो विसर्ज्जयति तद्वनम् ॥ २०॥ तत्र च स्थूणभवनं सुधामृत्तिकलेपनम्। लालोल्लापिकधूमाढ्यमुच्चप्राकारतोरणम् ॥२१॥ तत प्रविश्य शिखण्डी सा द्रुपदस्यात्मजा नृप। अनश्नाना बहुतिथं शरीरमुदशोषयत ॥ २२॥ दर्शयामास तां यक्ष स्थूणो मार्द्दवसंयुत। किमर्थोऽयं तवारम्भ करिष्ये ब्रूहि मा चिरम् ॥ २३॥ अशक्यमिति सा यक्ष पुनः पुनरुवाच ह। करिष्यामीति वै क्षिप्रं प्रत्युवाचाथ गुह्यक ॥ २४॥ धनेश्वरस्यानुचरो

वरदोऽस्मि नृपात्मजे। अदेयमपि दास्यामि ब्रूहि यत्ते विव-
क्षितम् ॥ २५ ॥ तत शिखण्डी तत सर्वमखिलेन न्यवेदयत।
तस्मै यक्षप्रधानाय स्थूणाकर्णाय भारत ॥ २६ ॥

शिखण्ड्युवाच। अपुत्रो मे पिता यक्ष न चिरान्नाशमेष्यति।
अभियास्यति सक्रोधो दशार्णाधिपतिर्हि तम् ॥ २७ ॥ महाबलो
महोत्साह स हेमकवचो नृप। तस्माद्रक्षस्व मा यक्ष मातरं
पितरञ्च मे ॥ २८ ॥ प्रतिज्ञातो हि भवता दु खप्रतिशमो मम।
भवेय पुरुषो यक्ष त्वत्प्रसादादनिन्दित ॥ २९ ॥ यावदेव स
राजा वै नापयाति पुरं मम। तावदेव महायक्ष प्रसाद कुरु
गुह्यक ॥ ३० ॥

इति उद्योगपर्वणि अम्बोपाख्यानपर्वणि स्थूणाकर्णप्रत्यर्थी
द्विनवत्यधिकशततमोऽध्याय ॥ १९२ ॥

---

भीष्म उवाच। शिखण्डिवाक्यं श्रुत्वाथ स यक्षो भरतर्षभ।
प्रोवाच मनसा चिन्त्य दैवेनोपनिपीड़ित ॥ १ ॥ भवितव्य तथा
तद्धि मम दु खाय कौरव। भद्रे कामं करिष्यामि समयन्तु
निबोध मे ॥ २ ॥ किञ्चित्कालान्तर दास्ये पुलिङ्गं स्वमिद तव।
आगन्तव्य त्वया काले सत्यञ्चैव वदस्व मे ॥ ३ ॥ प्रभु सङ्कल्प-
सिद्धोऽस्मि कामचारी विहङ्गम। मत्प्रसादात्त पुरञ्चैव त्राहि
बन्धूश्च केवलम् ॥ ४ ॥ स्त्रीलिङ्गं धारयिष्यामि तवेद पार्थिवा-
त्मजे। सत्य मे प्रतिजानीहि करिष्यामि प्रियन्तव ॥ ५ ॥

शिखण्ड्युवाच। प्रतिदास्यामि भगवन् पुंलिङ्ग तव सुव्रत।
किञ्चित् कालान्तर स्त्रीत्व धारयस्व निशाचर ॥ ६ ॥ प्रतियाते
दशार्णे तु पार्थिवे हेमवर्मणि। कन्यैव हि भविष्यामि पुरुषस्त्वं
भविष्यसि ॥ ७ ॥

भीष्म उवाच। इत्युक्त्वा समयं तत्र चक्राते तावुभौ नृप। अन्योन्यस्याभिसन्देहे तौ सङ्क्रामयतां तत ॥ ८ ॥ स्त्रीलिङ्ग धारयामास स्थूणो यक्षोऽथ भारत। यक्षरूपञ्च तद्दीप्तं शिखण्डी प्रत्यपद्यत ॥ ९ ॥ तत शिखण्डी पाञ्चाल्य पुंस्त्वमासाद्य पार्थिव। विवेश नगरं हृष्ट पितरञ्च समासदत ॥ १० ॥ यथावृत्तन्तु तत सर्वमाचख्यौ द्रुपदस्य तत। द्रुपदस्तस्य तच्छ्रुत्वा हर्षमाहारयत परम् ॥ ११ ॥ सभार्यस्तच्च सस्मार महेश्वरवचस्तदा। तत सम्प्रेषयामास दशार्णाधिपतेर्नृप ॥ १२ ॥ पुरुषोऽयं मम सुत श्रद्धत्तां भवानिति। अथ दाशार्णको राजा सहसाभ्यागमत्तदा ॥ १३ ॥ पाञ्चालराजं द्रुपद दुःखशोकसमन्वित। तत काम्पिल्यमासाद्य दशार्णाधिपतिस्तत ॥ १४ ॥ प्रेषयामास सत्कृत्य दूत ब्रह्मविदां वरम्। ब्रूहि मद्वचनात दूत पाञ्चाल्यं त नृपाधमम ॥ १५ ॥ यन्मे कन्यां स्वकन्यार्थं वृतवानसि दुर्मते। फलं तस्यावलेपस्य द्रक्ष्यस्यद्य न संशय ॥ १६ ॥ एवमुक्तश्च तेनासौ ब्राह्मणो राजसत्तम। दूत प्रयातो नगरं दशार्णनृपचोदित ॥ १७ ॥ तत आसादयामास पुरोधा द्रुपद पुरे। तस्मै पाञ्चालको राजा गामर्घ्यञ्च सुसत्कृतम ॥ १८ ॥ प्रापयामास राजेन्द्र सह तेन शिखण्डिना। तां पूजां नाभ्यनन्दत स वाक्यञ्चेदमुवाच ह ॥ १९ ॥ यदुक्तं तेन वीरेण राज्ञा काञ्चनवर्मणा। यत्तेऽहमधमाचार दुहित्रार्थेऽभिवञ्चित ॥ २० ॥ तस्य पापस्य करणात फलं प्राप्नुहि दुर्मते। देहि युद्धं नरपते ममाद्य रणमूर्द्धनि ॥ २१ ॥ उद्धरिष्यामि ते सद्य सामात्यसुतबान्धवम्। तदुपालम्भसंयुक्तं श्रावित किल पार्थिव ॥ २२ ॥ दशार्णपतिना प्रोक्तो मन्त्रिमध्ये पुरोधसा। अभवत् भरतश्रेष्ठ द्रुपद प्रणयानत ॥ २३ ॥ यदाह मां भवान् ब्रह्मन् सम्बन्धिवचनाद्वच। अस्योत्तरं प्रतिवचो दूतो राज्ञो वदिष्यति ॥ २४ ॥ तत सम्प्रे

प्रयामास द्रुपदोऽपि महात्मने । हिरण्यवर्मणे दूतं ब्राह्मणं वेद-पारगम् ॥ २५ ॥ तमागम्य तु राजानं दशार्णाधिपतिं तदा । तद्वाक्यमाददे राजन् यदुक्तं द्रुपदेन ह ॥ २६ ॥ आगमः क्रियतां व्यक्तः कुमारोऽयं सुतो मम । मिथ्यैतदुक्तं केनापि तन्न श्रद्धेय-मित्युत ॥ २७ ॥ ततः स राजा द्रुपदस्य श्रुत्वा विमर्षयुक्तो युवती-र्वरिष्ठाः । सम्प्रेषयामास सुचारुरूपाः शिखण्डिनं स्त्री पुमान् वेति वेत्तुम् ॥ २८ ॥ ताः प्रेषितास्तत्त्वभावं विदित्वा प्रीत्या राज्ञे तच्छशंसुर्हि सर्व्वम् । शिखण्डिनं पुरुषं कौरवेन्द्र दशार्णराजाय महानुभावम् ॥ २९ ॥ ततः श्रुत्वा तु राजा स आगमं प्रीतिमा-नथ । सम्बन्धिना समागम्य हृष्टो वासमुवास ह ॥ ३० ॥ शिख-ण्डिने च मुदितः प्रादाद्वित्तं जनेश्वर । हस्तिनोऽश्वांश्च गाश्चैव दास्योऽथ बहुलास्तथा ॥ ३१ ॥ पूजितश्च प्रतिययौ निभर्त्स्य तनयां किल । विनीतकिल्बिषे प्रीते हेमवर्म्मणि पार्थिवे ॥ ३२ ॥ प्रतियाते दशार्णे तु हृष्टरूपा शिखण्डिनी । कस्यचित्त्वथ कालस्य कुवेरो नरवाहनः । लोकयात्रां प्रकुर्वाणः स्थूणस्यागान्निवेशनम् ॥ ३३ ॥ स तद्गृहस्योपरिवर्त्तमान आलोकयामास धनाधि-गोप्ता । स्थूणस्य यक्षस्य विशेषवेश्म स्वलंकृतं माल्यगुणैर्विचित्रैः ॥ ३४ ॥ लाजैश्च गन्धैश्च तथा वितानैरभ्यर्चितं धूपनधूपितञ्च । ध्वजैः पताकाभिरलंकृतञ्च भक्ष्यान्नपेयामिषदत्तहोमम् ॥ ३५ ॥ तत् स्थानं तस्य दृष्ट्वा तु सर्व्वतः समलङ्कृतम् । मणिरत्नसुवर्णानां मालाभिः परिपूरितम् ॥ ३६ ॥ नानाकुसुमगन्धाढ्यं सिक्तं संमृष्ट-शोभितम् । अथाब्रवीत् यक्षपतिस्तान् यक्षाननुगांस्तदा ॥ ३७ ॥ स्वलंकृतमिदं वेश्म स्थूणस्यामितविक्रमाः । नोपसर्पति माञ्चैव कस्मादद्य स मन्दधीः ॥ ३८ ॥ यस्माज्जानन् स मन्दात्मा मामसौ नोपसर्पति । तस्मात्तस्मै महादण्डो धार्य्यः स्यादिति मे मतिः ॥ ३९ ॥

यक्षा ऊचुः। द्रुपदस्य सुता राजन् राज्ञो जाता शिखण्डिनी। तस्या निमित्ते कस्मिंश्चित् प्रादात् पुरुषलक्षणम् ॥ ४० ॥ अग्रहीत्लक्षणं स्त्रीणां स्त्रीभूता तिष्ठते गृहे। नोपसर्पति तेनासौ सव्रीड़ः स्त्रीस्वरूपवान् ॥ ४१ ॥ एतस्मात् कारणाद्राजन् स्थूणो न त्वाद्य सर्पति। श्रुत्वा कुरु यथान्यायं विमानमिह तिष्ठताम् ॥ ४२ ॥ आनीयतां स्थूण इति ततो यक्षाधिपोऽब्रवीत। कर्त्तास्मि निग्रहं तस्य प्रत्युवाच पुनः पुनः ॥ ४३ ॥ सोऽभ्यगच्छत यक्षेन्द्रमाहूत पृथिवीपते। स्त्रीस्वरूपो महाराज तस्थौ व्रीड़ासमन्वितः ॥ ४४ ॥ तं शशापाथ संक्रुद्धो धनदः कुरुनन्दन। एवमेव भवत्वस्य स्त्रीत्वं पापस्य गुह्यकाः ॥ ४५ ॥ ततोऽब्रवीत यक्षपतिर्महात्मा यस्माददास्त्वमवमन्येह यक्षान्। शिखण्डिनो लक्षणं पापबुद्धे स्त्रीलक्षणं चाग्रहीः पापकर्मन् ॥ ४६ ॥ अप्रवृत्तं सुदुर्बुद्धे यस्मादेतत् त्वया कृतम्। तस्मादद्य प्रभृत्येव स्त्रीत्वं सा पुरुषस्तथा ॥ ४७ ॥ ततः प्रसादयामासुर्यक्षा वैश्रवणं किल। स्थूणस्यार्थे कुरुष्वान्तं शापस्येति पुनः पुनः ॥ ४८ ॥ ततो महात्मा यक्षेन्द्रः प्रत्युवाचानुगामिनः। सर्वान् यक्षगणांस्तात शापस्यान्तचिकीर्षया ॥ ४९ ॥ शिखण्डिनि हते यक्षाः स्वरूपं प्रतिपत्स्यते। स्थूणो यक्षो निरुद्वेगो भवत्विति महामनाः ॥ ५० ॥ इत्युक्त्वा भगवान् देवो यक्षराजः सुपूजितः। प्रययौ सहितैः सर्वैर्निमेषान्तरचारिभिः ॥ ५१ ॥ स्थूणस्तु शापं संप्राप्य तत्रैव न्यवसत्तदा। समये चागमत्तूर्णं शिखण्डी तं क्षपाचरम् ॥ ५२ ॥ सोऽभिगम्याब्रवीत् वाक्यं प्राप्तोऽस्मि भगवन्निति। तमब्रवीत्तत स्थूणः प्रीतोऽस्मीति पुनः पुनः ॥ ५३ ॥ आर्जवेनागतं दृष्ट्वा राजपुत्रं शिखण्डिनम्। सर्वमेव यथावृत्तमाचचक्षे शिखण्डिने॥५४॥

यक्ष उवाच। शप्तो वैश्रवणेनाहं त्वत्कृते पार्थिवात्मज। गच्छेदानीं यथाकामञ्चर लोकान् यथासुखम् ॥ ५५ ॥ दिष्-

षैतत् पुरा मन्ये न शक्यमतिवर्त्तितुम्। गमनं तव चैतो ह्रि पौलस्त्यस्य च दर्शनम् ॥ ५६ ॥

भीष्म उवाच। एवमुक्तः शिखण्डी तु स्थूणयचेण भारत। प्रत्याजगाम नगरं हर्षेण महता वृतः ॥ ५७ ॥ पूजयामास विविधैर्गन्धमाल्यैर्महाधनैः। द्विजातीन् देवताश्चैव चैत्यानथ चतुष्पथान् ॥ ५८ ॥ द्रुपदः सह पुत्रेण सिद्धार्थेन शिखण्डिना। मुदञ्च परमां लेभे पाञ्चाल्यः सह बान्धवैः ॥ ५९ ॥ शिष्यार्थं प्रददौ चाथ द्रोणाय कुरुपुङ्गव। शिखण्डिनं महाराज पुत्रं स्त्रीपूर्व्विणं तथा ॥ ६० ॥ प्रतिपेदे चतुष्पादं धनुर्वेदं नृपात्मजः। शिखण्डी सह युष्माभिर्धृष्टद्युम्नश्च पार्षत ॥ ६१ ॥ मम लेतचरास्तात यथावत प्रत्यवेदयन्। जड़ान्धवधिराकारा ये युक्ता द्रुपदे मया ॥ ६२ ॥ एवमेष महाराज स्त्रीपुमान् द्रुपदात्मजः। स सम्भूतः कुरुश्रेष्ठ शिखण्डी रथसत्तमः ॥ ६३ ॥ ज्येष्ठा काशिपतेः कन्या अम्बा नामेति विश्रुता। द्रुपदस्य कुले जाता शिखण्डी भरतर्षभ ॥ ६४ ॥ नाहमेनं धनुष्पाणिं युयुत्सुं समुपस्थितम्। मुहूर्त्तमपि पश्येय प्रहरेयं न चाच्युत ॥ ६५ ॥ व्रतमेतत् मम सदा पृथिव्यामपि विश्रुतम्। स्त्रियां स्त्रीपूर्व्विके चैव स्त्रीनाम्नि स्त्रीस्वरूपिणि ॥ ६६ ॥ न मुञ्चेयमहं बाणमिति कौरवनन्दन। न हन्यामहमेतेन कारणेन शिखण्डिनम् ॥ ६७ ॥ एतत् तत्त्वमहं वेद जन्म तात शिखण्डिनः। ततो नैनं हनिष्यामि समरेष्वाततायिनम् ॥ ६८ ॥ यदि भीष्मः स्त्रियं हन्यात् सन्तः कुर्य्युर्विगर्हणम्। नैनं तस्माद्धनिष्यामि दृष्ट्वापि समरे स्थितम् ॥६९॥

वैशम्पायन उवाच। एतच्छ्रुत्वा तु कौरव्यो राजा दुर्य्योधनस्तदा। मुहूर्त्तमिव स ध्यात्वा भीष्मे युक्तममन्यत ॥ ७० ॥

इति उद्योगपर्व्वणि अम्बोपाख्यानपर्व्वणि शिखण्डीपुंस्त्वप्राप्तौ—

विनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥

सञ्जय उवाच। प्रभातायान्तु शर्वर्य्यां पुनरेव सुतस्तव। मध्ये सर्वस्य सैन्यस्य पितामहमपृच्छत ॥ १ ॥ पाण्डवेयस्य गाङ्गेय यदेतत् सैन्यमुद्यतम्। प्रभूतनरनागाश्वं महारथसमाकुलम् ॥ २ ॥ भीमार्जुनप्रभृतिभिर्महेष्वासैर्महाबलैः। लोकपालसमैर्गुप्तं धृष्टद्युम्नपुरोगमैः ॥ ३ ॥ अप्रधृष्यमनावार्य्यमुद्वृत्तमिव सागरम्। सेनासागरमक्षोभ्यमपि देवैर्महाहवे ॥ ४ ॥ केन कालेन गाङ्गेय क्षपयेथा महाद्युते। आचार्य्यो वा महेष्वासः कृपो वा सुमहाबलः ॥ ५ ॥ कर्णो वा समरश्लाघी द्रौणिर्वा द्विजसत्तम। दिव्यास्त्रविदुषः सर्वे भवन्तो हि बले मम ॥ ६ ॥ एतदिच्छाम्यहं ज्ञातुं परं कौतूहलं हि मे। हृदि नित्यं महाबाहो वक्तुमर्हसि तन्मम ॥ ७ ॥

प्राणविचेष्टित । शस्त्राग्निना निर्द्दहेयं पाण्डवानामनीकिनीम् ॥ १७ ॥ यथा भीष्मः शान्तनवो मासेनेति मतिर्मम । एषा मे परमा शक्तिरेतन्मे परमं बलम् ॥ १८ ॥ द्वाभ्यामेव तु मासाभ्यां कृपः शारद्वतोऽब्रवीत् । द्रौणिस्तु दशरात्रेण प्रतिजज्ञे बलक्षयम् ॥ १९ ॥ कर्णस्तु पञ्चरात्रेण प्रतिजज्ञे महास्त्रवित् । तच्छ्रुत्वा सूतपुत्रस्य वाक्यं सागरगासुतः ॥ २० ॥ जहास सस्वनं हासं वाक्यञ्चेदमुवाच ह । न हि यावद्रणे पार्थं बाणखड्गधनुर्द्धरम् ॥ २१ ॥ वासुदेवसमायुक्तं रथेनायान्तमाहवे । समागच्छसि राधेय तेनैवमभिमन्यसे । शक्यमेवञ्च भूयश्च त्वया युक्तं यथेष्टतः ॥२२

इति उद्योगपर्व्वणि अम्बोपाख्यानपर्व्वणि भीष्मादिशक्तिकथने चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥

---

वैशम्पायन उवाच । एतच्छ्रुत्वा तु कौन्तेयः सर्व्वान् भ्रातॄनुपह्वरे । आहूय भरतश्रेष्ठ इदं वचनमब्रवीत् ॥ १ ॥

युधिष्ठिर उवाच । धार्त्तराष्ट्रस्य सैन्येषु ये चारपुरुषा मम । ते प्रवृत्तिं प्रयच्छन्ति ममेमां व्युषितां निशाम् ॥ २ ॥ दुर्य्योधनः किलापृच्छदापगेयं महाव्रतम् । केन कालेन पाण्डूनां हन्याः सैन्यमिति प्रभो ॥ ३ ॥ मासेनेति च तेनोक्तो धार्त्तराष्ट्रः सुदुर्मतिः । तावता चापि कालेन द्रोणोऽपि प्रतिजज्ञिवान् ॥ ४ ॥ गौतमो द्विगुणं कालमुक्तवानिति नः श्रुतम् । द्रौणिस्तु दशरात्रेण प्रतिजज्ञे महास्त्रवित ॥ ५ ॥ तथा दिव्यास्त्रवित् कर्णः संपृष्टः कुरुसंसदि । पञ्चभिर्द्दिवसैर्हन्तुं ससैन्यं प्रतिजज्ञिवान् ॥ ६ ॥ तस्मादहमपीच्छामि श्रोतुमर्ज्जुन ते वचः । कालेन कियता शत्रून् क्षपयेरिति फाल्गुण ॥ ७ ॥ एवमुक्तो गुडाकेशः पार्थिवेन धनञ्जय । वासुदेवं समीक्ष्येदं वचनं प्रत्यभाषत ॥ ८ ॥

सर्व एते महात्मानः कृतास्त्राश्चित्रयोधिनः। असंशयं महाराज
हन्युरेव न संशयः ॥ ९ ॥ अपैतु ते मनस्तापो यथासत्यं ब्रवी-
म्यहम्। हन्यामेकरथेनैव वासुदेवसहायवान् ॥ १० ॥ सामरा-
नपि लोकांस्त्रीन् सर्वान् स्थावरजङ्गमान्। भूतं भव्यं भविष्यञ्च
निमेषादिति मे मतिः ॥ ११ ॥ यत्तत् घोरं पशुपतिः प्रादादस्त्रं
महन्मम। कैराते द्वन्द्वयुद्धे तु तदिदं मम वर्त्तते ॥ १२ ॥ यद्यु-
गान्ते पशुपतिः सर्वभूतानि संहरन्। प्रयुङ्क्ते पुरुषव्याघ्र तदिदं
मयि वर्त्तते ॥ १३ ॥ यन्न जानाति गाङ्गेयो न द्रोणो न च
गौतमः। न च द्रोणसुतो राजन् कुत एव तु सूतजः ॥ १४ ॥
न तु युक्तं रणे हन्तुं दिव्यैरस्त्रैः पृथग्जनम्। आर्जवेनैव युद्धेन
विजेष्यामो वयं परान् ॥ १५ ॥ तथेमे पुरुषव्याघ्राः सहायास्तव
पार्थिव। सर्वे दिव्यास्त्रविद्वांसः सर्वे युद्धाभिकाङ्क्षिणः ॥ १६ ॥
वेदान्तावभृथस्नाताः सर्वे एतेऽपराजिताः। निहन्युः समरे
सेनां देवानामपि पाण्डव ॥ १७ ॥ शिखण्डी युयुधानश्च धृष्ट-
द्युम्नश्च पार्षतः। भीमसेनो यमौ चोभौ युधामन्यूत्तमौजसौ
॥ १८ ॥ विराटद्रुपदौ चोभौ भीष्मद्रोणसमौ युधि। पञ्चैव
महाबाहुर्हैडिम्बश्च महाबलः ॥ १९ ॥ पुत्रोऽस्याञ्जनपर्वा तु
महाबलपराक्रमः। शैनेयश्च महाबाहुः सहायो रणकोविदः
॥ २० ॥ अभिमन्युश्च बलवान् द्रौपद्याः पञ्च चात्मजाः। स्वय-
ञ्चापि समर्थोऽस्मि त्रैलोक्योत्सादनेऽपि च ॥ २१ ॥ क्रोधाद्यं
पुरुषं पश्येस्त्वया यंक्रसमुद्यते। स क्षिप्रं न भवेत् व्यक्तमिति त्वां
विद्धि कौरव ॥ २२ ॥

इति उद्योगपर्वणि अम्बोपाख्यानपर्वणि अर्जुनवाक्ये
पञ्चनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥

वैशम्पायन उवाच । ततः प्रभाते विमले धार्त्तराष्ट्रेण चोदिताः । दुर्य्योधनेन राजानः प्रययुः पाण्डवान् प्रति ॥ १ ॥ आप्लाव्य शुचयः सर्व्वे स्रग्विणः शुक्लवाससः । गृहीतशस्त्रध्वजिनः स्वस्ति वाच्य हुताग्नयः ॥ २ ॥ सर्व्वे ब्रह्मविदः शूराः सर्व्वे सुचरितव्रताः । सर्व्वे कामकृतश्चैव सर्व्वे चाहवलक्षणाः ॥ ३ ॥ आहवेषु परांल्लोकान् जिगीषन्तो महाबलाः । एकाग्रमनसः सर्व्वे श्रद्दधानाः परस्परम् ॥ ४ ॥ विन्दानुविन्दावावन्त्यौ कैकेया वाह्लिकैः सह । प्रययुः सर्व्व एवैते भारद्वाजपुरोगमाः ॥ ५ ॥ अश्वत्थामा शान्तनवः सैन्धवोऽथ जयद्रथः । दाक्षिणात्याः प्रतीच्याश्च पार्व्वतीयाश्च ये नृपाः ॥ ६ ॥ गान्धारराजः शकुनिः प्राच्योदीच्याश्च सर्व्वशः । शकाः किराता यवनाः शिवयोऽथ वशातयः ॥ ७ ॥ स्वैः स्वैरनीकैः सहिताः परिवार्य्य महारथम् । एते महारथाः सर्व्वे द्वितीये निर्य्ययुर्व्वले ॥ ८ ॥ कृतवर्म्मा सहानीकस्त्रिगर्त्तश्च महारथः । दुर्य्योधनश्च नृपतिर्भ्रातृभिः परिवारितः ॥ ९ ॥ शलो भूरिश्रवाः शल्यः कौशल्योऽथ वृहद्रथः । एते पश्चादनुगता धार्त्तराष्ट्रपुरोगमाः ॥ १० ॥ ते समेत्य यथान्यायं धार्त्तराष्ट्रा महाबलाः । कुरुक्षेत्रस्य पश्चार्द्धे व्यवतिष्ठन्त दंशिताः ॥ ११ ॥ दुर्य्योधनस्तु शिविरं कारयामास भारत । यथैव हास्तिनपुरं द्वितीयं समलंकृतम् ॥ १२ ॥ न विशेषं विजानन्ति पुरस्य शिविरस्य वा । कुशला अपि राजेन्द्र नरा नगरवासिनः ॥ १३ ॥ तादृशान्येव दुर्गाणि राज्ञामपि महीपतिः । कारयामास कौरव्यः शतशोऽथ सहस्रशः ॥ १४ ॥ पञ्चयोजनमुत्सृज्य मण्डलं तद्रणाजिरम् । सेनानिवेशास्ते राजन्नाविशञ्छतसङ्घशः ॥ १५ ॥ तत्र ते पृथिवीपाला यथोत्साहं यथाबलम् । विविशुः शिविराण्यत्र द्रव्यवन्ति सहस्रश ॥ १६ ॥ तेषां दुर्य्योधनो राजा ससैन्यानां महात्मनाम् । व्यादिदेश सवाह्यानां भक्ष्यभोज्यमनु-

त्तमम ॥ १७ ॥ सनागाश्वमनुष्याणां ये च शिल्पोपजीविनः। ये चानेऽनुगतास्तत्र सूतमागधवन्दिनः ॥ १८ ॥ वणिजो गणिका चारा ये चैव प्रेक्षका जनाः। सर्वांस्तान् कौरवो राजा विधिवत् प्रत्यवैक्षत ॥ १९ ॥

इति उद्योगपर्वणि अम्बोपाख्यानपर्वणि कौरवसैन्यनिर्याणे पञ्चनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥

---

वैशम्पायन उवाच। तथैव राजा कौन्तेयो धर्मपुत्रो युधिष्ठिरः। धृष्टद्युम्नमुखान् वीरांश्चोदयामास भारत ॥ १ ॥ चेदिकाशिककरूषाणां नेतारं दृढविक्रमम्। सेनापतिममित्रघ्नं धृष्टकेतुमथादिशत् ॥ २ ॥ विराटं द्रुपदञ्चैव युयुधानं शिखण्डिनम्। पाञ्चाल्यौ च महेष्वासौ युधामन्यूत्तमौजसौ ॥ ३ ॥ ते शूराश्चित्रवर्माणस्तप्तकुण्डलधारिणः। आज्यावसिक्ता ज्वलिता धिष्ण्येष्विव हुताशनाः ॥ ४ ॥ अशोभन्त महेष्वासा ग्रहा प्रज्वलिता इव। अथ सैन्यं यथायोगं पूजयित्वा नरर्षभ ॥ ५ ॥ दिदेश तान्यनीकानि प्रयाणाय महीपतिः। तेषां युधिष्ठिरो राजा ससैन्यानां महात्मनाम् ॥ ६ ॥ व्यादिदेश सवाह्यानां भक्ष्यभोज्यमनुत्तमम्। सगजाश्वमनुष्याणां ये च शिल्पोपजीविनः ॥ ७ ॥ अभिमन्युं बृहन्तञ्च द्रौपदेयांश्च सर्वशः। धृष्टद्युम्नमुखानेतान् प्राहिणोत् पाण्डुनन्दनः ॥ ८ ॥ भीमञ्च युयुधानञ्च पाण्डवञ्च धनञ्जयम्। द्वितीयं प्रेषयामास बलस्कन्धं युधिष्ठिरः ॥ ९ ॥ भाण्डं समारोपयतां चरतां सम्प्रधावताम्। हृष्टानां तत्र योधानां शब्दो दिवमिवास्पृशत् ॥ १० ॥ स्वयमेव ततः पश्चात् विराटद्रुपदान्वितः। तथापरैर्महीपालैः सह प्रायान्महीपतिः ॥ ११ ॥ भीमधन्वायनी सेना धृष्टद्युम्नेन पालिता।

गङ्गेव पूर्णा स्तिमिता स्यन्दमाना व्यदृश्यत ॥ १२ ॥ ततः पुन-
रनीकानि व्ययोजयत बुद्धिमान्। मोहयन् धृतराष्ट्रस्य पुत्राणां
बुद्धिनिश्चयम् ॥ १३ ॥ द्रौपदेयान्महेष्वासानभिमन्युञ्च पाण्डवः।
नकुलं सहदेवञ्च सर्व्वांश्चैव प्रभद्रकान् ॥ १४ ॥ दश चाश्वसह-
स्राणि द्विसहस्राणि दन्तिनाम्। अयुतञ्च पदातीनां रथाः पञ्च-
शतं तथा ॥ १५ ॥ भीमसेनञ्च दुर्द्धर्षं प्रथमं प्राहिणद्बलम्।
मध्यमे च विराटञ्च जयत्सेनञ्च पाण्डवः ॥ १६ ॥ महारथौ च
पाञ्चाल्यौ युधामन्यूत्तमौजसौ। वीर्य्यवन्तौ महात्मानौ गदा-
कार्म्मुकधारिणौ ॥ १७ ॥ अन्वयातां तदा मध्ये वासुदेवधनञ्जयौ।
बभूवुरतिसंरब्धाः कृतप्रहरणा नराः ॥ १८ ॥ तेषां विंशति-
साहस्राः हयाः शूरैरधिष्ठिताः। पञ्च नागसहस्राणि रथ-
वंशाश्च सर्व्वशः ॥ १९ ॥ पदातयश्च ये शूराः कार्म्मुकासिगदाधराः।
सहस्रशोऽन्वयुः पश्चादग्रतश्च सहस्रशः ॥ २० ॥ युधिष्ठिरो यत्र
सैन्ये स्वयमेव बलार्णवे। तत्र ते पृथिवीपाला भूयिष्ठं पर्य्यव-
स्थिताः ॥ २१ ॥ तत्र नागसहस्राणि हयानामयुतानि च। तथा
रथसहस्राणि पदातीनाञ्च भारत ॥ २२ ॥ चेकितानः स्वसैन्येन
महता पार्थिवर्षभ। धृष्टकेतुश्च चेदीनां प्रणेता पार्थिवो ययौ
॥ २३ ॥ सात्यकिश्च महेष्वासो वृष्णीनां प्रवरो रथः। वृतः शत-
सहस्रेण रथानां प्रणुदन् बली ॥ २४ ॥ क्षत्रदेवः क्षत्रदेवश्च रथस्थौ
पुरुषर्षभौ। जघनं पालन्तौ च पृष्ठतोऽनुप्रजग्मतुः ॥ २५ ॥
शकटापणवेशाश्च यानं युग्यञ्च सर्व्वशः। तत्र नागसहस्राणि
हयानामयुतानि च ॥ २६ ॥ फल्गु सर्व्वं कलत्रञ्च यत् किञ्चित्
कृशदुर्ब्बलम्। कोषसञ्चयवाहांश्च कोष्ठागारं तथैव च ॥ २७ ॥
राजानीकेन संगृह्य शनैः प्रायाद्युधिष्ठिरः। तमन्वयात् सत्यधृतिः
सौचित्तिर्युद्धदुर्म्मदः ॥ २८ ॥ श्रेणिमान् वसुदानश्च पुत्रः काश्यस्य
वा विभुः। रथा विंशतिसाहस्रा ये तेषामनुयायिनः ॥ २९ ॥

ध्वजाना दशकोटाश्च महतां किङ्किणीकिनाम्। गजा विंशति साहस्रा ईषादन्ता प्रहारिणः ॥ ३० ॥ कुलीना भिन्नकरटा मेघा इव विसर्पिणः। षष्टिर्नागसहस्राणि दशान्यानि च भारत ॥ ३१ ॥ युधिष्ठिरस्य यान्यासन् युधि सेनास्य सत्तम। क्षरन्त इव जीमूता प्रभिन्नकरटामुखा ॥ ३२ ॥ राजानमन्वयु पश्चा-च्चलन्त इव पर्वता। एवं तस्य बलं भीमं कुन्तीपुत्रस्य धीमत ॥ ३३ ॥ यदाश्रित्याथ युयुधे धार्त्तराष्ट्रं सुयोधनम्। ततोऽन्ये शतश पश्चात सहस्रायुतशो नरा ॥ ३४ ॥ नर्दन्त प्रययुस्तेषा मनीकानि सहस्रश। तत्र भेरीसहस्राणि शङ्खानामयुतानि च। व्यवादयन्त संहृष्टा सहस्रायुतशो नरा ॥ ३५ ॥

इति उद्योगपर्वणि अम्बोपाख्यानपर्वणि पाण्डवसैन्यनिर्याणे सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥

---

समाप्तञ्चेदमुद्योगपर्व ॥

---

# श्रीमहाभारतम्।

## भीष्मपर्व ॥



नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम्।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ॥

जनमेजय उवाच। कथं युयुधिरे वीराः कुरुपाण्डवसोमकाः।
पार्थिवाः सुमहात्मानो नानादेशसमागताः ॥ १ ॥
वैशम्पायन उवाच। यथा युयुधिरे वीराः कुरुपाण्डव-
सोमकाः। कुरुक्षेत्रे तपःक्षेत्रे शृणु त्वं पृथिवीपते ॥ २ ॥ अव-
तीर्य्य कुरुक्षेत्रं पाण्डवाः सहसोमकाः। कौरवानभ्यवर्त्तन्त
जिगीषन्तो महाबलाः ॥ ३ ॥ वेदाध्ययनसम्पन्नाः सर्वे युद्धाभि-
नन्दिनः। आशंसन्तो जयं युद्धे बलेनाभिमुखा रणे ॥ ४ ॥ अभि-
याय दुराधर्षां धार्त्तराष्ट्रस्य वाहिनीम्। प्राङ्मुखाः पश्चिमे
भागे न्यविशन्त ससैनिकाः ॥ ५ ॥ स्यमन्तपञ्चकाद्बाह्यं शिविराणि
सहस्रशः। कारयामास विधिवत् कुन्तीपुत्रो युधिष्ठिरः ॥ ६ ॥
शून्या च पृथिवी सर्वा बालवृद्धावशेषिता। निरश्वपुरुषेवाभू-
द्रथकुञ्जरवर्ज्जिता ॥ ७ ॥ यावत्तपति सूर्य्यो हि जम्बुद्वीपस्य-
मण्डलम्। तावदेव समायातं बलं पार्थिवसत्तम ॥ ८ ॥ एकस्थाः
सर्ववर्णास्ते मण्डलं बहुयोजनम्। पर्य्याक्रामन्त देशांश्च नदीः
शैलान् वनानि च ॥ ९ ॥ तेषां युधिष्ठिरो राजा सर्वेषां पुरुष-
र्षभ। व्यादिदेश सवाहानां भक्ष्यभोज्यमनुत्तमम् ॥ १० ॥

हयानां दशकोटाश्च महतां किङ्किणीकिनाम् । गजा विंशति-
साहस्रा ईषादन्ताः प्रहारिणः ॥ ३० ॥ कुलीना भिन्नकरटा
मेघा इव विसर्पिणः । षष्टिर्नागसहस्राणि दशान्यानि च भारत
॥ ३१ ॥ युधिष्ठिरस्य यान्यासन् युधि सेनासु सत्तम । क्षरन्त
इव जीमूताः प्रभिन्नकरटामुखाः ॥ ३२ ॥ राजानमन्वयु पश्चा-
च्चलन्त इव पर्वता । एवं तस्य बलं भीमं कुन्तीपुत्रस्य धीमत
॥ ३३ ॥ तदाश्रित्याथ युयुधे धार्त्तराष्ट्रं सुयोधनम् । ततोऽन्ये
शतशः पश्चात् सहस्रायुतशो नरा ॥ ३४ ॥ नर्द्दन्तः प्रययुस्तेषा-
मनीकानि सहस्रशः । तत्र भेरीसहस्राणि शङ्खानामयुतानि च ।
न्यवादयन्त संहृष्टाः सहस्रायुतशो नराः ॥ ३५ ॥

इति उद्योगपर्वणि अम्बोपाख्यानपर्वणि पाण्डवसैन्यनिर्याणे
सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥

---

समाप्तञ्चेदमुद्योगपर्व ॥

---

# श्रीमहाभारतम्।

## भीष्मपर्व्व ॥

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ॥

जनमेजय उवाच। कथं युयुधिरे वीराः कुरुपाण्डवसोमकाः। पार्थिवाः सुमहात्मानो नानादेशसमागताः ॥ १ ॥

वैशम्पायन उवाच। यथा युयुधिरे वीरा कुरुपाण्डवसोमकाः। कुरुक्षेत्रे तपःक्षेत्रे शृणु त्वं पृथिवीपते ॥ २ ॥ अवतीर्य्य कुरुक्षेत्रं पाण्डवाः सहसोमकाः। कौरवानभ्यवर्त्तन्त जिगीषन्तो महाबलाः ॥ ३ ॥ वेदाध्ययनसम्पन्नाः सर्व्वे युद्धाभिनन्दिनः। आशंसन्तो जयं युद्धे बलेनाभिमुखा रणे ॥ ४ ॥ अभियाय दुराधर्षां धार्त्तराष्ट्रस्य वाहिनीम्। प्राङ्मुखाः पश्चिमे भागे न्यविशन्त ससैनिकाः ॥ ५ ॥ स्यमन्तपञ्चकाद्वाह्यं शिविराणि सहस्रशः। कारयामास विधिवत् कुन्तीपुत्रो युधिष्ठिरः ॥ ६ ॥ शून्या च पृथिवी सर्व्वा बालवृद्धावशेषिता। निरश्वपुरुषेवासीद्रथकुञ्जरवर्ज्जिता ॥ ७ ॥ यावत्तपति सूर्य्यो हि जम्बुद्वीपस्य मण्डलम्। तावदेव समायातं बलं पार्थिवसत्तम ॥ ८ ॥ एकस्थाः सर्व्ववर्णास्ते मण्डलं बहुयोजनम्। पर्य्याक्रामन्त देशांश्च नदीः शैलान् वनानि च ॥ ९ ॥ तेषां युधिष्ठिरो राजा सर्व्वेषां पुरुषर्षभ। आदिदेश सवाहानां भक्ष्यभोज्यमनुत्तमम् ॥ १० ॥

संज्ञाय विविधास्तास्तास्तेषाञ्चक्रे युधिष्ठिरः । एवंवादी वेदितव्य पाण्डवेयोऽयमित्युत ॥ ११ ॥ अभिज्ञानानि सर्वेषां संज्ञाश्चाभरणानि च । योजयामास कौरव्यो युद्धकाल उपस्थिते ॥ १२ ॥ दृष्ट्वा ध्वजाग्रं पार्थस्य धार्त्तराष्ट्रो महामना । सह सर्वैर्महीपालैः प्रत्यव्यूहत पाण्डवम् ॥ १३ ॥ पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्द्धनि । मध्ये नागसहस्रस्य भ्रातृभिः परिवारितः ॥ १४ ॥ दृष्ट्वा दुर्योधनं हृष्टाः पाञ्चाला युद्धनन्दिनः । दध्मुः शङ्खान् महारावान् भेरीश्च मधुरस्वनाः ॥ १५ ॥ ततः प्रहृष्टां तां सेनामभिप्रेक्ष्याथ पाण्डवाः । बभूवुर्हृष्टमनसो वासुदेवश्च वीर्य्यवान् ॥ १६ ॥ ततो हर्षं समागम्य वासुदेवधनञ्जयौ । दध्मतुः पुरुषव्याघ्रौ दिव्यौ शङ्खौ रथे स्थितौ ॥ १७ ॥ पाञ्चजन्यस्य निर्घोषं देवदत्तस्य चोभयोः । श्रुत्वा तु निनदं योधाः शकृन्मूत्रं प्रसस्रुवुः ॥ १८ ॥ यथा सिंहस्य नदतः स्वनं श्रुत्वेतरे मृगाः । त्रसेयुर्निनदं श्रुत्वा तथासीत्तद्बलम् ॥ १९ ॥ उदतिष्ठद्रजो भौमं न प्राज्ञायत किञ्चन । अन्तर्हितो दिवाकरः सैन्येन रजसावृतः ॥ २० ॥ ववर्ष तत्र पर्ज्जन्यो मांसशोणितवृष्टिमान् । दिशः सर्वाणि सैन्यानि तदद्भुतमिवाभवत् ॥ २१ ॥ वायुस्ततः प्रादुरभूत् नीचैः शर्करकर्षणः । विनिघ्नंस्तान्यनीकानि शतशोऽथ सहस्रशः ॥ २२ ॥ उभे सैन्ये च राजेन्द्र युद्धाय मुदिते भृशम् । कुरुक्षेत्रे स्थिते यत्ते सागरक्षुभितोपमे ॥ २३ ॥ तयोस्तु सेनयोरासीदद्भुतः स तु सङ्गमः । युगान्ते समनुप्राप्ते द्वयोः सागरयोरिव ॥ २४ ॥ शून्यासीत् पृथिवी सर्वा बालवृद्धावशेषिता । तेन सेनासमूहेन समानीतेन कौरवैः ॥ २५ ॥ ततस्ते समयं चक्रुः कुरुपाण्डवसोमकाः । धर्म्मान् संस्थापयामासुर्युद्धानां भरतर्षभ ॥ २६ ॥ निवृत्ते विहिते युद्धे स्यात् प्रीतिर्नः परस्परम् । यथापुरं यथायोगं न च स्याच्छलनं पुनः ॥ २७ ॥ वाचा युद्धे प्रवृ

त्तानां वाचैव प्रतियोधनम्। निष्क्रान्ताः पृतनामध्यान्न हन्तव्याः
कदाचन ॥ २८ ॥ रथी च रथिना योध्यो गजेन गजधूर्गतः।
अश्वेनाश्वो पदातिश्च पादातेनैव भारत ॥ २९ ॥ यथायोग्यं
यथाकामं यथोत्साहं यथाबलम्। समाभाष्य प्रहर्त्तव्यं न विश्वस्ते
न विह्वले ॥ ३० ॥ एकेन सह संयुक्तः प्रपन्नो विमुखस्तथा।
क्षीणशस्त्रो विवर्मा च न हन्तव्यः कदाचन ॥ ३१ ॥ न सूतेषु न
धुर्य्येषु न च शस्त्रोपजीविषु। न भेरीशङ्खवादेषु प्रहर्त्तव्यं कथ-
ञ्चन ॥ ३२ ॥ एवन्ते समयं कृत्वा कुरुपाण्डवसोमकाः। विस्मयं
परमं जग्मुः प्रेक्षमाणाः परस्परम् ॥ ३३ ॥ निविश्य च महा-
त्मानस्ततस्ते पुरुषर्षभाः। हृष्टरूपाः सुमनसो बभूवुः सह-
सैनिकाः ॥ ३४ ॥

इति भीष्मपर्वणि जम्बूखण्डविनिर्माणपर्वणि सैन्यशिक्षायां
प्रथमोऽध्यायः ॥ १ ॥

---

वैशम्पायन उवाच। ततः पूर्वापरे सन्ध्ये समीक्ष्य भगवा-
नृषिः। सर्ववेदविदां श्रेष्ठो व्यासः सत्यवतीसुतः ॥ १ ॥ भवि-
ष्यति रणे घोरे भरतानां पितामहः। प्रत्यक्षदर्शी भगवान् भूत-
भव्यभविष्यवित् ॥ २ ॥ वैचित्रवीर्य्यं राजानं स रहस्यब्रवीदिदम्।
शोचन्तमार्त्तं ध्यायन्तं पुत्राणामनयं तदा ॥ ३ ॥

व्यास उवाच। राजन् परीतकालास्ते पुत्राश्चान्ये च पार्थिवाः।
ते हिंसन्तीव संग्रामे समासाद्येतरेतरम् ॥ ४ ॥ तेषु कालपरी-
तेषु विनश्यत्स्वेव भारत। कालपर्य्यायमाज्ञाय मास्म शोके मनः
कृथाः ॥ ५ ॥ यदि चेच्छसि संग्रामे द्रष्टुमेतान् विशाम्पते।
चक्षुर्ददामि ते पुत्र युद्धं तत्र निशामय ॥ ६ ॥

धृतराष्ट्र उवाच। न रोचये ज्ञातिवधं द्रष्टुं ब्रह्मर्षिसत्तम। युद्धमेतत्त्वशेषेण शृणुयां तव तेजसा ॥ ७ ॥

वैशम्पायन उवाच। एतस्मिन्नेच्छति द्रष्टुं संग्रामं श्रोतुमिच्छति। वराणामीश्वरो दाता सञ्जयाय वरं ददौ ॥ ८ ॥ एष ते सञ्जयो राजन् युद्धमेतद्वदिष्यति। प्रकाशं वाप्रकाशं वा दिवा वा यदि वा निशि ॥ ९ ॥ मनसा चिन्तितमपि सर्वं वेत्स्यति सञ्जयः। नैनं शस्त्राणि छेत्स्यन्ति नैनं बाधिष्यते श्रमः ॥ १० ॥ गावल्गणिरयं जीवन् युद्धादस्माद्विमोक्ष्यते। अहन्तु कीर्त्तिमेतेषां कुरूणां भरतर्षभ ॥ ११ ॥ पाण्डवानाञ्च सर्वेषां प्रथयिष्यामि मा शुचः। दिष्टमेतन्नरव्याघ्र नाभिशोचितुमर्हसि। न चैव शक्यं संयन्तुं यतो धर्मस्ततो जयः ॥ १२ ॥

वैशम्पायन उवाच। एवमुक्त्वा स भगवान् कुरूणां प्रपितामहः। पुनरेव महाभागो धृतराष्ट्रमुवाच ह ॥ १३ ॥ इह युद्धे महाराज भविष्यति महान् क्षयः। तथेह च निमित्तानि भयदान्युपलक्षये ॥ १४ ॥ श्येना गृध्राश्च काकाश्च कङ्काश्च सहिता बकैः। सम्पतन्ति नगाग्रेषु समवायांश्च कुर्वते ॥ १५ ॥ अभ्यग्रं च प्रपश्यन्ति युद्धमानन्दिनो द्विजाः। क्रव्यादा भक्षयिष्यन्ति मांसानि गजवाजिनाम् ॥ १६ ॥ निर्दयं चाभिवाशन्तो भैरवा भयवेदिनः। कङ्का प्रयान्ति मध्येन दक्षिणामभितो दिशम् ॥ १७ ॥ उभे पूर्वापरे सन्ध्ये नित्यं पश्यामि भारत। उदयास्तमने सूर्यं कबन्धैः परिवारितम् ॥ १८ ॥ श्वेतलोहितपर्यन्ताः कृष्णग्रीवाः सविद्युतः। त्रिवर्णाः परिघाः सन्धौ भानुमन्तमवारयन् ॥ १९ ॥ ज्वलितार्केन्दुनक्षत्रं निर्विशेषदिनक्षयम्। अहोरात्रं मया दृष्टं तत्क्षयाय भविष्यति ॥ २० ॥ अलक्ष्यः प्रभया हीनः पौर्णमास्याञ्च कार्त्तिके। चन्द्रोऽभूदग्निवर्णश्च पद्मवर्णे नभस्तले ॥ २१ ॥ स्वप्स्यन्ति निहता वीरा भूमिमावृत्य पार्थिवाः। राजानो राज

पुत्राश्च शूरा: परिघबाहव: ॥ २२ ॥ अन्तरीचे वराहस्य वृषदंशस्य चोभयो:। प्रणादं युध्यतो रात्रौ रौद्रं नित्यं प्रजाच्चये ॥ २३ ॥ देवताप्रतिमाश्चैव कम्पन्ति च हसन्ति च। वमन्ति रुधिरं चास्यै खिद्यन्ति प्रपतन्ति च ॥ २४ ॥ अनाहता दुन्दुभय: प्रणदन्ति विशाम्पते। अयुक्ताश्च प्रवर्त्तन्ते चत्रियाणां महारथा: ॥ २५ ॥ कोकिला: शतपत्राश्च चाषा भासा: शुकास्तथा। सारसाश्च मयूराश्च वाचो मुञ्चन्ति दारुणा: ॥ २६ ॥ गृहीतशस्त्रा: क्रोशन्ति चर्म्मिणो वाजिपृष्ठगा:। अरुणोदये प्रदृश्यन्ते शतश: शलभव्रजा: ॥ २७ ॥ उभे सन्ध्ये प्रकाशेते दिशो दाहसमन्विते। पर्ज्जन्य: पांशुवर्षी च मांसवर्षी च भारत ॥ २८ ॥ या चैषा विश्रुता राजंस्त्रैलोक्ये साधुसम्मता। अरुन्धती तयाप्येष वशिष्ठ: पृष्ठत: कृत: ॥ २९ ॥ रोहिणीं पीडयन्नेष स्थितो राजन् शनैश्चर:। व्यावृत्तं लक्ष्म सोमस्य भविष्यति महद्भयम् ॥३०॥ अनभ्रे च महाघोर: स्तनित: श्रूयते स्वन:। वाहनानाञ्च रुदतां निपतन्त्यश्रुबिन्दव: ॥ ३१ ॥

इति भीष्मपर्वणि जम्बूखण्डविनिर्माणपर्वणि श्रीव्यासदर्शने द्वितीयोऽध्याय: ॥ २ ॥

---

वै ब्रह्मवादिनाम्। वैनतेया मयूरांश्च जनयन्ति पुरे तव ॥ ५ ॥
गोवत्सं वड़वा सूते श्वा शृगालं महीपते। क्रकरान् करभाश्चैव
शुकांश्चाशुभवादिनः ॥ ६ ॥ स्त्रियः काश्चित् प्रजायन्ते चतस्रः
पञ्च कन्यकाः। जातमात्राश्च नृत्यन्ति गायन्ति च हसन्ति च ॥७॥
पृथक्जनस्य सर्वस्य क्षुद्रकाः प्रहसन्ति च। नृत्यन्ति परिगायन्ति
वेदयन्तो महद्भयम् ॥ ८ ॥ प्रतिमाश्चालिखन्त्येते सशस्त्राः काल-
चोदिताः। अन्योऽन्यमभिधावन्ति शिशवो दण्डपाणयः ॥ ९ ॥
अन्योऽन्यमभिमर्द्दन्ति नगराणि युयुत्सवः। पद्मोत्पलानि वृक्षेषु
जायन्ते कुमुदानि च ॥ १० ॥ विष्वग्वाताश्च वान्त्युग्रा रजो
नाप्युपशाम्यति। अभीक्ष्णं कम्पते भूमिरर्कं राहुरुपैति च ॥ ११ ॥
श्वेतो ग्रहस्तथा चित्रां समतिक्रम्य तिष्ठति। अभावं हि विशे-
षेण कुरूणां तत्र पश्यति ॥ १२ ॥ धूमकेतुर्महाघोरः पुष्यञ्चाक्रम्य
तिष्ठति। सेनयोरशिवं घोरं करिष्यति महाग्रहः ॥ १३ ॥ मघा-
स्वङ्गारको वक्रः श्रवणे च बृहस्पतिः। भगं नक्षत्रमाक्रम्य सूर्य-
पुत्रेण पीड्यते ॥ १४ ॥ शुक्रः प्रोष्ठपदे पूर्वे समारुह्य विरोचते।
उत्तरे तु परिक्रम्य सहितः समुदीक्ष्यते ॥ १५ ॥ श्वेतो ग्रहः
प्रज्वलितः सधूम इव पावकः। ऐन्द्रं तेजस्विनक्षत्रं ज्येष्ठा-
माक्रम्य तिष्ठति ॥ १६ ॥ ध्रुवः प्रज्वलितो घोरमपसव्यं प्रव-
र्त्तते। रोहिणीं पीड़यन्त्यो तावुभौ च शशिभास्करौ ॥ १७ ॥
चित्रास्वात्यन्तरे चैव धिष्ठितः परुषग्रहः। वक्रानुवक्रं कृत्वा च
श्रवणं पावकप्रभः ॥ १८ ॥ ब्रह्मराशिं समावृत्य लोहिताङ्गो
व्यवस्थितः। सर्वसस्यपरिच्छिन्ना पृथिवी सस्यमालिनी ॥ १९ ॥
पञ्चशीर्षा यवाश्चापि शतशीर्षाश्च शालयः। प्रधाना सर्वलोकस्य
यदायत्तमिदं जगत् ॥ २० ॥ ता गावः प्रस्नुता वत्सैः शोणितं
प्रक्षरन्त्युत। निश्चेरुरर्चिषश्चापात् खड्गाश्च ज्वलिता भृशम्
॥ २१ ॥ व्यक्तं पश्यन्ति शस्त्राणि संग्रामं समुपस्थितम्। अग्नि-

वर्णा यथाभागः शस्त्राणामुदकस्य च ॥ २२ ॥ कवचानां ध्वजा'नाञ्च भविष्यति महान् क्षयः। पृथिवी शोणितावर्त्ता ध्वजोड़ुपसमाकुला ॥ २३ ॥ कुरूणां वैशसे राजन् पाण्डवैः सह भारत। दिक्षु प्रज्वलितास्याश्च व्याहरन्ति मृगद्विजाः ॥ २४ ॥ अत्याहितं दर्शयन्तो वेदयन्तो महद्भयम्। एकपक्षाक्षिचरणः शकुनिः खचरो निशि ॥ २५ ॥ रौद्रं वदति संरब्धः शोणितं छर्द्दयन्निव। शस्त्राणि चैव राजेन्द्र प्रज्वलन्तीव संप्रति ॥ २६ ॥ सप्तर्षीणामुदाराणां समवच्छाद्यते प्रभा। सम्वत्सरस्थायिनौ च ग्रहौ प्रज्वलितावुभौ ॥ २७ ॥ विशाखायाः समीपस्थौ बृहस्पतिशनैश्चरौ। शशोभिता दिशः सर्वाः पांशुवर्षैः समन्ततः ॥ २८ ॥ उत्पातमेघा रौद्राश्च रात्रौ वर्षन्ति शोणितम्। कृत्तिकां पीड़यंस्तीक्ष्णैर्नक्षत्रं पृथिवीपते ॥ २९ ॥ अभीक्ष्णवाता वायन्ते धूमकेतुमवस्थिताः। विषमं जनयन्त्येते आक्रन्दजननं महत् ॥ ३० ॥ त्रिषु सर्वेषु पूर्वेषु नक्षत्रेषु विशाम्पते। गृध्राः सम्पतते शीर्षं जनयन् भयमुत्तमम् ॥ ३१ ॥ चतुर्द्दशीं पञ्चदशीं भूतपूर्वाञ्च षोड़शीम्। चन्द्रसूर्य्यावुभौ ग्रस्तावेकमासीं त्रयोदशीम् ॥ ३२ ॥ अपर्वणि ग्रहावेतौ प्रजासङ्क्षयिष्यतः। शोणितैर्वक्त्रसम्पूर्णा अत्यप्तास्तत्र राक्षसाः ॥ ३३ ॥ प्रतिस्रोतो महानद्यः सरितः शोणितोदकाः। फेनायमानाः कूपाश्च कूर्द्दन्ति वृषभा इव ॥ ३४ ॥ पतन्त्युल्काः सनिर्घाताः शक्राशनिसमप्रभाः। अद्य चैव निशां व्युष्टामनयं समवाप्स्यथ ॥ ३५ ॥ विनिःसृत्य महोल्काभिस्तिमिरं सर्वतो दिशम्। अन्योऽन्यमुपतिष्ठद्भिस्तत्र चोक्तं महर्षिभिः ॥ ३६ ॥ भूमिपालसहस्राणां भूमिः पास्यति शोणितम्। कैलासमन्दाराभ्यान्तु तथा हिमवतो गिरेः ॥ ३७ ॥ सहस्रशो महाशब्दं शिखराणि पतन्ति च। महाभूता भूमिकम्पे चत्वारः सागराः पृथक् ॥ ३८ ॥ वेलामुद्वर्त्तयन्तीव क्षोभयन्तो वसुन्धराम्। वृक्षान् प्रमथ्य वान्त्युग्रा वाताः शर्कर-

कम्पिता ॥ ३८ ॥ अभस्मा सुमहावातैरशनीभिः समाहता। वृक्षा पतन्ति चैत्याश्च ग्रामेषु नगरेषु च ॥ ४० ॥ नीललोहित पीताश्च भवत्यग्निर्हुतो द्विजैः। वामार्चिर्दुष्टगन्धश्च सुञ्चन् वै दारुण स्वनम् ॥ ४१ ॥ स्पर्शा गन्धा रसाश्चैव विपरीता महीपते। धूम ध्वजा प्रमुह्यन्ति कम्पमाना मुहुर्मुहुः ॥ ४२ ॥ मुञ्चन्त्यङ्गारवर्षञ्च भेर्यश्च पटहास्तथा। शिखराणां सम्हानामुपरिष्टात् समन्तत ॥ ४३ ॥ वायसाश्च सुवन्त्युग्र वाम मण्डलमाश्रिता। पक्षापक्षेति सुभृशं गवाश्यन्ते वयांसि च ॥ ४४ ॥ निलीयन्ते ध्वजाग्रेषु क्षयाय पृथिवीक्षिताम। ध्यायन्त प्रकिरन्तश्च व्याला वेपथुसंयुता ॥४५॥ दीनास्तुरङ्गमा सर्वे वारणा सलिलाश्रया। एतच्छ्रुत्वा भवा नत्र प्राप्तकालं व्यवस्यताम्। यथा लोक समुच्छेदं नायं गच्छेत भारत ॥ ४६ ॥

वैशम्पायन उवाच। पितुर्वचो निशम्यैतं धृतराष्ट्रोऽब्रवी दिदम। दिष्टमेतत् पुरा मन्ये भविष्यति नरक्षय ॥४७॥ राजान क्षत्रधर्मेण यद्यवध्यन्त सयुगे। वीरलोक समासाद्य सुख प्राप् स्यन्ति केवलम ॥ ४८ ॥ इह कीर्त्तिं परे लोके दीर्घकाल महा सुखम। प्राप्स्यन्ति पुरुषव्याघ्रा प्राणास्त्यक्त्वा महाहवे ॥ ४९ ॥

वैशम्पायन उवाच। एव मुनिस्तथेत्युक्ता कवीन्द्रो राज सत्तम। धृतराष्ट्रेण पुत्रेण ध्यानमन्वगमत परम् ॥ ५० ॥ स मुहूर्त्तं तथा ध्यात्वा पुनरेवाब्रवीत वच। असशय पार्थिवेन्द्र काल सङ्क्षयते जगत ॥ ५१ ॥ सृजते च पुनर्लोकान् नेह विद्यति शाश्वतम्। ज्ञातीनाञ्च कुरूणाञ्च सम्बन्धिसुहृदान्तथा ॥ ५२ ॥ धर्म्यं देशय पन्थान समर्थो ह्यसि वारणे। क्षुद्र ज्ञातिवध प्राह्न मां कुरुष्व ममाप्रियम ॥ ५३ ॥ कालोऽयं पुत्ररूपेण तव जातो विशाम्पते। न वधो पूज्यते वेदे हितं नैव कथञ्चन ॥ ५४ ॥ हन्यात् स एन यो हन्यात कुलधर्म स्वका तनुम्। काले नोपथ

भन्तासि शक्ये सति यथापदि ॥ ५५ ॥ कुलस्यास्य विनाशाय तथैव च महीक्षिताम् । अनर्थो राज्यरूपेण तव जातो विशा-म्पते ॥ ५६ ॥ लुप्तधर्मा परेणासि धर्मं दर्शय वै सुतान् । किन्ते राज्येन दुर्धर्षं येन प्राप्तोऽसि किल्विषम् ॥ ५७ ॥ यशो धर्मञ्च कीर्त्तिञ्च पालय स्वर्गमाप्स्यसि । लभन्तां पाण्डवा राज्यं शमं गच्छन्तु कौरवाः ॥ ५८ ॥ एवं ब्रुवति विप्रेन्द्रे धृतराष्ट्रोऽम्बिका-सुतः । आक्षिप्य वाक्यं वाक्यज्ञो वाक्यज्ञैवाब्रवीत् पुनः ॥ ५९ ॥

धृतराष्ट्र उवाच । यथा भवान् वेत्ति तथैव वेत्ता भावाभावौ विदितौ मे यथार्थौ । स्वार्थे हि संमुह्यति तात लोको माञ्चापि लोकात्मकमेव विद्धि ॥ ६० ॥ प्रसादये त्वामतुलप्रभाव त्वं नो गतिर्दर्शयिता च धीरः । न चापि ते मद्वशगा महर्षेऽनुग्रह कर्त्तु-मर्हो हि मे मतिः ॥ ६१ ॥ त्वं हि धर्म्मप्रवृत्तिश्च यशः कीर्त्तिश्च भारती । कुरूणां पाण्डवानाञ्च मान्यश्चापि पितामहः ॥ ६२ ॥

व्यास उवाच । वैचित्रवीर्य्य नृपते यत्ते मनसि वर्त्तते । अभिधत्स्व यथाकामं छेत्तास्मि तव संशयम् ॥ ६३ ॥

धृतराष्ट्र उवाच । यानि लिङ्गानि संग्रामे भवन्ति विजयि-ष्यताम् । तानि सर्वाणि भगवन् श्रोतुमिच्छामि तत्त्वतः ॥ ६४ ॥

व्यास उवाच । प्रसन्नभा पावक ऊर्द्धरश्मिः प्रदक्षिणावर्त्त-शिखो विधूमः । पुण्या गन्धाश्चाहुतीनां भवन्ति जयस्यैतत् भाविनो रूपमाहुः ॥ ६५ ॥ गम्भीरघोषाश्च महास्वनाश्च शङ्खा मृदङ्गाश्च नदन्ति यत्र । विशुद्धरश्मिस्तपनः शशी च जयस्यैतत् भाविनो रूपमाहुः ॥ ६६ ॥ इष्टा वाचः प्रसृता वायसानां स-म्प्रस्थितानाञ्च गमिष्यताञ्च । ये पृष्ठतस्ते त्वरयन्ति राजन् ये चाग्रतस्ते प्रतिबोधयन्ति ॥ ६७ ॥ कल्याणवाचः शकुना राज-हंसाः शुकाः क्रौञ्चाः शतपत्राश्च यत्र । प्रदक्षिणाश्चैव भवन्ति सङ्ख्ये ध्रुवं जयस्तत्र वदन्ति विप्राः ॥ ६८ ॥ अलङ्कारैः कवचैः

केतुभिश्च सुखप्रणादैर्हर्षितैर्वा हयानाम्। भ्राजिष्मतो दुष्प्रतिवीक्षणीया येषाञ्चमूस्ते विजयन्ति शत्रून्॥ ६९॥ हृष्टा वाचस्तथा सत्त्वं योधानां यत्र भारत। न म्लायन्ति स्रजश्चैव ते तरन्ति रणोदधिम्॥ ७०॥ इष्टा वाचः प्रविष्टस्य दक्षिणाः प्रविविक्षतः। पश्चात् सन्धारयन्त्यर्थमग्रे च प्रतिषेधिकाः॥ ७१॥ शब्दरूपरसस्पर्शगन्धाश्चाविकृताः शुभाः। सदा हर्षश्च योधानां जयतामिह लक्षणम्॥ ७२॥ अनुगा वायवो वान्ति तथाभ्राणि वयांसि च। अनुप्लवन्ति मेघाश्च तथैवेन्द्रधनूंषि च॥ ७३॥ एतानि जयमानानां लक्षणानि विशाम्पते। भवन्ति विपरीतानि मुमूर्षूणां जनाधिप॥ ७४॥ अल्पायां वा महत्यां वा सेनायामिति निश्चयः। हर्षो योधगुणस्यैको जयलक्षणमुच्यते॥ ७५॥ एको दीर्णो दारयति सेनां सुमहतीमपि। तां दीर्णामनुदीर्यन्ते योधाः शूरतरा अपि॥ ७६॥ दुर्निवर्त्तया तदा चैव प्रभग्ना महती चमूः। अपामिव महावेगा त्रस्ता मृगगणा इव॥ ७७॥ नैव शक्या समाधातुं सन्निपाते महाचमूः। दीर्णामित्येव दीर्यन्ते सुविद्वांसोऽपि भारत॥ ७८॥ भीतान् भग्नांश्च सम्प्रेक्ष्य भयं भूयोऽभिवर्द्धते। प्रभग्ना सहसा राजन् दिशो विद्रवते चमूः॥ ७९॥ नैव स्थापयितुं शक्या शूरैरपि महाचमूः। संभृत्य महतीं सेनां चतुरङ्गां महीपते॥ ८०॥ उपायं विजयं श्रेष्ठमाहुर्भेदेन मध्यमम्। जघन्य एष विजयो यो युद्धेन विशाम्पते॥ ८१॥ महान् दोषः सन्निपातस्ततःस्यात्क्षय उच्यते। परस्परज्ञाः संहृष्टाः व्यवधूताः सुनिश्चिताः॥ ८२॥ अपि पञ्चाशतं शूरा मृद्नन्ति महतीं चमूम्। अपि वा पञ्च षट् सप्त विजयन्त्यनिवर्त्तिनः॥ ८३॥ न वैनतेयो गरुड़ः प्रशंसति महाजनम्। दृष्ट्वा सुपर्णोऽपचितिं महत्या अपि भारत॥ ८४॥ न बाहुल्येन सेनाया जयो भवति नित्यशः। अध्रुवो

हि जयो नाम दैवस्याव परायणम्। जयवन्तो हि संग्रामे चयवन्तो भवन्ति हि ॥ ८५ ॥

इति भीष्मपर्व्वणि जम्बूखण्डविनिर्म्माणपर्व्वणि निमित्ताख्याने तृतीयोऽध्यायः ॥ ३ ॥

---

वैशम्पायन उवाच। एवमुक्त्वा ययौ व्यासो धृतराष्ट्राय धीमते। धृतराष्ट्रोऽपि तच्छ्रुत्वा ध्यानमेवान्वपद्यत ॥ १ ॥ स मुहूर्त्तमिव ध्यात्वा विनिःश्वस्य मुहुर्मुहुः। सञ्जयं संशितात्मानमपृच्छत भरतर्षभ ॥ २ ॥ सञ्जयेमे महीपालाः शूरा युद्धाभिनन्दिनः। अन्योऽन्यमभिनिघ्नन्ति शस्त्रैरुच्चावचैरिह ॥३॥ पार्थिवाः पृथिवीहेतोः समभित्यज्य जीवितम्। न च शाम्यन्ति निघ्नन्तो वर्द्धयन्ति यमक्षयम् ॥ ४ ॥ भौममैश्वर्य्यमिच्छन्तो न मृष्यन्ते परस्परम्। मन्ये बहुगुणा भूमिं तन्ममाचक्ष्व सञ्जय ॥ ५ ॥ बहूनि च सहस्राणि प्रयुतान्यर्बुदानि च। कोट्यश्च वीरलोकानां समेताः कुरुजाङ्गले ॥ ६ ॥ देशानाञ्च परीमाणं नगराणाञ्च सञ्जय। श्रोतुमिच्छामि तत्त्वेन यत एते समागताः ॥ ७ ॥ दिव्यबुद्धिप्रदीपेन युक्तस्त्वं ज्ञानचक्षुषा। प्रभावात्तस्य विप्रर्षेर्व्यासस्यामिततेजसः ॥ ८ ॥

सञ्जय उवाच। यथाप्रज्ञं महाप्राज्ञ भौमान् वक्ष्यामि ते गुणान्। शास्त्रचक्षुरवेक्षस्व नमस्ते भरतर्षभ ॥ ९ ॥ द्विविधानीह भूतानि चराणि स्थावराणि च। त्रसाणां त्रिविधा योनिरण्डस्वेदजरायुजाः ॥ १० ॥ त्रसाणां खलु सर्व्वेषां श्रेष्ठा राजन् जरायुजाः। जरायुजानां प्रवरा मानवाः पशवश्च ये ॥ ११ ॥ नानारूपधरा राजंस्तेषां भेदाश्चतुर्द्दश। अरण्यवासिनः सप्त स्वेषां ग्रामवासिनः ॥ १२ ॥ सिंहा व्याघ्रा वराहाश्च महिषा

वारणास्तथा। ऋक्षाश्च वानराश्चैव सप्तारण्याः स्मृता नृप ॥१३॥
गौरजाविमनुष्याश्च अश्वाश्वतरगर्दभाः। एते ग्राम्याः समाख्याताः पशवः सप्त साधुभिः ॥१४॥ एते वै पशवो राजन् ग्राम्यारण्याश्चतुर्दश। वेदोक्ताः पृथिवीपाल येषु यज्ञाः प्रतिष्ठिताः ॥१५॥ ग्राम्याणां पुरुषाः श्रेष्ठाः सिंहाश्चारण्यवासिनाम्। सर्वेषामेव भूतानामन्योऽन्येनोपजीवनम् ॥१६॥ उद्भिज्जाः स्थावराः प्रोक्तास्तेषां पञ्चैव जातयः। वृक्षगुल्मलतावल्ल्यस्त्वक्सारास्तृणजातयः ॥१७॥ तेषां विंशतिरेकोना महाभूतेषु पञ्चसु। चतुर्विंशतिरुद्दिष्टा गायत्री लोकसम्मता ॥१८॥ य एतां वेद गायत्रीं पुण्यां सर्वगुणान्विताम्। तत्त्वेन भरतश्रेष्ठ स लोके न प्रणश्यति ॥१९॥ भूमौ च जायते सर्वं भूमौ सर्वं विनश्यति। भूमिः प्रतिष्ठा भूतानां भूमिरेव सनातनम् ॥२०॥ यस्य भूमिस्तस्य सर्वं जगत् स्थावरजङ्गमम्। तत्राभिगृद्धा राजानो विनिघ्नन्तीतरेतरम् ॥२१॥

इति भीष्मपर्वणि जम्बूखण्डविनिर्माणपर्वणि भौमगुणकथने चतुर्थोऽध्यायः ॥४॥

---

धृतराष्ट्र उवाच। नदीनां पर्वतानाञ्च नामधेयानि सञ्जय। तथा जनपदानाञ्च ये चान्ये भूमिमाश्रिताः ॥१॥ प्रमाणञ्च प्रमाणज्ञ पृथिव्या मम सर्वतः। निखिलेन समाचक्ष्व काननानि च सञ्जय ॥२॥

सञ्जय उवाच। पञ्चेमानि महाराज महाभूतानि सङ्ग्रहात्। जगतीस्थानि सर्वाणि समान्याहुर्मनीषिणः ॥३॥ भूमिरापस्तथा वायुरग्निराकाशमेव च। गुणोत्तराणि सर्वाणि तेषां भूमिः प्र[illegible] ॥४॥ शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च पञ्चमः।

भूमेरेते गुणा प्रोक्ता ऋषिभिस्तत्त्ववेदिभिः ॥ ५ ॥ चत्वारोऽप्सु गुणा राजन् गन्धस्तत्र न विद्यते । शब्दः स्पर्शश्च रूपञ्च तेजसोऽथ गुणास्त्रयः ॥ ६ ॥ शब्दः स्पर्शश्च वायोस्तु आकाशे शब्द एव तु । एते पञ्च गुणा राजन् महाभूतेषु पञ्चसु ॥ ७ ॥ वर्त्तन्ते सर्वलोकेषु येषु भूताः प्रतिष्ठिताः । अन्योऽन्येनाभिवर्त्तन्ते साम्यं भवति वै यदा ॥ ८ ॥ यदा तु विषमीभावमाविशन्ति परस्परम् । तदा देहैर्देहवन्तो व्यतिरोहन्ति नान्यथा ॥ ९ ॥ आनुपूर्व्या विनश्यन्ति जायन्ते चानुपूर्व्वशः । सर्वाण्यपरिमेयाणि तदेषां रूपमैश्वरम् ॥ १० ॥ तत्र तत्र हि दृश्यन्ते धातवः पाञ्चभौतिकाः । तेषां मनुष्यास्तर्केण प्रमाणानि प्रचक्षते ॥ ११ ॥ अचिन्त्याः खलु ये भावा न तांस्तर्केण साधयेत् । प्रकृतिभ्यः परं यत्तु तदचिन्त्यस्य लक्षणम् ॥ १२ ॥ सुदर्शनं प्रवक्ष्यामि द्वीपन्तु कुरुनन्दन । परिमण्डलो महाराज द्वीपोऽसौ चक्रसंस्थितः ॥ १३ ॥ नदीजलप्रतिच्छन्नः पर्वतैश्चाभ्रसन्निभैः । पुरैश्च विविधाकारै रम्यैर्जनपदैस्तथा ॥ १४ ॥ वृक्षैः पुष्पफलोपेतैः सम्पन्नधनधान्यवान् । लवणेन समुद्रेण समन्तात् परिवारितः ॥ १५ ॥ यथा हि पुरुषः पश्येदादर्शे मुखमात्मनः । एवं सुदर्शनद्वीपो दृश्यते चन्द्रमण्डले ॥ १६ ॥ द्विरंशे पिप्पलस्तत्र द्विरंशे च शशो महान् । सर्वौषधिसमावापैः सर्वतः परिवारितः ॥१७॥ आपस्ततोऽन्या विज्ञेयाः शेषः सङ्क्षेप उच्यते । ततोऽन्य उच्यते चायमेनं संक्षेपतः शृणु ॥ १८ ॥

इति भीष्मपर्वणि जम्बूखण्डविनिर्माणपर्वणि सुदर्शनद्वीपवर्णने पञ्चमोऽध्यायः ॥ ५ ॥

---

धृतराष्ट्र उवाच । उक्तो द्वीपस्य सङ्क्षेपो विधिवत् बुद्धिमं-
स्त्वया । तत्त्वज्ञश्चासि सर्वस्य विस्तरं ब्रूहि सञ्जय ॥ १ ॥ यावान्
भूम्यवकाशोऽयं दृश्यते शशलक्षणे । तस्य प्रमाणं प्रब्रूहि ततो
वक्ष्यसि पिप्पलम् । एवमुक्तः स राज्ञा तु सञ्जयो वाक्यमब्रवीत् ॥२॥
सञ्जय उवाच । प्रागायता महाराज षड़ेते पर्वताः समाः ।
अवगाढ़ा ह्युभयतः समुद्रौ पूर्वपश्चिमौ ॥ ३ ॥ हिमवान् हेमकूटश्च
निषधश्च नगोत्तमः । नीलश्च वैदूर्य्यमयः श्वेतश्च शशिसन्निभः ॥४॥
सर्वधातुपिनद्धश्च शृङ्गवान्नाम पर्वतः । एते वै पर्वता राजन्
सिद्धचारणसेविताः ॥ ५ ॥ तेषामन्तरविष्कम्भो योजनानि सह-
स्रशः । तत्र पुण्या जनपदास्तानि वर्षाणि भारत ॥ ६ ॥ वसन्ति
तेषु सत्त्वानि नानाजातीनि सर्वशः । इदन्तु भारतं वर्षं ततो
हैमवतं परम् ॥ ७ ॥ हेमकूटात् परश्चैव हरिवर्षं प्रचक्षते ।
दक्षिणेन तु नीलस्य निषधस्योत्तरेण तु ॥ ८ ॥ प्रागायतो महा-
भाग माल्यवान्नाम पर्वतः । ततः परं माल्यवतः पर्वतो गन्ध-
मादनः ॥ ९ ॥ तेनैव क्रमयोगेन पर्वतो गन्धमादनः । परिमण्डल-
स्तयोर्मध्ये मेरुः कनकपर्वतः ॥ १० ॥ आदित्यतरुणाभासो विधूम
इव पावकः । योजनानां सहस्राणि षोड़शाधः किल स्मृतः ॥ ११ ॥
उच्चैश्च चतुराशीतिर्योजनानां महीपते । ऊर्द्ध्वमधश्च तिर्य्यक् च
लोकानावृत्य तिष्ठति ॥ १२ ॥ तस्य पार्श्वे ष्वमी द्वीपाश्चत्वारः
संस्थिता विभो । भद्राश्वः केतुमालश्च जम्बुद्वीपश्च भारत ॥ १३ ॥
उत्तराश्चैव कुरवः कृतपुण्यप्रतिश्रयाः । विहगः सुमुखो यत्र
सुपर्णस्यात्मजः किल ॥ १४ ॥ स वै विचिन्तयामास सौवर्णान्
वीक्ष्य वायसान् । मेरुरुत्तममध्यानामधमानाञ्च पक्षिणाम् ॥१५॥
अविशेषकरो यस्मात्तस्मादेनं त्यजाम्यहम् । तमादित्योऽनुपर्य्येति
सततं ज्योतिषाम्बरः ॥ १६ ॥ चन्द्रमाश्च सनक्षत्रो वायुश्चैव
प्रदक्षिणम् । स पर्वतो महाराज दिव्यपुष्पफलान्वितः ॥ १७ ॥

भवनैरावृतः सर्व्वैर्जाम्बूनदपरिष्कृतैः । तत्र देवगणा राजन् गन्धर्व्वासुरराक्षसाः ॥ १८ ॥ अप्सरोगणसंयुक्ता शैले क्रीड़न्ति सर्व्वदा । तत्र ब्रह्मा च रुद्रश्च शक्रश्चापि सुरेश्वरः ॥ १९ ॥ समेत्य विविधैर्यज्ञैर्यजन्तेऽनेकदक्षिणैः । तुम्बुरुर्नारदश्चैव विश्वावसुर्हाहा हूहूः ॥ २० ॥ अभिगम्यामरश्रेष्ठांस्तुष्टुवुर्विविधैस्तवैः । सप्तर्षयो महात्मानः कश्यपश्च प्रजापतिः ॥ २१ ॥ तत्र गच्छन्ति भद्रन्ते सदा पर्व्वणि पर्व्वणि । तस्यैव मूर्द्धन्युशनाः काव्यो दैत्यैर्महीपते ॥ २२ ॥ हेमानि तस्य रत्नानि तस्यैते रत्नपर्व्वताः । तस्मात् कुवेरो भगवांश्चतुर्थं भागमश्नुते ॥ २३ ॥ ततः कलांशं वित्तस्य मनुष्येभ्यः प्रयच्छति । पार्श्वे तस्योत्तरे दिव्यं सर्व्वतः कुसुमैश्चितम् ॥ २४ ॥ कर्णिकारवनं रम्यं शिलाजालसमुद्गतम् । तत्र साक्षात् पशुपतिर्दिव्यैर्भूतैः समावृतः ॥ २५ ॥ उमासहायो भगवान् रमते भूतभावनः । कर्णिकारमयीं मालां बिभ्रत् पादालम्बिनीम् ॥ २६ ॥ त्रिभिर्नेत्रैः कृतोद्योतस्त्रिभिः सूर्य्यैरिवोदितैः । तमुग्रतपसः सिद्धाः सुव्रताः सत्यवादिनः ॥ २७ ॥ पश्यन्ति न हि दुर्वृत्तैः शक्यो द्रष्टुं महेश्वरः । तस्य शैलस्य शिरसः क्षीरधारा नरेश्वर ॥ २८ ॥ विश्वरूपापरिमिता भीमनिर्घातनिस्वना । पुण्या पुण्यतमैर्जुष्टा गङ्गा भागीरथी शुभा ॥ २९ ॥ पतत्यजस्रवेगेन ह्रदे चान्द्रमसः शुभे । तया ह्युत्पादितः पुण्यः स ह्रदः सागरोपमः ॥ ३० ॥ तां धारयामास तदा दुर्द्धरां पर्व्वतैरपि । शतं वर्षसहस्राणां शिरसैव पिनाकधृक् ॥ ३१ ॥ मेरोस्तु पश्चिमे पार्श्वे केतुमालो महीपते । जम्बूखण्डे च तत्रैव महाजनपदो नृप ॥ ३२ ॥ आयुर्दशसहस्राणि वर्षाणां तत्र भारत । सुवर्णवर्णाश्च नराः स्त्रियश्चाप्सरसोपमाः ॥ ३३ ॥ अनामया वीतशोका नित्यं मुदितमानसाः । जायन्ते मानवास्तत्र निष्टप्तकनकप्रभाः ॥ ३४ ॥ गन्धमादनशृङ्गेषु कुवेरः सहराक्षसैः ।

संवृतोऽप्सरसां सङ्घैर्मोदते गुह्यकाधिप ॥ ३५ ॥ गन्धमादन-
पार्श्वे तु परे त्वपरगण्डिका । एकादशसहस्राणि वर्षाणां पर-
मायुष ॥ ३६ ॥ तत्र कृष्णा नरा राजंस्तेजोयुक्ता महाबला ।
स्त्रियश्चोत्पलवर्णाभाः सर्वाः सुप्रियदर्शना ॥ ३७ ॥ नीलात्परतरं
श्वेतं श्वेताद्धैरण्यकं परम । वर्षमैरावतं राजन्नानाजनपदा
वृतम् ॥ ३८ ॥ धनु संस्थे महाराज द्वे वर्षे दक्षिणोत्तरे । इला
वृत मध्यमन्तु पञ्चवर्षाणि चैव हि ॥ ३९ ॥ उत्तरोत्तरमेतेभ्यो
वर्षमुद्रिच्यते गुणै । आयु प्रमाणमारोग्यं धर्मत कामतोऽर्थत
॥ ४० ॥ समन्वितानि भूतानि तेषु वर्षेषु भारत । एवमेषा
महाराज पर्वतै पृथिवी चिता ॥ ४१ ॥ हेमकूटस्तु सुमहान्
कैलासो नाम पर्वत । यत्र वैश्रवणो राजन् गुह्यकै सह मोदते
॥ ४२ ॥ अस्त्युत्तरेण कैलासं मैनाकं पर्वतं प्रति । हिरण्यशृङ्ग
सुमहान् दिव्यो मणिमयो गिरि ॥ ४३ ॥ तस्य पार्श्वे महद्दिव्यं
शुभ्रं काञ्चनवालुकम् । रम्यं बिन्दुसरो नाम यत्र राजा भगी
रथ ॥ ४४ ॥ दृष्ट्वा भागीरथीं गङ्गामुवास बहुला समा ।
यूपा मणिमयास्तत्र चैत्याश्चापि हिरण्मया ॥ ४५ ॥ तत्रेष्ट्वा तु
गत सिद्धिं सहस्राक्षो महायशा । स्रष्टा भूतपतिर्यत्र सर्व
लोकान् सनातनः ॥ ४६ ॥ उपास्यते तिग्मतेजा यत्र भूतै सम
न्तत । नरनारायणौ ब्रह्मा मनुः स्थाणुश्च पञ्चम ॥ ४७ ॥ त
दिव्या त्रिपथगा प्रथमन्तु प्रतिष्ठिता । ब्रह्मलोकादपक्रान्ता सप्त
प्रतिपद्यते ॥ ४८ ॥ वस्वोकसारा नलिनी पावनी च सरस्वती
जम्बूनदी च सीता च गङ्गा सिन्धुश्च सप्तमी ॥ ४९ ॥ अचिन्त्य
दिव्यसङ्काशा प्रभोरेषैव संविधि । उपासते यत्र सत्रं सहस्र
युगपर्यये ॥ ५० ॥ दृश्यादृश्या च भवति तत्र तत्र सरस्वती
एता दिव्या सप्त गङ्गास्त्रिषु लोकेषु विश्रुता ॥ ५१ ॥ रक्षां
वै हिमवति हेमकूटे तु गुह्यका । सर्पा नागाश्च निषधे गोक

च तपोधनाः ॥ ५२ ॥ देवासुराणां सर्व्वेषां श्वेतपर्व्वत उच्यते । गन्धर्व्वा निषधे नित्यं नीले ब्रह्मर्षयस्तथा ॥ ५३ ॥ शृङ्गवांस्तु महाराज देवानां प्रतिसञ्चरः । इत्येतानि महाराज सप्त वर्षाणि भागशः ॥ ५४ ॥ भूतान्युपनिविष्टानि गतिमन्ति ध्रुवाणि च । तेषामृद्धिर्बहुविधा दृश्यते दैवमानुषी ॥ ५५ ॥ अशक्या परिसंख्यातुं श्रद्धेया तु बुभूषता । यान्तु पृच्छसि मां राजन् दिव्यामेनां शशाकृतिम् ॥ ५६ ॥ पार्श्वे शशस्य द्वे वर्षे उक्ते ये दक्षिणोत्तरे । कर्णौ तु नागद्वीपश्च काश्यपद्वीप एव च ॥५७॥ ताम्रपर्णी शिला राजन् श्रीमान् मलयपर्व्वतः । एतत् द्वितीयं द्वीपस्य दृश्यते शशसंस्थितम् ॥ ५८ ॥

इति भीष्मपर्व्वणि जम्बूखण्डविनिर्म्माणपर्व्वणि भूम्यादिपरिमाणविवरणे षष्ठोऽध्यायः ॥ ६ ॥

---

धृतराष्ट्र उवाच । मेरोरथोत्तरं पार्श्वं पूर्वं चाचक्ष्व सञ्जय । निखिलेन महाबुद्धे माल्यवन्तञ्च पर्व्वतम् ॥ १ ॥

सञ्जय उवाच । दक्षिणेन तु नीलस्य मेरोः पार्श्वे तथोत्तरे । उत्तराः कुरवो राजन् पुण्याः सिद्धनिषेविताः ॥ २ ॥ तत्र वृक्षा मधुफला नित्यपुष्पफलोपमाः । पुष्पाणि च सुगन्धीनि रसवन्ति फलानि च ॥ ३ ॥ सर्व्वकामफलास्तत्र केचित् वृक्षा जनाधिप । अपरे क्षीरिणो नाम वृक्षास्तत्र नराधिप ॥ ४ ॥ ये क्षरन्ति सदा क्षीरं षड्रसञ्चामृतोपमम् । वस्त्राणि च प्रसूयन्ते फलेष्वाभरणानि च ॥ ५ ॥ सर्व्वा मणिमयी भूमिः सूक्ष्मकाञ्चनवालुका । मणिरत्ननिभं रम्यं वज्रवैदूर्य्यसन्निभम् ॥ ६ ॥ भूभागं दृश्यते तत्र पद्मरागसमप्रभम् । सर्व्वर्तुसुखसंस्पर्शा निष्पङ्का च जनाधिप ॥ ७ ॥ पुष्करिण्यः शुभास्तत्र सुखस्पर्शा मनोहराः ।

लोकच्युता सर्वे जायन्ते तत्र मानवाः ॥ ८ ॥ शुक्लाभिजनसम्पन्नाः सर्वे सुप्रियदर्शनाः। मिथुनानि च जायन्ते स्त्रियश्चाप्सरसोपमाः ॥ ९ ॥ तेषान्ते चीरिणां चीरं पिबन्त्यमृतसन्निभम्। मिथुनं जायते काले समन्तत्र प्रवर्द्धते ॥ १० ॥ तुल्यरूपगुणोपेतं समवेशं तथैव च। एवमेवानुरूपञ्च चक्रवाकसमं प्रभो ॥ ११ ॥ निरामयाश्च ते लोका नित्यं मुदितमानसाः। दशवर्षसहस्राणि दशवर्षशतानि च ॥ १२ ॥ जीवन्ति ते महाराज न चान्योन्यं जहात्युत। भारुण्डा नाम शकुनास्तीक्ष्णतुण्डा भयानकाः ॥१३॥ तान्निर्हरन्तीह मृतान् दरीषु प्रक्षिपन्ति च। उत्तराः कुरवो राजन् व्याख्यातास्ते समासतः ॥ १४ ॥ मेरोः पार्श्वमहं पूर्वं वक्ष्याम्यपि यथातथम्। तस्य पूर्वाभिषेकस्तु भद्राश्वस्य विशाम्पते ॥ १५ ॥ भद्रशालवनं यत्र कालाम्रश्च महाद्रुमः। कालाम्रस्तु महाराज नित्यपुष्पफलद्रुमः ॥ १६ ॥ द्रुमश्च योजनोत्सेधः सिद्धचारणसेवितः। तत्र ते पुरुषाः श्वेतास्तेजोयुक्ता महाबलाः ॥ १७ ॥ स्त्रियः कुमुदवर्णाश्च सुन्दर्यः प्रियदर्शनाः। चन्द्रमाश्चन्द्रवर्णाः पूर्णचन्द्रनिभाननाः ॥ १८ ॥ चन्द्रशीतलगात्राश्च नृत्यगीतविशारदाः। दशवर्षसहस्राणि तत्रायुर्भरतर्षभ ॥ १९ ॥ कालाम्ररसपीतास्ते नित्यं सुस्थितयौवनाः। दक्षिणेन तु नीलस्य निषधस्योत्तरेण तु ॥ २० ॥ सुदर्शनो नाम महान् जम्बूवृक्षः सनातनः। सर्वकामफलः पुण्यः सिद्धचारणसेवितः ॥ २१ ॥ तस्य नाम्ना समाख्यातो जम्बूद्वीपः सनातनः। योजनानां सहस्रञ्च शतञ्च भरतर्षभ ॥ २२ ॥ उत्सेधो वृक्षराजस्य दिवस्पृङ्मनुजेश्वर। अरत्नीनां सहस्राणि शतानि दश पञ्च च ॥ २३ ॥ परिणाहस्तु वृक्षस्य फलानां रसभेदिनाम्। पतमानानि तान्युर्व्यां कुर्वन्ति विपुलं स्वनम् ॥ २४ ॥ मुञ्चन्ति च रसं राजंस्तस्मिन्रजतसन्निभम्। तस्या जम्ब्वाः फलरसो नदी भूत्वा जग-

धिप ॥ २५ ॥ मेरुं प्रदक्षिणं कृत्वा सम्प्रयात्युत्तरान् कुरून्। तत्र तेषां मन यान्ति न पिपासा जनाधिप ॥ २६ ॥ तस्मिन् फलरसे पीते न जरा बाधते च तान्। तत्र जाम्बूनदं नाम कनकं देवभूषणम् ॥ २७ ॥ इन्द्रगोपकसङ्काशं जायते भास्वरन्तु तत्। तरुणादित्यवर्णाश्च जायन्ते तत्र मानवाः ॥ २८ ॥ तथा माल्यवतः शृङ्गे दृश्यते हव्यवाट् सदा। नाम्ना सम्वर्त्तको नाम कालाग्निर्भरतर्षभ ॥ २९ ॥ तथा माल्यवत शृङ्गे पूर्वपूर्वानुगण्डिका। योजनानां सहस्राणि पञ्चाशन्माल्यवान्नृप ॥ ३० ॥ महारजतसङ्काशा जायन्ते तत्र मानवाः। ब्रह्मलोकच्युताः सर्व्वे सर्व्वे च ब्रह्मवादिन ॥ ३१ ॥ तपस्तप्यन्ति ते तीव्रं भवन्ति ह्यूर्द्ध्वरेतस। रक्षणार्थन्तु भूतानां प्रविशन्ति दिवाकरम ॥ ३२ ॥ षष्टिस्तानि सहस्राणि षष्टिरेव शतानि च। अरुणस्याग्रतो यान्ति परिवार्य्य दिवाकरम् ॥ ३३ ॥ षष्टिवर्षसहस्राणि षष्टिरेव शतानि च। आदित्यतापतप्तास्ते विशन्ति शशिमण्डलम् ॥ ३४ ॥

इति भीष्मपर्व्वणि जम्बूखण्डविनिर्म्माणपर्व्वणि माल्यवद्वर्णने सप्तमोऽध्याय ॥ ७ ॥

---

धृतराष्ट्र उवाच। वर्षाणाञ्चैव नामानि पर्व्वतानाञ्च सञ्जय। आचक्ष्व मे यथातत्त्वं ये च पर्व्वतवासिन ॥ १ ॥

सञ्जय उवाच। दक्षिणेन तु श्वेतस्य निषधस्योत्तरेण तु। वर्षं रमणकं नाम जायन्ते तत्र मानवा ॥ २ ॥ शुक्लाभिजनसम्पन्ना सर्व्वे सुप्रियदर्शना। निःसपत्नाश्च ते सर्व्वे जायन्ते तत्र मानवा ॥ ३ ॥ दक्षिणेन तु नीलस्य निषधस्योत्तरेण तु। वर्षं हिरण्मयं नाम यत्र हैरण्वती नदी ॥ ४ ॥ यत्र चायं महाराज पक्षिराट् पतगोत्तम। यक्षानुगा महाराज धनिनः प्रियदर्शनाः

लोकच्युताः सर्वे जायन्ते तत्र मानवाः ॥ ८ ॥ शुक्लाभिजनसम्पन्नाः सर्वे सुप्रियदर्शनाः । मिथुनानि च जायन्ते स्त्रियश्चाप्सरसोपमाः ॥ ९ ॥ तेषान्ते क्षीरिणां क्षीरं पिबन्त्यमृतसन्निभम् । मिथुनं जायते काले समन्तत्र प्रवर्द्धते ॥ १० ॥ तुल्यरूपगुणोपेतं समवेशं तथैव च । एवमेवानुरूपञ्च चक्रवाकसमं प्रभो ॥ ११ ॥ निरामयाश्च ते लोका नित्यं मुदितमानसाः । दशवर्षसहस्राणि दशवर्षशतानि च ॥ १२ ॥ जीवन्ति ते महाराज न चान्योऽन्यं जहात्युत । भारुण्डा नाम शकुनास्तीक्ष्णतुण्डा भयानकाः ॥१३॥ तान्निर्हरन्तीह मृतान् दरीषु प्रक्षिपन्ति च । उत्तराः कुरवो राजन् व्याख्यातास्ते समासतः ॥ १४ ॥ मेरोः पार्श्वमहं पूर्वं वच्याम्यपि यथातथम् । तस्य पूर्वाभिषेकस्तु भद्राश्वस्य विशाम्पते ॥ १५ ॥ भद्रशालवनं यत्र कालाम्रश्च महाद्रुमः । कालाम्रस्तु महाराज नित्यपुष्पफलद्रुमः ॥ १६ ॥ द्रुमश्च योजनोत्सेधः सिद्धचारणसेवितः । तत्र ते पुरुषाः श्वेतास्तेजोयुक्ता महाबलाः ॥ १७ ॥ स्त्रियः कुमुदवर्णाश्च सुन्दर्यः प्रियदर्शनाः । चन्द्रभासश्चन्द्रवर्णाः पूर्णचन्द्रनिभाननाः ॥ १८ ॥ चन्द्रशीतलगात्रश्च नृत्यगीतविशारदाः । दशवर्षसहस्राणि तत्रायुर्भरतर्षभ ॥ १९ ॥ कालाम्ररसपीतास्ते नित्यं सुस्थितयौवनाः । दक्षिणेन तु नीलस्य निषधस्योत्तरेण तु ॥ २० ॥ सुदर्शनो नाम महान् जम्बूवृक्षः सनातनः । सर्वकामफलः पुण्यः सिद्धचारणसेवितः ॥ २१ ॥ तस्य नाम्ना समाख्यातो जम्बूद्वीपः सनातनः । योजनानां सहस्रञ्च शतञ्च भरतर्षभ ॥ २२ ॥ उत्सेधो वृक्षराजस्य दिवस्पृक् मनुजेश्वर । अरत्नीनां सहस्रञ्च शतानि दश पञ्च च ॥ २३ ॥ परिणाहस्तु वृक्षस्य फलानां रसभेदिनाम् । पतमानानि तान्युर्व्यां कुर्वन्ति विपुलं स्वनम् ॥ २४ ॥ मुञ्चन्ति च रसं राजन् तस्मिन्रजतसन्निभम् । तस्या जम्बाः फलरसो नदी भूत्वा जना-

धिप ॥ २५ ॥ मेरुं प्रदक्षिणं कृत्वा सम्प्रयात्युत्तरान् कुरून् ।
तत्र तेषां मन शान्तिर्न पिपासा जनाधिप ॥ २६ ॥ तस्मिन् फल-
रसे पीते न जरा बाधते च तान् । तत्र जाम्बूनदं नाम कनकं
देवभूषणम् ॥ २७ ॥ इन्द्रगोपकसङ्काशं जायते भास्वरन्तु तत ।
तरुणादित्यवर्णाश्च जायन्ते तत्र मानवा ॥ २८ ॥ तथा माल्य-
वत शृङ्गे दृश्यते हव्यवाट् सदा । नाम्ना सम्वर्त्तको नाम कालाग्नि
र्भरतर्षभ ॥ २९ ॥ तथा माल्यवत शृङ्गे पूर्वपूर्वानुगण्डिका ।
योजनानां सहस्राणि पञ्चाशन्माल्यवान्नृप ॥ ३० ॥ महारजत-
सङ्काशा जायन्ते तत्र मानवा । ब्रह्मलोकच्युता सर्वे सर्वे च
ब्रह्मवादिन ॥ ३१ ॥ तपस्तप्यन्ति ते तीव्रं भवन्ति ह्यूर्द्ध्वरेतस ।
रक्षणार्थन्तु भूताना प्रविशन्ति दिवाकरम ॥ ३२ ॥ षष्टिस्तानि
सहस्राणि षष्टिरेव शतानि च । अरुणस्याग्रतो यान्ति परि-
वार्य्य दिवाकरम् ॥ ३३ ॥ षष्टिवर्षसहस्राणि षष्टिरेव शतानि
च । आदित्यतापतप्तास्ते विशन्ति शशिमण्डलम् ॥ ३४ ॥

इति भीष्मपर्वणि जम्बूखण्डविनिर्माणपर्वणि माल्यवद्दर्शने
सप्तमोऽध्याय ॥ ७ ॥

---

धृतराष्ट्र उवाच । वर्षाणाञ्चैव नामानि पर्वतानाञ्च सञ्जय ।
आचक्ष्व मे यथातत्त्वं ये च पर्वतवासिन ॥ १ ॥

सञ्जय उवाच । दक्षिणेन तु श्वेतस्य निषधस्योत्तरेण तु ।
वर्षं रमणकं नाम जायन्ते तत्र मानवा ॥ २ ॥ शुक्लाभिजन-
सम्पन्ना सर्वे सुप्रियदर्शना । निसपत्नाश्च ते सर्वे जायन्ते तत्र
मानवा ॥ ३ ॥ दक्षिणेन तु नीलस्य निषधस्योत्तरेण तु । वर्षं
हिरण्मयं नाम यत्र हैरण्वती नदी ॥ ४ ॥ यत्र चायं महाराज
पक्षिराट् पतगोत्तम । यक्षानुगा महाराज धनिन प्रियदर्शना:

॥ ५ ॥ महाबलास्तत्र जना राजन् मुदितमानसाः। दशवर्ष-सहस्राणि शतानि दश पञ्च च ॥ ६ ॥ आयुःप्रमाणं जीवन्ति वर्षाणान्ते जनाधिप। शृङ्गाणि च विचित्राणि त्रीण्येव मनुजाधिप ॥ ७ ॥ एकं मणिमयं तत्र यथैकं रौक्ममद्भुतम्। सर्वरत्नमयञ्चैकं भवनैरुपशोभितम् ॥ ८ ॥ तत्र स्वयम्प्रभा देवी नित्यं वसति शाण्डिली। उत्तरेण तु शृङ्गस्य समुद्रान्ते जनाधिप ॥ ९ ॥ वर्षमैरावतं नाम तस्माच्छृङ्गवतः परम्। न तत्र सूर्यस्तपति न जीर्यन्ते च मानवाः ॥ १० ॥ चन्द्रमाश्च सनक्षत्रो ज्योतिर्भूत इवावृतः। पद्मप्रभाः पद्मवर्णाः पद्मपत्रनिभेक्षणाः ॥ ११ ॥ पद्मपत्रसुगन्धाश्च जायन्ते तत्र मानवाः। अनिष्पन्दा इष्टगन्धा निराहारा जितेन्द्रियाः ॥ १२ ॥ देवलोकच्युताः सर्वे तथा विरजसो नृप। त्रयोदशसहस्राणि वर्षाणान्तेजनाधिप ॥ १३ ॥ आयुःप्रमाणं जीवन्ति नरा भरतसत्तम। क्षीरोदस्य समुद्रस्य तथैवोत्तरतः प्रभुः ॥ १४ ॥ हरिर्वसति वैकुण्ठः शकटे कनकामये। अष्टचक्रं हि तद्यानं भूतयुक्तं मनोजवम् ॥ १५ ॥ अग्निवर्णं महावेगं जाम्बूनदविभूषितम्। स प्रभुः सर्वभूतानां विभुश्च भरतर्षभ ॥ १६ ॥ संक्षेपो विस्तरश्चैव कर्त्ता कारयिता तथा। पृथिव्यापस्तथाकाशं वायुस्तेजश्च पार्थिव। स यज्ञः सर्वभूतानामास्यं तस्य हुताशनः ॥ १७ ॥

वैशम्पायन उवाच। एवमुक्तः सञ्जयेन धृतराष्ट्रो महामनाः। ध्यानमन्वगमद्राजा पुत्रान् प्रति जनाधिप ॥ १८ ॥ स विचिन्त्य महातेजाः पुनरेवाब्रवीद्वचः। असंशयं सूतपुत्र कालः सङ्क्षिपते जगत् ॥ १९ ॥ सृजते च पुनः सर्वं नेह विद्यति शाश्वतम्। नरो नारायणश्चैव सर्वज्ञः सर्वभूतहृत्। देवा वैकुण्ठमित्याहुर्नरा विष्णुमिति प्रभुम् ॥ २० ॥

इति भीष्मपर्वणि जम्बूखण्डविनिर्माणपर्वणि धृतराष्ट्रवाक्ये अष्टमोऽध्यायः ॥ ८ ॥

धृतराष्ट्र उवाच । यदिदं भारतं वर्षं यत्रेदं मूर्च्छितं बलम् । यत्रातिमात्रं लुब्धोऽयं पुत्रो दुर्य्योधनो मम ॥ १ ॥ यत्र गृद्धाः पाण्डुपुत्रा यत्र मे मज्जते मनः । एतन्मे तत्त्वमाचक्ष्व त्वं हि मे बुद्धिमान्मतः ॥ २ ॥

सञ्जय उवाच । न तत्र पाण्डवा गृद्धाः शृणु राजन् वचो मम । गृद्धो दुर्य्योधनस्तत्र शकुनिश्चापि सौबलः ॥ ३ ॥ अपरे क्षत्रियाश्चैव नानाजनपदेश्वराः । ये गृद्धा भारते वर्षे न मृष्यन्ति परस्परम् ॥ ४ ॥ अत्र ते कीर्त्तयिष्यामि वर्षं भारत भारतम् । प्रियमिन्द्रस्य देवस्य मनोर्वैवस्वतस्य च ॥ ५ ॥ पृथोश्च राजन्वैन्यस्य तथेक्ष्वाकोर्महात्मनः । ययातेरम्बरीषस्य मिवेरौशीनरस्य च ॥ ६ ॥ ऋषभस्य तथैलस्य नृगस्य नृपतेस्तथा । कुशिकस्य च दुर्द्धर्ष गाधेश्चैव महात्मनः ॥ ७ ॥ सोमकस्य च दुर्द्धर्ष दिलीपस्य तथैव च । अन्येषाञ्च महाराज क्षत्रियाणां बलीयसाम् ॥ ८ ॥ सर्व्वेषामेव राजेन्द्र प्रियं भारत भारतम् । तत्ते वर्षं प्रवक्ष्यामि यथाश्रुतमरिन्दम ॥ ९ ॥ शृणु मे गदतो राजन् यन्मा त्वं परिपृच्छसि । महेन्द्रो मलयः सह्यः शुक्तिमान् गन्धमादनः ॥ १० ॥ विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्व्वताः । तेषां सहस्रशो राजन् पर्व्वतास्ते समीपतः ॥ ११ ॥ अविज्ञाताः सारवन्तो विपुलाश्चित्रसानवः । अन्ये ततो परिज्ञाता ह्रस्वा ह्रस्वोपजीविनः ॥ १२ ॥ आर्य्या म्लेच्छाश्च कौरव्य तैर्मिश्राः पुरुषा विभो । नदीः पिबन्ति विपुला गङ्गां सिन्धुं सरस्वतीम् ॥ १३ ॥ गोदावरीं नर्म्मदाञ्च बाहुदाञ्च महानदीम् । शतद्रुं चन्द्रभागाञ्च यमुनाञ्च महानदीम् ॥ १४ ॥ दृषद्वतीं विपाशाञ्च विपापां स्थूलवालुकाम् । नदीं वेत्रवतीञ्चैव कृष्णवेणीञ्च निम्नगाम् ॥ १५ ॥ इरावतीं वितस्ताञ्च पयोष्णीं देविकामपि । वेदस्मृतां वेदवतीं त्रिदिवामिक्षुमालवीम् ॥ १६ ॥ करीषिणीं चित्रवहां चित्रसेनाञ्च निम्नगाम् । गोमतीं

धूतपापाञ्च गण्डकीञ्च महानदीम् ॥ १७ ॥ कौशिकीं निश्चितां कृत्यां निचितां लोहतारिणीम्। रहस्यां शतकुम्भाञ्च सरयूञ्च तथैव च ॥ १८ ॥ चर्मण्वतीं चन्द्रभागां हस्तिसोमां दिशं तथा। शरावतीं पयोष्णीञ्च परां भीमरथीमपि ॥ १९ ॥ कावेरीं चुलुकाञ्चापि वीणां शतबलामपि। नीवारां महितां चापि सुप्रयोगां जनाधिप ॥ २० ॥ पवित्रां कुण्डलां सिन्धुं राजनीं पुरमालिनीम्। पूर्वाभिरामां वीराञ्च भीमामोघवतीं तथा ॥ २१ ॥ पलाशिनीं पापहरां महेन्द्रां पाटलावतीम्। करीषिणीमसिक्नीञ्च कुशचीरां महानदीम् ॥ २२ ॥ मकरीं प्रवरां मेनां हेमां घृतवतीं तथा। पुरावतीमनुष्णाञ्च शैव्यां कापीञ्च भारत ॥ २३ ॥ सदानीरामधृष्याञ्च कुशधारां महानदीम्। सदाकान्तां शिवाञ्चैव तथा वीरवतीमपि ॥ २४ ॥ वास्तुं सुवास्तुं गौरीञ्च कम्पनां सहिरण्वतीम्। वरां वीरङ्करां चापि पञ्चमीञ्च महानदीम् ॥२५॥ रथचित्रां ज्योतिरथां विश्वामित्रां कपिञ्जलाम्। उपेन्द्रां बहुलाञ्चैव कुचीरां मधुवाहिनीम् ॥ २६ ॥ विनदीं पिञ्जलां वेणां तुङ्गवेणां महानदीम्। विदिशां कृष्णवेणाञ्च ताम्राञ्च कपिलामपि ॥ २७ ॥ खलुं सुवामां वेदाश्वां हरिश्रावां महापगाम्। शीघ्राञ्च पिच्छलाञ्चैव भारद्वाजीञ्च निम्नगाम् ॥ २८ ॥ कौशिकीं निम्नगां शोणां बाहुदामथ चन्द्रमाम्। दुर्गामन्तःशिलाञ्चैव ब्रह्मवोध्यां बृहद्वतीम् ॥ २९ ॥ यवक्षामथ रोहीञ्च तथा जाम्बूनदीमपि। सुनसां तमसां दासीं वसाञ्च वरुणामसीम् ॥ ३० ॥ नालां धृतिमतीञ्चैव पूर्णाशाञ्च महानदीम्। तामसीं वृषभाञ्चैव ब्रह्ममेध्यां बृहद्वतीम् ॥ ३१ ॥ एतावान्याश्च बहुधा महानद्यो जनाधिप। सदानिरामयां कृष्णां मन्दगां मन्दवाहिनीम् ॥ ३२ ॥ ब्रह्माणीञ्च महागौरीं दुर्गामपि च भारत। चित्रोपलां चित्ररथां मञ्जुलां वाहिनीं तथा ॥ ३३ ॥ मन्दाकिनीं वैतरणीं

कोषीं चापि महानदीम् । शुक्तिमतीमनङ्गाञ्च पुष्पवेण्युत्पला-
वतीम् ॥ ३४ ॥ लोहित्यां करतोयाञ्च तथैव वृषकाह्वयाम् ।
कुमारीमृषिकुल्याञ्च मारिषाञ्च सरस्वतीम् ॥ ३५ ॥ मन्दाकिनीन्तु
पुण्याञ्च सर्वसङ्गाञ्च भारत । विश्वस्य मातरः सर्व्वाः सर्व्वाश्चैव
महाफलाः ॥ ३६ ॥ तथा नद्यस्त्वप्रकाशाः शतशोऽथ सहस्रशः ।
इत्येताः सरितो राजन् समाख्याता यथास्मृति ॥ ३७ ॥ अत
ऊर्द्धं जनपदान्निबोध गदतो मम । तत्रेमे कुरुपाञ्चालाः शाल्वा
माद्रेयजाङ्गलाः ॥ ३८ ॥ शूरसेनाः कलिङ्गाश्च बोधा मालास्तथैव
च । मत्स्याः सकुट्याः सौबल्याः कुन्तलाः काशिकोशलाः ॥ ३९ ॥
चेदिमत्स्यकरूषाश्च भोजाः सिन्धुपुलिन्दकाः । उत्तमाश्च दशार्णा
श्चैव मेकलाश्चोत्कलैः सह ॥ ४० ॥ पाञ्चालाः कौशिजाश्चैव नैक-
पृष्ठा धुरन्धराः । बोधा मद्रभुजिङ्गाश्च काशयोऽपरकाशयः ॥४१॥
जठराः कुकुराश्चैव सदशार्णाश्च भारत । कुन्तयोऽवन्तयश्चैव
तथैवापरकुन्तयः ॥ ४२ ॥ गोमन्ता मन्दकाः षण्डा विदर्भा रूप-
वाहिकाः । अश्मकाः पांशुराष्ट्राश्च गोपराष्ट्राः करीतयः ॥ ४३ ॥
अधिराज्यकुशाद्याश्च मल्लराष्ट्रञ्च केरलम् । वारपास्यापवाहाश्च
चक्राः वक्रातपाः शकाः ॥ ४४ ॥ विदेहा मागधाः स्वक्षा मलया
विजयास्तथा । अङ्गा वङ्गाः कलिङ्गाश्च यकृल्लोमान एव च ॥ ४५ ॥
मल्लाः सुदेष्णाः प्रह्लादाः माहिका शशिकास्तथा । बाह्लीका
वाटधानाश्च आभीराः कालतोयकाः ॥ ४६ ॥ अपरान्ताः परा-
न्ताश्च पञ्चालाश्चर्म्ममण्डलाः । अटवीशिखराश्चैव मेरुभूताश्च मारिष
॥ ४७ ॥ उपावृत्तानुपावृत्ताः स्वराष्ट्राः केकयास्तथा । कुन्दा-
परान्ता माहेयाः कक्षाः सामुद्रनिष्कुटाः ॥ ४९ ॥ अन्ध्राश्च बहवो
राजन्नन्तर्गिर्य्यास्तथैव च । बहिर्गिर्य्याङ्गमलजा मागधा मानव-
र्ज्जकाः ॥ ५० ॥ मध्युत्तराः प्रावृषेया भार्गवाश्च जनाधिप । पुण्ड्रा
मार्गाः किराताश्च सुदेष्णा यामुनास्तथा ॥ ५१ ॥ शका निषादा

निषधास्तथैवानर्त्तनैर्ऋता । दुर्गला प्रतिमत्स्याश्च कुन्तलाः कुशलास्तथा ॥ ५२ ॥ तीरग्रहा शूरसेना ईजिका कन्यकागुणा । तिलभारा समीराश्च मधुमत्ता सुकन्दका ॥ ५३ ॥ काश्मीरा सिन्धुसौवीरा गान्धारा दर्शकास्तथा । अभीसारा उतूलाश्च शैवाला वाह्लिकास्तथा ॥ ५४ ॥ दर्वी च वानवादर्वा वातजाम-रथोरगा । बाहुबाधाश्च कौरव्य सुदामान सुमल्लिका ॥५५॥ वध्रा करीषकाश्चापि कुलिन्दोपत्यकास्तथा । वातायना दशा-र्णाश्च रोमाणः कुशविन्दव ॥ ५६ ॥ कच्छा गोपालकच्छाश्च जाङ्गला कुरुवर्णका । किराता वर्वरा सिद्धा वैदेहास्ताम्रलिप्तका ॥५७॥ औड्रा पौण्ड्रा सैसिरिता पार्वतीयाश्च मारिष । अथापरे जन-पदा दक्षिणा भरतर्षभ ॥ ५८ ॥ द्राविड़ा केरला प्राच्या मूषिका वनवासिका । कर्णाटका माहिषका विकल्पा मूषका-स्तथा ॥ ५९ ॥ झिल्लिका कुन्तलाश्चैव सौहृदा नलकानना । कौकुट्टकास्तथा चोला कौङ्कणा मालवानका ॥ ६० ॥ समङ्गा करकाश्चैव कुकुराङ्गारमारिषा । ध्वजिन्युत्सवसङ्केतास्त्रिगर्त्ता शाल्वसेनय ॥ ६१ ॥ वक्रा कोकरका प्रोष्ठा समवेगवशास्तथा । तथैव विन्ध्यचुलका पुलिन्दा वल्कलै सह ॥ ६२ ॥ मालवा मल्लवाश्चैव तथैवापरवल्लभा । कुलिन्दा कालवाश्चैव कुण्टका करटास्तथा ॥ ६३ ॥ मूषकास्तनवालाश्च सनीयाघटसृञ्जया । अलिन्दा पाशिवाटाश्च तनया सुनयास्तथा ॥ ६४ ॥ ऋषीविदर्भा कान्तीवास्तङ्गणा परतङ्गणा । उत्तराश्चापरे म्लेच्छा क्रूरा

आत्रेया सभरद्वाजास्तथैव स्तनपोषिका । प्रोषकाश्च कलिङ्गाश्च किरातानाञ्च जातयः ॥ ६९ ॥ तोमरा हंसमार्गाश्च तथैव करभञ्जका । एते चान्ये जनपदा प्राच्योदीच्यास्तथैव च ॥ ७० ॥ उद्देशमात्रेण मया देशाः सङ्कीर्त्तिता विभो । यथागुणं बलञ्चापि त्रिवर्गस्य महाफलम् ॥ ७१ ॥ दुह्येत धेनुः कामधुक् भूमिः सम्यगनुष्ठिता । तस्यां गृध्यन्ति राजानः शूरा धर्मार्थकोविदाः ॥ ७२ ॥ ते त्यजन्त्याहवे प्राणान् वसुगृद्धास्तरस्विनः । देवमानुषकायानां कामं भूमिः परायणम् ॥ ७३ ॥ अन्योऽन्यस्यावलुम्पन्ति सारमेया इवामिषम् । राजानो भरतश्रेष्ठ भोक्तुकामा वसुन्धराम् ॥ ७४ ॥ न चापि तृप्तिः कामानां विद्यतेऽद्यापि कस्यचित् । तस्मात् परिग्रहे भूमेर्यतन्ते कुरुपाण्डवाः ॥ ७५ ॥ साम्ना भेदेन दानेन दण्डेनैव च भारत । पिता भ्राता च पुत्राश्च खन्द्यौश्च नरपुङ्गव । भूमिर्भवति भूतानां सम्यगच्छिद्रदर्शिना ॥ ७६ ॥

इति भीष्मपर्व्वणि जम्बूखण्डविनिर्म्माणपर्व्वणि भारतीयनद्यादिकथने नवमोऽध्यायः ॥ ९ ॥

---

धृतराष्ट्र उवाच । भारतस्यास्य वर्षस्य तथा हैमवतस्य च । प्रमाणमायुषः सूत बलञ्चापि शुभाशुभम् ॥ १ ॥ अनागतमतिक्रान्तं वर्त्तमानञ्च सञ्जय । आचक्ष्व मे विस्तरेण हरिवर्षं तथैव च ॥२॥

सञ्जय उवाच । चत्वारि भारते वर्षे युगानि भरतर्षभ । कृतं त्रेता द्वापरञ्च तिष्यञ्च कुरुवर्द्धन ॥ ३ ॥ पूर्व्वं कृतयुगं नाम ततस्त्रेतायुगं प्रभो । संक्षेपात् द्वापरस्याथ ततस्तिष्यः प्रवर्त्तते ॥४॥ चत्वारि तु सहस्राणि वर्षाणां कुरुसत्तम । आयुःसङ्ख्या कृतयुगे सङ्ख्याता राजसत्तम ॥ ५ ॥ तथा त्रीणि सहस्राणि त्रेतायां मनुजाधिप । द्वे सहस्रे द्वापरे च भुवि तिष्ठन्ति साम्प्रतम् ॥ ६ ॥

निषधास्तथैवानर्त्तनैर्ऋताः। दुर्गलाः प्रतिमात्स्याश्च कुन्तलाः कुशलास्तथा॥ ५२॥ तीरग्रहा शूरसेना ईजकाः कन्यकागुणा। तिलभारा समीराश्च मधुमन्ता सुकन्दका॥ ५३॥ काश्मीरा सिन्धुसौवीरा गान्धारा दर्शकास्तथा। अभीसारा उतूलाश्च शैवाला वाह्लिकास्तथा॥ ५४॥ दर्वी च वानवाद्‌र्वा वातजामरथोरगा। वाहुवाधाश्च कौरव्याः सुदामान सुमल्लिका॥५५॥ वध्राः करीषकाश्चापि कुलिन्दोपत्यकास्तथा। वातायना दशार्णाश्च रोमाण कुशविन्दव॥ ५६॥ कच्छा गोपालकच्छाश्च जाङ्गला कुरुवर्णका। किराता वर्वरा सिद्धा वैदेहास्ताम्रलिप्तका॥५७॥ ओड्रा पौण्ड्रा सैसिकता पार्वतीयाश्च मारिष। अथापरे जनपदा दक्षिणा भरतर्षभ॥ ५८॥ द्राविड़ा केरला प्राच्या मूषिका वनवासका। कर्णाटका माहिषका विकल्पा मूषकास्तथा॥ ५९॥ झिल्लिका कुन्तलाश्चैव सौहृदा नवकानना। कौकुट्टकास्तथा चोला कोङ्कणा मालवानका॥ ६०॥ समङ्गा करकाश्चैव कुक्कुराङ्गारमारिषा। ध्वजिन्युत्सवसङ्केतास्त्रिगर्त्ताः शाल्वसेनय॥ ६१॥ वका कोकरका प्रोष्ठा समवेगवशास्तथा। तथैव विन्ध्यचुलका पुलिन्दा वल्कलैः सह॥ ६२॥ मालवा मल्लवाश्चैव तथैवापरवल्लभा। कुलिन्दा कालवाश्चैव कुण्टका करटास्तथा॥ ६३॥ मूषकास्तनवालाश्च सनीयाघटसृञ्जया। अलिन्दा पाशिवाटाश्च तनया सुनयास्तथा॥ ६४॥ ऋषीविदर्भा कान्तीकास्तङ्गणा परतङ्गणा। उत्तराश्चापरे म्लेच्छा क्रूरा भरतसत्तम॥ ६५॥ यवनाश्चीनकाम्बोजा दारुणा म्लेच्छजातय। सक्षद्‌ग्रहा कुलत्थाश्च हूना पारसिकैः सह॥ ६६॥ तथैव रमणाश्चीनास्तथैव दशमालिका। क्षत्रिया योनिवेशाश्च वैश्यशूद्रकुलानि च॥ ६७॥ शूद्राभीराश्च दरदा काश्मीरा पत्तिभिः सह। खशीराश्चान्तचाराश्च पह्लवा गिरिगह्वरा॥ ६८॥

आत्रेयाः सभरद्वाजास्तथैव स्तनपोषिकाः । प्रोषकाश्च कलिङ्गाश्च
किरातानाञ्च जातयः ॥ ६९ ॥ तोमरा हंसमार्गाश्च तथैव कर-
भञ्जकाः । एते चान्ये जनपदाः प्राच्योदीच्यास्तथैव च ॥ ७० ॥
उद्देशमात्रेण मया देशाः सङ्कीर्त्तिता विभो । यथागुणं बल-
ञ्चापि त्रिवर्गस्य महाफलम् ॥ ७१ ॥ दुह्येत धेनुः कामधुक् भूमिः
सम्यगनुष्ठिता । तस्यां गृध्यन्ति राजानः शूरा धर्मार्थकोविदाः
॥ ७२ ॥ ते त्यजन्त्याहवे प्राणान् वसुगृद्धास्तरस्विनः । देव-
मानुषकायानां कामं भूमिः परायणम् ॥ ७३ ॥ अन्योऽन्यस्याव-
लुम्पन्ति सारमेया यथामिषम् । राजन्या भरतश्रेष्ठ भोक्तुकामा
वसुन्धराम् ॥ ७४ ॥ न चापि तृप्तिः कामानां विद्यतेऽद्यापि कस्य-
चित् । तस्मात् परिग्रहे भूमेर्यतन्ते कुरुपाण्डवाः ॥ ७५ ॥ साम्ना
भेदेन दानेन दण्डेनैव च भारत । पिता माता च पुत्राश्च खञ्चौश्च
नरपुङ्गव । भूमिर्भवति भूतानां सम्यगच्छिद्रदर्शिना ॥ ७६ ॥

इति भीष्मपर्वणि जम्बूखण्डविनिर्माणपर्वणि भारतीयनद्यादि-
कथने नवमोऽध्यायः ॥ ९ ॥

---

धृतराष्ट्र उवाच । भारतस्यास्य वर्षस्य तथा हैमवतस्य च ।
प्रमाणमायुषः सूत बलञ्चापि शुभाशुभम् ॥ १ ॥ अनागतमतिक्रान्तं
वर्त्तमानञ्च सञ्जय । आचक्ष्व मे विस्तरेण हरिवर्षं तथैव च ॥२॥

सञ्जय उवाच । चत्वारि भारते वर्षे युगानि भरतर्षभ ।
कृतं त्रेता द्वापरञ्च तिष्यञ्च कुरुवर्द्धन ॥ ३ ॥ पूर्व्वं कृतयुगं नाम
ततस्त्रेतायुगं प्रभो । संक्षेपात् द्वापरस्याथ ततस्तिष्यं प्रवर्त्तते ॥४॥
चत्वारि तु सहस्राणि वर्षाणां कुरुसत्तम । आयुःसङ्ख्या कृत-
युगे सङ्ख्याता राजसत्तम ॥ ५ ॥ तथा त्रीणि सहस्राणि त्रेताया
मनुजाधिप । द्वे सहस्रे द्वापरे च भुवि तिष्ठन्ति साम्प्रतम् ॥ ६ ॥

न प्रमाणस्थितिर्ह्यस्मिं स्तिष्येऽस्मिन् भरतर्षभ । गर्भस्थाश्च म्रियन्तेऽत्र तथा जाता म्रियन्ति च ॥ ७ ॥ महाबला महासत्त्वा प्रज्ञागुणसमन्विता । प्रजायन्ते च जाताश्च शतशोऽथ सहस्रश ॥ ८ ॥ जाता कृतयुगे राजन् धनिन प्रियदर्शना । प्रजायन्ते च जाताश्च मुनयो वै तपोधना ॥ ९ ॥ महोत्साहा महात्मानो धार्मिका सत्यवादिन । प्रियदर्शा वपुष्मन्तो महावीर्या धनुर्द्धरा ॥ १० ॥ वरार्हा युधि जायन्ते क्षत्रिया शूरसत्तमा । त्रेतायां क्षत्रिया राजन् सर्वे वै चक्रवर्त्तिन ॥ ११ ॥ आयुष्मन्तो महावीरा धनुर्द्धरवरा युधि । जायन्ते क्षत्रिया शूरास्त्रेतायां वशवर्त्तिन ॥ १२ ॥ सर्वे वर्णा महाराज जायन्ते द्वापरे सति । महोत्साहा वीर्यवन्त परस्परजयैषिण ॥ १३ ॥ तेजसाल्पेन संयुक्ता क्रोधना पुरुषा नृप । लुब्धा अनृतकाश्चैव तिष्ये जायन्ति भारत ॥ १४ ॥ ईर्षा मानस्तथा क्रोधो मायासूया तथैव च । तिष्ये भवति भूताना रागो लोभश्च भारत ॥ १५ ॥ संक्षेपो वर्त्तते राजन् द्वापरेऽस्मिन्नराधिप । गुणोत्तरं हैमवतं हरिवर्षं तथैव च ॥१६॥

इति भीष्मपर्वणि जम्बूखण्डविनिर्माणपर्वणि भारतवर्षायु
निरूपणे दशमोऽध्याय ॥ १० ॥

समाप्तञ्च जम्बूखण्डविनिर्माणपर्व ॥

---

अथ भूमिपर्व ॥

धृतराष्ट्र उवाच । जम्बूखण्डस्त्वया प्रोक्तो यथावदिह सञ्जय । विष्कम्भमस्य प्रब्रूहि परिमाणन्तु तत्त्वत ॥ १ ॥ समुद्रस्य प्रमाणञ्च सम्यगच्छिद्रदर्शनम् । शाकद्वीपञ्च मे ब्रूहि कुशद्वीपञ्च सञ्जय ॥ २ ॥ शाल्मलिञ्चैव तत्त्वेन क्रौञ्चद्वीपं तथैव च । ब्रूहि गावल्गणे सर्वं राहो सोमार्कयोस्तथा ॥ ३ ॥

सञ्जय उवाच। राजन् सुबहवो द्वीपा यैरिदं सन्ततं जगत्। सप्त द्वीपान् प्रवक्ष्यामि चन्द्रादित्यौ ग्रहांस्तथा ॥ ४ ॥ अष्टादश सहस्राणि योजनानां विशाम्पते। षट्‌शतानि च पूर्णानि विष्कम्भो जम्बुपर्वतः ॥ ५ ॥ लवणस्य समुद्रस्य विष्कम्भो द्विगुणः स्मृतः। नानाजनपदाकीर्णो मणिविद्रुमचित्रितः ॥ ६ ॥ नैकधातुविचित्रैश्च पर्वतैरुपशोभितः। सिद्धचारणसङ्कीर्णः सागरः परिमण्डलः ॥ ७ ॥ शाकद्वीपञ्च वक्ष्यामि यथावदिह भारत। शृणु मे त्वं यथान्यायं ब्रुवतः कुरुनन्दन ॥ ८ ॥ जम्बूद्वीपप्रमाणेन द्विगुणः कुरुनन्दन। विष्कम्भेण महाराज सागरोऽपि विभागशः ॥ ९ ॥ क्षीरोदो भरतश्रेष्ठ येन सम्परिवारितः। तत्र पुण्या जनपदा न तत्र म्रियते नरः ॥ १० ॥ कुत एव च दुर्भिक्षं क्षमातेजोयुता हि ते। शाकद्वीपस्य सङ्क्षेपो यथावत् भरतर्षभ। उक्त एष महाराज किमन्यत् श्रोतुमिच्छसि ॥ ११ ॥

धृतराष्ट्र उवाच। शाकद्वीपस्य सङ्क्षेपो यथावदिह पूर्वशः। उक्त एष महाप्राज्ञ विस्तरं ब्रूहि तत्त्वतः ॥ १२ ॥

धृतराष्ट्र उवाच। सुमहान् संशयो मेऽद्य प्रोक्तोऽयं सञ्जय त्वया। प्रजा कथं सूतपुत्र सम्प्राप्ता श्यामतामिह ॥ २० ॥

सञ्जय उवाच। सर्वेष्वेव महाराज द्वीपेषु कुरुनन्दन। गौरः कृष्णश्च पतङ्गो यतो वर्णान्तरे द्विजा ॥ २१ ॥ श्यामो यस्मात प्रवृत्तो वै तत्ते वक्ष्यामि भारत। तत्र पर कौरवेन्द्र दुर्गशैलो महोदय ॥ २२ ॥ केसरो केसरयुतो यतो वात प्रजायते। तेषां योजनविष्कम्भो द्विगुण प्रविभागश ॥ २३ ॥ वर्षाणि तेषु कौरव्य सप्तोक्तानि मनीषिभि। महामेरुर्महा कामो जलद कुमुदोत्तर ॥ २४ ॥ जलधारो महाराज सुकुमार इति स्मृत। रैवतस्य तु कौमार श्यामस्य मणिकाञ्चन ॥२५॥ केसरस्याथ मोदकी परेण तु महापुमान्। परिवार्य च कौरव्य दैर्घ्यं ह्रस्वत्वमेव च ॥ २६ ॥ जम्बूद्वीपेन सङ्ख्यातस्तस्य मध्ये महाद्रुम। शाको नाम महाराज प्रजा यस्य महानुगा ॥२७॥ तत्र पुण्या जनपदा पूज्यते यत्र शङ्कर। तत्र गच्छन्ति सिद्धाश्च चारणा दैवतानि च ॥ २८ ॥ धार्मिकाश्च प्रजा राजंश्चत्वारोऽतीव भारत। वर्णा स्वधर्मनिरता न च स्तेनोऽत्र दृश्यते ॥२९॥ दीर्घायुषो महाराज जरामृत्युविवर्जिता। प्रजास्तत्र विवर्धन्ते वर्षास्विव समुद्रगा ॥ ४० ॥ नद्य पुण्यजलास्तत्र गङ्गा च बहुधागता। सुकुमारी कुमारी च शीता कावेरका तथा ॥ ४१ ॥ महानदी च कौरव्य तथा मणिजला नदी। चक्षुर्वर्धनिका चैव नदी भरतसत्तम ॥ ४२ ॥ तत्र प्रवृत्ता पुण्योदा नद्य कुरुकुलोद्वह। सहस्राणां शतान्येव यतो वर्षति वासव ॥ ४३ ॥ न तासां नामधेयानि परिमाणं तथैव च। शक्यते परिसङ्ख्यातु पुण्यास्ता हि सरिद्वरा ॥ ४४ ॥ तत्र पुण्या जनपदाश्चत्वारो लोकसम्मता। मृगाश्च मशकाश्चैव मानसा मन्दगास्तथा ॥ ४५ ॥ मृगा ब्राह्मणभूयिष्ठा स्वकर्मनिरतास्तथा। मशकेषु तु राजन्या

धार्म्मिकाः सर्व्वकामदाः ॥ ४६ ॥ मानसाय महाराज वैश्यधर्म्मोप-
जीविनः । सर्व्वकामसमायुक्ताः शूरा धर्मार्थनिश्चयाः ॥ ४७ ॥
शूद्राश्च मन्दगास्तत्र पुरुषा धर्म्मशीलिनः । न तत्र राजा राजेन्द्र
न दण्डो न च दण्डिकः ॥ ४८ ॥ स्वधर्म्मेणैव धर्म्मज्ञास्ते रक्षन्ति
परस्परम् । एतावदेव शक्यन्तु तत्र द्वीपे प्रभाषितुम् । एतदेव
तु श्रोतव्यं शाकद्वीपे महौजसि ॥ ४९ ॥

इति भीष्मपर्व्वणि भूमिपर्व्वणि शाकद्वीपवर्णने
एकादशोऽध्यायः ॥ ११ ॥

---

सञ्जय उवाच । उत्तरेषु च कौरव्य द्वीपेषु श्रूयते कथा ।
एवं तत्र महाराज ब्रुवतश्च निबोध मे ॥ १ ॥ घृततोयः समुद्रोऽत्र
दधिमण्डोदकः परः । सुरोदः सागरश्चैव तथान्यो जलसागरः
॥ २ ॥ परस्परेण द्विगुणाः सर्व्वे द्वीपा नराधिप । एवमेव
महाराज समुद्रैः परिवारिताः ॥ ३ ॥ गौरस्तु मध्यमे द्वीपे
गिरिर्मानःशिलो महान् । पर्व्वतः पश्चिमे कृष्णो नारायणसखो
नृप ॥ ४ ॥ तत्र रत्नानि दिव्यानि स्वयं रक्षति केशवः । प्रसन्न-
श्चाभवत्तत्र प्रजानां व्यदधत् सुखम् ॥ ५ ॥ कुशस्तम्बः कुशद्वीपे
मध्ये जनपदैः सह । सम्पूज्यते शाल्मलिश्च द्वीपे शाल्मलिके नृप ।
॥ ६ ॥ क्रौञ्चद्वीपे महाक्रौञ्चो गिरी रत्नचयाकरः । सम्पूज्यते
महाराज चातुर्व्वर्ण्येन नित्यदा ॥ ७ ॥ गोमन्दः पर्व्वतो राजन्
सुमहान् सर्व्वधातुकः । यत्र नित्यं निवसति श्रीमान् कमल-
लोचनः ॥ ८ ॥ मोक्षिभिः संस्तुतो नित्यं प्रभुर्नारायणो हरिः ।
कुशद्वीपे तु राजेन्द्र पर्व्वतो विद्रुमैश्चितः ॥ ९ ॥ सुनामनामा
दुर्द्धर्षो द्वितीयो हेमपर्व्वतः । द्युतिमान्नाम कौरव्य तृतीयः
कुमुदो गिरिः ॥ १० ॥ चतुर्थः पुष्पवन्नाम पञ्चमस्तु कुशेशयः ।

षष्ठो हरिगिरिर्नाम षड़ेते पर्वतोत्तमाः ॥ ११ ॥ तेषामन्तर-
विष्कम्भो द्विगुणः सर्वभागशः। औद्भिदं प्रथमं वर्षं द्वितीयं वेणु-
मण्डलम् ॥ १२ ॥ तृतीयं सुरथाकारं चतुर्थं कम्बलं स्मृतम्।
धृतिमत पञ्चमं वर्षं षष्ठं वर्षं प्रभाकरम् ॥ १३ ॥ सप्तमं कापिलं
वर्षं सप्तैते वर्षलम्भकाः। एतेषु देवगन्धर्वाः प्रजाश्च जगतीश्वर
॥ १४ ॥ विहरन्ति रमन्ते च न तेषु म्रियते जनः। न तेषु
दस्यवः सन्ति म्लेच्छजात्योऽपि वा नृप ॥ १५ ॥ गौरप्रायो
जनः सर्वः सुकुमारश्च पार्थिव। अवशिष्टेषु सर्वेषु वक्ष्यामि मनु-
जेश्वर ॥ १६ ॥ यथाश्रुतं महाराज तदव्यग्रमनाः शृणु। क्रौञ्च-
द्वीपे महाराज क्रौञ्चो नाम महागिरिः ॥ १७ ॥ क्रौञ्चात् परो
वामनको वामनादन्धकारकः। अन्धकारात् परो राजन् मैनाकः
पर्वतोत्तमः ॥ १८ ॥ मैनाकात् परतो राजन् गोविन्दो गिरि-
रुत्तमः। गोविन्दात् परतो राजन् निविड़ो नाम पर्वतः ॥१९॥
परस्तु द्विगुणस्तेषां विष्कम्भो वंशवर्द्धन। देशांस्तत्र प्रवक्ष्यामि
तन्मे निगदतः शृणु ॥ २० ॥ क्रौञ्चस्य कुशलो देशो वामनस्य
मनोनुगः। मनोनुगात् परश्चोष्णो देशः कुरुकुलोद्वह ॥ २१ ॥
उष्णात् परः प्रावरकः प्रावारादन्धकारकः। अन्धकारकदेशात्तु
मुनिदेशः परः स्मृतः ॥ २२ ॥ मुनिदेशात् परश्चैव प्रोच्यते दुन्दु-
भिस्वनः। सिद्धचारणसङ्कीर्णो गौरप्रायो जनाधिप ॥ २३ ॥
एते देशा महाराज देवगन्धर्वसेविताः। पुष्करे पुष्करो नाम
पर्वतो मणिरत्नवान् ॥ २४ ॥ तत्र नित्यं प्रवसति स्वयं देवः
प्रजापतिः। तं पर्युपासते नित्यं देवाः सर्वे महर्षय ॥ २५ ॥
वाग्भिर्मनोऽनुकूलाभिः पूजयन्तो जनाधिप। जम्बूद्वीपात् प्रव-
र्त्तन्ते रत्नानि विविधानि च ॥ २६ ॥ एवं द्वीपेषु सर्वेषु प्रजानां
कुरुनन्दन। ब्रह्मचर्य्येण सत्येन प्रजानां हि दमेन च ॥ २७ ।
आरोग्यायुःप्रमाणाभ्यां द्विगुणं द्विगुणं ततः। एको जनपदो

राजन् द्वीपेष्वेतेषु भारत ॥ २८ ॥ उक्ता जनपदा येषु कर्म्म चैकं प्रदृश्यते । ईश्वरो दण्डमुद्यम्य स्वयमेव प्रजापतिः ॥ २९ ॥ द्वीपानान्तु महाराज रचंस्तिष्ठति नित्यदा । स राजा स शिवो राजन् स पिता प्रपितामहः ॥ ३० ॥ गोपायति नरश्रेष्ठ प्रजाः सजड़पण्डिताः । भोजनञ्चात्र कौरव्य प्रजाः स्वयमुपस्थितम् ॥३१॥ सिद्धमेव महाबाहो तद्धि भुञ्जन्ति नित्यदा । ततः परं समा नाम दृश्यते लोकसंस्थितिः ॥३२॥ चतुरस्रं महाराज त्रयस्त्रिंशत्तु मण्डलम् । तत्र तिष्ठन्ति कौरव्य चत्वारो लोकसम्मताः ॥ ३३ ॥ दिग्गजा भरतश्रेष्ठ वामनैरावतादयः । सुप्रतीकस्तथा राजन् प्रभिन्नकरटामुखः ॥ ३४ ॥ तस्याहं परिमाणन्तु न सङ्ख्यातुमिहोत्सहे । असङ्ख्यातः स नित्यं हि तिर्य्यगूर्द्ध्वमधस्तथा ॥३५॥ तत्र वै वायवो वान्ति दिग्भ्यः सर्व्वाभ्य एव च । असम्बद्धा महाराज तान्निगृह्णन्ति ते हिमाः ॥ ३६ ॥ पुष्करैः पद्मसङ्काशैर्विकसद्भिर्महाप्रभैः । शतधा पुनरेवाशु ते तान् मुञ्चन्ति नित्यशः ॥३७॥ श्वसद्भिर्मुच्यमानास्तु दिग्गजैरिह मारुताः । आगच्छन्ति महाराज ततस्तिष्ठन्ति वै प्रजाः ॥ ३८ ॥

धृतराष्ट्र उवाच । परो वै विस्तरोऽत्यर्थं त्वया सञ्जय कीर्त्तितः । दर्शितं द्वीपसंस्थानमुत्तरं ब्रूहि सञ्जय ॥ ३९ ॥

सञ्जय उवाच । उक्ता द्वीपा महाराज ग्रहान् वै शृणु तत्त्वतः । स्वर्भानोः कौरवश्रेष्ठ यावदेव प्रमाणतः ॥ ४० ॥ परिमण्डलो महाराज स्वर्भानुः श्रूयते ग्रहः । योजनानां सहस्राणि विष्कम्भो द्वादशास्य वै ॥ ४१ ॥ परिणाहेन षट्त्रिंशद्विपुलत्वेन चानघ । षष्टिमाहुः शतान्यस्य बुधाः पौराणिकास्तथा ॥ ४२ ॥ चन्द्रमास्तु सहस्राणि राजन्नेकादश स्मृतः । विष्कम्भेन कुरुश्रेष्ठ त्रयस्त्रिंशत्तु मण्डलम् ॥ ४३ ॥ एकोनषष्टिविष्कम्भं शीतरश्मेर्महात्मनः । सूर्य्यस्त्वष्टौ सहस्राणि द्वे चापि कुरुनन्दन ॥ ४४ ॥

विष्कम्भेण ततो राजन् मण्डलं त्रिंशता समम्। अष्टपञ्चाशतं राजन् विपुलत्वेन चानघ ॥ ४५ ॥ श्रूयते परमोदारः पतगोऽसौ विभावसुः। एतत् प्रमाणमर्कस्य निर्द्दिष्टमिह भारत ॥ ४६ ॥ स राहुश्छादयत्येतौ यथाकालं महत्तया। चन्द्रादित्यौ महाराज सङ्क्षेपोऽयमुदाहृतः ॥ ४७ ॥ इत्येतत्ते महाराज पृच्छतः शास्त्रचक्षुषा। सर्वमुक्तं यथातत्त्वं तस्माच्छममवाप्नुहि ॥ ४८ ॥ यथादिष्टं मया प्रोक्तं सनिर्माणमिदं जगत्। तस्मादाश्वस कौरव्य पुत्रं दुर्य्योधनं प्रति ॥ ४९ ॥ श्रुत्वेदं भरतश्रेष्ठ भूमिपर्व मनोनुगम्। श्रीमान् भवति राजन्यः सिद्धार्थः साधुसत्तम ॥५०॥ आयुर्बलञ्च कीर्त्तिश्च तस्य तेजश्च वर्द्धते। यः शृणोति महीपाल पर्व्वणीदं यतव्रतः ॥ ५१ ॥ प्रीणन्ति पितरस्तस्य तथैव च पितामहाः। इदन्तु भारतं वर्षं यत्र वर्त्तामहे वयम्। पूर्व्वं प्रवर्त्तितं पुण्यं तत् सर्व्वं श्रुतवानसि ॥ ५२ ॥

इति भीष्मपर्व्वणि भूमिपर्व्वणि उत्तरकुर्व्वादिनिरूपणे द्वादशोऽध्यायः ॥ १२ ॥ समाप्तञ्च भूमिपर्व्व ॥

---

अथ भगवद्गीतापर्व्व ॥

वैशम्पायन उवाच। अथ गावल्गणिर्विद्वान् संयुगादेत्य भारत। प्रत्यक्षदर्शी सर्व्वस्य भूतभव्यभविष्यवित् ॥ १ ॥ ध्यायते धृतराष्ट्राय सहसोत्पत्य दुःखितः। आचष्ट निहतं भीष्मं भारतानां पितामहम् ॥ २ ॥

सञ्जय उवाच। सञ्जयोऽहं महाराज नमस्ते भरतर्षभ। हतो भीष्मः शान्तनवो भरतानां पितामहः ॥ ३ ॥ ककुदं सर्व्वयोधानां धाम सर्व्वधनुष्मताम्। शरतल्पगतः सोऽद्य शेते कुरुपितामहः ॥ ४ ॥ यस्य वीर्य्यं समाश्रित्य द्यूतं पुत्रस्तवाकरोत्।

स शेते निहतो राजन् सङ्ख्ये भीष्मः शिखण्डिना ॥ ५ ॥ यः सर्व्वान् पृथिवीपालान् समवेतान् महामृधे। जिगायैकरथेनैव काशिपुर्य्यां महारथः ॥ ६ ॥ जामदग्न्यं रणे रामं योऽयुध्यदसम्भ्रमः। न हतो जामदग्न्येन स हतोऽद्य शिखण्डिना ॥ ७ ॥ महेन्द्रसदृशः शौर्य्ये स्थैर्य्ये च हिमवानिव। समुद्र इव गाम्भीर्य्ये सहिष्णुत्वे धरासमः ॥ ८ ॥ शरदंष्ट्रो धनुर्वक्त्रः खड्गजिह्वो दुरासदः। नरसिंहः पिता तेऽद्य पाञ्चाल्येन निपातितः ॥ ९ ॥ पाण्डवानां महासैन्यं यं दृष्ट्वोद्यतमाहवे। प्रावेपत भयोद्विग्नं सिंहं दृष्ट्वेव गोगणाः ॥ १० ॥ परिरक्ष्य स सेनां तां दशरात्रं प्रवीरहा। जगामास्तमिवादित्यः कृत्वा कर्म सुदुष्करम् ॥ ११ ॥ यः स शक्र इवाक्षोभ्यो वर्षन् वाणान् सहस्रशः। जघान युधि योधानामर्बुदं दशभिर्दिनैः ॥ १२ ॥ स शेते निहतो भूमौ वातभग्न इव द्रुमः। तव दुर्म्मन्त्रिते राजन् यथा नार्हः स भारतः ॥१३॥

इति भीष्मपर्व्वणि भगवद्गीतापर्व्वणि भीष्मवधश्रवणे त्रयोदशोऽध्यायः ॥ १३ ॥



धृतराष्ट्र उवाच। कथं कुरूणामृषभो हतो भीष्मः शिखण्डिना। कथं रथात् स न्यपतत् पिता मे वासवोपमः ॥ १ ॥ कथमासंश्च मे पुत्रा हीना भीष्मेण सञ्जय। बलिना देवकल्पेन गुर्व्वर्थे ब्रह्मचारिणा ॥ २ ॥ तस्मिन् हते महाप्राज्ञे महोत्साहे महाबले। महासत्त्वे नरव्याघ्रे किं न आसीन्मनस्तदा ॥ ३ ॥ आर्त्तिं परामाविशति मनः संश्रुत्य मे हतम्। कुरूणामृषभं वीरमकम्प्यं पुरुषर्षभम् ॥ ४ ॥ के तं यान्तमनुप्राप्ताः के वास्यासन् पुरोगमाः। केऽतिष्ठन् के न्यवर्त्तन्त केऽभ्यवर्त्तन्त सञ्जय ॥५॥ के शूरा रथशार्दूलमद्भुतं क्षत्रियर्षभम्। तथानीकं गाहमानं

समरे पृष्ठतोऽन्वयुः ॥ ६ ॥ यस्तमोऽर्क इवापोहन् परसैन्यममित्रहा। सहस्ररश्मिप्रतिमः परेषां भयमादधत ॥ ७ ॥ अकरोत दुष्करं कर्म रणे पाण्डुसुतेषु च। ग्रसमानमनीकानि य एनं पर्यवारयत ॥ ८ ॥ कृतिनन्तं दुराधर्षं सञ्जयास्यन्तमन्तिके। कथं शान्तनवं युद्धे पाण्डवाः प्रत्यवारयन् ॥ ९ ॥ निकृन्तन्तमनीकानि शरदंष्ट्रं तरस्विनम्। चापव्यात्ताननं घोरमसिजिह्वं दुरासदम् ॥ १० ॥ अनर्हं पुरुषव्याघ्रं ह्रीमन्तमपराजितम्। पातयामास कौन्तेयः कथं तमजितं युधि ॥ ११ ॥ उग्रधन्वानमुग्रेषु वर्त्तमानं रथोत्तमे। परेषामुत्तमाङ्गानि प्रचिन्वन्तमथेषुभिः ॥ १२ ॥ पाण्डवानां महत् सैन्यं यं दृष्ट्वोद्यन्तमाहवे। कालाग्निमिव दुर्द्धर्षं समचेष्टत नित्यशः ॥ १३ ॥ परिकृष्य स सेनान्तु दशरात्रमनीकहा। जगामास्तमिवादित्यः कृत्वा कर्म सुदुष्करम् ॥ १४ ॥ यः स शक्र इवाक्षय्यं वर्षं शरमयं क्षिपन्। जघान युधि योधानामर्बुदं दशभिर्दिनैः ॥ १५ ॥ स शेते निहतो भूमौ वातभग्न इव द्रुमः। मम दुर्मन्त्रितेनाजौ यथा नार्हति भारत ॥ १६ ॥ कथं शान्तनवं दृष्ट्वा पाञ्चालानामनीकिनी। प्रहर्त्तुमशकत्तत्र भीष्मं भीमपराक्रमम् ॥ १७ ॥ कथं भीष्मेण संग्राममकुर्वन् पाण्डुनन्दनाः। कथञ्च नाजयत् भीष्मो द्रोणे जीवति सञ्जय ॥ १८ ॥ कृपे सन्निहिते तत्र भरद्वाजात्मजे तथा। भीष्मः प्रहरतां श्रेष्ठः कथं स निधनं गतः ॥ १९ ॥ कथञ्चातिरथस्तेन पाञ्चाल्येन शिखण्डिना। भीष्मो विनिहतो युद्धे देवैरपि दुराधृषः ॥ २० ॥ यः स्पर्द्धते रणे नित्यं जामदग्न्यं महाबलम्। अजितं जामदग्न्येन शक्रतुल्यपराक्रमम् ॥ २१ ॥ तं हतं समरे भीष्मं महारथकुलोदितम्। सञ्जयाचक्ष्व मे वीरं येन शर्म न विद्महे ॥ २२ ॥ मामकाः के महेष्वासा नाजह्युः सञ्जयाच्युतम्। दुर्य्योधनसमादिष्टाः के वीराः पर्य्यवारयन् ॥ २३ ॥

यच्छिखण्डिमुखाः सर्वे पाण्डवा भीष्ममभ्ययुः। कच्चित्ते कुरवः सर्वे नाजह्नुः सञ्जयाच्युतम् ॥ २४ ॥ अश्मसारमयं नूनं हृदयं सुदृढं मम। यच्छ्रुत्वा पुरुषव्याघ्रं हतं भीष्मं न दीर्य्यते ॥ २५ ॥ तस्मिन् सत्यञ्च मेधा च नीतिश्च भरतर्षभे। अप्रमेयाणि दुर्द्धर्षे कथं स निहतो युधि ॥ २६ ॥ मौर्वीघोषस्तनयित्नुः पृषत्कपृषतो महान्। धनुर्ह्रादमहाशब्दो महामेघ इवोन्नतः ॥ २७ ॥

बल। न पाण्डवानगणयत कथं स निहतः परैः ॥ ४१ ॥ यः पुरा विबुधैः सर्वैः साहाय्ये युद्धदुर्मदः। काङ्क्षितो दानवान् घ्नद्भिः पिता मम महाव्रतः ॥ ४२ ॥ यस्मिन् जाते महावीर्य्ये शान्तनुर्लोकविश्रुतः। शोकं दैन्यञ्च दुःखञ्च प्राजहत् पुत्रलक्ष्मणि ॥ ४३ ॥ प्रोक्तं परायणं प्राज्ञं स्वधर्मनिरतं शुचिम्। वेदवेदाङ्ग-तत्त्वज्ञं कथं शंससि मे हतम् ॥ ४४ ॥ सर्वास्त्रविनयोपेतं शान्तं दान्तं मनस्विनम्। हतं शान्तनवं श्रुत्वा मन्ये शेषं हतं बलम् ॥ ४५ ॥ धर्मादधर्मो बलवान् सम्प्राप्त इति मे मतिः। यत्र वृद्धं गुरुं हत्वा राज्यमिच्छन्ति पाण्डवाः ॥ ४६ ॥ जामदग्न्यः पुरा रामः सर्वास्त्रविदनुत्तमः। अम्बार्थमुद्यतः सङ्ख्ये भीष्मेण युधि निर्ज्जितः ॥ ४७ ॥ तमिन्द्रसमकर्म्माणं ककुदं सर्वधन्विनाम्। हतं शंससि मे भीष्मं किन्नु दुःखमतः परम् ॥ ४८ ॥ असकृत् क्षत्रियव्राताः सङ्ख्ये येन विनिर्ज्जिताः। जामदग्न्येन रामेण परवीरनिघातिना ॥ ४९ ॥ न हतो यो महाबुद्धिः स हतोऽद्य शिखण्डिना। तस्मान्नूनं महावीर्य्यात् भार्गवात् युद्धदुर्मदात् ॥५०॥ तेजोवीर्य्यबलैर्भूयान् शिखण्डी द्रुपदात्मजः। यः शूरं कृतिनं युद्धे सर्वशास्त्रविशारदम् ॥ ५१ ॥ परमास्त्रविदं शूरं जघान भरतर्षभम्। के वीरास्तममित्रघ्नमन्वयुः शस्त्रसंसदि ॥ ५२ ॥ शंस मे तत् यथा चासीत् युद्धं भीष्मस्य पाण्डवैः। योषेव हतवीरा मे सेना पुत्रस्य सञ्जय ॥ ५३ ॥ अगोपमिव चोद्भ्रान्तं गोकुलं तद्बलं मम। पौरुषं सर्वलोकस्य परं यस्मिन् महाहवे ॥ ५४ ॥ परासक्ते ततस्तस्मिन् कथमासीन्मनस्तदा। जीवितेऽप्यद्य सामर्थ्यं किमिवास्मासु सञ्जय ॥ ५५ ॥ घातयित्वा महावीर्य्यं पितरं लोकधार्म्मिकम्। अगाधसलिले मग्ना नौका दृष्ट्वेव पारगम् ॥ ५६ ॥ भीष्मे हते भृशं दुःखात् मन्ये शोचन्ति पुत्रकाः। अद्रिसारमयं नूनं हृदयं मम सञ्जय ॥ ५७ ॥ यच्छ्रुत्वा पुरुष

व्याघ्रं हतं भीष्मं न दीर्य्यते। यस्मिन्नस्त्राणि मेधा च नीतिश्च पुरुषर्षभे ॥ ५८ ॥ अप्रमेयाणि दुर्द्धर्षे कथं स निहतो युधि। न चास्त्रेण न शौर्य्येण तपसा मेधया न च ॥ ५९ ॥ न धृत्या न पुनस्त्यागान्मृत्योः कश्चिद्विमुच्यते। कालो नूनं महावीर्य्यः सर्व्व-लोकदुरत्ययः ॥ ६० ॥ यत्र शान्तनवं भीष्मं हतं शंससि सञ्जय। पुत्रशोकाभिसन्तप्तो महद्दुःखमचिन्तयन् ॥ ६१ ॥ आशंसेऽहं पुरा त्राणं भीष्माच्छान्तनुनन्दनात्। यदादित्यमिवापश्यत् पतन्तं भुवि सञ्जय ॥ ६२ ॥ दुर्य्योधन शान्तनवं किन्तदा प्रत्यपद्यत। नाहं शेषं परेषां वा बुद्ध्या सञ्जय चिन्तयन् ॥ ६३ ॥ शेषं किञ्चित् प्रपश्यामि प्रत्यनीके महीक्षिताम्। दारुणः क्षत्रधर्म्मो-ऽयमृषिभिः सम्प्रदर्शितः ॥ ६४ ॥ यत्र शान्तनवं हत्वा राज्य-मिच्छन्ति पाण्डवाः। वयं वा राज्यमिच्छामो घातयित्वा महा-व्रतम् ॥ ६५ ॥ क्षत्रधर्म्मे स्थिताः पार्था नापराध्यन्ति पुत्रकाः। एतदार्य्येण कर्त्तव्यं कृच्छ्रास्वापत्सु सञ्जय ॥ ६६ ॥ पराक्रमः परा शक्तिस्तत्तु तस्मिन् प्रतिष्ठितम्। अनीकानि विनिघ्नन्तं ह्रीमन्तमपराजितम् ॥ ६७ ॥ कथं शान्तनवं तातं पाण्डुपुत्रा न्यवारयन्। यथा युक्तान्यनीकानि कथं युद्धं महात्मभिः ॥ ६८॥ कथं वा निहतो भीष्मः पिता सञ्जय मे परैः। दुर्य्योधनश्च कर्णश्च शकुनिश्चापि सौवलः ॥ ६९ ॥ दुःशासनश्च कितवो हते भीष्मे किमब्रुवन्। यच्छरीरैरुपस्तीर्णां नरवारणवाजिनाम् ॥ ७० ॥ शरशक्तिमहाखड्गतोमराढ्यां महाभयाम्। प्रावि-शन् कितवा मन्दाः सभां युद्धविशारदाः ॥ ७१ ॥ प्राणद्यूते प्रतिभये के दीव्यन्ते नरर्षभाः। के जीयन्ते जितास्तत्र कृतलक्ष्या निपातिताः ॥ ७२ ॥ अन्ये भीष्माच्छान्तनवात् तन्ममाचक्ष्व सञ्जय। न हि मे शान्तिरस्तीह श्रुत्वा देवव्रतं हतम् ॥ ७३ ॥ पितरं भीमकर्म्माणं भीष्ममाहवशोभिनम्। आर्त्तिं मे हृदये

स्तुहा महती पुत्रहानिजाम॥ ७४॥ त्वं हि मे सर्पिषेवाग्नि प्रदीपयसि सञ्जय। महान्त भारमुद्यम्य विश्रुत सार्वलौकिकम ॥ ७५॥ दृष्ट्वा विनिहत भीष्म मन्ये शोचन्ति पुत्रका। श्रोष्यामि तानि दुःखानि दुर्य्योधनकृतान्यहम ॥ ७६॥ तस्मान्मे सर्वमाचक्ष्व यद्वृत्त तत्र सञ्जय। यद्वृत्त तत्र संग्रामे मन्दस्याबुद्धिसम्भवम् ॥ ७७॥ अपनीत सुनीत यत तन्ममाचक्ष्व सञ्जय। यत्कृत तत्र संग्रामे भीष्मेण जयमिच्छता ॥ ७८॥ तेजोयुक्त कृतास्त्रेण शस तन्ममाद्यशेषत। यथा तदभवद्युद्ध कुरुपाण्डवसैनयो। क्रमेण येन यस्मिंश्च काले यच्च यथाभवत ॥ ७९॥

इति भीष्मपर्वणि भगवद्गीतापर्वणि धृतराष्ट्रप्रश्ने चतुर्द्दशोऽध्याय ॥ १४॥

---

सञ्जय उवाच। त्वद्युक्तोऽयमनुप्रश्नो महाराज यथार्हसि। न तु दुर्य्योधने दोषमिममासक्तुमर्हसि ॥ १॥ य आत्मनो दुश्चरितादशुभ प्राप्नुयान्नर। एनसा तेन नान्य स उपाशङ्कितुमर्हति॥ २। महाराज मनुष्येषु निन्द्य य सर्वमाचरेत। स वध्य सर्वलोकस्य निन्दितानि समाचरन् ॥ ३॥ निकारो निकृति प्रज्ञै पाण्डवस्त्वत्प्रतीक्षया। अनुभूत सहामात्यै क्षान्तय सुचिर वने ॥ ४॥ हयानाञ्च गजानाञ्च राज्ञाञ्चामिततेजसाम्। प्रत्यक्ष यन्मया दृष्ट दृष्ट योगबलेन च ॥ ५॥ शृणु तत पृथिवीपाल मा च शोके मन कृथा। दृष्टमेतत पुरा नूनमिदमेव नराधिप ॥ ६॥ नमस्कृत्य पितुस्तेऽह पाराशर्य्याय धीमते। यस्य प्रसादाद्दिव्य यत प्राप्त ज्ञानमनुत्तमम् ॥ ७। दृष्टिश्चातीन्द्रिया राजन् दूरात श्रवणमेव च। परचित्तस्य विज्ञानमतीतानागतस्य च॥ ८॥ व्युत्थितोत्पत्तिविज्ञानमाकाशे च गति शुभा। अस्त्रै-

रसज्ञो युद्धेषु वरदानान्महात्मनः ॥ ९ ॥ शृणु मे विस्तरेणेदं विचित्रं परमाद्भुतम्। भारतानामभूत् युद्धं यथा तल्लोमहर्षणम् ॥ १० ॥ तेष्वनीकेषु यत्तेषु व्यूढेषु च विधानतः। दुर्य्योधनो महाराज दुःशासनमथाब्रवीत् ॥ ११ ॥ दुःशासन रथास्तूर्णं युज्यन्तां भीष्मरक्षिणः। अनीकानि च सर्व्वाणि शीघ्रं समनुचोदय ॥ १२ ॥ अयं स मामभिप्राप्तो वर्षपूगाभिचिन्तितः। पाण्डवानां ससैन्यानां कुरूणाञ्च समागमः ॥ १३ ॥ नातः कार्य्यतमं मन्ये रणे भीष्मस्य रक्षणात्। हन्यात् गुप्तो ह्यसौ पार्थान् सोमकांश्च सहृञ्जयान् ॥ १४ ॥ अब्रवीच्च विशुद्धात्मा नाहं हन्यां शिखण्डिनम्। श्रूयते स्त्री ह्यसौ पूर्व्वं तस्मात् वर्ज्यो रणे मम ॥ १५ ॥ तस्मात् भीष्मो रक्षितव्यो विशेषेणेति मे मतिः। शिखण्डिनो वधे यत्ताः सर्व्वे तिष्ठन्तु मामकाः ॥ १६ ॥ तथा प्राच्याः प्रतीच्याश्च दाक्षिणात्योत्तरापथाः। सर्व्वशस्त्रेषु कुशलास्ते रक्षन्तु पितामहम् ॥ १७ ॥ अरक्ष्यमाणं हि वृको हन्यात् सिंहं महाबलम्। मा सिंहं जम्बुकेनेव घातयामः शिखण्डिना ॥ १८ ॥ वामं चक्रं युधामन्युरुत्तमौजाश्च दक्षिणम्। गोप्तारौ फाल्गुनं प्राप्तौ फाल्गुनोऽपि शिखण्डिनः ॥ १९ ॥ संरक्ष्यमाणः पार्थेन भीष्मेण च विवर्ज्जितः। यथा न हन्यात् गाङ्गेयं दुःशासन तथा कुरु ॥ २० ॥

इति भीष्मपर्व्वणि भगवद्गीतापर्व्वणि दुर्य्योधनदुःशासन-
संवादे पञ्चदशोऽध्यायः ॥ १५ ॥

---

सञ्जय उवाच। ततो रजन्यां व्युष्टायां स शब्दः सुमहानभूत्। क्रोशतां भूमिपालानां युज्यतां युज्यतामिति ॥ १ ॥

महादुन्दुभिघोषैश्च सिंहनादैश्च भारत। हयह्रेषितनादैश्च रथ नेमिस्वनैस्तथा ॥ २ ॥ गजानां बृंहतां चैव योधानाञ्च विग-र्जताम्। क्ष्वेलितास्फोटितोत्क्रुष्टैस्तुमुलं सर्वतोऽभवत् ॥ ३ ॥ उदतिष्ठन् महाराज सर्वं युक्तमशेषतः। सूर्योदये महत्सैन्यं कुरुपाण्डवसेनयोः ॥ ४ ॥ राजेन्द्र तव पुत्राणां पाण्डवानां तथैव च। दुष्प्रधृष्याणि चास्त्राणि शस्त्राणि कवचानि च ॥ ५ ॥ तत प्रकाशे सैन्यानि समदृश्यन्त भारत। त्वदीयानां परेषाञ्च शस्त्रवन्ति महान्ति च ॥ ६ ॥ तत्र नागा रथाश्चैव जाम्बूनद परिष्कृता। विभ्राजमाना दृश्यन्ते मेघा इव सविद्युतः ॥ ७ ॥ रथानीकान्यदृश्यन्त नगराणीव भूरिशः। अतीव शुशुभे तत्र पिता ते पूर्णचन्द्रवत् ॥ ८ ॥ धनुर्भिरृष्टिभिः खड्गैर्गदाभिः शक्तितोमरैः। योधा प्रहरणैः शुभ्रैस्तेष्वनीकेष्ववस्थिताः ॥ ९ ॥ गजा पदाता रथिनस्तुरगाश्च विशाम्पते। व्यतिष्ठन् वागुरा-कारा शतशोऽथ सहस्रशः ॥ १० ॥ ध्वजा बहुविधाकारा व्यदृश्यन्त समुच्छ्रिताः। स्वेषाञ्चैव परेषाञ्च द्युतिमन्तः सहस्रशः ॥ ११ ॥ काञ्चना मणिचित्राङ्गा ज्वलन्त इव पावकाः। अर्चिष्मन्तो व्यरोचन्त ध्वजारोहा सहस्रशः ॥ १२ ॥ महेन्द्रकेतवः शुभ्रा महेन्द्रसदनेष्विव। सन्नद्धास्ते प्रवीराश्च ददृशुर्युद्धकाङ्क्षिणः ॥ १३ ॥ उद्यतैरायुधैश्चित्रैस्तलबद्धाः कलापिनः। ऋषभाक्षा मनुष्येन्द्राश्चमूमुखगता बभुः ॥ १४ ॥ शकुनिः सौबलः शल्य आवन्त्योऽथ जयद्रथः। विन्दानुविन्दौ कैकेया काम्बोजश्च सुदक्षिणः ॥ १५ ॥ श्रुतायुधश्च कालिङ्गो जयत्सेनश्च पार्थिवः। वृहद्बलश्च कौरव्य कृतवर्मा च सात्वतः ॥ १६ ॥ दशैते पुरुष व्याघ्राः शूराः परिघबाहवः। अक्षौहिणीनां पतयो यज्वानो भूरिदक्षिणाः ॥ १७ ॥ एते चान्ये च बहवो दुर्योधनवशानुगाः। राजानो राजपुत्राश्च नीतिमन्तो महारथाः ॥ १८ ॥ सन्नद्धा

समदृश्यन्त स्वेष्वनीकेष्ववस्थिता । बद्धकृष्णाजिना सर्व्वे बलिनो युद्धशालिन ॥१९॥ हृष्टा दुर्य्योधनस्यार्थे ब्रह्मलोकाय दीक्षिता । समर्थो दशवाहिन्य परिगृह्य व्यवस्थिता ॥ २० ॥ एकादशी धार्त्तराष्ट्री कौरवाणा महाचमू । अग्रत सर्व्वसैन्याना यत्र शान्तनवोऽग्रणी ॥ २१ ॥ श्वेतोष्णीषं श्वेतच्छत्रं श्वेतवर्म्माण मच्युतम् । अपश्याम महाराज भीष्म चन्द्रमिवोदितम् ॥ २२ ॥ हेमतालध्वजं वीरं राजते स्यन्दने स्थितम् । श्वेताभ्र इव शीतांशु ददृशु कुरुपाण्डवा ॥ २३ ॥ सृञ्जयाश्च महेष्वासा धृष्टद्युम्न पुरोगमा । जृम्भमाणं महासिंहं दृष्ट्वा क्षुद्रमृगा यथा ॥ २४ ॥ धृष्टद्युम्नमुखा सर्व्वे समुद्विविजिरे मुहु । एकादशैता श्रीजुष्टा वाहिन्यस्तव पार्थिव ॥ २५ ॥ पाण्डवाना तथा सप्त महापुरुष-पालिता । उन्मत्तमकरावर्त्तौ महाग्राहसमाकुलौ ॥ २६ ॥ युगान्ते समवेतौ द्वौ दृश्येते सागराविव । नैव नस्तादृशो राजन् दृष्ट-पूर्व्वो न च श्रुत । अनीकाना समेताना कौरवाणा तथाविध ॥२७॥

इति भीष्मपर्व्वणि भगवद्गीतापर्व्वणि सैन्यवर्णने
षोड़शोऽध्याय ॥ १६ ॥

---

सञ्जय उवाच । यथा स भगवान् व्यास कृष्णद्वैपायनो ऽब्रवीत् । तथैव सहिता सर्व्वे समाजग्मुर्महीक्षित ॥ १ ॥ मघाविषयग सोमस्तद्दिन प्रत्यपद्यत । दीप्यमानाश्च सम्पेतु र्दिवि सप्त महाग्रहा ॥ २ ॥ द्विधाभूत इवादित्य उदये प्रत्य-दृश्यत । ज्वलन्त्या शिखया भूयो भानुमानुदितो दिवि ॥ ३ ॥ ववाशिरे च दीप्तायां दिशि गोमायुवायसा । लिप्-शरीराणि मांसशोणितभोजना ॥ ४ ॥ अहन्यहनि

वृद्ध कुरुपितामह। भरद्वाजात्मजश्चैव प्रातरुत्थाय संयतौ॥५॥
जयोऽस्तु पाण्डुपुत्राणामित्यूचतुररिन्दमौ। युयुधाते तवार्थाय
यथा स समय कृत॥ ६॥ सर्वधर्मविशेषज्ञ पिता देवव्रत-
स्तव। समानीय महीपालानिदं वचनमब्रवीत्॥ ७॥ इदं व
क्षत्रिया द्वारं स्वर्गायापावृतं महत्। गच्छध्वं तेन शक्रस्य ब्रह्म-
णश्च सलोकताम्॥ ८॥ एष व शुतिज पन्था पूर्वं पूर्वतरैः
कृत। सम्भावयध्वमात्मानमव्यग्रमनसो युधि॥ ९॥ नाभा-
गश्च ययातिश्च मान्धाता नहुषो नृग। संसिद्धा परम स्थानं
गता कर्मभिरीदृशै॥ १०॥ अधम क्षत्रियस्यैष यद्व्याधिमरण
गृहे। यद्राजो निधन याति सोऽस्य धर्म सनातन॥ ११॥
एवमुक्ता महीपाला भीष्मेण भरतर्षभ। निर्ययु स्वान्यनीकानि
शोभयन्तो रथोत्तमै॥ १२॥ स तु वैकर्त्तन कर्ण सामात्य
सह बन्धुभि। न्यासित समरे शस्त्रं भीष्मेण भरतर्षभ॥१३॥
अपेतकर्णा पुत्रास्ते राजानश्चैव तावका। निर्ययु सिंहनादेन
नादयन्तो दिशो दश॥ १४॥ श्वेतैश्छत्रै पताकाभिर्ध्वजवारण-
वाजिभि। तान्यनीकानि शोभन्ते गजैरथपदातिभि॥ १५॥
भेरीपणवशब्दैश्च दुन्दुभीनाञ्च निस्वनै। रथनेमिनिनादैश्च
बभूवाकुलिता मही॥ १६॥ काञ्चनाङ्गदकेयूरै कार्मुकैश्च महा
रथा। भ्राजमाना व्यराजन्त साग्नय पर्वता इव॥ १७॥
तालेन महता भीष्म पञ्चतारेण केतुना। विमलादित्यसङ्काश-
स्तस्थौ कुरुचमूपति॥ १८॥ ये त्वदीया महेष्वासा राजानो
भरतर्षभ। अवर्त्तन्त यथादिष्ट राजन् शान्तनवस्य ते॥ १९॥
स तु गोवासन शैव्य सहित सर्वराजभि। ययौ मातङ्गराजेन
राजार्हेण पताकिना॥ २०॥ पद्मवर्णस्त्वनीकानां सर्वेषामग्रत
स्थित। अश्वत्थामा ययौ यत्त सिंहलाङ्गूलकेतुना॥ २१॥
श्रुतायुधश्चित्रसेन पुरुमित्रो विविंशति। शल्यो भूरिश्रवाश्चैव

विकर्णश्च महारथः ॥ २२ ॥ एते सप्त महेष्वासा द्रोणपुत्रपुरोगमाः । स्यन्दनैर्वरवर्माणो भीष्मस्यासन् पुरोगमाः ॥ २३ ॥ तेषामपि महौत्सेधाः शोभयन्तो रथोत्तमाः । भ्राजमाना व्यरोचन्त जाम्बूनदमयध्वजाः ॥ २४ ॥ जाम्बूनदमयी वेदी कमण्डलुविभूषिता । केतुराचार्य्यमुख्यस्य द्रोणस्य धनुषा सह ॥२५॥ अनेकशतसाहस्रमनीकमनुकर्षतः । महान् दुर्य्योधनस्यासीन्नागो मणिमयो ध्वजः ॥ २६ ॥ तस्य पौरवकालिङ्गाः काम्बोजश्च सुदक्षिणः । क्षेमधन्वा च शल्यश्च तस्थुः प्रमुखतो रथाः ॥ २७ ॥ स्यन्दनेन महार्हेण केतुना वृषभेण च । प्रकर्षन्नेव सेनाग्रं मागधश्च रिपुं ययौ ॥ २८ ॥ तदङ्गपतिना गुप्तं कृपेण च मनस्विना । शारदाभ्रघनप्रख्यं प्राच्यानां सुमहद्बलम् ॥ २९ ॥ अनीकप्रमुखे तिष्ठन् वराहेण महायशाः । शुशुभे केतुमुख्येन राजतेन जयद्रथः ॥ ३० ॥ शतं रथसहस्राणां तस्यासन् वशवर्त्तिनः । अष्टौ नागसहस्राणि सादिनामयुतानि षट् ॥ ३१ ॥ तत् सिन्धुपतिना राज्ञा पालितं ध्वजिनीमुखम् । अनन्तरथनागाश्वमशोभत महद्बलम् ॥ ३२ ॥ षष्ट्या रथसहस्रैस्तु नागानामयुतेन च । पतिः सर्वकलिङ्गानां ययौ केतुमता सह ॥ ३३ ॥ तस्य पर्वतसङ्काशा व्यरोचन्त महागजाः । यन्त्रतोमरतूणीरपताकाभिश्च शोभिताः ॥ ३४ ॥ शुशुभे केतुमुख्येन पावकेन कलिङ्गकः । श्वेतच्छत्रेण निष्केण चामरव्यजनेन च ॥ ३५ ॥ केतुमानपि मातङ्गं विचित्रपरमाङ्कुशम् । आस्थितः समरे राजन् मेघस्थ इव भानुमान् ॥ ३६ ॥ तेजसा दीप्यमानस्तु वारणं तं समास्थितः । भगदत्तो ययौ राजा यथा वज्रधरस्तथा ॥ ३७ ॥ गजस्कन्धगतावास्तां भगदत्तेन सम्मितौ । विन्दानुविन्दावावन्त्यौ केतुमन्तमनुव्रतौ ॥ ३८ ॥ स रथानीकवान् व्यूहो हस्त्यङ्गो नृपशीर्षवान् । वाजिपक्षः पतत्युग्रः प्रहसन् सर्वतोमुखः ॥ ३९ ॥

द्रोणेन विहितो राजन् राज्ञा शान्तनवेन च । तथैवाचार्य्य-पुत्रेण वाह्लीकेन कृपेण च ॥ ४० ॥

इति भीष्मपर्वणि भगवद्गीतापर्वणि सैन्यवर्णने सप्तदशोऽध्यायः ॥ १७ ॥

---

सञ्जय उवाच । ततो मुहूर्त्तात्तुमुलः शब्दो हृदयकम्पनः । अश्रूयत महाराज योधानां प्रयुयुत्सताम् ॥ १ ॥ शङ्खदुन्दुभि घोषैश्च वारणानाञ्च वृंहितैः । नेमिघोषैरथानाञ्च दीर्य्यतीव वसुन्धरा ॥ २ ॥ हयानां ह्रेषमाणानां योधानाञ्चैव गर्ज्जताम् । क्षणेनैव नभोभूमिः शब्देनापूरितस्तदा ॥ ३ ॥ पुत्राणां तव दुर्द्धर्षे पाण्डवानां तथैव च । समकम्पन्त सैन्यानि परस्परसमा-गमे ॥ ४ ॥ तत्र नागा रथाश्चैव जाम्बूनदविभूषिताः । भ्राज-माना व्यदृश्यन्त मेघा इव सविद्युतः ॥ ५ ॥ ध्वजा बहुविधा-कारास्तावकानां नराधिप । काञ्चनाङ्गदिनो रेजुर्ज्वलिता इव पावकाः ॥ ६ ॥ स्वेषाञ्चैव परेषाञ्च समदृश्यन्त भारत । महेन्द्र केतवः शुभ्रा महेन्द्रसदनेष्विव ॥ ७ ॥ काञ्चनैः कवचैर्वीरा ज्वलितार्कसमप्रभैः । सन्नद्धाः समदृश्यन्त ज्वलनार्कसमप्रभाः ॥८॥ कुरुयोधवरा राजन् विचित्रायुधकार्मुकाः । उद्यतैरायुधैश्चित्रै-स्तलबद्धाः पिनाकिनः ॥ ६ ॥ ऋषभाक्षा महेष्वासाश्चमूमुखगता बभुः । पृष्ठगोपास्तु भीष्मस्य पुत्रास्तव नराधिप ॥ १० ॥ दुःशा सनो दुर्विषहो दुर्मुखो दुःसहस्तथा । विविंशतिश्चित्रसेनो विक-र्णश्च महारथः ॥ ११ ॥ सत्यव्रतः पुरुमित्रो जयो भूरिश्रवा शलः । रथा विंशतिसाहस्रास्तथैषामनुयायिनः ॥ १२ ॥ अभी-षाहाः शूरसेनाः शिवयोऽथ वसातयः । शाल्वा मत्स्यास्तथा-म्बष्ठास्त्रैगर्त्ताः कैकयास्तथा ॥ १३ ॥ सौवीराः कितवाः प्राच्याः

प्रतीच्योदीच्यवासिनः। दाक्षिणात्या ये जनपदाः सर्व्वे शूराश्तनुत्यजः ॥ १४ ॥ महता रथवंशेन ते ररक्षुः पितामहम्। अनीकं दशसाहस्रं कुञ्जराणां तरस्विनाम् ॥ १५ ॥ मागधो येन नृपतिस्तथानीकन्तमन्वयात्। रथानाञ्चक्ररक्षाश्च पादरक्षाश्च दन्तिनाम् ॥ १६ ॥ अभवन् वाहिनीमध्ये शतानामयुतानि षट्। पादातास्चाग्रतोऽगच्छन् धनुश्चर्म्मासिपाणयः ॥ १७ ॥ अनेकशतसाहस्रा नखरप्रासयोधिनः। अक्षौहिण्यो दशैका च तव पुत्रस्य भारत। अदृश्यत महाराज गङ्गेव यमुनान्तरे ॥ १८ ॥

इति भीष्मपर्व्वणि भगवद्गीतापर्व्वणि सैन्यवर्णने अष्टादशोऽध्यायः ॥ १८ ॥

---

धृतराष्ट्र उवाच। अक्षौहिण्या दशैकाञ्च व्यूढां दृष्ट्वा युधिष्ठिर। कथमल्पेन सैन्येन प्रत्यव्यूहत पाण्डवः ॥ १ ॥ यो वेद मानुषं व्यूहं दैवं गान्धर्व्वमासुरम्। कथं भीष्मं स कौन्तेयः प्रत्यव्यूहत सञ्जय ॥ २ ॥

सञ्जय उवाच। धार्त्तराष्ट्राण्यनीकानि दृष्ट्वा व्यूढानि पाण्डवः। अभ्यभाषत धर्म्मात्मा धर्म्मराजो धनञ्जयम् ॥ ३ ॥ महर्षेर्व्वचनात्तात वेदयन्ति बृहस्पतेः। संहतान् योधयेदल्पान् कामं विस्तारयेत् बहून् ॥ ४ ॥ सूचीमुखमनीकं स्यादल्पानां बहुभिः सह। अस्माकञ्च तथा सैन्यमल्पीयः सुतरां परैः ॥ ५ ॥ एतद्वचनमाज्ञाय महर्षेर्व्यूह पाण्डव। एतच्छ्रुत्वा धर्म्मराजं प्रत्यभाषत पाण्डवः ॥ ६ ॥ एष व्यूहामि ते व्यूहं राजसत्तम दुर्ज्जयम्। अचलं नाम वज्राख्यं विहितं वज्रपाणिना ॥ ७ ॥ यः स वात इवोद्धूतः समरे दुःसहः परैः। स नः पुरो योत्स्यते वै भीमः प्रहरतां वरः ॥ ८ ॥ तेजांसि रिपुसैन्यानां मृद्नन्

पुरुषसत्तमः । अग्रेऽग्रणीर्यास्यति नो युद्धोपायविचक्षणः ॥ ९ ॥ यं दृष्ट्वा कुरवः सर्वे दुर्योधनपुरोगमाः । निवर्तिष्यन्ति संत्रस्ताः सिंहं क्षुद्रमृगा यथा ॥ १० ॥ तं सर्वे संश्रयिष्यामः प्राकारमकुतोभयाः । भीमं प्रहरतां श्रेष्ठं देवराजमिवामराः ॥ ११ ॥ न हि सोऽस्ति पुमांल्लोके यः संक्रुद्धं वृकोदरम् । द्रष्टुमत्युग्रकर्माणं विषहेत नरर्षभम् ॥ १२ ॥ एवमुक्त्वा महाबाहुस्तथा चक्रे धनञ्जयः । व्यूह्य तानि बलान्याशु प्रययौ फाल्गुनस्तथा ॥ १३ ॥ सम्प्रयातान् कुरून् दृष्ट्वा पाण्डवानां महाचमूः । गङ्गेव पूर्णा स्तिमिता स्यन्दमाना व्यदृश्यत ॥ १४ ॥ भीमसेनोऽग्रणीस्तेषां धृष्टद्युम्नश्च वीर्य्यवान् । नकुलः सहदेवश्च धृष्टकेतुश्च पार्थिवः ॥१५॥ विराटश्च ततः पश्चात् राजाथाक्षौहिणीवृतः । भ्रातृभिः सह पुत्रैश्च सोऽभ्यरक्षत पृष्ठतः ॥ १६ ॥ चक्ररक्षौ तु भीमस्य माद्रीपुत्रौ महाद्युती । द्रौपदेयाः सभौभद्राः पृष्ठगोपास्तरस्विनः ॥ १७ ॥ धृष्टद्युम्नश्च पाञ्चालस्तेषां गोप्ता महारथः । सहितः पृतनाशूरै रथमुख्यैः प्रभद्रकैः ॥ १८ ॥ शिखण्डी तु ततः पश्चादर्जुनेनाभिरक्षितः । यत्तो भीष्मविनाशाय प्रययौ भरतर्षभ ॥ १९ ॥ पृष्ठतोऽप्यर्जुनस्यासीत् युयुधानो महाबलः । चक्ररक्षौ तु पाञ्चाल्यौ युधामन्यूत्तमौजसौ ॥ २० ॥ कैकेया धृष्टकेतुश्च चेकितानश्च वीर्य्यवान् । भीमसेनो गदां बिभ्रत् वज्रसारमयीं दृढाम् ॥ २१ ॥ चरन् वेगेन महता समुद्रमपि शोषयेत् । एते तिष्ठन्ति सामात्याः प्रेक्षन्तस्ते जनाधिप ॥ २२ ॥ धृतराष्ट्रस्य दायादा इति बीभत्सुरब्रवीत् । भीमसेनं तदा राजन् दर्शयन् समहाबलम् ॥ २३ ॥ ब्रुवाणन्तु तथा पार्थं सर्वसैन्यानि भारत । अपूजयंस्तदा वाग्भिरनुकूलाभिराहवे ॥ २४ ॥ राजा तु मध्यमानीके कुन्तीपुत्रो युधिष्ठिरः । बृहद्भिः कुञ्जरैर्मत्तैश्चलद्भिरचलैरिव ॥ २५ ॥ अक्षौहिण्यश्च पाञ्चाल्यो यज्ञसेनो महामनाः ।

विराटमन्वयात् पश्चात् पाञ्चाल्यश्च पराक्रमी ॥ २६ ॥ तेषा-
मादित्यचन्द्राभाः कनकोत्तमभूषणाः । नानाचिह्नधरा राजन्
रथेष्वासन् महाध्वजाः ॥ २७ ॥ समुत्सार्य्य ततः पश्चात् धृष्ट-
द्युम्नो महारथः । भ्रातृभिः सह पुत्रैश्च सोऽभ्यरक्षत् युधिष्ठिरम्
॥ २८ ॥ त्वदीयानां परेषाञ्च रथेषु विपुलान् ध्वजान् । अभि-
भूयार्जुनस्यैको रथे तस्थौ महाकपिः ॥ २९ ॥ पादातास्त्वग्रतो
गच्छन्नसिशक्त्यृष्टिपाणयः । अनेकशतसाहस्रा भीमसेनस्य रक्षिणः
॥ ३० ॥ वारणा दशसाहस्राः प्रभिन्नकरटामुखाः । शूरा हेम-
मयैर्जालैर्दीप्यमाना इवाचलाः ॥ ३१ ॥ क्षरन्त इव जीमूता
महार्हाः पद्मगन्धिनः । राजानमन्वयुः पश्चाच्चलन्त इव पर्व्वताः
॥ ३२ ॥ भीमसेनो गदां भीमां प्रकर्षन् परिघोपमाम् । प्रचकर्ष
महासैन्यं दुराधर्षो महामनाः ॥ ३३ ॥ तमर्कमिव दुष्प्रेक्ष्यं
तपन्तमिव वाहिनीम् । न शेकुः सर्व्वयोधास्ते प्रतिवीक्षितुमन्तिके
॥ ३४ ॥ वज्रो नामैष स व्यूहो निर्भयः सर्व्वतोमुखः । चाप-
विद्युद्ध्वजो घोरो गुप्तो गाण्डीवधन्वना ॥ ३५ ॥ यं प्रतिव्यूह्य
तिष्ठन्ति पाण्डवास्तव वाहिनीम् । अजेयो मानुषे लोके पाण्डवै-
रभिरक्षितः ॥ ३६ ॥ सन्ध्या तिष्ठत्सु सैन्येषु सूर्य्यस्योदयनं प्रति ।
प्रावात् सपृषतो वायुर्निरभ्रे स्तनयित्नुवान् ॥ ३७ ॥ विष्वग्वातश्च
विववुर्नीचैः शर्करवर्षिणः । रजश्चोद्धूयमानन्तु तमसाच्छादय-
ज्जगत् ॥ ३८ ॥ पपात महती चोल्का प्राङ्मुखी भरतर्षभ ।
उद्यन्तं सूर्य्यमाहत्य व्यशीर्य्यत महास्वना ॥ ३९ ॥ अथ सज्जीय-
मानेषु सैन्येषु भरतर्षभ । निष्प्रभोऽभ्युदयौ सूर्य्यः सघोषं भू-
श्चचाल च ॥ ४० ॥ व्यशीर्य्यत सनादा च भूस्तदा भरतर्षभ ।
निर्घाता बहवो राजन् दिक्षु सर्व्वासु चाभवन् ॥ ४१ ॥ प्रादु-
रासीद्रजस्तीव्रं न प्राज्ञायत किञ्चन । ध्वजानां धूयमानाना
सहसा मातरिश्वना ॥ ४२ ॥ किङ्किणीजालबद्धानां काञ्चनस्रग्-

वराम्बरैः । महता सपताकानामादित्यसमतेजसाम् ॥ ४३ ॥ सर्वं भृशभृशीभूतमासीत्तालवनेष्विव । एवन्ते पुरुषव्याघ्रा पाण्डवा युद्धनन्दिन ॥ ४४ ॥ व्यवस्थिता प्रतिव्यूह्य तव पुत्रस्य वाहिनीम् । ग्रसन्त इव मज्जा नो योधानां भरतर्षभ । दृष्ट्वाग्रतो भीमसेनं गदापाणिमवस्थितम् ॥ ४५ ॥

इति भीष्मपर्वणि भगवद्गीतापर्वणि पाण्डवसैन्यव्यूहे एकोनविंशोऽध्यायः ॥ १९ ॥

---

धृतराष्ट्र उवाच । सूर्योदये सञ्जय के नु पूर्वं युयुत्सवो हृष्यमाणा इवासन् । मामका वा भीष्मनेत्रा समीपे पाण्डवा वा भीमनेत्रास्तदानीम् ॥ १ ॥ केषां जघन्यौ सोमसूर्यौ सवायू केषां सेनाश्वापदाश्चाभषन्त । केषां यूनां मुखवर्णाः प्रसन्नाः सर्वं मे त्वं ब्रूहि तत्त्वं यथावत् ॥ २ ॥

सञ्जय उवाच । उभे सेने तुल्यमिवोपयाते उभे व्यूहे हृष्टरूपे नरेन्द्र । उभे चित्रे वनराजिप्रकाशे तथैवोभे नागरथाश्वपूर्णे ॥ ३ ॥ उभे सेने बृहत्यौ भीमरूपे तथैवोभे भारत दुर्विषह्ये । तथैवोभे स्वर्गजयाय सृष्टे तथैवोभे सत्पुरुषोपजुष्टे ॥ ४ ॥ पश्चान्मुखाः कुरवो धार्त्तराष्ट्राः स्थिताः पार्थाः प्राङ्मुखा योध्यमानाः । दैत्येन्द्रसेनेव च कौरवाणां देवेन्द्रसेनेव च पाण्डवानाम् ॥ ५ ॥ चक्रे वायुः पृष्ठतः पाण्डवानां धार्त्तराष्ट्रान् श्वापदा व्याहरन्ति । गजेन्द्राणां मदगन्धांश्च तीव्रान्न सेहिरे तव पुत्रस्य नागाः ॥ ६ ॥ दुर्योधनो हस्तिनं पद्मवर्णं सुवर्णकक्षं जालवन्तं प्रभिन्नम् । समास्थितो मध्यगतः कुरूणां संस्तूयमानो वन्दिभिर्मागधैश्च ॥ ७ ॥ चन्द्रप्रभं श्वेतमथातपत्रं सौवर्णस्रग्भ्राजते चोत्तमाङ्गे । तं सर्वतः शकुनिः पार्वतीयैः सार्द्धं गान्धारैर्याति

गान्धारराजः ॥ ८ ॥ भीष्मोऽग्रतः सर्वसैन्यस्य वृद्धः श्वेतच्छत्रः श्वेतधनुः सखड्गः। श्वेतोष्णीषः पाण्डुरेण ध्वजेन श्वेतैरश्वैः श्वेतशैलप्रकाशः ॥ ९ ॥ तस्य सैन्ये धार्त्तराष्ट्राश्च सर्वे बाह्लीकानामेकदेशः शलश्च। ये चाम्बष्ठाः क्षत्रिया ये च सिन्धोस्तथा सौवीराः पञ्चनदाश्च शूराः ॥ १० ॥ शोणैर्हयैरुक्मरथो महात्मा द्रोणो धनुष्पाणिरदीनसत्त्वः। आस्ते गुरुः प्रायशः सर्वराज्ञां पश्चाच्च भूमीन्द्र इवाभियाति ॥ ११ ॥ वार्द्धक्षत्रिः सर्वसैन्यस्य मध्ये भूरिश्रवाः पुरुमित्रो जयश्च। शाल्वा मत्स्याः केकयाश्चेति सर्वे गजानीकैर्भ्रातरो योत्स्यमानाः ॥ १२ ॥ शारद्वतश्चोत्तरधूर्महात्मा महेष्वासो गौतमश्चित्रयोधी। शकैः किरातैर्यवनैश्च सार्द्धं तदा चमूमुत्तरतोऽभियाति ॥ १३ ॥ संशप्तकानामयुतं रथानां मृत्युर्जयो वार्जुनस्येति सृष्टाः। येनार्जुनस्तेन राजन् कृतास्त्राः प्रयातारस्ते त्रिगर्त्ताश्च शूराः ॥ १४ ॥ साग्रं शतसहस्रन्तु नागानां तव भारत। नागे नागे रथशतं शतमश्वा रथे रथे ॥ १५ ॥ अश्वेऽश्वे दश धानुष्का धानुष्के दश चर्मिणः। एवं व्यूढान्यनीकानि भीष्मेण तव भारत ॥ १६ ॥ संव्यूह्य मानुषं व्यूहं दैवं गान्धर्वमासुरम्। दिवसे दिवसे प्राप्ते भीष्मः शान्तनवोऽग्रणीः ॥ १७ ॥ महारथौघविपुलः समुद्र इव घोषवान्। भीष्मेण धार्त्तराष्ट्राणां व्यूहः प्रत्यङ्मुखो युधि ॥ १८ ॥ अनन्तरूपा ध्वजिनी नरेन्द्र भीमा त्वदीया न तु पाण्डवानाम्। तावेव मन्ये बृहतीं दुष्प्रधृष्यां यस्या नेता केशवश्चार्जुनश्च ॥ १९ ॥

इति भीष्मपर्वणि भगवद्गीतापर्वणि सैन्यवर्णने विंशोऽध्यायः ॥ २० ॥

---

सञ्जय उवाच। बृहतीं धार्त्तराष्ट्रस्य सेनां दृष्ट्वा समुद्यताम्।
विषादमगमत् राजा कुन्तीपुत्रो युधिष्ठिरः ॥ १ ॥ व्यूहं भीष्मेण
चाभेद्यं कल्पितं प्रेक्ष्य पाण्डवः। अभेद्यमिव संप्रेक्ष्य विवर्णो-
ऽर्जुनमब्रवीत् ॥ २ ॥ धनञ्जय कथं शक्यमस्माभिर्योद्धुमाहवे।
धार्त्तराष्ट्रैर्महाबाहो येषां योद्धा पितामहः ॥ ३ ॥ अक्षोभ्यो-
ऽयमभेद्यश्च भीष्मेणामित्रकर्षिणा। कल्पितः शास्त्रदृष्टेन विधिना
भूरिवर्चसा ॥ ४ ॥ ते वयं संशयं प्राप्ताः ससैन्याः शत्रुकर्षण।
कथमस्मात् महाव्यूहादुत्थानं नो भविष्यति ॥ ५ ॥ अथार्जुनो-
ऽब्रवीत्पार्थं युधिष्ठिरममित्रहा। विषण्णमिव संप्रेक्ष्य तव राज-
न्ननीकिनीम् ॥ ६ ॥ प्रज्ञयाभ्यधिकान् शूरान् गुणयुक्तान् बहू-
नपि। जयन्त्यल्पतरा येन तन्निबोध विशाम्पते ॥ ७ ॥ तत्र ते
कारणं राजन् प्रवक्ष्याम्यनसूयवे। नारदस्तमृषिर्वेद भीष्मद्रोणौ
च पाण्डव ॥ ८ ॥ एवमेवार्थमाश्रित्य युद्धे देवासुरेऽब्रवीत्।
पितामहः किल पुरा महेन्द्रादीन् दिवौकसः ॥ ९ ॥ न तथा
बलवीर्याभ्यां जयन्ति विजिगीषवः। यथा सत्यानृशंस्याभ्यां
धर्म्मेणैकेन चानघ ॥ १० ॥ ज्ञात्वा धर्ममधर्मञ्च लोभञ्चोद्यम-
मास्थिताः। युध्यध्वमनहङ्कारा यतो धर्मस्ततो जयः ॥ ११ ॥ एवं
राजन् विजानीहि ध्रुवोऽस्माकं रणे जयः। यथा तु नारदः
प्राह यतः कृष्णस्ततो जयः ॥ १२ ॥ गुणभूतो जयः कृष्णे
पृष्ठतोऽभ्येति माधवम्। तद्यथा विजयश्चास्य सन्नतिश्चापरो गुणः
॥ १३ ॥ अनन्ततेजा गोविन्दः शत्रुपूगेषु निर्व्यथः। पुरुषः
सनातनतमो यतः कृष्णस्ततो जयः ॥ १४ ॥ पुरा ह्येष हरि-
र्भूत्वा विकुण्ठोऽकुण्ठसायकः। सुरासुरान् विस्फूर्ज्जन्नब्रवीत् के
जयन्त्विति ॥ १५ ॥ अनु कृष्णं जयेमेति यैरुक्तं तत्र तैर्जितम्।
तत्प्रसादाद्धि त्रैलोक्यं प्राप्तं शक्रादिभिः सुरैः ॥ १६ ॥ तस्य

ते न व्यथां काञ्चिदिह पश्यामि भारत। यस्य ते जयमाशास्ते विश्वभुक् त्रिदिवेश्वरः ॥ १७ ॥

इति भीष्मपर्व्वणि भगवद्गीतापर्व्वणि युधिष्ठिरार्जुन-
संवादे एकविंशोऽध्यायः ॥ २१ ॥

---

सञ्जय उवाच। ततो युधिष्ठिरो राजा स्वां सेनां समनोदयत्। प्रतिव्यूहन्ननीकानि भीष्मस्य भरतर्षभ ॥ १ ॥ यथोद्दिष्टान्यनीकानि प्रत्यव्यूहन्त पाण्डवाः। स्वर्गं परममिच्छन्तः सुयुद्धेन कुरूद्वहाः ॥ २ ॥ मध्ये शिखण्डिनोऽनीकं रक्षितं सव्यसाचिना। धृष्टद्युम्नश्चरन्नग्रे भीमसेनेन पालितः ॥ ३ ॥ अनीकं दक्षिणं राजन् युयुधानेन पालितम्। श्रीमता सात्वताग्र्येण शक्रेणेव धनुष्मता ॥ ४ ॥ महेन्द्रयानप्रतिमं रथन्तु सोपस्करं हाटकरत्नचित्रम्। युधिष्ठिरः काञ्चनभाण्डयुक्तं समास्थितो नागकुलस्य मध्ये ॥ ५ ॥ समुच्छ्रितं दन्तशलाकमस्य सुपाण्डुरं छत्रमतीव भाति। प्रदक्षिणञ्चैनमुपाचरन्ति महर्षयः संस्तुतिभिर्महेन्द्रम् ॥ ६ ॥ पुरोहिताः शत्रुवधं वदन्ति ब्रह्मर्षिसिद्धाः स्तुतवन्त एनम्। जप्यैश्च मन्त्रैश्च महौषधीभिः समन्ततः स्वस्त्ययनं ब्रुवन्त ॥ ७ ॥ ततः सहस्राणि तथैव गाव फलानि पुष्पाणि तथैव निष्कान्। कुरूत्तमो ब्राह्मणसान्महात्मा कुर्व्वन् ययौ शक्र इवामरेभ्यः ॥ ८ ॥ सहस्रसूर्य्यः शतकिङ्किणीकः परार्द्ध्यजाम्बूनदहेमचित्रः। रथोऽर्जुनस्याग्निरिवार्चिमाली विभ्राजते श्वेतहयः सुचक्रः ॥ ९ ॥ तमास्थितः केशवसंगृहीतं कपिध्वजो गाण्डिववाणपाणिः। धनुर्द्धरो यस्य समः पृथिव्यां न विद्यते नो भविता कदाचित् ॥ १० ॥ उद्वर्त्तयिष्यंस्तव पुत्रसेनामतीव रौद्रं स बिभर्त्ति रूपम्। अनायुधो यः सुभुजो भुजाभ्या नरांश्च

नागान् युधि भस्म कुर्य्यात ॥ ११ ॥ स भीमसेन सहितो यमाभ्या वृकोदरो वीररथस्य गोप्ता । त तव सिंहर्षभमत्तखेल लोके महेन्द्रप्रतिमानकल्पम ॥ १२ ॥ समीक्ष्य सेनाग्रगत दुरासद सविव्यथु पङ्कगता यथा द्विपा । वृकोदर वारणराजदर्पं योधास्त्वदीया भयभग्नसत्त्वा ॥ १३ ॥ अनीकमध्ये तिष्ठन्त राजपुत्र दुरासदम् । अब्रवीत भरतश्रेष्ठ गुडाकेश जनार्द्दन ॥ १४ ॥

वासुदेव उवाच । य एष रोषात प्रतपन् बलस्थो यो न सेना सिंह इवाचकर्ष । स एष भीष्म कुरुवशकेतुर्येनाहृतास्त्रिशत वाजिमेधा ॥ १५ ॥ एतान्यनीकानि महानुभाव गूहन्ति मेघा इव रश्मिवन्तम् । एतानि हत्वा पुरुषप्रवीर काङ्क्षस्व युद्ध भरतर्षभेण ॥ १६ ॥

इति भीष्मपर्व्वणि भगवद्गीतापर्व्वणि श्रीकृष्णार्जुनसंवादे द्वाविंशोऽध्याय ॥ २२ ॥

---

सञ्जय उवाच । धार्त्तराष्ट्रबल दृष्ट्वा युद्धाय समुपस्थितम् । अर्जुनस्य हितार्थाय कृष्णो वचनमब्रवीत ॥ १ ॥

श्रीभगवानुवाच । शुचिर्भूत्वा महाबाहो सग्रामाभिमुखे स्थित । पराजयाय शत्रूणा दुर्गास्तोत्रमुदीरय ॥ २ ॥

सञ्जय उवाच । एवमुक्तोऽर्जुन सङ्ख्ये वासुदेवेन धीमता । अवतीर्य्य रथात पार्थ स्तोत्रमाह कृताञ्जलि ॥ ३ ॥

अर्जुन उवाच । नमस्ते सिद्धसेनानि आर्य्ये मन्दरवासिनि । कुमारि कालि कापालि कपिले कृष्णपिङ्गले ॥ ४ ॥ भद्रकालि नमस्तुभ्य महाकालि नमोऽस्तु ते । चण्डि चण्डे नमस्तुभ्य तारिणि वरवर्णिनि ॥ ५ ॥ कात्यायनि महाभागे करालि विजये जये । शिखिपिच्छध्वजधरे नानाभरणभूषिते ॥ ६ ॥ अट्टशूलप्रहरणे

खड्गखेटकधारिणि । गोपेन्द्रस्यानुजे ज्येष्ठे नन्दगोपकुलोद्भवे ॥ ७ ॥ महिषासृक्प्रिये नित्य कौशिकि पीतवासिनि । अट्टहासे कोकमुखे नमस्तेऽस्तु रणप्रिये ॥ ८ ॥ उमे शाकम्भरि श्वेते कृष्णे कैटभनाशिनि । हिरण्याक्षि विरूपाक्षि धूम्राक्षि च नमोऽस्तु ते ॥ ९ ॥ वेदश्रुतिमहापुण्ये ब्रह्मण्ये जातवेदसि । जम्बूकटकचैत्येषु नित्यं सन्निहितालये ॥ १० ॥ त्वं ब्रह्मविद्या विद्यानां महानिद्रा च देहिनाम् । स्कन्दमातर्भगवति दुर्गे कान्तारवासिनि ॥ ११ ॥ स्वाहाकार स्वधा चैव कला काष्ठा सरस्वती । सावित्री वेदमाता च तथा वेदान्त उच्यते ॥ १२ ॥

बद्धो मुच्येत बन्धनात् ॥ २३ ॥ दुर्गं तरति चावश्यं तथा चौरैर्विमुच्यते । संग्रामे विजयो नित्यं लक्ष्मीं प्राप्नोति केवलम् ॥२४॥ आरोग्यबलसम्पन्नो जीवेत वर्षशतं तदा । एतत् दृष्टं प्रसादात्तु मया व्यासस्य धीमतः ॥ २५ ॥ मोहादेतौ न जानन्ति नरनारायणावृषी । तव पुत्रा दुरात्मानः सर्वे मन्युवशानुगाः ॥ २६ ॥ प्राप्तकालमिदं वाक्यं कालपाशेन गुण्ठिताः । द्वैपायनो नारदश्च कण्वो रामस्तथा नरः ॥ २७ ॥ अवारयंस्तव सुतं न चासौ तत् गृहीतवान् । यत्र धर्मो द्युतिः कान्तिर्यत्र ह्रीः श्रीस्तथा मतिः । यतो धर्मस्ततः कृष्णो यतः कृष्णस्ततो जयः ॥ २८ ॥

इति भीष्मपर्वणि भगवद्गीतापर्वणि दुर्गास्तोत्रे त्रयोविंशोऽध्यायः ॥ २३ ॥

---

धृतराष्ट्र उवाच । केषां प्रहृष्टास्तत्राग्रे योधा युध्यन्ति सञ्जय । उदग्रमनसः के वा के वा दीना विचेतसः ॥ १ ॥ के पूर्वं प्राहरंस्तत्र युद्धे हृदयकम्पनम् । मामकाः पाण्डवेयाश्च तन्ममाचक्ष्व सञ्जय ॥ २ ॥ कस्य सेनासमुदये गन्धमाल्यसमुद्भवः । वाचः प्रदक्षिणाश्चैव योधानामभिगर्जताम् ॥ ३ ॥

सञ्जय उवाच । उभयोः सेनयोस्तत्र योधा जहृषिरे तदा । स्रजः समाः सुगन्धानामुभयत्र समुद्भवः ॥ ४ ॥ संहतानामनीकानां व्यूढानां भरतर्षभ । संसर्गात् समुदीर्णानां विमर्दः सुमहानभूत् ॥ ५ ॥ वादित्रशब्दस्तुमुलः शङ्खभेरीविमिश्रितः । शूराणां रणशूराणां गर्जतामितरेतरम् ॥ ६ ॥ उभयोः सेनयो राजन् महाव्यतिकरोऽभवत् । अन्योऽन्यं वीक्षमाणानां योधानां भरतर्षभ । कुञ्जराणाञ्च नदतां सैन्यानां च प्रहृष्यताम् ॥ ७ ॥

इति भीष्मपर्वणि भगवद्गीतापर्वणि धृतराष्ट्रसञ्जयसंवादे चतुर्विंशोऽध्यायः ॥ २४ ॥

धृतराष्ट्र उवाच । धर्म्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः । मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय ॥

सञ्जय उवाच । दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्य्योधनस्तदा । आचार्य्यमुपसङ्गम्य राजा वचनमब्रवीत् ॥ २ ॥ पश्यैतां पाण्डुपुत्राणामाचार्य्य महतीञ्चमूम् । व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ३ ॥ अत्र शूरा महेष्वासा भीमार्जुनसमा युधि । युयुधानो विराटश्च द्रुपदश्च महारथः ॥ ४ ॥ धृष्टकेतुश्चेकितानः काशिराजश्च वीर्य्यवान् । पुरुजित् कुन्तिभोजश्च शैव्यश्च नरपुङ्गवः ॥ ५ ॥ युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्य्यवान् । सौभद्रो द्रौपदेयाश्च सर्व्व एव महारथाः ॥ ६ ॥ अस्माकन्तु विशिष्टा ये तान्निबोध द्विजोत्तम । नायका मम सैन्यस्य संज्ञार्थं तान् ब्रवीमि ते ॥ ७ ॥ भवान् भीष्मश्च कर्णश्च कृपश्च समितिञ्जयः । अश्वत्थामा विकर्णश्च सौमदत्तिर्जयद्रथ ॥ ८ ॥ अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः । नानाशस्त्रप्रहरणाः सर्व्वे युद्धविशारदाः ॥ ९ ॥ अपर्य्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् । पर्य्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥ १० ॥ अयनेषु तु सर्व्वेषु

बद्धो मुच्येत बन्धनात् ॥ २३ ॥ दुर्गं तरति चावश्यं तथा चौरै-
र्विमुच्यते । संग्रामे विजयो नित्यं लक्ष्मीं प्राप्नोति केवलम् ॥२४॥
आरोग्यबलसम्पन्नो जीवेत वर्षशतं तदा । एतद् दृष्टं प्रसादात्तु
मया व्यासस्य धीमतः ॥ २५ ॥ मोहादेतौ न जानन्ति नर-
नारायणावृषी । तव पुत्रा दुरात्मानः सर्वे मन्युवशानुगाः ॥ २६ ॥
प्राप्तकालमिदं वाक्यं कालपाशेन गुण्ठिताः । द्वैपायनो नारदश्च
कण्वो रामस्तथा नरः ॥ २७ ॥ अवारयंस्तव सुतं न चासौ तद्
गृहीतवान् । यत्र धर्मो द्युतिः कान्तिर्यत्र ह्रीः श्रीस्तथा मतिः ।
यतो धर्मस्ततः कृष्णो यतः कृष्णस्ततो जयः ॥ २८ ॥

इति भीष्मपर्वणि भगवद्गीतापर्वणि दुर्गास्तोत्रे
त्रयोविंशोऽध्यायः ॥ २३ ॥

---

धृतराष्ट्र उवाच । केषां प्रहृष्टास्तत्राग्रे योधा युध्यन्ति सञ्जय । उदग्रमनसः के वा के वा दीना विचेतसः ॥ १ ॥ के पूर्वं प्राहरंस्तत्र युद्धे हृदयकम्पनम् । मामकाः पाण्डवेयाश्च तन्ममाचक्ष्व सञ्जय ॥ २ ॥ कस्य सेनासमुदये गन्धमाल्यसमुद्भवः । वाचः प्रदक्षिणाश्चैव योधानामभिगर्जताम् ॥ ३ ॥

धृतराष्ट्र उवाच । धर्म्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।
मामकाः पाण्डवाश्चैव किमकुर्व्वत सञ्जय ॥ .

सञ्जय उवाच । दृष्ट्वा तु पाण्डवानीकं व्यूढ़ं दुर्य्योधनस्तदा ।
आचार्य्यमुपसङ्गम्य राजा वचनमब्रवीत् ॥ २ ॥ पश्यैतां पाण्डु-
पुत्राणामाचार्य्य महतीञ्चमूम् । व्यूढ़ां द्रुपदपुत्रेण तव शिष्येण
धीमता ॥ ३ ॥ अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।
युयुधानो विराटश्च द्रुपदश्च महारथः ॥ ४ ॥ धृष्टकेतुश्चेकितानः
काशिराजश्च वीर्य्यवान् । पुरुजित् कुन्तिभोजश्च शैव्यश्च नरपुङ्गवः
॥ ५ ॥ युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्य्यवान् । सौभद्रो
द्रौपदेयाश्च सर्व्वे एव महारथाः ॥ ६ ॥ अस्माकन्तु विशिष्टा ये
तान्निबोध द्विजोत्तम । नायका मम सैन्यस्य संज्ञार्थं तान् ब्रवीमि
ते ॥ ७ ॥ भवान् भीष्मश्च कर्णश्च कृपश्च समितिञ्जयः । अश्व-
त्थामा विकर्णश्च सौमदत्तिर्जयद्रथः ॥ ८ ॥ अन्ये च बहवः शूरा
मदर्थे त्यक्तजीविताः । नानाशस्त्रप्रहरणाः सर्व्वे युद्धविशारदाः
॥ ९ ॥ अपर्य्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् । पर्य्याप्तं
त्विदमेतेषां बलं भीमाभिरक्षितम् ॥ १० ॥ अयनेषु तु सर्व्वेषु
यथाभागमवस्थिताः । भीष्ममेवाभिरक्षन्तु भवन्तः सर्व्व एव हि
॥ ११ ॥ तस्य सञ्जनयन् हर्षं कुरुवृद्धः पितामहः । सिंहनादं
विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥ १२ ॥ ततः शङ्खाश्च भेर्य्यश्च
पणवानकगोमुखाः । सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत्
॥ १३ ॥ ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ । माधवः
पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥ १४ ॥ पाञ्चजन्यं हृषीकेशो
देवदत्तं धनञ्जयः । पौण्ड्रं दध्मौ महाशङ्खं भीमकर्म्मा वृको-
दरः ॥ १५ ॥ अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः । नकुलः
सहदेवश्च सुघोषमणिपुष्पकौ ॥ १६ ॥ काश्यश्च परमेष्वासः
शिखण्डी च महारथः । धृष्टद्युम्नो विराटश्च सात्यकिश्चापरा-

जित॰ ॥ १७ ॥ द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते । सौभद्रश्च
महाबाहुः शङ्खान् दध्मुः पृथक् पृथक् ॥ १८ ॥ स घोषो धार्त्त-
राष्ट्राणां हृदयानि व्यदारयत् । नभश्च पृथिवीञ्चैव तुमुलोऽभ्य-
नुनादयन् ॥ १९ ॥ अथ व्यवस्थितान् दृष्ट्वा धार्त्तराष्ट्रान् कपि-
ध्वजः । प्रवृत्ते शस्त्रसम्पाते धनुरुद्यम्य पाण्डवः । हृषीकेशं
तदा वाक्यमिदमाह महीपते ॥ २० ॥

अर्जुन उवाच । सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ।
यावदेतान् निरीक्षेऽहं योद्धुकामानवस्थितान् ॥ २१ ॥ कैर्मया
सह योद्धव्यमस्मिन् रणसमुद्यमे । योत्स्यमानानवेक्षेऽहं य एतेऽत्र
समागताः । धार्त्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥ २२ ॥

सञ्जय उवाच । एवमुक्तो हृषीकेशो गुडाकेशेन भारत ।
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥ २३ ॥ भीष्मद्रोण-
प्रमुखतः सर्वेषाञ्च महीक्षिताम् । उवाच पार्थ पश्यैतान् सम-
वेतान् कुरूनिति ॥ २४ ॥ तत्रापश्यत् स्थितान् पार्थः पितॄनथ
पितामहान् । आचार्य्यान् मातुलान् भ्रातॄन् पुत्रान् पौत्रान्
सखींस्तथा ॥ २५ ॥ श्वशुरान् सुहृदश्चैव सेनयोरुभयोरपि ।
तान् समीक्ष्य स कौन्तेयः सर्वान् बन्धूनवस्थितान् । कृपया
परयाविष्टो विषीदन्निदमब्रवीत् ॥ २६ ॥

च ॥ ३१ ॥ त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च। आचार्य्याः पितरः पुत्रास्तथैव च पितामहाः ॥ ३२ ॥ मातुलाः श्वशुराः पौत्राः श्यालाः सम्बन्धिनस्तथा। एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ॥ ३३ ॥ अपि त्रैलोक्यराज्यस्य हेतोः किन्नु महीकृते। निहत्य धार्त्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्द्दन ॥ ३४ ॥ पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः। तस्मान्नार्हा वयं हन्तुं धार्त्तराष्ट्रान् स्वबान्धवान् ॥ ३५ ॥ स्वजनं हि कथं हत्वा सुखिनः स्याम माधव। यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ॥ ३६ ॥ कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम्। कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्त्तितुम् ॥ ३७ ॥ कुलक्षयकृतं दोषं प्रपश्यद्भि-र्जनार्द्दन। कुलक्षये प्रणश्यन्ति कुलधर्म्माः सनातनाः ॥ ३८ ॥ धर्म्मे नष्टे कुलं कृत्स्नमधर्म्मोऽभिभवत्युत। अधर्म्माभिभवात् कृष्ण प्रदुष्यन्ति कुलस्त्रियः ॥ ३९ ॥ स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्ण-सङ्करः। सङ्करो नरकायैव कुलघ्नानां कुलस्य च ॥ ४० ॥ पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः। दोषैरेतैः कुलघ्नानां वर्ण-सङ्करकारकैः ॥ ४१ ॥ उत्साद्यन्ते जातिधर्म्माः कुलधर्म्माश्च शाश्वताः। उत्सन्नकुलधर्म्माणां मनुष्याणां जनार्द्दन ॥ ४२ ॥ नरके नियतं वासो भवतीत्यनुशुश्रुमः। अहो बत महत्पापं कर्त्तुं व्यव-सिता वयम् ॥ ४३ ॥ यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः। यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः। धार्त्तराष्ट्रा रणे हन्यु-स्तन्मे क्षेमतरं भवेत् ॥ ४४ ॥

सञ्जय उवाच। एवमुक्त्वार्जुनः सङ्ख्ये रथोपस्थ उपाविशत्। विसृज्य सशरं चापं शोकसंविग्नमानसः ॥ ४५ ॥

इति भीष्मपर्व्वणि भगवद्गीतापर्व्वणि श्रीकृष्णार्जुनसंवादे अर्जुन-विषादो नाम पञ्चविंशोऽध्यायः ॥ २५ ॥

---

सञ्जय उवाच। तं तथा कृपयाविष्टमश्रुपूर्णाकुलेक्षणम्।
विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥ १ ॥

श्रीभगवानुवाच। कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम्।
अनार्य्यजुष्टमस्वर्ग्यमकीर्त्तिकरमर्जुन ॥ २ ॥ क्लैब्यं मास्म गमः पार्थ
नैतत्त्वय्युपपद्यते। क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप ॥३॥

अर्जुन उवाच। कथं भीष्ममहं संख्ये द्रोणञ्च मधुसूदन।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ ४ ॥ गुरूनहत्वा हि
महानुभावान् श्रेयो भोक्तुं भैक्ष्यमपीह लोके। हत्वार्थकामांस्तु
गुरूनिहैव भुञ्जीय भोगान् रुधिरप्रदिग्धान् ॥ ५ ॥ न चैतद्विद्मः
कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः। यानेव हत्वा
न जिजीविषामस्तेऽवस्थिताः प्रमुखे धार्त्तराष्ट्राः ॥ ६ ॥ कार्पण्य-
दोषोपहतस्वभावः पृच्छामि त्वां धर्म्मसम्मूढचेताः। यच्छ्रेयः
स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥ ७ ॥
न हि प्रपश्यामि ममापनुद्याद् यच्छोकमुच्छोषणमिन्द्रियाणाम्।
अवाप्य भूमावसपत्नमृद्धं राज्यं सुराणामपि चाधिपत्यम् ॥ ८ ॥

सञ्जय उवाच। एवमुक्त्वा हृषीकेशं गुडाकेशः परन्तप।
न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥ ९ ॥ तमुवाच
हृषीकेशः प्रहसन्निव भारत। सेनयोरुभयोर्मध्ये विषीदन्तमिदं
वचः ॥ १० ॥

श्रीभगवानुवाच। अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ ११ ॥ न त्वेवाहं
जातु नासं न त्वं नेमे जनाधिपाः। न चैव न भविष्यामः सर्व्वे
वयमतः परम् ॥ १२ ॥ देहिनोऽस्मिन् यथा देहे कौमारं यौवनं
जरा। तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ १३ ॥ मात्रा-
स्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः। आगमापायिनो नित्या-
स्तांस्तितिक्षस्व भारत ॥ १४ ॥ यं हि न व्यथयन्त्येते पुरुषं

पुरुषर्षभ । समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥ १५ ॥ नासतो विद्यते भावो नाभावो विद्यते सतः । उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ १६ ॥ अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् । विनाशमव्ययस्यास्य न कश्चित् कर्त्तुमर्हति ॥ १७॥ अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः । अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥ १८ ॥ य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् । उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ १९ ॥ न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः । अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥ २० ॥ वेदाविनाशिनं नित्यं य एनमजमव्ययम् । कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥ २१ ॥ वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि । तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥ २२ ॥ नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः । न चैनं क्लेदयन्त्यापो न शोषयति मारुत ॥ २३ ॥ अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च । नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ २४ ॥ अव्यक्तोऽयमचिन्त्योऽयमविकार्य्योऽयमुच्यते । तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥ २५ ॥ अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् । तथापि त्वं महाबाहो नैनं शोचितुमर्हसि ॥ २६ ॥ जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च । तस्मादपरिहार्य्येऽर्थे न त्वं शोचितुमर्हसि ॥ २७ ॥ अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत । अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ २८ ॥ आश्चर्य्यवत् पश्यति कश्चिदेनमाश्चर्य्यवत् वदति तथैव चान्यः । आश्चर्य्यवत् चैनमन्यः शृणोति श्रुत्वाप्येनं वेद न चैव कश्चित् ॥ २९ ॥ देही नित्यमवध्योऽयं देहे सर्वस्य भारत । तस्मात् सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥ ३० ॥ स्वधर्ममपि चावेक्ष्य न विकम्पितु-

मर्हसि। धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते ॥ ३१ ॥
यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम्। सुखिनः क्षत्रियाः पार्थ
लभन्ते युद्धमीदृशम् ॥ ३२ ॥ अथ चेत्त्वमिमं धर्म्यं संग्रामं न
करिष्यसि। ततः स्वधर्मं कीर्त्तिञ्च हित्वा पापमवाप्स्यसि ॥ ३३ ॥
अकीर्त्तिञ्चापि भूतानि कथयिष्यन्ति तेऽव्ययाम्। सम्भावितस्य
चाकीर्त्तिर्मरणादतिरिच्यते ॥ ३४ ॥ भयाद्रणादुपरतं मंस्यन्ते
त्वां महारथाः। येषाञ्च त्वं बहुमतो भूत्वा यास्यसि लाघवम्
॥ ३५ ॥ अवाच्यवादांश्च बहून् वदिष्यन्ति तवाहिताः। निन्दन्त-
स्तव सामर्थ्यं ततो दुःखतरन्नु किम् ॥ ३६ ॥ हतो वा प्राप्स्यसि
स्वर्गं जित्वा वा भोक्ष्यसे महीम्। तस्मादुत्तिष्ठ कौन्तेय युद्धाय
कृतनिश्चयः ॥ ३७ ॥ सुखदुःखे समे कृत्वा लाभालाभौ जया-
जयौ। ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥ ३८ ॥ एषा
तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु। बुद्ध्या युक्तो यया
पार्थ कर्मबन्धं प्रहास्यसि ॥ ३९ ॥ नेहाभिक्रमनाशोऽस्ति प्रत्य-
वायो न विद्यते। स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्
॥ ४० ॥ व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन। बहुशाखा
ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥ ४१ ॥ यामिमां पुष्पितां वाचं
प्रवदन्त्यविपश्चितः। वेदवादरताः पार्थ नान्यदस्तीति वादिनः
॥ ४२ ॥ कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम्। क्रिया-
विशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ४३ ॥ भोगैश्वर्यप्रसक्तानां
तयापहृतचेतसाम्। व्यवसायात्मिका बुद्धिः समाधौ न विधी-
यते ॥ ४४ ॥ त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन। निर्द्वन्द्वो
नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ ४५ ॥ यावानर्थ उद-
पाने सर्वतः सम्प्लुतोदके। तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजा-
नतः ॥ ४६ ॥ कर्मण्येवाधिकारस्ते मा फलेषु कदाचन। मा
कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥ ४७ ॥ योगस्थः कुरु

कर्माणि सङ्गं त्यक्त्वा धनञ्जय। सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥ ४८ ॥ दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय। बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥ ४९ ॥ बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते। तस्मात् योगाय युज्यस्व योगः-कर्मसु कौशलम् ॥ ५० ॥ कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः। जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ ५१ ॥ यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति। तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५२ ॥ श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला। समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ ५३ ॥

अर्जुन उवाच। स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव। स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥ ५४ ॥

श्रीभगवानुवाच। प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान्। आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ ५५ ॥ दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः। वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ ५६ ॥ यः सर्वत्रानभिस्नेहः तत्तत् प्राप्य शुभाशुभम्। नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ ५७ ॥ यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः। इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ५८ ॥ विषया विनिवर्त्तन्ते निराहारस्य देहिनः। रसवर्ज्जं रसोऽप्यस्य परं दृष्ट्वा निवर्त्तते ॥५९॥ यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः। इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ ६० ॥ तानि सर्वाणि संयम्य युक्त आसीत मत्परः। वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ ६१ ॥ ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते। सङ्गात् सञ्जायते कामः कामात् क्रोधोऽभिजायते ॥ ६२ ॥ क्रोधात् भवति सम्मोहः सम्मोहात् स्मृतिविभ्रमः। स्मृतिभ्रंशात् बुद्धिनाशो बुद्धिनाशात् प्रणश्यति ॥ ६३ ॥ रागद्वेषवियुक्तैस्तु विषया-

निन्द्रियैश्चरन् । आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ ६४ ॥
प्रसादे सर्वदुःखानां हानिरस्योपजायते । प्रसन्नचेतसो ह्याशु
बुद्धिः पर्य्यवतिष्ठते ॥ ६५ ॥ नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य
भावना । न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥ ६६ ॥
इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते । तदस्य हरति प्रज्ञां
वायुर्नावमिवाम्भसि ॥ ६७ ॥ तस्मात् यस्य महाबाहो निगृही-
तानि सर्वशः । इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥६८॥
या निशा सर्वभूतानां तस्यां जागर्त्ति संयमी । यस्यां जाग्रति
भूतानि सा निशा पश्यतो मुनेः ॥ ६९ ॥ आपूर्य्यमाणमचलप्रतिष्ठं
समुद्रमापः प्रविशन्ति यद्वत् । तद्वत् कामा यं प्रविशन्ति सर्वे स
शान्तिमाप्नोति न कामकामी ॥ ७० ॥ विहाय कामान् यः सर्वान्
पुमांश्चरति निस्पृहः । निर्ममो निरहङ्कारः स शान्तिमधिगच्छति
॥ ७१ ॥ एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।
स्थित्वास्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥ ७२ ॥

इति भीष्मपर्वणि भगवद्गीतापर्वणि श्रीकृष्णार्जुनसंवादे
षड्विंशोऽध्यायः ॥ २६ ॥

---

अर्जुन उवाच । ज्यायसी चेत् कर्मणस्ते मता बुद्धिर्जना-
र्दन । तत् किं कर्मणि घोरे मां नियोजयसि केशव ॥ १ ॥
व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे । तदेकं वद निश्चित्य
येन श्रेयोऽहमाप्नुयाम् ॥ २ ॥

भगवानुवाच । लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता
मयानघ । ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥ ३ ॥
न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते । न च संन्यसनादेव
सिद्धिं समधिगच्छति ॥ ४ ॥ न हि कश्चित् क्षणमपि जातु

तिष्ठत्यकर्मकृत्। कार्य्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ५ ॥ कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन्। इन्द्रियार्थान् विमूढ़ात्मा मिथ्याचारः स उच्यते ॥ ६ ॥ यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन। कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥ ७ ॥ नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः। शरीरयात्रापि च ते न प्रसिध्येदकर्मणः ॥ ८ ॥ यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः। तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥ ९ ॥ सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः। अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ १० ॥ देवान् भावयतानेन ते देवा भावयन्तु वः। परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ ११ ॥ इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः। तैर्दत्तान प्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥ १२ ॥ यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः। भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥ १३ ॥ अन्नात् भवन्ति भूतानि पर्जन्यादन्नसम्भवः। यज्ञात् भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ १४ ॥ कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम्। तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ १५ ॥ एवं प्रवर्त्तितं चक्रं नानुवर्त्तयतीह यः। अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥ १६ ॥ यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः। आत्मन्येव च सन्तुष्टस्तस्य कार्य्यं न विद्यते ॥ १७ ॥ नैव तस्य कृते नार्थो नाकृतेनेह कश्चन। न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ १८ ॥ तस्मादसक्तः सततं कार्य्यं कर्म समाचर। असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः ॥ १९ ॥ कर्मणैव हि संसिद्धिमास्थिता जनकादयः। लोकसंग्रहमेवापि सम्पश्यन् कर्त्तुमर्हसि ॥ २० ॥ यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः। स यत् प्रमाणं कुरुते लोकस्तदनुवर्त्तते ॥ २१ ॥ न मे पार्थास्ति कर्त्तव्यं त्रिषु लोकेषु किञ्चन।

नानवाप्तमवाप्तव्यं वर्त्त एव च कर्मणि ॥ २२ ॥ यदि ह्यहं न वर्त्तेयं जातु कर्मण्यतन्द्रितः । मम वर्त्मानुवर्त्तन्ते मनुष्याः पार्थ सर्वश ॥ २३ ॥ उत्सीदेयुरिमे लोका न कुर्य्यां कर्म चेदहम् । सङ्करस्य च कर्त्ता स्यामुपहन्यामिमाः प्रजाः ॥ २४ ॥ सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत । कुर्य्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहम् ॥ २५ ॥ न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् । जोषयेत् सर्वकर्माणि विद्वान् युक्तः समाचरन् ॥ २६ ॥ प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः । अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते ॥ २७ ॥ तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः । गुणा गुणेषु वर्त्तन्त इति मत्वा न सज्जते ॥ २८ ॥ प्रकृतेर्गुणसम्मूढाः सज्जन्ते गुणकर्मसु । तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत् ॥ २९ ॥ मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा । निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥ ३० ॥ ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः । श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥ ३१ ॥ ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् । सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः ॥ ३२ ॥ सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि । प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ ३३ ॥ इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ । तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥ ३४ ॥ श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् । स्वधर्मे निधनं श्रेय परधर्मो भयावहः ॥ ३५ ॥

अर्जुन उवाच । अथ केन प्रयुक्तोऽयं पापश्चरति पूरुषः । अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥ ३६ ॥

भगवानुवाच । काम एष क्रोध एष रजोगुणसमुद्भवः । महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ३७ ॥ धूमेनाव्रियते वह्निर्यथादर्शो मलेन च । यथोल्बेनावृतो गर्भस्तथा तेनेद-

मावृतम् ॥ ३८ ॥ आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा । कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥ ३९ ॥ इन्द्रियाणि मनो-बुद्धिरस्याधिष्ठानमुच्यते । एतैर्विमोहयत्येष ज्ञानमावृत्य देहि-नम् ॥ ४० ॥ तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ । पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥ ४१ ॥ इन्द्रियाणि परा-ण्याहुरिन्द्रियेभ्यः परं मनः । मनसस्तु परा बुद्धिर्यो बुद्धेः पर-तस्तु सः ॥ ४२ ॥ एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना । जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥ ४३ ॥

इति भीष्मपर्व्वणि भगवद्गीतापर्व्वणि श्रीकृष्णार्जुनसंवादे सप्तविंशोऽध्यायः ॥ २७ ॥

---

भगवानुवाच । इमं विवस्वते योगं प्रोक्तवानहमव्ययम् । विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत ॥ १ ॥ एवं परम्परा-प्राप्तमिमं राजर्षयो विदुः । स कालेनेह महता योगो नष्टः परन्तप ॥ २ ॥ स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः । भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ३ ॥

अर्जुन उवाच । अपरं भवतो जन्म परं जन्म विवस्वत । कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥ ४ ॥

भगवानुवाच । बहूनि मे व्यतीतानि जन्मानि तव चार्जुन । तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप ॥ ५ ॥ अजोऽपि सन्न-व्ययात्मा भूतानामीश्वरोऽपि सन् । प्रकृतिं स्वामधिष्ठाय सम्भवा-म्यात्ममायया ॥ ६ ॥ यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ ७ ॥ परि-त्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥ ८ ॥ जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः । त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ९ ॥

वीतरागभयक्रोधा मन्मया मामुपाश्रिताः । बहवो ज्ञानतपसा
पूता मद्भावमागताः ॥ १० ॥ ये यथा मां प्रपद्यन्ते तांस्तथैव
भजाम्यहम् । मम वर्त्मानुवर्त्तन्ते मनुष्याः पार्थ सर्वशः ॥ ११ ॥
काङ्क्षन्तः कर्म्मणां सिद्धिं यजन्त इह देवताः । क्षिप्रं हि मानुषे
लोके सिद्धिर्भवति कर्म्मजा ॥ १२ ॥ चातुर्वर्ण्यं मया सृष्टं गुण-
कर्म्मविभागशः । तस्य कर्त्तारमपि मां विद्ध्यकर्त्तारमव्ययम् ॥१३॥
न मां लिम्पन्ति कर्म्माणि न मे कर्म्मफले स्पृहा । इति मां यो-
ऽभिजानाति कर्म्मभिर्न स बध्यते ॥ १४ ॥ एवं ज्ञात्वा कृतं कर्म्म
पूर्व्वैरपि मुमुक्षुभिः । कुरु कर्म्मैव तस्मात्त्वं पूर्व्वैः पूर्व्वतरं कृतम्
॥ १५ ॥ किं कर्म्म किमकर्म्मेति कवयोऽप्यत्र मोहिताः । तत्ते कर्म्म
प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥१६॥ कर्म्मणो ह्यपि बोद्धव्यं
बोद्धव्यञ्च विकर्म्मणः । अकर्म्मणश्च बोद्धव्यं गहना कर्म्मणो गतिः
॥ १७ ॥ कर्म्मण्यकर्म्म यः पश्येदकर्म्मणि च कर्म्म यः । स बुद्धि-
मान् मनुष्येषु स युक्तः कृत्स्नकर्म्मकृत् ॥ १८ ॥ यस्य सर्व्वे समा-
रम्भाः कामसङ्कल्पवर्ज्जिताः । ज्ञानाग्निदग्धकर्म्माणं तमाहुः पण्डितं
बुधाः ॥ १९ ॥ त्यक्त्वा कर्म्मफलासङ्गं नित्यतृप्तो निराश्रयः । कर्म्म-
ण्यभिप्रवृत्तोऽपि नैव किञ्चित् करोति सः ॥ २० ॥ निराशीर्यत-
चित्तात्मा त्यक्तसर्व्वपरिग्रहः । शारीरं केवलं कर्म्म कुर्व्वन्नाप्नोति
किल्बिषम् ॥ २१ ॥ यदृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सरः ।
समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते ॥ २२ ॥ गतसङ्गस्य
मुक्तस्य ज्ञानावस्थितचेतसः । यज्ञायाचरतः कर्म्म समग्रं प्रवि-
लीयते ॥ २३ ॥ ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म्मसमाधिना ॥ २४ ॥ दैवमेवापरे
यज्ञं योगिनः पर्य्युपासते । ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोप-
जुह्वति ॥ २५ ॥ श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।
शब्दादीन् विषयानन्ये इन्द्रियाग्निषु जुह्वति ॥ २६ ॥ सर्व्वा

णीन्द्रियकर्म्माणि प्राणकर्म्माणि चापरे । आत्मसंयमयोगाग्नौ
जुह्वति ज्ञानदीपिते ॥ २७ ॥ द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथा
परे । स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥ २८ ॥ अपाने
जुह्वति प्राणं प्राणेऽपानं तथा परे । प्राणापानगती रुद्धा
प्राणायामपरायणाः ॥ २९ ॥ अपरे नियताहाराः प्राणान्
प्राणेषु जुह्वति । सर्व्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥ ३० ॥
यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् । नायं लोकोऽस्त्य-
यज्ञस्य कुतोऽन्यः कुरुसत्तम ॥ ३१ ॥ एवं बहुविधा यज्ञा वितता
ब्रह्मणो मुखे । कर्म्मजान् विद्धि तान् सर्व्वानेवं ज्ञात्वा विमोक्ष्यसे
॥ ३२ ॥ श्रेयान् द्रव्यमयात् यज्ञात् ज्ञानयज्ञः परन्तप । सर्व्वं
कर्म्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ३३ ॥ तद्विद्धि प्रणिपातेन
परिप्रश्नेन सेवया । उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः
॥ ३४ ॥ यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव । येन
भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥ ३५ ॥ अपि चेदसि पापेभ्यः
सर्व्वेभ्यः पापकृत्तमः । सर्व्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि ॥३६॥
यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन । ज्ञानाग्निः सर्व्व-
कर्म्माणि भस्मसात् कुरुते तथा ॥३७॥ न हि ज्ञानेन सदृशं पवित्र-
मिह विद्यते । तत् स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥ ३८ ॥
श्रद्धावांल्लभते ज्ञानं तत्परः संयतेन्द्रियः । ज्ञानं लब्ध्वा परां शान्ति-
मचिरेणाधिगच्छति ॥ ३९ ॥ अज्ञश्चाश्रद्दधानश्च संशयात्मा विन-
श्यति । नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥ ४० ॥
योगसन्न्यस्तकर्म्माणं ज्ञानसंछिन्नसंशयम् । आत्मवन्तं न कर्म्माणि
निबध्नन्ति धनञ्जय ॥ ४१ ॥ तस्मादज्ञानसम्भूतं हृत्स्थं ज्ञानासि-
नात्मनः । छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥ ४२ ॥

इति भीष्मपर्व्वणि भगवद्गीतापर्व्वणि श्रीकृष्णार्जुनसंवादे
अष्टाविंशोऽध्यायः ॥ २८ ॥

अर्जुन उवाच। सन्न्यासं कर्मणां कृष्ण पुनर्योगञ्च शंससि। यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥ १ ॥

श्रीभगवानुवाच। सन्न्यासः कर्मयोगश्च निःश्रेयसकरावुभौ। तयोस्तु कर्मसन्न्यासात् कर्मयोगो विशिष्यते ॥ २ ॥ ज्ञेयः स नित्यसन्न्यासी यो न द्वेष्टि न काङ्क्षति। निर्द्वन्द्वो हि महाबाहो सुखं बन्धात् प्रमुच्यते ॥ ३ ॥ साङ्ख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः। एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥ ४ ॥ यत् साङ्ख्यैः प्राप्यते स्थानं तद् योगैरपि गम्यते। एकं साङ्ख्यञ्च योगञ्च यः पश्यति स पश्यति ॥ ५ ॥ सन्न्यासस्तु महाबाहो दुःखमाप्तुमयोगतः। योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥ ६ ॥ योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः। सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ७ ॥ नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित्। पश्यन् शृण्वन् स्पृशन् जिघ्रन्नश्नन् गच्छन् स्वपन् श्वसन् ॥ ८ ॥ प्रलपन् विसृजन् गृह्णन्नुन्मिषन्निमिषन्नपि। इन्द्रियाणीन्द्रियार्थेषु वर्त्तन्त इति धारयन् ॥ ९ ॥ ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः। लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ १० ॥ कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि। योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये ॥ ११ ॥ युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम्। अयुक्तः कामकारेण फले सक्तो निबध्यते ॥ १२ ॥ सर्वकर्माणि मनसा सन्न्यस्यास्ते सुखं वशी। नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥ १३ ॥ न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः। न कर्मफलसंयोगं स्वभावस्तु प्रवर्त्तते ॥ १४ ॥ नादत्ते कस्यचित् पापं न चैव सुकृतं विभुः। अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥ १५ ॥ ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः। तेषामादित्यवत् ज्ञानं प्रकाशयति तत्परम् ॥ १६ ॥ तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परा

यणाः । गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्द्धूतकल्मषाः ॥ १७ ॥ विद्या-
विनयसम्पन्ने ब्राह्मणे गवि हस्तिनि । शुनि चैव श्वपाके च
पण्डिताः समदर्शिनः ॥ १८ ॥ इहैव तैर्जितः सर्गो येषां साम्ये
स्थितं मनः । निर्दोषं हि समं ब्रह्म तस्माद् ब्रह्मणि ते स्थिताः
॥ १९ ॥ न प्रहृष्येत् प्रियं प्राप्य नोद्विजेत् प्राप्य चाप्रियम् ।
स्थिरबुद्धिरसंमूढो ब्रह्मविद् ब्रह्मणि स्थितः ॥ २० ॥ बाह्य
स्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम् । स ब्रह्मयोगयुक्तात्मा
सुखमक्षयमश्नुते ॥ २१ ॥ ये हि संस्पर्शजा भोगा दुःखयोनय
एव ते । आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ २२ ॥
शक्नोतीहैव यः सोढुं प्राक्शरीरविमोक्षणात् । कामक्रोधोद्भवं
वेगं स युक्तः स सुखी नरः ॥ २३ ॥ योऽन्तःसुखोऽन्तराराम-
स्तथान्तर्ज्योतिरेव यः । स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधि-
गच्छति ॥ २४ ॥ लभन्ते ब्रह्म निर्वाणमृषयः क्षीणकल्मषाः ।
छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ॥ २५ ॥ कामक्रोध-
वियुक्तानां यतीनां यतचेतसाम् । अभितो ब्रह्म निर्वाणं वर्त्तते
विदितात्मनाम् ॥ २६ ॥ स्पर्शान् कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे
भ्रुवोः । प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥ २७ ॥
यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः । विगतेच्छाभयक्रोधो यः
सदा मुक्त एव सः ॥ २८ ॥ भोक्तारं यज्ञतपसां सर्वलोकमहे-
श्वरम् । सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥ २९ ॥

इति भीष्मपर्व्वणि भगवद्गीतापर्व्वणि श्रीकृष्णार्जुनसंवादे
एकोनविंशोऽध्यायः ॥ २९ ॥

भगवानुवाच। अनाश्रितः कर्मफलं कार्य्यं कर्म करोति यः।
स सन्न्यासी च योगी च न निरग्निर्न चाक्रियः॥ १ ॥ यं
सन्न्यासमिति प्राहुर्योगं तं विद्धि पाण्डव। न ह्यसन्न्यस्तसङ्कल्पो
योगी भवति कश्चन॥ २ ॥ आरुरुक्षोर्मुनेर्योगं कर्म कारण-
मुच्यते। योगारूढस्य तस्यैव शमः कारणमुच्यते॥ ३ ॥ यदा
हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते। सर्वसङ्कल्पसन्न्यासी योगा-
रूढस्तदोच्यते॥ ४ ॥ उद्धरेदात्मनात्मानं नात्मानमवसादयेत्।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः॥ ५ ॥ बन्धुरात्मा-
त्मनस्तस्य येनात्मैवात्मना जितः। अनात्मनस्तु शत्रुत्वे वर्त्तेतात्मैव
शत्रुवत्॥ ६ ॥ जितात्मनः प्रशान्तस्य परमात्मा समाहितः।
शीतोष्णसुखदुःखेषु तथा मानापमानयोः॥ ७ ॥ ज्ञानविज्ञान-
तृप्तात्मा कूटस्थो विजितेन्द्रियः। युक्त इत्युच्यते योगी सम-
लोष्टाश्मकाञ्चनः॥ ८ ॥ सुहृन्मित्रार्य्युदासीनमध्यस्थद्वेष्यबन्धुषु।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते॥ ९ ॥ योगी युञ्जीत
सततमात्मानं रहसि स्थितः। एकाकी यतचित्तात्मा निराशी-
रपरिग्रहः॥ १० ॥ शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम्॥ ११ ॥ तत्रैकाग्रं
मनः कृत्वा यतचित्तेन्द्रियक्रियः। उपविश्यासने युञ्ज्याद् योग-
मात्मविशुद्धये॥ १२ ॥ समं कायशिरोग्रीवं धारयन्नचलं स्थिरः।
सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन्॥ १३ ॥ प्रशा-
न्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः। मनः संयम्य मच्चित्तो
युक्त आसीत मत्परः॥ १४ ॥ युञ्जन्नेवं सदात्मानं योगी नियत-
मानसः। शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति॥ १५ ॥
नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः। न चातिस्वप्नशीलस्य
जाग्रतो नैव चार्ज्जुन॥ १६ ॥ युक्ताहारविहारस्य युक्तचेष्टस्य
कर्मसु। युक्तस्वप्नावबोधस्य योगो भवति दुःखहा॥ १७ ॥

यदा विनियतं चित्तमात्मन्येवावतिष्ठते । निस्पृहः सर्व्वकामेभ्यो
युक्त इत्युच्यते तदा ॥ १८ ॥ यथा दीपो निवातस्थो नेङ्गते
सोपमा स्मृता । योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥१९॥
यत्रोपरमते चित्तं निरुद्धं योगसेवया । यत्र चैवात्मनात्मानं
पश्यन्नात्मनि तुष्यति ॥ २० ॥ सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्य-
मतीन्द्रियम् । वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥ २१ ॥
यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः । यस्मिन् स्थितो न
दुःखेन गुरुणापि विचाल्यते ॥ २२ ॥ तं विद्याद्दुःखसंयोगवियोगं
योगसंज्ञितम् । स निश्चयेन योक्तव्यो योगो निर्व्विसचेतसा ॥२३॥
सङ्कल्पप्रभवान् कामांस्त्यक्त्वा सर्व्वानशेषतः । मनसैवेन्द्रियग्रामं
विनियम्य समन्ततः ॥ २४ ॥ शनैः शनैरुपरमेत् बुद्ध्या धृति-
गृहीतया । आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ॥२५॥
यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् । ततस्ततो नियम्यै-
तदात्मन्येव वशं नयेत् ॥ २६ ॥ प्रशान्तमनसं ह्येनं योगिनं सुख-
मुत्तमम् । उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥२७॥ युञ्जन्नेवं
सदात्मानं योगी विगतकल्मषः । सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुख-
मश्नुते ॥२८॥ सर्व्वभूतस्थमात्मानं सर्व्वभूतानि चात्मनि । ईक्षते योग-
युक्तात्मा सर्व्वत्र समदर्शनः ॥ २९ ॥ यो मां पश्यति सर्व्वत्र सर्व्वञ्च
मयि पश्यति । तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ ३० ॥
सर्व्वभूतस्थितं यो मां भजत्येकत्वमास्थितः । सर्व्वथा वर्त्तमानोऽपि स
योगी मयि वर्त्तते ॥ ३१ ॥ आत्मौपम्येन सर्व्वत्र समं पश्यति
योऽर्ज्जुन । सुखं वा यदि वा दुःखं स योगी परमो मतः ॥ ३२ ॥

अर्ज्जुन उवाच । योऽयं योगस्त्वया प्रोक्तः साम्येन मधु-
सूदन । एतस्याहं न पश्यामि चञ्चलत्वात् स्थितिं स्थिराम् ॥ ३३ ॥
चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् । तस्याहं निग्रहं
मन्ये वायोरिव सुदुष्करम् ॥ ३४ ॥

भगवानुवाच। असंशयं महाबाहो मनो दुर्निग्रहं चलम्।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ ३५ ॥ असंयता-
त्मना योगो दुष्प्राप इति मे मतिः। वश्यात्मना तु यतता शक्यो-
ऽवाप्तुमुपायतः ॥ ३६ ॥

अर्जुन उवाच। अयतिः श्रद्धयोपेतो योगाच्चलितमानसः।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥ ३७ ॥ कच्चि-
न्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति। अप्रतिष्ठो महाबाहो विमूढो
ब्रह्मणः पथि ॥ ३८ ॥ एतन्मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः।
त्वदन्यः संशयस्यास्य छेत्ता न ह्युपपद्यते ॥ ३९ ॥

भगवानुवाच। पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते।
न हि कल्याणकृत् कश्चित् दुर्गतिं तात गच्छति ॥ ४० ॥ प्राप्य
पुण्यकृतान् लोकानुषित्वा शाश्वतीः समाः। शुचीनां श्रीमतां
गेहे योगभ्रष्टोऽभिजायते ॥ ४१ ॥ अथ वा योगिनामेव कुले
भवति धीमताम्। एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥४२॥
तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम्। यतते च ततो भूयः
संसिद्धौ कुरुनन्दन ॥ ४३ ॥ पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि
सः। जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्त्तते ॥ ४४ ॥ प्रयत्नात्
यतमानस्तु योगी संशुद्धकिल्बिषः। अनेकजन्मसंसिद्धस्ततो याति
परां गतिम् ॥ ४५ ॥ तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि
मतोऽधिकः। कर्मिभ्यश्चाधिको योगी तस्माद् योगी भवार्जुन
॥ ४६ ॥ योगिनामपि सर्वेषां मद्गतेनान्तरात्मना। श्रद्धावान्
भजते यो मां स मे युक्ततमो मतः ॥ ४७ ॥

इति भीष्मपर्वणि भगवद्गीतापर्वणि श्रीकृष्णार्जुनसंवादे आत्म-
संयमयोगो नाम त्रिंशोऽध्यायः ॥ ३० ॥

---

भगवानुवाच । मय्यासक्तमनाः पार्थ योगं युञ्जन् मदाश्रयः । असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥ १ ॥ ज्ञानन्तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः । यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥ २ ॥ मनुष्याणां सहस्रेषु कश्चित् यतति सिद्धये । यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ ३ ॥ भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ४ ॥ अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूतां महावाहो ययेदं धार्य्यते जगत् ॥ ५ ॥ एतद्योनीनि भूतानि सर्व्वाणीत्युपधारय । अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ ६ ॥ मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय । मयि सर्व्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ७ ॥ रसोऽहमप्सु कौन्तेय प्रभास्मि शशिसूर्य्ययोः । प्रणवः सर्व्ववेदेषु शब्दः खे पौरुषं नृषु ॥ ८ ॥ पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ । जीवनं सर्व्वभूतेषु तपश्चास्मि तपस्विषु ॥ ९ ॥ वीजं मां सर्व्वभूतानां विद्धि पार्थ सनातनम् । बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥ १० ॥ बलं बलवताञ्चाहं कामरागविवर्ज्जितः । धर्म्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥ ११ ॥ ये चैव सात्त्विका भावा राजसास्तामसाश्च ये । मत्त एवेति तान् विद्धि न त्वहं तेषु ते मयि ॥ १२ ॥ त्रिभिर्गुणमयैर्भावैरेभिः सर्व्वमिदं जगत् । मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥ १३ ॥ दैवी ह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ १४ ॥ न मां दुष्कृतिनो मूढ़ाः प्रपद्यन्ते नराधमाः । माययापहृतज्ञाना आसुरं भावमाश्रिताः ॥ १५ ॥ चतुर्व्विधा भजन्ते मां जनाः सुकृतिनोऽर्ज्जुन । आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ १६ ॥ तेषां ज्ञानी नित्ययुक्त एकभक्तिर्व्विशिष्यते । प्रियो हि ज्ञानिनो नित्यमहं स च मम प्रियः ॥१७॥

उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् । आस्थितः स हि
युक्तात्मा मामेवानुत्तमां गतिम् ॥ १८ ॥ बहूनां जन्मनामन्ते
ज्ञानवान् मां प्रपद्यते । वासुदेवः सर्वमिति स महात्मा सुदु-
र्लभः ॥ १९ ॥ कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः । तं तं
नियममास्थाय प्रकृत्या नियताः स्वया ॥ २० ॥ यो यो यां यां
तनुं भक्तः श्रद्धयार्चितुमिच्छति । तस्य तस्याचलां श्रद्धां तामेव
विदधाम्यहम् ॥ २१ ॥ स तया श्रद्धया युक्तस्तस्याराधनमीहते ।
लभते च ततः कामान् मयैव विहितान् हि तान् ॥ २२ ॥ अन्त-
वत्तु फलं तेषां तद्भवत्यल्पमेधसाम् । देवान् देवयजो यान्ति
मद्भक्ता यान्ति मामपि ॥ २३ ॥ अव्यक्तं व्यक्तिमापन्नं मन्यन्ते
मामबुद्धयः । परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ २४ ॥
नाहं प्रकाशः सर्वस्य योगमायासमावृतः । मूढोऽयं नाभिजानाति
लोको मामजमव्ययम् ॥ २५ ॥ वेदाहं समतीतानि वर्त्तमानानि
चार्ज्जुन । भविष्याणि च भूतानि मान्तु वेद न कश्चन ॥२६॥ इच्छा-
द्वेषसमुत्थेन द्वन्द्वमोहेन भारत । सर्वभूतानि सम्मोहं सर्गे यान्ति
परन्तप ॥ २७ ॥ येषां त्वन्तगतं पापं जनानां पुण्यकर्म्मणाम् । ते
द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥ २८ ॥ जरामरणमोक्षाय
मामाश्रित्य यतन्ति ये । ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म्म
चाखिलम् ॥ २९ ॥ साधिभूताधिदैवं मां साधियज्ञञ्च ये विदुः ।
प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥ ३० ॥

इति भीष्मपर्व्वणि भगवद्गीतापर्व्वणि श्रीकृष्णार्ज्जुनसंवादे
एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

अर्ज्जुन उवाच । किन्तद् ब्रह्म किमध्यात्मं किं कर्म्म पुरुषो-
त्तम । अधिभूतञ्च किं प्रोक्तमधिदैवं किमुच्यते ॥ १ ॥ अधि-

यज्ञ· कथं कोऽत्र देहेऽस्मिन् मधुसूदन । प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥ २ ॥

भगवानुवाच । अक्षरं परमं ब्रह्म स्वभावोऽध्यात्ममुच्यते । भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ३ ॥ अधिभूतं क्षरोभावः पुरुषश्चाधिदैवतम् । अधियज्ञोऽहमेवात्र देहे देहभृताम्बर ॥ ४ ॥ अन्तकाले च मामेव स्मरन् मुक्ता कलेवरम् । यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ ५ ॥ यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् । तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ ६ ॥ तस्मात् सर्व्वेषु कालेषु मामनुस्मर युध्य च । मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयं । ७ ॥ अभ्यासयोगयुक्तेन चेतसा नान्यगामिना । परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ ८ ॥ कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः । सर्व्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात् ॥ ९ ॥ प्रयाणकाले मनसाचलेन भक्त्या युक्तो योगबलेन चैव । भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् स तं परं पुरुषमुपैति दिव्यम् ॥ १० ॥ यदक्षरं वेदविदो वदन्ति विशन्ति यद् यतयो वीतरागाः । यदिच्छन्तो ब्रह्मचर्य्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्ये ॥ ११ ॥ सर्व्वद्वाराणि संयम्य मनो हृदि निरुध्य च । मूर्द्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥ १२ ॥ ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् । यः प्रयाति त्यजन् देहं स याति परमां गतिम् ॥ १३ ॥ अनन्यचेताः सततं यो मां स्मरति नित्यशः । तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥ १४ ॥ मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् । नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥ १५ ॥ आब्रह्मभुवनाल्लोकाः पुनरावर्त्तिनोऽर्जुन । मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ १६ ॥ सहस्रयुगपर्य्यन्तमहर्यद् ब्रह्मणो विदुः । रात्रिं युगसहस्रान्तां तेऽहो-

रात्रविदो जना ॥ १७ ॥ अव्यक्ताद् व्यक्तय सर्वा प्रभवन्त्यह-
रागमे। रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥ १८ ॥ भूत
ग्राम स एवायं भूत्वा भूत्वा प्रलीयते। रात्र्यागमेऽवश पार्थ
प्रभवत्यहरागमे ॥ १९ ॥ परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात्
सनातन। य स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ २० ॥
अव्यक्तोऽक्षर इत्युक्तस्तमाहु परमां गतिम्। य प्राप्य न निव
र्त्तन्ते तद्धाम परमं मम ॥ २१ ॥ पुरुष स पर पार्थ भक्त्या
लभ्यस्त्वनन्यया। यस्यान्त स्थानि भूतानि येन सर्वमिदं ततम्
॥ २२ ॥ यत्र काले त्वनावृत्तिमावृत्तिञ्चैव योगिन। प्रयाता
यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ २३ ॥ अग्निर्ज्योतिरह
शुक्ल षण्मासा उत्तरायणम्। तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्म
विदो जना ॥ २४ ॥ धूमो रात्रिस्तथा कृष्ण षण्मासा दक्षि
णायनम्। तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्त्तते ॥ २५ ॥
शुक्लकृष्णे गती ह्येते जगत शाश्वते मते। एकया यात्यनावृत्ति-
मन्ययावर्त्तते पुन ॥ २६ ॥ नैते सृती पार्थ जानन् योगी मुह्यति
कश्चन। तस्मात् सर्वेषु कालेषु योगयुक्तो भवार्ज्जुन ॥ २७ ॥
वेदेषु यज्ञेषु तप सु चैव दानेषु यत् पुण्यफलं प्रदिष्टम्। अत्येति
तत् सर्वमिदं विदित्वा योगी परं स्थानमुपैति चाद्यम् ॥ २८ ॥

इति भीष्मपर्वणि भगवद्गीतापर्वणि श्रीकृष्णार्ज्जुनसंवादे
द्वात्रिंशोऽध्याय ॥ ३२ ॥

---

भगवानुवाच। इदन्तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे। ज्ञानं
विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १ ॥ राजविद्या
राजगुह्यं पवित्रमिदमुत्तमम्। प्रत्यक्षावगमं धर्म्यं सुसुखं कर्त्तु
मव्ययम् ॥ २ ॥ अश्रद्दधाना पुरुषा धर्मस्यास्य परन्तप। अप्राप्य

मां निवर्त्तन्ते मृत्युसंसारवर्त्मनि ॥ ३ ॥ मया ततमिदं सर्व्वं
जगदव्यक्तमूर्त्तिना। मत्स्थानि सर्व्वभूतानि न चाहं तेष्ववस्थितः
॥ ४ ॥ न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम्। भूतभृत्
न च भूतस्थो ममात्मा भूतभावनः ॥ ५ ॥ यथाकाशस्थितो
नित्यं वायुः सर्व्वगो महान्। तथा सर्व्वाणि भूतानि मत्स्था-
नीत्युपधारय ॥ ६ ॥ सर्व्वभूतानि कौन्तेय प्रकृतिं यान्ति मामि-
काम्। कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ ७ ॥

पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देव भोगान् ॥२०॥
ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति।
एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते॥ २१ ॥
अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते। तेषां नित्याभि-
युक्तानां योगक्षेमं वहाम्यहम्॥ २२ ॥ येऽप्यन्यदेवता भक्ता
यजन्ते श्रद्धयान्विताः। तेऽपि मामेव कौन्तेय यजन्त्यविधि-
पूर्वकम्॥ २३ ॥ अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च। न
तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥ २४ ॥ यान्ति देवव्रता
देवान् पितॄन् यान्ति पितृव्रताः। भूतानि यान्ति भूतेज्या यान्ति
मद्याजिनोऽपि माम्॥ २५॥ पत्रं पुष्पं फलं तोयं यो मे भक्त्या
प्रयच्छति। तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ २६ ॥ यत्
करोषि यदश्नासि यज्जुहोषि ददासि यत्। यत्तपस्यसि कौन्तेय
तत् कुरुष्व मदर्पणम्॥ २७॥ शुभाशुभफलैरेवं मोक्ष्यसे कर्म-
बन्धनैः। सन्न्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि॥ २८ ॥
समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः। ये भजन्ति तु मां
भक्त्या मयि ते तेषु चाप्यहम्॥ २९ ॥ अपि चेत् सुदुराचारो
भजते मामनन्यभाक्। साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि
सः ॥ ३० ॥ क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति।
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥ ३१ ॥ मां हि
पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः। स्त्रियो वैश्यास्तथा
शूद्रास्तेऽपि यान्ति परां गतिम्॥ ३२ ॥ किं पुनर्ब्राह्मणाः पुण्या
भक्ता राजर्षयस्तथा। अनित्यमसुखं लोकमिमं प्राप्य भजस्व
माम् ॥ ३३ ॥ मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ३४ ॥

इति भीष्मपर्वणि भगवद्गीतापर्वणि श्रीकृष्णार्जुनसंवादे
त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

भगवानुवाच। भूय एव महाबाहो शृणु मे परमं वचः।
यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥ १ ॥ न मे विदुः
सुरगणाः प्रभवं न महर्षयः। अहमादिर्हि देवानां महर्षीणाञ्च
सर्वशः ॥ २ ॥ यो मामजमनादिञ्च वेत्ति लोकमहेश्वरम्। असं-
मूढः स मर्त्त्येषु सर्वपापैः प्रमुच्यते ॥ ३ ॥ बुद्धिर्ज्ञानमसम्मोहः
क्षमा सत्यं दमः शमः। सुखं दुःखं भवोऽभावो भयञ्चाभयमेव
च ॥ ४ ॥ अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः। भवन्ति
भावा भूतानां मत्त एव पृथग्विधाः ॥ ५ ॥ महर्षयः सप्त पूर्वे
चत्वारो मनवस्तथा। मद्भावा मानसा जाता येषां लोक इमाः
प्रजाः ॥ ६ ॥ एतां विभूतिं योगञ्च मम यो वेत्ति तत्त्वतः।
सोऽविकल्पेन योगेन युज्यते नात्र संशयः ॥ ७ ॥ अहं सर्वस्य
प्रभवो मत्तः सर्वं प्रवर्त्तते। इति मत्वा भजन्ते मां बुधा भाव-
समन्विताः ॥ ८ ॥ मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम्।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥ ९ ॥ तेषां सतत-
युक्तानां भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगं तं येन मामुप-
यान्ति ते ॥ १० ॥ तेषामेवानुकम्पार्थमहमज्ञानजं तमः। नाश-
याम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ ११ ॥

भगवन् मया ॥ १७ ॥ विस्तरेणात्मनो योगं विभूतिञ्च जनार्द्दन।
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥ १८ ॥
भगवानुवाच। हन्त ते कथयिष्यामि दिव्या ह्यात्मविभू-
तयः। प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥ १९ ॥
अहमात्मा गुड़ाकेश सर्वभूताशयस्थित। अहमादिश्च मध्यञ्च
भूतानामन्त एव च ॥ २० ॥ आदित्यानामहं विष्णुर्ज्योतिषां
रविरंशुमान्। मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥ २१ ॥
वेदानां सामवेदोऽस्मि देवानामस्मि वासवः। इन्द्रियाणां मन-
श्चास्मि भूतानामस्मि चेतना ॥ २२ ॥ रुद्राणां शङ्करश्चास्मि वित्तेशो
यक्षरक्षसाम्। वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥२३॥
पुरोधसाञ्च मुख्यं मां विद्धि पार्थ बृहस्पतिम्। सेनानीनामहं
स्कन्दः सरसामस्मि सागरः ॥ २४ ॥ महर्षीणां भृगुरहं गिरा-
मस्म्येकमक्षरम्। यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः
॥ २५ ॥ अश्वत्थः सर्ववृक्षाणां देवर्षीणाञ्च नारदः। गन्धर्वाणां
चित्ररथः सिद्धानां कपिलो मुनिः ॥ २६ ॥ उच्चैःश्रवसमश्वानां
विद्धि माममृतोद्भवम्। ऐरावतं गजेन्द्राणां नराणाञ्च नराधिपम्
॥ २७ ॥ आयुधानामहं वज्रं धेनूनामस्मि कामधुक्। प्रजन-
श्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ॥ २८ ॥ अनन्तश्चास्मि
नागानां वरुणो यादसामहम्। पितृणामर्य्यमा चास्मि यमः
संयमतामहम् ॥ २९ ॥ प्रह्लादश्चास्मि दैत्यानां कालः कलयता-
महम्। मृगाणाञ्च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥ ३० ॥
पवनः पवतामस्मि रामः शस्त्रभृतामहम्। झषाणां मकरश्चास्मि
स्रोतसामस्मि जाह्नवी ॥ ३१ ॥ सर्गाणामादिरन्तश्च मध्यञ्चैवाह-
मर्जुन। अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥ ३२ ॥
अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च। अहमेवाक्षयः
कालो धाताहं विश्वतोमुखः ॥ ३३ ॥ मृत्युः सर्वहरश्चाहमुद्भव

भविष्यताम् । कीर्त्तिः श्रीर्वाक् च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥ ३४ ॥ वृहत्साम तथा साम्नां गायत्री छन्दसामहम् । मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥ ३५ ॥ द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् । जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥ ३६ ॥ वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः । मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥ ३७ ॥ दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् । मौनञ्चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥ ३८ ॥ यच्चापि सर्व्वभूतानां वीजं तदहमर्ज्जुन । न तदस्ति विना यत्स्यान्मया भूतञ्चराचरम् ॥ ३९ ॥ नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप । एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥ ४० ॥ यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्ज्जितमेव वा । तत्तदेवावगच्छ त्वं मम तेजोऽंशसम्भवम् ॥ ४१ ॥ अथ वा वहुनैतेन किं ज्ञातेन तवार्ज्जुन । विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥ ४२ ॥

इति भीष्मपर्व्वणि भगवद्गीतापर्व्वणि श्रीकृष्णार्ज्जुनसंवादे विभूतियोगो नाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

अर्ज्जुन उवाच । मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् । यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥ १ ॥ भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया । त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥ २ ॥ एवमेतद्यथात्थ त्वमात्मानं परमेश्वर । द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥ ३ ॥ मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो । योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥ ४ ॥

भगवानुवाच । पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।

नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ५ ॥ पश्या-
दित्यान् वसून् रुद्रानश्विनौ मरुतस्तथा। बहून्यदृष्टपूर्वाणि
पश्याश्चर्याणि भारत ॥ ६ ॥ इहैकस्थं जगत् कृत्स्नं पश्याद्य
सचराचरम्। मम देहे गुड़ाकेश यच्चान्यत् द्रष्टुमिच्छसि ॥ ७ ॥
न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा। दिव्यं ददामि ते चक्षुः
पश्य मे योगमैश्वरम् ॥ ८ ॥

सञ्जय उवाच। एवमुक्त्वा ततो राजन् महायोगेश्वरो हरिः।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥ अनेकवक्त्रनयन-
मनेकाद्भुतदर्शनम्। अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम्
॥ १० ॥ दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम्। सर्वाश्चर्य-
मयं देवमनन्तं विश्वतोमुखम् ॥ ११ ॥ दिवि सूर्यसहस्रस्य
भवेत् युगपदुत्थिता। यदि भाः सदृशी सा स्यात् भासस्तस्य
महात्मनः ॥ १२ ॥ तत्रैकस्थं जगत् कृत्स्नं प्रविभक्तमनेकधा।
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥ १३ ॥ ततः स विस्म-
याविष्टो हृष्टरोमा धनञ्जयः। प्रणम्य शिरसा देवं कृताञ्जलि-
रभाषत ॥ १४ ॥

अर्जुन उवाच। पश्यामि देवांस्तव देव देहे सर्वांस्तथा
भूतविशेषसङ्घान्। ब्रह्माणमीशं कमलासनस्थमृषींश्च सर्वानुर-
गांश्च दिव्यान् ॥ १५ ॥ अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां
सर्वतोऽनन्तरूपम्। नान्तं न मध्यं न पुनस्तवादिं पश्यामि विश्वे-
श्वर विश्वरूपम् ॥ १६ ॥ किरीटिनं गदिनञ्चक्रिणञ्च तेजोराशिं
सर्वतो दीप्तिमन्तम्। पश्यामि त्वां दुर्निरीक्ष्यं समन्तात् दीप्ता-
नलार्कद्युतिमप्रमेयम् ॥ १७ ॥ त्वमक्षरं परमं वेदितव्यं त्वमस्य
विश्वस्य परं निधानम्। त्वमव्ययः शाश्वतधर्मगोप्ता सनातनस्त्वं
पुरुषो मतो मे ॥ १८ ॥ अनादिमध्यान्तमनन्तवीर्यमनन्तबाहुं
शशिसूर्यनेत्रम्। पश्यामि त्वां दीप्तहुताशवक्त्रं स्वतेजसा विश्व-

मिदं तपन्तम् ॥ १९ ॥ द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयै-
केन दिशश्च सर्व्वाः । दृष्ट्वाद्भुतं रूपमिदं तवोग्रं लोकत्रयं प्रव्य-
थितं महात्मन् ॥ २० ॥ अमी हि त्वां सुरसङ्घा विशन्ति केचित्
भीताः प्राञ्जलयो गृणन्ति । स्वस्तीत्युक्त्वा महर्षिसिद्धसङ्घाः
स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ॥ २१ ॥ रुद्रादित्या वसवो
ये च साध्या विश्वेऽश्विनौ मरुतश्चोष्मपाश्च । गन्धर्व्वयक्षासुरसिद्ध-
सङ्घा वीक्षन्ते त्वां विस्मिताश्चैव सर्व्वे ॥ २२ ॥ रूपं महत्ते बहु-
वक्त्रनेत्रं महाबाहो बहुबाहूरुपादम् । बहूदरं बहुदंष्ट्राकरालं
दृष्ट्वा लोकाः प्रव्यथितास्तथाहम् ॥ २३ ॥ नभःस्पृशं दीप्तमनेक-
वर्णं व्यात्ताननं दीप्तविशालनेत्रम् । दृष्ट्वा हि त्वां प्रव्यथितान्त-
रात्मा धृतिं न विन्दामि शमञ्च विष्णो ॥ २४ ॥ दंष्ट्राकरालानि
च ते मुखानि दृष्ट्वैव कालानलसन्निभानि । दिशो न जाने न
लभे च शर्म्म प्रसीद देवेश जगन्निवास ॥ २५ ॥ अमी च त्वां
धृतराष्ट्रस्य पुत्राः सर्व्वे सहैवावनिपालसङ्घैः । भीष्मो द्रोणः
सूतपुत्रस्तथासौ सहास्मदीयैरपि योधमुख्यैः ॥ २६ ॥ वक्त्राणि
ते त्वरमाणा विशन्ति दंष्ट्राकरालानि भयानकानि । केचिद्विलग्ना
दशनान्तरेषु सन्दृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥ २७ ॥ यथा नदीनां
बहवोऽम्बुवेगाः समुद्रमेवाभिमुखा द्रवन्ति । तथा तवामी नर-
लोकवीरा विशन्ति वक्त्राण्यभितो ज्वलन्ति ॥ २८ ॥ यथा प्रदीप्तं
ज्वलनं पतङ्गा विशन्ति नाशाय समृद्धवेगाः । तथैव नाशाय
विशन्ति लोकास्तवापि वक्त्राणि समृद्धवेगाः ॥ २९ ॥ लेलिह्यसे
ग्रसमान समन्तात् लोकान् समग्रान् वदनैर्ज्वलद्भिः । तेजोभि-
रापूर्य्य जगत् समग्रं भासस्तवोग्राः प्रतपन्ति विष्णो ॥ ३० ॥
आख्याहि मे को भवानुग्ररूपो नमोऽस्तु ते देववर प्रसीद ।
विज्ञातुमिच्छामि भवन्तमाद्यं न हि प्रजानामि तव प्रवृत्तिम् ॥३१॥
भगवानुवाच । कालोऽस्मि लोकक्षयकृत् प्रवृद्धो लोकान्

समाहर्त्तुमिह प्रवृत्तः । ऋतेऽपि त्वां न भविष्यन्ति सर्वे येऽवस्थिताः प्रत्यनीकेषु योधाः ॥ ३२ ॥ तस्मात्त्वमुत्तिष्ठ यशो लभस्व जित्वा शत्रून् भुङ्क्ष्व राज्यं समृद्धम् । मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन् ॥ ३३ ॥ द्रोणञ्च भीष्मञ्च जयद्रथञ्च कर्णन्तथान्यानपि योधवीरान् । मया हतांस्त्वं जहि मा व्यथिष्ठा युध्यस्व जेतासि रणे सपत्नान् ॥ ३४ ॥

सञ्जय उवाच । एतच्छ्रुत्वा वचनं केशवस्य कृताञ्जलिर्वेपमानः किरीटी । नमस्कृत्वा भूय एवाह कृष्णं सगद्गदं भीतभीतः प्रणम्य ॥ ३५ ॥

अर्जुन उवाच । स्थाने हृषीकेश तव प्रकीर्त्त्या जगत् प्रहृष्यत्यनुरज्यते च । रक्षांसि भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्धसङ्घाः ॥ ३६ ॥ कस्माच्च ते न नमेरन् महात्मन् गरीयसे ब्रह्मणोऽप्यादिकर्त्रे । अनन्त देवेश जगन्निवास त्वमक्षरं सदसत् तत्परं यत् ॥ ३७ ॥ त्वमादिदेवः पुरुषः पुराणस्त्वमस्य विश्वस्य परं निधानम् । वेत्तासि वेद्यञ्च परञ्च धाम त्वया ततं विश्वमनन्तरूप ॥ ३८ ॥ वायुर्यमोऽग्निर्वरुणः शशाङ्कः प्रजापतिस्त्वं प्रपितामहश्च । नमो नमस्तेऽस्तु सहस्रकृत्वः पुनश्च भूयोऽपि नमो नमस्ते ॥ ३९ ॥ नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्व । अनन्तवीर्य्यामितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः ॥ ४० ॥ सखेति मत्वा प्रसभं यदुक्तं हे कृष्ण हे यादव हे सखेति । अजानता महिमानं तवेदं मया प्रमादात् प्रणयेन वापि ॥ ४१ ॥ यच्चावहासार्थमसत्कृतोऽसि विहारशय्यासनभोजनेषु । एकोऽथ वाप्यच्युत तत्समक्षं तत् क्षामये त्वामहमप्रमेयम् ॥ ४२ ॥ पितासि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान् । न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव ॥ ४३ ॥ तस्मात् प्रणम्य प्रणिधाय कायं

प्रसादये त्वामहमीशमीड्यम्। पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देव सोढुम् ॥ ४४ ॥ अदृष्टपूर्व्वं हृषितोऽस्मि दृष्ट्वा भयेन च प्रव्यथितं मनो मे। तदेव मे दर्शय देव रूपं प्रसीद देवेश जगन्निवास ॥ ४५ ॥ किरीटिनं गदिनं चक्रहस्तमिच्छामि त्वां द्रष्टुमहं तथैव। तेनैव रूपेण चतुर्भुजेन सहस्रबाहो भव विश्वमूर्त्ते ॥ ४६ ॥

भगवानुवाच। मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात्। तेजोमयं विश्वमनन्तमाद्यं यन्मे त्वदन्येन न दृष्टपूर्व्वम् ॥ ४७ ॥ न वेदयज्ञाध्ययनैर्न दानैर्न च क्रियाभिर्न तपोभिरुग्रैः। एवंरूपः शक्य अहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीर ॥४८॥ मा ते व्यथा मा च विमूढभावो दृष्ट्वा रूपं घोरमीदृङ्ममेदम्। व्यपेतभीः प्रीतमनाः पुनस्त्वं तदेव मे रूपमिदं प्रपश्य ॥ ४९ ॥

सञ्जय उवाच। इत्यर्ज्जुनं वासुदेवस्तथोक्त्वा स्वकं रूपं दर्शयामास भूयः। आश्वासयामास च भीतमेनं भूत्वा पुनः सौम्यवपुर्महात्मा ॥ ५० ॥

अर्ज्जुन उवाच। दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्द्दन। इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥ ५१ ॥

भगवानुवाच। सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम। देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥ ५२ ॥ नाहं वेदैर्न तपसा न दानेन न चेज्यया। शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥ ५३ ॥ भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन। ज्ञातुं द्रष्टुञ्च तत्त्वेन प्रवेष्टुञ्च परन्तप ॥५४॥ मत्कर्म्मकृत् मत्परमो मद्भक्तः सङ्गवर्ज्जितः। निर्वैरः सर्व्वभूतेषु यः स मामेति पाण्डव ॥ ५५ ॥

इति भीष्मपर्व्वणि भगवद्गीतापर्व्वणि श्रीकृष्णार्ज्जुनसंवादे विश्वरूपदर्शनं नाम पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

अर्जुन उवाच। एवं सततयुक्ता ये भक्तास्त्वां पर्य्युपासते। ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १ ॥

भगवानुवाच। मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते। श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥ २ ॥ ये त्वक्षरमनिर्द्देश्यमव्यक्तं पर्य्युपासते। सर्व्वत्रगमचिन्त्यञ्च कूटस्थमचलं ध्रुवम् ॥ ३ ॥ सन्नियम्येन्द्रियग्रामं सर्व्वत्र समबुद्धयः। ते प्राप्नुवन्ति मामेव सर्व्वभूतहिते रताः। ४ ॥ क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्। अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ ५ ॥ ये तु सर्व्वाणि कर्म्माणि मयि संन्यस्य मत्पराः। अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ ६ ॥ तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात्। भवामि न चिरात् पार्थ मय्यावेशितचेतसाम् ॥ ७ ॥ मय्येव मन आधत्स्व मयि बुद्धिं निवेशय। निवसिष्यसि मय्येव अत ऊर्द्ध्वं न संशयः ॥ ८ ॥ अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम्। अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय ॥ ९ ॥ अभ्यासेऽप्यसमर्थोऽसि मत्कर्म्मपरमो भव। मदर्थमपि कर्म्माणि कुर्व्वन् सिद्धिमवाप्स्यसि ॥ १० ॥ अथैतदप्यशक्तोऽसि कर्त्तुं मद्योगमाश्रितः। सर्व्वकर्म्मफलत्यागं ततः कुरु यतात्मवान् ॥ ११ ॥ श्रेयो हि ज्ञानमभ्यासात् ज्ञानात् ध्यानं विशिष्यते। ध्यानात् कर्म्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥ १२ ॥ अद्वेष्टा सर्व्वभूतानां मैत्रः करुण एव च। निर्म्ममो निरहङ्कारः समदुःखसुखः क्षमी ॥ १३ ॥ सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः। मय्यर्पितमनोबुद्धिर्यो मे भक्तः स मे प्रियः ॥ १४ ॥ यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः। हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥ १५ ॥ यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति। शुभाशुभपरित्यागी भक्तिमान् यः स मे प्रियः ॥ १६ ॥ समः शत्रौ च मित्रे च तथा मानापमानयोः। शीतोष्णसुखदुःखेषु

सङ्गविवर्ज्जितः॥ १७॥ तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येन केनचित्। अनिकेतः स्थिरमतिर्भक्तिमान् मे प्रियो नरः॥ १८॥ ये तु धर्म्मामृतमिदं यथोक्तं पर्य्युपासते। श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः॥ १९॥

इति भीष्मपर्व्वणि भगवद्गीतापर्व्वणि श्रीकृष्णार्जुनसंवादे
भक्तियोगो नाम षट्त्रिंशोऽध्यायः॥ ३६॥

---

अर्जुन उवाच। प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च। एतद्वेदितुमिच्छामि ज्ञानं ज्ञेयञ्च केशव॥ १॥

भगवानुवाच। इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते। एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञमिति तद्विदः॥ २॥ क्षेत्रज्ञञ्चापि मां विद्धि सर्वक्षेत्रेषु भारत। क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम॥ ३॥ तत् क्षेत्रं यच्च यादृक् च यद्विकारि यतश्च यत्। स च यो यत्प्रभावश्च तत् समासेन मे शृणु॥ ४॥ ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक्। ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः॥ ५॥ महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च। इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचराः॥ ६॥ इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः। एतत् क्षेत्रं समासेन सविकारमुदाहृतम्॥ ७॥ अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्ज्जवम्। आचार्य्योपासनं शौचं स्थैर्य्यमात्मविनिग्रहः॥ ८॥ इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च। जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम्॥९॥ असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु। नित्यञ्च समचित्तत्वमिष्टानिष्टोपपत्तिषु॥ १०॥ मयि चानन्ययोगेन भक्तिरव्यभिचारिणी। विविक्तदेशसेवित्वमरतिर्जनसंसदि॥ ११॥ अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम्। एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा

॥ १२ ॥ ज्ञेयं यत्तत् प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते। अनादि-
मत्परं ब्रह्म न सत्तन्नासदुच्यते ॥ १३ ॥ सर्वतः पाणिपादन्तत्
सर्वतोऽक्षिशिरोमुखम्। सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति
॥ १४ ॥ सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम्। असक्तं सर्व-
भृच्चैव निर्गुणं गुणभोक्तृ च ॥ १५ ॥ बहिरन्तश्च भूतानामचरं
चरमेव च। सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥ १६ ॥
अविभक्तञ्च भूतेषु विभक्तमिव च स्थितम्। भूतभर्त्तृ च तज्ज्ञेयं
ग्रसिष्णु प्रभविष्णु च ॥ १७ ॥ ज्योतिषामपि तज्ज्योतिस्तमसः
परमुच्यते। ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य धिष्ठितम् ॥ १८ ॥
इति क्षेत्रं तथा ज्ञानं ज्ञेयञ्चोक्तं समासतः। मद्भक्त एतद्विज्ञाय
मद्भावायोपपद्यते ॥१९॥ प्रकृतिं पुरुषञ्चैव विद्ध्यनादी उभावपि।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् ॥२०॥ कार्य्यकारणकर्त्तृत्वे
हेतुः प्रकृतिरुच्यते। पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥२१॥
पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान्। कारणं गुण-
सङ्गोऽस्य सदसद्योनिजन्मसु ॥२२॥ उपद्रष्टानुमन्ता च भर्त्ता भोक्ता
महेश्वरः। परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ॥ २३ ॥
य एवं वेत्ति पुरुषं प्रकृतिञ्च गुणैः सह। सर्वथा वर्त्तमानोऽपि न
स भूयोऽभिजायते ॥ २४ ॥ ध्यानेनात्मनि पश्यन्ति केचिदात्मान-
मात्मना अन्ये साङ्ख्येन योगेन कर्मयोगेन चापरे ॥ २५ ॥
अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते। तेऽपि चातितरन्त्येव
मृत्युं श्रुतिपरायणाः ॥ २६ ॥ यावत् सञ्जायते किञ्चित् सत्त्वं
स्थावरजङ्गमम्। क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ॥ २७ ॥
समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्। विनश्यत्स्वविनश्यन्तं यः
पश्यति स पश्यति ॥ २८ ॥ समं पश्यन् हि सर्वत्र समवस्थित-
मीश्वरम्। न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥२९॥
प्रकृत्यैव तु कर्माणि क्रियमाणानि सर्वशः। यः पश्यति तथात्मान-

भकर्त्तारं स पश्यति ॥ ३० ॥ यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म सम्पद्यते तदा ॥ ३१ ॥ अनादित्वात्
निर्गुणत्वात् परमात्मायमव्ययः । शरीरस्थोऽपि कौन्तेय न करोति
न लिप्यते ॥ ३२ ॥ यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।
सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥ ३३ ॥ यथा प्रका-
शयत्येकः कृत्स्नं लोकमिमं रविः । क्षेत्रं क्षेत्री तथा कृत्स्नं
प्रकाशयति भारत ॥ ३४ ॥ क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।
भूतप्रकृतिमोक्षञ्च ये विदुर्यान्ति ते परम् ॥ ३५ ॥

इति भीष्मपर्व्वणि भगवद्गीतापर्व्वणि श्रीकृष्णार्ज्जुनसंवादे
प्रकृतिपुरुषविवेकयोगो नाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

---

भगवानुवाच । परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।
यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥ १ ॥ इदं ज्ञान-
मुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न
व्यथन्ति च ॥ २ ॥ मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
सम्भवः सर्वभूतानां ततो भवति भारत ॥ ३ ॥ सर्वयोनिषु कौन्तेय
मूर्त्तयः सम्भवन्ति याः । तासां ब्रह्म महद्योनिरहं बीजप्रदः
पिता ॥ ४ ॥ सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः । निब-
ध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ ५ ॥ तत्र सत्त्वं निर्म्मल-
त्वात् प्रकाशकमनामयम् । सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ
॥ ६ ॥ रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् । तन्निबध्नाति
कौन्तेय कर्म्मसङ्गेन देहिनम् ॥ ७ ॥ तमस्त्वज्ञानजं विद्धि मोहनं
सर्वदेहिनाम् । प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ ८ ॥
सत्त्वं सुखे सञ्जयति रजः कर्म्मणि भारत । ज्ञानमावृत्य तु तमः
प्रमादे सञ्जयत्युत ॥ ९ ॥ रजस्तमश्चाभिभूय सत्त्वं भवति भारत ।

रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ १० ॥ सर्वद्वारेषु
देहेऽस्मिन् प्रकाश उपजायते । ज्ञानं यदा तदा विद्याद् विवृद्धं
सत्त्वमित्युत ॥ ११ ॥ लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ १२ ॥ अप्रकाशोऽप्रवृत्तिश्च
प्रमादो मोह एव च । तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥१३॥
यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् । तदोत्तमविदां
लोकानमलान् प्रतिपद्यते । १४ ॥ रजसि प्रलयं गत्वा कर्मसङ्गिषु
जायते । तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ १५ ॥ कर्मणः
सुकृतस्याहुः सात्त्विकं निर्मलं फलम् । रजसस्तु फलं दुःख-
मज्ञानं तमसः फलम् ॥ १६ ॥ सत्त्वात् सञ्जायते ज्ञानं रजसो
लोभ एव च । प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ १७ ॥
ऊर्द्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः । जघन्यगुण-
वृत्तिस्था अधो गच्छन्ति तामसाः ॥ १८ ॥ नान्यं गुणेभ्यः कर्त्तारं
यदा द्रष्टानुपश्यति । गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति
॥ १९ ॥ गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान् । जन्म
मृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ २० ॥

अर्जुन उवाच । कैर्लिङ्गैस्त्रीन् गुणानेतानतीतो भवति प्रभो ।
किमाचारः कथञ्चैतांस्त्रीन् गुणानतिवर्त्तते ॥ २१ ॥

भगवानुवाच । प्रकाशञ्च प्रवृत्तिञ्च मोहमेव च पाण्डव । न
द्वेष्टि सम्प्रवृत्तानि न निवृत्तानि काङ्क्षति ॥ २२ ॥ उदासीन-
वदासीनो गुणैर्यो न विचाल्यते । गुणा वर्त्तन्त इत्येव योऽव-
तिष्ठति नेङ्गते ॥ २३ ॥ समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः ।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥ २४ ॥ मानाप
मानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः । सर्वारम्भपरित्यागी गुणा-
तीतः स उच्यते ॥ २५ ॥ माञ्च योऽव्यभिचारेण भक्तियोगेन
सेवते । स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते । २६ ॥

ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च । शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥ २७ ॥

इति भीष्मपर्वणि भगवद्गीतापर्वणि श्रीकृष्णार्जुनसंवादे गुणत्रयविभागयोगो नाम अष्टाविंशोऽध्यायः ॥ ३८ ॥

---

भगवानुवाच । ऊर्द्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् । छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ १ ॥ अधश्चोर्द्ध्वं प्रसृतास्तस्य शाखा गुणप्रवृद्धा विषयप्रवालाः । अधश्च मूलान्यनुसन्ततानि कर्म्मानुबन्धीनि मनुष्यलोके ॥ २ ॥ न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न्न च सम्प्रतिष्ठा । अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्त्वा ॥ ३ ॥ ततः पदं तत् परिमार्गितव्यं यस्मिन् गता न निवर्त्तन्ति भूयः । तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४ ॥ निर्मानमोहा जितसङ्गदोषा अध्यात्मनित्या विनिवृत्तकामाः । द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैर्गच्छन्त्यमूढाः पदमव्ययन्तत् ॥ ५ ॥ न तत् भासयते सूर्य्यो न शशाङ्को न पावकः । यत् गत्वा न निवर्त्तन्ते तद्धाम परमं मम ॥ ६ ॥ ममैवांशो जीवलोके जीवभूतः सनातनः । मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ७ ॥ शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः । गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ ८ ॥ श्रोत्रं चक्षुः स्पर्शनञ्च रसनं घ्राणमेव च । अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥ उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितम् । विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥ १० ॥ यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् । यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥ ११ ॥ यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ

तत्तेजो विद्धि मामकम्॥ १२॥ गामाविश्य च भूतानि धारया
म्यहमोजसा। पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः
॥ १३॥ अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः। प्राणा-
पानसमायुक्तः पचाम्यन्नं चतुर्विधम्॥ १४॥ सर्वस्य चाहं हृदि
सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनञ्च। वेदैश्च सर्वैरहमेव वेद्यो
वेदान्तकृद्वेदविदेव चाहम्॥ १५॥ द्वाविमौ पुरुषौ लोके क्षरश्
चाक्षर एव च। क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते
॥ १६॥ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोक-
त्रयमाविश्य बिभर्त्त्यव्यय ईश्वरः॥ १७॥ यस्मात् क्षरमतीतो-
ऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषो-
त्तमः॥ १८॥ यो मामेवमसम्मूढो जानाति पुरुषोत्तमम्। स
सर्ववित् भजति मां सर्वभावेन भारत॥ १९॥ इति गुह्यतमं
शास्त्रमिदमुक्तं मयानघ। एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च
भारत॥ २०॥

इति भीष्मपर्वणि भगवद्गीतापर्वणि श्रीकृष्णार्जुनसंवादे
पुरुषोत्तमयोगो नाम एकोनचत्वारिंशोऽध्यायः॥ ३९॥

---

भगवानुवाच। अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्ज्जवम्॥ १॥ अहिंसा सत्य
मक्रोधस्त्यागः शान्तिरपैशुनम्। दया भूतेष्वलोलुप्त्वं मार्दवं
ह्रीरचापलम्॥ २॥ तेजः क्षमा धृतिः शौचमद्रोहो नाति
मानिता। भवन्ति सम्पदं दैवीमभिजातस्य भारत॥ ३॥ दम्भो
दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च। अज्ञानञ्चाभिजातस्य पार्थ
सम्पदमासुरीम्॥ ४॥ दैवी सम्पद्विमोक्षाय निबन्धायासुरी
मता। मा शुचः सम्पदं दैवीमभिजातोऽसि पाण्डव॥ ५॥ द्वौ

भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च। दैवो विस्तरशः प्रोक्त
आसुरं पार्थ मे शृणु ॥ ६ ॥ प्रवृत्तिञ्च निवृत्तिञ्च जना न विदु-
रासुराः। न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥ ७ ॥
असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम्। अपरस्परसंभूतं किमन्यत्
कामहैतुकम् ॥ ८ ॥ एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः।
प्रभवन्त्युग्रकर्म्माणः क्षयाय जगतोऽहिताः ॥ ९ ॥ काममाश्रित्य
दुष्पूरं दम्भमानमदान्विताः। मोहाद्गृहीत्वासद्ग्राहान् प्रवर्त्तन्ते-
ऽशुचिव्रताः ॥ १० ॥ चिन्तामपरिमेयाञ्च प्रलयान्तामुपाश्रिताः।
कामोपभोगपरमा एतावदिति निश्चिताः ॥ ११ ॥ आशापाशशतै-
र्बद्धाः कामक्रोधपरायणाः। ईहन्ते कामभोगार्थमन्यायेनार्थ-
सञ्चयान् ॥ १२ ॥ इदमद्य मया लब्धमिदं प्राप्स्ये मनोरथम्।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ १३ ॥ असौ मया हतः
शत्रुर्हनिष्ये चापरानपि। ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्
सुखी ॥ १४ ॥ आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥ १५ ॥ अनेक-
चित्तविभ्रान्ता मोहजालसमावृताः। प्रसक्ताः कामभोगेषु पतन्ति
नरकेऽशुचौ ॥ १६ ॥ आत्मसम्भाविताः स्तब्धा धनमानमदा-
न्विताः। यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥ १७ ॥ अह-
ङ्कारं बलं दर्पं कामं क्रोधञ्च संश्रिताः। मामात्मपरदेहेषु प्रद्वि-
षन्तोऽभ्यसूयकाः ॥ १८ ॥ तानहं द्विषतः क्रूरान् संसारेषु नरा-
धमान्। क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १९ ॥ आसुरीं
योनिमापन्ना मूढा जन्मनि जन्मनि। मामप्राप्यैव कौन्तेय ततो
यान्त्यधमां गतिम् ॥ २० ॥ त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ २१ ॥ एतैर्विमुक्तः
कौन्तेय तमोद्वारैस्त्रिभिर्नरः। आचरत्यात्मनः श्रेयस्ततो याति
परां गतिम् ॥ २२ ॥ यः शास्त्रविधिमुत्सृज्य वर्त्तते कामकारतः।

न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ २३ ॥ तस्मात्
शास्त्रं प्रमाणन्ते कार्य्याकार्य्यव्यवस्थितौ। ज्ञात्वा शास्त्रविधानोक्तं
कर्म कर्त्तुमिहार्हसि ॥ २४ ॥

इति भीष्मपर्व्वणि भगवद्गीतापर्व्वणि श्रीकृष्णार्जुनसंवादे
दैवासुरसम्पद्विभागयोगो नाम चत्वारिंशोऽध्यायः ॥ ४० ॥

---

अर्जुन उवाच। ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः।
तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥ १ ॥
भगवानुवाच। त्रिविधा भवति श्रद्धा देहिनां सा स्वभा-
वजा। सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥ २ ॥
सत्त्वानुरूपा सर्व्वस्य श्रद्धा भवति भारत। श्रद्धामयोऽयं पुरुषो
यो यच्छ्रद्धः स एव सः ॥ ३ ॥ यजन्ते सात्त्विका देवान् यक्ष-
रक्षांसि राजसाः। प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः
॥ ४ ॥ अशास्त्रविहितं घोरं तप्यन्ते ये तपोधनाः। दम्भा-
हङ्कारसंयुक्ताः कामरागबलान्विताः ॥ ५ ॥ कर्षयन्तः शरीरस्थं
भूतग्राममचेतसः। माञ्चैवान्तःशरीरस्थं तान् विद्ध्यासुरनिश्च-
यान् ॥ ६ ॥ आहारस्त्वपि सर्व्वस्य त्रिविधो भवति प्रियः। यज्ञ-
स्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७ ॥ आयुःसत्त्वबला-
रोग्यसुखप्रीतिविवर्द्धनाः। रस्याः स्निग्धाः स्थिरा हृद्या आहाराः
सात्त्विकप्रियाः ॥ ८ ॥ कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥ ९ ॥ यातयामं
गतरसं पूतिपर्य्युषितञ्च यत्। उच्छिष्टमपि चामेध्यं भोजनं
तामसप्रियम् ॥ १० ॥ अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते।
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥ ११ ॥ अभिसन्धाय
तु फलं दम्भार्थमपि चैव यत्। इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि

राजसम् ॥ १२ ॥ विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३ ॥ देवद्विजगुरु-
प्राज्ञपूजनं शौचमार्ज्जवम् । ब्रह्मचर्य्यमहिंसा च शारीरं तप
उच्यते ॥ १४ ॥ अनुद्वेगकरं वाक्यं सत्यं प्रियहितञ्च यत् ।
स्वाध्यायाभ्यसनञ्चैव वाङ्मयं तप उच्यते ॥ १५ ॥ मनःप्रसादः
सौम्यत्वं मौनमात्मविनिग्रहः । भावसंशुद्धिरित्येतत्तपो मानस-
मुच्यते ॥ १६ ॥ श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः ।
अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥ १७ ॥ सत्कारमान-
पूजार्थं तपो दम्भेन चैव यत् । क्रियते तदिह प्रोक्तं राजसं चल-
मध्रुवम् ॥ १८ ॥ मूढग्राहेणात्मनो यत् पीडया क्रियते तपः ।
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥ १९ ॥ दातव्यमिति
यद्दानं दीयतेऽनुपकारिणे । देशे काले च पात्रे च तद्दानं
सात्त्विकं स्मृतम् ॥२०॥ यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥ २१ ॥ अदेशकाले
यद्दानमपात्रेभ्यश्च दीयते । असत्कृतमवज्ञातं तत्तामसमुदाहृतम्
॥ २२ ॥ ओंतत्सदिति निर्द्देशो ब्रह्मणस्त्रिविधः स्मृतः । ब्राह्मणा-
स्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ २३ ॥ तस्मादोमित्युदाहृत्य
यज्ञदानतपःक्रियाः । प्रवर्त्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम्
॥ २४ ॥ तदित्यनभिसन्धाय फलं यज्ञतपःक्रियाः । दानक्रियाश्च
विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥२५॥ सद्भावे साधुभावे च सदि-
त्येतत् प्रयुज्यते । प्रशस्ते कर्म्मणि तथा सच्छब्दः पार्थ युज्यते
॥ २६ ॥ यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते । कर्म्म चैव
तदर्थीयं सदित्येवाभिधीयते ॥ २७ ॥ अश्रद्धया हुतं दत्तं तपस्तप्तं
कृतञ्च यत् । असदित्युच्यते पार्थ न च तत् प्रेत्य नो इह ॥ २८ ॥

इति भीष्मपर्व्वणि भगवद्गीतापर्व्वणि श्रीकृष्णार्जुनसंवादे
श्रद्धात्रयविभागयोगो नाम एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

अर्ज्जुन उवाच। सन्न्यासस्य महाबाहो तत्त्वमिच्छामि वेदि-
तुम्। त्यागस्य च हृषीकेश पृथक् केशिनिषूदन॥ १॥
भगवानुवाच। काम्यानां कर्मणां न्यासं सन्न्यासं कवयो
विदुः। सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः॥ २॥ त्याज्यं
दोषवदित्येके कर्म प्राहुर्मनीषिणः। यज्ञदानतपःकर्म न त्याज्य-
मिति चापरे॥ ३॥ निश्चयं शृणु मे तत्र त्यागे भरतसत्तम।
त्यागो हि पुरुषव्याघ्र त्रिविधः सम्प्रकीर्त्तितः॥ ४॥ यज्ञदान-
तपःकर्म न त्याज्यं कार्य्यमेव तत्। यज्ञो दानं तपश्चैव पावनानि
मनीषिणाम्॥ ५॥ एतान्यपि तु कर्म्माणि सङ्गं त्यक्त्वा फलानि
च। कर्त्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम्॥ ६॥ नियतस्य
तु सन्न्यासः कर्मणो नोपपद्यते। मोहात्तस्य परित्यागस्तामसः
परिकीर्त्तितः॥ ७॥ दुःखमित्येव यत् कर्म कायक्लेशभयात्त्यजेत्।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत्॥ ८॥ कार्य्यमित्येव
यत् कर्म नियतं क्रियतेऽर्ज्जुन। सङ्गं त्यक्त्वा फलञ्चैव स त्यागः
सात्त्विको मतः॥ ९॥ न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते।
त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः॥ १०॥ न हि देह-
भृता शक्यं त्यक्तुं कर्म्माण्यशेषतः। यस्तु कर्मफलत्यागी स त्यागी-
त्यभिधीयते॥ ११॥ अनिष्टमिष्टं मिश्रञ्च त्रिविधं कर्मणः फलम्।
भवत्यत्यागिनां प्रेत्य न तु सन्न्यासिनां क्वचित्॥ १२॥ पञ्चै-
तानि महाबाहो कारणानि निबोध मे। सांख्ये कृतान्ते
प्रोक्तानि सिद्धये सर्वकर्मणाम्॥ १३॥ अधिष्ठानं तथा कर्त्ता
करणञ्च पृथग्विधम्। विविधाश्च पृथक् चेष्टा दैवञ्चैवात्र पञ्चमम्
॥ १४॥ शरीरवाङ्मनोभिर्यत् कर्म प्रारभते नरः। न्याय्यं वा
विपरीतं वा पञ्चैते तस्य हेतवः॥ १५॥ तत्रैव सति कर्त्तार-
मात्मानं केवलन्तु यः। पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः
॥ १६॥ यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते। हत्वापि

स इमाल्लोकान्न हन्ति न निबध्यते ॥ १७ ॥ ज्ञानं ज्ञेयं परि-
ज्ञाता त्रिविधा कर्मचोदना । करणं कर्म कर्त्तेति त्रिविधः कर्म-
संग्रहः ॥ १८ ॥ ज्ञानं कर्म च कर्त्ता च त्रिधैव गुणभेदतः ।
प्रोच्यते गुणसङ्ख्याने यथावत् शृणु तान्यपि ॥ १९ ॥ सर्वभूतेषु
येनैकं भावमव्ययमीक्षते । अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि
सात्त्विकम् ॥ २० ॥ पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथ-
ग्विधान् । वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥ २१ ॥
यत्तु कृत्स्नवदेकस्मिन् कार्य्ये सक्तमहैतुकम् । अतत्त्वार्थवदल्पञ्च
तत्तामसमुदाहृतम् ॥ २२ ॥ नियतं सङ्गरहितमरागद्वेषतः कृतम् ।
अफलप्रेप्सुना कर्म यत्तत् सात्त्विकमुच्यते ॥ २३ ॥ यत्तु कामेप्-
सुना कर्म साहङ्कारेण वा पुनः । क्रियते बहुलायासं तद्राजस-
मुदाहृतम् ॥ २४ ॥ अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम् ।
मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥ २५ ॥ मुक्तसङ्गोऽनहं-
वादी धृत्युत्साहसमन्वितः । सिद्ध्यसिद्ध्योर्निर्विकारः कर्त्ता सात्त्विक
उच्यते ॥ २६ ॥ रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।
हर्षशोकान्वितः कर्त्ता राजसः परिकीर्त्तितः ॥ २७ ॥ अयुक्तः
प्राकृतः स्तब्धः शठो नैकृतिकोऽलसः । विषादी दीर्घसूत्री च
कर्त्ता तामस उच्यते ॥ २८ ॥ बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं
शृणु । प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय ॥ २९ ॥ प्रवृत्तिञ्च
निवृत्तिञ्च कार्य्याकार्य्ये भयाभये । बन्धं मोक्षञ्च या वेत्ति बुद्धिः
सा पार्थ सात्त्विकी ॥ ३० ॥ यया धर्म्ममधर्म्मञ्च कार्य्यञ्चाकार्य्यमेव
च । अयथावत् प्रजानाति बुद्धिः सा पार्थ राजसी ॥ ३१ ॥
अधर्म्मं धर्म्ममिति या मन्यते तमसावृता । सर्व्वार्थान् विपरीतांश्च
बुद्धिः सा पार्थ तामसी ॥ ३२ ॥ धृत्या यया धारयते मनः-
प्राणेन्द्रियक्रियाः । योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी
॥ ३३ ॥ यया तु धर्म्मकामार्थान् धृत्या धारयतेऽर्ज्जुन । प्रसङ्गेन

फलाकाङ्क्षी धृतिः सा पार्थ राजसी ॥ ३४ ॥ यया स्वप्नं भयं शोकं विषादं मदमेव च। न विमुञ्चति दुर्मेधा धृतिः सा पार्थ तामसी ॥ ३५ ॥ सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ। अभ्यासाद्रमते यत्र दुःखान्तञ्च निगच्छति ॥ ३६ ॥ यत्तदग्रे विषमिव परिणामेऽमृतोपमम्। तत् सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥ ३७ ॥ विषयेन्द्रियसंयोगात् यत्तदग्रेऽमृतोपमम्। परिणामे विषमिव तत् सुखं राजसं स्मृतम् ॥ ३८ ॥ यदग्रे चानुबन्धे च सुखं मोहनमात्मनः। निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥ ३९ ॥ न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः। सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात् त्रिभिर्गुणैः ॥ ४० ॥ ब्राह्मणक्षत्रियविशां शूद्राणाञ्च परन्तप। कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ ४१ ॥ शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च। ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥ ४२ ॥ शौर्य्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्। दानमीश्वरभावश्च क्षात्रकर्म स्वभावजम् ॥ ४३ ॥ कृषिगोरक्षवाणिज्यं वैश्यकर्म स्वभावजम्। परिचर्य्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥४४॥ स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः। स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥ ४५ ॥ यतः प्रवृत्तिर्भूतानां येन सर्वमिदन्ततम्। स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥४६॥ श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात्। स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ ४६ ॥ सहजं कर्म कौन्तेय सदोषमपि न त्यजेत्। सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ॥ ४७ ॥ असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः। नैष्कर्म्यसिद्धिं परमां सन्न्यासेनाधिगच्छति ॥ ४८ ॥ सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे। समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ॥ ४९ ॥ बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च।

शब्दादीन् विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ ५० ॥ विविक्त-
सेवी लघ्वाशी यतवाक्कायमानसः । ध्यानयोगपरो नित्यं वैराग्य-
समुपाश्रितः ॥ ५१ ॥ अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥ ५२ ॥ ब्रह्मभूतः
प्रसन्नात्मा न शोचति न काङ्क्षति । समः सर्व्वेषु भूतेषु मद्भक्तिं
लभते पराम् ॥ ५३ ॥ भक्त्या मामभिजानाति यावान् यश्चास्मि
तत्त्वतः । ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥ ५४ ॥
सर्व्वकर्म्माण्यपि सदा कुर्व्वाणो मद्व्यपाश्रयः । मत्प्रसादादवा-
प्नोति शाश्वतं पदमव्ययम् ॥ ५५ ॥ चेतसा सर्व्वकर्म्माणि मयि
सन्न्यस्य मत्परः । बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥५६॥
मच्चित्तः सर्व्वदुर्गाणि मत्प्रसादात्तरिष्यसि । अथ चेत्त्वमहङ्कारान्न
श्रोष्यसि विनङ्क्ष्यसि ॥ ५७ ॥ यदहङ्कारमाश्रित्य न योत्स्य इति
मन्यसे । मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥ ५८ ॥
स्वभावजेन कौन्तेय निबद्धः स्वेन कर्म्मणा । कर्त्तुं नेच्छसि
यन्मोहात्करिष्यस्यवशोऽपि तत् ॥ ५९ ॥ ईश्वरः सर्व्वभूतानां
हृद्देशेऽर्ज्जुन तिष्ठति । भ्रामयन् सर्व्वभूतानि यन्त्रारूढानि मायया
॥ ६० ॥ तमेव शरणं गच्छ सर्व्वभावेन भारत । तत्प्रसादात्
परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥ ६१ ॥ इति ते ज्ञान-
माख्यातं गुह्यात् गुह्यतरं मया । विमृश्यैतदशेषेण यथेच्छसि
तथा कुरु ॥ ६२ ॥ सर्व्वगुह्यतमं भूयः शृणु मे परमं वचः ।
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥ ६३ ॥ मन्मना
भव मद्भक्तो मद्याजी मां नमस्कुरु । मामेवैष्यसि सत्यन्ते प्रतिजाने
प्रियोऽसि मे ॥ ६४ ॥ सर्व्वधर्म्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्व्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ६५ ॥ इदन्ते
नातपस्काय नाभक्ताय कदाचन । न चाशुश्रूषवे वाच्यं न च मां
योऽभ्यसूयति ॥ ६६ ॥ य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।

भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ ६७ ॥ न च तस्मात्
मनुष्येषु कश्चिन्मे प्रियकृत्तमः । भविता न च मे तस्मादन्यः प्रिय
तमो भुवि ॥ ६८ ॥ अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥ ६९ ॥ श्रद्धावान-
नसूयश्च शृणुयादपि यो नरः । सोऽपि मुक्तः शुभाँल्लोकान्
प्राप्नुयात् पुण्यकर्मणाम् ॥ ७० ॥ कच्चिदेतच्छ्रुतं पार्थ त्वयैका-
ग्रेण चेतसा । कच्चिदज्ञानसम्मोहः प्रनष्टस्ते धनञ्जय ॥ ७१ ॥
अर्जुन उवाच । नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादात्
मयाच्युत । स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ॥ ७२ ॥
सञ्जय उवाच । इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।
संवादमिममश्रौषमद्भुतं लोमहर्षणम् ॥ ७३ ॥ व्यासप्रसादात्
श्रुतवानेतद् गुह्यतमं परम् । योगं योगेश्वरात् कृष्णात् साक्षात्
कथयतः स्वयम् ॥ ७४ ॥ राजन् संस्मृत्य संस्मृत्य संवादमिम
मद्भुतम् । केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥ ७५ ॥
तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः । विस्मयो मे महाराज
हृष्यामि च पुनः पुनः ॥ ७६ ॥ यत्र योगेश्वरः कृष्णो यत्र पार्थो
धनुर्धरः । तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ७७ ॥

इति भीष्मपर्वणि भगवद्गीतापर्वणि श्रीकृष्णार्जुनसंवादे
संन्यासयोगो नाम द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥
समाप्तञ्च भगवद्गीतापर्व ॥

---

अथ भीष्मवधपर्व ॥

सञ्जय उवाच । ततो धनञ्जयं दृष्ट्वा बाणगाण्डीवधारि
णम् । पुनरेव महानादं व्यसृजन्त महारथाः ॥ १ ॥ पाण्डवाः
सृञ्जयाश्चैव ये चैषामनुयायिनः । दध्मुः समुदिताः शङ्खान् वीराः

सागरसम्भवान् ॥ २ ॥ तथा मेध्येश्च पेसश्च क्रकचा गोविषाणिका । सन्वैवाभ्यहन्यन्त च भव्दस्तुमुलोऽभवत ॥ ३ ॥ अथ देवा सगन्धर्वा पितरश्च जनेश्वर । सिडचारणसङ्घाश्च समीयुस्ते दिदृचया ॥ ४ ॥ ऋषयश्च महाभागा पुरस्कृत्य शतक्रतुम । समीयुस्तत्र सहिता द्रष्टुं तहै मस महत् ॥ ५ ॥ ततो युधिष्ठिरो दृष्ट्वा युद्धाय ससुद्यमे । ते सेने सागरप्रख्ये मुहुः प्रचलिते नृप ॥ ६ ॥ विमुच्य कवच वीरो निक्षिप्य च वरायुधम । अवरुह्य रथात्तूर्णं पद्भ्यामेव कृताञ्जलि ॥७॥ पितामहमभिप्रेच्य धर्मराजो युधिष्ठिर । वाग्यत प्रययौ येन प्राङ्मुखो रिपुवाहिनीम् ॥८॥ तं प्रयान्तमभिप्रेच्य कुन्तिपुत्रो धनञ्जय । अवतीर्य्य रथात्तूर्णं भ्रातृभि सहितोऽन्वगात ॥९॥ वासुदेवश्च त राजन् पृष्ठतोऽनुजगाम ह । यथामुख्याश्च राजानस्तमन्वाजग्मु रुत्सुका ॥ १० ॥

अर्ज्जुन उवाच । किन्ते व्यवसित राजन् यदस्मानपहाय वै । पद्भ्यामेव प्रयातोऽसि प्राङ्मुखो रिपुवाहिनीम ॥ ११ ॥

भीमसेन उवाच । क्व गमिष्यसि राजेन्द्र निक्षिप्तकवचायुध । दंशितेष्वरिसैन्येषु भ्रातृनुत्सृज्य पार्थिव ॥ १२ ॥

नकुल उवाच । एव गते त्वयि ज्येष्ठे मम भ्रातरि भारत । भीम दुनोति हृदयं ब्रूहि गन्ता भवान् क्व नु ॥ १३ ॥

सहदेव उवाच । अस्मिन् रणसमूहे वै वर्त्तमाने महाभये । योद्धव्ये क्व नु गन्तासि शत्रूनभिमुखो नृप ॥ १४ ॥

सञ्जय उवाच । एवमाभाष्यमाणोऽपि भ्रातृभि कुरुनन्दन । नोवाच वाग्यत किञ्चित् गच्छत्येव युधिष्ठिर ॥ १५ ॥ तानुवाच महाप्राज्ञो वासुदेवो महामना । अभिप्रायोऽस्य विज्ञातो मयेति प्रहसन्निव ॥ १६ ॥ एष भीष्म तथा द्रोण गौतम शल्यमेव च । अनुमान्य गुरून् सर्वान् योत्स्यते सह शत्रुभि ॥ १७ ॥ श्रूयते हि पुरा कल्पे गुरुनहत्वा न् सवान्धवान् । अनुमान्य यथा

शास्त्रं यस्तु युध्येत् महत्तरैः ॥ १८ ॥ ध्रुवस्तस्य जयो युद्धे भवेदिति मतिर्मम । एवं ब्रवति कृष्णे तु धार्त्तराष्ट्रचमूं प्रति ॥ १९ ॥ हाहाकारो महानासीत् निःशब्दास्त्वपरेऽभवन् । दृष्ट्वा युधिष्ठिरं वीरा धार्त्तराष्ट्रस्य सैनिकाः ॥ २० ॥ मिथः सञ्जयन्याद्धकुरैषो हि कुलपांसनः । व्यक्तं भीत इवाभ्येति राजासौ भीष्मसन्निकात् ॥ २१ ॥ युधिष्ठिरः ससोदर्य्यः शरणार्थं प्रयाचक । धनञ्जये कथं नाथे पाण्डुपुत्रे वृकोदरे ॥ २२ ॥ नकुले सहदेवे च भीतोऽभ्येति च पाण्डवः । न नूनं क्षत्रियकुले जातोऽयं प्रथितो भुवि ॥ २३ ॥ यथास्य हृदयं भीतमल्पसत्त्वस्य संयुगे । ततस्ते सैनिकाः सर्वे प्रशंसन्ति स्म कौरवान् ॥ २४ ॥ हृष्टाः सुमनसो भूत्वा चैलानि दुधुवुः पृथक् । व्यनिन्दन्त ततः सर्वे योधास्तत्र विशाम्पते ॥ २५ ॥ युधिष्ठिरं ससोदर्य्यं सहितं केशवेन तु । ततस्तत् कौरवं सैन्यं धिक्कृत्वा तु युधिष्ठिरम् ॥ २६ ॥ निःशब्दमभवत् तूर्णं पुनरेव विशाम्पते । किं नु वक्ष्यति राजासौ किं भीष्मः प्रतिवक्ष्यति ॥ २७ ॥ किं भीमः समरश्लाघी किं नु कृष्णार्जुनाविति । विवक्षितं किमस्येति संशयः सुमहानभूत् ॥ २८ ॥ उभयोः सेनयो राजन् युधिष्ठिरकृते तदा । सोऽवगाह्य चमूं शत्रोः शरशक्तिसमाकुलाम् ॥ २९ ॥ भीष्ममेवाभ्ययात् तूर्णं भ्रातृभिः परिवारितः । तमुवाच ततः पादौ कराभ्यां पीड्य पाण्डवः । भीष्मं शान्तनवं राजा युद्धाय समुपस्थितम् ॥ ३० ॥

युधिष्ठिर उवाच । आमन्त्रये त्वां दुर्द्धर्ष त्वया योत्स्यामहे सह । अनुजानीहि मां तात आशिषश्चैव योजय ॥ ३१ ॥

भीष्म उवाच । यद्येवं नाभिगच्छेथा युधि मां पृथिवीपते । शपेयं त्वां महाराज पराभवाय भारत ॥ ३२ ॥ प्रीतोऽस्मि पुत्र युध्यस्व जयं प्राप्नुहि पाण्डव । यत्तेऽभिलषितं चान्यत् तदवाप्नुहि संयुगे ॥ ३३ ॥ व्रियताञ्च वरः पार्थ किमस्मत्तोऽभिकाङ्क्षसि ।

एवं गते महाराज न तवास्ति पराजय ॥ ३४ ॥ अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित । इति सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवै ॥ ३५ ॥ अतस्त्वा क्लीववद्वाक्य ब्रवीमि कुरुनन्दन । बद्धोऽस्म्यर्थेन कौरव्येर्युद्धादन्यत् किमिच्छसि ॥ ३६ ॥

युधिष्ठिर उवाच । मन्त्रयस्व महाप्राज्ञ हितार्थी मम नित्यश । युध्यस्व कौरवस्यार्थे ममैष सतत वर ॥ ३७ ॥

भीष्म उवाच । राजन् किमत्र सह्यन्ते करोमि कुरुनन्दन । काम योत्स्ये परस्यार्थे ब्रूहि यत्ते विवक्षितम ॥ ३८ ॥

युधिष्ठिर उवाच । तस्मात पृच्छाम्यह तात पितामह नमोऽस्तु ते । कथ जयेय सग्रामे भवन्तमपराजितम । एतन्मे मन्त्रय हित यदि श्रेय प्रपश्यसि ॥ ३९ ॥

भीष्म उवाच । न त पश्यामि कौन्तेय यो मा युध्यन्तमाहवे । विजयेत पुमान् कश्चिदपि साक्षात शतक्रतु ॥ ४० ॥

युधिष्ठिर उवाच । हन्त पृच्छामि तस्मात्त्वा पितामह नमोऽस्तु ते । वधोपाय ब्रवीहि त्वमात्मन समरे परै ॥४१।

भीष्म उवाच । न स्म त तात पश्यामि समरे यो जयेत माम । न तावत मृत्युकालो मे पुनरागमन कुरु ॥ ४२ ॥

सञ्जय उवाच । ततो युधिष्ठिरो वाक्य भीष्मस्य कुरुनन्दन । शिरसा प्रतिजग्राह भूयस्तमभिवाद्य च ॥ ४३ ॥ प्रागात पुन र्महाबाहुराचार्य्यस्य रथ प्रति । पश्यता सर्वसैन्याना मध्येन भ्रातृभि सह ॥ ४४ ॥ स द्रोणमभिवाद्याथ कृत्वा चैव प्रदक्षिणम् । उवाच वाचा दुर्द्धर्षमाचार्य्य श्रेयसे वच ॥ ४५ ॥ आमन्त्रये त्वा दुर्द्धर्ष योत्स्येऽ विगतकल्मष । कथ जयेे रिपून् सर्वाननुज्ञातस्त्वया द्विज ॥ ४६ ॥

द्रोण उवाच । यदि मा नाधिगच्छेथा युद्धाय कृतनिश्चय । शपेय त्वा महाराज पराभावाय सर्वश ॥ ४७ ॥ तत युधिष्ठिर

तुष्टोऽस्मि पूजितश्च त्वयानघ । अनुजानामि युध्यस्व विजयं सम-
वाप्नुहि ॥ ४८ ॥ करवाणि च ते कामं ब्रूहि यत्ते विवक्षितम् ।
एवं गते महाराज युद्धादन्यत् किमिच्छसि ॥ ४९ ॥ अर्थस्य
पुरुषो दासो दासस्त्वर्थो न कस्यचित । इति सत्यं महाराज
बद्धोऽस्म्यर्थेन कौरवैः ॥ ५० ॥ अतस्त्वां क्लीववत् ब्रूयां युद्धा-
दन्यत् किमिच्छसि । योत्स्यामि कौरवस्यार्थे तवाशास्यो जयो
मम ॥ ५१ ॥

युधिष्ठिर उवाच । जयमाशास्व मे ब्रह्मन् मन्त्रयस्व च मद्धि-
तम् । युध्यस्व कौरवस्यार्थे वर एष वृतो मया ॥ ५२ ॥

द्रोण उवाच । ध्रुवस्ते विजयो राजन् यस्य मन्त्री हरि-
स्तव । अहं त्वामभिजानामि रणे शत्रून् विजेष्यसि ॥ ५३ ॥ यतो
धर्मस्तत कृष्णो यत कृष्णस्ततो जय । युध्यस्व गच्छ कौन्तेय
पृच्छ मां किं ब्रवीमि ते ॥ ५४ ॥

युधिष्ठिर उवाच । पृच्छामि त्वा द्विजश्रेष्ठ शृणु मे यद्विव-
क्षितम् । कथं जयेयं संग्रामे भवन्तमपराजितम् ॥ ५५ ॥

द्रोण उवाच । न तेऽस्ति विजयस्तावत् यावत् युध्याम्यहं
रणे । ममाशु निधने राजन् यतस्व सह सोदरैः ॥ ५६ ॥

युधिष्ठिर उवाच । हन्त तस्मात् महाबाहो वधोपाय वदा-
त्मनः । आचार्य्य प्रणिपत्यैष पृच्छामि त्वां नमोऽस्तु ते ॥ ५७ ॥

द्रोण उवाच । न शत्रुं तात पश्यामि यो मां हन्याद्रणे
स्थितम् । युध्यमानं सुसंरब्धं शरवर्षौघवर्षिणम् ॥ ५८ ॥ ऋते
प्रायगतं राजन् न्यस्तशस्त्रमचेतनम् । हन्यान्मां युधि यो वीर
सत्यमेतत् ब्रवीमि ते ॥ ५९ ॥ शस्त्रञ्चाहं रणे जह्यां श्रुत्वा सुमह-
दप्रियम् । श्रद्धेयवाक्यात् पुरुषात् सत्यमेतत् ब्रवीमि ते ॥६०॥

सञ्जय उवाच । एतत् श्रुत्वा महाराज भारद्वाजस्य धीमतः ।
अनुमान्य तमाचार्य्यं प्रायाच्छारद्वतं प्रति ॥ ६१ ॥ सोऽभिवाद्य

कृपं राजन् कृत्वा चाभिप्रदक्षिणम् । उवाच दुर्द्धर्षतरं वाक्यं वाक्यविशारदः ॥ ६२ ॥ अनुमानयित्वा योत्स्येऽहं गुरो विगत-कल्मषः । जयेयञ्च रिपून् सर्वाननुज्ञातस्त्वयानघ ॥ ६३ ॥

कृप उवाच । यदि मां नाभिगच्छेथा युद्धाय कृतनिश्चयः । शपेयं त्वां महाराज पराभावाय सर्वशः ॥ ६४ ॥ अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् । इति सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवैः ॥ ६५ ॥ तेषामर्थे महाराज योद्धव्यमिति मे मतिः । ब्रवीम्यतः क्लीववत्त्वां युद्धादन्यत् किमिच्छसि ॥ ६६ ॥

युधिष्ठिर उवाच । हन्त पृच्छामि ते तस्मादाचार्य्य शृणु मे वचः । इत्युक्त्वा व्यथितो राजा नोवाच गतचेतनः ॥ ६७ ॥

सञ्जय उवाच । तं गौतमः प्रत्युवाच विज्ञायास्य विवक्षितम् । अवध्योऽहं महाराज युध्यस्व जयमाप्नुहि ॥ ६८ ॥ प्रीतस्तेऽभिगमेनाहं जयन्तव नराधिप । आशासिष्ये सदोत्थाय सत्यमेतत् ब्रवीमि ते ॥ ६९ ॥ एतत् श्रुत्वा महाराज गौतमस्य वचस्तदा । अनुमान्य कृपं राजा प्रययौ येन मद्रराट् ॥ ७० ॥ स शल्यमभिवाद्याथ कृत्वा चाभिप्रदक्षिणम् । उवाच राजा दुर्द्धर्षमात्मनि श्रेयसं वचः ॥ ७१ ॥ अनुमानये त्वां दुर्द्धर्ष योत्स्येऽ विगत-कल्मषः । जयेयञ्च परान् राजन् अनुज्ञातस्त्वया रिपून् ॥ ७२ ॥

शल्य उवाच । यदि मां नाभिगच्छेथा युद्धाय कृतनिश्चयः । शपेयं त्वा महाराज पराभावाय वै रणे ॥ ७३ ॥ तुष्टोऽस्मि पूजितश्चास्मि यत् काङ्क्षसि तदस्तु ते । अनुजानामि चैव त्वां युध्यस्व जयमाप्नुहि ॥ ७४ ॥ ब्रूहि चैव वचनं वीर केनार्थः किं ददामि ते । एवं गते महाराज युद्धादन्यत किमिच्छसि ॥ ७५ ॥ अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् । इति सत्यं वचो राजन् बद्धोऽस्म्यर्थेन कौरवैः ॥७६॥ करिष्यामि हि ते कामं भागिनेय यथेप्सितम् । ब्रवीम्यतः क्लीववत्त्वां युद्धादन्यत किमिच्छसि ॥ ७७ ॥

युधिष्ठिर उवाच। मन्त्रयस्व महाराज नित्यं मद्धितमुत्तमम्। कामं युध्य परस्यार्थे वरमेतं वृणोम्यहम् ॥ ७८ ॥

शल्य उवाच। किमत्र ब्रूहि साह्यन्ते करोमि नृपसत्तम। कामं योत्स्ये परस्यार्थे वृतोऽस्म्यर्थेन कौरवैः ॥ ७९ ॥

युधिष्ठिर उवाच। स एव मे वरः शल्य उद्योगे यस्त्वया कृतः। सूतपुत्रस्य संग्रामे कार्यस्तेजोवधस्त्वया ॥ ८० ॥

शल्य उवाच। सम्पत्स्यत्येष ते कामः कुन्तीपुत्र युधिष्ठिर। यथेप्सितं गच्छ युध्य प्रतिजाने जयं तव ॥ ८१ ॥

सञ्जय उवाच। अनुमान्याथ कौन्तेयो मातुलं मद्रकेश्वरम्। निर्जगाम महासैन्यात् भ्रातृभिः परिवारितः ॥ ८२ ॥ वासुदेवश्च राधेयमाहवेऽभिजगाम ह। तत एनमुवाचेदं पाण्डवार्थे गदाग्रजः ॥ ८३ ॥ श्रुतं मे कर्ण भीष्मस्य द्वेषात् किल न योत्स्यसि। अस्मान् वरय राधेय यावत् भीष्मो न हन्यते ॥ ८४ ॥ हते तु भीष्मे राधेय पुनरेष्यसि संयुगम्। धार्त्तराष्ट्रस्य साहाय्यं यदि पश्यसि चेत् समम् ॥ ८५ ॥

कर्ण उवाच। न विप्रियं करिष्यामि धार्त्तराष्ट्रस्य केशव। त्यक्तप्राणं हि मां विद्धि दुर्योधनहितैषिणम् ॥ ८६ ॥ तत् श्रुत्वा वचनं कृष्णः संन्यवर्त्तत भारत। युधिष्ठिरपुरोधाय पाण्डवैः सह सङ्गतः ॥ ८७ ॥ अथ सैन्यस्य मध्ये तु प्राक्रोशत् पाण्डवाग्रजः। योऽस्मान् वृणोति तमहं वरये साह्यकारणात् ॥ ८८ ॥ अथ तान् समभिप्रेक्ष्य युयुत्सुरिदमब्रवीत्। प्रीतात्मा धर्मराजानं कुन्तीपुत्रं युधिष्ठिरम् ॥ ८९ ॥ अहं योत्स्यामि भवतः संयुगे धार्त्तराष्ट्रजान्। युष्मदर्थे महाराज यदि मां वृणुषेऽनघ ॥ ९० ॥

युधिष्ठिर उवाच। एह्येहि सर्वे योत्स्यामस्तव भ्रातॄनपण्डितान्। युयुत्सो वासुदेवश्च वयञ्च ब्रूम सर्वशः ॥ ९१ ॥ वृणोमि त्वां महाबाहो युध्यस्व मम कारणात्। त्वयि तन्तुश्च पिण्डश्च

धृतराष्ट्रस्य दृश्यते ॥ ९२ ॥ भजस्वास्मान् राजपुत्र भजमानान् महाद्युते। न भविष्यति दुर्बुद्धिर्धार्त्तराष्ट्रो ह्यमर्षणः ॥ ९३ ॥

सञ्जय उवाच। ततो युयुत्सुः कौरव्यान् परित्यज्य सुतांस्तव। जगाम पाण्डुपुत्राणां सेनां विश्राव्य दुन्दुभिम् ॥ ९४ ॥ ततो युधिष्ठिरो राजा सुसंहृष्टो महाभुज। जग्राह कवचं भूयो दीप्तिमत् कनकोज्ज्वलम् ॥ ९५ ॥ प्रत्यपद्यन्त ते सर्व्वे रथान् स्वान् पुरुषर्षभाः। ततो व्यूहं यथापूर्व्वं प्रत्यव्यूहन्त ते पुनः ॥ ९६ ॥ अवादयन् दुन्दुभींश्च शतशश्चैव पुष्कलान्। सिंहनादांश्च विविधान् विनेदुः पुरुषर्षभाः ॥ ९७ ॥ रथस्थान् पुरुषव्याघ्रान् पाण्डवान् प्रेक्ष्य पार्थिवाः। धृष्टद्युम्नादयः सर्व्वे पुनर्जहृषिरे तदा ॥ ९८ ॥ गौरवं पाण्डुपुत्राणां मान्यान् मानयतान्च तान्। दृष्ट्वा महीक्षितस्तत्र पूजयाञ्चक्रिरे भृशम् ॥ ९९ ॥ सौहृदञ्च कृपाञ्चैव प्राप्तकालं महात्मनाम्। दयाञ्च ज्ञातिषु परां कथयाञ्चक्रिरे नृपाः ॥ १०० ॥ साधु साध्विति सर्व्वत्र निश्चेरुः स्तुतिसंहिताः। वाचः पुण्याः कीर्त्तिमतां मनोहृदयहर्षणाः ॥ १०१ ॥ म्लेच्छाश्चार्य्याश्च ये तत्र ददृशुः शुश्रुवुस्तदा। वृत्तं तत् पाण्डुपुत्राणां रुरुदुस्ते सगद्गदाः ॥ १०२ ॥ ततो जघ्नुर्महाभेरीं शतशश्चैव पुष्कलान्। शङ्खांश्च गोक्षीरनिभान् दध्मुर्हृष्टा मनस्विनः ॥ १०३ ॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि भीष्मद्रोणाकृपशल्याभिगमने त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

---

धृतराष्ट्र उवाच। एवं व्यूढेष्वनीकेषु मामकेष्वितरेषु च। के पूर्व्वं प्राहरंस्तत्र कुरवः पाण्डवास्तथा ॥ १ ॥

सञ्जय उवाच। भ्रातुस्तद्वचनं श्रुत्वा पुत्रो दुःशासनस्तव।

भीष्मं प्रमुखतः कृत्वा प्रययौ सेनया सह ॥ २ ॥ तथैव पाण्डवाः
सर्वे भीमसेनपुरोगमाः । भीष्मेण युद्धमिच्छन्तः प्रययुर्हृष्टमानसाः
॥ ३ ॥ क्ष्वेडाः किलकिलाशब्दाः क्रकचा गोविषाणिकाः । भेरी-
मृदङ्गमुरजा हयकुञ्जरनिस्वनाः ॥ ४ ॥ उभयोः सेनयो राजं-
स्ततस्ते स्म समाहवन् । वयं तान् प्रति नर्दन्तस्तदासीत्तुमुलं
महत ॥ ५ ॥ महान्त्यनीकानि महासमुच्छ्रये समागमे पाण्डव-
धार्त्तराष्ट्रयोः । चकम्पिरे शङ्खमृदङ्गनिःस्वनैः प्रकम्पितानीव वनानि
वायुना ॥ ६ ॥ नरेन्द्रनागाश्वसमाकुलानामत्यायतानामशिवे
मुहूर्त्ते । बभूव घोषस्तुमुलश्चमूनां वातोद्धतानामिव सागराणाम्
॥ ७ ॥ तस्मिन् समुत्थिते शब्दे तुमुले लोमहर्षणे । भीमसेनो
महाबाहुः प्राणदत गोवृषो यथा ॥ ८ ॥ शङ्खदुन्दुभिनिर्घोषं
वारणानाञ्च बृंहितम् । सिंहनादश्च सैन्यानां भीमसेनरवोऽभ्य-
भूत ॥ ९ ॥ हयानां ह्रेषमाणानामनीकेषु सहस्रशः । सर्वा-
नभ्यभवच्छब्दान् भीमसेनस्य निस्वनः ॥ १० ॥ तच्छ्रुत्वा निनदं
तस्य सैन्यास्तव वितत्रसुः । जीमूतस्येव नदतः शक्राशनिसम-
स्वनम ॥ ११ ॥ वाहनानि च सर्वाणि शकृन्मूत्रं प्रसुस्रुवुः ।
शब्देन तस्य वीरस्य सिंहस्येवेतरे मृगाः ॥ १२ ॥ दर्शयन् घोर-
मात्मानं महाभ्रमिव नादयन् । भीषयंस्ते सुतांस्तव तत एतान्
समभ्ययात ॥ १३ ॥ तमायान्तं महेष्वासं सोदर्याः पर्यवार-
यन् । छादयन्तः शरव्रातैर्मेघा इव दिवाकरम् ॥ १४ ॥ दुर्यो-
धनश्च पुत्रस्ते दुर्मुखो दुःसहस्तथा । दुःशासनश्चातिरथस्तथा
दुर्मर्षणो नृप ॥ १५ ॥ विविंशतिश्चित्रसेनो विकर्णश्च महारथः ।
पुरुमित्रो जयो भोजः सौमदत्तिश्च वीर्यवान् ॥ १६ ॥ महा-
चापानि धुन्वन्तो जलदा इव विद्युतः । आददानाश्च नाराचा-
न्निर्मुक्ताशीविषोपमान् ॥ १७ ॥ अथ ते द्रौपदीपुत्राः सौभद्रश्च
महारथः । नकुलः सहदेवश्च धृष्टद्युम्नश्च पार्षतः ॥ १८ ॥ धार्त्त-

राष्ट्रान् प्रतिययुरर्द्दयन्तः शितैः शरैः । वज्रैरिव महावेगैः शिखराणि धराभृताम् ॥ १९ ॥ तस्मिन् प्रथमसंग्रामे भीमज्यातलनिःस्वनैः । तावकानां परेषाञ्च नासीत् कश्चित् पराङ्मुखः ॥ २० ॥ लाघवं द्रोणशिष्याणामपश्यं भरतर्षभ । निमित्तवेधिनां राजन् शरानुत्सृजतां भृशम् ॥ २१ ॥ नोपशाम्यति निर्घोषो धनुषां कूजतां तथा । विनिश्चेरुः शरा दीप्ता ज्योतींषीव नभस्तलात् ॥ २२ ॥ सर्व्वे त्वन्ये महीपालाः प्रेक्षका इव भारत । ददृशुर्द्दर्शनीयं तं भीमं ज्ञातिसमागमम् ॥ २३ ॥ ततस्ते जातसंरम्भाः परस्परकृतागसः । अन्योऽन्यस्पर्द्धया राजन् व्यायच्छन्त महारथाः ॥ २४ ॥ कुरुपाण्डवसेने ते हस्त्यश्वरथसंकुले । शुशुभाते रणेऽतीव पटे चित्रगते इव ॥ २५ ॥ ततस्ते पार्थिवाः सर्व्वे प्रगृहीतशरासनाः । अन्तर्द्धीयत चादित्यः सैन्येन रजसा वृतः ॥ २६ ॥ सहसैन्याः समापेतुः पुत्रस्य तव शासनात् । तेषामाधावतां तत्र गजाश्वकलिलो महान् ॥ २७ ॥ सिंहनादरवोमिश्रः शङ्खभेरीसमाकुलः । स घोषवाञ्छरग्राही धनुर्नागोऽसिकच्छपः ॥ २८ ॥ व्यावल्गितपुरोवात आसीत् क्षुब्धाब्धिवत् स्वन । युधिष्ठिरेण चादिष्टा पार्थिवास्ते सहस्रशः ॥ २९ ॥ सहसैन्याः समापेतुः पुत्रस्य तव वाहिनीम् । उभयोः सेनयोस्तीव्रः सैन्यानां स समागमः ॥ ३० ॥ प्रयुद्धानां प्रभग्नानां पुनरावर्त्ततामपि । न तु स्वेषां परेषाञ्च विशेषः समदृश्यत ॥ ३१ ॥ तस्मिन् सुतुमुले युद्धे वर्त्तमाने महाभये । अतिसर्व्वाण्यनीकानि पिता तेऽतिव्यरोचत ॥ ३२ ॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि युद्धारम्भे
चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

---

सञ्जय उवाच। पूर्वाह्णे तस्य रौद्रस्य युद्धमह्नो विशाम्पते।
प्रावर्त्तत महाघोरं राज्ञां देहावकर्त्तनम् ॥ १ ॥ कुरूणां सृञ्जयानाञ्च संग्रामे विजिगीषताम्। सिंहानामिव सन्नादो दिवमुर्वीञ्च नादयन् ॥ २ ॥ आसीत् किलकिलाशब्दस्तलशङ्खरवैः सह। जज्ञिरे सिंहनादाश्च नराणां प्रतिगर्ज्जताम् ॥ ३ ॥ तलत्राभिहतश्चैव ज्याशब्दो भरतर्षभ। पत्तीनां पादशब्दश्च वाजिनाञ्च महास्वनः ॥ ४ ॥ तोत्राङ्कुशनिपातश्च आयुधानाञ्च निस्वनः। घण्टाशब्दश्च नागानामन्योऽन्यमभिधावताम् ॥ ५ ॥ तस्मिन् समुदिते शब्दस्तुमुलो लोमहर्षणः। बभूव रथनिर्घोषः पर्ज्जन्यनिनदोपमः ॥ ६ ॥ ते मनः क्रूरमास्थाय समभित्यक्तजीविताः। पाण्डवानभ्यवर्त्तन्त सर्वे एवोच्छ्रितध्वजाः ॥ ७ ॥ स्वयं शान्तनवो राजन्नभ्यधावद्धनञ्जयम्। प्रगृह्य कार्मुकं घोरं कालदण्डोपमं रणे ॥ ८ ॥ अर्ज्जुनोऽपि धनुर्गृह्य गाण्डीवं लोकविश्रुतम्। अभ्यधावत तेजस्वी गाङ्गेयं रणमूर्द्धनि ॥ ९ ॥ तावुभौ कुरुशार्दूलौ परस्परवधैषिणौ। गाङ्गेयस्तु रणे पार्थं विद्ध्वा नाकम्पयद्बली ॥ १० ॥ तथैव पाण्डवो राजन् भीष्मं नाकम्पयद् युधि। सात्यकिस्तु महेष्वासः कृतवर्म्माणमभ्ययात् ॥ ११ ॥ तयोः सतुमुलं युद्धं सुमहल्लोमहर्षणम्। सात्यकिं कृतवर्म्मा च कृतवर्म्माणं च सात्यकिम् ॥ १२ ॥ आनर्च्छतुः सनिर्घोषौ तक्षमाणौ परस्परम्। तौ शरार्चितसर्वाङ्गौ शुशुभाते महाबलौ ॥ १३ ॥ वसन्ते पुष्पशवलौ पुष्पिताविव किंशुकौ। अभिमन्युर्महेष्वासो बृहद्बलमयोधयत् ॥ १४ ॥ ततः कौशलको राजा सौभद्रस्य विशाम्पते। ध्वजं चिच्छेद समरे सारथिञ्चाभ्यपातयत् ॥ १५ ॥ सौभद्रस्तु ततः क्रुद्धः पातिते रथसारथौ। बृहद्बलं महाराज विव्याध नवभिः शरैः ॥ १६ ॥ तथापराभ्यां भल्लाभ्यां शिताभ्यामरिमर्द्दनः। ध्वजमेकेन चिच्छेद पार्ष्णिमेकेन सारथिम् ॥ १७ ॥

अन्योऽन्यञ्च शरैस्तीक्ष्णैस्ततचतुररिन्दमौ । मानिनं समरे दीप्तं
कृतवैरं महारथम ॥ १८ ॥ भीमसेनस्तव सुतं दुर्य्योधनमयो-
धयत् । तावुभौ नरशार्दूलौ कुरुमुख्यौ महारथौ ॥ १९ ॥
अन्योन्यं शरवर्षाभ्यां ववृषाते रणाजिरे । तौ वीक्ष्य तु महा-
त्मानौ कृतिनौ चित्रयोधिनौ ॥ २० ॥ विस्मयः सर्व्वभूतानां सम-
पद्यत भारत । दुःशासनस्तु नकुलं प्रत्युद्याय महारथम् ॥ २१ ॥
अविध्यन्निशितैर्बाणैर्बहुभिर्मर्म्मभेदिभिः । तस्य माद्रीसुतः केतुं
सशरञ्च शरासनम् ॥ २२ ॥ चिच्छेद निशितैर्बाणैः प्रहसन्निव
भारत । अथैनं पञ्चविंशत्या क्षुद्रकाणां समर्पयत् ॥ २३ ॥ पुत्रस्तु
तव दुर्द्धर्षो नकुलन्तु महाहवे । तुरङ्गांश्चैव चिच्छेद ध्वजञ्चैव
न्यपातयत् ॥ २४ ॥ दुर्म्मुखः सहदेवन्तु प्रत्युद्याय महाबलम् ।
विव्याध शरवर्षेण यतमानं महाहवे ॥ २५ ॥ सहदेवस्ततो
वीरो दुर्म्मुखस्य महाहवे । शरेण भृशतीक्ष्णेन पातयामास
सारथिम् ॥ २६ ॥ तावन्योऽन्यं समासाद्य समरे युद्धदुर्म्मदौ ।
त्रासयेतां शरैर्घोरैः कृतप्रतिकृतैषिणौ ॥ २७ ॥ युधिष्ठिरः स्वयं
राजा मद्रराजानमभ्ययात् । तस्य मद्रपतिश्चापं द्विधा चिच्छेद
मस्तुतः ॥ २८ ॥ तदपास्य धनुश्छिन्नं कुन्तीपुत्रो युधिष्ठिरः ।
अन्यत् कार्म्मुकमादत्त वेगवत् बलवत्तरम् ॥ २९ ॥ ततो मद्रेश्वरं
राजा शरैः सन्नतपर्व्वभिः । छादयामास सङ्क्रुद्धस्तिष्ठतिष्ठेति चाब्र-
वीत् ॥ ३० ॥ धृष्टद्युम्नस्ततो द्रोणमभ्यधावत भारत । तस्य
द्रोणः सुसङ्क्रुद्धः परासुकरणं दृढम् ॥ ३१ ॥ धनुश्चिच्छेद समरे
पाञ्चाल्यस्य महात्मनः । शरञ्चैव महाघोरं कालदण्डमिवापरम्
॥ ३२ ॥ प्रेषयामास समरे सोऽस्य काये न्यमज्जत । अथान्यद्धनु-
रादाय सायकांश्च चतुर्द्दश ॥ ३३ ॥ द्रोणं द्रुपदपुत्रस्तु प्रति-
विव्याध संयुगे । तावन्योऽन्यं सुसंरब्धौ चक्रतुः सुभृशं रणम्
॥ ३४ ॥ सौमदत्तिं रणे शङ्खो रभसं रभसो युधि । अभ्युद्ययौ

महाराज तिष्ठतिष्ठेति चाब्रवीत् ॥ ३५ ॥ तस्य वै दक्षिणं वीरो निर्बिभेद रणे भुजम्। सौमदत्तिस्ततः शङ्खं जत्रुदेशे समाहनत् ॥ ३६ ॥ तयो समभवत् युद्धं घोररूपं विशाम्पते। दृप्तयो समरे तूर्णं देवदानवयोरिव ॥ ३७ ॥ वाह्लीकन्तु रणे क्रुद्धः क्रुद्धरूपं विशाम्पते। अभ्यद्रवदमेयात्मा धृष्टकेतुर्महारथः ॥३८॥ वाह्लीकस्तु ततो राजन् धृष्टकेतुममर्षणम्। शरैर्बहुभिरानर्च्छ्य सिंहनादमथानदत् ॥ ३९ ॥ चेदिराजस्तु संक्रुद्धो वाह्लीकं नवभिः शरैः। विव्याध समरे तूर्णं मत्तो मत्तमिव द्विपम् ॥ ४० ॥ तौ तत्र समरे क्रुद्धौ नर्दन्तौ च मुहुर्मुहुः। समीयतुः सुसंक्रुद्धावङ्गारकबुधाविव ॥ ४१ ॥ राक्षसं क्रूरकर्माणं क्रूरकर्मा घटोत्कचः। अलम्बुषं प्रत्युदियाद्बलं शक्र इवाहवे ॥ ४२ ॥ घटोत्कचस्तु संक्रुद्धं राक्षसं तं महाबलम्। नवत्या सायकैस्तीक्ष्णैर्दारयामास भारत ॥ ४३ ॥ अलम्बुषस्तु समरे भैमसेनिं महाबलम्। बहुधा दारयामास शरैः सन्नतपर्वभिः ॥ ४४ ॥ व्यभाजेतां ततस्तौ तु संयुगे शरविक्षतौ। शिखण्डी समरे राजन् द्रौणिमभ्युद्ययौ बली ॥ ४५ ॥ अश्वत्थामा ततः क्रुद्धं शिखण्डिनमवस्थितम्। नाराचेन सुतीक्ष्णेन भृशं विद्धा व्यकम्पयत् ॥ ४६ ॥ शिखण्ड्यपि ततो राजन् द्रोणपुत्रमताडयत्। सायकेन सुपीतेन तीक्ष्णेन निशितेन च ॥ ४७ ॥ जघ्नतुस्तौ तदान्योऽन्यं शरैर्बहुविधैर्मृधे। भगदत्तं रणे शूरं विराटो वाहिनीपतिः ॥ ४८ ॥ अभ्ययात्त्वरितो राजंस्ततो युद्धमवर्त्तत। विराटो भगदत्तन्तु शरवर्षेण भारत ॥ ४९ ॥ अभ्यवर्षत संक्रुद्धो मेघो वृष्ट्या इवाचलम्। भगदत्तस्ततस्तूर्णं विराटं पृथिवीपतिं ॥५०॥ छादयामास समरे मेघः सूर्य्यमिवोदितम्। वृहत्क्षत्रस्तु कैकेयं कृपं शारद्वतो ययौ ॥ ५१ ॥ तं कृपः शरवर्षेण छादयामास भारत। गौतमञ्च सुसंक्रुद्धं शरवृष्ट्याभ्यपूरयत् ॥ ५२ ॥ तती-

ऽन्योऽन्यं हयान् हत्वा धनुश्छित्वा च भारत । विरथावसियुद्धाय समीयतुरमर्षणौ ॥५३॥ तयोस्तदभवत् युद्धं घोररूपं दुरासदम् । द्रुपदस्तु ततो राजा सैन्धवं वै जयद्रथम् ॥ ५४ ॥ अभ्युययौ सुसंरब्धो हृष्टरूपं परन्तप । ततः सैन्धवको राजा द्रुपदं विशिखैस्त्रिभिः ॥ ५५ ॥ ताड़यामास समरे स च तं प्रत्यविध्यत । तयोः समभवत् युद्धं घोररूपं, सुदारुणम् ॥ ५६ ॥ ईक्षितृप्रीतिजननं शुक्राङ्गारकयोरिव । विकर्णस्तु सुतस्तुभ्यं श्रुतसोमं महाबलम् ॥ ५७ ॥ अभ्यगाज्जवनैरश्वैस्ततो युद्धमवर्त्तत । विकर्णः श्रुतसोमन्तु विद्धा नाकम्पयच्छरैः ॥ ५८ ॥ श्रुतसोमो विकर्णञ्च तदद्भुतमिवाभवत् । सुशर्माणं नरव्याघ्रश्चेकितानो महारथः ॥ ५९ ॥ अभ्यद्रवत् सुसंक्रुद्ध पाण्डवार्थे पराक्रमी । सुशर्मा च महाराज चेकितानं महारथम् ॥ ६० ॥ महता शरवर्षेण वारयामास संयुगे । चेकितानोऽपि संरब्धः सुशर्माणं महाहवे ॥ ६१ ॥ ववर्ष शरवर्षेण महामेघ इवाचलम् । शकुनिः प्रतिविन्ध्यन्तु पराक्रान्तं पराक्रमी ॥ ६२ ॥ अभ्यद्रवत राजेन्द्र मत्तं सिंह इव द्विपम् । यौधिष्ठिरः सुसंक्रुद्धः सौबलं निशितैः शरैः ॥ ६३ ॥ व्यदारयत सङ्ग्रामे मघवा इव दानवम् । शकुनिः प्रतिविन्ध्यन्तु प्रत्यविध्यत् महाहवे ॥ ६४ ॥ अदारयत् महाप्राज्ञ शरैः सन्नतपर्वभिः । सुदक्षिणन्तु राजेन्द्र काम्बोजानां महारथम् ॥ ६५ ॥ श्रुतकर्मा पराक्रान्तमभ्यद्रवत संयुगे । सुदक्षिणस्तु राजेन्द्र सहदेवं महारथम् । ६६ ॥ विद्धा नाकम्पयत वै मैनाकमिव पर्वतम् । श्रुतकर्मा तत क्रुद्धः काम्बोजानां महारथम् ॥ ६७ ॥ शरैर्बहुभिरानर्च्छद्दारयन्निव सर्वशः । इरावानथ सक्रुद्धः श्रुतायुषममर्षणम् ॥ ६८ ॥ प्रत्युद्ययौ रणे यत्तो यत्तरूपं परन्तप । वार्ज्जुनिस्तस्य समरे हयान् हत्वा महारथः ॥ ६९ ॥ ननाद बलवान् राजंस्तत सैन्यं प्रत्यपूरयत् । श्रुतायुस्तु सुसंरब्धः

फाल्गुनेः समरे हयान् ॥ ७० ॥ निजघान गदाग्रेण ततो युद्ध-
मवर्त्तत। विन्दानुविन्दावावन्त्यौ कुन्तिभोजं महारथम् ॥ ७१ ॥
ससैन्यं ससुतं वीरं समसज्जतुराहवे। तत्राद्भुतमपश्यामस्तयो-
र्घोरं पराक्रमम् ॥ ७२ ॥ अयुध्येतां स्थिरौ भूत्वा महत्या सेनया
सह। अनुविन्दस्तु गदया कुन्तिभोजमताडयत् ॥ ७३ ॥ कुन्ति-
भोजस्तु तं तूर्णं शरवर्षैरवाकिरत्। कुन्तिभोजसुतश्चापि विन्दं
विव्याध सायकैः ॥७४॥ स च तं प्रतिविव्याध तदद्भुतमिवाभवत्।
केकया भ्रातरः पञ्च गान्धारान् पञ्च मारिष ॥७५॥ ससैन्यान् सह-
सैन्यास्तु योधयामासुराहवे। वीरबाहुश्च ते पुत्रो वैराटिं रथ-
सत्तमम् ॥७६॥ उत्तरं योधयामास विव्याध नवभिः शरैः। उत्तर-
श्चापि तं वीरं विव्याध निशितैः शरैः॥७७॥ चेदिराट् समरे राजन्
उलूकं समभिद्रवत्। तथैव शरवर्षेण उलूकं समविध्यत ॥ ७८ ॥
उलूकश्चापि तं बाणैर्निशितैर्लोमवाहिभिः। तयोर्युद्धं समभवत्
घोररूपं विशाम्पते ॥ ७९ ॥ दारयेतां सुसंक्रुद्धावन्योऽन्यमपरा-
जितौ। एवं द्वन्द्वसहस्राणि रथवारणवाजिनाम् ॥ ८० ॥ पदा-
तीनाञ्च समरे तव तेषाञ्च संकुले। मुहूर्त्तमिव तद्युद्धमासीन्
मधुरदर्शनम् ॥८१॥ तत उन्मत्तवद्राजन्न प्राज्ञायत किञ्चन। गजो
गजेन समरे रथी च रथिनं ययौ ॥८२॥ अश्वोऽश्वं समभिप्रेत्य
पदातिश्च पदातिनम्। ततो युद्धं सुदुर्द्धर्षं व्याकुलं समपद्यत।८३॥
शूराणां समरे तत्र समासाद्य परस्परम्। तत्र देवर्षयः सिद्धा-
श्चारणाश्च समागताः ॥ ८४ ॥ प्रैक्षन्त तद्रणं घोरं देवासुर-
समं भुवि। ततो दन्तिसहस्राणि रथानाञ्चापि मारिष ॥ ८५ ॥
अश्वौघाः पुरुषौघाश्च विपरीतं समाययुः। तत्र तत्र प्रदृश्यन्ते रथ-
वारणपत्तयः। मारिषेव नरव्याघ्र युध्यमाना मुहुर्मुहुः ॥ ८६ ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि द्वन्द्वयुद्धे
पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

सञ्जय उवाच । राजञ्छतसहस्राणि तत्र तत्र पदातिनाम् ।
निर्मर्य्यादं प्रयुद्धानि तत्ते वक्ष्यामि भारत ॥ १ ॥ न पुत्रः पितरं
जज्ञे न पिता पुत्रमौरसम् । न भ्राता भ्रातरं तत्र स्वस्रीयो न
च मातुलम् ॥ २ ॥ न मातुलश्च स्वस्रीयं न सखायं सखा तदा ।
आविष्टा इव युध्यन्ते पाण्डवाः कुरुभिः सह ॥ ३ ॥ रथानीकं
नरव्याघ्राः केचिदभ्यपतन् रथैः । अभज्यन्त रथैरेव युगानि
भरतर्षभ ॥ ४ ॥ रथेषाश्च रथेषाभिः कूबरा रथकूबरैः । सङ्गतैः
सङ्गताः केचित् परस्परजिघांसवः ॥ ५ ॥ न शेकुश्चलितुं केचित्
सन्निपत्य रथा रथैः । प्रभिन्नास्तु महाकायाः सन्निपत्य महा-
गजे ॥ ६ ॥ बहुधा दारयन् क्रुद्धा विषाणैरितरेतरम् । स-
तोरणपताकैश्च वारणा वरवारणैः ॥ ७ ॥ अभिद्रुत्य महाराज
वेगवद्भिर्महागजैः । दन्तैरभिहतास्तत्र चुक्रुशुः परमातुराः ॥ ८ ॥
अविनीताश्च शिक्षाभिस्तोत्राङ्कुशसमाहताः । अनभिन्ना प्रभि-
न्नानां सम्मुखाभिमुखा ययुः ॥ ९ ॥ प्रभिन्नैरपि संयुक्ताः केचि-
त्तत्र महागजाः । क्रौञ्चवन्निनदं कृत्वा प्राद्रवन्त ततस्ततः ॥ १० ॥
सम्यक् प्रणीताश्च तथा प्रभिन्नकरटामुखाः । ऋष्टितोमरनाराचै-
र्निविद्धा वरवारणाः ॥ ११ ॥ विनेदुर्भिन्नमर्माणो निपेतुश्च गता-
सवः । प्रधावन्तो दिशः केचित नदन्तो भैरवान् रवान् ॥ १२ ॥
गजानां पादरक्षाश्च व्यूढोरस्काः प्रहारिणः । ऋष्टिभिश्च धनु-
र्भिश्च विमलैश्च परश्वधैः ॥ १३ ॥ गदाभिर्मुषलैश्चैव भिन्दिपालैः
सतोमरैः । आयसैः परिघैश्चापि निस्त्रिंशैर्विमलैः शितैः ॥ १४ ॥
सुगृहीतैः सुसंरब्धा द्रवमाणास्ततस्ततः । व्यदृश्यन्त महाराज
परस्परजिघांसवः ॥ १५ ॥ भ्राजमानाश्च निस्त्रिंशाः संसिक्ता नर-
शोणितैः । प्रत्यदृश्यन्त शूराणामन्योऽन्यमभिधावताम् ॥ १६ ॥
अवक्षिप्तावधूतानामसीनां वीरबाहुभिः । सञ्जज्ञे तुमुलः शब्दः
पततां परमर्मसु ॥ १७ ॥ गदामुषलरुग्णानां भिन्नानाञ्च वरा-

च्छिभिः । दन्तिदन्तावभिन्नानां मर्दितानाञ्च दन्तिभिः ॥ १८ ॥
तत्र तत्र नरौघाणां क्रोशतामितरेतरम् । शुश्रुवुर्दारुणा वाचः
प्रेतानामिव भारत ॥ १९ ॥ हयैरपि हयारोहाश्चामरापीड़-
धारिभिः । हंसैरिव महावेगैरन्योऽन्यमभिविद्रुताः ॥ २० ॥ तै-
र्विमुक्ता महाप्रासा जाम्बूनदविभूषणाः । आशुगा विमलास्तीक्ष्णाः
संपेतुर्भुजगोपमाः ॥ २१ ॥ अश्वैरग्र्यजवैः, केचिदाप्लुत्य महतो
रथान् । शिरांस्याददिरे वीरा रथिनामश्वसादिनः ॥ २२ ॥
बहूनपि हयारोहान् भल्लैः सन्नतपर्वभिः । रथी जघान सम्प्राप्य
बाणगोचरमागतान् ॥ २३ ॥ नवमेघप्रतीकाशाश्चाक्षिप्य तुरगान्
गजाः । स्वपादैरवमृद्नन्ति मत्ताः कनकभूषणाः ॥ २४ ॥ पाट्य-
मानेषु कुम्भेषु पार्श्वेष्वपि सदारुणाः । प्रासैर्विमथिताः केचित्
विनेदुः परमातुराः ॥ २५ ॥ साश्वारोहान् हयान् केचिदुन्मथ्य
वरवारणाः सहसा चिक्षिपुस्तत्र सङ्कुले परमे सति ॥ २६ ॥
साश्वारोहान् विषाणाग्रैरुत्क्षिप्य तुरगान् गजाः । रथौघानव-
मृद्नन्तः सध्वजानभिचक्रमुः ॥ २७ ॥ पुंस्त्वादतिमदत्वाच्च केचि-
त्तत्र महागजाः । साश्वारोहान् हयान् जघ्नुः करैः सचरणै-
स्तथा ॥ २८ ॥ प्रतिमानेषु गात्रेषु पार्श्वेष्वपि च वारणान् ।
आशुगा विमलास्तीक्ष्णाः सम्पेतुर्भुजगोपमाः ॥ २९ ॥ नराश्व-
कायान्निर्भिद्य लौहानि कवचानि च । निपेतुर्विमलाः शक्त्यो
वीरबाहुभिरर्पिताः ॥ ३० ॥ महोल्काप्रतिमा घोरास्तत्र तत्र
विशाम्पते । द्वीपिचर्मावनद्धैश्च व्याघ्रचर्ममयैरपि ॥ ३१ ॥ विकोशै-
र्विमलैः खड्गैरभिजघ्नुः परान् रणे । अभिप्लुतमभिक्रुद्ध-
मेकपार्श्वविदारितम् ॥ ३२ ॥ विदर्शयन्तः सम्पेतुः खड्गचर्म-
परश्वधैः । केचिदाक्षिप्य करिणः साश्वानपि रथान् करैः ॥ ३३ ॥
विकर्षन्तो दिशः सर्वाः समीयुः सर्वशब्दगाः । शक्तिभिर्दारिताः
केचित् सञ्छिन्नाश्च परश्वधैः ॥ ३४ ॥ हस्तिभिर्मर्दिताः केचित्

चुम्बायान्ये तुरङ्गमे । रथनेमिनिकृत्ताश्च निःत्ताश्च परश्वधैः ॥ ३५ ॥ व्याक्रोशन्त महाराज तत्र तत्र स्म बान्धवान् । पुत्रानन्ये पितॄनन्ये भ्रातॄंश्च सह बन्धुभिः ॥ ३६ ॥ मातुलान् भागिनेयांश्च परानपि च संयुगे । विकीर्णान्त्रा सुबहवो भग्नसक्थाश्च भारत ॥ ३७ ॥ बाहुभिश्चापरे छिन्नैः पार्श्वेषु च विदारिताः । क्रन्दन्तः समदृश्यन्त तृषिताः जीवितेप्सव ॥ ३८ ॥ तृषापरिगताः केचिदल्पसत्त्वा विशाम्पते । भूमौ निपतिता युद्धे मृगयाञ्चक्रिरे जलम् ॥ ३९ ॥ रुधिरौघपरिक्लिन्ना क्लिश्यमानाश्च भारत । व्यनिन्दन् भृशमात्मानं तव पुत्रांश्च सङ्गतान् ॥ ४० ॥ अपरे क्षत्रिया शूरा कृतवैरा परस्परम् । नैव शस्त्रं विमुञ्चन्ति नैव क्रन्दन्ति मारिष ॥ ४१ ॥ तर्जयन्ति च संहृष्टास्तत्र तत्र विशाम्पते । निर्दश्य दशनैश्चापि क्रोधात स्वदशनच्छदम् ॥ ४२ ॥ भ्रुकुटीकुटिलैर्वक्त्रैः प्रेक्षन्तोऽपि परस्परम् । अपरे क्लिश्यमानास्तु शरार्त्ता व्रणपीडिता ॥ ४३ ॥ निष्कूजा समपद्यन्त दृढसत्त्वा महाबला । अन्ये च विरथा शूरा रथमन्यस्य संयुगे ॥ ४४ ॥ प्रार्थयाना निपतिता सन्तुष्टा वरवारणैः । अशोभन्त महाराज सपुष्पा इव किंशुका ॥ ४५ ॥ सम्बभूवुरनीकेषु बहवो भैरवस्वना । वर्त्तमाने महाभीमे तस्मिन् वीरवरक्षये ॥ ४६ ॥ अहनच्च पिता पुत्रं पुत्रश्च पितरं रणे । स्वस्रीयो मातुलञ्चापि स्वस्रीयञ्चापि मातुल ॥ ४७ ॥ सखायञ्च सखा चापि सम्बन्धी बान्धवास्तथा । एवमेष क्षयो वृत्त कुरूणां पाण्डवै सह ॥ ४८ ॥ वर्त्तमाने भये तस्मिन् निर्मर्य्यादे महाभये । भीष्ममासाद्य पार्थाना वाहिनी समकम्पत ॥४९ केतुना पञ्चतारेण तालेन भरतर्षभ । राजतेन महाबाहुरुच्छ्रितेन महारथे । बभौ भीष्मस्तदा राजंश्चन्द्रमा इव मेरुणा ॥ ५० ॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि सङ्कुलयुद्धे पटचत्वारिंशोऽध्याय ॥ ४६ ॥

सञ्जय उवाच। गतपूर्वाह्णभूयिष्ठे तस्मिन्नहनि दारुणे। वर्त्तमाने तथा रौद्रे राजन्नरवरक्षये ॥ १ ॥ दुर्मुखः कृतवर्मा च कृपः शल्यो विविंशतिः। भीष्मं जुगुपुरासाद्य तव पुत्रेण चोदिताः ॥ २ ॥ एतैरतिरथैर्गुप्तः पञ्चभिर्भरतर्षभ। पाण्डवानामनीकानि विजगाहे महारथः ॥३॥ चेदिकाशिकरूषेषु पाञ्चालेषु च भारत। भीष्मस्य बहुधा तालः चलत्केतुरदृश्यत ॥ ४ ॥ स शिरांसि रणे वीरो रथांश्च सयुगध्वजान्। विचकर्त्त महावेगैर्भल्लैः सन्नतपर्वभिः ॥ ५ ॥ नृत्यतो रथमार्गेषु भीष्मस्य भरतर्षभ। केचिदार्त्तस्वरं चक्रुर्नागा मर्म्मसु ताडिताः ॥ ६ ॥ अभिमन्युः सुसंक्रुद्धः पिशङ्गैस्तुरगोत्तमैः। संयुक्तं रथमास्थाय प्रायात् भीष्मरथं प्रति ॥ ७ ॥ जाम्बूनदविचित्रेण कर्णिकारेण केतुना। अभ्यवर्त्तत भीष्मञ्च तांश्चैव रथसत्तमान् ॥ ८ ॥ स तालकेतोस्तीक्ष्णेन केतुमाहत्य पत्रिणा। भीष्मेण युयुधे वीरस्तस्य चानुचरैः सह ॥ ९ ॥ कृतवर्माणमेकेन शल्यं पञ्चभिराशुगैः। भित्त्वा नवभिरानर्च्छत् शराग्रैः प्रपितामहम् ॥ १० ॥ पूर्णायतविसृष्टेन सम्यक् प्रणिहितेन च। ध्वजमेकेन चिच्छेद जाम्बूनदविभूषितम् ॥ ११ ॥ दुर्मुखस्य तु भल्लेन सर्वावरणभेदिना। जहार सारथेः कायाच्छिरः सन्नतपर्वणा ॥ १२ ॥ धनुश्चिच्छेद भल्लेन कार्त्तस्वरविभूषितम्। कृपस्य निशिताग्रेण तांश्च तीक्ष्णमुखैः शरैः ॥ १३ ॥ जघान परमक्रुद्धो नृत्यन्निव महारथः। तस्य लाघवमुद्वीक्ष्य तुतुषुर्देवता अपि ॥ १४ ॥ लब्धलक्ष्यतया कार्ष्णेः सर्वे भीष्ममुखा रथाः। सत्त्ववन्तममन्यन्त साक्षादिव धनञ्जयम् ॥१५॥ तस्य लाघवमार्गस्थमलातसदृशप्रभम्। दिशः पर्य्यपतच्चापि गाण्डीवमिव घोषयन् ॥ १६ ॥ स तमासाद्य वेगेन भीष्मो नवभिराशुगैः। विव्याध समरे तूर्णमार्ज्जुनिं परवीरहा ॥ १७ ॥ ध्वजञ्चास्य त्रिभिर्भल्लैश्चिच्छेद परमौजसः। सारथिञ्च त्रिभि-

वार्ष्णेराजधान यतव्रत ॥ १८ ॥ तथैव कृतवर्म्मा तु कृप शल्यय मारिष। विद्धा अकम्पयत काष्णिर्मैनाकमिव पर्व्वतम् ॥ १९ ॥ स तै परिवृत शूरो धार्त्तराष्ट्रैर्महारथै। ववर्ष शरवर्षाणि कार्ष्णि पञ्चरथान् प्रति ॥ २० ॥ ततस्तेषा महास्त्राणि निवार्य्य शरवृष्टिभि। ननाद बलवान् कार्ष्णिर्भीष्माय विसृजन् शरान् ॥ २१ ॥ तत्रास्य सुमहद्राजन् बाह्वोर्बलमदृश्यत। यतमानस्य समरे भीष्ममर्द्दयत शरै ॥ २२ ॥ पराक्रान्तस्य तस्यैव भीष्मोऽपि प्राहिणोच्छरान्। स तानिच्छेद समरे भीष्मचापच्युताञ्छरान् ॥ २३ ॥ ततो ध्वजममोघेषुर्भीष्मस्य नवभि शरै। चिच्छेद समरे वीरस्तत उच्चुक्रुशुर्जना ॥ २४ ॥ स राजतो महास्कन्ध-स्तालो मणिविभूषित। सौभद्रविशिखैश्छिन्न पपात भुवि भारत ॥ २५ ॥ ध्वजं सौभद्रविशिखै पतन्त भरतर्षभ। दृष्ट्वा भीमो-ऽनदद्धृष्ट सौभद्रमभिहर्षयन् ॥ २६ ॥ अथ भीष्मो महास्त्राणि दिव्यानि च बहूनि च। प्रादुश्चक्रे महारौद्रे रणे तस्मिन् महा-बल ॥ २७ ॥ तत शरसहस्रेण सौभद्रं प्रपितामह। अवा-किरदमेयात्मा तदद्भुतमिवाभवत ॥ २८ ॥ ततो दश महेष्वासा पाण्डवाना महारथा। रक्षार्थमभ्यधावन्त सौभद्र त्वरिता रथै ॥ २९ ॥ विराट सह पुत्रेण धृष्टद्युम्नश्च पार्षत। भीमश्च केकयश्चैव सात्यकिश्च विशाम्पते ॥ ३० ॥ जवेन पतता तेषा भीष्म शान्तनवो रणे। पाञ्चाल्य त्रिभिरानर्च्छत सात्यकि नवभि शरै ॥ ३१ ॥ पूर्णायतविसृष्टेन क्षुरेण निशितेन च। ध्वजमेकेन चिच्छेद भीमसेनस्य पत्रिणा ॥ ३२ ॥ जाम्बूनदमय केतु केसरी नरसत्तम। पपात भीमसेनस्य भीष्मेण मथितो रथात ॥ ३३ ॥ ततो भीमस्त्रिभिर्विद्धा भीष्म शान्तनवं रणे। कृपमेकेन विव्याध कृतवर्म्माणमष्टभि ॥ ३४ ॥ उद्यतहीताग्रहस्तेन वैराटिरपि दन्तिना। अभ्यद्रवत राजान मद्राधिपतिमुत्तर ॥ ३५ ॥ तस्य वारण

राजस्य रथे चापतती जवात् । शल्यो निवारयामास वेगमप्रतिमं
रणे ॥ ३६ ॥ तस्य क्रुद्ध स नागेन्द्रो बृहत साधुवाहिन ।
पदा युगमधिष्ठाय जघान चतुरो हयान् ॥ ३७ ॥ स हताश्वे
रथे तिष्ठन् मद्राधिपतिरायसीम् । उत्तरान्तकरीं शक्तिं चिक्षेप
भुजगोपमाम् ॥ ३८ ॥ तया भिन्नतनुत्राण प्रविश्य विपुल तम ।
स पपात गजस्कन्धात प्रमुक्ताङ्कुशतोमर ॥ ३९ ॥ समादाय च
शल्योऽसिमवप्लुत्य रथोत्तमात । वारणेन्द्रस्य विक्रम्य चिच्छे-
दाथ महाकरम ॥ ४० ॥ भिन्नवर्मा शरव्रातैश्छिन्नहस्त स
वारण । भीममार्त्तस्वर कृत्वा पपात च ममार च ॥ ४१ ॥
एतदीदृशक कृत्वा मद्रराजो जनाधिप । आरुरोह रथं तूर्णं
भास्वरं कृतवर्मण ॥ ४२ ॥ उत्तरन्तु हतं दृष्ट्वा वैराटिभ्रातर
तदा । श्वेत सप्त महावीरान् दृष्ट्वा क्रोधसमन्वित ॥ ४३ ॥
धनूंषि तेषां चिच्छेद बाणै सन्नतपर्वभि । निकृतान्येव तानि
स्म समदृश्यन्त भारत ॥ ४४ ॥ ततस्ते तु निमेषार्द्धात प्रतिपद्य
धनूंषि च । सप्त चैव पृषत्काश्च श्वेताश्वे पर्य्यपातयन् ॥ ४५ ॥
तत पुनरमेयात्मा भल्लै सप्तभिराशुगै । निचकर्त्त महाबाहु-
स्तेषां चापानि धन्विनाम् ॥ ४६ ॥ ते निकृत्तमहाचापा त्वर-
माणा महारथा । अथ शक्ती परामृश्य विनेदुर्भैरवान् रवान्
॥ ४७ ॥ मुमुचुर्भरतश्रेष्ठ सप्त श्वेतरथं प्रति । ततस्ता ज्वलिता-
सर्वा महोल्काशनिनिस्वना ॥ ४८ ॥ अप्राप्ता सप्तभिर्भल्लैश्चिच्छेद
परमास्त्रवित् । तत समादाय शरं सर्वकायविदारणम् ॥ ४९ ॥
प्राहिणोत् भरतश्रेष्ठ बाणं रुक्मरथं प्रति । तस्य देहे निपतितो
बाणो वज्रातिगो महान् ॥ ५० ॥ ततो रुक्मरथो राजन् साय-
केन दृढं हत । निषसाद रथोपस्थे कश्मलञ्चाविशन्महत् ॥ ५१ ॥
त विसंज्ञं विमनसं त्वरमाणस्तु सारथि । अपोवाहक्षतव्यथं
सर्वलोकस्य पश्यत ॥ ५२ ॥ श्वेतोऽप्यन्यान् समादाय वाजिनो

हेमभूषितान्। तेषां स च महाबाहुर्ध्वजशीर्षाण्यपातयत् ॥ ५३॥ हयांश्च चैषान्निर्भिद्य सारथिञ्च परन्तप। शरैश्चैनान् समाकीर्य्य प्रायाच्छल्यरथं प्रति ॥ ५४॥ ततो हलहलाशब्दस्तव सैन्येषु भारत। दृष्ट्वा सेनापतिं तूर्णं यान्तं शल्यरथं प्रति ॥ ५५॥ ततो भीष्मं पुरस्कृत्य तव पुत्रो महाबलः। वृतैः सर्व्वस्य सैन्येन प्रायाच्छल्यरथं प्रति ॥ ५६॥ मृत्योरास्यमनुप्राप्तं मद्रराजममोचयत्। ततो युद्धं समभवत् तुमुलं लोमहर्षणम् ॥ ५७॥ तावकानां परेषाञ्च व्यतिषक्तरथद्विपम्। सौभद्रे भीमसेने च सात्यकौ च महारथे ॥ ५८॥ कैकेये च विराटे च धृष्टद्युम्ने च पार्षते। एतेषु नरसिंहेषु चेदिसैन्येषु चैव हि। ववर्ष शरवर्षाणि वृद्धः कुरुपितामहः ॥ ५९॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि श्वेतयुद्धे सप्तचत्वारिंशोऽध्यायः ॥ ४७॥

---

धृतराष्ट्र उवाच। एवं श्वेते महेष्वासे प्राप्ते शल्यरथं प्रति। कुरवः पाण्डवेयाश्च किमकुर्व्वत सञ्जय। भीष्मः शान्तनवः किं वा तन्ममाचक्ष्व पृच्छतः ॥ १॥

सञ्जय उवाच। राजन्छतसहस्राणि ततः क्षत्रियपुङ्गवाः। श्वेतं सेनापतिं शूराः पुरस्कृत्य महारथाः ॥ २॥ राज्ञो बलं दर्शयन्तस्तव पुत्रस्य भारत। शिखण्डिनं पुरस्कृत्य त्रातुमैच्छन् महारथाः ॥ ३॥ अभ्यवर्त्तन्त भीष्मस्य रथं हेमपरिष्कृतम्। जिघांसन्तो युधां श्रेष्ठं तदासीत् तुमुलं महत् ॥ ४॥ ततोऽहं सम्प्रवक्ष्यामि महावैशसमद्भुतम्। तावकानां परेषाञ्च यथा युद्धमवर्त्तत ॥ ५॥ तत्राकरोद्रथोपस्थान् शून्यान् शान्तनवो बहून्। प्राकृन्तदुत्तमाङ्गानि शरैरर्क्कांशुयोत्तमः ॥ ६॥ समा-

वृषोच्छ्रैरर्कनकेतुल्यप्रतापवान्। तुदन् समन्तात् समरे रवि-
र्नुदन् यथा तमः ॥ ७ ॥ तेनाजौ प्रेषिता राजन् शराः शत-
सहस्रशः। जीवितान्तकराः सङ्ख्ये महावेगा महाबलाः ॥ ८ ॥
पातयामास शूराणां शिरांसि शतशो रणे। राजन् कण्ठकसन्नद्धा
वीरा विगतमस्तकाः ॥ ९ ॥ रथा रथेषु संसक्ता व्यदृश्यन्त
विशाम्पते। रथो रथोपर्य्यवसत्तुरगस्तु तुरङ्गमम् ॥ १० ॥ स्वबलं
निहितं वीरं लम्बमानं सकार्मुकम्। उद्दीक्षीय हया राजन्
वहन्तश्च ततस्ततः ॥ ११ ॥ बद्धखड्गनिषङ्गाश्च विध्वस्तकवचा
हताः। शतशः पतिता भूमौ वीरशय्यासु शेरते ॥ १२ ॥ पर-
स्परेण धावन्तः पतिताः पुनरुत्थिताः। उत्थाय च प्रधावन्तो
द्वन्द्वयुद्धमवाप्नुवन् ॥ १३ ॥ पीड़िताः पुनरन्योऽन्यं लुठन्तो
रणमूर्द्धनि। मत्तो गजः पर्य्यपतच्छतशो रथिनो हताः ॥ १४ ॥
सरथा रथिनश्चापि विमर्द्दन्तः समन्ततः। स्यन्दने न्यपतत् कश्चित्
निहतोऽन्येन सायकैः ॥ १५ ॥ हतसारथिरप्युच्चैर्निपपात महा-
रथः। युध्यमानस्य संग्रामे व्यूढ़े रजसि चोत्थिते ॥ १६ ॥ धनुः-
कूजितविज्ञानं तत्रासीत् प्रत्ययुध्यताम्। गात्रस्पर्शे च योधानां
व्यज्ञासि परिपन्थिनम् ॥ १७ ॥ युध्यमाना शरै राजन् सञ्जिनी
ध्वजिनी न्यगात्। अन्योऽन्यं बाणसंशब्दो नाश्रूयत भटैः कृतः
॥ १८ ॥ शब्दायमाने संग्रामे पटहे कर्णदारिणि। युध्यमानस्य
संग्रामे कुर्व्वतः पौरुषं स्वकम् ॥ १९ ॥ नाश्रौषीन्नाम युद्धे तु
तुमुले लोमहर्षणे। पिता स्वमौरसं पुत्रं नाभिजानीत कश्चन
॥ २० ॥ चक्रं भग्नं युगञ्चैव एको धुर्य्यो हयो हतः। आक्षिप्तः
स्यन्दनाद्वीरः ससारथिरजिह्मगैः ॥ २१ ॥ विधुरे भिन्नचक्रे च
रथेऽपि विषमाकृते। तेन तेन स्म दृश्यन्ते बान्धवानां परस्परम्
॥ २२ ॥ यो हतः शिरसा छिन्नो मर्म्मभिन्निहतो हतः। अहत-
कोऽपि नैवासीत् भीष्मे निघ्नति शात्रवान् ॥ २३ ॥ श्वेतः कुरुचमू-

मकरोत स्वयं तस्मिन् महाहवे। राजपुत्रांस्तथोदारानवधी-च्छ्रतसङ्घश ॥ २४ ॥ चिच्छेद रथिना बाणै शिरांसि शत-सङ्घश। साङ्गदा बाहवश्चैव धनूंषि च समन्तत ॥ २५ ॥ रथिनो रथचक्राश्च रथारोहा रथानि च। छत्राणि च महार्हाणि पताकाश्च विशाम्पते ॥ २६ ॥ हयौघाश्च रथौघाश्च नरौघाश्चेति भारत। वारणा शतशश्चैव हता श्वेतेन भारत ॥ २७ ॥ वय श्वेत-भयात भीता विहाय रथमुत्तमम। अपयातास्तत पश्चाद्वय पश्याम ते प्रभम ॥ २८ ॥ शरपातमपक्रम्य कुरव कुरुनन्दन। भीष्म शान्तनवं युद्धे स्थिता युद्धाय दंशिता ॥ २९ ॥ अदीनो दीनसमये भीष्मोऽस्माकं महाहवे। एकस्तस्थौ नरव्याघ्रो गिरि-र्मेरुरिवाचल ॥ ३० ॥ आददानो रणे प्राणान् सविता शिशिरा-त्यये। गभस्तिभिरिवादित्यस्तस्थौ हेममरीचिमान् ॥ ३१ ॥ स मुमोच महेष्वास शरसङ्घाननेकश। निघ्नन्नमित्रान् समरे वज्र-पाणिरिवासुरान् ॥ ३२ ॥ ते वध्यमाना भीष्मेण प्रजहुस्त महा-हवे। स्वयूथादिव त यूथान् मुक्तानग्निमिव दारुणा ॥ ३३ ॥ तमेकमुपलभ्यैको हृष्ट पुष्ट परन्तप। दुर्य्योधनप्रियो युक्त पाण्डवान् वह्नयोपयत ॥ ३४ ॥ जीव तदुत्थित त्यक्त्वा भयञ्च स महाहवे। पातयामास सैन्यानि पाण्डवाना विशाम्पते ॥ ३५ ॥ प्रहरन्तमनीकानि पिता देवव्रतस्तव। दृष्ट्वा सेनापतिं भीष्मो वेगेन स समभ्ययात ॥ ३६ ॥ स भीष्म शरजालेन महता सम-वाकिरत। श्वेतञ्चापि तथा भीष्म शरौघै समवाकिरत ॥ ३७ ॥ तौ वृषाविव नर्द्दन्तौ मत्ताविव महाद्विपौ। व्याघ्राविव सुसंरब्धौ अन्योन्यमभिजघ्नतु ॥ ३८ ॥ अस्त्रैरस्त्राणि सवार्य्य ततस्तौ पुरुष-र्षभौ। भीष्म श्वेतश्च युयुधे परस्परवधैषिणौ ॥ ३९ ॥ एकाह्ना निर्द्दहेत भीष्म पाण्डवानामनीकिनीम्। शरै परमसक्रुद्ध श्वेतो यदि न पालयेत ॥ ४० ॥ पितामह ततो दृष्ट्वा श्वेतेन विमुखी

कृतम्। प्रहर्षं पाण्डवा जग्मुः पुत्रास्ते विमना ह्यभूत ॥४१॥ ततो
दुर्योधनः क्रुद्धः पार्थिवैः परिवारितः। ससैन्यः पाण्डवानीक-
मभ्यद्रवत सयुगे ॥ ४२ ॥ श्वेतो गाङ्गेयमुत्सृज्य तव पुत्रस्य
वाहिनीम्। नाशयामास वेगेन वृक्षान् वायुरिवौजसा ॥ ४३ ॥
द्रावयित्वा चमूं त्वैव वैराटिः क्रोधमूर्च्छितः। आयात स महाराज
यत्र भीष्मो व्यवस्थितः ॥ ४४ ॥ तौ तत्रापि गतौ राजन् शर-
दीप्तौ महाबलौ। अयुध्येतां महात्मानौ यथा वा वृत्रवासवौ
॥ ४५ ॥ अन्योऽन्यन्तु महाराज परस्परवधैषिणौ। निगृह्य
कार्मुकं श्वेतो भीष्मं विव्याध सप्तभिः ॥ ४६ ॥ पराक्रमं तत-
स्तस्य पराक्रम्य पराक्रमी। तरसा वारयामास मत्तो मत्तमिव
द्विपम् ॥ ४७ ॥ आजघान ततो भीष्मं श्वेतः क्षत्रियनन्दन। तं
प्रत्यविध्यद्दशभिर्भीष्मः शान्तनवस्तथा ॥ ४८ ॥ स विद्धस्तेन
बलवान्नाकम्पत यथाचलः। श्वेतः शान्तनवं भूयः शरैः सन्नत
पर्वभिः ॥ ४९ ॥ विव्याध पञ्चविंशत्या तदद्भुतमिवाभवत्।
प्रहस्य च रणे श्वेतः सृक्किणी परिसंलिहन् ॥ ५० ॥ धनुश्चिच्छेद
भीष्मस्य दशभिर्दशधा शरैः। सन्धाय विशिखञ्चैव शरं लोम-
प्रवाहितम् ॥ ५१ ॥ उन्ममाथ ततस्तालं ध्वजशीर्षं महात्मनः।
केतुं निपतितं दृष्ट्वा भीष्मस्य तनयास्तव ॥ ५२ ॥ हतं भीष्मं
ममन्यन्त श्वेतस्य वशमागतम्। पाण्डवा अपि संहृष्टा दध्मु
शङ्खान् समन्ततः ॥ ५३ ॥ भीष्मस्य पतितं केतुं दृष्ट्वा तालं
महात्मनः। ततो दुर्योधनः क्रोधात् स्वमनीकमचोदयत् ॥ ५४ ॥
यत्तात भीष्मं परिच्छन्न रक्षमाणाः समन्ततः। तानूचे पश्यमाना-
स्तान् श्वेतोऽस्तमथवाप्स्यति ॥ ५५ ॥ भीष्मं शान्तनवं शूर-
स्तथा सत्यं ब्रवीमि ते। राजस्तु वचनं श्रुत्वा त्वरमाणा महा
रथाः ॥ ५६ ॥ बलेन चतुरङ्गेन गाङ्गेयमनुपालयन्। वाह्लीकः
कृतवर्मा च कृपः शल्यश्च भारत ॥ ५७ ॥ जारासन्धिर्विकर्णश्च

चित्रसेनो विविंशतिः । त्वरमाणास्त्वराकाले परिवार्य्य समन्ततः ॥ ५८ ॥ शरवृष्टिं सुवह्लां श्वेतस्योपर्य्यपातयन् । तान् क्रुद्धान् निशितैर्बाणैस्त्वरमाणो महाबलः ॥ ५९ ॥ अवारयदमेयात्मा दर्शयन् पाणिलाघवम् । स निवार्य्य च तान् सर्व्वान् केशरी कुञ्जरानिव ॥ ६० ॥ महता शरवर्षेण भीष्मस्य धनुराच्छिनत् । ततोऽन्यद्धनुरादाय भीष्मः शान्तनवो युधि ॥ ६१ ॥ श्वेतं विव्याध राजेन्द्र कङ्कपत्रैः शिलीमुखैः । ततः सेनापतिः क्रुद्धो भीष्मं बहुभिरायसैः ॥ ६२ ॥ विव्याध समरे राजन् सर्व्वलोकस्य पश्यतः । ततः प्रव्यथितो राजा भीष्मं दृष्ट्वा निवारितम् ॥ ६३ ॥ प्रवीरं सर्व्वलोकस्य श्वेतेन युधि वै तदा । निष्टानकश्च सुमहांस्तव सैन्यस्य चाभवत् ॥ ६४ ॥ तं वीरं त्वरितं दृष्ट्वा श्वेतेन शरविक्षतम् । हतं श्वेतेन मन्यन्त श्वेतस्य वशमागतम् ॥ ६५ ॥ ततः क्रोधवशं प्राप्तः पिता देवव्रतस्तव । ध्वजमुन्मथितं दृष्ट्वा तां च सेनां निवारिताम् ॥ ६६ ॥ श्वेतं प्रति महाराज व्यसृजत् सायकान् बहून् । तानावार्य्य रणे श्वेतो भीष्मस्य रथिनां वरः ॥ ६७ ॥ धनुश्चिच्छेद भल्लेन पुनरेव पितुस्तव । उत्सृज्य कार्म्मुकं राजन् गाङ्गेयः क्रोधमूर्च्छितः ॥ ६८ ॥ अन्यत् कार्म्मुकमादाय विपुलं बलवत्तरम् । तत्र सन्धाय विपुलान् भल्लान् सप्त शिलाशितान् ॥ ६९ ॥ चतुर्भिश्चतुरश्चाश्वान् श्वेतस्य पृतनापतेः । ध्वजं द्वाभ्याञ्च चिच्छेद सप्तमेन च सारथेः ॥ ७० ॥ शिरश्चिच्छेद भल्लेन संक्रुद्धो लघुविक्रमः । हताश्वसूतात् स रथादवप्लुत्य महारथः ॥ ७१ ॥ अमर्षवशमापन्नो व्याकुलः समपद्यत । विरथं रथिनां श्रेष्ठं श्वेतं दृष्ट्वा पितामहः ॥ ७२ ॥ ताडयामास निशितैः शरसङ्घैः समन्ततः । स ताड्यमानः समरे भीष्मचापच्युतैः शरैः ॥ ७३ ॥ स्वरथे धनुरुत्सृज्य शक्तिं जग्राह काञ्चनीम् । ततः शक्तिं रणे घोरां सशीलोग्रां महाभयाम् ॥७४॥ कालदण्डोपमा

घोरा मृत्योश्च शमनञ्चमाम्। अब्रवीच्च तदा श्वेतो भीष्म शान्त नव रणे ॥ ७५ ॥ तिष्ठेदानीं सुसंरब्ध पश्य मां पुरुषोत्तम। एवमुक्त्वा महेष्वासो भीष्मं युधि पराक्रमी ॥ ७६ ॥ ततः शक्तिं प्रमेयात्मा चिक्षेप भुजगोपमाम्। पाण्डवार्थं पराक्रान्तस्त्वानथ मिक्कीर्षति ॥ ७७ ॥ हाहाकारो महानासीत् पुत्राणां ते विशांपते। दृष्ट्वा शक्तिं महाघोरां मृत्योर्दण्डसमप्रभाम् ॥ ७८ ॥ श्वेतस्य करनिर्मुक्तां निर्मुक्तोरगसन्निभाम्। अपतत् सहसा राजन् महोल्केव नभस्तलात् ॥ ७९ ॥ ज्वलन्तीमन्तरीक्षे तां ज्वालाभिरिव संवृताम्। असम्भ्रान्तस्तदा राजन् पिता देवव्रतस्तव ॥ ८० ॥ अष्टभिर्नवभिर्भीष्मः शक्तिं चिच्छेद पत्रिभिः। उत्कृष्टहेमविकृतां निकृतां निशितैः शरैः ॥ ८१ ॥ उच्चुक्रुशुस्ततः सर्वे तावका भरतर्षभ। शक्तिं विनिहतां दृष्ट्वा वैराटिः क्रोधमूर्च्छितः ॥ ८२ ॥ कालोपहतचेतास्तु कर्त्तव्यं नाभ्यजानत। क्रोधसमूर्च्छितो राजन् वैराटिः प्रहसन्निव ॥ ८३ ॥ गदां जग्राह संहृष्टो भीष्मस्य निधनं प्रति। क्रोधसंरक्तनयनो दण्डपाणिरिवापरः ॥ ८४ ॥ भीष्मं समभिदुद्राव जलौघ इव पर्वतम्। तस्य वेगमसम्बाध मत्वा भीष्मः प्रतापवान् ॥ ८५ ॥ प्रभाववित् प्रमोचार्थं सहसा धरणीं गतः। श्वेतः क्रोधसमाविष्टो भ्रामयित्वा महागदाम् ॥ ८६ ॥ रथे भीष्मस्य चिक्षेप यथा देवो महेश्वरः। तया भीष्मनिपातिन्या सरथो भस्मसात् कृतः ॥ ८७ ॥ सध्वजः सहसूतेन साश्वः सहयुगन्धरः। विरथं रथिनां श्रेष्ठं श्वेतं दृष्ट्वा पदातिनम् ॥ ८८ ॥ अभ्यधावन्त सहसा शल्यप्रभृतयो रथाः। ततोऽन्यं रथमास्थाय धनुर्विस्फार्य दुर्मनाः ॥ ८९ ॥ शनकैरभ्ययाच्छ्वेतं भीष्मो दृष्ट्वा रथोत्तमम्। एतस्मिन्नन्तरे भीष्मः शुश्राव विपुलां गिरम् ॥ ९० ॥ आकाशोदीरितां दिव्यामात्मनो हितसंश्रयाम्। भीष्म भीष्म महाबाहो शीघ्रं यत्न कुरुष्व वै ॥ ९१ ॥

एष ह्यस्य जये कालो निर्दिष्टो विश्वयोनिना। एतत् श्रुत्वा तु वचनं देवदूतेन भाषितम् ॥ ९२ ॥ सम्प्रहृष्टमना भूत्वा वधे तस्य मनो दधे। विरथं रथिनां श्रेष्ठं श्वेतं दृष्ट्वा पदातिनम् ॥ ९३ ॥ सहितास्तु न्यवर्त्तन्त परीप्सन्तो महारथाः। सात्यकिर्भीमसेनश्च धृष्टद्युम्नश्च पार्षतः ॥ ९४ ॥ कैकेया धृष्टकेतुश्च अभिमन्युश्च वीर्य्यवान्। एतानापततो दृष्ट्वा द्रोणशल्यकृपैः सह ॥९५॥ अवारयदमेयात्मा वायुवेगानिवाचलः। सन्निरुद्धेषु सर्वेषु पाण्डवेषु महात्मसु ॥ ९६ ॥ श्वेतः खड्गमथाकृष्य भीष्मस्य धनुराच्छिनत्। तदपास्य धनुश्छिन्नं त्वरमाणः पितामहः ॥ ९७ ॥ देवदूतवचः श्रुत्वा वधे तस्य मनो दधे। ततः प्रवार्य्यमाणस्तु पिता देवव्रतस्तव ॥ ९८ ॥ अन्यत् कार्मुकमादाय त्वरमाणो महारथः। क्षणेन सज्यमकरोत् शक्रचापसमप्रभम् ॥ ९९ ॥ पिता ते भरतश्रेष्ठ श्वेतं दृष्ट्वा महारथम्। वृतन्तु तैर्नरव्याघ्रैर्भीमसेनपुरोगमैः ॥ १०० ॥ अभ्यवर्त्तत गाङ्गेयः श्वेतं सेनापतिं द्रुतं। आपतन्तं ततो भीष्मं भीमसेनः प्रतापवान् ॥ १०१ ॥ आजघ्ने विशिखैः षष्ट्या सेनान्यश्च महारथः। अभिमन्युश्च समरे पिता देवव्रतस्तव ॥ १०२ ॥ वारयित्वा शरैर्घोरैरन्यानपि महारथान्। आजघ्ने भरतश्रेष्ठ त्रिभिः सन्नतपर्वभिः ॥ १०३ ॥ सात्यकिञ्च शतेनाजौ भरतानां पितामहः। धृष्टद्युम्नञ्च विंशत्या कैकेयञ्चापि पञ्चभिः ॥ १०४ ॥ तांश्च सर्वान् महेष्वासान् पिता देवव्रतस्तव। वारयित्वा शरैर्घोरैः श्वेतमेवाभिदुद्रुवे ॥ १०५ ॥ ततः शरं मृत्युसमं भारसाधनमुत्तमम्। विकृष्य बलवान् भीष्मः समधत्त दुरासदम् ॥ १०६ ॥ ब्रह्मास्त्रेण सुसंयुक्तं तं शरं लोमवाहिनम्। ददृशुर्देवगन्धर्वाः पिशाचोरगराक्षसाः ॥ १०७ ॥ स तस्य कवचं भित्त्वा ज्वलदग्निसमौजसः। जगाम धरणीं बाणो महाशनिरिवोज्ज्वलन् ॥१०८॥ अस्तं गच्छन्निवादित्यः प्रभामादाय

सत्वरः। एवं जीवितमादाय श्वेतदेहाज्जगाम सः॥ १०९॥ तं भीष्मेण नरव्याघ्रं तथा विनिहतं युधि। प्रपतन्तमपश्याम गिरेः शृङ्गमिव च्युतम्॥ ११०॥ अशोचन् पाण्डवाः सर्वे क्षत्रिया ये महारथाः। प्रहृष्टास्तु सुताः सर्वे कुरवश्चापि सर्वशः॥ १११॥ ततो दुःशासनो राजन् श्वेतं दृष्ट्वा निपातितम्। वादित्रनिनदै- र्घोरैर्नृत्यन्ति स्म समन्ततः॥ ११२॥ तस्मिन् हते महेष्वासे भीष्मेणाहवशोभिना। प्रावेपन्त महेष्वासाः शिखण्डिप्रमुखा रथा॥ ११३॥ ततो धनञ्जयो राजन् वार्ष्णेयश्चापि सर्वश। अवहारं शनैश्चक्रुर्निहते वाहिनीपतौ॥ ११४॥ ततोऽवहारं सैन्याना तव तेषाञ्च भारत। तावकानां परेषाञ्च नदताञ्च मुहु- र्मुहुः॥ ११५॥ पार्था विमनसो भूत्वा प्राविशन्त महारथा। चिन्तयन्तो वधं घोरं द्वैरथेन परन्तप॥ ११६॥

इति भीष्मपर्वणि भीष्मवधपर्वणि श्वेतवधे अष्टचत्वारिंशोऽध्यायः॥ ४८॥

---

धृतराष्ट्र उवाच। श्वेते सेनापतौ तात संग्रामे निहते परैः। किमकुर्वन् महेष्वासाः पाञ्चालाः पाण्डवैः सह॥ १॥ सेनापतिं समाकर्ण्य श्वेतं युधि निपातितम्। तदर्थं यततांश्चापि परेषां प्रपलायिनाम्॥ २॥ मनः प्रीणाति मे वाक्यं जयं सञ्जय शृण्वतः। प्रत्यवायं चिन्तयतो लज्जां प्राप्नोति मे न हि॥ ३॥ हर्षमानोऽनुरक्तश्च वृद्धः कुरुपतिः सदा। कृतवैरस्तदा तेन पितु पुत्रेण धीमता॥ ४॥ तस्योद्वेगात् भयाच्चापि संश्रित पाण्डवान् पुरा। स सर्वस्वं परित्यज्य दुःखं संचिन्त्य तिष्ठति॥ ५॥ पाण्ड्याना ममापि दुर्गदेशं प्रविश्य च। सपत्नात् सततो बाध-

माथ्यैवन्तिमनुष्ठित ॥ ६ ॥ आश्रयं वै तदा तेषां पुरा राजा सुदुर्मति। ततो युधिष्ठिर मत्तया कथ सञ्जय सूदित ॥ ७ ॥ प्रविष्ट सगति चुद्र पाताले पुरुषाधमे। न युद्धं रोचयेत् भीष्मो न चाचार्य्य कथञ्चन ॥ ८ ॥ न कृपो न च गान्धारी नाहं सञ्जय रोचये। न वासुदेवो वार्ष्णेयो धर्म्मराजय पाण्डव ॥९॥ न भीमो नार्जुनश्चैव न यमौ पुरुषर्षभौ। वार्य्यमाणो मया नित्यं गान्धार्य्या विदुरेण च ॥ १० ॥ जामदग्न्येन रामेण व्यासेन च महात्मना। दुर्य्योधनो दुष्टमना नित्यमेव हि सञ्जय ॥ ११ ॥ कर्णस्य मतमास्थाय सौबलस्य च पापकृत। दुःशासनेन च तथा पाण्डवानभ्यसूयत ॥ १२ ॥ तमहं व्यसने घोरे मन्ये प्राप्तन्तु सञ्जय। श्वेतस्य च विनाशेन भीष्मस्य विजयेन च ॥ १३ ॥ सङ्क्रुद्ध कृष्णसहित पार्थ किमकरोत युधि। अर्ज्जुनाद्धि भयं भूयस्तन्मे तात न शाम्यति ॥ १४ ॥ स हि शूरश्च कौन्तेयः चिप्रकारी धनञ्जय। मन्ये शरै शरीराणि प्रमथिष्यति यात्रवान् ॥ १५ ॥ इन्द्र इन्द्रानुजसममुपेन्द्रसदृश रणे। अमोघक्रोधसङ्कल्प दृष्ट्वा व किमभूमन ॥ १६ ॥ स चैव वेदविच्छूरो ज्वलनार्कसमद्युति। ऐन्द्रास्त्रविदमेयात्मा प्रापतत् समितिञ्जय ॥ १७ ॥ वज्रसंस्पर्शरूपाणामस्त्राणामेरितारिषु। मौर्व्याचेप हस्तस्तु कौन्तेयो यो महारथ ॥ १८ ॥ स सञ्जय महाप्राज्ञो द्रुपदस्यात्मजो वली। धृष्टद्युम्न किमकरोत श्वेते युधि निपातिते ॥ १९ ॥ पुरा चैवापराधेन वधेन च चमूपते। मन्ये मन प्रजज्वाल पाण्डवाना महात्मनाम् ॥ २० ॥ तेषां क्रोध चिन्तयंस्तु अहःसु च निशासु च। न शान्तिमधिगच्छामि दुर्य्योधनकृतेन हि। कथ चाभूत् महायुद्ध सर्वमाचच्व सञ्जय ॥ २१ ॥

सञ्जय उवाच। शृणु राजन् स्थिरो भूत्वा तवापनयनो महान्। न च दुर्य्योधने दोषमिममाधातुमर्हसि ॥ २२ ॥

गतोदके सेतुबन्धो यादृक् तादृक् मतिस्तव। सन्दीप्ते भवने
यद्वत् कूपस्य खननं यथा ॥ २३ ॥ गतपूर्वाह्णसमये तस्मिन् महति
दारुणे। सेनापतौ हते शूरे भीमसेन युधि भारत ॥ २४ ॥
कृतवर्मणा च सहितं दृष्ट्वा शल्यमवस्थितम्। वैराटिः समरश्लाघी
शङ्खः परबलार्दनः ॥ २५ ॥ सद्यः क्रोधात् प्रजज्वाल हविषा
हव्यवाडिव। स विस्फार्य महच्चापं शक्रचापोपमं बली ॥ २६ ॥
अभ्यधावज्जिघांसुर्वै शङ्खो मद्राधिप युधि। महता रथवंशेन
समन्तात् परिवारितः ॥ २७ ॥ सृजन् बाणमयं वर्षं प्राया-
च्छल्यरथं प्रति। तमापतन्तं सम्प्रेक्ष्य मत्तवारणविक्रमम् ॥२८॥
तावकानां रथाः सप्त समन्तात् पर्यवारयन्। मद्रराजं परीप्-
सन्तो मृत्योर्दंष्ट्रान्तरङ्गतम् ॥ २८ ॥ ततो भीष्मो महाबाहु-
र्विनद्य जलदो यथा। तालमात्रं धनुर्गृह्य शङ्खमभ्यद्रवद्रणे
॥ २९ ॥ तमुद्यतं समीक्ष्याथ महेष्वासं महारथम्। सन्त्रस्ता
पाण्डवी सेना वातवेगहतेव नौः ॥ ३० ॥ तत्रार्जुनः सन्त्वरितः
शङ्खस्यासीत् पुरःसरः। भीष्माद्रक्ष्योऽयमद्येति ततो युद्धमवर्त्तत
॥ ३१ ॥ हाहाकारो महानासीद्योधानां युधि युध्यताम्।
तेजस्तेजसि संपृक्तमित्येवं विस्मयं ययुः ॥ ३२ ॥ अथ शल्यो
गदापाणिरवतीर्य्य महारथात्। शङ्खस्य चतुरो वाहानहन-
द्भरतर्षभ ॥ ३३ ॥ स हताश्वाद्रथात्तूर्णं खड्गमादाय विद्रुतः।
बीभत्सोः स्यन्दनं प्राप ततः शान्तिमवाप च ॥ ३४ ॥ ततो
भीष्मरथात्तूर्णमुत्पतन्ति पतत्त्रिणः। यैरन्तरिक्षं भूमिश्च सर्व्वतः
समवस्तृतम् ॥ ३५ ॥ पाञ्चालानथ मत्स्यांश्च केकयांश्च प्रभद्रकान्।
भीष्मः प्रहरतां श्रेष्ठः पातयामास पत्रिभिः ॥ ३६ ॥ उत्सृज्य
समरे तूर्णं पाण्डवं सव्यसाचिनम्। अभ्यद्रवत पाञ्चाल्यं द्रुपदं
सेनया वृतम् ॥ ३७ ॥ प्रियं सम्बन्धिनं राजञ्छरानवकिरन्
बहून्। अग्निनेव प्रदग्धानि वनानि शिशिरात्यये ॥ ३८ ॥ स्थ-

दग्धान्यदृश्यन्त सैन्यानि द्रुपदस्य च । अतिष्ठत रणे भीष्मो विधूम इव पावकः ॥ ३९ ॥ मध्यन्दिने यथादित्यं तपन्तमिव तेजसा । न शेकुः पाण्डवेयस्य योधा भीष्मं निरीक्षितुम् ॥ ४० ॥ वीक्षाञ्चक्रुः समन्तात्ते पाण्डवा भयपीड़िताः । त्रातारं नाध्यगच्छन्त गावः शीतार्दिता इव ॥ ४१ ॥ हतविप्रद्रुते सैन्ये निरुत्साहे विमर्द्दिते । हाहाकारो महानासीत् पाण्डुसैन्येषु भारत ॥ ४२ ॥ ततो भीष्मः शान्तनवो नित्यं मण्डलकार्मुकः । मुमोच बाणान्दीप्ताग्रानहीनाशीविषानिव ॥ ४३ ॥ शरैरेकायनीकुर्वन्दिशः सर्वा यतव्रतः । जघान पाण्डवरथानादिश्यादिश्य भारत ॥ ४४ ॥ ततः सैन्येषु भग्नेषु मथितेषु च सर्वशः । प्राप्ते चास्तं दिनकरे न प्राज्ञायत किञ्चन ॥ ४५ ॥ भीष्मञ्च समुदीर्यन्तं दृष्ट्वा पार्था महाहवे । अवहारमकुर्वन्त सैन्यानां भरतर्षभ ॥ ४६ ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि सङ्कुलयुद्धे प्रथमदिवसावहारे एकोनचत्वारिंशोऽध्यायः ॥ ४९ ॥



सञ्जय उवाच । कृतेऽवहारे सैन्यानां प्रथमे भरतर्षभ । भीष्मे च युधि संरब्धे हृष्टे दुर्य्योधने तथा ॥ १ ॥ धर्म्मराजस्ततस्तूर्णमभिगम्य जनार्दनम् । भ्रातृभिः सहितः सर्वैः सर्वैश्चैव जनेश्वरैः ॥ २ ॥ शुचा परमया युक्तश्चिन्तयानः पराजयम् । वार्ष्णेयमब्रवीद्राजन्दृष्ट्वा भीष्मस्य विक्रमम् ॥ ३ ॥ कृष्ण पश्य महेष्वासं भीष्मं भीमपराक्रमम् । शरैर्दहन्तं सैन्यं मे भीष्मं कक्षमिवानलम् ॥ ४ ॥ कथमेनं महात्मानं शक्यामः प्रतिवीक्षितुम् । लेलिह्यमानं सैन्यं मे हविष्मन्तमिवानलम् ॥ ५ ॥ एतं हि

पुरुषव्याघ्रं धनुष्मन्तं महाबलम्। दृष्ट्वा विप्रद्रुतं सैन्यं मदीयं मार्गणाहतम् ॥ ६ ॥ शक्यो जेतुं यमः क्रुद्धो वज्रपाणिश्च सयुगे। वरुणः पाशहस्तोऽपि कुबेरो वा गदाधरः ॥ ७ ॥ न तु भीष्मो महातेजाः शक्यो जेतुं महारथः। सोऽहमेवं गते मग्नो भीष्मागाधे जले प्लवः ॥ ८ ॥ आत्मनो बुद्धिदौर्बल्याद्भीष्ममासाद्य केशव। वनं यास्यामि गोविन्द श्रेयो मे तत्र जीवितुम् ॥ ९ ॥ न त्विमान् पृथिवीपालान्दातुं भीष्माय मृत्यवे। क्षपयिष्यति मे सेनां कृष्ण भीष्मो महास्त्रवित् ॥ १० ॥ यथानलं प्रज्वलितं पतङ्गाः समभिद्रुताः। विनाशायैव गच्छन्ति तथा मे सैनिका जनाः ॥ ११ ॥ क्षयं नीतोऽस्मि वार्ष्णेय राज्यहेतोः पराक्रमी। भ्रातरश्चैव मे वीराः कर्षिताः शरपीडिताः ॥ १२ ॥ मत्कृते भ्रातृसौहार्दाद्राज्याद्भ्रष्टास्तथा सुखात्। जीवितं बहु मन्यन्ते जीवितं ह्यद्य दुर्लभम् ॥ १३ ॥ जीवितस्यावशेषेण तपस्तप्स्यामि दुश्चरम्। न घातयिष्यामि रणे मित्राणीमानि केशव ॥ १४ ॥ रथान्मे बहुसाहस्रान्दिव्यैरस्त्रैर्महाबलः। घातयत्यनिशं भीष्मः प्रवराणां प्रहारिणाम् ॥ १५ ॥ किन्नु कृत्वा कृतं मे स्याद्ब्रूहि माधव माचिरम्। मध्यस्थमिव पश्यामि समरे सव्यसाचिनम् ॥ १६ ॥ एको भीमः परं शक्त्या युध्यत्येष महाबलः। केवलं बाहुवीर्येण क्षत्रधर्ममनुस्मरन् ॥ १७ ॥ गदया वीरघातिन्या यथोत्साहं महामनाः। करोत्यसुकरं कर्म गजाश्वरथपत्तिषु ॥ १८ ॥ अलमेष क्षयं कर्तुं परसैन्येषु मारिष। आर्जवेनैव युद्धेन वीरो वर्षशतेन वा ॥ १९ ॥ एकोऽस्त्रवित् सखा तेऽयं सोऽप्यस्मान् समुपेक्षते। निर्दह्यमानान् भीष्मेण द्रोणेन च महात्मना ॥ २० ॥ दिव्यान्यस्त्राणि भीष्मस्य द्रोणस्य च महात्मनः। धक्ष्यन्ते क्षत्रियान् सर्वान् प्रयुक्तानि पुनः पुनः ॥ २१ ॥ कृष्ण भीष्मः सुसंरब्धः सहितः सर्वपार्थिवैः। क्षपयिष्यति नो नूनं

याद्दशोऽस्य पराक्रमः ॥ २२ ॥ तन्तु पश्य महेष्वासं योगीश्वर महारथम्। यो भीष्मं समयेत्संख्ये दावाग्निं जलदो यथा ॥ २३ ॥ तव प्रसादाद्गोविन्द पाण्डवा निहतद्विषः । स्वराज्यमनुसंप्राप्ता मोदिष्यन्ति सबान्धवाः ॥ २४ ॥ एवमुक्त्वा ततः पार्थो ध्यायन्नास्ते महामना । चिरमन्तर्मना भूत्वा शोकोपहतचेतनः ॥ २५ ॥ शोकार्त्तं पाण्डवं दृष्ट्वा दुःखेन हतचेतसम्। अब्रवीत्तत्र गोविन्दो हर्षयन् सर्वपाण्डवान् ॥ २६ ॥ मा शुचो भरतश्रेष्ठ न त्वं शोचितुमर्हसि। यत्र ते भ्रातरः शूराः सर्वे लोकस्य धन्विनः ॥ २७ ॥ अहञ्च प्रियकृद्राजन् सात्यकिश्च महारथः। विराटद्रुपदौ वृद्धौ धृष्टद्युम्नश्च पार्षतः ॥ २८ ॥ तथैव सबला सर्वे राजानो राजसत्तम। त्वत्प्रसादप्रतीक्षा वै त्वद्भक्ताश्च विशाम्पते ॥ २९ ॥ एष ते पार्षतो नित्यं हितकामः प्रिये रतः। सैनापत्यमनुप्राप्तो धृष्टद्युम्नो महारथः ॥ ३० ॥ शिखण्डी च महाबाहो भीष्मस्यान्तकरः किल। एतच्छ्रुत्वा महाराजो धृष्टद्युम्नं महारथम् ॥ ३१ ॥ अब्रवीत्समितौ तस्यां वासुदेवस्य शृण्वतः। धृष्टद्युम्न निबोधेदं यत्त्वां वक्ष्यामि पार्षत ॥ ३२ ॥ नातिक्रम्यं भवेत्तच्च वचनं मम भाषितम्। भवान् सेनापतिर्मह्यं वासुदेवेन सम्मितः ॥ ३३ ॥ कार्त्तिकेयो यथा नित्यं देवानामभवत्पुरा। तथा त्वमपि पाण्डूनां सेनानीर्भरतर्षभ ॥ ३४ ॥ स त्वं पुरुषशार्दूल विक्रम्य जहि कौरवान्। अहं च त्वानुयास्यामि भीमः कृष्णश्च मारिष ॥ ३५ ॥ माद्रीपुत्रौ च सहितौ द्रौपदेयाश्च दंशिताः। ये चान्ये पृथिवीपालाः प्रधानाः पुरुषर्षभ ॥ ३६ ॥ ततस्तु हर्षयन् सर्वान् धृष्टद्युम्नोऽभ्यभाषत। अहं द्रोणान्तकः पार्थ विहितः शम्भुना पुरा ॥ ३७ ॥ रणे भीष्मं तथा द्रोणं कृपं शल्यं जयद्रथम्। सर्वानद्य रणे दृप्तान् प्रतियोत्स्यामि पार्थिवान् ॥ ३८ ॥ अथोत्क्रुष्टं महावीर्यैः पाण्डवैर्युद्धदुर्मदैः। समुद्यते पार्थिवेन्द्रे पार्षते

मधुसूदने ॥ ३९ ॥ अब्रवीच्च ततः पार्थः पार्षतं पृतनापतिम् ।
व्यूहः क्रौञ्चारुणो नाम सर्वशत्रुनिबर्हणः ॥ ४० ॥ यं बृहस्पति-
रिन्द्राय तदा देवासुरेऽब्रवीत् । तं यथावत् प्रतिव्यूह परा-
नीकविनाशनम् ॥ ४१ ॥ अदृष्टपूर्वं राजानः पश्यन्तु कुरुभिः
सह । तथोक्तः स नृदेवेन जिष्णुर्वज्रभृतेव ह ॥ ४२ ॥ प्रभाते
सर्वसैन्यानामग्रे चक्रे धनञ्जयम् । आदित्यपथगः केतुस्तस्या-
द्भुतमनोरमः ॥ ४३ ॥ शासनात् पुरुहूतस्य निर्मितो विश्व-
कर्मणा । इन्द्रायुधसवर्णाभिः पताकाभिरलङ्कृतः ॥ ४४ ॥ आका-
शग इवाकाशे गन्धर्वनगरोपमः । नृत्यमान इवाभाति रथचर्यासु
मारिष ॥ ४५ ॥ तेन रत्नवता पार्थः स च गाण्डीवधन्वना ।
बभूव परमोपेतः स्वयम्भूरिव भानुना ॥ ४६ ॥ शिरोऽभूद्द्रुपदो
राजा महत्या सेनया वृतः । कुन्तिभोजश्च चैद्यश्च चक्षुषास्तां
जनेश्वरौ ॥ ४७ ॥ दाशार्णकाः प्रयागाश्च दाशेरकगणैः सह ।
अनूपकाः किराताश्च ग्रीवायां भरतर्षभ ॥ ४८ ॥ पटच्चरैश्च
हुण्डैश्च राजन् पौरवकैः सह । निषादैः सहितश्चैव पृष्ठमासी-
द्युधिष्ठिरः ॥ ४९ ॥ पक्षौ तु भीमसेनश्च धृष्टद्युम्नश्च पार्षतः ।
द्रौपदेयाभिमन्युश्च सात्यकिश्च महारथः ॥ ५० ॥ पिशाचा दार-
दाश्चैव पौण्ड्राः कुण्डीविषैः सह । मडका लडकाश्चैव तङ्गणाः
परतङ्गणाः ॥ ५१ ॥ वाह्लिकास्तित्तिराश्चैव चोलाः पाण्ड्याश्च
भारत । अरगास्तुम्बुमाश्चैव वत्साश्च सहनाकुलैः ॥ ५२ ॥ नकुलः
सहदेवश्च वामं पार्श्वमुपाश्रितौ । रथानामयुतं पक्षौ शिरस्तु
नियुतं तथा ॥ ५३ ॥ पृष्ठमर्बुदमेवासीत् सहस्राणि च विंशतिः ।
ग्रीवायां नियुतं चापि सहस्राणि च सप्ततिः ॥ ५४ ॥ पक्ष-
कोटिषु पक्षेषु पक्षान्तेषु च वारणाः । जग्मुः परिवृता राजन्
ज्वलन्त इव पर्वताः ॥ ५५ ॥ जघनं पालयामास विराटः सह
केकयैः । काशिराजश्च शैब्यश्च रथानामयुतैस्त्रिभिः ॥ ५५ ॥

एवमेतं महाव्यूहं व्यूह्य भारत पाण्डव । सूर्य्योदयनमिच्छन्त
स्थिता युद्धाय दंशिता ॥ ५७ ॥ तेषामादित्यवर्णानि विमलानि
महान्ति च । श्वेतच्छत्राण्यशोभन्त वारणेषु ध्वजेषु च ॥ ५८ ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि क्रौञ्चव्यूहनिर्माणे
पञ्चाशोऽध्यायः ॥ ५० ॥

---

सञ्जय उवाच। क्रौञ्चं दृष्ट्वा महाव्यूहमभेद्यं तनयस्तव।
व्यूढं दृष्ट्वा महाघोरं पाण्डवेनामितौजसा ॥ १ ॥ आचार्य्यमुप
सङ्गम्य कृपं शल्यञ्च मारिष । सौमदत्तिं विकर्णञ्च सोऽश्व
त्थामानमेव च ॥ २ ॥ दुःशासनादीन् भ्रातॄंश्च सर्वानेव च भारत।
अन्यांश्च सुबहून् शूरान् युद्धाय समुपागतान् ॥ ३ ॥ प्राहेदं
वचनं काले हर्षयंस्तनयस्तव। नानाशस्त्रप्रहरणाः सर्वे शास्त्रार्थ-
कोविदाः ॥ ४ ॥ एकैकशः समर्था हि यूयं सर्वे महारथाः ।
पाण्डुपुत्रान् रणे हन्तुं ससैन्यान् किमु संहताः ॥ ५ ॥ अप-
र्य्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् । पर्य्याप्तं त्विदमेतेषां बलं
भीमाभिरक्षितम् ॥ ६ ॥ संस्थाना शूरसेनाश्च वेणिका कुकुरा
स्तथा । रेचकाश्च त्रिगर्त्ताश्च मद्रका यवनास्तथा ॥ ७ ॥ शत्रु-
ञ्जयेन सहितास्तथा दुःशासनेन हि । विकर्णेन सवीरेण तथा
नन्दोपनन्दकौ ॥ ८ ॥ चित्रसेनेन सहिताः सहिता मणिभद्रकैः ।
भीष्ममेवाभिरक्षन्तु सहसैन्यपुरःसराः ॥ ९ ॥ ततो भीष्मश्च द्रोणश्च
तव पुत्राश्च मारिष । अव्यूहन्त महाव्यूहं पार्थानां प्रतिबाधने
॥ १० ॥ भीष्मः सैन्येन महता समन्तात् परिवारितः । ययौ
प्रकर्षन्महतीं वाहिनीं सुरराडिव ॥ ११ ॥ तमन्वयात् महे-
ष्वासो भरद्वाजः प्रतापवान् । कुन्तलैश्च दशार्णैश्च मागधैश्च

विश्राम्यते ॥ १२ ॥ विदर्भैर्मेकलैश्चैव कर्णप्रावरणैरपि । सहिताः
सर्वसैन्येन भीष्ममाहवशोभिनम् ॥ १३ ॥ गान्धाराः सिन्धु-
सौवीराः शिबयोऽथ वसातयः । शकुनिश्च स सैन्येन भारद्वाज-
मपालयत् ॥ १४ ॥ ततो दुर्य्योधनो राजा सहितः सर्वसोदरैः ।
अश्वातकैर्विकर्णैश्च तथा वामनकोशलैः ॥ १५ ॥ दरदैश्च वृकैश्चैव
तथा क्षुद्रकमालवैः । अभ्यरक्षत संहृष्टः पाण्डवेयस्य वाहिनीम्
॥ १६ ॥ भूरिश्रवाः शलः शल्यो भगदत्तश्च मारिष । विन्दानु-
विन्दावावन्त्यौ वामं पार्श्वमपालयन् ॥ १७ ॥ सोमदत्तः सुशर्म्मा
च काम्बोजश्च सुदक्षिणः । शतायुश्च श्रुतायुश्च दक्षिणं पक्ष-
माश्रिताः ॥ १८ ॥ अश्वत्थामा कृपश्चापि कृतवर्म्मा च सात्वतः ।
महत्या सेनया सार्द्धं सेनापृष्ठे व्यवस्थिताः ॥ १९ ॥ पृष्ठगोपाश्च
तस्यासन्नानाजनपदेश्वराः । केतुमान् वसुदानश्च पुत्रः काश्यस्य
वा विभुः ॥ २० ॥ ततस्ते तावकाः सर्वे हृष्टा युद्धाय भारत ।
दध्मुः शङ्खान् मुदा युक्ताः सिंहनादांस्तथानदन् ॥ २१ ॥ तेषां
श्रुत्वा तु हृष्टानां कुरुवृद्धः पितामहः । सिंहनादं विनद्योच्चैः
शङ्खं दध्मौ प्रतापवान् ॥ २२ ॥ ततः शङ्खाश्च भेर्य्यश्च पेश्यश्च
विविधाः परैः । आनकाश्चाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥ २३ ॥
ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ । प्रदध्मतुः शङ्खवरौ
हेमरत्नविभूषितौ ॥ २४ ॥ पाञ्चजन्यं हृषीकेशो देवदत्तं धन-
ञ्जयः । पौण्ड्रं दध्मौ महाशङ्खं भीमकर्म्मा वृकोदरः ॥ २५ ॥
अनन्तविजयं राजा कुन्तिपुत्रो युधिष्ठिरः । नकुलः सहदेवश्च
सुघोषमणिपुष्पकौ ॥ २६ ॥ काशिराजश्च शैव्यश्च शिखण्डी च
महारथः । धृष्टद्युम्नो विराटश्च सात्यकिश्च महारथः ॥ २७ ॥
पाञ्चाल्यश्च महेष्वासो द्रौपदेयाश्च पञ्च वै । सर्वे दध्मुर्महाशङ्खान्
सिंहनादांश्च नेदिरे ॥ २८ ॥ स घोषः सुमहांस्तत्र वीरैस्तै-
रुदीरितः । नभश्च पृथिवीञ्चैव तुमुलो व्यनुनादयन् ॥ २९ ॥

एवमेते महाराज प्रहृष्टाः कुरुपाण्डवाः। पुनर्युद्धाय सन्नद्धम्-
स्तापयानाः परस्परम् ॥ ३० ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि कौरवसैन्यव्यूहे
एकपञ्चाशोऽध्यायः ॥ ५१ ॥

---

धृतराष्ट्र उवाच। एवं व्यूढेष्वनीकेषु मामकेष्वितरेषु च।
कथं प्रहरतां श्रेष्ठाः सम्प्रहारं प्रचक्रिरे ॥ १ ॥
सञ्जय उवाच। एवं व्यूढेष्वनीकेषु सन्नद्धा रुचिरध्वजाः।
अपारमिव सन्दृश्य सागरप्रतिमं बलम् ॥ २ ॥ तेषां मध्ये स्थितो
राजन् पुत्रो दुर्य्योधनस्तव। अब्रवीत् तावकान् सर्वान् युध्यध्व-
मिति दंशिताः ॥ ३ ॥ ते मनः क्रूरमास्थाय समभित्यक्तजीविताः।
पाण्डवानभ्यवर्त्तन्त सर्वे एवोच्छ्रितध्वजाः ॥ ४ ॥ ततो युद्धं
समभवत्तुमुलं लोमहर्षणम्। तावकानां परेषाञ्च व्यतिषक्त-
रथद्विपम् ॥ ५ ॥ मुक्तास्तु रथिभिर्बाणा रुक्मपुङ्खाः सुतेजिताः।
सन्निपेतुरकुण्ठाग्रा नागेषु च हयेषु च ॥ ६ ॥ तथा प्रवृत्ते
सङ्ग्रामे धनुरुद्यम्य दंशितः। अभिपत्य महाबाहुर्भीष्मो भीम
पराक्रमः ॥ ७ ॥ सौभद्रे भीमसेने च अर्जुने च महारथे।
कैकेये च विराटे च धृष्टद्युम्ने च पार्षते ॥ ८ ॥ एतेषु नरवीरेषु
चेदिमत्स्येषु वा पुनः। ववर्ष शरवर्षाणि वृद्धः कुरुपितामहः
॥ ९ ॥ प्राकम्पत महाव्यूहस्तस्मिन् वीरसमागमे। सर्व्वेषामेव
सैन्यानामासीद्व्यतिकरो महान् ॥ १० ॥ सादिनो ध्वजिनश्चैव
हता प्रवरवाजिनः। विप्रयातरथानीकाः समपद्यन्त पाण्डवाः
॥ ११ ॥ अर्जुनस्तु नरव्याघ्रो दृष्ट्वा भीष्मं महारथम्। वार्ष्णेय-
मब्रवीत् क्रुद्धो याहि यत्र पितामहः ॥ १२ ॥ एष भीष्मः सुसं-
क्रुद्धो वार्ष्णेय मम वाहिनीम्। नाशयिष्यति सुव्यक्तं दुर्य्योधन-

ष्ठिते रत ॥ १३ ॥ एष द्रोण कृप शल्यो विकर्णश्च जनार्दन। धार्त्तराष्ट्रश्च सहिता दुर्योधनपुरोगमा ॥ १४ ॥ पाञ्चाला निहनिष्यन्ति रक्षिता दृढधन्विना। सोऽहं भीष्म हनिष्यामि सैन्यहेतोर्जनार्दन ॥ १५ ॥ तमब्रवीत् वासुदेवो यत्तो भव धनञ्जय। एष त्वा प्रापये वीर पितामहरथ प्रति ॥ १६ ॥ एव मुक्त्वा तत शौरी रथ त लोकविश्रुतम्। प्रापयामास भीष्मस्य रथ प्रति जनेश्वर ॥ १७ ॥ चलद्बहुपताकेन बलाकावर्ण-वाजिना। समुच्छ्रितमहाभीमनदद्वानरकेतुना ॥ १८ ॥ महता मेघनादेन रथेनादित्यवर्चसा। विनिघ्नन् कौरवानीक शूर सेनाश्च पाण्डव ॥ १९ ॥ आगच्छत रणे शीघ्र सुहृदा हर्ष-वर्द्धन। तमापतन्त वेगेन प्रभिन्नमिव कुञ्जरम् ॥ २० ॥ त्रास यान रणे शूरान् पातयन्तश्च सायकै। सैन्धवप्रमुखैर्गुप्त प्राच्य सौवीरकेकयै ॥ २१ ॥ सहसा प्रत्युदीयाय भीष्म शान्तनवो ऽर्जुनम्। को हि गाण्डीवधन्वानमन्य कुरुपितामहात् ॥ २२ ॥ द्रोणवैकर्त्तनाभ्या वा रथी सयातुमर्हति। ततो भीष्मो महा-राज कौरवाणा पितामह ॥ २३ ॥ अर्जुन सप्तसप्तत्या नारा चाना समर्पयत्। द्रोणश्च पञ्चविंशत्या कृप पञ्चशते शरै ॥ २४ ॥ दुर्योधनस्तु षष्ट्या शल्यश्च नवभि शरै। द्रौणि षष्ट्या नरव्याघ्रो विकर्णश्च त्रिभि शरै ॥ २५ ॥ सैन्धवो नवभिश्चापि शकुनि श्चापि पञ्चभि। आर्त्तायनिस्त्रिभिभल्लै राजन् विव्याध पाण्ड वम। स तैर्विद्धो महेष्वास समन्तान्निशितै शरै ॥ २६ ॥ न विव्यथे महाबाहुर्भिद्यमान इवाचल। स भीष्म पञ्चविंशत्या कृपञ्च नवभि शरै ॥ २७ ॥ द्रोण षष्ट्या नरव्याघ्र विकर्णञ्च त्रिभि शरै। आर्त्तायनि त्रिभिर्बाणै राजानञ्चापि पञ्चभि ॥ २८ ॥ प्रत्यविध्यदमेयात्मा किरीटी भरतर्षभ। त सात्यकि-र्विराटश्च धृष्टद्युम्नश्च पार्थिव ॥ २९ ॥ द्रौपदेयाभिमन्युश्च परि

धनुर्धनञ्जयम् । ततो द्रोणं महेष्वासं गाङ्गेयस्य हिते रतम् ॥ ३० ॥ अभ्यवर्त्तत पाञ्चाल्यः संयुक्तः सह सोमकैः । भीष्मस्तु रथिनां श्रेष्ठस्तूर्णं विव्याध पाण्डवम् ॥ ३१ ॥ अशीत्या निशितैर्वाणैस्ततोऽतुष्यन्त तावकाः । तेषान्तु निनदं श्रुत्वा प्रहृष्टानां प्रहृष्टवत् ॥ ३२ ॥ प्रविवेश ततो मध्यं रथसिंहः प्रतापवान् । तेषान्तु रथसिंहानां मध्यं प्राप्य धनञ्जयः ॥ ३३ ॥ चिक्रीड़ धनुषा राजन्लक्ष्यं कृत्वा महारथान् । ततो दुर्य्योधनो राजा भीष्ममाह नरेश्वरः ॥ ३४ ॥ पीड्यमानं स्वकं सैन्यं दृष्ट्वा पार्थेन संयुगे । एष पाण्डुसुतस्तात कृष्णेन सहितो वली ॥ ३५ ॥ पातयन् सर्व्वसैन्यानि मूलं नः परिकृन्तति । त्वयि जीवति गाङ्गेय द्रोणे च रथिनां वरे ॥ ३६ ॥ त्वत्कृते ह्येष कर्णोऽपि न्यस्तशस्त्रो विशाम्पते । न युध्यति रणे पार्थैर्हितकामः सदा मम ॥ ३७ ॥ स तथा कुरु गाङ्गेय यथा हन्येत फाल्गुनः । एवमुक्तस्ततो राजन् पिता देवव्रतस्तव ॥ ३८ ॥ धिक् क्षत्रधर्म्ममित्युक्त्वा प्रायात् पार्थरथं प्रति । उभौ श्वेतहयौ राजन् संस्थितौ प्रेक्ष्य पार्थिवाः ॥ ३९ ॥ सिंहनादं भृशं चक्रुः शङ्खान् दध्मुश्च मारिष । द्रौणिर्दुर्य्योधनश्चैव विकर्णश्च तवात्मज ॥ ४० ॥ परिवार्य्य रणे भीष्मं स्थिता युद्धाय मारिष । तथैव पाण्डवाः सर्व्वे परिवार्य्य धनञ्जयम् ॥ ४१ ॥ स्थिता युद्धाय महते ततो युद्धमवर्त्तत । गाङ्गेयस्तु रणे पार्थमानर्च्छन्नवभिः शरैः ॥ ४२ ॥ तमर्जुनः प्रत्यविध्यत् दशभिर्म्मर्म्मभेदिभिः । ततः शरसहस्रेण सुप्रयुक्तेन पाण्डवः ॥ ४३ ॥ अर्ज्जुनः समरश्लाघी भीष्मस्यावारयत् दिशः । शरजालं ततस्तन्तु शरजालेन पार्थिव ॥ ४४ ॥ वारयामास पार्थस्य भीष्मः शान्तनवस्तदा । उभौ परमसन्तुष्टावुभौ युद्धाभिनन्दिनौ ॥ ४५ ॥ निर्विशेषमयुध्येतां कृतप्रतिकृतैषिणौ । भीष्मचापप्रयुक्तानि शरजालानि सङ्घशः ॥ ४६ ॥ शीर्य्यमाणान्यदृश्यन्त भिन्ना-

न्यर्जुनसायकैः। तथैवार्जुनमुक्तानि शरजालानि सर्वशः ॥ ४७ ॥
गाङ्गेयशरनुन्नानि न्यपतन्त महीतले। अर्जुनः पञ्चविंशत्या भीष्म-
मार्च्छत् शितैः शरैः ॥ ४८ ॥ भीष्मोऽपि समरे पार्थं विव्याध
नवभिः शरैः। अन्योऽन्यं तौ हयान् विद्धा ध्वजौ च सुमहाबलौ
॥ ४९ ॥ रथेषां रथचक्रञ्च विक्रीड़तुररिन्दमौ। ततः क्रुद्धो
महाराज भीष्मः प्रहरतां वरः ॥ ५० ॥ वासुदेवं त्रिभिर्बाणै-
राजघान स्तनान्तरे। भीष्मचापच्युतैस्तैस्तु निविद्धो मधुसूदनः
॥ ५१ ॥ विरराज रणे राजन् सपुष्प इव किंशुकः। ततोऽर्जुनो
ऽभिसंक्रुद्धो निविद्धं प्रेक्ष्य माधवम् ॥ ५२ ॥ गाङ्गेयसारथिं सङ्ख्ये
निर्बिभेद त्रिभिः शरैः। यतमानौ ततो वीरावन्योऽन्यस्य रथं
प्रति ॥ ५३ ॥ नाशक्नुतां तदान्योऽन्यमभिसन्धातुमाहवे। मण्ड-
लानि विचित्राणि गतप्रत्यागतानि च ॥ ५४ ॥ दर्शयामासतू
राजन् सूतसामर्थ्यलाघवात्। अन्तरञ्च प्रहारेषु तर्कयन्तौ विशा-
म्पते ॥ ५५ ॥ राजन्नन्तरमार्गस्थौ स्थितावास्तां मुहुर्मुहुः। उभौ
सिंहरवोन्मिश्रशङ्खशब्दञ्च चक्रतुः ॥ ५६ ॥ तथैव चापनिर्घोषं
चक्रतुस्तौ महारथौ। तयोः शङ्खप्रणादेन रथनेमिस्वनेन च ॥ ५७ ॥
दारिता सहसा भूमिश्चकम्पे च ननाद च। न तयोरन्तरं
कश्चिद्ददृशे भरतर्षभ ॥ ५८ ॥ बलिनौ समरे शूरावन्योऽन्यसदृशा-
वुभौ। चिह्नमात्रेण भीष्मस्य प्रययुस्तत्र कौरवाः ॥ ५९ ॥ तथा
पाण्डुसुताः पार्थं चिह्नमात्रेण जज्ञिरे। तयोर्नृवरयो राजन्
दृष्ट्वा तादृक् पराक्रमम् ॥ ६० ॥ विस्मयं सर्वभूतानि जग्मुर्भारत
संयुगे। न तयोरन्तरं कश्चिद्रणे पश्यति भारत ॥ ६१ ॥ धर्मे
स्थितस्य हि यथा न कश्चिद्वृजिनं क्वचित्। उभौ हि शरजालेन
तावदृश्यौ बभूवतुः ॥ ६२ ॥ प्रकाशौ तु ततस्तूर्णं बभूवतुरुभौ
रणे। तत्र देवाः सगन्धर्वाश्चारणाश्च महर्षयः ॥ ६३ ॥ अन्योऽन्यं
प्रत्यभाषन्त तयोर्दृष्ट्वा पराक्रमम्। न शक्यौ युधि संरब्धौ जेतु-

मेतौ महारथौ॥ ६४ ॥ सदेवासुरगन्धर्व्वैर्लोकैरपि कथञ्चन। आश्चर्य्यभूतं लोकेषु युद्धमेतन्महाद्भुतम्॥ ६५ ॥ नैव चैतादृशं युद्धं भविष्यति कदाचन। नैव शक्यो रणे जेतुं भीष्मः पार्थेन धीमता॥ ६६ ॥ सधनुः सरथः साश्वः प्रवपन् सायकान् रणे। तथैव पाण्डवं युद्धे देवैरपि दुरासदम्॥ ६७ ॥ न विजेतुं रणे भीष्म उत्सहेत धनुर्द्धरम्। आलोकादपि युद्धं हि सममेतद्भविष्यति॥ ६८ ॥ इति स्म वाचः श्रूयन्ते प्रचरन्त्यस्ततस्ततः। गाङ्गेयार्ज्जुनयोः सङ्ख्ये स्तवयुक्ता विशाम्पते॥ ६९ ॥ त्वदीयास्तु ततो योधाः पाण्डवेयाश्च भारत। अन्योऽन्यं समरे जघ्नुस्तयोस्तत्र पराक्रमे॥ ७० ॥ शितधारैस्तथा खड्गैर्विमलैश्च परश्वधैः। शरैरन्यैश्च बहुभिः शस्त्रैर्नानाविधैर्युधि॥ ७१ ॥ उभयोः सेनयोः शूरा न्यकृन्तन्त परस्परम्। वर्त्तमाने तथा युद्धे घोरे तस्मिन् सुदारुणे। द्रोणपाञ्चाल्ययो राजन् महानासीत् समागमः॥ ७२ ॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि भीष्मार्ज्जुनयुद्धे द्विपञ्चाशोऽध्यायः॥ ५२ ॥

---

धृतराष्ट्र उवाच। कथं द्रोणो महेष्वासः पाञ्चाल्यश्चैव पार्षतः। रणे समीयतुर्यत्तौ तन्ममाचक्ष्व सञ्जय॥ १ ॥ दिष्टमेव परं मन्ये पौरुषादपि सञ्जय। यत्र शान्तनवो भीष्मो नातरत् युधि पाण्डवम्॥ २ ॥ भीष्मो हि समरे क्रुद्धो हन्याल्लोकांश्चराचरान्। स कथं पाण्डवं युद्धे नातरत् सञ्जयौजसा॥ ३ ॥

सञ्जय उवाच। शृणु राजन् स्थिरो भूत्वा युद्धमेतत् सुदारुणम्। न शक्यः पाण्डवो जेतुं देवैरपि सवासवैः॥ ४ ॥ द्रोणस्तु विविधैर्बाणैर्धृष्टद्युम्नममर्षणम्। सारथिञ्चास्य भल्लेन

रथनीड़ादपातयत ॥ ५ ॥ तस्याथ चतुरो वाहांश्चतुर्भिः सायकोत्तमैः। पीड़यामास सङ्क्रुद्धो धृष्टद्युम्नस्य मारिष ॥ ६ ॥ धृष्टद्युम्नस्ततो द्रोणं नवत्या निशितैः शरैः। विव्याध समरे वीरस्तिष्ठ तिष्ठेति चाब्रवीत ॥ ७ ॥ तत पुनरमेयात्मा भारद्वाज प्रतापवान्। शरैः प्रच्छादयामास धृष्टद्युम्नममर्षणम् ॥ ८ ॥ आददे च शरं घोरं पार्षतस्य वधं प्रति। शक्राशनिसमस्पर्शं मृत्युदण्डमिवापरम् ॥ ९ ॥ हाहाकारो महानासीत सर्वसैन्यस्य भारत। तमिषुं सन्धितं दृष्ट्वा भारद्वाजेन संयुगे ॥ १० ॥ तत्राद्भुतमपश्याम धृष्टद्युम्नस्य पौरुषम्। यदेकः समरे वीरस्तस्थौ गिरिरिवाचलः ॥ ११ ॥ तञ्च दीप्तं महाघोरमायान्तं मृत्युमात्मनः। चिच्छेद शरवृष्टिञ्च भारद्वाजे मुमोच ह ॥ १२ ॥ तत उच्चुक्रुशुर्हृष्टाः पाञ्चालाः पाण्डवैः सह। धृष्टद्युम्नेन तत कर्म्म कृतं दृष्ट्वा सुदुष्करम् ॥ १३ ॥ ततः शक्तिं महावेगां स्वर्णवैदूर्य्यभूषिताम्। द्रोणस्य निधनाकाङ्क्षी चिक्षेप स पराक्रमी ॥ १४ ॥ तामापतन्तीं सहसा शक्तिं कनकभूषणाम्। त्रिधा चिच्छेद समरे भारद्वाजो हसन्निव ॥ १५ ॥ शक्तिं विनिहतां दृष्ट्वा धृष्टद्युम्नः प्रतापवान्। ववर्ष शरवर्षाणि द्रोणं प्रति जनेश्वर ॥ १६॥ शरवर्षं ततस्तन्तु सन्निवार्य्य महायशाः। द्रोणो द्रुपदपुत्रस्य मध्ये चिच्छेद कार्मुकम् ॥ १७ ॥ स छिन्नधन्वा समरे गदां गुर्वीं महायशाः। द्रोणाय प्रेषयामास गिरिसारमयीं बली ॥ १८ ॥ सा गदा तत्क्षरान्मुक्ता प्रागात द्रोणजिघांसया। तत्राद्भुतमपश्याम भारद्वाजस्य विक्रमम् ॥ १९ ॥ लाघवात् व्यंसयामास गदां हेमविभूषिताम्। व्यंसयित्वा गदाञ्चैव प्रेषयामास पार्षते ॥ २० ॥ भल्लान् सुनिशितान् पीतान् स्वर्णपुङ्खान् शिलाशितान्। ते तस्य कवचं भित्त्वा पपुः शोणितमाहवे ॥ २१ ॥ अथान्यद्धनुरादाय धृष्टद्युम्नो महामनाः। द्रोणं युधि पराक्रम्य शरैर्विव्याध पञ्चभिः

॥ २२ ॥ रुधिराक्तौ ततस्तौ तु शुशुभाते नरर्षभौ । वसन्ते पुष्पशबलौ पुष्पिताविव किंशुकौ ॥ २३ ॥ अमर्षितस्ततो राजन् पराक्रम्य चमूमुखे । द्रोणो द्रुपदपुत्रस्य पुनश्चिच्छेद कार्मुकम् ॥ २४ ॥ अथैनं छिन्नधन्वानं शरैः सन्नतपर्वभिः । अवाकिरद्दमेयात्मा वृष्ट्या मेघ इवाचलम् ॥ २५ ॥ सारथिं चास्य भल्लेन रथनीड़ादपातयत् । अथास्य चतुरो वाहांश्चतुर्भिर्निशितैः शरैः ॥ २६ ॥ पातयामास समरे सिंहनादं ननाद च । ततोऽपरेण भल्लेन हस्ताच्चापमथाच्छिनत् ॥ २७ ॥ स छिन्नधन्वा विरथो हताश्वो हतसारथिः । गदापाणिरवारोहत् ख्यापयन् पौरुषं महत् ॥ २८ ॥ तामस्य विशिखैस्तूर्णं पातयामास भारत । रथादनवरूढ़स्य तदद्भुतमिवाभवत् ॥ २९ ॥ ततः स विपुलं चर्म्म शतचन्द्रं ततो रणे । खड्गञ्च विपुलं दिव्यं प्रगृह्य सुभुजो बली ॥ ३० ॥ अभिदुद्राव वेगेन द्रोणस्य वधकाङ्क्षया । आमिषार्थी यथा सिंहो वने मत्तमिव द्विपम् ॥ ३१ ॥ तत्राद्भुतमपश्याम भारद्वाजस्य पौरुषम् । लाघवञ्चास्त्रयोगेन बलं बाह्वोश्च भारत ॥ ३२ ॥ यदेकः शरवर्षेण वारयामास पार्षतम् । न शशाक ततो गन्तुं बलवानपि संयुगे ॥ ३३ ॥ तत्र स्थितमपश्याम धृष्टद्युम्नं महारथम् । वारयाणं शरौघांश्च चर्म्मणा कृतहस्तवत् ॥ ३४ ॥ ततो भीमो महाबाहुः सहसा भ्यपतद् बली । साहाय्यकारी समरे पार्षतस्य महात्मनः ॥ ३५ ॥ स द्रोणं निशितैर्बाणै राजन् विव्याध सप्तभिः । पार्षतञ्च तदा तूर्णमन्यमारोपयद्रथम् ॥ ३६ ॥ ततो दुर्य्योधनो राजा कालिङ्गं समचोदयत् । सैन्येन महता युक्तं भारद्वाजस्य गोपने ॥ ३७ ॥ ततः सा महती सेना कलिङ्गानां नरेश्वर । भीममभ्याययौ भीमा तव पुत्रस्य शासनात् ॥ ३८ ॥ पाञ्चाल्यमभिसन्त्यज्य द्रोणोऽपि रथिनां वरः । विराटद्रुपदौ वृद्धौ योधयामास सङ्गतौ ॥ ३९ ॥ धृष्टद्युम्नोऽपि

समरे धर्मराजं समभ्ययात। तत प्रववृते युद्ध तुमुल लोम हर्षणम ॥ ४० ॥ कलिङ्गानाञ्च समरे भीमस्य च महात्मन। जगत प्रक्षयकर घोररूप भयानकम् ॥ ४१ ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि धृष्टद्युम्नद्रोणयुद्धे त्रिपञ्चाशोऽध्याय ॥ ५३ ॥

---

धृतराष्ट्र उवाच। पुत्रेण मम सम्प्रोक्त कलिङ्गो वाहिनी पति। कथमद्भुतकर्माणं भीमसेनं महाबलम ॥ १ ॥ चरन्त गदया वीरं दण्डपाणिमिवान्तकम्। योधयामास समरे कलिङ्ग सह सेनया ॥ २ ॥

सञ्जय उवाच। पुत्रेण तव राजेन्द्र स तथोक्तो महाबल। महत्या सेनया युक्त प्रायात भीमरथ प्रति ॥ ३ ॥ तामापतन्तीं महतीं कलिङ्गाना महाचमूम्। रथाश्वनागकलिला प्रगृहीत महायुधाम् ॥ ४ ॥ भीमसेन कलिङ्गानामार्च्छत भारत वाहि नीम्। केतुमन्तञ्च नैषादिमायान्त सह चेदिभि ॥ ५ ॥ तत श्रुतायु सक्रुद्धो राज्ञा केतुमता सह। आससाद रणे भीम व्यूढानीकेन दंशित ॥ ६ ॥ रथैरनेकसाहस्रै कलिङ्गाना जना धिप। अयुतेन गजानाञ्च निषादै सह केतुमान् ॥ ७ ॥ भीम सेनं महाराज समन्तात् पर्य्यवारयत्। चेदिमत्स्यकरूषास्तु भीमसेनपुरोगमा ॥ ८ ॥ अभ्यवर्त्तन्त सहसा निषादान सह राजभि। तत प्रववृते युद्धं घोररूप भयानकम् ॥ ९ ॥ प्रधा वताञ्च योधाना परस्परजिघांसया। घोरमासीत्ततो युद्धं भीमस्य सहसा परै ॥ १० ॥ यथेन्द्रस्य महाराज महत्या दैत्यसेनया। तस्य सैन्यस्य सङ्ग्रामे युध्यमानस्य भारत ॥ ११ ॥ बभूव सुमहा शब्दा सागरस्येव गर्ज्जत। अन्योऽन्यस्य ततो योधा निकृन्तन्तो

विधास्यते ॥ १२ ॥ महीव्रकुथितां सर्वां मांसशोणितसन्निभाम् । योधान् स्वान् स्वान् परांश्चापि न व्यजानन् जिघांसया ॥ १३ ॥ स्वानप्याददते ते तु शूराः समरदुर्ज्जयाः । विमर्द्दः सुमहानासीदल्पानां बहुभि सह ॥ १४ ॥ कलिङ्गैः सह चेदीनां निषादैश्च विधास्यते । कृत्वा पुरुषकारन्तु यथाशक्ति महाबला ॥ १५ ॥ भीमसेनं परित्यज्य सन्न्यवर्त्तन्त चेदयः । सर्व्वैः कलिङ्गैरासन्नः सन्निवृत्तेषु चेदिषु ॥ १६ ॥ स्वबाहुबलमास्थाय न्यवर्त्तत पाण्डवः । न चचाल रथोपस्थात् भीमसेनो महाबलः ॥ १७ ॥ शितैरवाकिरन् वाणैः कलिङ्गानां वरूथिनीम् । कलिङ्गस्तु महेष्वास पुत्रश्चास्य महारथ ॥ १८ ॥ शक्रदेव इति ख्यातो जघ्नतुः पाण्डवं शरैः । ततो भीमो महाबाहुर्विधुन्वन् रुचिरं धनुः ॥ १९ ॥ योधयामास कालिङ्गं स्वबाहुबलमाश्रितः । शक्रदेवस्तु समरे विसृजन् सायकान् बहून् ॥ २० ॥ अश्वान् जघान समरे भीमसेनस्य सायकैः । तं दृष्ट्वा विरथं तत्र भीमसेनमरिन्दमम् ॥ २१ ॥ शक्रदेवोऽभिदुद्राव किरन्तं निशितैः शरैः । भीमस्योपरि राजेन्द्र शक्रदेवो महाबलः ॥ २२ ॥ ववर्ष शरवर्षाणि तपान्ते जलदो यथा । हताश्वे तु रथे तिष्ठन् भीमसेनो महाबलः ॥ २३ ॥ शक्रदेवाय चिक्षेप सर्व्वशैक्यायसीं गदाम् । स तया निहतो राजन् कालिङ्गस्य सुतो रथात् ॥ २४ ॥ सध्वजः सह सूतेन जगाम धरणीतलम् । हतमात्मसुतं दृष्ट्वा कलिङ्गानां महारथः ॥ २५ ॥ रथैरनेकसाहस्रैर्भीमस्यावारयद्दिशः । ततो भीमो महाबाहुर्गदां त्यक्त्वा महाबलः ॥ २६ ॥ उद्बवर्ह स निस्त्रिंशं चिकीर्षुः कर्म्म दारुणम् । चर्म्म चाप्रतिमं राजन्नार्षभं पुरुषर्षभ ॥ २७ ॥ नक्षत्रैरर्द्धचन्द्रैश्च शातकुम्भमयैश्चितम् । कालिङ्गस्तु ततः क्रुद्धो धनुर्ज्यामवमृज्य च ॥ २८ ॥ प्रगृह्य स शरं घोरमेकं मर्म्मविषोपमम् । प्राहिणोत् भीमसेनाय वधाकाङ्क्षी

नरेश्वर ॥ २९ ॥ तमापतन्तं वेगेन प्रेरितं निशितं शरम्।
भीमसेनो द्विधा राजंश्चिच्छेद विपुलासिना ॥ ३० ॥ उदक्रोशच्च
संहृष्टस्त्रासयानो बलं तव। कालिङ्गोऽथ ततः क्रुद्धो भीमसेनस्य
संयुगे ॥ ३१ ॥ तोमरान् प्राहिणोच्छीघ्रं चतुर्दश शिलाशितान्।
तानप्राप्तान् महाबाहुः खगतानेव पाण्डवः ॥ ३२ ॥ चिच्छेद
सहसा राजन्नसम्भ्रान्तो वरासिना। निकृत्य तु रणे भीम-
स्तोमरान् वै चतुर्दश ॥ ३३ ॥ भानुमन्तमभिप्रेक्ष्य प्राद्रवत् पुरुष-
र्षभ। भानुमांस्तु ततो भीमं शरवर्षेण छादयन् ॥ ३४ ॥ ननाद
बलवन्नादं नादयानो नभस्तलम्। न तं स ममृषे भीमः सिंह-
नादं महारणे ॥ ३५ ॥ ततः स्वरेण महता विननाद महा-
स्वनः। तेन शब्देन वित्रस्ता कालिङ्गानां वरूथिनी ॥ ३६ ॥ न
भीमं समरे मेने मानुषं पुरुषर्षभ। ततो भीमो महाराज
नदित्वा विपुलं स्वनम् ॥ ३७ ॥ सासिर्वेगवदाप्लुत्य दन्ताभ्यां
वारणोत्तमम्। आरुरोह ततो मध्यं नागराजस्य मारिष ॥ ३८ ॥
खड्गेन पृतनामध्ये भानुमन्तमथाच्छिनत्। सोऽन्तरा युधि स
हत्वा राजपुत्रमरिन्दम ॥ ३९ ॥ गुरुभारसहं स्कन्धे नाग-
स्यासिमपातयत्। छिन्नस्कन्धः स विनदन् पपात गजयूथपः
॥ ४० ॥ आरुग्णः सिन्धुवेगेन सानुमानिव पर्वतः। ततस-
स्याप्यवप्लुत्य गजात् भारत भारतः ॥ ४१ ॥ खड्गपाणि-
रदीनात्मा तस्थौ भुवि सुदंशितः। स चचार बहून् मार्गा-
नभीतः पातयन् गजान् ॥ ४२ ॥ अग्निचक्रमिवाविद्धं सर्वतः
प्रत्यदृश्यत। अश्ववृन्देषु नागेषु नरानीकेषु वा विभुः ॥ ४३ ॥
पदातीनाञ्च सङ्घेषु विनिघ्नन् प्रत्यदृश्यत। श्येनवद्व्यचरत् सङ्ख्ये
युधि भीमो महाबलः ॥ ४४ ॥ छिन्दंस्तेषां शरीराणि शिरांसि
च महाजवः। खड्गेन शितधारेण संयुगे गजयोधिनाम्
॥ ४५ ॥ पदातिरेकः सङ्क्रुद्धः शत्रूणां भयवर्द्धनः। मोहयामास

शूरांस्तान् कालान्तकयमोपम ॥ ४६ ॥ मूढास्तमेव च रणे विनदन्तः समाद्रवन् । साचिमुक्तमवेगेन विचरन्त महारणे ॥ ४७ ॥ निकृत्य रथिनामाजौ रथेषाश्च युगानि च । जघान रथिनश्चापि बलवानरिमर्द्दन ॥ ४८ ॥ भीमसेनश्चरन् मार्गान् सुबहून् प्रत्यदृश्यत । भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुत प्रसृत प्लुतम् ॥ ४९ ॥ सम्पात समुदीर्षञ्च दर्शयामास भारत । केचिदुग्रासिना छिन्नाः पाण्डवेन महात्मना ॥ ५० ॥ विनेदुर्भिन्नमर्म्माणो निपेतुश्च गतासवः । छिन्नदन्ताग्रहस्ताश्च छिन्नकुम्भास्तथा परे ॥ ५१ ॥ वियोधाः स्वान्यनीकानि जघ्नुर्भारत वारणाः । निपेतुरुर्व्याञ्च तदा विनदन्तो महारवान् ॥ ५२ ॥ छिन्नांश्च तोमरान् राजन् महामात्रशिरांसि च । परिस्तोमानि चित्राणि कक्षाश्च कनकोज्ज्वलाः ॥ ५३ ॥ ग्रैवेयान्यथ शक्तीश्च पताकाः कणपांस्तथा । तूणीराण्यथ यन्त्राणि विचित्राणि धनूंषि च ॥ ५४ ॥ अग्निकुण्डानि शुभ्राणि तोत्रांश्चैवाङ्कुशैः सह । घण्टाश्च विविधाकारा हेमगर्भांस्त्सरूनपि ॥ ५५ ॥ पततः पतितांश्चैव पश्याम सह सादिभिः । छिन्नगात्रावरकरैर्निहतैश्चापि वारणैः ॥ ५६ ॥ आसीत तस्मिन् रणे भूमिः पर्वतैः पतितैरिव । विमृद्यैव महानागान् ममर्द्दाश्वान्नरर्षभ ॥ ५७ ॥ अश्वारोहवरांश्चैव पातयामास भारत । तद्युद्धमभवत घोरं तस्य तेषाञ्च मारिष ॥ ५८ ॥ खलीनान्यथ योक्त्राणि कक्षाश्च कनकोज्ज्वलाः । परिस्तोमाश्च प्रासाश्च ऋष्टयश्च महाधनाः ॥ ५९ ॥ कवचान्यथ चर्म्माणि चित्राण्याभरणानि च । तत्र तत्रापविद्धानि व्यदृश्यन्त महाहवे ॥ ६० ॥ स चक्रे वसुधां कीर्णां शबलां कुमुदैरिव । आप्लुत्य रथिनं कञ्चित् परामृश्य महाबलः ॥ ६१ ॥ पातयामास खड्गेन सध्वजानपि पाण्डव । मुहुरुत्पततो दिक्षु धावतश्च तरस्विनः ॥ ६२ ॥ मार्गांश्च चरतश्चित्रान् व्यस्मयन्त रणे जनाः । निजघान पदा कांश्चि-

दान्तिभ्यामन्यानपोथयत ॥ ६३ ॥ खड्गेनान्यांश्च चिच्छेद नादै रन्यानभीषयत। ऊरुवेगेन चाप्यन्यान् पातयामास भूतले ॥ ६४ ॥ अपरे चैनमालोक्य भयात विद्राविणोऽभवन्। एव सा बहुला सेना कलिङ्गाना तरस्विनाम् ॥ ६५ ॥ परिवार्य रणे भीष्म भीमसेनमुपाद्रवत। तत कलिङ्गसैन्याना प्रमुखे भरतर्षभ ॥६६ ॥ श्रुतायुषमभिप्रेक्ष्य भीमसेन समभ्ययात। तमायान्तमभिप्रेक्ष्य कलिङ्गो नवभि शरै ॥ ६७ ॥ भीमसेनममेयात्मा प्रत्यविध्यत स्तनान्तरे। कलिङ्गबाणाभिहतस्तोत्रार्दित इव द्विप ॥ ६८ ॥ भीमसेन प्रजज्वाल क्रोधेनाग्निरिवेन्धनै। अथाशोक समादाय रथ हेमपरिष्कृतम् ॥ ६९ ॥ भीम सम्पादयामास रथेन रथिना वर। समारुह्य रथ तूर्ण कौन्तेय शत्रुसूदन ॥ ७० ॥ कालिङ्गमभिदुद्राव तिष्ठ तिष्ठेति चाब्रवीत। तत श्रुतायुर्बलवान् भीमाय निशितान् शरान् ॥ ७१ ॥ प्रेषयामास सङ्क्रुद्धो दर्शयन् पाणिलाघवम्। स कार्मुकवरोत्सृष्टैर्नवभिर्निशितै शरै ॥ ७२ ॥ समाहतो भृश राजन् कलिङ्गेन महाबल। सञ्चुक्रोध भृश भीमो दण्डाहत इवोरग ॥ ७३ ॥ क्रुद्ध स चापमायम्य बलवत बलिनाम्वर। कलिङ्गमवधीत पार्थो भीम सप्तभिरायसै ॥ ७४ ॥ क्षुराभ्या चक्ररक्षौ च कालिङ्गस्य महाबलौ। सत्यदेवञ्च सत्यञ्च प्राहिणोत यमसादनम ॥ ७५ ॥ तत पुनरमेयात्मा नाराचैर्निशितै शरै। केतुमन्त रणे भीमोऽगमयत् यमसादनम् ॥ ७६ ॥ तत कलिङ्गा सङ्क्रुद्धा भीमसेनममर्षणम्। अनेकैर्बहुसाहस्रै क्षत्रिया समयोधयन् ॥ ७७ ॥ तत शक्तिगदाखड्गतोमरर्ष्टि परश्वधै। कलिङ्गा ततो राजन् भीमसेनमवारयन् ॥ ७८ ॥ सन्निवार्य त ता राजन् शरवृष्टि समुच्छ्रिताम्। गदामादाय तरसा परिगृह्य महाबल ॥ ७९ ॥ भीम सप्तशतान् वीरा ननयत् यमसादनम्। पुनश्चैव द्विसाहस्रान् कालिङ्गानरिमर्द्दन

॥ ८० ॥ प्राहिणोत् मृत्युलोकाय तदद्भुतमिवाभवत्। एवं स तान्यनीकानि कलिङ्गानां पुनः पुनः ॥ ८१ ॥ बिभेद समरे वीरो भीमो भीमपराक्रमः। हृतारोहाश्च मातङ्गाः पाण्डवेन कृता रणे ॥ ८२ ॥ विप्रजग्मुरनीकेषु घना वातहता इव। मृद्नन्तः स्वान्यनीकानि विनदन्तः शरातुराः ॥ ८३ ॥ ततो भीमो महाबाहुः खड्गचर्ममहाभुजः। सम्प्रहृष्टो महाघोरं शङ्खं प्रध्मापयत् बली ॥ ८४ ॥ सर्वकालिङ्गसैन्यानां मनांसि समकम्पयत्। मोहश्चापि कलिङ्गानामाविवेश परन्तप ॥ ८५ ॥ प्राकम्पन्त च सैन्यानि वाहनानि च सर्वशः। भीमसेनेन समरे गजेन्द्रेणेव सर्वत ॥ ८६ ॥ मार्गान् बहून् विचरता धावता च ततस्ततः। मुहुरुत्पतता चैव सम्मोहः समजायत ॥ ८७ ॥ भीमसेनभयत्रस्तं सैन्यं तत् समकम्पत। क्षोभ्यमाणमसम्बाधं ग्राहेणेव महासरः ॥ ८८ ॥ त्रासितेषु च वीरेषु भीमेनाद्भुतकर्मणा। पुनरावर्त्तमानेषु विद्रवत्सु समन्ततः ॥ ८९ ॥ सर्वकालिङ्गयोधेषु पाण्डूनां ध्वजिनीपतिः। अवादीत् स्वान्यनीकानि युध्यध्वमिति भारत ॥ ९० ॥ सेनापतिवचः श्रुत्वा शिखण्डिप्रमुखा गणाः। भीममेवाभ्यवर्त्तन्त रथानीकैः प्रहारिभिः ॥ ९१ ॥ धर्मराजश्च तान् सर्वाननुजग्राह पाण्डवः। महता मेघवर्णेन नागानीकेन पृष्ठतः ॥ ९२ ॥ एवं सञ्चोद्य सर्वाणि स्वान्यनीकानि पार्षतः। भीमसेनस्य जग्राह पार्ष्णिं सत्पुरुषोचिताम् ॥ ९३ ॥ न हि पाञ्चालराजस्य लोके कश्चन विद्यते। भीमसात्यकयोरन्यः प्राणेभ्यः प्रियकृत्तमः ॥ ९४ ॥ सोऽपश्यत् कलिङ्गेषु चरन्तमरिसूदनम्। भीमसेनं महाबाहुं पार्षतः परवीरहा ॥ ९५ ॥ ननाद बहुधा राजन् हृष्टश्चासीत् परन्तप। शङ्खं दध्मौ च समरे सिंहनादं ननाद च ॥ ९६ ॥ स च पारावताश्वस्य रथे हेमपरिष्कृते। कोविदारध्वजं दृष्ट्वा भीमसेनः समाश्वसत् ॥ ९७ ॥ धृष्टद्युम्नस्य

दाक्षिप्यान्यानपोथयत् ॥ ६३ ॥ खड्गेनान्यांश्च चिच्छेद नादै-
रन्यानभीषयत्। ऊरुवेगेन चाप्यन्यान् पातयामास भूतले ॥ ६४ ॥
अपरे चैनमालोक्य भयात विद्राविणोऽभवन्। एवं सा बहुला
सेना कलिङ्गानां तरस्विनाम् ॥ ६५ ॥ परित्यज्य रणे भीष्मं
भीमसेनमुपाद्रवत। ततः कलिङ्गसैन्यानां प्रमुखे भरतर्षभ ॥ ६६ ॥
श्रुतायुषमभिप्रेक्ष्य भीमसेनः समभ्ययात। तमायान्तमभिप्रेक्ष्य
कलिङ्गो नवभिः शरैः ॥ ६७ ॥ भीमसेनममेयात्मा प्रत्यविध्यत
स्तनान्तरे। कलिङ्गबाणाभिहतस्तोत्रार्दित इव द्विपः ॥ ६८ ॥
भीमसेनः प्रजज्वाल क्रोधेनाग्निरिवेन्धनैः। अथाशोकः समादाय
रथं हेमपरिष्कृतम् ॥ ६९ ॥ भीमं सम्पादयामास रथेन रथिनां
वरः। तमारुह्य रथं तूर्णं कौन्तेयः शत्रुसूदनः ॥ ७० ॥ कलिङ्ग-
मभिदुद्राव तिष्ठ तिष्ठेति चाब्रवीत्। ततः श्रुतायुर्बलवान् भीमाय
निशितान् शरान् ॥ ७१ ॥ प्रेषयामास संक्रुद्धो दर्शयन् पाणि
लाघवम्। स कार्मुकवरोत्सृष्टैर्नवभिर्निशितैः शरैः ॥ ७२ ॥
समाहतो भृशं राजन् कलिङ्गेन महाबलः। सञ्चुक्रोध भृशं
भीमो दण्डाहत इवोरगः ॥ ७३ ॥ क्रुद्धः स चापमायम्य बलवत्
बलिनाम्वरः। कलिङ्गमवधीत् पार्थो भीमः सप्तभिरायसैः ॥ ७४ ॥
क्षुराभ्यां चक्ररक्षौ च कालिङ्गस्य महाबलौ। सत्यदेवञ्च सत्यञ्च
प्राहिणोत यमसादनम्. ॥ ७५ ॥ ततः पुनरमेयात्मा नाराचै-
र्निशितैः शरैः। केतुमन्तं रणे भीमोऽगमयत् यमसादनम् ॥ ७६ ॥
ततः कलिङ्गाः संक्रुद्धा भीमसेनममर्षणम्। अनेकैर्बहुसाहस्रैः
क्षत्रियाः समवारयन् ॥ ७७ ॥ ततः शक्तिगदाखड्गतोमरर्ष्टि-
परश्वधैः। कलिङ्गाः शतशो राजन् भीमसेनमवारयन् ॥ ७८ ॥
सन्निवार्य तु तां राजन् शरवृष्टिं समुत्थिताम्। गदामादाय
तरसा परिप्लुत्य महाबल ॥ ७९ ॥ भीमः सप्तशतान् वीरा-
ननयत् यमसादनम्। पुनश्चैव द्विसाहस्रान् कालिङ्गानरिमर्दनः

॥ ८० ॥ प्राहिणोत् मृत्युलोकाय तदद्भुतमिवाभवत् । एवं स तान्यनीकानि कलिङ्गानां पुनः पुनः ॥ ८१ ॥ बिभेद समरे वीरो भीमो भीमपराक्रमः । हतारोहाश्च मातङ्गाः पाण्डवेन कृता रणे ॥ ८२ ॥ विप्रजग्मुरनीकेषु घना वातहता इव । मृद्नन्तः स्वान्यनीकानि विनदन्तः शरातुराः ॥ ८३ ॥ ततो भीमो महाबाहुः खड्गसक्तमहाभुजः । सम्प्रहृष्टो महाघोरं शङ्खं प्राध्मापयन् बली ॥ ८४ ॥ सर्वकालिङ्गसैन्यानां मनांसि समकम्पयत् । मोहश्चापि कलिङ्गानामाविवेश परन्तप ॥ ८५ ॥ प्राकम्पन्त च सैन्यानि वाहनानि च सर्वशः । भीमसेनेन समरे गजेन्द्रेणेव सर्वतः ॥ ८६ ॥ मार्गान् बहून् विचरता धावता च ततस्ततः । मुहुरुत्पतता चैव सम्मोहः समजायत ॥ ८७ ॥ भीमसेनभयत्रस्तं सैन्यं तत् समकम्पत । क्षोभ्यमाणमसम्बाधं ग्राहेणेव महासरः ॥ ८८ ॥ त्रासितेषु च वीरेषु भीमेनाद्भुतकर्म्मणा । पुनरावर्त्तमानेषु विद्रवत्सु समन्ततः ॥ ८९ ॥ सर्वकालिङ्गयोधेषु पाण्डूनां ध्वजिनीपतिः । अब्रवीत् स्वान्यनीकानि युध्यध्वमिति भारत ॥ ९० ॥ सेनापतिवचः श्रुत्वा शिखण्डिप्रमुखा गणाः । भीमसेनाभ्यवर्त्तन्त रथानीकैः प्रहारिभिः ॥ ९१ ॥ धर्मराजश्च तान् सर्वानुपजग्राह पाण्डवः । महता मेघवर्णेन नागानीकेन पृष्ठतः ॥ ९२ ॥ एवं सञ्चोद्य सर्वाणि स्वान्यनीकानि पार्षतः । भीमसेनस्य जग्राह पार्ष्णिं सत्पुरुषोचिताम् ॥ ९३ ॥ न हि पाञ्चालराजस्य लोके कश्चन विद्यते । भीमसात्यकयोरन्यः प्राणेभ्यः प्रियकृत्तमः ॥ ९४ ॥ सोऽपश्यत कलिङ्गेषु चरन्तमरिसूदनम् । भीमसेनं महाबाहुं पार्षतः परवीरहा ॥ ९५ ॥ ननाद बहुधा राजन् हृष्टश्चासीत् परन्तप । शङ्खं दध्मौ च समरे सिंहनादं ननाद च ॥ ९६ ॥ स च पारावताश्वस्य रथे हेमपरिष्कृते । कोविदारध्वजं दृष्ट्वा भीमसेनः समाश्वसत् ॥ ९७ ॥ धृष्टद्युम्नस्य

तं दृष्ट्वा कालिङ्गैः समभिद्रुतम् । भीमसेनममेयात्मा वाणायाजौ
समभ्ययात् ॥ ९८ ॥ तौ दूरात् सात्यकिं दृष्ट्वा धृष्टद्युम्नवृको-
दरौ । कालिङ्गान् समरे वीरौ योधयन्तौ मनस्विनौ ॥ ९९ ॥
स तत्र गत्वा शैनेयो जवेन जयताम्वरः । पार्थपार्षतयोः पार्ष्णिं
जग्राह पुरुषर्षभः ॥ १०० ॥ स कृत्वा कदनं तत्र प्रगृहीत-
शरासन । आस्थितो रौद्रमात्मानं जघान समरे परान् ॥१०१ ॥
कलिङ्गप्रभवाञ्चैव मांसशोणितकर्द्दमाम् । रुधिरस्यन्दिनीं तत्र
भीमः प्रावर्त्तयन्नदीम ॥ १०२ ॥ भीमसेन तदा दृष्ट्वा प्राक्रोश-
स्तावका नृप । कालोऽयं भीमरूपेण कालिङ्गैः सह युध्यते ॥१०३॥
तत. शान्तनवो भीष्म. श्रुत्वा तं निनदं रणे । अभ्ययात् त्वरितो
भीमं व्यूढानीक. समन्तत. ॥ १०४ ॥ तं सात्यकिर्भीमसेनो
धृष्टद्युम्नश्च पार्षतः । अभ्यद्रवन्त भीष्मस्य रथं हेमपरिष्कृतम्
॥ १०५ ॥ परिवार्य्य तु ते सर्वे गाङ्गेयं तरसा रणे । त्रिभि-
स्त्रिभिः शरैर्घोरैर्भीष्ममानर्च्छुरञ्जसा ॥ १०६ ॥ प्रतिविव्याध
तान् सर्वान् पिता देवव्रतस्तव । यतमानान् महेष्वासांस्त्रिभि-
स्त्रिभिरजिह्मगैः ॥ १०७ ॥ ततः शरसहस्रेण सन्निवार्य्य महा-
रथान् । हयान् काञ्चनसन्नाहान् भीमस्याभ्यहनच्छरैः ॥१०८॥
हताश्वे तु रथे तिष्ठन् भीमसेनः प्रतापवान् । शक्तिं चिक्षेप
तरसा गाङ्गेयस्य रथं प्रति ॥ १०९ ॥ अप्राप्तामेव तां शक्तिं
पिता देवव्रतस्तव । द्विधा चिच्छेद समरे पृथिव्यां सा व्यशी-
र्य्यत ॥ ११० ॥ ततः शैक्यायसीं गुर्वीं प्रगृह्य महतीं गदाम् ।
भीमसेनो रथात् तूर्णं पुप्लुवे मनुजर्षभ ॥ १११ ॥ धृष्टद्युम्न-
स्समारोप्य स्वरथे रथिना वरम् । पश्यतां सर्वसैन्यानामपोवाह
यशस्विनम् ॥ ११२ ॥ सात्यकोऽपि ततस्तूर्णं भीमस्य प्रिय-
काम्यया । सारथिं कुरुवृद्धस्य पातयामास सायकैः ॥ ११३ ॥
भीष्मस्तु निहते तस्मिन् सारथौ रथिना वरः । वातायमानैस्तै-

स्तैरपनीतो रणाजिरात् ॥ ११३ । भीमसेनस्ततो राजन्नपनीते महारथे। प्रजज्वाल यथा वह्निर्दहन् कक्षमिवोल्बणः ॥ ११४ ॥ स हत्वा सर्वकालिङ्गान् सेनामध्ये व्यवस्थितः । नैनमभ्युत्सहन् केचित् तावका भरतर्षभ ॥ ११५ ॥ स पूज्यमानः पाञ्चाल्यैर्मत्स्यैश्च भरतर्षभ । धृष्टद्युम्नं परिष्वज्य समीयादथ सात्यकिम् ॥ ११६ ॥ अथाब्रवीत् भीमसेनं सात्यकिः सत्यविक्रमः । प्रहर्षयन् यदुव्याघ्रो धृष्टद्युम्नस्य पश्यतः ॥ ११७ ॥ दिष्ट्या कलिङ्गराजश्च राजपुत्रश्च केतुमान् । शक्रदेवश्च कालिङ्गः कालिङ्गाश्च मृधे हताः ॥ ११८ ॥ स्वबाहुबलवीर्य्येण नागाश्वरथसङ्कुलः । महापुरुषभूयिष्ठो वीर-योधनिषेवितः ॥ ११९ ॥ महाव्यूहः कलिङ्गानामेकेन मृदितस्त्वया । एवमुक्त्वा शिनेर्नप्ता दीर्घबाहुररिन्दम ॥ १२० ॥ रथस्थं तमभिद्रुत्य पर्य्यष्वजत पाण्डवम् । ततः स्वरथमागम्य पुनरेव महारथः । तावकानवधीत् क्रुद्धो भीमस्य बलमादधत् ॥ १२१ ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि कलिङ्गराजवधे
चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

---

सञ्जय उवाच । गते पूर्वाह्णसमये तस्मिन्नहनि भारत । रथनागाश्वपत्तीनां सादिनाञ्च महाक्षये ॥ १ ॥ द्रोणपुत्रेण शल्येन कृपेण च महात्मना । समसज्जत पाञ्चाल्यस्त्रिभिरेतैर्महारथैः ॥ २ ॥ स लोकविदितानश्वान्निजघान महाबलः । द्रौणेः पाञ्चालदायादः शितैर्दशभिराशुगैः ॥ ३ ॥ ततः शल्यरथं तूर्णमास्थाय हतवाहनः । द्रौणिः पाञ्चालदायादमभ्यवर्षदथेषुभिः ॥ ४ ॥ धृष्टद्युम्नन्तु संसक्तं द्रौणिना दृश्य भारत । सौभद्रोऽभ्यपतत् तूर्णं विकिरन्निशितान् शरान् ॥ ५ ॥ स शल्यं पञ्च-विंशत्या कृपञ्च नवभिः शरैः । अश्वत्थामानमष्टाभिर्विव्याध भरत-

र्षभ ॥ ६ ॥ आर्जुनिन्तु ततस्तूर्णं द्रौणिर्विव्याध पत्रिणा । शल्यो
हार्दिक्यभिश्चैव कृपश्च निशितैस्त्रिभि ॥ ७ ॥ लक्ष्मणस्तव पौत्रस्तु
सौभद्र पर्य्यवस्थितम । अभ्यवर्त्तत संक्रुद्धस्तद्युद्धमभवत्तत ॥ ८ ॥
दौर्य्योधनिस्तु संक्रुद्ध सौभद्र निशितै शरै । विव्याध समरे
राजन् तदद्भुतमिवाभवत ॥ ९ ॥ अभिमन्युश्च संक्रुद्धो भ्रातर
भरतर्षभ । शरै पञ्चशतै क्षिप्र क्षिप्रहस्तोऽभ्यविध्यत ॥ १० ॥
लक्ष्मणोऽपि ततस्तस्य धनुश्चिच्छेद पत्रिणा । मुष्टिदेशे महा
राज तत उच्चुक्रुशुर्ज्जना ॥ ११ ॥ तद्विहाय धनुश्छिन्न सौभद्र
परवीरहा । अन्यदादत्तवान् चित्र कार्म्मुक वदता वर ॥ १२ ॥
तौ तत्र समरे युक्तौ कृतप्रतिकृतैषिणौ । अन्योऽन्य निशितै-
र्बाणैर्ज्जघ्नतु पुरुषर्षभौ ॥ १३ ॥ ततो दुर्य्योधनो राजा दृष्ट्वा
पुत्र महाबलम् । पीड़ित तव पौत्रेण प्रायात्तत्र जनेश्वर ॥ १४ ॥
सन्निवृत्ते तव सुते सर्व्व एव जनाधिपा । आर्जुनि रथवशेन सम
न्तात पर्य्यवारयन् ॥ १५ ॥ स तै परिवृत शूरै शूरो युधि
सुदुर्ज्जय । न स्म प्रव्यथितो राजन् कृष्णतुल्यपराक्रम ॥ १६ ॥
सौभद्रमथ संयुक्त दृष्ट्वा तत्र धनञ्जय । अभिदुद्राव संक्रुद्धस्त्रातु
काम स्वमात्मजम ॥ १७ ॥ तत सरथनागाश्वा भीष्मद्रोण
पुरोगमा । अभ्यवर्त्तन्त राजान सहसा सव्यसाचिनम् ॥ १८ ॥
उद्धूत सहसा भौम नराश्वरथसादिभि । दिवाकरपथ प्राप्य
रजस्तीव्रमदृश्यत ॥ १९ ॥ तानि नागसहस्राणि भूमिपालशतानि
च । तस्य बाणपथ प्राप्य नाभ्यवर्त्तन्त सर्व्वश ॥ २० ॥ प्रणेदु
सर्व्वभूतानि बभूवुस्तिमिरा दिश । कुरूणामनयस्तीव्र प्रत्यपद्यत
दारुण ॥ २१ ॥ नाप्यन्तरीक्ष न दिशो न भूमिर्न च भास्कर ।
प्रजज्ञायत नरश्रेष्ठ शरसङ्घै किरीटिन ॥ २२ ॥ सादितध्वज
नागास्तु हताश्वा रथिनो भृशम । विप्रद्रुतरथा केचित् दृश्यन्ते
रथयूथपा ॥ २३ ॥ विरथा रथिनश्चान्ये धावमानास्ततस्तत ।

तत्र तत्रैव दृश्यन्ते मानुषैः साङ्गदैर्भुजैः ॥ २४ ॥ हयारोहा
हयांस्त्यक्त्वा गजारोहाश्च दन्तिनः । अर्जुनस्य भयाद्राजन् सम-
न्तात् विप्रदुद्रुवुः ॥ २५ ॥ रथेभ्यश्च गजेभ्यश्च हयेभ्यश्च नराधिपाः ।
पातिताः पात्यमानाश्च दृश्यन्तेऽर्जुनसायकैः ॥ २६ ॥ सगदानुद्य-
तान् बाहून् सखड्गांश्च विशाम्पते । सप्रासांश्च सतूणीरान्
सशरान् सशरासनान् ॥ २७ ॥ साङ्कुशान् सपताकांश्च तत्र तत्रा-
र्जुनो नृणाम् । निचकर्त्त शरैरुग्रै रौद्रं बिभ्रद्वपुस्तदा ॥ २८ ॥
परिघाणां विदीर्णानां मुद्गराणाञ्च मारिष । प्रासानां भिन्दि-
पालानां निस्त्रिंशानाञ्च संयुगे ॥ २९ ॥ परश्वधानां तीक्ष्णानां
तोमराणाञ्च भारत । वर्म्मणामपविद्धानां कवचानाञ्च भूतले
॥ ३० ॥ ध्वजानामथ चर्म्माणां व्यजनानाञ्च सर्व्वशः । छत्राणां
हेमदण्डानामजयानाञ्च भारत ॥ ३१ ॥ प्रतोदानां कशानाञ्च
योक्त्राणाञ्चैव मारिष । राशयश्चात्र दृश्यन्ते विनिकीर्णा रण-
क्षितौ ॥ ३२ ॥ नासीत्तत्र पुमान् कश्चित् तव सैन्यस्य मारिष ।
योऽर्ज्जुनं समरे शूरं प्रत्युद्यायात् कथञ्चन ॥ ३३ ॥ यो यो हि
समरे पार्थं प्रत्युद्याति विशाम्पते । स शरैर्विशिखैस्तीक्ष्णैः पर-
लोकाय नीयते ॥ ३४ ॥ तेषु विद्रवमाणेषु तव योधेषु सर्व्वशः ।
अर्ज्जुनो वासुदेवश्च शङ्खौ दध्मतुरुत्तमौ ॥ ३५ ॥ तत् प्रभग्नं बलं
दृष्ट्वा पिता देवव्रतस्तव । अब्रवीत् समरे शूरं भारद्वाजं स्मयन्निव
॥ ३६ ॥ एष पाण्डुसुतो वीरः कृष्णेन सहितो बली । तथा
करोति सैन्यानि यथा कुर्य्यात् धनञ्जय ॥ ३७ ॥ न ह्येष समरे
शक्यो जेतुमद्य कथञ्चन । यथास्य दृश्यते रूपं कालान्तकयमो-
पमम् ॥ ३८ ॥ न निवर्त्तयितुञ्चापि शक्येयं महती चमूः । अन्योऽन्य
प्रेक्षया पश्य द्रवतीयं वरूथिनी ॥ ३९ ॥ एष चास्तं गिरिश्रेष्ठं
भानुमान् प्रतिपद्यते । चक्षूंषि सर्व्वलोकस्य संहरन्निव सर्व्वथा
॥ ४० ॥ तत्रावहारं सम्प्राप्तं मन्येऽहं पुरुषर्षभ । श्रान्ता भीताश्च

ये योधा न योत्स्यन्ति कदाचन ॥ ४१ ॥ एवमुक्त्वा ततो भीष्मो द्रोणमाचार्यसत्तमम् । अवहारमथो चक्रे तावकानां महारथ ॥ ४२ ॥ ततोऽवहारः सैन्यानां तव तेषाञ्च मारिष । अस्तं गच्छति सूर्येऽभूत् सन्ध्या च समवर्त्तत ॥ ४३ ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि द्वितीयदिवसावहारे पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

---

सञ्जय उवाच । प्रभातायान्तु शर्वर्यां भीष्मः शान्तनवस्ततः । अनीकान्यथ यानाय व्यादिदेश परन्तप ॥ १ ॥ गारुडञ्च महाव्यूहं चक्रे शान्तनवस्तदा । पुत्राणां ते जयाकाङ्क्षी वृद्धः कुरुपितामहः ॥ २ ॥ गरुडस्य स्वयं तुण्डे पिता देवव्रतस्तव । चक्षुषी च भरद्वाजः कृतवर्मा च सात्वतः ॥ ३ ॥ अश्वत्थामा कृपश्चैव शिरस्यास्तां यशस्विनौ । त्रिगर्त्तैर्मत्स्यकैकेयैर्वाटधानैश्च संयुतौ ॥ ४ ॥ भूरिश्रवाः शलः शल्यो भगदत्तश्च मारिष । मद्रकाः सिन्धुसौवीरास्तथा पञ्चनदाश्च ये ॥ ५ ॥ जयद्रथेन सहिता ग्रीवायां सन्निवेशिताः । पृष्ठे दुर्योधनो राजा सोदर्यैः सानुगैर्वृतः ॥ ६ ॥ विन्दानुविन्दावावन्त्यौ काम्बोजश्च शकैः सह । पुच्छमासन्महाराज शूरसेनाश्च मारिष ॥ ७ ॥ मागधाश्च कलिङ्गाश्च दाशेरकगणैः सह । दक्षिणं पक्षमासाद्य स्थिता व्यूहस्य दंशिताः ॥ ८ ॥ कारूषाश्च विकुञ्जाश्च मुण्डाः कौण्डीवृषास्तथा । बृहद्बलेन सहिता वामपार्श्वं समाश्रिताः ॥ ९ ॥ व्यूढं दृष्ट्वा तु तत्सैन्यं सव्यसाची परन्तपः । धृष्टद्युम्नेन सहितः प्रत्यव्यूहत संयुगे ॥ १० ॥ तावकानाञ्च तं व्यूहं प्रत्यव्यूहत पाण्डवः । अर्द्धचन्द्रेण व्यूहेन व्यूहं तमतिदारुणम् ॥ ११ ॥ दक्षिणं शृङ्गमास्थाय भीमसेनो व्यरोचत । नानाशस्त्रौघसम्पन्नैर्नानादेशै-

नृपैर्व्वृतः ॥ १२ ॥ तदन्वेव विराटश्च द्रुपदश्च महारथः । तद-
नन्तरमेवाथ नीलो नीलायुधैः सह ॥ १३ ॥ नीलादनन्तरश्चैव
धृष्टकेतुर्महारथः । चेदिकाशिकरूषैश्च पौरवैश्चाभिसंवृतः ॥ १४ ॥
धृष्टद्युम्नः शिखण्डी च पाञ्चालाश्च प्रभद्रकाः । मध्ये सैन्येन सहिता
स्थिता युद्धाय भारत ॥ १५ ॥ तत्रैव धर्मराजोऽपि गजानीकेन
संवृतः । ततस्तु सात्यकी राजन् द्रौपद्याः पञ्च चात्मजाः ॥ १६ ॥
अभिमन्युस्ततस्तूर्णमिरावांश्च ततः परम् । भैमसेनिस्ततो राजन्
कैकेयाश्च महारथाः ॥ १७ ॥ ततोऽभूद्द्विपदां श्रेष्ठो वामपार्श्व-
मुपाश्रितः । सर्व्वस्य जगतो गोप्ता यस्य गोप्ता जनार्द्दनः ॥ १८ ॥
एवमेतं महाव्यूहं प्रत्यव्यूहन्त पाण्डवाः । नाशार्थं तव पुत्राणां
तत्पक्षं ये च संश्रिताः ॥ १९ ॥ ततः प्रववृते युद्धं व्यतिषक्तरथ-
द्विपम् । तावकानां परेषाञ्च निघ्नतामितरेतरम् ॥ २० ॥ हस्त्यो-
घाश्च रथौघाश्च तत्र तत्र विशाम्पते । सम्पतन्तो व्यदृश्यन्त निघ्न-
न्तस्ते परस्परम् ॥ २१ ॥ धावताञ्च रथौघानां युध्यताञ्च पृथक्
पृथक् । बभूव तुमुलः शब्दो विमिश्रो दुन्दुभिस्वनैः ॥ २२ ॥
दिवस्पृक् नरवीराणां निघ्नतामितरेतरम् । सम्प्रहारे तु तुमुले
तव तेषाञ्च भारत ॥ २३ ॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि गारुडार्द्धचन्द्रव्यूह-
निर्म्माणे षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

---

सञ्जय उवाच । ततो व्यूढेष्वनीकेषु तावकेष्वितरेषु च ।
धनञ्जयो रथानीकमवधीत्तव भारत ॥ १ ॥ शरैरतिरथो युद्धे
पातयन्रथयूथपान् । ते वध्यमानाः पार्थेन कालेनेव युगक्षये ॥ २ ॥
धार्त्तराष्ट्रा रणे यत्ता पाण्डवान् प्रत्ययोधयन् । प्रार्थयाना यशो
दीप्तं मृत्युं कृत्वा निवर्त्तनम् ॥ ३ ॥ एकाग्रमनसो भूत्वा पाण्ड-
वानां वरूथिनीम् । बभञ्जुर्बहुशो राजंस्ते चाभज्यन्त संयुगे

॥ ४ ॥ द्रवद्भिरश्च भग्नैश्च परिवर्त्तद्भिरेव च। पाण्डवैः कौरवे-
यैश्च न प्रज्ञायत किञ्चन ॥ ५ ॥ उदतिष्ठद्रजो भौमं छादयानं
दिवाकरम। न दिशः प्रदिशश्चापि तत्र जग्मुः कथञ्चन ॥ ६ ॥
अनुमानेन सञ्ज्ञाभिर्नामगोत्रैश्च संयुगे। वर्त्तते स्म तदा युद्धं तत्र
तत्र विशाम्पते ॥ ७ ॥ न व्यूहो भिद्यते तत्र कौरवाणां विशा-
म्पते। रक्षितः स यथा तेन भारद्वाजेन मारिष ॥ ८ ॥ तथैव
पाण्डवेयानां रक्षितः सव्यसाचिना। नाभिद्यत महाव्यूहो
भीमेन च सुरक्षितः ॥ ९ ॥ सेनाग्रादभिनिष्पत्य प्रायुध्यंस्तत्र
मानवाः। उभयोः सेनयो राजन् व्यतिषक्तरथद्विपाः ॥ १० ॥
हयारोहैर्हयारोहाः पात्यन्ते स्म महाहवे। ऋष्टिभिर्विमला-
भिश्च प्रासैरपि च संयुगे ॥ ११ ॥ रथी रथिनमासाद्य बाणैः
कनकभूषणैः। पातयामास समरे तस्मिन्नतिभयङ्करे ॥ १२ ॥
गजारोहा गजारोहान् नाराचशरतोमरैः। संयुक्तान् पातया-
मासुस्तव तेषाञ्च सङ्घशः ॥ १३ ॥ पत्तिसङ्घा रणे पत्तीन् भिन्दि-
पालपरश्वधैः। न्यपातयन्त संहृष्टाः परस्परकृतागसः ॥ १४ ॥
रथी च समरे राजन्नासाद्य गजयोधिनम्। सगजं पातयामास
गजी च रथिनं तथा ॥ १५ ॥ रथिनश्च हयारोहः प्रासेन भरत-
र्षभ। पातयामास समरे रथी च हयसादिनम् ॥ २६ ॥ पदाती
रथिनं सङ्ख्ये रथी चापि पदातिनम्। न्यपातयच्छितैः शस्त्रैः
सेनयोरुभयोरपि ॥ १७ ॥ गजारोहा हयारोहान् पातयामासु-
राहवे। हयारोहा गजस्थांश्च तदद्भुतमिवाभवत् ॥ १८ ॥
गजारोहवरैश्चापि तत्र तत्र पदातयः। पातिताः समदृश्यन्त तै-
श्चापि गजयोधिनः ॥ १९ ॥ पत्तिसङ्घा हयारोहैः सादिसङ्घाश्च
पत्तिभिः। पात्यमाना व्यदृश्यन्त शतशोऽथ सहस्रशः ॥ २० ॥
ध्वजैस्तत्रापविद्धैश्च कार्मुकैस्तोमरैस्तथा। परिस्तोमैः कुथाभिश्च
कम्बलैश्च महाधनैः ॥ २१ ॥ प्रासैस्तथा गदाभिश्च परिघैः कम्पनै-

स्तथा। शक्तिभिः कवचैश्चित्रैः कुणपैरङ्कुशैरपि ॥ २२ ॥ निस्त्रिंशै-र्विमलैश्चैव स्वर्णपुङ्खैः शरैस्तथा। भूर्भाति भरतश्रेष्ठ स्रग्दामै-रिव चित्रिता ॥ २३ ॥ नराश्वकायैः पतितैर्दन्तिभिश्च महाहवे। अगम्यरूपा पृथिवी मांसशोणितकर्द्दमा ॥ २४ ॥ प्रशशाम रजो भौमं व्युक्षितं नरशोणितैः। दिशश्च विमलाः सर्व्वाः समपद्यन्त भारत ॥ २५ ॥ उत्थितान्यगणेयानि कवन्धानि समन्ततः। चिह्न-भूतानि जगतो विनाशार्थाय भारत ॥ २६ ॥ तस्मिन् युद्धे महा-रौद्रे वर्त्तमाने सुदारुणे। प्रत्यदृश्यन्त रथिनो धावमानाः सम-न्ततः ॥ २७ ॥ ततो भीष्मश्च द्रोणश्च सैन्धवश्च जयद्रथः। पुरु-मित्रो विकर्णश्च शकुनिश्चापि सौवल ॥ २८ ॥ एते समरदुर्द्धर्षा सिंहतुल्यपराक्रमाः। पाण्डवानामनीकानि बभञ्जुः समरे स्थिताः ॥ २९ ॥ तथैव भीमसेनोऽपि राक्षसश्च घटोत्कचः। सात्यकि-श्चेकितानश्च द्रौपदेयाश्च भारत ॥ ३० ॥ तावकांस्तव पुत्रांश्च सहितान् सर्व्वराजभिः। द्रावयामासुराजिस्थांस्त्रिदशा दानवा-निव ॥ ३१ ॥ तथा ते समरेऽन्योऽन्यं निघ्नन्तः क्षत्रियर्षभाः। रक्तोक्षिता घोररूपा विरेजुः किंशुका इव ॥ ३२ ॥ विजित्य च रिपून् राजन् सेनयोरुभयोरपि। व्यदृश्यन्त महामात्रा ग्रहा इव नभस्तले ॥ ३३ ॥ ततो रथसहस्रेण पुत्रो दुर्य्योधनस्तव। अभ्ययात पाण्डवान् युद्धे राक्षसञ्च घटोत्कचम् ॥ ३४ ॥ तथैव पाण्डवाः सर्व्वे महत्या सेनया सह। भीष्मद्रोणौ रणे शूरौ प्रत्युद्ययुररिन्दमौ ॥ ३५ ॥ किरीटी तु ययौ क्रुद्धः समन्तात् पार्थिवोत्तमान्। आर्जुनिः सात्यकिश्चैव ययतुः सौवलं बलम् ॥ ३६ ॥ ततः प्रववृते भूयः सङ्ग्रामो रोमहर्षणः। तावकानां परेषाञ्च जिगीषूणां परस्परम् ॥ ३७ ॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि तृतीयदिवसयुद्धारम्भे सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

सञ्जय उवाच। ततस्ते पार्थिवाः क्रुद्धाः फाल्गुनं वीक्ष्य संयुगे। रथैरनेकसाहस्रैः समन्तात् पर्य्यवारयन् ॥ १ ॥ अथैनं रथवंशेन कोष्ठकीकृत्य भारत। शरैः सुबहुसाहस्रैः समन्तात् पर्य्यवारयन् ॥ २ ॥ शक्तीश्च विमलास्तीक्ष्णा गदाश्च परिघैः सह। प्रासान् परश्वधांश्चैव मुद्गरान् मुषलानपि ॥ ३ ॥ चिक्षिपुः समरे क्रुद्धाः फाल्गुनस्य रथं प्रति। शस्त्राणामथ तां वृष्टिं शलभानामिवायतिम् ॥ ४ ॥ रुरोध सर्व्वतः पार्थः शरैः कनकभूषणैः। तत्र तल्लाघवं दृष्ट्वा वीभत्सोरतिमानुषम् ॥ ५ ॥ देवदानवगन्धर्व्वाः पिशाचोरगराक्षसाः। साधुसाध्विति राजेन्द्र फाल्गुनं प्रत्यपूजयन् ॥ ६ ॥ सात्यकिश्चाभिमन्युश्च महत्या सेनया सह। गान्धारान् समरे शूरान् रुरुधुः सहसौबलान् ॥ ७ ॥ तत्र सौबलकाः शूरा वार्ष्णेयस्य रथोत्तमम्। तिलशश्चिच्छिदुः क्रोधात् शस्त्रैर्नानाविधैरपि ॥ ८ ॥ सात्यकिस्तु रथं त्यक्त्वा वर्त्तमाने महाभये। अभिमन्योरथं तूर्णमारुरोह परन्तप ॥ ९ ॥ तावेकरथसंसक्तौ सौबलेयस्य वाहिनीम्। व्यधमतां शितैस्तूर्णं शरैः सन्नतपर्व्वभिः ॥ १० ॥ द्रोणभीष्मौ रणे यत्तौ धर्म्मराजस्य वाहिनीम्। नाशयेतां शरैस्तीक्ष्णैः कङ्कपत्रपरिच्छदैः ॥ ११ ॥ ततो धर्म्मसुतो राजा माद्रीपुत्रौ च पाण्डवौ। मिषतां सर्व्वसैन्यानां द्रोणानीकमुपाद्रवत् ॥ १२ ॥ तत्राभूत् सुमहद्युद्धं तुमुलं लोमहर्षणम्। यथा देवासुरं युद्धं पूर्व्वमासीत् सुदारुणम् ॥ १३ ॥ कुर्व्वाणौ तु महत् कर्म्म भीमसेनघटोत्कचौ। दुर्य्योधनस्ततोऽभ्येत्य तावुभावभ्यवारयत् ॥ १४ ॥ तत्राद्भुतमपश्याम हैडिम्बस्य पराक्रमम्। अतीत्य पितरं युद्धे यदयुध्यत भारत ॥ १५ ॥ भीमसेनस्तु संक्रुद्धो दुर्य्योधनममर्षणम्। हृद्यविध्यत् पृषत्केन प्रहसन्निव पाण्डवः ॥ १६ ॥ ततो दुर्य्योधनो राजा प्रहारवरपीडितः। निषसाद रथोपस्थे कश्मलञ्च जगाम ह ॥ १७ ॥ तं विसंज्ञमथो

दृष्ट्वा त्वरमाणोऽस्य सारथिः । अपोवाह रथात्राजंस्तत सैन्य-मभज्यत ॥ १८ ॥ ततस्ता कौरवी सेना द्रवमाणा ततस्तत । निघ्नन् भीम शरैस्तीक्ष्णैरनुवव्राज पृष्ठत ॥ १९ ॥ पार्षतस्तु रणश्रेष्ठो धर्म्मपुत्रश्च पाण्डव । द्रोणस्य पश्यत सैन्यं गाङ्गेयस्य च भारत ॥ २० ॥ जघ्नतुर्विशिखैस्तीक्ष्णै परानीकविनाशनै । द्रवमाण तु तत सैन्य तव पुत्रस्य संयुगे ॥ २१ ॥ नाशक्नु ता वारयितु भीष्मद्रोणौ महारथौ । वार्य्यमाणञ्च भीष्मेण द्रोणेन च महात्मना ॥ २२ ॥ विद्रवत्येव तत सैन्यं पश्यतोर्द्रोणभीष्मयो । ततो रथसहस्रेषु विद्रवत्सु ततस्तत ॥ २३ ॥ तावास्थितावेकरथं सौभद्रशिनिपुङ्गवौ । सौवलीं समरे सेना नाशयेता परन्तप ॥२४॥ शुशुभाते ततस्तौ तु शैनेयकुरुपुङ्गवौ । अमावास्या गतौ यद्वत् सोमसूर्य्यौ नभस्तले ॥ २५ ॥ अर्ज्जुनस्तु तत क्रुद्धस्तव सैन्य विशाम्पते । ववर्ष शरवर्षेण धाराभिरिव तोयद ॥ २६ ॥ बध्यमान ततस्तत्तु शरै पार्थस्य संयुगे । दुद्राव कौरव सैन्यं विषादभयकम्पितम ॥ २७ ॥ द्रवतस्तान् समालोक्य भीष्मद्रोणौ महाबलौ । न्यवारयेता संक्रुद्धौ दुर्य्योधनहितैषिणौ ॥ २८ ॥ ततो दुर्य्योधनो राजा समाश्वस्य विशाम्पते । न्यवर्त्तयत तत सैन्य द्रवमाण समन्तत ॥ २९ ॥ यत्र यत्र सुतं तुभ्य यो य पश्यति भारत । तत्र तत्र न्यवर्त्तन्त क्षत्रियाणा महारथा ॥ ३० ॥ तान्निवृत्तान् समीक्ष्यैव ततोऽन्येऽपीतरे जना । अन्योऽन्यस्पर्द्धया राजन् लज्जया चावतस्थिरे ॥ ३१ ॥ पुनरावर्त्ततां तेषा वेग आसीत विशाम्पते । पूर्य्यत सागरस्येव चन्द्रस्योदयन प्रति ॥ ३२ ॥ सन्निवृत्तास्ततस्तांस्तु दृष्ट्वा राजा सुयोधन । अब्रवीत त्वरितो गत्वा भीष्म शान्तनव वच ॥ ३३ ॥ पितामह निबोधेद यत्त्वा वक्ष्यामि भारत । नानुरूपमह मन्ये त्वयि जीवति कौरव ॥ ३४ ॥ द्रोणे चास्त्रविदा श्रेष्ठे सपुत्रे ससुहृज्जने । कृपे चैव महेष्वासे

द्रवते यत्र वरूथिनी ॥ ३५ ॥ न पाण्डवान् प्रतिबलास्त्वमन्ये कथञ्चन । तथा द्रोणस्य संग्रामे द्रौणेश्चापि कृपस्य च ॥ ३६ ॥ अनुग्राह्या पाण्डुसुता नूनं तव पितामह । यथेमां क्षमसे वीर वध्यमानां वरूथिनीम् ॥ ३७ ॥ सोऽस्मि वाच्यस्त्वया राजन् पूर्वमेव समागमे । न योत्स्ये पाण्डवान् सङ्ख्ये नापि सात्यकिं पार्षतौ ॥ ३८ ॥ श्रुत्वा तु वचनं तुभ्यमाचार्य्यस्य च भारत । कर्णेन सहितं कृत्यं चिन्तयानस्तदैव हि ॥ ३९ ॥ यदि नाहं परित्याज्यो युवाभ्यामिह संयुगे । विक्रमेणानुरूपेण युध्यतां पुरुषर्षभौ ॥ ४० ॥ एतत् श्रुत्वा वचो भीष्मः प्रहसन् वै मुहुर्मुहुः । अब्रवीत् तनयं तुभ्यं क्रोधात् व्याहृत्य चक्षुषी ॥ ४१ ॥ बहुशोऽपि मया राजन् पथ्यमुक्तो हितं वचः । अजेया पाण्डवा युद्धे दैवैरपि सवासवैः ॥ ४२ ॥ यत्तु शक्यं मया कर्त्तुं वृद्धेनाद्य नृपोत्तम । करिष्यामि यथाशक्ति प्रेक्षेदानीं सबान्धव ॥ ४३ ॥ अद्य पाण्डुसुतान् सर्वान् ससैन्यान् सह बन्धुभिः । मिषतो वारयिष्यामि सर्वलोकस्य पश्यत ॥ ४४ ॥ एवमुक्तस्तु भीष्मेण पुत्रस्तव नरेश्वर । दध्मौ शङ्खं मुदा युक्तो भेरीश्च समताडयत् ॥ ४५ ॥ पाण्डवाश्च ततो राजन् श्रुत्वा तु निनादं महत् । दध्मुः शङ्खांश्च भेरीश्च मुरजांश्चाभ्यवादयन् ॥ ४६ ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि भीष्मदुर्य्योधनसम्वादे अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

---

धृतराष्ट्र उवाच । प्रतिज्ञाते ततस्तस्मिन् युद्धे भीष्मेण भारत । मम पुत्रस्य वाक्यैस्तु क्रोधितेन विशाम्पते ॥ १ ॥ भीष्मः किमकरोत्तत्र पाण्डवेयेषु सञ्जय । पितामहे वा पाञ्चालास्तन्ममाचक्ष्व सञ्जय ॥ २ ॥

सञ्जय उवाच । गतपूर्वाह्णभूयिष्ठे तस्मिन्नहनि भारत । पश्चिमां दिशमास्थाय किञ्चित् याते दिवाकरे ॥ ३ ॥ जयं प्राप्तेषु सर्व्वेषु पाण्डवेषु महात्मसु । सर्व्वधर्म्मविशेषज्ञः पिता देवव्रतस्तव ॥ ४ ॥ अभ्ययात् जवनैरश्वैः पाण्डवानामनीकिनीम् । महत्या सेनया गुप्तस्तव पुत्रैश्च सर्व्वश. ॥ ५ ॥ प्रावर्त्तत ततो युद्धं तुमुलं लोमहर्षणम् । अस्माकं पाण्डवैः सार्द्धमनयात्तव भारत ॥ ६ ॥ धनुषां कूजतां तत्र तलानाञ्चाभिहन्यताम् । बभूव सुमहान् शब्दो गिरीणामिव दीर्य्यताम् ॥ ७ ॥ तिष्ठ स्थितोऽस्मि विद्ध्येनं निवर्त्तस्व स्थिरो भव । स्थितोऽस्मि प्रहरस्वेति शब्दाः श्रूयन्ति सर्व्वशः ॥ ८ ॥ काञ्चनेषु तनुत्रेषु किरीटेषु ध्वजेषु च । शिलानामिव शैलेषु पतितानामभूत् स्वनः ॥ ९ ॥ पतितान्युत्तमाङ्गानि बाहवश्च विभूषिताः । व्यचेष्टन्त महीं प्राप्य शतशोऽथ सहस्रशः ॥ १० ॥ हृतोत्तमाङ्गाः केचित्तु तथैवोद्यतकार्म्मुका । प्रगृहीतायुधाश्चैव तस्थुः पुरुषसत्तमाः ॥ ११ ॥ प्रावर्त्तत महावेगा नदी रुधिरवाहिनी । मातङ्गाङ्गशिलाघोरा मांसशोणितकर्द्दमा ॥ १२ ॥ वराश्वनरनागानां शरीरप्रभवा तदा । परलोकार्णवनदी गृध्रगोमायुमोदनी ॥ १३ ॥ न दृष्टं न श्रुतं वापि युद्धमेतादृशं नृप । यथा तव सुतानाञ्च पाण्डवानाञ्च भारत ॥ १४ ॥ नासीद्रथपथस्तत्र योधैर्युधि निपातितैः । गजैर्निपतितैर्नीलैर्गिरिशृङ्गैरिवावृतः ॥ १५ ॥ विकीर्णैः कवचैश्चित्रैः शिरस्त्राणैश्च मारिष । शुशुभे तद्रणस्थानं शरदीव नभस्तलम् ॥ १६ ॥ विनिर्भिन्ना नरा केचिदन्त्रापीडप्रकर्षिणः । अहीनाः समरे शत्रूनभ्यधावन्त

दर्पिता ॥ १७ ॥ तात भ्रात सखे बन्धो वयस्य मम मातुल। मा मा परित्यजेत्येतत् चुक्रुशुः पतिता रणे ॥ १८ ॥ अथाभ्येहि त्वमागच्छ किं भीतोऽसि क्व यास्यसि। स्थितोऽहं समरे मा भै रिति चान्ये विचुक्रुशुः ॥ १९ ॥ तत्र भीष्मः शान्तनवो नित्यं मण्डलकार्मुकः। मुमोच बाणान् दीप्ताग्रानहीनाशीविषानिव ॥ २० ॥ शरैरेकायनीकुर्वन् दिशः सर्वा यतव्रत। जघान पाण्डवरथानादिश्यादिश्य भारत ॥ २१ ॥ नृत्यन् वै रथमार्गेषु दर्शयन् पाणिलाघवम्। अलातचक्रवद्राजन् तत्र तत्र स्म दृश्यते ॥ २२ ॥ तमेकं समरे शूरं पाण्डवाः सृञ्जयैः सह। अनेकशतसाहस्रं समपश्यन्त लाघवात् ॥ २३ ॥ मायाकृतात्मानमिव भीष्मं तत्र स्म मेनिरे। पूर्वस्यां दिशि तं दृष्ट्वा प्रतीच्यां ददृशुर्जनाः ॥ २४ ॥ उदीच्याञ्चैवमालोक्य दक्षिणस्यां तथैव च। प्रतियुध्यन् स समरे गाङ्गेयः प्रत्यदृश्यत ॥ २५ ॥ न चैनं पाण्डवेयानां कश्चित् शक्नोति वीक्षितुम्। विशिखानेव पश्यन्ति भीष्मचापच्युतान् बहून् ॥ २६ ॥ कुर्वाणं समरे कर्म सूदयानञ्च वाहिनीम्। व्याक्रोशन्त रणे तत्र वीरा बहुविधं बहु ॥ २७ ॥ अमानुषेण रूपेण चरन्तं पितरं तव। शलभा इव राजानः पतन्ति स्म प्रमोहिताः ॥ २८ ॥ भीष्माग्निमभि सङ्क्रुद्धं विनाशाय सहस्रशः। न हि मोघः शरः कश्चिदासीत् भीष्मस्य संयुगे ॥ २९ ॥ नरनागाश्वकायेषु बहुत्वाल्लघुयोधिनः। भिनत्त्येकेन स रणे सुतेन नतपर्वणा ॥ ३० ॥ गजकण्टकसन्नद्धं वज्रेणेव शिलोच्चयम्। द्वौ त्रीनपि गजारोहान् पिण्डितान् पर्वतानिव ॥ ३१ ॥ नाराचेन सुतीक्ष्णेन निजघान पिता तव। यो यो भीष्मं नरव्याघ्रमभ्येति युधि कश्चन ॥ ३२ ॥ मुहूर्त्तदृष्टः समयात् पतितो भुवि दृश्यते। एवं सा धर्मराजस्य वध्यमाना महाचमूः ॥ ३३ ॥ भीष्मेणातुलवीर्य्येण व्यशीर्य्यत सहस्रधा।

प्राकम्पत महासेना शरवर्षाभिपीड़िता ॥ ३४ ॥ पश्यतो वासु-
देवस्य पार्थस्य च महात्मनः । यतमानापि ते वीरा द्राव्य-
माणान् महारथान् ॥ ३५ ॥ नाशक्नुवन् वारयितुं भीष्मबाण-
प्रपीड़ितान् । महेन्द्रसमवीर्य्येण मथ्यमाना महाचमूः ॥ ३६ ॥
अभज्यत महाराज न च द्वौ सह धावतः । आविद्धरथनागाश्वं
पतितं ध्वजकूवरम् ॥ ३७ ॥ अनीकं पाण्डुपुत्राणां हाहाभूत-
मचेतनम् । जघानात्र पिता पुत्रं पुत्रश्च पितरन्तथा ॥ ३८ ॥
प्रियं सखायं चाक्रन्दे सखा दैवबलात्कृतः । विमुच्य कवचा-
न्यन्ये पाण्डुपुत्रस्य सैनिकाः ॥ ३९ ॥ प्रकीर्य्य केशान् धावन्तः
प्रत्यदृश्यन्त भारत । तद् गोकुलमिवोद्भ्रान्तं रथयूथपयूथपम्
॥ ४० ॥ ददृशे पाण्डुपुत्राणां सैन्यमार्त्तस्वरं तदा । प्रभज्यमानं
सैन्यन्तु दृष्ट्वा यादवनन्दनः ॥ ४१ ॥ उवाच पार्थं कृष्णस्तु निगृह्य
रथसत्तमम् । अयं स कालः सम्प्राप्तः पार्थ यः काङ्क्षितस्तव
॥ ४२ ॥ प्रहरास्मै नरव्याघ्र न चेन्मोहाद्विमुह्यसे । यत् त्वया
कथितं वीर पुरा राज्ञां समागमे ॥ ४३ ॥ भीष्मद्रोणमुखान्
सर्वान् धार्त्तराष्ट्रस्य सैनिकान् । सानुबन्धान् हनिष्यामि यो मां
योत्स्यति संयुगे ॥ ४४ ॥ इति तत् कुरु कौन्तेय सत्यं वाक्य-
मरिन्दम । बीभत्सो पश्य सैन्यं स्वं भज्यमानमितस्ततः ॥ ४५ ॥
द्रवतश्च महीपालान् पश्य यौधिष्ठिरे बले । दृष्ट्वा तु समरे भीष्मं
व्यात्ताननमिवान्तकम् ॥ ४६ ॥ भयार्त्ताः सम्प्रणश्यन्ति सिंहं
क्षुद्रमृगा इव । एवमुक्तः प्रत्युवाच वासुदेवं धनञ्जयः ॥ ४७ ॥

नेद सिंहवत् विनदन् मुहुः । धनञ्जयरथं तूर्णं शरवर्षैरवा-
किरत् ॥ ५१ ॥ क्षणेन सरथस्तस्य सध्वजः सहसारथिः । शर-
वर्षेण महता सञ्छन्नो न प्रदृश्यते ॥ ५२ ॥ वासुदेवस्त्वसम्भ्रान्तो
धैर्य्यमास्थाय सत्त्ववान् । चोदयामास तानश्वान् विभग्नान् भीष्म-
सायकैः ॥ ५३ ॥ ततः पार्थो धनुर्गृह्य दिव्यं जलदनिःस्वनम् ।
पातयामास भीष्मस्य धनुश्छित्त्वा शितैः शरैः ॥ ५४ ॥ स छिन्न-
धन्वा कौरव्यः पुनरन्यन्महद्धनुः । निमेषान्तरमात्रेण सज्यं कृत्वा
पिता तव ॥ ५५ ॥ विचकर्ष ततो दोर्भ्यां धनुर्जलदनिःस्वनम् ।
अथास्य तदपि क्रुद्धश्चिच्छेद धनुरर्जुनः ॥ ५६ ॥ तस्य तत्
पूजयामास लाघवं शान्तनोः सुतः । साधु पार्थ महाबाहो साधु
भो पाण्डुनन्दन ॥ ५७ ॥ त्वय्येवैतत् युक्तरूपं महत् कर्म्म धन-
ञ्जय । प्रीतोऽस्मि सुदृढं पुत्र कुरु युद्धं मया सह ॥ ५८ ॥ इति
पार्थं प्रशस्याथ प्रगृह्यान्यन्महद्धनुः । मुमोच समरे वीरः शरान्
पार्थरथं प्रति ॥ ५९ ॥ अदर्शयत् वासुदेवो हययाने परं बलम् ।
मोघान् कुर्व्वन् शरांस्तस्य मण्डलान्यचरत् लघु ॥ ६० ॥ ततस्तु
भीष्मः सुदृढं वासुदेवधनञ्जयौ । विव्याध निशितैर्वाणैः सर्व्व-
गात्रेषु मारिष ॥ ६१ ॥ शुशुभाते नरव्याघ्रौ तौ भीष्मशरविक्षतौ ।
गोवृषाविव नर्दन्तौ विषाणोल्लिखिताङ्कितौ ॥ ६२ ॥ पुनश्चापि
सुसंक्रुद्धः शरैः शतसहस्रशः । कृष्णयोर्युधि संरब्धो भीष्म-
श्चावारयद्दिशः ॥ ६३ ॥ वार्ष्णेयञ्च शरैस्तीक्ष्णैः कम्पयामास
रोषितः । मुहुरभ्युत्स्मयन् भीष्मः प्रहस्य स्वनवत्तदा ॥ ६४ ॥
ततः कृष्णस्तु समरे दृष्ट्वा भीष्मपराक्रमम् । सम्प्रेक्ष्य च महा-
बाहुः पार्थस्य मृदुयुद्धताम् ॥ ६५ ॥ तं भीष्मं शरवर्षाणि सृजन्त-
मनिशं युधि । प्रतपन्तमिवादित्यं मध्यमासाद्य सेनयोः ॥ ६६ ॥
नरान् वरान् विनिघ्नन्तं पाण्डुपुत्रस्य सैनिकान् । युगान्तमिव
कुर्व्वाणं भीष्मं यौधिष्ठिरे बले ॥ ६७ ॥ अमृष्यमाणो भगवान्

केशवः परवीरहा। अचिन्तयदमेयात्मा नास्ति यौधिष्ठिरं बलम् ॥ ६८ ॥ एकाह्ना हि रणे भीष्मो नाशयेत् दैत्यदानवान्। किमु पाण्डुसुतान् युद्धे सबलान् सपदानुगान् ॥ ६९ ॥ द्रवते च महत् सैन्यं पाण्डवस्य महात्मनः। एते च कौरवास्तूर्णं प्रभग्नान् वीक्ष्य सोमकान् ॥ ७० ॥ आद्रवन्ति रणे हृष्टा हर्षयन्तः पितामहम्। सोऽहं भीष्मं निहत्याद्य पाण्डवार्थाय दंशितः ॥७१॥ भारमेनं विनेष्यामि पाण्डवानां महात्मनाम्। अर्जुनो हि शरैस्तीक्ष्णैर्बध्यमानोऽपि संयुगे ॥ ७२ ॥ कर्त्तव्यं नाभिजानाति रणे भीष्मस्य गौरवात्। तथा चिन्तयतस्तस्य भूय एव पितामहः। प्रेषयामास संक्रुद्धः शरान् पार्थरथं प्रति ॥ ७३ ॥ तेषां बहुत्वात् सुभृशं शराणां दिशोऽथ सर्वाः पिहिता बभूवुः। न चान्तरिक्षं न दिशो न भूमिर्न भास्करोऽदृश्यत रश्मिमाली ॥ ७४ ॥ ववुश्च वातास्तुमुलाः सधूमा दिशश्च सर्वाः क्षुभिता बभूवुः। द्रोणो विकर्णश्च जयद्रथश्च भूरिश्रवा कृतवर्म्मा कृपश्च ॥ ७५ ॥ श्रुतायुरम्बष्ठपतिश्च राजा विन्दानुविन्दौ च सुदक्षिणश्च। प्राच्याश्च सौवीरगणाश्च सर्वे वसातयः क्षुद्रकमालवाश्च ॥ ७६ ॥ किरीटिनं त्वरमाणा विसस्रुर्निदेशगाः शान्तनवस्य राज्ञः। तं वाजिपादातिरथौघजालैरनेकसाहस्रशतैर्ददर्श ॥ ७७ ॥ किरीटिनं सम्परिवार्य्यमाणं शिनेर्नप्ता वारणयूथपैश्च। ततश्च दृष्ट्वार्जुनवासुदेवौ पदातिनागाश्वरथैः समन्तात् ॥ ७८ ॥ अभिद्रुतौ शस्त्रभृतां वरिष्ठौ शिनिप्रवीरोऽभिससार तूर्णम्। स तान्यनीकानि धनुष्मतां वरः शिनिप्रवीरः सहसाभिपत्य ॥ ७९ ॥ चकार साहाय्यमथार्जुनस्य विष्णुर्यथा वृत्रनिषूदनस्य। विशीर्णनागाश्वरथं ध्वजौघं भीष्मेण वित्रासितसर्वयोधम् ॥ ८० ॥ युधिष्ठिरानीकमभिद्रवन्तं प्रोवाच संदृश्य शिनिप्रवीरः। क क्षत्रिया यास्यथ नैष धर्म्मः सतां पुरस्तात् कथित पुराणैः ॥ ८१ ॥ म।

प्रतिज्ञां त्यजत प्रवीरा स्ववीर्यधर्मान् प्रतिपालयध्वम्। तान्
वासवानन्तरजो निशम्य नरेन्द्रमुख्यान् द्रवतः समेतान्॥ ८२॥
पार्थस्य दृष्ट्वा मृदुयुद्धतां च भीष्मञ्च सङ्ख्ये समुदीर्य्यमाणम्।
अमृष्यमाणः स ततो महात्मा यशस्विनं सर्वदाशार्हभर्त्ता॥ ८३॥
उवाच शैनेयमभिप्रशंसन् दृष्ट्वा कुरूनापततः समन्तात्। ये यान्ति
यान्त्वेव शिनिप्रवीर येऽवस्थिताः सात्वत तेऽपि यान्तु॥ ८४॥
भीष्मं रथात् पश्य निपात्यमानं द्रोणञ्च सङ्ख्ये सगणं मयाद्य।
न मे वशे सात्वत कौरवाणां क्रुद्धस्य मुच्येत रणेऽद्य कश्चित्॥ ८५॥
तस्मादहं गृह्य रथाङ्गमुग्रं प्राणं हरिष्यामि महाव्रतस्य। निहत्य
भीष्मं सगणं तथाजौ द्रोणञ्च शैनेय रथप्रवीरौ॥ ८६॥ प्रीतिं
करिष्यामि धनञ्जयस्य राज्ञश्च भीमस्य तथाश्विनोश्च। निहत्य
सर्वान् धृतराष्ट्रपुत्रांस्तत्पक्षिणो ये च नरेन्द्रमुख्याः॥ ८७॥
राज्येन राजानमजातशत्रुं सम्पादयिष्याम्यहमद्य हृष्टः। ततः
सुनाभं वसुदेवपुत्रः सूर्य्यप्रभं वज्रसहस्रतुल्यम्॥ ८८॥ क्षुरान्त-
मुद्यम्य भुजेन चक्रं रथादवप्लुत्य विसृज्य वाहान्। सङ्कम्पयन्
गाञ्चरणैर्महात्मा वेगेन कृष्णः प्रससार भीष्मम्॥ ८९॥ मदान्ध-
माजौ समुदीर्णदर्पं सिंहो जिघांसन्निव वारणेन्द्रम्। सोऽभ्य-
द्रवद् भीष्ममनीकमध्ये क्रुद्धो महेन्द्रावरजः प्रमाथी॥ ९०॥
व्यालम्बिपीतान्तपटश्चकाशे घनो यथा खे चिरमापिनद्धः। सुदर्शनं
चास्य रराज शौरेस्तच्चक्रपद्मं सुभुजोरुनालम्॥ ९१॥ यथादि-
पद्मं तरुणार्कवर्णं रराज नारायणनाभिजातम्। तत् कृष्ण-
कोपोदयसूर्य्यबुद्धं क्षुरान्ततीक्ष्णाग्रसुजातपत्रम्॥ ९२॥ तस्यैव
देहोरुसरःप्ररूढं रराज नारायणबाहुनालम्। तमात्तचक्रं
प्रणदन्तमुच्चैः क्रुद्धं महेन्द्रावरजं समीक्ष्य॥ ९३॥ सर्वाणि
भूतानि भृशं विनेदुः क्षयं कुरूणामिति चिन्तयित्वा। स वासु-
देवः प्रगृहीतचक्रः संवर्त्तयिष्यन्निव जीवलोकम्॥ ९४॥ अभ्युत्-

पतन् लोकगुरुर्बभासे भूतानि सन्धक्ष्यन्निव धूमकेतुः॥ तमापतन्तं प्रगृहीतचक्रं समीक्ष्य देवं द्विपदाम्वरिष्ठम्॥ ९५॥ असम्भ्रमात् कार्मुकवाणपाणीरथे स्थितः शान्तनवोऽभ्यवाच। एह्येहि देवेश जगन्निवास नमोऽस्तु ते शार्ङ्गगदासिपाणे॥ ९६॥ प्रसह्य मां पातय लोकनाथ रथोत्तमात् भूतशरण्य सङ्ख्ये। त्वया हतस्येह ममाद्य कृष्ण श्रेयः परस्मिन्निह चैव लोके॥ ९७॥ सम्भावितोऽस्म्यन्धकवृष्णिनाथ लोकैस्त्रिभिर्मे प्रथितप्रभाव। श्रुत्वा वाचः शान्तनवस्य कृष्णो वेगेन धावंस्तमथाभ्युवाच॥ ९८॥ त्वं मूलमस्येह भुवि क्षयस्य दुर्य्योधनञ्चाद्य समुद्धरिष्यसि। दुर्य्यूतदेवी नृपतिर्निवार्य्यः सुमन्त्रिणा धर्म्मपथि स्थितेन॥ ९९॥ त्याज्योऽथ वा कालपरीतबुद्धिर्धर्मातिगो यः कुलपांसनः स्यात्। भीष्मस्तदाकर्ण्य यदुप्रवीरं राजा परं दैवतमित्युवाच॥ १००॥ त्यक्तस्तु कंसो यदुभिर्हितार्थे सम्बोध्यमानो न बुबोध राजा। क्षयाय दैवाद्विपरीतबुद्धिः श्रोता हितं यस्य न कश्चिदस्ति॥ १०१॥ रथादवप्लुत्य ततस्त्वरावान् पार्थः पदा द्रुत्य यदुप्रवीरम्। जग्राह पीनोन्नतलम्बबाहुं बाह्वोर्हरिं व्यायतपीनबाहुः॥ १०२॥ निगृह्यमाणस्तु तमादिदेवो भृशं सरोषः किल चात्मयोगी। आदाय वेगेन जगाम जिष्णुं विष्णुर्महावात इवैकवृक्षम्॥ १०३॥ पार्थस्तु विष्टभ्य बलेन पादौ भीष्मान्तिकं तूर्णमभिद्रवन्तम्। बलान्निजग्राह धनैर्महात्मा पादेऽथ राजन् दशमे कथञ्चित्॥ १०४॥ अवस्थितञ्च प्रणिपत्य कृष्णं प्रीतोऽर्जुनः काञ्चनचित्रमाली। उवाच कोपं प्रतिसंहरेति गतिर्भवान् केशव पाण्डवानाम्॥ १०५॥ न हास्यते कर्म्म यथाप्रतिज्ञं पुत्रैः शपे केशव सोदरैश्च। अन्तं गमिष्यामि यथा कुरूणां त्वयाहमिन्द्रानुज सम्प्रयुक्तः॥ १०६॥ ततः प्रतिज्ञां समयञ्च तस्य जनार्द्दनः प्रीतमना निशम्य। स्थितः प्रिये कौरवसत्तमस्य रथं सचक्रः पुनरारुरोह॥ १०७॥ स

तानभीषून् पुनराददानो प्रगृह्य शङ्खं द्विषतां निहन्ता। निना-
दयामास दिशो नभश्च स पाञ्चजन्यस्य रवेण शौरिः ॥ १०८ ॥
आविद्धनिष्काङ्गदकुण्डलं तं रजोविकीर्णाञ्चितपक्ष्मनेत्रम्। विशुद्ध-
दंष्ट्रं प्रगृहीतशङ्खं विचुक्रुशुः प्रेक्ष्य कुरुप्रवीराः ॥ १०९ ॥ मृदङ्ग-
भेरीपटहप्रणादा नेमिस्वना दुन्दुभिनिःस्वनाश्च। ससिंहनादाश्च
बभूवुरुग्राः सर्वेष्वनीकेषु ततः कुरूणाम् ॥ ११० ॥ गाण्डीव-
घोषः स्तनयित्नुकल्पो जगाम पार्थस्य नभो दिशश्च। जग्मुश्च
बाणा विमलाः प्रसन्नाः सर्वा दिशः पाण्डवचापमुक्ताः ॥ १११ ॥
तं कौरवाणामधिपो बलेन भीष्मेण भूरिश्रवसा च सार्द्धम्।
प्रत्युद्ययावुद्यतबाणपाणिः कक्षं दिधक्षन्निव धूमकेतुः ॥ ११२ ॥
अथार्जुनाय प्रजहार भल्लान् भूरिश्रवाः सप्त सुवर्णपुङ्खान्।
दुर्योधनस्तोमरमुग्रवेगं शल्यो गदां शान्तनवश्च शक्तिम् ॥ ११३ ॥
स सप्तभिः सप्तशरप्रवेगान् संवार्य भूरिश्रवसा प्रमुक्तान्। शितेन
दुर्योधनबाहुमुक्तं क्षुरेण तत्तोमरमुन्ममाथ ॥ ११४ ॥ ततः
शुभामापततीञ्च शक्तिं विद्युत्प्रभां शान्तनवेन मुक्ताम्। गदाञ्च
मद्राधिपबाहुमुक्तां द्वाभ्यां कराभ्यां निचकर्त्त वीरः ॥ ११५ ॥ ततो
भुजाभ्यां बलवद्विकृष्य चित्रं धनुर्गाण्डिवमप्रमेयम्। माहेन्द्रमस्त्रं
विधिवत् सुघोरं प्रादुश्चकाराद्भुतमन्तरीक्षे ॥ ११६ ॥ तेनोत्तमा-
स्त्रेण ततो महात्मा सर्वाण्यनीकानि महाधनुष्मान्। शरौघ-
जालैर्विमलाग्निवर्णैर्निवारयामास किरीटमाली ॥ ११७ ॥ शिली-
मुखाः पार्थधनुर्विसृष्टा रथान् ध्वजाग्राणि धनूंषि बाहून्।
निकृत्य देहान् विविशुः परेषां नरेन्द्रनागेन्द्रतुरङ्गमाणाम् ॥ ११८ ॥
ततो दिशः सोऽनुदिशश्च पार्थः शरैः सुधारैर्निशितैर्वितत्य।
गाण्डीवशब्देन मनांसि तेषां किरीटमाली व्यथयाञ्चकार ॥ ११९ ॥
तस्मिंस्तथा घोरतमास्त्रयुद्धे शङ्खस्वना दुन्दुभिनिःस्वनाश्च। अन्त-
र्हिता गाण्डिवनिःस्वनेन बभूवुरुग्राश्च रथप्रणादाः ॥ १२० ॥

गाण्डीवशब्दं तमथो विदित्वा विराटराजप्रमुखा नृवीराः । पाञ्चाल-
राजो द्रुपदश्च वीरस्तं देशमाजग्मुरदीनसत्त्वाः ॥ १२१ ॥ सर्वाणि
सैन्यानि तु तावकानि जग्मुर्यतो गाण्डिवजः प्रणादः । ततस्ततः
सन्नतिमेव जग्मुर्न तं प्रभीतोऽभिससार कश्चित ॥ १२२ ॥ तस्मिन्
सुघोरे नृपसंप्रहारे हताः प्रवीराः सरथाश्व सूताः । गजाश्च
नाराचनिपाततप्ता महापताकाः शुभरुक्मकक्षाः ॥ १२३ ॥ परेत-
सत्त्वाः सहसा निपेतुः किरीटिना तत्र विभिन्नकायाः । दृढा-
हताः पत्रिभिरुग्रवेगैः पार्थेन भल्लैर्निशितैः शिताग्रैः ॥ १२४ ॥
निकृत्तयन्त्रा निहतेन्द्रजाला ध्वजा नृपाणां ध्वजिनीमुखेषु ।
पदातिसङ्घाश्च रथाश्च सङ्ख्ये हयाश्च नागाश्च धनञ्जयेन ॥ १२५ ॥
बाणाहतास्तूर्णमपेतसत्त्वा विष्टभ्य गात्राणि निपेतुरुर्व्याम् । ऐन्द्रेण
तेनास्त्रवरेण राजन् महाहवे भिन्नतनुत्रकायाः ॥ १२६ ॥ ततः
शरौघैर्निशितैः किरीटिना नृदेहशस्त्रक्षतलोहितोदा । नदी
सुघोरा नरमेदफेना प्रवर्त्तिता तत्र रणाजिरे वै ॥ १२७ ॥ वेगेन
सातीव पृथुप्रवाहा परेतनागाश्वशरीररोधा । नरान्त्रमज्जोद्धृत-
मांसपङ्का प्रभूतरक्षोगणहृष्टभूता ॥ १२८ ॥ शिरःकपालाकुल-
केशशाद्वला शरीरसङ्घातसहस्रवाहिनी । विशीर्णनानाकवचोर्मि-
सङ्कुला नराश्वनागास्थिनिकृत्तशर्करा ॥ १२९ ॥ गोमायुशाला-
वृककङ्कगृध्रैः क्रव्यादसङ्घैश्च तरक्षुभिश्च । उपेतकूलां ददृशु-
र्मनुष्याः क्रूरां महावैतरणीप्रकाशाम् ॥ १३० ॥ प्रवर्त्तितामर्जुन-
बाणसङ्घैर्मेदोवसासृक्प्रवहां सुभीमाम् । हतप्रवीरां च तथैव
दृष्ट्वा सेनां कुरूणामथ फाल्गुनेन ॥ १३१ ॥ ते चेदिपाञ्चाल-
करूषमत्स्याः पार्थाश्च सर्वे सहिता प्रणेदुः । जयप्रगल्भाः
पुरुषप्रवीराः सन्त्रासयन्तः कुरुवीरयोधान् ॥ १३२ ॥ हत-
प्रवीराणि बलानि दृष्ट्वा किरीटिना शत्रुभयावहेन । वित्रास्य
सेनां ध्वजिनीपतीनां सिंहो मृगाणामिव यूथसङ्घान् ॥ १३३ ॥

विनेदतुस्तावतिहर्षयुक्तौ गाण्डीवधन्वा च जनार्दनश्च। ततो
रविं संहृतरश्मिजालं दृष्ट्वा भृशं शस्त्रपरिक्षताङ्गाः॥ १३४॥
तदैन्द्रमस्त्रं विततं च घोरमसह्यमुद्वीक्ष्य युगान्तकल्पम्। अथाप
यानं कुरवः सभीष्माः सद्रोणदुर्योधनबाह्लिकाश्च॥ १३५॥ चक्रुर्
निशां सन्धिगतां समीक्ष्य विभावसोर्लोहितरागयुक्ताम्। अवाप्य
कीर्त्तिञ्च यशश्च लोके विजित्य शत्रूंश्च धनञ्जयोऽपि॥ १३६॥ ययौ
नरेन्द्रैः सहसोदरैश्च समाप्तकर्मा शिबिरं निशायाम्। ततः प्रजज्ञे
तुमुलः कुरूणां निशामुखे घोरतमः प्रणादः॥ १३७॥ रणे
रथानामयुतं निहत्य तथा गजाः सप्तशतार्जुनेन। प्राच्याश्च
सौवीरगणाश्च सर्वे निपातिताः क्षुद्रकमालवाश्च॥ १३८॥ महत्-
कृतं कर्म धनञ्जयेन कर्तुं यथा नार्हति कश्चिदन्यः। श्रुतायु
रम्बष्ठपतिश्च राजंस्तथैव दुर्मर्षणचित्रसेनौ॥ १३९॥ द्रोणः कृपः
सैन्धववाह्लिकौ च भूरिश्रवाः शल्यशलौ च राजन्। अन्ये च
योधाः शतशः समेताः क्रुद्धेन पार्थेन रणस्य मध्ये॥ १४०॥
स्वबाहुवीर्येण जिताः सभीष्माः किरीटिना लोकमहारथेन।
इति ब्रुवन्तः शिबिराणि जग्मुः सर्वे गणा भारत ये त्वदीयाः
॥ १४१॥ उल्कासहस्रैश्च सुसम्प्रदीप्तैर्विभ्राजमानैश्च तथा प्रदीपैः।
किरीटिना त्रासितसर्वयोधा चक्रे निवेशं ध्वजिनी कुरूणाम्॥१४२॥

इति भीष्मपर्वणि भीष्मवधपर्वणि तृतीयदिवसावहारे
एकोनषष्टितमोऽध्यायः॥ ५९॥

---

सञ्जय उवाच। व्युष्टां निशां भारत भारतानामनीकिनीनां
प्रमुखे महात्मा। ययौ सपत्नान् प्रतिजातकोपः ततः समग्रेण
बलेन भीष्मः॥ १॥ तं द्रोणदुर्योधनबाह्लिकाश्च तथैव दुर्मर्षण-
चित्रसेनौ। जयद्रथश्चातिबलो बलौघैर्नृपास्तथान्ये प्रययुः सम-

न्नात ॥ २ ॥ स तैर्महद्भिश्च महारथैश्च तेजस्विभिर्वीर्य्यवद्भिश्च राजन्। रराज राजोत्तम राजमुख्यैर्मध्ये सुराणामिव देवराज ॥ ३ ॥ तस्मिन्ननीकप्रमुखे विपक्षा दोधूयमानाश्च महापताका । सुरक्तपीतासितपाण्डराभा महागजस्कन्धगता विरेजु ॥ ४ ॥ सा वाहिनी शान्तनवेन राज्ञा महारथैर्वारणवाजिभिश्च । बभौ सविद्युत्स्तनयित्नुकल्पा जलागमे द्यौरिव जातमेघा ॥ ५ ॥ ततो रणायाभिमुखी प्रयाता प्रत्यर्जुनं शान्तनवाभिगुप्ता । सेनामहोग्रा सहसा कुरूणां वेगो यथा भीम इवापगाया ॥ ६ ॥ तं व्यालनानाविधगूढसारं गजाश्वपादातरथौघपक्षम्। व्यूहं महामेघसमं महात्मा ददर्श दूरात् कपिराजकेतु ॥ ७ ॥ स निर्ययौ केतुमता रथेन नरर्षभ श्वेतहयेन वीर । वरूथिनीनां प्रमुखे महात्मा बलेन सर्वंसपत्नसेनाम् ॥ ८ ॥ सोपस्करं सोत्तरबन्धुरीयं यत्तं यदूनामृषभेण सङ्ख्ये । कपिध्वजं प्रेक्ष्य विषेदुराजौ सहैव पुत्रैस्तव कौरवेया ॥ ९ ॥ प्रकर्षता गुप्तमुदायुधेन किरीटिना लोकमहारथेन। तं व्यूहराजं ददृशुस्त्वदीयाश्चतुश्चतुर्व्यालसहस्रकीर्णम् ॥ १० ॥ यथा हि पूर्वेऽहनि धर्म्मराजा व्यूहः कृत कौरवसत्तमेन । तथाभूतो मानुषेष्विह लोके न दृष्टपूर्वो न च विश्रुतश्च ॥ ११ ॥ ततो महाविमर्दसमाहतानि भेरीसहस्राणि विनेदुराजौ । शङ्खस्वनास्तूर्य्यरवाश्च जग्मु सर्वेष्वनीकेषु च सिंहनादा ॥ १२ ॥ तत सबाणानि महास्वनानि विस्फार्य्यमाणानि धनूंषि वीरै । क्षणेन भेरीपणवप्रणादानन्तर्दधु शङ्खमहास्वनाश्च ॥ १३ ॥ तच्छङ्खशब्दावृतमन्तरीक्षमुद्धूतभौमद्रुतरेणुजालम्। महावितानावततप्रकाशमालोक्य वीरा सहसा निपेतु ॥ १४ ॥ रथी रथेनाभिहत ससूत पपात साश्व सरथ सकेतु । गजो गजेनाभिहत पपात पदातिना चाभिहत पदाति ॥ १५ ॥ आवर्त्तमानान्यभि

वर्त्तमानैर्घोराकृतीन्यङ्ग तदर्शनानि । प्रासैश्च खड्गैश्च समाहतानि सहस्रवृन्दानि सहस्रवृन्दैः ॥ १६ ॥ सुवर्णतारागणभूषितानि सूर्य्यप्रभाभानि शरावराणि । विदार्य्यमाणानि परश्वधैश्च प्रासैश्च खड्गैश्च निपेतुरुर्व्याम् ॥ १७ ॥ गजैर्विषाणैर्वरहस्तरुग्णा केचित् ससूता रथिनः प्रपेतुः । रथर्षभाश्चापि रथर्षभेण निपेतिरे बाणहताः पृथिव्याम् ॥ १८ ॥ गजौघवेगोद्धतसायकानां श्रुत्वा निनादं वसुधां मनुष्याः । आर्त्तस्वरं सादिपदातियूनां विषाणगात्रावरताड़ितानाम् ॥ १९ ॥ सम्भ्रान्तनागाश्वरथे मुहूर्त्तं महाक्षये सादिपदातियूनाम् । महारथैः सम्परिवार्य्यमाणो ददर्श भीष्मः कपिराजकेतुम् ॥ २० ॥ तं पञ्चतालोच्छ्रितपद्मकेतुः सदश्ववेगाद्भुतवीर्य्यवाहम् । महास्त्रवेगाग्निदीप्तमन्तं किरीटिनं शान्तनवोऽभ्यधावत् ॥ २१ ॥ तथैव शक्रप्रतिमानकल्पमिन्द्रात्मजं द्रोणमुखाभिसस्रुः । कृपश्च शल्यश्च विविंशतिश्च दुर्य्योधनः सौमदत्तिश्च राजन् ॥ २२ ॥ ततो रथानीकमुखादुपेत्य सर्वास्त्रवित् काञ्चनचित्रवर्म्मा । जवेन शूरोऽभिससार सर्वांस्तानर्जुनस्यात्मसुतोऽभिमन्युः ॥ २३ ॥ तेषां महास्त्राणि महाबलानामसह्यकर्म्मा विनिहत्य कार्ष्णिः । बभौ महामन्त्रहुतार्च्चिमाली सदोगतः सन् भगवानिवाग्निः ॥ २४ ॥ ततः स तूर्णं रुधिरोदफेनं कृत्वा नदीं तां समरे रिपूणाम् । जगाम सौभद्रमतीत्य भीष्मो महारथं पार्थमदीनसत्त्वः ॥ २५ ॥ ततः प्रहस्याद्भुतदर्शनेन गाण्डीवनिर्ह्रादमहास्वनेन । विपाठजालेन महास्त्रजालं विनाशयामास किरीटमाली ॥ २६ ॥ तमुत्तमं सर्वधनुर्धराणामसक्तकर्म्मा कपिराजकेतुः । भीष्मं महात्मा ववर्ष भूयः शरैः सुतीक्ष्णैर्विमलैश्च भल्लैः ॥ २७ ॥ तथैव भीष्मप्रहितमन्तरीक्षे महास्त्रजालं कपिराजकेतोः । विशीर्य्यमाणं ददृशुः स्वदीया दिवाकरणेव तमोऽभिभूतम् ॥ २८ ॥ एवं विधं कार्मुक

भीमनादमदीनवत् सुतपुरुषोत्तमाभ्याम् । ददृश लोक कुरु-सृञ्जयाय तद्वैरथ भीष्मधनञ्जयाभ्याम् ॥ २८ ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि भीष्मार्जुनद्वैरथे
षष्टितमोऽध्यायः ॥ ६० ॥

---

सञ्जय उवाच। द्रौणिर्भूरिश्रवा शल्यश्चित्रसेनश्च मारिष। पुत्र सांयमनेश्चैव सौभद्रं समयोधयन् ॥ १ ॥ संसक्तमतितेजाभिस्तमेकं ददृशुर्जना। पञ्चभिर्मनुजव्याघ्रैर्गजैः सिंहशिशुं यथा ॥ २ ॥ नाभिलक्ष्यतया कश्चिन्न शौर्य्ये न पराक्रमे। बभूव सदृशः कार्ष्णेर्नास्त्रेऽपि च लाघवे ॥ ३ ॥ तथा तमात्मजं युद्धे विक्रमन्तमरिन्दमम्। दृष्ट्वा पार्थो रणे यत्तः सिंहनादमथानदत् ॥ ४ ॥ पीडयानश्च तत् सैन्यं पौत्र तव विशाम्पते। दृष्ट्वा त्वदीया राजेन्द्र समन्तात् पर्य्यवारयन् ॥ ५ ॥ ध्वजिनी धार्त्तराष्ट्राणां दीनशत्रुरदीनवत्। प्रत्युद्ययौ स सौभद्रस्तेजसा च बलेन च ॥ ६ ॥ तस्य लाघवमार्गस्थमादित्यसदृशप्रभम्। व्यदृश्यत महच्चापं समरे युध्यतः परैः ॥ ७ ॥ स द्रौणिमिषुणैकेन विद्ध्वा शल्यञ्च पञ्चभिः। ध्वजं सांयमनेश्चापि सोऽष्टाभिः पर्य्यपातयत् ॥ ८ ॥ रुक्मदण्डां महाशक्तिं प्रेषितां सौमदत्तिना। शितेनोरगसङ्काशां पत्रिणा विजहार ताम् ॥ ९ ॥ शल्यस्य च महाघोरान् प्रस्यतः शतशः शरान्। निवार्य्यार्जुनदायादो जघान चतुरो हयान् ॥ १० ॥ भूरिश्रवाश्च शल्यश्च द्रौणिः सांयमनिः शलः। नाभ्यवर्त्तन्त संरब्धाः कार्ष्णेर्बाहुबलोदयम् ॥ ११ ॥ ततस्त्रिगर्त्ता राजेन्द्र मद्राश्च सह केकयैः। पञ्चविंशतिसाहस्रास्तव पुत्रेण चोदिताः ॥ १२ ॥ धनुर्वेदविदो मुख्या अजेया शत्रुभिर्युधि। सहपुत्रं जिघांसन्तः परिवव्रुः किरीटिनम् ॥ १३ ॥ तौ तत्र तु पितापुत्रौ परिक्षिप्त-

रथावुभौ । ददर्श राजन् पाञ्चाल्यः सेनापतिरमित्रजित् ॥ १४ ॥
स वारणरथौघेन सहस्रैर्बहुभिर्वृतः । वाजिभिः पत्तिभिश्चैव
वृतः शतसहस्रशः ॥ १५ ॥ धनुर्विस्फार्य्य सुमहद्योदयित्वा च
वाहिनीम् । ययौ तद्भद्रकानीकं कैकेयाश्च परन्तप ॥ १६ ॥ तेन
कीर्त्तिमता गुप्तमनीकं दृढधन्वना । प्रयुक्तरथनागाश्वयोधस्य
मानमशोभत ॥ १७ ॥ सोऽर्जुनं प्रति संयातः पाञ्चालकुलवर्द्धन ।
त्रिभिः शारद्वतं बाणैर्जत्रुदेशे समर्द्दयत ॥ १८ ॥ ततः स मद्र-
कान् भित्त्वा दशभिर्निशितैः शरैः । पृष्ठरक्षं जघानाशु भल्लेन
कृतवर्म्मणः ॥ १९ ॥ दमनञ्चापि दायादं पौरवस्य महात्मनः ।
जघान विपुलाग्रेण नाराचेन परन्तप ॥ २० ॥ ततः सायमनेः
पुत्रं पाञ्चाल्यं युद्धदुर्म्मदम् । आविध्यद्दशभिर्बाणैर्दशभिश्चास्य
सारथिम् ॥ २१ ॥ सोऽतिविद्धो महेष्वासः सृक्किणी परिलेलि-
हन् । भल्लेन भृशतीक्ष्णेन निचकर्त्तास्य कार्म्मुकम् ॥ २२ ॥ तथैनं
पञ्चविंशत्या क्षिप्रमेव समर्द्दयत । अश्वांश्चास्यावधीद्राजन् उभौ
तौ पार्ष्णिसारथी ॥ २३ ॥ हताश्वे स रथे तिष्ठन् ददर्श
भरतर्षभ । पुत्रः सायमनेः पुत्रं पाञ्चाल्यस्य यशस्विनः ॥ २४ ॥
सम्प्रगृह्य महाघोरं निस्त्रिंशवरमायसम् । पदातिस्तूर्णमान-
र्च्छत रथस्थं द्रुपदात्मजम् ॥ २५ ॥ तं महौघमिवायान्तं खात्
पतन्तमिवोरगम् । भ्रान्तावरणनिस्त्रिंशं कालोत्सृष्टमिवान्तकम्
॥ २६ ॥ दीप्यमानमिवादित्यं मत्तवारणविक्रमम् । अपश्यन्
पाण्डवास्तत्र धृष्टद्युम्नश्च पार्षतः ॥ २७ ॥ तस्य पाञ्चाल्यपुत्रस्तु
प्रतीपमभिधावतः । शितनिस्त्रिंशहस्तस्य शरावरणधारिणः ॥२८
बाणवेगमतीतस्य रथाभ्याशमुपेयुषः । त्वरन् सायमनेः क्रुद्धो
बिभेद गदया शिरः ॥ २९ ॥ तस्य राजन् सनिस्त्रिंशं सुप्रभं
शरवारणम् । हतस्य पततो हस्तात् सोत्सेधमपतत् भुवि ॥ ३० ॥
तं निहत्य गदाग्रेण लेभे स परमं यशः । पुत्रः पाञ्चालराजस्य

महात्मा भीमविक्रमः ॥ ३१ ॥ तस्मिन् हते महेष्वासे राजपुत्रे महारथे। हाहाकारो महानासीत् तव सैन्यस्य मारिष ॥ ३२ ॥ ततः सायमनिः क्रुद्धो दृष्ट्वा निहतमात्मजम्। अभिदुद्राव वेगेन पाञ्चाल्यं युद्धदुर्म्मदम् ॥ ३३ ॥ तौ तत्र समरे वीरौ समेतौ रथिनां वरौ। ददृशुः सर्व्वराजानः कुरवः पाण्डवास्तथा ॥ ३४ ॥ ततः सांयमनिः क्रुद्धः पार्षतं परवीरहा। आजघान त्रिभिर्बाणैस्तोत्रैरिव महाद्विपम् ॥ ३५ ॥ तथैव पार्षतं शूरं शल्यः समितिशोभन। आजघानोरसि क्रुद्धस्ततो युद्धमवर्त्तत ॥ ३६ ॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि सायमनिपुत्रवधे एकषष्टोऽध्यायः ॥ ६१ ॥

---

धृतराष्ट्र उवाच। दैवमेव परं मन्ये पौरुषादपि सञ्जय। यत् सैन्यं मम पुत्रस्य पाण्डुसैन्येन वध्यते ॥ १ ॥ नित्यं हि मामकान् सूत हतानेव हि शंससि। अहताञ्च प्रहृष्टांश्च नित्यं शंससि पाण्डवान् ॥ २ ॥ हतान् पुरुषकारेण मामकानद्य सञ्जय। पतितान् पात्यमानांश्च हतानेव च शंससि ॥ ३ ॥ युध्यमानान् यथाशक्ति घटमानान् जयम्प्रति। पाण्डवा विजयन्त्येव जीयन्ते चैव मामकाः ॥ ४ ॥ सोऽहन्तीव्राणि दुःखानि दुर्य्योधनकृतानि च। अश्रौषं सततं तात दुःसहानि बहूनि च ॥ ५ ॥ तमुपायं न पश्यामि जीयेरन् येन पाण्डवाः। मामका वा जयं युद्धे प्राप्नुयुर्येन सञ्जय ॥ ६ ॥

सञ्जय उवाच। क्षयं मनुष्यदेहानां गजवाजिरथक्षयम्। शृणु राजन् स्थिरो भूत्वा तवैवापनयो महान् ॥ ७ ॥ धृष्टद्युम्नस्तु शल्येन पीडितो नवभिः शरैः। पीडयामास सङ्क्रुद्धो मद्राधिपतिमायसैः ॥ ८ ॥ तत्राद्भुतमपश्याम पार्षतस्य पराक्रमम्।

न्यवारयत यन्तूर्णं मत्स्यं समितिशोभनम् ॥ ९ ॥ नान्तरं ददृशे कश्चित तयोः सव्यसाचिनोः रणे । मुहूर्त्तमिव तद्युद्धं तयोः समभवत्तदा ॥ १० ॥ ततः शल्यो महाराज धृष्टद्युम्नस्य संयुगे । धनुश्चिच्छेद भल्लेन पीतेन निशितेन च ॥ ११ ॥ अथैनं शरवर्षेण छादयामास भारत । गिरिं जलागमे यद्वत् जलदा जलधारिणः ॥ १२ ॥ अभिमन्युस्तु संक्रुद्धो धृष्टद्युम्ने च पीड़िते । अभिदुद्राव वेगेन मद्रराजरथं प्रति ॥ १३ ॥ ततो मद्राधिपरथं कार्ष्णिः सम्प्राप्य कोपनः । आर्त्तायनिममेयात्मा विव्याध निशितैस्त्रिभिः ॥ १४ ॥ ततस्तु तावका राजन् परीप्सन्तोऽर्जुनिं रणे। मद्राधिपरथं तूर्णं परिवार्य्यावतस्थिरे ॥ १५ ॥ दुर्य्योधनो विकर्णश्च दुःशासनविविंशती । दुर्मर्षणो दुःसहश्च चित्रसेनश्च दुर्मुख ॥ १६ ॥ सत्यव्रतः पुरुमित्रो विकर्णश्च महारथः । एते मद्राधिपरथं पालयन्तः स्थिता रणे ॥ १७ ॥ तान् भीमसेनः संक्रुद्धो धृष्टद्युम्नश्च पार्षतः । द्रौपदेयाभिमन्युश्च माद्रीपुत्रौ च पाण्डवौ ॥ १८ ॥ धार्त्तराष्ट्रान् दशरथान् दशैव प्रत्यवारयन् । नानारूपाणि शस्त्राणि विसृजन्तो विशाम्पते ॥ १९ ॥ प्रत्ययत्तन्त संक्रुद्धा परस्परवधैषिणः । ते वै समीयुः सङ्ग्रामे राजन् दुर्मन्त्रिते तव ॥ २० ॥ तस्मिन् दशरथे क्रुद्धे वर्त्तमाने महाभये । तावकानां परेषाञ्च प्रेक्षका रथिनोऽभवन् ॥ २१ ॥ शस्त्राण्यनेकरूपाणि विसृजन्तो महारथाः । अन्योऽन्यमभिनर्दन्त सम्प्रहारं प्रचक्रिरे ॥ २२ ॥ ते तदा जातसंरम्भाः सर्वेऽन्योऽन्यं जिघांसवः । अन्योऽन्यमभिनर्दन्त स्पर्द्धमाना परस्परम् ॥ २३ ॥ अन्योऽन्यस्पर्द्धया राजन् ज्ञातयः सङ्गताः मिथः । महास्त्राणि विमुञ्चन्तः समापेतुरमर्षणाः ॥ २४ ॥ दुर्य्योधनस्तु सङ्क्रुद्धो धृष्टद्युम्नं महारणे । विव्याध निशितैर्बाणैश्चतुर्भिः समरेऽद्भुतम् ॥ २५ ॥ दुर्मर्षणश्च विंशत्या चित्रसेनश्च पञ्चभिः । दुर्मुखो नवभि-

बाणैर्द्दू मद्रयापि सप्तभिः ॥ २६ ॥ विविंशतिः पञ्चभिस्तु त्रिभि-
र्दुःशासनस्तथा। तान् प्रत्यविध्यद्राजेन्द्र पार्षतः शत्रुतापन ॥ २७ ॥
एकैकं पञ्चविंशत्या दर्शयन् हस्तलाघवम्। शल्यन्नतस्य समरे
पुरुमित्रञ्च भारत ॥ २८ ॥ अभिमन्युरविध्यत्तु दशभिर्द्दशभिः
शरैः। माद्रीपुत्रौ च समरे मातुलं मातृनन्दनौ ॥ २९ ॥ छाद-
येतां शरैस्तोयैस्तदद्भुतमिवाभवत्। ततः शल्यो महाराज
स्वस्रीयौ रथिनाम्वरौ ॥ ३० ॥ शरैर्बहुभिरानर्च्छत् कृतप्रति-
कृतैषिणौ। छाद्यमानौ ततस्तौ तु माद्रीपुत्रौ न चेलतुः ॥ ३१ ॥
अथ दुर्य्योधनं दृष्ट्वा भीमसेनो महाबलः। विधित्सुः कलह-
स्यान्तं गदां जग्राह पाण्डवः ॥ ३२ ॥ तमुद्यतगदं दृष्ट्वा कैलास-
मिव शृङ्गिणम्। भीमसेनं महाबाहुं पुत्रास्ते प्राद्रवन् भयात्

हृतोत्तमाङ्गा स्कन्धेषु गजाना गजयोधिन । अदृश्यन्ताचलाग्रेषु
द्रुमा भग्नशिखा इव ॥ ४४ ॥ धृष्टद्युम्नहतानन्यानपश्याम महा
गजान् । पतितान् पात्यमानांश्च पार्षतेन महात्मना ॥ ४५ ॥
मागधोऽथ महीपालो गजमैरावतोपमम् । प्रेषयामास समरे
सौभद्रस्य रथ प्रति ॥ ४६ ॥ तमापतन्त सम्प्रेक्ष्य मागधस्य महा
गजम् । निजघानेषुणा वीर सौभद्र परवीरहा ॥ ४७ ॥ तस्या
वर्जितनागस्य कार्ष्णि परपुरञ्जय । राज्ञो रजतपुङ्खेन भल्ले
नापाहरच्छिर ॥ ४८ ॥ विगाह्य तद्गजानीक भीमसेनोऽपि
पाण्डव । व्यचरत समरे मृद्नन् गजानिन्द्रो गिरीनिव ॥ ४९ ॥
एकप्रहारै निहतान् भीमसेनेन दन्तिन । अपश्याम रणे तस्मिन्
गिरीन् वज्रहतानिव ॥ ५० ॥ भग्नदन्तान् भग्नकटान् भग्नसक्
थींश्च वारणान् । भग्नपृष्ठान् भग्नकुम्भान् निहतान् पर्वतोपमान्
॥ ५१ ॥ अपश्यन्निहतान्नागान् राजन् निष्ठीवतोऽपरान् । वमन्तो
रुधिर चान्ये भिन्नकुम्भा महागजा ॥ ५२ ॥ विह्वलन्तो गता
भूमि शैला इव धरातले । मेदोरुधिरदिग्धाङ्गो वसामज्जासमु
क्षित ॥ ५३ ॥ व्यचरत समरे भीमो दण्डपाणिरिवान्तक ।
गजाना रुधिरार्द्राङ्गी गदा बिभ्रद्वृकोदर ॥ ५४ ॥ घोर प्रति
भयश्चासीत पिनाकीव पिनाकधृक् । निर्मथ्यमाना क्रुद्धेन भीम
सेनेन दन्तिन ॥ ५५ ॥ सहसा प्राद्रवन् क्लिष्टा मृद्नन्तस्तव वाहि-
नीम । त हि वीर महेष्वासा सौभद्रप्रमुखा रथा ॥ ५६ ॥
पर्यरक्षन्त युध्यन्त वज्रायुधमिवामरा । शोणिताक्ता गदा बिभ्र
दुक्षितो गजशोणितै ॥ ५७ ॥ कृतान्त इव रौद्रात्मा भीमसेनो
व्यदृश्यत । व्यायच्छमान गदया दिक्षु सर्वासु भारत ॥ ५८ ॥
भीमसेनमपश्याम नृत्यन्तमिव शङ्करम् । यमदण्डोपमा गुर्वी
मिन्द्राशनिसमस्वनाम ॥ ५९ ॥ अपश्याम महाराज रौद्रा विश
सनीं गदाम । सुलिप्ता केशमज्जाभि प्रदिग्धा रुधिरेण च ॥ ६० ॥

पिनाकमिव रुद्रस्य क्रुद्धस्याभिघ्नत पशून् । यथा पशूनां सङ्घातं यष्ट्या पाल प्रकालयेत ॥ ६१ ॥ तथा भीमो गजानीकं गदया पर्य्यकालयत । गदया वध्यमानाश्च मार्गमाणा समन्तत ॥ ६२ ॥ खान् स्यन्दनान् विमृद्नन्त प्राद्रवन् कुञ्जरास्तत । महावात इवाभ्राणि विभ्रमिला रणाङ्गजान् । अतिष्ठत् समरे भीम श्मशान इव शूलभृत ॥ ६३ ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि भीमसेनपराक्रमे द्विषष्टोऽध्याय ॥ ६२ ॥

---

सञ्जय उवाच । हते तस्मिन् गजानीके पुत्रो दुर्य्योधनस्तव । भीमसेन घ्नतेत्येव सर्वसैन्यान्यचोदयत ॥ १ ॥ तत सर्वाणि सैन्यानि पुत्रस्य तव शासनात । अभ्यद्रवन् भीमसेनं नदन्तं भैरवान् रवान् ॥ २ ॥ त बलौघमपर्य्यन्त देवैरपि सुदु सहम् । आपतन्त सुदुष्पार समुद्रमिव पर्वणि ॥ ३ ॥ रथनागाश्वकलिल शङ्खदुन्दुभिनादितम् । अनन्तरथपादात रजसा सर्वतोवृतम् ॥ ४ ॥ भीमसेनस्तु समरे महोदधिमिवापरम् । सेनासागर-मक्षोभ्यं वेलेव समवारयत ॥ ५ ॥ तदाश्चर्य्यमपश्याम पाण्डवस्य महात्मन । भीमसेनस्य समरे राजन् कर्मातिमानुषम् ॥ ६ ॥ उदीर्णान् पार्थिवान् सर्वान् साश्वान् सरथकुञ्जरान् । असम्भ्रम भीमसेनो गदया समवारयत ॥ ७ ॥ स संवार्य्य बलौघांस्तान् गदया बलिनाम्वर । अतिष्ठत्तुमुले भीमो गिरिर्मेरुरिवाचल ॥ ८ ॥ तस्मिन् सुतुमुले घोरे रणे परमदारुणे । भ्रातरश्चैव पुत्राश्च धृष्टद्युम्नश्च पार्षत ॥ ९ ॥ द्रौपदेयाभिमन्युश्च शिखण्डी चापराजित । न प्राजहन् भीमसेन भये जाते महाबला ॥ १० ॥ तत शैक्यायसी गुर्वीं प्रगृह्य महतीं गदाम् । अधावत ताव-

हृतोत्तमाङ्गाः स्कन्धेषु गजानां गजयोधिनः । अद्रिप्रस्थाचलाग्रेषु द्रुमा भग्नशिखा इव ॥ ४४ ॥ धृष्टद्युम्नहतानन्यानपश्याम महागजान् । पतितान् पात्यमानांश्च पार्षतेन महात्मना ॥ ४५ ॥ मागधोऽथ महीपालो गजमैरावतोपमम् । प्रेषयामास समरे सौभद्रस्य रथं प्रति ॥ ४६ ॥ तमापतन्तं संप्रेक्ष्य मागधस्य महागजम् । निजघानेषुणा वीरः सौभद्रः परवीरहा ॥ ४७ ॥ तस्यावजितनागस्य कार्ष्णिः परपुरञ्जयः । राज्ञो रजतपुङ्खेन भल्लेनापाहरच्छिरः ॥ ४८ ॥ विगाह्य तद्गजानीकं भीमसेनोऽपि पाण्डवः । व्यचरत् समरे मृद्नन् गजानिन्द्रो गिरीनिव ॥ ४९ ॥ एकप्रहारे निहतान् भीमसेनेन दन्तिनः । अपश्याम रणे तस्मिन् गिरीन् वज्रहतानिव ॥ ५० ॥ भग्नदन्तान् भग्नकटान् भग्नसक्थींश्च वारणान् । भग्नपृष्ठान् भग्नकुम्भान् निहतान् पर्वतोपमान् ॥ ५१ ॥ अपश्यन्निहतान्नागान् राजन् निष्ठीवतोऽपरान् । वमन्तो रुधिरं चान्ये भिन्नकुम्भा महागजाः ॥ ५२ ॥ विह्वलन्तो गता भूमिं शैला इव धरातले । मेदोरुधिरदिग्धाङ्गो वसामज्जासमुक्षितः ॥ ५३ ॥ व्यचरत् समरे भीमो दण्डपाणिरिवान्तकः । गजानां रुधिराद्राङ्गीं गदां बिभ्रद्वृकोदरः ॥ ५४ ॥ घोरः प्रतिभयश्चासीत् पिनाकीव पिनाकधृक् । निर्मथ्यमानाः क्रुद्धेन भीमसेनेन दन्तिनः ॥ ५५ ॥ सहसा प्राद्रवन् क्लिष्टा मृद्नन्तस्तव वाहिनीम् । तं हि वीरं महेष्वासाः सौभद्रप्रमुखा रथाः ॥ ५६ ॥ पर्यरक्षन्त युध्यन्तं वज्रायुधमिवामराः । शोणिताक्तां गदां बिभ्रदुक्षितां गजशोणितैः ॥ ५७ ॥ कृतान्त इव रौद्रात्मा भीमसेनो व्यदृश्यत । व्यायच्छमानं गदया दिक्षु सर्वासु भारत ॥ ५८ ॥ भीमसेनमपश्याम नृत्यन्तमिव शङ्करम् । यमदण्डोपमां गुर्वीमिन्द्राशनिसमस्वनाम् ॥ ५९ ॥ अपश्याम महाराज रौद्रां विशसनीं गदाम् । कुन्मिश्रां केशमज्जाभिः प्रदिग्धां रुधिरेण च ॥ ६० ॥

पिनाकमिव रुद्रस्य क्रुद्धस्याभिघ्नतः पशून् । यथा पशूनां सङ्घातं यष्ट्या पालः प्रकालयेत् ॥ ६१ ॥ तथा भीमो गजानीकं गदया पर्य्यकालयत् । गदया वध्यमानाश्च मार्गमाणाः समन्ततः ॥ ६२ ॥ स्वान् स्वान्मृद्नान् विमृद्नन्तः प्राद्रवन् कुञ्जरास्ततः । महावात इवाभ्राणि विभ्रमित्वा रणाङ्गनात् । अतिष्ठत् समरे भीमः श्मशान इव शूलभृत् ॥ ६३ ॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि भीमसेनपराक्रमे
द्विषष्टोऽध्यायः ॥ ६२ ॥

---

सञ्जय उवाच । हते तस्मिन् गजानीके पुत्रो दुर्य्योधनस्तव । भीमसेनं घ्नतेत्येवं सर्व्वसैन्यान्यचोदयत् ॥ १ ॥ ततः सर्व्वाणि सैन्यानि पुत्रस्य तव शासनात् । अभ्यद्रवन् भीमसेनं नदन्तं भैरवान् रवान् ॥ २ ॥ तं बलौघमपर्य्यन्तं देवैरपि सुदुःसहम् । आपतन्तं सुदुष्पारं समुद्रमिव पर्व्वणि ॥ ३ ॥ रथनागाश्वकलिलं शङ्खदुन्दुभिनादितम् । अनन्तरथपादातं रजसा सर्व्वतोवृतम् ॥ ४ ॥ भीमसेनस्तु समरे महोदधिमिवापरम् । सेनासागरमक्षोभ्यं वेलेव समवारयत ॥ ५ ॥ तदाश्चर्य्यमपश्याम पाण्डवस्य महात्मनः । भीमसेनस्य समरे राजन् कर्म्मातिमानुषम् ॥ ६ ॥ उदीर्णान् पार्थिवान् सर्व्वान् साश्वान् सरथकुञ्जरान् । असम्भ्रमं भीमसेनो गदया समवारयत ॥ ७ ॥ स संवार्य्य बलौघांस्तान् गदया बलिनाम्वरः । अतिष्ठत्तुमुले भीमो गिरिर्म्मेरुरिवाचलः ॥ ८ ॥ तस्मिन् सुतुमुले घोरे रणे परमदारुणे । भ्रातरश्चैव पुत्राश्च धृष्टद्युम्नश्च पार्षतः ॥ ९ ॥ द्रौपदेयाभिमन्युश्च शिखण्डी चापराजितः । न प्राजहन् भीमसेनं भये जाते महाबलाः ॥ १० ॥ ततः शैक्यायसीं गुर्व्वीं प्रगृह्य महतीं गदाम् । अधावत् ताव-

हतोत्तमाङ्गाः स्कन्धेषु गजानां गजयोधिनः। अदृश्यन्ताचलाग्रेषु द्रुमा भग्नशिखा इव॥ ४४॥ धृष्टद्युम्नहतानन्यानपश्याम महागजान्। पतितान् पात्यमानांश्च पार्षतेन महात्मना॥ ४५॥ मागधोऽथ महीपालो गजमैरावतोपमम्। प्रेषयामास समरे सौभद्रस्य रथं प्रति॥ ४६॥ तमापतन्तं संप्रेक्ष्य मागधस्य महागजम्। जिघांसुर्निपुणो वीरः सौभद्रः परवीरहा॥ ४७॥ तस्यावर्जितनागस्य कार्ष्णिः परपुरञ्जयः। राज्ञो रजतपुङ्खेन भल्लेनापाहरच्छिरः॥ ४८॥ विगाह्य तद्गजानीकं भीमसेनोऽपि पाण्डवः। व्यचरत् समरे मृद्नन् गजानिन्द्रो गिरीनिव॥ ४९॥ एकप्रहाराभिहतान् भीमसेनेन दन्तिनः। अपश्याम रणे तस्मिन् गिरीन् वज्रहतानिव॥ ५०॥ भग्नदन्तान् भग्नकटान् भग्नसक्थींश्च वारणान्। भग्नपृष्ठान् भग्नकुम्भान् निहतान् पर्वतोपमान्॥ ५१॥ अपश्यन्निहतान्नागान् राजन् निष्ठीवतोऽपरान्। वमन्तो रुधिरं चान्ये भिन्नकुम्भा महागजाः॥ ५२॥ विह्वलन्तो गता भूमिं शैला इव धरातले। मेदोरुधिरदिग्धाङ्गो वसामज्जासमुक्षितः॥ ५३॥ व्यचरत् समरे भीमो दण्डपाणिरिवान्तकः। गजानां रुधिरादिग्धां गदां बिभ्रद्वृकोदरः॥ ५४॥ घोरः प्रतिभयश्चासीत् पिनाकीव पिनाकधृक्। निर्मथ्यमानाः क्रुद्धेन भीमसेनेन दन्तिनः॥ ५५॥ सहसा प्राद्रवन् क्लिष्टा मृद्नन्तस्तव वाहिनीम्। तं हि वीरं महेष्वासाः सौभद्रप्रमुखा रथाः॥ ५६॥ पर्यरक्षन्त युध्यन्तं वज्रायुधमिवामराः। शोणिताक्तां गदां बिभ्रदुक्षितां गजशोणितैः॥ ५७॥ कृतान्त इव रौद्रात्मा भीमसेनो व्यदृश्यत। व्यायच्छमानं गदया दिक्षु सर्वासु भारत॥ ५८॥ भीमसेनमपश्याम नृत्यन्तमिव शङ्करम्। यमदण्डोपमां गुर्वीमिन्द्राशनिसमस्वनाम्॥ ५९॥ अपश्याम महाराज रौद्रां विशसनीं गदाम्। उग्मिश्रां केशमज्जाभिः प्रदिग्धां रुधिरेण च॥ ६०॥

पिनाकमिव रुद्रस्य क्रुद्धस्याभिघ्नतः पशून् । तथा पशूनां सङ्घातं यष्ट्या पाल प्रकालयेत् ॥ ६१ ॥ तथा भीमो गजानीकं गदया पर्य्यकालयत् । गदया वध्यमानाश्च मार्गमाणाः समन्ततः ॥ ६२ ॥ स्वान् स्यन्दनान् विमृद्नन्तः प्राद्रवन् कुञ्जरास्ततः । महावात इवाभ्राणि विभ्रमित्वा रणाद्गजान् । अतिष्ठत् समरे भीमः श्मशान इव शूलभृत ॥ ६३ ॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि भीमसेनपराक्रमे
द्विषष्टोऽध्यायः ॥ ६२ ॥

---

सञ्जय उवाच । हते तस्मिन् गजानीके पुत्रो दुर्य्योधनस्तव । भीमसेनं घ्नतेत्येवं सर्व्वसैन्यान्यचोदयत ॥ १ ॥ ततः सर्व्वाणि सैन्यानि पुत्रस्य तव शासनात । अभ्यद्रवन् भीमसेनं नदन्तं भैरवान् रवान् ॥ २ ॥ तं बलौघमपर्य्यन्तं देवैरपि सुदुःसहम् । आपतन्तं सुदुष्पारं समुद्रमिव पर्व्वणि ॥ ३ ॥ रथनागाश्वकलिलं शङ्खदुन्दुभिनादितम् । अनन्तरथपादातं रजसा सर्व्वतोवृतम् ॥ ४ ॥ भीमसेनस्तु समरे महोदधिमिवापरम् । सेनासागरमक्षोभ्यं वेलेव समवारयत ॥ ५ ॥ तदाश्चर्य्यमपश्याम पाण्डवस्य महात्मनः । भीमसेनस्य समरे राजन् कर्म्मातिमानुषम् ॥ ६ ॥ उदीर्णान् पार्थिवान् सर्व्वान् साश्वान् सरथकुञ्जरान् । असम्भ्रमं भीमसेनो गदया समवारयत ॥ ७ ॥ स संवार्य्य बलौघांस्तान् गदया बलिनाम्वरः । अतिष्ठत्तुमुले भीमो गिरिर्म्मेरुरिवाचलः ॥ ८ ॥ तस्मिन् सुतुमुले घोरे रणे परमदारुणे । भ्रातरश्चैव पुत्राश्च धृष्टद्युम्नश्च पार्षतः ॥ ९ ॥ द्रौपदेयाभिमन्युश्च शिखण्डी चापराजितः । न प्राजहन् भीमसेनं भये जाते महाबलाः ॥ १० ॥ ततः शैक्यायसीं गुर्व्वीं प्रगृह्य महतीं गदाम् । अधावत ताव-

कान् योधान् दण्डपाणिरिवान्तकः ॥ ११ ॥ पोथयन्रथवृन्दानि
वाजिवृन्दानि वा विभुः । व्यचरत् समरे भीमो युगान्ते पावको
यथा ॥ १२ ॥ विनिघ्नन् समरे योधान् युगान्ते कालवद्विभुः ।
ऊरुवेगेन सङ्कर्षन् रथजालानि पाण्डवः ॥ १३ ॥ बलानि च
ममर्द्दाशु नड्वलानीव कुञ्जरः । मृद्नन् रथेभ्यो रथिनो गजेभ्यो
गजयोधिनः ॥ १४ ॥ सादिनश्चाश्वपृष्ठेभ्यो भूमौ चापि पदा-
तिन । गदया व्यहनत् सर्वान् वातो वृक्षानिवौजसा ॥ १५ ॥
भीमसेनो महाबाहुस्तव पुत्रस्य वै बले । मेदोमज्जावसामांसैः
प्रदिग्धा रुधिरेण च ॥ १६ ॥ अदृश्यत महारौद्री गदा नागाश्व-
घातिनी । तत्र तत्र हतैश्चापि मनुष्यगजवाजिभिः ॥ १७ ॥ रणा-
ङ्गनं तदभवत् मृत्योरागारसन्निभम् । पिनाकमिव रुद्रस्य क्रुद्ध-
स्याभिघ्नतः पशून् ॥ १८ ॥ यमदण्डोपमामुग्रामिन्द्राशनिसम-
प्रभाम् । ददृशुर्भीमसेनस्य रौद्रां विशसनीं गदाम् ॥ १९ ॥ आवि-
ध्यतो गदां तस्य कौन्तेयस्य महात्मनः । बभौ रूपं महाघोरं
कालस्येव जगत्क्षये ॥ २० ॥ तां तथा महतीं सेनां द्रावयन्तं
पुनः पुनः । दृष्ट्वा मृत्युमिवायान्तं सर्वे विमनसोऽभवत ॥ २१ ॥
यतो यतः प्रेक्षते स्म गदामुद्यम्य पाण्डवः । तेन तेन स्म दीर्यन्ते
सर्वसैन्यानि भारत ॥ २२ ॥ प्रदारयन्तं सैन्यानि बलौघेनापरा-
जितम् । ग्रसमानमनीकानि व्यादितास्यमिवान्तकम् ॥ २३ ॥ तं
तथा भीमकर्माणं प्रगृहीतमहागदम् । दृष्ट्वा वृकोदरं भीष्मः
सहसैव समभ्ययात् ॥ २४ ॥ महता मेघघोषेण रथेनादित्य-
वर्चसा । छादयन् शरवर्षेण पर्जन्य इव वृष्टिमान् ॥ २५ ॥
तमायान्तं तथा दृष्ट्वा व्यात्ताननमिवान्तकम् । भीमसेनो महा-
बाहुः प्रत्युदीयादमर्षितः ॥ २६ ॥ तस्मिन् क्षणे सात्यकिः सत्य-
सन्धः शिनिप्रवीरोऽभ्यपतत पितामहम् । निघ्नन्नमित्रान् धनुषा
दृढेन प्रकम्पयंस्तव पुत्रस्य सेनाम् ॥ २७ ॥ तं यान्तमश्वैरजत-

प्रकाशैः शरान् वपन्तं निशितान् सुपुङ्खान् । नाशक्नुवन् वारयितुं तदानीं सर्वे जना भारत ये त्वदीयाः ॥ २८ ॥ अविध्यदेनं दशभिः पृषत्कैरलम्बुषो राक्षसोऽसौ तदानीम् । शरैश्चतुर्भिः प्रतिविध्य तच्च नप्ता शिनेरभ्यपतद्रथेन ॥ २९ ॥ अन्वागतं वृष्णिवीरं निशम्य मध्ये रिपूणां परिवर्त्तमानम् । प्रवारयन्तं कुरुपुङ्गवांश्च पुनः पुनश्च प्रणदन्तमाजौ ॥ ३० ॥ योधास्त्वदीया शरवर्षैरवर्षन् मेघा यथा भूधरमम्बुवेगैः । नाशक्नुवन् वारयितुं वरिष्ठं मध्यन्दिने सूर्य्यमिवातपन्तम् ॥ ३१ ॥ न तत्र कश्चिन्नविषण्ण आसीदृते राजन् सोमदत्तस्य पुत्रम् । स त्वाददानो धनुरुग्रवेगं भूरिश्रवा भारत सौमदत्तिः । दृष्ट्वा रथान् स्वान् व्यपनीयमानान् प्रत्युद्ययौ सात्यकिं योद्धुमिच्छन् ॥ ३२ ॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि सात्यकिभूरिश्रवसोः समागमे त्रिषष्टोऽध्यायः ॥ ६३ ॥

---

सञ्जय उवाच । ततो भूरिश्रवा राजन् सात्यकिं नवभिः शरैः । अविध्यत् भृशसंक्रुद्धस्तोत्रैरिव महाद्विपम् ॥ १ ॥ कौरवं सात्यकिश्चापि शरैः सन्नतपर्व्वभिः । अवारयदमेयात्मा सर्वलोकस्य पश्यत ॥ २ ॥ ततो दुर्य्योधनो राजा सोदर्य्यैः परिवारित । सौमदत्तिं रणे यत्तं समन्तात् पर्य्यवारयत् ॥ ३ ॥ तथैव पाण्डवाः सर्वे सात्यकिं तरसा रणे । परिवार्य्य स्थिताः सङ्ख्ये समन्तात् सुमहौजसः ॥ ४ ॥ भीमसेनस्तु संक्रुद्धो गदामुद्यम्य भारत । दुर्य्योधनमुखान् सर्वान् पुत्रांस्ते पर्य्यवारयत् ॥ ५ ॥ रथैरनेकसाहस्रैः क्रोधामर्षसमन्वित । नन्दकस्तव पुत्रस्तु भीमसेनं महाबलम् ॥ ६ ॥ विव्याध निशितैस्तीक्ष्णैः कङ्कपत्रैः शिलाशितैः । दुर्य्योधनस्तदा राजन् भीमसेनं महाहवे ॥ ७ ॥ आजघानोरसि

क्रुद्धो मार्गणैर्नवभिः शितैः । ततो भीमो महाबाहुः स्वयं सुमहाबलः ॥ ८ ॥ आसरोह रथं श्रेष्ठं विशोकञ्चेदमब्रवीत् । एते महारथाः शूरा धार्त्तराष्ट्रा महाबलाः ॥ ९ ॥ मामेव भृशसंक्रुद्धा हन्तुमभ्युद्यता युधि । एतानद्य हनिष्यामि पश्यतस्ते न संशयः ॥ १० ॥ तस्मात् ममाश्वान् संग्रामे यत्तः संयच्छ सारथे । एवमुक्त्वा ततः पार्थः पुत्रं तव विशाम्पते ॥ ११ ॥ विव्याध दशभिस्तीक्ष्णैः शरैः कनकभूषणैः । नन्दकश्च त्रिभिर्बाणैः प्रत्यविध्यत् स्तनान्तरे ॥ १२ ॥ ततो दुर्योधनः षष्ट्या विद्ध्वा भीमं महाबलम् । त्रिभिरन्यैः सुनिशितैर्विशोकं प्रत्यविध्यत ॥ १३ ॥ भीमस्य च रणे राजन् धनुश्चिच्छेद भास्वरम् । मुष्टिदेशे शरैस्तीक्ष्णैस्त्रिभिराजौ हसन्निव ॥ १४ ॥ भीमस्तु प्रेक्ष्य यन्तारं विशोकं संयुगे तदा । पीडितं विशिखैस्तीक्ष्णैस्तव पुत्रेण धन्विना ॥ १५ ॥ अमृष्यमाणः संक्रुद्धो धनुर्दिव्यं परामृशत् । पुत्रस्य ते महाराज वधार्थं पुरुषर्षभ ॥ १६ ॥ समादत्त क्षुरप्रं च रौक्मपुङ्खं शिलाशितम्* । तेन चिच्छेद नृपतेर्भीमः कार्मुकमुत्तमम् ॥ १७ ॥ अपास्य तु धनुश्छिन्नं पुत्रस्ते क्रोधमूर्च्छितः । अन्यत् कार्मुकमादत्त सत्वरं वेगवत्तरम् ॥ १८ ॥ सन्धाय विशिखं घोरं कालमृत्युसमप्रभम् । तेनाजघान संक्रुद्धो भीमसेनं स्तनान्तरे ॥ १९ ॥ स गाढविद्धो व्यथितः स्यन्दनोपस्थ आविशत् । निषसाद रथोपस्थे मूर्च्छा चाभिजगाम ह ॥ २० ॥ तं दृष्ट्वा व्यथितं भीममभिमन्युपुरोगमाः । नामृष्यन्त महाभागाः पाण्डवानां महारथाः ॥ २१ ॥ ततः सुतुमुलां वृष्टिं शराणामुग्रतेजसाम् । पातयामासुरव्यग्राः पुत्रस्य तव मूर्द्धनि ॥ २२ ॥ प्रतिलभ्य ततः संज्ञां भीमसेनो महाबलः । दुर्योधनं त्रिभिर्विद्ध्वा पुनर्विव्याध पञ्चभिः ॥ २३ ॥ शल्यञ्च पञ्चविंशत्या शरैर्विव्याध पाण्डवः । रुक्मपुङ्खैर्महेष्वासः स विद्धो व्यपयाद् रणात् ॥ २४ ॥ प्रत्यु-

अभ्ययुस्ततो भीमं तव पुत्राश्चतुर्द्दश । सेनापतिः सुषेणश्च जलसन्धः
सुलोचनः ॥ २५ ॥ उग्रो भीमरथो भीमो वीरबाहुरलोलुपः ।
दुर्म्मुखो दुष्प्रधर्षश्च विवित्सुर्व्विकटः समः ॥ २६ ॥ विसृजन्तो बहून्
बाणान् क्रोधसंरक्तलोचनाः । भीमसेनमभिद्रुत्य विव्यधुः सहिता
भृशम् ॥ २७ ॥ पुत्रांस्तु तव सम्प्रेक्ष्य भीमसेनो महाबलः ।
सृक्किणी विलिहन् वीरः पशुमध्ये वृको यथा ॥ २८ ॥ अभिपत्य
महाबाहुर्गरुत्मानिव वेगितः । सेनापतेः क्षुरप्रेण शिरश्चिच्छेद
पाण्डवः ॥ २९ ॥ सम्प्रहस्य च दुष्टात्मा त्रिभिर्बाणैर्म्महाभुजः ।
जलसन्धं विनिर्भिद्य सोऽनयद्यमसादनम् ॥ ३० ॥ सुषेणञ्च ततो
हत्वा प्रेषयामास मृत्यवे । उग्रस्य सशिरस्त्राणं शिरश्चन्द्रोपमं
भुवि ॥ ३१ ॥ पातयामास भल्लेन कुण्डलाभ्यां विभूषितम् ।
वीरबाहुञ्च सप्तत्या साश्वकेतुं ससारथिम् ॥ ३२ ॥ निनाय समरे
भीमः परलोकाय पाण्डवः । भीमभीमरथौ चोभौ भीमसेनो
हसन्निव ॥ ३३ ॥ भ्रातरौ रभसौ राजन्ननयद्यमसादनम् । ततः
सुलोचनं भीमः क्षुरप्रेण महामृधे ॥ ३४ ॥ मिषतां सर्व्वसैन्याना-
मनयद्यमसादनम् । पुत्रास्तु तव ते दृष्ट्वा भीमसेनपराक्रमम् ॥३५॥
शेषा येऽन्येऽभवंस्तत्र ते भीमस्य भयात्तदा । विप्रद्रुता रणा-
द्राजन् वध्यमाना महात्मना ॥ ३६ ॥ ततोऽब्रवीच्छान्तनवः सर्व्वा-
नेव महारथान् । एष भीमो रणे क्रुद्धो धार्त्तराष्ट्रान् महा-
बलान् ॥ ३७ ॥ यथाप्रधानान् यथावीरान् यथाशूरांश्च सङ्गतान् ।
निपातयत्युग्रधन्वा तं प्रगृह्णीत पाण्डवम् ॥ ३८ ॥ एवमुक्तास्ततः
सर्व्वे धार्त्तराष्ट्रस्य सैनिकाः । अभ्यद्रवन्त संक्रुद्धा भीमसेनं महा-
बलम् ॥ ३९ ॥ भगदत्तः प्रभिन्नेन कुञ्जरेण विशाम्पते । अपतत्
सहसा तत्र यत्र भीमो व्यवस्थितः ॥ ४० ॥ आपतन्नेव च रणे
भीमसेनं शिलाशितैः । अदृश्यं समरे चक्रे जीमूत इव भास्करम्
॥ ४१ ॥ अभिमन्युमुखास्तत्र नामृष्यन्त महारथाः । भीमस्या-

च्छादनं सङ्ख्ये स्वबाहुबलमाश्रिता ॥ ४२ ॥ त एनं शरवर्षेण
समन्तात पर्यवारयन् । गजश्च शरवृष्ट्या तु बिभिदुस्ते समन्तत
॥ ४३ ॥ स शस्त्रवृष्ट्याभिहत समस्तैस्तैर्महारथै । प्राग्
ज्योतिषगजो राजन् नानालिङ्गै सुतेजनै ॥ ४४ ॥ सञ्जात
रुधिरोत्पीड़ प्रेक्षणीयोऽभवद्रणे । गभस्तिभिरिवार्कस्य संस्यूतो
जलदो महान् ॥ ४५ ॥ स चोदितो मदस्रावी भगदत्तेन वारण ।
अभ्यधावत तान् सर्वान् कालोतसृष्ट इवान्तक ॥ ४६ ॥ द्विगुण
जवमास्थाय कम्पयंश्चरणैर्महीम् । तस्य तत सुमहद्रूप दृष्ट्वा सर्वे
महारथा ॥ ४७ ॥ असह्य मन्यमानाश्च ते विमनसोऽभवन् ।
ततस्तु नृपति क्रुद्धो भीमसेन स्तनान्तरे ॥ ४८ ॥ आजघान नर
व्याघ्र शरेणानतपर्वणा । सोऽतिविद्धो महेष्वासस्तेन राज्ञा
महारथ ॥ ४९ ॥ मूर्च्छयाभिपरीताङ्गो ध्वजयष्टिमुपाश्रित ।
तांस्तु भीतान् समालक्ष्य भीमसेनञ्च मूर्च्छितम ॥ ५० ॥ ननाद
बलवन्नाद भगदत्त प्रतापवान् । ततो घटोत्कचो राजन् दृष्ट्वा
भीम तथागतम् ॥ ५१ ॥ सक्रुद्धो राक्षसो घोरस्तत्रैवान्तरधीयत ।
स कृत्वा दारुणीं माया भीरूणा भयवर्द्धिनीम् ॥ ५२ ॥ अदृ
श्यत निमेषार्द्धाद्घोररूप समाश्रित । ऐरावत समारुह्य स्वय
मायामय कृतम् ॥ ५३ ॥ तस्य चान्येऽपि दिङ्नागा बभूवुरनु
यायिन । अञ्जनो वामनश्चैव महापद्मश्च सुप्रभ ॥ ५४ ॥ त्रय
एते महानागा राक्षसै समधिष्ठिता । महाकायास्त्रिधा राजन्
प्रस्रवन्तो मद बहु ॥ ५५ ॥ तेजोवीर्य्यबलोपेता महाबलपरा
क्रमा । घटोत्कचस्तु स्व नाग प्रेषयामास संयुगे ॥ ५६ ॥ सगज
भगदत्तन्तु हन्तुकाम परन्तप । ते चान्ये चोदिता नागा
राक्षसै समहाबलै ॥ ५७ ॥ परिपेतु सुसंक्रुद्धाश्चतुर्दन्ताश्चतु
र्दिशम् । भगदत्तस्य त नाग विषाणैस्तेऽभ्यपीडयन् ॥ ५८ ॥
सम्पीड्यमानस्तैर्नागैर्वेदनार्त्त शरातुर । अनदत सुमहानाद

भिन्नाञ्जननिभस्वनः ॥ ५९ ॥ तस्य तं नदतो नादं सुघोरं भीम-
निस्वनम् । श्रुत्वा भीष्मोऽब्रवीद्द्रोणं राजानञ्च सुयोधनम् ॥ ६० ॥
एष युध्यति सङ्ग्रामे हैडिम्बेन दुरात्मना । भगदत्तो महेष्वासः
कृच्छ्रे च परिवर्त्तते ॥ ६१ ॥ राक्षसश्च महाकायः स च राजा-
तिकोपनः । ध्रुवं समेतौ समरे कालमृत्युसमावुभौ ॥ ६२ ॥
श्रूयते ह्येष हृष्टानां पाण्डवानां महास्वनः । हस्तिनश्चैव सुमहान्
भीतस्य रुदितध्वनिः ॥ ६३ ॥ तत्र गच्छाम भद्रं वो राजानं
परिरक्षितुम् । अरक्ष्यमाणः समरे क्षिप्रं प्राणान् विमोक्ष्यति
॥ ६४ ॥ तत् त्वरध्वं महावीर्य्या मा चिरं कुरुतानघाः । महान्
विवर्त्तते रौद्रः सङ्ग्रामो लोमहर्षणः ॥ ६५ ॥ भक्तश्च कुलपुत्रश्च
शूरश्च पृतनापतिः । युक्तं तस्य परित्राणं कर्त्तुमस्माभिरच्युताः
॥ ६६ ॥ भीष्मस्य तद्वचः श्रुत्वा भारद्वाजपुरोगमाः । सहिताः
सर्वराजानो भगदत्तपरीप्सया ॥ ६७ ॥ उत्तमं जवमास्थाय
प्रययुर्यत्र सोऽभवत् । तान् प्रयातान् समालोक्य युधिष्ठिरपुरो-
गमाः ॥ ६८ ॥ पाञ्चालाः पाण्डवैः सार्द्धं पृष्ठतोऽनुययुः परान् ।
तान्यनीकान्यथालोक्य राक्षसेन्द्रः प्रतापवान् ॥ ६९ ॥ ननाद
सुमहानादं विस्फोटमशनेरिव । तस्यापि निनदं श्रुत्वा दृष्ट्वा
नागांश्च युध्यतः ॥ ७० ॥ भीष्मः शान्तनवो भूयो भारद्वाजमभा-
षत । न रोचते मे सङ्ग्रामो हैडिम्बेन दुरात्मना ॥ ७१ ॥ बल-
वीर्य्यसमाविष्टः ससहायश्च साम्प्रतम् । नैष शक्यो युधा जेतुमपि
वज्रभृता स्वयम् ॥ ७२ ॥ लब्धलक्षः प्रहारी च वयञ्च श्रान्त-
वाहनाः । पाञ्चालैः पाण्डवैश्चैव वयञ्च क्षतविक्षताः ॥ ७३ ॥
तन्मे न रोचते युद्धं पाण्डवैर्जितकाशिभिः । घुष्यतामवहारोऽद्य
श्वो योत्स्यामः परैः सह ॥ ७४ ॥ पितामहवचः श्रुत्वा तथा
चक्रुः प्रहर्षिताः । उपायेनापयातास्ते घटोत्कचभयार्द्दिताः
कौरवेषु निवृत्तेषु पाण्डवा जितकाशिनः । सिं ७१

अश्ववेगस्तैः सह ॥ ७६ ॥ एवं तदभवत् युद्धं दिवसं भरतर्षभ । पाण्डवानां कुरूणाञ्च पुरस्कृत्य घटोत्कचम् ॥ ७७ ॥ कौरवास्तु ततस्तूर्णं प्रययुः शिविरं स्वकम् । व्रीडान्विता निशाकाले पाण्डवेयैः पराजिताः ॥ ७८ ॥ शरविक्षतगात्रास्तु पाण्डुपुत्रा महारथाः । युद्धे सुमनसो राजन् जग्मुः स्वशिबिरं प्रति ॥ ७९ ॥ पुरस्कृत्य महाराज भीमसेनघटोत्कचौ । पूजयन्तो महाराज मुदा परमया युताः ॥ ८० ॥ नदन्तो विविधान्नादान् तूर्य्यस्वनविमिश्रितान् । सिंहनादांश्च कुर्वाणा विमिश्रान् शङ्खनिःस्वनैः ॥ ८१ ॥ विनदन्तो महात्मानः कम्पयन्तश्च मेदिनीम् । घट्टयन्तश्च मर्माणि तव पुत्रस्य मारिष ॥ ८२ ॥ प्रयाताः शिबिरायैव निशाकाले परन्तपाः । दुर्य्योधनस्तु नृपतिर्दीनो भ्रातृवधेन च ॥ ८३ ॥ मुहूर्त्तं चिन्तयामास वाष्पशोकसमाकुलः । ततः कृत्वा विधिं सर्वं शिविरस्य यथाविधि । प्रदध्यौ शोकसन्तप्तो भ्रातृव्यसनकर्षितः ॥ ८४ ॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि चतुर्थयुद्धदिवसावहारे चतुःषष्टोऽध्यायः ॥ ६४ ॥

---

धृतराष्ट्र उवाच । भयं मे सुमहत् जातं विस्मयश्चैव सञ्जय । श्रुत्वा पाण्डुकुमाराणां कर्म देवैः सुदुष्करम् ॥ १ ॥ पुत्राणाञ्च पराभावं श्रुत्वा सञ्जय सर्व्वशः । चिन्ता मे महती भूता भविष्यति कथन्त्विति ॥ २ ॥ ध्रुवं विदुरवाक्यानि धक्ष्यन्ति हृदयं मम । तथा हि दृश्यते सर्व्वं दैवयोगेन सञ्जय ॥ ३ ॥ तत्र भीष्ममुखान् शूरानस्त्रज्ञान् योधसत्तमान् । पाण्डवानामनीकेषु योधयन्ति प्रहारिणः ॥ ४ ॥ किन्तेऽतपन् महात्मानः पाण्डुपुत्रा महाबलाः । किन्ते दत्तवरास्तात किं वा ज्ञानं विदन्ति

ति ॥ ५ ॥ येन स्वयं न गच्छन्ति दिवि तारागणा इव। पुनः पुनर्न मृष्यामि हतं सैन्यञ्च पाण्डवैः ॥ ६ ॥ मय्येव दण्डः पतति दैवात् परमदारुणः॥ यथावध्याः पाण्डुसुतास्तथावध्याश्च मे सुताः ॥ ७ ॥ एतन्मे सर्वमाचक्ष्व यथातत्त्वेन सञ्जय। न हि पारं प्रपश्यामि दुःखस्यास्य परन्तप ॥ ८ ॥ समुद्रस्येव महतो भुजाभ्यां प्रतरन्नर। पुत्राणां व्यसनं मन्ये ध्रुवं प्राप्तं सुदारुणम् ॥ ९ ॥ घातयिष्यति मे पुत्रान् सर्वान् भीमो न संशयः। न हि पश्यामि तं वीरं यो मे रक्षेत् सुतान् रणे ॥ १० ॥ ध्रुवं विनाशः समरे पुत्राणां मम सञ्जय। तस्मान्मे कारणं सूत युक्तञ्चैव विशेषतः ॥ ११ ॥ पृच्छतो मे यथातत्त्वं सर्वमाख्यातुमर्हसि। दुर्य्योधनस्तु यच्चक्रे दृष्ट्वा स्वान् विमुखान् रणे ॥ १२ ॥ भीष्मद्रोणौ कृपश्चैव सौबलेयो जयद्रथः। द्रौणिर्वापि महेष्वासो विकर्णो वा महाबलः ॥ १३ ॥ निश्चयो वापि कस्तेषां तदा ह्यासीन्महात्मनाम्। विमुखेषु महाप्राज्ञ मम पुत्रेषु सञ्जय ॥१४॥

सञ्जय उवाच। शृणु राजन्नवहितः श्रुत्वा चैवावधारय। नैव मन्त्रकृतं किञ्चिन्नैव माया तथाविधाम् ॥ १५ ॥ न वै विभीषिकां काञ्चिद्राजन् कुर्वन्ति पाण्डवाः। युध्यन्ति ते यथान्यायं शक्तिमन्तश्च संयुगे ॥ १६ ॥ धर्म्मेण सर्वकार्य्याणि जीवितादीनि भारत। आरभन्ते सदा पार्थाः प्रार्थयाना महद्यशः ॥ १७ ॥ ते न युद्धान्निवर्त्तन्ते धर्म्मोपेता महाबलाः। श्रिया परमया युक्ता यतो धर्म्मस्ततो जयः ॥ १८ ॥ तेनावध्या रणे पार्था जययुक्ताश्च पार्थिव। तव पुत्रा दुरात्मानः पापेष्वभिरताः सदा ॥ १९ ॥ निष्ठुरा हीनकर्म्माणस्तेन हीयन्ति संयुगे। सुबहूनि नृशंसानि पुत्रैस्तव जनेश्वर ॥ २० ॥ निकृतानीह पाण्डूनां नीचैरिव यथा नरैः। सर्वञ्च तदनादृत्य पुत्राणां तव किल्बिषम् ॥ २१ ॥ सापह्नवास्तथैवासन् पाण्डवाः पाण्डुपूर्व्वज। न चैतान् बहु मन्यन्ते

पुत्रास्तव विशाम्पते ॥ २२ ॥ तस्य पापस्य सततं क्रियमाणस्य कर्मणः। सम्प्राप्तं सुमहद्घोरं फलं किम्पाकसन्निभम् ॥ २३ ॥ तत्त्वं भुङ्क्ष्व महाराज सपुत्रः ससुहृज्जनः। नावबुध्यसि यद्राजन् वार्य्यमाणः सुहृज्जनैः ॥ २४ ॥ विदुरेणाथ भीष्मेण द्रोणेन च महात्मना। तथा मया चाप्यसकृत् वार्य्यमाणो न बुध्यसे ॥२५॥ वाक्यं हितञ्च पथ्यञ्च मर्त्त्यः पथ्यमिवौषधम्। पुत्राणां मतमास्थाय जितान् पश्यसि पाण्डवान् ॥ २६ ॥ शृणु भूयो यथातत्त्वं यन्मां त्वमनुपृच्छसि। कारणं भरतश्रेष्ठ पाण्डवानां जयं प्रति ॥ २७ ॥ तत्तेऽहं कथयिष्यामि यथाश्रुतमरिन्दम। दुर्य्योधनेन संपृष्ट एतमर्थं पितामहः ॥ २८ ॥ दृष्ट्वा भ्रातॄन् रणे सर्वान् विजितान् समहारथान्। शोकसम्मूढहृदयो निशाकाले स कौरव ॥ २९ ॥ पितामहं महाप्राज्ञं विनयेनोपगम्य ह। यदब्रवीत सुतस्ते च तन्मे शृणु जनेश्वर ॥ ३० ॥

दुर्य्योधन उवाच। द्रोणश्च त्वञ्च शल्यश्च कृपो द्रौणिस्तथैव च। कृतवर्मा च हार्द्दिक्यः काम्बोजश्च सुदक्षिणः ॥ ३१ ॥ भूरिश्रवा विकर्णश्च भगदत्तश्च वीर्य्यवान्। महारथाः समाख्याताः कुलपुत्रास्तनुत्यजः ॥ ३२ ॥ त्रयाणामपि लोकानां पर्य्याप्ता इति मे मतिः। पाण्डवानां समस्ताश्च न तिष्ठन्ति पराक्रमे ॥ ३३ ॥ तत्र मे संशयो जातस्तन्ममाचक्ष्व पृच्छतः। यं समाश्रित्य कौन्तेया जयन्त्यस्मान् पदे पदे ॥ ३४ ॥

भीष्म उवाच। शृणु राजन् वचो मह्यं यत्त्वां वक्ष्यामि कौरव। बहुशश्च मयोक्तोऽसि न च मे तत्त्वया कृतम् ॥ ३५ ॥ क्रियतां पाण्डवैः सार्द्धं शमो भरतसत्तम। एतत् क्षममहं मन्ये पृथिव्यास्तव वा विभो ॥ ३६ ॥ भुङ्क्ष्वेमां पृथिवीं राजन् भ्रातृभिः सहितः सुखी। सुहृदस्तर्पयन् सर्वान् नन्दयंश्चापि बान्धवान् ॥ ३७ ॥ न च मे क्रोशमानस्य श्रुतवानसि वै पुरा।

ऋदिदं समनुप्राप्तं यत् पाण्डूनवमन्यसे ॥ ३८ ॥ यश्च हेतुरवध्यत्वे तेषामक्लिष्टकर्म्मणाम्। तं शृणुष्व महाराज मत्तः कथयतः प्रभो ॥ ३९ ॥ नास्ति लोकेषु तद्भूतं भविता नो भविष्यति। यो जयेत् पाण्डवान् सर्व्वान् पालितान् शार्ङ्गधन्वना ॥ ४० ॥ यत्तु मे कथितं तात मुनिभिर्भावितात्मभिः। पुराणगीतं धर्म्मज्ञ तच्छृणुष्व यथातथम् ॥ ४१ ॥ पुरा किल सुराः सर्व्वे ऋषयश्च समागताः। पितामहमुपासेदुः पर्व्वते गन्धमादने ॥ ४२ ॥ तेषां मध्ये सुखासीनः प्रजापतिरपश्यत। विमानं प्रज्वलत् भासा स्थितं प्रवराम्बरे ॥ ४३ ॥ ध्यानेनावेद्य तद्ब्रह्मा कृत्वा च नियतोऽञ्जलिम्। नमश्चकार हृष्टात्मा पुरुषं परमेश्वरम् ॥ ४४ ॥ ऋषयस्त्वथ देवाश्च दृष्ट्वाकाशे समुत्थितम्। स्थिताः प्राञ्जलयः सर्व्वे पश्यन्तो महदद्भुतम् ॥ ४५ ॥ यथावच्च तमभ्यर्च्य ब्रह्मा ब्रह्मविदां वरः। जगाद जगतः स्रष्टा परं परमधर्म्मवित् ॥ ४६ ॥ विश्वावसुर्विश्वमूर्त्तिर्विश्वेशो विष्वक्सेनो विश्वकर्म्मा वशी च। विश्वेश्वरो वासुदेवोऽसि तस्माद्योगात्मानं दैवतं त्वामुपैमि ॥ ४७ ॥ जय विश्व महादेव जय लोकहिते रत। जय योगीश्वर विभो जय योगपरावर ॥ ४८ ॥ पद्मनाभ विशालाक्ष जय लोकेश्वरेश्वर। भूतभव्यभवन्नाथ जय सौम्यात्मजात्मज ॥ ४९ ॥ असङ्ख्येयगुणाधार जय सर्व्वपरायण। नारायण सुदुष्पार जय शार्ङ्गधनुर्धर ॥ ५० ॥ जय सर्व्वगुणोपेत विश्वमूर्त्ते निरामय। विश्वेश्वर महाबाहो जय लोकार्थतत्पर ॥ ५१ ॥ महोरग वराहाद्य हरिकेश विभो जय। हरिवास दिशामीश विश्वावासामिताव्यय ॥ ५२ ॥ व्यक्ताव्यक्तामितस्थान नियतेन्द्रिय सत्क्रिय। असङ्ख्येयात्मभावज्ञ जय गम्भीर कामद ॥ ५३ ॥ अनन्तविदित-ब्रह्म नित्यं भूतविभावन। कृतकार्य्य कृतप्रज्ञ धर्म्मज्ञ विजयावह ॥ ५४ ॥ गुह्यात्मन् सर्व्वयोगात्मन् स्फुटसम्भूतसम्भव। भूतात्म-

त्वल्लोकेश जय भूतविभावन ॥ ५५ ॥ आत्मयोने महाभाग कल्प-
संक्षेपतत्पर । उद्भावनमनोभाव जय ब्रह्मजनप्रिय ॥ ५६ ॥
निसर्गसर्गनिरत कामेश परमेश्वर । अमृतोद्भव सद्भाव युगाग्ने
विजयप्रद ॥ ५७ ॥ प्रजापतिपते देव पद्मनाभ महाबल । आत्म-
भूत महाभूत कर्मात्मन् जय सर्वद ॥ ५८ ॥ पादौ तव धरा
देवी दिशो बाहुर्दिवः शिरः । मूर्तिस्तेऽहं सुराः कायश्चन्द्रा-
दित्यौ च चक्षुषी ॥ ५९ ॥ बलं तपश्च सत्यञ्च धर्मकामात्मजं तव ।
तेजोऽग्निः पवनः श्वास आपस्ते स्वेदसम्भवाः ॥ ६० ॥ अश्विनौ
श्रवणौ नित्यौ देवी जिह्वा सरस्वती । वेदाः संस्कारनिष्ठा हि
त्वयीदं जगदाश्रितम् ॥ ६१ ॥ न सङ्ख्यां न परिमाणं ते न तेजो
न पराक्रमम् । न बलं योगयोगीश जानीमस्ते न सम्भवम् ॥ ६२ ॥
त्वद्भक्तिनिरता देव नियमैस्त्वां समाश्रिताः । अर्चयामः सदा
विष्णो परमेशं महेश्वरम् ॥ ६३ ॥ ऋषयो देवगन्धर्वा यक्ष-
राक्षसपन्नगाः । पिशाचा मानुषाश्चैव मृगपक्षिसरीसृपाः ॥ ६४ ॥
एवमादि मया सृष्टं पृथिव्यां त्वत्प्रसादजम् । पद्मनाभ विशा-
लाक्ष कृष्ण दुःखप्रणाशन ॥ ६५ ॥ त्वं गतिः सर्वभूतानां त्वं
नेता त्वं जगन्मुखम् । त्वत्प्रसादेन देवेश सुखिनो विबुधाः
सदा ॥ ६६ ॥ पृथिवी निर्भया देव त्वत्प्रसादात् सदाभवत् ।
तस्माद्भव विशालाक्ष यदुवंशविवर्द्धनः ॥ ६७ ॥ धर्मसंस्थापना-
र्थाय दैतेयानां वधाय च । जगतो धारणार्थाय विज्ञाप्यं कुरु
मे विभो ॥ ६८ ॥ यत्तत् परमकं गुह्यं त्वत्प्रसादादिदं प्रभो ।
वासुदेव तदेतत्ते मयोद्गीतं यथातथम् ॥ ६९ ॥ सृष्ट्वा सङ्कर्षणं
देवं स्वयमात्मानमात्मना । कृष्ण त्वमात्मनः स्राक्षीः प्रद्युम्नं चात्म-
सम्भवम् ॥ ७० ॥ प्रद्युम्नाच्चानिरुद्धं तु यं विदुर्विष्णुमव्ययम् ।
अनिरुद्धोऽसृजन्मां वै ब्रह्माणं लोकधारिणम् ॥ ७१ ॥ वासु-
देवमयः सोऽहं त्वयैवास्मि विनिर्मितः । विभज्य भागशोऽऽत्मानं

व्रज मानुषतां विभो ॥ ७२ ॥ तत्रासुरवधं कृत्वा सर्व्वलोकसुखाय
वै । धर्मं स्थाप्य यशः प्राप्य योगं प्राप्स्यसि तत्त्वतः ॥ ७३ ॥
त्वां हि ब्रह्मर्षयो लोके देवाश्चामितविक्रम । तैस्तैश्च नामभि-
र्भक्ता गायन्ति परमाद्भुतम् ॥ ७४ ॥ स्थिताश्च सर्वे त्वयि भूत-
सङ्घाः कृत्वाश्रयं त्वां वरदं सुबाहो । अनादिमध्यान्तमपारयोगं
लोकस्य सेतुं प्रवदन्ति विप्राः ॥ ७५ ॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि विश्वोपाख्याने
पञ्चषष्टोऽध्यायः ॥ ६५ ॥

---

भीष्म उवाच । ततः स भगवान् देवो लोकानामीश्वरेश्वरः ।
ब्रह्माणं प्रत्युवाचेदं स्निग्धगम्भीरया गिरा ॥ १ ॥ विदितं तात
योगान्मे सर्व्वमेतत्तवेप्सितम् । तथा तद्भवितेत्युक्त्वा तत्रैवान्तर-
धीयत ॥ २ ॥ ततो देवर्षिगन्धर्वा विस्मयं परमं गताः । कौतू-
हलपराः सर्वे पितामहमथाब्रुवन् ॥ ३ ॥ को न्वयं यो भगवता
प्रणम्य विनयाद्विभो । वाग्भिः स्तुतो वरिष्ठाभिः श्रोतुमिच्छा-
महे वयम् ॥ ४ ॥ एवमुक्तस्तु भगवान् प्रत्युवाच पितामहः ।
देवब्रह्मर्षिगन्धर्वान् सर्वान् मधुरया गिरा ॥ ५ ॥ यत्तत्परं भवि-
ष्यच्च भविता यच्च यत्परम् । भूतात्मा च प्रभुश्चैव ब्रह्म यच्च परं
पदम् ॥ ६ ॥ तेनास्मि कृतसम्वादः प्रसन्नेन सुरर्षभाः । जगतो-
ऽनुग्रहार्थाय याचितो मे जगत्पतिः ॥ ७ ॥ मानुषं लोकमातिष्ठ
वासुदेव इति श्रुतः । असुराणां वधार्थाय सम्भवस्व महीतले
॥ ८ ॥ सङ्ग्रामे निहता ये वै दैत्यदानवराक्षसाः । त इमे नृषु
सम्भूता घोररूपा महाबलाः ॥ ९ ॥ तेषां वधार्थं भगवान् नरेण
सहितो बली । मानुषीं योनिमास्थाय चरिष्यति महीतले ॥ १० ॥
नरनारायणौ तौ तु पुराणावृषिसत्तमौ । अजेयौ हि रणे यौ

तत्त्वलोकेश जय भूतविभावन ॥ ५५ ॥ आत्मयोने महाभाग कल्प सङ्क्षेपतत्पर। उद्भावनमनोभाव जय ब्रह्मजनप्रिय ॥ ५६ ॥ निसर्गसर्गनिरत कामेश परमेश्वर। अमृतोद्भव सद्भाव युगाग्ने विजयप्रद ॥ ५७ ॥ प्रजापतिपते देव पद्मनाभ महाबल। आत्मभूत महाभूत कर्मात्मन् जय सर्वद ॥ ५८ ॥ पादौ तव धरा देवी दिशो बाहुर्दिवं शिरः। मूर्त्तिस्तेऽहं सुराः कायश्चन्द्रादित्यौ च चक्षुषी ॥ ५९ ॥ बलं तपश्च सत्यञ्च धर्मः कर्मात्मजं तव। तेजोऽग्निः पवनः श्वास आपस्ते स्वेदसम्भवाः ॥ ६० ॥ अश्विनौ श्रवणौ नित्यौ देवी जिह्वा सरस्वती। वेदाः संस्कारनिष्ठा हि त्वयीदं जगदाश्रितम् ॥ ६१ । सङ्ख्यां न परिमाणं ते न तेजो न पराक्रमम्। न बलं योगयोगीश जानीमस्ते न सम्भवम् ॥ ६२॥ त्वद्भक्तिनिरता देव नियमैस्त्वा समाश्रिताः। अर्चयाम सदा विष्णो परमेशं महेश्वरम् ॥ ६३ । ऋषयो देवगन्धर्वा यक्षराक्षसपन्नगाः। पिशाचा मानुषाश्चैव मृगपक्षिसरीसृपाः ॥ ६४ ॥ एवमादि मया सृष्टं पृथिव्यां त्वत्प्रसादजम्। पद्मनाभ विशालाक्ष कृष्ण दुःखप्रणाशन ॥ ६५ ॥ त्वं गतिः सर्वभूतानां त्वं नेता त्वं जगन्मुखम्। त्वत्प्रसादेन देवेश सुखिनो विबुधाः सदा ॥ ६६ ॥ पृथिवी निर्भया देव त्वत्प्रसादान्महाभवत्। तस्माद्भव विशालाक्ष यदुवंशविवर्द्धन ॥ ६७ ॥ धर्मसंस्थापनार्थाय दैतेयानां वधाय च। जगतो धारणार्थाय विज्ञाप्यं कुरु मे विभो ॥ ६८ ॥ यदेतत् परमं गुह्यं त्वत्प्रसादादिदं प्रभो। वासुदेव तदेतत्ते मयोद्गीतं यथातथम् ॥ ६९ ॥ सृष्ट्वा सङ्कर्षणं देवं स्वयमात्मानमात्मना। कृष्ण त्वमात्मनास्राक्षीः प्रद्युम्नं चात्मसम्भवम् ॥ ७० ॥ प्रद्युम्नाच्चानिरुद्धं तु यं विदुर्विष्णुमव्ययम्। अनिरुद्धोऽसृजन्मां वै ब्रह्माणं लोकधारिणम् ॥ ७१ ॥ वासुदेवमयः सोऽहं त्वयैवास्मि विनिर्मितः। विभज्य भागशोऽऽत्मानं

व्रज मानुषतां विभो ॥ ७२ ॥ तत्रासुरवधं कृत्वा सर्व्वलोकसुखाय वै । धर्मं स्थाप्य यशः प्राप्य योगं प्राप्स्यसि तत्त्वतः ॥ ७३ ॥ त्वां हि ब्रह्मर्षयो लोके देवाश्चामितविक्रम । तैस्तैः स्वैर्नामभिर्भक्ता गायन्ति परमाद्भुतम् ॥ ७४ ॥ स्थिताश्च सर्वे त्वयि भूतसङ्घाः कृत्वाश्रयं त्वां वरदं सुबाहो । अनादिमध्यान्तमपारयोगं लोकस्य सेतुं प्रवदन्ति विप्राः ॥ ७५ ॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि विश्वोपाख्याने पञ्चषष्टोऽध्यायः ॥ ६५ ॥

भीष्म उवाच । ततः स भगवान् देवो लोकानामीश्वरेश्वरः । ब्रह्माणं प्रत्युवाचेदं स्निग्धगम्भीरया गिरा ॥ १ ॥ विदितं तात योगान्मे सर्व्वमेतत्तवेप्सितम् । तथा तद्भवितेत्युक्त्वा तत्रैवान्तरधीयत ॥ २ ॥ ततो देवर्षिगन्धर्व्वा विस्मयं परमं गताः । कौतूहलपराः सर्व्वे पितामहमथाब्रुवन् ॥ ३ ॥ को न्वयं यो भगवता प्रणम्य विनयाद्विभो । वाग्भिः स्तुतो वरिष्ठाभिः श्रोतुमिच्छामहे वयम ॥ ४ ॥ एवमुक्तस्तु भगवान् प्रत्युवाच पितामहः । देवब्रह्मर्षिगन्धर्व्वान् सर्व्वान् मधुरया गिरा ॥ ५ ॥ यत्तत्परं भविष्यच्च भविता यच्च यत्परम् । भूतात्मा यः प्रभुश्चैव ब्रह्म यच्च परं पदम् ॥ ६ ॥ तेनास्मि कृतसम्वादः प्रसन्नेन सुरर्षभाः । जगतोऽनुग्रहार्थाय याचितो मे जगत्पतिः ॥ ७ ॥ मानुषं लोकमातिष्ठ वासुदेव इति श्रुतः । असुराणां वधार्थाय सम्भवस्व महीतले ॥ ८ ॥ सङ्ग्रामे निहता ये ते दैत्यदानवराक्षसाः । त इमे नृषु सम्भूता घोररूपा महाबलाः ॥ ९ ॥ तेषां वधार्थं भगवान् नरेण सहितो वशी । मानुषीं योनिमास्थाय चरिष्यति महीतले ॥ १० ॥ नरनारायणौ तौ तु पुराणावृषिसत्तमौ । अजेयौ हि रणे यौ

तौ समेतैरमरैरपि ॥ ११ ॥ सहितौ मानुषे लोके सम्भूतावमितद्युती। मूढास्तौ न जानन्ति नरनारायणावृषी ॥ १२ ॥ यस्याहमात्मजो ब्रह्मा सर्वस्य जगतः पतिः। वासुदेवोऽर्चनीयो वः सर्वलोकमहेश्वरः ॥ १३ ॥ तथा मनुष्योऽयमिति कदाचित् सुरसत्तमाः। नावज्ञेयो महावीर्य्यः शङ्खचक्रगदाधरः ॥ १४ ॥ एतत् परमकं गुह्यमेतत्परमकं पदम्। एतत् परमकं ब्रह्म एतत् परमकं यशः ॥ १५ ॥ एतदक्षरमव्यक्तमेतच्छाश्वतमेव च। एतत् पुरुषसंज्ञं वै गीयते ज्ञायते न च ॥ १६ ॥ एतत् परमकं तेज एतत् परमकं सुखम्। एतत् परमकं सत्यं कीर्त्तितं विश्वकर्म्मणा ॥ १७ ॥ तस्मात् सुरासुरैः सर्व्वैः सेन्द्रैरमितविक्रमः। नावज्ञेयो वासुदेवो मानुषोऽयमिति प्रभो ॥ १८ ॥ यश्च मानुषमात्रोऽयमिति ब्रूयात् स मन्दधीः। हृषीकेशमवज्ञानात्तमाहुः पुरुषाधमम् ॥ १९ ॥ तं योगिनं महात्मानं प्रविष्टं मानुषीं तनुम्। योऽवमन्येद्वासुदेवं तमाहुस्तामसं जनाः ॥ २० ॥ देवं चराचरात्मानं श्रीवत्साङ्कं सुवर्च्चसम्। पद्मनाभं न जानाति तमाहुस्तामसं जनाः ॥ २१ ॥ किरीटकौस्तुभधरं मित्राणामभयङ्करम्। अवजानन् महात्मानं घोरे तमसि मज्जति ॥ २२ ॥ एवं विदित्वा तत्त्वार्थं लोकानामीश्वरेश्वरः। वासुदेवो नमस्कार्य्यः सर्व्वलोकैः सुरोत्तमाः ॥ २३ ॥

वासुदेवं महात्मानं लोकानामीश्वरं प्रभुम् ॥ २८ ॥ यस्य स्वादात्मजो ब्रह्मा सर्वस्य जगतः पिता । कथं न वासुदेवोऽयमर्च्च्यश्चेज्यश्च मानवैः ॥ २९ ॥ वारितोऽसि पुरा तात मुनिभिर्भावितात्मभिः । मा गच्छ संयुगं तेन वासुदेवेन धन्विना ॥ ३० ॥ पाण्डवैः सार्द्धमिति यत्तत्त्वं मोहान्न बुध्यसे । मन्ये त्वां राक्षसं क्रूरं तथा चासि तमोवृतः ॥ ३१ ॥ तस्मात् द्विषसि गोविन्दं पाण्डवञ्च धनञ्जयम् । नरनारायणौ देवौ कोऽन्यो द्विष्याद्धि मानवः ॥ ३२ ॥ तस्माद्ब्रवीमि ते राजन्नेषोऽसौ शाश्वतोऽव्ययः । सर्व्वलोकमयो नित्यः शास्ता धाता धरो ध्रुवः ॥ ३३ ॥ लोकान् धारयते यस्त्रींश्चराचरगुरुः प्रभुः । योद्धा जयश्च जेता च सर्व्वप्रकृतिरीश्वरः ॥ ३४ ॥ राजन् सत्त्वमयो ह्येष तमोरजविवर्ज्जितः । यतः कृष्णस्ततो धर्म्मो यतो धर्म्मस्ततो जयः ॥ ३५ ॥ तस्य माहात्म्ययोगेन योगेनात्ममयेन च । धृताः पाण्डुसुता राजन् जयश्चैषां भविष्यति ॥ ३६ ॥ श्रेयोयुक्तां सदा बुद्धिं पाण्डवानां दधाति यः । बलञ्चापि रणे नित्यं भयेभ्यश्चैव रक्षति ॥ ३७ ॥ स एष शाश्वतो देवः सर्व्वभूतमयः शिवः । वासुदेव इति ख्यातो यन्मां त्वं परिपृच्छसि ॥ ३८ ॥ ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः । सेव्यतेऽभ्यर्च्यते चैव नित्ययुक्तैः स्वकर्म्मभिः ॥ ३९ ॥ द्वापरस्य युगस्यान्ते आदौ कलियुगस्य च । सात्वतं विधिमास्थाय गीतः सङ्कर्षणेन यः ॥ ४० ॥ स एष सर्व्वं सुरमर्त्त्यलोकं समुद्रकक्षान्तरिताः पुरीश्च । युगे युगे मानुषञ्चैव वासं पुनः पुनः सृजते विश्वकर्म्मा ॥ ४१ ॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि विश्वोपाख्याने षट्षष्टोऽध्यायः ॥ ६६ ॥

---

दुर्योधन उवाच । वासुदेवो महद्भूतं सर्वलोकेषु कथ्यते
तस्यागमं प्रतिष्ठाञ्च ज्ञातुमिच्छे पितामह ॥ १ ॥
भीष्म उवाच । वासुदेवो महद्भूतं सर्वदैवतदैवतम् । न
परं पुण्डरीकाक्षाद् दृश्यते भरतर्षभ ॥ २ ॥ मार्कण्डेयश्च गोविन्दं
कथयत्यद्भुतं महत् । सर्वभूतानि भूतात्मा महात्मा पुरुषोत्तमः
॥ ३ ॥ आपो वायुश्च तेजश्च त्रयमेतदकल्पयत् । स सृष्ट्वा पृथिवीं
देवः सर्वलोकेश्वरः प्रभुः ॥ ४ ॥ अप्सु वै शयनं चक्रे महात्मा
पुरुषोत्तमः । सर्वतेजोमयो देवो योगात् सुष्वाप तत्र ह ॥ ५ ॥
मुखतः सोऽग्निमसृजत् प्राणाद्वायुमथापि च । सरस्वतीं च वेदांश्च
मनसः ससृजेऽच्युतः ॥ ६ ॥ एष लोकान् ससर्जादौ देवांश्च
ऋषिगणैः सह । निधनं चैव मृत्युञ्च प्रजानां प्रभवाप्ययौ ॥ ७ ॥
एष धर्मश्च धर्मज्ञो वरदः सर्वकामदः । एष कर्त्ता च कार्यं च
स वै देवः स्वयं प्रभुः ॥ ८ ॥ भूतभव्यभविष्यञ्च पूर्वमेतदकल्पयत् ।
संहारं जगतश्चापि महात्मा प्रभुरव्ययः ॥ ९ ॥ अग्रजं सर्व-
भूतानां संकर्षणमकल्पयत् । शेषञ्चाकल्पयद्देवमनन्तमिति यं विदुः
॥ १० ॥ यो धारयति भूतानि धरां चैव सपर्वताम् । ध्यान-
योगेन विप्राश्च तं वदन्ति महौजसम् ॥ ११ ॥ कर्णस्रोतोद्भव-
ञ्चापि मधुं नाम महासुरम् । तमुग्रमुग्रकर्माणमुग्रां बुद्धिं समा-
स्थितम् ॥ १२ ॥ ब्रह्मणोऽपचितिं कुर्वञ्जघान पुरुषोत्तमः । तस्य
तात वधाद्देवदानवमानुषाः ॥ १३ ॥ मधुसूदनमित्याहु-
र्ऋषयश्च जनार्दनम् । वराहश्चैव सिंहश्च त्रिविक्रमगतिः प्रभुः
॥ १४ ॥ एष माता पिता चैव सर्वेषां प्राणिनां हरिः । परं हि
पुण्डरीकाक्षान्न भूतं न भविष्यति ॥ १५ ॥ मुखतोऽसृजद्ब्राह्मणान्
बाहुभ्यां क्षत्रियांस्तथा । वैश्यांश्चाप्यूरुतो राजन् शूद्रान् पद्भ्यां
तथैव च ॥ १६ ॥ तपसा नियतो देवन्निधानं सर्वदेहिनाम् ।
ब्रह्मभूतममावास्यां पौर्णमास्यां तथैव च ॥ १७ ॥ योगभूतं परि-

यदन्तं केशवं महदाप्नुयात्। केशवं परमन्तेजः सर्व्वलोकपितामहम् ॥ १८ ॥ एतमाहुर्हृषीकेशं मुनयो वै नराधिप। एवमेव विजानीयादाचार्य्यं पितरं गुरुम् ॥ १९ ॥ कृष्णो यस्य प्रसीदेत लोकास्तेनाक्षया जिताः। यश्चैवैनं भयस्थाने केशवं शरणं व्रजेत् ॥ २० ॥ सदा नरः पठेच्चेदं स्वस्तिमान् स भवेत् सुखी। ये च कृष्णं प्रपद्यन्ते ते न मुह्यन्ति मानवाः ॥ २१ ॥ भये महति यो मग्नान् पाति नित्यं जनार्द्दनः। एतद्युधिष्ठिरो ज्ञात्वा याथार्थ्येन भारत ॥ २२ ॥ सर्व्वात्मना महात्मानं केशवं जगदीश्वरम्। प्रपन्नः शरणं राजन् योगीशं पृथिवीश्वरम् ॥ २३ ॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि विश्वोपाख्याने सप्तषष्टोऽध्यायः ॥ ६७ ॥



भीष्म उवाच। शृणु चेदं महाराज ब्रह्मोक्तं स्तवं मम। ब्रह्मर्षिभिश्च देवैश्च यः पुरा कथितो भुवि ॥ १ ॥ साध्यानामपि देवानां देवदेवेश्वरः प्रभुः। लोकभावनभावश्च इति त्वां नारदोऽब्रवीत् ॥ २ ॥ भूतभव्यं भविष्यञ्च मार्कण्डेयोऽभ्युवाच ह। यज्ञानां चैव यज्ञं त्वां तपश्च तपसामपि ॥ ३ ॥ देवानामपि देवञ्च त्वामाह भगवान् भृगुः। पुराणञ्चैव परमं विष्णो रूपं तवेति च ॥ ४ ॥ वासुदेवो वसूनां त्वं शक्रस्थापयिता तथा। देवदेवोऽसि भूतानामिति द्वैपायनोऽब्रवीत् ॥ ५ ॥ पूर्व्वं प्रजानिसर्गेषु दक्षमाहुः प्रजापतिम्। स्रष्टारं सर्व्वभूतानामङ्गिरास्त्वां ततोऽब्रवीत् ॥ ६ ॥ अव्यक्तं ते शरीरोत्थं व्यक्तन्ते मनसि स्थितम्। देवा वाक्सम्भवाश्चेति देवलस्त्वां तथाब्रवीत् ॥ ७ ॥ शिरसा ते दिवं व्याप्तं बाहुभ्यां पृथिवी धृता। जठरे च त्रयो लोकाः पुरुषोऽसि सनातनः ॥ ८ ॥ देवन्त्वामभिजानन्ति तपसा भाविता नराः। आत्म-

दर्शनत्वप्नानामृषीणां चापि सत्तमः ॥ ९ ॥ राजर्षीणामुदाराणाम्
आहवेष्वनिवर्त्तिनाम् । सर्वधर्मप्रधानानां त्वङ्गतिर्मधुसूदन ॥ १० ॥
इति नित्यं योगविद्भिर्भगवान् पुरुषोत्तमः । सनत्कुमारप्रमुखैः
स्तूयतेऽभ्यर्च्यते हरिः ॥ ११ ॥ एष ते विस्तरस्तात सङ्क्षेपश्च
प्रकीर्त्तितः । केशवस्य यथातत्त्वं सुप्रीतो भव केशवे ॥ १२ ॥
सञ्जय उवाच । पुण्यं श्रुत्वैतदाख्यानं महाराज सुतस्तव ।
केशवं बहुमेने स पाण्डवांश्च महारथान् ॥ १३ ॥ तमब्रवीन्महा-
राज भीष्मः शान्तनवः पुनः । माहात्म्यन्ते श्रुतं राजन् केशवस्य
महात्मनः ॥ १४ ॥ नरस्य च यथातत्त्वं यन्मां त्वं परिपृच्छसि ।
यदर्थं नृषु सम्भूतौ नरनारायणावुभौ ॥ १५ ॥ अजेयौ च यथा
वीरौ संयुगेष्वपराजितौ । यथा च पाण्डवा राजन्नवध्या युधि
कस्यचित् ॥ १६ ॥ प्रीतिमान् हि दृढं कृष्णः पाण्डवेषु यशस्विषु ।
तस्माद्ब्रवीमि राजेन्द्र शमो भवतु पाण्डवैः ॥ १७ ॥ पृथिवीं
भुङ्क्ष्व सहितो भ्रातृभिर्बलिभिर्वशी । नरनारायणौ देवाववज्ञाय
विनङ्क्ष्यसि ॥ १८ ॥ एवमुक्त्वा तव पिता तूष्णीमासीद्विशाम्पते ।
व्यसर्जयच्च राजानं शिबिरञ्च विवेश ह ॥ १९ ॥ राजा च शिबिरं
प्रायात् प्रणिपत्य महात्मने । शिश्ये च शयने शुभ्रे तां रात्रिं
भरतर्षभ ॥ २० ॥

व्यूहौ च व्यूह्य संरब्धाः सम्प्रहृष्टाः प्रहारिणः ॥ ३ ॥ अरचत् मकरं व्यूहं भीष्मो राजन् समन्ततः। तथैव पाण्डवा राजन्नरचन् व्यूहमात्मनः ॥ ४ ॥ स निर्ययौ महाराजे; पिता देवव्रतस्तव। महता रथवंशेन संहतो रथिनां वरः ॥ ५ ॥ इतरे चान्वयुः सर्व्वे यथास्थानमवस्थिताः। रथिनः पत्तयश्चैव दन्तिनः सादिनस्तथा ॥ ६ ॥ तान् दृष्ट्वा प्रोद्यतान् संख्ये पाण्डवाश्च यशस्विनः। श्येनेन व्यूहराजेन तेनाजेयेन संयुगे ॥ ७ ॥ अशोभत मुखे तस्य भीमसेनो महाबलः। नेत्रे शिखण्डी दुर्द्धर्षो धृष्टद्युम्नश्च पार्षतः ॥ ८ ॥ शीर्षे चास्यामवद्वीरः सात्यकिः सत्यविक्रमः। विधुन्वन् गाण्डिवं पार्थो ग्रीवायामभवत्तदा ॥ ९ ॥ अक्षौहिण्या समग्रया वामपक्षोऽभवत्तदा। महात्मा द्रुपदः श्रीमान् सहपुत्रेण संयुगे ॥ १० ॥ दक्षिणश्चाभवत् पक्षः कैकेयोऽक्षौहिणीपतिः। पृष्ठतो द्रौपदेयाश्च सौभद्रश्चापि वीर्य्यवान् ॥ ११ ॥ पृष्ठे समभवच्छ्रीमान् स्वयं राजा युधिष्ठिरः। भ्रातृभ्यां सहितो वीरो यमाभ्यां चारुविक्रमः ॥ १२ ॥ प्रविश्य तु रणे भीमो मकरं मुखतस्तदा। भीष्ममासाद्य सङ्ग्रामे छादयामास सायकैः ॥ १३ ॥ ततो भीष्मो महास्त्राणि पातयामास वीर्य्यवान्। मोहयन् पाण्डुपुत्राणां व्यूढं सैन्यं महाहवे ॥ १४ ॥ संमुह्यति तदा सैन्ये त्वरमाणो धनञ्जयः। भीष्मं शरसहस्रेण विव्याध रणमूर्द्धनि ॥ १५ ॥ प्रतिसंवार्य चास्त्राणि भीष्ममुक्तानि संयुगे। स्वेनानीकेन हृष्टेन युद्धाय समवस्थितः ॥ १६ ॥ ततो दुर्य्योधनो राजा भारद्वाजमभाषत। पूर्व्वं दृष्ट्वा वधं घोरं बलस्य बलिनां वरः ॥ १७ ॥ भ्रातृणाञ्च वधं सङ्ख्ये त्वरमाणो महारथः। आचार्य्य सततं त्वं हि हितकामो ममानघ ॥ १८ ॥ वयं हि त्वां समाश्रित्य भीष्मं चैव पितामहम्। देवानपि रणे जेतुं प्रार्थयामो न संशयः ॥ १९ ॥ किमु पाण्डुसुतान् युद्धे

हीनवीर्यपराक्रमान्। स तथा कुरु भद्रन्ते यथा वध्यन्ति पाण्डवाः ॥ २० ॥ एवमुक्तस्ततो द्रोणस्तव पुत्रेण संयुगे। अभिनत् पाण्डवानीकं प्रेक्षमाणस्य सात्यकेः ॥ २१ ॥ सात्यकिश्च ततो द्रोणं वारयामास भारत। ततः प्रववृते युद्धं घोररूपं भयानकम् ॥ २२ ॥ शैनेयन्तु रणे क्रुद्धो भारद्वाजः प्रतापवान्। अविध्यद्दशभिर्बाणैर्जत्रुदेशे स्मयन्निव ॥ २३ ॥ भीमसेनस्ततः क्रुद्धो भारद्वाजमविध्यत। संरक्षन् सात्यकिं राजन् द्रोणाच्छस्त्रभृतां वरात् ॥ २४ ॥ ततो द्रोणश्च भीष्मश्च तथा शल्यश्च मारिष। भीमसेनं रणे क्रुद्धाश्छादयाञ्चक्रिरे शरैः ॥ २५ ॥ तत्राभिमन्युः संक्रुद्धो द्रौपदेयाश्च मारिष। विव्यधुर्निशितैर्बाणैः सर्वांस्तानुद्यतायुधान् ॥ २६ ॥ भीष्मद्रोणौ तु संक्रुद्धावापतन्तौ महाबलौ। शत्रुघ्नौ शिखण्डी च महेष्वासो महाहवे ॥ २७ ॥ प्रगृह्य बलवद्वीरो धनुर्जलदनिस्वनम्। अभ्यवर्षच्छरैस्तूर्णं छादयानो दिवाकरम् ॥ २८ ॥ शिखण्डिनं समासाद्य भारतानां पितामहः। अवर्जयत सङ्ग्रामे स्त्रीत्वं तस्यानुसंस्मरन् ॥ २९ ॥ ततो द्रोणो महाराज अभ्यद्रवत संयुगे। रक्षमाणस्तदा भीष्मं तव पुत्रेण चोदितः ॥ ३० ॥ शिखण्डी तु समासाद्य द्रोणं शस्त्रभृतां वरम्। अवर्जयत सन्त्रस्तो युगान्ताग्निमिवोल्वणम् ॥ ३१ ॥ ततो बलेन महता पुत्रस्तव विशाम्पते। जुगोप भीष्ममासाद्य प्रार्थयानो महद्यशः ॥ ३२ ॥ तथैव पाण्डवा राजन् पुरस्कृत्य धनञ्जयम्। भीष्ममेवाभ्यवर्त्तन्त जये कृत्वा दृढां मतिम् ॥ ३३ ॥ तद्युद्धमभवद्घोरं देवानां दानवैरिव। जयमाकाङ्क्षतां सङ्ख्ये यशश्च महदद्भुतम् ॥ ३४ ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि पञ्चमदिवसयुद्धारम्भे एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

—•—

सञ्जय उवाच । अकरोत्तुमुलं युद्धं भीष्मः शान्तनवस्तदा । भीमसेनभयादिच्छन् पुत्रांस्तारयितुन्तव ॥ १ ॥ पूर्वाह्णे तु महा-रौद्रं राज्ञां युद्धमवर्त्तत । कुरूणां पाण्डवानाञ्च मुख्यशूर-विनाशनम् ॥ २ ॥ तस्मिन्नाकुलसङ्ग्रामे वर्त्तमाने महाभये । अभ-वत्तुमुलः शब्दः संस्पृशन् गगनं महान् ॥ ३ ॥ नदद्भिश्च महा-नागैर्हेषमाणैश्च वाजिभिः । भेरीशङ्खनिनादैश्च तुमुलं समपद्यत ॥ ४ ॥ युयुत्सवस्ते विक्रान्ता विजयाय महाबलाः । अन्योऽन्य-मभिगर्ज्जन्तो गोष्ठेषु वृषभा इव ॥ ५ ॥ शिरसां पात्यमानानां समरे निशितैः शरैः । अश्मवृष्टिरिवाकाशे बभूव भरतर्षभ ॥ ६ ॥ कुण्डलोष्णीषधारीणि जातरूपोज्ज्वलानि च । पतितानि स्म दृश्यन्ते शिरांसि भरतर्षभ ॥ ७ ॥ विशिखोन्मथितैर्गात्रैः शिरो-भिश्च सकुण्डलैः । सहस्राभरणैश्चान्यैरभवच्छादिता मही ॥ ८ ॥ कवचोपहितैर्गात्रैर्भुजैश्च समलङ्कृतैः । मुखैश्च चन्द्रसङ्काशैरक्तान्त-नयनैस्तथा ॥ ९ ॥ गजवाजिमनुष्याणां सर्व्वगात्रैश्च भूपते । आसीत् सर्व्वा समाकीर्णा मुहूर्त्तेन वसुन्धरा ॥ १० ॥ रजोमेघैश्च तुमुलैः शस्त्रविद्युत्प्रकाशिभिः । आयुधानाञ्च निर्घोषः स्तनयित्नुसमो-ऽभवत् ॥ ११ ॥ स सम्प्रहारस्तुमुलः कटुकः शोणितोदकः । प्राव-र्त्तत कुरूणाञ्च पाण्डवानाञ्च भारत ॥ १२ ॥ तस्मिन् महाभये घोरे तुमुले लोमहर्षणे । ववर्षुः शरजालानि क्षत्रिया युद्ध-दुर्म्मदाः ॥ १३ ॥ क्रोशन्ति कुञ्जरास्तत्र शरवर्षप्रतापिताः । ताव-कानां परेषाञ्च पर्य्यधावन् समुद्यताः ॥ १४ ॥ संरब्धानाञ्च वीराणां धीराणाममितौजसाम् । धनुषां तलघोषेण न प्राज्ञायत किञ्चन ॥ १५ ॥ उत्थितेषु कबन्धेषु सर्व्वतः शोणितोदके । अपरे पर्य्यधावन्त नृपा रिपुवधोद्यता ॥ १६ ॥ शरशक्तिगदाभिश्च खड्गैश्चामिततेजसः । निजघ्नुः समरेऽन्योन्यं शूराः परिघ-बाहवः ॥ १७ ॥ बभ्रमुः कुञ्जरास्तत्र शरैर्विद्धा निरङ्कुशाः ।

अश्वाश्च पर्य्यधावन्त हतारोहा दिशो दश ॥ १८ ॥ तत्र तत्र निपतन्त्यन्ये शरघातप्रपीड़िताः। तावकानां परेषाञ्च पर्य्यधावन् समन्ततः ॥ १९ ॥ बाहूनामुत्तमाङ्गानां कार्मुकाणां तथैव च। गदानां परिघाणाञ्च हस्तानाञ्चोरुभिः सह ॥ २० ॥ पादानां भूषणानाञ्च केयूराणाञ्च सर्व्वशः। राशयस्तत्र दृश्यन्ते भीम-भीष्मसमागमे ॥ २१ ॥ अश्वानां धावमानानां कुञ्जराणां निरन्तरम्। सङ्घाताः स्म प्रदृश्यन्ते तत्र तत्र विशाम्पते ॥ २२ ॥ गदाभिरसिभिः प्रासैर्व्वाणैश्चानतपर्व्वभिः। जघ्नुः परस्परं तत्र क्षत्रियाः कालचोदिताः ॥ २३ ॥ अपरे बाहुभिर्व्वीरा नियुद्धकुशला युधि। बहुधा समसज्जन्त आयसैः परिघैरिव ॥ २४ ॥ मुष्टिभिर्जानुभिश्चैव तलैः कीलैर्विशाम्पते। अन्योऽन्यं जघ्निरे वीरास्तावकाः पाण्डवैः सह ॥ २५ ॥ पतितैः पात्यमानैश्च विचेष्टद्भिश्च भूतले। घोरमायोधनं जज्ञे तत्र तत्र नरेश्वर ॥ २६ ॥ विरथा रथिनश्चात्र निस्त्रिंशवरधारिणः। अन्योऽन्यमभ्यधावन्त परस्परवधैषिणः ॥ २७ ॥ ततो दुर्य्योधनो राजा कालिङ्गैर्बहुभिर्वृतः। पुरस्कृत्य रणे भीष्मं पाण्डवानभ्यवर्त्तत ॥ २८ ॥ तथैव पाण्डवाः सर्व्वे परिवार्य्य वृकोदरम्। भीष्ममभ्यद्रवन् क्रुद्धा रणे रभसवाहनाः ॥ २९ ॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि सङ्कुलयुद्धे सप्ततितमोऽध्यायः ॥ ७० ॥

---

सञ्जय उवाच ॥ दृष्ट्वा भीष्मेण संयुक्तान् भ्रातॄनन्यांश्च पार्थिवान्। समभ्यधावद्गाङ्गेयमुद्यतास्त्रो धनञ्जय ॥ १ ॥ पाञ्चजन्यस्य निर्घोषं धनुषो गाण्डिवस्य च। ध्वजञ्च दृष्ट्वा पार्थस्य सर्व्वान्नो ...यम् ॥ २ ॥ सिंहलाङ्गूलमाकाशे ज्वलन्तमिव पर्व्वतम्।

असज्जमानं वृक्षेषु धूमकेतुमिवोत्थितम् ॥ ३ ॥ बहुवर्णञ्च चित्रञ्च
दिव्यं वानरलक्षणम् । अपश्याम महाराज ध्वजं गाण्डीवधन्वनः
॥ ४ ॥ विद्युतं मेघमध्यस्थां भ्राजमानामिवाम्बरे । ददृशुर्गाण्डिवं
योधा रुक्मपृष्ठं महामृधे ॥ ५ ॥ अशुश्रुम भृशं चास्य शक्रस्ये-
वाभिगर्ज्जितम् । सुघोरं तलयोः शब्दं निघ्नतस्तव वाहिनीम् ॥६॥
चण्डवातो यथा मेघः सविद्युत् स्तनयित्नुमान् । दिशः संप्लावया-
मास शरवर्षैः समन्ततः ॥ ७ ॥ अभ्यधावत गाङ्गेयं भैरवास्त्रो
धनञ्जयः । दिशं प्राचीं प्रतीचीञ्च न जानीमोऽस्त्रमोहिताः ॥८॥
कान्दिग्भूताः श्रान्तपत्रा हताश्वा हतचेतसः । अन्योऽन्यमभि-
संश्लिष्य योधास्ते भरतर्षभ ॥ ९ ॥ भीष्ममेवाभिलीयन्ते सह
सर्वैस्तवात्मजैः । तेषामार्त्तायनमभूद्भीष्मः शान्तनवो रणे ॥१०॥
समुत्पतन्ति वित्रस्ता रथेभ्यो रथिनस्तथा । सादिनश्चाश्वपृष्ठेभ्यो
भूमौ चापि पदातयः ॥ ११ ॥ श्रुत्वा गाण्डीवनिर्घोषं विस्फू-
र्ज्जितमिवाशनेः । सर्वसैन्यानि भीतानि व्यवलीयन्त भारत ॥१२॥
अथ काम्बोजजैरश्वैर्महद्भिः शीघ्रगामिभिः । गोपानां बहु-
साहस्रैर्बलैर्गोपायनैर्वृतः ॥ १३ ॥ मद्रसौवीरगान्धारैस्त्रैगर्त्तैश्च
विशाम्पते । सर्वकालिङ्गमुख्यैश्च कलिङ्गाधिपतिर्वृतः ॥ १४ ॥
नानानरगणौघैश्च दुःशासनपुरःसरः । जयद्रथश्च नृपतिः सहितः
सर्वराजभिः ॥ १५ ॥ हयारोहा वराश्चैव तव पुत्रेण चोदिताः ।
चतुर्द्दशसहस्राणि सौवलं पर्य्यवारयन् ॥ १६ ॥ ततस्ते सहिताः
सर्वे विभक्तरथवाहनाः । पाण्डवाः समरे जघ्नुस्तावकान् भरत-
र्षभाः ॥ १७ ॥ रथिभिर्वारणैरश्वैः पादातैश्च समीरितम् । घोर-
मायोधनं चक्रे महाभ्रसदृशं रजः ॥ १८ ॥ तोमरप्रासनाराच-
गजाश्वरथयोधिनाम् । बलेन महता भीष्मः समसज्जत् किरी-
टिना ॥ १९ ॥ आवन्त्यः काशिराजेन भीमसेनेन सैन्धवः । अजात-
शत्रुर्मद्राणामृषभेण यशस्विना ॥ २० ॥ सहपुत्रः सहामात्यः

शल्येन समसज्जत। विकर्णं सहदेवेन चित्रसेन शिखण्डिना ॥ २१ ॥ मत्स्या दुर्योधनं जग्मुः शकुनिश्च विशाम्पते। द्रुपदश्चेकितानश्च सात्यकिश्च महारथः ॥ २२ ॥ द्रोणेन समसज्जन्त सपुत्रेण महात्मना। कृपश्च कृतवर्मा च धृष्टद्युम्नमभिद्रुतौ ॥२३॥ एवं प्रजाजिताश्वानि भ्रान्तनागरथानि च। समसज्जन्त युद्धानि तत्र तत्र समन्ततः ॥ २४ ॥ निरभ्रे विद्युतस्तीव्रा दिशश्च रजसा वृताः। प्रादुरासन्महोल्काश्च सनिर्घाता विशाम्पते ॥ २५ ॥ प्रादुर्बभौ महावातः पांशुवर्षं पपात च। नभस्यन्तर्दधे सूर्य्यः सैन्येन रजसा वृतः ॥ २६ ॥ प्रमोहः सर्वभूतानामतीव समपद्यत। रजसा चाभिभूतानामस्त्रजालैश्च युध्यताम्। ॥ २७ ॥ वीरबाहुविसृष्टानां सर्वावरणभेदिनाम्। सङ्घादः शरजालानां तुमुलः समपद्यत ॥ २८ ॥ प्रकाशं चक्रुराकाशमुद्यतानि भुजोत्तमैः। नक्षत्रविमलाभानि शस्त्राणि भरतर्षभ ॥ २९ ॥ आर्षभाणि विचित्राणि रुक्मजालकृतानि च। सम्पेतुर्दिक्षु सर्वासु चर्माणि भरतर्षभ ॥ ३० ॥ सूर्य्यवर्णैश्च निस्त्रिंशैः पात्यमानानि सर्वशः। दिक्षु सर्वास्वदृश्यन्त शरीराणि शिरांसि च ॥ ३१ ॥ भग्नचक्राक्षनीडाश्च निपातितमहाभुजाः। हताश्वाः पृथिवीं जग्मुस्तत्र तत्र महारथाः ॥ ३२ ॥ परिपेतुर्हयाश्चात्र केचिच्छस्त्रकृतव्रणाः। रथांश्च परिवर्त्तन्ते हतेषु रथयोधिषु ॥ ३३ ॥ शराहता भिन्नदेहा बद्धयोक्त्रा हयोत्तमाः। युगानि पर्य्यकर्षन्त तत्र तत्र विशाम्पते भारत ॥ ३४ ॥ अदृश्यन्त ससूताश्च साश्वाः सरथयोधिनः। एकेन बलिना राजन् वारणेन निहता रणे ॥ ३५ ॥ गन्धहस्तिमदस्रावमाघ्राय बहवो रणे। सन्निपाते बलौघानां वातमाददिरे गजाः ॥ ३६ ॥ सतोरणमहामात्रैः पतद्भिश्च गतासुभिः। बभूवायोधनं छन्नं नाराचाभिहतैर्गजैः ॥ ३७ ॥ सन्निपाते बलौघानां पादसैन्यैरवारणैः। निपेतुर्युधि सम्भग्ना सयोधाः सध्वजा गजाः

॥ ३८ ॥ नागराजोपमैर्हस्तैर्नागैराच्छिद्य संयुगे । व्यदृश्यन्त महाराज सञ्चूर्णरथकूबराः ॥ ३९ ॥ विशीर्णरथजालाश्च केशेष्वाच्छिद्य दन्तिभिः । द्रुमशाखा इवाच्छिद्य निष्पिष्टा रथिनो रणे ॥ ४० ॥ रथेषु च रथान् युद्धे संसक्ता वरवारणाः । विकर्षन्तो दिशः सर्वाः सपेतुः सर्वशब्दगाः ॥ ४१ ॥ तेषां तथा कर्षताञ्च गजानां रूपमाबभौ । सरःसु नलिनीजालं विषक्तमिव कर्षताम् ॥ ४२ ॥ एवं सञ्छादितं तत्र बभूवायोधनं महत् । सादिभिश्च पदातैश्च सध्वजैश्च महारथैः ॥ ४३ ॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि सङ्कुलयुद्धे एकसप्ततोऽध्यायः ॥ ७१ ॥



सञ्जय उवाच । शिखण्डी सह मत्स्येन विराटेन विशाम्पते । भीष्ममाशु महेष्वासमाससाद सुदुर्ज्जयम् ॥ १ ॥ द्रोणं कृपं विकर्णञ्च महेष्वासान् महाबलान् । राजन्यान् रणे शूरान् बहूनार्च्छद्धनञ्जय ॥ २ ॥ सैन्धवञ्च महेष्वासं सामात्यं सह बन्धुभिः । प्राच्यांश्च दाक्षिणात्यांश्च भूमिपान् भरतर्षभ ॥३॥ पुत्रञ्च ते महेष्वासं दुर्य्योधनममर्षणम् । दुःसहञ्चैव समरे भीमसेनोऽभ्यवर्त्तत ॥ ४ ॥ सहदेवश्च शकुनिमुलूकञ्च महारथम् । पितापुत्रौ महेष्वासावभ्यवर्त्तत दुर्ज्जयौ ॥ ५ ॥ युधिष्ठिरो महाराज गजानीकं महारथः । समवर्त्तत सङ्ग्रामे पुत्रेण निकृतस्तव ॥ ६ ॥ माद्रीपुत्रस्तु नकुलः शूरः सङ्क्रन्दनो युधि । त्रिगर्त्तानां रथोदारैः समसज्जत पाण्डवः ॥ ७ ॥ अभ्यवर्त्तन्त दुर्द्धर्षा समरे शाल्वकेकयान् । सात्यकिश्चेकितानश्च सौभद्रश्च महाबलः ॥ ८ ॥ धृष्टकेतुश्च समरे राक्षसश्च घटोत्कचः । पुत्राणां ते रथानीकं प्रत्युद्याताः सुदुर्ज्जयाः ॥ ९ ॥ सेनापतिरमेयात्मा धृष्टद्युम्नो महा

शल्येन समसज्जत । विकर्णः सहदेवेन चित्रसेनः शिखण्डिना
॥ २१ ॥ मत्स्या दुर्य्योधनं जग्मुः शकुनिश्च विशाम्पते । द्रुपद-
श्चेकितानश्च सात्यकिश्च महारथः ॥ २२ ॥ द्रोणेन समसज्जन्त
सपुत्रेण महात्मना । कृपश्च कृतवर्मा च धृष्टद्युम्नमभिद्रुतौ ॥२३॥
एवं प्रव्राजिताश्वानि भ्रान्तनागरथानि च । समसज्जन्त युद्धानि
तत्र तत्र समन्ततः ॥ २४ ॥ निरभ्रे विद्युतस्तीव्रा दिशश्च रजसा
वृताः । प्रादुरासन्महोल्काश्च सनिर्घाता विशाम्पते ॥ २५ ॥ प्रादु-
र्बभौ महावातः पांशुवर्षं पपात च । नभस्यन्तर्दधे सूर्य्यः सैन्येन
रजसा वृतः ॥ २६ ॥ प्रमोहः सर्वभूतानामतीव समपद्यत ।
रजसा चाभिभूतानामस्त्रजालैश्च युध्यताम् ॥ २७ ॥ वीरबाहु-
विसृष्टानां सर्वावरणभेदिनाम् । संह्रादः शरजालानां तुमुलः
समपद्यत ॥ २८ ॥ प्रकाशं चक्रुराकाशमुद्यतानि भुजोत्तमैः ।
नक्षत्रविमलाभानि शस्त्राणि भरतर्षभ ॥ २९ ॥ आर्षभाणि
विचित्राणि रुक्मजालवृतानि च । सम्पेतुर्दिक्षु सर्वासु चर्माणि
भरतर्षभ ॥ ३० ॥ सूर्य्यवर्णैश्च निस्त्रिंशैः पात्यमानानि सर्वशः ।
दिक्षु सर्वास्वदृश्यन्त शरीराणि शिरांसि च ॥ ३१ ॥ भग्नचक्राक्ष-
नीडाश्च निपातितमहाध्वजाः । हताश्वाः पृथिवीं जग्मुस्तत्र
तत्र महारथाः ॥ ३२ ॥ परिपेतुर्हयाश्चात्र केचिच्छस्त्रकृतव्रणाः ।
रथांश्च परिवर्त्तन्ते हतेषु रथयोधिषु ॥ ३३ ॥ शराहता भिन्न-
देहा बद्धयोक्त्रा हयोत्तमाः । युगानि पर्य्यकर्षन्त तत्र तत्र वि
भारत ॥ ३४ ॥ अदृश्यन्त ससूताश्च साश्वाः सरथयोधिनः ।
एकेन बलिना राजन् वारणेन निहता रणे ॥ ३५ ॥ गन्धं हस्ति-
मदस्यैवमाघ्राय बहवो रणे । सन्निपाते बलौघानां वातमाददिरे
गजाः ॥ ३६ ॥ सतोरणमहामात्रैः पतद्भिश्च गजासुभिः । बभू-
वायोधनं छन्नं नाराचाभिहतैर्गजैः ॥ ३७ ॥ सन्निपाते बलौघानां
प्रेरितैर्वरवारणैः । निपेतुर्युधि सम्भग्नाः सयोधाः सध्वजा गजाः

॥ ३८ ॥ नागराजोपमैर्हस्तैर्नागैराक्षिप्य संयुगे । व्यचेष्टन्त महा-
राज बभग्नरथकूबराः ॥ ३९ ॥ विशीर्णरथजालाश्च केशेष्वा-
क्षिप्य दन्तिभिः । द्रुमशाखा इवाक्षिप्य निष्पिष्टा रथिनो रणे
॥ ४० ॥ रथेषु च रथान् युद्धे संसक्तान् वरवारणाः । विकर्षन्तो
दिशः सर्वाः संपेतुः सर्वशब्दगाः ॥ ४१ ॥ तेषां तथा कर्षतांच
गजानां रूपमाबभौ । सरःसु नलिनीजालं विषक्तमिव कर्षताम्
॥ ४२ ॥ एवं सञ्छादितं तत्र बभूवायोधनं महत् । सादिभिश्च
पदातैश्च सध्वजैश्च महारथैः ॥ ४३ ॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि सङ्कुलयुद्धे
एकसप्ततोऽध्यायः ॥ ७१ ॥

---

घरं परमदारुणम् ॥ २७ ॥ वार्ष्णेयस्य रथाद्भीष्मः पातयामास सारथिम् । तस्याश्वाः प्रद्रुता राजन् निहते रथसारथौ ॥२८॥ तेन तेनैव धावन्ति मनोमारुतरंहसः । ततः सैन्यस्य सर्वस्य निस्वनस्तुमुलोऽभवत् ॥ २९ ॥ हाहाकारश्च सञ्जज्ञे पाण्डवानां महात्मनाम् । अभिद्रवत गृह्णीत हयान् यच्छत धावत ॥ ३० ॥ इत्यासीत्सुमुलः शब्दो युयुधानरथं प्रति । एतस्मिन्नेव काले तु भीष्मः शान्तनवस्तदा ॥ ३१ ॥ अवधीत् पाण्डवीं सेनामासुरीमिव वृत्रहा । ते वध्यमाना भीष्मेण पाञ्चालाः सोमकैः सह ॥३२॥ आर्य्यां युद्धे मतिं कृत्वा भीष्ममेवाभिदुद्रुवुः ॥ धृष्टद्युम्नमुखाश्चापि पार्थाः शान्तनवं रणे ॥ ३३ ॥ अभ्यधावन् जिघांसन्तस्तव पुत्रस्य वाहिनीम् । तथैव तावका राजन् भीष्मद्रोणमुखाः परान् । अभ्यधावन्त वेगेन ततो युद्धमवर्त्तत ॥ ३४ ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि भीष्मपराक्रमे द्विसप्ततोऽध्याय ॥ ७२ ॥



सञ्जय उवाच । विराटोऽथ त्रिभिर्वाणैर्भीष्ममार्च्छन् महारथम् । विव्याध तुरगांश्चास्य त्रिभिर्वाणैर्महारथ ॥ १ ॥ तं प्रत्यविध्यद्दशभिर्भीष्मः शान्तनवः शरैः । रुक्मपुङ्खैर्महेष्वासः कृतहस्तो महाबलः ॥ २ ॥ द्रौणिर्गाण्डीवधन्वानं भीमधन्वा महारथः । अविध्यदिषुभिः षड्भिर्दृढहस्तः स्तनान्तरे ॥ ३ ॥ कार्मुकं तस्य चिच्छेद फाल्गुनः परवीरहा । अविध्यच्च भृशं तीक्ष्णैः पञ्चभिः शत्रुकर्षण ॥ ४ ॥ सोऽन्यत् कार्मुकमादाय वेगवान् क्रोधमूर्च्छितः । अमृष्यमाणः पार्थेन कार्मुकच्छेदमाहवे ॥ ५ ॥ अविध्यत फाल्गुनं राजन् नवत्या निशितैः शरैः । वासुदेवञ्च सप्तत्या विव्याध परमेषुभिः ॥ ६ ॥ ततः क्रोधाभि-

रथ । द्रोणेन समरे राजन् समीयायोग्रकर्म्मणा ॥ १० ॥ एव-
मेते महेष्वासास्तावकाः पाण्डवैः सह । समेत्य समरे शूराः
सम्प्रहारञ्च चक्रिरे ॥ ११ ॥ मध्यन्दिनगते सूर्य्ये नभस्याकुलता-
ङ्गते । कुरवः पाण्डवेयाश्च निजघ्नुरितरेतरम् ॥ १२ ॥ ध्वजिनो
हेमचित्राङ्गा विचरन्तो रणाजिरे । सपताका रथा रेजुर्वैयाघ्र-
परिवारणाः ॥ १३ ॥ समेतानाञ्च समरे जिगीषूणां परस्परम् ।
बभूव तुमुलः शब्दः सिंहानामिव गर्ज्जताम् ॥ १४ ॥ तत्राद्भुत-
मपश्याम सम्प्रहारं सुदारुणम् । यमकुर्वन् रणे वीराः सृञ्जयाः
कुरुभिः सह ॥ १५ ॥ नैव खं न दिशो राजन्न सूर्य्यं शत्रुतापन ।
विदिशो वाप्यपश्याम शरैर्मुक्तैः समन्ततः ॥ १६ ॥ शक्तीनां
विमलाग्राणां तोमराणां तथास्यताम् । निस्त्रिंशानाञ्च पीतानां
नीलोत्पलनिभाः प्रभाः ॥ १७ ॥ कवचानां विचित्राणां भूषणानां
प्रभास्तथा । खं दिशः प्रदिशश्चैव भासयामासुरोजसा ॥ १८ ॥
वपुर्भिश्च नरेन्द्राणां चन्द्रसूर्य्यसमप्रभैः । विरराज तदा राज-
स्तत्र तत्र रणाङ्गनम् ॥ १९ ॥ रथसिंहा नरव्याघ्राः समायाताश्च
संयुगे । विरेजुः समरे राजन् ग्रहा इव नभस्तले ॥ २० ॥
भीष्मस्तु रथिनां श्रेष्ठो भीमसेनं महाबलम् । अवारयत क्रुद्धः
सर्व्वसैन्यस्य पश्यतः ॥ २१ ॥ ततो भीष्मविनिर्मुक्ताः रुक्मपुङ्खाः
शिलाशिताः । अभ्यघ्नन् समरे भीमं तैलधौताः सुतेजिताः ॥ २२ ॥

शरं परमदारुणम् ॥ २७ ॥ वार्ष्णेयस्य रथाङ्गोपः पातयामास सारथिम् । तस्याश्वाः प्रद्रुता राजन् निहते रथसारथौ ॥२८॥ तेन तेनैव धावन्ति मनोमारुतरंहसः । ततः सैन्यस्य सर्वस्य निस्वनस्तुमुलोऽभवत् ॥ २९ ॥ हाहाकारश्च सञ्जज्ञे पाण्डवानां महात्मनाम् । अभिद्रवत गृह्णीत हयान् यच्छत धावत ॥ ३० ॥ इत्यासीत्तुमुलः शब्दो युयुधानरथं प्रति । एतस्मिन्नेव काले तु भीष्मः शान्तनवस्तदा ॥ ३१ ॥ अवधीत् पाण्डवीं सेनामासुरीमिव वृत्रहा । ते वध्यमाना भीष्मेण पाञ्चालाः सोमकैः सह ॥३२॥ आर्य्यां युद्धे मतिं कृत्वा भीष्ममेवाभिदुद्रुवुः ॥ धृष्टद्युम्नमुखाश्चापि पार्थाः शान्तनवं रणे ॥ ३३ ॥ अभ्यधावन् जिघांसन्तस्तव पुत्रस्य वाहिनीम् । तथैव तावका राजन् भीष्मद्रोणमुखाः परान् । अभ्यधावन्त वेगेन ततो युद्धमवर्त्तत ॥ ३४ ॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि भीष्मपराक्रमे द्विसप्ततोऽध्यायः ॥ ७२ ॥

---

सञ्जय उवाच । विराटोऽथ त्रिभिर्वाणैर्भीष्ममार्च्छन् महारथम् । विव्याध तुरगांश्चास्य त्रिभिर्वाणैर्महारथः ॥ १ ॥ तं प्रत्यविध्यद्दशभिर्भीष्मः शान्तनवः शरैः । रुक्मपुङ्खैर्महेष्वासः कृतहस्तो महाबलः ॥ २ ॥ द्रौणिर्गाण्डीवधन्वानं भीमधन्वा महारथः । अविध्यदिषुभिः षड्भिर्दृढहस्तः स्तनान्तरे ॥ ३ ॥ कार्मुकं तस्य चिच्छेद फाल्गुनः परवीरहा । अविध्यच्च भृशं तीक्ष्णैः पञ्चभिः शत्रुकर्षणः ॥ ४ ॥ सोऽन्यत् कार्मुकमादाय वेगवान् क्रोधमूर्च्छितः । अमृष्यमाणः पार्थेन कार्मुकच्छेदमाहवे ॥ ५ ॥ अविध्यत् फाल्गुनं राजन् नवत्या निशितैः शरैः । वासुदेवञ्च सप्तत्या विव्याध परमेषुभिः ॥ ६ ॥ ततः क्रोधाभि-

ताम्राक्षः सह कृष्णेन फाल्गुनः। दीर्घमुष्णञ्च निश्वस्य चिन्तयित्वा मुहुर्मुहुः ॥७॥ धनुः सम्पीड्य वामेन करेणामित्रकर्षणः। गाण्डीवधन्वा संक्रुद्धः शितान् सन्नतपर्वणः ॥ ८ ॥ जीवितान्तकरान् घोरान् समाधत्त शिलीमुखान्। तैस्तूर्णं समरेऽविध्यद्द्रौणिं बलवतांवरः ॥ ९ ॥ तस्य ते कवचं भित्त्वा पपुः शोणितमाहवे। न विव्यथे विनिर्भिन्नो द्रौणिर्गाण्डीवधन्वना ॥ १० ॥ तथैव च शरान् पार्थं प्रतिमुञ्चन्नविह्वलः। तस्थौ स समरे राजंस्त्रातुमिच्छन् महाव्रतम् ॥ ११ ॥ तस्य तत् सुमहत्कर्म शशंसुः कुरुसत्तमाः। यत् कृष्णाभ्यां समेताभ्यामभ्यापतत संयुगे ॥ १२ ॥ स हि नित्यमनीकेषु युध्यते भयमास्थितः। अस्त्रग्रामं ससंहारं द्रोणात् प्राप्य सुदुर्लभम् ॥ १३ ॥ ममाचार्य्यसुतो ह्येष द्रोणस्यातिप्रियः सुतः। ब्राह्मणश्च विशेषेण माननीयो ममेति च ॥ १४ ॥ समास्थाय मतिं वीरो वीभत्सुः शत्रुतापनः। कृपां चक्रे रथश्रेष्ठो भारद्वाजसुतं प्रति ॥ १५ ॥ द्रौणिं त्यक्त्वा ततो युद्धे कौन्तेयः श्वेतवाहनः। युयुधे तावकान्निघ्नंस्त्वरमाणः पराक्रमी ॥ १६ ॥ दुर्य्योधनस्तु दशभिर्गार्द्धपत्रैः शिलाशितैः। भीमसेनं महेष्वासं रुक्मपुङ्खैः समर्द्दयत् ॥ १७ ॥ भीमसेनस्तु संक्रुद्धः परासुकरणं दृढम्। चित्रं कार्मुकमादत्त शरांश्च निशितान्दश ॥ १८ ॥ आकर्णप्रहितैस्तीक्ष्णैर्वेगितैस्तिग्मतेजितैः।

चित्रसेनं नरव्याघ्रः सौभद्रः परवीरहा । अविध्यन्निशितैर्बाणैः पुरुमित्रञ्च सप्तभिः ॥ २४ ॥ सत्यव्रतञ्च सप्तत्या विद्धा शक्रसमो युधि । नृत्यन्निव रणे वीर आर्त्तिं नः समजीजनत् ॥ २५ ॥ तं प्रत्यविध्यद्दशभिश्चित्रसेनः शिलीमुखैः । सत्यव्रतश्च नवभिः पुरुमित्रश्च सप्तभिः ॥ २६ ॥ स विद्धो विचरन्नतं शत्रुसंवारणं महत् । चिच्छेद चित्रसेनस्य चित्रं कार्म्मुकमार्जुनिः ॥ २७ ॥ भित्त्वा चास्य तनुत्राणं शरेणोरस्यताडयत् । ततस्ते तावका वीरा राजपुत्रा महारथाः ॥ २८ ॥ समेत्य युधि संरब्धा विव्यधुर्निशितैस्तदा । तांश्च सर्व्वाञ्छरैस्तीक्ष्णैर्जघान परमास्त्रवित् ॥२९॥ तस्य दृष्ट्वा तु तत्कर्म परिवव्रुः सुतास्तव । दहन्तं समरे योधांस्तव कक्षं यथोल्बणम् ॥ ३० ॥ अपेतशिशिरे काले समिद्धमिव पावकम् । अत्यरोचत सौभद्रस्तव सैन्यानि शातयन् ॥ ३१ ॥ ततस्तच्चरितं दृष्ट्वा पौत्रस्तव विशाम्पते । लक्ष्मणोऽभ्यपतत्तूर्णं सात्वतीपुत्रमाहवे ॥ ३२ ॥ अभिमन्युस्तु संक्रुद्धो लक्ष्मणं शुभलक्षणम् । विव्याध विशिखैः षड्भिः सारथिञ्च महारथः ॥३३॥ तथैव लक्ष्मणो राजन् सौभद्रं निशितैः शरैः । अविध्यत महाराज तदद्भुतमिवाभवत् ॥ ३४ ॥ तस्याश्वांश्चतुरो हत्वा सारथिञ्च महारथः । अभ्यद्रवत सौभद्रो लक्ष्मणं निशितैः शरैः ॥ ३५ ॥ हताश्वे तु रथे तिष्ठंल्लक्ष्मणः परवीरहा । शक्तिं चिक्षेप संक्रुद्धः सौभद्रस्य रथं प्रति ॥ ३६ ॥ तामापतन्तीं सहसा घोररूपां दुरासदाम् । अभिमन्युः शरैस्तीक्ष्णैश्चिच्छेद भुजगोपमाम् ॥ ३७ ॥ ततः स्वरथमारोप्य लक्ष्मणं गौतमस्तदा । अपोवाह रथेनाजौ सर्व्वसैन्यस्य पश्यतः ॥ ३८ ॥ ततः समाकुले तस्मिन् वर्त्तमाने महाभये । अभ्यद्रवन् जिघांसन्तः परस्परवधैषिणः ॥ ३९ ॥ तावकाश्च महेष्वासाः पाण्डवाश्च महारथाः । जुह्वतः समरे प्राणान् निजघ्नुरितरेतरम् ॥ ४० ॥ मुक्तकेशा

विकवचा विरथाश्छिन्नकार्मुकाः । बाहुभिः समयुध्यन्त सृञ्जयाः
कुरुभिः सह ॥ ४१ ॥ ततो भीष्मो महाबाहुः पाण्डवानां महा-
त्मनाम् । सेनां जघान संक्रुद्धो दिव्यैरस्त्रैर्महाबलः ॥ ४२ ॥
हतेश्वरैर्गजैस्तत्र नरैरश्वैश्च पातितैः । रथिभिः सादिभिश्चैव
समास्तीर्यत मेदिनी ॥ ४३ ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि द्वन्द्वयुद्धे
त्रिसप्ततोऽध्यायः ॥ ७३ ॥

---

सञ्जय उवाच । अथ राजन् महाबाहुः सात्यकिर्युद्धदुर्मदः ।
विकृष्य समरे चापं भारसाधनमुत्तमम् ॥ १ ॥ प्रासृजत् पुङ्ख-
संयुक्तान् शरानाशीविषोपमान् । प्रगाढं लघु चित्रञ्च दर्शयन्
हस्तलाघवम् ॥ २ ॥ तस्य विक्षिपतश्चापं शरानन्यांश्च मुञ्चतः ।
आददानस्य भूयश्च सन्दधानस्य चापरान् ॥ ३ ॥ क्षिपतश्च शरां-
स्तस्य रणे शत्रून् विनिघ्नतः । ददृशे रूपमत्यर्थं मेघस्येव प्रवर्षतः
॥ ४ ॥ समुदीर्यन्तमालोक्य राजा दुर्योधनस्ततः । रथाना-
मयुतं तस्य प्रेषयामास भारत ॥ ५ ॥ तांस्तु सर्वान्महेष्वासान्
सात्यकिः सत्यविक्रमः । जघान परमेष्वासो दिव्येनास्त्रेण वीर्य-
वान् ॥ ६ ॥ स कृत्वा दारुणं कर्म प्रगृहीतशरासनः । आस-
साद ततो वीरो भूरिश्रवसमाहवे ॥ ७ ॥ स हि सन्दृश्य सेनां
ते युयुधानेन पातिताम् । अभ्यधावत संक्रुद्धः कुरूणां कीर्त्ति-
वर्द्धनः ॥ ८ ॥ इन्द्रायुधसवर्णं तत् स विस्फार्य्य महद्धनुः । व्यसृ-
जद्वज्रसङ्काशान् शरानाशीविषोपमान् ॥ ९ ॥ सहस्रशो महा-
राज दर्शयन् पाणिलाघवम् । शरांस्तान् मृत्युसंस्पर्शान् सात्य-
केस्तु पदानुगाः ॥ १० ॥ न विषेहुस्तदा राजन् दुद्रुवुस्ते सम-
। विहाय समरे राजन् सात्यकिं युद्धदुर्मदम् ॥ ११ ॥

तं दृष्ट्वा युयुधानस्य सुता दश महाबलाः। महारथाः समाख्याताश्चित्रवर्मायुधध्वजाः॥ १२॥ समासाद्य महेष्वासं भूरिश्रवसमाहवे। ऊचुः सर्वे सुसंरब्धा यूपकेतुं महारणे॥ १३॥ भो भो कौरवदायाद सहास्माभिर्महाबल। एहि युध्यस्व संग्रामे समस्तैः पृथगेव वा॥ १४॥ अस्मान् वा त्वम्पराजित्य यशः प्राप्स्यसि संयुगे। वयं वा त्वां पराजित्य प्रीतिं यास्याम वै पराम्॥ १५॥ एवमुक्तस्तदा शूरस्तानुवाच महाबलः। वीर्य्यश्लाघी नरश्रेष्ठस्तान् दृष्ट्वा समुपस्थितान्॥ १६॥ साध्विदं कथ्यते वीरा यदीदृङ्मतिरद्य वै। युध्यध्वं सहिता यत्ता निहनिष्यामि वै रणे॥ १७॥ एवमुक्ता महेष्वासास्ते वीराः क्षिप्रकारिणः। महता शरवर्षेण ह्यभिवर्षन्नरिन्दमम्॥ १८॥ अपराह्णे महाराज संग्रामस्तुमुलोऽभवत। एकस्य च बहूनां च समेतानां रणाजिरे॥ १९॥ तमेकं रथिनां श्रेष्ठं शरवर्षैरवाकिरन्। प्रावृषीव महाशैलं सिषिचुर्जलदा नृप॥ २०॥ तैस्तु मुक्तान् शरौघांस्तान् यमदण्डाशनिस्वनान्। असम्प्राप्तानसम्प्राप्तांश्चिच्छेद स महारथः॥ २१॥ परिवार्य्य महाबाहुं निहन्तुमुपचक्रमुः। सौमदत्तिस्तु संक्रुद्धस्तेषां चापानि भारत॥ २२॥ आच्छिद्य समरे राजंश्चिच्छेद विविधैः शरैः। ते हता न्यपतन् भूमौ वज्रभग्ना इव द्रुमाः॥ २३॥ तान् दृष्ट्वा निहतान् वीरो रणे पुत्रान्महाबलान्। वार्ष्णेयो विनदन् राजन् भूरिश्रवसमभ्ययात्॥२४॥ रथं रथेन समरे पीड़यित्वा महाबलौ। तावन्योन्यस्य समरे निहत्य रथवाजिनः॥ २५॥ विरथावभिवल्गन्तौ समीयाततुर्महारथौ। प्रगृहीतमहाखड्गौ तौ चर्म्मवरधारिणौ॥ २६॥ शुशुभाते नरव्याघ्रौ युद्धाय समवस्थितौ। ततः सात्यकिमभ्येत्य निस्त्रिंशवरधारिणम्॥ २७॥ भीमसेनस्त्वरन् राजन् रथमारोपयत् स्वकम्। तवापि तनयो राजन् भूरिश्रवसमाहवे॥२८॥

आरोपयद्रथं तूर्णं पश्यतां सर्वधन्विनाम् । तस्मिंस्तदा वर्त्तमाने
रणे भीष्मं महारथम् ॥ २९ ॥ अयोधयन्त संरब्धाः पाण्डवा
भरतर्षभ । लोहितायति चादित्ये त्वरमाणो धनञ्जयः ॥ ३० ॥
पञ्चविंशतिसाहस्रान्निजघान महारथान् । ते हि दुर्य्योधना-
दिष्टास्तदा पार्थनिवर्हणे ॥ ३१ ॥ सम्प्राप्यैव गता नाशं शलभा
इव पावकम् । ततो मत्स्याः केकयाश्च धनुर्वेदविशारदाः ॥३२॥
परिवव्रुस्तदा पार्थं सहपुत्रं महारथम् । एतस्मिन्नेव काले तु
सूर्य्योऽस्तमुपगच्छति ॥ ३३ ॥ सर्वेषां चैव सैन्यानां प्रमोहः
समजायत । अवहारं ततश्चक्रे पिता देवव्रतस्तव ॥ ३४ ॥
सन्ध्याकाले महाराज सैन्यानां श्रान्तवाहनः । पाण्डवानां
कुरूणाञ्च परस्परसमागमे ॥ ३५ ॥ ते सेने भयसंविग्ने ययतुः
स्वन्निवेशनम् । ततः स्वशिबिरङ्गत्वा न्यविशंस्तत्र भारत । पाण्डवाः
सृञ्जयैः सार्द्धं कुरवश्च यथाविधि ॥ ३६ ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि पञ्चमयुद्धदिवसावहारे
चतुःसप्ततोऽध्यायः ॥ ७४ ॥

---

सञ्जय उवाच । विहृत्य च ततो राजन् सहिताः कुरु-
पाण्डवाः । व्यतीतायां तु शर्व्वर्य्यां पुनर्युद्धाय निर्ययुः ॥ १ ॥
तत्र शब्दो महानासीत्तव तेषाञ्च भारत । युज्यतां रथमुख्यानां
कल्प्यतां चैव दन्तिनाम् ॥ २ ॥ सन्नह्यतां पदातीनां हयानां
चैव भारत । शङ्खदुन्दुभिनिर्घोषास्तुमुलाः सर्वतोऽभवन् ॥ ३ ॥
ततो युधिष्ठिरो राजा धृष्टद्युम्नमभाषत । व्यूहं व्यूह महा-
बाहो मकरं शत्रुतापनम् ॥ ४ ॥ एवमुक्तस्तु पार्थेन धृष्टद्युम्नो
महारथः । व्यादिदेश महाराज रथिनो रथिनाम्वरः ॥ ५ ॥
शिरोऽभूद् द्रुपदस्तस्य पाण्डवश्च धनञ्जयः । चक्षुषी सहदेवश्च

नकुलश्च महारथः ॥ ६ ॥ तुण्डमासीन् महाराज भीमसेनो महाबलः। सौभद्रो द्रौपदेयाश्च राक्षसश्च घटोत्कचः ॥ ७ ॥ सात्यकिर्धर्मराजश्च व्यूहग्रीवां समास्थिताः। पृष्ठमासीत् महाराज विराटो वाहिनीपतिः ॥ ८ ॥ धृष्टद्युम्नेन सहितो महत्या सेनया वृतः। कैकेया भ्रातरः पञ्च वामं पक्षं समाश्रिताः ॥ ९ ॥ धृष्टकेतुर्नरव्याघ्रश्चेकितानश्च वीर्य्यवान्। दक्षिणं पक्षमाश्रित्य स्थिता व्यूहस्य रक्षणे ॥ १० ॥ पादयोस्तु महाराज स्थितः श्रीमान् महारथः। कुन्तिभोजः शतानीको महत्या सेनया वृतः ॥ ११ ॥ शिखण्डी तु महेष्वासः सोमकैः संवृतो बली। इरावांश्च ततः पुच्छे मकरस्य व्यवस्थितौ ॥ १२ ॥ एवमेतं महाव्यूहं व्यूह्य भारत पाण्डवाः। सूर्य्योदये महाराज पुनर्युद्धाय दंशिताः ॥ १३ ॥ कौरवानभ्ययुस्तूर्णं हस्त्यश्वरथपत्तिभिः। समुच्छ्रितैर्ध्वजैश्छत्रैः शस्त्रैश्च विमलैः शितैः ॥ १४ ॥ व्यूढं दृष्ट्वा तु तत् सैन्यं पिता देवव्रतस्तव। क्रौञ्चेन महता राजन् प्रत्यव्यूहत वाहिनीम् ॥ १५ ॥ तस्य तुण्डे महेष्वासो भारद्वाजोऽभ्यवर्त्तत। अश्वत्थामा कृपश्चैव चक्षुरास्तान्नरेश्वर ॥ १६ ॥ कृतवर्मा तु सहितः काम्बोजवरवाह्लिकैः। शिरस्यासीन्नरश्रेष्ठ श्रेष्ठः सर्व्वधनुष्मताम् ॥ १७ ॥ ग्रीवायां शूरसेनस्तु तव पुत्रश्च भारत। दुर्य्योधनो महाराज राजभिर्बहुभिर्वृतः ॥ १८ ॥ प्राग्ज्योतिषस्तु सहितो मद्रसौवीरकेकयैः। उरस्यभून्नरश्रेष्ठ महत्या सेनया वृतः ॥ १९ ॥ स्वसेनया च सहितः सुशर्म्मा प्रस्थलाधिपः। वामं पक्षं समाश्रित्य दंशितः समवस्थितः ॥ २० ॥ तुषारा यवनाश्चैव शकाश्च सह चूलिकैः। दक्षिणं पक्षमाश्रित्य स्थिता व्यूहस्य भारत ॥ २१ ॥ श्रुतायुश्च शतायुश्च सौमदत्तिश्च मारिष। व्यूहस्य जघने तस्थू रक्षमाणाः परस्परम् ॥ २२ ॥ ततो युद्धाय सञ्जग्मुः पाण्डवाः कौरवैः सह। सूर्य्योदये महाराज ततो युद्धमवर्त्तत ॥ २३ ॥

प्रतीयू रथिनो नागा नागांश्च रथिनो ययुः । हयारोहान् हया-
श्चैव रथिनश्चापि सादिनः ॥ २४ ॥ सादिनश्च हयान् राजन्
कुञ्जरांश्च महारणे । हस्त्यारोहान् रथा राजन् गजिनश्चापि
सादिनः ॥ २५ ॥ रथिनः पत्तिभिः सार्द्धं सादिनश्चापि पत्तिभिः ।
अन्योऽन्यं समरे राजन् प्रत्यधावन्नमर्षिताः ॥ २६ ॥ भीमसेना-
र्जुनयमैर्गुप्ता चान्यैर्महारथैः । शोभते पाण्डवी सेना नक्षत्रैरिव
शर्वरी ॥ २७ ॥ तथा भीष्मकृपद्रोणशल्यदुर्योधनादिभिः । तवापि
विबभौ सेना ग्रहैर्द्यौरिव संवृता ॥ २८ ॥ भीमसेनस्तु कौन्तेयो
द्रोणं दृष्ट्वा पराक्रमी । अभ्ययाज्जवनैरश्वैर्भारद्वाजस्य वाहि-
नीम् ॥ २९ ॥ द्रोणस्तु समरे क्रुद्धो भीमं नवभिरायसैः । विव्याध
समरे राजन् मर्माण्युद्दिश्य वीर्यवान् ॥ ३० ॥ दृढाहतस्ततो
भीमो भारद्वाजेन संयुगे । सारथिं प्रेषयामास यमस्य सदनं
प्रति ॥ ३१ ॥ स सङ्गृह्य स्वयं वाहान् भारद्वाजः प्रतापवान् ।
व्यधमत् पाण्डवीं सेनां तूलराशिमिवानलः ॥ ३२ ॥ ते वध्यमाना
द्रोणेन भीष्मेण च नरोत्तम । सृञ्जयाः केकयैः सार्द्धं पलायन-
पराभवन् ॥ ३३ ॥ तथैव तावकं सैन्यं भीमार्जुनपरिक्षतम् ।
मुह्यते तत्र तत्रैव समदेव वराङ्गना ॥ ३४ ॥ अभिद्येता ततः सैन्ये
तस्मिन् वीरवरक्षये । आसीद्व्यतिकरो घोरस्तव तेषाञ्च भारत
॥ ३५ ॥ तदद्भुतमपश्याम तावकानां परैः सह । एकायनगताः
सर्वे यदयुध्यन्त भारत ॥ ३६ ॥ प्रतिसन्धाय चास्त्राणि तेऽन्यो-
न्यस्य विशाम्पते । युयुधुः पाण्डवाश्चैव कौरवाश्च महामृधे ॥३७॥

इति भीष्मपर्वणि भीष्मवधपर्वणि षष्ठदिवसयुद्धारम्भे
पञ्चसप्ततोऽध्यायः ॥ ७५ ॥

---

धृतराष्ट्र उवाच। एवं बहुगुणं सैन्यमेवं बहुविधम्परम्।
व्यूढमेतद्यथाशास्त्रममोघञ्चैव सञ्जय ॥ १ ॥ पुष्टमस्माकमत्यन्त-
मभिकामञ्च नः सदा। प्रह्वमव्यसनोपेतं पुरस्ताद्दृष्टविक्रमम् ॥२॥
नातिवृद्धमबालञ्च न कृशं न च पीवरम्। लघुवृत्तायतप्रायं
सारगात्रमनामयम् ॥ ३॥ आत्तसन्नाहशस्त्रञ्च बहुशस्त्रपरिग्रहम्।
असियुद्धे नियुद्धे च गदायुद्धे च कोविदम् ॥ ४ ॥ प्रासर्ष्टितोमरे-
ष्वाजौ परिघेष्वायसेषु च। भिन्दिपालेषु शक्तीषु मुषलेषु कृत-
श्रमम् ॥ ५ ॥ शस्त्रग्रहणविद्यासु सर्व्वासु परिनिष्ठितम्। आरोहे
पर्य्यवस्कन्दे सरणे सान्तरप्लुते ॥ ६ ॥ सम्यक्प्रहरणे याने
व्यपयाने च कोविदम्। नागाश्वरथयानेषु बहुशः सुपरीक्षितम्
॥ ७ ॥ परीक्ष्य च यथान्यायं वेतनेनोपपादितम्। न गोष्ठ्या
नोपकारेण न सम्बन्धनिमित्ततः ॥ ८ ॥ न सौहार्द्दबलेनापि न
कुलीनपरिग्रहैः। समृद्धजनमार्य्यञ्च तुष्टसत्कृतबान्धवम् ॥ ९ ॥
कृतोपकारभूयिष्ठं यशस्वि च मनस्वि च। सजवैश्च नरैर्मुख्यैर्-
बहुशो मुख्यकर्म्मभिः ॥ १० ॥ लोकपालोपमैस्तात पालितं लोक-
विश्रुतैः। बहुभिः क्षत्रियैर्गुप्तं पृथिव्यां लोकसम्मतैः ॥ ११ ॥
अस्मानभिगतैः कामात् सबलैः सपदानुगैः। महोदधिमिवा-
पूर्णमापगाभिः समन्ततः ॥ १२ ॥ अपक्षैः पक्षसङ्काशै रथैर्नागैश्च
संवृतम्। नानासुयोधनं भीमं वाहनोर्म्मितरङ्गिणम् ॥ १३ ॥
क्षेपणीभिर्गदाशक्तिशरप्रासैः समाकुलम्। ध्वजभूषणसम्बाधं रत्न-
पट्टसमन्वितम् ॥ १४ ॥ वाहनैः परिधावद्भिर्वायुवेगविकम्पितम्।
अपारमिव गर्जन्तं सागरप्रतिमं महत् ॥ १५ ॥ द्रोणभीष्माभि-
गुप्तञ्च गुप्तञ्च कृतवर्म्मणा। कृपदुःशासनाभ्याञ्च जयद्रथमुखैस्तथा
॥ १६ ॥ भगदत्तविकर्णाभ्यां द्रौणिसौबलबाह्लिकैः। गुप्तं प्रवीरै-
र्लोकस्य सारवद्भिर्महात्मभिः ॥ १७ ॥ यद्धन्यत संग्रामे दिष्ट-
मेव पुरातनम्। नैतादृशं समुद्योगं दृष्टवन्तोऽथ मानुषाः ॥ १८ ॥

ऋषयो वा महाभागाः पुराणा भुवि सञ्जय। ईदृशोऽपि बलौघस्तु युक्तः शस्त्रार्थसम्पदा ॥ १९ ॥ वध्यते यत्र सङ्ग्रामे किमन्यद्भागधेयतः। विपरीतमिदं सर्वं प्रतिभाति स्म सञ्जय ॥ २० ॥ उक्तं हि विदुरेणेह हितं पथ्यञ्च नित्यशः। न च गृह्णाति तन्मन्दः पुत्रो दुर्य्योधनो मम ॥ २१ ॥ तस्य मन्ये मतिः पूर्वं सर्वज्ञस्य महात्मनः। आसीद्यथागतं तात येन दृष्टमिदं पुरा ॥ २२ ॥ अथ वा भाव्यमेवं हि सञ्जयैतेन सर्वथा। पुरा धात्रा यथादृष्टन्तत्तथा न तदन्यथा ॥ २३ ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि धृतराष्ट्रचिन्तायां
षट्सप्ततोऽध्यायः ॥ ७६ ॥

---

सञ्जय उवाच। आत्मदोषात्त्वया राजन् प्राप्तं व्यसनमीदृशम्। न हि दुर्य्योधनस्तानि पश्यते भरतर्षभ। १ ॥ यानि त्वं दृष्टवान् राजन् धर्मसङ्करकारिते। तव दोषात् पुरा वृत्तं द्यूतमेतद्विशाम्पते ॥ २ ॥ तव दोषेण युद्धञ्च प्रवृत्तं सह पाण्डवैः। त्वमेवाद्य फलं भुङ्क्ष्व कृत्वा किल्बिषमात्मनः ॥ ३ ॥ आत्मनैव कृतं कर्म ह्यात्मनैवोपभुज्यते। इह वा प्रेत्य वा राजंस्त्वया प्राप्तं यथा तथा ॥ ४ ॥ तस्माद्राजन् स्थिरो भूत्वा प्राप्येदं व्यसनं महत्। शृणु युद्धं यथावृत्तं शंसतो मम मारिष ॥ ५ ॥ भीमसेनः सुनिशितैर्बाणैर्भित्त्वा महाचमूम्। आससाद ततो वीरः सर्वान् दुर्य्योधनानुजान् ॥ ६ ॥ दुःशासनं दुर्विषहं दुःसहं दुर्मदं जयम्। जयत्सेनं विकर्णञ्च चित्रसेनं सुदर्शनम् ॥ ७ ॥ चारुचित्रं सुवर्माणं दुष्कर्णं कर्णमेव च। एतानन्यांश्च सुबहून् समीपस्थान् महारथान् ॥ ८ ॥ धार्त्तराष्ट्रान् सुसंक्रुद्धान् दृष्ट्वा भीमो महाबलः। भीष्मेण समरे गुप्तां प्रविवेश महाचमूम् ॥ ९ ॥

अथालोक्य प्रतिष्ठन्तं जघ्नुस्ते सर्व एव हि। जीवग्राह निगृह्णीमो
वयमेन नराधिपा ॥१०॥ स तै परिवृत पार्थो भ्रातृभि
कृतनिश्चयै। प्रजासंहरणे सूर्य्य क्रूरैरिव महाग्रहै ॥११॥
सम्प्राप्य मध्य व्यूहस्य न भी पाण्डवमाविशत्। यथा देवासुरे
युद्धे महेन्द्र प्राप्य दानवान् ॥१२॥ तत शतसहस्राणि रथिनां
सर्वशस्त्रिणाम्। उद्यतानि शरैर्घोरैस्तमेकमनुवव्रिरे ॥१३॥
स तेषा प्रवरान् योधान् हस्त्यश्वरथसादिन। जघान समरे
शूरो धार्त्तराष्ट्रानचिन्तयन् ॥१४॥ तेषा व्यवसित ज्ञात्वा भीम-
सेनो जिघृक्षताम्। समस्ताना वधे राजन् मतिं चक्रे महाबल
॥१५॥ ततो रथं समुत्सृज्य गदामादाय पाण्डव। जघान
धार्त्तराष्ट्राणा त बलौघमहार्णवम् ॥१६॥ भीमसेने प्रविष्टे तु
धृष्टद्युम्नोऽपि पार्षत। द्रोणमुत्सृज्य तरसा प्रययौ यत्र सौबल
॥१७॥ निवार्य्य महती सेना तावकाना नरर्षभ। आससाद
रथ शून्य भीमसेनस्य संयुगे ॥१८॥ दृष्ट्वा विशोक समरे भीम-
सेनस्य सारथिम्। धृष्टद्युम्नो महाराज दुर्मना गतचेतन ॥१९॥
अपृच्छद्बाष्पसंरुद्धो नि श्वसन् वाचमीरयन्। मम प्राणै प्रिय-
तम क्व भीम इति दु खित ॥२०॥ विशोकस्तमुवाचेद धृष्टद्युम्न
कृताञ्जलि। संस्थाप्य मामिह बली पाण्डव सुमहाबल ॥२१॥
प्रविष्टो धार्त्तराष्ट्राणामेको बलमहार्णवम्। मामुक्त्वा पुरुषव्याघ्र
प्रीतियुक्तमिद वच ॥२२॥ प्रतिपालय मा सूत नियम्याश्वान्
मुहूर्त्तकम्। यावदेतान्निहन्म्यद्य य इमे मद्वधोद्यता ॥२३॥
ततो दृष्ट्वा गदाहस्त प्रधावन्त महाबलम्। सर्व्वेषामेव सैन्याना
सहर्ष समजायत ॥२४॥ तस्मिन् सुतुमुले युद्धे वर्त्तमाने महा-
भये। भित्त्वा राजन् महाव्यूह प्रविवेश सखा तव ॥२५॥
विशोकस्य वच श्रुत्वा धृष्टद्युम्नोऽपि पार्षत। प्रत्युवाच तत
रणमध्ये महाबल ॥२६॥ न हि मे जीवितेनापि ि

ऋषयो वा महाभागा पुराणा भुवि सञ्जय । ईदृशोऽपि बलौघस्तु युक्तः शस्त्रार्थसम्पदा ॥ १९ ॥ वध्यते यत्र सङ्ग्रामे किमन्यद्भागधेयतः । विपरीतमिदं सर्वं प्रतिभाति स्म सञ्जय ॥ २० ॥ उक्तं हि विदुरेणेह हितं पथ्यञ्च नित्यशः । न च गृह्णाति तन्मन्दः पुत्रो दुर्य्योधनो मम ॥ २१ ॥ तस्य मन्ये मतिः पूर्वं सर्वज्ञस्य महात्मनः । आसीद्यथागतं तात येन दृष्टमिदं पुरा ॥ २२ ॥ अथ वा भाव्यमेवं हि सञ्जयैतेन सर्वथा । पुरा धात्रा यथासृष्टं तत्तथा न तदन्यथा ॥ २३ ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि धृतराष्ट्रचिन्तायां षट्सप्ततोऽध्यायः ॥ ७६ ॥

---

सञ्जय उवाच । आत्मदोषात्त्वया राजन् प्राप्तं व्यसनमीदृशम् । न हि दुर्य्योधनस्तानि पश्यते भरतर्षभ ॥ १ ॥ यानि त्वं दृष्टवान् राजन् धर्मसङ्करकारिते । तव दोषात् पुरावृत्तं द्यूतमेतद्विशाम्पते ॥ २ ॥ तव दोषेण युद्धञ्च प्रवृत्तं सह पाण्डवैः । त्वमेवाद्य फलं भुङ्क्ष्व कृत्वा किल्विषमात्मना ॥ ३ ॥ आत्मनैव कृतं कर्म ह्यात्मनैवोपभुज्यते । इह वा प्रेत्य वा राजंस्त्वया प्राप्तं यथा तथा ॥ ४ ॥ तस्माद्राजन् स्थिरो भूत्वा प्राप्येदं व्यसनं महत् । शृणु युद्धं यथावृत्तं शंसतो मम मारिष ॥ ५ ॥ भीमसेनः सुनिशितैर्बाणैर्भित्त्वा महाचमूम् । आससाद ततो वीरः सर्वान् दुर्य्योधनानुजान् ॥ ६ ॥ दुःशासनं दुर्विषहं दुःसहं दुर्मदं जयम् । जयसेनं विकर्णञ्च चित्रसेनं सुदर्शनम् ॥ ७ ॥ चारुचित्रं सुवर्माणं दुष्कर्णं कर्णमेव च । एतानन्यांश्च सुबहून् समीपस्थान् महारथान् ॥ ८ ॥ धार्त्तराष्ट्रान् सुसंक्रुद्धान् दृष्ट्वा भीमो महाबलः । भीष्मेण समरे गुप्तां प्रविवेश महाचमूम् ॥ ९ ॥

अथालोक्य प्रतिष्ठन्तं सम्युसे सर्वं एवं हि। जीवग्राहं निरक्रोमो वयमेनं नराधिपाः ॥ १० ॥ स तैः परिवृतः पार्थो भ्रातृभिः कृतनिश्चयैः। प्रजासंहरणे सूर्य्यः क्रूरैरिव महाग्रहैः ॥ ११ ॥ सम्प्राप्य मध्यं व्यूहस्य न भीः पाण्डवमाविशत्। यथा देवासुरे युद्धे महेन्द्रं प्राप्य दानवान् ॥ १२ ॥ ततः शतसहस्राणि रथिनां सर्व्वशस्त्रिणाम्। छादयानि शरैर्घोरैस्तमेकमनुवव्रिरे ॥ १३ ॥ स तेषां प्रवरान् योधान् हस्त्यश्वरथसादिनः। जघान समरे शूरो धार्त्तराष्ट्रानचिन्तयन् ॥ १४ ॥ तेषां व्यवसितं ज्ञात्वा भीमसेनो जिघृक्षताम्। समस्तानां वधे राजन् मतिं चक्रे महाबलः ॥ १५ ॥ ततो रथं समुत्सृज्य गदामादाय पाण्डवः। जघान धार्त्तराष्ट्राणां तं बलौघमहार्णवम् ॥ १६ ॥ भीमसेने प्रविष्टे तु धृष्टद्युम्नोऽपि पार्षतः। द्रोणमुत्सृज्य तरसा प्रययौ यत्र सौबलः ॥ १७ ॥ निवार्य्य महतीं सेनां तावकानां नरर्षभः। आससाद रथं शून्यं भीमसेनस्य संयुगे ॥ १८ ॥ दृष्ट्वा विशोकं समरे भीमसेनस्य सारथिम्। धृष्टद्युम्नो महाराज दुर्म्मना गतचेतनः ॥१९॥ अपृच्छद्बाष्पसंरुद्धो निःश्वसन् वाचमीरयन्। मम प्राणैः प्रियतमः क्व भीम इति दुःखितः ॥ २० ॥ विशोकस्तमुवाचेदं धृष्टद्युम्नं कृताञ्जलिः। संस्थाप्य मामिह बली पाण्डवः सुमहाबलः ॥२१॥ प्रविष्टो धार्त्तराष्ट्राणामेतं बलमहार्णवम्। मामुक्त्वा पुरुषव्याघ्र प्रीतियुक्तमिदं वचः ॥ २२ ॥ प्रतिपालय मां सूत नियम्याश्वान् मुहूर्त्तकम्। यावदेतान्निहन्म्याशु य इमे मद्वधोद्यताः ॥ २३ ॥ ततो दृष्ट्वा गदाहस्तं प्रधावन्तं महाबलम्। सर्व्वेषामेव सैन्यानां सहर्षः समजायत ॥ २४ ॥ तस्मिन् सुतुमुले युद्धे वर्त्तमाने महाभये। भित्त्वा राजन् महाव्यूहं प्रविवेश सखा तव ॥ २५ ॥ विशोकस्य वचः श्रुत्वा धृष्टद्युम्नोऽपि पार्षतः। प्रत्युवाच ततः रणमध्ये महाबलः ॥ २६ ॥ न हि मे जीवितेनापि १४०।

प्रयोजनम्। भीमसेनं रथे हित्वा स्वे चमुतसृज्य पाण्डवै ॥२७॥
यदि यामि विना भीमं किं मां च्त्र वदिष्यति। एकायनगते
भीमे मयि चावस्थिते युधि ॥ २८ ॥ स्वस्ति तस्य कुर्वन्ति देवा
शक्रपुरोगमाः। स महायान् परित्यज्य स्वस्तिमानाग्नजेह, हान्
॥ २९ ॥ स मे भीम सखा चैव सम्बन्धी च महाबल। भक्तो
मे भक्तिमांश्चाह तस्मिन्नरिनिषूदने ॥ ३० ॥ सोऽहं तत्र गमि
ष्यामि यत्र यातो वृकोदर। निघ्नन्तं मां रिपून् पश्य दानवा
निव वासवम् ॥ ३१ ॥ एवमुक्त्वा ततो वीरो ययौ मध्येन भारत।
भीमसेनस्य मार्गेषु गदाप्रमथितैर्गजैः ॥ ३२ ॥ स ददर्श तदा
भीमं दहन्तं रिपुवाहिनीम्। ततो वृक्षानिव बहून् प्रभञ्जन्तं
रणे नृपान् ॥ ३३ ॥ ते हन्यमाना समरे रथिनः सादिनस्तथा।
पदाता दन्तिनश्चैव चक्रुरार्त्तस्वरं महत् ॥ ३४ ॥ हाहाकारश्च
सुमहांस् तव सैन्यस्य मारिष। वध्यतो भीमसेनेन कृतिना चित्र
योधिना ॥ ३५ ॥ तत कृतास्त्रास्ते सर्वे परिवार्य्य वृकोदरम्।
अभीता समकुर्वन्त शस्त्रवृष्टिं समन्ततः ॥ ३६ ॥ अभिद्रुतं शस्त्र
भृतां वरिष्ठं समन्ततः पाण्डवं लोकवीरम्। सैन्येन घोरेण
सुसंहतेन दृष्ट्वा बली पार्षतो भीमसेनम् ॥ ३७ ॥ अथोपगच्छ
च्छरविक्षताङ्गं पदातिनं क्रोधविषं वमन्तम्। आश्वासयन् पार्षतो
भीमसेनं गदाहस्तं कालमिवान्तकाले ॥ ३८ ॥ निःशल्यमेनं
चकार तूर्णमारोपयच्चात्मरथे महात्मा। भृशं परिष्वज्य च
भीमसेनमाश्वासयामास च शत्रुमध्ये ॥ ३९ ॥ भ्रातॄनथोपेत्य
तवापि पुत्रस्तस्मिन् विमर्दे महताभ्युवाच। अयं दुरात्मा द्रुपदस्य
पुत्रः समागतो भीमसेनेन सार्द्धम् ॥ ४० ॥ तं याम सर्वे सहिता
निहन्तुं मा नो रिपुः प्रार्थयतामनीकम्। श्रुत्वाय वाक्यं तममृष्य
माणा ज्येष्ठाज्ञया चोदिता धार्त्तराष्ट्राः ॥ ४१ ॥ वधाय निर्ज्जग्मु
रायुधास्ते युगक्षये केतवो यद्वदुग्राः। प्रगृह्य चित्राणि धनूंष

वीरा व्यानेमिघोषै प्राविकम्पयन्तः ॥ ४२ ॥ शरैस्तर्पन् द्रुपदस्य पुत्रं यथाम्बुदा भूधरं वारिजालैः। निहन्यमानोऽपि शरैः सुतोच्चैर्न विव्यथे समरे चित्रयोधी ॥ ४३ ॥ समभ्युदीर्णांश्च तवात्मजांस्तथा निरीक्ष्य वीरानभितः स्थिताग्रणी। जिघांसुरुग्रं द्रुपदात्मजो युवा प्रमोहनास्त्रं युयुजे महारथः ॥ ४४ ॥ क्रुद्धो भृशं तव पुत्रेषु राजन् दैत्येषु यद्वत् समरे महेन्द्रः। ततो व्यमुह्यन्त रणे नृवीराः प्रमोहनास्त्राहतबुद्धिसत्त्वाः ॥ ४५ ॥ प्रदुद्रुवुः कुरवश्चैव सर्वे सवाजिनागाः सरथाः समन्तात्। परीतकालानिव नष्टसंज्ञान् मोहोपेतांस्तव पुत्रान्निशम्य ॥ ४६ ॥ एतस्मिन्नेव काले तु द्रोणः शस्त्रभृतां वरः। द्रुपदं त्रिभिरासाद्य शरैर्विव्याध दारुणैः ॥ ४७ ॥ सोऽतिविद्धस्तदा राजन् रणात् द्रोणेन पार्थिवः। अपायाद्द्रुपदो राजन् पूर्ववैरमनुस्मरन् ॥४८॥ जित्वा द्रोणस्तु द्रुपदं शङ्खं दध्मौ प्रतापवान्। तस्य शङ्खस्वनं श्रुत्वा वित्रेसुः सर्वसोमकाः ॥ ४९ ॥ अथ शुश्राव तेजस्वी द्रोणः शस्त्रभृतां वरः। प्रमोहनास्त्रेण रणे मोहितानात्मजांस्तव ॥५०॥ ततो द्रोणो राजगृद्धी त्वरितोऽभ्याययौ रणात्। तत्रापश्यन् महेष्वासो भारद्वाजः प्रतापवान् ॥ ५१ ॥ धृष्टद्युम्नञ्च भीमञ्च विचरन्तौ महारणे। मोहाविष्टांश्च ते पुत्रानपश्यत स महारथः ॥ ५२ ॥ ततः प्रज्ञास्त्रमादाय मोहनास्त्रमशातयत्। अथ प्रत्यागतप्राणास्तव पुत्रा महारथाः ॥ ५३ ॥ पुनर्युद्धाय समरे प्रययुर्भीमपार्षतौ। ततो युधिष्ठिरः प्राह समाहूय स्वसैनिकान् ॥ ५४ ॥ गच्छन्तु पदवीं शक्त्या भीमपार्षतयोर्युधि। सौभद्रप्रमुखा वीरा रथा द्वादश दंशिताः ॥ ५५ ॥ प्रवृत्तिमधिगच्छन्तु न हि शुध्यति मे मनः। एवं ते समनुज्ञाताः शूरा विक्रान्तयोधिनः ॥ ५६ ॥ बाढमित्येवमुक्त्वा तु सर्वे पुरुषमानिनः। मध्यन्दिनगते सूर्य्ये प्रययुः सर्व एव हि ॥ ५७ ॥ कैकेया द्रौपदेयाश्च

प्रयोजनम् । भीमसेनं रणे हित्वा स्वेचमुत्सृज्य पाण्डवैः ॥२७॥
यदि यामि विना भीमं किं मां क्षत्रं वदिष्यति । एकायनगते
भीमे मयि चावस्थिते युधि ॥ २८ ॥ अस्वस्ति तस्य कुर्वन्ति देवाः
शक्रपुरोगमाः । यः सहायान् परित्यज्य स्वस्तिमानाव्रजेद्गृहान्
॥ २९ ॥ स मे भीमः सखा चैव सम्बन्धी च महाबलः । भक्तो
मे भक्तिमांश्चाहं तस्मिन्नरिनिषूदने ॥ ३० ॥ सोऽहं तत्र गमि-
ष्यामि यत्र यातो वृकोदरः । निघ्नन्तं मां रिपून् पश्य दानवा-
निव वासवम् ॥ ३१ ॥ एवमुक्त्वा ततो वीरो ययौ मध्येन भारत ।
भीमसेनस्य मार्गेषु गदाप्रमथितैर्गजैः ॥ ३२ ॥ स ददर्श तदा
भीमं दहन्तं रिपुवाहिनीम् । ततो वृक्षानिव बहून् प्रभञ्जन्तं
रणे नृपान् ॥ ३३ ॥ ते हन्यमानाः समरे रथिनः सादिनस्तथा ।
पदाता दन्तिनश्चैव चक्रुरार्त्तस्वरं महत् ॥ ३४ ॥ हाहाकारश्च
सञ्जज्ञे तव सैन्यस्य मारिष । वध्यतो भीमसेनेन कृतिना चित्र-
योधिना ॥ ३५ ॥ ततः कृतास्त्रास्ते सर्वे परिवार्य्य वृकोदरम् ।
अभीताः समकुर्वन्त शस्त्रवृष्टिं समन्ततः ॥ ३६ ॥ अभिद्रुतं शस्त्र-
भृतां वरिष्ठं समन्तत पाण्डवं लोकवीरम् । सैन्येन घोरेण
सुसंहतेन दृष्ट्वा बली पार्षतो भीमसेनम् ॥ ३७ ॥ अथोपगच्छ-
च्छरविक्षताङ्गं पदातिनं क्रोधविषं वमन्तम् । आश्वासयन् पार्षतो
भीमसेनं गदाहस्तं कालमिवान्तकाले ॥ ३८ ॥ निःशल्यमेनं
चकार तूर्णमारोपयच्चात्मरथे महात्मा । भृशं परिष्वज्य च
भीमसेनं आश्वासयामास च शत्रुमध्ये ॥ ३९ ॥ भ्रातॄनथोपेत्य
तवापि पुत्रस्तस्मिन् विमर्द्दे महताभ्युवाच । अयं दुरात्मा द्रुपदस्य
पुत्रः समागतो भीमसेनेन सार्द्धम् ॥ ४० ॥ तं याम सर्वे सहिता
निहन्तुं मा नो रिपुः प्रार्थयतामनीकम् । श्रुत्वा तु वाक्यं तममृष्य-
माणा ज्येष्ठाज्ञया चोदिता धार्त्तराष्ट्राः ॥ ४१ ॥ वधाय निर्ययु-
रुदायुधास्ते युगक्षये केतवो यद्वदुग्राः । प्रगृह्य चित्राणि धनूंषि च

वीरा चक्रनेमिघोषैः प्राविकम्पयन्तः ॥ ४२ ॥ शरैरवर्षन् द्रुपदस्य पुत्रं यथाम्बुदा भूधरं वारिजालैः। निहन्यमानोऽपि शरैः सुतोग्नेर्न विव्यथे समरे चित्रयोधी ॥ ४३ ॥ समभ्युदीर्णांश्च तत्रात्मजांस्तथा निशम्य वीरानभितः स्थिताग्रणी। जिघांसुरुग्रं द्रुपदात्मजो युवा प्रमोहनास्त्रं युयुजे महारथः ॥ ४४ ॥ क्रुद्धो भृशं तव पुत्रेषु राजन् दैत्येषु यद्वत् समरे महेन्द्रः। ततो व्यमुह्यन्त रणे नृवीराः प्रमोहनास्त्राहतबुद्धिसत्त्वाः ॥ ४५ ॥ प्रदुद्रुवुः कुरवश्चैव सर्वे सवाजिनागाः सरथाः समन्तात्। परीतकालानिव नष्टसंज्ञान् मोहोपेतांस्तव पुत्रान्निशम्य ॥ ४६ ॥ एतस्मिन्नेव काले तु द्रोणः शस्त्रभृतां वरः। द्रुपदं त्रिभिरासाद्य शरैर्विव्याध दारुणैः ॥ ४७ ॥ सोऽतिविद्धस्तदा राजन् रणात् द्रोणेन पार्थिवः। अपायाद्द्रुपदो राजन् पूर्ववैरमनुस्मरन् ॥ ४८ ॥ जित्वा द्रोणस्तु द्रुपदं शङ्खं दध्मौ प्रतापवान्। तस्य शङ्खस्वनं श्रुत्वा वित्रेसुः सर्वसोमकाः ॥ ४९ ॥ अथ शुश्राव तेजस्वी द्रोणः शस्त्रभृतां वरः। प्रमोहनास्त्रेण रणे मोहितानात्मजांस्तव ॥ ५० ॥ ततो द्रोणो राजगृद्धी त्वरितोऽभ्याययौ रणात्। तत्रापश्यन् महेष्वासो भारद्वाजः प्रतापवान् ॥ ५१ ॥ धृष्टद्युम्नञ्च भीमञ्च विचरन्तौ महारणे। मोहाविष्टांश्च ते पुत्रानपश्यत् स महारथः ॥ ५२ ॥ ततः प्रज्ञास्त्रमादाय मोहनास्त्रमशातयत्। अथ प्रत्यागतप्राणास्तव पुत्रा महारथाः ॥ ५३ ॥ पुनर्युद्धाय समरे प्रययुर्भीमपार्षतौ। ततो युधिष्ठिरः प्राह समाहूय स्वसैनिकान् ॥ ५४ ॥ गच्छन्तु पदवीं शक्त्या भीमपार्षतयोर्युधि। सौभद्रप्रमुखा वीरा रथा द्वादश दंशिताः ॥ ५५ ॥ प्रवृत्तिमधिगच्छन्तु न हि शुध्यति मे मनः। एवं ते समनुज्ञाताः शूरा विक्रान्तयोधिनः ॥ ५६ ॥ बाढमित्येवमुक्त्वा तु सर्वे पुरुषमानिनः। मध्यन्दिनगते सूर्ये प्रययुः सर्व एव हि ॥ ५७ ॥ कैकेया द्रौपदेयाश्च

धृष्टकेतुश्च वीर्य्यवान् । अभिमन्युं पुरस्कृत्य महत्या सेनया वृताः
॥ ५८ ॥ ते कृत्वा समरे व्यूहं सूचीमुखमरिन्दमाः । बिभिदु
र्धार्त्तराष्ट्राणां तद्रथानीकमाहवे ॥ ५९ ॥ तान् प्रयातान् महे
ष्वासानभिमन्युपुरोगमान् । भीमसेनभयाविष्टा धृष्टद्युम्नविमो
हिता ॥ ६० ॥ न सन्धारयितुं शक्ता तव सेना नराधिप । तदा
मूर्च्छान्विताश्चापि प्रमदेवाध्वनि स्थिता ॥ ६१ ॥ तेऽभियाता
महेष्वासाः सुवर्णविकृतध्वजाः । परीप्सन्तोऽभ्यधावन्त धृष्टद्युम्न
वृकोदरौ ॥ ६२ ॥ तौ च दृष्ट्वा महेष्वासानभिमन्युपुरोगमान् ।
बभूवतुर्मुदा युक्तौ निघ्नन्तौ तव वाहिनीम् ॥ ६३ ॥ दृष्ट्वा च
सहसायान्तं पाञ्चाल्यो गुरुमात्मन । नाशंसत वधं वीर पुत्राणां
तव पार्थिव ॥ ६४ ॥ ततो रथं समारोप्य कैकेयस्य वृकोदरम् ।
अभ्यधावत सुसंक्रुद्धो द्रोणमिष्वस्त्रपारगम् ॥ ६५ ॥ तस्याभि
पततस्तूर्णं भारद्वाजः प्रतापवान् । क्रुद्धश्चिच्छेद भल्लेन धनु
शत्रुनिसूदन ॥ ६६॥ अन्यांश्च शतशो बाणान् प्रेषयामास पार्षते ।
दुर्योधनहितार्थाय भर्त्तुं पिण्डमनुस्मरन् ॥ ६७ ॥ अथान्यद्धनु
रादाय पार्षतः परवीरहा । द्रोणं विव्याध सप्तत्या रुक्मपुङ्खैः
शिलाशितैः ॥ ६८ ॥ तस्य द्रोणः पुनश्चापि चिच्छेदामित्रकर्षण ।
हयांश्च चतुरस्तूर्णं चतुर्भिः सायकोत्तमैः ॥ ६९ ॥ वैवस्वतक्षय
घोरं प्रेषयामास भारत । सारथिं चास्य भल्लेन प्रेषयामास मृत्यवे
॥ ७० ॥ हताश्वात् स रथात्तूर्णमवप्लुत्य महारथः । आरुरोह
महाबाहुरभिमन्योर्महारथम् ॥ ७१ ॥ ततः सरथनागाश्वा सम
कम्पत वाहिनी । पश्यतो भीमसेनस्य पार्षतस्य च धीमतः ॥७२॥
तत्प्रभग्नं बलं दृष्ट्वा द्रोणेनामिततेजसा । नाशक्नुवन् वारयितुं
समस्तास्ते महारथाः ॥ ७३ ॥ वध्यमानन्तु तत् सैन्यं द्रोणेन
निशितैः शरैः । व्यभ्रमत्तत्र तत्रैव क्षोभ्यमाण इवार्णवः ॥७४॥
। दृष्ट्वा च तत् सैन्यं जहृषे च बलं तव । दृष्ट्वाचार्य्यं

संक्रुद्धं दहन्तं रिपुवाहिनीम् । चुक्रुशुः सर्व्वतो योधाः साधु साध्विति भारत ॥ ७५ ॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि द्रोणपराक्रमे सप्तसप्ततोऽध्यायः ॥ ७७ ॥



सञ्जय उवाच । ततो दुर्य्योधनो राजा मोहात् प्रत्यागतस्तदा । शरवर्षैः पुनर्भीमं प्रत्यवारयदच्युतम् ॥ १ ॥ एकीभूताः पुनश्चैव तव पुत्रा महारथाः । समेत्य समरे भीमं योधयामासुरुद्यताः ॥ २ ॥ भीमसेनोऽपि समरे सम्प्राप्य स्वरथं प्रति । समारुह्य महाबाहुर्ययौ यत्र तवात्मजः ॥ ३ ॥ प्रगृह्य च महावेगं परासुकरणं दृढम् । चित्रं शरासनं सङ्ख्ये शरैर्विव्याध ते सुतम् ॥ ४ ॥ ततो दुर्य्योधनो राजा भीमसेनं महाबलम् । नाराचेन सुतीक्ष्णेन भृशं मर्म्मण्यताडयत् ॥ ५ ॥ सोऽतिविद्धो महेष्वासस्तवपुत्रेण धन्विना । संरक्तनयनः क्रोधाद्वेगादाकृष्य कार्म्मुकम् ॥ ६ ॥ दुर्य्योधनं त्रिभिर्बाणैर्बाह्वोरुरसि चार्पयत् । स तथाभिहतो राजन् नाचलद्गिरिराडिव ॥ ७ ॥ तौ दृष्ट्वा समरे क्रुद्धौ विनिघ्नन्तौ परस्परम् । दुर्य्योधनानुजाः सर्व्वे शूराः सन्त्यक्तजीविताः ॥ ८ ॥ संस्मृत्य मन्त्रितं पूर्व्वं निग्रहं भीमकर्म्मणः । निश्चयं परमं कृत्वा निग्रहीतुं प्रचक्रमुः ॥ ९ ॥ तानापतत एवाजौ भीमसेनो महाबलः । प्रत्युद्ययौ महाराज गजः प्रतिगजानिव ॥ १० ॥ भृशं च क्रुद्धस्तेजस्वी नाराचेन समर्द्दयत् । चित्रसेनं महाराज तव पुत्रं महायशाः ॥ ११ ॥ तथेतरांस्तव सुतांस्ताडयामास भारत । शरैर्बहुविधैः सङ्ख्ये रुक्मपुङ्खैः सुवेगितैः ॥१२॥ ततः संस्थाप्य समरे स्वान्यनीकानि सर्व्वशः । अभिमन्युप्रभृतयस्ते द्वादश महारथाः ॥ १३ ॥ प्रेषिता धर्म्मराजेन भीमसेनपदानुगाः ।

प्रत्ययुर्महाराज राजपुत्रान् महारथान् ॥ १४ ॥ दृष्ट्वा रथस्थांस्तान्क्रूरान् सूर्य्याग्निसमतेजसः । सर्वानेव महेष्वासान् भ्राजमानान् श्रियावृतान् ॥ १५ ॥ महाहवे दीप्यमानान् सुवर्णविकृतोज्ज्वलान् । तत्यजुः समरे भीमं तव पुत्रा महाबलाः । तान्नामृष्यत कौन्तेयो जीवमाना गता इति ॥ १६ ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि भीमपराक्रमे
अष्टसप्ततोऽध्यायः ॥ ७८ ॥

—०:०—

सञ्जय उवाच । समेत्य च पुनः सर्वांस्तव पुत्रानपीड़यत् । अभिमन्युश समरे भीमसेनेन संयुतः ॥ १ ॥ पार्षतेन च सम्, च तव सैन्यं महारथाः । दुर्य्योधनप्रभृतयः प्रगृहीतशरासनाः ॥२॥ भृशमश्वैः प्रजवितैः प्रययुर्यत्र ते रथाः । अपराह्णे ततो राजन् प्रावर्त्तत महारणः ॥ ३ ॥ तावकानाञ्च बलिनां परेषाञ्चैव भारत । अभिमन्युर्विकर्णस्य हयान् हत्वा महाहवे ॥ ४ ॥ अथैनं पञ्चविंशत्या क्षुद्रकाणां समाचिनोत् । हताश्वं रथमुत्सृज्य विकर्णस्तु महारथ· ॥ ५ ॥ आरुरोह रथं राजंश्चित्रसेनस्य भास्वरम् । स्थितावेकरथे तौ तु भ्रातरौ कुरुवर्द्धनौ ॥ ६ ॥ आर्जुनिः शरवर्षेण छादयामास भारत । दुर्ज्जयोऽथ विकर्णश्च कार्ष्णिं पञ्चभिरायसैः ॥ ७ ॥ विव्याध तेन नाकम्पत् कार्ष्णिर्मेरुरिव स्थितः । दुःशासनस्तु समरे कैकेयान् पञ्च मारिष ॥ ८ ॥ योधयामास राजेन्द्र तदद्भुतमिवाभवत् । द्रौपदेया रणे क्रुद्धा दुर्य्योधनमवारयन् ॥ ९ ॥ एकैकस्त्रिभिरानर्च्छत् पुत्रं तव विशाम्पते । पुत्रोऽपि तव दुर्द्धर्षो द्रौपद्यास्तनयान् रणे ॥ १० ॥ सायकैर्निशितै राजन्नाजघान पृथक् पृथक् । तैश्चापि विद्ध· शुशुभे रुधिरेण समुक्षित· ॥ ११ ॥ गिरिः प्रस्रवणैर्यद्वद्गिरिधातुविमिश्रितैः ।

भीष्मोऽपि समरे राजन् पाण्डवानां वरूथिनीम् ॥ १२ ॥ कालयामास बलवान् पालः पशुगणानिव। ततो गाण्डीवनिर्घोषः प्रादुरासीद्विशाम्पते ॥ १३ ॥ दक्षिणेन वरूथिन्याः पार्थस्यारीन् विनिघ्नतः। उत्तस्थुः समरे तत्र कबन्धानि सहस्रशः ॥ १४ ॥ कुरूणाञ्चापि सैन्येषु पाण्डवानाञ्च भारत। शोणितोदमहावर्त्तं गजद्वीपं हयोर्म्मिणम् ॥ १५ ॥ रथनौभिर्नरव्याघ्राः प्रतेरुः सैन्यसागरम्। छिन्नहस्ता विकवचा विदेहाश्च नरोत्तमाः ॥ १६ ॥ पतितास्तत्र दृश्यन्ते शतशोऽथ सहस्रशः। निहतैर्मत्तमातङ्गैः शोणितौघपरिप्लुतैः ॥ १७ ॥ भूर्भाति भरतश्रेष्ठ पर्व्वतैरन्विता यथा। तत्राद्भुतमपश्याम तव तेषाञ्च भारत ॥ १८ ॥ न तत्रासीत् पुमान् कश्चिद्यो योद्धुं नाभिकाङ्क्षति। एवं युयुधिरे वीराः प्रार्थयाना महद्यशः। तावकाः पाण्डवैः सार्द्धं काङ्क्षमाणा जयं युधि ॥ १९ ॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि सङ्कुलयुद्धे एकोनाशीतितमोऽध्यायः ॥ ७९ ॥



सञ्जय उवाच। ततो दुर्य्योधनो राजा लोहितायति भास्करे। सङ्ग्रामरभसो भीमं हन्तुकामोऽभ्यधावत ॥ १ ॥ तमायान्तमभिप्रेक्ष्य नृवीरं दृढवैरिणम्। भीमसेनः सुसंक्रुद्ध इदं वचनमब्रवीत ॥ २ ॥ अयं स कालः सम्प्राप्तो वर्षपूगाभिकाङ्क्षितः। अद्य त्वां निहनिष्यामि यदि नोत्सृजसे रणम् ॥ ३ ॥ अद्य कुन्त्याः परिक्लेशं वनवासञ्च कृत्स्नशः। द्रौपद्याश्च परिक्लेशं प्रणेष्यामि हते त्वयि ॥ ४ ॥ यत्पुरा मत्सरी भूत्वा पाण्डवानवमन्यसे। तस्य पापस्य गान्धारे पश्य व्यसनमागतम् ॥ ५ ॥ कर्णस्य मतमास्थाय सौबलस्य च यत्पुरा। अचिन्त्य पाण्डवान् कामात्

यथेष्टं कृतवानसि ॥ ६ ॥ याचमानश्च यन्मोहाद्धार्त्तराष्ट्रमवमन्यसे।
उलूकस्य समादिष्टं यद्धससि च हृष्टवत् ॥ ७ ॥ तेन त्वां निहनि-
ष्यामि सहितं सर्वबान्धवैः । शमं करिष्ये तत् पापं यत्पुरा कृत-
वानसि ॥ ८ ॥ एवमुक्त्वा समाकृष्य धनुरायम्य चासकृत् । समा-
दाय शरान् घोरान् महाशनिसमप्रभान् ॥ ९ ॥ षट्विंशत्तरसा
क्रुद्धो मुमोचाशु सुयोधने । ज्वलिताग्निशिखाकारान् वज्रकल्पा-
नजिह्मगान् ॥ १० ॥ ततोऽस्य कार्मुकं द्वाभ्यां सूतं द्वाभ्याञ्च
विव्यधे । चतुर्भिर्जवनानश्वाननयद्यमसादनम् ॥ ११ ॥ द्वाभ्याञ्च
सुविकृष्टाभ्यां शराभ्यामरिमर्द्दनः । चिच्छेद समरे छत्रं राज-
स्तस्य रथोत्तमात् ॥ १२ ॥ त्रिभिश्चैवास्य चिच्छेद ज्वलन्तं ध्वज-
मुत्तमम् । छित्त्वा तञ्च ननादोच्चैस्तव पुत्रस्य पश्यतः ॥ १३ ॥
रथाच्च स ध्वजः श्रीमान् नानारत्नविभूषितः । पपात सहसा
भूमौ विद्युज्जलधरादिव ॥ १४ ॥ ज्वलन्तं सूर्य्यसङ्काशं नागं
मणिमयं शुभम् । ध्वजं कुरुपतेश्छिन्नं ददृशुः सर्व्वपार्थिवाः ॥ १५ ॥
अथैनं दशभिर्बाणैस्तोत्त्रैरिव महागजम् । आजघान रणे भीमः
स्मयन्निव महारथः ॥ १६ ॥ ततस्तु राजा सिन्धूनां रथश्रेष्ठो
महाबलः । दुर्य्योधनस्य जग्राह पार्ष्णिं सत्पुरुषैर्वृतः ॥ १७ ॥
कृपश्च रथिनां श्रेष्ठः कौरव्यममितौजसम् । आरोपयद्रथं राजन्
दुर्य्योधनममर्षणम् ॥ १८ ॥ स गाढविद्धो व्यथितो भीमसेनेन
संयुगे । निषसाद रथोपस्थे राजा दुर्य्योधनस्तदा ॥ १९ ॥
परिवार्य्य ततो भीमं हन्तुकामो जयद्रथः । रथैरनेकसाहस्रै-
र्भीमस्यावारयद्दिशः ॥ २० ॥ धृष्टकेतुस्ततो राजन्नभिमन्युश्च
वीर्य्यवान् । केकया द्रौपदेयाश्च तव पुत्रानयोधयन् ॥ २१ ॥
आजघान ततस्तूर्णमभिमन्युर्महामनाः । एकैकं पञ्चभिर्विद्ध्वा
शरैः सन्नतपर्व्वभिः ॥ २२ ॥ वज्रमृत्युप्रतीकाशैर्विचित्रायुधनिः-
[illegible] । [illegible]ते धर्षं सौभद्रं रथसत्तमम् ॥ २३ ॥

वज्रपुंर्मार्गणैस्तीक्ष्णैर्गिरिं मेरुमिवाम्बुदाः । स पीड्यमानः समरे कृतास्त्रो युद्धदुर्मदः ॥ २४ ॥ अभिमन्युर्महाराज तावकान् समकम्पयत् । यथा देवासुरे युद्धे वज्रपाणिर्महासुरान् ॥ २५ ॥ विकर्णस्य ततो भल्लान् प्रेषयामास भारत । चतुर्दश रथश्रेष्ठो घोरानाशीविषोपमान् ॥ २६ ॥ स तैर्विकर्णस्य रथात् पातयामास वीर्यवान् । ध्वजं सूतं हयांश्चास्य नृत्यमान इवाहवे ॥२७॥ पुनश्चान्यान् शरान् पीतानकुण्ठाग्रानजिह्मगान् । प्रेषयामास सौभद्रो विकर्णाय महारथः ॥ २८ ॥ ते विकर्णं समासाद्य कङ्कबर्हिणवाससः । भित्त्वा देहं गता भूमिं ज्वलन्त इव पन्नगाः ॥ २९ ॥ ते शरा हेमपुङ्खाग्रा व्यदृश्यन्त महीतले । विकर्णरुधिरक्लिन्ना वमन्त इव शोणितम् ॥ ३० ॥ विकर्णं वीक्ष्य निर्भिन्नं तस्यैवान्ये सहोदराः । अभ्यद्रवन्त समरे सौभद्रप्रमुखान् रथान् ॥ ३१ ॥ अभियाय तथैवाशु रथस्थान् सूर्यवर्चसः । अविध्यन् समरेऽन्योन्यं रथस्था युद्धदुर्मदाः ॥ ३२ ॥ दुर्मुखः श्रुतकर्माणं विद्ध्वा सप्तभिराशुगैः । ध्वजमेकेन चिच्छेद सारथिञ्चास्य सप्तभिः ॥ ३३ ॥ अश्वान् जाम्बूनदैर्जालैः प्रच्छन्नान् वातरंहसः । जघान षड्भिरासाद्य सारथिञ्च न्यपातयत् ॥ ३४ ॥ स हताश्वे रथे तिष्ठन् श्रुतकर्मा महारथः । शक्तिं चिक्षेप संक्रुद्धो महोल्कां ज्वलितामिव ॥ ३५ ॥ सा दुर्मुखस्य विपुलं वर्म भित्त्वा यशस्विनः । विदार्य प्राविशद्भूमिं दीप्यमाना सुतेजसा ॥ ३६ ॥ तं दृष्ट्वा विरथं तत्र सुतसोमो महाबलः । पश्यतां सर्वसैन्यानां रथमारोपयत्ततः ॥ ३७ ॥ श्रुतकीर्त्तिस्तथा वीरो जयत्सेनं सुतं तव । अभ्ययात् समरे राजन् हन्तुकामो यशस्विनम् ॥ ३८ ॥ तस्य विक्षिपतश्चापं श्रुतकीर्त्तेर्महात्मनः । चिच्छेद समरे राजन् जयत्सेनः सुतस्तव ॥ ३९ ॥ क्षुरप्रेण सुतीक्ष्णेन प्रहसन्निव भारत । तं दृष्ट्वा छिन्नधन्वानं शतानीकः सहोदरम् ॥ ४० ॥ अभ्यपद्यत

तेजस्वी सिंहवन्निनदन् मुहुः । शतानीकस्तु समरे दृढं विस्फार्य्य कार्मुकम् ॥ ४१ ॥ विव्याध दशभिस्तूर्णं जयत्सेन शिलीमुखैः । ननाद सुमहानादं प्रभिन्न इव वारणः ॥ ४२ ॥ अथान्येन सुतीक्ष्णेन सर्व्वावरणभेदिना । शतानीको जयत्सेनं विव्याध हृदये भृशम् ॥ ४३ ॥ तस्मिंस्तथा वर्त्तमाने दुष्कर्णो भ्रातुरन्तिके । चिच्छेद समरे चापं नाकुलेः क्रोधमूर्च्छितः ॥ ४४ ॥ अथान्यद्धनुरादाय भारसाधनमुत्तमम् । समादत्त शितान् वाणान् शतानीको महाबलः ॥ ४५ ॥ तिष्ठ तिष्ठेति चामन्त्र्य दुष्कर्णं भ्रातुरग्रतः । मुमोच निशितान् वाणान् ज्वलितान् पन्नगानिव ॥४६॥ ततोऽस्य धनुरेकेन द्वाभ्यां सूतञ्च मारिष । चिच्छेद समरे तूर्णं तञ्च विव्याध पञ्चभिः ॥ ४७ ॥ अश्वान् मनोजवांस्तस्य कल्माषान् वीतकल्मषः । जघान निशितैस्तूर्णं सर्व्वान् द्वादशभिः शरैः ॥ ४८ ॥ अथापरेण भल्लेन संयुक्तेन निपातिना । दुष्कर्णं समरे क्रुद्धो विव्याध हृदये भृशम् ॥ ४९ ॥ स पपात ततो भूमौ वज्रहत इव द्रुमः । दुष्कर्णं निहतं दृष्ट्वा पञ्च राजन् महारथाः ॥ ५० ॥ जिघांसन्तः शतानीकं समन्तात् पर्य्यवारयन् । छादयन्तः शरव्रातैः शतानीकं यशस्विनम् ॥ ५१ ॥ अभ्यवर्त्तन्त संक्रुद्धाः

विवर्द्धनम्। मुहूर्त्तास्तमिते सूर्य्ये चक्रुर्युद्धं सुदारुणम् ॥ ५८ ॥
रथिन सादिनश्चैव व्यकीर्य्यन्त सहस्रश । तत शान्तनव क्रुद्ध
शरै सन्नतपर्वभि ॥ ५९ ॥ नाशयामास सेना ता भीष्मस्तेषा
महात्मनाम्। पाञ्चालानाञ्च सैन्यानि शरैर्निन्ये यमक्षयम् ॥६०॥
एव भित्त्वा स्वनीकानि पाण्डवाना पितामह । कृत्वावहार सैन्याना
ययौ स्वशिविर नृप ॥ ६१ ॥ धर्मराजोऽपि सम्प्रेक्ष्य धृष्टद्युम्न-
वृकोदरौ। मूर्द्धि चैतानुपाघ्राय संहृष्ट शिविर ययौ ॥ ६२ ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि षष्ठदिवसावहारे
अशीतितमोऽध्याय ॥ ८० ॥



सञ्जय उवाच। अथ शूरा महाराज परस्परकृतागस ।
जग्मु स्वशिविराण्येव रुधिरेण समुक्षिता ॥ १ ॥ विश्राम्य च
यथान्याय पूजयित्वा परस्परम्। सन्नद्धा समदृश्यन्त भूयो युद्ध-
चिकीर्षव ॥ २ ॥ ततस्तव सुतो राजंश्चिन्तयाभिपरिप्लुत ।
विस्रवच्छोणिताक्ताङ्ग पप्रच्छेद पितामहम् ॥ ३ ॥ सैन्यानि
रौद्राणि भयानकानि व्यूढानि सम्यग्विपुलध्वजानि। विदार्य्य
हत्वा विनिपीड्य शूरास्ते पाण्डवाना त्वरिता ययौघा ॥ ४ ॥
सम्मोह्य सर्वान् युधि कीर्त्तिमन्तो व्यूहञ्च त मकर वज्रकल्पम्।
प्रविश्य भीमेन निवर्हितोऽस्मि घोरै शरैर्मृत्युदण्डप्रकाशै ॥ ५ ॥
क्रुद्धन्तमुदीक्ष्य भयेन राजन् सम्मूर्च्छितो नालभ शान्तिमद्य।
इच्छे प्रसादात्तव सत्यसन्ध प्राप्तुं जय पाण्डवेयाश्च हन्तुम् ॥ ६ ॥
तेनैवमुक्त प्रहसन् महात्मा दुर्य्योधन जातमन्युं विदित्वा। त
प्रत्युवाच विमना मनस्वी गङ्गासुत शस्त्रभृतावरिष्ठ ॥७॥ परेण
यत्नेन विगाह्य सेना सर्वात्मनाह तव राजपुत्र। इच्छामि दातु
विजय सुखञ्च न चात्मान छादयेऽह त्वदर्थे ॥ ८ ॥ एते तु रौद्रा

बहवो महारथा यशस्विनः शूरतमाः कृतास्त्राः। ये पाण्डवानां
समरे सहाया जितक्लमाः क्रोधविषं वमन्ति ॥ ९ ॥ ते नैव
शक्या सहसा विजेतुं वीर्य्योन्नद्धाः कृतवैरास्त्वया च। अह-
न्तु तान् प्रतियोत्स्यामि राजन् सर्वात्मना जीवितं त्यज्य वीरान्
॥ १० ॥ रणे त्वदर्थाय महानुभाव न जीवितं रक्षितव्यं ममाद्य।
सर्वांस्तवार्थाय सदेवदैत्यान् लोकान् दहेयं किमु शत्रूंस्तवेह ॥ ११ ॥
तान् पाण्डवान् योधयिष्यामि राजन् प्रियञ्च ते सर्वमहं करिष्ये।
श्रुत्वैव चैतत् परमप्रतीतो दुर्य्योधनः प्रीतमना बभूव ॥ १२ ॥
सर्वाणि सैन्यानि ततः प्रहृष्टो निर्गच्छतेत्याह नृपांश्च सर्वान्।
तदाज्ञया निर्ययुर्वै बलानि रथाश्वपादातगजायुतानि ॥ १३ ॥
प्रहर्षयुक्तानि तु तानि राजन् महान्ति नानायुधशस्त्रवन्ति।
स्थितानि नागाश्वपदातिमन्ति विरेजुराजौ तव राजन् बलानि
॥ १४ ॥ वृन्दैः स्थिताश्चापि सुसम्प्रयुक्ताश्चकाशिरे दन्तिगणाः
समन्तात्। शस्त्रास्त्रविद्भिर्नरदेवयोधैरधिष्ठिताः सैन्यगणास्त्वदीयाः
॥ १५ ॥ रथैश्च पादातगजाश्वसङ्घैः प्रयाद्भिराजौ विधिवत्
प्रणुन्नैः। समुद्धतं तैस्तरुणार्कवर्णं रजो बभौ छादयत् सूर्य्य-
रश्मीन् ॥ १६ ॥ रेजुः पताका रथदन्तिसंस्था वातेरिता भ्राम्य-
माणाः समन्तात्। नानारङ्गाः समरे तत्र रेजुः मेघैर्युक्ता विद्युतः
खे यथैव ॥ १७ ॥ धनूंषि विस्फारयतां नृपाणां बभूव शब्द-
स्तुमुलोऽतिघोरः। निर्मथ्यतो देवमहासुरौघैर्यथार्णवस्यादियुगे
तदानीम् ॥ १८ ॥ तदुग्रनादं बहुवर्णरूपं तवात्मजानां समु-
दीर्णवेगम्। बभूव सैन्यं रिपुसैन्यहन्तृ युगान्तमेघौघनिभं
तदानीम् ॥ १९ ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि भीष्मदुर्य्योधनसंवादे
एकाशीतितमोऽध्यायः ॥ ८१ ॥

———

सञ्जय उवाच । यथात्मजं तव पुत्रं गाङ्गेयो ध्यानमास्थितः ।
अब्रवीत् भरतश्रेष्ठ सम्प्रहर्षकरं वचः ॥ १ ॥ अहं द्रोणश्च शल्यश्च
कृतवर्म्मा च सात्वतः । अश्वत्थामा विकर्णश्च सोमदत्तोऽथ सैन्धवः
॥ २ ॥ विन्दानुविन्दावावन्त्यौ वाह्लिकः सह वाह्लिकैः । त्रिगर्त्त-
राजोऽथ बली मागधश्च सुदुर्ज्जयः ॥ ३ ॥ बृहद्बलश्च कौशल्य-
श्चित्रसेनो विविंशतिः । रथाश्च बहुसाहस्रा शोभमाना महा-
ध्वजाः ॥ ४ ॥ देशजाश्च हया राजन् स्वारूढा हयसादिभिः ।
गजेन्द्राश्च मदोत्कटाः प्रभिन्नकरटामुखाः ॥ ५ ॥ पादाताश्च
तथा शूरा नानाप्रहरणायुधाः । नानादेशसमुत्पन्नास्त्वदर्थे
योद्धुमुद्यताः ॥ ६ ॥ एते चान्ये च बहवस्त्वदर्थे त्यक्तजीविताः ।
देवानपि रणे जेतुं समर्था इति मे मतिः ॥ ७ ॥ अवश्यन्तु
मया राजंस्तव वाच्यं हितं सदा । अशक्याः पाण्डवा जेतुं
देवैरपि सवासवैः ॥ ८ ॥ वासुदेवसहायाश्च महेन्द्रसमविक्रमाः ।
सर्व्वथाहन्तु राजेन्द्र करिष्ये वचनन्तव ॥ ९ ॥ पाण्डवान् वा रणे
जेष्ये मां वा जेष्यन्ति पाण्डवाः ॥ एवमुक्त्वा ददौ चास्मै विशल्य-
करणीं शुभाम् ॥ १० ॥ ओषधीं वीर्य्यसम्पन्नां विशल्यश्चाभव-
त्तदा । ततः प्रभाते विमले स्वेन सैन्येन वीर्य्यवान् ॥ ११ ॥
अव्यूहत स्वयं व्यूहं भीष्मो व्यूहविशारदः । मण्डलं मनुजश्रेष्ठो
नानाशस्त्रसमाकुलम् ॥ १२ ॥ सम्पूर्णं योधमुख्यैश्च तथा दन्ति-
पदातिभिः । रथैरनेकसाहस्रैः समन्तात् परिवारितम् ॥ १३ ॥
अश्ववृन्दैर्महद्भिश्च ऋष्टितोमरधारिभिः । नागे नागे रथाः सप्त
सप्त चाश्वा रथे रथे ॥ १४ ॥ अन्वश्वं दश धानुष्का धानुष्के
सप्त चार्म्मिणः । एवं व्यूढं महाराज तव सैन्यं महारथैः ॥ १५ ॥
स्थितं रणाय महते भीष्मेण युधि पालितम् । दशाश्वानां सह-
स्राणि दन्तिनाञ्च तथैव च ॥ १६ ॥ रथानामयुतञ्चापि पुत्राश्च
तव दंशिताः । चित्रसेनादयः शूरा अभ्यरक्षन् पितामहम् ॥ १७ ॥

रच्यमाणश्च तैः शूरैर्गोप्यमानाश्च तेन ते। सन्नद्धाः समदृश्यन्त राजानश्च महाबलाः ॥ १८ ॥ दुर्योधनस्तु समरे दंशितो रथमास्थितः। व्यभ्राजत श्रिया जुष्टो यथा शक्रस्त्रिविष्टपे ॥ १९ ॥ ततः शब्दो महानासीत् पुत्राणां तव भारत। रथघोषश्च विपुलो वादित्राणाञ्च निस्वनः ॥ २० ॥ भीष्मेण धार्त्तराष्ट्राणां व्यूढः प्रत्यङ्मुखो ययौ। मण्डलः स महाव्यूहो दुर्भेद्योऽमित्रघातिनाम् ॥ २१ ॥ सर्वतः शुशुभे राजन् रणेऽरीणां दुरासदः। मण्डलन्तु समालोक्य व्यूहं परमदारुणम् ॥ २२ ॥ स्वयं युधिष्ठिरो राजा व्यूहं वज्रमथाकरोत्। तथा व्यूढेष्वनीकेषु यथास्थानमवस्थिताः ॥ २३ ॥ रथिनः सादिनश्चैव सिंहनादमथानदन्। बिभित्सवस्ततो व्यूहं निर्ययुर्युद्धकाङ्क्षिणः ॥ २४ ॥ इतरेतरतः शूराः सहसैन्याः प्रहारिणः। भारद्वाजो ययौ मत्स्यं द्रौणिश्चापि शिखण्डिनम् ॥ २५ ॥ स्वयं दुर्योधनो राजा पार्षतं समुपाद्रवत्। नकुलः सहदेवश्च मद्रराजानमीयतुः ॥ २६ ॥ विन्दानुविन्दावावन्त्याविरावन्तमभिद्रुतौ। सर्वे नृपास्तु समरे धनञ्जयमयोधयन् ॥ २७ ॥ भीमसेनो रणे यत्तो हार्दिक्यं समवारयत्। चित्रसेनं विकर्णञ्च तथा दुर्मर्षणं विभुः ॥ २८ ॥ आर्जुनिः समरे राजंस्तव पुत्रानयोधयत्। प्राग्ज्योतिषं महेष्वासं हैडिम्बो राक्षसेश्वरः ॥ २९ ॥ अभिदुद्राव वेगेन मत्तो मत्तमिव द्विपम्। अलम्बुषस्ततो राजन् सात्यकिं युद्धदुर्मदम् ॥ ३० ॥ ससैन्यं समरे क्रुद्धो राक्षसः समभिद्रवत्। भूरिश्रवा रणे यत्तो धृष्टकेतुमयोधयत् ॥ ३१ ॥ श्रुतायुषन्तु राजानं धर्मपुत्रो युधिष्ठिरः। चेकितानस्तु समरे कृपमेवान्वयोधयत् ॥ ३२ ॥ शेषाः प्रतियुर्यत्ता भीममेव महारथम्। ततो राजसहस्राणि परिवव्रुर्धनञ्जयम् ॥ ३३ ॥ शक्तितोमरनाराचगदापरिघपाणयः। अर्जुनोऽथ भृशं क्रुद्धो वार्ष्णेयमिदमब्रवीत् ॥ ३४ ॥ पश्य माधव-

सैन्यानि धार्त्तराष्ट्रस्य सयुगे। व्यूढानि व्यूहविदुषा गाङ्गेयेन महात्मना ॥ ३५ ॥ युद्धाभिकामान् शूरांश्च पश्य माधव चामितान्। त्रिगर्त्तराज सहितं भ्रातृभि पश्य केशव ॥ ३६ ॥ अद्यैनान् घातयिष्यामि पश्यतस्ते जनार्द्दन। य इमे मां यदुश्रेष्ठ योद्धुकामा रणाजिरे ॥ ३७ ॥ एवमुक्त्वा तु कौन्तेयो धनुर्ज्यामवमृज्य ह। ववर्ष शरवर्षाणि नराधिपगणान् प्रति ॥ ३८ ॥ तेऽपि तं परमेष्वासा शरवर्षैरपूरयन्। तडागमम्बुधाराभिर्यथा प्रावृषि तोयदा॰ ॥ ३९ ॥ हाहाकारो महानासीत्तत्र सैन्ये विशाम्पते। छाद्यमानौ भृश कृष्णौ शरैर्दृष्ट्वा महारणे ॥ ४० ॥ देवा देवर्षयश्चैव गन्धर्वाश्च महोरगैः। विस्मय परमं जग्म दृष्ट्वा कृष्णौ तथागतौ ॥ ४१ ॥ तत क्रुद्धोऽर्जुनो राजन्नैन्द्रमस्त्रमुदैरयत्। तत्राद्भुतमपश्याम विजयस्य पराक्रमम् ॥ ४२ ॥ शस्त्रवृष्टिं परैर्मुक्तां शस्त्रौघैर्यद्वारयत्। न च तत्राप्यनिर्भिन्न कश्चिद्दासीद्विशाम्पते ॥ ४३ ॥ तेषां राजसहस्राणां हयानां दन्तिनां तथा। द्वाभ्यां त्रिभिः शरैश्चान्यान् पार्थो विव्याध मारिष ॥४४॥ ते हन्यमाना पार्थेन भीष्मं शान्तनवं ययु॰। अगाधे मज्जमानानां भीष्मस्त्राताभवत्तदा ॥ ४५ ॥ आपतद्भिस्तु तैस्तत्र प्रभग्नं तावकं बलम्। सञ्चुक्षुभे महाराज वातैरिव महार्णवः ॥ ४६ ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि सप्तमदिवसयुद्धारम्भे
द्व्यशीतोऽध्याय ॥ ८२ ॥

---

सञ्जय उवाच। तथा प्रवृत्ते सङ्ग्रामे निवृत्ते च सुशर्मणि। प्रभग्नेषु च वीरेषु पाण्डवेन महात्मना ॥ १ ॥ क्षुभ्यमाणे बले तूर्णं सागरप्रतिमे तव। प्रत्युद्याते च गाङ्गेये त्वरित विजयं प्रति ॥ २ ॥ दृष्ट्वा दुर्य्योधनो राजा रणे पार्थस्य विक्रमम्।

त्वरमाणः समभ्येत्य सर्वांस्तानब्रवीन्नृपान् ॥ ३ ॥ तेषाञ्च प्रमुखे
शूरं सुशर्माणं महाबलम् । मध्ये सर्वस्य सैन्यस्य प्राह संहर्षयन्
वचः ॥ ४ ॥ एष भीष्मः शान्तनवो योद्धुकामो धनञ्जयम् ।
सर्वात्मना कुरुश्रेष्ठस्त्यक्त्वा जीवितमात्मनः ॥ ५ ॥ तं प्रयान्तं
परानीकं सह सैन्येन भारतम् । संयत्ताः समरे सर्वे पालयध्वं
पितामहम् ॥ ६ ॥ बाढमित्येवमुक्त्वा तु तान्यनीकानि सर्वशः ।
नरेन्द्राणां महाराज समाजग्मुः पितामहम् ॥ ७ ॥ ततः
प्रयातः सहसा भीष्मः शान्तनवोऽर्जुनम् । रणे भारतमायान्त-
मासमाद महाबलम् ॥ ८ ॥ महाश्वेताश्वयुक्तेन भीमवानर-
केतुना । महता मेघनादेन रथेनातिविराजिना ॥ ९ ॥ समरे
सर्वसैन्यानामुपयातं धनञ्जयम् । अभवत्तुमुलो नादो भयाद्दृष्ट्वा
किरीटिनम् ॥ १० ॥ अभीशुहस्तं कृष्णञ्च दृष्ट्वादित्यमिवापरम् ।
मध्यन्दिनगतं सूर्यं नाशेकुः प्रतिवीक्षितुम् ॥ ११ ॥ तथा शान्त-
नवं भीष्मं श्वेताश्वं श्वेतकार्मुकम् । न शेकुः पाण्डवा द्रष्टुं श्वेत-
ग्रहमिवोदितम् ॥ १२ ॥ स सर्वतः परिवृतस्त्रिगर्त्तैः सुमहा-
त्मभिः । भ्रातृभिः सह पुत्रैश्च तथान्यैश्च महारथैः ॥ १३ ॥
भारद्वाजश्च समरे मत्स्यं विव्याध पत्रिणा । ध्वजञ्चास्य शरेणाजौ
धनुश्चैकेन चिच्छिदे ॥ १४ ॥ तदपास्य धनुश्छिन्नं विराटो
वाहिनीपतिः । अन्यदादत्त वेगेन धनुर्भारसहं दृढम् ॥ १५ ॥
शरांश्चाशीविषाकारान् ज्वलितान् पन्नगानिव । द्रोणं त्रिभिः
प्रविव्याध चतुर्भिश्चास्य वाजिनः ॥ १६ ॥ ध्वजमेकेन विव्याध
सारथिञ्चास्य पञ्चभिः । धनुरेकेषुणाविध्यत्तत्राक्रुध्यद्द्विजर्षभः ॥ १७ ॥
ततो द्रोणोऽवधीदश्वान् शरैः सन्नतपर्वभिः । अष्टभिर्भरतश्रेष्ठ
सूतमेकेन पत्रिणा ॥ १८ ॥ स हताश्वादवप्लुत्य स्यन्दनाद्धत-
सारथिः । आरुरोह रथं तूर्णं शङ्खस्य रथिनांवरः ॥ १९ ॥
ततस्तौ तु पितापुत्रौ भारद्वाजं रथे स्थितौ । महता शरवर्षेण

वारयामासतुर्बलात् ॥ २० ॥ भारद्वाजस्ततः क्रुद्धः शरमाशीविषो-
पमम् । चिक्षेप समरे तूर्णं शङ्खं प्रति महाबल ॥ २१ ॥ स
तस्य हृदयं भित्त्वा पीत्वा शोणितमाहवे । जगाम धरणीं बाणो
लोहितार्द्रकृतच्छविः ॥ २२ ॥ स पपात रथात्तूर्णं भारद्वाज-
शराहतः । हित्वा धनुः शरांश्चैव पितुरेव समीपतः ॥ २३ ॥
हतं स्वमात्मजं दृष्ट्वा विराटः प्राद्रवद्भयात् । उत्सृज्य समरे
द्रोणं व्यात्ताननमिवान्तकम् ॥ २४ ॥ भारद्वाजस्ततस्तूर्णं पाण्ड-
वानां महाचमूम् । वारयामास समरे शतशोऽथ सहस्रशः ॥२५॥
शिखण्ड्यपि महाराज द्रौणिमासाद्य संयुगे । आजघान भ्रुवो-
र्मध्ये नाराचैस्त्रिभिराशुगैः ॥ २६ ॥ स बभौ नरशार्दूलो ललाटे
संस्थितैस्त्रिभिः । शिखरैः काञ्चनमयैर्मेरुस्त्रिभिरिवोच्छ्रितैः ॥२७॥
अश्वत्थामा ततः क्रुद्धो निमेषार्द्धाच्छिखण्डिनः । सूतं ध्वजमथो
राजंस्तुरगानायुधं तथा ॥ २८ ॥ शरैर्बहुभिरुद्दिश्य पातयामास
संयुगे । स हताश्वादवप्लुत्य रथाद्वै रथिनां वर ॥ २९ ॥ खड्ग-
मादाय सुशितं विमलं शरवारणम् । श्येनवद्व्यचरत् क्रुद्धः
शिखण्डी शत्रुतापन ॥ ३० ॥ सखड्गस्य महाराज चरतस्तस्य
संयुगे । नान्तरं ददृशे द्रौणिस्तदद्भुतमिवाभवत् ॥ ३१ ॥ ततः
शरसहस्राणि बहूनि भरतर्षभ । प्रेषयामास समरे द्रौणिः
परमकोपनः ॥ ३२ ॥ तामापतन्तीं समरे शरवृष्टिं सुदारुणाम् ।
असिना तीक्ष्णधारेण चिच्छेद बलिनां वरः ॥ ३३ ॥ ततोऽति-
विमलं द्रौणिः शतचन्द्रं मनोरमम् । चर्माच्छिनदसिञ्चास्य खण्ड-
यामास संयुगे ॥ ३४ ॥ शरैः सुबहुशो राजन् तञ्च विव्याध
पत्रिभिः । शिखण्डी च ततः खड्गं खण्डितं तेन सायकैः ॥३५॥
आविध्य व्यसृजत्तूर्णं ज्वलन्तमिव पन्नगम् । तमापतन्तं सहसा
कालानलसमप्रभम् ॥ ३६ ॥ चिच्छेद समरे द्रौणिर्दर्शयन् पाणि-
लाघवम् । शिखण्डिनञ्च विव्याध शरैर्बहुभिरायसैः ॥ ३७ ॥

शिखण्डी तु भृशं राजंस्ताड्यमानः शितैः शरैः । आरुरोह रथ
न्तूर्णं माधवस्य महात्मनः ॥ ३८ ॥ सात्यकिस्तु ततः क्रुद्धो
राक्षसं क्रूरमाहवे । अलम्बुषं शरैर्घोरैः प्रत्याकिरत सर्वतः
॥ ३९ ॥ राक्षसेन्द्रस्ततस्तस्य धनुश्चिच्छेद भारत । अर्धचन्द्रेण
समरे तञ्च विव्याध सायकैः ॥ ४० ॥ मायाञ्च राक्षसीं कृत्वा
शरवर्षैरवाकिरत् । तत्राद्भुतमपश्याम शैनेयस्य पराक्रमम् ॥४१॥
नासम्भ्रमद्यत् समरे वध्यमानः शितैः शरैः । ऐन्द्रमस्त्रञ्च वार्ष्णेयो
योजयामास भारत ॥ ४२ ॥ विजयाद्यदनुप्राप्तं माधवेन यश
स्विना । तदस्त्रं भस्मसात् कृत्वा मायान्तां राक्षसीं तदा ॥ ४३ ॥
अलम्बुषं शरैर्घोरैरभ्याकिरत सर्वशः । पर्वतं वारिधाराभि
प्रावृषीव बलाहकः ॥ ४४ ॥ तत्तथा पीड़ितं तेन माधवेन महा
त्मना । प्रदुद्राव भयाद्रक्षो हित्वा सात्यकिमाहवे ॥ ४५ ॥ त
मजेयं राक्षसेन्द्रं स्वयं मघवतापि च । शैनेयः प्राणदच्छित्त्वा
योधानां तव पश्यताम् ॥ ४६ ॥ न्यहनत्तावकांश्चापि सात्यकि
सत्यविक्रमः । निशितैर्बहुभिर्बाणैस्तेऽद्रवन्त भयार्दिताः ॥ ४७ ॥
एतस्मिन्नेव काले तु द्रुपदस्यात्मजो बली । धृष्टद्युम्नो महाराज
तव पुत्रं जनेश्वरम् ॥ ४८ ॥ छादयामास समरे शरैः सन्नत
पर्वभिः ॥ सञ्छाद्यमानो विशिखैर्धृष्टद्युम्नेन भारत ॥ ४९ ॥
विव्यथे न च सन्त्रस्तो तव पुत्रो जनेश्वरः । धृष्टद्युम्नञ्च समरे
तूर्णं विव्याध सायकैः ॥ ५० ॥ षष्ट्या च त्रिंशता चैव तदद्भुत
मिवाभवत् । तस्य सेनापतिः क्रुद्धो धनुश्चिच्छेद भारत ॥ ५१ ॥
हयांश्च चतुरः शीघ्रं निजघान महारथः । शरैश्चैनं सुनिशितैः
शीघ्रं विव्याध सप्तभिः ॥ ५२ ॥ स हताश्वान्महाबाहुरवप्लुत्य
महाबली । पदातिरसिमुद्यम्य प्राधावत् पार्षतम्प्रति ॥ ५३ ॥
शकुनिस्तु समभ्येत्य राजगृद्धी महाबलः । राजानं सर्वलोकस्य
रथमारोपयत् स्वकम् ॥ ५४ ॥ ततो नृपं पराजित्य पार्षतः पर

वीरहा। व्यद्रवत्तावकं सैन्यं वज्रपाणिरिवासुरम् ॥ ५५ ॥ कृतवर्म्मा रणे भीमं शरैराच्छ्रत् महारथम्। प्रच्छादयामास च तं महामेघो रविं यथा ॥ ५६ ॥ ततः प्रहस्य समरे भीमसेनः परन्तपः। प्रेषयामास संक्रुद्धः सायकान् कृतवर्म्मणे ॥ ५७ ॥ तैर्हन्यमानोऽतिरथः सात्वतः शस्त्रतोऽधिकः। नाकम्पत महाराज भीमं चार्च्छिद्रितैः शरैः ॥ ५८ ॥ तस्याश्वांश्चतुरो हत्वा भीमसेनो महाबलः। सारथिं पातयामास ध्वजञ्च सुपरिष्कृतम् ॥ ५९ ॥ शरैर्बहुविधैश्चैनमाचिनोत् परवीरहा। शकलीकृतसर्व्वाङ्गश्चाविद्धः समदृश्यत ॥ ६० ॥ हताश्वात्तु तथा तूर्णं हषकस्य रथं ययौ। श्यालस्य ते महाराज तव पुत्रस्य पश्यतः ॥ ६१ ॥ भीमसेनोऽपि संक्रुद्धस्तव सैन्यमुपाद्रवत्। निजघान सुसंक्रुद्धो दण्डपाणिरिवान्तकः ॥ ६२ ॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि द्वैरथे
त्र्यशीतोऽध्यायः ॥ ८३ ॥

---

धृतराष्ट्र उवाच। बहूनि हि विचित्राणि द्वैरथानि स्म सञ्जय। पाण्डूनां मामकैः सार्द्धमश्रौषं तव जल्पतः ॥ १ ॥ न चैव मामकं कश्चिद्धृष्टं शंससि सञ्जय। नित्यं पाण्डुसुतान् हृष्टानभग्नांश्चैव शंससि ॥ २ ॥ जीयमानान् विमनसो मामकान् विगतौजसः। वद से संयुगे सूत दिष्टमेव न संशयः ॥ ३ ॥

सञ्जय उवाच। यथाशक्ति यथोत्साहं युद्धे चेष्टन्ति तावकाः। दर्शयानाः परं शक्त्या पौरुषं भरतर्षभ ॥ ४ ॥ गङ्गायाः सुरनद्या वै स्वादुभूतं यथोदकम्। महोदधिगुणाभ्यासाल्लवणत्वं नियच्छति ॥ ५ ॥ तथा तत् पौरुषं राजंस्तावकानां महात्मनाम्। प्राप्य पाण्डुसुतान् वीरान् व्यर्थं भवति संयुगे ॥ ६ ॥ घटमानान् यथाशक्ति कुर्व्वाणान् कर्म दुष्करम्। न दोषेण कुरुश्रेष्ठ त्वान्

योधान् गन्तुमर्हसि ॥ ७ ॥ तवापराधात् सुमहान् सपुत्रस्य विशाम्पते । पृथिव्याः प्रक्षयो घोरो यमराष्ट्रविवर्द्धनः ॥ ८ ॥ आत्मदोषात् समुत्पन्नं शोचितुं नार्हसे नृप । न हि रक्षन्ति राजानः सर्वथात्रापि जीवितम् ॥ ९ ॥ युद्धे सुकृतिनां लोकानिच्छन्ति वसुधाधिपाः । चमूं विगाह्य युध्यन्ते नित्यं स्वर्गपरायणाः ॥ १० ॥ पूर्वाह्णे तु महाराज प्रावर्त्तत जनक्षयः । तन्ममैकमना भूत्वा शृणु देवासुरोपमम् ॥ ११ ॥ आवन्त्यौ तु महेष्वासौ महासेनौ महाबलौ । इरावन्तमभिप्रेक्ष्य समेयातां रणोत्कटौ ॥ १२ ॥ तेषां प्रववृते युद्धं तुमुलं रोमहर्षणम् । इरावांस्तु ततः क्रुद्धो भ्रातरौ देवरूपिणौ ॥ १३ ॥ विव्याध निशितैस्तूर्णं शरैः सन्नतपर्वभिः । तावेव प्रत्यविध्येतां समरे चित्रयोधिनौ ॥ १४ ॥ युध्यतां हि ततो राजन् विशेषो न स्म दृश्यते । यततां शत्रुनाशाय कृतप्रतिकृतैषिणोः ॥ १५ ॥ इरावांस्तु रणे राजन्ननुविन्दस्य सायकैः । चतुर्भिश्चतुरो वाहाननयद्यमसादनम् ॥१६॥ भल्लाभ्यां च सुतीक्ष्णाभ्यां धनुः केतुञ्च मारिष । चिच्छेद समरे राजंस्तदद्भुतमिवाभवत् ॥ १७ ॥ त्यक्त्वानुविन्दोऽथ रथं विन्दस्य रथमास्थितः । धनुर्गृहीत्वा सुदृढं भारसाधनमुत्तमम् ॥ १८ ॥ तावेकस्थौ रणे वीरावावन्त्यौ रथिनाम्वरौ । शरान् मुमुचतुस्तूर्णमिरावति महात्मनि ॥ १९ ॥ ताभ्यां मुक्ता महावेगाः शराः काञ्चनभूषिताः । दिवाकरपथं प्राप्य छादयामासुरम्बरम् ॥२०॥ इरावांस्तु ततः क्रुद्धो भ्रातरौ तौ महारथौ । ववर्ष शरवर्षेण सारथिं चाप्यपातयत् ॥ २१ ॥ तस्मिन्निपतिते भूमौ गतसत्त्वे च सारथौ । रथः प्रदुद्राव दिशः समुद्भ्रान्तहयस्तथा ॥ २२ ॥ तौ स जित्वा महाराज नागराजसुतासुतः । पौरुषं ख्यापयंस्तूर्णं व्यधमत्तव वाहिनीम् ॥ २३ ॥ सा वध्यमाना समरे धार्त्तराष्ट्री महाचमूः । वेगान् बहुविधांश्चक्रे विषं पीत्वेव मानवः ।

॥ २४ ॥ हैड़िम्बो राचसेन्द्रश्च भगदत्तं समाद्रवत्। रथेनादित्यवर्णेन सध्वजेन महाबलः ॥ २५ ॥ ततः प्राग्ज्योतिषो राजा नागराजं समास्थितः। यथा वज्रधरः पूर्वं सङ्ग्रामे तारकामये ॥ २६ ॥ तत्र देवाः सगन्धर्वा ऋषयश्च समागताः। विशेषं नैव विविदुर्हैड़िम्बभगदत्तयोः ॥ २७ ॥ यथा सुरपतिः क्रुद्धस्त्रासयामास दानवान्। तथैव समरे राजन् द्रावयामास पाण्डवान् ॥ २८ ॥ तेन विद्राव्यमाणास्ते पाण्डवाः सर्व्वतोदिशम्। त्रातारं नाध्यगच्छन्त स्वेष्वनीकेषु भारत ॥ २९ ॥ भैमसेनिं रथस्थन्तु तत्रापश्याम भारत। शेषा विमनसो भूत्वा प्राद्रवन्त महारथाः ॥ ३० ॥ निवृत्तेषु च पाण्डूनां पुनः सैन्येषु भारत। आसीन्निष्टानको घोरस्तव सैन्यस्य संयुगे ॥ ३१ ॥ घटोत्कचस्ततो राजन् भगदत्तं महाहवे। शरैः प्रच्छादयामास मेरुं गिरिमिवाम्बुदः ॥ ३२ ॥ निपात्य तान् शरान् राजा राचसस्य धनुश्च्युतान्। भैमसेनिं रणे तूर्णं सर्व्वमर्म्मस्वताड़यत् ॥ ३३ ॥ स ताड्यमानो बहुभिः शरैः सन्नतपर्व्वभिः। न विव्यथे राचसेन्द्रो भिद्यमान इवाचलः ॥ ३४ ॥ ततः प्राग्ज्योतिषः क्रुद्धस्तोमरान् स चतुर्द्दश। प्रेषयामास समरे तांश्च चिच्छेद राचसः ॥ ३५ ॥ तांश्छित्त्वा स महाबाहुस्तोमरान्निशितैः शरैः। भगदत्तञ्च विव्याध सप्तत्या वज्रसन्निभैः ॥ ३६ ॥ ततः प्राग्ज्योतिषो राजा प्रहसन्निव भारत। तस्याश्वांश्चतुरः सङ्ख्ये प्रेषयामास मृत्यवे ॥ ३७ ॥ स हताश्वे रथे तिष्ठन् राचसेन्द्रः प्रतापवान्। शक्तिं चिक्षेप वेगेन प्राग्ज्योतिषगजं प्रति ॥ ३८ ॥ तामापतन्तीं सहसा हेमदण्डां सुवेगिताम्। त्रिधा चिच्छेद नृपतिः सा व्यकीर्य्यत भूतले ॥ ३९ ॥ शक्तिं विनिहितां दृष्ट्वा हैड़िम्बः प्राद्रवद्भयात्। यथेन्द्रस्य रणात् पूर्वं नमुचिर्दैत्यसत्तमः ॥ ४० ॥ तं विजित्य रणे शूरं विक्रान्तं ख्यातपौरुषम्। अजेयं समरे राजन् यमेन वरु-

घोन च ॥ ४१ ॥ पाण्डवौ समरे सेना सम्ममर्द्द सकुञ्जर ।
यथा वनगजो राजन् मृद्नं सरति पद्मिनीम् ॥ ४२ ॥ मद्रेश्वरस्तु
समरे यमाभ्यां सह सङ्गत । स्वस्रीयौ छादयाञ्चक्रे शरौघैः
पाण्डुनन्दनौ ॥ ४३ ॥ सहदेवस्तु समरे मातुलं वीक्ष्य सङ्गतम् ।
अवारयच्छरौघेण मेघो यद्दिवाकरम् ॥ ४४ ॥ छाद्यमान शरौ-
घेन हृष्टरूपतरोऽभवत । तयोश्चाप्यभवत् प्रीतिरतुला मातृ-
कारणात ॥ ४५ ॥ ततः प्रहस्य समरे नकुलस्य महारथ ।
अश्वान् वै चतुरो राजंश्चतुर्भिः सायकोत्तमैः ॥ ४६ ॥ प्रेषयामास
समरे यमस्य सदनम्प्रति । हताश्वात्त रथात्तूर्णमवप्लुत्य महा-
रथ ॥ ४७ ॥ आरुरोह ततो यानं भ्रातुरेव यशस्विन । एकस्थौ
तु रथे शूरौ दृढे विक्षिप्य कार्मुके ॥ ४८ ॥ मद्रराजरथं क्रुद्धौ
छादयेतां रणोत्कटौ । सञ्छाद्यमानो बहुभिः शरैः सन्नतपर्वभिः
॥ ४९ ॥ स्वस्रीयाभ्यां नरव्याघ्रो नाकम्पत यथाचलः । प्रहस-
न्निव तांश्चापि शरवृष्टिं जघान ह ॥ ५० ॥ सहदेवस्तत क्रुद्ध
शरमुद्यम्य वीर्य्यवान् । मद्रराजमभिद्रुत्य प्रेषयामास भारत ॥५१॥
स शरः प्रेषितस्तेन गरुत्मानिव वेगवान् । मद्रराज विनिर्भिद्य
निपपात महीतले ॥ ५२ ॥ स गाढविद्धो व्यथितो रथोपस्थे
महारथ । निषसाद महाराज कश्मलञ्च जगाम ह ॥ ५३ ॥ तं
विसञ्ज्ञं निपतितं सूत सम्प्रेक्ष्य संयुगे । अपोवाह रथेनाजौ
यमाभ्यामभिपीड़ितम् ॥ ५४ ॥ दृष्ट्वा मद्रेश्वररथं धार्त्तराष्ट्रा
पराङ्मुखम् । सर्वे विमनसो भूत्वा नेदमस्तीत्यचिन्तयन् ॥ ५५ ॥
निर्ज्जित्य मातुलं सङ्ख्ये माद्रीपुत्रौ महारथौ । दध्मतुर्मुदितौ
शङ्खौ सिंहनादञ्च नेदतुः ॥ ५६ ॥ अभिदुद्रुवतुर्हृष्टौ तव सैन्यं
विशाम्पते । यथा दैत्यचमूं राजन्निन्द्रोपेन्द्राविवामरौ ॥ ५७ ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि द्वन्द्वयुद्धे
चतुरशीतोऽध्याय ॥ ८४ ॥

सञ्जय उवाच । ततो युधिष्ठिरो राजा मध्यं प्राप्ते दिवाकरे ।
श्रुतायुषमभिप्रेक्ष्य चोदयामास वाजिनः ॥ १ ॥ अभ्यधावत्ततो
राजा श्रुतायुषमरिन्दमम् । विनिघ्नन् सायकैस्तीक्ष्णैर्नवभिर्नत-
पर्व्वभिः ॥ २ ॥ स सम्वार्य्य रणे राजा प्रेषितान् पाण्डुसूनुना ।
शरान् सप्त महेष्वासः कौन्तेयाय समर्पयत् ॥ ३ ॥ ते तस्य
कवचं भित्त्वा पपुः शोणितमाहवे । असूनिव विचिन्वन्तो देहे
तस्य महात्मनः ॥ ४ ॥ पाण्डवस्तु भृशं विद्धस्तेन राज्ञा महा-
त्मना । रणे वराहकर्णेन राजानं हृदि विव्यधे ॥ ५ ॥ अथा-
परेण भल्लेन केतुं तस्य महात्मनः । रथश्रेष्ठो रथात्तूर्णं भूमौ
पार्थो न्यपातयत् ॥ ६ ॥ केतुं निपतितं दृष्ट्वा श्रुतायुः स तु
पार्थिव । पाण्डवं विशिखैस्तीक्ष्णैराजन् विव्याध सप्तभिः ॥ ७ ॥
ततः क्रोधात् प्रजज्वाल धर्म्मपुत्रो युधिष्ठिरः । यथा युगान्ते
भूतानि धक्ष्यन्निव हुताशनः ॥ ८ ॥ क्रुद्धन्तु पाण्डवं दृष्ट्वा देव-
गन्धर्व्वराक्षसाः । प्रविव्यथुर्महाराज व्याकुलं चाप्यभूज्जगत् ॥ ९ ॥
सर्व्वेषाञ्चैव भूतानामिदमासीन्मनोगतम् । त्रींल्लोकानद्य संक्रुद्धो
नृपोऽयं धक्ष्यतीति वै ॥ १० ॥ ऋषयश्चैव देवाश्च चक्रुः स्वस्त्ययनं
महत् । लोकानां नृप शान्त्यर्थं क्रोधिते पाण्डवे तदा ॥ ११ ॥
स च क्रोधसमाविष्टो लेलिहन् सृक्कणी मुहुः । दधारात्मवपु-
र्घोरं युगान्तादित्यसन्निभम् ॥ ११ ॥ ततः सर्व्वाणि सैन्यानि
तावकानि विशाम्पते । निराशान्यभवंस्तत्र जीवितं प्रति भारत
॥ १२ ॥ स तु धैर्य्येण तं कोपं सन्निवार्य्य महायशाः । श्रुता-
युषः प्रचिच्छेद मुष्टिदेशे महद्धनुः ॥ १३ ॥ अथैनं छिन्नधन्वानं
नाराचेन स्तनान्तरे । निर्बिभेद रणे राजा सर्व्वसैन्यस्य पश्यतः
॥ १४ ॥ सत्वरं च रणे राजंस्तस्य वाहान्महात्मनः । निजघान
शरैः क्षिप्रं स्तनन्त सुमहाबल ॥ १५ ॥ हताश्वन्तु रथं त्यक्त्वा
दृष्ट्वा राज्ञस्तु पौरुषम् । विप्रदुद्राव वेगेन श्रुतायुः समरे

॥ १६ ॥ तस्मिन्स्थिते महेष्वासे धर्मपुत्रेण संयुगे । दुर्य्योधनबलं राजन् सर्वमासीत् पराङ्मुखम् ॥ १७ ॥ एतत् कृत्वा महाराज धर्मपुत्रो युधिष्ठिरः । व्यात्ताननो यथा कालस्तव सैन्यं जघान ह ॥ १८ ॥ चेकितानश्च वार्ष्णेयो गौतमं रथिनाम्वरम् । प्रेक्षतां सर्वसैन्यानां छादयामास सायकैः ॥ १९ ॥ सन्निवार्य्य शरांस्तांस्तु कृपः शारद्वतो युधि । चेकितानं रणे यत्तं राजन् विव्याध पत्रिभिः ॥ २० ॥ अथापरेण भल्लेन धनुश्चिच्छेद भारत । सारथिञ्चास्य भल्लेन चिप्रहस्तो न्यपातयत् ॥ २१ ॥ हयांश्चास्यावधीद्राजन्नुभौ च पार्ष्णिसारथी । सोऽवप्लुत्य रथात्तूर्णं गदां जग्राह सात्वतः ॥ २२ ॥ स तया वीरघातिन्या गदया गदिनाम्वरः । गौतमस्य हयान् हत्वा सारथिञ्च न्यपातयत् ॥ २३ ॥ भूमिष्ठो गौतमस्तस्य शरांश्चिक्षेप षोडश । ते शराः सात्वतं भित्त्वा प्राविशन् धरणीतलम् ॥ २४ ॥ चेकितानस्ततः क्रुद्धो गदां चिक्षेप तां पुनः । गौतमस्य वधाकाङ्क्षी वृत्रस्येव पुरन्दरः ॥ २५ ॥ तामापतन्तीं विपुलामश्मगर्भां महागदाम् । शरैरनेकसाहस्रैर्वारयामास गौतमः ॥ २६ ॥ चेकितानस्ततः खड्गं कोषादुद्धृत्य भारत । लाघवं परमास्थाय गौतमं समुपाद्रवत् ॥ २७ ॥ गौतमोऽपि धनुस्त्यक्त्वा प्रगृह्यासिं सुसंस्कृतम् । वेगेन महता राजंश्चेकितानमुपाद्रवत् ॥ २८ ॥ तावुभौ बलसम्पन्नौ निस्त्रिंशवरधारिणौ । निस्त्रिंशाभ्यां सुतीक्ष्णाभ्यामन्योन्यं सन्ततक्षतुः ॥ २९ ॥ निस्त्रिंशवेगाभिहतौ ततस्तौ पुरुषर्षभौ । धरणीं समनुप्राप्तौ सर्वभूतनिषेविताम् ॥ ३० ॥ मूर्च्छयाभिपरीताङ्गौ व्यायामेन च मोहितौ । ततोऽभ्यधावद्वेगेन करकर्षः सुहृत्तया ॥ ३१ ॥ चेकितानं तथाभूतं दृष्ट्वा समरदुर्मदः । रथमारोपयच्चैनं सर्वसैन्यस्य पश्यतः ॥ ३२ ॥ तथैव शकुनिः शूरः स्यालस्तव विशाम्पते । आरोपयद्रथं तूर्णं गौतमं रथिनाम्वरम् ॥ ३३ ॥

सौमदत्तिं तथा क्रुद्धो धृष्टकेतुर्महाबलः । नवत्या सायकैः क्षिप्रं
राजन् विव्याध वक्षसि ॥ ३४ ॥ सौमदत्तिरुरःस्थैस्तैर्भृशं बाणै-
रशोभत । मध्यन्दिने महाराज रश्मिभिस्तपनो यथा ॥ ३५ ॥
भूरिश्रवास्तु समरे धृष्टकेतुं महारथम् । हतसूतहयं चक्रे
विरथं सायकोत्तमैः ॥ ३६ ॥ विरथन्तं समालोक्य हताश्वं हत-
सारथिम् । महता शरवर्षेण छादयामास संयुगे ॥ ३७ ॥ स
च तं रथमुत्सृज्य धृष्टकेतुर्महामनाः । आरुरोह ततो यानं
शतानीकस्य मारिष ॥ ३८ ॥ चित्रसेनो विकर्णश्च राजन् दुर्म-
र्षणस्तथा । रथिनो हेमसन्नाहाः सौभद्रमभिदुद्रुवुः ॥ ३९ ॥
अभिमन्योस्ततस्तैस्तु घोरं युद्धमवर्त्तत । शरीरस्य यथा राजन्
वातपित्तकफैस्त्रिभिः ॥ ४० ॥ विरथांस्तव पुत्रांस्तु कृत्वा राजन्
महाहवे । न जघान नरव्याघ्रः स्मरन् भीमवचस्तदा ॥ ४१ ॥
ततो राज्ञां बहुशतैर्गजाश्वरथयायिभिः । प्रवृत्तं समरे भीष्मं
देवैरपि दुरासदम् ॥ ४२ ॥ प्रयान्तं शीघ्रमुद्वीक्ष्य परित्रातुं
सुतांस्तव । अभिमन्युं समुद्दिश्य बालमेकं महारथम् ॥ ४३ ॥
वासुदेवमुवाचेदं कौन्तेयः श्वेतवाहनः । चोदयाश्वान् हृषी-
केश यत्रैते बहुला रथाः ॥ ४४ ॥ एते हि बहवः शूराः कृतास्त्रा
युद्धदुर्मदाः । यथा न हन्युः सेनां नस्तथा माधव चोदय ॥ ४५ ॥
एवमुक्तः स वार्ष्णेयः कौन्तेयेनामितौजसा । रथं श्वेतहयैर्युक्तं
प्रेषयामास संयुगे ॥ ४६ ॥ निष्टानको महानासीत्तव सैन्यस्य
मारिष । यदर्जुनो रणे क्रुद्धः संयातस्तावकान् प्रति ॥ ४७ ॥
समासाद्य तु कौन्तेयो राजस्तान् भीष्मरक्षिणः । सुशर्माणमथो
राजन्निदं वचनमब्रवीत् ॥ ४८ ॥ जानामि त्वां युधि श्रेष्ठं अत्यं
तं पूर्ववैरिणम् । पर्य्यायस्याद्य सम्प्राप्तं फलं पश्य सुदारुणम्
॥ ४९ ॥ अद्य ते दर्शयिष्यामि पूर्वप्रेतान् पितामहान् । एवं
सञ्जल्पतस्तस्य बीभत्सोः शत्रुघातिनः ॥ ५० ॥ श्रुत्वापि परुषं

वाक्यं सुशर्मा रथयूथपः । न चैनमब्रवीत् किञ्चिच्छुभं वा यदि वाशुभम् ॥ ५१ ॥ अभिगम्यार्जुनं वीरं राजभिर्बहुभिर्वृतः । पुरस्तात् पृष्ठतश्चैव पार्श्वतश्चैव सर्वतः ॥ ५२ ॥ परिवार्यार्जुनं सङ्ख्ये तव पुत्रैः सहानघ । शरैः सञ्छादयामास मेघैरिव दिवाकरम् ॥ ५३ ॥ ततः प्रवृत्तः सुमहान् सङ्ग्रामः शोणितोदकः । तावकानाञ्च समरे पाण्डवानाञ्च भारत ॥ ५४ ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि सुशर्मार्जुनसमागमे
पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

——

सञ्जय उवाच । स तुद्यमानस्तु शरैर्धनञ्जयः पदाहतो नाग इव श्वसन् बली । बाणेन बाणेन महारथानां चिच्छेद चापानि रणे प्रसह्य ॥ १ ॥ सञ्छिद्य चापानि च तानि राज्ञां तेषां रणे वीर्यवतां क्षणेन । विव्याध बाणैर्युगपन्महात्मा निःशेषतां तेष्वथ मन्यमानः ॥ २ ॥ निपेतुराजौ रुधिरप्रदिग्धास्ते ताडिताः शक्रसुतेन राजन् । विभिन्नगात्राः पतितोत्तमाङ्गा गतासवश्छिन्नतनुत्रकायाः ॥ ३ ॥ महीं गताः पार्थबलाभिभूता विचित्ररूपा युगपद्विनेशुः । दृष्ट्वा हतांस्तान् युधि राजपुत्रांस्त्रिगर्तराजः प्रययौ रथेन ॥ ४ ॥ तेषां रथानामथ पृष्ठगोपा द्वात्रिंशतोऽन्येऽभ्यपतन्त पार्थम् । तथैव ते तं परिवार्य पार्थं प्रकृष्य चापानि महारवाणि ॥ ५ ॥ अवीवृषन् बाणमहौघवृष्ट्या यथा गिरिं तोयधरा जलौघैः । सम्पीड्यमानश्च शरौघवृष्ट्या धनञ्जयस्तान् युधि जातरोषः ॥ ६ ॥ षष्ट्या शरैः संयति तैलधौतैर्जघान तानप्यथ पृष्ठगोपान् । षष्टिं रथांस्तानवजित्य सङ्ख्ये धनञ्जयः प्रीतमना यशस्वी ॥ ७ ॥ अथात्वरद्भीष्मवधाय जिष्णु
...नि राज्ञां समरे निहत्य । त्रिगर्तराजो निहतान् समीक्ष्य

महारथांस्तानथ बन्धुवर्गान् ॥ ८ ॥ ततो पुरस्कृत्य नराधिपां-
स्तान् जगाम पार्थं त्वरितो वधाय । अभिद्रुतं चास्त्रविदां वरिष्ठं
धनञ्जयं वीक्ष्य शिखण्डिमुख्याः ॥ ९ ॥ अभ्युद्ययुस्ते शितशस्त्र-
हस्ता रिरक्षिषन्तो रथमर्जुनस्य । पार्थोऽपि तानापततः
समीक्ष्य त्रिगर्त्तराजप्रहितान् कुवीरान् ॥ १० ॥ विध्वंसयित्वा
समरे धनुष्मान् गाण्डीवमुक्तैर्निशितैः पृषत्कैः । भीष्मं यियासु-
र्युधि सन्ददर्श दुर्योधनं सैन्धवादींश्च राज्ञः ॥ ११ ॥ आवा-
रयिष्यन्तमभिसम्प्रयाय मुहूर्त्तमायोध्य बलेन वीरः । उत्सृज्य
राजानमनन्तवीर्य्यो जयद्रथादींश्च नृपान्महौजाः ॥ १२ ॥ ययौ
ततो भीमबलो मनस्वी गाङ्गेयमाजौ शरचापपाणिः । युधि-
ष्ठिरश्चोग्रबलो महात्मा समाययौ त्वरितो जातकोपः ॥ १३ ॥
मद्राधिपं समभित्यज्य संख्ये स्वभागमाप्तमनन्तकीर्त्तिम् । सार्द्धं
समाद्रीसुतभीमसेनैः भीष्मं ययौ शान्तनवं रणाय ॥ १४ ॥ तैः
सम्प्रयुक्तैः स महारथौघैर्गङ्गासुतः समरे चित्रयोधी । न विव्यथे
शान्तनवो महात्मा समागतैः पाण्डुसुतैः समस्तैः ॥ १५ ॥ उपेत्य
राजा युधि सत्यसन्धो जयद्रथोऽप्युग्रबलो मनस्वी । चिच्छेद
चापानि महारथानां प्रसह्य तेषां धनुषा वरेण ॥ १६ ॥ युधि-
ष्ठिरं भीमसेनं यमौ च पार्थं तथा युधि सञ्जातकोपः । दुर्योधनः
क्रोधविषो महात्मा जघान बाणैरनलप्रकाशैः ॥ १७ ॥ कृपेण
शल्येन शलेन चैव तथा विभो चित्रसेनेन चापि । विद्धाः शरै-
स्तेऽतिविवृद्धकोपा देवा यथा दैत्यगणैः समेतैः ॥ १८ ॥ छिन्ना-
युधं शान्तनवेन राज्ञा शिखण्डिनं प्रेक्ष्य च जातकोपः । अजात-
शत्रुः समरे महात्मा शिखण्डिनं क्रुद्ध उवाच वाक्यम् ॥ १९ ॥
उक्त्वा तथा त्वं पितुरग्रतो मामहं हनिष्यामि महाव्रतन्तम् ।
भीष्मं शरौघैर्विमलार्कवर्णैः सत्यं वदामीति कृता प्रतिज्ञा ॥ २० ॥
त्वया न चैनां सफलां करोषि देवव्रतं यन्न निहंसि युद्धे ।

तेन सम्यक् प्रणीतानि शरजालानि भारत । प्रतिजग्राह गाङ्गेय
शतशोऽथ सहस्रश ॥ ६ ॥ तथैव शरजालानि भीष्मेणास्तानि
मारिष । आकाशे समदृश्यन्त खगमाना व्रजा इव ॥ ७ ॥
निमेषार्द्धात्तु कौन्तेय भीष्म शान्तनवो युधि । अदृश्य समरे
चक्रे शरजालेन भारत ॥ ८ ॥ ततो युधिष्ठिरो राजा कौरवस्य
महात्मन । नाराचम्प्रेषयामास क्रुद्ध आशीविषोपमम् ॥ ९ ॥
असम्प्राप्तन्तु त तत्र क्षुरप्रेण महारथ । चिच्छेद समरे राजन्
भीष्मस्तस्य धनुश्च्युतम् ॥ १० ॥ तन्तु छित्त्वा रणे भीष्मो नाराच
कालसम्मितम् । निजघ्ने कौरवेन्द्रस्य हयान् काञ्चनभूषणान्
॥ ११ ॥ हताश्वन्तु रथ त्यक्त्वा धर्मपुत्रो युधिष्ठिर । आरुरोह
रथ तूर्णं नकुलस्य महात्मन ॥ १२ ॥ यमावपि सुसङ्क्रुद्धो समा
साद्य रणे तदा । शरै सञ्छादयामास भीष्म परपुरञ्जय
॥ १३ ॥ तौ तु दृष्ट्वा महाराज भीष्मबाणप्रपीडितौ । जगामाथ
परा चिन्ता भीष्मस्य वधकाङ्क्षया ॥ १४ ॥ ततो युधिष्ठिरो
राजन् राज्ञस्तान् समचोदयत् । भीष्म शान्तनव सर्वे निहतेति
सुहृद्गणान् ॥ १५ ॥ ततस्ते पार्थिवा सर्वे श्रुत्वा पार्थस्य भाषि
तम । महता रथवंशेन परिवव्रु पितामहम् ॥ १६ ॥ स सम
न्तात् परिवृत पिता देवव्रतस्तव । चिक्रीड़ धनुषा राजन्
पातयानो महारथान् ॥ १७ ॥ त चरन्त रणे पार्था ददृशु
कौरव युधि । मृगमध्ये प्रविश्यैव यथा सिंहशिशु वने ॥ १८ ॥
तर्ज्जयान रणे शूरांस्त्रासयानञ्च सायकै । दृष्ट्वा त्रेसुर्महाराज
सिंह मृगगणा इव ॥ १९ ॥ रणे भरतसिंहस्य ददृशु क्षत्रिया
गतिम् । अग्नेर्वायुसहायस्य यथा कक्ष दिधक्षत ॥ २० ॥
शिरांसि रथिनां भीष्म पातयामास संयुगे । तालेभ्य इव पक्कानि
फलानि कुशलो नर ॥ २१ ॥ पतद्भिश्च महाराज शिरोभि
र्धरणीतले । बभूव तुमुल शब्द पततामश्मनामिव ॥ २२ ॥

तस्मिंस्तु तुमुले युद्धे वर्त्तमाने सुदारुणे । सर्व्वेषामेव सैन्यानामासीद्व्यतिकरो महान् ॥ २३ ॥ भिन्नेषु तेन व्यूहेषु क्षत्रिया इतरेतरम् । एकमेकं समाहूय युद्धायैवोपतस्थिरे ॥ २४ ॥ शिखण्डी तु समासाद्य भारतानां पितामहम् । अभिदुद्राव वेगेन तिष्ठतिष्ठेति चाब्रवीत् ॥ २५ ॥ अनादृत्य ततो भीष्मस्तं शिखण्डिनमाहवे । प्रययौ सृञ्जयान् भीष्मः स्त्रीत्वं चिन्त्य शिखण्डिनः ॥ २६ ॥ सृञ्जयास्तु ततो हृष्टा दृष्ट्वा भीष्मं महाहवे । सिंहनादान् बहुविधांश्चक्रुः शङ्खविमिश्रितान् ॥ २७ ॥ ततः प्रववृते युद्धं व्यतिषक्तरथद्विपम् । अपरां दिशमास्थाय स्थिते सवितरि प्रभो ॥ २८ ॥ धृष्टद्युम्नोऽथ पाञ्चाल्यः सात्यकिश्च महारथः । पीड़यन्तौ भृशं सैन्यं शक्तितोमरवृष्टिभिः ॥ २९ ॥ शरैश्च बहुभी राजन्नाजघ्नतुस्तावकान् रणे । ते हन्यमाना समरे तावकाः पुरुषर्षभ ॥ ३० ॥ आर्य्यां युद्धे मतिं कृत्वा न त्यजन्ति स्म संयुगम् । यथोत्साहञ्च समरे जघ्नुर्लोकमहारथाः ॥ ३१ ॥ तत्राक्रन्दो महानासीत्तावकानां महात्मनाम् । बध्यतां समरे राजन् पार्षतेन महात्मना ॥ ३२ ॥ तं श्रुत्वा निनदं घोरं तावकानां महारथौ । विन्दानुविन्दावावन्त्यौ पार्षतं प्रत्युपस्थितौ ॥ ३३ ॥ तौ तस्य तुरगान् हत्वा त्वरमाणौ महारथौ । छादयामासतुरुभौ शरवर्षेण पार्षतम् ॥ ३४ ॥ अवप्लुत्याथ पाञ्चाल्यो रथात्तूर्णं महारथ । आरुरोह रथं तूर्णं सात्यकेः सुमहात्मनः ॥ ३५ ॥ ततो युधिष्ठिरो राजा महत्या सेनया वृतः । आवन्त्यौ समरे क्रुद्धावभ्ययात् स परन्तपौ ॥ ३६ ॥ तथैव तव पुत्रोऽपि सर्व्वोद्योगेन मारिष । विन्दानुविन्दौ समरे परिवार्य्योपतस्थिवान् ॥ ३७ ॥ अर्ज्जुनश्चापि सङ्क्रुद्धः समरे क्षत्रियर्षभान् । अयोधयत सङ्ग्रामे वज्रपाणिरिवासुरान् ॥ ३८ ॥ द्रोणश्च समरे क्रुद्धः पुत्रस्य प्रियकृत्तव । व्यधमत् सर्व्वपाञ्चालांस्तूल...

॥ ३९ ॥ दुर्य्योधनपुरोगास्तु पुत्रास्तव विशाम्पते। परिवार्य्य
रणे भीष्म युयुधु पाण्डवै सह ॥ ४० ॥ ततो दुर्य्योधनो राजा
लोहितायति भास्करे। अब्रवीत् तावकान् सर्व्वांस्त्वरध्वमिति
भारत ॥ ४१ ॥ युध्यतान्तु तथा तेषां कुर्व्वतां कर्म्म दुष्करम्।
अस्त गिरिमथारूढे न प्रकाशति भास्करे ॥ ४२ ॥ प्रावर्त्तत
नदी घोरा शोणितौघतरङ्गिणी। गोमायुगणसङ्कीर्णा क्षणेन
रजनीमुखे ॥ ४३ ॥ शिवाभिरशिवाभिश्च रुवन्तीभि समन्तत।
घोरमायोधन जज्ञे भूतसङ्घसमाकुलम् ॥ ४४ ॥ राक्षसाश्च पिशा
चाश्च तथान्ये पिशिताशिन। समन्ततो व्यदृश्यन्त शतशोऽथ
सहस्रश ॥ ४५ ॥ अर्ज्जुनोऽथ सुशर्म्मादीन् राजस्तान् सपदा-
नुगान्। विजित्य पृतनामध्ये ययौ स्वशिविर प्रति ॥ ४६ ॥
युधिष्ठिरोऽपि कौरव्यो भ्रातृभि सहित प्रभु। प्रययौ शिविर
राजन्निशायां सेनया वृत ॥ ४७ ॥ भीमसेनोऽपि राजेन्द्र दुर्य्यो
धनमुखान्रथान्। अवजित्य नृपान् सङ्ख्ये प्रययौ शिविरम्प्रति
॥ ४८ ॥ दुर्य्योधनोऽपि नृपति परिवार्य्य महारणे। भीष्म
शान्तनव तूर्णं प्रययौ शिविर प्रति ॥ ४९ ॥ द्रोणो द्रौणि
कृप शल्य कृतवर्म्मा च सात्वत। परिवार्य्य चमू सर्व्वां प्रययु
शिविर प्रति ॥ ५० ॥ तथैव सात्यकी राजन् धृष्टद्युम्नश्च पार्षत।
परिवार्य्य रणे योधान्ययतु शिविर प्रति ॥ ५१ ॥ एवमेते
महाराज तावका पाण्डवै सह। पर्य्यवर्त्तन्त सहिता निशा
काले परन्तपा ॥ ५२ ॥ तत स्वशिविर गत्वा पाण्डवा कुरव
स्तथा। न्यविशन्त महाराज पूजयन्त परस्परम् ॥ ५३ ॥ रक्षा
कृत्वात्मन शूरा न्यस्य गुल्मान् यथाविधि। अपनीय च शल्यांस्ते
स्नात्वा च विविधैर्ज्जलै ॥ ५४ ॥ कृतस्वस्त्ययना सर्व्वे स्तूय
मानाश्च बन्दिभि। गीतवादित्रशब्देश्च व्यक्रीडन्त यशस्विन ॥ ५५ ॥
मुहूर्त्तमिव तत्सर्व्वमभवत् स्वर्गसन्निभम्। न हि युद्धकथाङ्काञ्चि

स्तव चक्रुर्नरर्षभा ॥ ५६ ॥ ते प्रसुप्ते बले तत्र परिश्रान्तजने नृप। हस्त्यश्वबहुले राजन् प्रेक्षणीये बभूवतुः ॥ ५७ ॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि सप्तमदिवसयुद्धावहारे सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

---

सञ्जय उवाच। परिणाम्य निशान्तान्तु सुखसुप्ता जनेश्वराः। कुरवः पाण्डवाश्चैव पुनर्युद्धाय निर्ययुः ॥ १ ॥ ततः शब्दो महानासीत् सैन्ययोरुभयोरपि। निर्गच्छमानयोः सङ्ख्ये सागरप्रतिमो महान् ॥ २ ॥ ततो दुर्य्योधनो राजा चित्रसेनो विविंशतिः। भीष्मश्च रथिनां श्रेष्ठो भारद्वाजश्च वीर्य्यवान् ॥ ३ ॥ एकीभूताः सुसंयत्ताः कौरवाणां महारथाः। व्यूहान् वै विदधू राजन् पाण्डवान् प्रति दंशिताः ॥ ४ ॥ भीष्मः कृत्वा महाव्यूहं पिता तव विशाम्पते। सागरप्रतिमं घोरं वाहनोर्म्मितरङ्गितम् ॥ ५ ॥ अग्रतः सर्व्वसैन्यानां भीष्मः शान्तनवो ययौ। मालवैर्द्दाक्षिणात्यैश्च आवन्त्यैश्च समन्वितः ॥ ६ ॥ ततोऽनन्तरमेवासीद्भारद्वाजः प्रतापवान्। पुलिन्दैः पारदैश्चैव तथा क्षुद्रकमालवैः ॥ ७ ॥ द्रोणादनन्तरं यत्तो भगदत्तः प्रतापवान्। मागधैश्च कलिङ्गैश्च पिशाचैश्च विशाम्पते ॥ ८ ॥ भगदत्तादनु नृप कौसल्योऽथ बृहद्बलः। मेकलैस्त्रैपुरैश्चैव चिच्छिलैश्च समन्वितः ॥ ९ ॥ बृहद्बलस्ततः शूरस्त्रैगर्त्तः प्रस्थलाधिपः। काम्बोजैर्बहुभिः सार्द्धं यवनैश्च सहस्रशः ॥ १० ॥ द्रौणिश्च रभसः शूरस्त्रिगर्त्तादनु भारत। प्रययौ सिंहनादेन नादयानो धरातलम् ॥ ११ ॥ तथा सर्व्वेण सैन्येन राजा दुर्य्योधनस्तदा। द्रौणेरनन्तरं प्रायात् सोदर्य्यैः परिवारितः ॥ १२ ॥ दुर्य्योधनादनु ततः कृपः शारद्वतो ययौ। एवमेष महाव्यूहः प्रययौ सागरोपमः ॥ १३ ॥

रेजुस्तव पताकाश्च श्वेतच्छत्राणि वा विभो । अङ्गदान्यथ चित्राणि
महार्हाणि धनूंषि च ॥ १४ ॥ तच्च दृष्ट्वा महाव्यूहं तावकानां
महारथ । युधिष्ठिरोऽब्रवीत्तूर्णं पार्षतं पृतनापतिम् ॥ १५ ॥
पश्य व्यूहं महेष्वास निर्मितं सागरोपमम् । प्रतिव्यूहंस्त्वमपि वै
कुरु पार्षत मा चिरम् ॥ १६ ॥ ततः स पार्षतः शूरो व्यूहं चक्रे
सुदारुणम् । शृङ्गाटकं महाराज परव्यूहविनाशनम् ॥ १७ ॥
शृङ्गाभ्यां भीमसेनश्च सात्यकिश्च महारथ । रथैरनेकसाहस्रै
स्तथा हयपदातिभिः ॥ १८ ॥ नाभ्यामभून्नरश्रेष्ठ श्वेताश्वो
वानरध्वजः । मध्ये युधिष्ठिरो राजा माद्रीपुत्रौ च पाण्डवौ
॥ १९ ॥ अथेतरे महेष्वासा सहसैन्या नराधिपा । व्यूहं त
पूरयामासुर्व्यूहशास्त्रविशारदाः ॥ २० ॥ अभिमन्युस्ततः पश्चा
द्विराटश्च महारथ । द्रौपदेयाश्च संहृष्टा राक्षसश्च घटोत्कच
॥ २१ ॥ एवमेतन्महाव्यूहं व्यूह्य भारत पाण्डवा । अतिष्ठन्
समरे शूरा योद्धुकामा जयैषिणः ॥ २२ ॥ भेरीशब्दाश्च तुमुला
विमिश्राः शङ्खनिस्वनैः । क्ष्वेडितास्फोटितोत्क्रुष्टैः सुभीमा सर्वतो
दिशः ॥ २३ ॥ ततः शूराः समासाद्य समरे ते परस्परम् ।
नेत्रैरनिमिषैराजन्नवैक्षन्त परस्परम् ॥ २४ ॥ मनोभिस्ते मनु
ष्येन्द्र पूर्वं योधाः परस्परम् । युद्धाय समवर्त्तन्त समाहूयेतरेतरम्
॥ २५ ॥ ततः प्रववृते युद्धं घोररूपं भयावहम् । तावकानां
परेषाञ्च निघ्नतामितरेतरम् ॥ २६ ॥ नाराचा निशिता सङ्ख्ये
सम्पतन्ति स्म भारत । व्यात्तानना भयकरा उरगा इव सङ्घश
॥ २७ ॥ निष्पेतुर्विमला शक्त्यस्तैलधौता सुतेजना । अम्बु
देभ्यो यथा राजन् भ्राजमाना शतह्रदा ॥ २८ ॥ गदाश्च
विमलैः पट्टैः पिनद्धा स्वर्णभूषिता । पतन्त्यस्तत्र दृश्यन्ते गिरि
शृङ्गोपमा शुभा ॥ २९ ॥ निस्त्रिंशाश्च व्यराजन्त विमलाम्बर
[illegible] । आर्षभाणि च चर्माणि शतचन्द्राणि भारत ॥ ३० ॥

अयोमन्त रणे राजन् पतमानानि सर्व्वंश । अन्योऽन्यं समरे सेने युध्यमाने नराधिप ॥ ३१ ॥ अयोमेता यथा दैत्यदेवसेने समुद्यते । अभ्यवर्त्तन्त समरे तेऽन्योऽन्यं वै समन्ततः ॥ ३२ ॥ रथास्तु रथिभिस्तूर्णं प्रेषिता परमाहवे,। युगैर्युगानि संश्लिष्य युयुधुः पार्थिवर्षभाः ॥ ३३ ॥ दन्तिनां युध्यमानानां सङ्घर्षात् पावकोऽभवत् । दन्तेषु भरतश्रेष्ठ सधूमः सर्व्वतो दिशम् ॥ ३४ ॥ प्रासैरभिहताः केचिद्गजयोधाः समन्ततः । पतमानाः स्म दृश्यन्ते गिरिश्टङ्गान्नगा इव ॥ ३५ ॥ पदातायाप्यदृश्यन्त निघ्नन्तो हि परस्परम् । विचित्ररूपधराः शूरा नखरप्रासयोधिनः ॥ ३६ ॥ अन्योऽन्यन्ते समासाद्य कुरुपाण्डवसैनिका । शरैर्नानाविधाकारै रणे निन्युर्यमक्षयम् ॥ ३७ ॥ ततः शान्तनवो भीष्मो रथघोषेण नादयन् । अभ्यागमद्रणे पाण्डून् धनुःशब्देन मोहयन् ॥ ३८ ॥ पाण्डवानां रथाश्चापि नदन्तो भैरवं रवम् । अभ्यद्रवन्त संयत्ता धृष्टद्युम्नपुरोगमाः ॥ ३९ ॥ तत प्रववृते युद्धं तव तेषाञ्च भारत । नराश्वरथनागानां व्यतिषक्तं परस्परम् ॥४०॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि अष्टमदिवसयुद्धारम्भे अष्टाशीतोऽध्यायः ॥ ८८ ॥

---

सञ्जय उवाच । भीष्मन्तु समरे क्रुद्धं प्रपतन्तं समन्ततः । न शेकुः पाण्डवा द्रष्टुं तपन्तमिव भास्करम् ॥ १ ॥ ततः सर्व्वाणि सैन्यानि धर्मपुत्रस्य शासनात् । अभ्यद्रवन्त गाङ्गेयं मर्द्दयन्तं शितैः शरैः ॥ २ ॥ स तु भीष्मो रणश्लाघी सोमकान् सहसृञ्जयान् । पाञ्चालांश्च महेष्वासान् पातयामास सायकैः ॥ ३ ॥ ते वध्यमाना भीष्मेण पाञ्चालाः सोमकैः सह । भीष्ममेवाभ्ययुस्तूर्णं त्यक्ता मृत्युकृतं भयम् ॥ ४ ॥ स तेषां रथिनाम्वीरो भीष्मः

शान्तनवो युधि। चिच्छेद समरे राजन् वाहनस्य शिरांसि च
॥ ५ ॥ विरथान् रथिनश्चक्रे पिता देवव्रतस्तव। पतितान्युत्तमा-
ङ्गानि हयेभ्यो हयसादिनाम् ॥ ६ ॥ निर्मनुष्यांश्च मातङ्गान्
शयानान् पर्वतोपमान्। अपश्याम महाराज भीष्मास्त्रेण प्रमो
हितान् ॥ ७ ॥ न तत्रासीत् पुमान् कश्चित् पाण्डवानां विशा
म्पते। अन्यत्र रथिनां श्रेष्ठाद्भीमसेनात् महाबलात् ॥ ८ ॥ स
हि भीष्मं समासाद्य ताड़यामास संयुगे। ततो निष्टानको घोरो
भीष्मभीमसमागमे ॥ ९ ॥ बभूव सर्वसैन्यानां घोररूपो भया
नकः। तथैव पाण्डवा हृष्टाः सिंहनादमथानदन् ॥ १० ॥ ततो
दुर्य्योधनो राजा सोदर्य्यैः परिवारितः। भीष्मं जुगोप समरे
वर्त्तमाने जनक्षये ॥ ११ ॥ भीमस्तु सारथिं हत्वा भीष्मस्य
रथिनांवर। विद्रुताश्वे रथे तस्मिन् द्रवमाणे समन्ततः ॥१२॥
सुनाभस्य शरेणाशु शिरश्चिच्छेद वारिहा। क्षुरप्रेण सुतीक्ष्णेन
स हतो न्यपतद्भुवि ॥ १३ ॥ तस्मिन् हते महेष्वासे तव पुत्रे
महारथे। नामृष्यन्त रणे शूराः सोदराः सप्त मारिष ॥ १४ ॥
आदित्यकेतुर्बह्वाशी कुण्डधारो महोदरः। अपराजितः पण्डि
तको विशालाक्षः सुदुर्जयः ॥ १५ ॥ पाण्डवं चित्रसन्नाहा
विचित्रकवचायुधाः। अभ्यवर्त्तन्त सङ्ग्रामे योद्धुकामारिमर्द्दनाः
॥ १६ ॥ महोदरस्तु समरे भीमं विव्याध पत्रिभिः। नवभि
र्वज्रसङ्काशैर्नमुचिं वृत्रहा यथा ॥ १७ ॥ आदित्यकेतुः सप्तत्या
बह्वाशी चापि पञ्चभिः। नवत्या कुण्डधारस्तु विशालाक्षश्च
सप्तभिः ॥ १८ ॥ अपराजितो महाराज पराजिष्णुर्महारथः।
शरैर्बहुभिरानर्च्छद्भीमसेनं महाबलम् ॥ १९ ॥ रणे पण्डितक
श्चैनं त्रिभिर्बाणैः समर्पयत्। स तन्न मम्षे भीमः शत्रुभिर्वध्य
माहवे ॥ २० ॥ धनुः प्रपीड्य वामेन करेणामित्रकर्षणः। शिर
श्चिच्छेद समरे शरेणानतपर्वणा ॥ २१ ॥ अपराजितस्य सुनस

तव पुत्रस्य संयुगे। पराजितस्य भीमेन निपपात शिरो महीम्
॥ २२ ॥ अथापरेण भल्लेन कुण्डधारं महारथम्। प्राहिणो-
न्मृत्युलोकाय सर्वसैन्यस्य पश्यतः ॥ २३ ॥ ततः पुनरमेयात्मा
प्रसन्धाय शिलीमुखम्। प्रेषयामास समरे पण्डितं प्रति भारत
॥ २४ ॥ स शरः पण्डितं हत्वा विवेश धरणीतलम्। यथा नरं
निहत्याशु भुजगः कालचोदितः ॥ २५ ॥ विशालाक्षशिरश्छित्त्वा
पातयामास भूपते। त्रिभिः शरैरदीनात्मा स्मरन् क्लेशं पुरा-
तनम् ॥ २६ ॥ महोदरं महेष्वासं नाराचेन स्तनान्तरे। विव्याध
समरे राजन् स हतो न्यपतद्भुवि ॥ २७ ॥ आदित्यकेतोश्छत्रञ्च
छित्त्वा वाणेन संयुगे। भल्लेन भृशतीक्ष्णेन शिरश्चिच्छेद भारत
॥ २८ ॥ वह्वाशिनं ततो भीमः शरेणानतपर्व्वणा। प्रेषयामास
संक्रुद्धो यमस्य सदनं प्रति ॥ २९ ॥ प्रदुद्रुवुस्ततस्त्वन्ये तव पुत्रा
विशाम्पते। मन्यमाना हि तत्सत्यं सभायां तस्य भाषितम् ॥३०॥
ततो दुर्य्योधनो राजा भ्रातृव्यसनकर्षितः। अब्रवीत्तावकान्
सर्व्वान् भीमोऽयं वध्यतामिति ॥ ३१ ॥ एवमेते महेष्वासाः पुत्रा-
स्तव विशाम्पते। भ्रातॄन् सन्दृश्य निहतान् प्रास्मरन्त हि तद्वचः
॥ ३२ ॥ यदुक्तवान् महाप्राज्ञः क्षत्ता हितमनामयम्। तदिदं
समनुप्राप्तं वचनं सत्यवादिनः ॥ ३३ ॥ लोभमोहसमाविष्टः पुत्र-
प्रीत्या जनाधिप। न बुध्यसे पुरा यत्तु तथ्यमुक्तं हितं वचः
॥ ३४ ॥ तथैव च वधार्थाय पुत्राणां पाण्डवो बली। नूनं
जातो महाबाहुर्यथा हन्तीह कौरवान् ॥ ३५ ॥ ततो दुर्य्योधनो
राजा भीष्ममासाद्य मारिष। दुःखेन महता विष्टो विललापा-
तिदुःखितः ॥ ३६ ॥ निहता भ्रातरः शूरा भीमसेनेन मे युधि।
यतमानास्तथान्येऽपि हन्यन्ते सर्व्वसैनिकाः ॥ ३७ ॥ भवान् मध्य-
स्थिततया नित्यमस्मानुपेक्षते। सोऽहं कापथमारूढः पश्य दैव-
मिदं मम ॥ ३८ ॥

सञ्जय उवाच। एतच्छ्रुत्वा तत क्रुद्ध पिता देवव्रतस्तव। सुयोधनमिदं वाक्यमब्रवीत साश्रुलोचनम् ॥ ३९ ॥ उक्तमेतन्मया पूर्वं द्रोणेन विदुरेण च। गान्धार्य्या च यशस्विन्या तत्त्व तात न बुद्धवान् ॥ ४० ॥ समयश्च मया पूर्वं कृतो व शत्रुकर्षण। नाहं युधि विमोक्तव्यो नाप्याचार्य्यः कथञ्चन ॥ ४१ ॥ यं यं हि धार्त्तराष्ट्राणां भीमो द्रक्ष्यति संयुगे। हनिष्यति रणे तन्त सत्यमेतद् ब्रवीमि ते ॥ ४२ ॥ स त्वं राजन् स्थिरो भूत्वा दृढां कृत्वा रणे मतिम्। योधयस्व रणे पार्थान् स्वयं कृत्वा परायणम् ॥ ४३ ॥ न शक्याः पाण्डवा जेतुं देवैरपि सवासवैः। तस्माद्युद्धे मतिं कृत्वा स्थिरां युध्यस्व भारत ॥ ४४ ॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि आदित्यकेतुप्रभृतिवधे एकोननवतितमोऽध्यायः ॥ ८९ ॥

—

सञ्जय उवाच। इदं तत् समनुप्राप्तं वक्तुर्वचनमुत्तमम्।
न बुद्धवानसि विभो प्रोच्यमानं हितं तथा ॥ ९ ॥ निवारय
सुतान् द्यूतात् पाण्डवान् मा द्रुहेति च। सुहृदां हितकामानां
ब्रुवतां तत्तदेव च ॥ १० ॥ न शुश्रूषसि तद्वाक्यं मर्त्यः पथ्यमिवौ-
षधम्। तदेव त्वामनुप्राप्तं वचनं साधुभाषितम् ॥ ११ ॥ विदुर-
द्रोणभीष्माणां तथान्येषां हितैषिणाम्। अकृत्वा वचनं पथ्यं
क्षयं गच्छन्ति कौरवाः ॥ १२ ॥ तदेतत् समनुप्राप्तं पूर्वमेव
विशाम्पते। तस्मात् शृणु तत्त्वेन यथा युद्धमवर्त्तत ॥ १३ ॥
मध्याह्ने सुमहारौद्रः सङ्ग्रामः समपद्यत। लोकक्षयकरो राजं-
स्तन्मे निगदतः शृणु ॥ १४ ॥ ततः सर्वाणि सैन्यानि धर्म-
पुत्रस्य शासनात्। संरब्धान्यभ्यधावन्त भीष्ममेव जिघांसया
॥ १५ ॥ धृष्टद्युम्नः शिखण्डी च सात्यकिश्च महारथः। युक्ता-
नीका महाराज भीष्ममेव समभ्ययुः ॥ १६ ॥ विराटो द्रुपदश्चैव
सहितः सर्वसोमकैः। अभ्यद्रवन्त सङ्ग्रामे भीष्ममेव महारथाः
॥ १७ ॥ कैकेया धृष्टकेतुश्च कुन्तिभोजश्च दंशिताः। युक्तानीका
महाराज भीष्ममेव समभ्ययुः ॥ १८ ॥ अर्जुनो द्रौपदेयाश्च
चेकितानश्च वीर्यवान्। दुर्योधनसमादिष्टान् राज्ञः सर्वान् सम-
भ्ययुः ॥ १९ ॥ अभिमन्युस्तथा वीरो हैडिम्बश्च महारथः।
भीमसेनश्च सङ्क्रुद्धस्तेऽभ्यधावत कौरवान् ॥ २० ॥ त्रिधाभूतैरव-
ध्यन्त पाण्डवैः कौरवा युधि। तथैव कौरवै राजन्नवध्यन्त परे
रणे ॥ २१ ॥ द्रोणस्तु रथिनां श्रेष्ठः सोमकान् सृञ्जयैः सह।
अभ्यद्रवत सङ्क्रुद्धः प्रेषयिष्यन् यमक्षयम् ॥ २२ ॥ तत्राक्रन्दो
महानासीत् सृञ्जयानां महात्मनाम्। वध्यतां समरे राजन्
भारद्वाजेन धन्विना ॥ २३ ॥ द्रोणेन निहतास्तत्र क्षत्रिया बहवो
रणे। विचेष्टन्तो व्यदृश्यन्त व्याधिक्लिष्टा नरा इव ॥ २४ ॥
कूजतां क्रन्दतां चैव स्तनतां चैव संयुगे। अनिशं श्रूयते शब्दः

च्युतक्षेमाणां नृणामिव ॥ २५ ॥ तथैव कौरवेयाणां भीमसेनो
महाबलः । चकार कदनं घोरं क्रुद्धः काल इवापरः ॥ २६ ॥
वध्यतां तव सैन्यानामन्योऽन्येन महारणे । प्रावर्त्तत नदी घोरा
रुधिरौघप्रवाहिनी ॥ २७ ॥ स सङ्ग्रामो महाराज घोररूपो-
ऽभवन्महान् । कुरूणां पाण्डवानाञ्च यमराष्ट्रविवर्द्धनः ॥ २८ ॥
ततो भीमो रणे क्रुद्धो रभसश्च विशेषतः । गजानीकं समासाद्य
प्रेषयामास मृत्यवे ॥ २९ ॥ तत्र भारत भीमेन नाराचाभिहता
गजाः । पेतुः सेदुश्च नेदुश्च दिशश्च परिबभ्रमुः ॥ ३० ॥ छिन्न-
हस्ता महानागाश्छिन्नगात्राश्च मारिष । क्रौञ्चवद्विनदन्तश्च
पृथिवीमधिशिश्यिरे ॥ ३१ ॥ नकुलः सहदेवश्च हयानीकमभि-
द्रुतौ । ते हयाः काञ्चनापीड़ा रुक्मभाण्डपरिच्छदाः ॥ ३२ ॥
वध्यमाना व्यदृश्यन्त शतशोऽथ सहस्रशः । पतद्भिश्च हयै राजन्
समास्तीर्य्यत मेदिनी ॥ ३३ ॥ निर्जिह्वैश्च श्वसद्भिश्च कूजद्भिश्च
गतासुभिः । हयैर्बभौ नरश्रेष्ठ नानारूपधरैर्धरा ॥ ३४ ॥ अर्जु-
नेन हतैः सङ्ख्ये तथा भारत राजभिः । प्रबभौ वसुधा घोरा
तत्र तत्र विशाम्पते ॥ ३५ ॥ रथैर्भग्नैर्ध्वजैश्छिन्नैश्छत्रैश्च सुमहा-
प्रभैः । चामरव्यजनैश्छिन्नैर्निकृत्तैश्च महायुधैः ॥ ३६ ॥ हारै-
र्निष्कैः सकेयूरैः शिरोभिश्च सकुण्डलैः । उष्णीषैरपविद्धैश्च

च्युतक्लेशानां नृणामिव ॥ २५ ॥ तथैव कौरवेयाणां भीमसेनो
महाबलः । चकार कदनं घोरं क्रुद्धः काल इवापरः ॥ २६ ॥
वध्यतां तव सैन्यानामन्योऽन्येन महारणे । प्रावर्त्तत नदी घोरा
रुधिरौघप्रवाहिनी ॥ २७ ॥ स सङ्ग्रामो महाराज घोररूपो
ऽभवन्महान् । कुरूणां पाण्डवानाञ्च यमराष्ट्रविवर्द्धनः ॥ २८ ॥
ततो भीमो रणे क्रुद्धो रभसश्च विशेषतः । गजानीकं समासाद्य
प्रेषयामास मृत्यवे ॥ २९ ॥ तत्र भारत भीमेन नाराचाभिहता
गजाः । पेतुः सेदुश्च नेदुश्च दिशश्च परिवभ्रमुः ॥ ३० ॥ छिन्न
हस्ता महानागाश्छिन्नगात्राश्च मारिष । क्रौञ्चवद्विनदन्तश्च
पृथिवीमधिशिश्यिरे ॥ ३१ ॥ नकुलः सहदेवश्च हयानीकमभि
द्रुतौ । ते हया काञ्चनापीड़ा रुक्मभाण्डपरिच्छदाः ॥ ३२ ॥
वध्यमानाः व्यदृश्यन्त शतशोऽथ सहस्रशः । पतद्भिश्च हयै राजन्
समास्तीर्य्यत मेदिनी ॥ ३३ ॥ निर्जिह्वैश्च श्वसद्भिश्च कूजद्भिश्च
गतासुभिः । हयैर्बभौ नरश्रेष्ठ नानारूपधरैर्धरा ॥ ३४ ॥ अर्जु
नेन हतैः सङ्ख्ये तथा भारत राजभिः । प्रबभौ वसुधा घोरा
तत्र तत्र विशाम्पते ॥ ३५ ॥ रथैर्भग्नैर्ध्वजैश्छिन्नैश्छत्रैश्च सुमहा
प्रभैः । चामरव्यजनैश्छिन्नैरनेकैश्च महायुधे ॥ ३६ ॥ हारै
र्निष्कैः सकेयूरैः शिरोभिश्च सकुण्डलैः । उष्णीषैरपविद्धैश्च
पताकाभिश्च सर्वशः ॥ ३७ ॥ अनुकर्षैः शुभैराजन् योक्त्रैश्च सह
रश्मिभिः । सञ्छन्ना वसुधा भाति वसन्ते कुसुमैरिव ॥ ३८ ॥
एवमेष क्षयो वृत्तः पाण्डूनामपि भारत । क्रुद्धे शान्तनवे भीष्मे
द्रोणे च रथिनाम्वरे ॥ ३९ ॥ अश्वत्थाम्नि कृपे चैव तथैव कृत
वर्मणि । तथेतरेषु क्रुद्धेषु तावकानामपि क्षयः ॥ ४० ॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि अष्टमदिवसयुद्धे
नवतितमोऽध्यायः ॥ ९० ॥

क्षुतक्षामाणां नृणामिव ॥ २५ ॥ तथैव कौरवेयाणां भीमसेनो
महाबलः । चकार कदनं घोरं क्रुद्धः काल इवापरः ॥ २६ ॥
वध्यतां तव सैन्यानामन्योऽन्येन महारणे । प्रावर्त्तत नदी घोरा
रुधिरौघप्रवाहिनी ॥ २७ ॥ स सङ्ग्रामो महाराज घोररूपो
ऽभवन्महान् । कुरूणां पाण्डवानाञ्च यमराष्ट्रविवर्द्धनः ॥ २८ ॥
ततो भीमो रणे क्रुद्धो रभसश्च विशेषतः । गजानीकं समासाद्य
प्रेषयामास मृत्यवे ॥ २९ ॥ तत्र भारत भीमेन नाराचाभिहता
गजाः । पेतुः सेदुश्च नेदुश्च दिशश्च परिबभ्रमुः ॥ ३० ॥ छिन्न
हस्ता महानागाश्छिन्नगात्राश्च मारिष । क्रौञ्चवद्विनदन्तश्च
पृथिवीमधिशिश्यिरे ॥ ३१ ॥ नकुलः सहदेवश्च हयानीकमभि
द्रुतौ । ते हयाः काञ्चनापीडा रुक्मभाण्डपरिच्छदाः ॥ ३२ ॥
वध्यमाना व्यदृश्यन्त शतशोऽथ सहस्रशः । पतद्भिश्च हयै राजन्
समास्तीर्यत मेदिनी ॥ ३३ ॥ निर्जिह्वैश्च श्वसद्भिश्च कूजद्भिश्च
गतासुभिः । हयैर्बभौ नरश्रेष्ठ नानारूपधरैर्धरा ॥ ३४ ॥ अर्जु
नेन हतैः सङ्ख्ये तथा भारत राजभिः । प्रबभौ वसुधा घोरा
तत्र तत्र विशाम्पते ॥ ३५ ॥ रथैर्भग्नैर्ध्वजैश्छिन्नैश्छत्रैश्च सुमहा
प्रभैः । चामरव्यजनैश्छिन्नैर्निकृत्तैश्च महायुधैः ॥ ३६ ॥ हारै
र्निष्कैः सकेयूरैः शिरोभिश्च सकुण्डलैः । उष्णीषैरपविद्धैश्च
पताकाभिश्च सर्वशः ॥ ३७ ॥ अनुकर्षैः शुभै राजन् योक्त्रैश्च स
रश्मिभिः । सञ्छन्ना वसुधा भाति वसन्ते कुसुमैरिव ॥ ३८ ॥
एवमेष क्षयो वृत्तः पाण्डूनामपि भारत । क्रुद्धे शान्तनवे भीष्मे
द्रोणे च रथिनां वरे ॥ ३९ ॥ अश्वत्थाम्नि कृपे चैव तथैव कृत
वर्मणि । तथेतरेषु क्रुद्धेषु तावकानामपि क्षयः ॥ ४० ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि अष्टमदिवसयुद्धे
नवतितमोऽध्यायः ॥ ९० ॥

---

नृप। ते हयाः काञ्चनापीडा नानावर्णा महाजवाः ॥१८॥
उत्पेतुः सहसा राजन् हंसा इव महोदधौ। ते तदैव
समासाद्य हयसङ्घान् महाजवान् ॥ १९ ॥ क्रोडैः क्रोडानभि
घ्नन्तो घोणाभिश्च परस्परम्। निपेतुः सहसा राजन् स्ववेगाभि
हता भुवि ॥ २० ॥ निपतद्भिस्तथा तैश्च हयसङ्घैः परस्परम्।
शुश्रुवे दारुणः शब्दः सुपर्णपतने यथा ॥ २१ ॥ तथैव च महा
राज समेत्यान्योऽन्यमाहवे। परस्परवधं घोरं चक्रुस्ते च
वाजिनः ॥ २२ ॥ तस्मिंस्तदा वर्त्तमाने सङ्कुले तुमुले भृशम्।
उभयोरपि सम्भ्रान्ता हयसङ्घाः समन्ततः ॥ २३ ॥ प्रक्षीणसायका
शूरा निहताश्वाः श्रमातुराः। विलयं समनुप्राप्तास्तक्षमाणाः
परस्परम् ॥ २४ ॥ ततः क्षीणे हयानीके किञ्चिच्छेषे च भारत।

दुर्मनः । प्रययौ सिंहनादेन यत्रार्जुनसुतो युवा ॥ ५२ ॥ आवृतैर्युद्धकुशलैर्विमलप्रासयोधिभिः । वीरैः प्रहारिभिर्युक्तैः स्वैरनीकैः समावृतः ॥ ५३ ॥ ततः प्रेप्सुर्महाराज हिडिम्बाद्भैमसेनिं द्विषाबलैरंयोत्तमे । निहन्तुकामः समरे इरावन्तं महाबलम् ॥ ५४ ॥ इरावानपि संक्रुद्धस्त्वरमाणः पराक्रमी । हन्तुकाममभिवन्नो राक्षसं प्रत्यवारयत ॥ ५५ ॥ तमापतन्तं सम्प्रेक्ष्य राक्षसः सुमहाबलः । त्वरमाणस्ततो मायां प्रयोक्तुमुपचक्रमे ॥ ५६ ॥ तेन मायामया सृष्टा हयास्तावन्त एव हि । आरूढा राक्षसैर्घोरैः शूलपट्टिशपाणिभिः ॥ ५७ ॥ ते संरब्धाः समागम्य द्विसाहस्राः प्रहारिणः । अचिरादगमयामास प्रेतलोकं परस्परम् ॥ ५८ ॥ तस्मिंस्तु निहते सैन्ये तावुभौ युद्धदुर्मदौ । सङ्ग्रामे व्यवतिष्ठेतां यथा वै वृत्रवासवौ ॥ ५९ ॥ आद्रवन्तमभिप्रेक्ष्य राक्षसं युद्धदुर्मदम् । इरावान् क्रोधसंरब्धो वारयन् सुमहाबलः ॥ ६० ॥ समभ्यासगतस्याजौ तस्य खड्गेन दुर्मतेः । चिच्छेद कार्मुकं शीघ्रं शरान् वै पञ्च पञ्चधा ॥ ६१ ॥ स निकृत्तं धनुर्दृष्ट्वा खञ्जवेन समाविशत् । इरावन्तमभिक्रुद्धं मोहयन्निव मायया ॥ ६२ ॥ ततोऽन्तरीक्षमुत्पत्य इरावानपि राक्षसम् । विमोहयित्वा मायाभिस्तस्य गात्राणि सङ्युगे ॥ ६३ ॥ चिच्छेद सर्वधर्मज्ञ कामरूपो दुरासदः । तथा स राक्षसश्रेष्ठः कृत्त कृत्त पुन पुन ॥ ६४ ॥ सम्बभूव महाराज समवाप्य च यौवनम् । माया हि सहजा तेषां वयोरूपञ्च कामजम् ॥ ६५ ॥ एवं तद्राक्षसस्याङ्गं छिन्नं छिन्नं व्यरोचत । इरावानथ संक्रुद्धो राक्षसं तं महाबलम् ॥ ६६ ॥ परश्वधेन तीक्ष्णेन चिच्छेद स पुनः पुनः । स तेन बलिना वीरश्छिद्यमान इव द्रुमः ॥ ६७ ॥ राक्षसो व्यनदद्घोरं स शब्दस्तुमुलोऽभवत् । परश्वधक्षतं रक्षः सुस्राव रुधिरं बहु ॥ ६८ ॥ ततश्चुक्रोध बलवाश्चक्रे वेगञ्च सङ्युगे । आर्यशृङ्गिस्ततो

दृष्ट्वा समरे यत्नमूर्च्छितम् ॥ ६९ ॥ कृत्वा घोरं महद्रूपं ग्रहीतुमुपचक्रमे। अर्जुनस्य सुतं वीरमिरावन्तं यशस्विनम् ॥ ७० ॥ सङ्ग्रामशिरसो मध्ये सर्व्वेषां तत्र पश्यताम्। तां दृष्ट्वा तादृशीं मायां राक्षसस्य दुरात्मनः ॥ ७१ ॥ इरावानपि संक्रुद्धो मायां स्रष्टुं प्रचक्रमे। तस्य क्रोधाभिभूतस्य संयुगे ह्यनिवर्त्तिनः ॥ ७२ ॥ योऽन्वयो मातृकस्तस्य स एनमभिपेदिवान्। स नागैर्बहुशो राजन् सर्व्वतः संवृतो रणे ॥ ७३ ॥ दधार सुमहद्रूपमनन्त इव वेगवान्। ततो बहुविधैर्नागैश्छादयामास राक्षसम् ॥ ७४ ॥ छाद्यमानस्तु नागैः स ध्यात्वा राक्षसपुङ्गवः। सौपर्णं रूपमास्थाय भक्षयामास पन्नगान् ॥ ७५ ॥ मायया भक्षिते तस्मिन्नन्वये तस्य मातृके। विमोहितमिरावन्तमसिना राक्षसोऽवधीत् ॥ ७६ ॥ सकुण्डलं समुकुटं पद्मेन्दुसदृशप्रभम्। इरावतः शिरो रक्षः पातयामास भूतले ॥ ७७ ॥ तस्मिंस्तु निहते वीरे राक्षसेनार्ज्जुनात्मजे। विशोकाः समपद्यन्त धार्त्तराष्ट्राः सराजकाः ॥ ७८ ॥ तस्मिन् महति सङ्ग्रामे तादृशे भैरवे पुनः। महान् व्यतिकरो घोरः सेनयोः समपद्यत ॥ ७९ ॥ हया गजाः पदाताश्च विमिश्रा दन्तिभिर्हताः। रथाश्वा दन्तिनश्चैव पत्तिभिस्तत्र सूदिताः ॥ ८० ॥ तथा पत्तिरथौघाश्च हयाश्च बहवो रणे। रथिभिर्निहता राजंस्तव तेषाञ्च सङ्कुले ॥ ८१ ॥ अजानन्नर्ज्जुनश्चापि निहतं पुत्रमौरसम्। जघान समरे शूरान् राज्ञस्तान् भीष्मरक्षिणः ॥ ८२ ॥ तथैव तावका राजन् सृञ्जयाश्च सहस्रशः। जुहुवुः समरे प्राणान्निघ्नन्तरितरेतरम् ॥ ८३ ॥ मुक्तकेशाश्च रथिनश्छिन्नवालधिकार्म्मुकाः। बाहुभिः समयुध्यन्त समवेताः परस्परम् ॥ ८४ ॥ तथा मर्म्मातिगैर्भीष्मो निजघान महारथान्। कम्पयन् समरे सेनां पाण्डवानां महाबलः ॥ ८५ ॥ तेन यौधिष्ठिरे सैन्ये बहवो मानवा हताः। दन्तिनः सादिनश्चैव रथिनोऽथ हयास्तथा ॥ ८६ ॥

तत्र भारत भीमस्य रणे दृष्ट्वा पराक्रमम् । तथैव भीमसेनस्य पार्षतस्य च भारत ॥ ८७ ॥ रौद्रमार्गैस्तथा युद्धं सात्वतस्य च धन्विनः । दृष्ट्वा द्रोणस्य विक्रान्तं पाण्डवान् भयमाविशत् ॥ ८८ ॥ एक एव रणे शक्तो हन्तुमस्मान् ससैनिकान् । किं पुनः पृथिवीशूरैर्योधव्रातैः समावृत ॥ ८९ ॥ इत्यब्रुवन् महाराज पार्था द्रोणेन पीड़िताः । वर्त्तमाने तथा रौद्रे सङ्ग्रामे भरतर्षभ ॥९०॥ उभयोः सेनयोः शूरा नाम्यष्यन्त परस्परम् । आविष्टा इव युध्यन्ते रक्षोभूतैर्महाबलाः ॥ ९१ ॥ तावका पाण्डवेयाश्च संरब्धास्तात धन्विनः । न स्म पश्यामहे कश्चित् प्राणान् परिरक्षति । सङ्ग्रामे दैत्यसङ्ग्रामे तस्मिन् वीरवरक्षये ॥ ९२ ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि इरावद्वधे
एकनवतोऽध्यायः ॥९१ ॥

---

धृतराष्ट्र उवाच । इरावन्तन्तु निहतं श्रुत्वा पार्था महाबलाः । सङ्ग्रामे यदकुर्वन्त तन्ममाचक्ष्व सञ्जय ॥ १ ॥

सञ्जय उवाच । इरावन्तन्तु निहतं सङ्ग्रामे वीक्ष्य राक्षस । व्यनदत् सुमहानादं भैमसेनिर्घटोत्कचः ॥ २ ॥ नदतस्तस्य शब्देन पृथिवी सागराम्बरा । सपर्वतवना राजंश्चचाल सुभृशं तदा ॥ ३ ॥ अन्तरीक्षं दिशश्चैव सर्वाश्च प्रदिशस्तथा । तं श्रुत्वा सुमहानादं तव सैन्यस्य भारत ॥ ४ ॥ ऊरुस्तम्भः समभवद्वेपथुः स्वेद एव च । सर्व एव च राजेन्द्र तावका दीनचेतसः ॥ ५ ॥ सर्वतः समवेष्टन्त सिंहाद्भीता गजा इव । निनदन् सुमहानादं निर्घातमिव राक्षस ॥ ६ ॥ ज्वलितं शूलमुद्यम्य रूपं कृत्वा विभीषणम् । नानाप्रहरणैर्घोरैर्वृतो राक्षसपुङ्गवैः ॥ आजगाम सुसंक्रुद्ध कालान्तकयमोपमः । समापतन्तं

सम्प्रेच्य संक्रुद्धं भीमदर्शनम् ॥ ८ ॥ खं बलञ्च भयात्तस्य प्रायशो विमुखीकृतम् । ततो दुर्य्योधनो राजा घटोत्कचमुपाद्रवत् ॥ ९ ॥ प्रगृह्य सशरं चाप सिंहवद्विनदन्मुहुः । पृष्ठतोऽनुययौ चैनं स्रवद्भिः पर्व्वतोपमैः ॥ १० ॥ कुञ्जरैर्दशसाहस्रैर्वङ्गानामधिपः स्वयम् । समापतन्त सम्प्रेच्य गजानीकेन संवृतम् ॥ ११ ॥ पुत्रं तव महाराज चुकोप स निशाचरः । ततः प्रववृते युद्धं तुमुलं लोमहर्षणम् ॥ १२ ॥ राक्षसानाञ्च राजेन्द्र दुर्य्योधनबलस्य तु । गजानीकञ्च सम्प्रेच्य मेघवृन्दमिवोद्यतम् ॥ १३ ॥ अभ्यधावन् सुसंक्रुद्धा राक्षसाः शस्त्रपाणयः । नदन्तो विविधान्नादान्मेघा इव सविद्युतः ॥ १४ ॥ शरशक्त्यृष्टिनाराचैर्निघ्नन्तो गजयोधिनः । भिन्दिपालैस्तथा शूलैर्मुद्गरैः सपरश्वधैः ॥ १५ ॥ पर्व्वताग्रैश्च वृक्षैश्च निजघ्नुस्ते महागजान् । भिन्नकुम्भान् विरुधिरान् भिन्नगात्रांश्च वारणान् ॥ १६ ॥ अपश्याम महाराज वध्यमानान्निशाचरैः । तेषु प्रक्षीयमाणेषु भग्नेषु गजयोधिषु ॥ १७ ॥ दुर्य्योधनो महाराज राक्षसान् समुपाद्रवत् । अमर्षवशमापन्नस्त्यक्त्वा जीवितमात्मनः ॥ १८ ॥ मुमोच निशितान् बाणान् राक्षसेषु महाबलः । जघान च महेष्वासः प्रधानांस्तत्र राक्षसान् ॥ १९ ॥ संक्रुद्धो भरतश्रेष्ठ पुत्रो दुर्य्योधनस्तव । वेगवन्तं महारौद्रं विद्युज्जिह्वं प्रमाथिनम् ॥ २० ॥ शरैश्चतुर्भिश्चतुरो निजघान महारथ । ततः पुनरमेयात्मा शरवर्षं दुरासदम् ॥ २१ ॥ मुमोच भरतश्रेष्ठ निशाचरबलं प्रति । तत्तु दृष्ट्वा महत्कर्म तव पुत्रस्य मारिष ॥ २२ ॥ क्रोधेनाभिप्रजज्वाल भैमसेनिर्महाबलः । विस्फार्य्य च महच्चापमिन्द्राशनिसमप्रभम् ॥ २३ ॥ अभिदुद्राव वेगेन दुर्य्योधनममर्षणम् । तमापतन्तमुद्वीक्ष्य कालसृष्टमिवान्तकम् ॥ २४ ॥ न विव्यथे महाराज पुत्रो दुर्य्योधनस्तव । तथैनमब्रवीत् क्रुद्धः क्रोधसंरक्तलोचनः ॥२५॥

अद्यानृण्यं गमिष्यामि पितॄणां मातुरेव च। ये त्वया सनृपसैन्यैः दीर्घकालं प्रवासिताः ॥ २६ ॥ यच्च ते पाण्डवा राजन् यद्यूते पराजिताः। यच्चैव द्रौपदी कृष्णा एकवस्त्रा रजस्वला ॥ २७ ॥ सभामानीय दुर्बुद्धे बहुधा क्लेशिता त्वया। तव च प्रियकामेन ह्याश्रमस्था दुरात्मना ॥ २८ ॥ सैन्धवेन परिक्लिष्टा परिभूय पितॄन् मम। एतेषामवमानानामन्येषाञ्च कुलाधमम् ॥ २९ ॥ अन्तमद्य गमिष्यामि यदि नोत्सृज्यसे रणे। एवमुक्त्वा तु हैडिम्बो महदिस्वार्च्य कार्मुकम् ॥ ३० ॥ सन्दश्य दशनैरोष्ठं सृक्किणी परिलेलिहत्। महता शरवर्षेण दुर्योधनमवाकिरत्। पर्वतं वारिधाराभिः प्रावृषीव बलाहकः ॥ ३१ ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि हैडिम्बयुद्धे द्विनवतितमोऽध्यायः ॥ ९२ ॥



॥ ७ ॥ स नागप्रवरेणाजौ बलिना शीघ्रगामिना। यतो दुर्य्योधनरथस्तं मार्गं प्रत्यपद्यत ॥ ८ ॥ रथन्तु वारयामास कुञ्जरेण सुतस्य ते। मार्गमावारितं दृष्ट्वा राज्ञा वङ्गेन धीमता ॥ ९ ॥ घटोत्कचो महाराज क्रोधसंरक्तलोचन। उद्यतां तां महाशक्तिं तस्मिंश्चिक्षेप वारणे ॥ १० ॥ स तयाभिहतो राजंस्तेन बाहुविमुक्तया। सञ्जातरुधिरोत्पीडः पपात च ममार च ॥ ११ ॥ उत्पत्य च गजाच्चापि वङ्गानामीश्वरो बली। जवेन समभिद्रुत्य जगाम धरणीतलम् ॥ १२ ॥ दुर्य्योधनोऽपि सम्प्रेक्ष्य पातितं वरवारणम्। प्रभग्नञ्च बलं दृष्ट्वा जगाम परमां व्यथाम् ॥ १३ ॥ क्षत्रधर्मं पुरस्कृत्य आत्मनश्चाभिमानिताम्। प्राप्तेऽपक्रमणे राजा तस्थौ गिरिरिवाचलः ॥ १४ ॥ सन्धाय च शितं वाणं कालाग्निसमतेजसम्। मुमोच परमक्रुद्धस्तस्मिन् घोरे निशाचरे ॥ १५ ॥ तमापतन्तं सम्प्रेक्ष्य वाणमिन्द्राशनिप्रभम्। लाघवाद्वञ्चयामास महात्मा वै घटोत्कचः ॥ १६ ॥ भूयश्च विननादोग्रं क्रोधसंरक्तलोचनः। त्रासयन् सर्वसैन्यानि युगान्ते जलदो यथा ॥ १७ ॥ तं श्रुत्वा निनदं घोरं तस्य भीमस्य रक्षसः। आचार्य्यमुपसङ्गम्य भीष्मः शान्तनवोऽब्रवीत् ॥ १८ ॥ यथैष निनदो घोरं श्रूयते राक्षसेरितः। हैडिम्बो युध्यते नूनं राज्ञा दुर्य्योधनेन ह ॥१९॥ नैष शक्यो हि सङ्ग्रामे जेतुं भूतेन केनचित्। तत्र गच्छत भद्रं वो राजानं परिरक्षत ॥ २० ॥ अभिद्रुतो महाभागो राक्षसेन महात्मना। एतद्धि परमं कृत्यं सर्व्वेषां नः परन्तपाः ॥ २१ ॥ पितामहवचः श्रुत्वा त्वरमाणा महारथाः। उत्तमं जवमास्थाय प्रययुर्य्यत्र कौरवः ॥ २२ ॥ द्रोणश्च सोमदत्तश्च वाह्लिकोऽथ जयद्रथः। कृपो भूरिश्रवाः शल्य आवन्त्यः सबृहद्बलः ॥ २३ ॥ अश्वत्थामा विकर्णश्च चित्रसेनो विविंशतिः। रथाश्चानेकसाहस्रा ये तेषामनुयायिनः ॥ २४ ॥ अभिद्रुतं परीप्सन्तः पुत्रं दुर्य्यो-

धनं तव । तदनीकमनाधृष्यं पालितन्तु महारथैः ॥ २५ ॥ आत-
तायिनमायान्त प्रेक्ष्य राक्षससत्तमः । नाकम्पत महाबाहुर्मैनाक
इव पर्वतः ॥ २६ ॥ प्रगृह्य विपुलं चापं ज्ञातिभिः परिवारितः ।
शूलमुद्गरहस्तैश्च नानाप्रहरणैरपि ॥ २७ ॥ ततः समभवद्युद्धं
तुमुलं लोमहर्षणम् । राक्षसानाञ्च मुख्यस्य दुर्य्योधनबलस्य च
॥ २८ ॥ धनुषां कूजतां शब्दः सर्वतस्तुमुलो रणे । अश्रूयत
महाराज वंशानां दह्यतामिव ॥ २९ ॥ शस्त्राणां पात्यमानानां
कवचेषु शरीरिणाम् । शब्दः समभवद्राजन् गिरीणामिव भिद्य-
ताम् ॥ ३० ॥ वीरबाहुविसृष्टानां तोमराणां विशाम्पते । रूप-
मासीद्वियत्स्थानां सर्पाणामिव सर्पताम् ॥ ३१ ॥ ततः परम-
संक्रुद्धो विस्फार्य्य सुमहद्धनुः । राक्षसेन्द्रो महाबाहुर्विनदन्
भैरवं स्वनम् ॥ ३२ ॥ आचार्य्यस्यार्द्धचन्द्रेण क्रुद्धश्चिच्छेद कार्मु-
कम् । सोमदत्तस्य भल्लेन ध्वजञ्चोन्मथ्य चानदत् ॥ ३३ ॥ बाह्लि-
कञ्च त्रिभिर्बाणैः प्रत्यविध्यत स्तनान्तरे । कृपमेकेन विव्याध

राक्षसाधिपः ॥ ४२ ॥ विव्येध निशितांस्तीक्ष्णान् शरानाशी-
विषोपमान् । बिभिदुस्ते महाराज शल्यं युद्धविशारदम् ॥ ४३ ॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि हैडिम्बयुद्धे
त्रिनवतोऽध्यायः ॥ ९३ ॥

---

सञ्जय उवाच । विमुखीकृत्य तान् सर्व्वांस्तावकान् युधि राक्षसः । जिघांसुर्भरतश्रेष्ठ दुर्य्योधनमुपाद्रवत् ॥ १ ॥ तमापतन्तं सम्प्रेक्ष्य राजानं प्रति वेगितम् । अभ्यधावन् जिघांसन्तस्तावका युद्धदुर्म्मदाः ॥ २ ॥ तालमात्राणि चापानि विकर्षन्तो महारथाः । तमस्त्वमभ्यधावन्तो नदन्तः सिंहसङ्घवत् ॥ ३ ॥ अथैनं शरवर्षेण समन्तात् पर्य्यवारयन् । पर्व्वतं वारिधाराभिः शरदीव बलाहकाः ॥ ४ ॥ स गाढविद्धो व्यथितस्तोत्रार्द्दित इव द्विपः । उत्पपात तदाकाशं समन्ताद्वैनतेयवत् ॥ ५ ॥ व्यनदत् सुमहानादं जीमूत इव शारदः । दिशः खं विदिशश्चैव नादयन् भैरवस्वनः ॥ ६ ॥ राक्षसस्य ततः शब्दं श्रुत्वा राजा युधिष्ठिरः । उवाच भरतश्रेष्ठ भीमसेनमरिन्दमम् ॥ ७ ॥ युध्यते राक्षसो नूनं धार्त्तराष्ट्रैर्महारथैः । यथास्य श्रूयते शब्दो नदतो भैरवस्वनम् ॥ ८ ॥ अतिभारञ्च पश्यामि तस्मिन्राक्षसपुङ्गवे । पितामहश्च संक्रुद्धः पाञ्चालान् हन्तुमुद्यतः ॥ ९ ॥ तेषाञ्च रक्षणार्थाय युध्यते फाल्गुनः परैः । एतच्छ्रुत्वा महाबाहो कार्य्यद्वयमुपस्थितम् ॥ १० ॥ गच्छ रक्षस्व हैडिम्बं संशयं परमं गतम् । भ्रातुर्व्वचनमाज्ञाय त्वरमाणो वृकोदरः ॥ ११ ॥ प्रययौ सिंहनादेन त्रासयन् सर्व्वपार्थिवान् । वेगेन महता राजन् पर्व्वकाले यथोदधिः ॥ १२ ॥ तमन्वयात् सत्यधृतिः सौचित्तिर्युद्धदुर्म्मदः । श्रेणिमान् वसुदानश्च पुत्रः काश्यस्य वा विभुः ॥ १३ ॥ अभिमन्युमुखाश्चैव

द्रौपदेया महारथाः । चत्रदेवश्च विक्रान्तः चत्रधर्मा तथैव च ॥ १४ ॥ अनूपाधिपतिश्चैव नील स्वबलमास्थित । महता शरवर्षेण हैड़िम्बं पर्य्यवारयन् ॥ १५ ॥ कुञ्जरैश्च महामत्तैः षट्साहस्रैः प्रहारिभि । अभ्यरक्षन्त सहिता राक्षसेन्द्रं घटोत्कचम् ॥ १६ ॥ सिंहनादेन महता नेमिघोषेण चैव ह । खुरशब्दनिपातैश्च कम्पयन्तो वसुन्धराम् ॥ १७ ॥ तेषामापततां श्रुत्वा शब्दन्तं तावकं बलम् ।। भीमसेनभयोद्विग्नं विवर्णवदनं तथा ॥ १८ ॥ परिवृत्तं महाराज परित्यज्य घटोत्कचम् । ततः प्रवृत्ते युद्धं तत्र तेषां महात्मनाम् ॥ १९ ॥ तावकानां परेषाञ्च सङ्ग्रामे ह्यनिवर्त्तिनाम् । नानारूपाणि शस्त्राणि विसृजन्तो महारथा ॥ २० ॥ अन्योऽन्यमभिधावन्त सम्प्रहारं प्रचक्रिरे । व्यतिषिक्तं महारौद्रं युद्धं भीरुभयावहम् ॥ २१ ॥ हयैर्गजैः समाजग्मुः पदाता रथिभिः सह । अन्योऽन्यं समरे राजन् प्रार्थयमाना समभ्ययु ॥ २२ ॥ सहसा चाभवत्तीव्रं सन्निपाताम्महद्रजः । रथाश्वगजपत्तीनां पादनेमिसमुद्धतम् ॥ २३ ॥ धूमारुणरजस्तीव्रं रणभूमिं समावृणोत् । नैव स्वे न परे राजन् समजानन् परस्परम् ॥ २४ ॥ पिता पुत्रं न जानीते पुत्रो वा पितरं तथा । निर्मर्य्यादे तथाभूते वैशसे लोमहर्षणे ॥ २५ ॥ शस्त्राणां भरतश्रेष्ठ मनुष्याणाञ्च गर्ज्जताम् । सुमहानभवच्छब्दः प्रेतानामिव भारत ॥ २६ ॥ गजवाजिमनुष्याणां शोणितान्त्रतरङ्गिणी । प्रावर्त्तत नदी तत्र केशशैवलशाद्वला ॥ २७ ॥ नराणां चैव कायेभ्य. शिरसां पततां रणे । शुश्रुवे सुमहान् शब्दः पततामश्मनामिव ॥ २८ ॥ विशिरस्कैर्मनुष्यैश्च छिन्नगात्रैश्च वारणै । अश्वैः सम्भिन्नदेहैश्च सङ्कीर्णाभूद्वसुन्धरा ॥ २९ ॥ नानाविधानि शस्त्राणि विसृजन्तो महारथाः । अन्योऽन्यमभिधावन्त सम्प्रहारार्थमुद्यता । ३० ॥ हया हयान् समासाद्य

प्रेषिता हयसादिभिः । समाहत्य रणेऽन्योऽन्यं निपेतुर्गतजीविताः ॥ ३१ ॥ नरा नरान् समासाद्य क्रोधरक्तेक्षणा भृशम् । उरांस्युरोभिरन्योऽन्यं समाश्लिष्य निजघ्निरे ॥ ३२ ॥ प्रेषिताश्च महामात्रैर्वारणाः परवारणैः । समिघ्नन्ति विषाणाग्रैर्वारणानेव संयुगे ॥ ३३ ॥ ते जातरुधिरापीड़ाः पताकाभिरलङ्कृताः । संसक्ताः प्रत्यदृश्यन्त मेघा इव सविद्युतः ॥ ३४ ॥ केचिद्भिन्ना विषाणाग्रैर्भिन्नकुम्भाश्च तोमरैः । विनदन्तोऽभ्यधावन्तो गर्ज्जमाना घना इव ॥ ३५ ॥ केचिद्धस्तैर्द्विधा छिन्नैश्छिन्नगात्रास्तथा परे । निपेतुस्तुमुले तस्मिंश्छिन्नपक्षा इवाद्रयः ॥ ३६ ॥ पार्श्वैस्तु दारितैरन्यैर्वारणैर्वरवारणाः । मुमुचुः शोणितं भूरि धातूनिव धराधराः ॥ ३७ ॥ नाराचनिहतास्त्वन्ये तथा विद्धाश्च तोमरैः । हयारोहा व्यदृश्यन्त विशृङ्गा इव पर्वताः ॥ ३८ ॥ केचित् क्रोधसमाविष्टा मदान्धा निरवग्रहाः । रथान् हयान् पदातींश्च ममृदुः शतशो रणे ॥ ३९ ॥ तथा हया हयारोहैस्ताड़िताः प्रासतोमरैः । तेन तेनाभ्यवर्त्तन्त कुर्व्वन्तो व्याकुला दिशः ॥ ४० ॥ रथिनो रथिभिः सार्द्धं कुलपुत्रास्तनुत्यजः । परां शक्तिं समास्थाय चक्रुः कर्म्माण्यभीतवत् ॥ ४१ ॥ स्वयम्बर इवामर्द्दे प्रजह्रुरितरेतरम् । प्रार्थयाना यशो राजन् स्वर्गं वा युद्धशालिनः ॥ ४२ ॥ तस्मिंस्तथा वर्त्तमाने सङ्ग्रामे लोमहर्षणे । धार्त्तराष्ट्रं महत् सैन्यं प्रायशो विमुखीकृतम् ॥ ४३ ॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि हैड़िम्बयुद्धे
चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

---

सञ्जय उवाच । स्वसैन्यं निहतं दृष्ट्वा राजा दुर्य्योधनस्तदा । अभ्यधावत संक्रुद्धो भीमसेनमरिन्दमम् ॥ १ ॥ प्रगृह्य सुमहच्चाप-

मिन्द्रायनिसमप्रभम्। महता शरवर्षेण पाण्डवं समवाकिरत् ॥ २ ॥ अर्द्धचन्द्रञ्च सन्धाय सुतीक्ष्णं लोमवाहिनम्। भीमसेनस्य चिच्छेद चापं क्रोधसमन्वितः ॥ ३ ॥ तदन्तरे च सम्प्रेक्ष्य त्वरमाणो महारथः। प्रसन्दधे शितं बाणं गिरीणामवदारणम् ॥ ४ ॥ तेनोरसि महाबाहुर्भीमसेनमताडयत्। स गाढविद्धो व्यथितः सृक्कणी परिसंलिहन् ॥ ५ ॥ समालम्बे तेजस्वी ध्वजं हेमपरिष्कृतम्। तथा विमनसं दृष्ट्वा भीमसेनं घटोत्कचः ॥ ६ ॥ क्रोधेनाभिप्रजज्वाल दिधक्षन्निव पावकः। अभिमन्युमुखाश्चैव पाण्डवानां महारथाः ॥ ७ ॥ समभ्यधावन् क्रोशन्तो राजानं जातसम्भ्रमाः। सम्प्रेक्ष्य तानापततः संक्रुद्धान् जातसम्भ्रमान् ॥ ८ ॥ भारद्वाजोऽब्रवीद्वाक्यं तावकानां महारथान्। क्षिप्रं गच्छत भद्रं वो राजानं परिरक्षत ॥ ९ ॥ संशयं परमं प्राप्तं मज्जन्तं व्यसनार्णवे। एते क्रुद्धा महेष्वासाः पाण्डवानां महारथाः ॥ १० ॥ भीमसेनं पुरस्कृत्य दुर्य्योधनमुपाद्रवन्। नानाविधानि शस्त्राणि विसृजन्तो जये रताः ॥ ११ ॥ नदन्तो भैरवान्नादांस्त्रासयन्तश्च भूमिपान्। तदाचार्य्यवचः श्रुत्वा सोमदत्तपुरोगमाः ॥ १२ ॥ तावकाः समधावन्त पाण्डवानामनीकिनीम्। कृपो भूरिश्रवाः शल्यो द्रोणपुत्रो विविंशतिः ॥ १३ ॥ चित्रसेनो विकर्णश्च सैन्धवोऽथ बृहद्बलः। आवन्त्यौ च महेष्वासौ कौरवं पर्य्यवारयन् ॥ १४ ॥ ते विंशतिपदं गत्वा सम्प्रहारं प्रचक्रिरे। पाण्डवा धार्त्तराष्ट्राश्च परस्परजिघांसवः ॥ १५ ॥ एवमुक्त्वा महाबाहुर्महद्विस्फार्य्य कार्मुकम्। भारद्वाजस्ततो भीमं षड्विंशत्या

प्रनष्टसंज्ञ सहसा रथोपस्थ उपाविशत् ॥ १९ ॥ त प्रव्यथितं दृष्ट्वा राजा दुर्य्योधन स्वयम्। द्रौणायनिश्च सङ्क्रुद्धो भीमसेनमभिद्रुतौ ॥ २० ॥ तावापतन्तौ सम्प्रेक्ष्य कालान्तकयमोपमौ। भीमसेनो महाबाहुर्गदामादाय सत्वर ॥ २१ ॥ अवप्लुत्य रथात्तूर्णं तस्थौ गिरिरिवाचल। समुद्यम्य गदां गुर्वीं कालदण्डोपमा रणे ॥ २२ ॥ तमुद्यतगदं दृष्ट्वा कैलासमिव शृङ्गिणम्। कौरवौ द्रौणपुत्रश्च सहितावभ्यधावताम् ॥ २३ ॥ तावापतन्तौ सहितौ त्वरितौ बलिना वरौ। अभ्यधावत वेगेन भीमसेनो महाबल ॥ २४ ॥ तमापतन्त सम्प्रेक्ष्य सङ्क्रुद्ध भीमदर्शनम्। समभ्यधावस्त्वरिता कौरवाणा महारथा ॥ २५ ॥ भारद्वाजमुखा सर्वे भीमसेनजिघांसया। नानाविधानि शस्त्राणि भीमस्योरस्यपातयन् ॥ २६ ॥ सहिता पाण्डव सर्वे पीडयन्त समन्तत। त दृष्ट्वा सशय प्राप्त पीड्यमान महारथम् ॥ २७ ॥ अभिमन्युप्रभृतय पाण्डवाना महारथा। अभ्यद्रवन् परीप्सन्त प्राणांस्त्यक्त्वा सुदुस्त्यजान् ॥ २८ ॥ अनूपाधिपति शूरो भीमस्य दयित सखा। नीलो नीलाम्बुदप्रख्य सङ्क्रुद्धो द्रौणिमभ्ययात् ॥ २९ ॥ स्पर्द्धते हि महेष्वासो नित्य द्रौणसुतेन स। स विस्फार्य्य महच्चाप द्रौणि विव्याध पत्रिणा ॥ ३० ॥ यथा शक्रो महाराज पुरा विव्याध दानवम्। विप्रचित्ति दुराधर्षं देवताना भयङ्करम् ॥ ३१ ॥ येन लोकत्रय क्रोधात्त्रासित स्वेन तेजसा। तथा नीलेन निर्भिन्न सुमुक्तेन पतत्त्रिणा ॥ ३२ ॥ सञ्जातरुधिरोत्पीडो द्रौणि क्रोधसमन्वित। स विस्फार्य्य धनुश्चित्रमिन्द्राशनिसमस्वनम् ॥ ३३ ॥ दध्रे नीलविनाशाय मति मतिमताम्वर। तत सन्धाय विमलान् भल्लान् कर्म्मारपरिमार्जितान् ॥ ३४ ॥ जघान चतुरो वाहान् पातयामास च ध्वजम्। सप्तमेन च भल्लेन नीलं विव्याध वक्षसि ॥ ३५ ॥ स गाढविद्धो व्यथितो रथोपस्थ उपा

विषत्। सोऽहितं वीक्ष्य राजानं नोलमभ्रचयोपमम् ॥ ३६ ॥ घटोत्कचोऽपि संक्रुद्धो भ्रातृभिः परिवारितः। अभिदुद्राव वेगेन द्रौणिमाहवशोभिनम् ॥ ३७ ॥ तथेतरे चाभ्यधावन् रक्षसा युद्धदुर्मदाः। तमापतन्त सम्प्रेक्ष्य राक्षसं घोरदर्शनम् ॥ ३८ ॥ अभ्यधावत तेजस्वी भारद्वाजात्मजस्त्वरन्। निजघान तु संक्रुद्धो राक्षसान् भीमदर्शनान् ॥ ३९ ॥ येऽभवन्नग्रतः क्रुद्धा राक्षसस्य पुरःसराः। विमुखांश्चैव तान् दृष्ट्वा द्रौणिचापच्युतैः शरैः ॥४०॥ अक्रुध्यत महाकायो भैमसेनिर्घटोत्कचः। प्रादुश्चक्रे महामायां घोररूपां सुदारुणाम् ॥ ४१ ॥ मोहयन् समरे द्रौणिं मायावी राक्षसाधिपः। ततस्ते तावकाः सर्वे मायया विमुखीकृताः ॥४२॥ अन्योऽन्यं समपश्यन्त निकृत्ता मेदिनीतले। विचेष्टमानाः कृपणाः शोणितेन परिप्लुताः ॥ ४३ ॥ द्रोणो दुर्योधनः शल्य अश्वत्थामा तथैव च। प्रायशश्च महेष्वासा ये प्रधानाः सकौरवाः ॥ ४४ ॥ विध्वस्ता रथिनः सर्वे राजानश्च निपातिताः। हयाश्च हयारोहा विनिकृत्ताः सहस्रशः ॥ ४५ ॥ तद्दृष्ट्वा तावकं सैन्यं विद्रुतं शिबिरं प्रति। मम प्राक्रोशतो राजंस्तथा देवव्रतस्य च ॥ ४६ ॥ युध्यध्वं मा पलायध्वं मायैषा राक्षसी रणे। घटोत्कचप्रयुक्तेति नातिष्ठन्त विमोहिताः ॥ ४७ ॥ नैव ते श्रद्दधुर्भीता वदतोरावयोर्वचः। तांश्च प्रद्रवतो दृष्ट्वा जयं प्राप्य पाण्डवाः ॥ ४८ ॥ घटोत्कचेन सहिताः सिंहनादान् प्रचक्रिरे। शङ्खदुन्दुभिनिर्घोषैः समन्तात् नेदिरे भृशम् ॥ ४९ ॥ एवं तव बलं सर्वं हैडिम्बेन दुरात्मना। सूर्यास्तमनवेलायां प्रभग्नं विद्रुतं दिशः ॥ ५० ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि हैडिम्बमायायां पञ्चनवतोऽध्यायः ॥ ९५ ॥

---

सञ्जय उवाच। तस्मिन् महति सङ्क्रान्ते राजा दुर्य्योधन-स्तदा। गाङ्गेयमुपसङ्गम्य विनयेनाभिवाद्य च॥ १॥ तस्य सर्व्वं यथावृत्तमाख्यातुमुपचक्रमे। घटोत्कचस्य विजयमात्मनश्च पराजयम्॥ २॥ कथयामास दुर्द्धर्षो विनिःश्वस्य पुनः पुनः। अब्रवीच्च तदा राजन् भीष्मं कुरुपितामहम्॥ ३॥ भवन्तं समुपाश्रित्य वासुदेवं यथा परैः। पाण्डवैर्विग्रहो घोरः समारब्धो मया प्रभो॥ ४॥ एकादश समाख्याता अक्षौहिण्यश्च या मम। निदेशे तव तिष्ठन्ति मया सार्द्धं परन्तप॥ ५॥ सोऽहं भरतशार्दूल भीमसेनपुरोगमैः। घटोत्कचं समाश्रित्य पाण्डवैर्युधि निर्ज्जितः॥ ६॥ तन्मे दहति गात्राणि शुष्कवृक्षमिवानलः। तदिच्छामि महाभाग त्वत्प्रसादात् परन्तप॥ ७॥ राक्षसापसदं हन्तुं स्वयमेव पितामह। त्वां समाश्रित्य दुर्द्धर्षं तन्मे कर्त्तुं त्वमर्हसि॥ ८॥ एतच्छ्रुत्वा तु वचनं राज्ञो भरतसत्तम। दुर्य्योधनमिदं वाक्यं भीष्मः शान्तनवोऽब्रवीत्॥ ९॥ शृणु राजन् मम वचो यत्त्वा वक्ष्यामि कौरव। यथा त्वया महाराज वर्त्तितव्यं परन्तप॥ १०॥ आत्मा रक्ष्यो रणे तात सर्व्वावस्थास्वरिन्दम। धर्म्मराजेन सङ्ग्रामस्त्वया कार्य्यः सदानघ॥ ११॥ अर्ज्जुनेन यमाभ्यां वा भीमसेनेन वा पुनः। राजधर्म्मं पुरस्कृत्य राजा राजानमर्च्छति॥ १२॥ अहं द्रोणः कृपो द्रौणिः कृतवर्म्मा च सात्वतः। शल्यश्च सौमदत्तिश्च विकर्णश्च महारथः॥ १३॥ तव च भ्रातरः शूरा दुःशासनपुरोगमाः। त्वदर्थं प्रतियोत्स्यामो राक्षसं तं महाबलम्॥ १४॥ तस्मिन् रौद्रे राक्षसेन्द्रे यदि ते हृच्छयो महान्। अथ वा गच्छतु रणे तस्य युद्धाय दुर्म्मतेः॥ १५॥ भगदत्तो महीपालः पुरन्दरसमो युधि। एतावदुक्त्वा राजानं भगदत्तमथाब्रवीत्॥ १६॥ समक्षं पार्थिवेन्द्रस्य वाक्यं वाक्यविशारदः। शीघ्रं गच्छ महाराज हैड़िम्बं युद्धदुर्म्मदम्॥ १७॥

वारयस्व रणे यत्तो मिषतां सर्वधन्विनाम्। राक्षसं क्रूरकर्माणं यथेन्द्रस्तारकं पुरा ॥ १८ ॥ तव शस्त्राणि दिव्यानि विक्रमश्च परन्तप। समागमश्च बहुभिः पुराभूदसुरैः सह ॥१९॥ त्वं तस्य राजशार्दूल प्रतियोद्धा महाहवे। स्वबलेनोच्छ्रितो राजन् जहि राक्षसपुङ्गवम् ॥ २० ॥ एतच्छ्रुत्वा तु वचनं भीष्मस्य पृतनापतेः। प्रययौ सिंहनादेन परानभिमुखो द्रुतम् ॥ २१ ॥ तमाद्रवन्तं सम्प्रेक्ष्य गर्जन्तमिव तोयदम्। अभ्यवर्तन्त संक्रुद्धाः पाण्डवानां महारथाः ॥ २२ ॥ भीमसेनोऽभिमन्युश्च राक्षसश्च घटोत्कचः। द्रौपदेयाः सत्यधृतिः सहदेवश्च मारिष ॥ २३ ॥ चेदिजो वसुदानश्च दशार्णाधिपतिस्तथा। सुप्रतीकेन तांश्चापि भगदत्तोऽभ्युपाद्रवत् ॥ २४ ॥ ततः समभवद्युद्धं घोररूपं भयानकम्। पाण्डूनां भगदत्तेन यमराष्ट्रविवर्द्धनम् ॥ २५ ॥ प्रयुक्ता रथिभिर्बाणा भीमवेगाः सुतेजनाः। ते निपेतुर्महाराज नागेषु च रथेषु च ॥ २६ ॥ प्रभिन्नाश्च महानागा विनीता हस्तिसादिभिः परस्परं समासाद्य सन्निपेतुरभीतवत् ॥ २७ ॥ मदान्धा रोषसंरब्धा विषाणाग्रैर्महाहवे। बिभिदुर्दन्तमुसलैः समासाद्य परस्परम् ॥ २८ ॥ हयाश्च चामरापीडाः प्रासपाणिभिरास्थिताः। चोदिताः सादिभिः क्षिप्रं सन्निपेतुरभीतवत् ॥ २९ ॥ पादाताश्च पदात्योघैस्ताडिताः शक्तितोमरैः। न्यपतन्त तदा भूमौ शतशोऽथ सहस्रशः ॥ ३० ॥ रथिनश्च रथै राजन् कर्णिनालीकसायकैः। निहत्य समरे वीरान् सिंहनादान् विनेदिरे ॥ ३१ ॥ तस्मिंस्तथा वर्त्तमाने सङ्ग्रामे लोमहर्षणे। भगदत्तो महेष्वासो भीमसेनमथाद्रवत् ॥ ३२ ॥ कुञ्जरेण प्रभिन्नेन सप्तधा स्रवता मदम्। पर्वतेन यथा तोयं स्रवमाणेन सर्वशः ॥ ३३ ॥ किरन् शरसहस्राणि सुप्रतीकशिरोगतः। ऐरावतस्थो मघवान् पुरन्दर इवानघ ॥ ३४ ॥ स भीमं शरधाराभिस्ताडयामास पार्थिव।

पर्व्वतं वारिधाराभिस्तपान्ते जलदो यथा ॥ ३५ ॥ भीमसेनस्तु संक्रुद्धः पादरक्षान् परःशतान् । निजघान महेष्वासः संक्रुद्धः शरवृष्टिभिः ॥ ३६ ॥ तान्दृष्ट्वा निहतान् क्रुद्धो भगदत्तः प्रतापवान् । चोदयामास नागेन्द्रं भीमसेनरथं प्रति ॥ ३७ ॥ स नागः प्रेषितस्तेन बाणो ज्यायोदितो यथा । अभ्यधावत वेगेन भीमसेनमरिन्दमम् ॥ ३८ ॥ तमापतन्तं सम्प्रेक्ष्य पाण्डवानां महारथाः । अभ्यवर्त्तन्त वेगेन भीमसेनपुरोगमाः ॥ ३९ ॥ केकयाश्चाभिमन्युश्च द्रौपदेयाश्च सर्व्वशः । दशार्णाधिपतिः शूरः क्षत्रदेवश्च मारिष ॥ ४० ॥ चेदिपश्चित्रकेतुश्च संक्रुद्धाः सर्व्व एव ते । उत्तमास्त्राणि दिव्यानि दर्शयन्तो महाबलाः ॥ ४१ ॥ तमेकं कुञ्जरं क्रुद्धाः समन्तात् पर्य्यवारयन् । स विद्धो बहुभिर्व्वाणैर्व्यरोचत महाद्विपः ॥ ४२ ॥ सञ्जातरुधिरोत्पीड़ो धातुचित्र इवाद्रिराट् । दशार्णाधिपतिश्चापि गजं भूमिधरोपमम् ॥ ४३ ॥ समास्थितोऽभिदुद्राव भगदत्तस्य वारणम् । तमापतन्तं समरे गजं गजपतिः स च ॥ ४४ ॥ दधार सुप्रतीकोऽपि वेलेव मकरालयम् । वारितं प्रेक्ष्य नागेन्द्रं दाशार्णस्य महात्मनः ॥ ४५ ॥ साधु साध्विति सैन्यानि पाण्डवान्यभ्यपूजयन् । ततः प्राग्ज्योतिषः क्रुद्धस्तोमरान् वै चतुर्द्दश ॥ ४६ ॥ प्राहिणोत्तस्य नागस्य प्रमुखे नृपसत्तम । वर्म्म मुख्यं तनुत्राणं शातकुम्भपरिष्कृतम् ॥ ४७ ॥ विदार्य्य प्राविशन् क्षिप्रं वल्मीकमिव पन्नगाः । स गाढविद्धो व्यथितो नागो भरतसत्तम ॥ ४८ ॥ उपावृत्तमदः क्षिप्रमभ्यवर्त्तत वेगितः । स प्रदुद्राव वेगेन प्रणदन् भैरवं रवम् ॥ ४९ ॥ सम्मर्द्दयानः स्वबलं वायुर्वृक्षानिवौजसा । तस्मिन् पराजिते नागे पाण्डवानां महारथाः ॥ ५० ॥ सिंहनादं विनद्योच्चैर्युद्धायैवोपतस्थिरे । ततो भीमं पुरस्कृत्य भगदत्तमुपाद्रवन् ॥ ५१ ॥ किरन्तो विविधान् बाणान् शस्त्राणि विविधानि

च। तेषामापततां राजन् शङ्कुनामामर्षिणाम् ॥ ५२ ॥ श्रुत्वा
स निनदं घोरममर्षाद्गतसाध्वसः। भगदत्तो महेष्वासः स्वं नागं
प्रत्यचोदयत ॥ ५३ ॥ स नागप्रवरः सम्यगङ्कुशाङ्गुष्ठचोदितः।
तस्मिन् क्षणे समभवत् सम्वर्त्तक इवानलः ॥ ५४ ॥ रथसङ्घांस्तथा
नागान् हयांश्च सह सादिभिः। अमर्द्दन् समरे राजन् सम्प्र-
भावस्ततस्ततः ॥ ५५ ॥ पादाताश्च सुसंक्रुद्ध शतशोऽथ सह
स्रश। तेन सञ्चोद्यमानन्तु पाण्डूना तदहं महत ॥ ५६ ॥
सङ्कोच महाराज चर्मवाग्नी समाहितम्। भग्नन्तु स्वबलं दृष्ट्वा
भगदत्तेन धीमता ॥ ५७ ॥ घटोत्कचोऽथ संक्रुद्धो भगदत्त
मुपाद्रवत। विकट पुरुषो राजन् दीप्तास्यो दीप्तलोचन ॥५८॥
रूपं विभीषणं कृत्वा रोषेण प्रज्वलन्निव। जग्राह विमलं शूल
गिरीणामपि दारुणम्। ५९ ॥ नागं जिघांसु सहसा चिक्षेप
च महाबल। सविस्फुलिङ्गमालाभि समन्तात् परिवेष्टित ॥६०॥
तमापतन्त सहसा दृष्ट्वा प्राग्ज्योतिषो नृप। चिक्षेप रुचिरं
तीक्ष्णम् अर्द्धचन्द्रं सुदारुणम् ॥ ६१ ॥ चिच्छेद सुमहच्छूलं तेन
बाणेन वेगवान्। उत्पपात द्विधा छिन्नं शूलं हेमपरिष्कृतम्
॥ ६२ ॥ महाशनिर्यथा भ्रष्टा शक्रमुक्ता नभोगता। शूल
निपतितं दृष्ट्वा द्विधा कृत्तं स पार्थिव ॥ ६३ ॥ रुक्मदण्डां महा
शक्तिं जग्राहाग्निशिखोपमाम्। चिक्षेप तां राक्षसस्य तिष्ठतिष्ठेति
चाब्रवीत ॥ ६४ ॥ तामापतन्तीं सम्प्रेक्ष्य वियत्स्थामशनी
मिव। उत्पत्य राक्षसस्तूर्णं जग्राह च ननाद च ॥ ६५ ॥ बभञ्ज
चैनां त्वरितो जानुन्यारोप्य भारत। पश्यतः पार्थिवेन्द्रस्य तद
द्भुतमिवाभवत् ॥ ६६ ॥ तदवेक्ष्य कृतं कर्म राक्षसेन बली
यसा। दिवि देवाः सगन्धर्वा मुनयश्चापि विस्मिताः ॥ ६७ ॥
पाण्डवाश्च महाराज भीमसेनपुरोगमाः। साधुसाध्विति नादेन
पृथिवीमन्वनादयन् ॥ ६८ ॥ तं तु श्रुत्वा महानादं प्रहृष्टानां

महात्मनाम् ॥ नामृष्यत महेष्वासो भगदत्तः प्रतापवान् ॥ ६९ ॥
स विस्फार्य्य महच्चापमिन्द्राशनिसमप्रभम् । तर्ज्जयामास वेगेन
पाण्डवानां महारथान् ॥ ७० ॥ विसृजन् विशिखांस्तीक्ष्णान्नारा-
चान् ज्वलनप्रभान् । भीमसेनं विव्याध राक्षसं नवभिः शरैः
॥ ७१ ॥ अभिमन्युं त्रिभिश्चैव केकयान् पञ्चभिस्तथा । पूर्णा-
यतविसृष्टेन शरेणानतपर्व्वणा ॥ ७२ ॥ बिभेद दक्षिणं बाहुं
क्षत्रदेवस्य चाहवे । पपात सहसा तस्य सशरन्धनुरुत्तमम् ॥७३॥
द्रौपदेयांस्ततः पञ्च पञ्चभिः समताड़यत् । भीमसेनस्य च क्रोधा-
न्निजघान तुरङ्गमान् ॥ ७४ ॥ ध्वजं केशरिणं चास्य चिच्छेद
विशिखैस्त्रिभिः । निर्व्विभेद त्रिभिश्चान्यैः सारथिं चास्य पत्रिभिः
॥ ७५ ॥ स गाढविद्धो व्यथितो रथोपस्थ उपाविशत् । विशोको
भरतश्रेष्ठ भगदत्तेन संयुगे ॥ ७६ ॥ ततो भीमो महाराज
विरथो रथिनां वर । गदां प्रगृह्य वेगेन प्रचस्कन्द महारथात्
॥ ७७ ॥ तमुद्यतगदं दृष्ट्वा सशृङ्गमिव पर्व्वतम् । तावकानां भयं
घोरं समपद्यत भारत ॥ ७८ ॥ एतस्मिन्नेव काले तु पाण्डवः
कृष्णसारथिः । आजगाम महाराज निघ्नञ्छत्रून् समन्ततः ॥७९॥
यत्र तौ पुरुषव्याघ्रौ पितापुत्रौ महारथौ । प्राग्ज्योतिषेण
सहितौ भीमसेनघटोत्कचौ ॥ ८० ॥ दृष्ट्वा च पाण्डवो भ्रातॄन्
युध्यमानान्महारथान् । त्वरितो भरतश्रेष्ठ तत्रायुध्यत् किरन्
शरान् ॥ ८१ ॥ ततो दुर्य्योधनो राजा त्वरमाणो महारथः ।
सेनामचोदयत् क्षिप्रं रथनागसमाकुलाम् ॥ ८२ ॥ तामापतन्तीं
सहसा कौरवाणां महाचमूम् । अभिदुद्राव वेगेन पाण्डवः
श्वेतवाहनः ॥ ८३ ॥ भगदत्तोऽपि समरे तेन नागेन भारत ।
विमृद्नन् पाण्डवबलं युधिष्ठिरमुपाद्रवत् ॥ ८४ ॥ तदासीत्तुमुलं
युद्धं भगदत्तस्य मारिष । पाञ्चालैः सृञ्जयैश्चैव केकयैश्चोद्यता-

युधि ॥ ८५ ॥ भीमसेनोऽपि समरे तावुभौ केशवार्जुनौ। श्रा-
वयद्यथावृत्तमिरावद्वधमुत्तमम् ॥ ८६ ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि भगदत्तपराक्रमे
षण्णवतोऽध्यायः ॥ ९६ ॥

पाण्डुरान् वातरंहसः ॥ १३ ॥ अथ शब्दो महानासीत् तव सैन्यस्य भारत। मारुतोद्धूतवेगस्य सागरस्येव पर्व्वणि ॥ १४ ॥ अपराह्णे महाराज सङ्ग्रामः समपद्यत। पर्ज्जन्यसमनिर्घोषो भीष्मस्य सह पाण्डवैः ॥ १५ ॥ ततो राजंस्तव सुता भीमसेनमुपाद्रवन्। परिवार्य्य रणे द्रोणं वसवो वासवं यथा ॥ १६ ॥ ततः शान्तनवो भीष्मः कृपश्च रथिनां वरः। भगदत्तः सुशर्म्मा च धनञ्जयमुपाद्रवत् ॥ १७ ॥ हार्द्दिक्यो वाह्लिकश्चैव सात्यकिं समभिद्रुतौ। अम्बष्ठकस्तु नृपतिरभिमन्युमवस्थितः ॥ १८ ॥ शेषास्त्वन्ये महाराज शेषानेव महारथान्। ततः प्रववृते युद्धं घोररूपं भयावहम् ॥ १९ ॥ भीमसेनस्तु सम्प्रेक्ष्य पुत्रांस्तव जनेश्वर। प्रजज्वाल रणे क्रुद्धो हविषा हव्यवाडिव ॥ २० ॥ पुत्रास्तु तव कौन्तेयच्छादयाञ्चक्रिरे शरैः। प्रावृषीव महाराज जलदाः पर्व्वतं यथा ॥ २१ ॥ च्छाद्यमानो बहुधा पुत्रैस्तव विशाम्पते। सृक्किणी लेलिहन् वीरः शार्द्दूल इव वेगवान् ॥२२॥ व्यूढोरस्कं ततो भीमः पातयामास भारत। क्षुरप्रेण सुतीक्ष्णेन सोऽभवद्गतजीवितः ॥ २३ ॥ अपरेण तु भल्लेन पीतेन निशितेन च। अपातयत् कुण्डलिनं सिंहः क्षुद्रमृगं यथा ॥ २४ ॥ ततः सुनिशितान् पीतान् समादत्त शिलीमुखान्। स सप्त त्वरया युक्तः पुत्रांस्ते प्राप्य मारिष ॥ २५ ॥ प्रेषिता भीमसेनेन शरास्ते दृढधन्विना। अपातयन्त पुत्रांस्ते रथेभ्यः सुमहारथान् ॥२६॥ अनाधृष्टिं कुण्डभेदं वैराटं दीर्घलोचनम्। दीर्घबाहुं सुबाहुञ्च तथैव कनकध्वजम् ॥ २७ ॥ प्रपतन्ति स्म ते वीरा विरेजुर्भरतर्षभ। वसन्ते पुष्पशवलाश्चूताः प्रपतिता इव ॥ २८ ॥ ततः प्रदुद्रुवुः शेषाः पुत्रास्तव विशाम्पते। तं कालमिव मन्यन्तो भीमसेनं महाबलम् ॥ २९ ॥ द्रोणस्तु समरे वीरं निर्द्दहन्तं सुतांस्तव। यथाद्रिं वारिधाराभिः समन्तादकिरच्छरैः ॥ ३० ॥

तत्राद्भुतमपश्याम कुन्तीपुत्रस्य पौरुषम् । द्रोणेन वार्य्यमाणोऽपि
निजघ्ने यत् सुतांस्तव ॥ ३१ ॥ यथा हि गोवृषो वर्षं सन्धा-
रयति खात् पतत् । भीमस्तथा द्रोणमुक्तं शरवर्षमदीनवत्
॥ ३२ ॥ अद्भुतञ्च महाराज तत्र चक्रे वृकोदरः । यत् सुता-
स्तेऽवधीत् सङ्ख्ये द्रोणञ्चैव न्यवारयत् ॥ ३३ ॥ पुत्रेषु तव
वीरेषु चिक्रीड़ार्जुनपूर्वजः । मृगेष्विव महाराज चरन् व्याघ्रो
महाबलः ॥ ३४ ॥ यथा हि पशुमध्यस्थो द्रावयेत पशून् वृकः ।
वृकोदरस्तव सुतांस्तथा व्यद्रावयद्रणे ॥ ३५ ॥ गाङ्गेयो भग-
दत्तश्च गौतमश्च महारथः । पाण्डवं रभसं युद्धे वारयामासु-
रर्जुनम् ॥ ३६ ॥ अस्त्रैरस्त्राणि संवार्य्य तेषां सोऽतिरथो रणे ।
प्रवीरांस्तव सैन्येषु प्रेषयामास मृत्यवे ॥ ३७ ॥ अभिमन्युश्च
राजानमम्बष्ठं लोकविश्रुतम् । विरथं रथिनां श्रेष्ठं कारयामास
सायकैः ॥ ३८ ॥ विरथो वध्यमानः स सौभद्रेण यशस्विना ।
अवप्लुत्य रथात्तूर्णं सव्रीड़ो मनुजाधिप ॥ ३९ ॥ असिं चिक्षेप
समरे सौभद्रस्य महात्मनः । आरुरोह रथञ्चैव हार्दिक्यस्य
महाबलः ॥ ४० ॥ आपतन्तञ्च निस्त्रिंशं युद्धमार्गविशारदः ।
लाघवात् व्यंसयामास सौभद्रः परवीरहा ॥ ४१ ॥ व्यंसितं
वीक्ष्य निस्त्रिंशं सौभद्रेण रणे तथा । साधु साध्विति सैन्यानां
प्रणादोऽभूद्विशाम्पते ॥ ४२ ॥ धृष्टद्युम्नमुखास्त्वन्ये तव सैन्य-
मयोधयन् । तथैव तावकाः सर्वे पाण्डुसैन्यमयोधयन् ॥ ४३ ॥
तत्राक्रन्दो महानासीत्तव तेषाञ्च भारत । निघ्नतां दृढमन्योऽन्यं
कुर्वतां कर्म दुष्करम् ॥ ४४ ॥ अन्योऽन्यं हि रणे शूराः केशे
ष्वाकृष्य मारिष । नखैर्दन्तैरयुध्यन्त मुष्टिभिर्जानुभिस्तथा ॥ ४५ ॥
तलैश्चैवाथ निस्त्रिंशैर्बाहुभिश्च सुसंस्थितैः । विवरं प्राप्य चान्यो-
ऽन्यमनयन् यमसादनम् ॥ ४६ ॥ न्यहनच्च पिता पुत्रं पुत्रश्च
तथा । व्याकुलीकृतसर्वाङ्गा युयुधुस्तत्र मानवाः ॥ ४७ ॥

रणे चारूणि चापानि हेमपृष्ठानि भारत । हतानामपविद्धानां कलापाश्च महाधनाः ॥ ४८ ॥ जातरूपमयैः पुङ्खै राजतैर्निशिताः शराः । तैलधौता व्यराजन्त निर्मुक्तभुजगोपमाः ॥ ४९ ॥ हस्तिदन्तत्सरून् खड्गान् जातरूपपरिष्कृतान् । चर्माणि चापविद्धानि रुक्मचित्राणि धन्विनाम् ॥ ५० ॥ सुवर्णविकृतान् प्रासान् पट्टिशान् हेमभूषितान् । जातरूपमयी ऋष्टीः शक्तीश्च कनकोज्ज्वलाः ॥ ५१ ॥ सुवन्नाहांश्च पतितान् मुषलानि गुरूणि च । परिघान् पट्टिशांश्चैव भिन्दिपालांश्च मारिष ॥ ५२ ॥ पतितान् विविधान् चापान् चित्रहेमपरिष्कृतान् । कुथाश्च बहुधाकाराः चामरव्यजनानि च ॥ ५३ ॥ नानाविधानि शस्त्राणि विसृज्य पतिता नराः । जीवन्त इव दृश्यन्ते गतसत्त्वा महारथाः ॥ ५४ ॥ गदाविमथितैर्गात्रैर्मुषलैर्भिन्नमस्तकाः । गजवाजिरथक्षुण्णाः शेरते स्म नराः क्षितौ ॥ ५६ ॥ तथैवाश्वनृनागानां शरीरैराबभौ तदा । सञ्छन्ना वसुधा राजन् पर्वतैरिव सर्वशः ॥ ५७ ॥ समरे पतितैश्चैव शक्त्यृष्टिशरतोमरैः । निस्त्रिंशैः पट्टिशैः प्रासैरयःकुन्तैः परश्वधैः ॥ ५८ ॥ परिघैर्भिन्दिपालैश्च शतघ्नीभिस्तथैव च । शरीरैः शस्त्रभिन्नैश्च समास्तीर्यत मेदिनी ॥ ५९ ॥ विशब्दैरल्पशब्दैश्च शोणितौघपरिप्लुतैः । गतासुभिरमित्रघ्न विबभौ संवृता मही ॥ ६० ॥ सतनुत्रैः सकेयूरैर्बाहुभिश्चन्दनोक्षितैः । हस्तिहस्तोपमैश्छिन्नैरूरुभिश्च तरस्विनाम् ॥ ६१ ॥ बद्धचूडामणिधरैः शिरोभिश्च सकुण्डलैः । पातितैर्वृषभाक्षाणां बभौ भारत मेदिनी ॥ ६२ ॥ कवचैः शोणितादिग्धैर्विप्रकीर्णैश्च काञ्चनैः । रराज सुभृशं भूमिः शान्तार्चिभिरिवानलैः ॥ ६३ ॥ विप्रविद्धैः कलापैश्च पतितैश्च शरासनैः । विप्रकीर्णैः शरैश्चापि रुक्मपुङ्खैः समन्ततः ॥ ६४ ॥ रथैश्च बहुभिर्भग्नैः किङ्किणीजालभूषितैः । वाजिभिश्च हतैः कीर्णैः स्रस्तजिह्वैः सशोणितैः ॥ ६५ ॥ अनुकर्षैः पता-

कार्मिरुपासङ्गैर्ध्वजैरपि। प्रवीराणां महामात्रैर्विप्रकीर्णैः सुपा-
ण्डुरैः ॥ ६६ ॥ हस्तहस्तैश्च मातङ्गैः शयानैर्विबभौ मही।
नानारूपैरलङ्कारैः प्रमदेवाभ्यलङ्कृता ॥ ६७ ॥ दन्तिभिश्चापरै-
स्तत्र सप्रासैर्गाढवेदनैः। करैः शब्दं विमुञ्चद्भिः शीत्कारञ्च मुहु-
र्मुहुः ॥ ६८ ॥ विबभौ तद्रणस्थानं स्यन्दमानैरिवाचलैः। नाना-
वर्णैः कम्बलैश्च परिस्तोमैश्च दन्तिनाम् ॥ ६९ ॥ वैदूर्य्यमणिदण्डैश्च
पतितैरङ्कुशैः शुभैः। घण्टाभिश्च गजेन्द्राणां पतिताभिः सम-
न्ततः ॥ ७० ॥ विपाटितविचित्राभिः कुथाभी राङ्कवैस्तथा। ग्रैवेयै-
श्चित्ररूपैश्च रुक्मकक्षाभिरेव च ॥ ७१ ॥ यन्त्रैश्च बहुधाच्छिन्नै-
स्तोमरैश्चापि काञ्चनैः। अश्वानां रेणुकपिलै रुक्मच्छन्नैरुरश्छदैः
॥ ७२ ॥ सादिनां च भुजैश्छिन्नैः पतितैः साङ्गदैस्तथा। प्रासैश्च
विमलैस्तीक्ष्णैर्विमलाभिस्तु ऋष्टिभिः ॥ ७३ ॥ उष्णीषैश्च तथा
चित्रैर्विप्रविद्धैस्ततस्ततः। विचित्रैरर्द्धचन्द्रैश्च जातरूपपरिष्कृतैः
॥ ७४ ॥ अश्वास्तरपरिस्तोमै राङ्कवैर्मृदितैस्तथा। नरेन्द्रचूडा-
मणिभिर्विचित्रैश्च महाधनैः ॥ ७५ ॥ छत्रैस्तथापविद्धैश्च चामर-
व्यजनैरपि। पद्मेन्दुद्युतिभिश्चैव वदनैश्चारुकुण्डलैः ॥ ७६ ॥
क्लृप्तश्मश्रुभिरत्यर्थं वीराणां समलङ्कृतैः। अपविद्धैर्महाराज
सुवर्णोज्ज्वलकुण्डलैः ॥ ७७ ॥ ग्रहनक्षत्रशबला द्यौरिवासीद्वसु-
न्धरा। एवमेते महासेने मृदिते तव भारत ॥ ७८ ॥ परस्परं
समासाद्य तव तेषाञ्च संयुगे। तेषु श्रान्तेषु भग्नेषु मृदितेषु च
भारत ॥ ७९ ॥ रात्रिः समभवद्घोरा नापश्याम ततो रणम्।
ततोऽवहारं सैन्यानां प्रचक्रुः कुरुपाण्डवाः ॥ ८० ॥ घोरे निशा-
मुखे रौद्रे वर्त्तमाने सुदारुणे। अवहारं ततः कृत्वा सहिताः
कुरुपाण्डवाः। न्यविशन्त यथाकालं गत्वा स्वशिबिरं तदा ॥ ८१ ॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि अष्टमदिवसयुद्धावहारे
सप्तनवतोऽध्यायः ॥ ९७ ॥

सञ्जय उवाच। ततो दुर्य्योधनो राजा शकुनिश्चापि सौबल। दुःशासनश्च पुत्रस्ते सूतपुत्रश्च दुर्ज्जयः॥ १॥ समागम्य महाराज मन्त्रं चक्रुर्विवक्षितम्। कथं पाण्डुसुताः सङ्ख्ये जेतव्याः सगणा इति॥ २॥ ततो दुर्य्योधनो राजा सर्व्वांस्तानाह मन्त्रिणः। सूतपुत्रं समाभाष्य सौबलञ्च महाबलम्॥ ३॥ द्रोणो भीष्मः कृपः शल्यः सौमदत्तिश्च संयुगे। न पार्थान् प्रतिबाधन्ते न जाने तत्र कारणम्॥ ४॥ अवध्यमानास्ते चापि क्षपयन्ति बलं मम। सोऽस्मि क्षीणबलः कर्ण क्षीणशस्त्रश्च संयुगे॥ ५॥ निकृतः पाण्डवैः शूरैरवध्यैर्द्दैवतैरपि। सोऽहं संशयमापन्नः प्रहरिष्ये कथं रणे। तमब्रवीन्महाराज सूतपुत्रो नराधिपम्॥ ६॥

कर्ण उवाच। माशुचो भरतश्रेष्ठ करिष्येऽहं प्रियं तव। भीष्मः शान्तनवस्तूर्णमपयातु महारणात्॥ ७॥ निवृत्ते युधि गाङ्गेये न्यस्तशस्त्रे च भारत। अहं पार्थान् हनिष्यामि सहितान् सर्व्वसोमकैः॥ ८॥ पश्यतो युधि भीष्मस्य शपे सत्येन ते नृप। पाण्डवेषु दया नित्यं स हि भीष्मः करोति वै॥ ९॥ अशक्तश्च रणे भीष्मो जेतुमेतान् महारथान्। अभिमानी रणे भीष्मो नित्यं चापि रणप्रियः॥ १०॥ न कथं पाण्डवान् युद्धे जेष्यते तात सङ्गतान्। स त्वं शीघ्रमितो गत्वा भीष्मस्य शिविरं प्रति॥ ११॥ अनुमान्य गुरुं वृद्धं शस्त्रन्यासय भारत। न्यस्तशस्त्रे ततो भीष्मे निहतान् पश्य पाण्डवान्॥ १२॥ मयैकेन रणे राजन् ससुहृद्गणबान्धवान्। एवमुक्तस्तु कर्णेन पुत्रो दुर्य्योधनस्तव॥ १३॥ अब्रवीत् भ्रातरं तत्र दुःशासनमिदं वचः। अनुयात्रं यथा सर्व्वं सज्जीभवति सर्व्वशः॥ १४॥ दुःशासन तथा क्षिप्रं सर्व्वमेवोपपादय। एवमुक्त्वा ततो राजन् कर्णमाह जनेश्वरः॥ १५॥ अनुमान्य रणे भीष्ममितोऽहं द्विपदाम्वरम्। आगमिष्ये ततः क्षिप्रं त्वत्सकाशमरिन्दम॥ १६॥ अपयाते ततो

भीष्मे प्रहरिष्यन्ति संयुगे । निष्पपात ततस्तूर्णं पुत्रस्तव विशा-
म्पते ॥ १७ ॥ सहितो भ्रातृभिस्तैस्तु देवैरिव शतक्रतुः । ततस्तं
नृपशार्दूल शार्दूलसमविक्रमम् ॥ १८ ॥ आरोहयद्धयं तूर्णं
भ्राता दुःशासनस्तदा । अङ्गदी बद्धमुकुटो हस्ताभरणवान्नृप
॥ १९ ॥ धार्त्तराष्ट्रो महाराज विबभौ स पथि व्रजन् । भाण्डी-
पुष्पनिकाशेन तपनीयनिभेन च ॥ २० ॥ अनुलिप्तः परार्द्ध्येन
चन्दनेन सुगन्धिना । अरजोऽम्बरसंवीतः सिंहखेलगतिर्नृप ॥२१॥
शुशुभे विमलार्चिष्मान्नभसीव दिवाकरः । स प्रयान्तं नरव्याघ्रं
भीष्मस्य शिबिरं प्रति ॥ २२ ॥ अनुजग्मुर्महेष्वासाः सर्वलोकस्य
धन्विनः । भ्रातरश्च महेष्वासास्त्रिदशा इव वासवम् ॥ २३ ॥
हयानन्ये समारुह्य गजानन्ये च भारत । रथानन्ये नरश्रेष्ठा
परिवव्रुः समन्ततः ॥ २४ ॥ आत्तशस्त्राश्च सुहृदो रक्षणार्थं मही-
पते । प्रादुर्बभूव सहिता शक्रस्येवामरा दिवि ॥ २५ ॥ सम्पूज्य-
मानः कुरुभिः कौरवाणां महाबलः । प्रययौ सदनं राजा
गाङ्गेयस्य यशस्विनः ॥ २६ ॥ अन्वीयमानः सततं सोदर्यैः परि-
वारितः । दक्षिणं दक्षिणः काले सम्भृत्य स्वभुजं तदा ॥ २७ ॥
हस्तिहस्तोपमं शैक्षं सर्वशत्रुनिवर्हणम् । प्रगृह्णन्नञ्जलीन्नृणा-
मुद्यतान् सर्वतो दिशः ॥ २८ ॥ शुश्राव मधुरा वाचो नानादेश-
निवासिनाम् । संस्तूयमानः सूतैश्च मागधैश्च महायशाः ॥ २९ ॥
पूजयानश्च तान् सर्वान् सर्वलोकमहेश्वरः । प्रदीपैः काञ्चनैस्तत्र
गन्धतैलावसेचितैः ॥ ३० ॥ परिवव्रुर्महात्मानं प्रज्वलद्भिः सम-
न्ततः । स तैः परिवृतो राजा प्रदीपैः काञ्चनैर्ज्वलन् ॥ ३१ ॥
शुशुभे चन्द्रमा युक्तो दीप्तैरिव महाग्रहैः । काञ्चनोष्णीषिणस्तत्र
वेत्रझर्झरपाणयः ॥ ३२ ॥ प्रोत्सारयन्तः शनकैस्तं जनं सर्वतो
दिशम् । सम्प्राप्य तु ततो राजा भीष्मस्य सदनं शुभम् ॥३३॥
अवतीर्य हयाच्चापि भीष्मं प्राप्य जनेश्वरः । अभिवाद्य ततो

भीष्म निषसं परमासने ॥ ३४ ॥ काञ्चने सर्व्वतोभद्रे सर्व्वा-स्तरणसम्वृते। उवाच प्राञ्जलिर्भीष्म वाष्पकण्ठोऽश्रुलोचन ॥३५॥ त्वा वयं हि समाश्रित्य संयुगे मधुसूदन। उत्सहेम रणे जेतु सेन्द्रानपि सुरासुरान् ॥ ३६ ॥ किमु पाण्डुसुतान् वीरान् ससुहृ-द्गणबान्धवान्। तस्माद्दर्हसि गाङ्गेय कृपा कर्त्तु मयि प्रभो ॥३७॥ जहि पाण्डुसुतान् वीरान् महेन्द्र इव दानवान्। अहं सर्व्वान् महाराज निहनिष्यामि सोमकान्। ३८ ॥ पाञ्चालान् कैकयैः सार्द्धं करूषांश्चेति भारत। त्वद्वचः सत्यमेवास्तु जहि पार्थान् समागतान् ॥ ३९ ॥ सोमकांश्च महेष्वासान् सत्यवाग्भव भारत। दयया यदि वा राजन् द्वेष्यभावान्मम प्रभो ॥ ४० ॥ मन्दभाग्य-तया वापि यदि रक्षसि पाण्डवान्। अनुजानीहि समरे कर्ण-माहवशोभिनम् ॥ ४१ ॥ स जेष्यति रणे पार्थान् ससुहृद्गण-बान्धवान्। स एवमुक्त्वा नृपति पुत्रो दुर्य्योधनस्तव। नोवाच वचन किञ्चिद्भीष्म भीमपराक्रमम् ॥ ४२ ॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि भीष्मदुर्य्योधनसंवादे अष्टनवतोऽध्याय ॥ ९८ ॥

---

सञ्जय उवाच। वाक्शल्यैस्तव पुत्रेण सोऽतिविद्धो महा-मना। श्वसमानो यथा नाग प्रणुन्नो वाक्शलाकया ॥ १ ॥ दुःखेन महताविष्टो नोवाच प्रियमप्रियं। स ध्यात्वा सुचिरं कालं दुःखरोषसमन्वित ॥ २ ॥ उद्वृत्य चक्षुषी कोपान्निर्द्दहन्निव भारत। सदेवासुरगन्धर्व्वं लोकं लोकविदां वर ॥ ३ ॥ अब्र-वीत् तव पुत्रं तु सामपूर्व्वमिदं वचः। किं त्वं दुर्य्योधनैवं मां वाक्शल्यैरपकृन्तसि ॥ ४ ॥ घटमानं यथाशक्ति कुर्व्वाणञ्च तव प्रियम्। जुह्वानं समरे प्राणांस्तवैव प्रियकाम्यया ॥ ५ ॥ यदा

तु पाण्डव भूरे खाण्डवेऽग्निमतर्पयत्। पराजित्य रणे शक्रं पर्य्याप्तं तन्निदर्शनम्॥ ६॥ यदा च त्वां महाबाहो गन्धर्वैर्हृत-मोलयां। अमोचयत पाण्डुसुतः पर्य्याप्तं तन्निदर्शनम्॥ ७॥ द्रवमाणेषु शूरेषु कोटरेषु तव प्रभो। सूतपुत्रे च राधेये पर्य्याप्तं तन्निदर्शनम्॥ ८॥ यच्च नः सहितान् सर्वान् विराट-नगरे तदा। एक एव समुद्यातः पर्य्याप्तं तन्निदर्शनम्॥ ९॥ द्रोणञ्च युधि संरब्धं भाष्मं निर्जित्य संयुगे। वासांसि च समा-दत्त पर्य्याप्तं तन्निदर्शनम्॥ १०॥ यथा द्रौणिं महेष्वासं शारद्वतमथापि च। गोग्रहे जितवान् पूर्वं पर्य्याप्तं तन्निदर्शनम् ॥ ११॥ विजित्य च यथा कर्णं सदा पुरुषमानिनम्। उत्तरायै ददौ वस्त्रं पर्य्याप्तं तन्निदर्शनम्॥ १२॥ निवातकवचान् युद्धे वासवेनापि दुर्जयान्। जितवान् समरे पार्थः पर्य्याप्तं तन्नि-दर्शनम्॥ १३॥ को हि शक्तो रणे जेतुं पाण्डवं रभसं तदा। यस्य गोप्ता जगद्गोप्ता शङ्खचक्रगदाधरः॥ १४॥ वासुदेवोऽनन्त-शक्तिः सृष्टिसंहारकारकः। सर्वेश्वरो देवदेवः परमात्मा सना-तनः॥ १५॥ उक्तो हि बहुशो राजन् नारदाद्यैर्महर्षिभिः। त्वन्तु मोहान्न जानीषे वाच्यावाच्यं सुयोधन॥ १६॥ मुमूर्षुर्हि नरः सर्वान् वृक्षान् पश्यति काञ्चनान्। तथा त्वमपि गान्धारे विपरीतानि पश्यसि॥ १७॥ स्वयं वैरं महत्कृत्वा पाण्डवैः सह सृञ्जयैः। युध्यस्व तानद्य रणे पश्याम पुरुषो भव॥ १८॥ अहन्तु सोमकान् सर्वान् पाञ्चालांश्च समागतान्। निहनिष्ये नर-व्याघ्र वर्जयित्वा शिखण्डिनम्॥ १९॥ तैर्वाहं निहतः सङ्ग्रामे गमिष्ये यमसादनम्। तान् वा निहत्य समरे प्रीतिं दास्याम्यहं तव॥ २०॥ पूर्वं हि स्त्री समुत्पन्ना शिखण्डी राजवेश्मनि। वरदानात् पुमान् जातः सैषा वै स्त्री शिखण्डिनी॥ २१॥ तमहं न हनिष्यामि प्राणत्यागेऽपि भारत। यासौ प्राङ्निर्मिता धात्रा

सैषा वै स्त्री शिखण्डिनी ॥ २२ ॥ सुखं स्वपिहि गान्धारे श्वोऽस्मि कर्त्ता महारणम् । यं जनाः कथयिष्यन्ति यावत् स्थास्यति मेदिनी ॥ २३ ॥ एवमुक्तस्तव सुतो निर्जगाम नरेश्वर । अभिवाद्य गुरुं मूर्द्ध्ना प्रययौ स्वं निवेशनम् ॥ २४ ॥ आगम्य तु ततो राजा विसृज्य च महाजनम् । प्रविवेश ततस्तूर्णं क्षयं शत्रुक्षयङ्करः ॥ २५ ॥ प्रविष्टः स निशां ताञ्च गमयामास पार्थिवः । प्रभातायाञ्च शर्व्वर्यां प्रातरुत्थाय तान्नृप ॥ २६ ॥ राज्ञः समाज्ञापयत सेनां योजयतेति ह । अद्य भीष्मो रणे क्रुद्धो निहनिष्यति सोमकान् ॥ २७ ॥ दुर्य्योधनस्य तच्छ्रुत्वा रात्रौ विलपितं बहु । मन्यमानः स तं राजन् प्रत्यादेशमिवात्मन ॥ २८ ॥ निर्व्वेदं परमं गत्वा विनिन्द्य परवाच्यताम् । दीर्घं दध्यौ शान्तनवो योद्धुकामोऽर्ज्जुनं रणे ॥ २९ ॥ इङ्गितेन तु तज्ज्ञात्वा गाङ्गेयेन विचिन्तितम् । दुर्य्योधनो महाराज दुःशासनमचोदयत् ॥ ३० ॥ दुःशासन रथास्तूर्णं युज्यन्तां भीष्मरक्षिणः । द्वाविंशतिमनीकानि सर्व्वाण्येवाभिचोदय ॥ ३१ ॥ इदं हि समनुप्राप्तं वर्षपूगाभिचिन्तितम् । पाण्डवानां ससैन्यानां वधो राज्यस्य चागमः ॥ ३२ ॥ तत्र कार्य्यतमं मन्ये भीष्मस्यैवाभिरक्षणम् । स नो गुप्तः सहायः स्यात् हन्यात् पार्थांश्च संयुगे ॥ ३३ ॥ अब्रवीद्धि विशुद्धात्मा नाहं हन्यां शिखण्डिनम् । स्त्रीपूर्व्वको ह्यसौ राजन् तस्माद्वर्ज्यो मया रणे ॥ ३४ ॥ लोकस्तद्वेद यदहं पितुः प्रियचिकीर्षया । राज्यं स्फीतं महाबाहो स्त्रियश्च त्यक्तवान् पुरा ॥ ३५ ॥ नैव चाहं स्त्रियं जातु न स्त्रीपूर्व्वं कथञ्चन । हन्यां युधि नरश्रेष्ठ सत्यमेतद्ब्रवीमि ते ॥ ३६ ॥ अयं स्त्रीपूर्व्वको राजन् शिखण्डी यदि ते श्रुतः । उद्योगे कथितं यत्तत्तथा जाता शिखण्डिनी ॥ ३७ ॥ कन्या भूत्वा पुमान् जातः स च मां योधयिष्यति । तस्याहं प्रमुखे बाणान् न मुञ्चेयं कथञ्चन ॥ ३८ ॥

त पाण्डवः शूरः खाण्डवेऽग्निमतर्पयत् । पराजित्य रणे शक्रं पर्य्याप्तं तन्निदर्शनम् ॥ ६ ॥ यदा च त्वां महाबाहो गन्धर्वैर्हृत-मौजसा । अमोचयत् पाण्डुसुतः पर्य्याप्तं तन्निदर्शनम् ॥ ७ ॥ द्रवमाणेषु शूरेषु सोदरेषु तव प्रभो । सूतपुत्रे च राधेये पर्य्याप्तं तन्निदर्शनम् ॥ ८ ॥ यच्च नः सहितान् सर्वान् विराट-नगरे तदा । एक एव समुद्यातः पर्य्याप्तं तन्निदर्शनम् ॥ ९ ॥ द्रोणञ्च युधि संरब्धं माञ्च निर्जित्य संयुगे । वासांसि च समा-दत्त पर्य्याप्तं तन्निदर्शनम् ॥ १० ॥ यथा द्रौणिं महेष्वासं भारद्वाजमथापि च । गोग्रहे जितवान् पूर्वं पर्य्याप्तं तन्निदर्शनम् ॥ ११ ॥ विजित्य च यथा कर्णं सदा पुरुषमानिनम् । उत्तरायै ददौ वस्त्रं पर्य्याप्तं तन्निदर्शनम् ॥ १२ ॥ निवातकवचान् युद्धे वासवेनापि दुर्ज्जयान् । जितवान् समरे पार्थः पर्य्याप्तं तन्नि-दर्शनम् ॥ १३ ॥ को हि शक्तो रणे जेतुं पाण्डवं रभसं तदा । यस्य गोप्ता जगद्गोप्ता शङ्खचक्रगदाधरः ॥ १४ ॥ वासुदेवोऽनन्त-शक्तिः सृष्टिसंहारकारकः । सर्वेश्वरो देवदेवः परमात्मा सना-तनः ॥ १५ ॥ उक्तो हि बहुशो राजन् नारदाद्यैर्महर्षिभिः । त्वन्तु मोहान्न जानीषे वाच्यावाच्यं सुयोधन ॥ १६ ॥ मुमूर्षुर्हि नरः सर्वान् वृक्षान् पश्यति काञ्चनान् । तथा त्वमपि गान्धारे विपरीतानि पश्यसि ॥ १७ ॥ स्वयं वैरं महत्कृत्वा पाण्डवैः सह सृञ्जयैः । युध्यस्व तानद्य रणे पश्यामः पुरुषो भव ॥ १८ ॥ अहन्तु सोमकान् सर्वान् पाञ्चालांश्च समागतान् । निहनिष्ये नर-व्याघ्र वर्ज्जयित्वा शिखण्डिनम् ॥ १९ ॥ तैर्वाहं निहतः सङ्ख्ये गमिष्ये यमसादनम् । तान् वा निहत्य समरे प्रीतिं दास्याम्यहं तव ॥ २० ॥ पूर्वं हि स्त्री समुत्पन्ना शिखण्डी राजवेश्मनि । वरदानात् पुमान् जातः सैषा वै स्त्री शिखण्डिनी ॥ २१ ॥ तमहं न हनिष्यामि प्राणत्यागेऽपि भारत । यासौ प्राङ्निर्मिता धात्रा

सैषा वै स्त्री शिखण्डिनी ॥ २२ ॥ सुखं स्वपिहि गान्धारे श्वोऽस्मि कर्त्ता महारणम् । यं जनाः कथयिष्यन्ति यावत् स्थास्यति मेदिनी ॥ २३ ॥ एवमुक्तस्तव सुतो निर्जगाम नरेश्वर । अभिवाद्य गुरुं मूर्द्ध्ना प्रययौ स्वं निवेशनम् ॥ २४ ॥ आगत्य तु ततो राजा विसृज्य च महाजनम् । प्रविवेश ततस्तूर्णं क्षयं शत्रुक्षयङ्करः ॥ २५ ॥ प्रविष्टः स निशां तां च गमयामास पार्थिवः । प्रभातायाञ्च शर्वर्य्यां प्रातरुत्थाय तान्नृपः ॥ २६ ॥ राज्ञः समाज्ञापयत सेनां योजयतेति ह । अद्य भीष्मो रणे क्रुद्धो निहनिष्यति सोमकान् ॥ २७ ॥ दुर्य्योधनस्य तच्छ्रुत्वा रात्रौ विलपितं बहु । मन्यमानः स तं राजन् प्रत्यादेशमिवात्मन ॥ २८ ॥ निर्वेदं परमं गत्वा विनिन्द्य परवाच्यताम् । दीर्घं दध्यौ शान्तनवो योद्धुकामोऽर्जुनं रणे ॥ २९ ॥ इङ्गितेन तु तज्ज्ञात्वा गाङ्गेयेन विचिन्तितम् । दुर्य्योधनो महाराज दुःशासनमचोदयत् ॥ ३० ॥ दुःशासन रथास्तूर्णं युज्यन्तां भीष्मरक्षिणः । द्वाविंशतिमनीकानि सर्व्वाण्येवाभिचोदय ॥ ३१ ॥ इदं हि समनुप्राप्तं वर्षपूगाभिचिन्तितम् । पाण्डवानां ससैन्यानां वधो राज्यस्य चागमः ॥ ३२ ॥ तत्र कार्य्यतमं मन्ये भीष्मस्यैवाभिरक्षणम् । स नो गुप्तः सहायः स्यात् हन्यात् पार्थांश्च संयुगे ॥ ३३ ॥ अब्रवीद्धि विशुद्धात्मा नाहं हन्यां शिखण्डिनम् । स्त्रीपूर्व्वको ह्यसौ राजन् तस्माद्वर्ज्यो मया रणे ॥ ३४ ॥ लोकस्तद्वेद यदहं पितुः प्रियचिकीर्षया । राज्यं स्फीतं महाबाहो स्त्रियश्च त्यक्तवान् पुरा ॥ ३५ ॥ नैव चाहं स्त्रियं जातु न स्त्रीपूर्व्वं कथञ्चन । हन्यां युधि नरश्रेष्ठ सत्यमेतद्ब्रवीमि ते ॥ ३६ ॥ अयं स्त्रीपूर्व्वको राजन् शिखण्डी यदि ते श्रुतः । उद्योगे कथितं यत्तत्तथा जाता शिखण्डिनी ॥ ३७ ॥ कन्या भूत्वा पुमान् जातः स च मां योधयिष्यति । तस्याहं प्रमुखे बाणान् न मुञ्चेयं कथञ्चन ॥ ३८ ॥

पाण्डवा धार्त्तराष्ट्राश्च नदन्तो भैरवान् रवान् । भेरीमृदङ्गमड्डूनां दुन्दुभीनाञ्च निःस्वनैः ॥ १८ ॥ चक्रुशुः सिंहनादैश्च वल्गितैश्च पृथग्विधैः । वयं प्रतिनदन्तस्तान् गच्छामश्च त्वरान्विताः ॥१९॥ महत्यैवाभिसंक्रुद्धास्तदासीत्तुमुलं महत् । ततोऽन्योऽन्यं प्रधावन्तः सम्प्रहारं प्रचक्रिरे ॥ २० ॥ ततः शब्देन महता प्रचकम्पे वसुन्धरा । पक्षिणश्च महाघोरं व्याहरन्तो विबभ्रमुः ॥ २१ ॥ सप्रभश्चोदितः सूर्य्यो निष्प्रभः समपद्यत । ववुश्च वातास्तुमुलाः शंसन्तः सुमहद्भयम् ॥ २२ ॥ घोराश्च घोरनिर्ह्रादाः शिवास्तत्र ववाशिरे । वेदयन्त्यो महाराज महद्वैशसमागतम् ॥ २३ ॥ दिशः प्रज्वलिता राजन् पांशुवर्षं पपात च । रुधिरेण समुन्मिश्रमस्थिवर्षं तथैव च ॥ २४ ॥ रुदतां वाहनानाञ्च नेत्रेभ्यः प्रापतज्जलम् । सुस्रुवुश्चाशकृन्मूत्रं प्रध्यायन्तो विशाम्पते ॥ २५ ॥ अन्तर्हिता महानादाः श्रूयन्ते भरतर्षभ । रक्षसां पुरुषादानां नदतां भैरवान् रवान् ॥ २६ ॥ सम्पतन्तश्च दृश्यन्ते गोमायुबलवायसाः । श्वानश्च विविधैर्नादैर्वाशन्तस्तत्र मारिष ॥ २७ ॥ ज्वलिताश्च महोल्का वै समाहत्य दिवाकरम् । निपेतुः सहसा भूमौ वेदयन्त्यो महद्भयम् ॥ २८ ॥ महान्त्यनीकानि महाधनुष्मतां तदा तयोः पाण्डवधार्त्तराष्ट्रयोः । चकम्पिरे शङ्खमृदङ्गनिस्वनैः प्रकम्पितानीव वनानि वायुना ॥ २९ ॥ नरेन्द्रनागाश्वसमाकुलानामभ्यागतानामशिवे मुहूर्त्ते । बभूव घोषस्तुमुलश्चमूनां वातोद्धतानामिव सागराणाम् ॥ ३० ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि उत्पातदर्शने शततमोऽध्यायः ॥ १०० ॥

---

सञ्जय उवाच ॥ अभिमन्यू रथोदारः पिशङ्गैस्तुरगोत्तमैः ।
अभिदुद्राव तेजस्वी दुर्य्योधनबलं महत् ॥ १ ॥ विकिरन् शर-
वर्षाणि वारिधारा इवाम्बुदः । न शेकुः समरे क्रुद्धं सौभद्र-
मरिसूदनम् ॥ २ ॥ शस्त्रौघिणं गाहमानं सेनासागरमक्षयम् ।
निवारयितुमप्याजौ त्वदीयाः कुरुनन्दन ॥ ३ ॥ तेन मुक्ता रणे
राजन् शराः शत्रुनिबर्हणाः । क्षत्रियाननयञ्छूरान् प्रेतराज-
निवेशनम् ॥ ४ ॥ यमदण्डोपमान् घोरान् ज्वलिताशीविषो-
पमान् । सौभद्रः समरे क्रुद्धः प्रेषयामास सायकान् ॥ ५ ॥ स-
रथान् रथिनस्तूर्णं हयांश्चैव ससादिनः । गजारोहांश्च सगजान्
दारयामास फाल्गुनिः ॥ ६ ॥ तस्य तत् कुर्वतः कर्म महत्
सङ्ख्ये महाद्भुतम् । पूजयाञ्चक्रिरे हृष्टाः प्रशशंसुश्च फाल्गुनिम्
॥ ७ ॥ तान्यनीकानि सौभद्रो द्रावयामास भारत । तूलराशी-
निवाकाशे मारुतः सर्वतो दिशम् ॥ ८ ॥ तेन विद्राव्यमाणानि
तव सैन्यानि भारत । त्रातारं नाध्यगच्छेरन् पङ्के मग्ना इव
द्विपाः ॥ ९ ॥ विद्राव्य सर्वसैन्यानि तावकानि नरोत्तम । अभि-
मन्युः स्थितो राजन् विधूमोऽग्निरिव ज्वलन् ॥ १० ॥ न चैनं
तावका राजन् विषेहुररिघातिनम् । प्रदीप्तं पावकं यद्वत् पतङ्गाः
कालचोदिताः ॥ ११ ॥ प्रहरन् सर्वशत्रुभ्यः पाण्डवानां महा-
रथः । अदृश्यत महेष्वासः सवज्र इव वासवः ॥ १२ ॥ हेम-
पृष्ठं धनुश्चास्य ददृशे विचरद्दिशः । तोयदेषु यथा राजन् राज-
माना शतह्रदा ॥ १३ ॥ शराश्च निशिताः पीता निश्चरन्ति स्म
संयुगे । वनात् फुल्लद्रुमाद्राजन् भ्रमराणामिव व्रजाः ॥ १४ ॥
तथैव चरतस्तस्य सौभद्रस्य महात्मनः । रथेन काञ्चनाङ्गेन ददृशु-
र्नान्तरं जनाः ॥ १५ ॥ मोहयित्वा कृपं द्रोणं द्रौणिञ्च सबृह-
द्बलम् । सैन्धवञ्च महेष्वासो विचरन् लघु सुष्ठु च ॥ १६ ॥
मण्डलीकृतमेवास्य धनुः पश्यामि भारत । सूर्य्यमण्डलसङ्काश-

दर्वतस्तव वाहिनीम् ॥ १७ ॥ तं दृष्ट्वा चत्रिया· शूरा· प्रपतन्तं तरस्विनम् । दिकालात्नमिम लोक मेनिरे तस्य कर्मभि ॥ १८ ॥ तेनार्द्दिता महाराज भारती सा महाचमू । व्यभ्रमत्तत्र तत्रैव योषिम्मदवशादिव ॥ १९ ॥ द्रावयित्वा महासैन्य कम्पयित्वा महारथान् । नन्दयामास सुहृदो मय जित्वेव वासव ॥ २० ॥ तेन विद्राव्यमाणानि तव सैन्यानि संयुगे । चक्रुरार्त्तस्वर घोरं पर्जन्यनिनदोपमम् ॥ २१ ॥ त श्रुत्वा निनद घोर तव सैन्यस्य भारत । मारुतोद्धूतवेगस्य सागरस्येव पर्वणि ॥ २२ ॥ दुर्योधनस्तदा राजन्नार्ष्यश्रृङ्गिमभाषत । एक कार्ष्णिर्महाबाहो द्वितीय इव फाल्गुन ॥ २३ ॥ चमूं द्रावयते क्रोधाद्वृत्रो देव चमूमिव । तस्य चान्य न पश्यामि स युगे भेषजं महत् ॥ २४ ॥ ऋते त्वां राक्षसश्रेष्ठ सर्वविद्यासु पारगम् । स गत्वा त्वरितं वीर जहि सौभद्रमाहवे ॥ २५ ॥ वयं पार्थं हनिष्यामो भीष्म द्रोणपुरोगमा । स एवमुक्तो बलवान् राक्षसेन्द्र प्रतापवान् ॥ २६ ॥ प्रययौ समरे तूर्णं तव पुत्रस्य शासनात् । नर्द्दमानो महानाद प्रावृषीव बलाहक ॥ २७ ॥ तस्य शब्देन महता पाण्डवाना बल महत् । प्रचलत् सर्वतो राजन् वातोद्धूत इवा र्णव ॥ २८ ॥ बहवश्च महाराज तस्य नादेन भीषिता । प्रियान् प्राणान् परित्यज्य निपेतुर्धरणीतले ॥ २९ ॥ कार्ष्णि-श्चापि मुदा युक्त प्रगृह्य सशर धनु । नृत्यन्निव रथोपस्थे तद्रक्ष समुपाद्रवत् ॥ ३० ॥ तत स राक्षस क्रुद्ध सम्प्राप्ये वार्जुनि रणे । नातिदूरे स्थिता तस्य द्रावयामास वै चमूम् ॥ ३१ । ता बध्यमानाञ्च तथा पाण्डवाना महाचमूम् । प्रत्यु-द्ययौ रणे रक्षो देवसेना यथा बल ॥ ३२ ॥ विमर्द्द सुमहा नासीत तस्य सैन्यस्य मारिष । रक्षसा घोररूपेण बध्यमानस्य युगे ॥ ३३ ॥ तत शरशतैस्ता पाण्डवाना महाचमूम् ।

व्यद्रावयद्रणे रक्षो दर्शयन् स्वपराक्रमम् ॥ ३४ ॥ सा वध्य-
माना च तथा पाण्डवानामनीकिनी। रक्षसा घोररूपेण प्रदु-
द्राव महद्भयात् ॥ ३५ ॥ प्रमथ्य च रणे सेना पद्मिनीं वारणो
यथा। ततोऽभिदुद्राव रणे द्रौपदेयान् महाबलः ॥ ३६ ॥
तेन क्रुद्धा महेष्वासा द्रौपदेयाः प्रहारिणः। राक्षसं दुद्रुवुः
सङ्ख्ये ग्रहाः पञ्च रविं यथा ॥ ३७ ॥ वीर्य्यवद्भिस्ततस्तैस्तु
पीडितो राक्षसोत्तमः। यथा युगक्षये घोरे चन्द्रमाः पञ्चभि-
र्ग्रहैः ॥ ३८ ॥ प्रतिविन्ध्यस्ततो रक्षो बिभेद निशितैः शरैः।
सर्व्वपारसवैस्तूर्णमकुण्ठाग्रैर्महाबलः ॥ ३९ ॥ स तैर्भिन्नतनु-
त्राणः शुशुभे राक्षसोत्तमः। मरीचिभिरिवार्कस्य संस्यूतो जलदो
महान् ॥ ४० ॥ विषक्तैः स शरैश्चापि तपनीयपरिच्छदैः।
आर्ष्यशृङ्गिर्बभौ राजन् दीप्तशृङ्ग इवाचलः ॥ ४१ ॥ ततस्ते
भ्रातरः पञ्च राक्षसेन्द्रं महाहवे। विव्यधुर्निशितैर्बाणैस्तपनीय-
विभूषितैः ॥ ४२ ॥ स निर्भिन्नः शरैर्घोरैर्भुजगैः कोपितैरिव।
अलम्बुषो भृशं राजन् नागेन्द्र इव चुक्रुधे ॥ ४३ ॥ सोऽतिविद्धो
महाराज मुहूर्त्तमिव मारिष। प्रविवेश तमो दीर्घं पीडितस्तै-
र्महारथैः ॥ ४४ ॥ प्रतिलभ्य ततः संज्ञां क्रोधेन द्विगुणीकृतः।
चिच्छेद सायकांस्तेषां ध्वजांश्चैव धनूंषि च ॥ ४५ ॥ एकैकं
पञ्चभिर्बाणैराजघान स्मयन्निव। अलम्बुषो रथोपस्थे नृत्यन्निव
महारथः ॥ ४६ ॥ त्वरमाणः सुसंरब्धो हयांस्तेषां महात्मनाम्।
जघान राक्षस क्रुद्धः सारथींश्च महाबलः ॥ ४७ ॥ बिभेद च
सुसंरब्धः पुनश्चैतान् सुसंशितैः। शरैर्बहुविधाकारैः शतशोऽथ
सहस्रशः ॥ ४८ ॥ विरथांश्च महेष्वासान् कृत्वा तत्र स राक्षसः।
अभिदुद्राव वेगेन हन्तुकामो निशाचरः ॥ ४९ ॥ तानर्दितान्
रणे तेन राक्षसेन दुरात्मना। दृष्ट्वार्जुनसुतः सङ्ख्ये राक्षस-
मभ्युपाद्रवत् ॥ ५० ॥ तयोः समभवद्युद्धं वृत्रवासवयोरिव।

धृष्टद्युम्नस्तावकाः सर्वे पाण्डवाश्च महारथाः ॥ ५१ ॥ तौ समेतौ महायुद्धे क्रोधदीप्तौ परस्परम्। महाबलौ महाराज क्रोधसंरक्तलोचनौ ॥ ५२ ॥ परस्परमवेक्षेतां कालानलसमौ युधि। तयोः समागमो घोरो बभूव कटुकोदयः। यथा देवासुरे युद्धे शक्रशम्बरयोः पुरा ॥ ५३ ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि नवमदिवसयुद्धारम्भे अलम्बुषाभिमन्युसमागमे एकाधिकशततमोऽध्यायः ॥ १०१ ॥

---

धृतराष्ट्र उवाच। आर्जुनिं समरे शूरं विनिघ्नन्तं महारथान्। अलम्बुषः कथं युद्धे प्रत्ययुध्यत भारत ॥ १ ॥ आर्ष्यशृङ्गिं कथं चैव सौभद्रः परवीरहा। तन्ममाचक्ष्व तत्त्वेन यथावृत्तं स्म संयुगे ॥ २ ॥ भीमो वा रथिनां श्रेष्ठो राक्षसो वा घटोत्कचः। नकुलः सहदेवो वा सात्यकिर्वा महारथः ॥ ३ ॥ एतदाचक्ष्व मे सर्वं कुशलो ह्यसि सञ्जय। धनञ्जयश्च किं चक्रे मम सैन्यस्य संयुगे ॥ ४ ॥

सञ्जय उवाच। हन्त तेऽहं प्रवक्ष्यामि सङ्ग्रामं लोमहर्षणम्। यथाभूद्राक्षसेन्द्रस्य सौभद्रस्य च मारिष ॥ ५ ॥ अर्जुनश्च यथा सङ्ख्ये भीमसेनश्च पाण्डवः। नकुलः सहदेवश्च रणे चक्रुः पराक्रमम् ॥ ६ ॥ तथैव तावकाः सर्वे भीष्मद्रोणपुरःसराः। अद्भुतानि विचित्राणि चक्रुः कर्माण्यभीतवत् ॥ ७ ॥ अलम्बुषस्तु समरे अभिमन्युं महारथम्। विनद्य सुमहानादं तर्जयित्वा मुहुर्मुहुः ॥ ८ ॥ अभिदुद्राव वेगेन तिष्ठतिष्ठेति चाब्रवीत्। अभिमन्युश्च वेगेन सिंहवद्विनदन्मुहुः ॥ ९ ॥ आर्ष्यशृङ्गिं महेष्वासं पितुरत्यन्तवैरिणम्। ततः समीयतुः सङ्ख्ये त्वरितौ नरराक्षसौ ॥ १० ॥ रथाभ्यां रथिनौ श्रेष्ठौ यथा दे

द्विदानवौ । मायावी राक्षसश्रेष्ठो दिव्यास्त्रज्ञश्च फाल्गुनिः ॥ ११ ॥ ततः कार्ष्णिर्महाराज निशितैः सायकैस्त्रिभिः । आर्ष्यशृङ्गिं रणे विद्ध्वा पुनर्विव्याध पञ्चभिः ॥ १२ ॥ अलम्बुषोऽपि सङ्क्रुद्धः कार्ष्णिं नवभिराशुगैः । हृदि विव्याध वेगेन तोत्रैरिव महाद्विपम् ॥ १३ ॥ ततः शरसहस्रेण क्षिप्रकारी निशाचरः । अर्जुनस्य सुतं सङ्ख्ये पीडयामास भारत ॥ १४ ॥ अभिमन्युस्ततः क्रुद्धो नवभिर्नतपर्वभिः । बिभेद निशितैर्बाणै राक्षसेन्द्रं महोरसि ॥ १५ ॥ ते तस्य विविशुस्तूर्णं कायं निर्भिद्य मर्मसु । स तैर्विभिन्नसर्वाङ्गः शुशुभे राक्षसोत्तमः ॥ १६ ॥ पुष्पितैः किंशुकै राजन् संस्तीर्ण इव पर्वतः । सन्धारयाणश्च शरान् हेमपुङ्खान् महाबलः ॥ १७ ॥ विबभौ राक्षसश्रेष्ठः सज्वाल इव पर्वतः । ततः क्रुद्धो महाराज आर्ष्यशृङ्गिरमर्षणः ॥ १८ ॥ महेन्द्रप्रतिमं कार्ष्णिं छादयामास पत्रिभिः । तेन ते विशिखा मुक्ता यमदण्डोपमाः शिताः ॥ १९ ॥ अभिमन्युं विनिर्भिद्य प्राविशन्त धरातलम् । तथैवार्जुनिना मुक्ताः शराः कनकभूषणाः ॥ २० ॥ अलम्बुषं विनिर्भिद्य प्राविशन्त धरातलम् । सौभद्रस्तु रणे रक्षः शरैः सन्नतपर्वभिः ॥ २१ ॥ चक्रे विमुखमासाद्य मयं शक्र इवाहवे । विमुखञ्च ततो रक्षो वध्यमानं रणेऽरिणा ॥ २२ ॥ प्रादुश्चक्रे महामायां तामसीं परतापनः । ततस्ते तमसा सर्वे हृताश्चासन् महीपते ॥ २३ ॥ नाभिमन्युमपश्यन्त नैव स्वान् न परान् रणे । अभिमन्युश्च तं दृष्ट्वा घोररूपं महत्तमम् ॥ २४ ॥ प्रादुश्चक्रे घोरमस्त्रं भास्करं कुरुनन्दन । ततः प्रकाशमभवज्जगत् सर्वं महीपते ॥ २५ ॥ ताञ्चाभिजघ्निवान् मायां राक्षसस्य दुरात्मनः । संक्रुद्धश्च महावीर्यो राक्षसेन्द्रं नरोत्तमः ॥ २६ ॥ छादयामास समरे शरैः सन्नतपर्वभिः । बह्वीस्तथान्या मायाश्च प्रयुक्तास्तेन रक्षसा ॥ २७ ॥ सर्वास्त्रविदमेयात्मा वारयामास

फाल्गुनिः । हतमायन्ततो रक्षो वध्यमानञ्च सायकैः ॥ २८ ॥ रथं तत्रैव सन्त्यज्य प्राद्रवत् महतो भयात् । तस्मिन् विनिर्जिते तूर्णं कूटयोधिनि राक्षसे ॥ २९ ॥ आर्जुनिः समरे सैन्यं तावकं स ममर्द्द ह । मदान्धो वन्यनागेन्द्रः सपद्मा पद्मिनोमिव ॥ ३० ॥ ततः शान्तनवो भोष्मः सैन्यं दृष्टाभिविद्रुतम् । महता शरवर्षेण सौभद्रं पर्य्यवारयत् ॥ ३१ ॥ कोष्ठीकृत्य च तं वीरं धार्त्तराष्ट्रा महारथाः । एकं सुबहवो युद्धे ततक्षुः सायकैर्दृढम् ॥ ३२ ॥ स तैषां रथिना वोरः पितुस्तुल्यपराक्रमः । सदृशो वासुदेवस्य विक्रमेण बलेन च ॥ ३३ ॥ उभयोः सदृशं कर्म स पितुर्मातुलस्य च । रणे बहुविधं चक्रे सर्व्वशस्त्रभृतां वरः ॥ ३४ ॥ ततो धनञ्जयो वीरो विनिघ्नंस्तव सैनिकान् । आससाद रणे पुत्रं पुत्रमेप्सुरमर्षणः ॥ ३५ ॥ तथैव समरे राजन् पिता देवव्रतस्तव । आससाद रणे पार्थं स्वर्भानुरिव भास्करम् ॥ ३६ ॥ ततः सरथनागाश्वाः पुत्रास्तव जनेश्वर । परिवव्रु रणे भोष्मं जुगुपुश्च समन्ततः ॥ ३७ ॥ तथैव पाण्डवा राजन् परिवार्य्य धनञ्जयम् । रणाय महते युक्ता दंशिता भरतर्षभ ॥ ३८ ॥ शारद्वतस्ततो राजन् भीष्मस्य प्रमुखे स्थितम् । अर्जुनं पञ्चविंशत्या सायकानां समाचिनोत् ॥ ३९ ॥ प्रत्युद्गम्याथ विव्याध सात्यकिस्तं शितैः शरैः । पाण्डवप्रियकामार्थं शार्दूल इव कुञ्जरम् ॥ ४० ॥ गौतमोऽपि त्वरायुक्तो माधवं नवभिः शरैः । हृदि विव्याध संक्रुद्धः कङ्कपत्रपरिच्छदैः ॥ ४१ ॥ शैनेयोऽपि ततः क्रुद्धश्चापमानम्य वै जवात् । गौतमान्तकरं तूर्णं समाधत्त शिलीमुखम् ॥ ४२ ॥ तमापतन्तं वेगेन शक्राशनिसमद्युतिम् । द्विधा चिच्छेद स क्रुद्धो द्रौणिः परमकोपनः ॥ ४३ ॥ समुत्सृज्याथ शैनेयो गौतमं रथिनां वरः । अभ्यद्रवद्रणे द्रौणिं राहुः खे शशिनं यथा ॥ ४४ ॥ तस्य द्रौणिश्चापं द्विधा

चिच्छेद भारत । अथैनं छिन्नधन्वानं ताडयामास सायकैः ॥४५॥ सोऽन्यत् कार्मुकमादाय शत्रुघ्नं भारसाधनम् । द्रौणिं षष्ट्या महाराज बाह्वोरुरसि चार्पयत् ॥ ४६ ॥ स विद्धो व्यथितश्चैव मुहूर्त्तं कश्मलान्वितः । निषसाद रथोपस्थे ध्वजयष्टिं समाश्रितः ॥ ४७ ॥ प्रतिलभ्य ततः संज्ञां द्रोणपुत्रः प्रतापवान् । वार्ष्णेयं समरे क्रुद्धो नाराचेन समर्दयत् ॥ ४८ ॥ शैनेयं स तु निर्भिद्य प्राविशद्धरणीतले । वसन्तकाले बलवान् विलं सर्पशिशुर्यथा ॥ ४९ ॥ अथापरेण भल्लेन माधवस्य ध्वजोत्तमम् । चिच्छेद समरे द्रौणिः सिंहनादं मुमोच ह ॥ ५० ॥ पुनश्चैनं शरैर्घोरैश्छादयामास भारत । निदाघान्ते महाराज यथा मेघो दिवाकरम् ॥ ५१ ॥ सात्यकोऽपि महाराज शरजालं निहत्य तत् । द्रौणिमभ्याकिरत्तूर्णं शरजालैरनेकधा ॥ ५२ ॥ तापयामास च द्रौणिं शैनेयः परवीरहा । विमुक्तो मेघजालेन यथैव तपनस्तथा ॥ ५३ ॥ शराणाञ्च सहस्रेण पुनरेव समुद्यतः । सात्यकिश्छादयामास ननाद च महाबलः ॥ ५४ ॥ दृष्ट्वा पुत्रं तथा ग्रस्तं राहुणेव निशाकरम् । अभ्यद्रवत शैनेयं भारद्वाजः प्रतापवान् ॥ ५५ ॥ विव्याध च सुतीक्ष्णेन पृषत्केन महामृधे । परीप्सन् स्वसुतं राजन् वार्ष्णेयेनाभिपीडितम् ॥ ५६ ॥ सात्यकिस्तु रणे हित्वा गुरुपुत्रं महारथम् । द्रोणं विव्याध विंशत्या सर्वपारशवैः शरैः ॥ ५७ ॥ तदन्तरममेयात्मा कौन्तेयः शत्रुतापनः । अभ्यद्रवद्रणे क्रुद्धो द्रोणं प्रति महारथः ॥ ५८ ॥ ततो द्रोणश्च पार्थश्च समेयातां महामृधे । यथा बुधश्च शुक्रश्च महाराज नभस्तले ॥५९॥

इति भीष्मपर्वणि भीष्मवधपर्वणि सङ्कुलयुद्धे द्रोणार्जुन-
समागमे द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

---

फाल्गुनिः । हतमायन्ततो रक्षो वध्यमानञ्च सायकैः ॥ २८ ॥ रथं तत्रैव सन्त्यज्य प्राद्रवत् महतो भयात् । तस्मिन् विनिर्जिते तूर्णं कूटयोधिनि राक्षसे ॥ २९ ॥ आर्जुनिः समरे सैन्यं तावकं स ममर्द ह । मदान्धो वन्यनागेन्द्रः सपद्मां पद्मिनीमिव ॥ ३० ॥ ततः शान्तनवो भीष्मः सैन्यं दृष्ट्वाभिविद्रुतम् । महता शरवर्षेण सौभद्रं पर्य्यवारयत् ॥ ३१ ॥ कोष्ठीकृत्य च तं वीरं धार्त्तराष्ट्रा महारथाः । एकं सुबहवो युद्धे ततक्षुः सायकैर्दृढम् ॥ ३२ ॥ स तेषां रथिनां वीरः पितुस्तुल्यपराक्रमः । सदृशो वासुदेवस्य विक्रमेण बलेन च ॥ ३३ ॥ उभयोः सदृशं कर्म स पितुर्मातुलस्य च । रणे बहुविधं चक्रे सर्वशस्त्रभृतां वरः ॥ ३४ ॥ ततो धनञ्जयो वीरो विनिघ्नंस्तव सैनिकान् । आससाद रणे पुत्रं पुत्रमेप्सुरमर्षणः ॥ ३५ ॥ तथैव समरे राजन् पिता देवव्रतस्तव । आससाद रणे पार्थं स्वर्भानुरिव भास्करम् ॥ ३६ ॥ ततः सरथनागाश्वाः पुत्रास्तव जनेश्वर । परिवव्रुः रणे भीष्मं जुगुपुश्च समन्ततः ॥ ३७ ॥ तथैव पाण्डवा राजन् परिवार्य्य धनञ्जयम् । रणाय महते युक्ता दंशिता भरतर्षभ ॥ ३८ ॥ शारद्वतस्ततो राजन् भीष्मस्य प्रमुखे स्थितम् । अर्जुनं पञ्चविंशत्या सायकानां समाचिनोत् ॥ ३९ ॥ प्रत्युद्गम्याथ विव्याध सात्यकिस्तं शितैः शरैः । पाण्डवप्रियकामार्थं शार्दूल इव कुञ्जरम् ॥ ४० ॥ गौतमोऽपि त्वरायुक्तो माधवं नवभिः शरैः । हृदि विव्याध संक्रुद्धः कङ्कपत्रपरिच्छदैः ॥ ४१ ॥ शैनेयोऽपि ततः क्रुद्धश्चापमानम्य वै जवात् । गौतमान्तकरं तूर्णं समाधत्त शिलीमुखम् ॥ ४२ ॥ तमापतन्तं वेगेन शक्राशनिसमद्युतिम् । द्विधा चिच्छेद संक्रुद्धो द्रौणिः परमकोपनः ॥ ४३ ॥ समुत्सृज्याथ शैनेयो गौतमं रथिनां वरः । अभ्यद्रवद्रणे द्रौणिं राहुः खे शशिनं यथा ॥ ४४ ॥ तस्य द्रोणसुतश्चापं द्विधा

चिच्छेद भारत । अथैनं छिन्नधन्वानं ताड़यामास सायकैः ॥४५॥ सोऽन्यत् कार्मुकमादाय शत्रुघ्नं भारसाधनम् । द्रौणिं षष्ट्या महाराज बाह्वोरुरसि चार्पयत् ॥ ४६ ॥ स विद्धो व्यथितश्चैव मुहूर्त्तं कश्मलान्वितः । निषसाद रथोपस्थे ध्वजयष्टिं समाश्रितः ॥ ४७ ॥ प्रतिलभ्य ततः संज्ञां द्रोणपुत्रः प्रतापवान् । वार्ष्णेयं समरे क्रुद्धो नाराचेन समर्द्दयत् ॥ ४८ ॥ शैनेयं स तु निर्भिद्य प्राविशद्धरणीतले । वसन्तकाले बलवान् बिलं सर्पशिशुर्यथा ॥ ४९ ॥ अथापरेण भल्लेन माधवस्य ध्वजोत्तमम् । चिच्छेद समरे द्रौणिः सिंहनादं मुमोच ह ॥ ५० ॥ पुनश्चैनं शरैर्घोरैश्छादयामास भारत । निदाघान्ते महाराज यथा मेघो दिवाकरम् ॥ ५१ ॥ सात्यकोऽपि महाराज शरजालं निहत्य तत् । द्रौणिमभ्याकिरत्तूर्णं शरजालैरनेकधा ॥ ५२ ॥ तापयामास च द्रौणिं शैनेयः परवीरहा । विमुक्तो मेघजालेन यथैव तपनस्तथा ॥ ५३ ॥ शराणाञ्च सहस्रेण पुनरेव समुद्यतः । सात्यकिश्छादयामास ननाद च महाबलः ॥ ५४ ॥ दृष्ट्वा पुत्रं तथा ग्रस्तं राहुणेव निशाकरम् । अभ्यद्रवत शैनेयं भारद्वाजः प्रतापवान् ॥ ५५ ॥ विव्याध च सुतीक्ष्णेन पृषत्केन महामृधे । परीप्सन् स्वसुतं राजन् वार्ष्णेयेनाभिपीड़ितम् ॥ ५६ ॥ सात्यकिस्तु रणे हित्वा गुरुपुत्रं महारथम् । द्रोणं विव्याध विंशत्या सर्व्वपारशवैः शरैः ॥ ५७ ॥ तदन्तरममेयात्मा कौन्तेयः शत्रुतापनः । अभ्यद्रवद्रणे क्रुद्धो द्रोणं प्रति महारथः ॥ ५८ ॥ ततो द्रोणश्च पार्थश्च समेयाता महामृधे । यथा बुधश्च शुक्रश्च महाराज नभस्तले ॥ ५९ ॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि सङ्कुलयुद्धे द्रोणार्जुनसमागमे द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

---

धृतराष्ट्र उवाच। कथ द्रोणो महेष्वास पाण्डवश्च धन-
ञ्जय। समीयतू रणे यत्तौ तावुभौ पुरुषर्षभौ ॥ १ ॥ प्रियो
हि पाण्डवो नित्य भारद्वाजस्य धीमत। आचार्य्यश्च रणे नित्यं
प्रिय पार्थस्य सञ्जय ॥ २ ॥ तावुभौ रथिनौ सङ्ख्ये हृष्टौ
सिंहाविवोत्कटौ। कथ समीयतुर्यत्तौ भारद्वाजधनञ्जयौ ॥ ३ ॥

सञ्जय उवाच। न द्रोण समरे पार्थं जानीते प्रियमात्मन.।
क्षत्रधर्म पुरस्कृत्य पार्थो वा गुरुमाहवे ॥ ४ ॥ न क्षत्रिया रणे
राजन् वर्जयन्ति, परस्परम्। निर्मर्य्यादं हि युध्यन्ते पितृभि-
र्भ्रातृभि सह ॥ ५ ॥ रणे भारत पार्थेन द्रोणो विद्धस्त्रिभि.
शरै। नाचिन्तयच्च तान् बाणान् पार्थचापच्युतान् युधि। ६ ॥
शरवृष्ट्या पुन पार्थं छादयामास त रणे। स प्रजज्वाल रोषेण
गहनेऽग्निरिवोर्ज्जित ॥ ७ ॥ ततोऽर्जुन रणे द्रोण शरै सन्नत-
पर्वभि। छादयामास राजेन्द्र न चिरादिव भारत ॥ ८ ॥ ततो
दुर्य्योधनो राजा सुशर्म्माणमचोदयत्। द्रोणस्य समरे राजन्
पार्ष्णिग्रहणकारणात ॥ ९ ॥ त्रिगर्त्तराडपि क्रुद्धो भृशमायम्य
कार्मुकम्। छादयामास राजेन्द्र पार्थं बाणैरयोमुखै ॥ १० ॥
ताभ्या मुक्ता शरा राजन्नन्तरिक्षे विभेजिरे। हंसा इव महा-
राज शरत्काले नभस्तले ॥ ११ ॥ ते शरा प्राप्य कौन्तेय समन्ता-
द्विविशु प्रभो। फलभारनत यद्वत स्वादुवृक्ष विहङ्गमा ॥ १२ ॥
अर्ज्जुनस्तु रणे नाद विनद्य रथिना वर। त्रिगर्त्तराज समरे
सपुत्र विव्यधे शरै ॥ १३ ॥ ते विध्यमाना पार्थेन कालेनेव
युगक्षये। पार्थमेवाभ्यवर्त्तन्त मरणे कृतनिश्चया ॥ १४ ॥ मुमुचु
शरवृष्टिञ्च पाण्डवस्य रथ प्रति। शरवृष्टि ततस्तान्तु शरवर्षै:
समन्तत ॥ १५ ॥ प्रतिजग्राह राजेन्द्र तोयवृष्टिमिवाचल।
तत्राद्भुतमपश्याम बीभत्सोर्हस्तलाघवम् ॥ १६ ॥ विमुक्ता बहुभि-
र्योधै शस्त्रवृष्टि दुरासदाम्। यदेको वारयामास मारुतोऽभ्र-

गणानिव ॥ १७ ॥ कर्म्मणा तेन पार्थस्य तुतुषुर्द्देवदानवाः। अथ क्रुद्धो रणे पार्थस्त्रिगर्त्तान् प्रति भारत ॥ १८ ॥ मुमोचास्त्रं महाराज वायव्यं पृतनामुखे। प्रादुरासीत्ततो वायुः क्षोभयाणो नभस्तलम् ॥ १९ ॥ पातयन् वै तरुगणान् विनिघ्नंश्चैव सैनिकान्। ततो द्रोणोऽभिवीक्ष्यैव वायव्यास्त्रं सुदारुणम् ॥ २० ॥ शैलमन्यन्महाराज घोरमस्त्रं मुमोच ह। द्रोणेन युधि निर्मुक्ते तस्मिन्नस्त्रे नराधिप ॥ २१ ॥ प्रशशाम ततो वायुः प्रसन्नाश्च दिशो दश। ततः पाण्डुसुतो वीरस्त्रिगर्त्तस्य रथव्रजान् ॥ २२ ॥ निरुत्साहांस्ततश्चक्रे विमुखान् विपराक्रमान्। ततो दुर्य्योधनश्चैव कृपश्च रथिनां वरः ॥ २३ ॥ अश्वत्थामा तथा शल्यः काम्बोजश्च सुदक्षिणः। विन्दानुविन्दावावन्त्यौ वाह्लिकः सह वाह्लिकैः ॥ २४ ॥ महता रथवंशेन पार्थस्यावारयन् दिशः। तथैव भगदत्तश्च श्रुतायुश्च महाबलः ॥ २५ ॥ गजानीकेन भीमस्य ताववारयतां दिशः। भूरिश्रवाः शलश्चैव सौवलश्च विशाम्पते ॥ २६ ॥ शरौघैर्विमलैस्तीक्ष्णैर्माद्रीपुत्राववारयन्। भीष्मस्तु सहितः सङ्ख्ये धार्त्तराष्ट्रैः ससैनिकैः ॥ २७ ॥ युधिष्ठिरं समासाद्य सर्व्वतः पर्य्यवारयत्। आपतन्तं गजानीकं दृष्ट्वा पार्थो वृकोदरः ॥ २८ ॥ लेलिहन् सृक्कणी वीरो मृगराडिव कानने। भीमस्तु रथिनां श्रेष्ठो गदां गृह्य महाहवे ॥ २९ ॥ अवप्लुत्य रथात्तूर्णं तव सैन्यमभीषयत्। तमुद्वीक्ष्य गदाहस्तं ततस्ते गजसादिनः ॥ ३० ॥ परिवव्रू रणे यत्नात् भीमसेनं समन्ततः। गजमध्यमनुप्राप्तः पाण्डवः स व्यराजत ॥ ३१ ॥ मेघजालस्य महतो यथा मध्यगतो रविः। व्यधमत् स गजानीकं गदया पाण्डवर्षभः ॥ ३२ ॥ महाभ्रजालमतुलं मातरिश्वेव सन्ततम्। ते वध्यमाना बलिना भीमसेनेन दन्तिनः ॥ ३३ ॥ आर्त्तनादं रणे चक्रुर्गर्ज्जन्तो जलदा इव। बहुधा दारितश्चैव विषाणैस्तत्र दन्तिभिः ॥ ३४ ॥ फुल्लाशोक

निभः पार्थः शुशुभे रणमूर्द्धनि । विषाणे दन्तिनं गृह्य निर्विषाणमथाकरोत् ॥ ३५ ॥ विषाणेन च तेनैव कुम्भेऽभ्याहत्य दन्तिनम् । पातयामास समरे दण्डहस्त इवान्तकः ॥ ३६ ॥ शोणिताक्तां गदां बिभ्रत् मेदोमज्जाकृतच्छविः । कृताभ्यङ्गः शोणितेन रुद्रवत् प्रत्यदृश्यत ॥ ३७ ॥ एवं ते वध्यमानास्तु हतशेषा महागजाः । प्राद्रवन्त दिशो राजन् विमृद्नन्तः स्वकं बलम् ॥ ३८ ॥ द्रवद्भिस्तैर्महानागैः समन्ताद्भरतर्षभ । दुर्योधनबलं सर्वं पुनरासीत् पराङ्मुखम् ॥ ३९ ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि भीमपराक्रमे
त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

---

सञ्जय उवाच । मध्यन्दिने महाराज सङ्ग्रामः समपद्यत । लोकक्षयकरो रौद्रो भीष्मस्य सह सोमकैः ॥ १ ॥ गाङ्गेयो रथिनां श्रेष्ठः पाण्डवानामनीकिनीम् । व्यधमन्निशितैर्बाणैः शतशोऽथ सहस्रशः ॥ २ ॥ सम्ममर्द्द च तत् सैन्यं पिता देवव्रतस्तव । धान्यानामिव लूनानां प्रकरं गोगणा इव ॥ ३ ॥ धृष्टद्युम्नः शिखण्डी च विराटो द्रुपदस्तथा । भीष्ममासाद्य समरे शरैर्जघ्नुर्महारथम् ॥ ४ ॥ धृष्टद्युम्नं ततो विद्ध्वा विराटञ्च शरैस्त्रिभिः । द्रुपदस्य च नाराचं प्रेषयामास भारत ॥ ४ ॥ तेन विद्धा महेष्वासा भीष्मेणामित्रकर्षिणा । चुक्रुधुः समरे राजन् पादस्पृष्टा इवोरगाः ॥ ५ ॥ शिखण्डी तञ्च विव्याध भारतानां पितामहम् । स्त्रीमयं मनसा ध्यात्वा नास्मै प्राहरदच्युतः ॥ ६ ॥ धृष्टद्युम्नस्तु समरे क्रोधेनाग्निरिव ज्वलन् । पितामहं त्रिभिर्बाणैर्बाह्वोरुरसि चार्पयत् ॥ ७ ॥ द्रुपदः पञ्चविंशत्या विराटो दशभिः शरैः । शिखण्डी पञ्चविंशत्या भीष्मं विव्याध सायकैः ॥ ८ ॥ सोऽतिविद्धो

महाराज शोणितौघपरिप्लुतः । वसन्ते पुष्पशवलो रक्ताशोक इवाबभौ ॥ ९ ॥ तान् प्रत्यविध्यत् गाङ्गेयस्त्रिभिस्त्रिभिरजिह्मगैः । द्रुपदस्य च भल्लेन धनुश्चिच्छेद मारिष ॥ १० ॥ सोऽन्यत् कार्म्मुकमादाय भीष्मं विव्याध पञ्चभिः । सारथिञ्च त्रिभिर्बाणैर्निशितैरणमूर्द्धनि ॥ ११ ॥ तथा भीमो महाराज द्रौपद्याः पञ्च चात्मजाः । कैकेया भ्रातरः पञ्च सात्यकिश्चैव सात्वतः ॥ १२ ॥ अभ्यद्रवन्त गाङ्गेयं युधिष्ठिरपुरोगमाः । रिरक्षिषन्तः पाञ्चालान् धृष्टद्युम्नपुरोगमान् ॥ १३ ॥ तथैव तावकाः सर्व्वे भीष्मरक्षार्थमुद्यताः । प्रत्युद्ययुः पाण्डुसेनाः सहसैन्या नराधिप ॥ १४ ॥ तत्रासीत् सुमहद्युद्धं तव तेषाञ्च सङ्कुलम् । नराश्वरथनागानां यमराष्ट्रविवर्द्धनम् ॥ १५ ॥ रथी रथिनमासाद्य प्राहिणोद्यमसादनम् । तथेतरान् समासाद्य नरनागाश्वसादिनः ॥ १६ ॥ अनयन् परलोकाय शरैः सन्नतपर्व्वभिः । अस्त्रैश्च विविधैर्घोरैस्तत्र तत्र विशाम्पते ॥ १७ ॥ रथास्तु रथिभिर्हीना हतसारथयस्तथा । विप्रद्रुताश्च समरे दिशो जग्मुः समन्ततः ॥ १८ ॥ मृद्नाना नराम्राजन् हयांश्च सुबहून् रणे । वातायमाना दृश्यन्ते गन्धर्व्वनगरोपमाः ॥ १९ ॥ रथिनश्च रथैर्हीना वर्म्मिणस्तेजसा युताः । कुण्डलोष्णीषिणः सर्व्वे निष्काङ्गदविभूषणाः ॥ २० ॥ देवपुत्रसमाः सर्व्वे शौर्य्ये शक्रसमा युधि । ऋद्ध्या वैश्रवणञ्चाति नयेन च बृहस्पतिम् ॥ २१ ॥ सर्व्वलोकेश्वराः शूरास्तत्र तत्र विशाम्पते । विप्रद्रुता व्यनश्यन्त प्राकृता इव मानवाः ॥ २२ ॥ दन्तिनश्च नरश्रेष्ठ हीनाः परमसादिभिः । मृद्नन्तः स्वान्यनीकानि निपेतुः सर्व्वशब्दगाः ॥ २३ ॥ चर्म्मभिश्चामरैश्चित्रैः पताकाभिश्च मारिष । छत्रैः सितैर्हेमदण्डैश्चामरैश्च समन्ततः ॥ २४ ॥ विशीर्णैर्विप्रधावन्तो दृश्यन्ते स्म दिशो दश । नवमेघप्रतीकाशा जलदोपमनिस्वनाः ॥ २५ ॥ तथैव दन्तिभिर्हीना गजारोहा विशा-

श्मते । प्रधावन्तो व्यदृश्यन्त तव तेषाञ्च सङ्कुले ॥ २६ ॥ नाना-
द्विपसमुत्याद्य तुरङ्गान् हेमभूषितान् । वातायमानानद्राक्षं शत-
शोऽथ सहस्रशः ॥ २७ ॥ अश्वारोहान् हतैरश्वैर्गृहीतासीन्
समन्ततः । द्रवमाणानपश्याम द्राव्यमाणांश्च संयुगे ॥ २८ ॥ गजो
गजं समासाद्य द्रवमाणं महाहवे । ययौ प्रमृद्य तरसा पदा-
तीन् वाजिनस्तथा ॥ २९ ॥ तथैव च रथान् राजन् सममर्द्द
रणे गजः । रथाश्चैव समासाद्य पतितांस्तुरगान् भुवि ॥ ३० ॥
व्यमृद्नन् समरे राजंस्तुरङ्गाश्च नरान् रणे । एवं ते बहुधा राजन्
प्रत्यमृद्नन् परस्परम् ॥ ३१ ॥ तस्मिन् रौद्रे तदा युद्धे वर्त्तमाने
महाभये । प्रावर्त्तत नदी घोरा शोणितान्त्रतरङ्गिणी ॥ ३२ ॥
अस्थिसङ्घातसम्बाधा केशशैवलशाद्वला । रथह्रदा शरावर्त्ता
हयमीना दुरासदा ॥ ३३ ॥ शीर्षोपलसमाकीर्णा हस्तिग्राह-
समाकुला । कवचोष्णीषफेनौघा धनुर्वेगासिकच्छपा ॥ ३४ ॥
पताकाध्वजवृक्षाढ्या मर्त्त्यकूलापहारिणी । क्रव्यादहंससङ्कीर्णा
यमराष्ट्रविवर्द्धिनी ॥ ३५ ॥ तां नदीं क्षत्रियाः शूरा रथनाग-
हयप्लवैः । प्रतेरुर्बहवो राजन् भयं त्यक्त्वा महारथाः ॥ ३६ ॥
अपराह्णे रणे भीरून् कश्मलेनाभिसंवृतान् । यथा वैतरणी
प्रेतान् प्रेतराजपुरं प्रति ॥ ३७ ॥ प्राक्रोशन् क्षत्रियास्तत्र दृष्ट्वा
तद्वैशसं महत् । दुर्य्योधनापराधेन गच्छन्ति क्षत्रियाः क्षयम्
॥ ३८ ॥ गुणवतः कथं द्वेषं धृतराष्ट्रो जनेश्वरः । कृतवान्
पाण्डुपुत्रेषु पापात्मा लोभमोहितः ॥ ३९ ॥ एवं बहुविधा वाचः
श्रूयन्ते स्म परस्परम् । पाण्डवस्तवसंयुक्ताः पुत्राणां ते सुदारुणाः
॥ ४० ॥ ता निशम्य ततो वाचः सर्वयोधैरुदाहृताः । आगस्कृत्
सर्वलोकस्य पुत्रो दुर्य्योधनस्तव ॥ ४१ ॥ भीष्मं द्रोणं कृपञ्चैव
शल्यञ्चोवाच भारत । युध्यध्वमनहङ्काराः किं चिरं कुरुथेति च
॥ ४२ ॥ ततः प्रववृते युद्धं कुरूणां पाण्डवैः सह । अक्षद्यूतकृतं

राजन् सुघोरं वैशसं महत् ॥ ४३ ॥ यत्पुरा न निगृह्णासि वार्य्यमाणो महात्मभिः। विचित्रवीर्य्य तस्येदं फलं पश्यसि दारुणम् ॥ ४४ ॥ न हि पाण्डुसुता राजन् ससैन्याः सपदानुगाः। रक्षन्ति समरे प्राणान् कौरवा वापि संयुगे ॥ ४५ ॥ एतस्मात् कारणात् घोरो वर्त्तते स्वजनक्षयः। दैवाद्वा पुरुषव्याघ्र तव चापनयान्नृप ॥ ४६ ॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि सङ्कुलयुद्धे चतुरधिकशततमोऽध्यायः ॥ १०४ ॥

---

सञ्जय उवाच। अर्ज्जुनस्तान् नरव्याघ्रो सुशर्म्मानुचरान्नृपान्। अनयत् प्रेतराजस्य सदनं सायकैः शितैः ॥ १ ॥ सुशर्म्मापि ततो वाणैः पार्थं विव्याध संयुगे। वासुदेवञ्च सप्तत्या पार्थञ्च नवभिः पुनः ॥ २ ॥ तान्निवार्य्य शरौघेण शक्रसूनुर्म्महारथः। सुशर्म्मणो रणे योधान् प्राहिणोद्यमसादनम् ॥ ३ ॥ ते बध्यमानाः पार्थेन कालेनेव युगक्षये। व्यद्रवन्त रणे राजन् भये जाते महारथाः ॥ ४ ॥ उत्सृज्य तुरगान् केचित् रथान् केचिच्च मारिष। गजानन्ये समुत्सृज्य प्राद्रवन्त दिशो दश ॥ ५ ॥ अपरे तु तदादाय वाजिनागरथान्रणे। त्वरया परया युक्ता प्राद्रवन्त विशाम्पते ॥ ६ ॥ पदाताश्चापि शस्त्राणि समुत्सृज्य महारणे। निरपेक्षाभ्यधावन्त तेन तेन स्म भारत ॥ ७ ॥ वार्य्यमाणाः सुबहुशस्त्रैगर्त्तेन सुशर्म्मणा। तथान्यैः पार्थिवश्रेष्ठैर्न्न व्यतिष्ठन्त संयुगे ॥ ८ ॥ तद्बलं प्रद्रुतं दृष्ट्वा पुत्रो दुर्य्योधनस्तव। पुरस्कृत्य रणे भीष्मं सर्व्वसैन्यपुरस्कृतः ॥ ९ ॥ सर्व्वोद्योगेन महता धनञ्जयमुपाद्रवत्। त्रिगर्त्ताधिपतेरर्थे जीवितस्य विशाम्पते ॥ १० ॥ स एकः समरे तस्थौ किरन् बहुविधान् शरान्। भ्रातृभिः सहित सर्व्वैः शेषा हि

प्रद्रुता नराः ॥११॥ तथैव पाण्डवा राजन् सर्वोद्योगेन दूषिताः ।
प्रययुः फाल्गुनार्थाय यत्र भीष्मो व्यवस्थितः ॥ १२ ॥ श्लायमानाः
रणे वीर्यं घोरं गाण्डीवधन्वनः । हाहाकारकृतोत्साहा भीष्मं
जग्मुः समन्ततः ॥ १३ ॥ ततस्तालध्वजः शूरः पाण्डवानां
वरूथिनीम् । छादयामास समरे शरैः सन्नतपर्वभिः ॥ १४ ॥
एकीभूतास्ततः सर्वे कुरवः सह पाण्डवैः । अयुध्यन्त महाराज
मध्यं प्राप्ते दिवाकरे ॥ १५ ॥ सात्यकिः कृतवर्माणं विद्धा पञ्चभि-
राशुगैः । अतिष्ठदाहवे शूरः किरन् बाणान् सहस्रशः ॥ १६ ॥
तथैव द्रुपदो राजा द्रोणं विद्धा शितैः शरैः । पुनर्विव्याध सप्तत्या
सारथिञ्चास्य पञ्चभिः ॥ १७ ॥ भीमसेनस्तु राजानं बाह्लिकं
प्रपितामहम् । विद्धानदन्महानादं शार्दूल इव कानने ॥ १८ ॥
आर्जुनिश्चित्रसेनेन विद्धो बहुभिराशुगैः । चित्रसेनं त्रिभिर्बाणै-
र्विव्याध हृदये भृशम् ॥ १९ ॥ समागतौ तौ तु रणे महामात्रौ
व्यरोचताम् । यथाकाशे महाराज स्थितौ बुधशनैश्चरौ ॥ २० ॥
तस्याश्वांश्चतुरो हत्वा सूतञ्च नवभिः शरैः । ननाद बलवान्नादं
सौभद्रः परवीरहा ॥ २१ ॥ हताश्वात्तु रथात्तूर्णं सोऽवप्लुत्य
महारथः । आरुरोह रथं तूर्णं दुर्मुखस्य विशाम्पते । २२ ॥
द्रोणश्च द्रुपदं भित्त्वा शरैः सन्नतपर्वभिः । सारथिञ्चास्य विव्याध
त्वरमाणः पराक्रमी ॥ २३ ॥ पीड्यमानस्ततो राजन् द्रुपदो
वाहिनीमुखे । अपायाज्जवनैरश्वैः पूर्ववैरमनुस्मरन् ॥ २४ ॥
भीमसेनस्तु राजानं मुहूर्त्तादिव बाह्लिकम् । व्यश्वसूतरथं चक्रे
सर्वसैन्यस्य पश्यतः ॥ २५ ॥ ससम्भ्रमो महाराज संशयं परमं
गतः । अवप्लुत्य ततो वाहाद्बाह्लिकः पुरुषोत्तमः ॥ २६ ॥ आरु-
रोह रथं तूर्णं लक्ष्मणस्य महाहवे । सात्यकिः कृतवर्माणं
वारयित्वा महारणे ॥ २७ ॥ शरैर्बहुविधैराजन्नाससाद पिता-
महम् । स विद्धा बाणषष्ट्या तु निशितैर्लोमवाहिभिः । २८ ॥

नृत्यन्निव रथोपस्थे विधुन्वानो महद्धनुः । तस्यायसी महाशक्तिं
चिक्षेपाथ पितामहः ॥ २९ ॥ हेमचित्रां महावेगां नागकन्योपमां
शुभाम् । तामापतन्तीं सहसा मृत्युकल्पां सुदुर्ज्जयाम् ॥ ३० ॥
व्यंसयामास वार्ष्णेयो लाघवेन महायशाः । अनासाद्य तु वार्ष्णेयं
शक्तिः परमदारुणा ॥ ३१ ॥ न्यपतद्धरणीपृष्ठे महोल्केव ,महा
प्रभा । वार्ष्णेयस्तु ततो राजन् स्वां शक्तिं कनकप्रभाम् ॥ ३२ ॥
वेगवद्गृह्य चिक्षेप पितामहरथं प्रति । वार्ष्णेयभुजवेगेन प्रणुन्ना
सा महाहवे ॥ ३३ ॥ अभिदुद्राव वेगेन कालरात्रिर्यथा नरम् ।
तामापतन्तीं सहसा द्विधा चिच्छेद भारत ॥ ३४ ॥ क्षुरप्राभ्यां
सुतीक्ष्णाभ्यां सा व्यशीर्य्यत मेदिनीम् । छित्त्वा शक्तिन्तु गाङ्गेयः
सात्यकिं नवभिः शरैः ॥ ३५ ॥ आजघानोरसि क्रुद्धः प्रहसन्
शत्रुकर्षण । ततः सरथनागाश्वाः पाण्डवाः पाण्डुपूर्व्वज ॥ ३६ ॥
परिवव्रूरणे भीष्मं माधवत्राणकारणात् । ततः प्रववृते युद्धं
तुमुलं लोमहर्षणम् । पाण्डवानां कुरूणाञ्च समरे विजयै-
षिणाम् ॥ ३७ ॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि भीष्मवार्ष्णेययुद्धे
पञ्चाधिकशततोऽध्यायः ॥ १०५ ॥

— —

सञ्जय उवाच । दृष्ट्वा भीष्मं रणे क्रुद्धं पाण्डवैरभिसंवृतम् ।
यथा मेघैर्महाराज तपान्ते दिवि भास्करम् ॥ १ ॥ दुर्य्योधनो
महाराज दुःशासनमभाषत । एष शूरो महेष्वासो भीष्मः शूर
निसूदन ॥ २ ॥ छादितः पाण्डवैः शूरैः समन्ताद्भरतर्षभ । तस्य
कार्य्यं त्वया वीर रक्षणं सुमहात्मनः ॥ ३ ॥ रक्ष्यमाणोऽपि समरे
भीष्मोऽस्माकं पितामहः । निहन्यात् समरे सर्व्वान् पाञ्चालान्
पाण्डवैः सह ॥ ४ ॥ तत्र कार्य्यतमं मन्ये भीष्मस्यैवाभिरक्षणम् ।

प्रहुता नरा ॥ ११ ॥ तथैव पाण्डवा राजन् सर्वोद्योगेन दंशिताः ।
प्रेययुः फाल्गुनार्थाय यत्र भीष्मो व्यतिष्ठत ॥ १२ ॥ शायमाना
रणे वीर्य्यं घोरं गाण्डीवधन्वनः । हाहाकारकृतोत्साहा भीष्मं
जग्मुः समन्ततः ॥ १३ ॥ ततस्तालध्वजः शूरः पाण्डवानां
वरूथिनीम् । छादयामास समरे शरैः सन्नतपर्व्वभिः ॥ १४ ॥
एकीभूतास्ततः सर्वे कुरवः सह पाण्डवैः । अयुध्यन्त महाराज
मध्य प्राप्ते दिवाकरे ॥ १५ ॥ सात्यकिं कृतवर्माथ विद्ध्वा पञ्चभि-
राशुगैः । अतिष्ठदाहवे शूरः किरन् बाणान् सहस्रशः ॥ १६ ॥
तथैव द्रुपदो राजा द्रोणं विद्ध्वा शितैः शरैः पुनर्विव्याध सप्तत्या
सारथिञ्चास्य पञ्चभिः ॥ १७ ॥ भीमसेनस्तु राजानं वाह्लिकं
प्रपितामहम् । विद्ध्वानदन्महानादं शार्दूल इव कानने ॥ १८ ॥
आर्जुनिश्चित्रसेनेन विद्धो बहुभिराशुगैः । चित्रसेनं त्रिभिर्बाणै-
र्विव्याध हृदये भृशम् ॥ १९ ॥ समागतौ तौ तु रणे महामात्रौ
व्यरोचताम् । यथाकाशे महाराज स्थितौ बुधशनैश्चरौ ॥ २० ॥
तस्याश्वांश्चतुरो हत्वा सूतञ्च नवभिः शरैः । ननाद बलवान्नादं
सौभद्रः परवीरहा ॥ २१ ॥ हताश्वात्तु रथात्तूर्णं सोऽवप्लुत्य
महारथः । आरुरोह रथं तूर्णं दुर्मुखस्य विशाम्पते । २२ ॥
द्रोणश्च द्रुपदं भित्त्वा शरैः सन्नतपर्व्वभिः । सारथिञ्चास्य विव्याध
त्वरमाणः पराक्रमी ॥ २३ ॥ पीड्यमानस्ततो राजन् द्रुपदो
वाहिनीमुखे । अपायाज्जवनैरश्वैः पूर्ववैरमनुस्मरन् ॥ २४ ॥
भीमसेनस्तु राजानं मुहूर्तादिव वाह्लिकम् । व्यश्वसूतरथं चक्रे
सर्वसैन्यस्य पश्यतः ॥ २५ ॥ ससम्भ्रमो महाराज संशयं परमं
गतः । अवप्लुत्य ततो वाहाद्वाह्लिकः पुरुषोत्तमः ॥ २६ ॥ आरु-
रोह रथं तूर्णं लक्ष्मणस्य महाहवे । सात्यकिं कृतवर्माणं
वारयित्वा महारणे ॥ २७ ॥ शरैर्बहुविधैराजन्नाससाद पिता-
महम् । स विद्ध्वा भारतं षष्ट्या तु निशितैर्लोमवाहिभिः ॥ २८ ॥

नृत्यन्निव रथोपस्थे विधुन्वानो महद्धनुः । तस्यायसीं महाशक्तिं
चिक्षेपाथ पितामहः ॥ २९ ॥ हेमचित्रां महावेगां नागकन्योपमां
शुभाम् । तामापतन्तीं सहसा मृत्युकल्पां सुदुर्ज्जयाम् ॥ ३० ॥
व्यंसयामास वार्ष्णेयो लाघवेन महायशाः । अनासाद्य तु वार्ष्णेयं
शक्तिः परमदारुणा ॥ ३१ ॥ न्यपतद्धरणीपृष्ठे महोल्केव महा-
प्रभा । वार्ष्णेयस्तु ततो राजन् स्वां शक्तिं कनकप्रभाम् ॥ ३२ ॥
वेगवद्गृह्य चिक्षेप पितामहरथं प्रति । वार्ष्णेयभुजवेगेन प्रणुन्ना
सा महाहवे ॥ ३३ ॥ अभिदुद्राव वेगेन कालरात्रिर्यथा नरम् ।
तामापतन्तीं सहसा द्विधा चिच्छेद भारत ॥ ३४ ॥ क्षुरप्राभ्यां
सुतीक्ष्णाभ्यां सा व्यशीर्य्यत मेदिनीम् । छित्त्वा शक्तिन्तु गाङ्गेयः
सात्यकिं नवभिः शरैः ॥ ३५ ॥ आजघानोरसि क्रुद्धः प्रहसन्
शत्रुकर्षणः । ततः सरथनागाश्वाः पाण्डवाः पाण्डुपूर्वज ॥ ३६ ॥
परिवव्रू रणे भीष्मं माधवत्राणकारणात् । ततः प्रववृते युद्धं
तुमुलं लोमहर्षणम् । पाण्डवानां कुरूणाञ्च समरे विजयै-
षिणाम् ॥ ३७ ॥

गोप्ता ह्येष महेष्वासो भीष्मोऽस्माकं महाव्रत ॥ ५ ॥ स भवान् सर्वसैन्येन परिवार्य्य पितामहम्। समरे कर्म कुर्वाणं दुष्करं परिरक्षतु ॥ ६ ॥ स एवमुक्तः समरे पुत्रो दुःशासनस्तव। परिवार्य्य स्थितो भीष्मं सैन्येन महता वृत ॥ ७ ॥ ततः शतसहस्राणां हयानां सुबलात्मज। विमलप्रासहस्तानामृष्टितोमरधारिणाम् ॥ ८ ॥ दर्पितानां सुवेगानां बलस्थानां पताकिनाम्। शिक्षितैर्युद्धकुशलैरुपेतानां नरोत्तमैः ॥ ९ ॥ नकुलं सहदेवञ्च धर्म्मराजञ्च पाण्डवम्। न्यवारयन्नरश्रेष्ठान् परिवार्य्य समन्ततः ॥ १० ॥ ततो दुर्य्योधनो राजा शूराणां हयसादिनाम्। अयुतं प्रेषयामास पाण्डवानां निवारणे ॥ ११ ॥ तैः प्रविष्टैर्महावेगैर्गरुत्मद्भिरिवाहवे। खुराहता धरा राजंश्चकम्पे च ननाद च ॥ १२ ॥ खुरशब्दश्च सुमहान् वाजिनां शुश्रुवे तदा। महा-

पतिताः पात्यमानाश्च प्रत्यदृश्यन्त सर्वशः । वध्यमाना हयाश्चैव प्राद्रवन्त भयार्दिताः ॥ २३ ॥ यथा सिंहं समासाद्य मृगाः प्राणपरायणाः । पाण्डवाश्च महाराज जित्वा शत्रून् महामृधे ॥ २४ ॥ दध्मुः शङ्खांश्च भेरीश्च ताडयामासुराहवे । ततो दुर्योधनो दीनो दृष्ट्वा सैन्यं पराजितम् ॥ २५ ॥ अब्रवीद् भरतश्रेष्ठ मद्रराजमिदं वचः । एष पाण्डुसुतो ज्येष्ठो यमाभ्यां सहितो रणे ॥ २६ ॥ पश्यतां नो महाबाहो सेनां द्रावयति प्रभो । तं वारय महाबाहो वेलेव मकरालयम् ॥ २७ ॥ त्वं हि संश्रूयसेऽत्यर्थमसह्यबलविक्रमः । पुत्रस्य तव तद्वाक्यं श्रुत्वा शल्यः प्रतापवान् ॥ २८ ॥ प्रययौ रथवंशेन यत्र राजा युधिष्ठिरः । तदापतद्वै सहसा शल्यस्य सुमहद्बलम् ॥ २९ ॥ महौघवेगं समरे वारयामास पाण्डवः । मद्रराजश्च समरे धर्मराजो महारथः ॥ ३० ॥ दशभिः सायकैस्तूर्णमाजघान स्तनान्तरे । नकुलः सहदेवश्च तं सप्तभिरजिह्मगैः ॥ ३१ ॥ मद्रराजोऽपि तान् सर्वानाजघान त्रिभिस्त्रिभिः । युधिष्ठिरं पुनः षष्ट्या विव्याध निशितैः शरैः ॥ ३२ ॥ माद्रीपुत्रौ च सम्भ्रान्तो द्वाभ्यां द्वाभ्यामताडयत् । ततो भीमो महाबाहुर्दृष्ट्वा राजानमाहवे ॥ ३३ ॥ मद्रराजरथं प्राप्तं मृत्योरास्यगतं यथा । अभ्यपद्यत सङ्ग्रामे युधिष्ठिरममित्रजित् ॥ ३४ ॥ ततो युद्धं महाघोरं प्रावर्तत सुदारुणम् । अपरां दिशमास्थाय पतमाने दिवाकरे ॥ ३५ ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि शल्यधर्मराजसमागमे
षडधिकशततमोऽध्यायः ॥ १०६ ॥

---

सञ्जय उवाच । ततः पिता तव क्रुद्धो निशितैः सायकोत्तमैः । आजघान रणे पार्थान् सहसेनान् समन्ततः ॥ १ ॥

भीमं द्वादशभिर्विद्ध्वा सात्यकिं नवभिः शरैः। नकुलन्तु त्रिभिर्विद्ध्वा
सहदेवञ्च सप्तभिः ॥ २ ॥ युधिष्ठिरं द्वादशभिर्बाह्वोरुरसि चार्पयत्। धृष्टद्युम्नस्ततो विद्ध्वा ननाद सुमहाबलः ॥ ३ ॥ तं द्वादशार्द्धैर्नकुलो माधवश्च त्रिभिः शरैः। धृष्टद्युम्नश्च सप्तत्या भीमसेनश्च सप्तभिः ॥ ४ ॥ युधिष्ठिरो द्वादशभिः प्रत्यविध्यत पितामहम्। द्रोणस्तु सात्यकिं विद्ध्वा भीमसेनमविध्यत ॥ ५ ॥ एकैकं पञ्चभिर्बाणैर्यमदण्डोपमैः शितैः। तौ च तं प्रत्यविध्येतां त्रिभिस्त्रिभिरजिह्मगैः ॥ ६ ॥ तोत्त्रैरिव महानागं द्रोणञ्च ब्राह्मणपुङ्गवम्। सौवीराः कितवाः प्राच्याः प्रतीच्योदीच्यमालवाः ॥ ७ ॥ अभीषाहाः शूरसेनाः शिबयोऽथ वसातयः। सङ्ग्रामे नाजहुर्भीष्मं वध्यमानं शितैः शरैः ॥ ८ ॥ तथैवान्ये महीपाला नानादेशसमागताः। पाण्डवानभ्यवर्त्तन्त विविधायुधपाणयः ॥ ९ ॥ तथैव पाण्डवा राजन् परिवव्रुः पितामहम्। स समन्तात् परिवृतो रथौघैरपराजितः ॥ १० ॥ गहनेऽग्निरिवोत्सृष्टः प्रजज्वाल दहन् परान्। रथाग्न्यगारश्चापार्च्चिरसिशक्तिगदेन्धनः ॥ ११ ॥ शरस्फुलिङ्गो भीष्माग्निर्ददाह क्षत्रियर्षभान्। सुवर्णपुङ्खैरिषुभिर्गार्ध्रपक्षैः सुतेजनैः ॥ १२ ॥ कर्णिनालीकनाराचैश्छादयामास तद्बलम्। अपातयद्ध्वजांश्चैव रथिनश्च शितैः शरैः ॥ १३ ॥ मुण्डतालवनानीव चकार स रथव्रजान्। निर्मनुष्यान् रथान् राजन् गजानश्वांस्तु संयुगे ॥ १४ ॥ अकरोत् स महाबाहुः सर्वशस्त्रभृतां वरः। तस्य ज्यातलनिर्घोषं विस्फूर्ज्जितमिवाशनेः ॥ १५ ॥ निशम्य सर्वभूतानि समकम्पन्त भारत। अमोघा ह्यभवन् बाणाः पितुस्ते भरतर्षभ ॥ १६ ॥ नासज्जन्त तनुत्रेषु भीष्मचापच्युताः शराः। हतवीरान् रथान् राजन् संयुक्तान् जवनैर्हयैः ॥ १७ ॥ अपश्याम महाराज ह्रियमाणान् रणाजिरे। चेदिकाशिकरूषाणां सहस्राणि चतुर्द्दश ॥ १८ ॥ महारथाः समाख्याताः

कुरुपुत्रास्तनुत्यज । अपरावर्त्तिन सर्वे सुवर्णविकृतध्वजा ॥१९॥ संग्रामे भीष्ममासाद्य व्यादितास्यमिवान्तकम् । निमग्ना परलोकाय सवाजिरथकुञ्जरा ॥ २० ॥ भग्नाक्षोपस्करान् काश्चिद्भग्नचक्रांश्च भारत । अपश्याम महाराज शतशोऽथ सहस्रश ॥ २१ ॥ सवरूथैरथैर्भग्नैरथिभिश्च निपातितै । शरै सकवचैश्छिन्नै पट्टिशैश्च विशाम्पते ॥ २२ ॥ गदाभिर्भिन्दिपालैश्च निशितैश्च शिलीमुखै । अनुकर्षैरुपासङ्गैश्चक्रैर्भग्नैश्च मारिष ॥ २३ ॥ बाहुभि कार्मुकै खड्गै शिरोभिश्च सकुण्डलै । तलत्रैरङ्गुलित्रैश्च ध्वजैश्च विनिपातितै ॥ २४ ॥ चापैश्च बहुधाच्छिन्नै समास्तीर्य्यत मेदिनी । हतारोहा गजा राजन् हताश्च हयसादिन ॥ २५ ॥ न्यपतन्त गतप्राणा शतशोऽथ सहस्रश । यतमानाश्च ते वीरा द्रवमाणान् महारथान् ॥ २६ ॥ नाशक्नुवन् वारयितुं भीष्मबाणप्रपीड़ितान् । महेन्द्रसमवीर्य्येण वध्यमाना महाचमू ॥ २७ ॥ अभज्यत महाराज न च द्वौ सह धावत । आविद्धरथनागाश्वा पत्तिध्वजसमाकुलम् ॥ २८ ॥ अनीकं पाण्डुपुत्राणां हाहाभूतमचेतनम् । जघानात्र पिता पुत्रं पुत्रश्च पितरं तथा ॥ २९ ॥ प्रियं सखायञ्चाक्रन्दे सखा दैववलात् कृत । विमुच्य कवचानन्ये पाण्डुपुत्रस्य सैनिका ॥ ३० ॥ प्रकीर्य्य केशान् धावन्त प्रत्यदृश्यन्त सर्वश । तद्गोकुलमिवोद्भ्रान्तमुद्भ्रान्तरथकूवरम् ॥ ३१ ॥ ददृशे पाण्डुपुत्रस्य सैन्यमार्त्तस्वरं तदा । प्रभज्यमानं सैन्यन्तु दृष्ट्वा यादवनन्दन ॥ ३२ ॥ उवाच पार्थं बीभत्सुं निगृह्य रथमुत्तमम् । अयं स काल सम्प्राप्त पार्थ य काङ्क्षितस्त्वया ॥ ३३ ॥ प्रहराभिनरव्याघ्र न चेन्मोहाद्विमुह्यसि । यत् पुरा कथितं वीर त्वया तेषां समागमे ॥ ३४ ॥ विराटनगरे पार्थ सञ्जयस्य समीपत । भीष्मद्रोणमुखान् सर्वान् धार्त्तराष्ट्रस्य सैनिकान् ॥ ३५ ॥ सानुबन्धान् हनिष्यामि ये मां योत्स्यन्ति

संयुगे। इति तत् कुरु कौन्तेय सत्यं वाक्यमरिन्दम ॥ ३६ ॥
क्षत्रधर्ममनुस्मृत्य युध्यस्व विगतज्वरः। इत्युक्तो वासुदेवेन
तिर्य्यग्दृष्टिरधोमुखः ॥ ३७ ॥ अकाम इव बीभत्सुरिदं वचन-
मब्रवीत्। अवध्यानां वधं कृत्वा राज्यं वा नरकोत्तरम् ॥ ३८ ॥
दुःखानि वनवासे वा किं नु मे स्यात् कृतं भवेत्। चोदयाश्वान्
हृषीकेश करिष्ये वचनं तव ॥ ३९ ॥ पातयिष्यामि दुर्द्धर्षं भीष्मं
कुरुपितामहम्। स चाश्वान् रजतप्रख्यान् चोदयामास माधवः
॥ ४० ॥ यतो भीष्मस्ततो राजन् दुष्प्रेक्ष्यो रश्मिवानिव। तत-
स्तत् पुनरावृत्तं युधिष्ठिर बलं महत् ॥ ४१ ॥ दृष्ट्वा पार्थं महा-
बाहुं भीष्मायोद्यन्तमाहवे। ततो भीष्मः कुरुश्रेष्ठ सिंहवद्विनद-
न्मुहुः ॥ ४२ ॥ धनञ्जयरथं शीघ्रं शरवर्षैरवाकिरत्। क्षणेन
स रथस्तस्य सहयः सहसारथिः ॥ ४३ ॥ शरवर्षेण महता न
प्राज्ञायत किञ्चन। वासुदेवस्त्वसम्भ्रान्तो धैर्य्यमास्थाय सत्वरः
॥ ४४ ॥ चोदयामास तानश्वान् वितुन्नान् भीष्मसायकैः। ततः
पार्थो धनुर्गृह्य दिव्यं जलदनिस्वनम् ॥ ४५ ॥ पातयामास
भीष्मस्य धनुश्छित्वा शितैः शरैः। स छिन्नधन्वा कौरव्यः पुन-
रन्यन्महद्धनुः ॥ ४६ ॥ निमेषान्तरमात्रेण सज्यं चक्रे पिता तव।
यथास्य तदपि क्रुद्धश्चिच्छेद धनुरर्जुनः ॥ ४७ ॥ तस्य तत्
पूजयामास लाघवं शान्तनोः सुतः। साधु साधु महाबाहो साधु
कुन्तीसुतेति च ॥ ४८ ॥ समाभाष्यैनमपरं प्रगृह्य रुचिरं धनुः।
मुमोच समरे भीष्मः शरान् पार्थरथं प्रति ॥ ४९ ॥ अदर्शय-
द्वासुदेवो हययाने परं बलम्। मोघान् कुर्वन् शरांस्तस्य मण्ड-
लानि निदर्शयन् ॥ ५० ॥ शुशुभाते नरव्याघ्रौ तौ भीष्मशर-
विक्षतौ। गोवृषाविव संक्रुद्धौ विषाणोल्लिखिताङ्कितौ ॥ ५१ ॥
वासुदेवस्तु सम्प्रेक्ष्य पार्थस्य मृदुयुद्धताम्। भीष्मञ्च शरवर्षाणि
सृजन्तमनिशं युधि ॥ ५२ ॥ प्रतपन्तमिवादित्यं मध्यमासाद्य

सेनयोः। वरान् वरान् विनिघ्नन्तं पाण्डुपुत्रस्य सैनिकान् ॥ ५३ ॥ युगान्तमिव कुर्व्वाणं भीष्मं यौधिष्ठिरे बले। नामृष्यत महाबाहु-र्माधवः परवीरहा ॥ ५४ ॥ उत्सृज्य रजतप्रख्यान् हयान् पार्थस्य मारिष। क्रुद्धो नाम महायोगी प्रचस्कन्द महारथात् ॥ ५५ ॥ अभिदुद्राव भीष्मं स भुजप्रहरणो बली। प्रतोदपाणि-स्तेजस्वी सिंहवदिनदन्मुहुः ॥ ५६ ॥ दारयन्निव पद्भ्यां स जगतीं जगतीश्वरः। क्रोधताम्रेक्षणः कृष्णो जिघांसुरमित-द्युतिः ॥ ५७ ॥ ग्रसन्निव च चेतांसि तावकानां महाहवे। दृष्ट्वा माधवमाक्रन्दे भीष्मायोद्यतमन्तिके ॥ ५८ ॥ हतो भीष्मो हतो भीष्म इति तत्र वचो महत्। अश्रूयत महाराज वासुदेवभया-त्तदा ॥ ५९ ॥ पीतकौषेयसंवीतो मणिश्यामो जनार्द्दनः। शुशुभे विद्रवन् भीष्मं विद्युन्मालीव तोयदः ॥ ६० ॥ स सिंह इव मातङ्गं यूथर्षभ इवर्षभम्। अभिदुद्राव वेगेन विनदन् माधवर्षभः ॥ ६१ ॥ तमापतन्तं सम्प्रेक्ष्य पुण्डरीकाक्षमाहवे। असम्भ्रमं रणे भीष्मो विचकर्ष महद्धनुः ॥ ६२ ॥ उवाच चैनं गोविन्द-मसम्भ्रान्तेन चेतसा। एह्येहि पुण्डरीकाक्ष देवदेव नमोऽस्तु ते ॥ ६३ ॥ मामद्य सात्वतश्रेष्ठ पातयस्व महाहवे। त्वया हि देव सङ्ग्रामे हतस्यापि ममानघ ॥ ६४ ॥ श्रेय एव परं कृष्ण लोके भवति सर्व्वतः। सम्भावितोऽस्मि गोविन्द त्रैलोक्येनाद्य संयुगे ॥ ६५ ॥ प्रहरस्व यथेष्टं वै दासोऽस्मि तव चानघ। अन्वगेव ततः पार्थः समभिद्रुत्य केशवम् ॥ ६६ ॥ निजग्राह महाबाहुर्बाहुभ्यां परिगृह्य वै। निगृह्यमाणः पार्थेन कृष्णो राजीवलोचनः ॥ ६७ ॥ जगाम चैनमादाय वेगेन पुरुषोत्तमः। पार्थस्तु विष्टभ्य बली चरणौ परवीरहा ॥ ६८ ॥ निजग्राह हृषीकेशं कथञ्चिद्दशमे पदे। तत एनमुवाचार्त्तः क्रोधपर्य्या-कुलेक्षणम् ॥ ६९ ॥ निश्वसन्तं यथा नागमर्ज्जुनः प्रणयात्सखा।

मयुगे । इति तत् कुरु कौन्तेय सत्यं वाक्यमरिन्दम ॥ ३६ ॥
क्षत्रधर्ममनुस्मृत्य युध्यस्व विगतज्वरः । इत्युक्तो वासुदेवेन
तिर्य्यग्दृष्टिरधोमुखः ॥ ३७ ॥ अकाम इव बीभत्सुरिदं वचन-
मब्रवीत् । अवध्यानां वधं कृत्वा राज्यं वा नरकोत्तरम् ॥ ३८ ॥
दुःखानि वनवासे वा किं नु मे स्यात् कृतं भवेत् । चोदयाश्वान्
हृषीकेश करिष्ये वचनं तव ॥ ३९ ॥ पातयिष्यामि दुर्द्धर्षं भीष्मं
कुरुपितामहम् । स चाश्वान् रजतप्रख्यान् चोदयामास माधव
॥ ४० ॥ यतो भीष्मस्ततो राजन् दुष्प्रेक्ष्यो रश्मिवानिव । तत-
स्तत् पुनरावृत्तं युधिष्ठिर बलं महत् ॥ ४१ ॥ दृष्ट्वा पार्थं महा-
बाहुं भीष्मायोद्यतमाहवे । ततो भीष्मः कुरुश्रेष्ठ सिंहवद्विनद-
न्मुहुः ॥ ४२ ॥ धनञ्जयरथं शीघ्रं शरवर्षैरवाकिरत् । क्षणेन
स रथस्तस्य सहयः सहसारथिः ॥ ४३ ॥ शरवर्षेण महता न
प्राज्ञायत किञ्चन । वासुदेवस्त्वसम्भ्रान्तो धैर्य्यमास्थाय सत्वरः
॥ ४४ ॥ चोदयामास तानश्वान् वितुन्नान् भीष्मसायकैः । ततः
पार्थो धनुर्गृह्य दिव्यं जलदनिस्वनम् ॥ ४५ ॥ पातयामास
भीष्मस्य धनुश्छित्त्वा शितैः शरैः । स छिन्नधन्वा कौरव्य पुन-
रन्यन्महद्धनुः ॥ ४६ ॥ निमेषान्तरमात्रेण सज्यं चक्रे पिता तव ।
अथास्य तदपि क्रुद्धश्चिच्छेद धनुरर्जुनः ॥ ४७ ॥ तस्य तत्
पूजयामास लाघवं शान्तनोः सुतः । साधु साधु महाबाहो साधु
कुन्तीसुतेति च ॥ ४८ ॥ समाभाष्यैनमपरं प्रगृह्य रुचिरं धनुः ।
मुमोच समरे भीष्मः शरान् पार्थरथं प्रति ॥ ४९ ॥ अदर्शय-
द्वासुदेवो हययाने परं बलम् । मोघान् कुर्वन् शरांस्तस्य मण्ड-
लानि निदर्शयन् ॥ ५० ॥ शुशुभाते नरव्याघ्रौ तौ भीष्मशर-
विक्षतौ । गोवृषाविव संरब्धौ विषाणोल्लिखिताङ्कितौ ॥ ५१ ॥
वासुदेवस्तु सम्प्रेक्ष्य पार्थस्य मृदुयुद्धताम् । भीष्मञ्च शरवर्षाणि
सृजन्तमनिशं युधि ॥ ५२ ॥ प्रतपन्तमिवादित्यं मध्यमासाद्य

सैनयो । वरान् वरान् विनिघ्नन्तं पाण्डुपुत्रस्य सैनिकान् ॥ ५३ ॥
युगान्तमिव कुर्व्वाणं भीष्मं यौधिष्ठिरे बले । नामृष्यत महाबाहु-
र्माधवः परवीरहा ॥ ५४ ॥ उत्सृज्य रजतप्रख्यान् हयान्
पार्थस्य मारिष । क्रुद्धो नाम महायोगी प्रचस्कन्द महारथात्
॥ ५५ ॥ अभिदुद्राव भीष्मं स भुजप्रहरणो बली । प्रतोदपाणि-
स्तेजस्वी सिंहवद्विनदन्मुहुः ॥ ५६ ॥ दारयन्निव पद्भ्यां स
जगतीं जगतीश्वरः । क्रोधताम्रेक्षणः कृष्णो जिघांसुरमित-
द्युतिः ॥ ५७ ॥ ग्रसन्निव चेतांसि तावकानां महाहवे । दृष्ट्वा
माधवमाक्रन्दे भीष्मायोद्यतमन्तिके ॥ ५८ ॥ हतो भीष्मो हतो
भीष्म इति तत्र वचो महत् । अश्रूयत महाराज वासुदेवभया-
त्तदा ॥ ५९ ॥ पीतकौषेयसम्वीतो मणिश्यामो जनार्द्दनः । शुशुभे
विद्रवन् भीष्मं विद्युन्मालीव तोयदः ॥ ६० ॥ स सिंह इव
मातङ्गं यूथर्षभ इवर्षभम् । अभिदुद्राव वेगेन विनदन् माधवर्षभः
॥ ६१ ॥ तमापतन्तं सम्प्रेक्ष्य पुण्डरीकाक्षमाहवे । असम्भ्रमं
रणे भीष्मो विचकर्ष महद्धनुः ॥ ६२ ॥ उवाच चैनं गोविन्द-
मसम्भ्रान्तेन चेतसा । एह्येहि पुण्डरीकाक्ष देवदेव नमोऽस्तु ते
॥ ६३ ॥ मामद्य सात्वतश्रेष्ठ पातयस्व महाहवे । त्वया हि
देव सङ्ग्रामे हतस्यापि ममानघ ॥ ६४ ॥ श्रेय एव परं कृष्ण
लोके भवति सर्व्वतः । सम्भावितोऽस्मि गोविन्द त्रैलोक्येनाद्य
संयुगे ॥ ६५ ॥ प्रहरस्व यथेष्टं वै दासोऽस्मि तव चानघ ।
अन्वगेव ततः पार्थः समभिद्रुत्य केशवम् ॥ ६६ ॥ निजग्राह
महाबाहुर्बाहुभ्यां परिगृह्य वै । निगृह्यमाणः पार्थेन कृष्णो
राजीवलोचनः ॥ ६७ ॥ जगाम चैनमादाय वेगेन पुरुषोत्तमः ।
पार्थस्तु विष्टभ्य बली चरणौ परवीरहा ॥ ६८ ॥ निजग्राह
हृषीकेशं कथञ्चिद्दशमे पदे । तत एनमुवाचार्त्तः क्रोधपर्य्या-
कुलेक्षणम् ॥ ६९ ॥ निःश्वसन्तं यथा नागमर्ज्जुनः प्रणयात्सखा ।

निवर्त्तस्व महावाहो नानृतं कर्त्तुमर्हसि ॥ ७० ॥ यत्त्वया कथितं
पूर्वं न योत्स्यामीति केशव । मिथ्यावादीति लोकास्त्वां कथयि
ष्यन्ति माधव ॥ ७१ ॥ ममैष भारः सर्वो हि हनिष्यामि यतव्रतम् ।
महम् । शपे केशव शस्त्रेण सत्येन सुकृतेन च ॥ ७२ ॥ अन्तं
यथा गमिष्यामि शत्रूणां शत्रुसूदन । अद्यैव पश्य दुर्धर्षं पात्य
मानं महारथम् ॥ ७३ ॥ तारापतिमिवापूर्णमन्तकाले यदृच्छया ।
माधवस्तु वचः श्रुत्वा फाल्गुनस्य महात्मनः ॥ ७४ ॥ अकिञ्चि-
दुक्त्वा सक्रोध आरुरोह रथं पुनः । तौ रथस्थौ नरव्याघ्रौ
भीष्मः शान्तनवः पुनः ॥ ७५ ॥ ववर्ष शरवर्षेण मेघो वृष्ट्या
इवाचलम् । प्राणानादत्त योधानां पिता देवव्रतस्तव ॥ ७६ ॥
गभस्तिभिरिवादित्यस्तेजांसि शिशिरात्यये । यथा कुरूणां सैन्यानि
बभञ्ज युधि पाण्डवाः ॥ ७७ ॥ तथा पाण्डवसैन्यानि बभञ्ज
युधि ते पिता । हतविद्रुतसैन्यास्तु निरुत्साहा विचेतसः ॥७८॥
मध्यगतमिवादित्यं प्रतपन्तं स्वतेजसा । ते वध्यमाना भीष्मेण
यस्याद्य सहस्रशः ॥ ७९ ॥ निरीक्षितुं न शेकुस्ते भीष्म
मप्रतिमं रणे । कुर्वाणं समरे कर्माण्यतिमानुषविक्रमम् ॥ ८० ॥
वीक्षाञ्चक्रुर्महाराज पाण्डवा भयपीडिताः । तथा पाण्डव-
सैन्यानि द्राव्यमाणानि भारत ॥ ८१ ॥ त्रातारं नाध्यगच्छन्त
गाव पङ्कगता इव । पिपीलिका इव क्षुण्णा दुर्बला बलिना
रणे ॥ ८२ ॥ महारथं भारत दुष्प्रकम्प्यं शरौघिणं प्रतपन्तं
नरेन्द्रान् । भीष्मं न शेकुः प्रतिवीक्षितुं ते शराचिषं सूर्यमिवा-
तपन्तम् ॥ ८३ ॥ विमृद्नतस्तस्य तु पाण्डुसेनामस्तं जगामाथ
सहस्ररश्मिः । ततो बलानां श्रमकर्षितानां मनोऽवहारं प्रति-
बभूव ॥ ८४ ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि नवमदिवसयुद्धसमाप्तौ
षडधिकशततमोऽध्यायः ॥ १०६ ॥

सञ्जय उवाच । युध्यतामेव तेषान्तु भास्करेऽस्तमुपागते । सन्ध्या समभवद्घोरा नापश्याम ततो रणम् ॥ १ ॥ ततो युधिष्ठिरो राजा सन्ध्यां सन्दृश्य भारत । वध्यमानञ्च भीष्मेण त्यक्तास्त्रं भयविह्वलम् ॥ २ ॥ स्वसैन्यञ्च परावृत्तं पलायनपरायणम् । भीष्मञ्च युधि संरब्धं पीड़यन्तं महारथम् ॥ ३ ॥ सोमकांश्च जितान् दृष्ट्वा निरुत्साहान् महारथान् । चिन्तयित्वा ततो राजा त्ववहारमचोदयत् ॥ ४ ॥ ततोऽवहारं सैन्यानां चक्रे राजा युधिष्ठिरः । तथैव तव सैन्यानामवहारो ह्यभूत्तदा ॥ ५ ॥ ततोऽवहारं सैन्यानां कृत्वा तत्र महारथाः । न्यविशन्त कुरुश्रेष्ठ सङ्ग्रामे क्षतविक्षताः ॥ ६ ॥ भीष्मस्य समरे कर्म चिन्तयित्वा तु पाण्डवाः । नालभन्त ततः शान्तिं भीष्मबाणप्रपीड़िताः ॥ ७ ॥ भीष्मोऽपि समरे जित्वा पाण्डवान् सहसृञ्जयान् । पूज्यमानस्तव सुतैर्वन्द्यमानश्च भारत ॥ ८ ॥ न्यविशत् कुरुभिः सार्द्धं हृष्टरूपैः समन्ततः । ततो रात्रिः समभवत् सर्व्वभूतप्रमोहिनी ॥ ९ ॥ तस्मिन् रात्रिमुखे घोरे पाण्डवा वृष्णिभिः सह । सृञ्जयाश्च दुराधर्षा मन्त्राय समुपाविशन् ॥ १० ॥ आत्मनिःश्रेयसं सर्व्वे प्राप्तकालं महाबलाः । मन्त्रयामासुरव्यग्रा मन्त्रनिश्चयकोविदाः ॥ ११ ॥ ततो युधिष्ठिरो राजा मन्त्रयित्वा चिरं नृप । वासुदेवं समुद्वीक्ष्य वचनञ्चेदमाददे ॥ १२ ॥ कृष्ण पश्य महात्मानं भीष्ममुग्रपराक्रमम् । गजं नलवनानीव विमृद्नन्तं बलं मम ॥ १३ ॥ न चैवैनं महात्मानमुत्सहामो निरीक्षितुम् । लेलिह्यमानं सैन्येषु प्रवृद्धमिव पावकम् ॥ १४ ॥ यथा घोरो महानागस्तक्षको वै विषोल्बणः । तथा भीष्मो रणे क्रुद्धस्तीक्ष्णशस्त्रः प्रतापवान् ॥ १५ ॥ गृहीतचापः समरे प्रमुञ्चन्निशितान् शरान् । शक्यो जेतुं यमः क्रुद्धो वज्रपाणिश्च देवराट् ॥ १६ ॥ वरुणः पाशभृच्चापि सगदो वा धनेश्वरः । न तु भीष्मः सुसंक्रुद्धो

निवर्त्तस्व महाबाहो नानृतं कर्त्तुमर्हसि ॥ ७० ॥ यत्त्वया कथितं पूर्वं न योत्स्यामीति केशव । मिथ्यावादीति लोकास्त्वां कथयिष्यन्ति माधव ॥ ७१ ॥ ममैष भारः सर्वो हि हनिष्यामि पितामहम् । शपे केशव शस्त्रेण सत्येन सुकृतेन च ॥ ७२ ॥ अन्तं यथा गमिष्यामि शत्रूणां मधुसूदन । अद्यैव पश्य दुर्धर्षं पात्यमानं महारथम् ॥ ७३ ॥ तारापतिमिवापूर्णमन्तकाले यदृच्छया । माधवस्तु वचः श्रुत्वा फाल्गुनस्य महात्मनः ॥ ७४ ॥ अकिञ्चिदुक्त्वा सक्रोध आरुरोह रथं पुनः । तौ रथस्थौ नरव्याघ्रौ भीष्मः शान्तनवः पुनः ॥ ७५ ॥ ववर्ष शरवर्षेण मेघो वृष्ट्या इवाचलम् । प्राणानादत्त योधानां पिता देवव्रतस्तव ॥ ७६ ॥ गभस्तिभिरिवादित्यस्तेजांसि शिशिरात्यये । यथा कुरूणां सैन्यानि बभञ्जुर्युधि पाण्डवाः ॥ ७७ ॥ तथा पाण्डवसैन्यानि बभञ्ज युधि ते पिता । इति विद्रुतसैन्यास्तु निरुत्साहा विचेतसः ॥ ७८ ॥ मध्यं गतमिवादित्यं प्रतपन्तं स्वतेजसा । ते वध्यमाना भीष्मेण शतशोऽथ सहस्रशः ॥ ७९ ॥ निरीक्षितुं न शेकुस्ते भीष्ममप्रतिमं रणे । कुर्वाणं समरे कर्माण्यतिमानुषविक्रमम् ॥ ८० ॥ वीक्षांचक्रुर्महाराज पाण्डवा भयपीडिताः । तथा पाण्डवसैन्यानि द्राव्यमाणानि भारत ॥ ८१ ॥ त्रातारं नाध्यगच्छन्त गावः पङ्कगता इव । पिपीलिका इव क्षुण्णा दुर्बला बलिना रणे ॥ ८२ ॥ महारथं भारत दुष्प्रकम्पं शरौघिणं प्रतपन्तं नरेन्द्रान् । भीष्मं न शेकुः प्रतिवीक्षितुं ते शरार्चिषं सूर्यमिवातपन्तम् ॥ ८३ ॥ विमृद्नतस्तस्य तु पाण्डुसेनामस्तं जगामाथ सहस्ररश्मिः । ततो बलानां श्रमकर्षितानां मनोऽवहारं प्रतिसम्बभूव ॥ ८४ ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि नवमदिवसयुद्धसमाप्तौ
अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

सञ्जय उवाच। युध्यतामेव तेषान्तु भास्करेऽस्तमुपागते। सन्ध्या समभवद्घोरा नापश्याम ततो रणम् ॥ १ ॥ ततो युधिष्ठिरो राजा सन्ध्यां सन्दृश्य भारत। वध्यमानञ्च भीष्मेण त्यक्तास्त्रं भयविह्वलम् ॥ २ ॥ स्वसैन्यञ्च पराहत्तं पलायनपरायणम्। भीष्मञ्च युधि संरब्धं पीड़यन्तं महारथम् ॥ ३ ॥ सोमकांश्च जितान् दृष्ट्वा निरुत्साहान् महारथान्। चिन्तयित्वा ततो राजा त्ववहारमरोचयत् ॥ ४ ॥ ततोऽवहारं सैन्यानां चक्रे राजा युधिष्ठिरः। तथैव तव सैन्यानामवहारो ह्यभूत्तदा ॥ ५ ॥ ततोऽवहारं सैन्यानां कृत्वा तत्र महारथाः। न्यविशन्त कुरुश्रेष्ठ सङ्ग्रामे क्षतविक्षताः ॥ ६ ॥ भीष्मस्य समरे कर्म्म चिन्तयित्वा तु पाण्डवाः। नालभन्त तदा शान्तिं भीष्मवाणप्रपीड़िताः ॥ ७ ॥ भीष्मोऽपि समरे जित्वा पाण्डवान् सहसृञ्जयान्। पूज्यमानस्तव सुतैर्वन्द्यमानश्च भारत ॥ ८ ॥ न्यविशत् कुरुभिः सार्द्धं हृष्टरूपैः समन्ततः। ततो रात्रिः समभवत् सर्व्वभूतप्रमोहिनी ॥ ९ ॥ तस्मिन् रात्रिमुखे घोरे पाण्डवा वृष्णिभिः सह। सृञ्जयाश्च दुराधर्षा मन्त्राय समुपाविशन् ॥ १० ॥ आत्मनिःश्रेयसं सर्व्वे प्राप्तकालं महाबलाः। मन्त्रयामासुरव्यग्रा मन्त्रनिश्चयकोविदाः ॥ ११ ॥ ततो युधिष्ठिरो राजा मन्त्रयित्वा चिरं नृप। वासुदेवं समुद्वीक्ष्य वचनञ्चेदमाददे ॥ १२ ॥ कृष्ण पश्य महात्मानं भीष्ममुग्रपराक्रमम्। गजं नलवनानीव विमृद्नन्तं बलं मम ॥ १३ ॥ न चैवैनं महात्मानमुत्सहामो निरीक्षितुम्। लेलिह्यमानं सैन्येषु प्रवृद्धमिव पावकम् ॥ १४ ॥ यथा घोरो महानागस्तक्षको वै विषोल्बणः। तथा भीष्मो रणे क्रुद्धस्तीक्ष्णशस्त्रः प्रतापवान् ॥ १५ ॥ गृहीतचापः समरे प्रमुञ्चन्निशितान् शरान्। शक्यो जेतुं यमः क्रुद्धो वज्रपाणिश्च देवराट् ॥ १६ ॥ वरुणः पाशभृच्चापि सगदो वा धनेश्वरः। न तु भीष्मः सुसंक्रुद्धो जेतुं

शक्यो महाहवे ॥ १७ ॥ सोऽहमेवं गते कृष्ण निमज्ज शोकसागरे । आत्मनो बुद्धिदौर्बल्यात् भीष्ममासाद्य संयुगे ॥ १८ ॥ वनं यास्यामि दुर्द्धर्षं श्रेयो मे तत्र वै गतम् । न युद्धं रोचये कृष्ण हन्ति भीष्मो हि नः सदा ॥ १९ ॥ यथा प्रज्वलितं वह्निं पतङ्गः समभिद्रवन् । एकतो मृत्युमभ्येति तथाहं भीष्ममीयिवान् ॥ २० ॥ क्षयं नीतोऽस्मि वार्ष्णेय राज्यहेतोः पराक्रमी । भ्रातरश्चैव मे शूराः सायकैर्भृशपीड़िताः ॥ २१ ॥ मत्कृते भ्रातृसौहार्दाद्राज्यभ्रष्टा वनं गताः । परिक्लिष्टा तथा कृष्णा मत्कृते मधुसूदन ॥ २२ ॥ जीवितं बहुमन्येऽहं जीवितं ह्यद्य दुर्लभम् । जीवितस्याद्य शेषेण चरिष्ये धर्ममुत्तमम् ॥ २३ ॥ यदि तेऽहमनुग्राह्यो भ्रातृभिः सह केशव । स्वधर्मस्याविरोधेन हितं व्याहर केशव ॥ २४ ॥ एतत् श्रुत्वा वचस्तस्य कारुण्याद्बहुविस्तरम् । प्रत्युवाच ततः कृष्णः सान्त्वयानो युधिष्ठिरम् ॥ २५ ॥ धर्मपुत्र विषादं त्वं मा कृथाः सत्यसङ्गर । यस्य ते भ्रातरः शूरा दुर्जयाः शत्रुसूदनाः ॥ २६ ॥ अर्जुनो भीमसेनश्च वाय्वग्निसमतेजसौ । माद्रीपुत्रौ च विक्रान्तौ त्रिदशानामिवेश्वरौ ॥ २७ ॥ मां वापि युङ्क्ष्व सौहार्दात् योत्स्ये भीष्मेण पाण्डव । त्वत्प्रयुक्तो महाराज किं न कुर्यां महाहवे ॥ २८ ॥ हनिष्यामि रणे भीष्ममाहूय पुरुषर्षभम् । पश्यतां धार्त्तराष्ट्राणां यदि नेच्छति फाल्गुनः ॥ २९ ॥ यदि भीष्मे हते वीरे जयं पश्यसि पाण्डव । हन्तास्म्येकरथेनाद्य कुरुवृद्धं पितामहम् ॥ ३० ॥ पश्य मे विक्रमं राजन् महेन्द्रस्येव संयुगे । विमुञ्चन्तं महास्त्राणि पातयिष्यामि तं रथात् ॥ ३१ ॥ यः शत्रुः पाण्डुपुत्राणां मच्छत्रुः स न संशयः । मदर्था भवदीया ये ये मदीयास्तवैव ते ॥ ३२ ॥ तव भ्राता मम सखा सम्बन्धी शिष्य एव च । मांसान्युत्कृत्य दास्यामि फाल्गुने महीपते ॥ ३३ ॥ एष चापि नरव्याघ्रो मत्कृते जीवितं

त्यजेत्। एष नः समयस्तात तारयैनं परस्परम्॥ ३४॥ स
मां नियुङ्क्ष्व राजेन्द्र यथा योद्धा भवाम्यहम्। प्रतिज्ञातमुप-
प्लव्ये यत्तत् पार्थेन पूर्वतः॥ ३५॥ घातयिष्यामि गाङ्गेयमिति
लोकस्य सन्निधौ। परिरक्ष्यमिदं तावत् वचः पार्थस्य धीमतः
॥ ३६॥ अनुज्ञातन्तु पार्थेन मया कार्य्यमसंशयः। अथ वा
फाल्गुनस्यैष भारः परिमितो रणे॥ ३७॥ स हनिष्यति सङ्ग्रामे
भीष्मं परपुरञ्जयम्। अशक्यमपि कुर्य्याद्धि रणे पार्थः समुद्यतः
॥ ३८॥ त्रिदशान् वा समुद्युक्तान् सहितान् दैत्यदानवैः।
निहन्यादर्जुनः सङ्ख्ये किमु भीष्मं नराधिप॥ ३९॥ विपरीतो
महावीर्य्यो गतसत्त्वोऽल्पचेतनः। भीष्मः शान्तनवो नूनं कर्त्तव्यं
नावबुध्यते॥ ४०॥

युधिष्ठिर उवाच। एवमेतन्महाबाहो यथा वदसि माधव।
सर्व्वे ह्येते न पर्य्याप्तास्तव वेगविधारणे॥ ४१॥ नियतं समवाप्-
स्यामि सर्व्वमेतद्यथेप्सितम्। यस्य मे पुरुषव्याघ्र भवान् पक्षे
व्यवस्थितः॥ ४२॥ सेन्द्रानपि रणे देवान् जयेयं जयतां वर।
त्वया नाथेन गोविन्द किमु भीष्मं महारथम्॥ ४३॥ न तु
त्वामनृतं कर्त्तुमुत्सहे स्वात्मगौरवात्। अयोध्यमानः साहाय्यं
यथोक्तं कुरु माधव॥ ४४॥ समयस्तु कृतः कश्चिन्मम भीष्मेण
संयुगे। मन्त्रयिष्ये तवार्थाय न तु योत्स्ये कथञ्चन॥ ४५॥
दुर्य्योधनार्थे योत्स्यामि सत्यमेतदिति प्रभो। स हि राज्यस्य
मे दाता मन्त्रस्यैव च माधव॥ ४६॥ तस्माद्देवव्रतं भूयो वधो-
पायार्थमात्मनः। भवद्भिः सहिताः सर्व्वे प्रयाम मधुसूदन॥ ४७॥
ते वयं सहिता गत्वा भीष्ममाशु नरोत्तमम्। न चिरात् सर्व्व
वार्ष्णेय मन्त्रं पृच्छाम कौरवम्॥ ४८॥ स वक्ष्यति हितं वाक्यं
सत्यमस्मान् जनार्दन। यथा च वक्ष्यते कृष्ण तथा कर्त्तास्मि
संयुगे॥ ४९॥ स नो जयस्य दाता स्यान्मन्त्रस्य च दृढव्रतः।

बालाः पित्रा विहीनाश्च तेन संवर्धिता वयम् ॥ ५० ॥ तञ्चैव पितामहं वृद्धं हन्तुमिच्छामि माधव । पितुः पितरमिष्टञ्च धिगस्तु क्षत्रजीविकाम् ॥ ५१ ॥

सञ्जय उवाच । ततोऽब्रवीन्महाराज वार्ष्णेयः कुरुनन्दनम् । रोचते मे महाप्राज्ञ राजेन्द्र तव भाषितम् ॥ ५२ ॥ देवव्रतः कृती भीष्मः प्रेक्षितेनापि निर्दहेत् । गम्यतां स वधोपायः प्रष्टुं सागरगासुतम् ॥ ५३ ॥ वक्तुमर्हति सत्यं स त्वया पृष्टो विशेषतः । ते वयं तत्र गच्छामः प्रष्टुं कुरुपितामहम् ॥ ५४ ॥ गत्वा शान्तनवं वृद्धं मन्त्रं पृच्छाम भारत । स नो दास्यति मन्त्रं यं तेन योत्स्यामहे परान् ॥ ५५ ॥ एवमामन्त्र्य ते वीरा पाण्डवाः पाण्डुपूर्वज । जग्मुस्ते सहिताः सर्वे वासुदेवश्च वीर्य्यवान् ॥ ५६ ॥ विमुक्तशस्त्रकवचा भीष्मस्य सदनं प्रति । प्रविश्य च तदा भीष्मं शिरोभिः प्रतिपेदिरे ॥ ५७ ॥ पूजयन्तो महाराज पाण्डवा भरतर्षभम् । प्रणम्य शिरसा चैनं भीष्मं शरणमभ्ययुः ॥ ५८ ॥ तानुवाच महाबाहुर्भीष्मः कुरुपितामहः । स्वागतं तव वार्ष्णेय स्वागतन्ते धनञ्जय ॥ ५९ ॥ स्वागतं धर्मराजाय भीमाय यमयोस्तथा । किं वा कार्य्यं करोम्यद्य युष्माकं प्रीतिवर्द्धनम् ॥ ६० ॥ सर्वात्मनापि कर्त्तास्मि यद्यपि स्यात् सुदुष्करम् । तथा ब्रुवाणं गाङ्गेयं प्रीतियुक्तं पुनः पुनः ॥ ६१ ॥ उवाच राजा दीनात्मा प्रीतियुक्तमिदं वचः । कथं जयेम सर्वज्ञ कथं राज्यं लभेमहि ॥ ६२ ॥ प्रजाना सङ्क्षयो न स्यात् कथं तन्मे वद प्रभो । भवान् हि नो वधोपायं ब्रवीतु स्वयमात्मन ॥ ६३ ॥ भवन्तं समरे वीर विषहेम कथं वयम् । न हि ते सूक्ष्ममप्यस्ति रन्ध्रं कुरुपितामह ॥ ६४ ॥ मण्डलेनैव धनुषा दृश्यसे संयुगे सदा । आददानं सन्दधानं विकर्षन्तं धनुर्न च ॥ ६५ ॥ पश्यामहो महाबाहो रथे सूर्य्यमिवापरम् । रथाश्वनरनागानां हन्तारं

परवीरहन् ॥ ६६ ॥ कोऽद्य चोत्सहते जेतुं त्वां पुमान् भरतर्षभ। वर्त्तता परवर्गाणि संयुगे-वैशस कृतम् ॥ ६७ ॥ त्वयं नीता हि पृतना संयुगे महती मम।, यथा युधि जयेम त्वां यथा राज्यं भवेन्मम ॥ ६८ ॥ मम सैन्यस्य च क्षेमं तन्मे ब्रूहि पितामह। ततोऽब्रवीच्छान्तनवः पाण्डवान् पाण्डुपूर्व्वजः ॥ ६९ ॥ न कथञ्चन कौन्तेय मयि जीवति संयुगे। जयो भवति सर्व्वज्ञ सत्यमेतद्ब्रवीमि ते ॥ ७० ॥ निर्ज्जिते मयि युद्धेन रणे जेष्यथ पाण्डवाः। क्षिप्रं मयि प्रहरध्वं यदीच्छथ रणे जयम् ॥ ७१ ॥ अनुजानामि वः पार्थाः प्रहरध्वं यथासुखम्। एवं हि सुकृतं मन्ये भवतां विदितोऽस्म्यहम्। हते मयि हतं सर्व्वं तस्मादेवं विधीयताम् ॥ ७२ ॥

युधिष्ठिर उवाच। ब्रूहि तस्मादुपायं नो यथा युद्धे जयेमहि। भवन्तं समरे क्रुद्धं दण्डहस्तमिवान्तकम् ॥ ७३ ॥ शक्यो वज्रधरो जेतुं वरुणोऽथ यमस्तथा। न भवान् समरे शक्यः सेन्द्रैरपि सुरासुरैः ॥ ७४ ॥

भीष्म उवाच। सत्यमेतन्महाबाहो यथा वदसि पाण्डव। नाहं जेतुं रणे शक्यः सेन्द्रैरपि सुरासुरैः ॥ ७५ ॥ आत्तशस्त्रो रणे यत्तो गृहीतवरकार्म्मुकः। ततो मां न्यस्तशस्त्रं तु एते हन्युर्महारथाः ॥ ७६ ॥ निक्षिप्तशस्त्रे पतिते विमुक्तकवचध्वजे। द्रवमाणे च भीते च तवास्मीति च वादिनि ॥ ७७ ॥ स्त्रियां स्त्रीनामधेये च विकले चैकपुत्रिणि। अप्रशस्ते नरे चैव न युद्धं रोचते मम ॥ ७८ ॥ इदं मे शृणु राजेन्द्र सङ्कल्पं पूर्व्वचिन्तितम्। अमङ्गल्यध्वजं दृष्ट्वा न युध्येयं कदाचन ॥ ७९ ॥ य एष द्रुपदो राजंस्तव सैन्ये महारथः। शिखण्डी समरामर्षी शूरश्च समितिञ्जयः ॥ ८० ॥ यथाभवच्च स्त्री पूर्व्वं पश्चात् पुंस्त्वं समागतः। जानन्ति च भवन्तोऽपि सर्व्वमेतद्यथातथम् ॥ ८१ ॥ अर्ज्जुनः समरे शूरः पुरस्कृत्य शिखण्डिनम्। मामेव विशिखैस्तीक्ष्णैरभिद्रवतु

दंशितः ॥ ८२ ॥ अमङ्गल्यध्वजो तस्मिन् स्त्रीपूर्वे च विशेषतः। न प्रहर्त्तुमभीप्सामि गृहीतेषुः कथञ्चन ॥ ८३ ॥ तदन्तरं समासाद्य पाण्डवो मां धनञ्जयः। शरैर्घातयतु क्षिप्रं समन्तात् भरतर्षभ ॥ ८४ ॥ न तं पश्यामि लोकेषु मां हन्यात् यः समुद्यतम्। ऋते कृष्णान्महाभागात् पाण्डवाद्वा धनञ्जयात् ॥ ८५ ॥ एष तस्मात् पुरोधाय कञ्चिदन्यं ममाग्रतः। मामसमस्त्रो रणे यत्तो गृहीतवरकार्मुकः ॥ ८६ ॥ मां पातयतु बीभत्सुरेवं तव जयो ध्रुवः। एतत् कुरुष्व राजेन्द्र यथोक्तं मम सुव्रत। सङ्ग्रामे धार्त्तराष्ट्रांश्च हन्याः सर्वान् समागतान् ॥ ८७ ॥

सञ्जय उवाच। ते तु ज्ञात्वा ततः पार्थो जग्मुः स्वशिविरं प्रति। अभिवाद्य महात्मानं भीष्मं कुरुपितामहम् ॥ ८८ ॥ तथोक्तवति गाङ्गेये परलोकाय दीक्षिते। अर्जुनो दुःखसन्तप्तः सव्रीडमिदमब्रवीत् ॥ ८९ ॥ गुरुणा कुरुवृद्धेन कृतप्रज्ञेन धीमता। पितामहेन सङ्ग्रामे कथं योत्स्यामि माधव ॥ ९० ॥ क्रीडता हि मया बाल्ये वासुदेव महामनाः। पांशुरूषितगात्रेण महात्मा कलुषीकृतः ॥ ९१ ॥ यस्याहमधिरुह्याङ्कं बालः किल गदाग्रज। तातेत्यवोचं पितरं पितुः पाण्डोर्महात्मनः ॥ ९२ ॥ नाहं तातस्तव पितुस्तातोऽस्मि तव भारत। इति मामब्रवीद्बाल्ये यः स वध्यः कथं मया ॥ ९३ ॥ कामं वध्यतु सैन्यं मे नाहं योत्स्ये महात्मना। जयो वधो वा मे भूयात् कथं वा कृष्ण मन्यसे ॥ ९४ ॥

वासुदेव उवाच। प्रतिज्ञाय वधं जिष्णो पुरा भीष्मस्य संयुगे। क्षत्रधर्मस्थितः पार्थः कथं नैनं हनिष्यसि ॥ ९५ ॥ पातयैनं रथात् पार्थ क्षत्रियं युद्धदुर्मदम्। नाहत्वा युधि गाङ्गेयं विजयस्ते भविष्यति ॥ ९६ ॥ दृष्टमेतत् पुरा देवैर्गमिष्यति यमक्षयम्। यद्दृष्टं हि पुरा पार्थ तत्तथा न तदन्यथा ॥ ९७ ॥ न हि भीष्मं दुराधर्षं व्यात्ताननमिवान्तकम्। अहन्यः शक्नुयात्

योद्धुमपि वज्रधरः स्वयम् ॥ ९८ ॥ जहि भीष्मं स्थिरो भूत्वा शृणु चेदं वचो मम । यथोवाच पुरा शक्रं महाबुद्धिर्वृहस्पतिः ॥ ९९ ॥ ज्यायांसमपि चेत् वृद्धं गुणैरपि समन्वितम् । आततायिनमायान्तं हन्यात् घातकमात्मनः ॥ १०० ॥ शाश्वतोऽयं स्थितो धर्म्मः क्षत्रियाणां धनञ्जय । योद्धव्यं रक्षितव्यञ्च यष्टव्यञ्चानुसूयिभिः ॥ १०१ ॥

अर्जुन उवाच । शिखण्डी निधनं कृष्ण भीष्मस्य भविता ध्रुवम् । दृष्ट्वैव हि सदा भीष्मः पाञ्चाल्यं विनिवर्त्तते ॥ १०२ ॥ ते वयं प्रमुखे तस्य पुरस्कृत्य शिखण्डिनम् । गाङ्गेयं पातयिष्याम उपायेनेति मे मतिः ॥ १०३ ॥ अहमन्यान्महेष्वासान् वारयिष्यामि सायकैः । शिखण्ड्यपि युधां श्रेष्ठं भीष्ममेवाभियोधयेत् ॥ १०४ ॥ श्रुतं हि कुरुमुख्यस्य नाहं हन्यां शिखण्डिनम् । कन्या ह्येषा पुरा भूत्वा पुरुषः समपद्यत ॥ १०५ ॥ इत्येवं निश्चयं कृत्वा पाण्डवाः सहमाधवाः । अनुमान्य महात्मानं प्रययुर्हृष्टमानसाः ॥ १०६ ॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि नवमदिवसावहारोत्तरमन्त्रे अष्टाधिकशततोऽध्यायः ॥ १०८ ॥

धृतराष्ट्र उवाच । कथं शिखण्डी गाङ्गेयमभ्यवर्त्तत संयुगे । पाण्डवाश्च कथं भीष्मं तन्ममाचक्ष्व सञ्जय ॥ १ ॥

सञ्जय उवाच । ततस्ते पाण्डवाः सर्व्वे सूर्य्यस्योदयनं प्रति । ताड्यमानासु भेरीषु मृदङ्गेष्वानकेषु च ॥ २ ॥ ध्मायत्सु दधिवर्णेषु जलजेषु समन्ततः । शिखण्डिनं पुरस्कृत्य निर्य्याताः पाण्डवा युधि ॥ ३ ॥ कृत्वा व्यूहं महाराज सर्व्वशत्रुनिवर्हणम् । शिखण्डी सर्व्वसैन्यानामग्र आसीद्विशाम्पते ॥ ४ ॥ चक्ररक्षौ ततस्तस्य भीम-

चेनधनञ्जयौ । पृष्ठतो द्रौपदेयाश्च सौभद्रश्चैव वीर्य्यवान् ॥ ५ ॥
सात्यकिश्चेकितानश्च तेषां गोप्ता महारथः । धृष्टद्युम्नस्ततः पश्चात्
पाञ्चाल्यैरभिरक्षितः ॥ ६ ॥ ततो युधिष्ठिरो राजा यमाभ्यां
सहितः प्रभुः । प्रययौ सिंहनादेन नादयन् भरतर्षभ ॥ ७ ॥
विराटस्तु ततः पश्चात् स्वेन सैन्येन संवृतः । द्रुपदश्च महाबाहो
ततः पश्चादुपाद्रवत् ॥ ८ ॥ कैकेया भ्रातरः पञ्च धृष्टकेतुश्च वीर्य्य-
वान् । जघनं पालयामासुः पाण्डवेन्यस्य भारत ॥ ९ ॥ एवं
व्यूह्य महासैन्यं पाण्डवास्तव वाहिनीम् । अभ्यद्रवन्त सङ्ग्रामे
त्यक्त्वा जीवितमात्मनः ॥ १० ॥ तथैव कुरवो राजन् भीष्मं कृत्वा
महारथम् । अग्रतः सर्वसैन्यानां प्रययुः पाण्डवान् प्रति ॥ ११ ॥
पुत्रैस्तव दुराधर्षो रक्षितः सुमहाबलैः । ततो द्रोणो महेष्वासः
पुत्रश्चास्य महाबलः ॥ १२ ॥ भगदत्तस्ततः पश्चाद्गजानीकेन
संवृतः । कृपश्च कृतवर्मा च भगदत्तमनुव्रतौ ॥ १३ ॥ काम्बोज-
राजो बलवान् ततः पश्चात् सुदक्षिणः । मागधश्च जयत्सेनः
सौबलश्च बृहद्बलः ॥ १४ ॥ तथैवान्ये महेष्वासाः सुशर्मप्रमुखा
नृपाः । जघनं पालयामासुस्तव सैन्यस्य भारत ॥ १५ ॥ दिवसे
दिवसे प्राप्ते भीष्मः शान्तनवो युधि । आसुरानकरोद्व्यूहान्
पैशाचानथ राक्षसान् ॥ १६ ॥ ततः प्रववृते युद्धं तव तेषाञ्च
भारत । अन्योऽन्यं निघ्नतां राजन् यमराष्ट्रविवर्द्धनम् ॥ १७ ॥
अर्जुनप्रमुखाः पार्थाः पुरस्कृत्य शिखण्डिनम् । भीष्मं युद्धेऽभ्य-
वर्त्तन्त किरन्तो विविधान् शरान् ॥ १८ ॥ तत्र भारत भीमेन
ताडितास्तावकाः शरैः । रुधिरौघपरिक्लिन्नाः परलोकं ययु-
स्तदा ॥ १९ ॥ नकुलः सहदेवश्च सात्यकिश्च महारथः । तव
सैन्यं समासाद्य पीडयामासुरोजसा ॥ २० ॥ ते वध्यमानाः
समरे तावका भरतर्षभ । नाशक्नुवन् वारयितुं पाण्डवानां
महद्बलम् ॥ २१ ॥ ततस्तत्तावकं सैन्यं वध्यमानं समन्ततः ।

सम्प्राद्रवद्दृश्य दिश काल्यमानं महारथैः ॥ २२ ॥ त्रातारं नाध्यगच्छन्त तावका भरतर्षभ । वध्यमानाः शितैर्वाणैः पाण्डवैः सह सृञ्जयैः ॥ २३ ॥

धृतराष्ट्र उवाच । पीड्यमानं बलं दृष्ट्वा पार्थैर्भीष्मः पराक्रमी । यदकार्षीद्रणे क्रुद्धस्तन्ममाचक्ष्व सञ्जय ॥ २४ ॥ कथं वा पाण्डवान् युद्धे प्रत्युद्यातः परन्तपः । विनिघ्नन् सोमकान् वीरस्तन्ममाचक्ष्व मेऽनघ ॥ २५ ॥

सञ्जय उवाच । आचक्षे ते महाराज यदकार्षीत् पिता तव । पीड़िते तव पुत्रस्य सैन्ये पाण्डवसृञ्जयैः ॥ २६ ॥ प्रहृष्टमनसः शूराः पाण्डवाः पाण्डुपूर्व्वज । अभ्यवर्त्तन्त निघ्नन्तस्तव पुत्रस्य वाहिनीम् ॥ २७ ॥ तं विनाशं मनुष्येन्द्र नरवारणवाजिनाम् । नामृष्यत तदा भीष्मः सैन्यघातं रणे परैः ॥ २८ ॥ स पाण्डवान् महेष्वासः पाञ्चालांश्चैव सृञ्जयान् । नाराचैर्वत्सदन्तैश्च शितैरञ्जलिकैस्तथा ॥ २९ ॥ अभ्यवर्षत दुर्द्धर्षस्त्यक्त्वा जीवितमात्मनः । स पाण्डवानां प्रवरान् पञ्च राजन् महारथान् ॥ ३० ॥ आत्तशस्त्रो रणे यत्तान् वारयामास सायकैः । नानाशस्त्रास्त्रवर्षैस्तान् वीर्य्यामर्षप्रवेगितैः ॥ ३१ ॥ निजघ्ने समरे क्रुद्धो हस्त्यश्वं चामितं बहु । रथिनो पातयन्राजन् रथेभ्यः पुरुषर्षभ ॥ ३२ ॥ सादिनश्चाश्वपृष्ठेभ्यः पदातींश्च समागतान् । गजारोहान् गजेभ्यश्च परेषां विदधद्भयम् ॥ ३३ ॥ तमेकं समरे भीष्मं त्वरमाणं महारथम् । पाण्डवाः समवर्त्तन्त वज्रहस्तमिवासुराः ॥ ३४ ॥ शक्राशनिसमस्पर्शान् विमुञ्चन्निशितान् शरान् । दिक्षुदृश्यत सर्व्वासु घोरं सन्धारयन् वपुः ॥ ३५ ॥ मण्डलीभूतमेवास्य नित्यं धनुरदृश्यत । सङ्ग्रामे युध्यमानस्य शक्रचापोपमं महत् ॥ ३६ ॥ तद्दृष्ट्वा समरे कर्म्म पुत्रास्तव विशाम्पते । विस्मयं परमं गत्वा पितामहमपूजयन् ॥ ३७ ॥ पार्था विमनसो भूत्वा प्रैक्षन्त पितरं

तव। युध्यमानं महाशूरं विप्रचित्तिमिवामराः ॥ ३८ ॥ न चैनं वारयामासुर्व्यात्ताननमिवान्तकम्। दशमेऽहनि सङ्ग्रामे रथानीकं शिखण्डिनः ॥ ३९ ॥ अदहन्निशितैर्बाणैः कृष्णवर्त्मेव काननम्। तं शिखण्डी त्रिभिर्बाणैरभ्यविध्यत् स्तनान्तरे ॥ ४० ॥ आशीविषमिव क्रुद्धं कालसृष्टमिवान्तकम्। स तेनातिभृशं विद्धः प्रेक्ष्य भीष्मः शिखण्डिनम् ॥ ४१ ॥ अनिच्छन्निव संक्रुद्धः प्रहसन्निदमब्रवीत्। काममभ्यस वा मा वा न त्वां योत्स्ये कथञ्चन ॥ ४२ ॥ यैव हि त्वं कृता धात्रा सैव हि त्वं शिखण्डिनी। तस्य तद्वचनं श्रुत्वा शिखण्डी क्रोधमूर्च्छितः ॥ ४३ ॥ उवाच भीष्मं समरे सृक्किणी परिसंलिहन्। जानामि त्वां महाबाहो क्षत्रियाणां क्षयङ्करम् ॥ ४४ ॥ मया श्रुतञ्च ते युद्धं जामदग्न्येन चैव हि। दिव्यश्च ते प्रभावोऽयं मया च बहुशः श्रुतः ॥ ४५ ॥ जानन्नपि प्रभावन्ते योत्स्येऽद्याहं त्वया सह। पाण्डवानां प्रियं कुर्वन्नात्मनश्च परन्तप ॥ ४६ ॥ अद्य त्वां योधयिष्यामि रणे पुरुषसत्तम। ध्रुवञ्च त्वां हनिष्यामि शपे सत्येन तेऽग्रतः ॥ ४७ ॥ एतच्छ्रुत्वा च मद्वाक्यं यत् कृत्यं तत् समाचर। काममभ्यस वा मा वा न मे जीवन् विमोक्ष्यसे। सुदृष्टः क्रियतां भीष्म लोकोऽयं समितिञ्जय ॥ ४८ ॥

सञ्जय उवाच। एवमुक्त्वा ततो भीष्मं पञ्चभिर्नतपर्वभिः। अविध्यत रणे भीष्मं सतुन्नं वाक्यसायकैः ॥ ४९ ॥ तस्य तद्वचनं श्रुत्वा सव्यसाची महारथः। कालोऽयमिति सञ्चिन्त्य शिखण्डिनमचोदयत् ॥ ५० ॥ अहं त्वामनुयास्यामि परान् विद्रावयन् शरैः। अभिद्रव सुसंरब्धो भीष्मं भीमपराक्रमम् ॥ ५१ ॥ न हि ते संयुगे पीडां शक्तः कर्तुं महाबलः। तस्मादद्य महाबाहो यत्तो भीष्ममभिद्रव ॥ ५२ ॥ अहत्वा समरे भीष्मं यदि यास्यसि मारिष। अवहास्योऽस्य लोकस्य भविष्यसि मया सह ॥ ५३ ॥

नावद्यास्या वयं वीर भवेम परमाहवे। तथा कुरु रणे यत्नं साधयस्व पितामहम् ॥ ५४ ॥ अहन्ते रक्षणं युद्धे करिष्यामि महाबल। वारयन् रथिनः सर्व्वान् साधयित्वा पितामहम् ॥ ५५ ॥ द्रोणञ्च द्रोणपुत्रञ्च कृपञ्चाथ सुयोधनम्। चित्रसेनं विकर्णञ्च सैन्धवञ्च जयद्रथम् ॥ ५६ ॥ विन्दानुविन्दावावन्त्यौ काम्बोजञ्च सुदक्षिणम्। भगदत्तं तथा शूरं मागधञ्च महाबलम् ॥ ५७ ॥ सौमदत्तिं तथा शूरमार्ष्यशृङ्गिञ्च राक्षसम्। त्रिगर्त्तराजञ्च रणे सह सर्व्वैर्महारथैः ॥ ५८ ॥ अहमावारयिष्यामि वेलेव मकरालयम्। कुरूंश्च सहितान् सर्व्वान् युध्यमानान् महाबलान्। अहं निवारयिष्यामि साधयस्व पितामहम् ॥ ५९ ॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि दशमदिवसयुद्धारम्भे भीष्मशिखण्डिसमागमे नवाधिकशततमोऽध्यायः ॥ १०९ ॥

---

धृतराष्ट्र उवाच। कथं शिखण्डी गाङ्गेयमभ्यधावत पितामहम्। पाञ्चाल्यः समरे क्रुद्धो धर्म्मात्मानं यतव्रतम् ॥ १ ॥ केऽरक्षन् पाण्डवानीके शिखण्डिनमुदायुधाः। त्वरमाणास्त्वराकाले जिगीषन्तो महारथाः ॥ २ ॥ कथं शान्तनवो भीष्मः स तस्मिन् दशमेऽहनि। अयुध्यत महावीर्य्यः पाण्डवैः सह सृञ्जयैः ॥ ३ ॥ न मृष्यामि रणे भीष्मं प्रत्युद्यातं शिखण्डिनम्। कच्चिन्न रथभङ्गोऽस्य धनुर्वाऽशीर्य्यतास्यत ॥ ४ ॥

सञ्जय उवाच। नाशीर्य्यत धनुश्चास्य रथभङ्गो न चाप्यभूत्। युध्यमानस्य सङ्ग्रामे भीष्मस्य भरतर्षभ ॥ ५ ॥ निघ्नतः समरे शत्रून् शरैः सन्नतपर्व्वभिः। अनेकशतसाहस्रास्तावकाना महारथा ॥ ६ ॥ तथा दन्तिगणा राजन् हयाश्चैव सुसज्जिता। अभ्यवर्त्तन्त युद्धाय पुरस्कृत्य पितामहम् ॥ ७ ॥ यथाप्रतिज्ञं

कौरव्य स चापि समितिञ्जयः । पार्थानामकरोद्भीष्मः सततं
समितिक्षयम् ॥ ८ ॥ युध्यमानं महेष्वासं विनिघ्नन्तं परान् शरैः ।
पाञ्चालाः पाण्डवैः सार्द्धं सर्व्वे ते नाभ्यवारयन् ॥ ९ ॥ दशमेऽहनि
सम्प्राप्ते ततस्तां रिपुवाहिनीम् । कीर्य्यमाणां शितैर्बाणैः शत-
शोऽथ सहस्रशः ॥ १० ॥ न हि भीष्मं महेष्वासं पाण्डवाः
पाण्डुपूर्व्वजम् । अशक्नुवन् रणे जेतुं पाशहस्तमिवान्तकम् ॥ ११ ॥
अथोपायान्महाराज सव्यसाची धनञ्जयः । त्रासयन् रथिनः
सर्व्वान् बीभत्सुरपराजितः ॥ १२ ॥ सिंहवद्विनदन्नुच्चैर्धनुर्ज्यां
विक्षिपन् मुहुः । शरौघान् विसृजन् पार्थो व्यचरत् कालवद्रणे
॥ १३ ॥ तस्य शब्देन वित्रस्तास्तावका भरतर्षभ । सिंहस्येव
मृगा राजन् व्यद्रवन्त महाभयात् ॥ १४ ॥ जयन्तं पाण्डवं दृष्ट्वा
तत् सैन्यञ्चाभिपीड़ितम् । दुर्य्योधनस्ततो भीष्ममब्रवीत् भय-
पीड़ितः ॥ १५ ॥ एष पाण्डुसुतस्तात श्वेताश्वः कृष्णसारथिः ।

तव सन्धारयन् पुत्रमब्रवीच्छान्तनोः सुतः । दुर्य्योधन विजानीहि स्थिरो भूत्वा विशाम्पते ॥ २५ ॥ पूर्व्वकालं तव मया प्रतिज्ञातं महाबल । हत्वा दशसहस्राणि क्षत्रियाणां महात्मनाम् ॥ २६ ॥ सङ्ग्रामादपयातव्यमेतत् कर्म ममाह्निकम् । इति तत कृतवांश्चाहं यथोक्तं भरतर्षभ ॥ २७ ॥ अद्य चापि महत् कर्म्म प्रकरिष्ये महाबल । अहं वा निहतः शेष्ये हनिष्ये वाद्य पाण्डवान् ॥ २८ ॥ अद्य ते पुरुषव्याघ्र प्रतिमोक्ष्ये ऋणान्तव । भर्त्तृपिण्डकृते राजन् निहतः पृतनामुखे ॥ २९ ॥ इत्युक्त्वा भरतश्रेष्ठ क्षत्रियान् प्रवपञ्छरैः । आससाद दुराधर्षः पाण्डवानामनीकिनीम् ॥ ३० ॥ अनीकमध्ये तिष्ठन्तं गाङ्गेयं भरतर्षभ । आशीविषमिव क्रुद्धं पाण्डवाः प्रत्यवारयन् ॥ ३१ ॥ दशमेऽहनि भीष्मस्तु दर्शयन् शक्तिमात्मनः । राजन् शतसहस्राणि सोऽवधीत् कुरुनन्दन ॥३२॥ पाञ्चालानाञ्च ये श्रेष्ठा राजपुत्रा महारथाः । तेषामादत्त तेजांसि जलं सूर्य्य इवांशुभिः ॥ ३३ ॥ हत्वा दशसहस्राणि कुञ्जराणां तरस्विनाम् । आरोहाणां महाराज हयानाञ्चायुतन्तथा ॥ ३४ ॥ पूर्णे शतसहस्रे च पदातानां नरोत्तम । प्रजज्वाल रणे भीष्मो धूम इव पावकः ॥ ३५ ॥ न चैनं पाण्डवेयानां केचिच्छेकुर्निरीक्षितुम् । उत्तरं मार्गमास्थाय तपन्तमिव भास्करम् ॥ ३६ ॥ ते पाण्डवेयाः समरे महेष्वासेन पीडिताः । वधायाभ्यद्रवन् भीष्मं सृञ्जयाश्च महारथाः ॥ ३७ ॥ संयुध्यमानो बहुभिर्भीष्मः शान्तनवस्तथा । अवकीर्णो महामेरुः शैलो मेघैरिवावृतः ॥ ३८ ॥ पुत्रास्तु तव गाङ्गेयं समन्तात् पर्य्यवारयत् । महत्या सेनया सार्द्धं ततो युद्धमवर्त्तत ॥ ३९ ॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि दुर्य्योधनभीष्मसंवादे दशाधिकशततोऽध्यायः ॥ ११० ॥

सञ्जय उवाच। अर्जुनस्तु रणे राजन् दृष्ट्वा भीष्मस्य विक्रमम्। शिखण्डिनमथोवाच समभ्येहि पितामहम्॥ १॥ न चापि भीस्त्वया कार्य्या भीष्मादद्य कथञ्चन। अहमेनं शरैस्तीक्ष्णैः पातयिष्ये रथोत्तमात्॥२॥ एवमुक्तस्तु पार्थेन शिखण्डी भरतर्षभ। अभ्यद्रवत गाङ्गेयं श्रुत्वा पार्थस्य भाषितम्॥ ३॥ धृष्टद्युम्नस्तथा राजन् सौभद्रश्च महारथः। हृष्टावाद्रवतो भीष्मं श्रुत्वा पार्थस्य भाषितम्॥ ४॥ विराटद्रुपदौ वृद्धौ कुन्तिभोजश्च दंशितः। अभ्यद्रवत गाङ्गेयं पुत्रस्य तव पश्यतः॥ ५॥ नकुलः सहदेवश्च धर्मराजश्च वीर्य्यवान्। तथेतराणि सैन्यानि सर्वाण्येव विशाम्पते॥ ६॥ प्रत्युद्ययुस्तावकाश्च समेतान् तान् महारथान्। यथाशक्ति यथोत्साहं तन्मे निगदतः शृणु॥ ७॥ चित्रसेनो महाराज चेकितानं समभ्ययात्। भीष्मप्रेप्सुं रणे यान्तं वृषं व्याघ्रशिशुर्यथा॥ ८॥ धृष्टद्युम्नं महाराज भीष्मान्तिकमुपागतम्। त्वरमाणं रणे यत्तं कृतवर्म्मा न्यवारयत्॥ ९॥ भीमसेनं सुसंक्रुद्धं गाङ्गेयस्य वधैषिणम्। त्वरमाणो महाराज सौमदत्तिर्न्यवारयत्॥ १०॥ तथैव नकुलं शूरं किरन्तं सायकान् बहून्। विकर्णो वारयामास इच्छन् भीष्मस्य जीवितम्॥ ११॥ सहदेवं तथा राजन् यान्तं भीष्मरथं प्रति। वारयामास संक्रुद्धः कृपः शारद्वतो युधि॥ १२॥ राक्षसं क्रूरकर्म्माणं भैमसेनिं महाबलम्। भीष्मस्य निधनं प्रेप्सुं दुर्मुखोऽभ्यद्रवद्बली॥ १३॥ सात्यकिं समरे यान्तं तव पुत्रो न्यवारयत्। अभिमन्युं महाराज यान्तं भीष्मरथं प्रति॥ १४॥ सुदक्षिणो महाराज काम्बोजः प्रत्यवारयत्। विराटद्रुपदौ वृद्धौ समेतावरिमर्द्दनौ॥ १५॥ अश्वत्थामा ततः क्रुद्धो वारयामास भारत। तथा पाण्डुसुतं ज्येष्ठं भीष्मस्य वधकाङ्क्षिणम्॥ १६॥ भारद्वाजो रणे यत्तो धर्मपुत्रमवारयत्। अर्जुनं रभसं युद्धे पुरस्कृत्य शिखण्डिनम्॥ १७॥ भीष्मप्रेप्सुं

महाराज मामयन्तं द्विपो इव । दुःशासनो महेष्वासो वारयामास संयुगे ॥ १८ ॥ अन्ये च तावका योधाः पाण्डवाना महारथान् । भीष्मस्याभिमुखे यातान् वारयामासुराहवे ॥ १९ ॥ धृष्टद्युम्नस्तु सैन्यानि प्राक्रोशंस्तु पुनः पुनः । अभ्यद्रवत संरब्धो भीष्ममेकं महारथः ॥ २० ॥ एषोऽर्जुनो रणे भीष्मं प्रयाति कुरुनन्दन । अभ्यद्रवत माभैष्ट भीष्मो हि प्राप्स्यते न वः ॥ २१ ॥ अर्जुनं समरे योद्धुं नोत्सहेतापि वासवः । किमु भीष्मो रणे वीरो गतसत्त्वोऽल्पजीवितः ॥ २२ ॥ इति सेनापतेः श्रुत्वा पाण्डवानां महारथाः । अभ्यद्रवन्त संहृष्टा गाङ्गेयस्य रथम्प्रति ॥ २३ ॥ आगच्छमानान् समरे वार्य्यौघान् प्रबलानिव । अवारयन्त संहृष्टास्तावकाः पुरुषर्षभाः ॥ २४ ॥ दुःशासनो महाराज भयं त्यक्त्वा महारथः । भीष्मस्य जीविताकाङ्क्षी धनञ्जयमुपाद्रवत् ॥ २५ ॥ तथैव पाण्डवाः शूरा गाङ्गेयस्य रथम्प्रति । अभ्यद्रवन्त सङ्ग्रामे तव पुत्रान् महारथान् ॥ २६ ॥ तत्राद्भुतमपश्याम चित्ररूपं विशाम्पते । दुःशासनरथं प्राप्य यत् पार्थो नाभ्यवर्त्तत ॥ २७ ॥ यथा वारयते वेला क्षुब्धतोयं महार्णवम् । तथैव पाण्डवं क्रुद्धं तव पुत्रो न्यवारयत् ॥ २८ ॥ उभौ तौ रथिनां श्रेष्ठावुभौ भारत दुर्ज्जयौ । उभौ चन्द्रार्कसदृशौ कान्त्या दीप्त्या च भारत ॥ २९ ॥ तथा तौ जातसंरम्भावन्योऽन्यवधकाङ्क्षिणौ । समीयतुर्म्महासङ्ख्ये मयशक्रौ यथा पुरा ॥ ३० ॥ दुःशासनो महाराज पाण्डवं विशिखैस्त्रिभिः । वासुदेवञ्च विंशत्या ताडयामास संयुगे ॥ ३१ ॥ ततोऽर्जुनो जातमन्युर्वार्ष्णेयं वीक्ष्य पीड़ितम् । दुःशासनं शतेनाजौ नाराचानां समर्पयत् ॥ ३२ ॥ ते तस्य कवचं भित्त्वा पपुः शोणितमाहवे । दुःशासनस्ततः क्रुद्धः पार्थं विव्याध पञ्चभिः ॥ ३३ ॥ ललाटे भरतश्रेष्ठ शरैः सुनिशितैस्त्रिभिः । ललाटस्थैस्तु तैर्बाणैः शुशुभे पाण्डवो रणे ॥ ३४ ॥

यथा मेरुर्महाराज शृङ्गैरत्यर्थमुच्छ्रितैः। सोऽतिविद्धो महेष्वासः
पुत्रेण तव धन्विना ॥ ३५ ॥ व्यराजत रणे पार्थः किंशुक-
पुष्पवानिव। दुःशासनस्ततः क्रुद्धः पीडयामास पाण्डवम् ॥ ३६ ॥
पर्वणीव सुसंक्रुद्धो राहुः पूर्णं निशाकरम्। पीड्यमानो बल-
वता पुत्रस्तव विशाम्पते ॥ ३७ ॥ विव्याध समरे पार्थं कङ्कपत्रैः
शिलाशितैः। तस्य पार्थो धनुश्छित्त्वा रथञ्चास्य त्रिभिः शरैः
॥ ३८ ॥ अप्रैषीद्विशिखान् घोरान् यमदण्डोपमान् बहून्।
अप्राप्तानेव तान् बाणान् चिच्छेद तनयस्तव ॥ ३९ ॥ यतमानस्य
पार्थस्य तदद्भुतमिवाभवत्। पार्थं सुनिशितैर्बाणैरविध्यत्तनय-
स्तव ॥ ४० ॥ ततः क्रुद्धो रणे पार्थः शरान् सन्धाय कार्मुके।
प्रेषयामास समरे स्वर्णपुङ्खान् शिलाशितान् ॥ ४१ ॥ न्यमज्जंस्ते
महाराज तस्य काये महात्मने। यथा हंसा महाराज तड़ागं
प्राप्य भारत ॥ ४२ ॥ पीडितश्चैव पुत्रस्ते पाण्डवेन महात्मना।
हित्वा पार्थं रणे तूर्णं भीष्मस्य रथमाश्रजत् ॥ ४३ ॥ अगाधे
मज्जतस्तस्य द्वीपो भीष्मोऽभवत्तदा। प्रतिलभ्य ततः संज्ञां पुत्र-
स्तव विशाम्पते ॥ ४४ ॥ अवारयत्ततः शूरो भूय एव पराक्रमी।
शरैः सुनिशितैः पार्थं यथा वृत्रं पुरन्दरः। निर्बिभेद महाकायो
विव्यथे नैव चार्जुनः ॥ ४५ ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि अर्जुनदुःशासनसमागमे
एकादशाधिकशततमोऽध्यायः ॥ १११ ॥

---

सञ्जय उवाच। सात्यकिं दंशितं युद्धे भीष्मायाभ्युद्यतं रणे।
आर्ष्यशृङ्गिर्महेष्वासो वारयामास संयुगे ॥ १ ॥ माधवस्तु सुसं-
क्रुद्धो राक्षसं नवभिः शरैः। आजघान रणे राजन् प्रहसन्निव
भारत ॥ २ ॥ तथैव राक्षसो राजन् माधवं नवभिः शरैः।

अर्द्दयामास राजेन्द्र संक्रुद्धः शिनिपुङ्गवम् ॥ ३ ॥ शैनेयः शरसङ्घन्तु प्रेषयामास संयुगे। राक्षसाय सुसंक्रुद्धो माधव-परवीरहा ॥ ४ ॥ ततो रक्षो महाबाहुः सात्यकिं सत्यविक्रमम्। विव्याध विशिखै-स्तीक्ष्णै-सिंहनादं ननाद च ॥ ५ ॥ माधवस्तु रणे विद्धो राक्ष-सेन भृशं तदा। धैर्य्यमालम्ब्य तेजस्वी जहास च ननाद च ॥ ६ ॥ भगदत्तस्ततः क्रुद्धो माधवं निशितैः शरैः। ताड़या-मास समरे तोत्रैरिव महागजम् ॥ ७ ॥ विहाय राक्षसं युद्धे शैनेयो रथिनाम्वरः। प्राग्ज्योतिषो विचिक्षेप शरान् सन्नत-पर्व्वणः ॥ ८ ॥ ततः प्राग्ज्योतिषो राजा माधवस्य महद्धनुः। चिच्छेद शितधारेण भल्लेन कृतहस्तवत् ॥ ९ ॥ अथान्यद्धनु-राहाय वेगवत् परवीरहा। भगदत्तं रणे क्रुद्धं विव्याध निशितै-शरै-॥ १० ॥ सोऽतिविद्धो महेष्वासः सृक्किणी परि-संलिहन्। शक्तिं कनकवैदूर्य्यभूषितामायसीं भूषितां दृढाम् ॥ ११ ॥ यमदण्डोपमा घोरा चिक्षेप परमाहवे। तामापतन्तीं सहसा तस्य वाहुबलेरिताम् ॥ १२ ॥ सात्यकि समरे राजन् द्विधा चिच्छेद सायकैः। ततः पपात सहसा महोल्केव हतप्रभा ॥१३॥ शक्तिं विनिहतां दृष्ट्वा पुत्रस्तव विशाम्पते। महता रथवंशेन वारयामास माधवम् ॥ १४ ॥ तथा परिवृतं दृष्ट्वा वार्ष्णेयानां महारथम्। दुर्य्योधनो भृशं क्रुद्धो भ्रातृन् सर्व्वानुवाच ह ॥ १५ ॥ तथा कुरुत कौरव्या यथा वः सात्यकी युधि। न जीवन् प्रति निर्य्याति महतोऽस्मात् रथव्रजात् ॥ १६ ॥ तस्मिन् हते हतं मन्ये पाण्डवानां महद्बलम्। तथेति च वचस्तस्य परिगृह्य महा-रथाः ॥ १७ ॥ शैनेयं योधयामासुर्भीष्मस्य प्रमुखे तदा। अभि-मन्युं तदायान्तं भीष्मस्याभ्युद्यतं रणे ॥ १८ ॥ काम्बोजराजो बलवान् वारयामास संयुगे। आर्ज्जुनिर्नृपतिं विद्धा शरैः सन्नत-पर्व्वभिः ॥ १९ ॥ पुनरेव चतुःषष्ट्या राजन् विव्याध तं नृपम्।

सदाचिणस्तु समरे पुनर्विव्याध पञ्चभिः ॥ २० ॥ सारथिञ्चास्य
नवभिरिच्छन् भीष्मस्य जीवितम्। तदद्भुतमासीत् सुमहत्तयो-
स्तव समागमे ॥ २१ ॥ यदभ्यधावद्गाङ्गेयं शिखण्डी शत्रुकर्षण।
विराटद्रुपदौ वृद्धौ वारयन्तौ महाचमूम् ॥ २२ ॥ भीष्मस्य युधि
संरब्धावाद्रवन्तौ महारथौ। अश्वत्थामा रणे क्रुद्धः समिया-
द्रथसत्तमः ॥ २३ ॥ ततः प्रववृते युद्धं तयोस्तस्य च भारत।
विराटो दशभिर्भल्लैराजघान परन्तप ॥ २४ ॥ यतमानं महेष्वासं
द्रौणिमाहवशोभिनम्। द्रुपदश्च त्रिभिर्बाणैर्विव्याध निशितैस्तदा
॥ २५ ॥ गुरुपुत्रं समासाद्य प्रहरन्तौ महाबलौ। अश्वत्थामा
ततस्तौ तु विव्याध बहुभिः शरैः ॥ २६ ॥ विराटद्रुपदौ वीरौ
भीष्मं प्रति समुद्यतौ। तत्राद्भुतमपश्याम वृद्धयोश्चरितं महत्
॥ २७ ॥ यद्द्रौणिसायकान् घोरान् प्रत्यवारयतां युधि। सह-
देवं तथायान्तं कृपः शारद्वतोऽभ्ययात् ॥ २८ ॥ यथा नागो वने
नागं मत्तो मत्तमुपाद्रवत्। कृपश्च समरे शूरो माद्रीपुत्रं महा-
रथम् ॥ २९ ॥ आजघान शरैस्तूर्णं सप्तत्या रुक्मभूषणैः। तस्य
माद्रीसुतश्चापं द्विधा चिच्छेद सायकैः ॥ ३० ॥ अथैनं छिन्न-
धन्वानं विव्याध नवभिः शरैः। सोऽन्यत् कार्मुकमादाय समरे
भारसाधनम् ॥ ३१ ॥ माद्रीपुत्रं सुसंहृष्टो दशभिर्निशितैः शरैः।
आजघानोरसि क्रुद्ध इच्छन् भीष्मस्य जीवितम् ॥ ३२ ॥ तथैव
पाण्डवो राजन् शारद्वतममर्षणम्। आजघानोरसि क्रुद्धो भीष्मस्य
वधकाङ्क्षया ॥ ३३ ॥ ततो युद्धं समभवत् घोररूपं भयावहम्।
नकुलन्तु रणे क्रुद्धो विकर्णः शत्रुतापनः ॥ ३४ ॥ विव्याध
सायकैः षष्ट्या रक्षन् भीष्मं पितामहम्। नकुलोऽपि भृशं विद्ध-
स्तव पुत्रेण धीमता ॥ ३५ ॥ विकर्णं सप्तसप्तत्या निर्बिभेद शिलो-
मुखैः। तत्र तौ नरशार्दूलौ भीष्महेतोः परन्तपौ ॥ ३६ ॥
अन्योऽन्यं जघ्नतुर्वीरौ गोष्ठे गोवृषभाविव। घटोत्कचं रणे-

शान्तं निघ्नन्तं तव वाहिनीम् ॥ ३७ ॥ दुर्मुखः समरे प्रायात् भीष्महेतोः पराक्रमी । हैडिम्बस्तु रणे राजन् दुर्मुखं शत्रुतापनम् ॥ ३८ ॥ आजघानोरसि क्रुद्धः शरेणानतपर्व्वणा । भीमसेनसुतश्चापि दुर्मुखः सुमुखैः शरैः ॥ ३९ ॥ षष्ट्या वीरो नदन् हृष्टो विव्याध रणमूर्द्धनि । धृष्टद्युम्नं तथायान्तं भीष्मस्य वधकाङ्क्षिणम् ॥ ४० ॥ हार्द्दिक्यो वारयामास रथश्रेष्ठं महारथः । हार्द्दिक्यं पार्षतश्चापि विद्धा पञ्चभिरायसैः ॥ ४१ ॥ पुनः पञ्चाशता तूर्णमाजघान स्तनान्तरे । तथैव पार्षतो राजन् हार्द्दिक्यं नवभिः शरैः ॥ ४२ ॥ विव्याध निशितैस्तीक्ष्णैः कङ्कपत्रपरिच्छदैः । तयोः समभवद्युद्धं भीष्महेतोर्म्महारणे ॥ ४३ ॥ अन्योऽन्यातिशयैर्युक्तं यथा वृत्रमहेन्द्रयोः । भीमसेनमथायान्तं भीष्मं प्रति महाबलम् ॥ ४४ ॥ भूरिश्रवाभ्ययात्तूर्णं तिष्ठतिष्ठेति चाब्रवीत् । सौमदत्तिरथो भीममाजघान स्तनान्तरे ॥ ४५ ॥ नाराचेन सुतीक्ष्णेन रुक्मपुङ्खेन संयुगे । उरःस्थेन बभौ तेन भीमसेनः प्रतापवान् ॥ ४६ ॥ स्कन्दशक्त्या यथा क्रौञ्चः पुरा नृपतिसत्तम । तौ शरान् सूर्य्यसङ्काशान् कर्म्मारपरिमार्ज्जितान् ॥ ४७ ॥ अन्योऽन्यस्य रणे क्रुद्धौ विसृजाते नरर्षभौ । भीमो भीष्मवधाकाङ्क्षी सौमदत्तिं महारथम् ॥ ४८ ॥ तथा भीष्मजये गृध्नुः सौमदत्तिस्तु पाण्डवम् । कृतप्रतिकृते यत्तौ योधयामासतू रणे ॥ ४९ ॥ युधिष्ठिरन्तु कौन्तेयं महत्या सेनया वृतम् । भीष्माभिमुखमायान्तं भारद्वाजो न्यवारयत् ॥ ५० ॥ द्रोणस्य रथनिर्घोषं पर्ज्जन्यनिनदोपमम् । श्रुत्वा प्रभद्रका राजन् समकम्पन्त मारिष ॥ ५१ ॥ सा सेना महती राजन् पाण्डुपुत्रस्य संयुगे । द्रोणेन द्राविता यत्ता न चचाल पदात् पदम् ॥ ५२ ॥ चेकितानं रणे यत्तं भीष्मं प्रति जनेश्वर । चित्रसेनस्तव सुत क्रुद्धरूपमवारयत् ॥ ५३ ॥ भीष्महेतोः पराक्रान्तश्चित्रसेनो महा

रथ। चेकितानं परं शक्त्या योधयामास भारत ॥ ५४ ॥ तथैव चेकितानोऽपि चित्रसेनमयोधयत्। तद्युद्धमासीत् सुमहत् तयोस्तत्र समागमे ॥ ५५ ॥ अर्जुनो वार्यमाणस्तु बहुशस्तव भारत। विमुखीकृत्य पुत्रं ते सेनां तव ममर्द्द ह ॥ ५६ ॥ दुःशासनोऽपि परया शक्त्या पार्थमवारयत्। कथं भीष्मं न नो हन्यादिति निश्चित्य भारत ॥ ५७ ॥ सा वध्यमाना समरे पुत्रस्य तव वाहिनी। लोड्यते रथिभिः श्रेष्ठैस्तत्र तत्रैव भारत ॥ ५८ ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि द्वन्द्वसमागमे
द्वादशाधिकशततोऽध्यायः ॥ ११२ ॥

---

सञ्जय उवाच। अथ वीरो महेष्वासो मत्तवारणविक्रमः। समादाय महच्चापं मत्तवारणवारणम् ॥ १ ॥ विधुन्वानो नरश्रेष्ठो द्रावयाणो वरूथिनीम्। पृतनां पाण्डवेयानां गाहमानो महाबलः ॥ २ ॥ निमित्तानि निमित्तज्ञः सर्वतो वीक्ष्य वीर्यवान्। प्रतपन्तमनीकानि द्रोणः पुत्रमभाषत ॥ ३ ॥ अयं स दिवसस्तात यत्र पार्थो महाबलः। जिघांसुः समरे भीष्मं परं यत्नं करिष्यति ॥ ४ ॥ उत्पतन्ति हि मे बाणा धनुः प्रस्फुरतीव च। योगमस्त्राणि छिन्दन्ति क्रूरे मे वर्त्तते मतिः ॥ ५ ॥ दिक्ष्वशान्तानि घोराणि व्याहरन्ति मृगद्विजाः। नीचैर्गृध्रा निलीयन्ते भारतानां चमूं प्रति ॥ ६ ॥ नष्टप्रभ इवादित्यः सर्वतो लोहिता दिशः। रसते व्यथते भूमिः कम्पतीव च सर्वशः ॥ ७ ॥ कङ्कगृध्रा बलाकाश्च व्याहरन्ति मुहुर्मुहुः। शिवाश्चैवाशिवा घोरा वेदयन्त्यो महद्भयम् ॥ ८ ॥ पपात महती चोल्का मध्येनादित्यमण्डलात्। सकबन्धश्च परिघो भानुमावृत्य तिष्ठति ॥ ९ ॥ परिवेषस्तथा घोरश्चन्द्रभास्करयोरभूत्। वेदयानो भयं घोर

धाग्नां दिवावकर्त्तनम् ॥ १० ॥ देवतायतनस्थाश्च कौरवेन्द्रस्य
देवताः । कम्पन्ते च हसन्ति च नृत्यन्ति च रुदन्ति च ॥ ११ ॥
अपसव्यं ग्रहाश्चक्रुरलक्ष्मणं दिवाकरम् । अवाक्शिराश्च भगवा-
नुपातिष्ठत चन्द्रमाः ॥ १२ ॥ वपूंषि च नरेन्द्राणां विगताभानि
लक्षये । धार्त्तराष्ट्रस्य सैन्येषु न च भ्राजन्ति दंशिताः ॥ १३ ॥
सेनयोरुभयोश्चैव समन्तात् श्रूयते महान् । पाञ्चजन्यस्य निर्घोषो
गाण्डीवस्य च निःस्वनः ॥ १४ ॥ ध्रुवमास्थाय बीभत्सुरुत्तमा-
स्त्राणि संयुगे । अपास्यान्यान् रणे योधानभ्येष्यति पितामहम्
॥ १५ ॥ हृष्यन्ति रोमकूपानि सीदन्तीव च मे मनः । चिन्त-
यित्वा महाबाहो भीष्मार्जुनसमागमम् ॥ १६ ॥ तञ्चेह निकृति-
प्रज्ञं पाञ्चाल्यं पापचेतसम् । पुरस्कृत्य रणे पार्थो भीष्मस्यायो-
धनं गतः ॥ १७ ॥ अब्रवीच्च पुरा भीष्मो नाहं हन्यां शिख-
ण्डिनम् । स्त्री ह्येषा विहिता धाता दैवाच्च स पुनः पुमान् ॥ १८ ॥
अमङ्गल्यध्वजश्चैव याज्ञसेनिर्महारथः । न चामाङ्गलिके तस्मिन्
प्रहरेदापगासुतः ॥ १९ ॥ एतद्विचिन्तयानस्य मनः सीदति मे
भृशम् । अभ्युद्यतो रणे क्रुद्धः कुरून्समुपाद्रवत् ॥ २० ॥ युधि-
ष्ठिरस्य च क्रोधो भीष्मार्जुनसङ्गतः । मम चात्र समारम्भः प्रजा-
नामशिवं ध्रुवम् ॥ २१ ॥ मनस्वी बलवाञ्छूरः कृतास्त्रो लघु-
विक्रमः । दूरपाती दृढेषुश्च निमित्तज्ञश्च पाण्डवः ॥ २२ ॥ अजेयः
समरे चापि देवैरपि सवासवैः । बलवान् बुद्धिमांश्चैव जितक्लेशो
युधां वरः ॥ २३ ॥ विजयी च रणे नित्यं भैरवास्त्रश्च पाण्डवः ।
तस्य मार्गं परिहरन् द्रुतं गच्छ यतव्रत ॥ २४ ॥ पश्याद्यैतन्महा-
घोरे संयुगे वैशसं महत् । हेमचित्राणि शूराणां महान्ति च
शुभानि च ॥ २५ ॥ कवचानि विदीर्यन्ते शरैः सन्नतपर्वभिः ।
छिद्यन्ते च ध्वजाग्राणि तोमराश्च धनूंषि च ॥ २६ ॥ प्रासाश्च विम-
लास्तीक्ष्णाः शक्तयश्च कनकोज्ज्वलाः । वैजयन्त्यश्च नागानां सङ्क्रु-

हेन किरीटिना ॥ २७ ॥ नायं संरक्षितुं कालः प्राणान् पुत्रोप-जीविभिः। याहि स्वर्गं पुरस्कृत्य यशसे विजयाय च ॥ २८ ॥ रथनागहयावर्त्तां महाघोरां सुदुर्गमाम्। रथेन सङ्ग्रामनदीं तरत्येष कपिध्वजः ॥ २९ ॥ ब्रह्मण्यता दमो दानं तपश्च चरितं महत्। इहैव दृश्यते राज्ञि भ्राता यस्य धनञ्जयः॥ ३० ॥ भीम-सेनश्च बलवान् माद्रीपुत्रौ च पाण्डवौ। वासुदेवश्च वार्ष्णेयो यस्य नाथो व्यवस्थितः ॥ ३१ ॥ तस्यैष मन्युप्रभवो धार्त्तराष्ट्रस्य दुर्मतेः। तपोदग्धशरीरस्य कोपो दहति भारतीम् ॥ ३२ ॥ एष संदृश्यते पार्थो वासुदेवव्यपाश्रयः। दारयन् सर्वसैन्यानि धार्त्तराष्ट्राणि सर्वशः ॥ ३३ ॥ एतदालोक्यते सैन्यं क्षोभ्यमाणं किरीटिना। महोर्मिनद्धं सुमहत्तिमिनेव महाजलम् ॥ ३४ ॥ हाहाकिलकिला-शब्दाः श्रूयन्ते च चमूमुखे। याहि पाञ्चालदायादमहं यास्ये युधिष्ठिरम् ॥ ३५ ॥ दुर्गमं ह्यन्तरं राज्ञो व्यूहस्यामिततेजसः। समुद्रकुक्षिप्रतिमं सर्वतोऽतिरथैः स्थितैः ॥ ३६ ॥ सात्यकिश्चाभि-मन्युश्च धृष्टद्युम्नवृकोदरौ। पर्य्यरक्षन्त राजानं यमौ च मनुजे-श्वरम् ॥ ३७ ॥ उपेन्द्रसदृशः श्यामो महाशाल इवोद्गतः। एष गच्छत्यनीकाग्रे द्वितीय इव फाल्गुनः ॥ ३८ ॥ उत्तमास्त्राणि चाधत्स्व व्रजीला च महद्धनुः। पार्षतं याहि राजानं युध्यस्व च वृकोदरम् ॥ ३९ ॥ को हि नेच्छेत् प्रियं पुत्रं जीवन्तं शाश्वतीः समाः। क्षत्रधर्मन्तु सम्प्रेक्ष्य ततस्त्वा नियुनज्म्यहम् ॥ ४० ॥ एष चाति रणे भीष्मो दहते वै महाचमूम्। युद्धेषु सदृशस्तात यमस्य वरुणस्य च ॥ ४१ ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि द्रोणाश्वत्थामसंवादे त्रयोदशाधिकशततोऽध्यायः ॥ ११३ ॥

---

सञ्जय उवाच । एतत् श्रुत्वा वचस्तस्य द्रोणस्य च महात्मनः । भगदत्तः कृपः शल्यः कृतवर्म्मा तथैव च ॥ १ ॥ विन्दानुविन्दा-वावन्त्यौ सैन्धवश्च जयद्रथः । चित्रसेनो विकर्णश्च तथा दुर्म्मर्षणा-दयः ॥ २ ॥ दशैते तावका योधा भीमसेनमयोधयन् । महत्या सेनया युक्ता नानादेशसमुत्थया ॥ ३ ॥ भीष्मस्य समरे राजन् प्रार्थयाना महद्यशः । शल्यस्तु नवभिर्वाणैर्भीमसेनमताड़यत् ॥४॥ कृतवर्म्मा त्रिभिर्वाणैः कृपश्च नवभिः शरैः । चित्रसेनो विकर्णश्च भगदत्तश्च मारिष ॥ ५ ॥ दशभिर्दशभिर्वाणैर्भीमसेनमताड़यत् । सैन्धवश्च त्रिभिर्वाणैर्भीमसेनमताड़यत् ॥ ६ ॥ विन्दानुविन्दा-वावन्त्यौ पञ्चभिः पञ्चभिः शरैः । दुर्म्मर्षणश्च विंशत्या पाण्डवं निशितैः शरैः ॥ ७ ॥ स तान् सर्व्वान् महाराज राजमानान् पृथक् पृथक् । प्रवरान् सर्व्वलोकस्य धार्त्तराष्ट्रान् महारथान् ॥ ८ ॥ जघान समरे वीरः पाण्डवः परवीरहा । सप्तभिः शल्य-माविध्यत् कृतवर्म्माणमष्टभिः ॥ ९ ॥ कृपस्य सशरं चापं मध्ये चिच्छेद भारत । अथैनं छिन्नधन्वानं पुनर्विव्याध सप्तभिः ॥ १० ॥ विन्दानुविन्दौ च तथा त्रिभिस्त्रिभिरताड़यत् । दुर्म्मर्षणञ्च विंशत्या चित्रसेनञ्च पञ्चभिः ॥ ११ ॥ विकर्णं दशभिर्वाणैः पञ्चभिश्च जय-द्रथम् । विद्ध्वा भीमोऽनदद्‌दृष्टः सैन्धवञ्च पुनस्त्रिभिः ॥ १२ ॥ अथान्यद्धनुरादाय गौतमो रथिनां वरः । भीमं विव्याध संरब्धो दशभिर्निशितैः शरैः ॥ १३ ॥ स विद्धो दशभिर्वाणैस्तोत्रैरिव महाद्विपः । ततः क्रुद्धो महाराज भीमसेनः प्रतापवान् ॥ १४ ॥ गौतमं ताड़यामास शरैर्बहुभिराहवे । सैन्धवस्य तथाश्वांश्च सारथिञ्च त्रिभिः शरैः ॥ १५ ॥ प्राहिणोन्मृत्युलोकाय कालान्तकसमद्युतिः । हताश्वात्तु रथात्तूर्णमवप्लुत्य महारथः ॥ १६ ॥ शरांश्चिक्षेप निशितान् भीमसेनस्य संयुगे । तस्य भीमो धनुर्मध्ये द्वाभ्यां चिच्छेद मारिष ॥ १७ ॥ भल्लाभ्यां भरतश्रेष्ठ सैन्धवस्य

महात्मनः । स छिन्नधन्वा विरथो हताश्वो हतसारथिः ॥ १८ ॥ चित्रसेनरथं राजन्नारुरोह त्वरान्वितः । अत्यद्भुतं रणे कर्म कृतवांस्तत्र पाण्डवः ॥ १९ ॥ महारथान् शरैर्विद्ध्वा वारयित्वा च मारिष । विरथं चैन्द्रवं चक्रे सर्वलोकस्य पश्यतः ॥ २० ॥ तदा न ममृषे शल्यो भीमसेनस्य विक्रमम् । स सन्धाय शरांस्तीक्ष्णान् कर्मारपरिमार्जितान् ॥ २१ ॥ भीमं विव्याध समरे तिष्ठतिष्ठेति चाब्रवीत् । कृपश्च कृतवर्मा च भगदत्तश्च वीर्यवान् ॥ २२ ॥ विन्दानुविन्दावावन्त्यौ चित्रसेनश्च संयुगे । दुर्मर्षणो विकर्णश्च सिन्धुराजश्च वीर्यवान् ॥ २३ ॥ भीमं ते विव्यधुस्तूर्णं शल्यहेतोररिन्दमाः । स च तान् प्रतिविव्याध पञ्चभिः पञ्चभिः शरैः ॥ २४ ॥ शल्यं विव्याध सप्तत्या पुनश्च दशभिः शरैः । तं शल्यो नवभिर्भित्त्वा पुनर्विव्याध पञ्चभिः ॥ २५ ॥ सारथिञ्चास्य भल्लेन गाढं विव्याध मर्मणि । विशोकं प्रेक्ष्य निर्भिन्नं भीमसेनः प्रतापवान् ॥ २६ ॥ मद्रराजं त्रिभिर्बाणैर्बाह्वोरुरसि चार्पयत् । तथेतरान् महेष्वासांस्त्रिभिस्त्रिभिरजिह्मगैः ॥ २७ ॥ ताडयामास समरे सिंहवद्विननाद च । ते हि यत्ता महेष्वासाः पाण्डवं युद्धकोविदम् ॥ २८ ॥ त्रिभिस्त्रिभिरकुण्ठाग्रैर्भृशं मर्मस्वताडयन् । सोऽतिविद्धो महेष्वासो भीमसेनो न विव्यथे ॥ २९ ॥ पर्वतो वारिधाराभिर्वर्षमाणैरिवाम्बुदैः । स तु क्रोधसमाविष्टः पाण्डवानां महारथः ॥ ३० ॥ मद्रेश्वरं त्रिभिर्बाणैर्भृशं विद्ध्वा महायशाः । प्राग्ज्योतिषं शतैराजौ राजन् विव्याध सायकैः ॥ ३१ ॥ कृपञ्च बहुभिर्बाणैर्भृशं विद्ध्वा महायशाः । ततस्तु सशरं चापं सात्वतस्य महात्मनः ॥ ३२ ॥ क्षुरप्रेण सुतीक्ष्णेन चिच्छेद कृतहस्तवत् । तथान्यद्धनुरादाय कृतवर्मा वृकोदरम् ॥ ३३ ॥ आजघान भ्रुवोर्मध्ये नाराचेन परन्तपः । भीमस्तु समरे विद्ध्वा शल्यं नवभिरायसैः । भगदत्तं त्रिभिश्चैव कृतवर्माण-

भष्टभिः । ताभ्यां ताभ्यान्तु विव्याधं गौतमप्रभृतीन् रथान् ॥ ३४ ॥ तेऽपि तं समरे राजन् विव्यधुर्निशितैः शरैः । स तथा पीड्य-मानोऽपि सर्वशस्तैर्महारथैः ॥ ३५ ॥ मल्ला व्यपेन तान् तुल्यान् विचचार गतव्यथः । ते चापि रथिना श्रेष्ठा भीमाय निशितान् शरान् ॥ ३६ ॥ प्रेषयामासुरव्यग्राः शतशोऽथ सहस्रशः । तस्य शक्तिं महावेगा भगदत्तो महाबलः ॥ ३७ ॥ चिक्षेप समरे वीरः स्वर्णदण्डां महात्मनः । तोमरं सैन्धवो राजा पट्टिशञ्च महाभुजः ॥ ३८ ॥ शतघ्नीञ्च कृपो राजन् शरं शल्यश्च संयुगे । अथेतरे महेष्वासाः पञ्च पञ्च शिलीमुखान् ॥ ३९ ॥ भीमसेनं समुद्दिश्य प्रेषयामासुरोजसा । तोमरञ्च द्विधा चक्रे क्षुरप्रेणानिलात्मजः ॥ ४० ॥ पट्टिशञ्च त्रिभिर्बाणैश्चिच्छेद तिलकाण्डवत् । स विभेद शतघ्नीञ्च नवभिः कङ्कपत्रिभिः ॥ ४१ ॥ भीमसेनो रणश्लाघी त्रिधेकैकं समाच्छिनत् । तांश्च सर्वान् महेष्वासान् त्रिभिस्त्रिभि-रताडयत् ॥ ४२ ॥ ततो धनञ्जयस्तत्र वर्त्तमाने महारणे । आजगाम रथेनाजौ भीमं दृष्ट्वा महारथम् ॥ ४३ ॥ निघ्नन्तं समरे शत्रून् योधयानञ्च सायकैः । तौ तु तत्र महात्मानौ समेतौ वीक्ष्य पाण्डवौ ॥ ४४ ॥ न शशंसुर्जयं तत्र तावकाः पुरुषर्षभाः । अथार्जुनो रणे भीमं योधयन्तं महारथान् ॥ ४५ ॥ भीष्मस्य निधनाकाङ्क्षी पुरस्कृत्य शिखण्डिनम् । आससाद रणे वीरां-स्तावकान् दश भारत ॥ ४६ ॥ ये स्म भीमं रणे राजन् योध-यन्तो व्यवस्थिताः । बीभत्सुस्तान् तथाविध्यत् भीमस्य प्रिय-काम्यया ॥ ४७ ॥ ततो दुर्य्योधनो राजा सुशर्माणमचोदयत् । अर्जुनस्य वधार्थाय भीमसेनस्य चोभयोः ॥ ४८ ॥ सुशर्मन् गच्छ शीघ्रं त्वं बलौघैः परिवारितः । जहि पाण्डुसुतावेतौ धनञ्जय-वृकोदरौ ॥ ४९ ॥ तच्छ्रुत्वा वचनं तस्य त्रैगर्त्तः प्रस्थलाधिपः । अभिद्रुत्य रणे भीममर्जुनञ्चैव धन्विनौ ॥ ५० ॥ रथैरनेक-

साहस्रै समन्तात पर्य्यवारयत् । तत प्रववृते युद्धमर्ज्जुनस्य परै सह ॥ ५१ ॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि भीमसेनपराक्रमे
चतुर्द्दशाधिकशतोऽध्याय ॥ ११४ ॥

हयाश्च पतयो हताः । गजाश्च सगजारोहाः पेतुरुर्व्यां महाहवे
॥ १४ ॥ रथिनः सादिनश्चैव तत्र तत्र निषूदिताः । दृश्यन्ते
बहवो राजन् वेपमानाः समन्ततः ॥ १५ ॥ हतैर्गजैः पदात्योघै-
र्वाजिभिश्च निषूदितैः । रथैश्च बहुधा भग्नैः समास्तीर्यत मेदिनी
॥ १६ ॥ तत्राद्भुतमपश्याम रणे पार्थस्य विक्रमम् । शरैः संवार्य
तान् वीरान् यत् जघान महाबलः ॥ १७ ॥ कृपश्च कृतवर्मा च
सैन्धवश्च जयद्रथः । विन्दानुविन्दावावन्त्यौ नाजहुः संयुगं तदा
॥ १८ ॥ ततो भीमो महेष्वासः फाल्गुनश्च महारथः । कौर-
वाणां चमूं घोरां भृशं दुद्रुवतू रणे ॥ १९ ॥ ततो बर्हिण-
वाजानामयुतान्यर्बुदानि च । धनञ्जयरथे तूर्णं पातयन्ति स्म
भूमिपाः ॥ २० ॥ ततस्तान् शरजालेन सन्निवार्य महारथान् ।
पार्थः समन्तात् समरे प्रेषयामास मृत्यवे ॥ २१ ॥ शल्यस्तु समरे
जिष्णुं क्रीडन्निव महारथः । आजघानोरसि क्रुद्धो भल्लैः सन्नत-
पर्वभिः ॥ २२ ॥ तस्य पार्थो धनुश्छित्त्वा हस्तावापञ्च पञ्चभिः ।
अथैनं सायकैस्तीक्ष्णैर्भृशं विव्याध मर्मणि ॥ २३ ॥ अथान्यद्धनु-
रादाय समरे भारसाधनम् । मद्रेश्वरो रणे जिष्णुं ताडयामास
रोषितः ॥ २४ ॥ त्रिभिः शरैर्महाराज वासुदेवञ्च पञ्चभिः ।
भीमसेनञ्च नवभिर्बाह्वोरुरसि चार्पयत् ॥ २५ ॥ ततो द्रोणो
महाराज मागधश्च महारथः । दुर्योधनसमादिष्टौ तं देशमुप-
जग्मतुः ॥ २६ ॥ यत्र पार्थो महाराज भीमसेनश्च पाण्डवः ।
कौरव्यस्य महासेनां जघ्नतुः समहारथौ ॥ २७ ॥ जयत्सेनस्तु
समरे भीमं भीमायुधं युधि । विव्याध निशितैर्बाणैरष्टभिर्भरत-
र्षभ ॥ २८ ॥ तं भीमो दशभिर्विद्ध्वा पुनर्विव्याध पञ्चभिः । सार-
थिञ्चास्य भल्लेन रथनीडादपातयत् ॥ २९ ॥ उद्भ्रान्तैस्तुरगैः
सोऽथ द्रवमाणैः समन्ततः । मागधोऽपहृतो राजा सर्वसैन्यस्य
पश्यतः ॥ ३० ॥ द्रोणश्च विवरं दृष्ट्वा भीमसेनं शिलीमुखैः ।

विव्याध वाणैर्निशितैरष्टभिर्भरतर्षभ ॥ ३१ ॥ तं भीमं समरश्लाघी गुरुं पितृसमं रणे। विव्याध पञ्चभिर्भल्लैस्तथा षष्ट्या च भारत ॥ ३२ ॥ अर्जुनस्तु सुसंरब्धो विद्ध्वा बहुभिरायसैः। व्यधमत्तस्य तत् सैन्यं महाभ्राणि यथानिलः ॥ ३३ ॥ ततो भीष्मं राजा च कौशल्यश्च बृहद्बलः। समवर्त्तन्त सक्रुद्धा भीमसेनधनञ्जयौ ॥ ३४ ॥ तथैव पाण्डवा शूरा धृष्टद्युम्नश्च पार्षतः। अभ्यद्रवन् रणे भीष्मं व्यादितास्यमिवान्तकम् ॥ ३५ ॥ शिखण्डी तु समासाद्य भारताना पितामहम्। अभ्यद्रवत सहृष्टो भयं त्यक्त्वा महाव्रतात्। ॥ ३६ ॥ युधिष्ठिरमुखाः पार्था पुरस्कृत्य शिखण्डिनम्। अयोधयन् रणे भीष्मं संहिताः सर्वसृञ्जयैः ॥ ३७ ॥ तथैव तावका सर्वे पुरस्कृत्य यतव्रतम्। शिखण्डिप्रमुखान् पार्थान् योधयन्ति स्म सयुगे ॥ ३८ ॥ ततः प्रववृते युद्धं कौरवाणां भयावहम्। तत्र पाण्डुसुतैः सार्धं भीष्मस्य विजयं प्रति ॥ ३९ ॥ तावकाना जयो भीष्मो ग्लहः आसीद्विशाम्पते। तत्र हि द्यूतमासक्तं विजयायेतराय च ॥ ४० ॥ धृष्टद्युम्नस्तु राजेन्द्र सर्वसैन्यान्यचोदयत्। अभिद्रवत गाङ्गेयं माभैष्ट रथसत्तमाः ॥ ४१ ॥ सेनापतिवचः श्रुत्वा पाण्डवानां वरूथिनी। भीष्मं समभ्ययात्तूर्णं प्राणास्त्यक्त्वा महाहवे ॥ ४२ ॥ भीष्मोऽपि रथिनां श्रेष्ठः प्रतिजग्राह तां चमूम्। आपतन्तीं महाराज वेलामिव महोदधिः ॥ ४३ ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि भीष्मार्जुनपराक्रमे पञ्चदशाधिकशततोऽध्यायः ॥ ११५ ॥

---

धृतराष्ट्र उवाच। कथं शान्तनवो भीष्मो दशमेऽहनि सञ्जय। अयुध्यत महावीर्यः पाण्डवैः सह सृञ्जयैः ॥ १ ॥ कुरवश्च कथं

युद्धे पाण्डवान् प्रत्यवारयन् । आसंश्च मे महायुद्धं भीष्मस्या-
हवशोभिनः ॥ २ ॥
सञ्जय उवाच । कुरवः पाण्डवैः सार्द्धं यदयुध्यन्त भारत ।
यथा च तदभूद्युद्धं तत्ते वक्ष्यामि साम्प्रतम् ॥ ३ ॥ गमिताः
परलोकाय परमास्त्रैः किरीटिनः । अहन्यहनि संक्रुद्धास्ताव-
काना महारथाः ॥ ४ ॥ यथाप्रतिज्ञं कौरव्यः स चापि समिति-
ञ्जय । पार्थानामकरोद्भीष्म सततं समितिक्षयम् ॥ ५ ॥ कुरुभिः
सहितं भीष्मं युध्यमानं परन्तप । अर्जुनञ्च सपाञ्चाल्यं संशयो
विजयेऽभवत ॥ ६ ॥ दशमेऽहनि तस्मिंस्तु भीष्मार्जुनसमागमे ।
प्रावर्त्तत महारौद्रः सततं समितिक्षयः ॥ ७ ॥ तस्मिन्नयुतशो
राजन् भूयश्च परन्तप । भीष्मः शान्तनवो योधान् जघान पर-
मास्त्रवित ॥ ८ ॥ येषामज्ञातकल्पानि नामगोत्राणि भारत । ते
हतास्तत्र भीष्मेण शूराः सर्व्वेऽनिवर्त्तिनः ॥ ९ ॥ दशाहानि तत-
स्तप्त्वा भीष्म पाण्डववाहिनीम् । निरविद्यत धर्म्मात्मा जीवितेन
परन्तप ॥ १० ॥ स क्षिप्रं वधमन्विच्छन्नात्मनोऽभिमुखो रणे ।
न हन्यां मानवश्रेष्ठान् सङ्ग्रामे सुबहूनपि ॥ ११ ॥ चिन्तयित्वा
महाबाहुः पिता देवव्रतस्तव । अभ्याशस्थं महाराज पाण्डवं
वाक्यमब्रवीत् ॥ १२ ॥ युधिष्ठिर महाप्राज्ञ सर्व्वशास्त्रविशारद ।
शृणुष्व वचनं तात धर्म्यं स्वर्ग्यञ्च जल्पत ॥ १३ ॥ निर्व्विण्णोऽस्मि
भृशं तात देहेनानेन भारत । घ्नतश्च मे गतः कालः सुबहून्
प्राणिनो रणे ॥ १४ ॥ तस्मात् पार्थं पुरोधाय पाञ्चालान् सृञ्जयां-
स्तथा । मद्बधे क्रियतां यत्नो मम चेदिच्छसि प्रियम् ॥ १५ ॥
तस्य तन्मतमाज्ञाय पाण्डव सत्यदर्शनः । भीष्मं प्रति ययौ राजा
सङ्ग्रामे सह सृञ्जयैः ॥ १६ ॥ धृष्टद्युम्नस्ततो राजन् पाण्डवश्च
युधिष्ठिरः । श्रुत्वा भीष्मस्य तां वाचं चोदयामासतुर्ब्बलम् ॥ १७ ॥
अभिद्रवध्वं युध्यध्वं भीष्मं जयत संयुगे । रक्षिताः सत्यसन्धेन

जिष्णुना रिपुजिष्णुना ॥ १८ ॥ अयञ्चापि महेष्वासः पार्षतो
वाहिनीपतिः । भीमसेनश्च समरे पालयिष्यति वो ध्रुवम् ॥ १९ ॥
मा वो भीष्माद्भयं किञ्चिदस्त्वद्य युधि सृञ्जयाः । ध्रुवं भीष्मं
विजेष्याम पुरस्कृत्य शिखण्डिनम् ॥ २० ॥ ते तथा समयं कृत्वा
दशमेऽहनि पाण्डवाः । ब्रह्मलोकपरा भूत्वा सञ्जग्मुः क्रोध-
मूर्च्छिताः ॥ २१ ॥ शिखण्डिनं पुरस्कृत्य पाण्डवञ्च धनञ्जयम् ।
भीष्मस्य पातने यत्नं परमं ते समास्थिताः ॥ २२ ॥ ततस्तव
सुतादिष्टा नानाजनपदेश्वराः । द्रोणेन सह पुत्रेण सहसेना
महाबलाः ॥ २३ ॥ दुःशासनश्च बलवान् सह सर्वैः सहोदरैः ।
भीष्मं समरमध्यस्थं पालयाञ्चक्रिरे तदा ॥ २४ ॥ ततस्तु तावकाः
शूराः पुरस्कृत्य महाव्रतम् । शिखण्डिप्रमुखान् पार्थान् योध-
यन्ति स्म संयुगे ॥ २५ ॥ चेदिभिस्तु सपाञ्चालैः सहितो वानर-
ध्वजः । ययौ शान्तनवं भीष्मं पुरस्कृत्य शिखण्डिनम् ॥ २६ ॥
द्रोणपुत्रं शिनेर्नप्ता धृष्टकेतुस्तु पौरवम् । युधामन्युः सहामात्यं
दुर्य्योधनमयोधयत् ॥ २७ ॥ विराटस्तु सहानीकः सहसेनं जय-
द्रथम् । वृद्धक्षत्रस्य दायादमाससाद परन्तप ॥ २८ ॥ मद्र-
राजं महेष्वासं सहसैन्यं युधिष्ठिरः । भीमसेनोऽभिगुप्तस्तु
नागानीकमुपाद्रवत् ॥ २९ ॥ अप्रधृष्यमनाधार्य्यं सर्वशस्त्रभृतां-
वरम् । द्रौणिं प्रति ययौ यत्तः पाञ्चाल्यः सह सोदरैः ॥ ३० ॥
कर्णिकारध्वजञ्चैव सिंहकेतुमरिन्दम । प्रत्युज्जगाम सौभद्रं
राजपुत्रो बृहद्बलः ॥ ३१ ॥ शिखण्डिनञ्च पुत्रास्ते पाण्डवञ्च धन-
ञ्जयम् । राजभिः समरे पार्थमभिपेतुर्जिघांसवः ॥ ३२ ॥ तस्मि-
न्नतिमहाभीमे सेनयोर्वै पराक्रमे । सम्प्रधावत् स्वनीकेषु मेदिनी
समकम्पत ॥ ३३ ॥ तान्यनीकान्यनीकेषु समसज्जन्त भारत ।
तावकानां परेषाञ्च दृष्ट्वा शान्तनवं रणे ॥ ३४ ॥ ततस्तेषां प्रतप्ता-
नामन्योन्यमभिधावताम् । प्रादुरासीन्महाशब्दो दिक्षु सर्वासु

भारत ॥ ३५ ॥ मृदङ्गदुन्दुभिघोषैश्च वारणानाञ्च बृंहितैः । सिंह
नादैश्च सैन्यानां दारुणः समपद्यत ॥ ३६ ॥ सा च सर्वनरेन्द्राणां
चन्द्रार्कसदृशी प्रभा । वीराङ्गदकिरीटेषु निष्प्रभा समपद्यत ॥३७॥
रजो मेघाश्च सञ्जज्ञुः शस्त्रविद्युद्भिरावृताः । धनुषाञ्चापि
निर्घोषो दारुणः समपद्यत ॥ ३८ ॥ बाणशङ्खप्रणादाश्च भेरी-
णाञ्च महास्वनाः । रथघोषश्च सञ्जज्ञे सेनयोरुभयोरपि ॥ ३९ ॥
प्रासशक्त्यृष्टिसङ्घैश्च बाणौघैश्च समाकुलम् । निष्प्रकाशमिवाकाशं
सेनयोः समपद्यत ॥ ४० ॥ अन्योऽन्यं रथिनः पेतुर्वाजिनश्च महा-
हवे । कुञ्जरान् कुञ्जरा जघ्नुः पदाताश्च पदातयः ॥ ४१ ॥
तदासीत् सुमहद्युद्धं कुरूणां पाण्डवैः सह । भीष्महेतोर्नर-
व्याघ्र श्येनयोरामिषे यथा ॥ ४२ ॥ तेषां समागमो घोरो बभूव
युधि सङ्गत । अन्योऽन्यस्य वधार्थाय जिगीषूणां महाहवे ॥ ४२ ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि भीष्मोपदेशे
षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

— —

सञ्जय उवाच । अभिमन्युर्महाराज तव पुत्रमयोधयत् ।
महत्या सेनया युक्तो भीष्महेतोः पराक्रमी ॥ १ ॥ ततो दुर्यो-
धनो कार्ष्णिं नवभिर्नतपर्वभिः । आजघानोरसि क्रुद्धः पुनश्चैव
त्रिभिः शरैः ॥ २ ॥ तस्य शक्तिं रणे कार्ष्णिर्मृत्योर्घोरामिव
स्वसाम् । प्रेषयामास सङ्क्रुद्धो दुर्योधनरथं प्रति ॥ ३ ॥ तामा-
पतन्तीं सहसा घोररूपां विशाम्पते । द्विधा चिच्छेद ते पुत्रः
क्षुरप्रेण महारथः ॥ ४ ॥ तद्युद्धमभवद्घोरं चित्ररूपञ्च भारत ।
इन्द्रियप्रीतिजननं सर्वपार्थिवपूजितम् ॥ ५ ॥ भीष्मस्य निधना-
र्थाय पार्थस्य विजयाय च । युयुधाते रणे वीरौ सौभद्रकुरु-
पुङ्गवौ ॥ ६ ॥ सात्यकिं रभसं युद्धे द्रौणिर्ब्राह्मणपुङ्गवः । आज

धनोरधि क्रुद्धो नाराचेन परन्तप ॥ ७ ॥ शैनेयोऽपि गुरोः
पुत्रं सर्वमर्मसु भारत । अताडयदमेयात्मा नवभिः कङ्कवाजितैः
॥ ८ ॥ अश्वत्थामा तु समरे सात्यकिं नवभिः शरैः । विद्ध्वा
च पुनस्तूर्णं बाह्वोरुरसि चार्पयत् ॥ ९ ॥ सोऽतिविद्धो महेष्वासो
द्रोणपुत्रेण सात्वत । द्रोणपुत्रं त्रिभिर्बाणैराजघान महायशाः
॥ १० ॥ पौरवो धृष्टकेतुञ्च शरैराच्छाद्य संयुगे । बहुधा
दारयाञ्चक्रे महेष्वासं महारथ ॥ ११ ॥ तथैव पौरवं युद्धे
धृष्टकेतुर्महारथ । त्रिंशता निशितैर्बाणैर्विव्याधाशु महाबल
॥ १२ ॥ पौरवस्तु धनुश्छित्त्वा धृष्टकेतोर्महारथ । ननाद बल
वान्नादं विव्याध च शितैः शरैः ॥ १३ ॥ सोऽन्यत् कार्मुकमादाय
पौरवं निशितैः शरैः । आजघान महाराज त्रिसप्तत्या शिली
मुखैः ॥ १४ ॥ तौ तु तत्र महेष्वासौ महामात्रौ महारथौ ।
महता शरवर्षेण परस्परमविध्यताम् ॥ १५ ॥ अन्योऽन्यस्य धनु
श्छित्त्वा हयान् हत्वा च भारत । विरथावसियुद्धाय समीयतु
रमर्षणौ ॥ १६ ॥ आर्षभे चर्मणी चित्रे शतचन्द्रपरिष्कृते ।
तारकाशतचित्रे च निस्त्रिंशौ सुमहाप्रभौ ॥ १७ ॥ प्रगृह्य विमलौ
राजंस्तावन्योऽन्यमभिद्रुतौ । वाशितासङ्गमे यत्तौ सिंहाविव
महावने ॥ १८ ॥ मण्डलानि विचित्राणि गतप्रत्यागतानि च ।
चेरतुर्दर्शयन्तौ च प्रार्थयन्तौ परस्परम् ॥ १९ ॥ पौरवो धृष्ट
केतुन्तु शङ्खदेशे महासिना । ताडयामास संक्रुद्धस्तिष्ठ तिष्ठेति
चाब्रवीत् ॥ २० ॥ चेदिराजोऽपि समरे पौरवं पुरुषर्षभम् ।
आजघान शिताग्रेण जत्रुदेशे महासिना ॥ २१ ॥ तावन्योन्य
महाराज समासाद्य महाहवे । अन्योऽन्यवेगाभिहतौ निपततु
ररिन्दमौ ॥ २२ ॥ ततः स्वरथमारोप्य पौरवं तनयस्तव ।
जयत्सेनो रथेनाजावपोवाह रणाजिरात् ॥ २३ ॥ धृष्टकेतुन्तु
समरे माद्रीपुत्रः प्रतापवान् । अपोवाह रणे शूरः सहदेवः

पराक्रमो ॥ २४ ॥ चित्रसेन सुशर्माणं विद्वा बहुभिरायसैः । पुनर्विव्याध स तदा पुनश्च नवभिः शरैः ॥ २५ ॥ सुशर्मा तु रणे क्रुद्धस्तव पुत्रं विशाम्पते । दशभिर्द्दशभिश्चैव विव्याध निशितैः शरैः ॥ २६ ॥ चित्रसेनश्च तं राजंस्त्रिंशतानतपर्वभिः । आजघान रणे क्रुद्धः स च तं प्रत्यविध्यत ॥ २७ ॥ भीष्मस्य समरे राजन् यशो मानञ्च वर्द्धयन् । सौभद्रो राजपुत्रन्तु बृहद्बलमयोधयत् ॥ २८ ॥ पार्थहेतोः पराक्रान्तो भीष्मस्यायोधनं प्रति । आर्जुनिं कोशलेन्द्रस्तु विद्वा पञ्चभिरायसैः ॥ २९ ॥ पुनर्विव्याध विंशत्या शरैः सन्नतपर्वभिः । सौभद्रः कोशलेन्द्रन्तु विव्याधाष्टभिरायसैः ॥ ३० ॥ नाकम्पयत सङ्ग्रामे विव्याध च पुनः शरैः । कौशल्यस्य धनुश्चापि पुनश्चिच्छेद फाल्गुनिः ॥ ३१ ॥ आजघान शरैश्चापि त्रिंशता कङ्कपत्रिभिः । सोऽन्यत् कार्म्मुकमादाय राजपुत्रो बृहद्बलः ॥ ३२ ॥ फाल्गुनिं समरे क्रुद्धो विव्याध बहुभिः शरैः । तयोर्युद्धं समभवत् भीष्महेतोः परन्तप ॥ ३३ ॥ संरब्धयोर्म्महाराज समरे चित्रयोधिनोः । यथा देवासुरे युद्धे बलिवासवयोरभूत् ॥ ३४ ॥ भीमसेनो रथानीकं योधयन् बह्वशोभत । यथा शक्रो वज्रपाणिर्द्दारयन् पर्वतोत्तमान् ॥ ३५ ॥ ते वध्यमानाः समरे मातङ्गा गिरिसन्निभाः । निपेतुरुर्व्व्यां सहिता नादयन्तो वसुन्धराम् ॥ ३६ ॥ गिरिमात्रा हि ते नागा भिन्नाञ्जनचयोपमाः । विरेजुर्वसुधां प्राप्ता विकीर्णा इव पर्वताः ॥३७॥ युधिष्ठिरो महेष्वासो मद्रराजानमाहवे । महत्या सेनया गुप्तः पीडयामास सङ्गतम् ॥ ३८ ॥ मद्रेश्वरोऽथ समरे धर्मपुत्रं महारथम् । पीडयामास समरे भीष्महेतोः पराक्रमी ॥ ३९ ॥ विराटं सैन्धवो राजा विद्वा सन्नतपर्वभिः । नवभिः सायकैस्तीक्ष्णैस्त्रिंशता पुनरर्पयत ॥ ४० ॥ विराटश्च महाराज सैन्धवं वाहिनीपतिः । त्रिंशद्भिर्निशितैर्बाणैराजघान स्तनान्तरे ॥ ४१ ॥

चित्रकार्मुकनिस्त्रिंशौ चित्रवर्मायुधध्वजौ । रेजतुश्चित्ररूपौ तौ सङ्ग्रामे मत्स्यपैत्रवौ ॥ ४२ ॥ द्रोणः पाञ्चालपुत्रेण समागम्य महारणे । महासमुदयं चक्रे शरैः सन्नतपर्वभिः ॥ ४३ ॥ ततो द्रोणो महाराज पार्षतस्य महद्धनुः । छित्त्वा पञ्चाशतेषूणां पार्षतं समविध्यत ॥ ४४ ॥ सोऽन्यत् कार्मुकमादाय पार्षतः परवीरहा । द्रोणाय चिक्षेप गदां यमदण्डोपमां रणे ॥ ४५ ॥ तामापतन्तीं सहसा हेमपट्टविभूषिताम् । शरैः पञ्चाशता द्रोणो वारयामास संयुगे ॥ ४६ ॥ सा छिन्ना बहुधा राजन् द्रोणचापच्युतैः शरैः । चूर्णीकृता विशीर्यन्ती पपात वसुधातले ॥ ४७ ॥ गदां विनिहतां दृष्ट्वा पार्षतः शत्रुतापन । द्रोणाय शक्तिं चिक्षेप सर्वपारशवीं शुभाम् ॥ ४८ ॥ तां द्रोणो नवभिर्बाणैश्चिच्छेद युधि भारत । पार्षतञ्च महेष्वासं पीड़यामास संयुगे ॥ ४९ ॥ एवमेतन्महद्युद्धं द्रोणपार्षतयोरभूत् । भीष्मं प्रति महाराज घोररूपं भयानकम् ॥ ५० ॥ अर्जुनः प्राप्य गाङ्गेयं पीड़यन्निशितैः शरैः । अभ्यद्रवत सम्मत्तो वने मत्तमिव द्विपम् ॥ ५१ ॥ प्रत्युद्ययौ च तं राजा भगदत्तः प्रतापवान् । अर्जुनं शरवर्षेण वारयामास संयुगे ॥ ५२ ॥ अर्जुनस्तु ततो नागमायान्तं रजतोपमैः । विमलैरायसैस्तीक्ष्णैरविध्यत महारणे ॥ ५३ ॥ शिखण्डिनञ्च कौन्तेयो याहि याहीत्यचोदयत । भीष्मं प्रति महाराज जह्येनमिति चाब्रवीत ॥ ५४ ॥ प्राग्ज्योतिषस्ततो हित्वा पाण्डवं पाण्डुपूर्वज । प्रययौ त्वरितो राजन् द्रुपदस्य रथं प्रति ॥ ५५ ॥ ततोऽर्जुनो महाराज भीष्ममभ्यद्रवद्द्रुतम् । शिखण्डिनं पुरस्कृत्य ततो युद्धमवर्त्तत ॥ ५६ ॥ ततस्ते तावकाः शूराः पाण्डवं रभसं युधि । समभ्यधावन् क्रोशन्तस्तदद्भुतमिवाभवत् ॥ ५७ ॥ नानाविधान्यनीकानि पुत्राणान्ते जनाधिप । अर्जुनो व्यधमत्काले दिवीवाभ्राणि मारुतः ॥ ५८ ॥ शिखण्डी तु समासाद्य भार-

तानां पितामहम् । इषुभिस्तूर्णमव्यग्रो बहुभिः समवाकिरत्
॥ ५९ ॥ रथान्नागांस्तथापादांश्चिराभिशक्तिर्गदेश्मनः । शरच्छन्नमहा-
ज्वालः क्षत्रियान् समरेऽदहत् ॥ ६० ॥ यथाग्निः सुमहानिद्धः
कक्षे चरति सानिलः । तथा जज्वाल भीष्मोऽपि दिव्यान्यस्त्रा-
ण्युदीरयन् ॥ ६१ ॥ सोमकांश्च रणे भीष्मो जघ्ने पार्थपदा-
नुगान् । न्यवारयत तत् सैन्यं पाण्डवस्य महारथः ॥ ६२ ॥
सुवर्णपुङ्खैरिषुभिः शितैः सन्नतपर्वभिः । नादयन् स दिशो भीष्मः
प्रदिशश्च महाहवे ॥ ६३ ॥ पातयन् रथिनो राजन् हयांश्च हय-
सादिभिः । मुण्डतालवनानीव स चकार रथव्रजान् ॥ ६४ ॥
निर्मनुष्यान् रथान् राजन् गजानश्वांश्च संयुगे । चकार समरे
भीष्मः सर्वशस्त्रभृतांवरः ॥ ६५ ॥ तस्य ज्यातलनिर्घोषं विस्फू-
र्जितमिवाशनेः । निशम्य सर्वतो राजन् समकम्पन्त सैनिकाः ॥ ६६ ॥
अमोघा न्यपतन् वाणाः पेतुस्ते मनुजेश्वर । नासज्जन्त शरीरेषु
भीष्मचापच्युताः शराः ॥ ६७ ॥ निर्मनुष्यान् रथान् राजन् संयु-
क्तान् जवनैर्हयैः । वातायमानानद्राक्षं ह्रियमाणान् विशाम्पते
॥ ६८ ॥ चेदिकाशिकरूषाणां सहस्राणि चतुर्दश । महारथाः
समाख्याताः कुलपुत्रास्तनुत्यजः ॥ ६९ ॥ अपरावर्त्तिनः शूराः
सुवर्णविकृतध्वजाः । सङ्ग्रामे भीष्ममासाद्य सवाजिरथकुञ्जराः
॥ ७० ॥ जग्मुस्ते परलोकाय व्यादितास्यमिवान्तकम् । न तत्रा-
सीद्रथो राजन् सोमकानां महारथः ॥ ७१ ॥ यः संप्राप्य रणे भीष्मं
जीवमानः समाव्रजेत् । तांश्च सर्वान् रणे योधान् प्रेतराजपुरं
प्रति ॥ ७२ ॥ नीतानमन्यन्त जना दृष्ट्वा भीष्मपराक्रमम् । न कश्चिदेनं
समरे प्रत्युद्याति महारथः ॥ ७३ ॥ ऋते पाण्डुसुतं वीरं श्वेताश्वं
कृष्णसारथिम् । शिखण्डिनञ्च समरे पाञ्चाल्यममितौजसम् ॥ ७४ ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि सङ्कुलयुद्धे
सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

सञ्जय उवाच। शिखण्डी तु रणे भीष्ममासाद्य पुरुषर्षभम्। दशभिर्निशितैर्भल्लैराजघान स्तनान्तरे ॥ १ ॥ शिखण्डिनन्तु गाङ्गेय क्रोधदीप्तेन चक्षुषा। सम्प्रैक्षत कटाक्षेण निर्दहन्निव भारत ॥ २ ॥ स्त्रीत्वं तस्य स्मरन् राजन् सर्वलोकस्य पश्यतः। नाजघान रणे भीष्मः स च तन्नावबुद्धवान् ॥ ३ ॥ अर्जुनस्तु महाराज शिखण्डिनमभाषत। अभिद्रवस्व त्वरितं जहि चैनं पितामहम् ॥ ४ ॥ किन्ते विवक्षया वीर जहि भीष्मं महारथम्। न ह्यन्यमनुपश्यामि कञ्चिद्यौधिष्ठिरे बले ॥ ५ ॥ यः शक्तः समरे भीष्मं प्रतियोद्धुमिहाहवे। ऋते त्वां पुरुषव्याघ्र सत्यमेतद्ब्रवीमि ते ॥ ६ ॥ एवमुक्तस्तु पार्थेन शिखण्डी भरतर्षभ। शरैर्नानाविधैस्तूर्णं पितामहमवाकिरत् ॥ ७ ॥ अचिन्तयित्वा तान् बाणान् पिता देवव्रतस्तव। अर्जुनं समरे क्रुद्धं वारयामास सायकैः ॥ ८ ॥ तथैव च चमूं सर्वां पाण्डवानां महारथ। अप्रैषीत् स शरैस्तीक्ष्णैः परलोकाय मारिष ॥ ९ ॥ तथैव पाण्डवा राजन् सैन्येन महता वृताः। भीष्मं प्रच्छादयामासुर्मेघा इव दिवाकरम्। १० ॥ स समन्तात् परिवृतो भारतो भरतर्षभ। निर्ददाह रणे शूरान् वने वह्निरिव ज्वलन् ॥ ११ ॥ तत्राद्भुतमपश्याम तव पुत्रस्य पौरुषम्। अयोधयच्च यत् पार्थं जुगोप च पितामहम् ॥ १२ ॥ कर्मणा तेन समरे तव पुत्रस्य धन्विनः। दुःशासनस्य तुतुषुः सर्वे लोका महात्मनः ॥ १३ ॥ यदेकः समरे पार्थान् सानुगान् समयोधयत। न चैनं पाण्डवा युद्धे वारयामासुरुल्बणम् ॥ १४ ॥ दुःशासनेन समरे रथिनो विरथीकृताः। सादिनश्च महेष्वासा हस्तिनश्च महाबलाः ॥ १५ ॥ विनिर्भिन्नाः शरैस्तीक्ष्णैर्निपेतुर्वसुधातले। शरातुरास्तथैवान्ये दन्तिनो विद्रुता दिशः ॥ १६ ॥ यथाग्निरिन्धनं प्राप्य ज्वलेद्दीप्तार्चिरुल्बणः। तथा जज्वाल पुत्रस्ते पाण्डुसेना विनिर्दहन् ॥ १७ ॥

तं भारत महात्मानं पाण्डवानां महारथः । जेतुं नोत्सहते कश्चिन्नाभ्ययातुं कथञ्चन ॥ १८ ॥ ऋते महेन्द्रतनयात् श्वेताश्वात् कृष्णसारथेः । स हि तं समरे राजन् निर्ज्जित्य विजयोऽर्ज्जुनः ॥ १९ ॥ भीष्ममेवाभिदुद्राव सर्व्वलोकस्य पश्यतः । विजितस्तव पुत्रस्तु भीष्मबाह्वव्यपाश्रयः ॥ २० ॥ पुनः पुनः समाश्वस्य प्रायुध्यत मदोत्कटः । अर्ज्जुनस्तु रणे राजन् योधयन् संव्यराजत ॥ २१ ॥ शिखण्डी तु रणे राजन् विव्याधैव पितामहम् । शरैरशनिसंस्पर्शैस्तथा सर्पविषोपमैः ॥ २२ ॥ न च स्म ते रुजं चक्रुः पितुस्तव जनेश्वर । स्मयमानस्तु गाङ्गेयस्तान् बाणान् जगृहे तदा ॥ २३ ॥ उष्णार्त्तो हि नरो यद्वत् जलधाराः प्रतीच्छति । तथा जग्राह गाङ्गेय शरधाराः शिखण्डिनः ॥ २४ ॥ तं क्षत्रिया महाराज ददृशुर्घोरमाहवे । भीष्मं दहन्तं सैन्यानि पाण्डवानां महात्मनाम् ॥ २५ ॥ ततोऽब्रवीत्तव सुतः सर्व्वसैन्यानि मारिष । अभिद्रवत सङ्ग्रामे फाल्गुनं सर्व्वतो रणे ॥ २६ ॥ भीष्मो वः समरे सर्व्वान् पालयिष्यति धर्म्मवित् । ते भयं सुमहत् त्यक्त्वा पाण्डवान् प्रत्ययुध्यत ॥ २७ ॥ हेमतालेन महता भीष्मस्तिष्ठति पालयन् । सर्व्वेषां धार्त्तराष्ट्राणां समरे शर्म्म वर्म्म च ॥ २८ ॥ त्रिदशापि समुद्युक्ता नालं भीष्मं समासितुम् । किमु पार्थां महात्मानं मर्त्त्यभूता महाबलम् ॥ २९ ॥ तस्माद्द्रवन्त मा योधाः फाल्गुनं प्राप्य संयुगे । अहमद्य रणे यत्तो योधयिष्यामि पाण्डवम् ॥ ३० ॥ सहितः सर्व्वतो यत्तैर्भवद्भिर्वसुधाधिपैः । तच्छ्रुत्वा तु वचो राजन् तव पुत्रस्य धन्विनः ॥ ३१ ॥ सर्व्वे योधाः सुसंरब्धा बलवन्तो महाबलाः । ते विदेहाः कलिङ्गाश्च दाशेरकगणाश्च ह ॥ ३२ ॥ अभिपेतुर्निषादाश्च सौवीराश्च महारणे । वाह्लिका दरदाश्चैव प्रतीच्योदीच्यमालवाः ॥ ३३ ॥ अभिषाहाः शूरसेनाः शिवयोऽथ वसातयः । शाल्वाः शकास्त्रिगर्त्ताश्च अम्बष्ठाः

कौरवैः सह ॥ ३४ ॥ अभिपेतू रणे पार्थं पतङ्गा इव पावकम्।
स तान् सर्वान् शतानीकान् महाराज महारथान् ॥ ३५ ॥
दिव्यान्यस्त्राणि सञ्चिन्त्य सन्धाय धनञ्जयः। स तैरस्त्रैर्महा
वेगैर्ददाहाशु महाबल ॥ ३६ ॥ शरप्रतापैर्बीभत्सुः पतङ्गानिव
पावकः। तस्य बाणसहस्राणि सृजतो दृढधन्विनः ॥ ३७ ॥
दीप्यमानमिवाकाशे गाण्डीवं समदृश्यत। ते शरार्त्ता महाराज
विप्रकीर्णमहाध्वजाः ॥ ३८ ॥ नाभ्यवर्त्तन्त राजानः सहिता
वानरध्वजम्। सध्वजा रथिनः पेतुर्हयारोहा हयैः सह ॥ ३९ ॥
सगजाश्च गजारोहाः किरीटिशरताड़िताः। ततोऽर्जुनभुजोत्-
सृष्टैराहृतासीद्वसुन्धरा ॥ ४० ॥ विद्रवद्भिश्च बहुधा बलैराशु
समन्ततः। अथ पार्थो महाराज द्रावयित्वा वरूथिनीम् ॥ ४१ ॥
दुःशासनाय च बहून् प्रेषयामास सायकान्। ते तु भित्त्वा तव
सुतं दुःशासनमयोमुखाः ॥ ४२ ॥ धरणीं विविशुः सर्वे वल्मीक-
मिव पन्नगाः। हयांश्चास्य ततो जघ्ने सारथिञ्च न्यपातयत् ॥ ४३ ॥
विविंशतिञ्च विंशत्या विरथं कृतवान् प्रभुः। आजघान भृशञ्चैव
पञ्चभिर्नतपर्वभिः ॥ ४४ ॥ कृपं विकर्णं शल्यञ्च विद्ध्वा बहुभि-
रायसैः। चकार विरथांश्चैव कौन्तेयः श्वेतवाहनः ॥ ४५ ॥
एवन्ते विरथाः सर्वे कृपः शल्यश्च मारिष। दुःशासनो विकर्णश्च
तथैव च विविंशतिः ॥ ४६ ॥ सम्प्राद्रवन्त समरे निर्ज्जिताः सव्य-
साचिना। पूर्वाह्णे भरतश्रेष्ठ पराजित्य महारथान् ॥ ४७ ॥
प्रजज्वाल रणे पार्थो विधूम इव पावकः। तथैव शरवर्षेण
भास्करो रश्मिवानिव ॥ ४८ ॥ अन्यानपि महाराज पातयामास
पार्थिवान्। पराङ्मुखीकृत्य तथा शरवर्षैर्महारथान् ॥ ४९ ॥
प्रावर्त्तयत सङ्ग्रामे शोणितोदां महानदीम्। मध्येन कुरुसैन्यानां
पाण्डवानाञ्च भारत ॥ ५० ॥ गजाश्वरथसङ्घाश्च बहुधा रथिभि-
र्हताः। रथाश्च निहता नागैर्हयाश्चैव पदातिभिः ॥ ५१ ॥

मन्तराच्छिद्यमानानि शरीराणि शिरांसि च। निपेतुर्दिक्षु सर्वासु गजाश्वरथयोधिनाम् ॥ ५२ ॥ छन्नमायोधनं राजन् कुण्डलाङ्गदधारिभिः। पतितैः पात्यमानैश्च राजपुत्रैर्महारथैः ॥ ५३ ॥ रथनेमिनिकृत्तैश्च गजैश्चैवावपोथितैः। पदाताश्चाप्यधावन्त साश्वाः सहययोधिनः ॥ ५४ ॥ गजाश्च रथयोधाश्च परिपेतुः समन्ततः। विकीर्णाश्च रथा भूमौ भग्नचक्रयुगध्वजाः ॥५५॥ तद्गजाश्वरथौघानां रुधिरेण समुक्षितम्। छन्नमायोधनं रेजे रक्ताभ्रमिव शारदम् ॥ ५६ ॥ श्वानः काकाश्च गृध्राश्च वृका गोमायुभिः सह। प्रणेदुर्भक्ष्यमासाद्य विकृताश्च मृगद्विजाः ॥५७॥ ववुर्बहुविधाश्चैव दिक्षु सर्वासु मारुताः। दृश्यमानेषु रक्षःसु भूतेषु च नदत्सु च ॥ ५८ ॥ काञ्चनानि च दामानि पताकाश्च महाधनाः। धूयमाना व्यदृश्यन्त सहसा मारुतेरिताः ॥ ५९ ॥ श्वेतच्छत्रसहस्राणि सध्वजाश्च महारथाः। विकीर्णाः समदृश्यन्त पतिता धरणीतले ॥ ६० ॥ ततो भीष्मो महाराज दिव्यमस्त्रमुदीरयन्। अभ्यधावत कौन्तेयं मिषतां सर्वधन्विनाम् ॥ ६१ ॥ तं शिखण्डी रणे यान्तमभ्यद्रवत दंशितः। ततः समाहरत् भीष्मस्तदस्त्रं पावकोपमम् ॥ ६२ ॥ एतस्मिन्नेव काले तु कौन्तेयः श्वेतवाहनः। निजघ्ने तावकं सैन्यं मोहयित्वा पितामहम् ॥६३॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि सङ्कुलयुद्धे
अष्टादशाधिकशततोऽध्यायः ॥ ११८ ॥

---

सञ्जय उवाच। एवं व्यूढेष्वनीकेषु भूयिष्ठेष्वनिवर्त्तिषु। ब्रह्मलोकपराः सर्वे समपद्यन्त भारत ॥ १ ॥ न ह्यनीकमनीकेन समसज्जत सङ्कुले। रथिनो रथिभिः सार्द्धं पदाताश्च पदातिभिः ॥ २ ॥ अश्वाश्चाश्वैरयुध्यन्त गजाश्च गजयोधिभिः। उन्मत्त-

च महाराज युध्यन्ते तव भारत ॥ ३ ॥ महान् व्यतिकरो रौद्र
सेनयोः समपद्यत । नरनागगणेष्वेवं व्यवकीर्णेषु च सर्वशः ॥ ४ ॥
क्षये तस्मिन्महारौद्रे निर्विशेषमजायत । ततः शल्यः कृपश्चैव
चित्रसेनश्च भारत ॥ ५ ॥ दुःशासनो विकर्णश्च रथानास्थाय
भास्वरान् । पाण्डवानां रणे शूरा ध्वजिनीं समकम्पयन् ॥ ६ ॥
सा वध्यमाना समरे पाण्डुसेना महात्मभिः । भ्राम्यते बहुधा
राजन् मारुतेनेव नौर्जले ॥ ७ ॥ यथा हि शैशिरः कालो गवां
मर्माणि कृन्तति । तथा पाण्डुसुतानां वै भीष्मो मर्माणि कृन्तति
॥ ८ ॥ तथैव तव सैन्यस्य पार्थेन च महात्मना । नवमेघ-
प्रतीकाशाः पातिता बहुधा गजाः ॥ ९ ॥ मृद्यमानाश्च दृश्यन्ते
पार्थेन नरयूथपाः । इषुभिस्ताड्यमानाश्च नाराचैश्च सहस्रशः
॥ १० ॥ पेतुरार्त्तस्वरं घोरं कृत्वा तत्र महागजाः । आबद्धा-
भरणैः कायैर्निहतानां महात्मनाम् ॥ ११ ॥ छन्नमायोधनं रेजे
शिरोभिश्च सकुण्डलैः । तस्मिन्नेव महाराज महावीरवरक्षये
॥ १२ ॥ भीष्मे च युधि विक्रान्ते पाण्डवे च धनञ्जये । ते परा-
क्रान्तमालोक्य राजन् युधि पितामहम् ॥ १३ ॥ अभ्यवर्त्तन्त ते
पुत्राः सर्वसैन्यपुरस्कृताः । इच्छन्तो निधनं युद्धे स्वर्गं कृत्वा
परायणम् ॥ १४ ॥ पाण्डवानभ्यवर्त्तन्त तस्मिन् वीरवरक्षये ।
पाण्डवाश्च महाराज स्मरन्तो विविधान् बहून् ॥ १५ ॥ क्लेशान्
कृतान् सपुत्रेण त्वया पूर्वं नराधिप । भय त्यक्त्वा रणे शूरा ब्रह्म-
लोकाय तत्पराः ॥ १६ ॥ तावकास्तव पुत्राश्च योधयन्ति प्रहृष्ट-
वत् । सेनापतिस्तु समरे प्राह सेनां महारथ ॥ १७ ॥ अभ्य-
द्रवत गाङ्गेयं सोमकाः सृञ्जयैः सह । सेनापतिवचः श्रुत्वा
सोमकाः सृञ्जयाश्च ते ॥ १८ ॥ अभ्यद्रवन्त गाङ्गेयं शरवृष्ट्या
समावृताः । वध्यमानस्ततो राजन् पिता शान्तनवस्तव ॥ १९ ॥
अमर्षवशमापन्नो योधयामास सृञ्जयान् । तस्य कीर्त्तिमतस्तात

पुरा रामेण धीमता ॥ २० ॥ सम्प्रदत्तास्त्रशिक्षा वै परानीक-
विनाशिनी । स तां शिक्षामधिष्ठाय कुर्वन् परबलक्षयम् ॥ २१ ॥
अहन्यहनि पार्थानां वृद्धः कुरुपितामहः । भीष्मो दशसहस्राणि
जघान परवीरहा ॥ २२ ॥ तस्मिंस्तु दिवसे प्राप्ते दशमे भरत-
र्षभ । भीष्मेणैकेन मत्स्येषु पाञ्चालेषु च संयुगे ॥ २३ ॥ गजाना-
मयुतं हत्वा हताः सप्त महारथाः । हत्वा पञ्चसहस्राणि रथानां
प्रपितामहः ॥ २४ ॥ नराणाञ्च महायुद्धे सहस्राणि चतुर्दश ।
हस्तिनाञ्च सहस्राणि हयानामयुतं पुनः ॥ २५ ॥ शिक्षाबलेन
निहतं पित्रा तव विशाम्पते । ततः सर्वमहीपानां क्षोभयित्वा वरू-
थिनीम् ॥ २६ ॥ विराटस्य प्रियो भ्राता शतानीको निपातितः ।
शतानीकन्तु समरे हत्वा भीष्मः प्रतापवान् ॥ २७ ॥ सहस्राणि
महाराज राज्ञां भल्लैरपातयत् । ये च केचन पार्थानामभियाता
धनञ्जयम् ॥ २८ ॥ राजानो भीष्ममासाद्य गतास्ते यमसादनम् ।
एवं दशदिशो भीष्मः शरजालैः समन्ततः ॥ २९ ॥ अतीत्य सेनां
पार्थानामवतस्थे समन्ततः । स कृत्वा सुमहत् कर्म तस्मिन् वै
दशमेऽहनि ॥ ३० ॥ सेनयोरन्तरे तिष्ठन् प्रगृहीतशरासनः । न
चैनं पार्थिवाः केचिच्छक्ता राजन् निरीक्षितुम् ॥ ३१ ॥ मध्यं प्राप्तं
यथा ग्रीष्मे तपन्तं भास्करं दिवि । यथा दैत्यचमूं शक्रस्तापया-
मास संयुगे ॥ ३२ ॥ तथा भीष्मः पाण्डवेयांस्तापयामास भारत ।
तथा चैनं पराक्रान्तमालोक्य मधुसूदनः ॥ ३३ ॥ उवाच देवकी-
पुत्रः प्रीयमाणो धनञ्जयम् । एष शान्तनवो भीष्मः सेनयोरन्तरे
स्थितः ॥ ३४ ॥ सन्निहत्य बलादेनं विजयस्ते भविष्यति । बलात्
संस्तम्भयस्वैनं यत्रैषा भिद्यते चमूः ॥ ३५ ॥ न हि भीष्मशरानन्यः
सोढुमुत्सहते विभो । ततस्तस्मिन् क्षणे राजंश्चोदितो वानरध्वजः
॥ ३६ ॥ सध्वजं सरथं साश्वं भीष्ममन्तर्दधे शरैः । स चापि
कुरुमुख्यानामृषभः पाण्डवेरितान् ॥ ३७ ॥ शरव्रातैः शरव्रातान्

बहुधा विददार तान्। तत पाञ्चालराजश्च धृष्टकेतुश्च वीर्य्यवान्
॥ ३८ ॥ पाण्डवो भीमसेनश्च धृष्टद्युम्नश्च पार्षत। यमौ च
चेकितानश्च कैकेया पञ्च चैव हि ॥ ३९ ॥ सात्यकिश्च महाबाहु
सौभद्रोऽथ घटोत्कच। द्रौपदेया शिखण्डी च कुन्तिभोजश्च
वीर्य्यवान् ॥ ४० ॥ सुशर्मा च विराटश्च पाण्डवेया महाबला।
एते चान्ये च बहव पीडिता भीष्मसायकै ॥ ४१ ॥ समुद्धृता
फाल्गुनेन निमग्ना शोकसागरे। तत शिखण्डी वेगेन प्रगृह्य
परमायुधम् ॥ ४२ ॥ भीष्ममेवाभिदुद्राव रक्ष्यमाण किरीटिना।
ततोऽस्यानुचरान् हत्वा सर्वान्रणविभागवित् ॥ ४३ ॥ भीष्ममेवाभि-
दुद्राव बीभत्सुरपराजित। सात्यकिश्चेकितानश्च धृष्टद्युम्नश्च पार्षत
॥ ४४ ॥ विराटो द्रुपदश्चैव माद्रीपुत्रौ च पाण्डवौ। दुद्रुवु
भीष्ममेवाजौ रक्षिता दृढधन्विना ॥ ४५ ॥ अभिमन्युश्च समरे
द्रौपद्या पञ्च चात्मजा। दुद्रुवु समरे भीष्म समुद्यतमहायुधा
॥ ४६ ॥ ते सर्वे दृढधन्वान संयुगेष्वपलायिन। बहुधा भीष्म
मानर्च्छुर्मार्गणै क्षतमार्गणै ॥ ४७ ॥ विधूय तान् बाणगणान् ये
मुक्ता पार्थिवोत्तमै। पाण्डवानामदीनात्मा व्यगाहत वरूथिनीम्
॥ ४८ ॥ चक्रे शरविघातञ्च क्रीडन्निव पितामह। नाभिसन्धत्त
पाञ्चाल्ये स्मयमानो मुहुर्मुहु ॥४९॥ स्त्रीत्वं तस्य तु संस्मृत्य भीष्मो
बाणान् शिखण्डिने। जघान द्रुपदानीके रथान् सप्त महारथ
॥ ५० ॥ तत किलकिलाशब्द क्षणेन समभूत्तदा। मत्स्यपाञ्चाल
चेदीना तमेकमभिधावताम् ॥ ५१ ॥ ते नराश्वरथव्रातैर्मार्गणैश्च
परन्तप। तमेक छादयामासुर्मेघा इव दिवाकरम् ॥ ५२ ॥ भीष्म
भागीरथीपुत्र प्रतपन्त रणे रिपून्। ततस्तस्य च तेषाञ्च रणे देवा
सुरोपमे। किरीटी भीष्ममानर्च्छत् पुरस्कृत्य शिखण्डिनम् ॥५३॥

इति भीष्मपर्वणि भीष्मवधपर्वणि भीष्मपराक्रमे
एकोनविंशाधिकशततोऽध्याय ॥ ११९ ॥

सञ्जय उवाच। एवन्ते पाण्डवाः सर्वे पुरस्कृत्य शिखण्डिनम् ।
विव्यधुः समरे भीष्मं परिवार्य्य समन्ततः ॥ १ ॥ शतघ्नीभिः
सुघोराभिः परिघैश्च परश्वधैः । मुद्गरैर्मुसलैः प्रासैः क्षेपणीयैश्च
सर्व्वशः ॥ २ ॥ शरैः कनकपुङ्खैश्च शक्तितोमरकम्पनैः । नाराचै-
र्वत्सदन्तैश्च भुशुण्डीभिश्च सर्व्वशः ॥ ३ ॥ अताड़यन् रणे भीष्मं
सहिताः सर्व्वसृञ्जयाः । स विशीर्णतनुत्राणः पीड़ितो बहुभि-
स्तदा ॥ ४ ॥ न विव्यथे तदा भीष्मो भिद्यमानेषु मर्म्मसु ।
सन्दीप्तशरचापार्च्चिरस्त्रप्रसृतमारुतः ॥ ५ ॥ नेमिनिर्ह्रादसन्तापो
महास्त्रोदयपावकः । चित्रचापमहाज्वालो वीरक्षयमहेन्धनः ॥ ६ ॥
युगान्ताग्निसमप्रख्यः परेषां समपद्यत । निवृत्य रथसङ्घाना-
मन्तरेण विनिःसृतः ॥ ७ ॥ दृश्यते स्म नरेन्द्राणां पुनर्मध्यगत-
श्चरन् । ततः पाञ्चालराजञ्च धृष्टकेतुमचिन्त्य च ॥ ८ ॥ पाण्ड-
वानीकिनीमध्यमाससाद विशाम्पते । ततः सात्यकिभीमौ च
पाण्डवञ्च धनञ्जयम् ॥ ९ ॥ द्रुपदञ्च विराटञ्च धृष्टद्युम्नञ्च पार्ष-
तम् । भीमघोषैर्महावेगैर्म्मर्मावरणभेदिभिः ॥ १० ॥ षड़ेता-
न्निशितैर्भीष्मः प्रविव्याधोत्तमैः शरैः । तस्य ते निशितान् बाणान्
सन्निवार्य्य महारथाः ॥ ११ ॥ दशभिर्द्दशभिर्भीष्ममर्द्दयामासु-
रोजसा । शिखण्डी तु महाबाणान् यान् मुमोच महारथः ॥ १२ ॥
ते भीष्मं विविशुस्तूर्णं स्वर्णपुङ्खाः शिलाशिताः । ततः किरीटी
संरब्धो भीष्ममेवाभ्यधावत ॥ १३ ॥ शिखण्डिनं पुरस्कृत्य धनु-
श्चैव समाच्छिनत् । भीष्मधनुषश्छेदं नामृष्यन्त महारथाः
॥ १४ ॥ द्रोणश्च कृतवर्म्मा च सैन्धवश्च जयद्रथः । भूरिश्रवाः
शलः शल्यो भगदत्तस्तथैव च ॥ १५ ॥ सप्तैते परमक्रुद्धाः किरी-
टिनमभिद्रुताः । तत्र शस्त्राणि दिव्यानि दर्शयन्तो महारथाः
॥ १६ ॥ अभिपेतुर्भृशं क्रुद्धाश्छादयन्तश्च पाण्डवम् । तेषा-
मापततां शब्दः फाल्गुनस्य रथं प्रति ॥ १७ ॥ तं शब्दं तुमुलं

दृष्ट्वा पाण्डवानां महारथाः । अभिधावन् परीप्सन्तः फाल्गुनं
भरतर्षभ ॥ १८ ॥ सात्यकिर्भीमसेनश्च धृष्टद्युम्नश्च पार्षतः ।
विराटद्रुपदौ चोभौ राक्षसश्च घटोत्कचः ॥ १९ ॥ अभिमन्युश्च
संक्रुद्ध सप्तैते क्रोधमूर्च्छिताः । समभ्यधावंस्त्वरिताश्चित्रकार्मुक-
धारिणः ॥ २० ॥ तेषां समभवद्युद्धं तुमुलं लोमहर्षणम् ।
सङ्ग्रामे भरतश्रेष्ठ देवानां दानवैरिव ॥ २१ ॥ शिखण्डी तु रणे
श्रेष्ठो रक्ष्यमाणः किरीटिना । अविध्यद्दशभिर्भीष्मं छिन्नधन्वान-
माहवे ॥ २२ ॥ सारथिं दशभिश्चास्य ध्वजञ्चैकेन चिच्छिदे ।
सोऽन्यत् कार्मुकमादाय गाङ्गेयो वेगवत्तरम् ॥ २३ ॥ तदप्यस्य
शितैर्बाणैस्त्रिभिश्चिच्छेद फाल्गुनः । एवं स पाण्डवः क्रुद्धः
आत्तमात्तं पुनः पुनः ॥ २४ ॥ धनुश्चिच्छेद भीष्मस्य सव्यसाची
परन्तपः । स छिन्नधन्वा संक्रुद्धः सृक्किणी परिसंलिहन् ॥ २५ ॥
शक्तिं जग्राह तरसा गिरीणामपि दारणीम् । ताञ्च चिक्षेप
संक्रुद्धः फाल्गुनस्य रथं प्रति ॥ २६ ॥ तामापतन्तीं सम्प्रेक्ष्य
ज्वलन्तीमशनीमिव । समादत्त शितान् भल्लान् पञ्च पाण्डवनन्दनः
॥ २७ ॥ तस्य चिच्छेद तां शक्तिं पञ्चधा पञ्चभिः शरैः । संक्रुद्धो
भरतश्रेष्ठ भीष्मबाहुप्रवेरिताम् ॥ २८ ॥ सा पपात रथाच्छिन्ना
संक्रुद्धेन किरीटिना । मेघवृन्दपरिभ्रष्टा विच्छिन्नेव शतह्रदा
॥ २९ ॥ छिन्नां तां शक्तिमालोक्य भीष्मः क्रोधसमन्वितः ।
अचिन्तयद्रणे वीरो बुद्ध्या परपुरञ्जयः ॥ ३० ॥ शक्तोऽहं धनु-
षैकेन निहन्तुं सर्वपाण्डवान् । यद्येषां न भवेद्गोप्ता विष्वक्सेनो
महाबलः ॥ ३१ ॥ कारणद्वयमास्थाय नाहं योत्स्यामि पाण्ड-
वान् । अवध्यत्वाच्च पाण्डूनां स्त्रीभावाच्च शिखण्डिनः ॥ ३२ ॥
पित्रा तुष्टेन मे पूर्वं यदा काली विवाहिता । स्वच्छन्दमरणं दत्त-
मवध्यत्वं रणे तथा ॥ ३३ ॥ तस्मान्मृत्युमहं मन्ये प्राप्तकाल-
मिवात्मन । एवं ज्ञात्वा व्यवसितं भीष्मस्यामिततेजसः ॥ ३४ ॥

ऋषयो वसवश्चैव वियत्स्था भीष्ममब्रुवन्। यत्ते व्यवसितं तात तदस्माकमपि प्रियम् ॥ ३५ ॥ तत् कुरुष्व महाराज युद्धे बुद्धिं निवर्त्तय। अस्य लोकस्य निधने प्रादुरासीच्छिवोऽनिलः ॥ ३६ ॥ अनुलोमः सुगन्धी च पृषतैश्च समन्ततः। देवदुन्दुभयश्चैव सम्प्रणेदुर्महास्वनाः ॥ ३७ ॥ पपात पुष्पवृष्टिश्च भीष्मस्योपरि मारिष। न च तत् शुश्रुवे कश्चित्तेषां सम्वदतां नृप ॥ ३८ ॥ ऋते भीष्मं महाबाहुं माञ्चापि मुनितेजसा। सम्भ्रमश्च महानासीत् त्रिदशानां विशाम्पते ॥ ३९ ॥ पतिष्यति रथाद्भीष्मे सर्व्वलोकप्रिये तदा। इति देवगणानाञ्च वाक्यं श्रुत्वा महातपाः ॥ ४० ॥ ततः शान्तनवो भीष्मो बीभत्सुं नाभ्यवर्त्तत। भिद्यमानः शितैर्वाणैः सर्व्वावरणभेदिभिः ॥ ४१ ॥ शिखण्डी तु महाराज भारतानां पितामहम्। आजघानोरसि क्रुद्धो नवभिर्निशितैः शरैः ॥ ४२ ॥ स तेनाभिहतः सङ्ख्ये भीष्मः कुरुपितामहः। नाकम्पत महाराज क्षितिकम्पे यथाचलः ॥ ४३ ॥ ततः प्रहस्य बीभत्सुर्व्याक्षिपन् गाण्डिवं धनुः। गाङ्गेयं पञ्चविंशत्या क्षुद्रकाणां समर्पयत् ॥ ४४ ॥ पुनः शरशतैरेनं त्वरमाणो धनञ्जयः। सर्व्वगात्रेषु संक्रुद्ध सर्व्वमर्म्मस्वताडयत् ॥ ४५ ॥ एवमन्यैरपि भृशं विध्यमानः सहस्रशः। तानप्याशु शरैर्भीष्मः प्रविव्याध महारथः ॥ ४६ ॥ तैश्च मुक्ताञ्छरान् भीष्मो युधि सत्यपराक्रमः। निवारयामास शरैः समं सन्नतपर्व्वभिः ॥ ४७ ॥ शिखण्डी तु रणे वाणान् यान् मुमोच महारथः। न चक्रुस्ते रुजं तस्य रुक्मपुङ्खाः शिलाशिताः ॥ ४८ ॥ ततः किरीटी संक्रुद्धो भीष्ममेवाभ्यवर्त्तत। शिखण्डिनं पुरस्कृत्य धनुश्चास्य समाच्छिनत् ॥ ४९ ॥ तथैनन्दशभिर्भित्त्वा ध्वजमेकेन चिच्छिदे। सारथिं विशिखैश्चास्य दशभिः समकम्पयत् ॥ ५० ॥ सोऽन्यत् कार्म्मुकमादाय गाङ्गेयो बलवत्तरम्। तदप्यस्य शितैर्भल्लैस्त्रिधा त्रिभिरुपाकृन्तत् ॥ ५१ ॥ निमेषान्तरमात्रेण

ध्यात्तमात्रं महारणे । एवमस्य धनूंष्याजौ चिच्छेद सकलान्यपि
॥ ५२ ॥ ततः शान्तनवो भीष्मो बीभत्सुं नाभ्यवर्त्तत । अथैनं
पञ्चविंशत्या क्षुद्रकाणां समर्पयत् ॥ ५३ ॥ सोऽतिविद्धो महे-
ष्वासो दुःशासनमभाषत । एष पार्थो रणे क्रुद्धः पाण्डवानां
महारथः ॥ ५४ ॥ शरैरनेकसाहस्रैर्मामेवाभ्यसते रणे । न चैष
समरे शक्यो जेतुं वज्रभृता अपि ॥ ५५ ॥ न चापि सहिता
वीरा देवदानवराक्षसाः । मां चापि शक्ता निर्ज्जेतुं किमु मर्त्या
महारथाः ॥ ५६ ॥ एवं तयोः संवदतोः फाल्गुनो निशितैः
शरैः । शिखण्डिनं पुरस्कृत्य भीष्मं विव्याध संयुगे ॥ ५७ ॥
ततो दुःशासनं भूयः स्मयमान इवाब्रवीत् । अतिविद्धः शितैर्बाणै-
र्भृशं गाण्डीवधन्वना ॥ ५८ ॥ वज्राशनिसमस्पर्शा अर्जुनेन रणे
युधि । मुक्ताः सर्व्वेऽव्यवच्छिन्ना नेमे बाणाः शिखण्डिनः ॥ ५९ ॥
निकृन्तमाना मर्म्माणि दृढावरणभेदिनः । मुषला इव मे घ्नन्ति
नेमे बाणाः शिखण्डिनः ॥ ६० ॥ ब्रह्मदण्डसमस्पर्शा वज्रवेग-
दुरासदाः । मम प्राणानारुजन्ति नेमे बाणाः शिखण्डिनः ॥ ६१ ॥
नाशयन्तीव मे प्राणान् यमदूता इवाहिताः । गदापरिघसंस्पर्शा
नेमे बाणाः शिखण्डिनः ॥ ६२ ॥ भुजगा इव संक्रुद्धा लेलिहाना
विषोल्बणाः । समाविशन्ति मर्म्माणि नेमे बाणाः शिखण्डिनः ॥ ६३ ॥
अर्जुनस्य इमे बाणा नेमे बाणाः शिखण्डिनः । कृन्तन्ति मम
गात्राणि माघमासे गवामिव ॥ ६४ ॥ सर्व्वे ह्यपि न मे दुःखं
कुर्य्युरन्ये नराधिपाः । वीरं गाण्डीवधन्वानमृते जिष्णुं कपि-
ध्वजम् ॥ ६५ ॥ इति ब्रुवन् शान्तनवो दिधक्षुरिव पाण्डवान् ।
शक्तिं चिक्षेप पार्थाय ततो भीष्मः प्रतापवान् ॥ ६६ ॥ तामस्य
विशिखैश्छित्त्वा त्रिधा त्रिभिरपातयत् । पश्यतां कुरुवीराणां
सर्व्वेषां तव भारत ॥ ६७ ॥ चर्म्म चादत्त गाङ्गेयो जातरूपपरि-
ष्कृतम् । खड्गं चान्यतरं प्रेप्सुर्म्मृत्योरग्रे जयाय वा ॥ ६८ ॥

तस्य तच्छतधा चर्म व्यधमत् सायकैस्तथा । रथादनवरूढस्य तदङ्गुलिमिवाभवत् ॥ ६९ ॥ ततो युधिष्ठिरो राजा स्वान्यनीकान्यचोदयत् । अभिद्रवत गाङ्गेयं मा वोऽस्तु भयमण्वपि ॥ ७० ॥ अथ ते तोमरैः प्रासैर्बाणौघैश्च समन्ततः । पट्टिशैश्च सुनिस्त्रिंशैर्नाराचैश्च तथा शितैः ॥ ७१ ॥ वत्सदन्तैश्च भल्लैश्च तमेकमभिदुद्रुवुः । सिंहनादस्ततो घोरः पाण्डवानामभूत्तदा ॥ ७२ ॥ तथैव तव पुत्राश्च राजन् भीष्मजयैषिणः । तमेकमभ्यवर्त्तन्त सिंहनादांश्च नेदिरे ॥ ७३ ॥ तत्रासीत्तुमुलं युद्धं तावकानां परैः सह । दशमेऽहनि राजेन्द्र भीष्मार्जुनसमागमे ॥ ७४ ॥ आसीत् गाङ्ग इवावर्त्तो मुहूर्त्तमुदधेरिव । सैन्यानां युध्यमानानां निघ्नतामितरेतरम् ॥ ७५ ॥ अगम्यरूपा पृथिवी शोणिताक्ताभवत्तदा । समञ्च विषमञ्चैव न प्राज्ञायत किञ्चन ॥ ७६ ॥ योधानामयुतं हत्वा तस्मिन् स दशमेऽहनि । अतिष्ठदाहवे भीष्मो भिद्यमानेषु मर्मसु ॥ ७७ ॥ ततः सेनामुखे तस्मिन् स्थितः पार्थो धनुर्द्धरः । मध्येन कुरुसैन्यानां द्रावयामास वाहिनीम् ॥ ७८ ॥ वयं श्वेतहयाद्भीताः कुन्तीपुत्राद्धनञ्जयात् । पीड्यमानाः शितैः शस्त्रैः प्राद्रवाम रणे तदा ॥ ७९ ॥ सौवीराः कितवाः प्राच्याः प्रतीच्योदीच्यमालवाः । अभीषाहाः शूरसेनाः शिबयोऽथ वसातयः ॥ ८० ॥ शाल्वाः शयास्त्रिगर्त्ताश्च अम्बष्ठाः कैकयैः सह । सर्वे एते महात्मानः शरार्त्ता व्रणपीड़िताः ॥ ८१ ॥ संग्रामे नाजहुर्भीष्मं युध्यमानं किरीटिना । ततस्तमेकं बहवः परिवार्य्य समन्ततः ॥ ८२ ॥ परिभूय कुरून् सर्वान् शरवर्षैरवाकिरन् । निपातयत गृह्णीत युध्यध्वं विनिकृन्तत ॥ ८३ ॥ इत्यासीत् तुमुलः शब्दो राजन् भीष्मरथं प्रति । निहत्य समरे राजन् शतशोऽथ सहस्रशः ॥ ८४ ॥ न तस्यासीदनिर्भिन्नं गात्रे द्व्यङ्गुलमन्तरम् । एवम्भूतस्तव पिता शरैर्विशकलीकृतः ॥ ८५ ॥ शिताग्रैः ५

तेनाजौ प्राक्शिराः प्रापतद्रथात् । किञ्चिच्छेषे दिनकरे पुत्राणां
तव पश्यताम् ॥ ८६ ॥ हाहेति दिवि देवानां पार्थिवानाञ्च
भारत । पतमाने रथाद्भीष्मे बभूव सुमहास्वन ॥ ८७ ॥ सम्प-
तन्तमभिप्रेक्ष्य महात्मानं पितामहम् । सह भीष्मेण सर्वेषां प्राप-
तन् हृदयानि नः ॥ ८८ ॥ स पपात महाबाहुर्वसुधां समकम्प-
यन् । इन्द्रध्वज इवोत्सृष्टः केतुः सर्वधनुष्मताम् ॥ ८९ ॥ धरणीं
न स पस्पर्श शरसङ्घैः समावृतः । शरतल्पे महेष्वासं शयानं
पुरुषर्षभम् ॥ ९० ॥ रथात् प्रपतितं चैनं दिव्यो भावः समा-
विशत । अभ्यवर्षच्च पर्जन्यः प्राकम्पत च मेदिनी ॥ ९१ ॥ पतन्
स ददृशे चापि दक्षिणेन दिवाकरम् । संज्ञां चोपालभद्वीरः कालं
संचिन्त्य भारत ॥ ९२ ॥ अन्तरीक्षे च शुश्राव दिव्या वाचः सम-
न्ततः । कथं महात्मा गाङ्गेयः सर्वशस्त्रभृतां वरः ॥ ९३ ॥ कालं
कर्त्ता नरव्याघ्रः सम्प्राप्ते दक्षिणायने । स्थितोऽस्मीति च गाङ्गेय-
स्तच्छ्रुत्वा वाक्यमब्रवीत् ॥ ९४ ॥ धारयामास च प्राणान् पति-
तोऽपि महीतले । उत्तरायणमन्विच्छन् भीष्मः कुरुपितामहः
॥ ९५ ॥ तस्य तन्मतमाज्ञाय गङ्गा हिमवतः सुता । महर्षीन्
हंसरूपेण प्रेषयामास तत्र वै ॥ ९६ ॥ ततः सम्पातिनो हंसा-
स्त्वरिता मानसौकसः । आजग्मुः सहिता द्रष्टुं भीष्मं कुरुपिता-
महम् ॥ ९७ ॥ यत्र शेते नरश्रेष्ठः शरतल्पे पितामहः । ते तु
भीष्मं समासाद्य ऋषयो हंसरूपिणः ॥ ९८ ॥ अपश्यन् शर-
तल्पस्थं भीष्मं कुरुकुलोद्वहम् । ते तं दृष्ट्वा महात्मानं कृत्वा
चापि प्रदक्षिणम् ॥ ९९ ॥ गाङ्गेयं भरतश्रेष्ठं दक्षिणे चैव भास्करे ।
इतरेतरमामन्त्र्य प्राहुस्तत्र मनीषिणः ॥ १०० ॥ भीष्मः कथं
महात्मा सन् संस्थाता दक्षिणायने । इत्युक्त्वा प्रस्थिता हंसा
दक्षिणामभितो दिशम् ॥ १०१ ॥ सम्प्रेक्ष्य वै महाबुद्धिश्चिन्तयित्वा
च भारत । तानब्रवीच्छान्तनवो नाहं गन्ता कथञ्चन ॥ १०२ ॥

दक्षिणावर्त्ते आदित्ये एतन्मे मनसि स्थितम्। गमिष्यामि स्वकं स्थानमासीद्यन्मे पुरातनम्॥ १०३॥ उदगायन आदित्ये हंसाः सत्यं ब्रवीमि व। धारयिष्याम्यहं प्राणान् उत्तरायणकाङ्क्षया॥ १०४॥ ऐश्वर्य्यभूत प्राणानामुत्सर्गो हि यतो मम। तस्मात् प्राणान् धारयिष्ये मुमूर्षुरुदगायने॥ १०५॥ यश्च दत्तो वरो मह्यं पित्रा तेन महात्मना। छन्दतो मृत्युरित्येव तस्य चास्तु वरस्तथा॥ १०६॥ धारयिष्ये ततः प्राणानुत्सर्गे नियते सति। इत्युक्त्वा तांस्तदा हंसान् स शेते शरतल्पगः॥ १०७॥ एवं कुरूणां पतिते शृङ्गे भीष्मे महौजसि। पाण्डवाः सृञ्जयाश्चैव सिंहनादं प्रचक्रिरे॥ १०८॥ तस्मिन् हते महासत्त्वे भारतानां पितामहे। न किञ्चित् प्रत्यपद्यन्त पुत्रास्ते भरतर्षभ॥ १०९॥ सम्मोहश्चैव तुमुलः कुरूणामभवत्तदा। कृपदुर्य्योधनमुखा निःश्वस्य रुरुदुस्ततः॥ ११०॥ विषादाच्च चिरकालमतिष्ठन् विगतेन्द्रियाः। दध्युश्चैव महाराज न युद्धे दधिरे मनः॥ १११॥ उरुग्राहगृहीताश्च नाभ्यधावन्त पाण्डवान्। अवध्ये शान्तनोः पुत्रे हते भीष्मे महौजसि॥ ११२॥ अभावः सहसा राजन् कुरुराजस्य तर्कितः। हतप्रवीरास्तु वयं निकृत्ताश्च शितैः शरैः॥ ११३॥ कर्त्तव्यं नाभिजानीमो निर्ज्जिताः सव्यसाचिना। पाण्डवाश्च जयं लब्ध्वा परत्र च परां गतिम्॥ ११४॥ सर्व्वे दध्मुर्महाशङ्खान् शूराः परिघबाहवः। सोमकाश्च सपाञ्चालाः प्राहृष्यन्त जनेश्वर॥ ११५॥ ततस्तूर्य्यसहस्रेषु नदत्सु समहाबलः। आस्फोटयामास भृशं भीमसेनो ननाद च॥ ११६॥ सेनयोरुभयोश्चापि गाङ्गेये निहते विभौ। सन्न्यस्य वीराः शस्त्राणि प्राध्यायन्त समन्ततः॥ ११७॥ प्राक्रोशन् प्राद्रवंश्चान्ये जग्मुर्मोहं तथा परे। क्षत्रं चान्येऽभ्यनिन्दन्त भीष्मं चान्येऽभ्यपूजयन्॥ ११८॥ ऋषयः पितरश्चैव प्रशशंसुर्महाव्रतम्। भरतानाञ्च ये पूर्व्वे ते

चैनं प्रपर्यपासिरे ॥ ११९ ॥ महोपनिषदञ्चैव योगमास्थाय वीर्य्यवान् । जपन् शान्तनवो धीमान् कालाकाङ्क्षी स्थितोऽभवत ॥१२०॥

इति भीष्मपर्वणि भीष्मवधपर्वणि भीष्मनिपातने
विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

---

धृतराष्ट्र उवाच । कथमासंस्तदा योधा हीना भीष्मेण सञ्जय । बलिना देवकल्पेन गुर्व्वर्थे ब्रह्मचारिणा ॥ १ ॥ तदैव निहतान् मन्ये कुरूनन्यांश्च पाण्डवैः । न प्राहरद्यदा भीष्मो घृणित्वा द्रुपदात्मजम् ॥ २ ॥ ततो दुःखतरं मन्ये किमन्यत् प्रभविष्यति । यदद्य पितरं श्रुत्वा निहतं मम दुर्मते ॥ ३ ॥ अश्मसारमयं नूनं हृदयं मम सञ्जय । श्रुत्वा विनिहतं भीष्मं शतधा यन्न दीर्य्यते ॥ ४ ॥ यदत्र निहतेनाजौ भीष्मेण जयमिच्छता । चेष्टितं कुरुसिंहेन तन्मे कथय सुव्रत ॥ ५ ॥ पुनः पुनर्न मृष्यामि हतं देवव्रतं रणे । न हतो जामदग्न्येन दिव्यैरस्त्रैरयं पुरा । स हतो द्रौपदेयेन पाञ्चाल्येन शिखण्डिना ॥ ६ ॥

सञ्जय उवाच । सायाह्ने निहतो भूमौ धार्त्तराष्ट्रान् विषादयन् । पाञ्चालानां ददौ हर्षं भीष्मः कुरुपितामहः ॥ ७ ॥ स शेते शरतल्पस्थो मेदिनीमस्पृशंस्तदा । भीष्मे रथात् प्रपतिते प्रच्युते धरणीतले ॥ ८ ॥ हाहेति तुमुलः शब्दो भूतानां समपद्यत । सीमावृक्षे निपतिते कुरूणां समितिञ्जये ॥ ९ ॥ सेनयोरुभयो राजन् क्षत्रियान् भयमाविशत । भीष्मं शान्तनवं दृष्ट्वा विशीर्णकवचध्वजम् ॥ १० ॥ कुरवः पर्य्यवर्त्तन्त पाण्डवाश्च विशाम्पते । खं तमःसंवृतमभूदासीद्भानुर्गतप्रभः ॥ ११ ॥ ररास पृथिवी चैव भीष्मे शान्तनवे हते । अयं ब्रह्मविदां श्रेष्ठो ह्ययं ... वरः ॥ १२ ॥ इत्यभाषन्त भूतानि शयानं पुरुषर्षभम् ।

स्वयं पितरमाश्राय कामार्त्तं शान्तनुं पुरा ॥ १३ ॥ सर्व्वं रेतम-
मात्मानं चकार पुरुषर्षभः । इति स्म सरतल्पस्थं भारतानां
महत्तमम् ॥ १४ ॥ ऋषयस्त्वभ्यभाषन्त सहिताः सिद्धचारणैः ।
हते शान्तनवे भीष्मे भारतानां पितामहे ॥ १५ ॥ न किञ्चित्
प्रत्यपद्यन्त पुत्रास्तव हि मारिष । विवर्णवदनाश्चासन् हत-
श्रीकाश्च भारत ॥ १६ ॥ अतिष्ठन् व्रीडितायैव ह्रिया युक्ता
स्त्वधोमुखाः । पाण्डवाश्च जयं लब्ध्वा सङ्ग्रामशिरसि स्थिताः
॥ १७ ॥ सर्व्वे दध्मुर्महाशङ्खान् हेमजालपरिष्कृतान् । हर्षा-
त्तूर्य्यसहस्रेषु वाद्यमानेषु चानघ ॥ १८ ॥ अपश्याम महाराज
भीमसेनं महाबलम् । विक्रीड़मानं कौन्तेयं हर्षेण महता युतम्
॥ १९ ॥ निहत्य तरसा शत्रुं महाबलसमन्वितम् । सम्मोहश्चापि
तुमुलः कुरूणामभवत्ततः ॥ २४ ॥ कर्णदुर्य्योधनौ चापि निश्व-
सेतां मुहुर्मुहुः । तथा निपतिते भीष्मे कौरवाणां पितामहे
॥ २५ ॥ हाहाभूतमभूत् सर्व्वं निर्मर्य्यादमवर्त्तत । दृष्ट्वा च
पतिते भीष्मं पुत्रो दुःशासनस्तव ॥ २६ ॥ उत्तमं जवमास्थाय
द्रोणानीकमुपाद्रवत् । भ्रात्रा प्रस्थापितो वीरः स्वेनानीकेन
दंशितः ॥ २७ ॥ प्रययौ पुरुषव्याघ्रः स्वसैन्यञ्च विषादयन् ।
तमायान्तमभिप्रेक्ष्य कुरवः पर्य्यवारयन् ॥ २८ ॥ दुःशासन महा-
राज किमयं वक्ष्यतीति च । ततो द्रोणाय निहतं भीष्ममाचष्ट
कौरवः ॥ २९ ॥ द्रोणस्तदाप्रियं श्रुत्वा सहसा न्यपतद्रथात् ।
स संज्ञामुपलभ्याशु भारद्वाजः प्रतापवान् ॥ ३० ॥ निवारयामास
तदा स्वान्यनीकानि मारिष । विनिवृत्तान् कुरून् दृष्ट्वा पाण्ड-
वाश्च स्वसैनिकान् ॥ ३१ ॥ दूतैः शीघ्राश्वसंयुक्तैः समन्तात् पर्य्य-
वारयन् । निवृत्तेषु च सैन्येषु पारम्पर्य्येण सर्व्वशः ॥ ३२ ॥ निर्मुक्त-
कवचाः सर्व्वे भीष्ममीयुर्नराधिपाः । व्युपरम्य ततो युद्धाद्योधाः
शतसहस्रशः ॥ ३३ ॥ उपतस्थुर्महात्मानं प्रजापतिमिवामराः ।

ते तु भीष्मं समासाद्य प्रयातं भरतर्षभम् ॥ ३४ ॥ अभिवाद्याव-
तिष्ठन्त पाण्डवाः कुरुभिः सह । अथ पाण्डून् कुरूंश्चैव प्रणि-
पत्याग्रतः स्थितान् ॥ ३५ ॥ अभ्यभाषत धर्मात्मा भीष्मः शान्त-
नवस्तदा । स्वागतं वो महाभागाः स्वागतं वो महारथाः ॥ ३६ ॥
तुष्यामि दर्शनाच्चाहं युष्माकममरोपमाः । अभिनन्द्याथ तानेवं
शिरसा लम्बताब्रवीत् ॥ ३७ ॥ शिरो मे लम्बतेऽत्यर्थमुपधानं
प्रदीयताम् । ततो नृपाः समाजह्रुस्तनूनि च मृदूनि च ॥ ३८ ॥
उपधानानि मुख्यानि नैच्छत्तानि पितामहः । अथाब्रवीन्नर-
व्याघ्रः प्रहसन्निव तान्नृपान् ॥ ३९ ॥ नैतानि वीरशय्यासु युक्त-
रूपाणि पार्थिवाः । ततो वीक्ष्य नरश्रेष्ठमभ्यभाषत पाण्डवम्
॥ ४० ॥ धनञ्जय दीर्घबाहुं सर्वलोकमहारथम् । धनञ्जय

त्रिभिस्तीक्ष्णैर्महावेगैरन्वगृह्णाच्छिरः शरैः । अभिप्राये तु विदिते
धर्मात्मा सव्यसाचिना ॥ ७ ॥ अतुष्यद्भरतश्रेष्ठ भीष्मो दृष्ट्वाथ
तत्त्ववित् । उपधानेन दत्तेन प्रत्यनन्दद्धनञ्जयम् ॥ ८ ॥ प्राह
सर्वान् समुद्वीक्ष्य भरतान् भारतं प्रति । कुन्तीपुत्रं युधां श्रेष्ठं
सुहृदां प्रीतिवर्द्धनम् ॥ ९ ॥ शयनस्यानुरूपं मे पाण्डवोपहृतं
त्वया । यद्यन्यथा प्रपद्येथाः शपेयं त्वामहं क्रुधा ॥ १० ॥ एव-
मेव महाबाहो धर्मेषु परितिष्ठता । स्वप्तव्यं क्षत्रियेणाजौ शर-
तल्पगतेन वै ॥ ११ ॥ एवमुक्त्वा तु बीभत्सुं सर्वांस्तानब्रवीद्वचः ।
राज्ञश्च राजपुत्रांश्च सर्वांस्तानभिसंस्थितान् ॥ १२ ॥ पश्यध्वमुप-
धानं मे पाण्डवेनाभिसन्धितम् । शिष्येऽहमस्यां शय्यायां याव-
दावर्त्तनं रवेः ॥ १३ ॥ ये तदा मां गमिष्यन्ति ते च द्रक्ष्यन्ति मां
नृपाः । दिशं वैश्रवणाक्रान्तां यदा गन्ता दिवाकरः ॥ १४ ॥
नूनं सप्ताश्वयुक्तेन रथेनोत्तमतेजसा । विमोक्ष्येऽहं तदा प्राणान्
सुहृदः सुप्रियानपि ॥ १५ ॥ परिखा खन्यतामत्र ममावसदने
नृपाः । उपासिष्ये विवस्वन्तमेवं शरशताचितः । उपारमध्वं
संग्रामात् वैरमुत्सृज्य पार्थिवाः ॥ १६ ॥

सञ्जय उवाच । उपातिष्ठन्नथो वैद्याः शल्योद्धरणकोविदाः ।
सर्वोपकरणैर्युक्ताः कुशलैः साधु शिक्षिताः ॥ १७ ॥ तान् दृष्ट्वा
जाह्नवीपुत्रः प्रोवाच तनयं तव । धनं दत्त्वा विसृज्यन्तां पूज-
यित्वा चिकित्सकाः ॥ १८ ॥ एवं गते मयेदानीं वैद्यैः कार्य-
मिहास्ति किं । क्षत्रधर्मप्रशस्तां हि प्राप्तोऽस्मि परमां गतिम्
॥ १९ ॥ नैष धर्मो महीपालाः शरतल्पगतस्य मे । एभिरेव
शरैश्चाहं दग्धव्योऽस्मि नराधिपाः ॥ २० ॥ तच्छ्रुत्वा वचनं तस्य
पुत्रो दुर्य्योधनस्तव । वैद्यान् विसर्ज्जयामास पूजयित्वा यथार्हतः
॥ २१ ॥ ततस्ते विस्मयं जग्मुर्नानाजनपदेश्वराः । स्थितिं धर्म-
परां दृष्ट्वा भीष्मस्यामिततेजसः ॥ २२ ॥ उपधानं ततो दत्त्वा

पितुस्ते मनुजेश्वराः । रक्षिताः पाण्डवाः सर्वे कुरवश्च महा-
रथाः ॥ २३ ॥ उपगम्य महात्मानं शयानं शयने शुभे । तेऽभि-
वाद्य महात्मानं कृत्वा च त्रिःप्रदक्षिणम् ॥ २४ ॥ विधाय रक्षां
भीष्मस्य सर्व एव समन्ततः । वीराः स्वशिबिराण्येव ध्यायन्तः
परमातुराः ॥ २५ ॥ निवेशायाभ्युपागच्छन् सायाह्ने रुधिरो-
क्षिताः । निविष्टान् पाण्डवांश्चैव प्रीयमाणान् महारथान् ॥ २६ ॥
भीष्मस्य पतने हृष्टानुपगम्य महाबलः । उवाच माधवः काले
धर्मपुत्रं युधिष्ठिरम् ॥ २७ ॥ दिष्ट्या जयसि कौरव्य दिष्ट्या
भीष्मो निपातितः । अवध्यो मानुषैरेव सत्यसन्धो महारथः ॥२८॥
अथ वा दैवतैः सार्द्धं सर्वशस्त्रस्य पारगः । त्वां तु चक्षुर्हणं
प्राप्य दग्धो घोरेण चक्षुषा ॥ २९ ॥ एवमुक्तो धर्मराजः प्रत्यु-
वाच जनार्दनम् । तव प्रसादाद्विजयः क्रोधात्तव पराजयः ॥३०॥

स्तथा बालाः प्रेक्षकाश्च पृथग्जनाः। समभ्ययुः शान्तनवं भूतानीव तमोनुदम्॥ ४॥ तूर्य्याणि गणिका वारास्तथैव नटनर्त्तकाः। शिल्पिनश्च तथा जग्मुः कुरुवृद्धं पितामहम्॥ ५॥ उपारम्य च युद्धेभ्यः सन्नाहान् विप्रमुच्य ते। आयुधानि च निःक्षिप्य सहिताः कुरुपाण्डवाः॥ ६॥ अन्वासन्त दुराधर्षं देवव्रतमरिन्दमम्। अन्योऽन्यं प्रीतिमन्तस्ते यथापूर्वं यथावयः॥ ७॥ सा पार्थिवशताकीर्णा समितिर्भीष्मशोभिता। शुशुभे भारती दीप्ता दिवीवादित्यमण्डलम्॥ ८॥ विबभौ च नृपाणां सा गङ्गासुतमुपासताम्। देवानामिव देवेशं पितामहमुपासताम्॥ ९॥ भीष्मस्तु वेदनां धैर्य्यान्निगृह्य भरतर्षभ। अभितप्तः शरैश्चैव निःश्वसन्नुरगो यथा॥ १०॥ शराभितप्तकायोऽपि शस्त्रसन्तापमूर्च्छितः। पानीयमिति संप्रेक्ष्य राज्ञस्तान् प्रत्यभाषत॥ ११॥ ततस्ते क्षत्रिया राजन् समाजह्रुः समन्ततः। भक्ष्यानुच्चावचान् राजन् वारिकुम्भांश्च शीतलान्॥ १२॥ उपानीतन्तु पानीयं दृष्ट्वा शान्तनवोऽब्रवीत्। नाद्य तात मया शक्या भोगाः केचन मानुषाः॥ १३॥ अपक्रान्तो मनुष्येभ्यः शरशय्यागतोऽस्म्यहम्। प्रतीक्षमाणस्तिष्ठामि निवृत्तिं शशिसूर्य्ययोः॥ १४॥ एवमुक्त्वा शान्तनवो निन्दन् वाक्येन पार्थिवान्। अर्जुनं द्रष्टुमिच्छामीत्यभ्यभाषत भारत॥ १५॥ अथोपेत्य महाबाहुरभिवाद्य पितामहम्। अतिष्ठत् प्राञ्जलिः प्रह्वः किं करोमीति चाब्रवीत्॥ १६॥ तं दृष्ट्वा पाण्डवं राजन्नभिवाद्याग्रतः स्थितम्। अभ्यभाषत धर्म्मात्मा भीष्मः प्रीतो धनञ्जयम्॥ १७॥ दह्यतीव शरीरं मे संवृतस्य तवेषुभिः। मर्म्माणि परिदूयन्ते मुखञ्च परिशुष्यति॥१७॥ वेदनार्त्तशरीरस्य प्रयच्छापो ममार्जुन। त्वं हि शक्तो महेष्वास दातुमापो यथाविधि॥ १८॥ अर्जुनस्तु तथेत्युक्त्वा रथमारुह्य वीर्य्यवान्। अधिज्यं बलवत् कृत्वा गाण्डीवं व्याक्षिपद्धनुः॥ १९॥

तस्य ज्वालनिर्घोषं विस्फूर्जितमिवाशने। वित्रेसुः सर्वसैन्यानि सर्वे भूत्वा च पार्थिवाः ॥ २० ॥ ततः प्रदक्षिणीकृत्य रथेन रथिना वरः। शयानं भरतश्रेष्ठं सर्वशस्त्रभृतां वरम् ॥ २१ ॥ सन्धाय च शरं दीप्तमभिमन्त्र्य स पाण्डवः। पार्जन्यास्त्रेण संयोज्य सर्वलोकस्य पश्यतः ॥ २२ ॥ अविध्यत् पृथिवीं पार्थः पार्श्वे भीष्मस्य दक्षिणे। उत्पपात ततो धारा वारिणो विमला शुभा ॥ २३ ॥ शीतस्यामृतकल्पस्य दिव्यगन्धरसस्य च। अतर्पयत्ततः पार्थः शीतया जलधारया ॥ २४ ॥ भीष्मं कुरूणामृषभं दिव्यकर्मपराक्रमम्। कर्मणा तेन पार्थस्य शक्रस्येव विकुर्वतः ॥ २५ ॥ विस्मयं परमं जग्मुस्ततस्ते वसुधाधिपाः। तत् कर्म प्रेक्ष्य बीभत्सोरतिमानुषविक्रमम् ॥ २६ ॥ सम्प्रावेपन्त कुरवो गावः शीतार्दिता इव। विस्मयाच्चोत्तरीयाणि व्याविध्यन् सर्वतो नृपाः ॥ २७ ॥ शङ्खदुन्दुभिनिर्घोषः सर्वतस्तुमुलोऽभवत्। तृप्तः शान्तनवश्चापि राजन् बीभत्सुमब्रवीत् ॥ २८ ॥ सर्वपार्थिववीराणां सन्निधौ पूजयन्निव। नैतच्चित्रं महाबाहो त्वयि कौरवनन्दन ॥ २९ ॥ कथितो नारदेनासि पूर्वर्षिरमितद्युते। वासुदेवसहायस्त्वं महत् कर्म करिष्यसि ॥ ३० ॥ यन्नोत्सहति देवेन्द्रः सह देवैरपि ध्रुवम्। विदुस्त्वां धन्विनं पार्थ सर्वक्षत्रस्य मृत्यवे ॥ ३१ ॥ धनुर्धराणामेकस्त्वं पृथिव्यां प्रवरो नृषु। मनुष्या जगति श्रेष्ठाः पक्षिणां पतगेश्वरः ॥ ३२ ॥ सरितां सागरः श्रेष्ठो गौर्वरिष्ठा चतुष्पदाम्। आदित्यस्तेजसां श्रेष्ठो गिरीणां हिमवान् वरः। जातीनां ब्राह्मणः श्रेष्ठः श्रेष्ठस्त्वमसि धन्विनाम् ॥ ३३ ॥ नैव श्रुतं धार्त्तराष्ट्रेण वाक्यं मयोच्यमानं विदुरेण चैव। द्रोणेन रामेण जनार्द्दनेन मुहुर्मुहुः सञ्जयेनापि चोक्तम् ॥ ३४ ॥ परीतबुद्धिर्हि विसंज्ञकल्पो दुर्योधनो न च तत् श्रद्दधाति। स शेष्यते वै निहतश्चिराय शास्त्रातिगो भीम-

बलाभिभूत ॥ ३५ ॥ एतच्छ्रुत्वा तद्वच कौरवेन्द्रो दुर्य्योधनो दीनमना बभूव । तमब्रवीच्छान्तनवोऽभिवीक्ष्य निबोध राजन् भव वीतमन्युः ॥ ३६ ॥ दृष्टं दुर्य्योधनेदन्ते यथा पार्थेन धीमता । जलस्य धारा जनिता शीतस्यामृतगन्धिनः ॥ ३७ ॥ एतस्य कर्त्ता लोकेऽस्मिन् नान्यः कश्चन विद्यते । आग्नेयं वारुणं सौम्यं वायव्यमथ वैष्णवम् ॥ ३८ ॥ ऐन्द्रं पाशुपतं चैव पारमेष्ठ्यं प्रजापतेः । धातुस्त्वष्टुश्च सवितुर्वैवस्वतमथापि वा ॥ ३९ ॥ सर्वस्मिन्मानुषे लोके वेत्त्येको हि धनञ्जयः । कृष्णो वा देवकीपुत्रो नान्यो वेदेह कश्चन ॥ ४० ॥ अशक्य पाण्डवस्तात युद्धे जेतुं सुरासुरैः । अमानुषाणि कर्म्माणि यस्यैतानि महात्मनः ॥ ४१ ॥ तेन सत्यवता सङ्ख्ये शूरेणाहवशोभिना । कृतिना समरे राजन् सन्धिर्भवतु माचिरम् ॥ ४२ ॥ यावत् कृष्णो महाबाहुः स्वाधीनः कुरुसत्तम । तावत् पार्थेन शूरेण सन्धिस्ते तात युज्यताम् ॥ ४३ ॥ यावत्तिष्ठन्ति समरे हतशेषाः सहोदराः । नृपाश्च बहवो राजं स्तावत् सन्धिः प्रयुज्यताम् ॥ ४४ ॥ न निर्दहति ते यावत् क्रोध-दीप्तेक्षणश्चमूम् । युधिष्ठिरो रणे तावत् सन्धिस्ते तात युज्यताम् ॥ ४५ ॥ नकुलः सहदेवश्च भीमसेनश्च पाण्डवः । यावच्चमूं महाराज नाशयन्ति च सर्वश ॥ ४६ ॥ तावत्ते पाण्डवैर्वीरैः सौहार्द्दं मम रोचते । युद्धं मदन्तमेवास्तु तात संशाम्य पाण्डवैः ॥ ४७ ॥ एतत्ते रोचतां वाक्यं यदुक्तोऽसि मयानघ । एतत् क्षेममहं मन्ये तव चैव कुलस्य च ॥ ४८ ॥ त्यक्त्वा मन्युमुपशाम्यस्व पार्थैः पर्य्याप्तमेतद्यत् कृतं फाल्गुनेन । भीष्मस्यान्तादस्तु वः सौहृदञ्च जीवन्तु शेषाः साधु राजन् प्रसीद ॥ ४९ ॥ राज्यस्यार्द्धं दीयतां पाण्डवानामिन्द्रप्रस्थं धर्म्मराजोऽभियातु । मा मित्रध्रुक् पार्थिवानां जघन्यः पापां कीर्त्तिं प्राप्स्यसे कौरवेन्द्र ॥ ५० ॥ ममावसानाच्छान्तिरस्तु प्रजानां सङ्गच्छन्तां पार्थिवाः प्रीतिमन्तः ।

पिता पुत्रं मातुलं भागिनेयो भ्राता चैव भ्रातरं प्रैतु राजन् ॥ ५१ ॥ न चेदेवं प्राप्तकालं वचो मे मोहाविष्टः प्रतिपत्स्यस्य बुद्ध्या । तप्स्यस्यन्ते एतदन्ताः स्थ सर्वे सत्यामेतां भारतीमीरयामि ॥ ५२ ॥ एतद्वाक्यं सौहृदादापगेयो मध्ये राज्ञां भारतं श्रावयित्वा । तूष्णीमासीच्छल्यसन्तप्तमर्मा योज्यात्मानं वेदनां सन्नियम्य ॥ ५३ ॥

सञ्जय उवाच । धर्मार्थसहितं वाक्यं श्रुत्वा हितमनामयम् । नारोचयत पुत्रस्ते मुमूर्षुरिव भेषजम् ॥ ५४ ॥

इति भीष्मपर्वणि भीष्मवधपर्वणि भीष्मशिक्षाकथने
त्रयोविंशत्यधिकशततोऽध्यायः ॥ १२३ ॥

स्तथापि तच्च सत्यं न संशयः। न च द्वेषोऽस्ति मे तात त्वयि सत्यं ब्रवीमि ते ॥ १० ॥ तेजोवधनिमित्तन्तु परुषं त्वा समब्रुवम्। अकस्मात् पाण्डवान् सर्वानवाक्षिपसि सुव्रत ॥ ११ ॥ जातोऽसि धर्म्मलोपेन ततस्ते बुद्धिरीदृशी। नीचाश्रयान्मत्सरेण द्वेषिणी गुणिनामपि ॥ १२ ॥ तेनासि बहुशो रूक्षं श्रावित: कुरुसंसदि। जानामि समरे वीर्य्यं शत्रुभिर्दुःसहं भुवि ॥ १३ ॥ ब्रह्मण्यतां च शौर्य्यञ्च दाने च परमां स्थितिम्। न त्वया सदृश: कश्चित् पुरुषेष्वमरोपम ॥ १४ ॥ कुलभेदभयाच्चाहं सदा परुषमुक्तवान्। इष्वस्त्रे भारसन्धाने लाघवेऽस्त्रबले तथा ॥ १५ ॥ सदृशः फाल्गुनेनासि कृष्णेन च महात्मना। कर्ण काशिपुरं गत्वा त्वयैकेन धनुष्मता ॥ १६ ॥ कन्यार्थे कुरुराजस्य राजानो मर्दिता युधि। तथा च बलवान् राजा जरासन्धो दुरासदः ॥ १७ ॥ समरे समरश्लाघी न त्वया सदृशोऽभवत्। ब्रह्मण्यः सत्ययोधी च तेजसा च बलेन च ॥ १८ ॥ देवगर्भसमः संख्ये मनुष्यैरधिको युधि। व्यपनीतोऽद्य मन्युर्मे यस्त्वां प्रति पुराकृतः ॥ १९ ॥ दैवं पुरुषकारेण न शक्यमतिवर्त्तितुम्। सोदर्य्याः पाण्डवा वीरा भ्रातरस्तेऽरिसूदन ॥ २० ॥ सङ्गच्छ तैर्महाबाहो मम चेदिच्छसि प्रियम्। मया भवतु निर्वृत्तं वैरमादित्यनन्दन। पृथिव्यां सर्व्वराजानो भवन्त्वद्य निरामयाः ॥ २१ ॥

कर्ण उवाच। जानाम्येवं महाबाहो सर्व्वमेतन्न संशयः। यथा वदसि मे भीष्म कौन्तेयोऽहं न सूतजः ॥ २२ ॥ अवकीर्णस्त्वहं कुन्त्या सूतेन च विवर्द्धितः। भुक्त्वा दुर्य्योधनैश्वर्य्यं न मिथ्या कर्त्तुमुत्सहे ॥ २३ ॥ वसुदेवसुतो यद्वत् पाण्डवार्थे दृढव्रतः। वसु चैव शरीरञ्च पुत्त्रदारास्तथा यशः ॥ २४ ॥ सर्व्वं दुर्य्योधनस्यार्थे त्यक्तं मे भूरिदक्षिण। मा चैतद्व्याधिमरणं क्षत्रे स्यादिति कौरव ॥ २५ ॥ कोपिताः पाण्डवा नित्यं समाश्रित्य

सुयोधनम् । अवश्यभावी ह्यर्थोऽयं यो न शक्यो निवारितुम् ॥२६॥ दैवं पुरुषकारेण को निवर्त्तितुमुत्सहेत् । पृथिवीक्षयशंसीनि निमित्तानि पितामह ॥ २७ ॥ भवद्भिरुपलब्धानि कथितानि च संसदि । पाण्डवा वासुदेवश्च विदिता मम सर्वशः ॥ २८ ॥ अजेयाः पुरुषैरन्यैरिति तांश्चोत्सहामहे । विजयिष्ये रणे पाण्डूनिति मे निश्चितं मनः ॥ २९ ॥ न च शक्यमवस्रष्टुं वैरमेतत् सुदारुणम् । धनञ्जयेन योत्स्येऽहं स्वधर्मप्रीतमानसः ॥ ३० ॥ अनुजानीष्व मां तात युद्धाय कृतनिश्चयम् । अनुज्ञातस्त्वया वीर युध्येयमिति मे मतिः ॥ ३१ ॥ दुरुक्तं विप्रतीपं वा रभसाच्चापलात्तथा । यन्मयेह कृतं किञ्चित् तन्मे त्वं क्षन्तुमर्हसि ॥ ३२ ॥

भीष्म उवाच । न चेच्छक्यमवस्रष्टुं वैरमेतत् सुदारुणम् । अनुजानामि कर्ण त्वां युध्यस्व स्वर्गकाम्यया ॥ ३३ ॥ निर्मन्युर्गतसंरम्भः कुरु कर्म नृपस्य हि । यथाशक्ति यथोत्साहं सतां वृत्तेषु वृत्तवान् ॥ ३४ ॥ अहं त्वामनुजानामि यदिच्छसि तदाप्नुहि । क्षत्रधर्मजितान् लोकानवाप्स्यसि धनञ्जयात् ॥ ३५ ॥ युध्यस्व निरहङ्कारो बलवीर्यव्यपाश्रयः । धर्म्याद्धि युद्धात् श्रेयोऽन्यत् क्षत्रियस्य न विद्यते ॥ ३६ ॥ प्रशमे हि कृतो यत्नः सुमहान् सुचिरं मया । न चैव शकितः कर्त्तुं कर्ण सत्यं ब्रवीमि ते ॥ ३७ ॥

सञ्जय उवाच । इत्युक्तवति गाङ्गेये अभिवाद्य प्रसाद्य च । राधेयो रथमारुह्य प्रायात्तव सुतं प्रति ॥ ३८ ॥

इति भीष्मपर्व्वणि भीष्मवधपर्व्वणि भीष्मकर्णसमागमे चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥

समाप्तञ्चेदं भीष्मपर्व्व ॥

— —

# MOHABHARATAM

## DRONA PARVA

WITH TEXT & TRALSLATION

PUBLISHED AND DISTRIBUTED GRATIS

BY

PROTAP CHANDRA ROY.



# श्रीमहाभारतम्।

श्रीमन्महर्षिवेदव्यासविरचितम्।

द्रोणपर्व्व।

रायोपाधिकेन श्रीप्रतापचन्द्रेण

प्रकाशितम्

मूल्यं विना वितीर्य्यञ्च।

"हस्तपादादिसम्पन्ना मूक शिक्षयतीव"

—:*:—

कलिकाता ३६-नं अपार चित्पुर रोड् भारतयन्त्रे
श्रीप्रतापचन्द्ररायेण मुद्रितम्।

शकाब्दाः १८०६।

# श्रीमहाभारतम् ।

---

## द्रोणपर्व्व ।

---

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ॥

जनमेजय उवाच । तमप्रतिमसत्त्वौजोबलवीर्य्यपराक्रमम् ।
हतं देवव्रतं श्रुत्वा पाञ्चाल्येन शिखण्डिना ॥ १ ॥ धृतराष्ट्रस्तदा
राजा शोकव्याकुललोचनः । किमचेष्टत विप्रर्षे हते पितरि वीर्य्य-
वान् ॥ २ ॥ तस्य पुत्रो हि भगवन् भीष्मद्रोणमुखै रथैः । परा-
जित्य महेष्वासान् पाण्डवान् राज्यमिच्छति ॥ ३ ॥ तस्मिन् हते
तु भगवन् केतौ सर्व्वधनुष्मताम् । यदचेष्टत कौरव्यस्तन्मे ब्रूहि
तपोधन ॥ ४ ॥

वैशम्पायन उवाच । निहतं पितरं श्रुत्वा धृतराष्ट्रो जना-
धिपः । लेभे न शान्तिं कौरव्यश्चिन्ताशोकपरायणः ॥ ५ ॥ तस्य
चिन्तयतो दुःखमनिशं कौरवस्य तत् । आजगाम विशुद्धात्मा
पुनर्गावल्गणिस्तदा ॥ ६ ॥ शिविरात् सञ्जयं प्राप्तं निशि नागा-
ह्वय पुरम् । आम्बिकेयो महाराज धृतराष्ट्रोऽन्वपृच्छत ॥ ७ ॥
श्रुत्वा भीष्मस्य निधनमप्रहृष्टमना भृशम् । पुत्राणां जयमाकाङ्क्षन्
विललापातुरो यथा ॥ ८ ॥

धृतराष्ट्र उवाच। शशोच तु महात्मानं भीष्मं भीमपराक्रमम्। किमकार्षुः परं तात कुरवः कालचोदिताः ॥ ९ ॥ तस्मिंस्तु निहते शूरे दुराधर्षे महात्मनि। किन्नुस्वित् कुरवोऽकार्षुर्निमग्नाः शोकसागरे ॥ १० ॥ तदुदीर्णं परं सैन्यं त्रैलोक्यस्यापि सञ्जय। भयमुत्पादयेत्तीव्रं पाण्डवानां महात्मनाम् ॥११॥ देवव्रते तु निहते कुरूणामृषभे तदा। यदकार्षुर्नृपतयस्तन्ममाचक्ष्व सञ्जय ॥ १२ ॥

यथा सेना निगृह्णीते पुरा बलौ ॥ २५ ॥ विधवेव वरारोहा शुष्कतोयेव निम्नगा । वृकीरिव वने रुद्धा पृषती हतयूथपा ॥२६॥ शरभाहतसिंहेव महती गिरिकन्दरा । भारती भरतश्रेष्ठ पतिते जाह्नवीसुते ॥ २७ ॥ विष्वग्वातहता रुग्णा नौरिवासीन्महार्णवे । बलिभिः पाण्डवैर्वीरैर्लब्धलक्षैर्भृशार्दिता ॥ २८ ॥ सा तदासीद्भृशं सेना व्याकुलाश्वरथद्विपा । विपन्नभूयिष्ठनरा कृपणा ध्वस्तमानसा ॥ २९ ॥ तस्यां त्रस्ता नृपतयः सैनिकाश्च पृथग्विधाः । पाताल इव मज्जन्तो हीना देवव्रतेन ते ॥ ३० ॥ कर्णं हि कुरवोऽस्मार्षुः स हि देवव्रतोपमः । सर्वशस्त्रभृतां श्रेष्ठं रोचमानमिवातिथिम् ॥ ३१ ॥ बन्धुमापद्गतस्येव तमेवोपागमन्मनः । चुक्रुशुः कर्ण कर्णेति तत्र भारत पार्थिवाः ॥ ३२ ॥ राधेयं हितमस्माकं सूतपुत्रं तनुत्यजम् । स हि नायुध्यत तदा दशाहानि महायशाः ॥ ३३ ॥ सामात्यबन्धुः कर्णो वै तमाह्वयत माचिरम् । भीष्मेण हि महाबाहुः सर्वक्षत्रस्य पश्यतः ॥ ३४ ॥ रथेषु गण्यमानेषु बलविक्रमशालिषु । सङ्ख्यातोऽर्द्धरथः कर्णो द्विगुणः सन्नरर्षभः ॥ ३५ ॥ रथातिरथसङ्ख्यायां योऽग्रणीः शूरसम्मतः । पितृवित्ताम्बुदेशानपि यो योद्धुमुत्सहेत् ॥ ३६ ॥ स तु तेनैव कोपेन राजन् गाङ्गेयमुक्तवान् । त्वयि जीवति कौरव्य नाहं योत्स्ये कथञ्चन ॥ ३७ ॥ त्वया तु पाण्डवेयेषु निहतेषु महामृधे । दुर्य्योधनमनुज्ञाप्य वनं यास्यामि कौरव ॥ ३८ ॥ पाण्डवैर्वा हते भीष्मे त्वयि स्वर्गमुपेयुषि । हन्तास्म्येकरथेनैव कृत्स्नान् यान्मन्यसे रथान् ॥ ३९ ॥ एवमुक्त्वा महाबाहुर्दशाहानि महायशाः । नायुध्यत ततः कर्णः पुत्रस्य तव सम्मते ॥ ४० ॥ भीष्मः समरविक्रान्तः पाण्डवेयस्य भारत । जघान समरे योधानसङ्ख्येयपराक्रमः ॥ ४१ ॥ तस्मिंस्तु निहते शूरे सत्यसन्धे महौजसि । त्वत्सुताः कर्णमस्मार्षुस्तर्त्तुकामा इव प्लवम् ॥ ४२ ॥

तावकास्तव पुत्राश्च सहिताः सर्वराजभिः । हा कर्ण इति चाक्र-
न्दन् कालोऽयमिति चाब्रुवन् ॥ ४३ ॥ जामदग्न्याभ्यनुज्ञातमस्त्रे
दुर्वारपौरुषम् । अगमन् नो मनः कर्णं बन्धुमात्ययिकेष्विव ॥ ४४ ॥
स हि शक्तो रणे राजन् त्रातुमस्मान् महाभयात् । त्रिदशानिव
गोविन्दः सततं सुमहाभयात् ॥ ४५ ॥

वैशम्पायन उवाच । तथा तु सञ्जयं कर्णं कीर्त्तयन्तं पुनः
पुनः । आशीविषवदुच्छ्वस्य धृतराष्ट्रोऽब्रवीदिदम् ॥ ४६ ॥

धृतराष्ट्र उवाच । यत्तु वैकर्त्तनं कर्णमगमद्वो मनस्तदा ।
अप्यपश्यन्त राधेयं सूतपुत्रं तनुत्यजम् ॥ ४७ ॥ अपि तन्न मृषा
कर्णो युधि सत्यपराक्रमः । सम्भ्रान्तानां तदार्त्तानां त्रस्तानां त्राण-
मिच्छताम् ॥ ४८ ॥ अपि तत् पूरयाञ्चक्रे धनुर्द्धरवरो युधि ।
यत्तद्विनिहते भीष्मे कौरवाणामपावृतम् ॥ ४९ ॥ तत्खण्डं पूरयन्
कर्णः परेषामादधद्भयम् । कृतवान् मम पुत्राणां जयाशां सफला-
मपि ॥ ५० ॥

इति द्रोणपर्व्वणि द्रोणाभिषेकपर्व्वणि धृतराष्ट्रप्रश्ने
प्रथमोऽध्यायः ॥ १ ॥

---

सञ्जय उवाच । हतं भीष्ममाधिरथिर्विदित्वा भिन्नां नाव-
मिवात्यगाधे कुरूणाम् । सोदर्य्यवद्व्यसनात् सूतपुत्रः सन्तारयि-
ष्यंस्तव पुत्रसेनाम् ॥ १ ॥ श्रुत्वा तु कर्णः पुरुषेन्द्रमच्युतं निपातितं
शान्तनवं महारथम् । अथोपायात् सहसारिकर्षणो धनु-
र्द्धराणां प्रवरस्तदा नृप ॥ २ ॥ हते तु भीष्मे रथसत्तमे परै-
र्निमज्जतीं नावमिवार्णवे कुरून् । पितेव पुत्रांस्त्वरितोऽभ्यया-
त्ततः सन्तारयिष्यंस्तव पुत्रसेनाम् ॥ ३ ॥

कर्ण उवाच । यस्मिन् धृतिर्बुद्धिपराक्रमौजः सत्यं दमो

वीरशुणाय सर्वे। अस्त्राणि दिव्यान्यथ सन्नतिर्ह्रीः प्रिया च वागनसूया च मोघे॥ ४॥ सदा कृतघ्ने द्विजशत्रुघातके सनातने चन्द्रमसीव लक्ष्म। स चेत् प्रशान्तः परवीरहन्ता मन्ये हतानेव हि सर्वयोधान्॥ ५॥ नेह ध्रुवं किञ्चन जातु विद्यते लोके ह्यस्मिन् कर्मणो नित्ययोगात्। सूर्योदये को हि विमुक्तसंशयो भावं कुर्वीताद्य महाव्रते हते॥ ६॥ वसुप्रभावे वसुवीर्य्यसम्भवे गते वसूनेव वसुन्धराधिपे। वसूनि पुत्रांश्च वसुन्धरां तथा कुरूंश्च शोचध्वमिमाञ्च वाहिनीम्॥ ७॥

सञ्जय उवाच। महाप्रभावे वरदे निपातिते लोकेश्वरे शान्तनवे महौजसि। पराजितेषु भरतेषु दुर्म्मनाः कर्णो भृशं न्यश्वसदश्रु वर्त्तयन्॥ ८॥ इदन्तु राधेयवचो निशम्य ते सुताश्च राजंस्तव सैनिकाश्च ह। परस्परं चुक्रुशुरार्त्तिजं भृशं तदाश्रु नेत्रैर्मुमुचुर्हि शब्दवत्॥ ९॥ प्रवर्त्तमाने तु पुनर्महाहवे विगाह्यमानासु चमूषु पार्थिवैः। अथाब्रवीद्धर्षकरं वचस्तदा रथर्षभान् सर्व्वमहारथर्षभः॥ १०॥ जगत्यनित्ये सततं प्रधावति प्रचिन्तयन्नस्थिरमेव लक्षये। भवत्सु तिष्ठत्स्विह पातितो रणे गिरिप्रकाशः कुरुपुङ्गवः कथम्॥ ११॥ निपातिते शान्तनवे महारथे दिवाकरे भूतलमाश्रिते यथा। न पार्थिवाः सोढुमलं धनञ्जयं गिरिप्रवोढारमिवानिलं द्रुमाः॥ १२॥ हतप्रधानं त्विदमार्त्तरूपं परैर्हतोत्साहमनाथमद्य वै। मया कुरूणां परिपाल्यमाहवे बलं यथा तेन महात्मना तथा॥ १३॥ समाहितं चात्मनि भारमीदृशं जगत्तथानित्यमिदञ्च लक्षये। निपातितञ्चाहवशौण्डमाहवे कथं तु कुर्य्यामहमाहवे भयम्॥ १४॥ अहन्तु तान् कुरुवृषभानजिह्मगैः प्रवेशयन् यमसदने रणे चरन्। यशः परं जगति विभाव्य वर्त्तिता परैर्हतो युधि शयिताथ वा पुनः॥ १५॥ युधिष्ठिरो धृतिमतिधर्मसत्त्ववान् वृकोदरो गजशततुल्यविक्रमः। तथा-

र्जुनस्त्रिदशवरात्मजो युवा न तद्दलं सञ्जयमिहामरैरपि ॥ १६ ॥
यमौ रणे यत्र यमोपमौ बले ससात्यकिर्यत्र च देवकीसुतः । न
तद्बलं कापुरुषोऽभ्युपेयिवान् निवर्त्तते मृत्युमुखादिवासुहृत् ॥१७॥
तपो ह्युदीर्णं तपसैव बाध्यते बलं बलेनैव तथा मनस्विभिः ।
मनश्च मे शत्रुनिवारणे ध्रुवं स्वरक्षणे वा बलवद्व्यवस्थितम् ॥१८॥
ध्रुवन्त्वेषां बाधमानं प्रभावं गत्वैवाहं तान् प्रजयाम्यद्य सूत ।
मित्रद्रोही मर्षणीयो न मेऽद्य भग्ने सैन्ये यः समेयात स मित्रम्
॥ १९ ॥ कर्त्तास्म्येतत् पुरुषार्यकर्म त्यक्त्वा प्राणाननुयास्यामि
भीष्मम् । सर्वान् संख्ये शत्रुसङ्घान् हनिष्ये हतस्तैर्वा वीरलोकं
गमिष्ये ॥ २० ॥ सम्प्राक्रुष्टे रुदितस्त्रीकुमारे पराभूते पौरुषे
धार्त्तराष्ट्रे । मया कृत्यमिति जानामि सूत तस्माच्छत्रूनद्य राज्ञो
विजेष्ये ॥ २१ ॥ कुरून् रक्षन् पाण्डुपुत्रान् जिघांसन् त्यक्त्वा
प्राणान् घोररूपे रणेऽस्मिन् । सर्वान् संख्ये शत्रुसङ्घान्निहत्य
दास्याम्यहं धार्त्तराष्ट्राय राज्यम् ॥ २२ ॥ निबध्यतां मे कवचं
विचित्रं हैमं शुभ्रं मणिरत्नावभासि । शिरस्त्राणं चार्कसमान
भासं धनुः शराश्चाग्निविषाहिकल्पान् ॥ २३ ॥ उपासङ्गान्
षोडश योजयध्वं धनूंषि दिव्यानि तथाहरन्तु । असींश्च शक्तीश्च
गदाश्च गुर्वीः शङ्खञ्च जाम्बूनदचित्रभागम् ॥ २४ ॥ इमां रौक्मीं
नागकक्षां विचित्रां ध्वजञ्चैव दिव्यमिन्दीवराभम् । श्लक्ष्णैर्वस्त्रै-
र्विप्रमृज्यानयस्व चित्रां मालाञ्चानुबद्धां सजालाम् ॥ २५ ॥ अश्वा-
नग्र्यान् पाण्डुराभ्रप्रकाशान् पुष्टान् स्नातान् मन्त्रपूताभिरद्भिः ।
तप्तैर्भाण्डैः काञ्चनैरभ्युपेतान् शीघ्राञ्छीघ्रं सूतपुत्रानयस्व ॥ २६ ॥
रथञ्चाग्र्यं हेममालावनद्धं रत्नैश्चित्रं चन्द्रसूर्यप्रकाशैः । द्रव्यैर्युक्तं
सम्प्रहारोपपन्नैर्वाहैर्युक्तं तूर्णमावर्त्तयस्व ॥ २७ ॥ चित्राणि
चापानि च वेगवन्ति ज्याश्चोत्तमाः सन्नहनोपपन्नाः । तूणांश्च
पूर्णान्महतः शराणामासज्य गात्रावरणानि चैव ॥ २८ ॥ प्राया

णिकं चानय चाशु सर्व्वं दध्ना पूर्णं वीर कांस्यञ्च हैमम् । आनीय मालामवबध्य चाङ्गे प्रवादयन्त्वाशु जयाय भेरीः ॥ २९ ॥ प्रयाहि सूताशु यतः किरीटी वृकोदरो धर्म्मसुतो यमौ च । तान् वा हनिष्यामि समेत्य सङ्ख्ये भीष्माय यास्यामि हतो द्विषद्भिः ॥ ३० ॥ यस्मिन् राजा सत्यधृतिर्युधिष्ठिरः समास्थितो भीमसेनार्ज्जुनौ च । वासुदेवः सात्यकिः सृञ्जयाश्च मन्ये बलं तदजय्यं महीपैः ॥ ३१ ॥ तञ्चेन्मृत्युः सर्व्वहरोऽभिरक्षेत् सदाप्रमत्तः समरे किरीटिनम् । तथापि हन्तास्मि समेत्य सङ्ख्ये यास्यामि वा भीष्मपथा यमाय ॥ ३२ ॥ न त्वेवाहं न गमिष्यामि तेषां मध्ये शूराणां तत्र चाहं ब्रवीमि । मित्रद्रुहो दुर्ब्बलभक्तयो ये पापात्मानो न ममैते सहायाः ॥ ३३ ॥

सञ्जय उवाच । समृद्धिमन्तं रथमुत्तमं दृढं सकूवरं हेमपरिष्कृतं शुभम् । पताकिनं वातजवैर्हयोत्तमैर्युक्तं समास्थाय ययौ जयाय सः ॥ ३४ ॥ सम्पूज्यमानः कुरुभिर्महात्मा रथर्षभैर्देवगणैर्यथेन्द्रः । ययौ तदायोधनमुग्रधन्वा यत्रावसानं भरतर्षभस्य ॥ ३५ ॥ वरूथिना महता सध्वजेन सुवर्णमुक्तामणिरत्नमालिना । सदश्वयुक्तेन रथेन कर्णो मेघस्वनेनार्क इवामितौजाः ॥ ३६ ॥ हुताशनाभः स हुताशनप्रभे शुभः शुभे वै स्वरथे धनुर्द्धरः । स्थितो रराजाधिरथिर्महारथः स्वयं विमाने सुरराडिव स्थितः ॥ ३७ ॥

इति द्रोणपर्व्वणि द्रोणाभिषेकपर्व्वणि कर्णनिर्य्याणे द्वितीयोऽध्यायः ॥ २ ॥

---

सञ्जय उवाच। शरतल्पे महात्मानं शयानममितौजसम्।
महावातसमूहेन समुद्रमिव शोषितम् ॥ १ ॥ दृष्ट्वा पितामहं
भीष्मं सर्वक्षत्रान्तकं गुरुम्। दिव्यैरस्त्रैर्महेष्वासं पातितं सव्य-
साचिना ॥ २ ॥ जयाशा तव पुत्राणां संभग्ना शर्म वर्म च।
अपाराणामिव द्वीपमगाधे गाधमिच्छताम् ॥ ३ ॥ स्रोतसा यामु
नेनेव शरौघेण परिप्लुतं। महेन्द्रेणेव मैनाकमसह्यं भुवि पाति
तम् ॥ ४ ॥ नभश्च्युतमिवादित्यं पातितं धरणीतले। शतक्रतु
मिवाचिन्त्यं पुरा वृत्रेण निर्जितम् ॥ ५ ॥ मोहनं सर्वसैन्यस्य
युधि भीष्मस्य पातनम्। ककुदं सर्वसैन्यानां लक्ष्म सर्वधनुष्मताम्
॥ ६ ॥ धनञ्जयशरव्याप्तं पितरं ते महाव्रतम्। तं वीरशयने
वीरं शयानं पुरुषर्षभम् ॥ ७ ॥ भीष्ममाधिरथिर्दृष्ट्वा भारतानां
पितामहम्। अवतीर्य रथादार्त्तः शोकमोहपरिप्लुतः ॥ ८ ॥
पद्भ्यामेव जगामार्त्तो बाष्पव्याकुललोचनः॥ अभिवाद्याञ्जलिं
बद्ध्वा वन्दमानोऽभ्यभाषत ॥ ९ ॥ कर्णोऽहमस्मि भद्रन्ते वद
मामभि भारत। पुण्यया क्षेमया वाचा चक्षुषा चावलोकय
॥ १० ॥ न नूनं सुकृतस्येह फलं कश्चित् समश्नुते। यत्र धर्म
परो वृद्ध शेते भुवि भवान् हत ॥ ११ ॥ कोशसञ्जनने मन्त्रे
व्यूहे प्रहरणेषु च। नाहमन्यं प्रपश्यामि कुरूणां कुरुसत्तम
॥ १२ ॥ बुद्ध्या विशुद्धया युक्तो यः कुरूंस्तारयेद्भयात्। योधांस्तु
बहुधा हत्वा पितृलोकं गमिष्यसि ॥ १३ ॥ अद्य प्रभृति संक्रुद्धा

कर्ण राजपुरं गत्वा काम्बोजा निर्जितास्त्वया ॥ ५ ॥ गिरिव्रज गताश्चापि नग्नजित्प्रमुखा नृपा। अम्बष्ठाश्च विदेहाश्च गान्धाराश्च जितास्त्वया ॥ ६ ॥ हिमवद्दुर्गनिलया किराता रणकर्कशा। दुर्योधनस्य वशगा कृता कर्ण त्वया पुरा ॥ ७ ॥ उत्कला मेकला पौण्ड्रा कलिङ्गान्ध्राश्च संयुगे। निषादाश्च त्रिगर्त्ताश्च बाह्लीकाश्च जितास्त्वया ॥ ८ ॥ तत्र तत्र च सङ्ग्रामे दुर्योधनहितैषिणा। बहवो निर्जिता वीर त्वया कर्ण महौजस ॥ ९ ॥ यथा दुर्योधनस्तात सज्ञातिकुलबान्धव। तथा त्वमपि सर्वेषा कौरवाणा गतिर्भव ॥ १० ॥ शिवेनाभिवदामि त्वा गच्छ युध्यस्व शत्रुभि। अनुशाधि कुरून् सङ्ख्ये धत्स्व दुर्योधने जयम् ॥ ११ ॥ भवान् पौत्रसमोऽस्माक यथा दुर्योधनस्तथा। तथापि धर्मत सर्वे यथा तस्य वय तथा ॥ १२ ॥ यौनात्सम्बन्धकाल्लोके विशिष्ट सङ्गत सताम्। साधु सह नरश्रेष्ठ प्रवदन्ति मनीषिण ॥ १३ ॥ स सत्यसङ्गतो भूत्वा ममेद मिति निश्चितम्। कुरूणा पालय बल यथा दुर्योधनस्तथा ॥१४॥ निशम्य वचन तस्य चरणावभिवाद्य च। ययौ वैकर्त्तन कर्ण समीप सर्वधन्विनाम् ॥ १५ ॥ सोऽभिवीक्ष्य नरौघाणा स्थानमप्रतिम महत्। व्यूढप्रहरणोरस्क सैन्य तत्समबृहयत् ॥ १६ ॥ हृषिता कुरव सर्वे दुर्योधनपुरोगमा। तमागत महाबाहु सर्वानीकपुर सरम् ॥ १७ ॥ कर्ण दृष्ट्वा महात्मान युद्धाय समुपस्थितम्। क्ष्वेडितास्फोटितरवे सिंहनादरवैरपि। धनु शब्दैश्च विविधै कुरव समपूजयन् ॥ १८ ॥

इति द्रोणपर्वणि द्रोणाभिषेकपर्वणि कर्णाश्वासे चतुर्थोऽध्याय ॥ ४ ॥

———

सञ्जय उवाच। रथस्थं पुरुषव्याघ्रं दृष्ट्वा कर्णमवस्थितम्। हृष्टो दुर्योधनो राजन्निदं वचनमब्रवीत्॥ १॥ सनाथमिदमत्यर्थं भवता पालितं बलम्। मन्ये किं नु समर्थं यत् हितं तत् सम्प्रधार्यताम्॥ २॥

कर्ण उवाच। ब्रूहि नः पुरुषव्याघ्र त्वं हि प्राज्ञतमो नृपः। यथा चार्थपतिः कृत्यं पश्यते न तथेतरः॥ ३॥ ते स्म सर्वे तव वचः श्रोतुकामा नरेश्वराः। नान्याय्यं हि भवान् वाक्यं ब्रूयादिति मतिर्मम॥ ४॥

दुर्योधन उवाच। भीष्मः सेनाप्रणेतासीद् वयसा विक्रमेण च। श्रुतेन चोपसम्पन्नः सर्वैर्योधगुणैस्तथा॥ ५॥ तेनातियशसा कर्ण घ्नता शत्रुगणान्मम। सुयुद्धेन दशाहानि पालिताः स्मो महात्मना॥ ६॥ तस्मिन्नसुकरं कर्म कृतवत्यास्थिते दिवम्। कर्ण सेनाप्रणेतारं मन्यसे कं तदन्तरम्॥ ७॥ न विना नायकं सेना मुहूर्त्तमपि तिष्ठति। आहवेष्वाहवश्रेष्ठ कर्णहीनेव नौर्जले॥ ८॥ यथा ह्यकर्णधारा नौ रथश्चासारथिर्यथा। द्रवेद्यथेष्टं तद्वत्स्यादृते सेनापतिं बलम्॥ ९॥ अदेशिको यथा सार्थः सर्वं कृच्छ्रं समृच्छति। अनायका तथा सेना सर्वान् दोषान् समृच्छति॥ १०॥ स भवान् वीक्ष्य सर्वेषु मामकेषु महात्मसु। पश्य सेनापतिं युक्तमनु शान्तनवादिह॥ ११॥ यं हि सेनाप्रणेतारं भवान् द्रक्ष्यति संयुगे। तं वयं सहिताः सर्वे करिष्यामो न संशयः॥ १२॥

कर्ण उवाच। सर्व एव महात्मान इमे पुरुषसत्तमाः। सेनापतित्वमर्हन्ति नात्र कार्या विचारणा॥ १३॥ कुलसंहननज्ञानैर्बलविक्रमबुद्धिभिः। युक्ताः कृतज्ञा ह्रीमन्त आहवेष्वनिवर्त्तिनः॥ १४॥ युगपन्न तु ते शक्याः कर्त्तुं सर्वे पुरःसराः। एक एव तु कर्त्तव्यो यस्मिन् वैशेषिका गुणाः॥ १५॥ अन्योन्य-

सुहृदिनां तेषां यथोक्तं सत्करिष्यसि। येषा विमनसो व्यक्तं न योत्स्यन्ति हितास्तव ॥ १५ ॥ अयच्च सर्वयोधानामाचार्यः स्थविरो गुरुः। युक्तः सेनापतिः कर्त्तुं द्रोणः शस्त्रभृताम्वरः ॥ १६ ॥ को हि तिष्ठति दुर्द्धर्षे द्रोणे ब्रह्मविदुत्तमे। सेनापतिः स्यादन्यस्माच्छुक्राङ्गिरसदर्शनात् ॥ १७ ॥ न च कोऽप्यस्ति ते योधः सर्वराजसु भारत। द्रोणं यः समरे यान्तं, नानुयास्यति संयुगे ॥ १८ ॥ एष सेनाप्रणेतॄणामेष शस्त्रभृतामपि। एष बुद्धिमतां श्रेष्ठो राजन्नेष गुरुश्च ते ॥ १९ ॥ एवं दुर्य्योधनाचार्य्यमाशु सेनापतिं कुरु। जिगीषन्तोऽसुरान् सङ्ख्ये कार्त्तिकेयमिवामराः ॥ २० ॥

इति द्रोणपर्व्वणि द्रोणाभिषेकपर्व्वणि कर्णवाक्ये पञ्चमोऽध्यायः ॥ ५ ॥

---

सञ्जय उवाच। कर्णस्य वचनं श्रुत्वा राजा दुर्य्योधनस्तदा। सेनामध्यगतं द्रोणमिदं वचनमब्रवीत् ॥ १ ॥

दुर्य्योधन उवाच। वर्णश्रैष्ठ्यात् कुलोत्पत्त्या श्रुतेन वयसा धिया। वीर्य्याद्दाक्ष्यादधृष्यत्वादर्थज्ञानान्नयाज्जयात् ॥ २ ॥ तपसा च कृतज्ञत्वात् वृद्धः सर्व्वगुणैरपि। युक्तो भवत्समो गोप्ता राज्ञामन्यो न विद्यते ॥ ३ ॥ स भवान् पातु नः सर्व्वान् विबुधानिव वासवः। भवन्नेत्राः परान् जेतुमिच्छामो द्विजसत्तम ॥ ४ ॥ रुद्राणामिव कापाली वसूनामिव पावकः। कुवेर इव यक्षाणां मरुतामिव वासवः ॥ ५ ॥ वशिष्ठ इव विप्राणां तेजसामिव भास्करः। पितॄणामिव धर्म्मेन्द्रो यादसामिव चाम्बुराट् ॥ ६ ॥ नक्षत्राणामिव शशी दितिजानामिवोशनाः। श्रेष्ठः सेनाप्रणेतॄणां स नः सेनापतिर्भव ॥ ७ ॥ अक्षौहिण्यो दशैका च वशगाः सन्तु

तेऽनघ। तामिः शत्रून् प्रतिव्यूह्य जह्मीन्द्रो दानवानिव ॥ ८ ॥
प्रयातु नो भवानग्रे देवानामिव पावकिः। अनुयास्यामहे त्वाजौ
सौरभेया हषर्षभम् ॥ ९ ॥ उग्रधन्वा महेष्वासो दिव्यं विस्फा-
रयन् धनु। अग्रेभवं त्वान्तु दृष्ट्वा नार्ज्जुन: प्रहरिष्यति ॥ १० ॥
ध्रुवं युधिष्ठिरं सङ्ख्ये सानुबन्धं सबान्धवम्। जेष्यामि पुरुष-
व्याघ्र भवान् सेनापतिर्य्यदि ॥ ११ ॥

सञ्जय उवाच। एवमुक्ते ततो द्रोणं जयेत्यूचुर्न्नराधिपाः।
सिंहनादेन महता हर्षयन्तस्तवात्मजम् ॥ १२ ॥ सैनिकाश्च मुदा
युक्ता वर्द्धयन्ति द्विजोत्तमम्। दुर्य्योधनं पुरस्कृत्य प्रार्थयन्तो मह-
द्यशः। दुर्य्योधनं ततो राजन् द्रोणो वचनमब्रवीत् ॥ १३ ॥

इति द्रोणपर्व्वणि द्रोणाभिषेकपर्व्वणि दुर्य्योधनप्रोत्साहे
षष्ठोऽध्यायः ॥ ६ ॥[1]

---

द्रोण उवाच। वेदं षडङ्गं वेदाहमर्थविद्याञ्च मानवीम्।
त्रैयम्बकमथेष्वस्त्रमस्त्राणि विविधानि च ॥ १ ॥ ये चाप्युक्ता
मयि गुणा भवद्भिर्जयकाङ्क्षिभिः। चिकीर्षुस्तानहं सर्व्वान् योध-
यिष्यामि पाण्डवान् ॥ २ ॥ पार्षतन्तु रणे राजन् न हनिष्ये
कथञ्चन। स हि सृष्टो वधार्थाय ममैव पुरुषर्षभ ॥ ३ ॥ योध-
यिष्यामि सैन्यानि नाशयन् सर्व्वसोमकान्। न च मां पाण्डवा
युद्धे योधयिष्यन्ति हर्षिता: ॥ ४ ॥

सञ्जय उवाच। स एवमभ्यनुज्ञातश्चक्रे सेनापतिं ततः।
द्रोणन्तव सुतो राजन् विधिदृष्टेन कर्म्मणा ॥ ५ ॥ अथाभिषिषिचु-
र्द्रोणं दुर्य्योधनमुखा नृपाः। सेनापत्ये यथा स्कन्दं पुरा शक्र-
मुखाः सुराः ॥ ६ ॥ ततो वादित्रघोषेण शङ्खानाञ्च महास्वनैः।
प्रादुरासीत् कृते द्रोणे हर्षः सेनापतौ तदा ॥ ७ ॥ ततः पुण्याह-

योधेषु स्वस्तिवादस्वनेन च। संस्तवैर्गीतशब्दैश्च सूतमागधवन्दिनाम् ॥ ८ ॥ जयशब्दैर्द्विजाग्र्याणां सूतानां नादितैस्तथा। स्वस्त्ययनं कृत्य विधिना द्रोणे मेनिरे पाण्डवान् जितान् ॥ ९ ॥

सञ्जय उवाच। सैनापत्यन्तु सम्प्राप्य भारद्वाजो महारथः। युयुत्सुर्व्यूह्य सैन्यानि प्रायात्तव सुतैः सह ॥ १० ॥ सैन्धवश्च कलिङ्गश्च विकर्णश्च तवात्मजः। दक्षिणं पार्श्वमास्थाय समनह्यन्त दंशिताः ॥ ११ ॥ प्रपक्षं शकुनिस्तेषां प्रवरैर्हयसादिभिः। ययौ गान्धारकैः सार्द्धं विमलप्रासयोधिभिः ॥ १२ ॥ कृपश्च कृतवर्मा च चित्रसेनो विविंशतिः दुःशासनमुखा यत्ता सव्यं पक्षमपालयन् ॥ १३ ॥ तेषां प्रपक्षाः काम्बोजाः सुदक्षिणपुरःसराः। ययुरश्वैर्महावेगैः शकाश्च यवनैः सह ॥ १४ ॥ मद्रास्त्रिगर्ताः साम्बष्ठाः प्रतीच्योदीच्यमालवाः। शिवयः शूरसेनाश्च शूद्राश्च मलदैः सह ॥ १५ ॥ सौवीराः कितवाः प्राच्या दाक्षिणात्याश्च सर्वशः। तवात्मजं पुरस्कृत्य सूतपुत्रस्य पृष्ठतः ॥ १६ ॥ हर्षयन्तः स्वसैन्यानि बलेषु बलमादधत्। ययौ वैकर्त्तनः कर्णः प्रमुखे सर्वधन्विनाम् ॥ १७ ॥ तस्य दीप्तो महाकायः स्वान्यनीकानि हर्षयन्। हस्तिकक्षो महाकेतुर्बभौ सूर्य्यसमद्युतिः ॥ १८ ॥ न भीष्मव्यसनं कश्चिद्दृष्ट्वा कर्णममन्यत। विशोकाश्चाभवन् सर्वे राजानः कुरुभिः सह ॥ १९ ॥ हृष्टाश्च बहवो योधास्तत्राजल्पन्त सङ्गताः। न हि कर्णं रणे दृष्ट्वा युधि स्थास्यन्ति पाण्डवाः ॥ २० ॥ कर्णो हि समरे शक्तो जेतुं देवान् सवासवान्। किमु पाण्डुसुतान् युद्धे हीनवीर्य्यपराक्रमान् ॥ २१ ॥ भीष्मेण तु रणे पार्थाः पालिता बाहुशालिना। तांस्तु कर्णः शरैस्तीक्ष्णैर्नाशयिष्यति संयुगे ॥२२॥ एवं ब्रुवन्तस्तेऽन्योऽन्यं हृष्टरूपा विशाम्पते। राधेयं पूजयन्तश्च प्रशंसन्तश्च निर्ययुः ॥ २३ ॥ अस्माकं शकटव्यूहो द्रोणेन विहितोऽभवत्। परेषां क्रौञ्च एवासीद्व्यूहो राजन् महात्मनाम् ॥ २४ ॥

भीयमाणेन विहितो धर्मराजेन भारत । व्यूहप्रमुखतस्तेषां तस्थतु'
पुरुषर्षभौ ॥ २५ ॥ वानरध्वजमुच्छ्रित्य विष्वक्सेनधनञ्जयौ ।
ककुदं सर्वसैन्यानां धाम सर्वधनुष्मताम् ॥ २६ ॥ आदित्यपथगं
केतुं पार्थस्यामिततेजसः । दीपयामास तत् सैन्यं पाण्डवस्य
महात्मनः ॥ २७ ॥ यथा प्रज्वलितः सूर्यो युगान्ते वै वसु-
न्धराम् । प्रदहन् दृश्यते तद्वत् केतुः पार्थस्य धीमतः ॥ २८ ॥
योधानामर्जुनः श्रेष्ठो गाण्डीवं धनुषां वरम् । वासुदेवश्च भूतानां
चक्राणाञ्च सुदर्शनम् ॥ २९ ॥ चत्वार्य्येतानि तेजांसि वहन् श्वेत-
हयो रथः । परेषामग्रतस्तस्थौ कालचक्रमिवोद्यतम् ॥ ३० ॥
एवं तौ सुमहात्मानौ बलसेनाग्रगावुभौ । तावकानां मुखे कर्णः
परेषाञ्च धनञ्जयः ॥ ३१ ॥ तौ जातावभिसंरब्धौ परस्परवधै-
षिणौ । अवेक्षेतां तदान्योऽन्यं समरे कर्णपाण्डवौ ॥ ३२ ॥
ततः प्रयाते सहसा भारद्वाजे महारथे । आर्त्तनादेन घोरेण
वसुधा समकम्पत ॥ ३३ ॥ ततस्तुमुलमाकाशमावृणोत् सदिवा-
करम् । वातोद्धूतं रजस्तीव्रं कौषेयनिकरोपमम् ॥ ३४ ॥ ववर्ष
द्यौरनभ्रापि मांसास्थिरुधिराण्युत । गृध्रा' श्येना बला' कङ्का
वायसाश्च सहस्रशः ॥ ३५ ॥ उपर्य्युपरि सेनान्ते तदा पर्य्यपत-
न्नृप । गोमायवश्च प्राक्रोशन् भयदा दारुणा खगाः ॥ ३६ ॥
अकार्षुरपसव्यञ्च बहुशः पृतनां तव । विमप्सिपन्तो मांसानि
पिपासन्तश्च शोणितम् ॥ ३७ ॥ अपतद्दीप्यमाना च सनिर्घाता
सकम्पना । उल्का ज्वलन्ती सङ्ग्रामे पुच्छेनावृत्य सर्वशः ॥ ३८ ॥
परिवेषो महांश्चापि सविद्युत् स्तनयित्नुमान् । भास्करस्याभव-
द्राजन् प्रयाते वाहिनीपतौ ॥ ३९ ॥ एते चान्ये च बहवः प्रादु-
रासन् सुदारुणाः । उत्पाता युधि वीराणां जीवितक्षयकारणाः
॥ ४० ॥ ततः प्रववृते युद्धं परस्परवधैषिणाम् । कुरुपाण्डव-
सेनानां शब्देनापूरयज्जगत् ॥ ४१ ॥ ते त्वन्योऽन्यं सुसंरब्धाः

पाण्डवा कौरवैः सह । प्रत्यघ्नन्निशितैः शस्त्रैर्यथाश्रद्धा प्रहा
रिण ॥ ४२ ॥ स पाण्डवानां महता महेष्वासो महाद्युतिः ।
वेगेनाभ्यद्रवत् सैन्यं किरन् शरशतैः शितैः ॥ ४३ ॥ द्रोणमभ्यु
द्यतं दृष्ट्वा पाण्डवाः सह सृञ्जयैः । प्रत्यगृह्णंस्तदा राजञ्छरवर्षैः
पृथक् पृथक् ॥ ४४ ॥ संक्षोभ्यमाणा द्रोणेन भिद्यमाना महा-
चमूः । व्यशीर्यत सपाञ्चाला वातेनेव बलाहकाः ॥ ४५ ॥ बहू-
नीह विकुर्वाणो दिव्यान्यस्त्राणि संयुगे । अपीडयत् क्षणेनैव
द्रोणः पाण्डवसृञ्जयान् ॥ ४६ ॥ ते वध्यमाना द्रोणेन वासवेनेव
दानवाः । पाञ्चालाः समकम्पन्त धृष्टद्युम्नपुरोगमाः ॥ ४७ ॥
ततो दिव्यास्त्रविच्छूरो याज्ञसेनिर्महारथः । अभिनच्छरवर्षेण
द्रोणानीकमनेकधा ॥ ४८ ॥ द्रोणस्य शरवर्षेण शरवर्षाणि
पार्षतः । सन्निवार्य ततः सर्वान् कुरूनप्यवधीद्बली ॥ ४९ ॥
संहृत्य तु ततो द्रोणः समवस्थाप्य चाहवे । स्वमनीकं महाबाहुः
पार्षतं समुपाद्रवत् ॥ ५० ॥ स बाणवर्षं सुमहदसृजत् पार्षतं
प्रति । मघवान् समभिक्रुद्धः सहसा दानवेष्विव ॥ ५१ ॥ ते
कम्प्यमाना द्रोणेन बाणैः पाण्डवसृञ्जयाः । पुनः पुनरभज्यन्त
सिंहेनेवेतरे मृगाः ॥ ५२ ॥ तथा पर्यचरद्द्रोणः पाण्डवानां बलं
बली । अलातचक्रवद्राजंस्तदद्भुतमिवाभवत् ॥ ५३ ॥ खचर-
नगरकल्पं कल्पितं शास्त्रदृष्ट्या चलदनिलपताकं ह्लादितं वल्गि
ताश्वम् ॥ ५४ ॥ स्फटिकविमलकेतुं त्रासयन् शात्रवाणाम् ।
रथवरमधिरूढः सञ्जहारारिसेनाम् ॥ ५५ ॥

इति द्रोणपर्वणि द्रोणाभिषेकपर्वणि द्रोणपराक्रमे
सप्तमोऽध्यायः ॥ ७ ॥

---

सञ्जय उवाच। तथा द्रोणमभिघ्नन्तं साश्वसूतरथद्विपान्। व्यथिताः पाण्डवा दृष्ट्वा न चैनं पर्य्यवारयन् ॥ १ ॥ ततो युधिष्ठिरो राजा धृष्टद्युम्नधनञ्जयौ। अब्रवीत् सर्वतो यत्तैः कुम्भयोनिर्न्निवार्य्यताम् ॥ २ ॥ तत्रैनमर्ज्जुनश्चैव पार्षतश्च सहानुगः। पर्य्यगृह्णंस्ततः सर्वे समायान्तं महारथाः ॥ ३ ॥ केकया भीमसेनश्च सौभद्रश्च घटोत्कचः। युधिष्ठिरो यमौ मत्स्यो द्रुपदस्यात्मजास्तथा ॥ ४ ॥ द्रौपदेयाश्च संहृष्टा धृष्टकेतुः ससात्यकिः। चेकितानश्च संक्रुद्धो युयुत्सुश्च महारथः ॥ ५ ॥ ये चान्ये पार्थिवा राजन् पाण्डवस्यानुयायिनः। कुलवीर्य्यानुरूपाणि चक्रुः कर्माण्यनेकशः ॥ ६ ॥ संगृह्यमाणां तां दृष्ट्वा पाण्डवैर्वाहिनीं रणे। व्यावृत्य चक्षुषी कोपात् भारद्वाजोऽन्ववैक्षत ॥ ७ ॥ स तीव्रकोपमास्थाय रथे समरदुर्म्मदः। व्यधमत् पाण्डवानीकमभ्राणीव सदागतिः ॥ ८ ॥ रथानश्वान्नरान्नागानभिधावंस्ततस्ततः। चचार मत्तवद्द्रोणो वृद्धोऽपि तरुणो यथा ॥ ९ ॥ तस्य शोणितदिग्धाङ्गाः शोणास्ते वातरंहसः। आजानेया हया राजन्नविभ्रान्ताः श्रियं दधुः ॥ १० ॥ तमन्तकमिव क्रुद्धमापतन्तं यतव्रतम्। दृष्ट्वा सम्प्राद्रवन् योधाः पाण्डवस्य ततस्ततः ॥ ११ ॥ तेषां प्रद्रवतां भीमः पुनरावर्त्ततामपि। वीक्षतां तिष्ठतां चासीच्छब्दः परमदारुणः ॥ १२ ॥ शूराणां हर्षजननो भीरूणां भयवर्द्धनः। द्यावापृथिव्योर्विवरं पूरयामास सर्वतः ॥ १३ ॥ ततः पुनरपि द्रोणो नाम विश्रावयन् युधि। अकरोद्रौद्रमात्मानं किरन् शरशतैः परान् ॥ १४ ॥ स तथा तेष्वनीकेषु पाण्डुपुत्रस्य मारिष। कालवद्व्यचरद्द्रोणो युवेव स्थविरो बली ॥ १५ ॥ उत्कृत्य च शिरांस्युग्रो बाहूनपि सभूषणान्। कृत्वा शून्यान् रथोपस्थानुदक्रोशन्महारथान् ॥ २६ ॥ तस्य हर्षप्रणादेन बाणवेगेन वा विभो। प्राकम्पन्त रणे योधा गावः शीतार्द्दिता इव ॥ १७ ॥ द्रोणस्य

रथघोषेण मौर्वीनिष्पेषणेन च । धनुःशब्देन चाकाशे शब्दः
समभवन्महान् ॥ १८ ॥ अथास्य धनुषो बाणा निश्चरन्तः सह
स्रशः । व्याप्य सर्वा दिशः पेतुर्नागाश्वरथपत्तिषु ॥ १९ ॥ तं
कार्मुकमहावेगमस्त्रज्वलितपावकम् । द्रोणमासादयाञ्चक्रुः पा
ञ्चाला पाण्डवैः सह ॥ २० ॥ तान् सकुञ्जरपत्त्यश्वान् प्राहि
णोद्यमसादनम् । चक्रेऽचिरेण च द्रोणो महीं शोणितकर्दमाम्

समरथो राजन् कृत्वा कर्म सुदुष्करम् । ततो निनादो भूतानामाकाशे समजायत ॥ ३३ ॥ सैन्यानाञ्च ततो राजन्नाचार्य्ये निहते युधि । द्यां धरां खं दिशो वापि प्रदिशश्चानुनादयन् ॥ ३४ ॥ अहो धिगिति भूतानां शब्दः समभवद्भृशम् । देवताः पितरश्चैव पूर्व्वे ये चास्य बान्धवाः ॥ ३५ ॥ ददृशुर्निहतं तत्र भारद्वाजं महारथम् । पाण्डवास्तु जयं लब्ध्वा सिंहनादान् प्रचक्रिरे । सिंहनादेन महता समकम्पत मेदिनी ॥ ३६ ॥

इति द्रोणपर्व्वणि द्रोणाभिषेकपर्व्वणि द्रोणवधश्रवणे अष्टमोऽध्यायः ॥ ८ ॥

---

धृतराष्ट्र उवाच । किं कुर्व्वाणं रणे द्रोणं जघ्नुः पाण्डवसृञ्जयाः । तथा निपुणमस्त्रेषु सर्व्वशस्त्रभृतामपि ॥ १ ॥ रथभङ्गो बभूवास्य धनुर्व्वाशीर्य्यतास्यतः । प्रमत्तो वाभवद्द्रोणस्ततो मृत्युमुपेयिवान् ॥ २ ॥ कथन्नु पार्षतस्तात शत्रुभिर्दुष्प्रधर्षणम् । किरन्तमिषुसङ्घातान् रुक्मपुङ्खाननेकशः ॥ ३ ॥ क्षिप्रहस्तं द्विजश्रेष्ठं कृतिनं चित्रयोधिनम् । दूरेषुपातिनं दान्तमस्त्रयुद्धेषु पारगम् ॥ ४ ॥ पाञ्चालपुत्रो न्यवधीद्दिव्यास्त्रधरमच्युतम् । कुर्व्वाणं दारुणं कर्म रणे यत्तं महारथम् ॥ ५ ॥ व्यक्तं हि दैवं बलवत् पौरुषादिति मे मतिः । यद्द्रोणो निहतः शूरः पार्षतेन महात्मना ॥ ६ ॥ अस्त्रं चतुर्विधं वीरे यस्मिन्नासीत् प्रतिष्ठितम् । तमिष्वस्त्रधराचार्य्यं द्रोणं शंससि मे हतम् ॥ ७ ॥ श्रुत्वा हतं रुक्मरथं वैयाघ्रपरिवारितम् । जातरूपपरिष्कारं नाद्य शोकमुपानुदे ॥ ८ ॥ न नूनं परदुःखेन म्रियते कोऽपि सञ्जय । यत्र द्रोणमहं श्रुत्वा हतं जीवामि मन्दभाक् ॥ ९ ॥ दैवमेव परं मन्ये नन्वनर्थं हि पौरुषम् । अश्मसारमयं नूनं हृदयं सुदृढं मम ॥ १० ॥

यच्छ्रुत्वा निहतं द्रोणं शतधा यन्न दीर्यते। ब्राह्मे दैवे तथेष्वस्त्रे यमुपासन् गुणार्थिनः॥ ११॥ ब्राह्मणा राजपुत्राश्च स कथं मृत्युना हृतः। शोषणं सागरस्येव मेरोरिव विसर्पणम्॥ १२॥ पतनं भास्करस्येव न मृष्ये द्रोणपातनम्। दृप्तानां प्रतिषेद्धासीद्धार्मिकाणाञ्च रक्षिता॥ १३॥ योऽत्याक्षीत् कृपणः स्वार्थे प्राणानपि परन्तप। मन्दानां मम पुत्राणां जयाशा यस्य विक्रमे॥ १४॥ बृहस्पत्युशनस्तुल्यो बुद्ध्या स निहतः कथम्। ते च शोणा बृहन्तोऽश्वाश्छन्ना जालैर्हिरण्मयैः॥ १५॥ रथे वातजवा युक्ताः सर्वशस्त्रातिगा रणे। बलिनो ह्रेषिणो दान्ताः सैन्धवाः साधुवाहिनः॥ १६॥ दृढाः सङ्ग्राममध्येषु कच्चिदासन् न विह्वलाः। करिणां बृंहतां युद्धे शङ्खदुन्दुभिनिस्वने॥ १७॥ ज्याक्षेपशरवर्षाणां शस्त्राणाञ्च सहिष्णवः। आशंसन्तः परान् जेतुं जितश्वासा जितव्यथाः॥ १८॥ हयाः पराजिताः शीघ्रा भारद्वाजरथोद्वहाः। ते स्म रुक्मरथे युक्ता नरवीरसमाहिताः॥ १९॥ कथं नाभ्यतरंस्तात पाण्डवानामनीकिनीम्। जातरूपपरिष्कारमास्थाय रथमुत्तमम्॥ २०॥ भारद्वाजः किमकरोत् शूरः सङ्क्रन्दनो युधि। विद्यां यस्योपजीवन्ति सर्वलोकधनुर्धराः॥ २१॥ स सत्यसन्धो बलवान् द्रोणः किमकरोद्युधि। दिवि शक्रमिव श्रेष्ठं महामात्रं धनुर्भृताम्॥ २२॥ के नु तं रौद्रकर्माणं युद्धे प्रत्युद्ययू रथाः। ननु रुक्मरथं दृष्ट्वा प्राद्रवन्ति स्म पाण्डवाः॥ २३॥ दिव्यमस्त्रं विकुर्वाणं रणे तस्मिन्महाबलम्। उताहो सर्वसैन्येन धर्मराजः सहानुजः॥ २४॥ पाञ्चाल्यप्रग्रहो द्रोणं सर्वतः पर्यवारयत्। नूनमावारयत् पार्थो रथिनोऽन्यानजिह्मगैः॥ २५॥ ततो द्रोणं समारोहत् पार्षतः पापकर्मकृत्। न ह्यन्यं परिपश्यामि बधे कञ्चन शुष्मिणः॥ २६॥

धृष्टद्युम्नाद्धते रौद्रात् पाल्यमानात् किरीटिना। तैर्वृतं सर्वतः

शूरैः पाञ्चाल्यापसदस्तत ॥ २७ ॥ केकयैश्चेदिकारूषैर्मत्स्यै-
रन्यैश्च भूमिपैः। व्याकुलीकृतमाचार्य्यं पिपीलैरुरगं यथा ॥ २८ ॥
कर्मण्यसुकरे सक्तं जघानेति मतिर्मम। योऽधीत्य चतुरो वेदान्
साङ्गानाख्यानपञ्चमान् ॥ २९ ॥ ब्राह्मणानां प्रतिष्ठासीत् स्रोतसा-
मिव सागरः। क्षत्रञ्च ब्रह्म चैवेह योऽभ्यतिष्ठत् परन्तपः ॥ ३० ॥
स कथं ब्राह्मणो वृद्धः शस्त्रेण वधमाप्तवान्। अमर्षणो मर्षित-
वान् क्लिश्यमानः सदा मया ॥ ३१ ॥ अनर्हमाणः कौन्तेयान्
कर्मणस्तस्य तत्फलम्। यस्य कर्मानुजीवन्ति लोके सर्वधनुर्भृतः
॥ ३२ ॥ स सत्यसन्धः सुकृती श्रीकामैर्निहतः कथम्। दिवि
शक्र इव श्रेष्ठो महासत्त्वो महाबलः ॥ ३३ ॥ स कथं निहतः
पार्थैः क्षुद्रमत्स्यैर्यथा तिमिः। क्षिप्रहस्तश्च बलवान् दृढधन्वारि-
मर्द्दनः ॥ ३४ ॥ न यस्य विजयाकाङ्क्षी विषयं प्राप्य जीवति।
यन्द्वौ न जहतः शब्दौ जीवमानं कदाचन ॥ ३५ ॥ ब्राह्मश्च वेद-
कामानाञ्ज्याघोषश्च धनुष्मताम्। अदीनं पुरुषव्याघ्रं ह्रीमन्त-
मपराजितम् ॥ ३६ ॥ नाहं मृष्ये हतं द्रोणं सिंहद्विरदविक्रमम्।
कथं सञ्जय दुर्द्धर्षमनाधृष्ययशोबलम् ॥ ३७ ॥ पश्यतां पुरुषेन्द्राणां
समरे पार्षतोऽवधीत्। के पुरस्तादयुध्यन्त रक्षन्तो द्रोणमन्ति-
कात् ॥ ३८ ॥ के तु पश्चादवर्त्तन्त गच्छन्तो दुर्लभां गतिम्।
केऽरक्षन् दक्षिणं चक्रं सव्यं के च महात्मनः ॥ ३९ ॥ पुरस्तात्
के च वीरस्य युध्यमानस्य संयुगे। के च तत्र तनूंस्त्यक्त्वा प्रतीपं
मृत्युमाव्रजन् ॥ ४० ॥ द्रोणस्य समरे वीराः केऽकुर्वन्त परां
गतिम्। कच्चिन्नैनं भयान्मन्दाः क्षत्रिया व्यजहन् रणे ॥ ४१ ॥
रक्षितारस्ततः शून्ये कच्चिन्नैको हतः परैः। न स पृष्ठमवज्ञासा-
द्रणे द्रोणः प्रदर्शयेत् ॥ ४२ ॥ परामप्यापदं प्राप्य कथं स
निहतः परैः। एतदार्य्येण कर्त्तव्यं कृच्छ्रास्वापत्सु सञ्जय ॥४३॥
पराक्रमेद्यथा शक्त्या तच्च तस्मिन् प्रतिष्ठितम्। मुह्यते मे मन-

सूत कथा तावन्निवर्त्यताम्। भूयस्तु लब्धसंज्ञस्त्वां परिपृच्छामि सञ्जय ॥ ४४ ॥

इति द्रोणपर्वणि द्रोणाभिषेकपर्वणि धृतराष्ट्रशोके नवमोऽध्यायः ॥ ९ ॥

---

वैशम्पायन उवाच। एवं पृष्ट्वा सूतपुत्रं हृच्छोकेनार्दितो भृशम्। जये निराशः पुत्राणां धृतराष्ट्रोऽपतत्क्षितौ ॥ १ ॥ तं विसंज्ञं निपतितं सिषिचुः परिचारकाः। जलेनात्यर्थशीतेन वीजन्तः पुण्यगन्धिना ॥ २ ॥ पतितं चैनमालोक्य समन्ताद्भरतस्त्रियः। परिवव्रुर्महाराजमस्पृशंश्चैव पाणिभिः ॥ ३ ॥ उत्थाप्य चैनं शनकैराजानं पृथिवीतलात्। आसनं प्रापयामासुर्बाष्पकण्ठ्यो वराङ्गनाः ॥ ४ ॥ आसनं प्राप्य राजा तु मूर्च्छयाभिपरिप्लुतः। निश्चेष्टोऽतिष्ठत तदा वीज्यमानः समन्ततः ॥ ५ ॥ स लब्ध्वा शनकैः संज्ञां वेपमानो महीपतिः। पुनर्गावल्गणिं सूतं पर्यपृच्छद्यथातथम् ॥ ६ ॥

धृतराष्ट्र उवाच। यः स उद्यन्निवादित्यो ज्योतिषा प्रणुदंस्तमः। अजातशत्रुरायान्तं कस्तं द्रोणादवारयत् ॥ ७ ॥ प्रभिन्नमिव मातङ्गं यथा क्रुद्धं तरस्विनम्। प्रसन्नवदनं दृष्ट्वा प्रतिद्विरदगामिनम् ॥ ८ ॥ वाशितासङ्गमे यद्वदजय्यं प्रतियूथपैः। निजघान रणे वीरान् वीरः पुरुषसत्तमः ॥ ९ ॥ यो ह्येको हि महाबाहुर्निर्दहेद्घोरचक्षुषा। कृत्स्नं दुर्योधनबलं धृतिमान् सत्यसङ्गरः ॥ १० ॥ चक्षुर्हणं जये सक्तमिष्वासधरमच्युतम्। दान्तं बहुमतं लोके के शूराः समवारयन् ॥ ११ ॥ के दुष्प्रधर्षं राजानमिष्वासधरमच्युतम्। समासेदुर्नरव्याघ्रं कौन्तेयं तत्र मामकाः ॥ १२ ॥ तरसैवाभिपद्याथ यो वै द्रोणमुपाद्रवत्।

स करोति महत्कर्म्म प्रवृद्धो वै महाबलः ॥ १३ ॥ महाकायो
महोत्साहो नागायुतसमो बले । तं भीमसेनमायान्तं के शूराः
पर्य्यवारयन् ॥ १४ ॥ यदायाज्जलदप्रख्यो रथः परमवीर्य्यवान् ।
पर्ज्जन्य इव बीभत्सुस्तुमुलामशनीमिव ॥ १५ ॥ विसृजन् शर-
जालानि वर्षाणि मघवानिव । अवस्फूर्ज्जन् दिशः सर्व्वास्तलनेमि-
स्वनेन च ॥ १६ ॥ चापविद्युत्प्रभो घोरो रथगुल्मबलाहकः ।
नेमिघोषस्तनितवान् शरशब्दातिबन्धुरः ॥ १७ ॥ रोषनिर्जित-
जीमूतो मनोऽभिप्रायशीघ्रगः । मर्म्मातिगो बाणधारस्तुमुलः शोणि-
तोदकः ॥ १८ ॥ संप्लावयन् दिशः सर्व्वा मानवैरन्तको यथा ।
भीमनिस्वनितो रौद्रो दुर्य्योधनपुरोगमान् ॥ १९ ॥ युद्धेऽभ्य-
षिञ्चद्विजयो गार्द्धपत्रैः शिलाशितैः । गाण्डीवं धारयन् धीमान्
कीदृशं वो मनस्तदा ॥ २० ॥ हनुमत्प्रवरमाधायां कुर्व्वन् कपिवर-
ध्वजः । यदायात् ज्वयमभीष्णुस्तदा पार्थं समीक्ष्य तम् ॥ २१ ॥
कच्चिद्गाण्डीवशब्देन प्रणाश्य तव वै बलम् । यद्वः स भैरवं कुर्व्व-
न्नर्ज्जुनो भृशमभ्ययात् ॥ २२ ॥ कच्चिन्नापानुदद्बाणान्निषुभिर्व्वो
धनञ्जयः । वातो मेघानिवाविध्यत् प्रवान्शरवनानि च ॥ २३ ॥
को हि गाण्डीवधन्वानं रणे सोढुं नरोऽर्हति । यमुपश्रुत्य सेनाग्रे
जनः सर्व्वो विदीर्य्यते ॥ २४ ॥ यत्सेनाः समकम्पन्त यद्वीरा-
नस्पृशद्भयम् । के तत्र नाजहुर्द्रोणं के क्षुद्राः प्राद्रवन् भयात्
॥ २५ ॥ के वा तत्र तनूंस्त्यक्त्वा प्रतीपं मृत्युमाव्रजन् । अमानु-
षाणां जेतारं युद्धेष्वपि धनञ्जयम् ॥ २६ ॥ न च वेगं सिताश्वस्य
विसहिष्यन्ति मामकाः । गाण्डीवस्य च निर्घोषं प्रावृड्जलद-
निस्वनम् ॥ २७ ॥ विष्वक्सेनो यस्य यन्ता यस्य योद्धा धन-
ञ्जयः । अशक्यः स रथो जेतुं मन्ये देवासुरैरपि ॥ २८ ॥
सुकुमारो युवा शूरो दर्शनीयश्च पाण्डवः । मेधावी निपुणो
धीमान् युधि सत्यपराक्रमः ॥ २९ ॥ आरावं विपुलं कुर्व्वन्

व्ययन् सर्वसैनिकान्। महायान्लकुलो द्रोण के शूरा पर्य्य वारयन् ॥ ३० ॥ आयोविय इव क्रुद्ध सहदेवो महाप्रयात। कद्न करिष्यत्क्रवुणा प्रवेनाथवा दुर्ज्जयी युधि ॥ ३१ ॥ आर्य्य व्रतममोघञ्च छोमन्तमपराजितम्। सहदेव समायान्त के शूरा पर्य्यवारयन् । ३२ ॥ यस्तु सौवीरराजस्य प्रमथ्य महतीं चमूम्। आदत्त महिषी भोजा काम्या सर्वाङ्गशोभनाम् ॥३३। सत्य धृतिय शौर्य्यय ब्रह्मचर्य्यञ्च केवलम। सर्वाणि युयुधाने च नित्यानि पुरुषर्षभे ॥ ३४ ॥ बालन सत्यकर्माणमदीनमपराजितम्। वासुदेवसम युद्धे वासुदेवानन्तरम ॥ ३५ ॥ धनञ्जयोपदेशेन श्रेष्ठमिष्वस्त्रकर्मणि। पार्थेन सममस्त्रेषु कस्त द्रोणादवारयत ॥ ३६ ॥ वृष्णीना प्रवर वीर शूर सर्वधनुष्मताम्। रामेण सममस्त्रेषु यशसा विक्रमेण च ॥ ३७ ॥ सत्य धृतिर्मति शौर्य्य ब्राह्मञ्च चास्त्रमनुत्तमम्। सात्वते तानि सर्वाणि त्रैलोक्यमिव केशवे ॥ ३८ ॥ तदेव गुणसम्पन्न दुर्वारमपि दैवतै। समासाद्य महेष्वास के शूरा पर्य्यवारयन् ॥ ३९ ॥ पाञ्चालेषूत्तम वीरमुत्तमाभिजनाप्रयम्। नित्यमुत्तमकर्माणमुत्तमौजसमाहवे॥४०॥ युक्त धनञ्जयहिते ममानर्थार्थमुत्थितम्। यमवैश्रवणादित्यमहेन्द्र वरुणोपमम् ॥ ४१ ॥ महारथ समाख्यात द्रोणायोद्यतमाहवे। त्यजन्त तुमुले प्राणान् के शूरा समवारयन् ॥ ४२ ॥ एकोऽप सृत्य चेदिभ्य पाण्डवान् य समाश्रित। धृष्टकेतु समायान्त द्रोण कस्त न्यवारयत ॥ ४३ ॥ योऽवधीत केतुमान् वीरो राजपुत्र दुरासदम्। अपक्रान्त गिरिद्वारे द्रोणात कस्तमवा रायत। ४४ ॥ स्त्रीपुसयोर्नरव्याघ्रो य सवेद गुणागुणान्। शिखण्डिन याज्ञसेनमम्लानमनस युधि ॥ ४५ ॥ देवव्रतस्य समरे हेतु मृत्योर्महात्मन । द्रोणयाभिमुख यान्त के वीरा पर्य्यवारयन् ॥ ४६ ॥ वृष्णीना प्रवर शूर वर सर्वधनुष्मताम्।

यस्मिन्नभ्यधिका वीरे गुणाः सर्व्वे धनञ्जयात् ॥ ४७ ॥ यस्या-स्त्राणि सत्यञ्च ब्रह्मचर्य्यञ्च सर्व्वदा। वासुदेवसमं वीर्य्ये धन-ञ्जयसमं बले ॥ ४८ ॥ तेजसादित्यसदृशं बृहस्पतिसमं मतौ। अभिमन्युं महात्मानं व्यात्ताननमिवान्तकम् ॥ ४९ ॥ द्रोणायाभि-मुखं यान्तं के शूराः समवारयन्। तरुणस्तरुणप्रज्ञः सौभद्रः परवीरहा ॥ ५० ॥ यदाभ्यधावद्दै द्रोणं तदासीद्वो मनः कथम्। द्रौपदेया नरव्याघ्राः समुद्रमिव सिन्धवः ॥ ५१ ॥ यद्द्रोणमाद्रवत सङ्ख्ये के शूरास्तानवारयन्। ये ते द्वादशवर्षाणि क्रीड़ामुत्-सृज्य बालकाः ॥ ५२ ॥ अस्त्रार्थमवसन् भीष्मे बिभ्रतो व्रतमुत्त-मम्। क्षत्रञ्जयः क्षत्रदेवः क्षत्रवर्म्मा च मानदः ॥ ५३ ॥ धृष्ट-द्युम्नात्मजा वीराः के तान् द्रोणादवारयन्। शताद्विशिष्टं यं युद्धे समन्यन्त वृष्णयः ॥ ५४ ॥ चेकितानं महेष्वासं कस्तं द्रोणादवारयत। भ्रातरः पञ्च केकया धार्म्मिकाः सत्यविक्रमाः ॥ ५५ ॥ इन्द्रगोपकवर्णाभा रक्तवर्म्मायुधध्वजाः। मातृष्वसुः सुता वीराः पाण्डवानां जयार्थिनः ॥ ५६ ॥ तान् द्रोणं हन्तु-मायातान् के वीराः पर्य्यवारयन्। य योधयन्तो राजानो नाज-यन् वारणावते ॥ ५७ ॥ षण्मासानपि संरब्धा जिघांसन्तो युधां पतिम्। धनुष्मतां वरं शूरं सत्यसन्धं महाबलम् ॥ ५८ ॥ द्रोणात् कस्तं नरव्याघ्रं युयुत्सुं पर्य्यवारयत्। य पुत्रं काशि-राजस्य वाराणस्यां महारथम् ॥ ५९ ॥ समरे स्त्रीषु गृध्यन्तं भल्लेनापाहरद्रथात्। धृष्टद्युम्नं महेष्वासं पार्थानां मन्त्रधारिणम् ॥ ६० ॥ युक्तं दुर्य्योधनानर्थे सृष्टं द्रोणवधाय च। निर्द्दहन्तं रणे योधान् दारयन्तञ्च सर्व्वशः ॥ ६१ ॥ द्रोणाभिमुखमायान्तं के शूराः पर्य्यवारयन्। उत्सङ्ग इव संवृद्धं द्रुपदस्यास्त्रवित्तमम् ॥ ६२ ॥ शिखण्डिनं ब्रह्मगुप्तं के वा द्रोणादवारयन्। य इमां पृथिवीं कृत्स्नां चर्म्मवत् परिवेष्टयेत् ॥ ६३ ॥ महता रथघोषेण

सुखगारिघ्नो महारथ । दशाश्वमेधानाजह्रे स्वन्नपानान् सुद
क्षिणान् ॥ ६४ ॥ निरर्गलान् सर्वमेधान् पुत्रवत् पालयन् प्रजा ।
गङ्गास्रोतसु यावत्य सिकताश्चाप्यधिपत ॥ ६५ ॥ तावतीर्गा ददौ
वीर उशीनरसुतोऽध्वरे । न पूर्वे नापरे चक्रुरिद केचन मानवा
॥ ६६ ॥ इतीद चक्रुर्देवा कृते कर्मणि दुष्करे । पश्यामस्त्रिषु
लोकेषु न त संस्थास्नुचारिषु ॥ ६७ ॥ जात वापि जनिष्यन्त
द्वितीयञ्चापि साम्प्रतम् । अन्यमौशीनराच्छैव्याद्धुरोवोढारमित्युत
॥ ६८ ॥ गतिं यस्य न यास्यन्ति मानुषा लोकवासिन । तस्य
नप्तारमायान्त शैब्य क समवारयत् ॥ ६९ ॥ विराटस्य रथा
नीक मत्स्यस्यामित्रघातिन । प्रेप्सन्तं समरे द्रोण के वीरा
पर्यवारयन् ॥ ७० ॥ सद्यो वृकोदराज्जातो महाबलपराक्रम ।
मायावी राक्षसो वीरो यस्मान्मम महद्भयम् ॥ ७१ ॥ पार्थाना
जयकाम त पुत्राणा मम कण्टकम् । घटोत्कच महाकाय कस्त
द्रोणादवारयत् ॥ ७२ ॥ एते चान्ये च बहवो येषामर्थाय सञ्जय ।
त्यक्तार सयुगे प्राणान् किन्तेषामजित युधि ॥ ७३ ॥ येषाञ्च
पुरुषव्याघ्र शार्ङ्गधन्वा व्यपाश्रय । हितार्थी चापि पार्थाना
कथ तेषा पराजय ॥ ७४ ॥ लोकाना गुरुरत्यर्थं लोकनाथ
सनातन । नारायणो रणे नाथो वृष्णा दिव्यात्मवान् प्रभु
॥ ७५ ॥ यस्य दिव्यानि कर्माणि प्रवदन्ति मनीषिण । तान्यह
कीर्त्तयिष्यामि भक्त्या स्थैर्यार्थमात्मन ॥ ७६ ॥

इति द्रोणपर्वणि द्रोणाभिषेकपर्वणि धृतराष्ट्रवाक्ये
दशमोऽध्याय ॥ १० ॥

---

धृतराष्ट्र उवाच । शृणु दिव्यानि कर्माणि वासुदेवस्य सञ्जय ।
कृतवान् यानि गोविन्दो यथा नान्य पुमान् क्वचित ॥ १ ॥
संवर्द्धता गोपकुले बालेनैव महात्मना । विख्यापित बल बाहो

त्रिषु लोकेषु सञ्जय ॥ २ ॥ उच्चैःश्रवस्तुल्यबलं वायुवेगसमं जवे। जघान हयराजानं यमुनावनवासिनम् ॥ ३ ॥ दानवं घोरकर्म्माणं गवां मृत्युमिवोत्थितम्। वृषरूपधरं बाल्ये भुजाभ्यां निजघान ह ॥ ४ ॥ प्रलम्बं नरकं जम्भं पीठं वापि महासुरम्। मुरञ्चामरसङ्काशमवधीत् पुष्करेक्षणः ॥ ५ ॥ तथा कंसो महातेजा जरासन्धेन पालितः। विक्रमेणैव कृष्णेन सगणः पातितो रणे ॥ ६ ॥ सुनामा रणविक्रान्तः समग्राक्षौहिणीपतिः। भोजराजस्य मध्यस्थो भ्राता कंसस्य वीर्य्यवान् ॥ ७ ॥ बलदेवद्वितीयेन कृष्णेनामित्रघातिना। तरस्वी समरे दग्धः ससैन्यः शूरसेनराट् ॥ ८ ॥ दुर्वासा नाम विप्रर्षिस्तथा परमकोपनः। आराधितः सदारेण स चास्मै प्रददौ वरान् ॥ ९ ॥ तथा गान्धारराजस्य सुतां वीरः स्वयम्वरे। निर्जित्य पृथिवीपालानावहत् पुष्करेक्षणः ॥ १० ॥ अमृष्यमाणा राजानो यस्य जात्या हया इव। रथे वैवाहिके युक्ताः प्रतोदेन कृतव्रणाः ॥ ११ ॥ जरासन्धं महाबाहुमुपायेन जनार्द्दनः। परेण घातयामास समग्राक्षौहिणीपतिम् ॥ १२ ॥ चेदिराजञ्च विक्रान्तं राजसेनापतिं बली। अर्घे विवदमानञ्च जघान पशुवत्तदा ॥ १३ ॥ सौभं दैत्यपुरं खस्थं शाल्वगुप्तं दुरासदम्। समुद्रकुक्षौ विक्रम्य पातयामास माधवः ॥ १४ ॥ अङ्गान् वङ्गान् कलिङ्गांश्च मागधान् काशिकोसलान्। वात्स्यगार्ग्यकरूषांश्च पौण्ड्रांश्चाप्यजयद्रणे ॥ १५ ॥ आवन्त्यान् दाक्षिणात्यांश्च पार्वतीयान् दशेरकान्। काश्मीरकानौरसिकान् पिशाचांश्च समुद्गलान् ॥ १६ ॥ काम्बोजान् वाटधानांश्च चोलान् पाण्ड्यांश्च सञ्जय। त्रिगर्त्तान्मालवांश्चैव दरदांश्च सुदुर्ज्जयान् ॥ १७ ॥ नानादिग्भ्यश्च सम्प्राप्तान् खशांश्चैव शकांस्तथा। जितवान् पुण्डरीकाक्षो यवनञ्च सहानुगम् ॥ १८ ॥ प्रविश्य मकरावासं यादोभिरभिसंवृतम्। जिगाय वरुणं सङ्ख्ये सलिलान्त

मुखप्रापिणो महारथः । दशाश्वमेधानाजह्रे स्वन्नपानान् सुदक्षिणान् ॥ ६४ ॥ निरर्गलान् सर्वमेधान् पुत्रवत् पालयन् प्रजाः । गङ्गास्रोतःसु यावत्यः सिकताश्चाप्यशेषतः ॥ ६५ ॥ तावतीर्गा ददौ वीर उशीनरसुतोऽध्वरे । न पूर्वे नापरे चक्रुरिदं केचन मानवाः ॥ ६६ ॥ इतीदं चक्रुर्देवाः कृते कर्मणि दुष्करे । पश्यामस्त्रिषु लोकेषु न तं संस्थास्नुचारिषु ॥ ६७ ॥ जातं वापि जनिष्यन्तं द्वितीयञ्चापि साम्प्रतम् । अन्यमौशीनराच्छैव्याद्धुरो वोढारमित्युत ॥ ६८ ॥ गतिं यस्य न यास्यन्ति मानुषा लोकवासिनः । तस्य नप्तारमायान्तं शैव्यं कः समवारयत् ॥ ६९ ॥ विराटस्य रथानीकं मत्स्यस्यामित्रघातिनः । प्रेप्सन्तं समरे द्रोणं के वीराः पर्यवारयन् ॥ ७० ॥ सद्यो वृकोदराज्जातो महाबलपराक्रमः । मायावी राक्षसो वीरो यस्मान्मम महद्भयम् ॥ ७१ ॥ पार्थानां जयकामं तं पुत्राणां मम कण्टकम् । घटोत्कचं महाकायं कस्तं द्रोणादवारयत् ॥ ७२ ॥ एते चान्ये च बहवो येषामर्थाय सञ्जय । त्यक्तारः संयुगे प्राणान् किन्तेषामजितं युधि ॥ ७३ ॥ येषाञ्च पुरुषव्याघ्रः शार्ङ्गधन्वा व्यपाश्रयः । हितार्थी चापि पार्थानां कथं तेषां पराजयः ॥ ७४ ॥ लोकानां गुरुरत्यर्थं लोकनाथः सनातनः । नारायणो रणे नाथो नृणां दिव्यात्मवान् प्रभुः ॥ ७५ ॥ यस्य दिव्यानि कर्माणि प्रवदन्ति मनीषिणः । तान्यहं कीर्त्तयिष्यामि भक्त्या स्थैर्यार्थमात्मनः ॥ ७६ ॥

इति द्रोणपर्वणि द्रोणाभिषेकपर्वणि धृतराष्ट्रवाक्ये दशमोऽध्यायः ॥ १० ॥

स्त्रिषु लोकेषु सञ्जय ॥ २ ॥ उच्चैःश्रवस्तुल्यबलं वायुवेगसमं जवे । जघान हयराजानं यमुनावनवासिनम् ॥ ३ ॥ दानवं घोरकर्म्माणं गवां मृत्युमिवोत्थितम् । वृषरूपधरं बाल्ये भुजाभ्यां निजघान ह ॥ ४ ॥ प्रलम्बं नरकं जम्भं पीठं वापि महासुरम् । मुरञ्चामरसङ्काशमवधीत् पुष्करेक्षणः ॥ ५ ॥ तथा कंसो महातेजा जरासन्धेन पालितः । विक्रमेणैव कृष्णेन सगणः पातितो रणे ॥ ६ ॥ सुनामा रणविक्रान्तः समग्राक्षौहिणीपतिः । भोजराजस्य मध्यस्थो भ्राता कंसस्य वीर्य्यवान् ॥ ७ ॥ बलदेवद्वितीयेन कृष्णेनामित्रघातिना । तरस्वी समरे दग्धः ससैन्यः शूरसेनराट् ॥ ८ ॥ दुर्वासा नाम विप्रर्षिस्तथा परमकोपनः । आराधितः सदारेण स चास्मै प्रददौ वरान् ॥ ९ ॥ तथा गान्धारराजस्य सुतां वीरः स्वयम्बरे । निर्ज्जित्य पृथिवीपालानावहत् पुष्करेक्षणः ॥ १० ॥ अमृष्यमाणा राजानो यस्य जात्या हया इव । रथे वैवाहिके युक्ताः प्रतोदेन कृतव्रणाः ॥ ११ ॥ जरासन्धं महाबाहुमुपायेन जनार्द्दनः । परेण घातयामास समग्राक्षौहिणीपतिम् ॥ १२ ॥ चेदिराजञ्च विक्रान्तं राजसेनापतिं बली । अर्घे विवदमानञ्च जघान पशुवत्तदा ॥ १३ ॥ सौभं दैत्यपुरं खस्थं शाल्वगुप्तं दुरासदम् । समुद्रकुक्षौ विक्रम्य पातयामास माधवः ॥ १४ ॥ अङ्गान् वङ्गान् कलिङ्गांश्च मागधान् काशिकोशलान् । वात्स्यगार्ग्यकरूषांश्च पौण्ड्रांश्चाप्यजयद्रणे ॥ १५ ॥ आवन्त्यान् दाक्षिणात्यांश्च पार्व्वतीयान् दशेरकान् । काश्मीरकानौरसिकान् पिशाचांश्च समुद्गलान् ॥ १६ ॥ काम्बोजान् वाटधानांश्च चोलान् पाण्ड्यांश्च सञ्जय । त्रिगर्त्तान्मालवांश्चैव दरदांश्च सुदुर्ज्जयान् ॥ १७ ॥ नानादिग्भ्यश्च सम्प्राप्तान् खशांश्चैव शकांस्तथा । जितवान् पुण्डरीकाक्षो यवनञ्च सहानुगम् ॥ १८ ॥ प्रविश्य मकरावासं यादोभिरभिसंवृतम् । जिगाय वरुणं सङ्ख्ये सलिलान्त

गतं पुरा ॥ १९ ॥ युधि पञ्चजनं हत्वा पातालतलवासिनम् ।
पाञ्चजन्यं हृषीकेशो दिव्यं शङ्खमवाप्तवान् ॥ २० ॥ खाण्डवे
पार्थसहितस्तोषयित्वा हुताशनम् । आग्नेयमस्त्रं दुर्द्धर्षं चक्रं लेभे
महाबल ॥ २१ ॥ वैनतेयं समारुह्य त्रासयित्वामरावतीम् ।
महेन्द्रभवनाद्वीर पारिजातमुपानयत् ॥ २२ ॥ तच्च मर्षितवान्
शक्रो जानंस्तस्य पराक्रमम् । राज्ञां चाप्यजितं कञ्चित् कृष्णेनेह
न शुश्रुम ॥ २३ ॥ यच्च तन्महदाश्चर्य्यं सभायां मम सञ्जय ।
कृतवान् पुण्डरीकाक्ष कस्तदन्य इहार्हति ॥ २४ ॥ यच्च भक्त्या
प्रपन्नोऽहमद्राक्षं कृष्णमीश्वरम् । तन्मे सुविदितं सर्वं प्रत्यक्षमिव
चागमत् ॥ २५ ॥ नान्तं विक्रमयुक्तस्य बुद्ध्या युक्तस्य वा पुन ।
कर्म्मणां शक्यते गन्तुं हृषीकेशस्य सञ्जय ॥ २६ ॥ तथा गदश्च
साम्बश्च प्रद्युम्नोऽथ विदूरथ । अगावहोऽनिरुद्धश्च चारुदेष्ण
महारथ ॥ २७ ॥ उल्मुको निशठश्चैव झिल्लीबभ्रुश्च वीर्य्यवान् ।
पृथुश्च विपृथुश्चैव शमीकोऽथारिमेजय ॥ २८ ॥ एतेऽन्ये बलवन्तश्च
वृष्णिवीरा प्रहारिण । कथञ्चित् पाण्डवानीकं श्रयेयु समरे
स्थिता ॥ २९ ॥ आहूता वृष्णिवीरेण केशवेन महात्मना । तत
संशयितं सर्वं भवेदिति मतिर्मम ॥ ३० ॥ नागायुतबलो वीर
कैलासशिखरोपम । वनमाली हली रामस्तत्र यत्र जनार्द्दन
॥ ३१ ॥ यमाहु सर्वपितरं वासुदेवं द्विजातय । अपि वा
ह्येष पाण्डूनां योत्स्यतेऽर्थाय सञ्जय ॥ ३२ ॥ स यदा तात
सन्नह्येत पाण्डवार्थाय सञ्जय । न तदा प्रतियोद्धा भविता
तस्य कश्चन ॥ ३३ ॥ यदि स्म कुरव सर्वे जयेयुर्नाम पाण्डवान् ।
वार्ष्णेयोऽर्थाय तेषां वै गृह्णीयाच्छस्त्रमुत्तमम् ॥ ३४ ॥ तत
सर्वान्नरव्याघ्रो हत्वा नरपतीन् रणे । कौरवांश्च महाबाहु
कुन्त्यै दद्यात् स मेदिनीम् ॥ ३५ ॥ यस्य यन्ता हृषीकेशो योद्धा
यस्य धनञ्जय । रथस्य तस्य क संख्ये प्रत्यनीको भवेद्रथ

॥ ३६ ॥ न केनचिदुपायेन कुरूणां दृश्यते जय। तस्मात्त्वं सर्व्वमाचक्ष्व यथा युद्धमवर्त्तत ॥ ३७ ॥ अर्जुनः केशवस्यात्मा कृष्णोऽप्यात्मा किरीटिनः। अर्जुने विजयो नित्यं कृष्णे कीर्त्तिश्च शाश्वती ॥ ३८ ॥ सर्व्वेष्वपि च लोकेषु बीभत्सुरपराजितः। प्राधान्येनैव भूयिष्ठममेयाः केशवे गुणाः ॥ ३९ ॥ मोहात् दुर्य्योधनः कृष्णं यो न वेत्तीह केशवम्। मोहितो दैवयोगेन मृत्युपाशपुरस्कृतः ॥ ४० ॥ न वेद कृष्णं दाशार्हमर्जुनं चैव पाण्डवम्। पूर्व्वदेवौ महात्मानौ नरनारायणावुभौ ॥ ४१ ॥ एकात्मानौ द्विधाभूतौ दृश्येते मानुषैर्भुवि। मनसापि हि दुर्द्धर्षौ सेनामेतां यशस्विनौ ॥ ४२ ॥ नाशयेतामिहेच्छन्तौ मानुषत्वाच्च नेच्छतः। युगस्येव विपर्य्यासो लोकानामिव मोहनम् ॥ ४३ ॥ भीष्मस्य च वधस्तात द्रोणस्य च महात्मनः। न ह्येव ब्रह्मचर्य्येण न वेदाध्ययनेन च ॥ ४४ ॥ न क्रियाभिर्न चास्त्रेण मृत्योः कश्चिन्निवार्य्यते। लोकसम्भावितौ वीरौ कृतास्त्रौ युद्धदुर्मदौ ॥ ४५ ॥ भीष्मद्रोणौ हतौ श्रुत्वा किं नु जीवामि सञ्जय। यां तां श्रियमसूयामः पुरा दृष्ट्वा युधिष्ठिरे ॥ ४६ ॥ अद्य तामनुजीवामो भीष्मद्रोणवधेन च। मत्कृते चाप्यनुप्राप्तः कुरूणामेष सञ्जय ॥ ४७ ॥ पक्कानां हि वधे सूत वज्रायन्ते तृणान्यपि। अनन्तमिदमैश्वर्य्यं लोके प्राप्तो युधिष्ठिरः ॥ ४८ ॥ यस्य कोपान्महेष्वासौ भीष्मद्रोणौ निपातितौ। प्राप्तः प्रकृतितो धर्म्मो न धर्म्मो मामकान् प्रति ॥ ४९ ॥ क्रूरः सर्व्वविनाशाय कालोऽसौ नातिवर्त्तते। अन्यथा चिन्तिता ह्यर्था नरैस्तात मनस्विभिः ॥ ५० ॥ अन्यथैव विपद्यन्ते दैवादिति मतिर्मम। तस्मादपरिहार्य्येऽर्थे सम्प्राप्ते कृच्छ्र उत्तमे। अपारणीये दुश्चिन्त्ये यथाभूतं प्रचक्ष्व मे ॥ ५१ ॥

इति द्रोणपर्व्वणि द्रोणाभिषेकपर्व्वणि धृतराष्ट्रविलापे एकादशोऽध्यायः ॥ ११ ॥

सञ्जय उवाच। हन्त ते कथयिष्यामि सर्वं प्रत्यक्षदर्शिवान्। यथा सन्नापतद्द्रोणः सादितः पाण्डुसृञ्जयैः॥१॥ सेनापतित्वं सम्प्राप्य भारद्वाजो महारथः। मध्ये सर्वस्य सैन्यस्य पुत्रं ते वाक्यमब्रवीत्॥२॥ यत् कौरवाणामृषभादापगेयादनन्तरम्। सैनापत्येन मां राजन्नद्य सत्कृतवानसि॥३॥ सदृशं कर्मणस्तस्य फलमाप्नुहि भारत। करोमि कामं कन्तेऽद्य प्रवृणीष्व यथेच्छसि॥४॥ ततो दुर्योधनो राजा कर्णदुःशासनादिभिः। तमथोवाच दुर्धर्षमाचार्यं जयतां वरम्॥५॥ ददासि चेद्वरं मह्यं जीवग्राहं युधिष्ठिरम्। गृहीत्वा रथिनां श्रेष्ठ मत्समीपमिहानय॥६॥ ततः कुरूणामाचार्यः श्रुत्वा पुत्रस्य ते वचः। सेनां प्रहर्षयन् सर्वामिदं वचनमब्रवीत्॥७॥ धन्यः कुन्तीसुतो राजा यस्य ग्रहणमिच्छसि। न वधार्थं सुदुर्धर्ष वरमद्य प्रयाचसे॥८॥ किमर्थञ्च नरव्याघ्र न वधं तस्य काङ्क्षसि। नाशंससि क्रियामेतां मत्तो दुर्योधन ध्रुवम्॥९॥ आहोस्विद्धर्मराजस्य द्वेष्टा तस्य न विद्यते। यदिच्छसि त्वं जीवन्तं कुलं रक्षसि चात्मनः॥१०॥ अथ वा भरतश्रेष्ठ निर्जित्य युधि पाण्डवान्। राज्यं सम्प्रति दत्त्वा च सौभ्रात्रं कर्त्तुमिच्छसि॥११॥ धन्यः कुन्तीसुतो राजा सुजातञ्चास्य धीमतः। अजातशत्रुता तस्य सत्या यत् स्निह्यते भवान्॥१२॥ द्रोणेन त्वेवमुक्तस्य तव पुत्रस्य भारत। सहसा निःसृतो भावो योऽस्य नित्यं हृदि स्थितः॥१३॥ नाकारो गूहितुं शक्यो बृहस्पतिसमैरपि। तस्मात्तव सुतो राजन् प्रहृष्टो वाक्यमब्रवीत्॥१४॥ वधे कुन्तीसुतस्याजौ नाचार्य विजयो मम। हते युधिष्ठिरे पार्थो हन्यात् सर्वान् हि नो ध्रुवम्॥१५॥ न च शक्या रणे सर्वे निहन्तुममरैरपि। य एव तेषां शेषः स्यात् स एवास्मान्न शेषयेत्॥१६॥ सत्यप्रतिज्ञे त्वानीते पुनर्द्यूतेन निर्जिते। पुनर्यास्यन्त्यरण्याय पाण्डवास्तमनुव्रताः॥१७॥

सोऽयं मम जयो व्यक्तं दीर्घकालं भविष्यति । अतो न वधमिच्छामि धर्म्मराजस्य कर्हिचित् ॥ १८ ॥ तस्य जिह्ममभिप्रायं ज्ञात्वा द्रोणोऽर्थतत्त्ववित् । तं वरं सान्तरं तस्मै ददौ सञ्चिन्त्य बुद्धिमान् ॥ १९ ॥

द्रोण उवाच । न चेद्युधिष्ठिरं वीरः पालयत्यर्ज्जुनो युधि । मन्यध्व पाण्डवश्रेष्ठमानीतं वशमात्मनः ॥ २० ॥ न हि शक्यो रणे पार्थः सेन्द्रैर्देवासुरैरपि । प्रत्युद्यातुमतस्तात नैतदामर्षयाम्यहम् ॥ २१ ॥ असंशयं स शिष्यो मे मत्पूर्व्वश्चास्त्रकर्म्मणि । तरुणः सुकृतैर्युक्त एकायनगतश्च ह ॥ २२ ॥ अस्त्राणीन्द्राच्च रुद्राच्च भूयः स समवाप्तवान् । अमर्षितश्च ते राजन् ततो नामर्षयाम्यहम् ॥ २३ ॥ स चापक्राम्यतां युद्धात् येनोपायेन शक्यते । अपनीते ततः पार्थे धर्म्मराजो जितस्त्वया ॥ २४ ॥ ग्रहणे हि जयस्तस्य न वधे पुरुषर्षभ । एतेन चाप्युपायेन ग्रहणं समुपैष्यति ॥ २५ ॥ अहं गृहीत्वा राजानं सत्यधर्म्मपरायणम् । आनयिष्यामि ते राजन् वशमद्य न संशयः ॥ २६ ॥ यदि स्थास्यति सङ्ग्रामे मुहूर्त्तमपि मेऽग्रतः । अपनीते नरव्याघ्रे कुन्तीपुत्रे धनञ्जये ॥ २७ ॥ फाल्गुनस्य समक्षन्तु न हि शक्यो युधिष्ठिरः । ग्रहीतुं समरे राजन् सेन्द्रैरपि सुरासुरैः ॥ २८ ॥

सञ्जय उवाच । सान्तरं तु प्रतिज्ञाते राज्ञो द्रोणेन निग्रहे । गृहीतं तममन्यन्त तव पुत्राः सुबालिशाः ॥ २९ ॥ पाण्डवेषु च सापेक्षं द्रोणं जानाति ते सुतः । ततः प्रतिज्ञास्थैर्य्यार्थं स मन्त्रो बहुलीकृतः ॥ ३० ॥ ततो दुर्य्योधनेनापि ग्रहणं पाण्डवस्य तत् । सैन्यस्थानेषु सर्व्वेषु सुघोषितमरिन्दम ॥ ३१ ॥

इति द्रोणपर्व्वणि द्रोणाभिषेकपर्व्वणि द्रोणवरदाने
द्वादशोऽध्यायः ॥ १२ ॥

---

कारिण। ज्याघोषः शुश्रुवेऽत्यर्थं विस्फूर्जितमिवाम्बरे ॥ ३॥ रथिनः सादिनश्चैव नागानश्वान् पदातिनः। रौद्रा हस्तवता मुक्ता प्रमथ्नन्ति स्म सायकाः ॥ ४॥ नानद्यमानः पर्जन्यः सानिलः शुचिसङ्क्षये। अश्मवर्षमिवावर्षन् परेषामवहद्भयम् ॥ ५॥ विचरन् स तदा राजन् सेनां सङ्क्षोभयन् प्रभुः। वर्धयामास सन्त्रासं शात्रवाणाममानुषम् ॥ ६॥ तस्य विद्युदिवाभ्रेषु चापं हेमपरिष्कृतम्। भ्रमद्रथाम्बुदे तस्मिन् दृश्यते स्म पुनः पुनः ॥ ७॥ स वीरः सत्यवान् प्राज्ञो धर्मनित्यः सदा पुनः। युगान्तकाले सङ्क्रुद्धो रौद्रां प्रावर्तयन्नदीम् ॥ ८॥ अमर्षवेगप्रभवां क्रव्यादगणसङ्कुलाम्। बलौघैः सर्वतः पूर्णां वीरवृक्षापहारिणीम् ॥ ९॥ शोणितोदां रथावर्तां हस्त्यश्वकृतरोधसाम्। कवचोडुपसंयुक्तां मांसपङ्कसमाकुलाम् ॥ १०॥ मेदोमज्जास्थिसिकतामुष्णीषवरफेनिलाम्। सङ्ग्रामजलदापूर्णां प्रासमत्स्यसमाकुलाम् ॥ ११॥ नरनागाश्वकलिलां शरवेगौघवाहिनीम्। शरीरदारुसङ्घट्टां रथकच्छपसङ्कुलाम् ॥ १२॥ उत्तमाङ्गोपलतलां निस्त्रिंशझषसङ्कुलाम्। रथनागह्रदोपेतां नानाभरणभूषिताम् ॥ १३॥ महारथशतावर्तां भूमिरेणूर्मिमालिनीम्। महावीर्यवतां सङ्ख्ये सुतरां भीरुदुस्तराम् ॥ १४॥ शरीरशतसम्बाधां कङ्कगृध्रनिषेविताम्। महारथसहस्राणि नयन्तीं यमसादनम् ॥ १५॥ शूरव्यालसमाकीर्णां प्राणिवाजिनिषेविताम्। छिन्नच्छत्रमहाहंसां मुकुटाण्डजसेविताम् ॥ १६॥ चक्रकूर्मां गदानक्रां शरक्षुद्रझषाकुलाम्। बलगृध्रशृगालानां घोरसङ्घैर्निषेविताम् ॥ १७॥ निहतान् प्राणिनः सङ्ख्ये द्रोणेन बलिना रणे। वहन्तीं पितृलोकाय शतशो राजसत्तम ॥ १८॥ शरीरशतसम्बाधां केशशैवालशाद्वलाम्। नदीं प्रावर्तयद्राजन् भीरूणां भयवर्धिनीम् ॥ १९॥ तं जयन्तमनीकानि तानि तानि महारथम्। सर्वतोऽभ्यद्रवन्द्रोण

युधिष्ठिरपुरोगमाः ॥ २० ॥ तानभिद्रवत शूरास्तावका दृढविक्रमाः । सर्व्वतः प्रत्यगृह्णन्त तद्भूल्लोमहर्षणम् ॥ २१ ॥ शतमायस्तु शकुनिः सहदेवं समाद्रवत् । सनियन्तृध्वजरथं विव्याध निशितैः शरैः ॥ २२ ॥ तस्य माद्रीसुतः केतुं धनुः सूतं हयानपि । नातिक्रुद्धः शरैश्छित्त्वा षष्ट्या विव्याध सौबलम् ॥ २३ ॥ सौबलस्तु गदां गृह्य प्रचस्कन्द रथोत्तमात् । स तस्य गदया राजन् रथात् सूतमपातयत् ॥ २४ ॥ ततस्तौ विरथौ राजन् गदाहस्तौ महाबलौ । चिक्रीड़तू रणे शूरौ सशृङ्गाविव पर्व्वतौ ॥ २५ ॥ द्रोणः पाञ्चालराजानं विद्धा दशभिराशुगैः । बहुभिस्तेन चाभ्यस्तस्तं विव्याध ततोऽधिकैः ॥ २६ ॥ विविंशतिं भीमसेनो विंशत्या निशितैः शरैः । विद्धा नाकम्पयद्वीरस्तदद्भुतमिवाभवत् ॥ २७ ॥ विविंशतिस्तु सहसा व्यश्वकेतुशरासनम् । भीमं चक्रे महाराज ततः सैन्यान्यपूजयन् ॥ २८ ॥ स तं न ममृषे वीरः शत्रोर्विक्रममाहवे । ततोऽस्य गदया दान्तान् हयान् सर्व्वानपातयत् ॥ २९ ॥ हताश्वात् स रथाद्राजन् गृह्य चर्म्म महाबल । अभ्ययाद्भीमसेनन्तु, मत्तो मत्तमिव द्विपम् ॥ ३० ॥ शल्यस्तु नकुलं वीरः स्वस्रीयं प्रियमात्मनः । विव्याध प्रहसन् वाणैर्लालयन् कोपयन्निव ॥ ३१ ॥ तस्याश्वानातपत्रञ्च ध्वजं सूतमथो धनुः । निपात्य नकुलः सङ्ख्ये शङ्खं दध्मौ प्रतापवान् ॥ ३२ ॥ धृष्टकेतुः कृपेणास्तांश्छित्त्वा बहुविधान् शरान् । कृपं विव्याध सप्तत्या लक्ष्म चाप्याहनत्त्रिभिः ॥ ३३ ॥ तं कृपः शरवर्षेण महता समवारयत । निवार्य्य च रणे विप्रो धृष्टकेतुमयोधयत् ॥ ३४ ॥ सात्यकिः कृतवर्म्माणं नाराचेन स्तनान्तरे । विद्धा विद्याध सप्तत्या पुनरन्यैः स्मयन्निव ॥ ३५ ॥ तं भोजः सप्तसप्तत्या विद्धा सुनिशितैः शरैः । नाकम्पयत शैनेयं शीघ्रो वायुरिवाचलम् ॥ ३६ ॥ सेनापतिं सुशर्म्माणं भृशं मर्म्मस्वताड़यत् । स चापि

तं तोमरेण गवुदिंशेऽभ्यताड़यत् ॥ ३७ ॥ वैकर्त्तनन्तु समरे
विराटः प्रत्यवारयत । सहमत्स्यैर्महावीर्य्यैस्तदद्भुतमिवाभवत
॥ ३८ ॥ तत्र पौरुषमभूत्तत्र सूतपुत्रस्य दारुणम् । यत् सैन्यं
वारयामास शरैः सन्नतपर्व्वभिः ॥ ३९ ॥ द्रुपदस्तु स्वयं राजा
भगदत्तेन सङ्गतः । तयोर्युद्धं महाराज चित्ररूपमिवाभवत् ॥४०॥
भगदत्तस्तु राजानं द्रुपदं नतपर्व्वभिः । सनियन्तृध्वजरथं विव्याध
पुरुषर्षभ ॥ ४१ ॥ द्रुपदस्तु ततः क्रुद्धो भगदत्तं महारथम् ।
आजघानोरसि क्षिप्रं शरेणानतपर्व्वणा ॥ ४२ ॥ युद्धे योधवरौ
लोके सौमदत्तिशिखण्डिनौ । भूतानां त्रासजननं चक्रातेऽस्त्र-
विशारदौ ॥ ४३ ॥ भूरिश्रवा रणे राजन् याज्ञसेनिं महारथम् ।
महता सायकौघेन छादयामास वीर्य्यवान् ॥ ४४ ॥ शिखण्डी तु
ततः क्रुद्धः सौमदत्तिं विशाम्पते । नवत्या सायकानान्तु कम्पया-
मास भारत ॥ ४५ ॥ राक्षसौ रौद्रकर्म्माणौ हैड़िम्बालम्बुषा-
वुभौ । चक्रातेऽत्यद्भुतं युद्धं परस्परजयैषिणौ ॥ ४६ ॥ माया-
शतसृजौ दृप्तौ मायाभिरितरेतरौ । चक्रातेऽत्यद्भुतं युद्धं पर-
स्परजयैषिणौ ॥ ४७ ॥ चेकितानोऽनुविन्देन युयुधे चातिभैरवम् ।
अन्तर्हितौ चेरतुस्तौ भृशं विस्मयकारिणौ ॥ ४८ ॥ लक्ष्मणः
क्षत्रदेवेन विमर्द्दमकरोद्भृशम् । यथा विष्णुः पुरा राजन् हिर-
ण्याक्षेण महासुरे ॥ ४९ ॥ ततः प्रचलिताश्वेन विधिवत् कल्पितेन
च । रथेनाभ्यपतद्राजन् सौभद्रं पौरवोऽनदत् ॥ ५० ॥ ततो-
ऽभ्ययात् स त्वरितो युद्धाकाङ्क्षी महाबलः । तेन चक्रे महद्युद्ध-
मभिमन्युररिन्दमः ॥ ५१ ॥ पौरवस्त्वथ सौभद्रं शरव्रातैरवा-
किरत् । तस्यार्ज्जुनिर्ध्वजं छत्रं धनुश्चोर्व्व्यामपातयत् ॥ ५२ ॥
सौभद्रः पौरवं त्वन्यैर्विद्ध्वा सप्तभिराशुगैः । पञ्चभिस्तस्य विव्याध
हयान् सूतञ्च सायकैः ॥ ५३ ॥ ततः सहर्षयन् सेनां सिंहवद्विन-
नद्य सः । समादत्तार्ज्जुनिस्तूर्णं पौरवान्तकरं शरम् ॥ ५४ ॥ तन्तु

सन्धितमाज्ञाय सायकं घोरदर्शनम्। द्वाभ्यां शराभ्यां हार्दिक्य-
श्चिच्छेद सशरं धनुः ॥ ५५ ॥ तदुत्सृज्य धनुश्छिन्नं सौभद्रः
परवीरहा। उद्ववर्ह सितं खड्गमाददानः शरावरम् ॥ ५६ ॥
स तेनानेकतारेण चर्मणा कृतहस्तवत्। भ्रान्तासिरचरन्मार्गान्
दर्शयन् वीर्यमात्मनः ॥ ५७ ॥ भ्रामितं पुनरुद्भ्रान्तमाधूतं पुन-
रुत्थितम्। चर्मनिस्त्रिंशयो राजन् निर्विशेषमदृश्यत ॥ ५८ ॥ स
पौरवरथस्येषामाप्लुत्य सहसा नदन्। पौरवं रथमास्थाय केशप-
क्षे परामृशत् ॥ ५९ ॥ जघानास्य पदा सूतमसिनापातयद्
ध्वजम्। विक्षोभ्याम्भोनिधिं तार्क्ष्यस्तं नागमिव चाक्षिपत् ॥ ६० ॥
तमाकलितकेशान्तं ददृशुः सर्वपार्थिवाः। उक्षाणमिव सिंहेन
पात्यमानमचेतसम् ॥ ६१ ॥ तमार्जुनिवशं प्राप्तं कृष्यमाणमनाथ-
वत्। पौरवं पतितं दृष्ट्वा नामृष्यत जयद्रथः ॥ ६२ ॥ स बर्हिण-
महाराज किङ्किणीशतजालवत्। चर्म चादाय खड्गञ्च नदन्
पर्यपतद्रथात् ॥ ६३ ॥ ततः सैन्धवमालोक्य कार्ष्णिरुत्सृज्य
पौरवम्। उत्पपात रथात्तूर्णं श्येनवन्निपपात च ॥ ६४ ॥ प्रास-
पट्टिशनिस्त्रिंशाञ्छत्रुभिः सम्प्रचोदितान्। चिच्छेदाथासिना
कार्ष्णिश्चर्मणा संरुरोध च ॥ ६५ ॥ सन्दर्शयित्वा सैन्यानां स्वबाहु-
बलमात्मनः। तमुद्यम्य महाखड्गं चर्म चाथ पुनर्बली ॥ ६६ ॥
वृद्धक्षत्रस्य दायादं पितुरत्यन्तवैरिणम्। ससाराभिमुखः शूरः
शार्दूल इव कुञ्जरम् ॥ ६७ ॥ तौ परस्परमासाद्य खड्गदन्त-
नखायुधौ। हृष्टवत् सम्प्रजह्राते व्याघ्रकेसरिणाविव ॥ ६८ ॥
सम्पातेष्वभिघातेषु निपातेष्वसिचर्मणोः। न तयोरन्तरं कश्चि-
द्ददर्श नरसिंहयोः ॥ ६९ ॥ अवक्षेपोऽसिनिर्ह्रादः शस्त्रान्तरनिद-
र्शनम्। बाह्यान्तरनिपातश्च निर्विशेषमदृश्यत ॥ ७० ॥ बाह्य-
मभ्यन्तरञ्चैव चरन्तौ मार्गमुत्तमम्। ददृशाते महात्मानौ सपक्षा-
विव पर्वतौ ॥ ७१ ॥ ततो विक्षिपतः खड्गं सौभद्रस्य यश-

स्विनः । शरावरणपक्षान्ते प्रजहार जयद्रथ ॥ ७२ ॥ तस्य पक्षान्तरे सक्तस्तस्मिन् चर्म्मणि भारत । सिन्धुराजबलोद्धूतः सोऽभज्यत महासिः ॥ ७३ ॥ भग्नमाज्ञाय निस्त्रिंश सोऽवप्लुत्य पदानि षट् । सदृश्यत निमेषेण स्वरथं पुनरास्थितः ॥ ७४ ॥ तं कार्ष्णिं समरान्मुक्तमास्थितं रथमुत्तमम् । सहिताः सर्व्वराजानः परिवव्रुः समन्ततः ॥ ७५ ॥ ततश्चर्म्म च खड्गञ्च समुत्क्षिप्य महाबलः । ननादार्जुनदायाद प्रेक्षमाणो जयद्रथम् ॥७६॥ सिन्धुराजं परित्यज्य सौभद्रः परवीरहा । तापयामास तत्सैन्यं भुवनं भास्करो यथा ॥ ७७ ॥ तस्य सर्व्वायसीं शक्तिं शल्यः कनकभूषणाम् । चिक्षेप समरे घोरां दीप्तामग्निशिखामिव ॥ ७८ ॥ तामवप्लुत्य जग्राह विकोषं चाकरोदसिम् । वैनतेयो यथा कार्ष्णिः पतन्तमुरगोत्तमम् ॥ ७९ ॥ तस्य लाघवमाज्ञाय सत्त्वञ्चामिततेजसः । सहिताः सर्व्वराजानः सिंहनादमथानदन् ॥ ८० ॥ ततस्तामेव शल्यस्य सौभद्रः परवीरहा । मुमोच भुजवीर्य्येण वैदूर्य्यविकृताजिराम् ॥ ८१ ॥ सा तस्य रथमासाद्य निर्मुक्तभुजगोपमा । जघान सूतं शल्यस्य रथाच्चैनमपातयत् ॥ ८२ ॥ ततो विराटद्रुपदौ धृष्टकेतुर्युधिष्ठिरः । सात्यकिः केकयो भीमो धृष्टद्युम्नशिखण्डिनौ ॥ ८३ ॥ यमौ च द्रौपदेयाश्च साधु साध्विति चुक्रुशुः । वाणशब्दाश्च विविधाः सिंहनादाश्च पुष्कलाः ॥ ८४ ॥ प्रादुरासन् हर्षयन्तः सौभद्रमपलायिनम् । तन्नामृष्यन्त पुत्रास्ते शत्रोर्विजयलक्षणम् ॥ ८५ ॥ अथैनं सहसा सर्व्वे समन्तान्निशितैः शरैः । अभ्याकिरन् महाराज जलदा इव पर्व्वतम् ॥ ८६ ॥ तेषाञ्च प्रियमन्विच्छन् सूतस्य च पराभवम् । आर्त्तायनिरमित्रघ्नः क्रुद्धः सौभद्रमभ्ययात् ॥ ८७ ॥

इति द्रोणपर्व्वणि द्रोणाभिषेकपर्व्वणि अभिमन्युपराक्रमे
चतुर्द्दशोऽध्यायः ॥ १४ ॥

धृतराष्ट्र उवाच । बह्नीनि भुवि चित्राणि द्वन्द्वयुद्धानि सञ्जय । त्वयोक्तानि निशम्याहं स्पृहयामि सचक्षुषाम् ॥ १ ॥ आश्चर्य्यभूतं लोकेषु कथयिष्यन्ति मानवाः । कुरूणां पाण्डवानाञ्च युद्धं देवासुरोपमम् ॥ २ ॥ न हि मे तृप्तिरस्तीह शृण्वतो युद्धमुत्तमम् । तस्मादार्त्तायनेर्युद्धं भीमस्य च शंस मे ॥ ३ ॥

सञ्जय उवाच । सादितं प्रेक्ष्य यन्तारं शल्यः सर्व्वायसीं गदाम् । समुत्क्षिप्य महन् क्रुद्धः प्रचस्कन्द रथोत्तमात् ॥ ४ ॥ तं दीप्तमिव कालाग्निं दण्डहस्तमिवान्तकम् । जवेनाभ्यपतद्भीमः प्रगृह्य महतीं गदाम् ॥ ५ ॥ सौभद्रोऽप्यशनिप्रख्यां प्रगृह्य महतीं गदाम् । एह्येहीत्यब्रवीच्छल्यं यत्नाद्भीमेन वारितः ॥ ६ ॥ वारयित्वा तु सौभद्रं भीमसेनः प्रतापवान् । शल्यमासाद्य समरे तस्थौ गिरिरिवाचलः ॥ ७ ॥ तथैव मद्रराजोऽपि भीमं दृष्ट्वा महाबलः । ससाराभिमुखस्तूर्णं शार्दूल इव कुञ्जरम् ॥ ८ ॥ ततस्तूर्य्यनिनादश्च शङ्खानाञ्च सहस्रशः । सिंहनादश्च सञ्जज्ञे भेरीणाञ्च महास्वनः ॥ ९ ॥ पश्यतां शतशो ह्यासीदन्योऽन्यमभिधावताम् । पाण्डवानां कुरूणाञ्च साधुसाध्विति निःस्वनः ॥१०॥ न हि मद्राधिपादन्यः सर्व्वराजसु भारत । सोढ़ुमुत्सहते वेगं भीमसेनस्य संयुगे ॥ ११ ॥ तथा मद्राधिपस्यापि गदावेगं महात्मनः । सोढ़ुमुत्सहते लोके युधि कोऽन्यो वृकोदरात् ॥ १२ ॥ पट्टैर्जाम्बूनदैर्बद्धा बभूव जनहर्षिणी । प्रजज्वाल तदा विद्धा भीमेन महती गदा ॥ १३ ॥ तथैव चरतो मार्गान् मण्डलानि विचेरतुः । आवर्त्तितगदाशृङ्गावुभौ शल्यवृकोदरौ ॥ १४ ॥ मण्डलावर्त्तमार्गेषु गदाविहरणेषु च । निर्व्विशेषमभूद्युद्धं तयोः पुरुषसिंहयोः ॥ १५ ॥ ताड़िता भीमसेनेन शल्यस्य महती गदा । साग्निज्वाला महारौद्रा तदा तूर्णमशीर्य्यत ॥ १६ ॥ तथैव भीमसेनस्य द्विषताभिहता गदा । वर्षाप्रदोषे खद्योतैर्वृता इव

द्रवावसौ ॥ १७ ॥ गदा क्षिप्ता तु समरे मद्रराजेन भारत । व्योम दीपयमाना सा ससृजे पावकं मुहुः ॥ १८ ॥ तथैव भीमसेनेन द्विषते प्रेषिता गदा । तापयामास तत्सैन्यं महोल्का पतती यथा ॥ १९ ॥ ते चैवोभे गदे श्रेष्ठे समासाद्य परस्परम् । श्वसन्त्यौ नागकन्येव ससृजाते विभावसुम् ॥ २० ॥ नखैरिव महाव्याघ्रौ दन्तैरिव महागजौ । तौ विचेरतुरासाद्य गदाग्राभ्यां परस्परम् ॥ २१ ॥ ततो गदाग्राभिहतौ क्षणेन रुधिरोक्षितौ । ददृशाते महात्मानौ पुष्पिताविव किंशुकौ ॥ २२ ॥ शुश्रुवे दिक्षु सर्वासु तयोः पुरुषसिंहयोः । गदाभिघातसंह्रादः शक्राशनिरवोपमः ॥ २३ ॥ गदया मद्रराजेन सव्यदक्षिणमाहतः । नाकम्पत तदा भीमो भिद्यमान इवाचलः ॥ २४ ॥ तथा भीमगदावेगैस्ताड्यमानो महाबलः । धैर्यान्मद्राधिपस्तस्थौ वज्रैरिव गिरिर्हतः ॥ २५ ॥ आपेततुर्महावेगौ समुच्छ्रितगदावुभौ । पुनरन्तरमार्गस्थौ मण्डलानि विचेरतुः ॥ २६ ॥ अथाप्लुत्य पदान्यष्टौ संनिपत्य गजाविव । सहसा लोहदण्डाभ्यामन्योऽन्यमभिजघ्नतुः ॥ २७ ॥ तौ परस्परवेगाच्च गदाभ्यां च भृशाहतौ । युगपत् पेततुर्वीरौ क्षिताविन्द्रध्वजाविव ॥ २८ ॥ ततो विह्वलमानं तं निःश्वसन्तं पुनः पुनः । शल्यमभ्यपतत्तूर्णं कृतवर्मा महारथः ॥ २९ ॥ दृष्ट्वा चैनं महाराज गदयाभिनिपीडितम् । विचेष्टन्तं यथा नागं मूर्च्छयाभिपरिप्लुतम् ॥ ३० ॥ ततः स्वरथमारोप्य मद्राणामधिपं रणे । अपोवाह रणात्तूर्णं कृतवर्मा महारथः ॥ ३१ ॥ क्षीबवद्विह्वलो वीरो निमेषात् पुनरुत्थितः । भीमोऽपि सुमहाबाहुर्गदापाणिरदृश्यत ॥ ३२ ॥ ततो मद्राधिपं दृष्ट्वा तव पुत्राः पराङ्मुखम् । सनागपत्त्यश्वरथाः समकम्पन्त मारिष ॥ ३३ ॥ ते पाण्डवैरर्द्यमानास्तावका जितकाशिभिः । भीता दिशोऽन्वपद्यन्त वातनुन्ना घना इव ॥ ३४ ॥ निर्जित्य पाण्डवेया-

स्तान् धार्त्तराष्ट्रान् महारथाः । अरोचन्त रणे राजन् दीप्य-
माना इवाग्नयः ॥ २५ ॥ सिंहनादान् भृशं चक्रुः शङ्खान् दध्मुश्च
हर्षिताः । भेरीश्च वादयामासुर्ढक्काश्चानकैः सह ॥ २६ ॥

इति द्रोणपर्वणि द्रोणाभिषेकपर्वणि महाप्रयाने
पञ्चदशोऽध्यायः ॥ १५ ॥

---

सञ्जय उवाच । तद्बलं सुमहद्दीप्तं त्वदीयं प्रेक्ष्य वीर्य्यवान् ।
दधारैको रणे राजन् वृषसेनोऽस्त्रमायया ॥ १ ॥ शरा दश-
दिशो मुक्ता वृषसेनेन संयुगे । विचेरुस्ते विनिर्भिद्य नरवाजि-
रथद्विपान् ॥ २ ॥ तस्य दीप्ता महाबाणा विनिश्चेरुः सहस्रशः ।
भानोरिव महाराज घर्मकाले मरीचयः ॥ ३ ॥ तेनार्दिता महा-
राज रथिनः सादिनस्तथा । निपेतुरुर्व्यां सहसा वातभग्ना इव
द्रुमाः ॥ ४ ॥ हयौघांश्च रथौघांश्च गजौघांश्च महारथः । अपा-
तयद्रणे राजञ्छतशोऽथ सहस्रशः ॥ ५ ॥ दृष्ट्वा तमेकं समरे
विचरन्तमभीतवत् । सहिताः सर्वराजानः परिवव्रुः समन्ततः ॥ ६ ॥
नाकुलिस्तु शतानीको वृषसेनं समभ्ययात् । विव्याध दशभिश्चैनं
नाराचैर्मर्मभेदिभिः ॥ ७ ॥ तस्य कर्णात्मजश्चापं छित्त्वा केतु-
मपातयत् । तं भ्रातरं परीप्सन्तो द्रौपदेयाः समभ्ययुः ॥ ८ ॥
कर्णात्मजं शरव्रातैश्चक्रुरादृश्यमञ्जसा । तान्नदन्तोऽभ्यधावन्त
द्रोणपुत्रमुखा रथाः ॥ ९ ॥ छादयन्तो महाराज द्रौपदेयान्
महारथान् । शरैर्नानाविधैस्तूर्णं पर्वतान् जलदा इव ॥ १० ॥
तान् पाण्डवाः प्रत्यगृह्णंस्त्वरिताः पुत्रगृद्धिनः । पाञ्चालाः केकया
मत्स्याः सृञ्जयाश्चोद्यतायुधाः ॥ ११ ॥ तद्युद्धमभवद्घोरं सुमहल्-
लोमहर्षणम् । त्वदीयैः पाण्डुपुत्राणां देवानामिव दानवैः ॥ १२ ॥
एवं युयुधिरे वीराः संरब्धाः कुरुपाण्डवाः । परस्परमुदीक्षन्तः

परस्परकृतागसः ॥ १३ ॥ तेषां ददृशिरे कोपात् वपूंष्यमिततेजसाम् । युयुत्सूनामिवाकाशे पतत्रिवरभोगिनाम् ॥ १४ ॥ भीमकर्मकृपद्रोणद्रौणिपार्षतसात्यकैः । बभासे स रणोद्देश कालसूर्य्य इवोदित. ॥ १५ ॥ तदासीत् तुमुलं युद्ध निघ्नतामितरेतरम् । महाबलानां बलिभिर्दानवानां यथा सुरैः ॥ १६ ॥ ततो युधिष्ठिरानीकमुद्धूतार्णवनिस्वनम् । त्वदीयमवधीत् सैन्य सम्प्रद्रुतमहारथम् ॥ १७ ॥ तत् प्रभग्न बल दृष्ट्वा शत्रुभिर्भृशविक्षतम् । अल द्रुतेन व. शूरा इति द्रोणोऽभ्यभाषत ॥ १८ ॥ तत शोणहय. क्रुद्धश्चतुर्दन्त इव द्विप । प्रविश्य पाण्डवानीकं युधिष्ठिरमुपाद्रवत् ॥ १९ ॥ तमविध्यच्छितैर्बाणै कङ्कपत्रैर्युधिष्ठिर. । तस्य द्रोणो धनुश्छित्त्वा तं द्रुतं समुपाद्रवत् ॥ २० ॥ चक्ररक्षः कुमारस्तु पाञ्चालानां यशस्कर. । दधार द्रोणमायान्तं वेलेव सरितां पतिम् ॥ २१ ॥ द्रोणं निवारितं दृष्ट्वा कुमारेण द्विजर्षभम् । सिंहनादरवो ह्यासीत् साधुसाध्विति भाषितम् ॥ २२ ॥ कुमारस्तु ततो द्रोणं सायकेन महाहवे । विव्याधोरसि संक्रुद्धः सिंहवच्च नदन्मुहु. ॥ २३ ॥ संवार्य्य तु रणे द्रोणं कुमारस्तु महाबल । शरैरनेकसाहस्रै. कृतहस्तो जितक्लम. ॥ २४ ॥ तं शूरमार्य्यव्रतिनं मन्त्रास्त्रकृतनिश्रमम् । चक्ररक्षं परामृद्नन् कुमारं द्विजपुङ्गव. ॥ २५ ॥ स मध्यं प्राप्य सैन्यानां सर्वा प्रविचरन् दिशः । तव सैन्यस्य गोप्तासीत् भारद्वाजो द्विजर्षभ ॥ २६ ॥ शिखण्डिनं द्वादशभिर्विंशत्या चोत्तमौजसम् । नकुलं पञ्चभिर्विद्ध्वा सहदेवञ्च सप्तभिः ॥ २७ ॥ युधिष्ठिरं द्वादशभिर्द्रौपदेयांस्त्रिभिस्त्रिभिः । सात्यकिं पञ्चभिर्विद्ध्वा मत्स्यञ्च दशभिः शरैः ॥ २८ ॥ व्यक्षोभयद्रणे योधान् यथामुख्यमभिद्रवन् । अभ्यवर्त्तत सम्प्रेप्सु कुन्तीपुत्रं युधिष्ठिरम् ॥ २९ ॥ युगन्धरस्ततो राजन् भारद्वाज महारथम् । वारयामास सङ्क्रुद्धं वातोद्धतमिवार्णवम् ॥ ३० ॥ युधि-

ठिरं च विद्धा तु शरैः सन्नतपर्वभिः । युगन्धरन्तु भल्लेन रथ-
नीडादपातयत् ॥ ३१ ॥ ततो विराटद्रुपदौ कैकेयाः सात्यकिः
शिविः । व्याघ्रदत्तश्च पाञ्चाल्यः सिंहसेनश्च वीर्य्यवान् ॥ ३२ ॥
एते चान्ये च बहवः परीप्सन्तो युधिष्ठिरम् । आवव्रुस्तस्य
पन्थानं किरन्तः सायकान् बहून् ॥ ३३ ॥ व्याघ्रदत्तस्तु पाञ्चाल्यो
द्रोणं विव्याध मार्गणैः । पञ्चाशद्भिः शितैराजंस्तत उच्चुक्रुशु-
र्जनाः ॥ ३४ ॥ त्वरितं सिंहसेनस्तु द्रोणं विद्धा महारथम् ।
प्राहसत् सहसा हृष्टस्त्रासयन् वै महारथान् ॥ ३५ ॥ ततो
विस्फार्य्य नयने धनुर्ज्यामवमृज्य च । तलशब्दं महत् कृत्वा
द्रोणस्तं समुपाद्रवत् ॥ ३६ ॥ ततस्तु सिंहसेनस्य शिरः कायात्
सकुण्डलम् । व्याघ्रदत्तस्य चाक्रम्य भल्लाभ्यामाहरद्बली ॥ ३७ ॥
तान् प्रमथ्य शरव्रातैः पाण्डवानां महारथान् । युधिष्ठिररथा-
भ्याशे तस्थौ मृत्युरिवान्तकः ॥ ३८ ॥ ततोऽभवन्महाशब्दो राजन्
यौधिष्ठिरे बले । हतो राजेति योधानां समीपस्थे यतव्रते ॥३९॥
अब्रुवन् सैनिकास्तत्र दृष्ट्वा द्रोणस्य विक्रमम् । अद्य राजा धार्त्त-
राष्ट्रः कृतार्थो वै भविष्यति ॥ ४० ॥ अस्मिन् मुहूर्त्ते द्रोणस्तु
पाण्डवं गृह्य हर्षितः । आगमिष्यति नो नूनं धार्त्तराष्ट्रस्य
संयुगे ॥ ४१ ॥ एवं सञ्जल्पतां तेषां तावकानां महारथः ।
आयाज्जवेन कौन्तेयो रथघोषेण नादयन् ॥ ४२ ॥ शोणितोदां
रथावर्त्तां कृत्वा विशसने नदीम् । शूरास्थिचयसङ्कीर्णां प्रेतकूला-
पहारिणीम् ॥ ४३ ॥ तां शरौघमहाफेनां प्रासमत्स्यसमाकुलाम् ।
नदीमुत्तीर्य्य वेगेन कुरून् विद्राव्य पाण्डवः ॥ ४४ ॥ ततः
किरीटी सहसा द्रोणानीकमुपाद्रवत् । छादयन्निषुजालेन महता
मोहयन्निव ॥ ४५ ॥ शीघ्रमभ्यस्यतो बाणान् सन्दधानस्य चानि-
शम् । नान्तरं ददृशे कश्चित् कौन्तेयस्य यशस्विनः ॥ ४६ ॥ न
दिशो नान्तरिक्षञ्च न द्यौर्नैव च मेदिनी । अदृश्यत महाराज

बाणभूता इवाभवन् ॥ ४७ ॥ नादृश्यत तदा राजंस्तत्र किञ्चन
संयुगे। बाणान्धकारे महति कृते गाण्डीवधन्वना ॥ ४८ ॥
सूर्य्ये चास्तमनुप्राप्ते रजसा चाभिसंवृते। नाज्ञायत तदा शत्रुं
सुहृद्वा च कथन् ॥ ४९ ॥ ततोऽवहारं चक्रुस्ते द्रोणदुर्य्योधना-
दय। तान् विदित्वा पुनस्त्रस्तानयुद्धमनस परान् ॥ ५० ॥
स्वान्यनीकानि बीभत्सु शनकैरवहारयत। ततोऽभितुष्टवु पार्थं
प्रहृष्टा पाण्डुसृञ्जया ॥ ५१ ॥ पाञ्चालाश्च मनोज्ञाभिर्वाग्भि-
स्सूर्य्यमिवर्षय। एव स्वशिबिरं प्राप्य जित्वा शत्रून् धनञ्जय।
पृष्ठतस्सर्व्वसैन्याना मुदितो वै सकेशव ॥ ५२ ॥ मसारगल्वर्क-
सुवर्णरूप्यैर्वज्रप्रवालस्फटिकैश्च मुख्यै। चित्रे रथे पाण्डुसुतो
बभासे नक्षत्रचित्रे वियतीव चन्द्र ॥ ५३ ॥

इति द्रोणपर्व्वणि द्रोणाभिषेकपर्व्वणि अर्जुनजये
षोडशोऽध्याय ॥ समाप्तं द्रोणाभिषेकपर्व ॥ १६ ॥

---

अथ संशप्तकवधपर्व ॥

सञ्जय उवाच। ते सेने शिबिरं गत्वा न्यविशेतां विशाम्पते।
यथाभागं यथान्यायं यथागुल्मञ्च सर्व्वशः ॥ १ ॥ कृत्वावहारं
सैन्याना द्रोण परमदुर्म्मना। दुर्य्योधनमभिप्रेक्ष्य सव्रीडमिद-
मब्रवीत् ॥ २ ॥ उक्तमेतन्मया पूर्वं न तिष्ठति धनञ्जये। अशक्यो
ग्रहीतुं सङ्ग्रामे देवैरपि युधिष्ठिर ॥ ३ ॥ इति तद्व प्रयतता
कृत पार्थेन संयुगे। माविशङ्कीर्वचोमह्यमजेयौ कृष्णपाण्डवौ ॥४॥
अपनीते तु योगेन केनचिच्छ्वेतवाहने। तत एष्यति ते राजन्
वशमद्य युधिष्ठिर ॥ ५ ॥ कश्चिदाह्वयतां संख्ये देशमन्यं प्रक-
र्षतु। तमजित्वा न कौन्तेयो निवर्त्तेत कथञ्चन ॥ ६ ॥ एतस्मि-
न्नन्तरे शून्ये धर्म्मराजमहं नृप। ग्रहीष्यामि चमूं भित्वा धृष्ट

युक्तस्य पश्यतः ॥ ७ ॥ एवमेतदहं महाराज धर्मपुत्रं युधिष्ठिरम् ।
समानेष्यामि वशगं वशमद्य न संशयः ॥ ८ ॥ यदि तिष्ठति
संग्रामे मुहूर्तमपि पाण्डवः । समानयामि संग्रामाद्विजयात्त-
द्विशिष्यते ॥ ९ ॥
सञ्जय उवाच । द्रोणस्य तद्वचः श्रुत्वा त्रिगर्ताधिपतिस्तदा ।
भ्रातृभिः सहितो राजन्निदं वचनमब्रवीत् ॥ १० ॥ वयं विनि-
कृता राजन् सदा गाण्डीवधन्वना । अनागःस्वपि चागस्कृदस्मासु
भरतर्षभ ॥ ११ ॥ ते वयं स्मरमाणास्तान् विनिकारान् पृथग्-
विधान् । क्रोधाग्निना दह्यमाना न शेमहि सदा निशि ॥ १२ ॥
स नो दिष्ट्यास्त्रसम्पन्नश्चक्षुर्विषयमागतः । कर्तारः स्म वयं कर्म
यच्चिकीर्षाम हृद्गतम् ॥ १३ ॥ भवतश्च प्रियं यत्स्यादस्माकञ्च
यशस्करम् । वयमेनं हनिष्यामो निकृष्यायोधनाद्बहिः ॥ १४ ॥
अद्यास्त्वनर्जुना भूमिरत्रिगर्ताथ वा पुनः । सत्यं ते प्रतिजानीमो
नैतन्मिथ्या भविष्यति ॥ १५ ॥ एवं सत्यरथश्चोक्त्वा सत्यवर्मा च
भारत । सत्यव्रतश्च सत्येषुः सत्यकर्मा तथैव च ॥ १६ ॥ सहिताः
भ्रातरः पञ्च रथानामयुतेन च । न्यवर्त्तन्त महाराज कृत्वा शपथ-
माहवे ॥ १७ ॥ मालवास्तुण्डिकेराश्च रथानामयुतैस्त्रिभिः । सुशर्मा
च नरव्याघ्रः त्रिगर्तः प्रस्थलाधिपः ॥ १८ ॥ मावेल्लकैर्ललित्थैश्च
सहितो मद्रकैरपि । रथानामयुतेनैव सोऽगमद् भ्रातृभिः सह
॥ १९ ॥ नानाजनपदेभ्यश्च रथानामयुतेन च । समुत्थितं विशि-
ष्टानां शपथार्थमुपागमत् ॥ २० ॥ ततो ज्वलनमानाय्य हुत्वा
सर्वे पृथक् पृथक् । जगृहुः कुशचीराणि चित्राणि कवचानि च
॥ २१ ॥ ते च बद्धतनुत्राणा घृताक्ताः कुशचीरिणः । मौर्वी-
मेखलिनो वीराः सहस्रशतदक्षिणाः ॥ २२ ॥ यज्वानः पुत्रिणो
लोक्याः कृतकृत्यास्तनुत्यजः । योक्ष्यमाणास्तदात्मानं
विजयेन च ॥ २३ ॥ ब्रह्मचर्यश्रुतिमुखैः क्रतुभिश्चा

प्राप्य लोकान् सुयुद्धेन क्षिप्रमेव यियासवः ॥ २४ ॥ ब्राह्मणां-
स्तर्पयित्वा च निष्कान् दत्त्वा पृथक् पृथक्। गाश्च वासांसि च पुनः
समाभाष्य परस्परम् ॥ २५ ॥ प्रज्वाल्य कृष्णवर्त्मानमुपगम्य रणे
व्रतम्। तस्मिन्नग्नौ तदा चक्रुः प्रतिज्ञां दृढनिश्चयाः ॥ २६ ॥
शृण्वतां सर्वभूतानामुच्चैर्वाचो बभाषिरे। सर्वे धनञ्जयवधे
प्रतिज्ञाञ्चापि चक्रिरे ॥ २७ ॥ ये वै लोकाश्चानृतिनां ये च ये
ब्रह्मघातिनाम्। मद्यपस्य च लोका ये गुरुदाररतस्य च ॥ २८ ॥
ब्रह्मस्वहारिणश्चैव राजपिण्डापहारिणः। शरणागतं वा त्यजतो
याचमानं तथा घ्नतः ॥ २९ ॥ अगारदाहिनाञ्चैव ये च गां
निघ्नतामपि। अपकारिणाञ्च ये लोका ये च ब्रह्मद्विषामपि ॥ ३० ॥
स्वभार्यामृतुकालेषु यो मोहान्नाभिगच्छति। श्राद्धमैथुनिकानाञ्च
ये चाप्यात्मापकारिणाम् ॥ ३१ ॥ न्यासापहारिणां ये च श्रुतं

युधिष्ठिर उवाच । श्रुतन्ते तत्त्वतस्तात यद्द्रोणेन चिकीर्षितम् । यथा तदनृतं तस्य भवेत्तत् त्वं समाचर ॥ ४१ ॥ द्रोणो हि बलवान् शूरः कृतास्त्रश्च जितश्रमः । प्रतिज्ञातञ्च तेनैतत् ग्रहणं मे महारथ ॥ ४२ ॥

अर्जुन उवाच । अयं वै सत्यजिद्राजन्नद्य त्वां रक्षिता युधि । ध्रियमाणे तु पाञ्चाल्ये नाचार्य्यः काममाप्स्यति ॥ ४३ ॥ हते तु पुरुषव्याघ्रे रणे सत्यजिति प्रभो । सर्वैरपि समेतैर्वा न स्थातव्यं कथञ्चन ॥ ४४ ॥

संयुगे। भ्रातॄंस्त्रैगर्तकानेव रोदितव्ये प्रहर्षिताम् ॥५॥ अथ वा हर्षकालोऽयं त्रैगर्त्तानामसंशयम्। कुनरैर्दुरवापान् हि लोकान् प्राप्स्यन्त्यनुत्तमान् ॥६॥ एवमुक्त्वा महाबाहुर्हृषीकेशं ततोऽर्जुनः। आससाद रणे व्यूढां त्रिगर्त्तानामनीकिनीम् ॥७॥ स देवदत्तमादाय शङ्खं हेमपरिष्कृतम्। दध्मौ वेगेन महता घोषेणापूरयन् दिशः ॥८॥ तेन घोषेण संत्रस्ताः संशप्तकवरूथिनः। निश्चेष्टावस्थिताः संख्ये अश्मसारमयो यथा ॥९॥ वाहास्तेषां विवृत्ताक्षाः स्तब्धकर्णशिरोधराः। विष्टब्धचरणा मूत्रं रुधिरञ्च प्रसुस्रुवुः ॥१०॥ उपलभ्य ततः संज्ञामवस्थाप्य च

सशिरस्त्राणं शिरः कायादपाहरत ॥ २२ ॥ तस्मिन्निपतिते वीरे त्रस्तास्तस्य पदानुगाः । व्यद्रवन्त भयाद्भीता येन दौर्य्योधनं बलम् ॥ २३ ॥ ततो जघान संक्रुद्धो वासविस्तां महाचमूम् । शरजालैरविच्छिन्नैस्तमः सूर्य्य इवांशुभिः ॥ २४ ॥ ततो भग्ने बले तस्मिन् विप्रलीने समन्ततः । सव्यसाचिनि संक्रुद्धे त्रैगर्त्तान् भयमाविशत् ॥ २५ ॥ ते वध्यमाना पार्थेन शरैः सन्नतपर्वभिः । अमुह्यंस्तत्र तत्रैव त्रस्ता मृगगणा इव ॥ २६ ॥ ततस्त्रिगर्त्तराट् क्रुद्धस्तानुवाच महारथान् । अलं द्रुतेन वः शूरा न भयं कर्त्तुमर्हथ ॥ २७ ॥ शप्त्वाथ शपथान् घोरान् सर्वसैन्यस्य पश्यतः । गत्वा दौर्य्योधनं सैन्यं किं वा वक्ष्यथ मुख्यशः ॥ २८ ॥ नावहास्याः कथं लोके कर्मणा तेन संयुगे । भवेम सहिताः सर्वे निवर्त्तध्वं यथाबलम् ॥ २९ ॥ एवमुक्तास्तु ते राजन्नुदक्रोशन् मुहुर्मुहुः । शङ्खांश्च दध्मिरे वीरा हर्षयन्तः परस्परम् ॥ ३० ॥ ततस्ते सन्न्यवर्त्तन्त संशप्तकगणाः पुनः । नारायणाश्च गोपालाः मृत्युं कृत्वा निवर्त्तनम् ॥ ३१ ॥

इति द्रोणपर्व्वणि संशप्तकवधपर्व्वणि सुधन्ववधे अष्टादशोऽध्यायः ॥ १८ ॥

---

सञ्जय उवाच । दृष्ट्वा तु सन्निवृत्तांस्तान् संशप्तकगणान् पुनः । वासुदेवं महात्मानमर्जुनः समभाषत ॥ १ ॥ चोदयाश्वान् हृषीकेश संशप्तकगणान् प्रति । नैते हास्यन्ति सङ्ग्रामं जीवन्त इति मे मतिः ॥ २ ॥ पश्य मेऽद्य बलं घोरं बाह्वोरिष्वासनस्य च । अद्यैतान् पातयिष्यामि क्रुद्धः पशुगणानिव ॥ ३ ॥ ततः कृष्णः स्मितं कृत्वा प्रतिनन्द्य शिवेन तम् । प्रावेशयत दुर्द्धर्षो यत्र

चवैच्छदर्जुन ॥ ४ ॥ सरथो भ्राजतेऽत्यर्थमुह्यमाने रणे तदा । उह्यमानमिवाकाशे विमाने पाण्डुरैर्हयैः ॥ ५ ॥ मण्डलानि ततश्चक्रे गतप्रत्यागतानि च । यथा शक्ररथो राजन् युद्धे देवासुरे पुरा ॥ ६ ॥ अथ नारायणाः क्रुद्धा विविधायुधपाणयः । छादयन्तः शरव्रातैः परिवव्रुर्धनञ्जयम् ॥ ७ ॥ अदृश्यञ्च मुहूर्त्तेन चक्रुस्ते भरतर्षभ । कृष्णेन सहितं युद्धे कुन्तीपुत्रं धनञ्जयम् ॥ ८ ॥ क्रुद्धस्तु फाल्गुनः सङ्ख्ये द्विगुणीकृतविक्रमः । गाण्डीवं धनुरामृज्य तूर्णं जग्राह संयुगे ॥ ९ ॥ बद्ध्वा च भ्रुकुटिं वक्त्रे क्रोधस्य प्रतिलक्षणम् । देवदत्तं महाशङ्खं पूरयामास पाण्डवः ॥ १० ॥ अथास्त्रमरिसङ्घघ्नं त्वाष्ट्रमभ्यस्यदर्जुन । ततो रूपसहस्राणि प्रादुरासन् पृथक् पृथक् ॥ ११ ॥ आत्मनः प्रतिरूपैस्तैर्नानारूपैर्विमोहिता । अन्योन्यमर्जुनं मत्वा स्वमात्मानञ्च जघ्निरे ॥ १२ ॥ अयमर्जुनोऽयं गोविन्द इमौ पाण्डवयादवौ । इति ब्रुवाणाः सम्मूढा जघ्नुरन्योऽन्यमाहवे ॥ १३ ॥ मोहिताः परमास्त्रेण क्षयं जग्मुः परस्परम् । अशोभन्त रणे योधाः पुष्पिता इव किंशुकाः ॥ १४ ॥ ततः शरसहस्राणि तैर्विमुक्तानि

प्रवृद्धम् ॥ २१ ॥ तस्य तद्वापितं श्रुत्वा त्वरमाणो धनञ्जयः ।
वायव्यास्त्रेण तैरस्तां शरवृष्टिमपाहरत् ॥ २२ ॥ ततः संशप्तक-
व्रातान् साश्वद्विपरथायुधान् । उवाह भगवान् वायुः शुष्कपर्ण-
चयानिव ॥ २३ ॥ उह्यमानास्तु ते राजन् बह्वशोभन्त वायुना ।
उड्डीनाः पक्षिणः काले वृक्षेभ्य इव मारिष ॥ २४ ॥ तांस्तथा
व्याकुलीकृत्य त्वरमाणो धनञ्जयः । जघान निशितैर्बाणैः सह-
स्राणि शतानि च ॥ २५ ॥ शिरांसि भल्लैरहनद्बाहूनपि च सायु-
धान् । हस्तिहस्तोपमांश्चोरूञ्छरैरुर्व्यामपातयत् ॥ २६ ॥ पृष्ठ-
च्छिन्नान् विचरणान् बाहुपार्श्वेक्षणाकुलान् । नानाङ्गावयवैर्हीनान्
चकारारीन् धनञ्जयः ॥ २७ ॥ गन्धर्वनगराकारान् विधिवत्
कल्पितान् रथान् । शरैर्विशकलीकुर्वन् चक्रे व्यश्वरथद्विपान्
॥ २८ ॥ मुण्डतालवनानीव तत्र तत्र चकाशिरे । छिन्नध्वज-
रथव्राताः केचित्तत्र क्वचित् क्वचित् ॥ २९ ॥ सोत्तरायुधिनो
नागाः सपताकाङ्कुशध्वजाः । पेतुः शक्राशनिहता द्रुमवन्त इवा-
चलाः ॥ ३० ॥ चामरापीडकवचाः स्रस्तान्त्रनयनासवः । सारोहा-
स्तुरगाः पेतुः पार्थबाणहताः क्षितौ ॥ ३१ ॥ विप्रविद्धासिनखरा-
श्छिन्नवर्मास्थिसन्धयः । पत्तयश्छिन्नमर्माणः कृपणाः शेरते हताः
॥ ३२ ॥ तैर्हतैर्हन्यमानैश्च पतद्भिः पतितैरपि । भ्रमद्भिर्निष्टनद्भिश्च
क्रूरमायोधनं बभौ ॥ ३३ ॥ रजश्च महदुद्भूतं शान्तं रुधिर-
वृष्टिभिः । मही चाप्यभवद्दुर्गा कबन्धशतसङ्कुला ॥ ३४ ॥ तद्बभौ
रौद्रबीभत्सं बीभत्सोर्यानमाहवे । आक्रीड इव रुद्रस्य घ्नतः
कालात्यये पशून् ॥ ३५ ॥ ते वध्यमानाः पार्थेन व्याकुलाश्वरथ-
द्विपाः । तमेवाभिमुखाः क्षीणाः शक्रस्यातिथितां गताः ॥ ३६ ॥
सा भूमिर्भरतश्रेष्ठ निहतैस्तैर्महारथैः । आस्तीर्णा सम्बभौ
सर्वा प्रेतीभूतैः समन्ततः ॥ ३७ ॥ एतस्मिन्नन्तरे चैव प्रमत्ते
सव्यसाचिनि । व्यूढानीकस्ततो द्रोणो युधिष्ठिरमुपाद्रवत् ॥ ३८ ॥

तं प्रत्ययत्तांस्त्वरिता व्यूढानीकाः महारथाः। युधिष्ठिरं परीप्सन्तस्तदासीत्तुमुलं महत् ॥ ३९ ॥

इति षष्ठीपर्वणि संशप्तकवधपर्वणि अर्जुनयुद्धे एकोनविंशोऽध्यायः ॥ १९ ॥

---

सञ्जय उवाच। परिणाम्य निशान्तान्तु भारद्वाजो महारथः। उक्तस्तवाहं राजेन्द्र वचनं वै सुयोधनम् ॥ १ ॥ विधाय योगं पार्थेन च संशप्तकगणैः सह। निष्क्रान्ते च तदा पार्थे संशप्तकवधं प्रति ॥ २ ॥ व्यूढानीकस्ततो द्रोणः पाण्डवानां महाचमूम्। अभ्ययाद्भरतश्रेष्ठ धर्मराजजिघृक्षया ॥ ३ ॥ व्यूढं दृष्ट्वा सुपर्णन्तु भारद्वाजेन तत्तदा। व्यूहेन मण्डलार्द्धेन प्रत्यव्यूहद्युधिष्ठिरः ॥ ४ ॥ मुखं त्वासीत् सुपर्णस्य भारद्वाजो महारथः। शिरो दुर्य्योधनो राजा सोदर्य्यैः सानुगैः सः ॥ ५ ॥ चक्षुषी कृतवर्मा च गौतमश्चास्य भास्वरः। भूतशर्मा क्षेमशर्मा करकाक्षश्च वीर्य्यवान् ॥ ६ ॥ कलिङ्गाः सिंहलाः प्राच्याः शूद्राभीरा दशेरकाः। शका यवनकाम्बोजास्तथा हंसपदाश्च ये ॥ ७ ॥ ग्रीवायां शूरसेनास्तु दरदा मद्रकेकयाः। गजाश्वरथपत्त्यौघास्तस्थुः शतसहस्रशः ॥ ८ ॥ भूरिश्रवास्तथा शल्यः सोमदत्तश्च वाह्लिकः। अक्षौहिण्या वृता वीरा दक्षिणं पार्श्वमाश्रिताः ॥ ९ ॥ विन्दानुविन्दावावन्त्यौ काम्बोजश्च सुदक्षिणः। वामं पार्श्वं समाश्रित्य द्रोणपुत्राग्रतः स्थिताः ॥ १० ॥ पृष्ठे कलिङ्गाः साम्बष्ठा मागधाः पौण्ड्रमद्रकाः। गान्धाराः शकुनाः प्राच्याः पार्वतीया वसातयः

बलः ॥ १३ ॥ वृता बलेन महता अश्वालोकपरिष्कृताः । व्यूढ-
स्योरसि ते राजन् स्थिता युद्धविशारदाः ॥ १४ ॥ द्रोणेन
विहितो व्यूहः पदात्यश्वरथद्विपैः । वातोद्धूतार्णवाकारः प्रनृत्य-
न्निव लक्ष्यते ॥ १५ ॥ तस्य पक्षप्रपक्षेभ्यो निष्पतन्ति युयुत्सवः ।
सविद्युत्स्तनिता मेघाः सर्वदिग्भ्य इवोष्णगे ॥ १६ ॥ तस्य
प्राग्ज्योतिषो मध्ये विधिवत् कल्पितं गजम् । आस्थितः शुशुभे
राजन्नंशुमानुदये यथा ॥ १७ ॥ माल्यदामवता राजन् श्वेत-
च्छत्रेण धार्य्यता । कृत्तिकायोगयुक्तेन पौर्णमास्यामिवेन्दुना
॥ १८ ॥ नीलाञ्जनचयप्रख्यो मदान्धो द्विरदो बभौ । अभिवृष्टो
महामेघैर्यथा स्यात् पर्वतो महान् ॥ १९ ॥ नानानृपतिभिर्वीरै-
र्विविधायुधभूषणैः । समन्वितः पार्वतीयैः शक्रो देवगणैरिव
॥ २० ॥ ततो युधिष्ठिरः प्रेक्ष्य व्यूहं तमतिमानुषम् । अजय्य-
मरिभिः सङ्ख्ये पार्षतं वाक्यमब्रवीत् ॥ २१ ॥ ब्राह्मणस्य वशं
नाहमियामद्य यथा प्रभो । पारावतसवर्णाश्व तथा नीति-
र्विधीयताम् ॥ २२ ॥

धृष्टद्युम्न उवाच । द्रोणस्य यतमानस्य वशं नैष्यसि सुव्रत ।
अहमावारयिष्यामि द्रोणमद्य सहानुगम् ॥ २३ ॥ मयि जीवति
कौरव्य नोद्वेगं कर्त्तुमर्हसि । न हि शक्तो रणे द्रोणो विजेतुं
मां कथञ्चन ॥ २४ ॥

सञ्जय उवाच । एवमुक्त्वा किरन् बाणान् द्रुपदस्य सुतो
बली । पारावतसवर्णाश्वः स्वयं द्रोणमुपाद्रवत् ॥ २५ ॥ अनिष्ट-
दर्शनं दृष्ट्वा धृष्टद्युम्नमवस्थितम् । क्षणेनैवाभवद्द्रोणो नातिहृष्ट-
मना इव ॥ २६ ॥ तन्तु सम्प्रेक्ष्य पुत्रस्ते दुर्मुखः शत्रुकर्षणः ।
प्रियं चिकीर्षुर्द्रोणस्य धृष्टद्युम्नमवारयत् ॥ २७ ॥ स सम्प्रहार-
स्तुमुलः सुघोरः समपद्यत । पार्षतस्य च शूरस्य दुर्मुखस्य च
भारत ॥ २८ ॥ पार्षतः शरजालेन क्षिप्रं प्रच्छाद्य दुर्मुखम् ।

भारद्वाजं शरौघेण महता समवारयत ॥ २९ ॥ द्रोणमावारितं
दृष्ट्वा भयमायात्सवाहन । नानालिङ्गै शरव्रातै पार्षत सम-
मोहयत ॥ ३० ॥ तयोर्विपक्षयो सङ्ख्ये पाञ्चालकुरुमुख्ययो ।
द्रोणो यौधिष्ठिरं सैन्यं बहुधा व्यधमच्छरै ॥ ३१ ॥ अनिलेन
यथाभ्राणि विच्छिन्नानि समन्तत । तथा पार्थस्य सैन्यानि
विच्छिन्नानि क्वचित् क्वचित् ॥ ३२ ॥ मुहूर्त्तमिव तद्युद्धमासी-
न्मधुरदर्शनम् । तत उन्मत्तवद्राजन् निर्मर्य्यादमवर्त्तत ॥ ३३ ॥
नैव स्वे न परे राजन्नाज्ञायन्त परस्परम् । अनुमानेन संज्ञाभि-
र्युद्धं तत समवर्त्तत ॥ ३४ ॥ चूडामणिषु निष्केषु भूषणेष्वपि
वर्म्मसु । तेषामादित्यवर्णाभा रश्मय प्रचकाशिरे ॥ ३५ ॥ तत्
प्रकीर्णपताकानां रथवारणवाजिनाम् । बलाकाशबलाभ्राभं
ददृशे रूपमाहवे ॥ ३६ ॥ नरानेव नरा जघ्नुरुदग्राश्च हया
हयान् । रथांश्च रथिनो जघ्नुर्वारणान् वरवारणा ॥ ३७ ॥
समुच्छ्रितपताकानां गजानां परमद्विपै । क्षणेन तुमुलो घोर
सङ्ग्राम समपद्यत ॥ ३८ ॥ तेषां संसक्तगात्राणां कर्षतामितरे-
तरम् । दन्तसङ्घातसङ्घर्षात्सधूमोऽग्निरजायत ॥ ३९ ॥ विप्र-
कीर्णपताकास्ते विषाणजनिताग्नय । बभूवु खं समासाद्य
सविद्युत इवाम्बुदा ॥ ४० ॥ विक्षिपद्भिर्नदद्भिश्च निपतद्भिश्च
वारणै । सम्बभूव मही कीर्णा मेघैर्द्यौरिव शारदी ॥ ४१ ॥
तेषामाहन्यमानानां बाणतोमरऋष्टिभि । वारणानां रवो जज्ञे
मेघानामिव सम्प्लवे ॥ ४२ ॥ तोमराभिहता केचिद्बाणैश्च परम-
द्विपा । वित्रेसु सर्व्वनागानां शब्दमेवापरेऽव्रजन् ॥ ४३ ॥ विषा-
णाभिहताश्चापि केचित्तत्र गजा गजै । चक्रुरार्त्तस्वनं घोरमुत्-
पातजलदा इव ॥ ४४ ॥ प्रतीपा क्रियमाणाश्च वारणा वर-
वारणै । उन्मथ्य पुनराजघ्नु प्रेषिता परमाङ्कुशै ॥ ४५ ॥
महामात्रैर्महामात्रास्ताडिता शरतोमरै । गजेभ्य पृथिवीं

जग्मुर्मुक्तप्रहरणाङ्कुशाः ॥ ४६ ॥ निर्मनुष्याश्च मातङ्गा विनदन्त-
स्ततस्ततः । छिन्नाभ्राणीव सम्पेतुः सम्प्रविश्य परस्परम् ॥ ४७ ॥
हतान् परिवहन्तश्च पातितान् पतितायुधान् । दिशो जग्मु-
र्महानागाः केचिदेकचरा इव ॥ ४८ ॥ ताडितास्ताड्यमानाश्च
तोमरर्ष्टिपरश्वधैः । पेतुरार्त्तस्वरं कृत्वा तदा विशसने गजाः
॥ ४९ ॥ तेषां शैलोपमैः कायैर्निपतद्भिः समन्ततः । आहता
सहसा भूमिश्चकम्पे च ननाद च ॥ ५० ॥ सादितैः सगजारोहैः
सपताकैः समन्ततः । मातङ्गैः शुशुभे भूमिर्विकीर्णैरिव पर्वतैः
॥ ५१ ॥ गजस्थाश्च महामात्रा निर्भिन्नहृदया रणे । रथिभिः
पतिता भल्लैर्विकीर्णाङ्कुशतोमराः ॥ ५२ ॥ क्रौञ्चवद्विनदन्तोऽन्ये
नाराचाभिहता गजाः । परान् स्वांश्चापि मृद्नन्तः परिपेतुर्दिशो
दश ॥ ५३ ॥ गजाश्वरथयोधानां शरीरौघसमावृता । बभूव
पृथिवी राजन् मांसशोणितकर्द्दमा ॥ ५४ ॥ प्रमथ्य च विषा-
णाग्रैः समुत्क्षिप्य च वारणैः । सचक्राश्च विचक्राश्च रथैरेव महा-
रथाः ॥ ५५ ॥ रथाश्च रथिभिर्हीना निर्मनुष्याश्च वाजिनः ।
हतारोहाश्च मातङ्गा दिशो जग्मुर्भयातुराः ॥ ५६ ॥ जघानात्र
पिता पुत्रं पुत्रश्च पितरं तथा । इत्यासीत्तुमुलं युद्धं न प्राज्ञा-
यत किञ्चन ॥ ५७ ॥ आगुल्फेभ्योऽवसीदन्ते नरा लोहितकर्द्दमैः ।
दीप्यमानैः परिक्षिप्ता दावैरिव महाद्रुमाः ॥ ५८ ॥ शोणितैः
सिच्यमानानि वस्त्राणि कवचानि च । छत्राणि च पताकाश्च सर्वं
रक्तमदृश्यत ॥ ५९ ॥ हयौघाश्च रथौघाश्च नरौघाश्च निपातिताः ।
संवृत्ताः पुनरावृत्य बहुधा रथनेमिभिः ॥ ६० ॥ स गजौघ-
महावेगः परासुनरशैवलः । रथौघतुमुलावर्त्तः प्रबभौ सैन्य-
सागरः ॥ ६१ ॥ तं वाहनमहानौभिर्योधा जयधनैषिणः ।
अवगाह्याप्यमज्जन्तो वैरमोहं प्रचक्रिरे ॥ ६२ ॥ शरवर्षाभि-
वृष्टेषु योधेष्वाचितलक्ष्मसु । न तेषु चित्तता लेभे कश्चिदाहत-

लक्षणः ॥ ६३ ॥ वर्त्तमाने तथा युद्धे घोररूपे भयङ्करे । मोहयित्वा परान् द्रोणो युधिष्ठिरमुपाद्रवत् ॥ ६४ ॥

इति द्रोणपर्वणि संशप्तकवधपर्वणि सङ्कुलयुद्धे
विंशोऽध्यायः ॥ २० ॥

---

षष्ट्या स्तनान्तरे। विव्याध बलवान् राजंस्तदद्भुतमिवाभवत ॥१३॥ द्रोणस्तु शरवर्षेण छाद्यमानो महारथः। वेगं चक्रे महावेगः क्रोधादुद्वृत्य चक्षुषी ॥ १४ ॥ ततः सत्यजितश्चापं छित्त्वा द्रोणो वृकस्य च। षड्‌भिः ससूतं सहयं शरैर्द्रोणोऽवधीद्वृकम् ॥ १५ ॥ अथान्यद्धनुरादाय सत्यजिद्वेगवत्तरम्। साश्वं ससूतं विशिखै-र्द्रोणं विव्याध सध्वजम् ॥ १६ ॥ स तं न ममृषे द्रोणः पाञ्चा-ल्येनार्द्दितो मृधे। ततस्तस्य विनाशाय सत्वरं व्यसृजच्छरान् ॥ १७ ॥ हयान् ध्वजान् धनुर्मुष्टिमुभौ च पार्ष्णिसारथी। अवा-किरंस्ततो द्रोणः शरवर्षैः सहस्रशः ॥ १८ ॥ तथा सञ्छिद्यमानेषु कार्मुकेषु पुनः पुनः। पाञ्चाल्यः परमास्त्रज्ञः शोणाश्वमयो-धयत् ॥ १९ ॥ स सत्यजितमालोक्य तथोदीर्णं महाहवे। अर्द्ध-चन्द्रेण चिच्छेद शिरस्तस्य महात्मनः ॥ २० ॥ तस्मिन् हते महा-मात्रे पाञ्चालानां महारथे। अपायाज्जवनैरश्वैर्द्रोणात्त्रस्तो युधि-ष्ठिरः ॥ २१ ॥ पाञ्चालाः केकया मत्स्याश्चेदिकारूषकोशलाः। युधिष्ठिरमभीप्सन्तो दृष्ट्वा द्रोणमुपाद्रवन् ॥ २२ ॥ ततो युधि-ष्ठिरं प्रेप्सुराचार्य्यः शत्रुपूगहा। व्यधमत्तान्यनीकानि तूलराशि-मिवानलः ॥ २३ ॥ निर्द्दहन्तमनीकानि तानि तानि पुनः पुनः। द्रोणं मत्स्यादवरजः शतानीकोऽभ्यवर्त्तत ॥ २४ ॥ सूर्य्यरश्मि-प्रतीकाशैः कर्मारपरिमार्ज्जितैः। षड्‌भिः ससूतं सहयं द्रोणं विद्ध्वानदद्भृशम् ॥ २५ ॥ क्रूराय कर्म्मणे युक्तश्चिकीर्षुः कर्म्म दुष्करम्। अवाकिरच्छरव्रातैर्भारद्वाजं महारथम् ॥ २६ ॥ तस्य नानदतो द्रोणः शिरः कायात् सकुण्डलम्। क्षुरेणापाहरत्तूर्णं ततो मत्स्याः प्रदुद्रुवुः ॥ २७ ॥ मत्स्यान् जित्वाजयच्चेदीन् कारू-षान् केकयानपि। पाञ्चालान् सृञ्जयान् पाण्डून् भारद्वाजः पुनः पुनः ॥ २८ ॥ तं दहन्तमनीकानि क्रुद्धमग्निर्यथा वनम्। दृष्ट्वा रुक्मरथं वीरं समकम्पन्त सृञ्जयाः ॥ २९ ॥ उत्तमं पारदानस्य

धनुरस्याशुकारिणः । ज्याघोषो निघ्नतोऽमित्रान् दिक्षु सर्वासु
शुश्रुवे ॥ ३० ॥ नागानश्वान् पदातींश्च रथिनो गजसादिनः ।
रौद्रा हस्तवता मुक्ताः प्रमथ्नन्ति स्म सायकाः ॥ ३१ ॥ नानद्य-
मानः पर्जन्यो मिश्रवातो हिमात्यये । अश्मवर्षमिवावर्षत् परेषां
भयमादधत् ॥ ३२ ॥ सर्वा दिशः समचरत् सैन्यं विक्षोभयन्निव ।
बली शूरो महेष्वासो मित्राणामभयङ्करः ॥ ३३ ॥ तस्य विद्यु-
दिवाभ्रेषु चापं हेमपरिष्कृतम् । दिक्षु सर्वासु पश्याम द्रोण-
स्यामिततेजसः ॥ ३४ ॥ शोभमानां ध्वजे चास्य वेदीमद्राक्ष्म
भारत । हिमवच्छिखराकारां चरतः संयुगे भृशम् ॥ ३५ ॥
द्रोणस्तु पाण्डवानीके चकार कदनं महत् । यथा दैत्यगणे विष्णुः
सुरासुरनमस्कृतः ॥ ३६ ॥ स शूरः सत्यवाक् प्राज्ञो बलवान्
सत्यविक्रमः । महानुभावः कल्पान्ते रौद्रीं भीरुविभीषणाम् ॥३७॥
कवचोर्मिध्वजावर्तां मर्त्यकूलापहारिणीम् । गजवाजिमहाग्राहा-
मसिमीनां दुरासदाम् ॥ ३८ ॥ वीरास्थिशर्करां रौद्रां भेरीमुरज-
कच्छपाम् । चर्मवर्मप्लवां घोरां केशशैवलशाद्वलाम् ॥ ३९ ॥
शरौघिणीं धनुःस्रोतां बाहुपन्नगसङ्कुलाम् । रणभूमिवहां तीव्रां
कुरुसृञ्जयवाहिनीम् ॥ ४० ॥ मनुष्यशीर्षपाषाणां शक्तिमीनां

भ्युद्यतायुधाः । राजानो राजपुत्राश्च समन्तात् पर्य्यवारयन् ॥४७॥ शिखण्डी तु ततो द्रोणं पञ्चभिर्नतपर्व्वभिः । क्षत्रधर्म्मा च विंशत्या वसुदानश्च पञ्चभिः ॥ ४८ ॥ उत्तमौजास्त्रिभिर्वाणैः क्षत्रदेवश्च पञ्चभिः । सात्यकिश्च शतेनाजौ युधामन्युस्तथाष्टभिः ॥ ४९ ॥ युधिष्ठिरो द्वादशभिर्द्रोणं विव्याध सायकैः । धृष्टद्युम्नश्च दशभि-श्चेकितानस्त्रिभिः शरैः ॥ ५० ॥ ततो द्रोणः सत्यसन्धः प्रभिन्न इव कुञ्जरः । अभ्यतीत्य रथानीकं दृढसेनमपातयत् ॥ ५१ ॥ ततो राजानमासाद्य प्रहरन्तमभीतवत् । अविध्यन्नवभिः क्षेमं स हतः प्रापतद्रथात् ॥ ५२ ॥ समध्यं प्राप्य सैन्यानां सर्वाः प्रवि-चरन् दिशः । त्राता ह्यभवदन्येषां न त्रातव्यः कथञ्चन ॥ ५२ ॥ शिखण्डिनं द्वादशभिर्विंशत्या चोत्तमौजसम् । वसुदानञ्च भल्लेन प्रेषयद्यमसादनम् ॥ ५३ ॥ अशीत्या क्षेमवर्म्माणं षड्विंशत्या सुदक्षिणम् । क्षत्रदेवन्तु भल्लेन रथनीड़ादपातयत ॥ ५४ ॥ युधामन्युं चतुःषष्ट्या त्रिंशता चैव सात्यकिम् । विद्धा रुक्मरथ-स्तूर्णं युधिष्ठिरमुपाद्रवत् ॥ ५५ ॥ ततो युधिष्ठिरः क्षिप्रं गुरुतो राजसत्तमः । अपायाज्जवनैरश्वैः पाञ्चाल्यो द्रोणमभ्ययात् ॥५६॥ तं द्रोणः सधनुष्कन्तु साश्वयन्तारमाक्षिणोत् । स हतः प्रापत-द्भूमौ रथाज्ज्योतिरिवाम्बरात् ॥५७॥ तस्मिन् हते राजपुत्रे पाञ्चालानां यशस्करे । हतद्रोणं हतद्रोणमित्याचौक्रि स्वनो महान् ॥ ५८ ॥ तांस्तथा भृशसंरब्धान् पाञ्चालान् मत्स्यकेक-यान् । सृञ्जयान् पाण्डवांश्चैव द्रोणो व्यक्षोभयद्बली ॥ ५९ ॥ सात्यकिं चेकितानञ्च धृष्टद्युम्नशिखण्डिनौ । वार्द्धक्षेमिं चैत्रसेनिं सेनाविन्दुं सुवर्च्चसम् ॥ ६० ॥ एतांश्चान्यांश्च सुबहून्नानाजन-पदेश्वरान् । सर्वान् द्रोणोऽजयद्युद्धे कुरुभिः परिवारितः ॥ ६१ ॥ तावकाश्च महाराज जयं लब्ध्वा महाहवे । पाण्ड-वेयान् रणे जघ्नुर्द्रवमाणान् समन्ततः ॥ ६२ ॥ ते दानवा

धनुरस्याशुकारिणः । ज्याघोषो निघ्नतोऽमित्रान् दिक्षु सर्वासु शुश्रुवे ॥ ३० ॥ नागानश्वान् पदातींश्च रथिनो गजसादिनः । रौद्रा हस्तवता मुक्ताः प्रमथ्नन्ति स्म सायकाः ॥ ३१ ॥ नानद्यमानः पर्जन्यो मिश्रवातो हिमात्यये । अश्मवर्षमिवावर्षन् परेषां भयमादधत् ॥ ३२ ॥ सर्वा दिशः समचरन् सैन्यं विक्षोभयन्निव । बली शूरो महेष्वासो मित्राणामभयङ्करः ॥ ३३ ॥ तस्य विद्युदिवाभ्रेषु चापं हेमपरिष्कृतम् । दिक्षु सर्वासु पश्याम द्रोणस्यामिततेजसः ॥ ३४ ॥ शोभमानां ध्वजे चास्य वेदीमद्राक्ष्म भारत । हिमवच्छिखराकारां चरतः संयुगे भृशम् ॥ ३५ ॥ द्रोणस्तु पाण्डवानीके चकार कदनं महत् । यथा दैत्यगणे विष्णुः सुरासुरनमस्कृतः ॥ ३६ ॥ स शूरः सत्यवाक् प्राज्ञो बलवान् सत्यविक्रमः । महानुभावः कल्पान्ते रौद्रीं भीरुविभीषणाम् ॥३७॥ कवचोर्म्मिध्वजावर्त्तां मर्त्त्यकूलापहारिणीम् । गजवाजिमहाग्राहामसिमीनां दुरासदाम् ॥ ३८ ॥ वीरास्थिशर्करां रौद्रां भेरीमुरजकच्छपाम् । चर्म्मवर्म्मप्लवां घोरां केशशैवलशाद्वलाम् ॥ ३९ ॥ शरौघिणीं धनुःस्रोतां बाहुपन्नगसङ्कुलाम् । रणभूमिवहां तीव्रां कुरुसृञ्जयवाहिनीम् ॥ ४० ॥ मनुष्यशीर्षपाषाणां शक्तिमीनां गदोडुपाम् । उष्णीषफेनवसनां विकीर्णान्त्रसरीसृपाम् ॥ ४१ ॥ वीरापहारिणीमुग्रां मांसशोणितकर्द्दमाम् । हस्तिग्राहां केतुवृक्षां क्षत्रियाणां निमज्जनीम् ॥ ४२ ॥ क्रूरां शरीरसङ्घट्टां सादिनक्रां

भ्युद्यतायुधाः । राजानो राजपुत्राश्च समन्तात् पर्यवारयन् ॥४७॥
शिखण्डी तु ततो द्रोणं पञ्चभिर्नतपर्वभिः । क्षत्रधर्मा च विंशत्या
वसुदानश्च पञ्चभिः ॥ ४८ ॥ उत्तमौजास्त्रिभिर्बाणैः क्षत्रदेवश्च
पञ्चभिः । सात्यकिश्च शतेनाजौ युधामन्युस्तथाष्टभिः ॥ ४९ ॥
युधिष्ठिरो द्वादशभिर्द्रोणं विव्याध सायकैः । धृष्टद्युम्नश्च दशभि-
श्चेकितानस्त्रिभिः शरैः ॥ ५० ॥ ततो द्रोणः सत्यसन्धः प्रभिन्न
इव कुञ्जरः । अभ्यतीत्य रथानीकं दृढसेनमपातयत् ॥ ५१ ॥
ततो राजानमासाद्य प्रहरन्तमभीतवत् । अविध्यन्नवभिः क्षेमं स
हतः प्रापतद्रथात् ॥ ५२ ॥ समध्यं प्राप्य सैन्यानां सर्वाः प्रवि-
चरन् दिशः । त्राता ह्यभवदन्येषां न त्रातव्यः कथञ्चन ॥ ५२ ॥
शिखण्डिनं द्वादशभिर्विंशत्या चोत्तमौजसम् । वसुदानञ्च भल्लेन
प्रेषयद्यमसादनम् ॥ ५३ ॥ अशीत्या क्षेमवर्माणं षड्विंशत्या
सुदक्षिणम् । क्षत्रदेवन्तु भल्लेन रथनीडादपातयत् ॥ ५४ ॥
युधामन्युं चतुःषष्ट्या त्रिंशता चैव सात्यकिम् । विद्धा रुक्मरथ-
स्तूर्णं युधिष्ठिरमुपाद्रवत् ॥ ५५ ॥ ततो युधिष्ठिरः क्षिप्रं गुरुतो
राजसत्तमः । अपायाज्जवनैरश्वैः पाञ्चाल्यो द्रोणमभ्ययात् ॥५६॥
तं द्रोणः सधनुष्कन्तु साश्वयन्तारमाक्षिणोत् । स हतः प्रापत-
द्भूमौ रथाज्ज्योतिरिवाम्बरात् ॥ ५७ ॥ तस्मिन् हते राजपुत्रे
पाञ्चालानां यशस्करे । हतद्रोणं हतद्रोणमित्यासीन्निःस्वनो
महान् ॥ ५८ ॥ तांस्तथा भृशसंरब्धान् पाञ्चालान् मत्स्यकैक-
यान् । सृञ्जयान् पाण्डवांश्चैव द्रोणो व्यक्षोभयद्बली ॥ ५९ ॥
सात्यकिं चेकितानञ्च धृष्टद्युम्नशिखण्डिनौ । वार्द्धक्षेमिं चैत्रसेनिं
सेनाबिन्दुं सुवर्चसम् ॥ ६० ॥ एतांश्चान्यांश्च सुबहून्नानाजन-
पदेश्वरान् । सर्वान् द्रोणोऽजयद्युद्धे कुरुभिः परिवारितः
॥ ६१ ॥ तावकाश्च महाराज जयं लब्ध्वा महाहवे । पाण्ड-
वेयान् रणे जघ्नुर्द्रवमाणान् समन्ततः ॥ ६२ ॥ ते दानवा

द्रवेन्द्रेण वध्यमानाः समन्ततः। पाञ्चालाः केकया मत्स्याः समकम्पन्त भारत॥ ६४॥

इति द्रोणपर्व्वणि संशप्तकवधपर्व्वणि द्रोणयुद्धे एकविंशोऽध्यायः॥ २१॥

---

धृतराष्ट्र उवाच। भारद्वाजेन भग्नेषु पाण्डवेषु महामृधे। पाञ्चालेषु च सर्व्वेषु कश्चिदन्योऽभ्यवर्त्तत॥ १॥ आर्य्यां युद्धे मतिं कृत्वा क्षत्रियाणां यशस्करीम्। असेवितां कापुरुषैः सेवितां पुरुषर्षभैः॥ २॥ अहो नासीत् पुमान् कश्चिद्दृष्ट्वा द्रोणं व्यवस्थितम्। जृम्भमाणमिव व्याघ्रं प्रभिन्नमिव कुञ्जरम्॥ ३॥ त्यजन्तमाहवे प्राणान् सन्नद्धं चित्रयोधिनम्। महेष्वासं नरव्याघ्रं द्विषतां भयवर्द्धनम्॥ ४॥ कृतज्ञं सत्यनिरतं दुर्य्योधनहितैषिणम्। भारद्वाजं तथानीके दृष्ट्वा शूरमवस्थितम्। के वीराः संन्यवर्त्तन्त तन्ममाचक्ष्व सञ्जय॥ ५॥

सञ्जय उवाच। तान् दृष्ट्वा चलितान् सङ्ख्ये प्रणुन्नान् द्रोणसायकैः। पाञ्चालान् पाण्डवान् मत्स्यान् सृञ्जयांश्चेदिकेकयान्॥ ६॥ द्रोणचापविमुक्तेन शरौघेणाशुहारिणा। सिन्धोरिव महौघेन ह्रियमाणान् यथा प्लवान्॥ ७॥ कौरवाः सिंहनादेन नानावाद्यस्वनेन च। रथद्विपनराश्चैव सर्व्वतः समवारयन्॥८॥ तान् पश्यन् सैन्यमध्यस्थो राजा स्वजनसंवृतः। दुर्य्योधनोऽब्रवीत् कर्णं प्रहृष्टः प्रहसन्निव॥ ८॥

त्मना। यथानेकेन गच्छन्ति घूर्णमानास्ततस्ततः ॥ १२ ॥ संनिरुह्य कौरव्यैर्द्रोणेन च महात्मना। एतेऽन्ये मण्डलीभूताः पावकेनेव कुञ्जराः ॥ १३ ॥ भ्रमरैरिव चाविष्टा द्रोणस्य निशितैः शरैः। अन्योऽन्यं समलीयन्त पलायनपरायणाः ॥ १४ ॥ एष भीमो महाक्रोधी हीनः पाण्डवसृञ्जयैः। मदीयैरावृतो योधैः कर्ण नन्दयतीव माम् ॥ १५ ॥ व्यक्तं द्रोणमयं लोकमद्य पश्यति दुर्मतिः। निराशो जीविताद्‌नूनमद्य राज्याच्च पाण्डवः ॥ १६ ॥

कर्ण उवाच। नैष जातु महाबाहुर्जीवन्नाहवमुत्सृजेत्। न चेमान् पुरुषव्याघ्र सिंहनादान् सहिष्यति ॥ १७ ॥ न चापि पाण्डवा युद्धे भज्येरन्निति मे मतिः। शूराश्च बलवन्तश्च कृतास्त्रा युद्धदुर्मदाः ॥ १८ ॥ विषाग्निद्यूतसंक्लेशान् वनवासञ्च पाण्डवाः। स्मरमाणा न हास्यन्ति सङ्ग्राममिति मे मतिः ॥ १९ ॥ निवृत्तो हि महाबाहुरमितौजा वृकोदरः। वरान् वरान् हि कौन्तेयो रथोदारान् हनिष्यति ॥ २० ॥ असिना धनुषा शक्त्या हयैर्नागैर्नरैरथैः। आयसेन च दण्डेन व्रातान् व्रातान् हनिष्यति ॥ २१ ॥ तमेनमन्ववर्त्तन्त सात्यकिप्रमुखा रथाः। पाञ्चालाः केकया मत्स्याः पाण्डवाश्च विशेषतः ॥ २२ ॥ शूराश्च बलवन्तश्च विक्रान्ताश्च महारथाः। विशेषतश्च भीमेन संरब्धेनाभिचोदिताः ॥ २३ ॥ ते द्रोणमभिवर्त्तन्ते सर्व्वतः कुरुपुङ्गवाः। वृकोदरं परीप्सन्तः सूर्य्यमभ्रगणा इव ॥ २४ ॥ एकायनगता ह्येते पीडयेयुर्यतव्रतम्। अरक्ष्यमाणं शलभा यथा दीपं मुमूर्षवः ॥ २५ ॥ असंशयं कृतास्त्राश्च पर्य्याप्ताश्चापि वारणे। अतिभारमहं मन्ये भारद्वाजे समाहितम् ॥ २६ ॥ ते शीघ्रमनुगच्छामो यत्र द्रोणो व्यवस्थितः। काका इव महानागं मा वै हन्युर्यतव्रतम् ॥ २७ ॥

सञ्जय उवाच। राधेयस्य वचः श्रुत्वा राजा दुर्य्योधनस्तत। भ्रातृभिः सहितो राजन् प्रायाद्द्रोणरथं प्रति ॥ २८ ॥

तत्र रावो महानासीद्दिक्षु द्रोणं जिघांसताम् । पाण्डवानां निवृत्तानां नानावर्णैर्हयोत्तमैः ॥ २९ ॥

इति द्रोणपर्व्वणि संशप्तकवधपर्व्वणि द्रोणयुद्धे द्वाविंशोऽध्यायः ॥ २२ ॥

---

धृतराष्ट्र उवाच । सर्व्वेषामेव मे ब्रूहि रथचिह्नानि सञ्जय । यद्द्रोणमभ्यवर्त्तन्त क्रुद्धा भीमपुरोगमाः ॥ १ ॥

सञ्जय उवाच । ऋष्यवर्णैर्हयैर्दृष्ट्वा व्यायच्छन्तं वृकोदरम् । रजताश्वस्ततः शूरः शैनेयः सन्न्यवर्त्तत ॥ २ ॥ सारङ्गैर्युधामन्युरुह्यमानो हयोत्तमैः । पर्य्यवर्त्तत दुर्द्धर्षः क्रुद्धो द्रोणरथं प्रति ॥ ३ ॥ पारावतसवर्णैस्तु हेमदण्डैर्महाजवैः । पाञ्चालराजस्य सुतो धृष्टद्युम्नो न्यवर्त्तत ॥ ४ ॥ पितरन्तु परिप्रेप्सुः क्षत्रधर्म्मा यतव्रतः । सिद्धिञ्चास्य परां काङ्क्षन् शोणाश्वः सन्न्यवर्त्तत ॥ ५ ॥ पद्मपत्रनिभांश्चाश्वान् मल्लिकाक्षान् स्वलङ्कृतान् । शैखण्डिः क्षत्रदेवस्तु स्वयं संत्वरयन् ययौ ॥ ६ ॥ दर्शनीयास्तु काम्बोजाः शुकपत्रपरिच्छदाः । वहन्तो नकुलं शीघ्रं तावकानभिदुद्रुवुः ॥ ७ ॥ कृष्णाश्च मेघसङ्काशा अवहन्नुत्तमौजसम् । दुर्द्धर्षायाभिसन्धाय क्रुद्धा युद्धाय भारत ॥ ८ ॥ तथा तित्तिरकल्माषा हया वातसमा जवे । अवहंस्तुमुले युद्धे सहदेवमुदा-

वर्त्तत ॥ १३ ॥ तं विराटोऽन्वयाच्छीघ्रं सह सर्व्वैर्महारथैः ।
केकयाश्च शिखण्डी च धृष्टकेतुस्तथैव च ॥ १४ ॥ स्वैः स्वैः सैन्यैः
परिवृता मत्स्यराजानमन्वयुः । तन्तु पाटलपुष्पाणां समवर्णा
हयोत्तमाः ॥ १५ ॥ वहमाना व्यराजन्त मत्स्यस्यामित्रघातिनः ।
हरिद्रासमवर्णाश्च जवना हेममालिनः ॥ १६ ॥ पुत्रं विराट-
राजस्य सत्वरं समुदावहन् । इन्द्रगोपकवर्णैश्च भ्रातरः पञ्च
केकयाः ॥ १७ ॥ जातरूपसमाभासः सर्व्वे लोहितकध्वजाः ।
ते हेममालिनः शूराः सर्व्वे युद्धविशारदाः ॥ १८ ॥ वर्षन्त इव
जीमूताः प्रत्यदृश्यन्त दंशिताः । आमपात्रनिकाशास्तु पाञ्चाल्य-
ममितौजसम् ॥ १९ ॥ दन्तवर्णास्तु तुरगाः शिखण्डिनमुदावहन् ।
तथा द्वादशसाहस्रा पाञ्चालानां महारथाः ॥ २० ॥ तेषान्तु
षट्सहस्राणि ये शिखण्डिनमन्वयुः । पुत्रन्तु शिशुपालस्य नर-
सिंहस्य मारिष ॥ २१ ॥ आक्रीडन्तो वहन्ति स्म सारङ्गशवला
हयाः । धृष्टकेतुस्तु चेदीनामृषभोऽतिबलान्वितः ॥ २२ ॥ काम्बोजैः
शवलैरश्वैरभ्यवर्त्तत दुर्ज्जयः । बृहत्क्षत्रन्तु कैकेयं सुकुमारं
हयोत्तमाः ॥ २३ ॥ पलालधूमवर्णाभाः सैन्धवाः शीघ्रमावहन् ।
मल्लिकाक्षाः पद्मवर्णा वाह्लिजाताः स्वलङ्कृताः ॥ २४ ॥ शूरं
शिखण्डिनः पुत्रं क्षत्रदेवमुदावहन् । रुक्मभाण्डप्रतिच्छन्नाः
कौशेयसदृशा हयाः ॥ २५ ॥ क्षमावन्तोऽवहन् सङ्ख्ये सेनाबिन्दु-
मरिन्दमम् । युवानमवहन् युद्धे क्रौञ्चवर्णा हयोत्तमाः ॥ २६ ॥
काश्यस्याभिभुवः पुत्रं सुकुमारं महारथम् । श्वेतास्तु प्रति-
विन्ध्यन्तं कृष्णग्रीवा मनोजवाः ॥ २७ ॥ यन्तुः प्रीतिकरा राजन्
राजपुत्रमुदावहन् । सुतसोमं तु यं सोमात् पार्थः पुत्रमयाचत ।
माषपुष्पसवर्णास्तमवहन् वाजिनो रणे ॥ २८ ॥ सहस्रसोम-
प्रतिमो बभूव पुरे कुरूणामुदयेन्दुनाम्नि । तस्मिन् ख्यातः
सोमसङ्क्रन्दमध्ये यस्मात्तस्मात् सुतसोमोऽभवत् सः ॥ २९ ॥ नाकु-

लिन्तु शतानीकं शालपुष्पनिभा हयाः । आदित्यतरुणप्रख्याः
श्लाघनीयमुदावहन् ॥३०॥ काञ्चनप्रतिमैर्योक्त्रैर्मयूरग्रीवसन्निभाः ।
द्रौपदेयं नरव्याघ्रं श्रुतकर्माणमाहवे ॥ ३१ ॥ श्रुतकीर्त्तिं श्रुत-
निधिं द्रौपदेयं हयोत्तमाः । ऊहुः पार्थसमं युद्धे चाषपत्रनिभा
हयाः ॥ ३२ ॥ यमाहुरध्यर्द्धगुणं कृष्णात् पार्थाच्च संयुगे ।
अभिमन्युं पिशङ्गास्तं कुमारमवहन् रणे ॥ ३३ ॥ एकस्तु धार्त्त-
राष्ट्रेभ्यः पाण्डवान् यः समाश्रितः । तं बृहन्तो महाकाया युयुत्-
सुमवहन् रणे ॥ ३४ ॥ पलालकाण्डवर्णास्तु वार्द्धक्षेमिं तर-
स्विनम् । ऊहुः सतुमुले युद्धे हयाः हृष्टाः स्वलङ्कृताः ॥ ३५ ॥
कुमारं शितिपादास्तु रुक्मपत्रैरुरश्छदैः । सौचित्तिमवहन् युद्धे
यन्तुः प्रेष्यकरा हयाः ॥ ३६ ॥ रुक्मपृष्ठावकीर्णास्तु कौशेयसदृशा
हयाः सुवर्णमालिनः क्षान्ताः श्रेणिमन्तमुदावहन् ॥ ३७ ॥ रुक्मा-
भाश्च धनुर्वेदे ब्राह्मे वेदे च पारगम् । तं सत्यधृतिमायान्त-
मरुणाः समुदावहन् ॥ ३८ ॥ यः स पाञ्चालसेनानीर्द्रोणमंश-
मकल्पयत् । पारावतसवर्णास्तं धृष्टद्युम्नमुदावहन् ॥ ३९ ॥
तमन्वयात् सत्यधृतिः सौचित्तिर्युद्धदुर्मदः । श्रेणिमान् वसुदानश्च
पुत्रः काश्यस्य से विभुः ॥ ४० ॥ युक्तैः परमकाम्बोजैर्जवनैर्हेम-
मालिभिः । भीषयन्तो द्विषां सैन्यं यमवैश्रवणोपमाः ॥ ४१ ॥
प्रभद्रकास्तु काम्बोजाः षट्सहस्राण्युदायुधाः । नानावर्णैर्हय-

हतराजयः । पाञ्चाल्यं गोपतेः पुत्रं सिंहसेनमुदावहन् ॥ ४७ ॥ पाञ्चालानां नरव्याघ्रो यः ख्यातो जनमेजयः । तस्य सर्षपपुष्पाणां तुल्यवर्णा हयोत्तमाः ॥ ४८ ॥ माषवर्णाश्च जवना बृहन्तो हेममालिनः । दधिपृष्ठाश्चन्द्रमुखाः पाञ्चाल्यमवहन् द्रुतम् ॥ ४९ ॥ शूराश्च भद्रकाश्चैव शरकाण्डनिभा हयाः । पद्मकिञ्जल्कवर्णाभा दण्डधारमुदावहन् ॥ ५० ॥ रासभारुणवर्णाभाः पृष्ठतो मूषकप्रभाः । वल्गन्त इव संयत्ता व्याघ्रदत्तमुदावहन् ॥ ५१ ॥ हरयः कालकाश्चित्राश्चित्रमाल्यविभूषिताः । सुधन्वानं नरव्याघ्रं पाञ्चाल्यं समुदावहन् ॥ ५२ ॥ इन्द्रायुधसवर्णाभा इन्द्रगोपकसन्निभाः । कायैश्चित्रान्तराश्चित्राश्चित्रायुधमुदावहन् ॥ ५३ ॥ बिभ्रतो हेममालास्तु चक्रवाकोदरा हयाः । कोशलाधिपतेः पुत्रं सुक्षत्रं वाजिनोऽवहन् ॥ ५४ ॥ शबलास्तु बृहन्तोऽश्वा दान्ता जाम्बूनदस्रजः । युद्धे सत्यधृतिं क्षैमिमवहन् प्रांशवः शुभाः ॥ ५५ ॥ एकवर्णेन सर्वेण ध्वजेन कवचेन च । अश्वैश्च धनुषा चैव शुक्लैः शुक्लोऽभ्यवर्तत ॥ ५६ ॥ समुद्रसेनपुत्रन्तु सामुद्रा रुद्रतेजसम् । अश्वाः शशाङ्कसदृशाश्चन्द्रसेनमुदावहन् ॥ ५७ ॥ नीलोत्पलसवर्णास्तु तपनीयविभूषिताः । शैब्यं चित्ररथं युद्धे चित्रमाल्यावहन् हयाः ॥ ५८ ॥ कलायपुष्पवर्णास्तु श्वेतलोहितराजयः । रथसेनं हयश्रेष्ठाः समूहुर्युद्धदुर्मदम् ॥ ५९ ॥ यन्तु सर्वमनुष्येभ्यः प्राहुः शूरतरं नृपम् । तं पटच्चरहन्तारं शुकवर्णावहन् हयाः ॥ ६० ॥ चित्रायुधं चित्रमाल्यं चित्रवर्मायुधध्वजम् । ऊहुः किंशुकवर्णाभा समवर्णा हयोत्तमाः ॥ ६१ ॥ एकवर्णेन सर्वेण ध्वजेन कवचेन च । धनुषा रथवाहैश्च नीलैर्नीलोऽभ्यवर्तत ॥ ६२ ॥ नानारूपै रत्नचित्रैर्वरूथध्वजकार्मुकैः । वाजिध्वजपताकाभिश्चित्रैश्चित्रोऽभ्यवर्तत ॥ ६३ ॥ ये तु पुष्करवर्णस्य तुल्यवर्णा हयोत्तमाः । ते रोचमानस्य सुतं हेमवर्णमुदावहन् ॥ ६४ ॥

योधाश्च महाकायाश्च शरदण्डानुदण्डयः । श्वेताण्डाः कुक्कुटाण्डाश्च
दण्डकेतुं हयावहन् ॥ ६५ ॥ केशवेन हते सङ्ख्ये पितर्य्येव
नराधिप । भिन्ने कपाटे पाण्ड्यानां विद्रुतेषु च बन्धुषु ॥ ६६ ॥
भीष्माद्वाप्य चास्त्राणि द्रोणाद्रामात् कृपात्तथा । अस्त्रैः समत्वं
सम्प्राप्य रुक्मिकर्णार्जुनाच्युतैः ॥ ६७ ॥ इयेष द्वारकां हन्तुं
कृत्स्नां जेतुञ्च मेदिनीम् । निवारितस्ततः प्राज्ञैः सुहृद्भिर्हित-
काम्यया ॥ ६८ ॥ वैरानुबन्धमुत्सृज्य स्वराज्यमनुशास्ति यः ।
स सागरध्वजः पाण्ड्यश्चन्द्ररश्मिनिभैर्हयैः ॥ ६९ ॥ वैदूर्य्यजाल-
संछन्नैर्वीर्य्यद्रविणमाश्रितः । दिव्यं विस्फारयंश्चापं द्रोणमभ्य-
द्रवद्बली ॥ ७० ॥ आटरूषकवर्णाभा हयाः पाण्ड्यानुयायि-
नाम् । अवहन् रथमुख्यानामयुतानि चतुर्द्दश ॥ ७१ ॥
नानावर्णेन रूपेण नानाकृतिमुखा हयाः । रथचक्रध्वजं वीरं
घटोत्कचमुदावहन् ॥ ७२ ॥ भरतानां समेतानामुत्सृज्यैको
मतानि यः । गतो युधिष्ठिरं भक्त्या त्यक्त्वा सर्वमभीप्सितम्
॥ ७३ ॥ लोहिताक्षं महाबाहुं बृहन्तं तमरट्टजाः । महा-
सत्त्वा महाकायाः सौवर्णस्यन्दने स्थितम् ॥ ७४ ॥ सुवर्णवर्णा
धर्म्मज्ञमनीकस्थं युधिष्ठिरम् । राजश्रेष्ठं हयश्रेष्ठाः सर्व्वतः पृष्ठ-
तोऽन्वयुः ॥ ७५ ॥ वर्णैरुच्चावचैरन्यैः सदश्वानां प्रभद्रकाः ।
संन्यवर्त्तन्त युद्धाय बहवो देवरूपिणः ॥ ७६ ॥ ते यत्ता भीम-
सेनेन सहिताः काञ्चनध्वजाः । प्रत्यदृश्यन्त राजेन्द्र सेन्द्रा इव
दिवौकसः ॥ ७७ ॥ प्रत्यरोचत तान् सर्व्वान् धृष्टद्युम्नः समा-
गतान् । सर्व्वाण्यति च सैन्यानि भारद्वाजो व्यरोचत ॥ ७८ ॥
अतीव शुशुभे तस्य ध्वजः कृष्णाजिनोत्तरः । कमण्डलुर्महाराज
जातरूपमयः शुभः ॥ ७९ ॥ ध्वजन्तु भीमसेनस्य वैदूर्य्यमणि-
लोचनम् । भ्राजमानं महासिंहं राजतं दृष्टवानहम् ॥ ८० ॥
ध्वजन्तु कुरुराजस्य पाण्डवस्य महौजसः । दृष्टवानस्मि सौवर्णं

भीमं ग्रहगणान्वितम् ॥ ८१ ॥ मृदङ्गौ चात्र विपुलौ दिव्यौ नन्दोपनन्दकौ। यन्त्रेणाहन्यमानौ च सुस्वनौ हर्षवर्द्धनौ ॥८२॥ शरभं पृष्ठसौवर्णं नकुलस्य महाध्वजम्॥ अपश्याम रथेऽत्युग्रं भीषयाणमवस्थितम् ॥ ८३ ॥ हंसस्तु राजतः श्रीमान् ध्वजे घण्टापताकवान्। सहदेवस्य दुर्द्धर्षो द्विषतां शोकवर्द्धनः ॥ ८४ ॥ पञ्चानां द्रौपदेयानां प्रतिमाध्वजभूषणम्। धर्ममारुतशक्राणामश्विनोश्च महात्मनः ॥ ८५ ॥ अभिमन्योः कुमारस्य शार्ङ्गपक्षी हिरण्मय। रथे ध्वजवरो राजंस्तप्तचामीकरोज्ज्वलः ॥ ८६ ॥ घटोत्कचस्य राजेन्द्र ध्वजे गृध्रो व्यरोचत। अश्वाश्च कामगास्तस्य रावणस्य यथा पुरा ॥ ८७ ॥ माहेन्द्रञ्च धनुर्द्दिव्यं धर्मराजे युधिष्ठिरे। वायव्यं भीमसेनस्य धनुर्द्दिव्यमभूनृप ॥ ८८ ॥ त्रैलोक्यरक्षणार्थाय ब्रह्मणा सृष्टमायुधम्। तद्दिव्यमजरञ्चैव फाल्गुनार्थाय वै धनुः ॥ ८९ ॥ वैष्णवं नकुलार्थाय सहदेवाय चाश्विनम्। घटोत्कचाय पौलस्त्यं धनुर्द्दिव्यं भयानकम् ॥ ९० ॥ रौद्रमाग्नेयकौवेर्य्यं याम्यं गिरिशमेव च। पञ्चानां द्रौपदेयानां धनूरत्नानि भारत ॥ ९१ ॥ रौद्रं धनुर्वरं श्रेष्ठं लेभे यं रौहिणीसुतः। तं तुष्टः प्रददौ रामः सौभद्राय महात्मने ॥ ९२ ॥ एते चान्ये च बहवो ध्वजा हेमविभूषिताः। तत्राद्दश्यन्त शूराणां द्विषतां शोकवर्द्धनाः ॥ ९३ ॥ तदभूद्ध्वजसम्बाधमकापुरुषसेवितम्। द्रोणानीकं महाराज पटे चित्रमिवार्पितम् ॥ ९४ ॥ शुश्रुवुर्नामगोत्राणि वीराणां संयुगे तदा। द्रोणमाद्रवतां राजन् स्वयम्वरमिवाहवे ॥ ९५ ॥

इति द्रोणपर्व्वणि संशप्तकवधपर्व्वणि ध्वजादिकथने त्रयोविंशोऽध्यायः ॥ २३ ॥

धृतराष्ट्र उवाच। व्यथयेयुरिमे सेनां देवानामपि सञ्जय। आहवे ये न्यवर्त्तन्त वृकोदरमुखा नृपाः॥ १॥ संप्रयुक्तः किलैवायं दिष्टै भवति पूरुषः। तस्मिन्नेव च सर्वार्थाः प्रदृश्यन्ते पृथग्विधाः॥ २॥ दीर्घं विप्रोषितः कालमरण्ये जटिलोऽजिनी। अज्ञातश्चैव लोकस्य विजहार युधिष्ठिरः॥ ३॥ स एव महतीं सेनां समावर्त्तयदाहवे। किमन्यद्दैवसंयोगान्मम पुत्रस्य चाभवत्॥ ४॥ युक्त एव हि भाग्येन ध्रुवमुत्पद्यते नरः। स तथा कृष्यते तेन न यथा स्वयमिच्छति॥ ५॥ द्यूतव्यसनमासाद्य क्लेशितो हि युधिष्ठिरः। स पुनर्भागधेयेन सहायानुपलब्धवान्॥ ६॥ अर्द्धं मे केकया लब्धाः काशिकाः कोशलाश्च ये। चेदयश्चापरे वङ्गा मामेव समुपाश्रिताः॥ ७॥ पृथिवी भूयसी तात मम पार्थस्य नो तथा। इति मामब्रवीत् सूत मन्दो दुर्योधनः पुरा॥ ८॥ तस्य सेनासमूहस्य मध्ये द्रोणः सुरक्षितः। निहतः पार्षतेनाजौ किमन्यद्भागधेयतः॥ ९॥ मध्ये राज्ञां महाबाहुं सदा युद्धाभिनन्दिनम्। सर्वास्त्रपारगं द्रोणं कथं मृत्युरुपेयिवान्॥ १०॥ समनुप्राप्तकृच्छ्रोऽहं मोहं परममागतः। भीष्मद्रोणौ हतौ श्रुत्वा नाहं जीवितुमुत्सहे॥ ११॥ यन्मां क्षत्ताब्रवीत्तात प्रपश्यन् पुत्रगृद्धिनम्। दुर्योधनेन तत्सर्वं प्राप्तं सूत मया सह॥ १२॥ नृशंसन्तु परं तु स्यात् त्यक्त्वा दुर्योधनं यदि। पुत्रशेषं चिकीर्षेयं कृत्स्नं न मरणं व्रजेत्॥ १३॥ यो हि धर्मं परित्यज्य भवत्यर्थपरो नृपः। सोऽस्माच्च हीयते लोकात् क्षुद्रभावञ्च गच्छति॥ १४॥ अद्य चाप्यस्य राष्ट्रस्य हतोत्साहस्य सञ्जय। अवशेषं न पश्यामि ककुदे मृदिते सति॥ १५॥ कथं स्यादवशेषोऽद्य धुर्ययोरभ्यतीतयोः। यौ नित्यमुपजीवामः क्षमिणौ पुरुषर्षभौ॥ १६॥ व्यक्तमेव च मे शंस यथा युद्धमवर्त्तत। केऽयुध्यन् केऽप्यपाकर्षन् के क्षुद्राः प्राद्रवन् भयात्॥ १७॥

धनञ्जयश्च मे यत्र यदासक्तो रथर्षभः । तस्मादयं नो भूयिष्ठं भ्रातृव्याच्च वृकोदरात् ॥ १८ ॥ यथासीच्च निवृत्तेषु पाण्डवेयेषु सञ्जय । मम सैन्यावशेषस्य सन्निपातः सुदारुणः ॥ १९ ॥ कथञ्च वो मनस्तात निवृत्तेष्वभवत्तदा । मामकानाञ्च के शूरास्तेषां तत्र न्यवारयन् ॥ २० ॥

इति द्रोणपर्वणि संशप्तकवधपर्वणि धृतराष्ट्रवाक्ये
चतुर्विंशोऽध्यायः ॥ २४ ॥

---

सञ्जय उवाच । महद्भैरवमासीन्नः सन्निवृत्तेषु पाण्डुषु । दृष्ट्वा द्रोणं छाद्यमानं तैर्भास्करमिवाम्बुदैः ॥ १ ॥ तैश्चोद्धूतं रजस्तीव्रमवचक्रे चमूस्तव । ततो हतममंस्याम द्रोणं दृष्टिपथे हृते ॥ २ ॥ तांस्तु शूरान् महेष्वासान् क्रूरं कर्म चिकीर्षतः । दृष्ट्वा दुर्योधनस्तूर्णं स्वसैन्यं समचूचुदत् ॥ ३ ॥ यथाशक्ति यथोत्साहं यथासत्त्वं नराधिपाः । वारयध्वं यथायोगं पाण्डवानामनीकिनीम् ॥ ४ ॥ ततो दुर्मर्षणो भीममभ्यगच्छत् सुतस्तव । आराद्दृष्ट्वा किरन् बाणैरिच्छन् द्रोणस्य जीवितम् ॥ ५ ॥ बाणैः समाचिनोद्भीमं क्रुद्धो मृत्युरिवाहवे । तञ्च भीमोऽतुदद्बाणैस्तदासीत्तुमुलं महत् ॥ ६ ॥ त ईश्वरसमादिष्टाः प्राज्ञाः शूराः प्रहारिणः । राज्यं मृत्युभयं त्यक्त्वा प्रत्यतिष्ठन् परान् युधि ॥ ७ ॥ कृतवर्मा शिनेः पौत्रं यत्तो मत्तमिव द्विपम् । सैन्धवः क्षत्रवर्माणमायान्तं निशितैः शरैः ॥ ८ ॥ उग्रधन्वा महेष्वासं यत्तो द्रोणादवारयत् । कृतवर्मा सिन्धुपतेश्छित्त्वा केतनकार्मुके ॥ ९ ॥ नाराचैर्दशभिः क्रुद्धः सर्वमर्मस्वताडयत् । अथान्यद्धनु-

रादाय सैन्धवं कृतहस्तवत् ॥ १० ॥ विव्याध चक्ररक्षौ रथे सर्वायसे शरैः । युयुत्सुं पाण्डवार्थाय यतमानं महारथम् ॥ ११ ॥ सुबाहुर्भीतरं शूरं यत्तो द्रोणादवारयत् । सुबाहोः सधनुर्बाणौ व्यस्यतः परिघोपमौ ॥ १२ ॥ युयुत्सुः शितपीताभ्यां क्षुराभ्यामच्छिनद्भुजौ राजानं पाण्डवश्रेष्ठं धर्मात्मानं युधिष्ठिरम् ॥ १३ ॥ वेलेव सागरं चण्डं मद्रराट् समवारयत् । तं धर्मराजो बहुभिर्मर्मभिद्भिरवाकिरत् ॥ १४ ॥ मद्रेशस्तु चतुःषष्ट्या शरैर्विद्ध्वाऽनदद्भृशम् । तस्य नानदतः केतुमुच्चकर्त्त च कार्मुकम् ॥ १५ ॥ क्षुराभ्यां पाण्डवश्रेष्ठस्तत उच्चुक्रुशुर्जनाः । तथैव राजा बाह्लिको राजानं द्रुपदं शरैः ॥ १६ ॥ आद्रवन्तं सहानीकः सहानीकं न्यवारयत् । तद्युद्धमभवद्घोरं वृद्धयोः सहसेनयोः ॥ १७ ॥ यथा महायूथपयोर्द्विपयोः सम्प्रभिन्नयोः । विन्दानुविन्दावावन्त्यौ विराटं मत्स्यमार्च्छताम् ॥ १८ ॥ सह सैन्यैः सहानीकं यथेन्द्राग्नी पुरा बलिम् । तदुत्पिञ्जलकं युद्धमासीद्देवासुरोपमम् ॥ १९ ॥ मत्स्यानां कैकेयैः सार्द्धमभीताश्वरथद्विपम् । नाकुलिस्तु शतानीकं भूतकर्मा सभापतिः ॥ २० ॥ अस्यन्तमिषुजालानि यान्तं द्रोणादवारयत् । ततो नकुलदायादस्त्रिभिर्भल्लैः सुसंशितैः ॥ २१ ॥ चक्रे विबाहुशिरसं भूतकर्माणमाहवे । सुतसोमस्तु विक्रान्तमापतन्तं शरौघिणम् ॥ २२ ॥ द्रोणायाभिमुखं वीरं विविंशतिरवारयत् । सुतसोमस्तु सङ्क्रुद्धः स्वपितृव्यमजिह्मगैः ॥ २३ ॥ विविंशतिं शरैर्भित्त्वा नाभ्यवर्त्तत दंशितः । अथ भीमरथः शाल्वमाशुगैरायसैः शितैः ॥ २४ ॥ षड्भिः साश्वनियन्तारमनय

पितुः कुर्वन् मार्गणै समवारयत् । तं क्रुद्धं प्रतिविव्याध प्रतिविन्ध्यः शितैः शरैः ॥ २८ ॥ सिंहलाङ्गूललक्ष्माणं पितुरर्थे व्यवस्थितम् । प्रवपन्निव बीजानि बीजकाले नरर्षभ ॥ २९ ॥ द्रौणायनिं द्रौपदेयाः शरवर्षैरवाकिरन् । आर्ज्जुनिं श्रुतकीर्त्तिन्तु द्रौपदेयं महारथम् ॥ ३० ॥ द्रोणायाभिमुखं यान्तं दौःशासनिर्न्यवारयत् । तस्य कृष्णसमः कार्ष्णिस्त्रिभिर्भल्लैः सुसंशितैः ॥ ३१ ॥ धनुर्ध्वजञ्च सूतञ्च छित्त्वा द्रोणान्तिकं ययौ । यस्तु शूरतमो राजन्नुभयोः सेनयोर्मतः ॥ ३२ ॥ तं पटच्चरहन्तारं लक्ष्मणः समवारयत् । स लक्ष्मणस्येष्वसनं छित्त्वा लक्ष्म च भारत ॥ ३३ ॥ लक्ष्मणे शरजालानि विसृजन् बह्वशोभत । विकर्णस्तु महाप्राज्ञो याज्ञसेनिं शिखण्डिनम् ॥ ३४ ॥ पर्य्यवारयदायान्तं युवानं समरे युवा । ततस्तमिषुजालेन याज्ञसेनिः समावृणोत् ॥ ३५ ॥ विधूय तद्बाणजालं बभौ तव सुतो बली । अङ्गदोऽभिमुखं वीरमुत्तमौजसमाहवे ॥ ३६ ॥ द्रोणायाभिमुखं यान्तं शरौघेण न्यवारयत् । स सम्प्रहारस्तुमुलस्तयोः पुरुषसिंहयोः ॥ ३७ ॥ सैनिकानाञ्च सर्व्वेषां तयोश्च प्रीतिवर्द्धनः । दुर्मुखश्च महेष्वासो वीरं पुरुजितं बली ॥ ३८ ॥ द्रोणायाभिमुखं यान्तं वत्सदन्तैरवारयत् । स दुर्मुखं भ्रुवोर्मध्ये नाराचेनाभ्यताड़यत् ॥ ३९ ॥ तस्य तद्विबभौ वक्त्रं सनालमिव पङ्कजम् । कर्णस्तु केकयान् भ्रातॄन् पञ्च लोहितकध्वजान् ॥ ४० ॥ द्रोणायाभिमुखं यान्तं शरवर्षैरवारयत् । ते चैनं भृशसन्तप्ताः शरवर्षैरवाकिरन् ॥ ४१ ॥ स च तान् छादयामास शरजालैः पुनः पुनः । नैव कर्णो न ते पञ्च ददृशुर्बाणसम्वृताः ॥ ४२ ॥ साश्वसूतध्वजरथाः परस्परशराचिताः । पुत्रास्ते दुर्ज्जयश्चैव जयश्च विजयश्च ह ॥ ४३ ॥ नीलकाश्यजयत्सेनांस्त्रयस्त्रीन् प्रत्यवारयन् । तद्युद्धमभवद्घोरमीक्षितृप्रीतिवर्द्धनम् ॥ ४४ ॥ सिंहव्याघ्रतरक्षूणां यथर्क्षमहिषर्षभैः । क्षेम-

घूर्णितवन्तौ तु भ्रातरौ शलवसं युधि ॥ ४५ ॥ द्रोणाभिमुख-
मायान्तं शरैस्तीक्ष्णैरताडयत् । तयोस्तस्य च तद्युद्धमत्यद्भुत-
मिवाभवत् ॥ ४६ ॥ सिंहस्य द्विपमुख्याभ्यां प्रभिन्नाभ्यां यथा
वने । राजानन्तु तथाम्बष्ठमेक युद्धाभिनन्दिनम् ॥ ४७ ॥ चेदि-
राजः शरानस्य क्रुद्धो द्रोणादवारयत् । ततोऽम्बष्ठोऽस्थिभेदिन्या
निरभिद्यच्छलाकया ॥ ४८ ॥ स त्यक्त्वा सशरं चापं रथात्
भूमिमुपागमत् ॥ वार्द्धक्षेमिन्तु वार्ष्णेयं कृपः शारद्वतः शरैः
॥ ४९ ॥ अक्षुद्रः क्षुद्रकैर्बाणैः क्रुद्धरूपमवारयत् । युध्यन्तौ
कृपवार्ष्णेयौ येऽपश्यंश्चित्रयोधिनौ ॥ ५० ॥ ते युद्धासक्तमनसो
नान्या बुबुधिरे क्रियाम् । सौमदत्तिस्तु राजान मणिमन्तमत-
न्द्रितम् ॥ ५१ ॥ पर्य्यवारयदायान्तं यशो द्रोणस्य वर्द्धयन् । स
सौमदत्तेस्त्वरितस्तस्योच्चलनकेतने ॥ ५२ ॥ पुनः पताका सूतञ्च
छत्रं चापातयद्रथात् । अथाप्लुत्य रथात्तूर्णं यूपकेतुरमित्रहा
॥ ५३ ॥ साश्वसूतध्वजरथं तं चकर्त्त वरासिना । रथञ्च स्वं
समास्थाय धनुरादाय चापरम् ॥ ५४ ॥ स्वयं यच्छन् हयान्
राजन् व्यधमत् पाण्डवीं चमूम् । पाण्ड्यमिन्द्रमिवायान्तमसुरान्
प्रति जघ्नुषम् ॥ ५५ ॥ समर्थः सायकौघेन वृषसेनो न्यवारयत् ।
गदापरिघनिस्त्रिंशपट्टिशायोघनश्मभिः ॥ ५६ ॥ मुषलैर्मुद्गरैश्चक्रै-
र्भिन्दिपालपरश्वधैः । पांशुवाताग्निसलिलैर्भस्मलोष्टतृणद्रुमैः ॥ ५७ ॥

प्रमत्तानां यथाभवत् ॥ ६२ ॥ इदं घोरमिदं चित्रमिदं रौद्रमिति प्रभो। तव युद्धान्यदृश्यन्त प्रततानि बहूनि च ॥ ६३ ॥

इति द्रोणपर्व्वणि संशप्तकवधपर्व्वणि द्वन्द्वयुद्धे पञ्चविंशोऽध्यायः ॥ २५ ॥

---

धृतराष्ट्र उवाच। तेष्वेवं सन्निवृत्तेषु प्रत्युद्यातेषु भागशः। कथं युयुधिरे पार्था मामकाश्च तरस्विनः ॥ १ ॥ किमर्ज्जुनश्चाप्यकरोत् संशप्तकरथं प्रति। संशप्तका वा पार्थस्य किमकुर्व्वत सञ्जय ॥ २ ॥

सञ्जय उवाच। तथा तेष्वनिवृत्तेषु प्रत्युद्यातेषु भागशः। स्वयमभ्यद्रवद्भीमं नागानीकेन ते सुतः ॥ ३ ॥ स नाग इव नागेन गोवृषेणेव गोवृषः। समाहूतः स्वयं राज्ञा नागानीकमुपाद्रवत् ॥ ४ ॥ स युद्धकुशलः पार्थो बाहुवीर्य्येण चान्वितः। अभिनत् कुञ्जरानीकमचिरेणैव मारिष ॥ ५ ॥ ते गजा गिरिसङ्काशाः क्षरन्तः सर्व्वतोमदम्। भीमसेनस्य नाराचैर्विमुखा विद्रुतीकृताः ॥ ६ ॥ विधमेदभ्रजालानि यथा वायुः समुद्धतः। व्यधमत्तान्यनीकानि तथैव पवनात्मजः ॥ ७ ॥ स तेषु विसृजन् बाणान् भीमो नागेष्वशोभत। भुवनेष्विव सर्व्वेषु गभस्तीनुदितो रविः ॥ ८ ॥ ते भीमबाणाभिहता संसक्ता विबभुर्गजाः। गभस्तिभिरिवार्कस्य व्योम्नि नानाबलाहकाः ॥ ९ ॥ तथा गजानां कदनं कुर्व्वाणमनिलात्मजम्। क्रुद्धो दुर्य्योधनोऽभ्येत्य प्रत्यविध्यत् शितैः शरैः ॥ १० ॥ ततः क्षणेन क्षितिपं क्षतजप्रतिमेक्षणः। क्षयं निनीषुर्निशितैर्भीमो विव्याध पत्रिभिः ॥ ११ ॥ स शरार्पितसर्व्वाङ्गः क्रुद्धो विव्याध पाण्डवम्। नाराचैरर्करश्म्याभैर्भीमसेनं स्मयन्निव ॥ १२ ॥ तस्य नागं मणिमयं रत्नचित्रं ध्वजे स्थितम्।

घूर्णयन्तौ तु भ्रातरौ चालसं युधि ॥ ४५ ॥ द्रोणाभिमुख-
मायान्तं शरैस्तौच्छादयतस्ततः । तयोस्तस्य च तद्युद्धमत्यद्भुत-
मिवाभवत् ॥ ४६ ॥ सिंहस्य द्विपमुख्याभ्यां प्रभिन्नाभ्यां यथा
वने । राजानन्तु तथाम्बष्ठमेकं युद्धाभिनन्दिनम् ॥ ४७ ॥ चेदि-
राजः शरानस्य क्रुद्धो द्रोणादवारयत् । ततोऽम्बष्ठोऽस्थिभेदिन्या
निरभिद्यच्छलाकया ॥ ४८ ॥ स त्यक्त्वा सशरं चापं रथाद्
भूमिमुपागमत् । वार्द्धक्षेमिन्तु वार्ष्णेयं कृपः शारद्वतः शरैः
॥ ४९ ॥ अक्षुद्रः क्षुद्रकैर्द्रोणात् क्रुद्धरूपमवारयत् । युध्यन्तौ
कृपवार्ष्णेयौ येऽपश्यंश्चित्रयोधिनौ ॥ ५० ॥ ते युद्धासक्तमनसो
नान्यां बुबुधिरे क्रियाम् । सौमदत्तिस्तु राजानं मणिमन्तमत-
न्द्रितम् ॥ ५१ ॥ पर्य्यवारयदायान्तं यशो द्रोणस्य वर्द्धयन् । स
सौमदत्तेस्त्वरितस्तस्येष्वसनकेतने ॥ ५२ ॥ पुनः पताकां सूतञ्च
छत्रं चापातयद्रथात् । अथाप्लुत्य रथात्तूर्णं यूपकेतुरमित्रहा
॥ ५३ ॥ साश्वसूतध्वजरथं तं चकर्त्त वरासिना । रथञ्च स्वं
समास्थाय धनुरादाय चापरम् ॥ ५४ ॥ स्वयं यच्छन् हयान्
राजन् व्यधमत् पाण्डवीं चमूम् । पाण्ड्यमिन्द्रमिवायान्तमसुरान्
प्रति लग्नुपम् ॥ ५५ ॥ समर्थः सायकौघेन वृषसेनो न्यवारयत् ।
गदापरिघनिस्त्रिंशपट्टिशायोघनाश्मभिः ॥ ५६ ॥ मुषलैर्मुद्गरैश्चक्रै-
र्भिन्दिपालपरश्वधैः । पांशुवाताग्निसलिलैर्भस्मलोष्टतृणद्रुमैः ॥ ५७ ॥
आरुजन् प्ररुजन् भञ्जन् निघ्नन् विद्रावयन् क्षिपन् । सेनां विभी-
षयन्नायाद्द्रोणं प्रेप्सुर्घटोत्कचः ॥ ५८ ॥ तन्तु नानाप्रहरणै-
र्नानायुद्धविशेषणैः । राक्षसं राक्षसः क्रुद्धः समाजघ्ने ह्यलम्बुषः
॥ ५९ ॥ तयोस्तदभवद्युद्धं रक्षोग्रामणिमुख्ययोः । तादृक् यादृक्
पुरा वृत्तं शम्बरामरराजयोः ॥ ६० ॥ एवं द्वन्द्वशतान्यासन् रथ-
वारणवाजिनाम् । पदातीनाञ्च भद्रन्ते तव तेषाञ्च सङ्कुले ॥ ६१ ॥
नैतादृशो दृष्टपूर्वः सङ्ग्रामो नैव च श्रुतः । द्रोणस्याभावभावे तु

प्रयुक्तानां यथाभवत्॥ ६२॥ इदं घोरमिदं चित्रमिदं रौद्रमिति प्रभो। तत्र युद्धान्यदृश्यन्त प्रततानि बहूनि च॥ ६३॥

इति द्रोणपर्व्वणि संशप्तकवधपर्व्वणि द्वन्द्वयुद्धे पञ्चविंशोऽध्यायः॥ २५॥

---

धृतराष्ट्र उवाच। तेष्वेवं सन्निवृत्तेषु प्रत्युद्यातेषु भागशः। कथं युयुधिरे पार्था मामकाश्च तरस्विनः॥ १॥ किमर्जुनश्चाप्यकरोत् संशप्तकरथं प्रति। संशप्तका वा पार्थस्य किमकुर्वत सञ्जय॥ २॥

सञ्जय उवाच। तथा तेष्वनिवृत्तेषु प्रत्युद्यातेषु भागशः। स्वयमभ्यद्रवद्भीमं नागानीकेन ते सुतः॥ ३॥ स नाग इव नागेन गोवृषेणेव गोवृषः। समाहूतः स्वयं राज्ञा नागानीकमुपाद्रवत्॥ ४॥ स युद्धकुशलः पार्थो बाहुवीर्य्येण चान्वितः। अभिनत् कुञ्जरानीकमचिरेणैव मारिष॥ ५॥ ते गजा गिरिसङ्काशाः क्षरन्तः सर्व्वतो मदम्। भीमसेनस्य नाराचैर्व्विमुखा विमदीकृताः॥ ६॥ विधमेदभ्रजालानि यथा वायुः समुद्धतः। व्यधमत्तान्यनीकानि तथैव पवनात्मजः॥ ७॥ स तेषु विसृजन् बाणान् भीमो नागेष्वशोभत। भुवनेष्विव सर्व्वेषु गभस्तीनुदितो रविः॥ ८॥ ते भीमबाणाभिहताः संस्यूता विबभुर्गजाः। गभस्तिभिर्दिवाकरस्य व्योम्नि नानाबलाहकाः॥ ९॥ तथा गजानां कदनं कुर्व्वाणमनिलात्मजम्। क्रुद्धो दुर्य्योधनोऽभ्येत्य प्रत्यविध्यत् शितैः शरैः॥ १०॥ ततः क्षणेन क्षितिपं क्षतजप्रतिमेक्षणः। क्षयं निनीषुर्निशितैर्भीमो विव्याध पत्रिभिः॥ ११॥ स शरार्पितसर्व्वाङ्गः क्रुद्धो विव्याध पाण्डवम्। नाराचैरर्करश्म्याभैर्भीमसेनं स्मयन्निव॥ १२॥ तस्य नागं मणिमयं रत्नचित्रं ध्वजे स्थितम्।

ञ्चाल्यः सर्व्वतः समवारयत् ॥ ३० ॥ तं रथैरथिनां श्रेष्ठः परिवार्य्य समन्ततः । अवाकिरच्छरैस्तीक्ष्णैः शतशोऽथ सहस्रशः ॥ ३१ ॥ स विघातं पृषत्कानामङ्कुशेन समाचरन् । गजेन पाण्डुपाञ्चालान् व्यधमत् पर्व्वतेश्वरः ॥ ३२ ॥ तदद्भुतमपश्याम भगदत्तस्य संयुगे । तथा वृद्धस्य चरितं कुञ्जरेण विशाम्पते ॥ ३३ ॥ ततो राजा दशार्णानां प्राग्ज्योतिषमुपाद्रवत् । तिर्य्यग्गमेन नागेन समदेनाशुगामिना ॥ ३४ ॥ तयोर्युद्धं समभवन्नागयोर्भीमरूपयोः । सपक्षयोः पर्व्वतयोर्यथा सद्रुमयोः पुरा ॥ ३५ ॥ प्राग्ज्योतिषपतेर्नागः सन्निवृत्यापसृत्य च । पार्श्वे दशार्णाधिपतेर्भित्त्वा नागमपातयत् ॥ ३६ ॥ तोमरैः सूर्य्यरश्म्याभैर्भगदत्तोऽथ सप्तभिः । जघान द्विरदस्थं तं शत्रुं प्रचलितासनम् ॥ ३७ ॥ व्यवच्छिद्य तु राजानं भगदत्तं युधिष्ठिरः । रथानीकेन महता सर्व्वतः पर्य्यवारयत् ॥ ३८ ॥ सकुञ्जरस्थो रथिभिः शुशुभे सर्व्वतोवृतः । पर्व्वते वनमध्यस्थो ज्वलन्निव हुताशनः ॥ ३९ ॥ मण्डलं सर्व्वतः श्लिष्टं रथिनामुग्रधन्विनाम् । किरतां शरवर्षाणि सनागः पर्य्यवस्थितः ॥ ४० ॥ ततः प्राग्ज्योतिषो राजा परिगृह्य महागजम् । प्रेषयामास तं नागं युयुधानरथं प्रति ॥ ४१ ॥ शिनेः पौत्रस्य तु रथं परिगृह्य महाद्विपः । अभिचिक्षेप वेगेन युयुधानस्त्वपाक्रमत् ॥ ४२ ॥ बृहतः सैन्धवानश्वान् समुत्थाप्याथ सारथिः । तस्थौ सात्यकिमासाद्य स प्लुतस्तं रथं प्रति ॥ ४४ ॥ स तु लब्ध्वान्तरं नागस्त्वरितो रथमण्डलात् । निश्चक्राम ततः सर्व्वान् परिचिक्षेप पार्थिवान् ॥ ४५ ॥ ते त्वाशुगतिना तेन त्रास्यमाना नरर्षभाः । तमेकं द्विरदं सङ्ख्ये मेनिरे शतशो द्विपान् ॥ ४६ ॥ ते गजस्थेन काल्यन्ते भगदत्तेन पाण्डवाः । तेषां प्राद्रवतां भीमः पाञ्चालानामितस्ततः ॥ ४७ ॥ गजवाजिकृतः शब्दः सुमहान् समजायत । भगदत्तेन समरे काल्यमानेषु पाण्डुषु

भल्लाभ्यां कार्मुकञ्चैव क्षिप्रं चिच्छेद पाण्डवः ॥ १३ ॥ दुर्योधनं
पीड्यमानं दृष्ट्वा भीमेन मारिष । युयोधयिषुरभ्यागाद्वङ्गो मातङ्ग-
मास्थितः ॥ १४ ॥ तमापतन्तं नागेन्द्रमम्बुदप्रतिमस्वनम् । कुम्भा-
न्तरे भीमसेनो नाराचेनार्दयद्भृशम् ॥ १५ ॥ तस्य कायं विनि
र्भिद्य न्यमज्जद्धरणीतले । ततः पपात द्विरदो वज्राहत इवा
चलः ॥ १६ ॥ तस्यावर्जितनागस्य म्लेच्छस्य च पतिष्यतः । शिर
श्चिच्छेद भल्लेन क्षिप्रकारी वृकोदरः ॥ १७ ॥ तस्मिन्निपतिते वीरे
सम्प्राद्रवत सा चमूः । सम्भ्रान्ताश्वद्विपरथा पदातीनवमृद्नती
॥ १८ ॥ तेष्वनीकेषु भग्नेषु विद्रवत्सु समन्ततः । प्राग्ज्यो
तिषस्ततो भीमं कुञ्जरेण समाद्रवत् ॥ १९ ॥ चरणाभ्यामथो
द्वाभ्यां संहतेन करेण च । व्यावृत्तनयनः क्रुद्धः प्रदहन्निव पाण्ड
वम् ॥ २० ॥ वृकोदररथं साश्वमविशेषमचूर्णयत् । पद्भ्यां
भीमोऽप्यथो धावन् तस्य गात्रेष्वलीयत ॥ २१ ॥ जानन्नञ्जलिका
वेधं न व्यक्रामत पाण्डवः । गात्राभ्यन्तरगो भूत्वा करेण ताडय
न्मुहुः ॥ २२ ॥ लालयामास तं नागं वधाकाङ्क्षिणमव्ययम् ।

प्राच्याः सर्वतः समवारयत् ॥ ३० ॥ तं रथैरथिनां श्रेष्ठाः परि-
वार्य समन्ततः । अवाकिरञ्छरैस्तीक्ष्णैः शतशोऽथ सहस्रशः
॥ ३१ ॥ स विघातं पृषत्कानामङ्कुशेन समाचरन् । गजेन पाण्डु-
पाञ्चालान् व्यधमत् पर्वतेश्वरः ॥ ३२ ॥ तदद्भुतमपश्याम भग-
दत्तस्य संयुगे । तथा वृद्धस्य चरितं कुञ्जरेण विशाम्पते ॥ ३३ ॥
ततो राजा दशार्णानां प्राग्ज्योतिषमुपाद्रवत् । तिर्यग्यातेन
नागेन समदेनाशुगामिना ॥ ३४ ॥ तयोर्युद्धं समभवन्नागयो-
र्भीमरूपयोः । सपक्षयोः पर्वतयोर्यथा सद्रुमयोः पुरा ॥ ३५ ॥
प्राग्ज्योतिषपतेर्नागः सन्निवृत्यापसृत्य च । पार्श्वे दशार्णाधि-
पतेर्भित्त्वा नागमघातयत् ॥ ३६ ॥ तोमरैः सूर्यरश्म्याभैर्भग-
दत्तोऽथ सप्तभिः । जघान द्विरदस्थं तं शत्रुं प्रचलितासनम् ॥३७॥
व्यवच्छिद्य तु राजानं भगदत्तं युधिष्ठिरः । रथानीकेन महता
सर्वतः पर्यवारयत् ॥ ३८ ॥ स कुञ्जरस्थो रथिभिः शुशुभे सर्वतो-
वृतः । पर्वते वनमध्यस्थो ज्वलन्निव हुताशनः ॥ ३९ ॥ मण्डलं
सर्वतः श्लिष्टं रथिनामुग्रधन्विनाम् । किरतां शरवर्षाणि स नागः
पर्यवस्थितः ॥ ४० ॥ ततः प्राग्ज्योतिषो राजा परिगृह्य महा-
गजम् । प्रेषयामास तं नागं युयुधानरथं प्रति ॥ ४१ ॥ शिनेः
पौत्रस्य तु रथं परिगृह्य महाद्विपः । अभिचिक्षेप वेगेन युयु-
धानस्त्वपाक्रमत् ॥ ४२ ॥ बृहतः सैन्धवानश्वान् समुत्थाप्याथ
सारथिः । तस्थौ सात्यकिमासाद्य स प्लुतस्तं रथं प्रति ॥ ४४ ॥
स तु लब्ध्वान्तरं नागस्त्वरितो रथमण्डलात् । निश्चक्राम ततः
सर्वान् परिचिक्षेप पार्थिवान् ॥ ४५ ॥ ते त्वाशुगतिना तेन
त्रास्यमाना नरर्षभाः । तमेकं द्विरदं सङ्ख्ये मेनिरे शतशो
द्विपान् ॥ ४६ ॥ ते गजस्थेन काल्यन्ते भगदत्तेन पाण्डवाः । तेषां
प्राद्रवतां भीमः पाञ्चालानामितस्ततः ॥ ४७ ॥ गजवाजिकृतः
शब्दः सुमहान् समजायत । भगदत्तेन समरे काल्यमानेषु पाण्डुषु

॥ ४८ ॥ प्राग्ज्योतिषमतिक्रम्य कः पुनर्भीम समभ्ययात् । तस्याभिद्रवतो वाहान् हस्तमुक्तेन वारिणा ॥ ४९ ॥ सिक्त्वा व्यत्रासयन्नागस्तं भीमः प्राकिरत्ततः । ततस्तमभ्ययात्तूर्णं रुचिपर्वा कृतीसुतः ॥ ५० ॥ प्रवर्षन् शरवर्षेण रथस्थोऽन्तकसन्निभः । ततः सरुचिपर्वाणं शरेणानतपर्वणा ॥ ५१ ॥ सुवर्चाः पर्वतपतिर्निन्ये वैवस्वतक्षयम् । तस्मिन्निपतिते वीरे सौभद्रो द्रौपदीसुताः ॥ ५२ ॥ चेकितानो धृष्टकेतुर्युयुत्सुश्चार्दयन् द्विपम् । त एनं शरधाराभिर्धाराभिरिव तोयदाः ॥ ५३ ॥ सिषिचुर्भैरवान्नादान् विनदन्तो जिघांसवः । ततः पार्ष्ण्यङ्कुशाङ्गुष्ठैः कृतिना चोदितो द्विपः ॥ ५४ ॥ प्रसारितकरः प्रायात् स्तब्धकर्णेक्षणो द्रुतम् । सोऽधिष्ठाय पदा वाहान् युयुत्सोः सूतमारुजत् ॥ ५५ ॥ युयुत्सुस्तु रथाद्राजन्नपाक्रामत् त्वरान्वितः । ततः पाण्डवयोधास्ते नागराजं शरैर्द्रुतम् ॥ ५६ ॥ सिषिचुर्भैरवान्नादान् विनदन्तो जिघांसवः । पुत्रस्तु तव सम्भ्रान्तः सौभद्रस्य द्रुतो रथम् ॥ ५७ ॥ स कुञ्जरस्थो विसृजन्निषून्नारिषु पार्थिवः । बभौ रश्मीनिवादित्यो भुवनेषु समुत्सृजन् ॥ ५८ ॥ तमार्जुनिर्द्वादशभिर्युयुत्सुर्दशभिः शरैः । त्रिभिस्त्रिभिर्द्रौपदेया धृष्टकेतुश्च विव्यधुः ॥ ५९ ॥ सोऽतियत्नार्पितैर्बाणैराचितो द्विरदो बभौ । संस्यूत इव सूर्यस्य रश्मिभिर्जलदो महान् ॥ ६० ॥ नियन्तुः शिल्पयत्नाभ्यां प्रेरितोऽरिशरार्दितः । परिचिक्षेप तान्नागः स रिपून् सव्यदक्षिणम् ॥ ६१ ॥ गोपाल इव दण्डेन यथा पशुगणान् वने । आवेष्टयत तां सेनां भगदत्तस्तथा मुहुः ॥ ६२ ॥ क्षिप्रं श्येनाभिपन्नानां वायसानामिव स्वनः । बभूव पाण्डवेयानां भृशं विद्रवतां स्वनः ॥ ६३ ॥ स नागराजः प्रवराङ्कुशाहतः पुरा सपक्षोऽद्रिवरो यथा नृप । भयं तथा रिपुषु समादधद्भृशं वणिग्जनानामभितो यथार्णवः ॥ ६४ ॥ ततोऽभिनिर्हृदद्रथाश्ववार्यिवेभं याद्वद्भिर्गिमोऽति-

भैरवः । क्षितिं वियद्द्यां विदिशो दिशस्तथा समावृणोत् पार्थिव संयुगे ततः ॥ ६५ ॥ स तेन नागप्रवरेण पार्थिवो भृशं जगाहे द्विषतामनीकिनीम् । पुरा सुगुप्तां विबुधैरिवाहवे विरोचनो देववरूथिनीमिव ॥ ६६ ॥ भृशं ववौ ज्वलनसखो वियद्रजः समावृणोन्मुहुरपि चैव सैनिकान् । तमेव नागं गणशो यथा गजान् समन्ततो द्रुतमथ मेनिरे जनाः ॥ ६७ ॥

इति द्रोणपर्वणि संशप्तकवधपर्वणि भगदत्तयुद्धे षड्विंशोऽध्यायः ॥ २६ ॥

---

सञ्जय उवाच । यन्मां पार्थस्य सङ्ग्रामे कर्माणि परिपृच्छसि । तच्छृणुष्व महाबाहो पार्थो यदकरोन्मृधे ॥ १ ॥ रजो दृष्ट्वा समुद्भूतं श्रुत्वा च गजनिस्वनम् । भगदत्ते विकुर्वाणे कौन्तेयः कृष्णमब्रवीत् ॥ २ ॥ यथा प्राग्ज्योतिषो राजा गजेन मधुसूदन । त्वरमाणोऽभिनिष्क्रान्तो ध्रुवं तस्यैष निस्वनः ॥ ३ ॥ इन्द्रादनवरः सङ्ख्ये गजयानविशारदः । प्रथमो वा द्वितीयो वा पृथिव्यामिति मे मतिः ॥ ४ ॥ स चापि द्विरदश्रेष्ठः सदाप्रतिगजो युधि । सर्वशस्त्रातिगः सङ्ख्ये कृतकर्मा जितक्लमः ॥ ५ ॥ योद्धा शस्त्रनिपातानामग्निसंस्पर्शस्य चानघ । स पाण्डवबलं सर्वमद्यैको नाशयिष्यति ॥ ६ ॥ न चावाभ्यामृतेऽन्योऽस्ति शक्तस्तं प्रतिबाधितुम् । त्वरमाणस्ततो याहि यतः प्राग्ज्योतिषाधिपः ॥ ७ ॥ दृप्तं सङ्ख्ये द्विपबलाद्वयसा चापि विस्मितम् । अद्यैनं प्रेषयिष्यामि बलहन्तुः प्रियातिथिम् ॥ ८ ॥ वचनादथ कृष्णस्तु प्रययौ सव्यसाचिनः । दीर्यते भगदत्तेन यत्र पाण्डववाहिनी ॥ ९ ॥ तं प्रयान्तं ततः पश्चादाह्वयन्तो महारथाः । संशप्तकाः समारोहन् सहस्राणि चतुर्दश ॥ १० ॥ दशैव [illegible] सहस्राणि

त्रिगर्त्तानां महारथाः । चत्वारि च सहस्राणि वासुदेवस्य
चानुगाः ॥ ११ ॥ दीर्य्यमाणां चमूं दृष्ट्वा भगदत्तेन मारिष ।
आह्वयमानस्य च तैरभवद्धृदयं द्विधा ॥ १२ ॥ किन्नु श्रेयस्करं
कर्म भवेदद्येति चिन्तयन् । इह वा विनिवर्त्तेयं गच्छेयं वा
युधिष्ठिरम् ॥ १३ ॥ तस्य बुद्ध्या विचार्य्यैवमर्जुनस्य कुरूद्वह ।
अभवद्भूयसी बुद्धिः संशप्तकवधे स्थिरा ॥ १४ ॥ स सन्निवृत्तः
सहसा कपिप्रवरकेतनः । एको रथसहस्राणि निहन्तुं वासवी
रणे ॥ १५ ॥ साहि दुर्य्योधनस्यासीन्मतिः कर्णस्य चोभयोः ।
अर्जुनस्य वधोपाये तेन द्वैधमकल्पयत् ॥ १६ ॥ स तु दोलाय-
मानो वा द्वैधीभावेन पाण्डवः । वधेन तु नराग्र्याणामकरोत्तां
मृषा तदा ॥ १७ ॥ ततः शतसहस्राणि शराणां नतपर्व्वणाम् ।
असृजन्नर्जुने राजन् संशप्तकमहारथाः ॥ १८ ॥ नैव कुन्तीसुतः
पार्थो नैव कृष्णो जनार्द्दनः । न हया न रथो राजन् दृश्यन्ते स्म
शरैश्चिताः ॥ १९ ॥ यदा मोहमनुप्राप्तः सस्वेदश्च जनार्द्दनः ।
ततस्तान् प्रायशः पार्थो ब्रह्मास्त्रेण निजघ्निवान् ॥ २० ॥ शतशः
पाणयश्छिन्नाः सेषुज्यातलकार्मुकाः । केतवो वाजिनः सूता
रथिनश्चापतन् क्षितौ ॥ २१ ॥ द्रुमाचलाग्राम्बुधरैः समकायाः
सुकल्पिताः । हतारोहाः क्षितौ पेतुर्द्विपाः पार्थशराहताः ॥२२॥
विप्रविद्धकुथावल्गाश्छिन्नभाण्डाः पराश्रवः । सारोहास्तुरगाः
पेतुर्मथिता मार्गणैर्भृशम् ॥ २३ ॥ सर्ष्टिप्रासासिनखराः समु-
द्गरपरश्वधाः । सच्छिन्ना बाहवः पेतुर्नृणां भल्लैः किरीटिना ॥२४॥
बालादित्याम्बुजेन्दूनां तुल्यरूपाणि मारिष । संछिन्नान्यर्जुन-
शरैः शिरांस्युर्व्वीं प्रपेदिरे ॥ २५ ॥ जज्वालालङ्कृता सेना पत्रिभिः
प्राणभोजनैः । नानारूपैस्तदामित्रान् क्रुद्धे निघ्नति फाल्गुने ॥२६॥
क्षोभयन्तं तदा सेनां द्विरदं नलिनीमिव । धनञ्जयं भूतगणाः
साधु साध्वित्यपूजयन् ॥ २७ ॥ दृष्ट्वा तत् कर्म पार्थस्य वासवस्येव

आघव । विस्मयं परमं मत्वा प्राञ्जलिस्तमुवाच ह ॥ २८ ॥ कर्मैतत् पार्थ शक्रेण यमेन धनदेन च । दुष्करं समरे यत्ते कृतमद्येति मे मति ॥ २९ ॥ युगपत् समरे यत्ते शतशोऽथ सहस्रश । पतिता एव मे दृष्टा संशप्तकमहारथा ॥ ३० ॥ ततः संशप्तकान् हत्वा भूयिष्ठं ये व्यवस्थिता । भगदत्ताय याहीति कृष्णं पार्थोऽभ्यचोदयत ॥ ३१ ॥

इति द्रोणपर्वणि संशप्तकवधपर्वणि संशप्तकवधे सप्तविंशोऽध्याय ॥ २७ ॥

---

सञ्जय उवाच । यियासतस्तत कृष्णः पार्थस्याश्वान् मनोजवान् । सम्प्रैषीद्धेमसञ्छन्नान् द्रोणानीकाय पाण्डुरान् ॥ १ ॥ तं प्रयान्तं कुरुश्रेष्ठ स्वान् भ्रातॄन् द्रोणतापितान् । सुशर्मा भ्रातृभि सार्द्धं युद्धार्थी पृष्ठतोऽन्वयात् ॥ २ ॥ तत श्वेतहयः कृष्णमब्रवीदजितञ्जय । एष मा भ्रातृभि सार्द्धं सुशर्माह्वयतेऽच्युत ॥ ३ ॥ दीर्य्यते चोत्तरेणैव तत्सैन्यं मधुसूदन । द्वैधीभूतं मनो मेऽद्य कृतं संशप्तकैरिदम् ॥ ४ ॥ किन्नु संशप्तकान् हन्मि स्वान् रक्षाम्यहितार्द्दितान् । इति मे त्वं मतं वेत्थ तत्र किं सुकृतं भवेत् ॥ ५ ॥ एवमुक्तस्तु दाशार्हः स्यन्दनं प्रत्यवर्त्तयत् । येन त्रिगर्त्ताधिपतिं पाण्डवं समुपाह्वयत ॥ ६ ॥ ततोऽर्जुनः सुशर्माणं विद्धा सप्तभिराशुगैः । ध्वजं धनुश्चास्य रथे क्षुराभ्यां समकृन्तत ॥ ७ ॥ त्रिगर्त्ताधिपतेश्चापि भ्रातरं षड्भिराशुगैः । साश्वं ससूतं त्वरितं पार्थः प्रैषीद्यमक्षयम् ॥ ८ ॥ ततो भुजगसङ्काशां सुशर्मा शक्तिमायसीम् । चिक्षेपार्जुनमादिश्य वासुदेवाय तोमरम् ॥ ९ ॥ शक्तिं त्रिभिः शरैश्छित्त्वा तोमरं त्रिभिरर्जुन । सुशर्माणं शरव्रातैर्मोहयित्वा न्यवर्त्तयत् ॥ १० ॥ तं वासव-

त्रिगर्त्तानां महारथाः । चत्वारि च सहस्राणि वासुदेवस्य
चानुगाः ॥ ११ ॥ दीर्य्यमाणां चमूं दृष्ट्वा भगदत्तेन मारिष ।
आहूयमानस्य च तैरभवद्धृदयं द्विधा ॥ १२ ॥ किन्नु श्रेयस्करं
कर्म भवेदद्येति चिन्तयन् । इह वा विनिवर्त्तेयं गच्छेयं वा
युधिष्ठिरम् ॥ १३ ॥ तस्य बुद्ध्या विचार्य्यैवमर्जुनस्य कुरूद्वह ।
अभवद्भूयसी बुद्धिः संशप्तकवधे स्थिरा ॥ १४ ॥ स सन्निवृत्तः
सहसा कपिप्रवरकेतनः । एको रथसहस्राणि निहन्तुं वासवी
रणे ॥ १५ ॥ सा हि दुर्य्योधनस्यासीन्मतिः कर्णस्य चोभयोः ।
अर्जुनस्य वधोपाये तेन द्वैधमकल्पयत् ॥ १६ ॥ स तु दोलाय-
मानो वा द्वैधीभावेन पाण्डवः । वधेन तु नराग्राणामकरोत्तां
मृषा तदा ॥ १७ ॥ ततः शतसहस्राणि शराणां नतपर्वणाम् ।
व्यसृजन्नर्जुने राजन् संशप्तकमहारथाः ॥ १८ ॥ नैव कुन्तीसुतः
पार्थो नैव कृष्णो जनार्द्दनः । न हया न रथो राजन् दृश्यन्ते स्म
शरैश्चिताः ॥ १९ ॥ यदा मोहमनुप्राप्त सस्वेदश्च जनार्द्दनः ।
ततस्तान् प्रायशः पार्थो ब्रह्मास्त्रेण निजघ्निवान् ॥ २० ॥ शतशः
पाणयश्छिन्नाः सेषुज्यातलकार्म्मुकाः । केतवो वाजिनः सूता
रथिनश्चापतन् क्षितौ ॥ २१ ॥ द्रुमाचलाग्राम्बुधरैः समकायाः
सुकल्पिताः । हतारोहाः क्षितौ पेतुर्द्विपाः पार्थशराहताः ॥२२॥
विप्रविद्धकुथावल्गाश्छिन्नभाण्डाः परासवः । सारोहास्तुरगाः
पेतुर्मथिता मार्गणैर्भृशम् ॥ २३ ॥ सर्ष्टिप्रासासिनखराः समु-
द्गरपरश्वधाः । सञ्छिन्ना बाहवः पेतुर्नृणां भल्लैः किरीटिना ॥२४॥

माधवः । विस्मयं परमं गत्वा प्राञ्जलिस्तमुवाच ह ॥ २८ ॥ कर्म्मैतत् पार्थ शक्रेण यमेन धनदेन च । दुष्करं समरे यत्ते कृतमद्येति मे मतिः ॥ २९ ॥ युगपत् समरे यच्च पतमानोऽथ कश्चन । पतिता एव मे दृष्टाः संशप्तकमहारथाः ॥ ३० ॥ ततः संशप्तकान् हत्वा भूयिष्ठं ये व्यवस्थिताः । जगद्गाय याहीति कृष्णं पार्थोऽभ्यचोदयत् ॥ ३१ ॥

इति द्रोणपर्व्वणि संशप्तकवधपर्व्वणि संशप्तकवधे सप्तविंशोऽध्यायः ॥ २७ ॥

---

सञ्जय उवाच । प्रियामतस्ततः कृष्णः पार्थस्याश्वान् मनोजवान् । अम्प्रैषीद्धेमसञ्छन्नान् द्रोणानीकाय पाण्डुरान् ॥ १ ॥ तं प्रयान्तं कुरुश्रेष्ठं स्वान् भ्रातॄन् द्रोणतापितान् । सुशर्म्मा भ्रातृभिः सार्द्धं युद्धार्थी पृष्ठतोऽन्वयात् ॥ २ ॥ ततः श्वेतहयः कृष्णमब्रवीदजितञ्जयः । एष मां भ्रातृभिः सार्द्धं सुशर्म्माह्वयतेऽच्युत ॥ ३ ॥ दीर्य्यते चोत्तरेणैव तत्सैन्यं मधुसूदन । द्वैधीभूतं मनो मेऽद्य कृतं संशप्तकैरिदम् ॥ ४ ॥ किन्नु संशप्तकान् हन्मि स्वान् रक्षाम्यहितार्द्दितान् । इति मे त्वं मतं वेत्थ तत्र किं सुकृतं भवेत् ॥ ५ ॥ एवमुक्तस्तु दाशार्हः स्यन्दनं प्रत्यवर्त्तयत् । येन त्रिगर्त्ताधिपतिः पाण्डवं समुपाह्वयत् ॥ ६ ॥ ततोऽर्ज्जुनः सुशर्म्माणं विद्ध्वा सप्तभिराशुगैः । ध्वजं धनुश्चास्य रथे क्षुराभ्यां समकृन्तत ॥ ७ ॥ त्रिगर्त्ताधिपतेश्चापि भ्रातरं षड्भिराशुगैः । साश्वं ससूतं त्वरितः पार्थः प्रैषीद्यमक्षयम् ॥ ८ ॥ ततो भुजगसङ्काशां सुशर्म्मा शक्तिमायसीम् । चिक्षेपार्ज्जुनमादिश्य वासुदेवाय तोमरम् ॥ ९ ॥ शक्तिं त्रिभिः शरैश्छित्त्वा तोमरं त्रिभिरर्ज्जुनः । सुशर्म्माणं शरव्रातैर्मोहयित्वा न्यवर्त्तयत् ॥ १० ॥ तं वासव-

मिवायान्त भूरिविप्रपरीषिणाम् । राजस्तावकसैन्यानां नैनं कश्चिदवारयत् ॥ ११ ॥ ततो धनञ्जयो वार्ष्णे सर्वानेव महारथान् । च्छायादिनिघ्नन् कौरव्यान् दहन् कक्षमिवानल ॥ १२ ॥ तस्य वेगमसह्यं तु कुन्तीपुत्रस्य धीमतः । नाशक्नुवंस्ते सोढुं सूर्यमन्नोदव प्रजा ॥ १३॥ अविष्टयन्ननीकानि शरवर्षेण पाण्डव । सुपर्णपातवद्राजन् प्रायात प्राग्ज्योतिषं प्रति ॥ १४ ॥ यत्तदा नाम यन्निम्प्रमर्भरतानामपायिनम् । धनुं निमकर घट्टो द्विपतामश्रुवर्द्धनम् ॥ १५ ॥ तदेव तव पुत्रस्य राजन् दुर्द्यूत देविन । कृते चत्रविनाशाय धनुरायच्छदर्जुन ॥ १६ ॥ तथाविक्षोभ्यमाणा सा पार्थेन तव वाहिनी । व्यशीर्यत महा राजन् नौरिवासाद्य पर्वतम् ॥ १७ ॥ ततो दशसहस्राणि न्यव र्त्तन्त धनुष्मताम् । मति कृत्वा रणे क्रूरा वीरा जयपराजये ॥ १८ ॥ व्यपेतहृदयत्रासा आवब्रुस्त महारथा । अथ पार्थो गुरु भार सर्वभारसहो युधि ॥ १९ । यथा नड्वन क्रुद्ध प्रविष्ट षष्टिहायन । मन्नैवान्तहटायस्त पार्थोऽमृद्नाचमू तव ॥ २० ॥ तस्मिन् प्रमथिते सैन्ये भगदत्तो नराधिप । तेन नागेन सहसा धनञ्जयमुपाद्रवत ॥ २१ ॥ त रथेन नरव्याघ्र प्रत्यगृह्णाद्धनञ्जय । स सन्निपातस्तुमुलो बभूव रथनागयो ॥२२॥ कल्पितभ्यां यथाशास्त्र रथेन च गजेन च। सङ्ग्रामे चेरतुर्वीरो भगदत्तधनञ्जयौ ॥ २३ ॥ ततो जीमूतसङ्काशा न्नागादिन्द्र इव प्रभु । अभ्यवर्षच्छरौघेण भगदत्तो धनञ्जयम् ॥ २४ ॥ स चापि शरवर्षं तत् शरवर्षेण वासवि । अप्राप्तमेव चिच्छेद भगदत्तस्य वीर्यवान् । २५ ॥ तत प्राग्ज्योतिषो राजा शरवर्षं निवार्य तत । शरैर्जघ्ने महाबाहु पार्थं कृष्णञ्च मारिष ॥ २६ ॥ तत स शरजालेन महताभ्यवकीर्य तौ । चादयामास त नाग वधायाच्युतपार्थयो ॥ २७ । समापतन्त

द्विरदं दृष्ट्वा क्रुद्धमिवान्तकम् । चक्रेऽपसव्यं त्वरितः स्यन्दनेन जनार्द्दनः ॥ २८ ॥ सम्प्राप्तमपि नेयेष परावृत्तं महाद्विपम् । सारोहं मृत्युसात्कर्त्तुं स्मरन् धर्मं धनञ्जयः ॥ २९ ॥ स तु नागो द्विपरथान् हयांश्चारुज्य मारिष । प्राहिणोन्मृत्युलोकाय ततः क्रुद्धो धनञ्जयः ॥ ३० ॥

इति द्रोणपर्वणि संशप्तकवधपर्वणि भगदत्तयुद्धे
अष्टाविंशोऽध्यायः ॥ २८ ॥

---

धृतराष्ट्र उवाच । पार्थः क्रुद्धः किमकरोद्भगदत्तस्य पाण्डवः । प्राग्ज्योतिषो वा पार्थस्य तन्मे शंस यथातथम् ॥ १ ॥

सञ्जय उवाच । प्राग्ज्योतिषेण संसक्तावुभौ दाशार्ह-पाण्डवौ । मृत्योर्दंष्ट्रान्तिकं प्राप्तौ सर्वभूतानि मेनिरे ॥ २ ॥ तथा तु शरवर्षाणि पातयत्यनिशं प्रभो । गजस्कन्धान्महाराज कृष्णयोः स्यन्दनस्थयोः ॥ ३ ॥ अथ कार्ष्णायसैर्बाणैः पूर्णकार्मुक-निःसृतैः । अविध्यद्देवकीपुत्रं हेमपुङ्खैः शिलाशितैः ॥ ४ ॥ अग्नि-स्पर्शसमास्तीक्ष्णा भगदत्तेन चोदिताः । निर्भिद्य देवकीपुत्रं क्षितिं जग्मुः शराः शुभाः ॥ ५ ॥ तस्य पार्थो धनुश्छित्त्वा परिवारं निहत्य च । लालयन्निव राजानं भगदत्तमयोधयत् ॥ ६ ॥ सोऽर्करश्मिनिभांस्तीक्ष्णांस्तोमरान् वै चतुर्दश । प्रेरयन् सव्यसाची तु द्विधैकैकमथाच्छिनत् ॥ ७ ॥ ततो नागस्य तद्वर्म व्यधमत् पाकशासनिः । शरजालेन महता तदशीर्यत भूतले ॥ ८ ॥ शीर्णवर्मा स गजः शरैः सुभृशमर्दितः । बभौ धारानिपाताक्तो व्यभ्रः पर्वतराडिव ॥ ९ ॥ ततः प्राग्ज्योतिषः शक्तिं हेमदण्ड-मयीमयीम् । व्यसृजद्वासुदेवाय द्विधा तामर्जुनोऽच्छिनत् ॥ १० ॥ ततश्छत्रं ध्वजञ्चैव छित्त्वा राज्ञोऽर्जुनः शरैः । विव्याध दशभि-

सूर्य्यमुत्पाद्य पर्वतेश्वरम् ॥ ११ ॥ सोऽतिविद्धोऽर्ज्जुनशरैः
सुदृढै कङ्कपत्रिभिः । भगदत्तस्ततः क्रुद्धः पाण्डवस्य जनाधिप
॥ १२ ॥ व्यसृजत्तोमरान्मूर्ध्नि श्वेताश्वस्योन्ननाद च । तै-
रर्ज्जुनस्य समरे किरीटं परिवर्त्तितम् ॥ १३ ॥ परिवृत्तकिरीटं
तं यमयन्नेव फाल्गुनः । सुदृष्टः क्रियतां लोक इति राजान-
मब्रवीत् ॥ १४ ॥ एवमुक्तस्तु सङ्क्रुद्धः शरवर्षेण पाण्डवम् ।
अभ्यवर्षत् सगोविन्दं धनुरादाय भास्वरम् ॥ १५ ॥ तस्य पार्थो
धनुश्छित्त्वा तूणीरान् सन्निकृत्य च । त्वरमाणो द्विसप्तत्या सर्व-
मर्म्मस्वताड़यत् ॥ १६ ॥ विद्धस्ततो विव्यथितो वैष्णवास्त्रमुदी-
रयन् । अभिमन्त्र्याङ्कुशं क्रुद्धो व्यसृजत् पाण्डवोरसि ॥ १७ ॥
विसृष्टं भगदत्तेन तदस्त्रं सर्व्वघाति वै । उरसा प्रतिजग्राह पार्थं
सञ्छाद्य केशवः ॥ १८ ॥ वैजयन्त्यभवन्माला तदस्त्रं केशवो-
रसि । ततोऽर्ज्जुनः क्लान्तमनाः केशवं प्रत्यभाषत ॥ १९ ॥ अयुध्य-
मानस्तुरगान् संयन्तास्मि तवानघ । इत्युक्त्वा पुण्डरीकाक्ष प्रतिज्ञां
स्वां न रक्षसि ॥ २० ॥ यद्यहं व्यसनी वा स्यामशक्तो वा निवा-
रणे । ततस्त्वयैव कार्य्यं स्यान्न तत् कार्य्यं मयि स्थिते ॥ २१ ॥
सबाणः सधनुश्चाहं ससुरासुरमानुषान् । शक्तो लोकानिमान्
जेतुं तच्चापि विदितं तव ॥ २२ ॥ ततोऽर्ज्जुनं वासुदेवः प्रत्यु-
वाचार्थवद्वचः । शृणु गुह्यमिदं पार्थ पुरावृत्तं यथानघ ॥ २३ ॥
चतुर्मूर्त्तिरहं शश्वल्लोकत्राणार्थमुद्यतः । आत्मानं प्रविभज्येह
लोकानां हितमादधे ॥ २४ ॥ एका मूर्त्तिस्तपश्चर्य्यां कुरुते मे
भुवि स्थिता । अपरा पश्यति जगत् कुर्व्वाणं साध्वसाधुनी ॥ २५ ॥
अपरा कुरुते कर्म्म मानुषं लोकमाश्रिता । शेते चतुर्थी त्वपरा
निद्रां वर्षसहस्रिकीम् ॥ २६ ॥ यासौ वर्षसहस्रान्ते मूर्त्तिरुत्ति-
ष्ठते मम । वरार्हेभ्यो वरान् श्रेष्ठान् तस्मिन् काले ददाति सा
॥ २७ ॥ तन्तु कालमनुप्राप्तं विदित्वा पृथिवी तदा । अयाचत

ॾ

वरं यन्मां नरकार्थाय तत्कृणु ॥ २८ ॥ देवानामसुराणाञ्च ह्यवध्यस्तनयोऽस्तु मे। उपेतो वैष्णवास्त्रेण तन्मे त्वं दातुमर्हसि ॥ २९ ॥ एवं वरमहं श्रुत्वा जगत्यास्तनयं तदा। अमोघमस्त्रं प्रायच्छं वैष्णवं परमं पुरा ॥ ३० ॥ अवोचं चैतदस्त्रं वै ह्यमोघं भवतु क्षिते। नरकस्याभिरक्षार्थं नैनं कश्चिद्वधिष्यति ॥३१॥ अनेनास्त्रेण ते गुप्तः सुतः परबलार्द्दनः। भविष्यति दुराधर्षः सर्वलोकेषु सर्वदा ॥ ३२ ॥ तथेत्युक्ता गता देवी कृतकामा मनस्विनी। स चाप्यासीद्दुराधर्षो नरकः शत्रुतापनः ॥ ३३ ॥ तस्मात् प्राग्ज्योतिषं प्राप्तं तदस्त्रं पार्थ मामकम्। नास्यावध्योऽस्ति लोकेषु सेन्द्ररुद्रेषु मारिष ॥ ३४ ॥ तन्मया त्वत्कृते चेतदन्यथा व्यपनायितम्। वियुक्तं परमास्त्रेण जहि पार्थ महासुरम् ॥ ३५ ॥ वैरिणं युधि दुर्द्धर्षं भगदत्तं सुरद्विषम्। यथाहं जघ्निवान् पूर्वं हितार्थं नरकं तथा ॥ ३६ ॥ एवमुक्तस्तदा पार्थः केशवेन महात्मना। भगदत्तं शितैर्वाणैः सहसा समवाकिरत ॥ ३७ ॥ ततः पार्थो महाबाहुरसम्भ्रान्तो महामनाः। कुम्भयोरन्तरे नागं नाराचेन समार्पयत ॥ ३८ ॥ स समासाद्य तं नागं वाणो वज्र इवाचलम्। अभ्यगात् सह पुङ्खेन वल्मीकमिव पन्नगः ॥ ३९ ॥ स गजो भगदत्तेन प्रेर्य्यमाणो मुहुर्मुहुः। न करोति वचस्तस्य दरिद्रस्येव योषित ॥ ४० ॥ स तु विष्टभ्य गात्राणि दन्ताभ्यामवनिं ययौ। नदन्नार्त्तस्वरं प्राणानुत्ससर्ज्ज महाद्विपः ॥ ४१ ॥ ततश्चन्द्रार्द्धविम्बेन वाणेनानतपर्व्वणा। विभेद हृदयं राज्ञो भगदत्तस्य पाण्डव ॥ ४२ ॥ स भिन्नहृदयो राजा भगदत्तः किरीटिना। शरासनं शरांश्चैव गतासुः प्रमुमोच ह ॥ ४३ ॥ शिरसस्तस्य विभ्रष्टं पपात वराम्बुजम्। नालताडनविभ्रष्टं पलाशं नलिनादिव ॥ ४४ ॥ स हेममाली तपनीयभाण्डात् पपात नागाद्गिरिसन्निकाशात्। सुपुष्पितो मारुतवेगरुग्णो महीधराग्रा-

सूर्यमुत्स्मयन् पर्वतेश्वरम् ॥ ११ ॥ सोऽतिविद्धोऽर्जुनशरैः
सुपुङ्खैः कङ्कपत्रिभिः । भगदत्तस्ततः क्रुद्धः पाण्डवस्य जनाधिप
॥ १२ ॥ व्यसृजत्तोमरान् मूर्ध्नि श्वेताश्वस्योन्ननाद च । तै-
रर्जुनस्य समरे किरीटं परिवर्त्तितम् ॥ १३ ॥ परिवृत्तकिरीटं
तत् यमयन्नेव फाल्गुनः । सुदृष्टः क्रियतां लोक इति राजान-
मब्रवीत् ॥ १४ ॥ एवमुक्तस्तु सङ्क्रुद्धः शरवर्षेण पाण्डवम् ।
अभ्यवर्षत् स गोविन्दं धनुरादाय भास्वरम् ॥ १५ ॥ तस्य पार्थो
धनुश्छित्त्वा तूणीरान् सन्निकृत्य च । त्वरमाणो द्विसप्तत्या सर्व-
मर्माण्यताडयत् ॥ १६ ॥ विद्धस्ततो व्यथितो वैष्णवास्त्रमुदी-
रयन् । अभिमन्त्र्याङ्कुशं क्रुद्धो व्यसृजत् पाण्डवोरसि ॥ १७ ॥
विसृष्टं भगदत्तेन तदस्त्रं सर्वघाति वै । उरसा प्रतिजग्राह पार्थं
सञ्छाद्य केशवः ॥ १८ ॥ वैजयन्त्यभवन्माला तदस्त्रं केशवो-
रसि । ततोऽर्जुनः क्लान्तमनाः केशवं प्रत्यभाषत ॥ १९ ॥ अयुध्य-
मानस्तुरगान् संयन्तासि तवानघ । इत्युक्त्वा पुण्डरीकाक्ष प्रतिज्ञां
स्वां न रक्षसि ॥ २० ॥ यद्यहं व्यसनी वा स्यामशक्तो वा निवा-
रणे । ततस्त्वयैव कार्यं स्यान्न तत् कार्यं मयि स्थिते ॥ २१ ॥
सबाणः सधनुश्चाहं ससुरासुरमानुषान् । शक्तो लोकानिमान्
जेतुं तच्चापि विदितं तव ॥ २२ ॥ ततोऽर्जुनं वासुदेवः प्रत्यु-
वाचार्थवद्वचः । शृणु गुह्यमिदं पार्थ पुरावृत्तं यथानघ ॥ २३ ॥
चतुर्मूर्त्तिरहं शश्वल्लोकत्राणार्थमुद्यतः । आत्मानं प्रविभज्येह
लोकानां हितमादधे ॥ २४ ॥ एका मूर्त्तिस्तपश्चर्यां कुरुते मे
भुवि स्थिता । अपरा पश्यति जगत् कुर्वाणा साध्वसाधुनी ॥ २५ ॥
अपरा कुरुते कर्म मानुषं लोकमाश्रिता । शेते चतुर्थी त्वपरा
निद्रां वर्षसहस्रिकीम् ॥ २६ ॥ यासौ वर्षसहस्रान्ते मूर्त्तिरुत्ति-
ष्ठते मम । वरार्हेभ्यो वरान् श्रेष्ठान् तस्मिन् काले ददाति सा
॥ २७ ॥ तन्तु कालमनुप्राप्तं विदित्वा पृथिवी तदा । अयाचत

वरं यन्मां नरकार्थाय तच्छृणु ॥ २८ ॥ देवानामसुराणाञ्च
ह्यवध्यस्तनयोऽस्तु मे । उपेतो वैष्णवास्त्रेण तन्मे त्वं दातु-
मर्हसि ॥ २९ ॥ एवं वरमहं श्रुत्वा जगत्यास्तनये तदा । अमोघ-
मस्त्रं प्रायच्छं वैष्णवं परमं पुरा ॥ ३० ॥ अवोचं चैतदस्त्रं वै
ह्यमोघं भवतु क्षिते । नरकस्याभिरक्षार्थं नैनं कश्चिद्वधिष्यति ॥३१॥
अनेनास्त्रेण ते गुप्तः सुतः परबलार्द्दनः । भविष्यति दुराधर्षः
सर्वलोकेषु सर्वदा ॥ ३२ ॥ तथेत्युक्त्वा गता देवी कृतकामा
मनस्विनी । स चाप्यासीद्दुराधर्षो नरकः शत्रुतापनः ॥ ३३ ॥
तस्मात् प्राग्ज्योतिषं प्राप्तं तदस्त्रं पार्थ मामकम् । नास्यावध्यो-
ऽस्ति लोकेषु सेन्द्ररुद्रेषु मारिष ॥ ३४ ॥ तन्मया त्वत्कृते चैत-
दन्यथा व्यपनायितम् । विमुक्तं परमास्त्रेण जहि पार्थ महा-
सुरम् ॥ ३५ ॥ वैरिणं युधि दुर्द्धर्षं भगदत्तं सुरद्विषम् । यथाहं
जघ्निवान् पूर्वं हितार्थं नरकं तथा ॥ ३६ ॥ एवमुक्तस्ततः पार्थः
केशवेन महात्मना । भगदत्तं शितैर्बाणैः सहसा समवाकिरत्
॥ ३७ ॥ ततः पार्थो महाबाहुरसम्भ्रान्तो महामनाः । कुम्भयो-
रन्तरे नागं नाराचेन समार्पयत् ॥ ३८ ॥ स समासाद्य तं नागं
बाणो वज्र इवाचलम् । अभ्यगात् सह पुङ्खेन वल्मीकमिव पन्नगः
॥ ३९ ॥ स गजो भगदत्तेन प्रेर्य्यमाणो मुहुर्मुहुः । न करोति
वचस्तस्य दरिद्रस्येव योषित् ॥ ४० ॥ स तु विष्टभ्य गात्राणि
दन्ताभ्यामवनिं ययौ । नदन्नार्त्तस्वरं प्राणानुत्ससर्ज्ज महाद्विपः
॥ ४१ ॥ ततश्चन्द्रार्द्धबिम्बेन बाणेनानतपर्व्वणा । बिभेद हृदयं
राज्ञो भगदत्तस्य पाण्डवः ॥ ४२ ॥ स भिन्नहृदयो राजा भग-
दत्तः किरीटिना । शरासनं शरांश्चैव गतासुः प्रमुमोच ह ॥ ४३ ॥
शिरसस्तस्य विभ्रष्टं प्रपपात वरांशुकम् । नालताडनविभ्रष्टं
पलाशं नलिनादिव ॥ ४४ ॥ स हेममाली तपनीयभाण्डात् पपात
नागाद्गिरिसन्निकाशात् । सुपुष्पितो मारुतवेगरुग्णो महीधराग्रा-

दिव कर्णिकारः ॥ ४५ ॥ निहत्य तं नरपतिमिन्द्रविक्रमं सखाय-
मिन्द्रस्य तदैन्द्रिराहवे । ततोऽपरांस्तवजयकाङ्क्षिणो नरान् बभञ्ज
वायुर्बलवान् द्रुमानिव ॥ ४६ ॥

इति द्रोणपर्वणि संशप्तकवधपर्वणि भगदत्तवधे
एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

सञ्जय उवाच । प्रियमिन्द्रस्य सततं सखायममितौजसम् ।
हत्वा प्राग्ज्योतिषं पार्थः प्रदक्षिणमवर्त्तत ॥ १ ॥ ततो गान्धार-
राजस्य सुतौ परपुरञ्जयौ । आर्छेतामर्जुनं सङ्ख्ये भ्रातरौ वृष-
काचलौ ॥ २ ॥ तौ समेत्यार्जुनं वीरौ पुरः पश्चाच्च धन्विनौ ।
अविध्येतां महावेगैर्निशितैराशुगैर्भृशम् ॥ ३ ॥ वृषकस्य हयान्
सूतं धनुश्छत्रं ध्वजं रथम् । तिलशो व्यधमत् पार्थः सौबलस्य
शितैः शरैः ॥ ४ ॥ ततोऽर्जुनः शरव्रातैर्नानाप्रहरणैरपि ।
गान्धारानाकुलांश्चक्रे सौबलप्रमुखान् पुनः ॥ ५ ॥ ततः पञ्च-
शतान् वीरान् गान्धारानुद्यतायुधान् । प्राहिणोन्मृत्युलोकाय
क्रुद्धो बाणैर्धनञ्जयः ॥ ६ ॥ हताश्वात्तु रथात्तूर्णमवतीर्य महा-
भुजः । आरुरोह रथं भ्रातुरन्यच्च धनुराददे ॥ ७ ॥ तावेक-
रथमारूढौ भ्रातरौ वृषकाचलौ । शरवर्षेण बीभत्सुमविध्येतां
मुहुर्मुहुः ॥ ८ ॥ स्यालौ तव महात्मानौ राजानौ वृषकाचलौ ।
भृशं निजघ्नतुः पार्थमिन्द्रं वृत्रबला इव ॥ ९ ॥ लब्धलक्षौ तु
गान्धारावहतां पाण्डवं पुनः । निदाघवार्षिकौ मासौ लोकं
घर्मांशुभिर्यथा ॥ १० ॥ तौ रथस्थौ नरव्याघ्रौ राजानौ वृष-
काचलौ । संश्लिष्टाङ्गौ स्थितौ राजन् जघानैकेषुणार्जुनः ॥ ११ ॥
तौ रथात् सिंहसङ्काशौ लोहिताक्षौ महाभुजौ । गतासू पेततु-
र्वीरौ सोदर्यावेकलक्षणौ ॥ १२ ॥ तयोर्भूमिं गतौ देहौ रथाद्

मन्युजनप्रियौ । यमो दृष्टविष्टः पुरुषं गमयित्वा व्यवस्थितौ ॥ १३ ॥ दृष्ट्वा विनिहतौ वीरौ मातुलावपलायिनौ । भृशं मुमुचुरस्त्राणि पुत्रास्तव विशाम्पते ॥ १४ ॥ निहतौ भ्रातरौ दृष्ट्वा मायाशतविशारदः । कृष्णौ सम्मोहयन्मायां विदधे शकुनिस्ततः ॥ १५ ॥ लगुड़ायोगुड़ाश्मानः शतघ्न्यश्च सशक्तयः । गदापरिघनिस्त्रिंशशूलमुद्गरपट्टिशाः ॥ १६ ॥ सकम्पनर्ष्टिनखरा मुषलानि परश्वधाः । क्षुराः क्षुरप्रनालीका वत्सदन्तास्थिसन्धयः ॥ १७ ॥ चक्राणि विशिखाः प्रासा विविधान्यायुधानि च । प्रपेतुः सर्वतो दिग्भ्यः प्रदिग्भ्यश्चार्ज्जुनं प्रति ॥ १८ ॥ खरोष्ट्रमहिषाव्याघ्राः सिंहाः सृमरचिल्लकाः । ऋक्षाः शालावृकाः गृध्राः कपयश्च सरीसृपाः ॥ १९ ॥ विविधानि च रक्षांसि क्षुधितान्यर्ज्जुनं प्रति । संक्रुद्धान्यभ्यधावन्त विविधानि वयांसि च ॥ २० ॥ ततो दिव्यास्त्रविच्छूरः कुन्तीपुत्रो धनञ्जयः । विसृजन्निषुजालानि सहसा तान्यताड़यत् ॥ २१ ॥ ते हन्यमानाः शूरेण प्रवरैः सायकैर्दृढैः । विरुवन्तो महारावं विनेशुः सर्वतो हताः ॥ २२ ॥ ततस्तमः प्रादुरभूदर्ज्जुनस्य रथं प्रति । तस्माच्च तमसो वाचः क्रूराः पार्थमभर्त्सयन् ॥ २३ ॥ तत्तमो भैरवं घोरं भयकर्तृ महाहवे । उत्तमास्त्रेण महता ज्योतिषेणार्ज्जुनोऽवधीत् ॥ २४ ॥ हते तस्मिन् जलौघास्तु प्रादुरासन् भयानकाः । अम्भसस्तु विनाशार्थमादित्यास्त्रमथार्ज्जुनः ॥ २५ ॥ प्रायुङ्क्ताथाम्भसस्तेन प्रायशोऽस्त्रेण शोषितम् । एवं बहुविधा माया सौबलस्य कृताः कृताः ॥ २६ ॥ जघानास्त्रबलेनाशु प्रहसन्नर्ज्जुनस्तदा । तथा हतासु मायासु त्रस्तोऽर्ज्जुनशराहतः ॥ २७ ॥ अपायाज्जवनैरश्वैः शकुनिः प्राकृतो यथा । ततोऽर्ज्जुनोऽस्त्रविच्छ्रैष्ठ्यं दर्शयन्नात्मनोऽरिषु ॥ २८ ॥ अभ्यवर्षच्छरौघेण कौरवाणामनीकिनीम् । सा हन्यमाना पार्थेन तव पुत्रस्य वाहिनी ॥ २९ ॥ द्वैधीभूता

महाराज गजेवासाद्य पर्वतम् । द्रोणमेवान्वपद्यन्त केचित्तत्र
नरर्षभाः ॥ ३० ॥ केचिद्दुर्योधनं राजन्नर्द्यमाना किरीटिना ।
नापश्यामस्ततस्त्वेनं सैन्ये वै रजसावृते ॥ ३१ ॥ गाण्डीवस्य च
निर्घोषः श्रुतो दक्षिणतो मया । शङ्खदुन्दुभिनिर्घोषं वादि-
त्राणाञ्च निःस्वनम् ॥ ३२ ॥ गाण्डीवस्य तु निर्घोषो व्यतिक्रम्या-
स्पृशद्दिवम् । ततः पुनर्दक्षिणतः सङ्ग्रामश्चित्रयोधिनाम् ॥ ३३ ॥
सुयुद्धं चार्जुनस्यासीदहन्तु द्रोणमन्वयाम् । यौधिष्ठिराण्यनी-
कानि प्रहरन्ति ततस्ततः ॥ ३४ ॥ नानाविधान्यनीकानि पुत्राणां
तवाभारत । अर्जुनो व्यधमत् काले दिवीवाभ्राणि मारुतः ॥ ३५ ॥
तं वासवमिवायान्तं भूरिवर्षं शरौघिणम् । महेष्वासं नरव्याघ्रं
नोग्रं कश्चिदवारयत् ॥ ३६ ॥ ते हन्यमानाः पार्थेन त्वदीया
व्यथिता भृशम् । स्वानेव बहवो जघ्नुर्विद्रवन्तस्ततस्ततः ॥ ३७ ॥
तेऽर्जुनेन शरा मुक्ताः कङ्कपत्रास्तनुच्छिदः । शलभा इव सम्पेतुः
संवृण्वाना दिशो दश ॥ ३८ ॥ तुरङ्गं रथिनं नागं पादातिमपि
मारिष । विनिर्भिद्य क्षितिं जग्मुर्वल्मीकमिव पन्नगाः ॥ ३९ ॥
न च द्वितीयं व्यसृजत् कुञ्जराश्वनरेषु च । पृथगेकशराहता
निपेतुस्ते गतासवः ॥ ४० ॥ हतैर्मनुष्यैर्द्विरदैश्च सर्वतः शराभि
वृष्टैश्च हयैर्निपातितैः । तदाश्वगोमायुबलाभिनादितं विचित्र-
मायोधशिरो बभूव तत् ॥ ४१ ॥ पिता सुतं त्यज्य सुहृद्वरं
सुहृत्तथैव पुत्रं पितरः शरातुराः । स्वरक्षणे कृतमतयस्तदा
जनास्त्यजन्ति वाहानपि पार्थपीडिताः ॥ ४२ ॥

इति द्रोणपर्वणि संशप्तकवधपर्वणि शकुनिपलायने
त्रिंशोऽध्यायः ॥ ३० ॥

———

धृतराष्ट्र उवाच । तेष्वनीकेषु भग्नेषु पाण्डुपुत्रेण सञ्जय । चलितानां द्रुतानाञ्च कथमासीन्मनो हि वः ॥ १ ॥ अनीकानां प्रभग्नानामवस्थानमपश्यताम् । दुष्करं प्रतिसन्धानं तन्ममाचक्ष्व सञ्जय ॥ २ ॥

सञ्जय उवाच । तथापि तव पुत्रस्य प्रियकामा विशाम्पते । यशः प्रवीरा लोकेषु रक्षन्तो द्रोणमन्वयुः ॥ ३ ॥ समुद्यतेषु चास्त्रेषु सम्प्राप्ते च युधिष्ठिरे । अकुर्वन्नार्य्यकर्म्माणि भैरवे सत्यभीतवत् ॥ ४ ॥ अन्तरं भीमसेनस्य प्रापतन्नमितौजसः । सात्यकेश्चैव वीरस्य धृष्टद्युम्नस्य वा विभो ॥ ५ ॥ द्रोणं द्रोणमिति क्रूराः पाञ्चालाः समचोदयन् । मा द्रोणमिति पुत्रास्ते कुरून् सर्व्वान-चोदयन् ॥ ६ ॥ द्रोणं द्रोणमिति ह्येके मा द्रोणमिति चापरे । कुरूणां पाण्डवानाञ्च द्रोणद्यूतमवर्त्तत ॥ ७ ॥ यं यं प्रमथते द्रोणः पाञ्चालानां रथव्रजम् । तत्र तत्र तु पाञ्चाल्यो धृष्टद्युम्नो-ऽभ्यवर्त्तत ॥ ८ ॥ तथा भागविपर्य्यासे सङ्ग्रामे भैरवे सति । वीराः समासदन् वीरान् कुर्व्वन्तो भैरवं रवम् ॥ ९ ॥ अकम्पनीयाः शत्रूणां बभूवुस्तत्र पाण्डवाः । अकम्पयन्ननीकानि स्मरन्तः क्लेशमात्मनः ॥ १० ॥ तेऽमर्षवशसम्प्राप्ता ह्रीमन्तः सत्त्वचोदिताः । त्यक्त्वा प्राणान् न्यवर्त्तन्त घ्नन्तो द्रोणं महाहवे ॥ ११ ॥ अयसा-मिव सम्पातः शिलानामिव चाभवत् । दीव्यतां तुमुले युद्धे प्राणैरमिततेजसाम् ॥ १२ ॥ न तु स्मरन्ति सङ्ग्राममपि वृद्धा-स्तथाविधम् । दृष्टपूर्व्वं महाराज श्रुतपूर्व्वमथापि वा ॥ १३ ॥ प्राकम्पतेव पृथिवी तस्मिन् वीरावसादने । निवर्त्तता बलौघेन महता भारपीडिता ॥ १४ ॥ घूर्णतोऽपि बलौघस्य दिवं स्तब्ध्वेव निःस्वनः । अजातशत्रोस्तत् सैन्यमाविवेश सुभैरवः ॥ १५ ॥ समासाद्य तु पाण्डूनामनीकानि सहस्रशः । द्रोणेन चरता सङ्ख्ये प्रभग्नानि शितैः शरैः ॥ १६ ॥ तेषु प्रमथ्यमानेषु द्रोणेनाद्भुत

कर्मणा । पर्यवारयदायस्तो द्रोणं सेनापतिः स्वयम् ॥ १७ ॥ तदद्भुतमपश्याम द्रोणपाञ्चाल्ययोस्तदा । नैव तस्योपमा काचिदिति मे निश्चिता मतिः ॥ १८ ॥ ततो नीलोऽनलप्रख्यो ददाह कुरुवाहिनीम् । शरस्फुलिङ्गश्चापार्चिर्दहन् कक्षमिवानलः ॥ १९ ॥ तं दहन्तमनीकानि द्रोणपुत्रः प्रतापवान् । पूर्वाभिलाषी सुश्लक्ष्णं स्मयमानोऽभ्यभाषत ॥ २० ॥ नील किं बहुभिर्दग्धैस्तव योधैः शरार्चिषा । मयैकेन हि युध्यस्व क्रुद्धः प्रहर चाशु माम् ॥ २१ ॥ तं पद्मनिकराकारं पद्मपत्रनिभेक्षणम् । व्याकोशपद्माभिमुखो नीलो विव्याध सायकैः ॥ २२ ॥ तेनातिविद्धः सहसा द्रौणिर्भल्लैः शितैस्त्रिभिः । धनुर्ध्वजञ्च छत्रञ्च द्विषतः समकृन्तत ॥ २३ ॥ सोऽवप्लुत्य रथात्तस्मान्नीलश्चर्मवरासिभृत् । द्रोणायनेः शिरः कायाद्धर्तुमैच्छत पत्त्रिवत् ॥ २४ ॥ तस्योद्यतासेः सुनसं शिरः कायात् सकुण्डलम् । भल्लेनापाहरद्द्रौणिः स्मयमान इवानघ ॥ २५ ॥ सम्पूर्णचन्द्राभमुखः पद्मपत्रनिभेक्षणः । प्रांशुरुत्पलपत्राभो निहतो न्यपतत् क्षितौ ॥ २६ ॥ ततः प्रविव्यथे सेना पाण्डवी भृशमाकुला । आचार्यपुत्रेण हते नीले ज्वलिततेजसि ॥ २७ ॥ अचिन्तयंश्च ते सर्वे पाण्डवानां महारथाः । कथं नो वासविस्त्रायाच्छत्रुभ्य इति मारिष ॥ २८ ॥ दक्षिणेन तु सेनायाः कुरुते कदनं बली । संशप्तकावशेषस्य नारायणबलस्य च ॥ २९ ॥

इति द्रोणपर्वणि संशप्तकवधपर्वणि नीलवधे एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

सञ्जय उवाच । प्रतिघातन्तु सैन्यस्य नामृष्यत वृकोदरः । सोऽभ्यहन् बाह्लिकं षष्ट्या कर्णञ्च दशभिः शरैः ॥ १ ॥ तस्य

द्रोणं शितैर्बाणैस्तीक्ष्णधारैरजिह्मगैः । जीवितान्तमभिप्रेप्सु-र्मर्माण्यायु जघान ह ॥ २ ॥ पुनश्चान्निसमस्पर्शैर्बाणैर्विषविषो-पमैः । आनन्त्यमभिप्रेप्सुः षड्‌विंशत्या समार्पयत् । कर्णो द्वादशभिर्बाणैरश्वत्थामा च सप्तभिः ॥ ३ ॥ षड्‌भिर्दुर्योधनो राजा तत एनमथाकिरत् । भीमसेनोऽपि तान् सर्वान् प्रत्य-विध्यन्महाबलः ॥ ४ ॥ द्रोणं पञ्चाशतेषूणां कर्णञ्च दशभिः शरैः । दुर्योधनं द्वादशभिर्द्रौणिं चाष्टभिराशुगैः ॥ ५ ॥ आरावं तुमुलं कुर्व्वन्नभ्यवर्त्तत तद्रणे । तस्मिन् सन्त्यजति प्राणान् मृत्यु-साधारणीकृते ॥ ६ ॥ अजातशत्रुस्तान् योधान् भीमं त्रातेत्य-चोदयत् । ते ययुर्भीमसेनस्य समीपममितौजसः ॥ ७ ॥ युयु-धानप्रभृतयो माद्रीपुत्रौ च पाण्डवौ । ते समेत्य सुसंरब्धाः सहिताः पुरुषर्षभाः ॥ ८ ॥ महेष्वासवरैर्गुप्तं द्रोणानीकं बिभि-त्सवः । समापेतुर्महावीर्य्या भीमप्रभृतयो रथाः ॥ ९ ॥ तान् प्रत्यगृह्णादव्यग्रो द्रोणोऽपि रथिनां वरः । महारथानतिबलान् वीरान् समरयोधिनः ॥ १० ॥ बाह्यं मृत्युभयं त्यक्त्वा तावकाः पाण्डवान् ययुः । सादिनः सादिनोऽभ्यघ्नंस्तथैव रथिनो रथान् ॥ ११ ॥ आसीच्छक्त्यसिसम्पातो युद्धमासीत् परश्वधैः । प्रकृष्ट-मसियुद्धञ्च बभूव कटुकोदयम् ॥ १२ ॥ कुञ्जराणाञ्च सम्पाते-र्युद्धमासीत् सुदारुणम् । अपतत् कुञ्जरादन्यो हयादन्यस्त्ववाक्-शिराः ॥ १३ ॥ नरो वाणविनिर्भिन्नो रथादन्यश्च मारिष । तत्रान्यस्य च सम्मर्द्दे पतितस्य विवर्म्मणः ॥ १४ ॥ शिरः प्रध्वं-सयामास वक्षस्याक्रम्य कुञ्जरः । अपरांश्चापरेऽमृद्‌नन् वारणाः पातितान् नरान् ॥ १५ ॥ विषाणैश्चावनिं गत्वा व्यभिन्दन् रथिनो बहून् । नाराचैः केचिदपरे विषाणालग्नसंस्रवैः ॥ १६ ॥ बभ्रमुः समरे नागा मृद्नन्तः शतशो नरान् । कार्ष्णायसतनुत्राणान्नराश्व-रथकुञ्जरान् ॥ १७ ॥ पतितान् पोथयाञ्चक्रुर्द्विपाः स्थूलनला-

निव । गृध्रपत्राधिवासांसि शयनानि नराधिपा ॥ १८ ॥ क्रोधमन्त
कालसम्प्राप्ते सुहृद्भ्रात्यधीरत । हन्ति भ्राता पिता पुत्रं
सुयेनाभ्यतिवर्त्तते ॥ १९ ॥ पुत्रश्च पितरं मोहान्निर्मर्य्यादमवर्त्तत ।
अक्षो भग्नो ध्वजश्छिन्नश्छत्रमुर्व्यां निपातितम् ॥ २० ॥ युगार्द्धं
छिन्नमादाय प्रदुद्राव तथा हयः । साविर्सोऽब्रुन्निपतितः शिर-
श्छिन्नः सकुण्डलम् ॥ २१ ॥ गजेनाक्षिप्य बलिना रथः सद्य सिन्तः
श्चितौ । सारोहश्चापतन्नागो गजेनाभ्याहतो भृशम् ॥ २२ ॥
निर्मर्य्यादं महद्युद्धमवर्त्तत सुदारुणम् । हा तात हा पुत्र सखे
क्वासि तिष्ठ क्व धावसि ॥ २३ ॥ प्रहराहर जह्येन स्मितक्ष्वेडित-
गर्जिते । इत्येवमुच्चरन्तिस्म श्रूयन्ते विविधा गिरः ॥ २४ ॥
नरस्याश्वस्य नागस्य समसज्जत शोणितम् । उपाशाम्यद्रजो
भौमं भीरून् कश्मलमाविशत् ॥ २५ ॥ चक्रेण चक्रमासाद्य वीरो
वीरस्य संयुगे । अतीतेऽस्त्रपथे काले जहार गदया शिरः
॥ २६ ॥ आसीत् केशपरामर्शो मुष्टियुद्धं सुदारुणम् । नखै-
र्दन्तैश्च शूराणामद्वीपे द्वीपमिच्छताम् ॥ २७ ॥ तत्राच्छिद्यत
शूरस्य सखड्गो बाहुरुद्यतः । सधनुश्चापरस्यापि सशरः साङ्कुश-
स्तथा ॥ २८ ॥ प्राक्रोशदन्यमन्योऽत्र तथान्यो विमुखोऽभवत् ।
अन्यः प्राप्तस्य चान्यस्य शिरः कायादपाहरत् ॥ २९ ॥ सशब्द-
मद्रवच्चान्यः शब्दादन्योऽत्रसद्भृशम् । स्वानन्योऽथ परानन्यो
जघान निशितैः शरैः ॥ ३० ॥ गिरिशृङ्गोपमश्चात्र नाराचेन
निपातितः । मातङ्गो न्यपतद्भूमौ नदीरोध इवोष्णगे ॥ ३१ ॥
तथैव रथिनं नाग क्षरन् गिरिरिवारुजत् । अध्यतिष्ठत् पदा
भूमौ सहाश्वं सहसारथिम् ॥ ३२ ॥ शूरान् प्रहरतो दृष्ट्वा कृता-
स्त्रान् रुधिरोक्षितान् । बहूनप्याविशन्मोहो भीरून् हृदय-
दुर्बलान् ॥ ३३ ॥ सर्वमाविग्नमभवन्न प्राज्ञायत किञ्चन । सैन्येन
रजसा ध्वस्ते निर्मर्य्यादमवर्त्तत ॥ ३४ ॥ ततः सेनापतिः शीघ्र-

भयं प्राप्त इति ब्रुवन् । नित्याभिरक्षितानेव त्वरयामास पाण्डवान् ॥ ३५ ॥ कुर्वन्त आर्त्तनं तस्य पाण्डवा बाह्लिकेन । सरो हंसा इवापेतुर्घ्नन्तो द्रोणरथं प्रति ॥ ३६ ॥ गृह्णीताद्रवता-न्योऽन्यं मा भैष्टेति निकृन्तत । इत्यासीत्तुमुलः शब्दो दुर्धर्षस्य रथं प्रति ॥ ३७ ॥ ततो द्रोणः कृपः कर्णो द्रौणी राजा जय-द्रथः । विन्दानुविन्दावावन्त्यौ शल्यश्च तान्न्यवारयन् ॥ ३८ ॥ ते त्वार्य्यधर्म्मसंरब्धा दुर्निवारा दुरासदाः । शरार्त्ता न जहुर्द्रोणं पाञ्चालाः पाण्डवैः सह ॥ ३९ ॥ ततो द्रोणोऽतिसंक्रुद्धो विसृ-जञ्छतशः शरान् । चेदिपाञ्चालपाण्डूनामकरोत् कदनं महत् ॥ ४० ॥ तस्य ज्यातलनिर्घोषः शुश्रुवे दिक्षु मारिष । वज्र-संह्रादसंकाशस्त्रासयन्मानवान् बहून् ॥ ४१ ॥ एतस्मिन्नन्तरे जिष्णुर्जित्वा संशप्तकान् बहून् । अभ्ययात्तत्र यत्रासौ द्रोणः पाण्डून् प्रमर्द्दति ॥ ४२ ॥ तान् शरौघमहावर्त्तान् शोणितोदान्-महाह्रदान् । तीर्त्वा संशप्तकान् हत्वा प्रत्यदृश्यत फाल्गुनः ॥ ४३ ॥ तस्य कीर्त्तिमतो लक्ष्म सूर्य्यप्रतिमतेजसम् । दीप्यमान-मपश्याम तेजसा वानरध्वजम् ॥ ४४ ॥ संशप्तकसमुद्रं तमुच्छो-ष्यास्त्रगभस्तिभिः । स पाण्डवयुगान्तार्कः कुरूनप्यभ्यतीतपत् ॥४५॥ प्रददाह कुरून् सर्व्वानर्जुनः शस्त्रतेजसा । युगान्ते सर्व्वभूतानि धूमकेतुरिवोत्थितः ॥ ४६ ॥ तेन बाणसहस्रौघैर्गजाश्वरथ-योधिनः । ताड्यमानाः क्षितिं जग्मुर्मुक्तकेशाः शरार्द्दिताः ॥४७॥ केचिदार्त्तस्वरं चक्रुर्विनेदुरपरे पुनः । पार्थबाणहताः केचिन्नि-पेतुर्विगतासवः ॥ ४८ ॥ तेषामुत्पतितान् कांश्चित् पतितांश्च परा-ङ्मुखान् । न जघानार्जुनो योधान् योधव्रतमनुस्मरन् ॥ ४९ ॥ ते विकीर्णरथाश्चित्राः प्रायशश्च पराङ्मुखाः । कुरवः कर्ण कर्णेति हाहेति च विचुक्रुशुः ॥ ५० ॥ तमाधिरथिराक्रन्दं विज्ञाय शरणैषिणाम् । माभैष्टेति प्रतिश्रुत्य ययावभिमुखोऽर्ज्जुनम् ॥ ५१ ॥

न-भारतश्रेष्ठः सर्वभारतहर्षणः । प्रादुश्चक्रे तदाग्नेयमस्त्र-
मस्त्रविदां वरः ॥ ५२ ॥ तस्य दीप्तशरौघस्य दीप्तचापधरस्य च ।
शरौघान् शरजालेन विदुद्राव धनञ्जयः ॥ ५३ ॥ तथैवाधिरथि-
स्तस्य बाणान् ज्वलिततेजसः । अस्त्रमस्त्रेण संवार्य्य प्राणदद्विसृ-
जञ्छरान् ॥ ५४ ॥ धृष्टद्युम्नश्च भीमश्च सात्यकिश्च महारथः ।
विव्यधुः कर्णमासाद्य त्रिभिस्त्रिभिरजिह्मगैः ॥ ५५ ॥ अर्जुनास्त्रन्तु
राधेयः संवार्य्य शरवृष्टिभिः । तेषां त्रयाणां चापानि चिच्छेद
विशिखैस्त्रिभिः ॥ ५६ ॥ ते निकृत्तायुधा वीरा निर्विषा भुजगा
इव । रथात् शक्तीः समुत्क्षिप्य भृशं सिंहा इवानदन् ॥ ५७ ॥
ता भुजाग्रैर्महावेगा विसृष्टा भुजगोपमाः । दीप्यमाना महाशक्त्यो
जग्मुराधिरथिं प्रति ॥ ५८ ॥ ता निकृत्य शरव्रातैस्त्रिभिस्त्रिभि-
रजिह्मगैः । ननाद बलवान् कर्णः पार्थाय विसृजञ्छरान् ॥ ५९ ॥
अर्जुनश्चापि राधेयं विद्धा सप्तभिराशुगैः । कर्णादवरजं बाणै-
र्जघान निशितैः शरैः ॥ ६० ॥ ततः शत्रुञ्जयं हत्वा पार्थः
षड्भिरजिह्मगैः । जहार सद्यो भल्लेन विपाटस्य शिरो रथात्
॥ ६१ ॥ पश्यतां धार्त्तराष्ट्राणामेकेनैव किरीटिना । प्रमुखे सूत-
पुत्रस्य सोदर्य्या निहतास्त्रयः ॥ ६२ ॥ ततो भीमः समुत्पत्य
स्वरथाद्वैनतेयवत् । वरासिना कर्णपक्षान् जघान दश पञ्च च

दुर्योधनो राजा द्रोणश्चैव जयद्रथः । निमज्जमानं राधेयमुज्जह्रुः
शल्यकामिवत् ॥ ६९ ॥ पत्त्यश्वरथमातङ्गास्त्वदीयाः शतशोऽपरे ।
कर्णमेवाभ्यधावन्त त्रासयानाः प्रहारिणः ॥ ७० ॥ धृष्टद्युम्नश्च
भीमश्च सौभद्रोऽर्ज्जुन एव च । नकुलः सहदेवश्च सात्यकिं जुगुपू
रणे ॥ ७१ ॥ एवमेष महारौद्रः क्षयार्थं सर्वधन्विनाम् । ताव-
कानां परेषाञ्च त्यक्त्वा प्राणानभूद्रणः ॥ ७२ ॥ पदातिरथनागाश्वा
गजाश्च रथपत्तिभिः । रथिनो नागपत्त्यश्वै रथपत्ती रथद्विपैः
॥ ७३ ॥ अश्वैरश्वा गजैर्नागा रथिनो रथिभिः सह । संयुक्ताः
समदृश्यन्त पत्तयश्चापि पत्तिभिः ॥ ७४ ॥ एवं सुकलिलं युद्ध-
मासीत् क्रव्यादहर्षणम् । महद्भिस्तैरभीतानां यमराष्ट्रविवर्द्धनम्
॥ ७५ ॥ ततो हता नररथवाजिकुञ्जरैरनेकशो द्विपरथपत्ति-
वाजिनः । गजैर्गजा रथिभिरुदायुधा रथा हयैर्हयाः पत्तिगणैश्च
पत्तयः ॥ ७६ ॥ रथैर्द्विपा द्विरदवरैर्महाहया हयैर्नरा वर-
रथिभिश्च वाजिनः । निरस्तजिह्वादशनेक्षणाः क्षितौ क्षयं गताः
प्रमथितवर्मभूषणाः ॥ ७७ ॥ तथापरैर्बहुकरणैर्वरायुधैर्हता गताः
प्रतिभयदर्शनाः क्षितिम् । विपोथिता हयगजपादताड़िता भृशा-
कुला रथखुरनेमिभिः क्षताः ॥ ७८ ॥ प्रमोदने श्वापदपक्षि-
रक्षसां जनक्षये वर्त्तति तत्र दारुणे । महाबलास्ते कुपिताः
परस्परं निषूदयन्तः प्रविचेरुरोजसा ॥ ७९ ॥ ततो बले भय-
लुलिते परस्परं निरीक्षमाणे रुधिरौघसम्प्लुते । दिवाकरेऽस्तं
गिरिमास्थिते शनैरुभे प्रयाते शिबिराय भारत ॥ ८० ॥

इति द्रोणपर्वणि संशप्तकवधपर्वणि सङ्कुलयुद्धे
द्वात्रिंशोऽध्यायः ॥ ३२ ॥

समाप्तञ्च संशप्तकवधपर्व ॥

परैः सार्द्धं समभवद्रणे । तादृशी यादृशी नान्य श्रुतो दृष्टोऽपि वा क्वचित् ॥ १७ ॥ तत्र द्रोणेन विहितो व्यूहो राजन्नशोभत । चरन् मध्यन्दिने सूर्य्ये प्रतपन्निव दुर्दृशः ॥ १८ ॥ तञ्चाभिमन्युर्वचनात् पितुर्ज्येष्ठस्य भारत । बिभेद दुर्भिदं सङ्ख्ये चक्रव्यूहमनेकधा ॥ १९ ॥ स कृत्वा दुष्करं कर्म हत्वा वीरान् सहस्रशः । षट्सु वीरेषु संसक्तो दौःशासनिवशङ्गतः ॥ २० ॥ सौभद्रः पृथिवीपाल जहौ प्राणान् परन्तप । वयं परमसंहृष्टाः पाण्डवाः शोककर्षिताः ॥ सौभद्रे निहते राजन्नवहारमकुर्म्महि ॥ २१ ॥

धृतराष्ट्र उवाच । पुत्रं पुरुषसिंहस्य सञ्जयाप्राप्तयौवनम् । रणे विनिहतं श्रुत्वा भृशं मे दीर्य्यते मनः ॥ २२ ॥ दारुणः क्षत्रधर्म्मोऽयं विहितो धर्मकर्तृभिः । यत्र राज्येप्सवः शूरा बाले शस्त्रमपातयन् ॥ २३ ॥ बालमत्यन्तसुखिनं विचरन्तमभीतवत् । कृतास्त्रा बहवो जघ्नुर्ब्रूहि गावल्गणे कथम् ॥ २४ ॥ विभित्सुना रथानीकं सौभद्रेणामितौजसा । विक्रीडितं यथा सङ्ख्ये तन्ममाचक्ष्व सञ्जय ॥ २५ ॥

सञ्जय उवाच । यन्मां पृच्छसि राजेन्द्र सौभद्रस्य निपातनम् । तत्ते कार्त्स्न्येन वक्ष्यामि शृणु राजन् समाहितः ॥ २६ ॥ विक्रीडितं कुमारेण यथानीकं विभित्सता । आरुग्णाश्च यथा वीरा दुरावारा जयिष्णवः ॥ २७ ॥ दावाग्निसंपरीतानां भूरिगुल्मतृणद्रुमे । वनौकसामिवारण्ये त्वदीयानामभूद्भयम् ॥ २८ ॥

इति द्रोणपर्वणि अभिमन्युवधपर्वणि चक्रव्यूहनिर्माणे पराजये त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

सञ्जय उवाच। समरेऽत्युग्रकर्माणि कर्मभिर्व्यञ्जितश्रमाः। सकृष्णाः पाण्डवाः पञ्च देवैरपि दुरासदाः॥ १ ॥ सत्त्वकर्मान्वयैर्बुद्ध्या कीर्त्त्या च यशसा श्रिया। नैव भूतो न भविता नैव तुल्यगुणः पुमान्॥ २ ॥ सत्यधर्मरतो दान्तो विप्रपूजादिभिर्गुणैः। सदैव त्रिदिवं प्राप्तो राजा किल युधिष्ठिरः॥ ३ ॥ युगान्ते चान्तको राजन् जामदग्न्यश्च वीर्य्यवान्। रथस्थो भीमसेनश्च कथ्यन्ते सदृशास्त्रयः॥ ४ ॥ प्रतिज्ञाकर्मदक्षस्य रणे गाण्डीवधन्वनः। उपमां नाधिगच्छामि पार्थस्य सदृशीं क्षितौ॥ ५ ॥ गुरुवात्सल्यमत्यन्तं नैभृत्यं विनयो दमः। नकुलेऽप्रतिरूप्यञ्च शौर्य्यञ्च नियतानि षट्॥ ६ ॥ श्रुतगाम्भीर्य्यमाधुर्य्यसत्त्वरूपपराक्रमैः। सदृशो देवयोर्वीरः सहदेवः किलाश्विनोः॥ ७ ॥ ये च कृष्णे गुणाः स्फीताः पाण्डवेषु च ये गुणाः। अभिमन्यौ किलैकस्था दृश्यन्ते गुणसञ्चयाः॥ ८ ॥ युधिष्ठिरस्य धैर्य्येण कृष्णस्य चरितेन च। कर्मभिर्भीमसेनस्य सदृशो भीमकर्मणः॥ ९ ॥ धनञ्जयस्य रूपेण विक्रमेण श्रुतेन च। विनयात् सहदेवस्य सदृशो नकुलस्य च॥ १० ॥

पर्य्यधावन्त काष्णिं प्रति युयुत्सव । तेषां दशशतसाणि बभूवु-
र्दृढधन्विनाम् ॥ १६ ॥ पौत्र तव पुरस्कृत्य लक्ष्मण प्रियदर्श-
नम् । अन्योऽन्यसमदु खास्ते अन्योऽन्यसमसाहसा ॥ १७ ॥
अन्योऽन्यसङ्घमानाय अन्योऽन्यस्य हिते रता । दुर्य्योधनस्तु
राजेन्द्र सैन्यमध्ये व्यवस्थित ॥ १८ ॥ कर्णदु शासनकृपैर्वृतो
राजा महारथै । देवराजोपम श्रीमान् श्वेतच्छत्राभिसंवृतः
॥ १९ ॥ चामरव्यजनाक्षेपैरुदयन्निव भास्कर । प्रमुखे तस्य
सैन्यस्य द्रोणोऽवस्थितनायक ॥ २० ॥ सिन्धुराजस्तथातिष्ठत
श्रीमान्मेरुरिवाचल । सिन्धुराजस्य पार्श्वस्था अश्वत्थामपुरो-
गमा ॥ २१ ॥ सुतास्तव महाराज त्रिंशत्त्रिदशसन्निभा । गान्धार-
राज कितव शल्यो भूरिश्रवास्तथा ॥ २२ ॥ पार्श्वत सिन्धु-
राजस्य व्यराजन्त महारथा । तत प्रववृते युद्ध तुमुल लोम-
हर्षणम् । तावकाना परेषाञ्च मृत्यु कृत्वा निवर्त्तनम् ॥ २३ ॥

इति द्रोणपर्व्वणि अभिमन्युवधपर्व्वणि चक्रव्यूहनिर्माणे
चतुस्त्रिंशोऽध्याय ॥ ३४ ॥

---

सञ्जय उवाच । तदनीकमनाधृष्य भारद्वाजेन पालितम् ।
पार्था समभ्यवर्त्तन्त भीमसेनपुरोगमा ॥ १ ॥ सात्यकिश्चेकि-
तानश्च धृष्टद्युम्नश्च पार्षत । कुन्तिभोजश्च विक्रान्तो द्रुपदश्च महा-
रथ ॥ २ ॥ आर्ज्जुनि क्षत्रधर्मा च बृहत्क्षत्रश्च वीर्य्यवान् ।
चेदिपो धृष्टकेतुश्च माद्रीपुत्रौ घटोत्कच ॥ ३ ॥ युधामन्युश्च
विक्रान्त शिखण्डी चापराजित । उत्तमौजाश्च दुर्द्धर्षो विराटश्च
महारथ ॥ ४ ॥ द्रौपदेयाश्च सरब्धा शैशुपालिश्च वीर्य्यवान् ।
केकयाश्च महावीर्य्या सृञ्जयाश्च सहस्रश ॥ ५ ॥ एते चान्ये च

सगणाः कृतास्त्रा युद्धदुर्मदाः । समभ्यधावन् सहसा भारद्वाजं युयुत्सवः ॥ ६ ॥ समीपे वर्त्तमानांस्तान् भारद्वाजोऽपि वीर्य्यवान् । असम्भ्रान्तः शरौघेण महता समवारयत् ॥ ७ ॥ महौघः सलिलस्येव गिरिमासाद्य दुर्भिदम् । द्रोणं तेनाभ्यवर्त्तन्त वेलामिव जलाशयाः ॥ ८ ॥ पीड्यमानाः शरै राजन् द्रोणचापविनिःसृतैः । न शेकुः प्रमुखे स्थातुं भारद्वाजस्य पाण्डवाः ॥ ९ ॥ तदद्भुतमपश्याम द्रोणस्य भुजयोर्बलम् । यदेनं नाभ्यवर्त्तन्त पाञ्चालाः सृञ्जयैः सह ॥ १० ॥ तमायान्तमभिक्रुद्धं द्रोणं दृष्ट्वा युधिष्ठिरः । बहुधा चिन्तयामास द्रोणस्य प्रतिवारणम् ॥ ११ ॥ अशक्यन्तु तमन्येन द्रोणं मत्वा युधिष्ठिरः । अविषह्यं गुरुं भारं सौभद्रे समवासृजत् ॥ १२ ॥ वासुदेवादनवरं फाल्गुनाच्चामितौजसम् । अब्रवीत् परवीरघ्नमभिमन्युमिदं वचः ॥ १३ ॥ एत्य नो नार्ज्जुनो गर्हयेद्यथा तात तथा कुरु । चक्रव्यूहस्य न वयं विद्म भेदं कथञ्चन ॥ १४ ॥ त्वं वार्ज्जुनो वा कृष्णो वा भिन्द्यात् प्रद्युम्न एव वा । चक्रव्यूहं महाबाहो पञ्चमो नोपपद्यते ॥ १५ ॥ अभिमन्यो वरं तात याचतां दातुमर्हसि । पितॄणां मातुलानाञ्च सैन्यानाञ्चैव सर्वशः ॥ १६ ॥ धनञ्जयो हि नस्तात गर्हयेदेत्य संयुगात् । क्षिप्रमस्त्रं समादाय द्रोणानीकं विशातय ॥ १७ ॥

अभिमन्युरुवाच । द्रोणस्य दृढमत्युग्रमनीकप्रवरं युधि । पितॄणां जयमाकाङ्क्षन्नवगाहेऽविलम्बितम् ॥ १८ ॥ उपदिष्टो हि मे पित्रा योगोऽनीकविशातने । नोत्सहे तु विनिर्गन्तुमहं कस्याञ्चिदापदि ॥ १९ ॥

युधिष्ठिर उवाच । भिन्ध्यनीकं युधां श्रेष्ठ द्वारं सञ्जनयस्व नः । वयं त्वानुगमिष्यामो येन त्वं तात यास्यसि ॥ २० ॥ धनञ्जयसमं युद्धे त्वां वयं तात संयुगे । प्रणिधायानुयास्यामो रक्षन्तः सर्वतोमुखाः ॥ २१ ॥

भीम उवाच। अहं त्वानुगमिष्यामि धृष्टद्युम्नोऽथ सात्यकि । पाञ्चालाः केकया मत्स्यास्तथा सर्वे प्रभद्रकाः ॥ २२ ॥ सकृद्भिन्नं त्वया व्यूहं तत्र तत्र पुनः पुनः । वयं प्रध्वंसयिष्यामो निघ्नमाना वरान् वरान् ॥ २३ ॥

अभिमन्युरुवाच। अहमेतत् प्रवेक्ष्यामि द्रोणानीकं दुरासदम् । पतङ्ग इव संक्रुद्धो ज्वलन्तं जातवेदसम् ॥ २४ ॥ तत् कर्माद्य करिष्यामि हितं यद्वंशयोर्द्वयोः । मातुलस्य च यत् प्रीतिं करिष्यामि पितुश्च मे ॥ २५ ॥ शिशुनैकेन सङ्ग्रामे काल्यमानानि सङ्घशः । द्रक्ष्यन्ति सर्वभूतानि द्विषत्सैन्यानि वै मया ॥ २६ ॥ नाहं पार्थेन जातः स्यां न च जातः सुभद्रया। यदि मे संयुगे कश्चिज्जीवितान्नाद्य मुच्यते ॥ २७ ॥ यदि चैकरथेनाहं समग्रं क्षत्रमण्डलम् । न करोम्यष्टधा युद्धे न भवाम्यर्ज्जुनात्मजः ॥ २८ ॥

युधिष्ठिर उवाच। एवन्ते भाषमाणस्य बलं सौभद्र वर्द्धताम् । यस्त्वमुत्सहसे भेत्तुं द्रोणानीकं दुरासदम् ॥ २९ ॥ रक्षितं पुरुषव्याघ्रैर्महेष्वासैर्महाबलैः । साध्यरुद्रमरुत्कल्पैर्वस्वग्न्यादित्यविक्रमैः ॥ ३० ॥

सञ्जय उवाच। तस्य तद्वचनं श्रुत्वा स यन्तारमचोदयत् । सुमित्राश्वान् रणे क्षिप्रं द्रोणानीकाय चोदय ॥ ३१ ॥

इति द्रोणपर्व्वणि अभिमन्युवधपर्व्वणि अभिमन्युप्रतिज्ञायां पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

सञ्जय उवाच। सौभद्रस्तद्वचः श्रुत्वा धर्म्मराजस्य धीमतः । अचोदयत यन्तारं द्रोणानीकाय भारत ॥ १ ॥ तेन सञ्चोद्यमानस्तु याहि याहीति सारथिः । प्रत्युवाच ततो राजन्नभि-

मन्युमिदं वचः ॥२॥ अतिभारोऽयमायुष्मन्नाहितस्त्वयि पाण्डवैः ।
सम्प्रधार्य्य क्षमं बुद्ध्या ततस्त्वं योद्धुमर्हसि ॥ ३ ॥ आचार्य्यो हि
कृती द्रोण परमास्त्रे कृतश्रमः । अत्यन्तसुखसंवृद्धस्त्वञ्चात्यन्त-
विशारदः ॥ ४ ॥ ततोऽभिमन्युः प्रहसन् सारथिं वाक्यमब्रवीत् ।
सारथे कोन्वयं द्रोणः समग्रं क्षत्रमेव वा ॥ ५ ॥ ऐरावतगतं शक्रं
सहामरगणैरहम् । योधयेयं रणमुखे न मे क्षत्रेऽद्य विस्मयः
॥ ६ ॥ न ममैतद्द्विषत्सैन्यं कलामर्हति षोड़शीम् । अपि
विश्वजित विष्णुं मातुलं प्राप्य सूतज ॥ ७ ॥ पितरं चार्जुनं युद्धे
न भीर्मामुपयास्यति । ततोऽभिमन्युस्तां वाचं कदर्थीकृत्य सारथेः
॥ ८ ॥ याहीत्येवाब्रवीदेनं द्रोणानीकाय माचिरम् । ततः
सञ्चोदयामास हयानस्य त्रिहायणान् ॥ ९ ॥ नातिहृष्टमनाः
सूतो हेमभाण्डपरिच्छदान् । ते प्रेषिताः सुमित्रेण द्रोणानीकाय
वाजिनः ॥ १० ॥ द्रोणमभ्यद्रवन्राजन् महावेगपराक्रमाः । तमु-
दीक्ष्य तथायान्तं सर्वे द्रोणपुरोगमाः । अभ्यवर्त्तन्त कौरव्याः
पाण्डवाय तमन्वयुः ॥ ११ ॥ सकर्णिकारप्रवरोच्छ्रितध्वजः सुवर्ण-
वर्माऽर्जुनिरर्जुनावरः । युयुत्सया द्रोणमुखानभीतवत समा-
सदत् सिंहशिशुर्यथा द्विपान् ॥ १२ ॥ ते विशन्तं मुदा युक्ताः
सम्प्रहारं प्रचक्रिरे । आसीत् गाङ्ग इवावर्त्तो मुहूर्त्तमुदधाविव

घोषैः खुरनेमिस्वनैरपि । सन्नादयन्तो वसुधामभिदुद्रुवुरार्जु-
निम् ॥ १९ ॥ तेषामापततां वीरः शीघ्रं पूर्वमथो दृढम् ।
क्षिप्रास्त्रो न्यवधीद्भ्रातॄन् मर्मघ्नो मर्मभेदिभिः ॥ २० ॥ ते वध्य-
माना विवशा नानालिङ्गैः शितैः शरैः । अभिपेतुस्तमेवाजौ
शलभा इव पावकम् ॥ २१ ॥ ततस्तेषां शरीरैश्च शरीरावयवैश्च
सः । सन्तस्तार तदा भूमिं कुशैर्वेदीमिवाध्वरे ॥ २२ ॥ बद्ध-
गोधाङ्गुलित्राणान् सशरासनसायकान् । सासिचर्माङ्कुशाभीषून्
सतोमरपरश्वधान् ॥ २३ ॥ सगदायोगुडप्रासान् सर्ष्टितोमर-
पट्टिशान् । सभिन्दिपालपरिघान् सशक्तिवरकम्पनान् ॥ २४ ॥
सप्रतोदमहाशङ्खान् सकुन्तान् सकचग्रहान् । समुद्गरक्षेपणीयान्
सपाशपरिघोपलान् ॥ २५ ॥ सकेयूराङ्गदान् बाहून् हृद्यगन्धा-
नुलेपनान् । स चिच्छेदार्जुनिस्तूर्णं लक्षीयानां सहस्रशः ॥ २६ ॥
तैः स्फुरद्भिर्महाराज शुशुभे भूः सशोणितैः । पञ्चास्यैः पन्नगै-
श्छिन्नैर्गरुडेनेव मारिष ॥ २७ ॥ सनासाननकेशान्तैरव्रणैश्चारु-
कुण्डलैः । सन्दष्टौष्ठपुटैः क्रोधात् क्षरद्भिः शोणितं बहु ॥ २८ ॥
चारुस्रङ्मुकुटोष्णीषैर्मणिरत्नविराजितैः । विनालनलिनाकारै-
र्दिवाकरशशिप्रभैः ॥ २९ ॥ हितप्रियंवदैः काले बहुभिः पुण्य-
गन्धिभिः । द्विषच्छिरोभिः पृथिवीमवतस्तार फाल्गुनिः ॥ ३० ॥
गन्धर्वनगराकारान् विधिवत् कल्पितान् रथान् । ईषामुखान्
त्रिवेणून् न्यस्तदण्डकबन्धुरान् ॥ ३१ ॥ विजङ्घाक्षकूबरांस्तत्र
विनाशादशनानपि । विचक्रोपस्करोपस्थान् भग्नोपकरणानपि
॥ ३२ ॥ प्रपातितोपस्तरणान् हतयोधान् सहस्रशः । शरै-
र्विशकलीकुर्वन् दिक्षु सर्वासु भारत ॥ ३३ ॥ पुनर्द्विपान् द्विपा-
रोहान् वैजयन्त्यङ्कुशध्वजान् । तूणान् वर्माण्यथो कक्षान् ग्रैवेया-
ण्यथ कम्बलान् ॥ ३४ ॥ घण्टाः शुण्डान् विषाणाग्रान् गल-
नालापदानुगान् । शरैर्निशितधाराग्रैः शातयामास तत् ॥ ३५ ॥

वानायुजान् पार्वतीयान् काम्बोजानथ वाह्लिकान्। स्थिरवालधिकर्णाक्षान् जवनान् साधुवाहिनः ॥ ३६ ॥ आरूढान् शिक्षितैर्योधैः शक्त्यृष्टिप्रासयोधिभिः। विध्वस्तचारुमुकुटान् विप्रविद्धप्रकीर्णकान् ॥ ३७ ॥ निरस्तजिह्वानयनान् निष्कीर्णान्त्रयकृद्घृतान्। हतारोहान् भिन्नघण्टान् क्रव्यादगणमोदनान् ॥ ३८ ॥ निकृत्तचर्मकवचान् शकृन्मूत्रासृगाप्लुतान्। निपातयन्नाश्वगणांस्तावकान् स व्यरोचत ॥ ३९ ॥ एको विष्णुरिवाचिन्त्यः कृत्वा प्राक्कर्म दुष्करम्। तथा विमथितं तेन त्र्यङ्गं तव बलं महत् ॥ ४० ॥ यथासुरबलं घोरं त्र्यम्बकेनामितौजसा। कृत्वा कर्म रणेऽसह्यं परैरार्ज्जुनिराहवे ॥ ४१ ॥ अभिनत् स पदातीघान् त्वदीयानेव सर्वशः। एवमेकेन तां सेनां सौभद्रेण शितैः शरैः ॥ ४२ ॥ भृशं विप्रहतां दृष्ट्वा स्कन्देनेवासुरीं चमूम्। त्वदीयास्तव पुत्राश्च वीक्षमाणा दिशो दश ॥ ४३ ॥ संशुष्कास्याश्चलन्नेत्राः प्रस्विन्ना लोमहर्षणाः। पलायनकृतोत्साहा निरुत्साहा द्विषज्जये ॥ ४४ ॥ गोत्रनामभिरन्योऽन्यं क्रन्दन्तो जीवितैषिणः। हतान् पुत्रान् पितॄन् भ्रातॄन् बन्धून् सम्बन्धिनस्तथा। प्रातिष्ठन्त समुत्सृज्य त्वरयन्तो हयद्विपान् ॥ ४५ ॥

इति द्रोणपर्वणि अभिमन्युवधपर्वणि अभिमन्युपराक्रमे षट्त्रिंशोऽध्यायः ॥ ३६ ॥

वीर्य्यवान् । तमाद्रवत माभैष्ट क्षिप्रं रक्षत कौरवम् ॥ ३ ॥ ततः कृतास्त्रा बलिनः सुहृदो जितकाशिनः । त्रास्यमाना भयाद्वीरं परिवव्रुस्तवात्मजम् ॥ ४ ॥ द्रोणो द्रौणिः कृपः कर्णः कृतवर्म्मा च सौबलः । बृहद्बलो मद्रराजो भूरिर्भूरिश्रवाः शलः ॥ ५ ॥ पौरवो वृषसेनश्च विसृजन्तः शिताञ्छरान् । सौभद्रं शरवर्षेण महता समवारयन् ॥ ६ ॥ सम्मोहयित्वा तमयो दुर्य्योधनममोचयन् । आस्याद्ग्रासमिवाक्षिप्तं ममृषे नार्ज्जुनात्मजः ॥ ७ ॥ तान् शरौघेण महता साश्वसूतान्महारथान् । विमुखीकृत्य सौभद्रः सिंहनादमथानदत् ॥ ८ ॥ तस्य नादं ततः श्रुत्वा सिंहस्येवामिषैषिणः । नामृष्यन्त सुसंरब्धाः पुनर्द्रोणमुखा रथाः ॥ ९ ॥ त एनं कोष्ठकीकृत्य रथवंशेन मारिष । व्यसृजन्निषुजालानि नानालिङ्गानि सङ्घशः ॥ १० ॥ तान्यन्तरीक्षे चिच्छेद पौत्रस्तव शितैः शरैः । तांश्चैव प्रतिविव्याध तदद्भुतमिवाभवत् ॥ ११ ॥ ततस्ते कोपितास्तेन शरैराशीविषोपमैः । परिवव्रुर्जिघांसन्तः सौभद्रमपलायिनम् ॥ १२ ॥ समुद्रमिव पर्य्यस्तं त्वदीयं तद्बलार्णवम् । दधारैकोऽर्ज्जुनिर्बाणैर्वेलेव भरतर्षभ ॥ १३ ॥ शूराणां युध्यमानानां निघ्नतामितरेतरम् । अभिमन्योः परेषाञ्च नासीत् कश्चित् पराङ्मुखः ॥ १४ ॥ तस्मिंस्तु घोरसङ्ग्रामे वर्त्तमाने भयङ्करे । दुःसहो नवभिर्बाणैरभिमन्युमविध्यत ॥ १५ ॥ दुःशासनो द्वादशभिः कृपः शारद्वतस्त्रिभिः । द्रोणस्तु सप्तदशभिः शरैराशीविषोपमैः ॥ १६ ॥ विविंशतिश्च सप्तत्या कृतवर्म्मा च सप्तभिः । बृहद्बलस्तथाष्टाभिरश्वत्थामा च सप्तभिः ॥ १७ ॥ भूरिश्रवास्त्रिभिर्बाणैर्मद्रेशः षड्भिराशुगैः । द्वाभ्यां शराभ्यां शकुनिस्त्रिभिर्दुर्य्योधनो नृप ॥ १८ ॥ स तु तान् प्रतिविव्याध त्रिभिस्त्रिभिरजिह्मगैः । नृत्यन्निव महाराज चापहस्तः प्रतापवान् ॥ १९ ॥ ततोऽभिमन्युः सङ्क्रुद्धस्त्रास्यमानस्तवा-

त्मजे । विदर्शयन् वै सुमहच्छिक्षाभ्यासकृतम्बलम् ॥ २० ॥
गरुडानिलरंहोभिर्यन्तुर्वाक्यकरैर्हयैः । दान्तैरश्मकदायाद रथ-
मार्गमवारयत ॥ २१ ॥ स्थित्वा तस्याग्रत श्रीमानश्मकस्य सुतो
बली । विव्याध दशभिर्बाणैस्तिष्ठतिष्ठेति चाब्रवीत ॥ २२ ॥
तस्याभिमन्युर्दशभिर्बाणैः सूत हयान् ध्वजान् । बाहू धनु
शिरश्चोर्व्यां स्मयमानो न्यपातयत ॥ २३ ॥ ततस्तस्मिन् हते वीरे
सौभद्रेणाश्मकेश्वरे । सञ्चचाल बल सर्वं पलायनपरायणम
॥ २४ ॥ तत कर्णः कृपो द्रोणो द्रौणिर्गान्धारराट् शल । शल्यो
भूरिश्रवा क्राथ सोमदत्तो विविंशति ॥ २५ ॥ वृषसेन सुषे-
णश्च कुण्डभेदी प्रतर्दन । वृन्दारको ललित्थश्च प्रबाहुर्दीर्घलोचन
॥ २६ ॥ दुर्य्योधनश्च सक्रुद्ध शरवर्षैरवाकिरन् । सोऽतिविद्धो
महेष्वासैरभिमन्युरजिह्मगै ॥ २७ ॥ शरमादत्त कर्णाय वर्म-
कायावभेदिनम् । तस्य भित्त्वा तनुत्राण देह निर्भिद्य चाशुग
॥ २८ ॥ प्राविशद्धरणीं राजन् वल्मीकमिव पन्नग । स तेनाति-
प्रहारेण व्यथितो विह्वलन्निव ॥ २९ ॥ सञ्चचाल रणे कर्णः
क्षितिकम्पे यथाचल । तथान्यैर्निशितैर्बाणैः सुषेण दीर्घलोच-
नम् ॥ ३० ॥ कुण्डभेदिञ्च सक्रुद्धस्त्रिभिस्त्रीनवधीद्बली । कर्ण-
स्तम्पञ्चविंशत्या नाराचानां समार्पयत् ॥ ३१ ॥ अश्वत्थामा च
विंशत्या कृतवर्मा च सप्तभि । स शराचितसर्वाङ्ग क्रुद्ध शक्रा-
त्मजात्मज ॥ ३२ ॥ विचरन् ददृशे सैन्ये पाशहस्त इवान्तक ।
शल्यञ्च शरवर्षेण समीपस्थमवाकिरत ॥ ३३ ॥ उदक्रोशन्महा-
बाहुस्तव सैन्यानि भीषयन् । तत स विद्धोऽस्त्रविदा मर्मभिद्भि-
रजिह्मगै ॥ ३४ ॥ शल्यो राजन् रथोपस्थे निषसाद मुमोह च ।
तं हि दृष्ट्वा तथा विद्ध सौभद्रेण यशस्विना ॥ ३५ ॥ सम्प्राद्रव-
च्चमू सर्वा भारद्वाजस्य पश्यत । तं प्रेक्षन्तं महाबाहु रुक्मपुङ्खै
समावृतम् । त्वदीया प्रपलायन्ते मृगा सिंहार्दिता इव ॥ ३६ ॥

स तु रणयशसाभिपूज्यमानः पितृसुरचारणसिद्धयक्षसङ्घैः । अवनितलगतैश्च भूतसङ्घैरतिविबभौ हुतभुग्यथाज्यसिक्तः ॥ ३७ ॥

इति द्रोणपर्वणि अभिमन्युवधपर्वणि अभिमन्युपराक्रमे सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

---

धृतराष्ट्र उवाच । तथा प्रमथमानं तं महेष्वासानजिह्मगैः । आर्जुनिं मामकाः सञ्जय के तेन समवारयन् ॥ १ ॥

सञ्जय उवाच । शृणु राजन् कुमारस्य रणे विक्रीडितं महत् । बिभित्सतो रथानीकं भारद्वाजेन रक्षितम् ॥ २ ॥ मद्रेशं सादितं दृष्ट्वा सौभद्रेणाशुगैरणे । शल्यादवरजः क्रुद्धः किरन् बाणान् समभ्ययात् ॥ ३ ॥ तस्यार्जुनिः शिरोग्रीवं पाणिपादं धनुर्हयान् । छत्रं ध्वजं नियन्तारं त्रिवेणुं तल्पमेव च ॥ ४ ॥ चक्रे युगेषां तूणीरानुपाकर्षं च सायकैः । पताकां चक्रगोप्तारौ सर्वोपकरणानि च ॥ ५ ॥ लघुहस्तः प्रचिच्छेद ददृशे तं न कश्चन । स पपात क्षितौ क्षीणः प्रविद्धाभरणाम्बरः ॥ ६ ॥ वायुनेव महाशैलः सम्भग्नोऽमिततेजसा । अनुगाश्चापि वित्रस्ताः प्राद्रवन् सर्वतो दिशः ॥ ७ ॥ आर्जुनेः कर्म तद्दृष्ट्वा सम्प्रणेदुः समन्ततः । नादेन सर्वभूतानि साधु साध्विति भारत ॥ ८ ॥ शल्यभ्रातर्य्यथारुग्णे बहुशस्तस्य सैनिकाः । कुलाधिवासनामानि श्रावयन्तोऽर्जुनात्मजम् ॥ ९ ॥ अभ्यधावन्त संक्रुद्धा विविधायुधपाणयः । रथैरश्वैर्गजैश्चान्ये पादैश्चान्ये बलोत्कटाः ॥ १० ॥ बाणशब्देन महता रथनेमिस्वनेन च । हुङ्कारैः क्ष्वेडितोत्क्रुष्टैः सिंहनादैश्च गर्जितैः ॥ ११ ॥ ज्यातलत्रस्वनैरन्ये गर्जन्तोऽर्जुननन्दनम् । ब्रुवन्तश्च न नो जीवन्मोक्ष्यसे जीवितादपि ॥ १२

तास्तथाऽनुव्रतो दृष्ट्वा सौभद्र प्रदहन्निव। यो यत्र प्राहरत् पूर्वं स तं विव्याध पत्रिभि ॥ १३ ॥ सन्दर्शयिष्यन्नस्त्राणि विचित्राणि लघूनि च। आर्जुनि समरे शूरो मृदुपूर्वमयुध्यत ॥ १४ ॥ वासुदेवादुपात्तं यदस्त्रं यच्च धनञ्जयात्। अदर्शयत तत् कार्ष्णि कृष्णाभ्यामविशेषवत् ॥ १५ ॥ दूरमस्य गुरुं भारं साध्वसञ्च पुन पुन। सन्दधद्विसृजंश्चेषून् निर्विशेषमदृश्यत ॥ १६ ॥ चाप-मण्डलमेवास्य विस्फुरद्दिक्षु दृश्यत। सुदीप्तस्य शरत्काले सवितु-र्मण्डलं यथा ॥ १७ ॥ ज्याशब्द शुश्रुवे तस्य तलशब्दश्च भारत। महाशनिसम काले पयोदस्येव निस्वन ॥ १८ ॥ ह्रीमानमर्षी सौभद्रो मानकृत् प्रियदर्शन। सम्मिमानयिषुर्वीरानिष्वस्त्रैश्चाप्य-युध्यत ॥ १९ ॥ मृदुर्भूत्वा महाराज दारुण समपद्यत। वर्षा-व्यतीतो भगवान् शरदीव दिवाकर ॥ २० ॥ शरान् विचित्रान् बहुशो रुक्मपुङ्खान् शिलाशितान्। मुमोच शतश क्रुद्धो गभस्ती-निव भास्कर ॥ २१ ॥ क्षुरप्रैर्वत्सदन्तैश्च विपाठैश्च महायशा। नाराचैरर्द्धचन्द्राभैर्भल्लैरञ्जलिकैरपि ॥ २२ ॥ अवाकिरद्रथानीकं भारद्वाजस्य पश्यत। ततस्तत्सैन्यमभवद्विमुखं शरपीडितम् ॥२३॥

इति द्रोणपर्वणि अभिमन्युवधपर्वणि अभिमन्युपराक्रमे अष्टत्रिंशोऽध्याय ॥ ३८ ॥

---

धृतराष्ट्र उवाच। द्वैधीभवति मे चित्तं ह्रिया तुष्ट्या च सञ्जय। मम पुत्रस्य यत्सैन्यं सौभद्र समवारयत् ॥ १ ॥ विस्तरे-णैव मे शंस सर्वं गावल्गणे पुन। विक्रीडितं कुमारस्य स्कन्द-स्येवासुरै सह ॥ २ ॥

सञ्जय उवाच। हन्त ते सम्प्रवक्ष्यामि विमर्दमतिदारुणम्।

एकस्य च बहूनाञ्च यथासीत्तुमुलो रणः ॥ ३ ॥ अभिमन्युः कृतोत्साहः कृतोत्साहानरिन्दमान् । रथस्थो रथिनः सर्वांस्तावकानभ्यवर्षत ॥ ४ ॥ द्रोणं कर्णं कृपं शल्यं द्रौणिं भोजं बृहद्बलम् । दुर्योधनं सौमदत्तिं शकुनिञ्च महाबलम् ॥ ५ ॥ नानानृपान्नृपसुतान् सैन्यानि विविधानि च । अलातचक्रवत् सर्वान् चरमाणः समार्पयत ॥ ६ ॥ निघ्नन्नमित्रान् सौभद्रः परमास्त्रैः प्रतापवान् । अदर्शयत तेजस्वी दिक्षु सर्वासु भारत ॥ ७ ॥ तद्दृष्ट्वा चरितं तस्य सौभद्रस्यामितौजसः । समकम्पन्त सैन्यानि त्वदीयानि पुनः पुनः ॥ ८ ॥ अथाब्रवीन्महाप्राज्ञो भारद्वाजः प्रतापवान् । हर्षेणोत्फुल्लनयनः कृपमाभाष्य सत्वरम् ॥ ९ ॥ घट्टयन्निव मर्माणि पुत्रस्य तव भारत । अभिमन्युं रणे दृष्ट्वा तदा रणविशारदम् ॥ १० ॥ एष गच्छति सौभद्रः पार्थानामग्रतो युवा । नन्दयन् सुहृदः सर्वान् राजानञ्च युधिष्ठिरम् ॥ ११ ॥ नकुलं सहदेवञ्च भीमसेनञ्च पाण्डवम् । बन्धून् सम्बन्धिनश्चान्यान्मध्यस्थान् सुहृदस्तथा ॥ १२ ॥ नास्य युद्धे समं मन्ये कञ्चिदन्यं धनुर्धरम् । इच्छन् हन्यादिमां सेनां किमर्थमपि नेच्छति ॥ १३ ॥ द्रोणस्य प्रीतिसंयुक्तं श्रुत्वा वाक्यं तवात्मजः । आर्जुनिं प्रति संक्रुद्धो द्रोणं दृष्ट्वा स्मयन्निव ॥ १४ ॥ अथ दुर्योधनः कर्णमब्रवीद्बाह्लिकं नृपम् । दुःशासनं मद्रराजं तांस्तान् चान्यान्महारथान् ॥ १५ ॥ सर्वमूर्द्धाभिषिक्तानामाचार्यो ब्रह्मवित्तमः । अर्जुनस्य सुतं मूढो नायं हन्तुमिहेच्छति ॥ १६ ॥ न ह्यस्य समरे मुच्येदन्तकोऽप्याततायिनः । किमङ्ग पुनरेवान्यो मर्त्यः सत्यं ब्रवीमि वः ॥ १७ ॥ अर्जुनस्य सुतं ह्येष शिष्यत्वादभिरक्षति । शिष्याः पुत्राश्च दयितास्तदपत्यञ्च धर्मिणाम् ॥ १८ ॥ संरक्ष्यमाणो द्रोणेन मन्यते वीर्यमात्मनः । आत्मसम्भावितो मूढस्तं प्रमथ्नीत माचिरम् ॥ १९ ॥ एवमुक्तास्तु ते राजन् सात्वती-

पुत्रमभ्ययु । संरब्धास्ते जिघांसन्तो भारद्वाजस्य पश्यत ॥ २० ॥
दुःशासनस्तु तच्छ्रुत्वा दुर्य्योधनवचस्तदा । अब्रवीत् कुरुशार्दूलो
दुर्य्योधनमिदं वच ॥ २१ ॥ अहमेनं हनिष्यामि महाराज ब्रवीमि
ते । मिषतां पाण्डुपुत्राणां पाञ्चालानाञ्च पश्यताम् ॥ २२ ॥
ग्रसिष्याम्यद्य सौभद्रं यथा राहुर्दिवाकरम् । उत्क्रुश्य चाब्रवी-
द्वाक्यं कुरुराजमिदं पुन ॥ २३ ॥ श्रुत्वा कृष्णौ मया ग्रस्तं
सौभद्रमतिमानिनौ । गमिष्यत प्रेतलोकं जीवलोकान्न संशय
॥ २४ ॥ तौ च श्रुत्वा मृतौ व्यक्तं पाण्डो क्षेत्रोद्भवा सुता ।
एकाह्ना ससुहृद्वर्गा क्लैव्याद्धास्यन्ति जीवितम् ॥ २५ ॥ तस्मा-
दस्मिन् हते शत्रौ हता सर्वेऽहितास्तव । शिवेन ध्याहि मां
राजन्नेष हन्मि रिपूंस्तव ॥ २६ ॥ एवमुक्त्वा नदन् राजन् पुत्रो-
दुःशासनस्तव । सौभद्रमभ्ययात् क्रुद्ध शरवर्षैरवाकिरन् ॥ २७ ॥
तमतिक्रुद्धमायान्तं तव पुत्रमरिन्दमम् । अभिमन्यु शरैस्तीक्ष्णै-
ष्षड्विंशत्या समार्पयत् ॥ २८ ॥ दुःशासनस्तु संक्रुद्ध प्रभिन्न
इव कुञ्जर । अयोधयत सौभद्रमभिमन्युश्च तं रणे ॥ २९ ॥
तौ मण्डलानि चित्राणि रथाभ्यां सव्यदक्षिणम् । चरमाणाव
युध्येतां रथशिक्षाविशारदौ ॥ ३० ॥ अथ पणवमृदङ्गदुन्दुभीनां
क्रकचमहानकभेरिझर्झराणाम् । निनदमतिभृशं नरा प्रचक्रु-
र्लवणजलोद्भवसिंहनादमिश्रम् ॥ ३१ ॥

इति द्रोणपर्वणि अभिमन्युवधपर्वणि दुःशासनयुद्धे
एकोनचत्वारिंशोऽध्याय ॥ ३९ ॥

---

सञ्जय उवाच । शरविक्षतगात्रस्तु प्रत्यमित्रमवस्थितम् ।
अभिमन्यु स्मयन् धीमान् दुःशासनमथाब्रवीत् ॥ १ ॥ दिष्ट्या
पश्यामि सङ्ग्रामे मानिनं शूरमागतम् । निष्ठुरं त्यक्तधर्माणं

क्रोधनपरायणम् ॥ २ ॥ यत् सभायां त्वया राज्ञो धृतराष्ट्रस्य
शृण्वतः । कोपितः परुषैर्वाक्यैर्धर्मराजो युधिष्ठिरः ॥ ३ ॥ बलो-
न्मत्तेन भीमस्य विह्वलेन भाषितः । अक्षकूटं समाश्रित्य सौब-
लस्यात्मनो बलम् ॥ ४ ॥ तस्येदमनुप्राप्त प्रकोपात् वै महा-
त्मनाम् । परवित्तापहारस्य क्रोधस्याप्रशमस्य च ॥ ५ ॥ लोभस्य
ज्ञाननाशस्य द्रोहस्यात्याहितस्य च । पितृणां मम राज्यस्य हरण-
स्योग्रधन्विनाम् ॥ ६ ॥ सद्यश्चोग्रमधर्मस्य फलं प्राप्नुहि दुर्मते ।
शासिताऽस्म्यद्य ते बाणैः सर्वसैन्यस्य पश्यतः ॥ ७ ॥ अद्याहमनृण-
स्तस्य कोपस्य भविता रणे । अमर्षितायाः कृष्णायाः काङ्क्षि-
तस्य च मे पितुः ॥ ८ ॥ अद्य कौरव्य भीमस्य भवितास्म्यनृणो
युधि । न हि मे मोक्ष्यसे जीवन् यदि नोत्सृजसे रणम् ॥ ९ ॥
एवमुक्त्वा महाबाहुर्बाणं दुःशासनान्तकम् । सन्दधे परवीरघ्नः
कालाग्न्यनिलवर्चसम् ॥ १० ॥ तस्योरस्तूर्णमासाद्य जत्रुदेशे
विभिद्य तम् । जगाम सह पुङ्खेन वल्मीकमिव पन्नग ॥ ११ ॥
अथैनं पञ्चविंशत्या पुनरेव समार्पयत् । शरैरग्निसमस्पर्शैराकर्ण-
समचोदितैः ॥ १२ ॥ स गाढविद्धो व्यथितो रथोपस्थ उपा-
विशत् । दुःशासनो महाराज कश्मलं चाविशन्महत् ॥ १३ ॥
सारथिस्त्वरमाणस्तु दुःशासनमचेतनम् । रणमध्यादपोवाह
सौभद्रशरपीडितम् ॥ १४ ॥ पाण्डवा द्रौपदेयाश्च विराटश्च समीक्ष्य
तम् । पाञ्चालाः केकयाश्चैव सिंहनादमथानदन् ॥ १५ ॥ वादि-
त्राणि च सर्वाणि नानालिङ्गानि सर्वशः । प्रावादयन्त संहृष्टाः
पाण्डूनां तत्र सैनिकाः ॥ १६ ॥ अपश्यन् स्मयमानास्ते सौभद्रस्य
विचेष्टितम् । अत्यन्तवैरिणं दृप्तं दृष्ट्वा शत्रुं पराजितम् ॥ १७ ॥
धर्ममारुतशक्राणामश्विनोः प्रतिमास्तथा । धारयन्तो ध्वजाग्रेषु
द्रौपदेया महारथाः ॥ १८ ॥ सात्यकिश्चेकितानश्च धृष्टद्युम्नशिख-
ण्डिनौ । केकया धृष्टकेतुश्च मत्स्यपाञ्चालसृञ्जयाः ॥ १९ ॥

पाण्डवाश्च मुदा युक्ता युधिष्ठिरपुरोगमाः । अभ्यद्रवन्त त्वरिता
द्रोणानीकं बिभित्सवः ॥ २० ॥ ततोऽभवन्महायुद्धं त्वदीयानां परैः
सह । जयमाकाङ्क्षमाणानां शूराणामनिवर्त्तिनाम् ॥ २१ ॥ तथा
तु वर्त्तमाने वै सङ्ग्रामेऽतिभयङ्करे । दुर्य्योधनो महाराज राधेय-
मिदमब्रवीत् ॥ २२ ॥ पश्य दुःशासनं वीरमभिमन्युवशं गतम् ।
प्रतपन्तमिवादित्यं निघ्नन्तं शात्रवान् रणे ॥ २३ ॥ अथ चैते
सुसंरब्धाः सिंहा इव बलोत्कटाः । सौभद्रमुद्यतास्त्रातुमभ्यधावन्त
पाण्डवाः ॥ २४ ॥ ततः कर्णः शरैस्तीक्ष्णैरभिमन्युं दुरासदम् ।
अभ्यवर्षत सङ्क्रुद्धः पुत्रस्य हितकृत्तव ॥ २५ ॥ तस्य चानुचरां-
स्तीक्ष्णैर्विव्याध परमेषुभिः । अवज्ञापूर्वकं शूरः सौभद्रस्य रणा-
जिरे ॥ २६ ॥ अभिमन्युस्तु राधेयं त्रिसप्तत्या शिलीमुखैः ।
अविध्यत्त्वरितो राजन् द्रोणं प्रेप्सुर्महामनाः ॥ २७ ॥ तं तदा
नाशकत् कश्चिद्द्रोणाद्वारयितुं रथी । आरुजन्तं रथश्रेष्ठान् वज्र-
हस्तात्मजात्मजम् ॥ २८ ॥ ततः कर्णो जयप्रेप्सुर्मानी सर्वधनु-
र्भृताम् । सौभद्रं शतशोऽविध्यदुत्तमास्त्राणि दर्शयन् ॥ २९ ॥
सोऽस्त्रैरस्त्रविदां श्रेष्ठो रामशिष्यः प्रतापवान् । समरे शत्रुदुर्द्धर्ष-
मभिमन्युमपीडयत् ॥ ३० ॥ स तथा पीड्यमानस्तु राधेयेनास्त्र-
वृष्टिभिः । समरेऽमरसङ्काशः सौभद्रो न व्यशीर्य्यत ॥ ३१ ॥ ततः
शिलाशितैस्तीक्ष्णैर्भल्लैरानतपर्वभिः । छित्त्वा धनूंषि शूराणा-
मार्जुनिः कर्णमार्द्दयत् ॥ ३२ ॥ धनुर्मण्डलनिर्मुक्तैः शरैराशी-
विषोपमैः । सच्छत्रध्वजयन्तारं साश्वमाशु स्मयन्निव ॥ ३३ ॥
कर्णश्चास्य चिक्षेप बाणान् सन्नतपर्वणः । असम्भ्रान्तश्च तान्
सर्वानगृह्णात् फाल्गुनात्मजः ॥ ३४ ॥ ततो मुहूर्त्तात् कर्णस्य
बाणेनैकेन वीर्य्यवान् । सध्वजं कार्मुकं वीरश्छित्त्वा भूमावपात-
यत् ॥ ३५ ॥ ततः कृच्छ्रगतं कर्णं दृष्ट्वा कर्णादनन्तरः । सौभद्र-
मभ्ययात्तूर्णं दृढमायम्य कार्मुकम् ॥ ३६ ॥ तत उच्चुक्रुशुः पार्था

स्तेषां चानुचरा जनाः । वादित्राणि च सञ्जघ्नुः सौभद्रञ्चापि
तुष्टुवुः ॥ ३७ ॥

इति द्रोणपर्वणि अभिमन्युवधपर्वणि दुःशासनकर्ण-
पराजये चत्वारिंशोऽध्यायः ॥ ४० ॥

---

सञ्जय उवाच । सोऽनुगर्ज्जन् धनुष्पाणिर्ज्यां विकर्षन् पुनः
पुनः । तयोर्महात्मनोस्तूर्णं रथान्तरमपातयत् ॥ १ ॥ सोऽविध्य-
द्दशभिर्बाणैरभिमन्युं दुरासदम् । सच्छत्रध्वजयन्तारं साश्व-
माशु स्मयन्निव ॥ २ ॥ पितृपैतामहं कर्म कुर्वाणमतिमानुषम् ।
दृष्ट्वार्द्दितं शरैः कार्ष्णिं त्वदीया हृषिताभवन् ॥ ३ ॥ तस्याभि-
मन्युरायम्य स्मयन्नेकेन पत्रिणा । शिरः प्रच्यावयामास तद्रथात्
प्रापतद्भुवि ॥ ४ ॥ कर्णिकारमिवाधूतं वातेनापतितं नगात् ।
भ्रातरं निहतं दृष्ट्वा राजन् कर्णो व्यथां ययौ ॥ ५ ॥ विमुखी-
कृत्य कर्णन्तु सौभद्रः कङ्कपत्रिभिः । अन्यानपि महेष्वासान् तूर्ण-
मेवाभिदुद्रुवे ॥ ६ ॥ ततस्तद्विततं सैन्यं हस्त्यश्वरथपत्तिमत् ।
क्रुद्धोऽभिमन्युरभिनत्तिग्मतेजा महायशाः ॥ ७ ॥ कर्णस्तु बहुभि-
र्बाणैरर्द्यमानोऽभिमन्युना । अपायाज्जवनैरश्वैस्ततोऽनीकमभज्यत
॥ ८ ॥ शलभैरिव चाकाशे धाराभिरिव चावृते । अभिमन्योः
शरै राजन्नप्राज्ञायत किञ्चन ॥ ९ ॥ तावकानान्तु योधानां वध्यतां
निशितैः शरैः । अन्यत्र सैन्धवाद्राजन् न स्म कश्चिदतिष्ठत ॥ १० ॥
सौभद्रस्तु ततः शङ्खं प्रध्माप्य पुरुषर्षभः । शीघ्रमभ्यपतत् सेनां
भारतीं भरतर्षभ ॥ ११ ॥ स कक्षेऽग्निरिवोत्सृष्टो निर्द्दहंस्तरसा
रिपून् । मध्ये भारतसैन्यानामार्ज्जुनिः पर्य्यवर्त्तत ॥ १२ ॥ रथ-
नागाश्वमनुजानर्द्दयन्निशितैः शरैः । सम्प्रविश्याकरोद्भूमिं कबन्ध-
गणसङ्कुलाम् ॥ १३ ॥ सौभद्रचापप्रभवैर्निकृत्ताः परमेषुभिः ।

स्वानेवाभिमुखान् घ्नन्तः प्राद्रवन् जीवितार्थिनः ॥ १४ ॥ ते घोरा
रौद्रकर्माणो विपाठा बहवः शिताः । निघ्नन्तो रथनागाश्वान्
जग्मुराशु वसुन्धराम् ॥ १५ ॥ सायुधाः साङ्गुलित्राणाः सगदाः
साङ्गदा रणे । दृश्यन्ते बाहवश्छिन्ना हेमाभरणभूषिताः ॥ १६ ॥
शराश्चापानि खड्गाश्च शरीराणि शिरांसि च । सकुण्डलानि
स्रग्वीणि भूमावासन् सहस्रशः ॥ १७ ॥ सोपस्करैरधिष्ठानै-
रीषादण्डकबन्धुरैः । अक्षैर्विमथितैश्चक्रैर्भग्नैश्च बहुधा युगैः ॥१८॥
शक्तिचापासिभिश्चैव पतितैश्च महाध्वजैः । चर्मचापशरैश्चैव व्यप-
कीर्णैः समन्ततः ॥ १९ ॥ निहतैः क्षत्रियैरश्वैर्वारणैश्च विशा-
म्पते । अगम्यकल्पा पृथिवी क्षणेनासीत् सुदारुणा ॥ २० ॥
वध्यतां राजपुत्राणां क्रन्दतामितरेतरम् । प्रादुरासीन्महाशब्दो
भीरूणां भयवर्द्धनः ॥ २१ ॥ स शब्दो भरतश्रेष्ठ दिशः सर्वा
व्यनादयत् । सौभद्रश्चाद्रवत् सेनां घ्नन् वराश्वरथद्विपान् ॥ २२ ॥
कक्षमग्निरिवोत्सृष्टो निर्दहंस्तरसा रिपून् । मध्ये भारतसैन्याना-
मार्जुनिः प्रत्यदृश्यत ॥ २३ ॥ विचरन्तं दिशः सर्वाः प्रदिशश्चापि
भारत । तं तदा नानुपश्याम सैन्येन रजसा वृतम् ॥ २४ ॥
आददानं गजाश्वानां नृणाञ्चायूंषि भारत । क्षणेन भूयः
पश्यामि सूर्यं मध्यन्दिने यथा ॥ २५ ॥ अभिमन्युं महाराज
प्रतपन्तं द्विषद्गणान् । स वासवसमः संख्ये वासवस्यात्मजात्मजः ।
अभिमन्युर्महाराज सैन्यमध्ये व्यरोचत ॥ २६ ॥

इति द्रोणपर्वणि अभिमन्युवधपर्वणि अभिमन्युपराक्रमे
एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

---

धृतराष्ट्र उवाच । बालमत्यन्तसुखिनं स्ववाहुबलदर्पितम् ।
युद्धेषु कुशलं वीरं कुलपुत्रं तनुत्यजम् ॥ १ ॥ गाहमानमनीकानि

नन्दुशेव विहायथौ । अपि यौधिष्ठिरात् सैन्यात् कश्चिदन्वपतद्बली ॥ २ ॥

सञ्जय उवाच । युधिष्ठिरो भीमसेनः शिखण्डी सात्यकिर्यमौ । धृष्टद्युम्नो विराटश्च द्रुपदश्च सकेकयः ॥ ३ ॥ धृष्टकेतुश्च चेकितानश्च अभ्यपतन् रणे । तेनैव तु पथायाताः पितरो मातुलैः सह ॥ ४ ॥ अभ्यद्रवन् परीप्सन्तो व्यूढानीकाः प्रहारिणः । तान् दृष्ट्वा द्रवतः शूरान् त्वदीया विमुखाभवन् ॥ ५ ॥ ततस्तद्विमुखं दृष्ट्वा तव सूनोर्महद्बलम् । जामाता तव तेजस्वी विष्टम्भयिषुराद्रवत् ॥ ६ ॥ सैन्धवस्य महाराज पुत्रो राजा जयद्रथः । स पुत्रगृद्धिनः पार्थान् सह सैन्यानवारयत् ॥ ७ ॥ उग्रधन्वा महेष्वासो दिव्यमस्त्रमुदीरयन् । वार्द्धक्षत्रिरुपासेधत् प्रवणादिव कुञ्जरः ॥ ८ ॥

धृतराष्ट्र उवाच । अतिभारमहं मन्ये सैन्धवे सञ्जयाहितम् । यदेकः पाण्डवान् क्रुद्धान् पुत्रप्रेप्सूनवारयत् ॥ ९ ॥ अत्यद्भुतमहं मन्ये बलं शौर्य्यञ्च सैन्धवे । तस्य प्रब्रूहि मे वीर्य्यं कर्म चाग्र्यं महात्मनः ॥ १० ॥ किं दत्तं हुतमिष्टं वा सुतप्तमथ वा तपः । सिन्धुराजो हि येनैकः क्रुद्धान् पार्थानवारयत् ॥ ११ ॥

सञ्जय उवाच । द्रौपदीहरणे यत्तद् भीमसेनेन निर्ज्जितः । मानात् स तप्तवान् राजा वरार्थी सुमहत्तपः ॥ १२ ॥ इन्द्रियाणीन्द्रियार्थेभ्यः प्रियेभ्यः सन्निवर्त्त्य सः । क्षुत्पिपासातपसहः कृशो धमनिसन्ततः ॥ १३ ॥ देवमाराधयच्छर्वं गृणन् ब्रह्म सनातनम् । भक्तानुकम्पी भगवान् तस्य चक्रे ततो दयाम् ॥ १४ ॥ स्वप्नान्तेऽप्यथ चैवाह हरः सिन्धुपतेः सुतम् । वरं वृणीष्व प्रीतोऽस्मि जयद्रथ किमिच्छसि ॥ १५ ॥ एवमुक्तस्तु शर्व्वेण सिन्धुराजो जयद्रथः । उवाच प्रणतो रुद्रं प्राञ्जलिर्नियतात्मवान् ॥ १६ ॥ पाण्डवेयानहं सङ्ख्ये भीमवीर्य्यपराक्रमान् । वारयामि

रथेनैकः समस्तानिति भारत ॥ १७ ॥ एवमुक्तस्तु देवेशो जयद्रथमथाब्रवीत् । ददामि ते वरं सौम्य विना पार्थं धनञ्जयम् ॥ १८ ॥ वारयिष्यसि सङ्ग्रामे चतुरः पाण्डुनन्दनान् । एवमस्त्विति देवेशमुक्त्वाबुध्यत पार्थिव ॥ १९ ॥ स तेन वरदानेन दिव्येनास्त्रबलेन च । एकः संवारयामास पाण्डवानामनीकिनीम् ॥ २० ॥ तस्य ज्यातलघोषेण क्षत्रियान् भयमाविशत् । परांस्तव तु सैन्यस्य हर्षः परमकोऽभवत् ॥ २१ ॥ दृष्ट्वा तु क्षत्रिया भारं सैन्धवे सर्वमर्पितम् । उत्क्रुश्याभ्यद्रवन् राजन् येन यौधिष्ठिरं बलम् ॥ २२ ॥

इति द्रोणपर्वणि अभिमन्युवधपर्वणि जयद्रथयुद्धे द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

---

सञ्जय उवाच । यन्मां पृच्छसि राजेन्द्र सिन्धुराजस्य विक्रमम् । शृणु तत् सर्वमाख्यास्ये यथा पाण्डूनयोधयत् ॥ १ ॥ तमूहुः सारथेर्वश्याः सैन्धवाः साधुवाहिनः । विकुर्वाणा बृहन्तोऽश्वाः श्वसनोपमरंहसः ॥ २ ॥ गन्धर्वनगराकारं विधिवत् कल्पितं रथम् । तस्याभ्यशोभयत् केतुर्वाराहो राजतो महान् ॥ ३ ॥ श्वेतच्छत्रपताकाभिश्चामरव्यजनेन च । स बभौ राजलिङ्गैस्तैस्तारापतिरिवाम्बरे ॥ ४ ॥ मुक्तावज्रमणिस्वर्णैर्भूषितं तमयस्मयम् । वरूथं विबभौ तस्य ज्योतिर्भिः खमिवावृतम् ॥ ५ ॥ स विस्फार्य महच्चापं किरन्निषुगणान् बहून् । तं व्यूहं पूरयामास यद्व्यदारयदार्जुनिः ॥ ६ ॥ स सात्यकिं त्रिभिर्बाणैरष्टाभिश्च वृकोदरम् । धृष्टद्युम्नं तथा षष्ट्या विराटं दशभिः शरैः ॥ ७ ॥ द्रुपदं पञ्चभिस्तीक्ष्णैर्दशभिश्च शिखण्डिनम् । कैकयान् पञ्चविंशत्या द्रौपदेयांस्त्रिभिस्त्रिभिः ॥ ८ ॥ युधिष्ठिरं तु सप्तत्या ततः शेषानपानुदत् । इषुजालेन महता तदद्भुतमिवाभवत् ॥ ९ ॥ अथास्य सितपीतेन

भल्लेनादित्य कार्मुकम् । चिच्छेद प्रहसन् राजन् धर्मपुत्रः प्रतापवान् ॥ १० ॥ अक्ष्णोर्निमेषमात्रेण सोऽन्यदादाय कार्मुकम् । विव्याध दशभिः पार्थं तांश्चैवान्यांस्त्रिभिस्त्रिभिः ॥ ११ ॥ तस्य तल्लाघवं ज्ञात्वा भीमो भल्लैस्त्रिभिः पुनः । धनुर्ध्वजञ्च छत्रञ्च क्षितौ क्षिप्रमपातयत् ॥ १२ ॥ सोऽन्यदादाय बलवान् सज्यं कृत्वा च कार्मुकम् । भीमस्यापातयत् केतुं धनुरश्वांश्च मारिष ॥ १३ ॥ स हताश्वादवप्लुत्य छिन्नधन्वा रथोत्तमात् । सात्यकेराप्लुतो यानं गिर्य्यग्रमिव केशरी ॥ १४ ॥ ततस्त्वदीयाः संहृष्टाः साधु साध्विति चुक्रुशुः । सिन्धुराजस्य तत् कर्म पूजयन्तो मुहुर्मुहुः ॥ १५ ॥ संक्रुद्धान् पाण्डवानेको यद्दधारास्त्रतेजसा । तत्तस्य कर्म भूतानि सर्वाण्येवाभ्यपूजयन् ॥ १६ ॥ सौभद्रेण हतैः पूर्वं सोत्तरायुधिभिर्द्विपैः । पाण्डूनां दर्शितः पन्थाः सैन्धवेन निवारितः ॥ १७ ॥ यतमानास्तु ते वीरा मत्स्यपाञ्चालकेकयाः । पाण्डवाश्चान्वपद्यन्त प्रतिषेद्धुं न सैन्धवम् ॥ १८ ॥ यो यो हि यतते भेत्तुं द्रोणानीकं तवाहितः । तं तमेव वरं प्राप्य सैन्धवः प्रत्यवारयत् ॥ १९ ॥

इति द्रोणपर्व्वणि अभिमन्युवधपर्व्वणि जयद्रथयुद्धे त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥



सञ्जय उवाच । सैन्धवेन निरुद्धेषु जयगृद्धिषु पाण्डुषु । सुघोरमभवद्युद्धं त्वदीयानां परैः सह ॥ १ ॥ प्रविश्याथार्ज्जुनिः सेनां सत्यसन्धो दुरासदः । व्यक्षोभयत तेजस्वी मकरः सागरं यथा ॥ २ ॥ तं तथा शरवर्षेण क्षोभयन्तमरिन्दमम् । यथाप्रधानं सौभद्रमभ्ययुर्न्नरसत्तमाः ॥ ३ ॥ तेषां तस्य च सम्मर्द्दो दारुणः समपद्यत । सृजतां शरवर्षाणि प्रसक्तममितौजसाम् ॥ ४ ॥ रथव्रजेन संरुद्धस्तैरमित्रैस्तथार्ज्जुनिः । वृषसेनस्य यन्तारं हत्वा

चिच्छेद कार्मुकम् ॥ ५ ॥ तस्य विव्याध बलवान् शरैरश्वा-
नजिह्मगैः । वातायमानैरथ तैरश्वैरपहृतो रणात् ॥ ६ ॥
तेनान्तरेणाभिमन्योर्यन्तापासारयद्रथम् । रथव्रजास्ततो हृष्टाः
साधु साध्विति चुक्रुशुः ॥ ७ ॥ तं सिंहमिव संक्रुद्धं प्रमथ्नन्तं
शरैररीन् । आरादायान्तमभ्येत्य वसातीयोऽभ्ययाद्द्रुतम् ॥ ८ ॥
सोऽभिमन्युं शरैः षष्ट्या रुक्मपुङ्खैरवाकिरत् । अब्रवीच्च न मे
जीवन् जीवतो युधि मोक्ष्यसे ॥ ९ ॥ तमयस्मयवर्माणमिषुणा
दूरपातिना । विव्याध हृदि सौभद्रः स पपात व्यसुः क्षितौ ॥ १० ॥
वसातीयं हतं दृष्ट्वा क्रुद्धाः क्षत्रियपुङ्गवाः । परिवव्रुस्तदा राजं-
स्तव पौत्रं जिघांसवः ॥ ११ ॥ विस्फारयन्तश्चापानि नानारूपा-
ण्यनेकशः । तद्युद्धमभवद्रौद्रं सौभद्रस्यारिभिः सह ॥ १२ ॥ तेषां
शरान् सेष्वसनान् शरीराणि शिरांसि च । सकुण्डलानि स्रग्वीणि
क्रुद्धश्चिच्छेद फाल्गुनिः ॥ १३ ॥ सखड्गाः साङ्गुलित्राणाः स-
पट्टिशपरश्वधाः । अदृश्यन्त भुजाश्छिन्ना हेमाभरणभूषिताः ॥ १४ ॥
स्रग्भिराभरणैर्वस्त्रैः पातितैश्च महाध्वजैः । वर्मभिश्चर्मभिर्हारै-
र्मुकुटैश्छत्रचामरैः ॥ १५ ॥ उपस्करैरधिष्ठानैरीषादण्डकबन्धुरैः ।

सञ्जय उवाच। आददानस्तु शूराणामायूंष्यभवदार्ज्जुनिः।
अन्तकः सर्व्वभूतानां प्राणान् काल इवागते ॥ १ ॥ स शक्र इव
विक्रान्तः शक्रसूनोः सुतो बली। अभिमन्युस्तदानीकं लोडयन्
व्यशोभत ॥ २ ॥ प्रविश्य स तु राजेन्द्र, क्षत्रियेन्द्रान्तकोपमः।
सत्यश्रवसमादत्त व्याघ्रो मृगमिवोल्बणः ॥ ३ ॥ सत्यश्रवसि चाक्षिप्ते
त्वरमाणा महारथाः। प्रगृह्य विविधं शस्त्रमभिमन्युमुपाद्रवन्
॥ ४ ॥ अहं पूर्व्वमहं पूर्व्वमिति क्षत्रियपुङ्गवाः। स्पर्द्धमानाः
समाजग्मुर्जिघांसन्तोऽर्ज्जुनात्मजम् ॥ ५ ॥ क्षत्रियाणामनीकानि
प्रद्रुतान्यभिधावताम्। जग्रास तिमिरासाद्य क्षुद्रमत्स्यानिवार्णवे
॥ ६ ॥ ये के चनागतास्तस्य समीपमपलायिनः। न ते प्रति-
न्यवर्त्तन्त समुद्रादिव सिन्धवः ॥ ७ ॥ महावातगृहीतेव वातवेग-
भयार्द्दिता। समकम्पत सा सेना विभ्रान्ता नौरिवार्णवे ॥ ८ ॥
अथ रुक्मरथो नाम मद्रेश्वरसुतो बली। त्रस्तामाश्वासयन्
सेनामत्रस्तो वाक्यमब्रवीत् ॥ ९ ॥ अलं त्रासेन वः शूरा नैष
कश्चिन्मयि स्थिते। अहमेनं ग्रहीष्यामि जीवग्राहं न संशयः ॥ १० ॥
एवमुक्त्वा तु सौभद्रमभिदुद्राव वीर्य्यवान्। सुकल्पितेनोह्यमानः
स्यन्दनेन विराजता ॥ ११ ॥ सोऽभिमन्युं त्रिभिर्बाणैर्भित्त्वा वक्ष-
स्यथानदत्। त्रिभिश्च दक्षिणे बाहौ सव्ये च निशितैस्त्रिभिः
॥ १२ ॥ स तस्येष्वासनं छित्त्वा फाल्गुनिः सव्यदक्षिणौ। भुजौ
शिरश्च स्वक्षिभ्रु क्षितौ क्षिप्रमपातयत् ॥ १३ ॥ दृष्ट्वा रुक्मरथं
भग्नं पुत्रं शल्यस्य मानिनम्। जीवग्राहं जिघृक्षन्तं सौभद्रेण
यशस्विना ॥ १४ ॥ सङ्ग्रामदुर्म्मदा राजन् राजपुत्राः प्रहारिणः।
वयस्याः शल्यपुत्रस्य सुवर्णविकृतध्वजाः ॥ १५ ॥ तालमात्राणि
चापानि विकर्षन्तो महारथाः। आर्ज्जुनिं शरवर्षेण समन्तात्
पर्य्यवारयन् ॥ १६ ॥ शूरैः शिक्षाबलोपेतैस्तरुणैरत्यमर्षणैः।
दृष्ट्वैकं समरे शूरं सौभद्रमपराजितम् ॥ १७ ॥ छाद्यमानं शर-

क्रुद्ध प्रिये पुत्रे निपातिते ॥ १८ ॥ हतैनमिति चुक्रोश क्षत्रियान् क्षत्रियर्षभ । ततो द्रोणः कृप कर्णो द्रोणपुत्रो बृहद्बल ॥ १९ ॥ कृतवर्मा च हार्द्दिक्य षड्रथा पर्य्यवारयन् । स तान् विद्धा षितैर्वाणैर्विमुखीकृत्य चार्ज्जुनि ॥ २० ॥ वेगेनाभ्यपतत् क्रुद्धः सैन्धवस्य महद्बलम् । आवव्रुस्तस्य पन्थान गजानीकेन दंशिताः ॥ २१ ॥ कालिङ्गाश्च निषादाश्च क्राथपुत्रश्च वीर्य्यवान् । तत् प्रसक्तमिवात्यर्थं युद्धमासीद्विशाम्पते ॥ २२ ॥ ततः कुञ्जरानीकं व्यधमद्धृष्टमार्ज्जुनिः । यथावायुर्नित्यगतिर्जलदान् शतशोऽम्बरे ॥ २३ ॥ तत क्राथ शरव्रातैरार्ज्जुनिं समवारयत् । अथेतरे सन्निवृत्ता पुनर्द्रोणमुखा रथाः ॥ २४ ॥ परमास्त्राणि तन्वानाः सौभद्रमभिदुद्रुवु । तान्निवार्य्यार्ज्जुनिर्वाणैः क्राथपुत्रमथार्द्दयत् ॥ २५ ॥ शरौघेणाप्रमेयेण त्वरमाणो जिघांसया । स धनुर्वाणकेयूरौ बाहू समुकुट शिर ॥ २६ ॥ छत्रं ध्वज नियन्तारमश्वांश्चास्य न्यपातयत् । कुलशीलश्रुतबलैः कीर्त्त्या चास्त्रबलेन च । युक्ते तस्मिन् हते वीराः प्रायशो विमुखाभवन् ॥२७॥

इति द्रोणपर्व्वणि अभिमन्युवधपर्व्वणि क्राथपुत्रवधे षट्चत्वारिंशोऽध्याय ॥ ४६ ॥

---

धृतराष्ट्र उवाच । तथा प्रविष्टं तरुणं सौभद्रमपराजितम् । कुलानुरूपं कुर्वाणं सङ्ग्रामेष्वपलायिनम् ॥ १ ॥ आजानेयैस्तु बलिभिर्यान्तमश्वैस्त्रिहायणैः । प्लवमानमिवाकाशे के शूराः पर्य्यवारयन् ॥ २ ॥

सञ्जय उवाच । अभिमन्यु प्रविश्यैव तावकान्निशितैः शरैः । अकरोद्विमुखान् सर्वान् पार्थिवान् पाण्डुनन्दन ॥ ३ ॥ तं तु द्रोण कृप कर्णो द्रौणिश्च बृहद्बल । कृतवर्मा च हार्द्दिक्यः

षड्रथाः पर्य्यवारयन् ॥ ४ ॥ दृष्ट्वा तु सैन्धवे भारमतिमात्रं समा-
हितम् । सैन्यं तव महाराज युधिष्ठिरमुपाद्रवत् ॥ ५ ॥ सौभद्र-
मितरे वीरमभ्यवर्षञ्छराम्बुभिः । तालमात्राणि चापानि विक-
र्षन्तो महाबलाः ॥ ६ ॥ तांस्तु सर्वान् महेष्वासान् सर्वविद्यासु
निष्ठितान् । व्यष्टम्भयद्रणे बाणैः सौभद्रः परवीरहा ॥ ७ ॥
द्रोणं पञ्चाशताविध्यत् विंशत्या च बृहद्बलम् । अशीत्या कृत-
वर्म्माणं कृपं षष्ट्या शिलीमुखैः ॥ ८ ॥ रुक्मपुङ्खैर्महावेगैराकर्ण-
समचोदितैः । अविध्यद्दशभिर्बाणैरश्वत्थामानमार्जुनिः ॥ ९ ॥ स
कर्णं कर्णिना कर्णे पीतेन च शितेन च । फाल्गुनिर्द्विषतां मध्ये
विव्याध परमेषुणा ॥ १० ॥ पातयित्वा कृपस्याश्वान् तथोभौ
पार्ष्णिसारथी । अथैनं दशभिर्बाणैः प्रत्यविध्यत् स्तनान्तरे ॥ ११ ॥
ततो वृन्दारकं वीरं कुरूणां कीर्त्तिवर्द्धनम् । पुत्राणां तव वीराणां
पश्यतामवधीद्बली ॥ १२ ॥ तं द्रौणिः पञ्चविंशत्या क्षुद्रकाणां
समार्पयत् । वरं वरममित्राणामारुजन्तमभीतवत् ॥ १३ ॥ स
तु बाणैः शितैस्तूर्णं प्रत्यविध्यत मारिष । पश्यतां धार्त्तराष्ट्राणा-
मश्वत्थामानमार्जुनिः ॥ १४ ॥ षष्ट्या शराणां तं द्रौणिस्तिग्म-
धारैः सुतेजनैः । उग्रैर्नाकम्पयद्विद्ध्वा मैनाकमिव पर्वतम् ॥ १५ ॥
स तु द्रौणिं त्रिसप्तत्या हेमपुङ्खैरजिह्मगैः । प्रत्यविध्यन्महातेजा
बलवानपकारिणम् ॥ १६ ॥ तस्मिन् द्रोणो बाणशतं पुत्रगृद्धी
न्यपातयत् । अश्वत्थामा तथा षष्टिं परीप्सन् पितरं रणे ॥ १७ ॥
कर्णो द्वाविंशतिं भल्लान् कृतवर्म्मा चतुर्द्दश । बृहद्बलस्तु पञ्चाशत्
कृपः शारद्वतो दश ॥ १८ ॥ तांस्तान् प्रत्यवधीत् सर्वान् दशभि-
र्दशभिः शरैः । तं कोशलानामधिपः कर्णिनाताडयद्धृदि ॥ १९ ॥
स तस्याश्वान् ध्वजं चापं सूतञ्चापातयत् क्षितौ । अथ कोशल-
राजस्तु विरथः खड्गचर्म्मभृत् ॥ २० ॥ इयेष फाल्गुनेः कायात्
शिरो हर्त्तुं सकुण्डलम् । कोशलानां स भर्त्तारं राजपुत्रं बृह-

हलम् ॥ २१ ॥ हृदि विव्याध बाणेन स भिन्नहृदयोऽपतत् । बभञ्ज च सहस्राणि दश राज्ञां महात्मनाम् ॥ २२ ॥ सृजता-मशिवा वाचः खड्गकार्मुकधारिणाम् । तथा बृहद्बलं हत्वा सौभद्रो व्यचरद्रणे । व्यष्टम्भयन्महेष्वासान् योधांस्तव शरा-म्बुभिः ॥ २३ ॥

इति द्रोणपर्वणि अभिमन्युवधपर्वणि बृहद्बलवधे सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

---

सञ्जय उवाच । स कर्णं कर्णिना कर्णे पुनर्विव्याध फाल्गुनिः । शरैः पञ्चाशता चैनमविध्यत् कोपयन् भृशम् ॥ १ ॥ प्रतिविव्याध राधेयस्तावद्भिरथ तं पुनः । शरैराचितसर्वाङ्गो बह्वशोभत भारत ॥ २ ॥ कर्णश्चाथ शरान् क्रुद्धो रुधिरोत्पीडवाहिनम् । कर्णोऽपि विबभौ शूरः शरैश्छिन्नोऽसृगाप्लुतः ॥ ३ ॥ तौ तथा शरचित्राङ्गौ रुधिरेण समुक्षितौ । बभूवतुर्महात्मानौ पुष्पिताविव किंशुकौ ॥ ४ ॥ अथ कर्णस्य सचिवान् षट् शूरांश्चित्रयोधिनः । साश्व-सूतध्वजरथान् सौभद्रो निजघान ह ॥ ५ ॥ तथैवेतान्महेष्वासान् दशभिर्दशभिः शरैः । प्रत्यविध्यदसम्भ्रान्तस्तदद्भुतमिवाभवत् ॥ ६ ॥ मागधस्य पुनः पुत्रं हत्वा षड्भिरजिह्मगैः । साश्वं ससूतं तरुणमश्वकेतुमपातयत् ॥ ७ ॥ मार्त्तिकावतकं भोजं ततः कुञ्जरकेतनम् । क्षुरप्रेण समुन्मथ्य ननाद विसृजन् शरान् ॥ ८ ॥ तस्य दौःशासनिर्विद्ध्वा चतुर्भिश्चतुरो हयान् । सूतमेकेन विव्याध दशभिश्चार्जुनात्मजम् ॥ ९ ॥ ततो दौःशासनिं कार्ष्णिर्विद्ध्वा दशभिराशुगैः । संरम्भाद्रक्तनयनो वाक्यमुच्चैरथाब्रवीत् ॥ १० ॥ पिता तवाहवं त्यक्त्वा गतः कापुरुषो यथा । दिष्ट्या त्वमपि जानीषे योद्धुं न त्वद्य मोक्ष्यसे ॥ ११ ॥ एतावदुक्त्वा वचनं

कर्म्मारपरिमार्ज्जितम्। नाराचं विमम्ब्वांटो तं द्रौणिस्त्रिभि-
राच्छिनत् ॥ १२ ॥ तस्यार्जुनिर्निर्ज्जविला भल्लं त्रिभिरताडयत्।
तं भल्लो नवभिर्व्वाणैर्गावेगवैरताड़यत् ॥ १३ ॥ ध्वजमुभ्रान्त-
मट्टालन् तद्दृ तमिवासवत्। तस्यार्जुनिर्धनुश्छित्वा चलोभौ
पार्ष्णि सारथी ॥ १४ ॥ तं विव्याधायसैः षड्भिः सोऽपाक्रामत्
रथान्तरम्। मलप्लवं चन्द्रकेतुं महावेगं सुवर्च्चसम् ॥ १५ ॥
सूर्य्यभासञ्च षड़ेतान् हत्वा विव्याध सौबलम्। तं सौबलस्त्रिभि-
र्विद्धा दुर्य्योधनमथाब्रवीत् ॥ १६ ॥ सर्व्व एनं प्रमथ्नीमः पुरैकैकं
छिनत्ति नः। वधोपायं चिन्त्यतां वै नृप द्रोणकृपादिभिः ॥ १७ ॥
अथाब्रवीत्ततो द्रोणं कर्णो वैकर्त्तनो रणे। पुरा सर्व्वान् प्रम-
थ्नाति ब्रूह्यस्य वधमाशु नः ॥ १८ ॥ ततो द्रोणो महेष्वासः सर्व्वां-
स्तान् प्रत्यभाषत। अस्ति वास्यान्तरं किञ्चित् कुमारस्यापि
पश्यत ॥ १९ ॥ अल्वप्यस्यान्तरं ह्यद्य चरतः सर्व्वतो दिशम्।
शीघ्रतां नरसिंहस्य पाण्डवेयस्य पश्यत ॥ २० ॥ धनुर्मण्डल-
मेवास्य रथमार्गेषु दृश्यते। सन्दधानस्य विशिखान् शीघ्रञ्चैव
विमुञ्चतः ॥ २१ ॥ आरुजन्नपि मे प्राणान् मोहयन्नपि सायकैः।
प्रहर्षयति मां भूयः सौभद्रः परवीरहा ॥ २२ ॥ अति मां
नन्दयत्येष सौभद्रो विचरन् रणे। अन्तरं यस्य संरब्धा न पश्यन्ति
महारथाः ॥ २३ ॥ अस्यतो लघुहस्तस्य दिशः सर्व्वा महेषुभिः।
न विशेषं प्रपश्यामि रणे गाण्डीवधन्वनः ॥ २४ ॥ अथ कर्णः
पुनर्द्रोणमाहार्ज्जुनिशरार्हतः। स्थातव्यमिति तिष्ठामि पीड्य-
मानोऽभिमन्युना ॥ २५ ॥ तेजस्विनः कुमारस्य शराः परम-
दारुणाः। क्षिण्वन्ति हृदयं मेऽद्य घोराः पावकतेजसः ॥ २६ ॥
तमाचार्य्योऽब्रवीत् कर्णं शनकैः प्रहसन्निव। अभेद्यमस्य कवचं
युवा चाशुपराक्रमः ॥ २७ ॥ उपदिष्टा मया ह्यस्य पितुः कवच-

अशक्यं तस्य धनुश्छेत्तुं ज्यायाश्च वाणैः समाहितैः । अभीषूंश्च
हयांश्चैव तथोभौ पार्ष्णिसारथी ॥ २९ ॥ एतत् कुरु महेष्वास
राधेय यदि शक्यते । अथैनं विमुखीकृत्य पश्चात् प्रहरणं कुरु
॥ ३० ॥ सधनुष्को न शक्योऽयमपि जेतुं सुरासुरैः । विरथं
विधनुष्कञ्च कुरुष्वैनं यदीच्छसि ॥ ३१ ॥ तदाचार्य्यवचः श्रुत्वा
कर्णो वैकर्त्तनस्त्वरन् । अस्यतो लघुहस्तस्य पृषत्कैर्धनुराच्छि-
नत ॥ ३२ ॥ अश्वानस्यावधीद्भोजो गौतमः पार्ष्णिसारथी ।
शेषास्तु छिन्नधन्वानं शरवर्षैरवाकिरन् ॥ ३३ ॥ त्वरमाणा-
स्त्वराकाले विरथं षण्महारथाः । शरवर्षैरकरुणा बालमेक-
मवाकिरन् ॥ ३४ ॥ स छिन्नधन्वा विरथः स्वं धर्म्ममनुपालयन् ।
खड्गचर्म्मधरः श्रीमानुत्पपात विहायसा ॥ ३५ ॥ मार्गैः स
कौशिकाद्यैश्च लाघवेन बलेन च । आर्जुनिर्व्यचरद्व्योम्नि भृशं वै
पक्षिराडिव ॥ ३६ ॥ मय्येव निपतत्येष सासिरित्यूर्द्ध्वदृष्टयः ।
विव्यधुस्तं महेष्वासाः समरे छिद्रदर्शिनः ॥ ३७ ॥ तस्य द्रोणो-
ऽच्छिनन्मुष्टौ खड्गं मणिमयत्सरुम् । क्षुरप्रेण महातेजा-
स्त्वरमाणः सपत्नजित् ॥ ३८ ॥ राधेयो निशितैर्वाणैर्व्यधमच्चर्म्म
चोत्तमम् । व्यसिचर्म्मेषु पूर्णाङ्गः सोऽन्तरीक्षात् पुनः क्षितिम् ।
आस्थितश्चक्रमुद्यम्य द्रोणं क्रुद्धोऽभ्यधावत ॥ ३९ ॥ स चक्ररेणू-
ज्ज्वलशोभिताङ्गो बभावतीवोन्नतचक्रपाणिः । रणेऽभिमन्युः क्षण-
मास रौद्रः स वासुदेवानुकृतिं प्रकुर्वन् ॥ ४० ॥ स्रुतरुधिरकृतैक-
रागवक्त्रो भ्रुकुटिपुटाकुटिलोऽतिसिंहनादः । प्रभुरमितबलो
रणेऽभिमन्युर्नृपवरमध्यगतो विराजते स्म ॥ ४१ ॥

इति द्रोणपर्व्वणि अभिमन्युवधपर्व्वणि अभिमन्युयुद्धे
अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

——

सञ्जय उवाच । विष्णोः स्वसुर्नन्दकरः सविष्ण्वायुधभूषितः ।
रराजातिरथः सङ्ख्ये जनार्द्दन इवापरः ॥ १ ॥ मारुतोद्धूत-
केशान्तमुद्यतारिवरायुधम् । वपुः समीक्ष्य पृथ्वीशा दुःसमीक्ष्यं
सुरैरपि ॥ २ ॥ तच्चक्रं भृशमुद्विग्नाः सञ्चिच्छिदुरनेकधा । महा-
रथस्तथा कार्ष्णिः सञ्जग्राह महागदाम् ॥ ३ ॥ विधनुःस्यन्द-
नासिस्तैर्विचक्रश्चारिभिः कृतः । अभिमन्युर्महाबाहुरश्वत्थामान-
माद्रवत् ॥ ४ ॥ स गदामुद्यतां दृष्ट्वा ज्वलन्तीमशनीमिव । अपा-
क्रमद्रथोपस्थाद्विक्रमांस्त्रीन्नरर्षभः ॥ ५ ॥ तस्याश्वान् गदया हत्वा
तथोभौ पार्ष्णिसारथी । शराचिताङ्गः सौभद्रः श्वाविद्वत् प्रत्य-
दृश्यत ॥ ६ ॥ ततः सुबलदायादं कालिकेयमपोथयत् । जघान
चास्यानुचरान् गान्धारान् सप्तसप्ततिम् ॥ ७ ॥ पुनर्ब्रह्मवसातीयान्
जघान रथिनो दश । केकयानां रथान् सप्त हत्वा च दश कुञ्ज-
रान् ॥ ८ ॥ दौःशासनिरथं साश्वं गदया समपोथयत् । ततो
दौःशासनिः क्रुद्धो गदामुद्यम्य मारिष ॥ ९ ॥ अभिदुद्राव दुर्द्धर्ष-
स्तिष्ठतिष्ठेति चाब्रवीत् । तावुद्यतगदौ वीरावन्योऽन्यवधकाङ्क्षिणौ
॥ १० ॥ भ्रातृव्यौ सम्प्रजह्राते पुरेव त्र्यम्बकान्धकौ । ताव-
न्योऽन्यं गदाग्राभ्यामाहत्य पतितौ क्षितौ ॥ ११ ॥ इन्द्रध्वजा-
विवोत्सृष्टौ रणमध्ये परन्तपौ । दौःशासनिरथोत्थाय कुरूणां
कीर्त्तिवर्द्धनः ॥ १२ ॥ उत्तिष्ठमानं सौभद्रं गदया मूर्द्ध्न्यताड-
यत् । गदावेगेन महता व्यायामेन च मोहितः ॥ १३ ॥ विचेता
न्यपतद्भूमौ सौभद्रः परवीरहा । एवं विनिहतो राजन् एको
बहुभिराहवे ॥ १४ ॥ क्षोभयित्वा चमूं सर्वां नलिनीमिव
कुञ्जरः । अशोभत हतो वीरो व्याधैर्वनगजो यथा ॥ १५ ॥ तं
तथा पतितं शूरं तावकाः पर्य्यवारयन् । दावं दग्ध्वा यथा शान्तं
पावकं शिशिरात्यये ॥ १६ ॥ विमृद्य तरुशृङ्गाणि सन्निवृत्तमिवा-
निलम् । अस्तं गतमिवादित्यं तप्त्वा भारतवाहिनीम्

उपप्लुतं यथा सोमं संशुष्कमिव सागरम्। पूर्णचन्द्राभवदनं
काकपक्षवृताक्षिकम् ॥ १८ ॥ तं भूमौ पतितं दृष्ट्वा तावकास्ते
महारथाः। मुदा परमया युक्ताश्चुक्रुशुः सिंहवन्मुहुः ॥ १९ ॥
आसीत् परमको हर्षस्तावकानां विशाम्पते। इतरेषान्तु वीराणां
नेत्रेभ्यः प्रापतज्जलम् ॥ २० ॥ अन्तरीक्षे च भूतानि प्राक्रोशन्त
विशाम्पते। दृष्ट्वा निपतितं शूरं च्युतं चन्द्रमिवाम्बरात् ॥ २१ ॥
द्रोणकर्णमुखैः षड्भिर्धार्त्तराष्ट्रैर्महारथैः। एकोऽयं निहतः
शेते नैष धर्म्मो मतो हि नः ॥ २२ ॥ तस्मिंस्तु निहते वीरे बह्व
शोभत मेदिनी। द्यौर्यथा पूर्णचन्द्रेण नक्षत्रगणमालिनी ॥२३॥
रुक्मपुङ्खैश्च सम्पूर्णा रुधिरौघैश्च सम्प्लुता। उत्तमाङ्गैश्च वीराणां
भ्राजमानैः सकुण्डलैः ॥ २४ ॥ विचित्रैश्च महोष्णीषैः पताका
भिश्च सङ्गता। चामरैश्च कुथाभिश्च प्रविद्धैश्चोत्तमायुधैः ॥ २५ ॥
रथाश्वनरनागानामलङ्कारैश्च सुप्रभैः। खड्गैश्च निशितैः पीतै
र्निर्मुक्तैर्भुजगैरिव ॥ २६ ॥ चापैश्च विशिखैश्छिन्नैः शक्त्यृष्टिप्रास
कम्पनैः। विविधैरायुधैश्चान्यैः संवृता भूरशोभत ॥ २७ ॥ वाजि
भिश्चापि निर्जीवैः श्वसद्भिः शोणितोक्षितैः। सारोहैर्विषमा
भूमिः सौभद्रेण निपातितैः ॥ २८ ॥ साङ्कुशैः समहामात्रैः स

न्म ख । संस्तम्भयत माभैष्ट विजेष्यामो वयं रिपून् ॥ ३५ ॥ इत्येव स महातेजा दुःखितेभ्यो महाद्युतिः । धर्मराजो युधां श्रेष्ठो ब्रुवन् दुःखमपानुदत ॥ ३६ ॥ युद्धे ह्याशीविषाकारान् राजपुत्रान् रणे रिपून् । पूर्वं निहत्य सङ्ग्रामे पश्चादार्जुनिरन्वयात् ॥ ३७ ॥ हत्वा दशसहस्राणि कौशल्यञ्च महारथम् । कृष्णार्जुनसमः कार्ष्णिः शक्रसद्मगतो ध्रुवम् ॥ ३८ ॥ रथाश्वनर-मातङ्गान् विनिहत्य सहस्रशः । अवितृप्तः सङ्ग्रामादशोच्यः पुण्य कर्मकृत् । गतः पुण्यकृताल्लोकान् भास्वरान् पुण्यनिर्जितान् ॥३९॥

इति द्रोणपर्व्वणि अभिमन्युवधपर्व्वणि अभिमन्युवधे
एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

---

सञ्जय उवाच । वयन्तु प्रवरं हत्वा तेषां तैः शरपीड़िताः । निवेशायाभ्युपायाम सायाह्ने रुधिरोक्षिताः ॥ १ ॥ निरीक्ष्य-माणास्तु वयं परे चायोधनं शनैः । अपयाता महाराज ग्लानिं प्राप्ता विचेतसः ॥ २ ॥ ततो निशाया दिवसस्य चाशिवः शिवा-रुतैः सन्धिरवर्त्तताद्भुतः । कुशेशयापीड़निभे दिवाकरे विलम्ब-मानेऽस्तमुपेत्य पर्वतम् ॥ ३ ॥ वरासिशक्त्यृष्टिवरूथचर्मणां विभू-षणानाञ्च समाक्षिपन् प्रभाः । दिवञ्च भूमिञ्च समानयन्निव प्रियां तनुं भानुरुपैः पावकः ॥ ४ ॥ महाभ्रकूटाचलशृङ्गसन्निभैर्गजैर-नेकैरिव वज्रपातितैः । सवैजयन्त्यङ्कुशवर्मयन्तृभिर्निपातितै-र्नष्टगतिश्चिता क्षितिः ॥ ५ ॥ हतेश्वरैश्चूर्णितयन्त्रुपस्करैर्हताश्व-सूतैर्विपताककेतुभिः । महारथैर्भूः शुशुभे विचूर्णितैः पुरैः-रिवामित्रहतैर्नराधिप ॥ ६ ॥ तथाश्ववृन्दैः सहसादिभिर्हतैः प्रविद्धभाण्डास्तरणैः पृथग्विधैः । निरस्तजिह्वादशनान्त्रलोचनै-र्धरा बभौ घोरविरूपदर्शना ॥ ७ ॥ प्रविद्धवर्माभरणाम्बरायुधा

विपन्नहस्त्यश्वरथानुगा नरा । महार्हशय्यास्तरणोचितास्तदा
हितावनाथा इव शेरते हता ॥ ८ ॥ अतीव हृष्टा श्वशृगाल-
वायसा वका सुपर्णाश्च वृकास्तरक्षव । वयांस्यसृक्पान्यथ
रक्षसां गणा पिशाचसङ्घाश्च सुदारुणा रणे ॥ ९ ॥ त्वचो विनि-
र्भिद्य पिबन् वसामसृक् तथैव मज्जा पिशितानि चाश्नुवन् ।
वपा विलुम्पन्ति हसन्ति राक्षसा प्रकर्षमाणा कुणपान्यनेकश
॥ १० ॥ शरीरसङ्घातवहा असृग्जला रथोडुपा कुञ्जरशैल-
सङ्कटा । मनुष्यशीर्षोपलमांसकर्दमा प्रविद्धनानाविधशस्त्रमालिनी
॥ ११ ॥ भयावहा वैतरणीव दुस्तरा प्रवर्त्तिता योधवरैस्तदा
नदी । उवाह मध्येन रणाजिरं भृशं भयावहा जीवमृतप्रवा-
हिनी ॥ १२ ॥ पिबन्ति चाश्नन्ति च यत्र दुर्दृशा पिशाचसङ्घाश्च
नदन्ति भैरवा । सुनन्दिता प्राणभृतां भयङ्करा समानभक्षा
श्वशृगालपक्षिण ॥ १३ ॥ तथा तदायोधनमुग्रदर्शनं निशा-
मुखे पितृपतिराष्ट्रवर्द्धनम् । निरीक्षमाणा शनकैर्जहुर्नरा सम-
त्थितोऽन्त्यकबन्धसङ्कुलम् ॥ १४ ॥ अपेतविध्वस्तमहार्हभूषणं
निपातितं शक्रसमं महारथम् । रणेऽभिमन्युं ददृशुस्तदा जना
व्यपेतहव्यं सदसीव पावकम् ॥ १५ ॥

इति द्रोणपर्व्वणि अभिमन्युवधपर्व्वणि समरभूमिवर्णने
पञ्चाशोऽध्यायः ॥ ५० ॥

---

द्रोणानीकमसम्बाधं मम प्रियचिकीर्षया। भित्त्वा व्यूहं प्रविष्टोऽसौ गोमध्यमिव केशरी॥४॥ यस्य शूरा महेष्वासाः प्रत्यनीकगता रणे। प्रभग्ना विनिवर्त्तन्ते कृतास्त्रा युद्धदुर्मदाः॥५॥ अत्यन्तमपकृत्स्माकं येन दुःशासनः शरैः। क्षिप्रं ह्यभिमुखः संख्ये विसंज्ञो विमुखीकृतः॥६॥ स तीर्त्वा दुस्तरं वीरो द्रोणानीकमहार्णवम्। प्राप्य दौःशासनिं कार्ष्णिर्यातो वैवस्वतक्षयम्॥७॥ कथं द्रक्ष्यामि कौन्तेयं सौभद्रे निहतेऽर्जुनम्। सुभद्रा वा महाभागा प्रियं पुत्रमपश्यतीम्॥८॥ किंस्विद्वयमपेतार्थमश्लिष्टमसमञ्जसम्। तावुभौ प्रतिवक्ष्यामो हृषीकेशधनञ्जयौ॥९॥ अहमेव सुभद्रायाः केशवार्जुनयोरपि। प्रियकामो जयाकाङ्क्षी कृतवानिदमप्रियम्॥१०॥ न लुब्धो बुध्यते दोषान्मोहाल्लोभः प्रवर्त्तते। मधुलिप्सुर्हि नापश्यं प्रपातमहमीदृशम्॥११॥ यो हि भोज्ये पुरस्कार्यो यानेषु शयनेषु च। भूषणेषु च सोऽस्माभिर्बालो युधि पुरस्कृतः॥१२॥ कथं हि बालस्तरुणो युद्धानामविशारदः। सदश्व इव सम्बाधे विषमे क्षेममर्हति॥१३॥ अहोऽद्य वयमप्येनं महीमनुशयीमहि। बीभत्सोः कोपदीप्तस्य दग्धाः कृपणचक्षुषा॥१४॥ अलुब्धो मतिमान् ह्रीमान् क्षमावान् रूपवान् बली। वपुष्मान्मानकृद्वीरः प्रियः सत्यपराक्रमः॥१५॥ यस्य श्लाघन्ति विबुधाः कर्म्माण्यूर्जितकर्म्मणः। निवातकवचान् जघ्ने कालकेयांश्च वीर्यवान्॥१६॥ महेन्द्रशत्रवो येन हिरण्यपुरवासिनः। अक्ष्णोर्निमेषमात्रेण पौलोमाः सगणा हताः॥१७॥ परेभ्योऽप्यभयार्थिभ्यो यो दाताभयं विभुः। तस्यास्माभिरशक्तैस्त्रातुमद्यात्मजो भयात्॥१८॥ भयन्तु सुमहत् प्राप्तं धार्त्तराष्ट्रान्महाबलात्। पार्थः पुत्रवधात् क्रुद्धः कौरवान् शोषयिष्यति॥१९॥ क्षुद्रः क्षुद्रसहायश्च स्वपक्षक्षयकारकः। व्यक्तं दुर्योधनो दृष्ट्वा शोचन् हास्यति जीवितम्॥२०॥ न मे जय प्रीपश्यन्

निहताः पृतनामध्ये मृतसंज्ञा महाबलाः ॥ १२ ॥ नागायुतबलाश्चान्ये वायुवेगबलास्तथा। त एते निहताः सङ्ख्ये तुल्यरूपा नरैर्नराः ॥ १३ ॥ नैषां पश्यामि हन्तारं प्राणिनां संयुगे क्वचित्। विक्रमेणोपपन्ना हि तेजोबलसमन्विताः ॥ १४ ॥ जेतव्यमिति चान्योऽन्यं नित्यं येषां हृदि स्थितम्। अथ चेमे हताः प्राज्ञाः शेरते विगतायुषः ॥ १५ ॥ मृता इति च शब्दोऽयं वर्त्तते च तदर्थवत्। इमे मृता महीपाला प्रायशो भीमविक्रमाः ॥१६॥ निश्चेष्टा निरभीमानाः शूराः शत्रुवशङ्गताः। राजपुत्राश्च संरब्धा वैश्वानरमुखङ्गताः ॥ १७ ॥ अत्र मे संशयः प्राप्तः कुतः संज्ञा मृता इति। कस्य मृत्युः कुतो मृत्युः कथं संहरते प्रजाः। हरस्यमरसङ्काश तन्मे ब्रूहि पितामह ॥ १८ ॥

सञ्जय उवाच। तत्तथा परिपृच्छन्तं कुन्तीपुत्रं युधिष्ठिरम्। आश्वासनमिदं वाक्यमुवाच भगवानृषिः ॥ १९ ॥

व्यास उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्। अकम्पनस्य कथितं नारदेन पुरा नृप ॥ २० ॥ स चापि राजा राजेन्द्र पुत्रव्यसनमुत्तमम्। अप्रसह्यतमं लोके प्राप्तवानिति मे मतिः ॥ २१ ॥ तदहं सम्प्रवक्ष्यामि मृत्योः प्रभवमुत्तमम्। ततस्त्वं मोक्ष्यसे दुःखात् स्नेहबन्धनसंश्रयात् ॥ २२ ॥ पुरावृत्तमिदं तात शृणु कीर्त्तयतो मम। धन्यमाख्यानमायुष्यं शोकघ्नं पुष्टिवर्द्धनम् ॥ २३ ॥ पवित्रमरिसङ्घघ्नं मङ्गलानाञ्च मङ्गलम्। यथैव वेदाध्ययनमुपाख्यानमिदन्तथा ॥ २४ ॥ श्रवणीयं महाराज प्रातर्नित्यं द्विजोत्तमैः। पुत्रानायुष्मतो राज्यमीहमानैः श्रियन्तथा ॥ २५ ॥ पुरा कृतयुगे तात आसीद्राजा ह्यकम्पनः। स शत्रुवशमापन्नो मध्ये सङ्ग्राममूर्द्धनि ॥ २६ ॥ तस्य पुत्रो हरिर्नाम नारायणसमो बले। श्रीमान् कृतास्त्रो मेधावी युधि शक्रोपमो बली ॥ २७ ॥ स शत्रुभिः परिवृतो बहुधा रणमूर्द्धनि। व्यस्यन्

करो न राज्यं न चामरत्व न सुरैः सलोकता। इम समीक्ष्याप्रतिवीर्य्यपौरुष निपातित देववराब्जजात्मजम् ॥ २१ ॥

इति द्रोणपर्व्वणि अभिमन्युवधपर्व्वणि युधिष्ठिरविलापे एकपञ्चाशोऽध्यायः ॥ ५१ ॥

---

सञ्जय उवाच। अथैन विलपन्तं त कुन्तीपुत्रं युधिष्ठिरम्। कृष्णद्वैपायनस्तत्र आजगाम महानृषि ॥ १ ॥ समर्च्चित्वा यथा न्यायमुपविष्टो युधिष्ठिर। अब्रवीच्छोकसन्तप्तो भ्रातुः पुत्रवधेन च ॥ २ ॥ अधर्मयुक्तैर्बहुभि परिवार्य्य महारथैः। युध्यमानो महेष्वासे सौभद्रो निहतो रणे ॥ ३ ॥ बालश्चबालबुद्धिश्च सौभद्र परवीरहा। अनुपायेन सङ्ग्रामे युध्यमानो विशेषत ॥ ४ ॥ मयाप्युक्त स सङ्ग्रामे द्वार सञ्जनयस्व न। प्रविष्टेऽभ्यन्तरे तस्मिन् सैन्धवेन निवारिता ॥ ५ ॥ ननु नाम सम युद्धगोष्ठ्य युद्धजीविभि। इदञ्चैवासम युद्धमीदृश यत् कृत परैः ॥ ६ ॥ तेनास्मि भृशसन्तप्त शोकवाष्पसमाकुल। शम नैवाधिगच्छामि चिन्तयान पुन पुन ॥ ७ ॥

सञ्जय उवाच। त तथाविलपन्तं वै शोकवेगसमाकुलम्। उवाच भगवान् व्यासो युधिष्ठिरमिद वच ॥ ८ ॥

व्यास उवाच। युधिष्ठिर महाप्राज्ञ सर्व्वशास्त्रविशारद। व्यसनेषु न मुह्यन्ति त्वादृशा भरतर्षभ ॥ ९ ॥ स्वर्गमेष गत शूर शत्रून् हत्वा बहून् रणे। अबालसदृश कर्म कृत्वा वै पुरुषोत्तम ॥ १० ॥ अनतिक्रमणीयो वै विधिरेष युधिष्ठिर। देवदानवगन्धर्व्वान् मृत्युर्हरति भारत ॥ ११ ॥

युधिष्ठिर उवाच। इमे वै पृथिवीपाला शेरते पृथिवीतले।

निहताः पृतनामध्ये मृतसंख्या महाबलाः ॥ १२ ॥ नागायुतबला-
श्चान्ये वायुवेगबलास्तथा । तत्र ते निहताः सङ्ख्ये तुल्यरूपा
नरैर्नराः ॥ १३ ॥ नैषां पश्यामि हन्तारं प्राणिनां संयुगे क्वचित् ।
विक्रमेणोपपन्ना हि तेजोबलसमन्विताः ॥ १४ ॥ जेतव्यमिति
चान्योऽन्यं नित्यं येषां हृदि स्थितम् । अथ चेमे हताः प्राज्ञाः
शेरते विगतायुषः ॥ १५ ॥ मृता इति च शब्दोऽयं वर्त्तते च
ततोऽर्थवत् । इमे मृता महीपालाः प्रायशो भीमविक्रमाः ॥१६॥
निश्चेष्टा निरभीमानाः शूराः शत्रुवशङ्गताः । राजपुत्राश्च संरब्धा
वैश्वानरमुखङ्गताः ॥ १७ ॥ अत्र मे-संशयः प्राप्तः कुतः संज्ञा
मृता इति । कस्य मृत्युः कुतो मृत्युः कथं संहरते प्रजाः । हर-
त्यमरसङ्काश तन्मे ब्रूहि पितामह ॥ १८ ॥

सञ्जय उवाच । तन्तथा परिपृच्छन्तं कुन्तीपुत्रं युधिष्ठिरम् ।
आश्वासनमिदं वाक्यमुवाच भगवानृषिः ॥ १९ ॥

व्यास उवाच । अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
अकम्पनस्य कथितं नारदेन पुरा नृप ॥ २० ॥ स चापि राजा
राजेन्द्र पुत्रव्यसनमुत्तमम् । अप्रसह्यतमं लोके प्राप्तवानिति मे
मतिः ॥ २१ ॥ तदहं संप्रवक्ष्यामि मृत्योः प्रभवमुत्तमम् । ततस्त्वं
मोक्ष्यसे दुःखात् स्नेहबन्धनसंश्रयात् ॥ २२ ॥ पुरावृत्तमिदं तात
शृणु कीर्त्तयतो मम । धन्यमाख्यानमायुष्यं शोकघ्नं पुष्टिवर्द्धनम्
॥ २३ ॥ पवित्रमरिसङ्घघ्नं मङ्गलानाञ्च मङ्गलम् । यथैव वेदा-
ध्ययनमुपाख्यानमिदन्तथा ॥ २४ ॥ श्रवणीयं महाराज प्रात-
र्नित्यं द्विजोत्तमैः । पुत्रानायुष्मतो राज्यमीहमानैः श्रियन्तथा
॥ २५ ॥ पुरा कृतयुगे तात आसीद्राजा ह्यकम्पनः । स शत्रु-
वशमापन्नो मध्ये सङ्ग्राममूर्द्धनि ॥ २६ ॥ तस्य पुत्रो हरिर्नाम
नारायणसमो बले । श्रीमान् कृतास्त्रो मेधावी युधि शक्रोपमो
बली ॥ २७ ॥ स शत्रुभिः परिवृतो बहुधा रणमूर्द्धनि । व्यस्यन्

बाणसहस्राणि योधेषु च गजेषु च ॥ २८ ॥ स कर्म दुष्करं कृत्वा सङ्ग्रामे शत्रुतापन । शत्रुभिर्निहतः सङ्ख्ये पृतनायां युधिष्ठिर ॥ २९ ॥ स राजा प्रेतकार्याणि तस्य कृत्वा शुचान्वितः । शोचन्नहनि रात्रौ च नालभत्सुखमात्मनः ॥ ३० ॥ तस्य शोकं विदित्वा तु पुत्रव्यसनसम्भवम् । अथाजगाम देवर्षिर्नारदोऽस्य समीपतः ॥ ३१ ॥ स तु राजा महाभागो दृष्ट्वा देवर्षिमागतम् । पूजयित्वा यथान्यायं कथामकथयत्तदा ॥ ३२ ॥ सर्वं तस्य समाचष्ट यथावृत्तं नरेश्वर । शत्रुभिर्विजयं सङ्ख्ये पुत्रस्य च वधन्तथा ॥ ३३ ॥ मम पुत्रो महावीर्य्य इन्द्रविष्णुसमद्युतिः । शत्रुभिर्बहुभिः सङ्ख्ये पराक्रम्य हतो बली ॥ ३४ ॥ क एष मृत्युर्भगवन् किंवीर्य्यबलपौरुषः । एतदिच्छामि तत्त्वेन श्रोतुं मतिमतांवर ॥ ३५ ॥ तस्य तद्वचनं श्रुत्वा नारदो वरदः प्रभुः । आख्यानमिदमाचष्ट पुत्रशोकापहं महत् ॥ ३६ ॥

नारद उवाच । शृणु राजन्महाबाहो आख्यानं बहुविस्तरम् । यथा वृत्तं श्रुतं चैव मयापि वसुधाधिप ॥ ३७ ॥ प्रजाः सृष्ट्वा तदा ब्रह्मा आदिसर्गे पितामहः । असंहृतं महातेजा दृष्ट्वा जगदिदं पुनः ॥ ३८ ॥ तस्य चिन्ता समुत्पन्ना संहारं प्रति पार्थिव । चिन्तयन्न ह्यसौ वेद संहारं वसुधाधिप ॥ ३९ ॥ तस्य रोषान्महाराज खेभ्योऽग्निरुदतिष्ठत । तेन सर्वा दिशो व्याप्ताः सान्तर्देशा दिधक्षता ॥ ४० ॥ ततो दिवं भुवं खञ्च ज्वालामालासमाकुलम् । चराचरं जगत् सर्वं ददाह भगवान् प्रभुः ॥ ४१ ॥ ततो हतानि भूतानि चराणि स्थावराणि च । महता क्रोधवेगेन त्रासयन्निव वीर्य्यवान् ॥ ४२ ॥ ततो हरो जटी स्थाणुर्निशाचरपतिः शिवः । जगाम शरणं देवं ब्रह्माणं परमेष्ठिनम् ॥ ४३ ॥ तस्मिन्निपतिते स्थाणौ प्रजानां हितकाम्यया । अब्रवीत् परमो देवो ज्वलन्निव महामुनिः ॥ ४४ ॥

किं कुर्म्मः कामं कामार्ह कामाज्जातोऽसि पुत्रक। करिष्यामि प्रियं सर्व्वं ब्रूहि स्थाणो यदिच्छसि ॥ ४५ ॥

इति द्रोणपर्व्वणि अभिमन्युवधपर्व्वणि शोकापनोदने द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

---

स्थाणुरुवाच। प्रजासर्गनिमित्तं हि कृतो यत्नस्त्वया विभो। त्वया सृष्टाश्च वृद्धाश्च भूतग्रामाः पृथग्विधाः ॥ १ ॥ तास्तवेह पुनः क्रोधात् प्रजा दह्यन्ति सर्व्वशः। ता दृष्ट्वा मम कारुण्यं प्रसीद भगवन् प्रभो ॥ २ ॥

ब्रह्मोवाच। संहर्त्तुं न च कामो मे एतदेवं भवेदिति। पृथिव्या हितकामं तु ततो मां मन्युराविशत् ॥ ३ ॥ इयं हि मां सदा देवी भारार्त्ता समचूचदत्। संहारार्थं महादेव भारेणाभिहता सती ॥ ४ ॥ ततोऽहं नाधिगच्छामि तथा बहुविधन्त्विदा। संहारमप्रमेयस्य ततो मां मन्युराविशत् ॥ ५ ॥

रुद्र उवाच। संहारार्थं प्रसीदस्व मा रुषो वसुधाधिप। मा प्रजाः स्थावराश्चैव जङ्गमाश्च व्यनीनशः ॥ ६ ॥ तव प्रसादाद्भगवन्निदं वर्त्तेत्त्रिधा जगत्। अनागतमतीतञ्च यच्च सम्प्रति वर्त्तते ॥ ७ ॥ भगवान् क्रोधसन्दीप्तः क्रोधादग्निमिवासृजत्। स दहत्यश्मकूटानि द्रुमांश्च सरितस्तथा ॥ ८ ॥ पल्वलानि च सर्व्वाणि सर्व्वं चैव तृणोलपम्। स्थावरं जङ्गमञ्चैव निःशेषं कुरुते जगत् ॥ ९ ॥ तदिदं भस्मसाद्भूतं जगत् स्थावरजङ्गमम्। प्रसीद भगवन् सर्व्वं रोषो न स्याद्वरो मम ॥ १० ॥ सर्व्वे हि नष्टा नश्यन्ति तव देव कथञ्चन। तस्मान्निवर्त्तता तेजस्त्वय्येवेह प्रलीयताम् ॥ ११ ॥ तत् पश्य देव सुभृशं प्रजानां हितकाम्यया। यथेमे प्राणिनः सर्व्वे निवर्त्तेरंस्तथा कुरु ॥ १२ ॥ अभावं नेह गच्छेयुरुच्छन्न

ज्वलनेन प्रजाः। अधिदैवे नियुक्तोऽस्मि त्वया लोकेषु लोककृत्‌।
॥ १३ ॥ मा विनश्येज्जगन्नाथ जगत्‌ स्थावरजङ्गमम्। प्रसादाभि-
मुखं देवं तस्मादेवं ब्रवीम्यहम्‌ ॥ १४ ॥

नारद उवाच। श्रुत्वा हि वचनं देवः प्रजानां हितकाम्यया।
तेजः सन्धारयामास पुनरेवान्तरात्मनि ॥ १५ ॥ ततोऽग्निमुप
संहृत्य भगवाल्लोकसत्कृतः। प्रवृत्तिञ्च निवृत्तिञ्च कथयामास स
प्रभुः ॥ १६ ॥ उपसंहरतस्तस्य तमग्निं रोषजं तदा। प्रादु
र्बभूव विश्वेभ्यो गोभ्यो नारी महात्मनः ॥ १७ ॥ कृष्णा रक्ता
तथा पिङ्गा रक्तजिह्वास्यलोचना। कुण्डलाभ्याञ्च राजेन्द्र तप्ताभ्यां
तप्तभूषणा ॥ १८ ॥ सा निःसृत्य तथा खेभ्यो दक्षिणां दिश
माश्रिता। स्मयमाना च वीक्ष्य देवौ विश्वेश्वरावुभौ ॥ १९ ॥
तामाहूय तदा देवो लोकादिनिधनेश्वरः। मृत्यो इति मही-
पाल जहि चेमाः प्रजा इति ॥ २० ॥ त्वं हि संहारबुद्ध्या मे
प्रादुर्भूता रुषो मम। तस्मात्संहर सर्वास्त्वं प्रजाः सजड़पण्डिताः
॥ २१ ॥ मम त्वं हि नियोगेन ततः श्रेयो ह्यवाप्स्यसि। एव
मुक्ता तु सा तेन मृत्युः कमललोचना ॥ २२ ॥ दध्यौ चात्यर्थ
मबला प्ररुरोद च सुस्वरम्। पाणिभ्यां प्रतिजग्राह तान्यश्रूणि
पितामहः। सर्वभूतहितार्थाय तां चाप्यनुनयंस्तदा ॥ २३ ॥

इति द्रोणपर्वणि अभिमन्युवधपर्वणि मृत्यूत्पत्तिकथने
त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

---

नारद उवाच। विनीय दुःखमबला आत्मन्येव प्रजापतिम्।
उवाच प्राञ्जलिर्भूत्वा लतेवावर्जिता पुनः ॥ १ ॥

मृत्युरुवाच। त्वया सृष्टा कथं नारी ईदृशी वदतांवर।
क्रूरं कर्माहितं कुर्य्यां तदेव किमु जानती ॥ २ ॥ बिभेम्यहमध

गोहि प्रभोद भगवन् प्रभो । प्रियान् पुत्रान् वयस्यांश्च भ्रातॄन्
पितॄन् पतींस्तथा ॥ ३ ॥ अपध्यास्यन्ति मे देव मृतेभ्यो बिभे-
म्यहम् । कृपणानां विसृष्टा ये पतन्त्यश्रुबिन्दवः ॥ ४ ॥ तेभ्यो-
ऽहं भगवन् भीता शरणं त्वामुपागता । यमस्य भवनं देव न
गच्छेयं सुरोत्तम ॥ ५ ॥ प्रसादये त्वां वरद भूर्द्धा ह्यवनतेन च ।
एतदिच्छाम्यहं कामं त्वत्तो लोकपितामह ॥ ६ ॥ इच्छेयं त्वत्-
प्रसादाद्धि तपस्तप्तुं प्रजेश्वर । प्रदिशेमम्वरं देव त्वं मह्यं भगवन्
प्रभो ॥ ७ ॥ त्वया ह्युक्ता गमिष्यामि धेनुकाश्रममुत्तमम् । तत्र
तप्स्ये तपस्तीव्रं तवैवाराधने रता ॥ ८ ॥ न हि शक्यामि देवेश
प्राणान् प्राणभृतां प्रियान् । हन्तुं विलपमानानामधर्मात्त्वमि-
रक्ष माम् ॥ ८ ॥

ब्रह्मोवाच । मत्यो सङ्कल्पितासि त्वं प्रजासंहारहेतुना ।
गच्छ संहर सर्वांस्त्वं प्रजा मा ते विचारणा ॥ १० ॥ भविता
त्वेतदेवं हि नैतज्जात्वन्यथा भवेत् । भवत्वनिन्दिता लोके कुरुष्व
वचनं मम ॥ ११ ॥

नारद उवाच । एवमुक्ताभवत् प्रीता प्राञ्जलिर्भगवन्मुखी ।
संहारे नाकरोद्बुद्धिं प्रजानां हितकाम्यया ॥ १२ ॥ तूष्णीमासी-
त्तदा देव प्रजानामीश्वरेश्वरः । प्रसादञ्चागमत् क्षिप्रमात्मनैव
पितामहः ॥ १३ ॥ स्मयमानश्च लोकेशो लोकान् सर्वानवेक्ष्य च ।
लोकास्त्वासन् यथा पूर्वं दृष्टास्ते नापमृत्युना ॥ १४ ॥ निवृत्तरोषे
तस्मिंस्तु भगवत्यपराजिते । सा कन्याप्यजगामाथ समीपात्तस्य
धीमतः ॥ १५ ॥ अपसृत्याप्रतिश्रुत्य प्रजासंहरणं तदा । त्वर-
माणा च राजेन्द्र मृत्युर्धेनुकमभ्यगात् ॥ १६ ॥ सा तत्र परमं
तीव्रं चचार व्रतमुत्तमम् । सा तदा ह्येकपादेन तस्थौ पद्मानि
षोडश ॥ १७ ॥ पञ्च चाब्दानि कारुण्यात् प्रजानाञ्च हितैषिणी ।
इन्द्रियाणीन्द्रियार्थेभ्यः प्रजाभ्य सन्निवर्त्य सा ॥ १८ ॥ तत-

स्त्वैकेन पादेन पुण्याख्यानि सप्त वै। तस्थौ पद्मानि षट् चैव
सप्त चैकञ्च पार्थिव ॥ १९ ॥ ततः पद्मायुतञ्चैव मृगैः सह चचार
सा। पुनर्गत्वा ततो नन्दां पुण्यां शीतामलोदकाम् ॥ २० ॥
अप्सु वर्षसहस्राणि सप्त चैकञ्च सानयत्। धारयित्वा तु नियमं
नन्दायां वीतकल्मषा ॥ २१ ॥ सा पूर्वं कौशिकीं पुण्यां जगाम
नियमे धृता। तत्र वायुजलाहारा चचार नियमं पुनः ॥ २२ ॥
पञ्चगङ्गेषु सा पुण्या कन्या वेतसकेषु च। तपो विशेषैर्बहुभिः
कर्षयद्देहमात्मनः ॥ २३ ॥ ततो गत्वाथ गङ्गां सा महामेरुञ्च
केवलम्। तस्थौ चाश्मेव निश्चेष्टा प्राणायामपरायणा ॥ २४ ॥
पुनर्हिमवतो मूर्ध्नि यत्र देवाः पुरायजन्। तत्राङ्गुष्ठेन सा
तस्थौ निखर्वं परमा शुभा ॥ २५ ॥ पुष्करेष्वथ गोकर्णे नैमिषे
मलये तथा। अपाकर्षत् स्वकं देहं नियमैर्मनसः प्रियैः ॥ २६ ॥
अनन्यदेवता नित्यं दृढभक्त्या पितामहे। तस्थौ पितामहञ्चैव
तोषयामास सर्वतः ॥ २७ ॥ ततस्तामब्रवीद् प्रीतो लोकानां
प्रभवोऽव्ययः। सौम्येन मनसा राजन् प्रीतः प्रीतमनास्तदा ॥२८॥
मृत्यो किमिदमत्यर्थं तपांसि चरसीति ह। ततोऽब्रवीत् पुनः
मृत्युर्भगवन्तं पितामहम् ॥ २९ ॥ नाहं हन्यां प्रजा देव स्वस्था-
न्नाक्रोशतस्तदा। एतदिच्छामि सर्वेश त्वत्तो वरमहं प्रभो ॥३०॥
अधर्मभयभीतास्मि ततोऽहं तप आस्थिता। भीतायास्तु महा-
भाग प्रयच्छाभयमव्ययम् ॥ ३१ ॥ आर्त्ता चानागसीं नारीं
याचामि भव मे गतिः। तामब्रवीत्ततो देवो भूतभव्यभविष्यवित्
॥ ३२ ॥ अधर्मो नास्ति ते मृत्यो संहरन्त्या इमाः प्रजाः।
मया चोक्तं मृषा भद्रे भविता न कथञ्चन ॥ ३३ ॥ तस्मात्संहर
कल्याणि प्रजाः सर्वाश्चतुर्विधाः। धर्मः सनातनश्च त्वां सर्वथा
पावयिष्यति ॥ ३४ ॥ लोकपालो यमश्चैव सहाया व्याधयश्च
ते। अहञ्च विबुधाश्चैव पुनर्दास्यामि ते वरम् ॥ ३५ ॥ यथा

क्षमेणमया युक्ता विरजा ख्यातिमेष्यसि । सैवमुक्ता महाराज
कृताञ्जलिरिदं विभुम् ॥ ३६ ॥ पुनरेवाब्रवीद्वाक्यं प्रसाद्य शिरसा
तदा । यद्येवमेतत् कर्त्तव्यं मया न स्यादृते विभो ॥ ३७ ॥
तवाज्ञा मूर्द्ध्नि मे न्यस्ता यत्तु वक्ष्यामि तच्छृणु । लोभः क्रोधो-
ऽभ्यसूयेर्ष्या द्रोहो मोहश्च देहिनाम् । अह्रीश्चान्योऽन्यपरुषा
देहं भिन्द्युः पृथग्विधाः ॥ ३८ ॥

ब्रह्मोवाच । तथा भविष्यते मृत्यो साधु संहर वै प्रजाः ।
अधर्मस्ते न भविता नापध्यास्याम्यहं शुभे ॥ ३९ ॥ यान्यश्रु-
बिन्दूनि करे ममासंस्ते व्याधयः प्राणिनामात्मजाताः । ते
मारयिष्यन्ति नरान् गतासून्नाधर्मस्ते भविता मास्म भैषीः ॥ ४० ॥
नाधर्मस्ते भविता प्राणिनां वै त्वं वै धर्मस्त्वं हि धर्मस्य चेशा ।
धर्म्या भूत्वा धर्मनित्या धरित्री तस्मात् प्राणान् सर्वथेमान्नियच्छ
॥ ४१ ॥ सर्वेषां वै प्राणिनां कामरोषौ सन्त्यज्य त्वं संहरस्वेह
जीवान् । एवं धर्मस्त्वां भजिष्यत्यनन्तो मिथ्यावृत्तान् मारयिष्य-
त्यधर्मः ॥ ४२ ॥ तेनात्मानं पावयस्वात्मना त्वं पापेनात्मानं मज्ज-
यिष्यन्त्यसन्तः । तस्मात् कामं रोषमप्यागतं त्वं सन्त्यज्यातः
संहरस्वेह जीवान् ॥ ४३ ॥

नारद उवाच । सा वै भीता मृत्युसंज्ञोपदेशाच्छापाद्भीता
बाढमित्यब्रवीत्तम् । सा च प्राणान् प्राणिनामन्तकाले कामक्रोधौ
त्यज्य हरत्यसक्ता ॥ ४४ ॥ मृत्योस्तस्या व्याधयस्तत् प्रसूता व्याधी
रोगी रुज्यते येन जन्तुः । सर्वेषां वै प्राणिनां प्रायणान्ते तस्मा-
च्छोकं मा कृथा निष्फलं त्वम् ॥ ४५ ॥ सर्वे देवाः प्राणिभिः
प्रायणान्ते गत्वा वृत्ताः सन्निवृत्तास्तथैव । एवं सर्वे प्राणिनस्तत्र
गत्वा वृत्ता देवा मर्त्त्यवद्राजसिंह ॥ ४६ ॥ वायुर्भीमो भीमनादो
महौजा भेत्ता देहान् प्राणिनां सर्वगोऽसौ । नावृत्तिं नैव
वृत्तिं कदाचित् प्राप्नोत्युग्रोऽनन्ततेजो विशिष्टः ॥ ४७ ॥ सर्वे देवा-

मर्त्त्यमशार्विमिष्टास्तस्मात् पुत्रं मा शुचो राजसिंह । स्वर्गं प्राप्तो
मोदते त्वत्तनूजो नित्यं रम्यान् वीरलोकानवाप्य ॥ ४८ ॥ त्यक्त्वा
दुःखं सञ्जय पुण्यकृद्भिरेषा मृत्युर्देवविहिता प्रजानाम् । प्राप्ते
काले संहरन्ती यथावत् स्वयं कृता प्राणहरा प्रजानाम् ॥ ४९ ॥
आत्मानं वै प्राणिनो घ्नन्ति सर्वे नैनं मृत्युर्दण्डपाणिर्हिनस्ति ।
तस्मान्मृतान्नानुशोचन्ति धीरा सत्यं ज्ञात्वा निश्चयं ब्रह्म
सृष्टम् । इत्थं सृष्टिं देवकृप्तां विदित्वा पुत्रान्नष्टाच्छोकमाशु
त्यजस्व ॥ ५० ॥

व्यास उवाच । एतच्छ्रुत्वार्थवद्वाक्यं नारदेन प्रकाशितम् ।
उवाचाकम्पनो राजा सखायं नारदं तथा ॥ ५१ ॥ व्यपेतशोक
प्रीतोऽस्मि भगवन्नृषिसत्तम । श्रुत्वेतिहासं त्वत्तस्तु कृतार्थो
ऽस्म्यभिवादये ॥ ५२ ॥ तथोक्तो नारदस्तेन राज्ञा ऋषिवरो
त्तम । जगाम नन्दनं शीघ्रं देवर्षिरमितात्मवान् ॥ ५३ ॥ पुण्य
यशस्यं स्वर्ग्यञ्च धन्यमायुष्यमेव च । अस्येतिहासस्य सदा श्रवणं
श्रावणं तथा ॥ ५४ ॥ एतदर्थपदं श्रुत्वा तदा राजा युधिष्ठिर ।
क्षत्रधर्मं च विज्ञाय शूराणां च पराङ्गतिम् ॥ ५५ ॥ सम्प्राप्तोऽसौ
महावीर्य्यः स्वर्गलोकं महारथ । अभिमन्युः परान् हत्वा प्रमुखे
सर्वधन्विनाम् ॥ ५६ ॥ युध्यमानो महेष्वासो हतः सोऽभिमुखो
रणे । असिना गदया शक्त्या धनुषा च महारथ ॥ ५७ ॥
विरजा सोमसूनुः स पुनस्तत्र प्रलीयते । तस्मात् परां धृतिं
कृत्वा भ्रातृभिः सह पाण्डव । अप्रमत्तः सुसंक्रुद्ध शीघ्रं योद्धु
मुपाक्रमत् ॥ ५८ ॥

इति द्रोणपर्वणि अभिमन्युवधपर्वणि मृत्युप्रजापतिसंवादे
चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

सञ्जय उवाच । श्रुत्वा मृत्युसमुत्पत्तिं कर्म्माण्यनुपमानि च । धर्म्मराज पुनर्वाक्यं प्रसाद्यैनमथाब्रवीत् ॥ १ ॥

युधिष्ठिर उवाच । गुरवः पुण्यकर्म्माणः शक्रप्रतिमविक्रमाः । स्थाने राजर्षयो ब्रह्मन्ननघाः सत्यवादिनः ॥ २ ॥ भूय एव तु मां तथ्यैर्वचोभिरभिबृंहय । राजर्षीणां पुराणानां समाश्वासय कर्म्मभिः ॥ ३ ॥ कियन्तो दक्षिणा दत्ताः कैश्च दत्ता महात्मभिः । राजर्षिभिः पुण्यकृद्भिस्तद्भवान् प्रब्रवीतु मे ॥ ४ ॥

व्यास उवाच । श्वित्यस्य नृपतेः पुत्रः सृञ्जयो नाम नामतः । सखायौ तस्य वै चोभौ ऋषी पर्वतनारदौ ॥ ५ ॥ तौ कदाचिद्गृहं तस्य प्रविष्टौ तद्दिदृक्षया । विधिवच्चार्च्चितौ तेन प्रीतौ तत्रोषतुः सुखम् ॥ ६ ॥ तं कदाचित् सुखासीनं ताभ्यां सह शुचिस्मिता । दुहिताभ्यागमत् कन्या सृञ्जयं वरवर्णिनी ॥ ७ ॥ तयाभिवादितः कन्यामभ्यनन्दद्यथाविधि । तत्सलिङ्गाभिराशीर्भिरिष्टाभिरभितः स्थिताम् ॥ ८ ॥ तां निरीक्ष्याब्रवीद्वाक्यं पर्वतः प्रहसन्निव । कस्येयं चञ्चलापाङ्गी सर्वलक्षणसम्मता ॥ ९ ॥ उताहो भाः स्विदर्कस्य ज्वलनस्य शिखा त्वियम् । श्रीह्रीः कीर्त्तिर्धृतिः पुष्टिः सिद्धिश्चन्द्रमसः प्रभा ॥ १० ॥ एवं ब्रुवाणं देवर्षिं नृपतिः सृञ्जयोऽब्रवीत् । ममेयं भगवन् कन्या मत्तो वरमभीप्सति ॥ ११ ॥ नारदस्त्वब्रवीदेनं देहि मह्यमिमां नृप । भार्य्यार्थं सुमहच्छ्रेयः प्राप्तुं चेदिच्छसे नृप ॥ १२ ॥ ददानीत्येव संहृष्टः सृञ्जयः प्राह नारदम् । पर्वतस्तु सुसंक्रुद्धो नारदं वाक्यमब्रवीत् ॥ १३ ॥ हृदयेन मया पूर्वं वृता वै वृतवानसि । यस्माद्वृता त्वया विप्र मा गाः स्वर्गं यथेप्सया ॥ १४ ॥ एवमुक्तो नारदस्तं प्रत्युवाचोत्तरं वचः । मनोवाग्बुद्धिसम्भाषा दत्ता चोदकपूर्वकम् ॥ १५ ॥ पाणिग्रहणमन्त्राश्च प्रथितं वरलक्षणम् । न त्वेषा निश्चिता निष्ठा निष्ठा सप्तपदी स्मृता ॥ १६ ॥ अनुत्पन्ने च कार्य्यार्थे मान्तु

व्याहृतवानसि। तस्मात्त्वमपि न स्वर्गं गमिष्यसि मया विना ॥१७॥
अन्योऽन्यमेवं शप्त्वा वै तस्थतुस्तत्र तावुभौ। अथ सोऽपि नृपो विप्रान् पानाच्छादनभोजनैः ॥ १८ ॥ पुत्रकामः परं भक्त्या यत्नेनोपाचरच्छुचिः। तस्य प्रसन्ना विप्रेन्द्राः कदाचित् पुत्रमीप्सवः ॥ १९ ॥ तपःस्वाध्यायनिरता वेदवेदाङ्गपारगाः। सहिता नारदं प्राहुर्देह्यस्मै पुत्रमीप्सितम् ॥ २० ॥ तथेत्युक्त्वा द्विजैरुक्तः सृञ्जयं नारदोऽब्रवीत्। तुभ्यं प्रसन्ना राजर्षे पुत्रमीप्सन्ति ब्राह्मणाः ॥ २१ ॥ वरं वृणीष्व भद्रं ते यादृशं पुत्रमीप्सितम्। तथोक्तः प्राञ्जली राजा पुत्रं वव्रे गुणान्वितम् ॥२२॥ यशस्विनं कीर्त्तिमन्तं तेजस्विनमरिन्दमम्। यस्य मूत्रं पुरीषञ्च क्लेदः स्वेदश्च काञ्चनम् ॥ २३ ॥ सुवर्णष्ठीविरित्येव तस्य नामाभवत् क्षितौ। तस्मिन् वरप्रदानेन वर्द्धयत्यमितन्धनम् ॥ २४ ॥ कारयामास नृपतिः सौवर्णं सर्वमीप्सितम्। गृहप्राकारदुर्गाणि ब्राह्मणावसथान्यपि ॥ २५ ॥ शय्यासनानि यानानि स्थालीपिठरभाजनम्। तस्य राज्ञोऽपि यद्वेश्म बाह्याश्चोपस्कराश्च ये ॥ २६ ॥ सर्वं तत् काञ्चनमयं कालेन परिवर्द्धितम्। अथ दस्युगणाः श्रुत्वा दृष्ट्वा चैनं तथाविधम् ॥ २७ ॥ सम्भूय तस्य नृपतेः समारब्धाश्चिकीर्षितुम्। केचित्तत्राब्रुवन् राज्ञः पुत्रं गृह्णीम वै स्वयम् ॥ २८ ॥ सोऽस्याकरः काञ्चनस्य तस्य यत्नं चरामहे। ततस्ते दस्यवो लुब्धाः प्रविश्य नृपतेर्गृहम् ॥ २९ ॥ राजपुत्रं ततो जह्रुः सुवर्णष्ठीविनं बलात्। गृह्यैनमनुपायज्ञा नीत्वारण्यमचेतसः ॥ ३० ॥ हत्वा विशस्य चापश्यन् लुब्धा वसु किञ्चन। तस्य प्राणैर्विमुक्तस्य नष्टं तद्वरदं वसु ॥ ३१ ॥ दस्यवश्च तथान्योऽन्यं जघ्नुर्मूर्खा विचेतसः। हत्वा परस्परं नष्टाः कुमारं चाद्भुतं भुवि ॥ ३२ ॥ असम्भाव्यं गता घोरं नरकं दुष्टचारिणः। तं दृष्ट्वा निहतं पुत्रं वरदत्तं महातपाः ॥ ३३ ॥

विललाप सुदुःखार्त्तो बहुधा करुणं नृपः । विलपन्तं निशम्याथ पुत्रशोकहतं नृपम् ॥ ३४ ॥ प्रत्यदृश्यत देवर्षिर्नारदो नृपसन्निधौ । उवाच चैनं दुःखार्त्तं विलपन्तमचेतसम् ॥ ३५ ॥ सृञ्जयं नारदोऽभ्येत्य तन्निबोध युधिष्ठिर । कामानामवितृप्तस्त्वं सृञ्जयेह मरिष्यसि ॥ ३६ ॥ यस्य चैते वयं गेहे उषिता ब्रह्मवादिनः । आविक्षितं मरुत्तञ्च मृतं सृञ्जय शुश्रुम ॥ ३७ ॥ संवर्त्तो याजयामास स्पर्द्धया वै बृहस्पतेः । यस्मै राजर्षये प्रादाद्धनं स भगवान् प्रभुः ॥ ३८ ॥ हैमं हिमवतः पादं यियक्षोर्विविधैः सवैः । यस्य सेन्द्रामरगणा बृहस्पतिपुरोगमाः ॥ ३९ ॥ देवा विश्वसृजः सर्वे यजनान्ते समासते । यज्ञवाटस्य सौवर्णाः सर्वे चासन् परिच्छदाः ॥ ४० ॥ यस्य सर्वं तदा ह्यन्नं मनोऽभिप्रायगं शुचि । कामतो बुभुजुर्विप्राः सर्वे चान्नार्थिनो द्विजाः ॥ ४१ ॥ पयोदधिघृतं क्षौद्रं भक्ष्यं भोज्यञ्च शोभनम् । यस्य यज्ञेषु सर्वेषु वासांस्याभरणानि च ॥ ४२ ॥ ईप्सितान्युपतिष्ठन्ति प्रहृष्टान् वेदपारगान् । मरुतः परिवेष्टारो मरुत्तस्याभवन् गृहे ॥ ४३ ॥ आविक्षितस्य राजर्षेर्विश्वेदेवाः सभासदः । यस्य वीर्य्यवतो राज्ञः सुवृष्ट्या सस्यसम्पदः ॥ ४४ ॥ हविर्भिस्तर्पिता येन सम्यक् क्लृप्तैर्दिवौकसः । ऋषीणाञ्च पितॄणाञ्च देवानां सुखजीविनाम् ॥ ४५ ॥ ब्रह्मचर्य्यश्रुतिमुखैः सर्वैर्दानैश्च सर्वदा । शयनासनयानानि स्वर्णराशींश्च दुस्त्यजान् ॥ ४६ ॥ तत् सर्वममितं वित्तं दत्त्वा विप्रेभ्य इच्छया । सोऽनुध्यातस्तु शक्रेण प्रजाः कृत्वा निरामयाः ॥ ४७ ॥ श्रद्दधानो जिताल्लोकान् गतः पुण्यदुहोऽक्षयान् । सप्रजः सनृपामात्यसदारापत्यबान्धवः ॥ ४८ ॥ यौवनेन सहस्राब्दं मरुत्तो राज्यमन्वशात् । स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ॥ ४९ ॥ पुत्रात् पुण्यतर-

स्तुभ्य मा पुत्रमनुतप्यथा । अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरन् ॥ ५० ॥

इति द्रोणपर्वणि अभिमन्युवधपर्वणि षोड्शराजिके पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

---

नारद उवाच । सुहोत्रं नाम राजानं मृतं सृञ्जय शुश्रुम । एकवीरमदृष्यन्तममरैरभिवीक्षितम् ॥ १ ॥ यः प्राप्य राज्यं धर्मेण ऋत्विग्ब्रह्मपुरोहितान् । अपृच्छदात्मनः श्रेयः पृष्ट्वा तेषां मते स्थितः ॥ २ ॥ प्रजानां पालनं धर्मो दानमिज्या द्विषज्जयः । एतत् सुहोत्रो विज्ञाय धर्मेणैच्छद्धनागमम् ॥ ३ ॥ धर्मेणाराधयत् देवान् बाणैः शत्रून् जयस्तथा । सर्वाण्यपि च भूतानि स्वगुणैरप्यरञ्जयत ॥ ४ ॥ यो भुक्ता वसुमतीं म्लेच्छाटविकवर्जिताम् । यस्मै ववर्ष पर्जन्यो हिरण्यं परिवत्सरान् ॥ ५ ॥ हैरण्यास्तत्र वाहिन्यः स्वैरिण्योऽभवन् पुरा । ग्राहान् कर्कटकांश्चैव मत्स्यांश्च विविधान् बहून् ॥ ६ ॥ कामान् वर्षति पर्जन्यो रूपाणि विविधानि च । सौवर्णान्यप्रमेयाणि वाप्यश्च क्रोशसम्मिता ॥ ७ ॥ सहस्रवामनान् कुब्जान् नक्रान् मकरकच्छपान् । सौवर्णान् विहितान् दृष्ट्वा ततोऽस्मयत वै तदा ॥ ८ ॥ तत् सुवर्णमपर्यन्तं राजर्षिः कुरुजाङ्गले । ईजानो वितते यज्ञे ब्राह्मणेभ्यो ह्यमन्यत ॥ ९ ॥ सोऽश्वमेधसहस्रेण राजसूयशतेन च । पुण्यैः क्षत्रिययज्ञैश्च प्रभूतवरदक्षिणैः ॥ १० ॥ काम्यनैमित्तिकाजस्रैरिष्टाङ्गतिमवाप्नुयात । स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ॥ ११ ॥ पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः । अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरन् ॥ १२ ॥

इति द्रोणपर्वणि अभिमन्युवधपर्वणि षोड्शराजिके षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

नारद उवाच । राजानं पौरवं वीरं मृतं सृञ्जय शुश्रुम ।
यः सहस्रं सहस्राणां श्वेतानश्वानवासृजत् ॥ १ ॥ तस्याश्वमेधे
राजर्षेर्देशाद्देशात् समेयुषाम् । शिक्षाक्षरविधिज्ञानां नासीत्
सङ्ख्या विपश्चिताम् ॥ २ ॥ वेदविद्याव्रतस्नाता वदान्याः प्रिय-
दर्शनाः । सुभिक्षाच्छादनगृहाः सुशय्यासनवाहनाः ॥ ३ ॥ नट-
नर्त्तकगन्धर्वैः पूर्णकैर्वर्द्धमानकैः नित्योद्योगैश्च क्रीडद्भिस्तत्र स्म परि-
हर्षिताः ॥ ४ ॥ यज्ञे यज्ञे यथा कालं दक्षिणाः सोऽत्यकाल-
यत् । द्विपा दशसहस्राख्या प्रमदाः काञ्चनप्रभाः ॥ ५ ॥ स-
ध्वजाः सपताकाश्च रथा हेममयास्तथा । यः सहस्रं सहस्राणां
कन्या हेमविभूषिताः ॥ ६ ॥ धुर्य्याश्वगजारूढाः सगृहक्षेत्र-
गोशताः । शत शतसहस्राणि स्वर्णमाली महात्मनाम् ॥ ७ ॥
गवां सहस्रानुचरान् दक्षिणामत्यकालयत् । तत्रास्य गाथा
गायन्ति ये पुराणविदो जनाः ॥ ८ ॥ हेमशृङ्ग्यो रौप्यखुराः
सवत्साः कांस्यदोहनाः । दासीदासखरोष्ट्रांश्च प्रादादाजाविकं
बहु ॥ ९ ॥ रत्नानां विविधानाञ्च विविधांश्चान्नपर्वतान् । तस्मिन्
संवितते यज्ञे दक्षिणामत्यकालयत् ॥ १० ॥ अङ्गस्य यजमानस्य
स्वधर्माधिगताः शुभाः । गुणोत्तरास्तु क्रतवस्तस्यासन् सार्व-
कामिकाः ॥ ११ ॥ स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया । पुत्रात्
पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः । अयज्वानमदाक्षिण्यमभि-
श्वैत्येति व्याहरन् ॥ १२ ॥

इति द्रोणपर्वणि अभिमन्युवधपर्वणि षोड़शराजिके
सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

---

नारद उवाच । शिविमौशीनरञ्चापि मृतं सृञ्जय शुश्रुम ।
य इमां पृथिवीं सर्वाञ्चर्मवत् पर्य्यवेष्टयत् ॥ १ ॥ साद्रिद्वीपार्णव-

वना रथघोषेण नादयन्। स शिविर्य्यद्रिपून्नित्यं मुख्यान्निघ्नन्
सपत्नजित् ॥ २ ॥ तेन यज्ञैर्बहुविधैरिष्टं पर्य्याप्तदक्षिणैः। स
राजा वीर्य्यवान् धीमानवाप्य वसु पुष्कलम् ॥ ३ ॥ सर्वमूर्द्धाभि-
षिक्तानां सम्मतः सोऽभवद्युधि। अयजच्चाश्वमेधैर्यो विजित्य
पृथिवीमिमाम् ॥ ४ ॥ निरर्गलैर्बहुफलैर्निष्ककोटिसहस्रदः। हस्त्य-
श्वपशुभिर्धान्यैर्मृगैर्गोऽजाविभिस्तथा ॥ ५ ॥ विविधां पृथिवीं
पुण्यां शिविर्ब्राह्मणसात्करोत्। यावत्यो वर्षतो धारा यावत्यो
दिवि तारकाः ॥ ६ ॥ यावत्यः सिकता गाङ्ग्यो यावन्मेरोर्महो-
पलाः। उदन्वति च यावन्ति रत्नानि प्राणिनोऽपि च ॥ ७ ॥
तावतीरददद्गा वै शिविरौशीनरोऽध्वरे। नो यन्तारं धुरन्तस्य
कश्चिदन्यं प्रजापतिः ॥ ८ ॥ भूतं भव्यं भवन्तं वा नाध्यगच्छ-
न्नरेश्वरम्। तस्यासन् विविधा यज्ञाः सर्वकामैः समन्विताः
॥ ९ ॥ हेमयूपासनगृहा हेमप्राकारतोरणाः। शुचि स्वाद्वन्नपानश्च
ब्राह्मणाः प्रयुतायुताः ॥ १० ॥ नानाभक्ष्यैः प्रियकथाः पयोदधि-
महाह्रदाः। तस्यासन् यज्ञवाटेषु नद्यः शुभ्रान्नपर्वताः ॥ ११ ॥
पिबत स्नात खादध्वमिति यत्रोच्यते जनाः। तस्मै प्रादाद्वरं रुद्र-
स्तुष्टः पुण्येन कर्म्मणा ॥ १२ ॥ अक्षयं ददतो वित्तं श्रद्धा कीर्त्ति-
स्तथा क्रिया। यथोक्तमेव भूतानां प्रियत्वं सर्वमुत्तमम्। १३ ॥
एतांल्लब्ध्वा वरानिष्टान् शिविः काले दिवङ्गतः। स चेन्ममार
सृञ्जय चतुर्भद्रतरस्त्वया ॥ १४ ॥ पुत्रात् पुण्यतरस्तुभ्यं मा पुत्र-
मनुतप्यथाः। अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरन् ॥ १५ ॥

इति द्रोणपर्व्वणि अभिमन्युवधपर्व्वणि षोड़शराजिके

अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

नारद उवाच। राम दाशरथिञ्चैव मृतं सृञ्जय शुश्रुम। य प्रजा अन्वमोदन्त पिता पुत्रानिवौरसान् ॥ १ ॥ असङ्ख्येया गुणा यस्मिन्नासन्नमिततेजसः। यश्चतुर्द्दशवर्षाणि निदेशात् पितुरच्युत ॥ २ ॥ वने वनितया सार्द्धमवसल्लक्ष्मणाग्रजः। जघान च जनस्थाने राक्षसान् मनुजर्षभ ॥ ३ ॥ तपस्विनां रक्षणार्थं सहस्राणि चतुर्द्दश। तत्रैव वसतस्तस्य रावणो नाम राक्षसः ॥४॥ जहार भार्य्यां वैदेहीं सम्मोह्यैनं सहानुजम्। तमागस्कारिणं रामः पौलस्त्यमजितं परैः ॥ ५ ॥ जघान समरे क्रुद्धः पुरेव त्र्यम्बकोऽन्धकम्। सुरासुरैरवध्यन्तं देवब्राह्मणकण्टकम् ॥ ६ ॥ जघान स महाबाहुः पौलस्त्यं सगणं रणे। स प्रजानुग्रहं कृत्वा त्रिदशैरभिपूजितः ॥ ७ ॥ व्याप्य कृत्स्नं जगत् कीर्त्त्या सुरार्षिगणसेवितः। स प्राप्य विविधं राज्यं सर्व्वभूतानुकम्पकः ॥ ८ ॥ आजहार महायज्ञं प्रजा धर्म्मेण पालयन्। निरर्गलं सजारूप्यमश्वमेधशतं विभुः ॥ ९ ॥ आजहार सुरेभ्यश्च हविषामुदमावहत्। अन्यैश्च विविधैर्यज्ञैरीजे बहुगुणैर्नृप ॥ १० ॥ क्षुत्पिपासेऽजयद्राम सर्व्वरोगांश्च देहिनाम्। सततं गुणसम्पन्नो दीप्यमानः स्वतेजसा ॥ ११ ॥ अतिसर्व्वाणि भूतानि रामो दाशरथिर्बभौ। ऋषीणां देवतानाञ्च मानुषाणाञ्च सर्व्वशः ॥ १२ ॥ पृथिव्यां सह वासोऽभूद्रामे राज्यं प्रशासति। नाहीयन्त तदा प्राणाः प्राणिनां न तदन्यथा ॥ १३ ॥ प्राणापानसमानाश्च रामे राज्यं प्रशासति। पर्य्यदीप्यन्त तेजांसि तथानर्थाश्च नाभवन् ॥१४॥ दीर्घायुषः प्रजाः सर्व्वा युवा न म्रियते तदा। वेदैश्चतुर्भिः सुप्रीताः प्राप्नुवन्ति दिवौकसः ॥ १५ ॥ हव्यं कव्यञ्च विविधं निष्पूर्त्तं हुतमेव च। अदंशमशका देशा नष्टव्यालसरीसृपाः ॥ १६ ॥ नाप्सु प्राणभृतां मृत्युर्नाकाले ज्वलनोऽदहत्। अधर्म्मरुचयो लुब्धा मूर्खा वा नाभवंस्तदा ॥ १७ ॥ प्रजाः शिष्टेष्टकर्म्माणः सर्व्वे वर्णाः

सदाभवत् । स्वर्गे दृश्यते रथोभिर्नित्यमाने प्रयाचिते ॥ १८ ॥ मायाभिर्बहु रक्षांसि विदर्द्धैश ईश्वरः । सहस्रपुत्राः पुरुषा दृषपर्वनराधिपः ॥ १९ ॥ न च ज्येष्ठाः कनिष्ठेभ्यस्तदा श्राद्धान्यकारयत् । पुत्रा यस्यासौ लोहिताक्षो मत्तमातङ्गविक्रमः ॥ २० ॥ आजानुबाहुः सुमुखः सिंहस्कन्धो महाबलः । दशवर्षसहस्राणि दशवर्षशतानि च ॥ २१ ॥ सर्वभूतमनःकान्तो रामो राज्यमकारयत् । रामो रामो राम इति प्रजानामभवत् कथा ॥ २२ ॥ रामात् रामं रामभूतामे राज्यं प्रशासति । चतुर्विधाः प्रजा रामः स्वर्गं नीत्वा दिवं गतः ॥ २३ ॥ आत्मानं सम्प्रतिष्ठाप्य राजवंशमिहाष्टधा । स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ॥२४॥ पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः । अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरन् ॥ २५ ॥

इति द्रोणपर्वणि अभिमन्युवधपर्वणि षोड़शराजिके एकोनषष्टोऽध्यायः ॥ ५९ ॥

---

नारद उवाच । भगीरथश्चेद्राजानं मृतं सृञ्जय शुश्रुम । येन भागीरथी गङ्गा चयनैः काञ्चनैश्चिता ॥ १ ॥ यः सहस्र सहस्राणां कन्या हेमादिभूषिताः । राज्ञश्च राजपुत्रांश्च ब्राह्मणेभ्योऽयमन्यत ॥ २ ॥ सर्वारथगताः कन्या रथाः सर्वे चतुर्युजः । रथे रथे शतं नागाः सर्वे वै हेममालिनः ॥ ३ ॥ सहस्रमश्वा एकैकं राजानं पृष्ठतोऽन्वयुः । अश्वे अश्वे शतं गावो गवां पश्चादजाविकम् ॥ ४ ॥ तेनाक्रान्ता जनौघेन दक्षिणा भूयसीर्ददत् । उपह्वरेऽतिबाधिता तस्याङ्के निषसाद ह ॥ ५ ॥ तथा भागीरथी गङ्गा उर्वशी चाभवत् पुरा । दुहितृत्वं गता राज्ञः पुत्रत्वमगमत्तदा ॥ ६ ॥ तान्तु गाथा जगुः प्रीता गन्धर्वाः सूर्यवर्चसः ।

पितृदेवमनुष्याणां शृण्वतां वल्गुवादिनाम् ॥ ७ ॥ भगीरथं यजमानमैक्ष्वाकं भूरिदक्षिणम् । गङ्गा समुद्रगा देवी वव्रे पितरमीश्वरम् ॥ ८ ॥ तस्य सेन्द्रैः सुरगणैर्देवैश्च समलङ्कृतः । सम्यक् परिगृहीतश्च शान्तविघ्नो निरामयः ॥ ९ ॥ यो यदिच्छेत विप्रो वै यत्र यत्रात्मनः प्रियम् । भगीरथस्तदा प्रीतस्तत्र तत्रानयद्वशी ॥ १० ॥ नादेयं ब्राह्मणेभ्यश्चासीत् यस्य यत् स्यात् प्रियं धनम् । सोऽपि विप्रप्रसादेन ब्रह्मलोकगतो नृपः ॥ ११ ॥ येन यातौ मखमुखौ दिग्माणाविहृपाद्वपा । तेनावस्थातुमिच्छन्ति न गत्वात्मानमीश्वरम् ॥ १२ ॥ स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया । पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः । अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरन् ॥ १३ ॥

इति द्रोणपर्वणि अभिमन्युवधपर्वणि षोड़शराजिके षष्टितमोऽध्यायः ॥ ६० ॥

———

नारद उवाच । दिलीपं वै चैलविलं मृतं सृञ्जय शुश्रुम । यस्य यज्ञशतेष्वासन् प्रयुतायुतशो द्विजाः ॥ १ ॥ तत्त्वज्ञानार्थसम्पन्ना यज्वानः पुत्रपौत्रिणः । य इमां वसुसम्पूर्णां वसुधां वसुधाधिप ॥ २ ॥ ईजानो वितथैर्यज्ञैर्ब्राह्मणेभ्यो ह्यमन्यत । दिलीपस्य च यज्ञेषु कृतः पन्था हिरण्मयः ॥ ३ ॥ तं धर्ममिव कुर्वाणा सेन्द्रा देवाः समागमन् । चषालः प्रचषालश्च यस्य यूपे हिरण्मये ॥ ४ ॥ रागखाण्डवभोज्येषु मत्ताः पथिषु शेरते । तदेतदद्भुतं मन्ये अन्येन सदृशं नृपे ॥ ५ ॥ यस्योदकेषु युध्यमानस्य चक्रे न परिपेततुः । राजानं दृढधन्वानं दिलीपं सत्यवादिनम् ॥ ६ ॥ येऽपश्यन् भूरिदाक्षिण्यं तेऽपि स्वर्गजितो नराः । पञ्च शब्दा न जीर्यन्ते खट्वाङ्गस्य निवेशने ॥ ७ ॥ स्वाध्याय-

णेभ्यो विभाज्यते। हैरण्यान् योजनोत्सेधान् आयतान् दश-
योजनम् ॥ १३ ॥ बहुप्राकारान् सुस्वादून् भक्ष्यभोज्यान्नपर्वतान्।
अतिरिक्तं ब्राह्मणेभ्यो भुञ्जन्नाद्रीयते जनः ॥ १४ ॥ भक्ष्यान्न-
पाननिचयाः शुशुभुस्त्वन्नपर्वताः। घृतह्रदाः सूपपङ्का दधिफेना
गुडोदकाः ॥ १५ ॥ रुरुधुः पर्वतान् नद्यो मधुक्षीरवहाः शुभाः।
देवासुरनरा यक्षा गन्धर्वोरगपक्षिणः ॥ १६ ॥ विप्रास्तत्रागता-
श्चासन् वेदवेदाङ्गपारगाः। ब्राह्मणा ऋषयश्चापि नासंस्तत्रा-
विपश्चितः ॥ १७ ॥ समुद्रान्तां वसुमतीं वसुपूर्णाञ्च सर्वतः। स
तां ब्राह्मणसात् कृत्वा जगामास्तं तदा नृपः ॥ १८ ॥ गतः
पुण्यकृतांल्लोकान् सुव्याप्य यशसा दिवः। स चेन्ममार सृञ्जय
चतुर्भद्रतरस्त्वया ॥ १९ ॥ पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनु-
तप्यथाः। अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरन् ॥ २० ॥

इति द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजिके
द्विषष्टोऽध्यायः ॥ ६२ ॥

---

नारद उवाच। ययातिं नाहुषञ्चैव मृतं सृञ्जय शुश्रुम।
राजसूयशतैरिष्ट्वा सोऽश्वमेधशतेन च ॥ १ ॥ पुण्डरीकसहस्रेण
वाजपेयशतैस्तथा। अतिरात्रसहस्रेण चातुर्मास्यैश्च कामतः ॥२॥
अग्निष्टोमैश्च विविधैः सत्रैश्च प्राज्यदक्षिणैः। अब्राह्मणानां यद्वित्तं
पृथिव्यामस्ति किञ्चन ॥ ३ ॥ तत्र सर्वं परिसङ्ख्याय ततो ब्राह्मण-
सात्करोत्। व्यूढे देवासुरे युद्धे कृत्वा देवसहायताम् ॥ ४ ॥
चतुर्धा व्यभजत् सर्वां चतुर्भ्यः पृथिवीमिमाम्। यज्ञैर्नानाविधै-
रिष्ट्वा प्रजामुत्पाद्य चोत्तमाम् ॥ ५ ॥ दैवयान्यामौशनस्यां धर्मि-
ष्ठायाञ्च धर्मतः। देवारण्येषु सर्वेषु विजहारामरोपमः ॥ ६ ॥
आत्मनः कामचारेण द्वितीय इव वासवः। यदा नाध्यगमच्छान्तिं

घोषो स्वाध्यायघोषश्च पिबताश्नीत खादत । स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ॥ ८ ॥ पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः । अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरन् ॥ ९ ॥

इति द्रोणपर्व्वणि अभिमन्युवधपर्व्वणि षोड़शराजिके एकषष्टोऽध्यायः ॥ ६१ ॥

---

नारद उवाच । मान्धाता चेद्यौवनाश्वो मृतं सृञ्जय शुश्रुम । देवासुरमनुष्याणां त्रैलोक्यविजयी नृपः ॥ १ ॥ यं देवावश्विनौ गर्भात् पितुः पूर्वं चकर्षतुः । मृगयां विचरन् राजा तृषितः श्रान्तवाहनः ॥ २ ॥ धूमं दृष्ट्वागमत् सत्रं पृषदाज्यमवाप च । तं दृष्ट्वा युवनाश्वस्य जठरे सूनुतां गतम् ॥ ३ ॥ गर्भाद्धि जह्रतुर्देवावश्विनौ भिषजाम्वरौ । तं दृष्ट्वा पितुरुत्सङ्गे शयानं देववर्च्चसम् ॥ ४ ॥ अन्योऽन्यमब्रुवन् देवाः कमयं धास्यतीति वै । मामेवायं धयत्वग्रे इति स्माह वासवः ॥ ५ ॥ ततोऽङ्गुलिभ्यो हीन्द्रस्य प्रादुरासीत् पयोऽमृतम् । मां धास्यतीति कारुण्यात् यदीन्द्रो ह्यन्वकम्पयत् ॥ ६ ॥ तस्मात्तु मान्धातेत्येव नाम तस्य तु तत् कृतम् । ततस्तु धारा पयसो घृतस्य च महात्मनः ॥ ७ ॥ तस्यास्ये यौवनाश्वस्य पाणिरिन्द्रस्य चास्रवत् । अपिबत् पाणिमिन्द्रस्य तमाह्नाद्य व्यवर्द्धत ॥ ८ ॥ सोऽभवद्द्वादशसमो द्वादशाहेन वीर्य्यवान् । इमाञ्च पृथिवीं कृत्स्नामेकाह्ना स व्यजीजयत् ॥ ९ ॥ धर्म्मात्मा धृतिमान् वीरः सत्यसन्धो जितेन्द्रियः । जनमेजयं सुधन्वानं गयं पूरुं बृहद्रथम् ॥ १० ॥ असितञ्च नृगञ्चैव मान्धाता मनुजोऽजयत् । उदेति च यतः सूर्य्यो यत्र च प्रतितिष्ठति ॥ ११ ॥ तत् सर्वं यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते । सोऽश्वमेधशतैरिष्ट्वा राजसूयशतेन च ॥ १२ ॥ अददद्रोहितान्मत्स्यान् ब्राह्म

येभ्यो विधास्यते । हैरण्यान् योजनोत्सेधान् आयतान् दश-योजनम् ॥ १३ ॥ बहुप्राकारान् सुस्वादून् भक्ष्यभोज्यान्नपर्वतान् । अतिरिक्तं ब्राह्मणेभ्यो भुञ्जन्नाह्रीयते जन ॥ १४ ॥ भक्ष्यान्न पाननिचया शुशुभुस्त्वन्नपर्वता । घृतह्रदा सूपपङ्का दधिफेणा गुडोदका ॥ १५ ॥ रुरुधु पर्वतान् नद्यो मधुक्षीरवहा शुभा । देवासुरनरा यक्षा गन्धर्वोरगपक्षिण ॥ १६ ॥ विप्रास्तत्रागता आसन् वेदवेदाङ्गपारगा । ब्राह्मणा ऋषयश्चापि नासंस्तत्रा-विपश्चित ॥ १७ ॥ समुद्रान्तां वसुमतीं वसुपूर्णाञ्च सर्वत । स तां ब्राह्मणसात् कृत्वा जगामास्तं तदा नृप ॥ १८ ॥ गत पुण्यकृताल्लोकान् सव्याप्य यशसा दिव । स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ॥ १९ ॥ पुत्रात् पुण्यतरस्तुभ्य मा पुत्रमनु तप्यथा । अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरन् ॥ २० ॥

इति द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजिके द्विषष्टोऽध्याय ॥ ६२ ॥

---

नारद उवाच । ययातिं नाहुषञ्चैव मृत सृञ्जय शुश्रुम । राजसूयशतैरिष्ट्वा सोऽश्वमेधशतेन च ॥ १ ॥ पुण्डरीकसहस्रेण वाजपेयशतैस्तथा । अतिरात्रसहस्रेण चातुर्मास्यैश्च कामत ॥२॥ अग्निष्टोमैश्च विविधै सत्रैश्च प्राज्यदक्षिणै । अब्राह्मणानां यद्वित्त पृथिव्यामस्ति किञ्चन ॥ ३ ॥ तत सर्व परिसङ्ख्याय ततो ब्राह्मण-सात्करोत् । व्यूढे देवासुरे युद्धे कृत्वा देवसहायताम् ॥ ४ ॥ चतुर्धा व्यभजत् सर्वां चतुर्भ्य पृथिवीमिमाम् । यज्ञैर्नानाविधै-रिष्ट्वा प्रजामुत्पाद्य चोत्तमाम् ॥ ५ ॥ देवयान्याञ्चौशनस्यां धर्मे छायाञ्च धर्मत । देवारण्येषु सर्वेषु विजह्रासामरोपम ॥ ६ ॥ आत्मन कामचारेण द्वितीय इव वासव । यदा नाध्यगमच्छान्ति

कामानां सर्ववेदवित् ॥ ७ ॥ ततो गाथामिमां गीत्वा सदार प्राविशद्वनम् । यत् पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ॥ ८ ॥ नालमेकस्य तत् सर्वमिति मत्वा शमं व्रजेत् । एवं कामान् परित्यज्य ययातिर्धृतिमेत्य च ॥ ९ ॥ पूरुं राज्ये प्रतिष्ठाप्य प्रयातो वनमीश्वरः । स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ॥ १० ॥ पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः । अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरन् ॥ ११ ॥

इति द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजिके त्रिषष्टोऽध्यायः ॥ ६३ ॥



नारद उवाच । नाभागमम्बरीषञ्चैव मृतं सृञ्जय शुश्रुम । यः सहस्रं सहस्राणां राज्ञां ह्येकस्त्वयोधयत् ॥ १ ॥ जिगीषमाणान् सङ्ग्रामे समन्ताद्वैरिणोऽभ्ययात । अस्त्रयुद्धविदो घोरान् सृजन्तश्चाशिवा गिरः ॥ २ ॥ बललाघवशिक्षाभ्यां तेषां सोऽस्त्रबलेन च । छत्रायुधध्वजरथान् छित्त्वा प्राणान् गतव्यथः ॥ ३ ॥ त एनं मुक्तसन्नाहाः प्रार्थयन् जीवितैषिणः । शरण्यमीयुः शरणं तव स्म इति वादिनः ॥ ४ ॥ स तु तान् वशगान् कृत्वा जित्वा चेमां वसुन्धराम् । ईजे यज्ञशतैरिष्टैर्यथाशास्त्रं तथानघ ॥ ५ ॥ बुभुजुः सर्वसम्पन्नमन्नमन्ये जनास्तदा । तस्मिन् यज्ञे तु विप्रेन्द्राः सुतृप्ताः परमार्चिताः ॥ ६ ॥ मोदकान् पूरिकान् पूपान् स्वादुपूर्णाश्च शष्कुलीः । करम्भान् पृथुमृद्वीकाः अन्नानि सुकृतानि च ॥ ७ ॥ सूपान् मैरेयकान् पूपान् रागखाण्डवपानकान् । मिष्टान्नानि सुयुक्तानि मृदूनि सुरभीणि च ॥ ८ ॥ घृतं मधु पयस्तोयं दधीनि रसवन्ति च । फलं मूलञ्च सुस्वादु द्विजास्तत्रोपभुञ्जते ॥ ९ ॥ मादनीयानि पानानि विदित्वा चात्मन

सहस्रम् । अपिबन्ति यथाकामं पानपा गीतवादितैः ॥ १० ॥
यत्र स्म गाथा गायन्ति प्रीता हृष्टाः पतन्ति च । नाभागस्तुति-
संयुक्ता ननृतुश्च सहस्रशः ॥ ११ ॥ तेषु यज्ञेष्वम्बरीषो दक्षिणा-
मत्यकालयत् । राज्ञां शतसहस्राणि दशप्रयुतयाजिनाम् ॥ १२ ॥
हिरण्यकवचान् सर्वान् श्वेतच्छत्रप्रकीर्णकान् । हिरण्यस्यन्दना-
रूढान् सानुयात्रपरिच्छदान् ॥ १३ ॥ ईजानो विविधैर्यज्ञै-
र्दक्षिणामत्यकालयत् । मूर्द्धाभिषिक्तांश्च नृपान् राजपुत्रशतानि
च ॥ १४ ॥ सदण्डकोषनिचयान् ब्राह्मणेभ्यो ह्यमन्यत । नैवं
पूर्वे जनाश्चक्रुर्न करिष्यन्ति चापरे ॥ १५ ॥ यदम्बरीषो नृपतिः
करोत्यमितदक्षिणः । इत्येवमनुमोदन्ते प्रीता यस्य महर्षयः ॥ १६ ॥
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया । पुत्रात् पुण्यतरस्तुभ्यं मा
पुत्रमनुतप्यथाः । अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरन् ॥ १७ ॥

इति द्रोणपर्वणि अभिमन्युवधपर्वणि षोड़शराजिके
चतुःषष्टोऽध्यायः ॥ ६४ ॥

---

नारद उवाच । शशबिन्दुञ्च राजानं मृतं सृञ्जय शुश्रुम ।
ईजे स विविधैर्यज्ञैः श्रीमान् सत्यपराक्रमः ॥ १ ॥ तस्य भार्य्या-
सहस्राणां शतमासीन्महात्मनः । एकैकस्याञ्च भार्य्यायां सहस्रं
तनयाभवन् ॥ २ ॥ ते कुमाराः पराक्रान्ताः सर्वे नियुतयाजिनः ।
राजानः क्रतुभिर्मुख्यैरीजाना वेदपारगाः ॥ ३ ॥ हिरण्यकवचाः
सर्वे सर्वे चोत्तमधन्विनः । सर्वेऽश्वमेधैरीजानाः कुमाराः शश-
बिन्दवः ॥ ४ ॥ तानश्वमेधे राजेन्द्रो ब्राह्मणेभ्योऽददत् पिता ।
शतं शतं रथगजा एकैकं पृष्ठतोऽन्वयुः ॥ ५ ॥ राजपुत्रं तदा
कन्यास्तपनीयस्वलङ्कृताः । कन्यां कन्यां शतं नागा नागे नागे
शतं रथाः ॥ ६ ॥ रथे रथे शतञ्चाश्वा वाजिनो हेममालिनः ।

अश्वे अश्वे सहस्राणि गवां पञ्चाशदाविकाः ॥ ७ ॥ एतद्धनमप
र्य्यन्तमश्वमेधे महामखे । ते तथैव पुनर्यान्ये तावन्तः काञ्चना
भवन् ॥ ८ ॥ भक्ष्यान्नपाननिचयाः पर्वताः क्रोशमुच्छ्रिताः ।
तस्याश्वमेधे निर्वृत्ते राज्ञः शिष्टास्त्रयोदश ॥ ९ ॥ तुष्टपुष्टजना
कीर्णां शान्तविघ्नास्त्वनामयाम् । शशबिन्दुरिमां भूमिं चिरं भुक्त्वा
दिवं गतः ॥ १० ॥ स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः । अयज्वानमदाक्षिण्य
मभिश्वैत्येति व्याहरन् ॥ ११ ॥

इति द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजिके
पञ्चषष्टोऽध्यायः ॥ ६५ ॥

---

ह्यसमाप्तदक्षिणाः । ईजे च विविधैर्यज्ञैर्यथा सोमोऽङ्गिरा यथा
॥ १० ॥ सौवर्णां पृथिवीं कृत्वा य इमां मणिशर्कराम् । विप्रेभ्यः
प्राददद्राजा ह्यश्वमेधे महामखे ॥ ११ ॥ जाम्बूनदमया यूपाः
सर्वे रत्नपरिच्छदाः । गयस्यासन् समृद्धास्तु सर्वभूतमनोहराः
॥ १२ ॥ सर्वकामसमृद्धञ्च प्रादादन्नं गयस्तथा । ब्राह्मणेभ्यः
प्रहृष्टेभ्यः सर्वभूतेभ्य एव च ॥ १३ ॥ ससमुद्रवनद्वीपनदीनदवनेषु
च । नगरेषु च राष्ट्रेषु दिवि व्योम्नि च येऽवसन् ॥ १४ ॥ भूत-
ग्रामाश्च विविधाः सन्तृप्ता यज्ञसम्पदा । गयस्य सदृशो यज्ञो
नास्त्यन्य इति तेऽब्रुवन् ॥ १५ ॥ षड्विंशद्योजनायामा त्रिंश-
द्योजनमायता । पश्चात् पुरश्चतुर्विंशद्वेदी ह्यासीद्धिरण्मयी ॥ १६ ॥
गयस्य यजमानस्य मुक्तावज्रमणिस्तृता । प्रादात् स ब्राह्मणे-
भ्योऽथ वासांस्याभरणानि च ॥ १७ ॥ यथोक्ता दक्षिणाश्चान्याः
विप्रेभ्यो भूरिदक्षिणः । यत्र भोजनशिष्टस्य पर्वताः पञ्चविंशतिः
॥ १८ ॥ कुल्याः कुशलवाहिन्यो रसानामभवंस्तदा । वस्त्रा-
भरणगन्धानां राशयश्च पृथग्विधाः ॥ १९ ॥ यस्य प्रभावाच्च गय-
स्त्रिषु लोकेषु विश्रुतः । वटश्चाक्षयकरणः पुण्यं ब्रह्मसरश्च तत्
॥ २० ॥ स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया । पुत्रात् पुण्य-
तरस्तुभ्यं मा पुत्रमनुतप्यथाः । अयज्वानमदाक्षिण्यमभिश्वैत्येति
व्याहरन् ॥ २१ ॥

इति द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजिके
षट्षष्टोऽध्यायः ॥ ६६ ॥

---

नारद उवाच । साङ्कृतं रन्तिदेवञ्च मृतं सृञ्जय शुश्रुम ।
यस्य द्विशतसाहस्रा आसन् सूदा महात्मनः ॥ १ ॥ गृहानभ्या-
गतान् विप्रानतिथीन् परिवेषकाः । पक्वापक्वं दिवारात्रमपर्य्याप्त

धनं तदा ॥ २ ॥ न्यायेनाधिगतं वित्तं ब्राह्मणेभ्यो ह्यमन्यत।
वेदानधीत्य धर्मेण यश्चक्रे द्विषतो वशे ॥ ३ ॥ उपस्थिताश्च पशवः
स्वयं यं संशितव्रतम्। बहवः स्वर्गमिच्छन्तो विधिवत् सत्रयाजि-
नम् ॥ ४ ॥ नदी महानसाद्यस्य प्रवृत्ता चर्मराशितः। ततश्च-
र्मण्वती पूर्वमग्निहोत्रेऽभवत् पुरा ॥ ५ ॥ ब्राह्मणेभ्योऽददन्निष्कं
सौवर्णस्य प्रभावतः। तुभ्यन्निष्कन्तुभ्यन्निष्कमिति स्म प्रभाषते
॥ ६ ॥ तुभ्यं तुभ्यमिति प्रादात् निष्कान् निष्कान् सहस्रशः।
ततः पुनः समाश्वास्य निष्कानेव प्रयच्छति ॥ ७ ॥ अल्पं दत्तं
मयाद्येति निष्ककोटिं प्रदाय सः। एकाह्ना दास्यति पुनः को-
ऽन्यस्तत् सम्प्रदास्यति ॥ ८ ॥ द्विजपाणिवियोगेन दुःखं मे शाश्वतं
महत्। भविष्यति न सन्देह एवं राजाददद्वसु ॥ ९ ॥ सह-
स्रशश्च सौवर्णान्वृषभान् गोशतानुगान्। साष्टं शतं सुवर्णानां
निष्कमाहुर्धनं तदा ॥ १० ॥ अध्यर्द्धमासमददद्ब्राह्मणेभ्यः शमाः
शतम्। अग्निहोत्रोपकरणं यज्ञोपकरणञ्च यत् ॥ ११ ॥ ऋषिभ्यः
करकान् कुम्भान् स्थालीः पिठरमेव च। शयनासनयानानि
प्रासादांश्च गृहाणि च ॥ १२ ॥ वृक्षांश्च विविधान् दद्यादन्नानि
विविधानि च। सर्वं सौवर्णमेवासीद्रन्तिदेवस्य धीमतः ॥ १३ ॥
तत्र स्म गाथा गायन्ति ये पुराणविदो जनाः। रन्तिदेवस्य
तान् दृष्ट्वा समृद्धिमतिमानुषीम् ॥ १४ ॥ नैतादृशं दृष्टपूर्वं कुबेर-
सदनेष्वपि। धनञ्च पूर्य्यमाणं नः किं पुनर्मनुजेष्वपि ॥ १५ ॥
व्यक्तं वस्वोकसारेयमित्यूचुस्तत्र विस्मिताः। सांकृतेरन्तिदेवस्य
या रात्रिमतिथिर्भवेत् ॥ १६ ॥ आलभ्यन्त तदा गावः सहस्रा-
ण्येकविंशतिः। तत्र स्म सूदाः क्रोशन्ति सुमृष्टमणिकुण्डलाः
॥ १७ ॥ सूपभूयिष्ठमश्नीध्वं नाद्य मांसं यथा पुरा। रन्ति-
देवस्य यत्किञ्चित् सौवर्णमभवत्तदा ॥ १८ ॥ तत् सर्वं वितते
यज्ञे ब्राह्मणेभ्यो ह्यमन्यत। प्रत्यक्षं तस्य हव्यानि प्रतिगृह्णन्ति

देवता ॥ १९ ॥ कव्यानि पितरः काले सर्वकामान् द्विजोत्तमाः ।
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ॥ २० ॥ पुत्रात् पुण्यतर-
स्तुभ्यं मा पुत्रमनुतप्यथाः । अयज्वानमदाक्षिण्यमभिश्वैत्येति
व्याहरन् ॥ २१ ॥

इति द्रोणपर्वणि अभिमन्युवधपर्वणि षोड़शराजिके
सप्तषष्टोऽध्यायः ॥ ६७ ॥

---

नारद उवाच । दौष्मन्तिं भरतञ्चापि मृतं सृञ्जय शुश्रुम ।
कर्माण्यसुकराण्यन्यैः कृतवान् यः शिशुर्वने ॥ १ ॥ हिमावदातान्
यः सिंहान्नखदंष्ट्रायुधान् बली । निर्वीर्यांस्तरसा कृत्वा विच-
कर्ष बबन्ध च ॥ २ ॥ क्रूरांश्चोग्रतरान् व्याघ्रान् दमित्वा चाकरो-
द्वशे । मनःशिलासमायुक्तान् सम्पृक्तान् धातुराशिभिः ॥ ३ ॥
व्यालांश्चैवातिबलवान् सुप्रतीकान् गजानिति । दंष्ट्रासु गृह्य
विमुखान् शुष्कास्यानकरोद्वशे ॥ ४ ॥ महिषानप्यतिबलान् बलिनो
विचकर्ष ह । सिंहानां च सहस्राणि शतान्यदमयद्बलात् ॥ ५ ॥
बलिनः सृमरान् खड्गान्नानासत्त्वानि चाप्युत । कृच्छ्रप्राणं
वने बद्ध्वा दमयित्वाप्यवासृजत् ॥ ६ ॥ तं सर्वदमनेत्याहुर्स्तं
द्विजास्तेन कर्मणा । तम्प्रत्यषेधज्जननी मा सत्त्वानि विजीजहि
॥ ७ ॥ सोऽश्वमेधशतेनेष्ट्वा यमुनामनुवीर्यवान् । त्रिशतांश्वान्
सरस्वत्या गङ्गामनु चतुःशतान् ॥ ८ ॥ सोऽश्वमेधसहस्रेण राज-
सूयशतेन च । पुनरीजे महायज्ञैः समाप्तवरदक्षिणैः ॥ ९ ॥
अग्निष्टोमातिरात्राभ्यामुक्थ्यत्रा विश्वजिता अपि । वाजपेयसह-
स्राणां सहस्रैश्च सुसंहतैः ॥ १० ॥ इष्ट्वा शाकुन्तलो राजा तर्प-
यित्वा द्विजान् धनैः । सहस्रं यत्र पद्मानां कण्वाय भरतो ददौ
॥ ११ ॥ जाम्बूनदस्य शुद्धस्य कनकस्य महायशाः । यस्य यूपः
शतव्यामः परिणाहेन काञ्चनः ॥ १२ ॥ समागम्य द्विजैः सार्द्धं

धन तदा ॥ २ ॥ न्यायेनाधिगत वित्त ब्राह्मणेभ्यो ह्यमन्यत।
वेदानधीत्य धर्मेण यश्चक्रे द्विषतो वशे ॥ ३ ॥ उपस्थिताश्च पशव
स्वय च संशितव्रतम्। बहव स्वर्गमिच्छन्तो विधिवत् सत्रयाजि-
नम् ॥ ४ ॥ नदी महानसाद्यस्य प्रवृत्ता चर्मराशित । तस्मा-
च्चर्मण्वती पूर्वमग्निहोत्रेऽभवत् पुरा ॥ ५ ॥ ब्राह्मणेभ्योऽददन्निष्कान्
सौवर्णस्य प्रभावत । तुभ्यन्निष्कन्तुभ्यन्निष्कमिति स्म प्रभाषते
॥ ६ ॥ तुभ्य तुभ्यमिति प्रादात निष्कान् निष्कान् सहस्रश ।
तत पुन समाश्वास्य निष्कानेव प्रयच्छति ॥ ७ ॥ अल्प दत्त
मयाद्येति निष्ककोटि प्रदाय स । एकाह्ना दास्यति पुन को-
ऽन्यस्तत् सम्प्रदास्यति ॥ ८ ॥ द्विजपाणिवियोगेन दुःख मे शाश्वत
महत्। भविष्यति न सन्देह एव राजाददद्वसु ॥ ९ ॥ सह-
स्रश्च सौवर्णान्वृषभान् गोशतानुगान्। साष्ट शत सुवर्णाना
निष्कमाहुर्धन तदा ॥ १० ॥ अध्यर्धमासमददद्ब्राह्मणेभ्य शता
समाम्। अग्निहोत्रोपकरण यज्ञोपकरणञ्च यत् ॥ ११ ॥ ऋषिभ्य
करकान् कुम्भान् स्थाली पिठरमेव च। शयनासनयानानि
प्रासादाश्च गृहाणि च ॥ १२ ॥ वृक्षांश्च विविधान् दद्यादन्नानि
विविधानि च। सर्व सौवर्णमेवासीद्रन्तिदेवस्य धीमत ॥ १३ ॥
तत्र स्म गाथा गायन्ति ये पुराणविदो जना । रन्तिदेवस्य
तान् दृष्ट्वा समृद्धिमतिमानुषीम् ॥ १४ ॥ नैतादृश दृष्टपूर्वं कुबेर-
सदनेष्वपि। धनञ्च पूर्यमाण न किं पुनर्मनुजेष्वपि ॥ १५ ॥
व्यक्त वस्वोकसारेयमित्यूचुस्तत्र विस्मिता । साङ्कृतेरन्तिदेवस्य
या रात्रिमतिथिर्वसेत् ॥ १६ ॥ आलभ्यन्त तदा गाव सहस्रा-
ण्येकविंशति । तत्र स्म सूदा क्रोशन्ति सुमृष्टमणिकुण्डला
॥ १७ ॥ सूप भूयिष्ठमश्नीध्व नाद्य मांस यथा पुरा। रन्ति
देवस्य यत्किञ्चित् सौवर्णमभवत्तदा ॥ १८ ॥ तत् सर्वं वितते
यज्ञे ब्राह्मणेभ्यो ह्यमन्यत। प्रत्यक्ष तस्य हव्यानि प्रतिगृह्णन्ति

द्वैवताः ॥ १८ ॥ कव्यानि पितरः काले सर्व्वकामान् द्विजोत्तमाः ॥ स चेन्ममार सृञ्जय चतुर्भद्रतरस्तया ॥ २० ॥ पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः । अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरन् ॥ २१ ॥

इति द्रोणपर्व्वणि अभिमन्युवधपर्व्वणि षोड़शराजिके सप्तषष्टोऽध्यायः ॥ ६७ ॥

---

नारद उवाच । दौष्मन्तिं भरतञ्चापि मृतं सृञ्जय शुश्रुम । कर्म्माण्यसुकराण्यन्यैः कृतवान् यः शिशुर्वने ॥ १ ॥ हिमावदातान् यः सिंहान्नखदंष्ट्रायुधान् बली । निर्व्वीर्य्यांस्तरसा कृत्वा विचकर्ष बबन्ध च ॥ २ ॥ क्रूरांश्चोग्रतरान् व्याघ्रान् दमित्वा चाकरोद्वशे । मनःशिलाइवायुक्तान् सम्प्लुतान् धातुराजिभिः ॥ ३ ॥ व्यालादींश्चातिबलवान् सुप्रतीकान् गजानिति । दंष्ट्रासु गृह्य विमुखान् शुष्कास्यानकरोद्वशे ॥ ४ ॥ महिषानप्यतिबलान् बलिनो विचकर्ष ह । सिंहानां च सहस्राणां शतान्युदमयद्बलात् ॥ ५ ॥ बलिनः सृमरान् खड्गान्नानासत्त्वानि चाप्युत । कृच्छ्रप्राणे गले बद्ध्वा दमयित्वाप्यवासृजत् ॥ ६ ॥ तं सर्व्वदमनेत्याहुस्ते द्विजास्तेन कर्म्मणा । तं प्रत्यषेधज्जननी मा सत्त्वानि विहीलय ॥ ७ ॥ सोऽश्वमेधशतेनेष्ट्वा यमुनामनुवीर्य्यवान् । त्रिशताश्वान् सरस्वत्यां गङ्गामनु चतुःशतान् ॥ ८ ॥ सोऽश्वमेधसहस्रेण राजसूयशतेन च । पुनरीजे महायज्ञैः समाप्तवरदक्षिणैः ॥ ९ ॥ अग्निष्टोमातिरात्राभ्यामुक्थ्यैः विश्वजिता अपि । वाजपेयसहस्राणां सहस्रैश्च सुसंवृतैः ॥ १० ॥ इष्ट्वा शाकुन्तलो राजा तर्पयित्वा द्विजान् धनैः । सहस्रं यत्र पद्मानां कणाय भरतो ददौ ॥ ११ ॥ जाम्बूनदस्य शुद्धस्य कनकस्य महायशाः । यस्य यूपः शतव्यामः परिणाहेन काञ्चनः ॥ १२ ॥ समागम्य द्विजैः सार्द्धं

श्चेन्द्रैर्देवै समुच्छ्रित । स्वलङ्कृतान् राजमानान् सर्वरत्नैर्मनोहरै ॥ १३ ॥ हैरण्यानश्वान् द्विरदान् रथानुष्ट्रानजाविकम् । दासीदासं धनं धान्यं गा सवत्सा पयस्विनी ॥ १४ ॥ ग्रामान् गृहाणि क्षेत्राणि विविधांश्च परिच्छदान् । कोटीशतायुतांश्चैव ब्राह्मणेभ्यो ह्यमन्यत ॥ १५ ॥ चक्रवर्त्ती ह्यदीनात्मा जितारि स्वजित परे । स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ॥ १६ ॥ पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथा । अयज्वानमदाक्षिण्यमभिश्वैत्येति व्याहरन् ॥ १७ ॥

इति द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजिके
अष्टषष्टोऽध्याय ॥ ६८ ॥

---

नारद उवाच । पृथु वैण्यञ्च राजानं मृतं सृञ्जय शुश्रुम । यमभ्यषिञ्चन् साम्राज्ये राजसूये महर्षय ॥१॥ यत्नत प्रथितेत्यूच सर्वानभिभवन् पृथु । क्षतान्नस्त्रास्यते सर्वान् इत्येव क्षत्रियोऽभवत् ॥२॥ पृथु वैण्य प्रजा दृष्ट्वा रक्ता स्मेति यदब्रुवन् । ततो राजेति नामास्य अनुरागादजायत ॥३॥ अकृष्टपच्या पृथिवी आसीद्वैण्यस्य कामधुक् । सर्वा कामदुघा गाव पुटके पुटके मधु ॥४॥ आसन् हिरण्मया दर्भा सुखस्पर्शा सुखावहा । तेषां चीराणि संवीता प्रजास्तेष्वेव शेरते ॥ ५ ॥ फलान्यमृतकल्पानि स्वादूनि च मृदूनि च । तेषामासीत्तदाहारो निराहाराश्च नाभवन् ॥ ६ ॥ अरोगा सर्वसिद्धार्था मनुष्या अकुतोभया । न्यवसन्त यथाकामं वृक्षेषु च गुहासु च ॥ ७ ॥ प्रविभागो न राष्ट्राणां पुराणाञ्चाभवत्तदा । यथासुखं यथाकामं तथैता मुदिता प्रजा ॥ ८ ॥ तस्य संस्तम्भिता ह्याप समुद्रमभियास्यत । पर्वताश्च ददुर्मार्गं ध्वजभङ्गश्च नाभवत् ॥ ९ ॥ तं वनस्पतय शैला देवासुरनरोरगा । सप्तर्षय

पुष्पचलना गन्धर्व्वाप्सरसोऽपि च ॥ १० ॥ पितरश्च सुखासीनमभि-
गम्येदमब्रुवन् । सम्राड़सि क्षत्रियोऽसि राजा गोप्ता पिता च
नः ॥ ११ ॥ देह्यस्मभ्य महाराज प्रभु सन्नीप्सितान् वरान् ।
यैर्वयं शाश्वतीस्तृप्तिर्वर्त्तयिष्यामहे सुखम ॥ १२ ॥ तथेत्युक्ता
पृथुर्वैण्यो गृहीत्वाजगवं धनु । शरांश्चाप्रतिमान् घोरान् चिन्त-
यित्वाब्रवीन्महीम ॥ १३ ॥ एह्येहि वसुधे चिप्रं चरेभ्यः काङ्क्षितं
पय । ततो दास्यामि भद्रं ते अन्नं यस्य यथेप्सितम् ॥ १४ ॥
वसुधोवाच । दुहितृत्वेन मा वीर सङ्कल्पयितुमर्हसि । तथे-
त्युक्ता पृथु सर्वं विधानमकरोद्दशी ॥ १५ ॥ ततो भूतनिकायास्तां
वसुधां दुदुहुस्तदा । तां वनस्पतय पूर्वं समुत्तस्थुर्दुधुक्षव ॥ १६ ॥
साऽतिष्ठद्वत्सला वत्स दोग्धॄन् पात्राणि चेच्छती । वत्सोऽभूत्
पुष्पित शाल प्लक्षो दोग्धाभवत्तदा ॥ १७ ॥ छिन्नप्ररोहणं दुग्ध
पात्रमौदुम्बरं शुभम । उदय पर्वतो वत्सो मेरुर्दोग्धा महा-
गिरि ॥ १८ ॥ रत्नान्योषधयो दुग्धं पात्रमश्ममयं तदा । दोग्धा
चासीत्तदा देवो दुग्धमूर्ज्जस्कर प्रियम् ॥ १९ ॥ असुरा दुदुहु-
र्मायामामपात्रे तु ते तदा । दोग्धा द्विमूर्द्धा तत्रासीद्वत्सश्चासी-
द्विरोचन ॥ २० ॥ कृषिञ्च सस्यञ्च नरा दुदुहु पृथिवीतले ।
स्वायम्भुवो मनुर्वत्सस्तेषां दोग्धाभवत पृथुः ॥ २१ ॥ अलाबु-
पात्रे च तदा विष दुग्धा वसुन्धरा । धृतराष्ट्रोऽभवद्दोग्धा तेषां
वत्सस्तु तक्षक ॥ २२ ॥ सप्तर्षिभिर्ब्रह्म दुग्ध तथाचाक्लिष्टकर्म्मभि ।
दोग्धा बृहस्पति पात्रं छन्दो वत्सश्च सोमराट् ॥ २३ ॥ अन्त-
र्द्धानं चामपात्रे दुग्धं पुण्यजनैर्विराट् । दोग्धा वैश्रवणस्तेषां वत्स-
श्चासीद्वृषध्वज ॥ २४ ॥ पुण्यगन्धान् पद्मपात्रे गन्धर्व्वाप्सरसो-
ऽदुहन् । वत्सश्चित्ररथस्तेषां दोग्धा विश्वरुचि प्रभु ॥ २५ ॥
स्वधा रजतपात्रेषु दुदुहु पितरश्च ताम् । वत्सो वैवस्वतस्तेषां
यमो दोग्धान्तकस्तदा ॥ २६ ॥ एव निकायैस्तैर्दुग्धा पयोऽभीष्टानि

मा विराट्। यैर्वर्त्तयन्ति ते ह्यद्य पार्थैर्वर्त्तैश्च नित्यशः ॥ २७ ॥ यज्ञैश्च विविधैरिष्ट्वा पृथुर्वैन्यः प्रतापवान्। सन्तर्पयित्वा भूतानि सर्वैः कामैर्मनःप्रियैः ॥ २८ ॥ हैरण्यानकरोद्राजा ये केचित् पार्थिवा भुवि। तान् ब्राह्मणेभ्यः प्रायच्छदश्वमेधे महामखे ॥ २९ ॥ षष्टिर्नागसहस्राणि षष्टिर्नागशतानि च। सौवर्णानकरोद्राजा ब्राह्मणेभ्यश्च तान् ददौ ॥ ३० ॥ इमाञ्च पृथिवीं सर्वां मणिरत्नविभूषिताम्। सौवर्णीमकरोद्राजा ब्राह्मणेभ्यश्च तां ददौ ॥ ३१ ॥ स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया। पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः। अयज्वानमदाक्षिण्यमभि- श्वैत्येति व्याहरन् ॥ ३२ ॥

इति द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजिके एकोनसप्ततोऽध्यायः ॥ ६९ ॥

---

नारद उवाच। रामो महातपाः शूरो वीरलोकनमस्कृतः। जामदग्न्योऽप्यतियशा अवितृप्तो मरिष्यति ॥ १ ॥ यः स्मायमनु पर्य्येति भूमिं कुर्वन्निमां सुखाम्। न चासीद्विक्रिया यस्य प्राप्य श्रियमनुत्तमाम् ॥ २ ॥ यः क्षत्रियैः परामृष्टे वत्से पितरि चाब्रुवन्। ततोऽवधीत् कार्त्तवीर्य्यमजितं समरे परैः ॥ ३ ॥ क्षत्रियाणां चतुःषष्टिमयुतानि सहस्रशः। तदा मृत्योः समेतानि एकेन धनुषाऽजयत् ॥ ४ ॥ ब्रह्मद्विषाञ्चाथ तस्मिन् सहस्राणि चतुर्दश। पुनरन्यानि जग्राह दन्तकूरं जघान च ॥ ५ ॥ सहस्रं मुषलेनाघ्नन् सहस्रमसिनावधीत्। उद्बन्धनात् सहस्रन्तु हैहया समरे हताः ॥ ६ ॥ सरथाश्वगजा वीरा निहतास्तत्र शेरते। पितुर्वधामर्षितेन जामदग्न्येन धीमता ॥ ७ ॥ निजघ्ने दश साहस्रान् रामः परशुना तदा। न ह्यमृष्यत ता वाचो यास्तै

भृशमुद्दीरिता ॥ ८ ॥ भग्नो रामाभिधावेति यदाक्रन्दन् द्विजो-
त्तमाः । ततः काश्मीरदरदान् कुन्तिक्षुद्रकमालवान् ॥ ९ ॥
अङ्गवङ्गकलिङ्गांश्च विदेहान् ताम्रलिप्तकान् । रक्षोवाहान् वीत-
होत्रान् त्रिगर्त्तान् मार्त्तिकावतान् ॥ १० ॥ शिवीनन्यांश्च राज-
न्यान् देशाद्देशात् सहस्रशः । निजघान शितैर्बाणैर्जामदग्न्यः
प्रतापवान् ॥ ११ ॥ कोटीशतसहस्राणि क्षत्रियाणां सहस्रशः ।
इन्द्रगोपकवर्णस्य बन्धुजीवनिभस्य च ॥ १२ ॥ रुधिरस्य परी-
वाहान् पूरयित्वा सरांसि च । सर्वानष्टादशद्वीपान् वशमानीय
भार्गव ॥ १३ ॥ ईजे क्रतुशतैः पुण्यैः समाप्तवरदक्षिणैः । वेदी-
मष्टनलोत्सेधां सौवर्णां विधिनिर्मिताम् ॥ १४ ॥ सर्वरत्नशतैः
पूर्णां पताकाशतमालिनीम् । ग्राम्यारण्यैः पशुगणैः सम्पूर्णाञ्च
महीमिमाम् ॥ १५ ॥ रामस्य जामदग्न्यस्य प्रतिजग्राह कश्यपः ।
ततः शतसहस्राणि द्विपेन्द्रान् हेमभूषणान् ॥ १६ ॥ निर्द्दस्युं
पृथिवीं कृत्वा शिष्टेष्टजनसङ्कुलाम् । कश्यपाय ददौ रामो हय-
मेधे महामखे ॥ १७ ॥ त्रिःसप्तवारान् पृथिवीं कृत्वा निःक्षत्रियां
प्रभुः । इष्ट्वा क्रतुशतैर्वीरो ब्राह्मणेभ्यो ह्यमन्यत ॥ १८ ॥ सप्त-
द्वीपां वसुमतीं मारीचोऽग्रहन्त द्विजः । रामं प्रोवाच निर्गच्छ
वसुधातो ममाज्ञया ॥ १९ ॥ स कश्यपस्य वचनात् प्रोत्सार्य्य
सरितां पतिम् । इषुपातैर्युधां श्रेष्ठ कुर्वन् ब्राह्मणशासनम् ॥२०॥
अध्यावसङ्गिरिश्रेष्ठं महेन्द्रं पर्वतोत्तमम् । एवं गुणशतैर्जुष्टो
भृगूणां कीर्त्तिवर्द्धनः ॥ २१ ॥ जामदग्न्योऽप्यतियशा मरिष्यति
महाद्युतिः । त्वया चतुर्भद्रतर पुण्यात् पुण्यतरस्तव ॥ २२ ॥
अयज्वानमदाक्षिण्यं मा शुचमनुतप्यथाः । एते चतुर्भद्रतरास्त्वया
भद्रशताधिकाः । मृता नरवरश्रेष्ठा मरिष्यन्ति च सृञ्जय ॥ २३ ॥

इति द्रोणपर्व्वणि अभिमन्युवधपर्व्वणि षोडशराजिके
सप्ततितमोऽध्यायः ॥ ७० ॥

सा विराट्। यैर्वर्त्तयन्ति ते ह्यद्य पार्थिवैस्तैश्च नित्यशः ॥ २७ ॥
यज्ञैश्च विविधैरिष्ट्वा पृथुर्वैण्यः प्रतापवान्। सन्तर्पयित्वा भूतानि
सर्वैः कामैर्मनःप्रियैः ॥ २८ ॥ हैरण्यानकरोद्राजा ये केचित्
पार्थिवा भुवि। तान् ब्राह्मणेभ्यः प्रायच्छत् सर्वमेधे महामखे
॥ २९ ॥ षष्टिनागसहस्राणि षष्टिनागशतानि च। सौवर्णा-
नकरोद्राजा ब्राह्मणेभ्यश्च तान् ददौ ॥ ३० ॥ इमाञ्च पृथिवीं
सर्वां मणिरत्नविभूषिताम्। सौवर्णीमकरोद्राजा ब्राह्मणेभ्यश्च तां
ददौ ॥ ३१ ॥ स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया। पुत्रात्
पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः। अयज्वानमदाक्षिण्यमभि-
श्वैत्येति व्याहरन् ॥ ३२ ॥

इति द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजिके
एकोनसप्ततोऽध्यायः ॥ ६९ ॥

---

नारद उवाच। रामो महातपाः शूरो वीरलोकनमस्कृतः।
जामदग्न्योऽप्यतियशा अवितृप्तो मरिष्यति ॥ १ ॥ यः स्मेमामनु-
पर्य्येति भूमिं कुर्वन्निमां सुखाम्। न चासीद्विक्रिया यस्य प्राप्य
श्रियमनुत्तमाम् ॥ २ ॥ यः क्षत्रियैः परामृष्टे वत्से पितरि चाब्रु-
वन्। ततोऽवधीत् कार्त्तवीर्य्यमजितं समरे परैः ॥ ३ ॥ क्षत्रि-
याणां चतुःषष्टिमयुतानि सहस्रशः। तदा मृत्योः समेतानि
चैकेन धनुषाजयत् ॥ ४ ॥ ब्रह्मद्विषाञ्चाथ तस्मिन् सहस्राणि
चतुर्दश। पुनरन्यानि जग्राह दन्तकूरं जघान च ॥ ५ ॥ सहस्रं
मुषलेनाहन् सहस्रमसिनावधीत्। उद्बन्धनात् सहस्रन्तु हैहया
समरे हताः ॥ ६ ॥ सरथाश्वगजा वीरा निहतास्तत्र शेरते।
पितुर्वधामर्षितेन जामदग्न्येन धीमता ॥ ७ ॥ निजघ्ने दश-
साहस्रान् रामः परशुना तदा। न ह्यमृष्यत ता वाचो यास्तै

भृगुश्चोदिता ॥ ८ ॥ भृगो रामाभिधावेति यदाक्रन्दन् द्विजो-
त्तमाः । ततः काश्मीरदरदान् कुन्तिक्षुद्रकमालवान् ॥ ९ ॥
अङ्गवङ्गकलिङ्गांश्च विदेहान् ताम्रलिप्तकान् । रक्षोवाहान् वीत-
होत्रान् त्रिगर्त्तान् मार्त्तिकावतान् ॥ १० ॥ शिबीनन्यांश्च राज-
न्यान् देशाद्देशात् सहस्रशः । निजघान शितैर्बाणैर्जामदग्न्यः
प्रतापवान् ॥ ११ ॥ कोटीशतसहस्राणि क्षत्रियाणां सहस्रशः ।
इन्द्रगोपकवर्णस्य बन्धुजीवनिभस्य च ॥ १२ ॥ रुधिरस्य परी-
वाहान् पूरयित्वा सरांसि च । सर्वानष्टादशद्वीपान् वशमानीय
भार्गवः ॥ १३ ॥ ईजे क्रतुशतैः पुण्यैः समाप्तवरदक्षिणैः । वेदी-
मष्टनलोत्सेधां सौवर्णां विधिनिर्मिताम् ॥ १४ ॥ सर्वरत्नशतैः
पूर्णां पताकाशतमालिनीम् । ग्राम्यारण्यैः पशुगणैः सम्पूर्णाञ्च
महीमिमाम् ॥ १५ ॥ रामस्य जामदग्न्यस्य प्रतिजग्राह कश्यपः ।

व्यास उवाच। पुण्यमाख्यानमायुष्यं श्रुत्वा षोडशराजिकम्। अव्याहरन्नरपतिस्तूष्णीमासीत् स सृञ्जयः॥ १॥ तमब्रवीत्तथासीनं नारदो भगवानृषिः। श्रुतं कीर्तयतो मह्यं गृहीतन्ते महाद्युते॥ २॥ आहोस्विदं ततो नष्टं श्राद्धं शूद्रापताविव। स एवमुक्तः प्रत्याह प्राञ्जलिः सृञ्जयस्तदा॥ ३॥ एतत् श्रुत्वा महाबाहो धन्यमाख्यानमुत्तमम्। राजर्षीणां पुराणानां यज्वनां दक्षिणावताम्॥ ४॥ विस्मयेन हृते शोके तमसीवार्कतेजसा। विपाप्मास्म्यव्यथोपेतो ब्रूहि किं करवाण्यहम्॥ ५॥

नारद उवाच। दिष्ट्यापहृतशोकस्त्वं वृणीष्वेह यदिच्छसि। तत्तत् प्रपत्स्यते सर्वं न मृषावादिनो वयम्॥ ६॥

सृञ्जय उवाच। एतेनैव प्रतीतोऽहं प्रसन्नो यद्भवान्मम। प्रसन्नो यस्य भगवान् न तस्यास्तीह दुर्लभम्॥ ७॥

नारद उवाच। पुनः ददामि ते पुत्रं दस्युभिर्निहतं वृथा।

र्यज्विनो जना । तपोभिरिद्धैरनुयान्ति यान्तया तामक्षया ते
तनयो गतो गतिम् ॥ १६ ॥ अन्तात् पुनर्भावगतो विराजते राजेव
वीरो ह्यमृतात्मरश्मिभि । तामैन्दवीमात्मतनुं द्विजैर्धृता गतो-
ऽभिमन्युर्न स शोकमर्हति ॥ १७ ॥ एवं ज्ञात्वा स्थिरो भूत्वा
जह्यरीन् धैर्यमाप्नुहि । जीवन्त एव न शोच्या न तु स्वर्ग-
गतानघ ॥ १८ ॥ शोचतो हि महाराज अघमेव विवर्द्धते ।
तस्माच्छोकं परित्यज्य श्रेयसे प्रयतेद्बुध ॥ १९ ॥ प्रहर्षमभिमानञ्च
सुखप्राप्तिञ्च चिन्तयेत् । एतद्बुद्ध्वा बुधा शोकं न शोक शोक
उच्यते ॥ २० ॥ एवं विद्धि समुत्तिष्ठ प्रयतो भव मा शुच ।
श्रुतस्ते सम्भवो मृत्योस्तपांस्यनुपमानि च ॥ २१ ॥ सर्वभूतसम-
त्वञ्च चञ्चलाश्च विभूतय । सृञ्जयस्य तु तं पुत्रं मृतं सञ्जीवितं
पुन ॥ २२ ॥ एवं विद्वन् महाराज मा शुच साधु यान्यहम् ।
एतावदुक्त्वा भगवांस्तत्रैवान्तरधीयत ॥ २३ ॥ वागीशाने भगवति
व्यासे व्यभ्रनभःप्रभे । गते मतिमतां श्रेष्ठे समाश्वास्य युधिष्ठिरम्
॥ २४ ॥ पूर्वेषां पार्थिवेन्द्राणां महेन्द्रप्रतिमौजसाम् । न्याया-
धिगतवित्तानां तां श्रुत्वा यज्ञसम्पदम् ॥ २५ ॥ सम्पूज्य मनसा
विद्वन् विशोकोऽभूद्युधिष्ठिर । पुनश्चाचिन्तयद्दीन. किं स्विद्वक्ष्ये
धनञ्जयम् ॥ २६ ॥

इति द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजिके
एकसप्ततोऽध्याय. ॥ ७१ ॥ समाप्तञ्च अभिमन्युवधपर्व ॥

---

## अथ प्रतिज्ञापर्व ॥

सञ्जय उवाच । तस्मिन्नहनि निर्वृत्ते घोरे प्राणभृतां क्षये ।
आदित्येऽस्तं गते श्रीमन् सन्ध्याकाल उपस्थिते ॥ १ ॥ व्यप-
यातेषु वासाय सैन्येषु भरतर्षभ । हत्वा संशप्तकव्रातान् दिव्यै-

वस्त्रे कपिध्वज ॥ २ ॥ प्रायात् स्वशिबिरं जिष्णुर्जैत्रमास्थाय तं रथम् । गच्छन्नेव च गोविन्दं साश्रुकण्ठोऽभ्यभाषत ॥ ३ ॥ किं नु मे हृदयं त्रस्तं वाक् च सज्जति केशव । स्पन्दन्ति चाप्यनिष्टानि गात्रं सीदति चाच्युत ॥ ४ ॥ अनिष्टञ्चैव मे श्लिष्टं हृदयान्नापसर्पति । भुवि ये दिक्षु चाप्युग्रा उत्पातास्त्रासयन्ति माम् ॥ ५ ॥ बहुप्रकारा दृश्यन्ते सर्वत्र चापशंसिन । अपि स्वस्ति भवेद्राज्ञः सामात्यस्य गुरोर्मम ॥ ६ ॥

वासुदेव उवाच । व्यक्तं शिवं तव भ्रातुः सामात्यस्य भविष्यति । मा शुच किञ्चिदेवान्यत् स्तोकानिष्टं भविष्यति ॥ ७ ॥

सञ्जय उवाच । ततः सन्ध्यामुपास्यैव वीरौ वीरावसादने । कथयन्तौ रणे वृत्तं प्रयातौ रथमास्थितौ ॥ ८ ॥ ततः स्वशिबिरं प्राप्तौ हतानन्दं हतत्विषम् । वासुदेवोऽर्जुनश्चैव कृत्वा कर्म सुदुष्करम् ॥ ९ ॥ ध्वस्ताकारं समालक्ष्य शिबिरं परवीरहा । बीभत्सुरब्रवीत् कृष्णमस्वस्थहृदयस्ततः ॥ १० ॥ नदन्ति नाद्य तूर्य्याणि माङ्गल्यानि जनार्दन । मिश्रा दुन्दुभिनिर्घोषैः शङ्खाश्चाडम्बरैः सह ॥ ११ ॥ वीणा नैवाद्य वाद्यन्ते शम्यातालस्वनैः सह । मङ्गल्यानि च गीतानि न गायन्ति पठन्ति च ॥ १२ ॥ स्तुतियुक्तानि रम्याणि ममानीकेषु वन्दिनः । योधाश्चापि हि मां दृष्ट्वा निवर्त्तन्ते ह्यधोमुखाः ॥ १३ ॥ कर्म्माणि च यथापूर्वं कृत्वा नाभिवदन्ति माम् । अपि स्वस्ति भवेदद्य भ्रातृभ्यो, मम माधव ॥ १४ ॥ न हि शुध्यति मे भावो दृष्ट्वा स्वजनमाकुलम् । अपि पाञ्चालराजस्य विराटस्य च मानद ॥ १५ ॥ सर्वेषाञ्चैव योधानां सामग्र्यं स्यान्ममाच्युत । न च मामद्य सौभद्रः प्रहृष्टो भ्रातृभिः सह । रणादायान्तमुचितं प्रत्युद्याति हसन्निव ॥ १६ ॥

सञ्जय उवाच । एवं सङ्कथयन्तौ तौ प्रविष्टौ शिबिरं स्वकम् । ददृशाते भृशास्वस्थान् पाण्डवान्नष्टचेतसः ॥ १७ ॥ दृष्ट्वा भ्रातॄंश्च

पुत्रांश्च विमना वानरध्वजः । अपश्यंश्चैव सौभद्रमिदं वचनमब्रवीत् ॥ १८ ॥ मुखवर्णोऽप्रसन्नो वः सर्वेषामेव लक्ष्यते । न चाभिमन्युं पश्यामि न च मां प्रतिनन्दथ ॥ १९ ॥ मया श्रुतश्च द्रोणेन चक्रव्यूहो विनिर्मितः । न च वस्तस्य भेत्तास्ति विना सौभद्रमर्भकम् ॥ २० ॥ न चोपदिष्टस्तस्याचोक्तस्यानीकाद्विनिर्गमः । कच्चिन्न बालो युष्माभिः परानीकं प्रवेशितः ॥ २१ ॥ भित्त्वानीकं महेष्वासः परेषां बहुशो युधि । कच्चिन्न निहतः सङ्ख्ये सौभद्रः परवीरहा ॥ २२ ॥ लोहिताक्षं महाबाहुं जातं सिंहमिवाद्रिषु । उपेन्द्रसदृशं ब्रूत कथमायोधने हतः ॥ २३ ॥ सुभद्रायाः प्रियं पुत्रं द्रौपद्याः केशवस्य च । अम्बायाश्च प्रियं नित्यं कोऽवधीत् कालमोहितः ॥ २४ ॥ सदृशो वृष्णिवीरस्य केशवस्य महात्मनः । विक्रमश्रुतिमाहात्म्यैः कथमायोधने हतः ॥ २५ ॥ वार्ष्णेयीदयितं शूरं मया सततलालितम् । यदि पुत्रं न पश्यामि पश्यामि यमसादनम् ॥ २६ ॥ मृदुकुञ्चितकेशान्तं बालं बालमृगेक्षणम् । मत्तद्विरदविक्रान्तं शालपोतमिवोद्गतम् ॥ २७ ॥ स्मिताभिभाषिणं शान्तं गुरुवाक्यकरं सदा । बाल्येऽप्यबालकर्माणं प्रियवाक्यममत्सरम् ॥ २८ ॥ महोत्साहं महाबाहुं दीर्घराजीवलोचनम् । भक्तानुकम्पिनं दान्तं न च नीचानुसारिणम् ॥ २९ ॥ कृतज्ञं ज्ञानसम्पन्नं कृतास्त्रमनिवर्तिनम् । युद्धाभिनन्दिनं नित्यं द्विषतां भयवर्धनम् ॥ ३० ॥ स्वेषां प्रियहिते युक्तं पितॄणां जयगृद्धिनम् । न च पूर्वप्रहर्तारं सङ्ग्रामे नष्टसम्भ्रमम् ॥ ३१ ॥ यदि पुत्रं न पश्यामि यास्यामि यमसादनम् । रथेषु गण्यमानेषु गणितं तं महारथम् ॥ ३२ ॥ मयाध्यर्धगुणं सङ्ख्ये तरुणं बाहुशालिनम् । प्रद्युम्नस्य प्रियं नित्यं केशवस्य ममैव च ॥ ३३ ॥ यदि पुत्रं न पश्यामि यास्यामि यमसादनम् । सुनसं सुललाटान्तं स्वक्षिभ्रूदशनच्छदम् ॥ ३४ ॥ अपश्यतस्तद्वदनं का शान्तिर्हृदयस्य मे ।

तन्नोन्नतमुखं रम्यं पुंस्कोकिलसमध्वनिम् ॥ ३५ ॥ अशृण्वतस्तस्य
स्वनं का शान्तिर्हृदयस्य मे। रूपं चाप्रतिमं तस्य त्रिदशेष्वपि
दुर्लभम् ॥ ३६ ॥ अपश्यतो हि वीरस्य का शान्तिर्हृदयस्य मे।
अभिवादनदक्षं तं पितॄणां वचने रतम् ॥ ३७ ॥ नाद्याहं यदि
पश्यामि का शान्तिर्हृदयस्य मे। सुकुमारः सदा वीरो महार्ह-
शयनोचितः ॥ ३८ ॥ भूमावनाथवच्छेते नूनं नाथवतां वरः।
शयानं समुपासन्ति यं पुरा परमस्त्रियः ॥ ३९ ॥ भ्रमन्तीं विप्र
विध्वाङ्गमुपासिष्यन्ति वै शिवाः। यः पुरा बोध्यते सुप्तः सूत-
मागधबन्दिभिः ॥ ४० ॥ बोधयन्त्यद्य तं नूनं श्वापदा विकृतैः
स्वनैः। छत्रच्छायासमुचितं तस्य तद्वदनं शुभम् ॥ ४१ ॥ नूनं
मद्य रजोध्वस्तं रणे रेणुः करिष्यति। हा पुत्रकावितृप्तस्य
सततं पुत्रदर्शने ॥ ४२ ॥ भागधेयविहीनस्य कालेन यथा मे नीयसे
बलात्। साद्य संयमनी नूनं सदा सुकृतिनां गतिः ॥ ४३ ॥
स्वभाभिर्भासिता रम्या त्वयात्यर्थं विराजते। नूनं वैवस्वतश्च त्वां
वरुणश्च प्रियातिथिम् ॥ ४४ ॥ शतक्रतुर्धनेशश्च प्राप्तमर्चन्त्यभीत-
कम्। एवं विलप्य बहुधा भिन्नपोतो वणिग्यथा ॥ ४५ ॥
दुःखेन महताविष्टो युधिष्ठिरमपृच्छत। कच्चित् स कदनं कृत्वा
परेषां कुरुनन्दन ॥ ४६ ॥ स्वर्गतोऽभिमुखः सङ्ख्ये युध्यमानो
नरर्षभे। स नूनं बहुभिर्यत्तैर्युध्यमानो नरर्षभैः ॥ ४७ ॥
असहाय सहायार्थी मामनुध्यातवान् ध्रुवम्। पीड्यमानः
शरैस्तीक्ष्णैः कर्णद्रोणकृपादिभिः ॥ ४८ ॥ नानालिङ्गैः सुधौताग्रै-
र्मम पुत्रोऽल्पचेतनः। इह मे स्यात् परित्राणं पितेति स पुनः
पुनः ॥ ४९ ॥ इति विप्रलपन् मन्ये नृशंसैर्भुवि पातितः। अथवा
मत्प्रसूतः स स्वस्त्रीयो माधवस्य च ॥ ५० ॥ सुभद्रायाञ्च
सम्भूतो नैवं वक्तुमर्हति। वज्रसारमयं नूनं हृदयं सुदृढं मम
॥ ५१ ॥ अपश्यतो दीर्घबाहुं रक्ताक्षं यन्न दीर्यते। कथमाले

महेष्वासा नृशंसा मर्मभेदिनः ॥ ५२ ॥ रुक्मोऽपि वासुदेवस्य मम पुत्रेऽक्षिपन् शरान् । यो मां नित्यमदीनात्मा प्रत्युद्गम्याभिनन्दति ॥ ५३ ॥ उपयान्तं रिपून् हत्वा सोऽद्य मां किं न पश्यति । नूनं स पतितः शेते धरायां रुधिरोक्षितः ॥ ५४ ॥ शोभयन्मेदिनीं गात्रैरादित्य इव पातितः । सुभद्रामनुशोचामि या पुत्रमपलायिनम् ॥ ५५ ॥ रणेऽभिनिहतं श्रुत्वा शोकार्त्ता वै विनङ्क्ष्यति । सुभद्रा वक्ष्यति किं मां अभिमन्युमपश्यती ॥ ५६ ॥ द्रौपदी चैव दुःखार्त्ते तेऽपि वक्ष्यामि किन्त्वहम् । वज्रसारमयं नूनं हृदयं यन्न यास्यति ॥ ५७ ॥ सहस्रधा वधूं दृष्ट्वा रुदतीं शोककर्षिताम् । दृप्तानां धार्त्तराष्ट्राणां सिंहनादो मया श्रुतः ॥ ५८ ॥ युयुत्सुश्चापि कृष्णेन श्रुतो वीरानुपालभन् । अशक्नुवन्तो बीभत्सुं बालं हत्वा महारथाः ॥ ५९ ॥ किं मोदध्वमधर्मज्ञाः पाण्डवं दृश्यतां बलम् । किन्तयोर्विप्रियं कृत्वा केशवार्जुनयोर्मृधे ॥ ६० ॥ सिंहवन्नदथ प्रीताः शोककाल उपस्थिते । आगमिष्यति वः क्षिप्रं फलं पापस्य कर्मणः ॥ ६१ ॥ अधर्मोऽहि कृतस्तीव्रः कथं स्यादफलश्चिरम् । इति तान् परिभाषन् वै वैश्यापुत्रो महामतिः ॥ ६२ ॥ अपायाच्छस्त्रमुत्सृज्य कोपदुःखसमन्वितः । किमर्थमेतन्नाख्यातं त्वया कृष्ण रणे मम । अधक्ष्यन्तानिहं क्रूरांस्तदा सर्वान् महारथान् ॥ ६३ ॥

सञ्जय उवाच । पुत्रशोकार्द्दितं पार्थं ध्यायन्तं साश्रुलोचनम् । निगृह्य वासुदेवस्तं पुत्राधिभिरभिप्लुतम् ॥ ६४ ॥ मैवमित्यब्रवीत् कृष्णस्तीव्रशोकसमन्वितम् । सर्वेषामेष वै पन्थाः शूराणामनिवर्त्तिनाम् ॥ ६५ ॥ क्षत्रियाणां विशेषेण येषां युद्धेन जीविका । एषा वै युध्यमानानां शूराणामनिवर्त्तिनाम् ॥ ६६ ॥ विहिता धर्मशास्त्रज्ञैर्गतिर्मतिमतां वर । ध्रुवं हि युद्धे मरणं शूराणामपलायिनाम् ॥ ६७ ॥ गत पुण्यकृतांल्लोकानभिमन्युर्न संशयः ।

एतच्च सर्ववीराणां काङ्क्षितं भरतर्षभ ॥ ६८ ॥ सङ्ग्रामेऽभिमुखो मृत्युं प्राप्नुयादिति मानद । स च वीरान् रणे हत्वा राजपुत्रान् महाबलान् ॥ ६९ ॥ वीरैराकाङ्क्षितं मृत्युं सम्प्राप्तोऽभिमुखं रणे । मा शुचः पुरुषव्याघ्र पूर्वैरेष सनातनः ॥ ७० ॥ धर्मं कृद्भिः कृतो धर्मः क्षत्रियाणां रणे क्षयः । इमे ते भ्रातरः सर्वे दीना भरतसत्तम ॥ ७१ ॥ त्वयि शोकसमाविष्टे नृपाश्च सुहृदस्तव । एतांश्च वचसा साम्ना समाश्वासय मानद ॥ ७२ ॥ विज्ञेतं विदितव्यं ते न शोकं कर्त्तुमर्हसि । एवमाश्वासितः पार्थः कृष्णेनाद्भुतकर्मणा ॥ ७३ ॥ ततोऽब्रवीत्तदा भ्रातॄन् सर्वान् पार्थः सगद्गदान् । स दीर्घबाहुः पृथ्वीश दीर्घराजीवलोचन ॥ ७४ ॥ अभिमन्योर्यथावृत्तं श्रोतुमिच्छाम्यहं तथा । सनागस्यन्दनहयान् द्रक्ष्यध्वं निहतान्मया ॥ ७५ ॥ सङ्ग्रामे सानुबन्धांस्तान् मम पुत्रस्य वैरिणः । कथञ्च वः कृतास्त्राणां सर्वेषां शस्त्रपाणिनाम् ॥ ७६ ॥ सौभद्रो निधनं गच्छेद्वज्रिणापि समागतः । यद्येवमहमज्ञास्यमशक्तान्रक्षणे मम ॥ ७७ ॥ पुत्रस्य पाण्डुपाञ्चालान् मया गुप्तो भवेत्ततः । कथञ्च वै रथस्थानां शरवर्षाणि मुञ्चताम् ॥ ७८ ॥ नीतोऽभिमन्युर्निधनं कदर्थीकृत्य वः परैः । अहो वः पौरुषं नास्ति न च वोऽस्ति पराक्रमः ॥ ७९ ॥ यत्राभिमन्युः समरे पश्यतां वो निपातितः । आत्मानमेव गर्हेयं यदहं वै सुदुर्बलान् ॥ ८० ॥ युष्मानाज्ञाय निर्यातो भीरूनकृतनिश्चयान् । आहो स्वित् भूषणार्थाय वर्मशस्त्रायुधानि वः ॥ ८१ ॥ वाचश्च वक्तुं समतस्य मम पुत्रमरक्षताम् । एवमुक्त्वा ततो वाक्यं तिष्ठंश्चाप वराशिमान् ॥ ८२ ॥ न ह्यशक्नुवत वीभत्सुं केनचित् प्रसमीक्षितुम् । तमन्तकमिव क्रुद्धं निश्वसन्तं मुहुर्मुहुः ॥ ८३ ॥ पुत्रशोकाभिसन्तप्तमश्रुपूर्णमुखं तदा । न भाषितुं शक्नुवन्ति द्रष्टुं वा सुहृदोऽर्जुनम् ॥ ८४ ॥ अन्यत्र वासुदेवाद्वा ज्येष्ठाद्वा पाण्डु

नन्दनात् । सर्व्वास्ववस्थासु हि तावर्ज्जुनस्य मनोऽनुगौ ॥ ८५ ॥ बहुमानात् प्रियत्वाच्च तावेनं वक्तुमर्हतः । ततस्तं युवशोकेन भृशं पीड़ितमानसम् । राजीवलोचनं क्रुद्धं राजा वचनमब्रवीत् ॥ ८६ ॥

इति द्रोणपर्व्वणि प्रतिज्ञापर्व्वणि अर्ज्जुनकोपे
द्विसप्ततोऽध्यायः ॥ ७२ ॥



युधिष्ठिर उवाच । त्वयि याते महाबाहो संशप्तकबलं प्रति । स यत्नमकरोत्तीव्रमाचार्य्यो ग्रहणे मम ॥ १ ॥ व्यूढानीकं वयं द्रोणं वारयामः स्म सर्व्वश । प्रतिव्यूह्य रथानीकं यतमान तथा रणे ॥ २ ॥ स वार्य्यमाणो बहुभिर्मयि चापि सुरक्षिते । अस्मानभिजघानाशु पीड़यन्निशितैः शरैः ॥ ३ ॥ ते पीड़्यमाना द्रोणेन द्रोणानीकं न शक्नुमः । प्रतिवीक्षितुमप्याजौ भेत्तुं तत् कुत एव तु ॥ ४ ॥ वयं त्वप्रतिमं वीर्य्ये सर्व्वे सौभद्रमात्मजम् । उक्तवन्तः स्म तं तात भिन्ध्यनीकमिति प्रभो ॥ ५ ॥ स तथा चोदितोऽस्माभिः सदश्व इव वीर्य्यवान् । असह्यमपि तं भारं वोढुमेवोपचक्रमे ॥६॥ स तवास्त्रोपदेशेन वीर्य्येण च समन्वितः । प्राविशत्तद्बलं बालः सुपर्ण इव सागरम् ॥ ७ ॥ तेऽनुयाता वय वीर सात्वतीपुत्रमाहवे । प्रवेष्टुकामास्तेनैव येन स प्राविशच्चमूम् ॥ ८ ॥ ततः सैन्धवको राजा क्षुद्रस्तात जयद्रथः । वरदानेन रुद्रस्य सर्व्वान्नः समवारयत् ॥ ९ ॥ ततो द्रोणः कृपः कर्णो द्रौणिः कौशल्य एव च । कृतवर्म्मा च सौभद्रं षड्रथाः पर्य्यवारयन् ॥ १० ॥ परिवार्य्य तु तैः सर्व्वैर्युधि बालो महारथैः । यतमानः परं शक्त्या बहुभिर्विरथीकृतः ॥ ११ ॥ ततो दौःशासनिः क्षिप्रं ततस्तैर्विरथीकृतम् । संशयं परमं प्राप्य दिष्टान्तेनाभ्ययोजयत् ॥ १२ ॥ स तु हत्वा सहस्राणि नराश्वरथदन्तिनाम् । अष्टौ रथसहस्राणि

नव दन्तिशतानि च ॥ १३ ॥ राजपुत्रसहस्रे द्वे वीरोबालचिताने
बहून्। वृहद्दलञ्च राजानं स्वर्गेनाजो प्रवेश्य च ॥ १४ ॥ ततः
परमधर्मात्मा दिष्टान्तमुपजग्मिवान्। एतावदेव निर्वृत्तमस्याक
शोकवर्द्धनम् ॥ १५ ॥ स चैव पुरुषव्याघ्र स्वर्गलोकमवाप्तवान्।
ततोऽर्ज्जुनो वच श्रुत्वा धर्मराजेन भाषितम् ॥ १६ ॥ हा पुत्र
इति निःश्वस्य व्यथितो न्यपतद्भुवि। विषण्णवदनाः सर्वे पार-
वार्य्य धनञ्जयम् ॥ १७ ॥ नेत्रैरनिमिषैर्दीना प्रत्यवेक्षन् पर
स्परम्। प्रतिपद्य ततः संज्ञां वासवि क्रोधमूर्च्छितः ॥ १८ ॥
कम्पमानो ज्वरयेव निःश्वसंश्च मुहुर्मुहुः। पाणिं पाणौ विनि
ष्पिष्य श्वसमानोऽस्रुनेत्रवान्। उन्मत्त इव विप्रेक्षन् इदं वचन
मब्रवीत् ॥ १९ ॥

अर्ज्जुन उवाच। सत्यं वः प्रतिजानामि श्वो निहन्ता जय-
द्रथम्। न चेद्वधभयाद्भीतो धार्त्तराष्ट्रान् प्रहास्यति ॥ २० ॥ न
चास्मान् शरणं गच्छेत् कृष्णं वा पुरुषोत्तमम्। भवन्तं वा महा
राज श्वोऽस्मि हन्ता जयद्रथम् ॥ २१ ॥ धार्त्तराष्ट्रप्रियकरं मयि
विस्मृतसौहृदम्। पापं बालवधे हेतुं श्वोऽस्मि हन्ता जयद्रथम्
॥ २२ ॥ रक्षमाणाश्च तं सङ्ख्ये ये मां योत्स्यन्ति केचन।
अपि द्रोण कृपो राजन् छादयिष्यामि तान् शरैः ॥ २३ ॥
यद्येतदेवं सङ्ग्रामे न कुर्य्यां पुरुषर्षभाः। मा स्म पुण्यकृतां लोकान्
प्राप्नुयां शूरसत्तमाः ॥ २४ ॥ ये लोका मातृहन्तृणां ये चापि
पितृघातिनाम्। गुरुदारगतानां ये पिशुनानाञ्च ये सदा। २५ ॥
साधूनसूयतां ये च ये चापि परिवादिनाम्। ये च निक्षेप-
हर्त्तृणां ये च विश्वासघातिनाम् ॥ २६ ॥ भुक्तपूर्वां स्त्रियं ये च
निन्दतामघशंसिनाम्। ब्रह्मघ्नानाञ्च ये लोका ये च गोघाति-
नामपि। २७ ॥ पायसं वा यवान्नं वा शाकं कृसरमेव वा।
संयावापूपमांसानि ये च लोका वृथाश्नताम् ॥ २८ ॥ तानह्नै-

माधिगच्छेयं न चेद्धन्यां जयद्रथम्। वेदाध्यायिनमत्यर्थं संशितं
वा द्विजोत्तमम् ॥ २९ ॥ अवमन्यमानो यान् याति वृद्धान् साधून्
गुरूंस्तथा। स्पृशतो ब्राह्मणान् गाञ्च पादेनाग्निञ्च या भवेत्
॥ ३० ॥ अप्सु श्लेष्म पुरीषञ्च मूत्रं च मुञ्चतां गतिम्। तां
गच्छेयं गतिं कष्टां न चेद्धन्यां जयद्रथम् ॥ ३१ ॥ नग्नस्य स्नाय-
मानस्य या च वन्ध्यातिथेर्गतिः। उत्कोचिनां मृषोक्तीनां वञ्च-
कानाञ्च या गतिः ॥ ३२ ॥ स्वात्मापहारिणां या च या च
मिथ्याभिशंसिनाम्। भृत्यैः सन्दृश्यमानानां पुत्रदाराश्रितैस्तथा
॥ ३३ ॥ असंविभज्य क्षुद्राणां या गतिर्मिष्टमश्नताम्। तां
गच्छेयं गतिं घोरां न चेद्धन्यां जयद्रथम् ॥ ३४ ॥ संश्रितं चापि
यस्त्यक्त्वा साधुं तद्वचने रतम्। न बिभर्त्ति नृशंसात्मा निन्दते
चोपकारिणम् ॥ ३५ ॥ अर्हते प्रातिवेश्याय श्राद्धं यो न ददाति
च। अनर्हेभ्यश्च यो दद्याद्वृषलीपतयस्तथा ॥ ३६ ॥ मद्यपो
भिन्नमर्य्यादः कृतघ्नो भ्रातृनिन्दकः। तेषां गतिमियां क्षिप्रं न
चेद्धन्यां जयद्रथम् ॥ ३७ ॥ धर्म्मादपेता ये चान्ये मया नात्रानु-
कीर्त्तिताः। ये चानुकीर्त्तितास्तेषां गतिं क्षिप्रमवाप्नुयाम् ॥ ३८ ॥
यदि व्युष्टामिमां रात्रिं श्वो न हन्यां जयद्रथम्। इमां चाप्यपरां
भूय प्रतिज्ञां मे निबोधत ॥ ३९ ॥ यद्यस्मिन्नहते पापे सूर्य्यो-
ऽस्तमुपयास्यति। इहैव सम्प्रवेष्टाहं ज्वलितं जातवेदसम् ॥ ४० ॥
असुरसुरमनुष्याः पक्षिणो वोरगा वा पितृरजनिचरा वा ब्रह्म-
देवर्षयो वा। चरमचरमपीदं यत् परं चापि तस्मात्तदपि, मम
रिपुं तं रक्षितुं नैव शक्ताः ॥ ४१ ॥ यदि विशति रसातलं
तदग्र्यं वियदपि देवपुरं दितेः पुरं वा। तदपि शरशतैरहं
प्रभाते भृशमभिमन्युरिपोः शिरोऽभिहर्त्ता ॥ ४२ ॥ एवमुक्त्वा
विचिक्षेप गाण्डीवं सव्यदक्षिणम्। तस्य शब्दमतिक्रम्य धनु-
शब्दोऽस्पृशद्दिवम् ॥ ४३ ॥ अर्जुनेन प्रतिज्ञाते पाञ्चजन्यञ्जना-

हेन। प्रदध्मौ तत्र संक्रुद्धो देवदत्तञ्च फाल्गुनः॥४४॥ स
पाञ्चजन्योऽच्युतवक्त्रवायुना भृशं सुपूर्णोदरनिःसृतध्वनिः। जगत्
सपातालवियद्दिगीश्वरं प्रकम्पयामास युगात्यये यथा॥४५॥
ततो वादित्रघोषाश्च प्रादुरासन् सहस्रशः। सिंहनादाश्च पाण्डूनां
प्रतिज्ञाते महात्मना॥४६॥

इति द्रोणपर्वणि प्रतिज्ञापर्वणि अर्ज्जुनप्रतिज्ञायां
त्रिसप्ततोऽध्यायः॥७३॥

---

सञ्जय उवाच। श्रुत्वा तु तं महाशब्दं पाण्डूनां जयगृद्धि-
नाम्। चारैः प्रवेदिते तत्र समुत्थाय जयद्रथः॥१॥ शोक-
संमूढहृदयो दुःखेनाभिपरिप्लुतः। मज्जमान इवागाधे विपुले
शोकसागरे॥२॥ जगाम समितिं राज्ञां सैन्धवो विमृशन् बहु।
स तेषां नरदेवानां सकाशे परिदेवयन्॥३॥ अभिमन्योः पितु-
र्भीतः सव्रीडो वाक्यमब्रवीत्। योऽसौ पाण्डोः किल क्षेत्रे जातः
शक्रेण कामिना॥४॥ स निनीषति दुर्बुद्धिर्मां किलैकं यम-
क्षयम्। तत् स्वस्ति वोऽस्तु यास्यामि स्वगृहं जीवितेप्सया॥५॥
अथवास्त्रप्रतिबलास्त्रात मां क्षत्रियर्षभाः। पार्थेन प्रार्थितं वीरास्ते
ददन्तु ममाभयम्॥६॥ द्रोणदुर्योधनकृपाः कर्णमद्रेशबाह्लिकाः।
दुःशासनादयः शक्तास्त्रातुमप्यन्तकार्दितम्॥७॥ किमङ्ग पुन-
रेकेन फाल्गुनेन जिघांसता। न त्रायेयुर्भवन्तो मां समस्ताः
पतयः क्षितेः॥८॥ प्रहर्षं पाण्डवेयानां श्रुत्वा मम महद्भयम्।
सीदन्ति मम गात्राणि मुमूर्षोरिव पार्थिवाः॥९॥ वधो नूनं
प्रतिज्ञातो मम गाण्डीवधन्वना। तथा हि हृष्टाः क्रोशन्ति शोक-
काले हि पाण्डवाः॥१०॥ न च देवा न गन्धर्वा नासुरोरग-
राक्षसाः। उत्सहन्तेऽन्यथा कर्त्तुं कुत एव नराधिपाः॥११॥

तस्मात्मामनुजानीत भद्रं वोऽस्तु नरर्षभाः । अदर्शनं गमिष्यामि
न मां द्रक्ष्यन्ति पाण्डवाः ॥ १२ ॥ एवं विलपमानं तं भया-
दुद्याकुलचेतसम् । आत्मकार्य्यगरीयस्त्वाद्राजा दुर्य्योधनोऽब्रवीत्
॥ १३ ॥ न भेतव्यं नरव्याघ्र कोहि त्वा पुरुषर्षभ । मध्ये
क्षत्रियवीराणां तिष्ठन्तं प्रार्थयेद्युधि ॥ १४ ॥ अहं वैकर्त्तनः
कर्णश्चित्रसेनो विविंशतिः । भूरिश्रवा शलः शल्यो वृषसेनो
दुरासदः ॥ १५ ॥ पुरुमित्रो जयो भोज काम्बोजश्च सुदक्षिण ।
सत्यव्रतोमहाबाहुर्विकर्णो दुर्मुखश्च ह ॥ १६ ॥ दुःशासन सुबा-
हुश्च कलिङ्गश्चाप्युदायुधः । विन्दानुविन्दावावन्त्यौ द्रोणो द्रौणिश्च
सौबल ॥ १७ ॥ एते चान्ये च बहवो नानाजनपदेश्वराः ।
ससैन्यास्त्वाभियास्यन्ति व्येतु ते मानसो ज्वरः ॥ १८ ॥ त्वञ्चापि
रथिनां श्रेष्ठ स्वयं शूरोऽमितद्युते । स कथं पाण्डवेयेभ्यो भयं
पश्यसि सैन्धव ॥ १९ ॥ अक्षौहिण्यो दशैका च मदीयास्तव
रक्षणे । यत्नाद्योत्स्यन्ति माभैस्त्वं सैन्धव व्येतु ते भयम् ॥ २० ॥

सञ्जय उवाच । एवमाश्वासितो राजन् पुत्रेण तव सैन्धव ।
दुर्य्योधनेन सहितो द्रोणं रात्रावुपागमत् ॥ २१ ॥ उपसङ्ग्रहणं
कृत्वा द्रोणाय स विशाम्पते । उपोपविश्य प्रणतः पर्य्यपृच्छदिदं
तदा ॥ २२ ॥ निमित्ते दूरपातित्वे लघुत्वे दृढवेधने । मम ब्रवीतु
भगवान् विशेषं फाल्गुनस्य च ॥ २३ ॥ विद्याविशेषमिच्छामि
ज्ञातुमाचार्य्य तत्त्वतः । अर्ज्जुनस्यात्मनश्चैव यथातथ्यं प्रचक्ष्व मे॥२४॥

द्रोण उवाच । सममाचार्य्यकं तात तव चैवार्ज्जुनस्य च ।
योगाद्दुःखोषितत्वाच्च तस्मात्त्वत्तोऽधिकोऽर्ज्जुन ॥ २५ ॥ न तु ते
युधि सन्त्रासः कार्य्यः पार्थात् कथञ्चन । अहं हि रक्षिता तात
भयात्त्वां नात्र संशयः ॥ २६ ॥ न हि मद्बाहुगुप्तस्य प्रभवन्त्यमरा
अपि । व्यूहयिष्यामि तं व्यूहं यं पार्थो न तरिष्यति ॥ २७ ॥
तस्माद्युध्यस्व माभैस्त्वं स्वधर्म्ममनुपालयन् । पितृपैतामहं मार्गं

हीनः। प्रदध्मौ तत्र संक्रुद्धो देवदत्तञ्च फाल्गुनः ॥ ४४ ॥ स पाञ्चजन्योऽच्युतवक्त्रवायुना भृशं सुपूर्णोदरनिःसृतध्वनिः। जगत् स पातालवियद्दिगीश्वरं प्रकम्पयामास युगात्यये यथा ॥ ४५ ॥ ततो वादित्रघोषाश्च प्रादुरासन् सहस्रशः। सिंहनादाश्च पाण्डूनां प्रतिज्ञाते महात्मना ॥ ४६ ॥

इति द्रोणपर्वणि प्रतिज्ञापर्वणि अर्ज्जुनप्रतिज्ञायां
त्रिसप्ततोऽध्यायः ॥ ७३ ॥

---

सञ्जय उवाच। श्रुत्वा तु तं महाशब्दं पाण्डूनां जयगृद्धिनाम्। चारैः प्रवेदिते तत्र समुत्थाय जयद्रथः ॥ १ ॥ शोकसंमूढहृदयो दुःखेनाभिपरिप्लुतः। मज्जमान इवागाधे विपुले शोकसागरे ॥ २ ॥ जगाम समितिं राज्ञां सैन्धवो विमृशन् बहु। स तेषां नरदेवानां सकाशे परिवेदयन् ॥ ३ ॥ अभिमन्योः पितुर्भीतः सव्रीडो वाक्यमब्रवीत्। योऽसौ पाण्डोः किल क्षेत्रे जातः शक्रेण कामिना ॥ ४ ॥ स निनीषति दुर्बुद्धिर्मां किलैकं यमक्षयम्। तत् स्वस्ति वोऽस्तु यास्यामि स्वगृहं जीवितेप्सया ॥ ५ ॥ अथवा स्थ प्रतिबलास्त्रात मां क्षत्रियर्षभाः। पार्थेन प्रार्थितं वीरास्ते ददन्तु ममाभयम् ॥ ६ ॥ द्रोणदुर्योधनकृपाः कर्णमद्रेशबाह्लिकाः। दुःशासनादयः शक्तास्त्रातुमप्यन्तकार्दितम् ॥ ७ ॥ किमङ्ग पुनरेकेन फाल्गुनेन जिघांसता। न त्रायेयुर्भवन्तो मां समस्ताः पतयः क्षितेः ॥ ८ ॥ प्रहर्षं पाण्डवेयानां श्रुत्वा मम महद्भयम्। सीदन्ति मम गात्राणि मुमूर्षोरिव पार्थिवाः ॥ ९ ॥ वधो नूनं प्रतिज्ञातो मम गाण्डीवधन्वना। तथाहि हृष्टाः क्रोशन्ति शोककालेऽपि पाण्डवाः ॥ १० ॥ तन्न देवा न गन्धर्वा नासुरोरगराक्षसाः। उत्सहन्तेऽन्यथा कर्तुं कुत एव नराधिपाः ॥ ११ ॥

तस्मान्मामनुजानीत भद्रं वोऽस्तु नरर्षभाः। अन्तर्धानं गमिष्यामि न मां द्रक्ष्यन्ति पाण्डवाः ॥ १२ ॥ एवं विलपमानं तं भयाद्व्याकुलचेतसम् । आत्मकार्य्यगरीयस्त्वाद्राजा दुर्य्योधनोऽब्रवीत् ॥ १३ ॥ न भेतव्यं नरव्याघ्र कोहि त्वां पुरुषर्षभ । मध्ये क्षत्रियवीराणां तिष्ठन्तं प्रार्थयेद्युधि ॥ १४ ॥ अहं वैकर्त्तनः कर्णश्चित्रसेनो विविंशतिः । भूरिश्रवाः शलः शल्यो वृषसेनो दुरासदः ॥ १५ ॥ पुरुमित्रो जयो भोज. काम्बोजश्च सुदक्षिण. । सत्यव्रतो महाबाहुर्विकर्णो दुर्मुखश्च च ॥ १६ ॥ दुःशासनः सुबाहुश्च कालिङ्गश्चाप्युदायुधः। विन्दानुविन्दावावन्त्यौ द्रोणो द्रौणिश्च सौवल. ॥ १७ ॥ एते चान्ये च बहवो नानाजनपदेश्वराः । ससैन्यास्त्वाभियास्यन्ति व्येतु ते मनसो ज्वरः ॥ १८ ॥ त्वञ्चापि रथिनां श्रेष्ठः स्वयं शूरोऽमितद्युते । स कथं पाण्डवेयेभ्यो भयं पश्यसि सैन्धव ॥ १९ ॥ अक्षौहिण्यो दशैका च मदीयास्तव रक्षणे । यत्ता योत्स्यन्ति मा भैस्त्वं सैन्धव व्येतु ते भयम् ॥ २० ॥

सञ्जय उवाच । एवमाश्वासितो राजन् पुत्त्रेण तव सैन्धवः । दुर्य्योधनेन सहितो द्रोणं रात्रावुपागमत् ॥ २१ ॥ उपसंग्रहणं कृत्वा द्रोणाय स विशाम्पते । उपोपविश्य प्रणत. पर्य्यपृच्छदिदं तदा ॥ २२ ॥ निमित्ते दूरपातित्वे लघुत्वे दृढवेधने । मम ब्रवीतु भगवान् विशेषं फाल्गुनस्य च ॥ २३ ॥ विद्याविशेषमिच्छामि ज्ञातुमाचार्य्य तत्त्वतः । अर्ज्जुनस्यात्मनश्चैव यथातथं प्रचक्ष्व मे॥२४॥

द्रोण उवाच । सममाचार्य्यकं तात तव चैवार्ज्जुनस्य च । योगाद्दुःखोषितत्वाच्च तस्मात्त्वत्तोऽधिकोऽर्ज्जुन ॥ २५ ॥ न तु ते युधि सन्त्रासः कार्य्य. पार्थात् कथञ्चन । अहं हि रक्षिता तात भयात्त्वां नात्र संशयः ॥ २६ ॥ न हि मद्बाहुगुप्तस्य प्रभवन्त्यमरा अपि । व्यूहयिष्यामि तं व्यूहं यं पार्थो न तरिष्यति ॥ २७ ॥ तस्माद्युध्यस्व मा भैस्त्वं स्वधर्ममनुपालयन् । पितृपैतामहं मार्ग-

मनुयाहि महारथ ॥ २८ ॥ अधीत्य विधिवद्वेदानग्नयः सुहुतास्त्वया । दृष्टं च बहुभिर्यज्ञैर्न ते मृत्युर्भयङ्कर ॥ २९ ॥ दुर्लभं मानुषैर्मन्दैर्महाभाग्यमवाप्य तु । भुजवीर्य्यार्जितान् लोकान् दिव्यान् प्राप्स्यस्यनुत्तमान् ॥ ३० ॥ कुरवः पाण्डवाश्चैव वृष्णयोऽन्ये च मानवाः । अहञ्च सहपुत्रेण अध्रुवा इति चिन्त्यताम् ॥ ३१ ॥ पर्य्यायेण वयं सर्व्वे कालेन बलिना हताः । परलोकं गमिष्याम स्वैः स्वैः कर्म्मभिरन्विताः ॥ ३२ ॥ तपस्तप्त्वा तु यान् लोकान् प्राप्नुवन्ति तपस्विनः । क्षत्रधर्म्माश्रिता वीराः क्षत्रियाः प्राप्नुवन्ति तान् ॥ ३३ ॥ एवमाश्वासितो राजा भारद्वाजेन सैन्धवः । अपानुदद्भयं पार्थाद्युद्धाय च मनो दधे ॥ ३४ ॥ ततः प्रहर्षः सैन्यानां तवाप्यासीद्विशाम्पते । वादित्राणां ध्वनिश्चोग्रः सिंहनादरवैः सह ॥ ३५ ॥

इति द्रोणपर्व्वणि प्रतिज्ञापर्व्वणि जयद्रथाश्वासे
चतुःसप्ततोऽध्यायः ॥ ७४ ॥

---

सञ्जय उवाच । प्रतिज्ञाते तु पार्थेन सिन्धुराजवधे तदा । वासुदेवो महाबाहुर्धनञ्जयमभाषत ॥ १ ॥ भ्रातॄणां मतमाज्ञाय त्वया वाचि प्रतिश्रुतम् । सैन्धवस्यास्मि हन्तेति तत्साहसमिदं कृतम् ॥ २ ॥ असम्मन्त्र्य मया सार्द्धमतिभारोऽयमुद्यतः । कथं नु सर्व्वलोकस्य नावहास्या भवेमहि ॥ ३ ॥ धार्त्तराष्ट्रस्य शिविरे मया प्रणिहिताश्चराः । त इमे शीघ्रमागम्य प्रवृत्तिं वेदयन्ति नः ॥ ४ ॥ त्वया वै सम्प्रतिज्ञाते सिन्धुराजवधे प्रभो । सिंहनादः सवादित्रः सुमहानिह तैः श्रुतः ॥ ५ ॥ तेन शब्देन वित्रस्ता धार्त्तराष्ट्राः ससैन्धवाः । नाकस्मात् सिंहनादोऽयमिति मत्वा व्यवस्थिताः ॥ ६ ॥ सुमहाञ्छब्दसम्पातः कौरवाणां महाभुज ।

आसीन्नागाश्वपत्तीनां रथघोषश्च भैरवः ॥ ७ ॥ अभिमन्योर्वधं श्रुत्वा ध्रुवमार्त्तो धनञ्जयः । रात्रौ निर्य्यास्यति क्रोधादिति मत्वा व्यवस्थिताः ॥ ८ ॥ तैर्य्यतद्विरियं सत्या श्रुता सत्यप्रतिस्तव । प्रतिज्ञा सिन्धुराजस्य वधे राजीवलोचन ॥ ९ ॥ ततो विमनसः सर्व्वे त्रस्ताः क्षुद्रमृगा इव । आसन् सुयोधनामात्याः स च राजा जयद्रथः ॥ १० ॥ अथोत्थाय सहामात्यैर्दीनः शिविरमात्मन । आयात् सौवीरसिन्धूनामीश्वरो भृशदुःखित ॥ ११ ॥ समन्त्रकाले सम्मन्त्र्य सर्व्वानिश्रेयसीः क्रियाः । सुयोधनमिदं वाक्यमब्रवीद्राजसंसदि ॥ १२ ॥ मयासौ पुत्रहन्तेति श्वोऽभियाता धनञ्जयः । प्रतिज्ञातो हि सेनाया मध्ये तेन वधो मम ॥ १३ ॥ तान्न देवा न गन्धर्व्वा नासुरोरगराक्षसाः । उत्सहन्तेऽन्यथाकर्त्तुं प्रतिज्ञा सव्यसाचिनः ॥ १४ ॥ ते मां रक्षत सङ्ग्रामे मा वो मूर्द्धि धनञ्जयः । पदं कृत्वाप्नुयाल्लक्षं तस्मादत्र विधीयताम् ॥ १५ ॥ अथरक्षा न मे सङ्ख्ये क्रियते कुरुनन्दन । अनुजानीहि मां राजन् गमिष्यामि गृहान् प्रति ॥ १६ ॥ एवमुक्तस्त्ववाक्शीर्षो विमना स सुयोधन । श्रुत्वा तं सभय तस्य ध्यानमेवान्वपद्यत ॥ १७ ॥ तमार्त्तमभिसम्प्रेक्ष्य राजा किल स सैन्धव । मृदु चात्महितं चैव सापेक्षमिदमुक्तवान् ॥ १८ ॥ नेह पश्यामि भवतां तथा वीर्य्यं महुर्द्धरम् । योऽर्ज्जुनस्यास्त्रमस्त्रेण प्रतिहन्यान्महाहवे ॥ १९ ॥ वासुदेवसहायस्य गाण्डीवन्धन्वतो धनुः । कोऽर्ज्जुनस्याग्रतस्तिष्ठेत् साक्षादपि शतक्रतु ॥ २० ॥ महेश्वरोऽपि पार्थेन श्रूयते योधित पुरा । पदातिना महावीर्य्यो गिरौ हिमवति प्रभु ॥ २१ ॥ दानवानां सहस्राणि हिरण्यपुरवासिनाम् । जघानैकरथेनैव देवराजप्रचोदित ॥२२॥ समायुक्तो हि कौन्तेयो वासुदेवेन धीमता । सामरानपि लोकांस्त्रीन् हन्यादिति मतिर्मम ॥ २३ ॥ सोऽहमिच्छाम्यनुज्ञातं रक्षितं वा महात्मना ।

द्रोणेन सहपुत्रेण वीरेण यदि मन्यसे ॥ २४ ॥ स राजा स्वय-
माचार्य्यो भृशमभ्यर्थितोऽर्जुन । साम्बधान च विहित रथाश्वा
किल सज्जिता ॥२५॥ कर्णो भूरिश्रवा द्रौणिर्वृषसेनश्च दुर्जय ।
कृपश्च मद्रराजश्च षडेते स्यु पुरोगमा ॥ २६ ॥ शकट पद्मक-
श्चार्द्धव्यूहो द्रोणेन निर्मित । पद्मकर्णिकमध्यस्थ सूचीपार्श्वे
जयद्रथ ॥ २७ ॥ स्थास्यते रक्षितो वीरै सिन्धुराट् युद्धदुर्मद ।
धनुष्यस्त्रे च वीर्य्ये च प्राणे चैव तथौरसे ॥ २८ ॥ अविषह्यतमा
ह्येते निश्चिता पार्थ षड्रथा । एतानजित्वा षड्रथान् नैव प्राप्यो
जयद्रथ ॥ २९ ॥ तेषामेकैकशो वीर्य्यं षण्णान्त्वमनुचिन्तय ।
सहिता हि नरव्याघ्र न शक्या जेतुमञ्जसा ॥ ३० ॥ भूयस्तु
मन्त्रयिष्यामो नीतिमात्महिताय वै । मन्त्रज्ञै सचिवै सार्द्धं
सुहृद्भि कार्य्यसिद्धये ॥ ३१ ॥

इति द्रोणपर्व्वणि प्रतिज्ञापर्व्वणि कृष्णवाक्ये
पञ्चसप्ततोऽध्याय ॥ ७५ ॥

रणे। सत्येन च शपे कृष्ण तथैवायुधमालभे ॥ ७ ॥ यस्य गोप्ता महेष्वासस्तस्य पापस्य दुर्मतेः। तमेव प्रथमं द्रोणमभियास्यामि केशव ॥ ८ ॥ तस्मिन् द्यूतमिदं बद्धं मन्यते च सुयोधनः। तस्मात्तस्यैव सेनाग्रं भित्त्वा यास्यामि सैन्धवम् ॥ ९ ॥ द्रष्टासि श्वो महेष्वासान् नाराचैस्तिग्मतेजितैः। शृङ्गाणीव गिरेर्वज्रैर्दीर्य्यमाणान्मया युधि ॥ १० ॥ नरनागाश्वदेहेभ्यो विस्रविष्यति शोणितम्। पतद्भ्यः पतितेभ्यश्च विभिन्नेभ्यः शितैः शरैः ॥ ११ ॥ गाण्डीवप्रेषिता बाणा मनोऽनिलसमा जवे। नृनागाश्वान् विदेहासून् कर्त्तारश्च सहस्रशः ॥ १२ ॥ यमात् कुवेराद्वरुणादिन्द्राद्रुद्राच्च यन्मया। उपात्तमस्त्रं घोरं तद्द्रष्टारोऽत्र नरा युधि ॥ १३ ॥ ब्राह्मेणास्त्रेण चास्त्राणि हन्यमानानि संयुगे। मया द्रष्टासि सर्व्वेषां सैन्धवस्याभिरक्षिणाम् ॥ १४ ॥ शरवेगसमुत्कृत्तै राज्ञां केशव मूर्द्धभिः। आस्तीर्य्यमाणां पृथिवीं द्रष्टासि श्वो मया युधि ॥ १५ ॥ क्रव्यादांस्तर्पयिष्यामि द्रावयिष्यामि शात्रवान्। सुहृदो नन्दयिष्यामि प्रमथिष्यामि सैन्धवम् ॥ १६ ॥ बह्वागस्कृत् कुसम्बन्धी पापदेशसमुद्भवः। मया सैन्धवको राजा हतः स्वान् शोचयिष्यति ॥ १७ ॥ सर्व्वक्षीरान्नभोक्तारं पापाचारं रणाजिरे। मया सराजकं बाणैर्भिन्नं द्रक्ष्यसि सैन्धवम् ॥ १८ ॥ तथा प्रभाते कर्त्तास्मि यथा कृष्ण सुयोधनः। नान्यं धनुर्द्धरं लोके मंस्यते मत्समं युधि ॥ १९ ॥ गाण्डीवञ्च धनुर्दिव्यं योद्धा चाहं नरर्षभ। शस्त्रञ्च यन्ता हृषीकेश किं नु स्यादजितं मया ॥ २० ॥ तव प्रसादाद्भगवन् किं नावाप्तं रणे मम। अविषह्यं हृषीकेश किञ्जानन्मां विगर्हसे ॥ २१ ॥ यथा लक्ष्मीः स्थिरा चन्द्रे समुद्रे च यथा जलम्। एवमेतां प्रतिज्ञां मे सत्यां विद्धि जनार्द्दन ॥ २२ ॥ मावमंस्था ममास्त्राणि मावमंस्था धनुर्दृढम्। मावमंस्था बलं बाह्वोर्मावमंस्था धनञ्जयम् ॥ २३ ॥ तथाभियामि सङ्ग्रामं न

शौर्यं जयामि च। तेन सत्येन सङ्ग्रामे हतं विद्धि जयद्रथम् ॥ २४ ॥ ध्रुवं वै ब्राह्मणे सत्यं ध्रुवा साधुषु सन्नतिः। श्रीर्ध्रुवापि च यज्ञेषु ध्रुवो नारायणे जयः ॥ २५ ॥

सञ्जय उवाच। एवमुक्त्वा हृषीकेशं स्वयमात्मानमात्मनः। सन्दिदेशार्जुनो नर्दन् वासविः केशवं प्रभुम् ॥ २६ ॥ यथा प्रभातां रजनीं कल्पितः स्याद्रथो मम। तथा कृष्ण त्वया कार्यं कार्यं हि महदुद्यतम् ॥ २७ ॥

इति द्रोणपर्वणि प्रतिज्ञापर्वणि अर्जुनवाक्ये षट्सप्ततोऽध्यायः ॥ ७६ ॥

---

सञ्जय उवाच। तां निशां शोकदुःखार्त्तौ निश्वसन्ताविवोरगौ। निद्रां नैवोपलेभाते वासुदेवधनञ्जयौ ॥ १ ॥ नरनारायणौ क्रुद्धौ ज्ञात्वा देवाः सवासवाः। व्यथिताश्चिन्तयामासुः किंस्विदेतद्भविष्यति ॥ २ ॥ ववुश्च दारुणा वाता रूक्षा घोराभिशंसिनः। सकबन्धस्तथादित्ये परिघः समदृश्यत ॥ ३ ॥ शुष्काशन्यश्च निष्पेतुः सनिर्घाताः सविद्युतः। चचाल चापि पृथिवी सशैलवनकानना ॥ ४ ॥ चुक्षुभुश्च महाराज सागरा मकरालयाः। प्रतिस्रोतःप्रवृत्ताश्च तथा गन्तुं समुद्रगाः ॥ ५ ॥ रथाश्वनरनागानां प्रवृत्तमधरोत्तरम्। क्रव्यादानां प्रमोदार्थं यमराष्ट्रविवृद्धये ॥ ६ ॥ वाहनानि शकृन्मूत्रे मुमुचू रुरुदुश्च ह। तान् दृष्ट्वा दारुणान् सर्वानुत्पातान् लोमहर्षणान् ॥ ७ ॥ सर्वे ते व्यथिताः सैन्यास्त्वदीया भरतर्षभ। श्रुत्वा महाबलस्योग्रां प्रतिज्ञां सव्यसाचिनः ॥ ८ ॥ अथ कृष्णं महाबाहुरब्रवीत्पाकशासनिः। आश्वासय सुभद्रां त्वं भगिनीं स्नुषया सह ॥ ९ ॥ स्नुषाश्वास्या वयस्याश्च विशोकाः कुरु माधव। साम्ना सत्येन

श्रुतेन वचसाश्वास्य प्रभो ॥ १० ॥ ततोऽर्जुनगृहं गत्वा वासु-
देवः सुदुर्मनाः । आगतो पुत्रशोकार्त्तामाश्वासयत दुःखि-
ताम् ॥ ११ ॥

वासुदेव उवाच । मा शोकं कुरु वार्ष्णेयि कुमारं प्रति
वधूं या । सर्व्वेषां प्राणिनां भीरु निष्ठैषा कालनिर्मिता ॥ १२ ॥
कुलेजातस्य धीरस्य क्षत्रियस्य विशेषतः । सदृशं मरणं ह्येतत्तव
पुत्रस्य मानदः ॥ १३ ॥ दिष्ट्या महारथो धीरः पितुस्तुल्यपरा-
क्रमः । क्षात्रेण विधिना प्राप्तो वीराभिलषितां गतिम् ॥ १४ ॥
जित्वा सुबहुशः शत्रून् प्रेषयित्वा च मृत्यवे । गतः पुण्यकृतान्
लोकान् सर्व्वकामदुहोऽक्षयान् ॥ १५ ॥ तपसा ब्रह्मचर्य्येण श्रुतेन
प्रज्ञयापि च । सन्तो यां गतिमिच्छन्ति तां प्राप्तस्तव पुत्रकः
॥ १६ ॥ वीरसूर्वीरपत्नी त्वं वीरजा वीरबान्धवा । मा शुचः
तनयं भद्रे गतः स परमां गतिम् ॥ १७ ॥ प्राप्स्यते चाप्यसौ
पापः सैन्धवो बालघातकः । अस्यावलेपस्य फलं ससुहृद्गणबान्धवः
॥ १८ ॥ व्युष्टायान्तु वरारोहे रजन्यां पापकर्म्मकृत् । न हि
मोक्ष्यति पार्थात् स प्रविष्टोऽप्यमरावतीम् ॥ १९ ॥ श्वः श्रोष्यसे
शिरस्तस्य सैन्धवस्य रणे हृतम् । समन्तपञ्चकाद् बाह्यं विशोका
भव मानद ॥ २० ॥ क्षत्रधर्म्मं पुरस्कृत्य गतः शूरः सतां गतिम् ।
यां वयं प्राप्नुयामेह ये चान्ये शस्त्रजीविनः ॥ २१ ॥ व्यूढोरस्को
महाबाहुरनिवर्त्ती रथप्रणुत् । गतस्तव वरारोहे पुत्रः स्वर्गं
ज्वरं जहि ॥ २२ ॥ अनुयातश्च पितरं मातृपक्षं च वीर्य्यवान् ।
सहस्रशो रिपून् हत्वा हतः शूरो महारथः ॥ २३ ॥ आश्वासय
स्नुषां राज्ञि मा शुचः क्षत्रिये भृशम् । श्वः प्रियं सुमहच्छ्रुत्वा
विशोका भव नन्दिनि ॥ २४ ॥ यत् पार्थेन प्रतिज्ञातं तत्तथा न
तदन्यथा । चिकीर्षितं हि ते भर्त्तुर्न भवेज्जातु निष्फलम् ॥ २५ ॥
यदि च मनुजपन्नगाः पिशाचा रजनीचराः पतगाः सुरा-

सुराश्च । रणगतमभियान्ति विद्धि राजन् न च भविता सहितैरपि प्रभाते ॥ २६ ॥

इति द्रोणपर्वणि प्रतिज्ञापर्वणि सुभद्राश्वासने
सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

---

सञ्जय उवाच । एतच्छ्रुत्वा वचस्तस्य केशवस्य महात्मनः । सुभद्रा पुत्रशोकार्त्ता विललाप सुदुःखिता ॥ १ ॥ हा पुत्र मम मन्दायाः कथमेत्यासि संयुगम । निधनं प्राप्तवांस्तात पितृतुल्यपराक्रम ॥ २ ॥ कथमिन्दीवरश्यामं सुदंष्ट्रं चारुलोचनम् । मुखं ते दृश्यते वत्स गुण्ठितं रणरेणुना ॥ ३ ॥ नूनं शूरं निपतितं त्वां पश्यन्त्यनिवर्त्तिनम् । सुशिरोग्रीवबाह्वंसं व्यूढोरस्कं नतोदरम् ॥ ४ ॥ चारूपचितसर्वाङ्गं स्वक्षं शस्त्रक्षताचितम् । भूतानि त्वां निरीक्षन्ते नूनं चन्द्रमिवोदितम् ॥ ५ ॥ शयनीयं पुरा यस्य स्पर्द्ध्यास्तरणसंवृतम् । भूमावद्य कथं शेषे विप्रविद्धः सुखोचितः ॥ ६ ॥ योऽन्वास्यत पुरा वीरो वरस्त्रीभिर्महाभुजः । कथमन्वास्यते सोऽद्य शिवाभिः पतितो मृधे ॥ ७ ॥ योऽस्तूयत पुरा हृष्टैः सूतमागधवन्दिभिः । सोऽद्य क्रव्याद्गणैर्घोरैर्विनदद्भिरुपास्यते ॥ ८ ॥ पाण्डवेषु च नाथेषु वृष्णिवीरेषु वा विभो । पाञ्चालेषु च सर्वेषु हतः केनास्यनाथवत् ॥ ९ ॥ अतृप्तदर्शना पुत्र दर्शनस्य तवानघ । मन्दभाग्या गमिष्यामि व्यक्तमद्य यमक्षयम् ॥ १० ॥ विशालाक्षं सुकेशान्तं चारुवाक्यं सुगन्धि च । तव पुत्र कदा भूयो मुखं द्रक्ष्यामि निर्व्रणम् ॥ ११ ॥ धिग्बलं भीमसेनस्य धिक् पार्थस्य धनुष्मताम् । धिग्वीर्यं वृष्णिवीराणां पाञ्चालानाञ्च धिग्बलम् ॥ १२ ॥ धिक् केकयांस्तथा चेदीन् मत्स्यांश्चैवाथ सृञ्जयान् । ये त्वा रणगतं वीर न विदुरभिवीक्षितुम् ॥ १३ ॥ अद्य पश्यामि

पृथिवीं शून्यामिव हतश्रियम् । अभिमन्युमपश्यन्ती शोकव्याकुल-
लोचना ॥ १४ ॥ स्वस्रीयं वासुदेवस्य पुत्रं गाण्डीवधन्वनः ।
कथं त्वातिरथं वीरं द्रक्ष्याम्यद्य निपातितम् ॥ १५ ॥ हा वीर
दृष्टो नष्टश्च धनं स्वप्न इवासि मे । अहो ह्यनित्यं मानुष्यं जल-
बुद्बुदचञ्चलम् ॥ १६ ॥ इमां ते तरुणीं भार्य्यां तवाधिभिरभि-
प्लुताम् । कथं सन्धारयिष्यामि विवत्सामिव धेनुकाम् ॥ १७ ॥
अहो ह्यकाले प्रस्थानं कृतवानसि पुत्रक । विहाय फलकाले मां
सुगृद्धां तव दर्शने ॥ १८ ॥ नूनं गतिः कृतान्तस्य प्राज्ञैरपि सुदु-
र्विदा । यत्र त्वं केशवे नाथे सङ्ग्रामेऽनाथवद्धतः ॥ १९ ॥ यज्वनां
दानशीलानां ब्राह्मणानां कृतात्मनाम् । चरितब्रह्मचर्य्याणां
पुण्यतीर्थावगाहिनाम् ॥ २० ॥ कृतज्ञानां वदान्यानां गुरुशुश्रू-
षिणामपि । सहस्रदक्षिणानाञ्च या गतिस्तामवाप्नुहि ॥ २१ ॥
या गतिर्युध्यमानानां शूराणामनिवर्त्तिनाम् । हत्वारीन्निहता-
नाञ्च सङ्ग्रामे तां गतिं व्रज ॥ २२ ॥ गोसहस्रप्रदातॄणां क्रतु-
दानाञ्च या गतिः । नैवेशिकञ्चाभिमतं ददतां या गतिः शुभा
॥ २३ ॥ ब्राह्मणेभ्यः शरण्येभ्यो निधिं निदधतां च या । या
चापि न्यस्तदण्डानां तां गतिं व्रज पुत्रक ॥ २४ ॥ ब्रह्मचर्य्येण यां
यान्ति मुनयः संशितव्रताः । एकपत्न्यश्च या यान्ति तां गतिं
व्रज पुत्रक ॥ २५ ॥ राज्ञां सुचरितैर्या च गतिर्भवति शाश्वती ।
चातुराश्रमिणां पुण्यैः पावितानां सुरक्षितैः ॥ २६ ॥ दीनानु-
कम्पिनां या च सततं संविभागिनाम् । पैशुन्याच्च निवृत्तानां
गतिं तां व्रज पुत्रक ॥ २७ ॥ व्रतिनां धर्म्मशीलानां गुरुशुश्रू-
षिणामपि । अमोघातिथिनां या च तां गतिं व्रज पुत्रक ॥ २८ ॥
कृच्छ्रेषु या धारयतामात्मानं व्यसनेषु च । गतिं शोकाग्निदग्धानां
तां गतिं व्रज पुत्रक ॥ २९ ॥ मातापित्रोश्च शुश्रूषां कल्पयन्तीह
ये सदा । स्वदारनिरतानाञ्च या गतिस्तामवाप्नुहि ॥ ३

ऋतुकाले स्वकां भार्य्यां गच्छतां या मनीषिणाम् । परस्त्रीभ्यो
निवृत्तानां तां गतिं व्रज पुत्रक ॥ ३१ ॥ साम्ना ये सर्वभूतानि
पश्यन्ति गतमत्सराः । नारुन्तुदानां क्षमिणां या गतिस्तामवा-
प्नुहि ॥ ३२ ॥ मधुमांसनिवृत्तानां मदाद्दम्भात्तथानृतात् । परो-
पतापत्यक्तानां तां गतिं व्रज पुत्रक ॥ ३३ ॥ ह्रीमन्तः सर्व-
शास्त्रज्ञा ज्ञानतृप्ता जितेन्द्रियाः । या गतिं साधवो यान्ति तां
गतिं व्रज पुत्रक ॥ ३४ ॥ एवं विलपतीं दीनां सुभद्रां शोक-
कर्षिताम् । अन्वपद्यत पाञ्चाली वैराटीसहिता तदा ॥ ३५ ॥
ताः प्रकामं रुदित्वा च विलप्य च सुदुःखिताः । उन्मत्तावत्तदा
राजन् विसंज्ञा न्यपतन् क्षितौ ॥ ३६ ॥ सोपचारस्तु कृष्णस्तां
दुःखितां भृशदुःखित[illegible] तत्तद्दृष्ट्वा हितं
वचः ॥ ३७ ॥ विसंज्ञकल्पां रुदतीं मर्मविद्धां प्रवेपतीम् । भगिनीं
पुण्डरीकाक्ष इदं वचनमब्रवीत् ॥ ३८ ॥ सुभद्रे मा शुचः पुत्रं
पाञ्चाल्याश्वासयोत्तराम् । गतोऽभिमन्युः प्रथितां गतिं क्षत्रिय-
पुङ्गव ॥ ३९ ॥ ये चान्येऽपि कुले सन्ति पुरुषा नो वरानने ।
सर्वे ते तां गतिं यान्तु याऽभिमन्योर्यशस्विनः ॥ ४० ॥ कुर्य्याम
तद्वयं कर्म क्रियासुः सुहृदश्च नः । कृतवान् यादृशं शोकस्तव पुत्रो
महारथ ॥ ४१ ॥ एवमाश्वास्य भगिनीं द्रौपदीमपि चोत्तराम् ।
पार्थस्यैव महाबाहुः पार्श्वमागादरिन्दम ॥ ४२ ॥ ततोऽभ्यनु
ज्ञाय नृपान् कृष्णो बन्धूंस्तथार्जुनम् । विविशान्तःपुरे राजंस्ते
च जग्मुर्यथालयम् ॥ ४३ ॥

इति द्रोणपर्वणि प्रतिज्ञापर्वणि सुभद्राविलापे
अष्टसप्ततोऽध्यायः ॥ ७८ ॥

---

सञ्जय उवाच। ततोऽर्ज्जुनस्य भवनं प्रविश्याप्रतिमं विभुः। स्पृष्ट्वाम्भः पुण्डरीकाक्षः स्थण्डिले शुभलक्षणे ॥ १ ॥ सन्तस्तार शुभां शय्यां दर्भैर्वैदूर्य्यसन्निभैः। ततो माल्येन विधिवल्लाजैर्गन्धैः सुमङ्गलैः ॥ २ ॥ अलञ्चकार तां शय्यां परिवार्य्यायुधोत्तमैः। ततः स्पृष्टोदके पार्थे विनीताः परिचारकाः ॥ ३ ॥ निशायां नैत्यिकं चक्रुर्नैशं त्रैयम्बकं बलिम्। ततः प्रीतमनाः पार्थो गन्धै-र्माल्यैश्च माधवम् ॥ ४ ॥ अलङ्कृत्योपहारन्तन्नैशं तस्मै न्यवेदयत्। स्मयमानस्तु गोविन्दः फाल्गुनं प्रत्यभाषत ॥ ५ ॥ सुप्यतां पार्थ भद्रन्ते कल्याणाय व्रजाम्यहम्। स्थापयित्वा ततो द्वास्थान् गोप्तॄंश्चात्तायुधान्नरान् ॥ ६ ॥ दारुकानुगतः श्रीमान् विवेश शिबिरं स्वकम्। शिश्ये च शयने शुभ्रे बहुकृत्यं विचिन्तयन् ॥ ७ ॥ पार्थाय सर्वं भगवान् शोकदुःखापहं विधिम्। व्यदधात् पुण्डरीकाक्षस्तेजोद्युतिविवर्द्धनम् ॥ ८ ॥ योगमास्थाय युक्तात्मा सर्वेषामीश्वरेश्वरः। श्रेयस्कामः पृथुयशा विष्णुर्जिष्णोः प्रियङ्करः ॥ ९ ॥ न पाण्डवानां शिबिरे कश्चित् सुष्वाप तां निशाम्। प्रजागरः सर्वजनं ह्याविवेश विशाम्पते ॥ १० ॥ पुत्रशोकाभितप्तेन प्रतिज्ञातो महात्मना। सहसा सिन्धुराजस्य वधो गाण्डीवधन्वना ॥ ११ ॥ तत् कथं सुमहाबाहुर्वासविः परवीरहा। प्रतिज्ञां सफलां कुर्य्यादिति ते समभाषन्त ॥ १२ ॥ कष्टं हीदं व्यवसितं पाण्डवेन महात्मना। स च राजा महावीर्य्यः पारयत्वर्ज्जुनः स ताम् ॥ १३ ॥ पुत्रशोकाभितप्तेन प्रतिज्ञा महती कृता। भ्रातरश्चापि विक्रान्ता बहुलानि बलानि च ॥ १४ ॥ धृतराष्ट्रस्य पुत्रेण सर्वं तस्मै निवेदितम्। स हत्वा सैन्धवं सङ्ख्ये पुनरेतु धनञ्जयः ॥ १५ ॥ जित्वा रिपुगणांश्चैव पारयन्नर्ज्जुनो व्रतम्। श्वोऽहत्वा सिन्धुराजस्य धूमकेतुं प्रवेक्ष्यति ॥ १६ ॥ न ह्यमावनृतं कर्त्तुमलं पार्थो धनञ्जयः। धर्मपुत्रः कथं राजा भविष्यति मृतेऽर्ज्जुने ॥ १७ ॥

तस्मिन् हि विजयः कृत्स्नः पाण्डवेन समाहितः। यदि नोऽस्ति
कृतं किञ्चिद्यदि दत्तं हुतं यदि ॥ १८ ॥ फलेन तस्य सर्वस्य
सव्यसाची जयत्वरीन्। एवं कथयतां तेषां जयमाशंसतां प्रभो
॥ १९ ॥ कृच्छ्रेण महता राजन् रजनी व्यत्यवर्त्तत। तस्यां
रजन्यां मध्ये तु प्रतिबुद्धो जनार्द्दनः ॥ २० ॥ स्मृत्वा प्रतिज्ञां पार्थस्य
दारुकं प्रत्यभाषत। अर्जुनेन प्रतिज्ञातमार्त्तेन हतबन्धुना ॥ २१ ॥
जयद्रथं वधिष्यामि श्वोभूत इति दारुक। तत्तु दुर्य्योधनः श्रुत्वा
मन्त्रिभिर्मन्त्रयिष्यति ॥ २२ ॥ यथा जयद्रथं पार्थो न हन्यादिति
संयुगे। अक्षौहिण्यो हि ताः सर्वा रक्षिष्यन्ति जयद्रथम् ॥ २३ ॥
द्रोणश्च सह पुत्रेण सर्वास्त्रविधिपारगः। एको वीरः सहस्राक्षो
दैत्यदानवदर्पहा ॥ २४ ॥ सोऽपि तन्नोत्सहेताजौ हन्तुं द्रोणेन
रक्षितम्। सोऽहं श्वस्तत् करिष्यामि यथा कुन्तीसुतोऽर्जुनः ॥ २५ ॥
अप्राप्तेऽस्तन्दिनकरे हनिष्यति जयद्रथम्। न हि दारा न मित्राणि
ज्ञातयो न च बान्धवाः ॥ २६ ॥ कश्चिदन्यः प्रियतरः कुन्तीपुत्रा
ममार्जुनात्। अनर्जुनमिमं लोकं मुहूर्त्तमपि दारुक ॥ २७ ॥
उद्वीक्षितुं न शक्तोऽहं भविता न च तत्तथा। अहं विजित्य तान्
सर्वान् सहसा सहयद्विपान् ॥ २८ ॥ अर्जुनार्थे हनिष्यामि सकर्णान्
ससुयोधनान्। श्वो निरीक्षन्तु मे वीर्य्यं त्रयो लोका महाहवे
॥ २९ ॥ धनञ्जयार्थे समरे पराक्रान्तस्य दारुक। श्वो नरेन्द्र
सहस्राणि राजपुत्रशतानि च ॥ ३० ॥ साश्वद्विपरथान्याजौ
विद्रविष्यन्ति दारुक। श्वस्तां चक्रप्रमथितां द्रक्ष्यसे नृपवाहिनीम्
॥ ३१ ॥ मया क्रुद्धेन समरे पाण्डवार्थे निपातिताम्। श्वः
सदेवाः सगन्धर्वाः पिशाचोरगराक्षसाः ॥ ३२ ॥ ज्ञास्यन्ति लोकाः
सर्वे मां सुहृदं सव्यसाचिनः। यस्तं द्वेष्टि स मां द्वेष्टि यस्तं चानु
स मामनु ॥ ३३ ॥ इति सङ्कल्प्यतां बुद्ध्या शरीरार्द्धं ममार्जुनः।
यथा त्वं मे प्रभातायामस्यां निशि रथोत्तमम् ॥ ३४ ॥ कल्प्य

यित्वा यथाशास्त्रमादाय व्रतं संयुत । गदां कौमोदकीं दिव्यां शक्तिं चक्रं धनुः शरान् ॥ ३५ ॥ आरोप्य वै रथे सूत सर्वोपकरणानि च । स्थानञ्च कल्पयित्वाथ रथोपस्थे ध्वजस्य मे ॥ ३६ ॥ वैनतेयस्य वीरस्य समरे रथशोभिनः । छत्रं जाम्बूनदैर्जालैरर्कज्वलनसप्रभैः ॥ ३७ ॥ विश्वकर्मकृतैर्दिव्यैरश्वानपि विभूषितान् । बलाहकं मेघपुष्पं शैव्यं सुग्रीवमेव च ॥ ३८ ॥ युक्त्वा वाजिवरान् यत्तः कवची तिष्ठ दारुक । पाञ्चजन्यस्य निर्घोषमार्षभेणैव पूरितम् ॥ ३९ ॥ श्रुत्वा च भैरवं नादमुपायास्त्वं जवेन माम् । एकाह्नाहममर्षञ्च सर्वदुःखानि चैव ह ॥ ४० ॥ भ्रातुः पैतृष्वसेयस्य व्यपनेष्यामि दारुक । सर्वोपायैर्यतिष्यामि यथा बीभत्सुराहवे ॥ ४१ ॥ पश्यतां धार्त्तराष्ट्राणां हनिष्यति जयद्रथम् । यस्य यस्य च बीभत्सुर्वधे यत्नं करिष्यति । आशंसे सारथे तत्र भवितास्य ध्रुवो जयः ॥ ४२ ॥

दारुक उवाच । जय एव ध्रुवस्तस्य कुत एव पराजयः । यस्य त्वं पुरुषव्याघ्र सारथ्यमुपजग्मिवान् ॥ ४३ ॥ एवं चैतत् करिष्यामि यथा मामनुशाससि । सुप्रभातामिमां रात्रिं जयाय विजयस्य च ॥ ४४ ॥

इति द्रोणपर्व्वणि प्रतिज्ञापर्व्वणि कृष्णदारुकसम्भाषणे ऊनसप्ततोऽध्यायः ॥ ७९ ॥

---

सञ्जय उवाच । कुन्तीपुत्रस्तु तं मन्त्रं स्मरन्नेव धनञ्जयः । प्रतिज्ञामात्मनो रक्षन् मुमोहाचिन्त्यविक्रमः ॥ १ ॥ तन्तु शोकेन सन्तप्तं स्वप्ने कपिवरध्वजम् । आससाद महातेजा ध्यायन्तं गरुड़ध्वजः ॥ २ ॥ प्रत्युत्थानञ्च कृष्णस्य सर्वावस्थो धनञ्जयः । न लोपयति धर्म्मात्मा भक्त्या प्रेम्णा च सर्वदा ॥ ३ ॥ प्रत्युत्थाय च

गोविन्द स तथा शयन ददौ। न चाशने स्वयं बुद्धिं बीभत्सु-व्यदधात्तदा॥ ४॥ यतः कृष्णो महातेजा जानन् पार्थस्य निश्चयम्। कुन्तीपुत्रमिदं वाक्यमासीनः स्थितमब्रवीत्॥ ५॥ मा विषादे मनः पार्थ कृथाः कालो हि दुर्जयः। कालः सर्वाणि भूतानि नियच्छति परे विधौ॥ ६॥ किमर्थञ्च विषादस्ते तद्ब्रूहि द्विपदाम्बर। न शोचन्ति विदुषा श्रेष्ठ शोकः कार्यविनाशनः॥ ७॥ यत्तु कार्यं भवेत् कार्यं कर्मणा तत् समाचर। हीनचेष्टस्य यः शोकः स हि शत्रुर्धनञ्जय॥ ८॥ शोचन्नन्दयते शत्रून् कर्षयत्यपि बान्धवान्। क्षीयते च नरस्तस्मान्न त्वं शोचितुमर्हसि॥ ९॥ इत्युक्तो वासुदेवेन बीभत्सुरपराजितः। आवभाषे तदा विद्वान् इदं वचनमर्थवत्॥ १०॥ मया प्रतिज्ञा महती जयद्रथवधे कृता। श्वोऽस्मि हन्ता दुरात्मानं पुत्रघ्नमिति केशव॥ ११॥ मत्प्रतिज्ञाविघातार्थं धार्त्तराष्ट्रैः किलाच्युत। पृष्ठतः सैन्धवः कार्यः सर्वैर्गुप्तो महारथैः॥ १२॥ दश चैकाञ्च ताः कृष्ण अक्षौहिण्यः सुदुर्जयाः। हतावशेषास्तत्रेमा हन्त माधव सङ्ख्यया॥ १३॥ ताभिः परिवृतः सङ्ख्ये सर्वैश्चैव महारथैः। कथं शक्येत सन्द्रष्टुं दुरात्मा कृष्ण सैन्धवः॥ १४॥ प्रतिज्ञापारणं चापि न भविष्यति केशव। प्रतिज्ञायां च हीनायां कथं जीवति मद्विधः॥ १५॥ दुःखोपायस्य मे वीर विकाङ्क्षा परिवर्त्तते। द्रुतञ्च याति सविता तत एतद्ब्रवीम्यहम्॥ १६॥ शोकस्थानन्तु तच्छ्रुत्वा पार्थस्य द्विजकेतनः। संस्पृश्याम्भस्ततः कृष्णः प्राङ्मुखः समवस्थितः॥ १७॥ इदं वाक्यं महातेजा बभाषे पुष्करेक्षणः। हितार्थं पाण्डुपुत्रस्य सैन्धवस्य वधे धृतः॥ १८॥ पार्थ पाशुपतं नाम परमास्त्रं सनातनम्। येन सर्वान् मृधे दैत्यान् जघ्ने देवो महेश्वरः॥ १९॥ यदि तद्विदितं तेऽद्य श्वो हन्तासि जयद्रथम्। अथाज्ञातं प्रपद्यस्व मनसा वृषभध्वजम्॥ २०॥ तं देवं

मनसा ध्यात्वा वृषभध्वजम्। ततस्तस्य प्रसादात्त्वं भक्तः
प्राप्स्यसि तन्महत् ॥ २१ ॥ ततः कृष्णवचः श्रुत्वा संस्पृश्याम्भो
धनञ्जयः। भूमावासीनमेकाग्रो जगाम मनसा भवम् ॥ २२ ॥
ततः प्रणिहिते ब्राह्मे मुहूर्त्ते शुभलक्षणे। आत्मानमर्ज्जुनोऽपश्य-
द्गगने सह केशवम् ॥ २३ ॥ पुण्यं हिमवतः पादं मणिमन्तञ्च
पर्वतम्। ज्योतिर्भिश्च समाकीर्णं सिद्धचारणसेवितम् ॥ २४ ॥
वायुवेगगतिः पार्थः खं भेजे सह केशवः। केशवेन गृहीतः स
दक्षिणे विभुना भुजे ॥ २५ ॥ प्रेक्षमाणो बहून् भावान् जगा-
माद्भुतदर्शनान्। उदीच्यां दिशि धर्मात्मा सोऽपश्यच्छ्वेतपर्वतम्
॥ २६ ॥ कुवेरस्य विहारे च नलिनीं पद्मभूषिताम्। सरि-
च्छ्रेष्ठाञ्च ताङ्गङ्गां वीक्षमाणो बहूदकाम् ॥ २७ ॥ सदा पुष्प-
फलैर्वृक्षैरुपेतां स्फटिकोपलाम्। सिंहव्याघ्रसमाकीर्णां नाना-
मृगसमाकुलाम् ॥ २८ ॥ पुण्याश्रमवतीं रम्यां मनोज्ञाण्डज-
सेविताम्। मन्दरस्य प्रदेशांश्च किन्नरोद्गीतनादिताम् ॥ २९ ॥
हेमरूप्यमयैः शृङ्गैर्नानौषधिविदीपिताम्। तथा मन्दारवृक्षैश्च
पुष्पितैरुपशोभिताम् ॥ ३० ॥ स्निग्धाञ्जनचयाकारं सम्प्राप्य काल-
पर्वतम्। ब्रह्मतुङ्गं नदीश्चान्यास्तथा जनपदानपि ॥ ३१ ॥ सुतुङ्गं
शतशृङ्गञ्च शर्य्यातिवनमेव च। पुण्यमश्वशिरःस्थानं स्थानमाथ-
र्वणस्य च ॥ ३२ ॥ वृषदंशञ्च शैलेन्द्रं महामन्दरमेव च। अप्-
सरोभिः समाकीर्णं किन्नरैश्चैव शोभितम् ॥ ३३ ॥ तस्मिन् शैले
व्रजन् पार्थः सकृष्णः समवैक्षत। शुभैः प्रस्रवणैर्जुष्टां हेमधातु-
विभूषिताम् ॥ ३४ ॥ चन्द्ररश्मिप्रकाशाङ्गीं पृथिवीं पुरमालिनीम्।
समुद्रांश्चाद्भुताकारानपश्यद्बहुलाकरान् ॥ ३५ ॥ वियद्द्यां
पृथिवीञ्चैव तथा विष्णुपदं व्रजन्। विस्मितः सह कृष्णेन क्षिप्तो
बाण इवाभ्यगात् ॥ ३६ ॥ ग्रहनक्षत्रसोमानां सूर्य्याग्न्योश्च सम-
त्विषम्। अपश्यत तदा पार्थो ज्वलन्तमिव पर्वतम् ॥ ३७ ॥

समासाद्य तु तं शैलं शैलाग्रे समवस्थितम्। तपोनित्यं महा-
त्मानमपश्यद्वृषभध्वजम् ॥ ३८ ॥ सहस्रमिव सूर्य्याणां दीप्यमानं
स्वतेजसा। शूलिनं जटिलं गौरं वल्कलाजिनवाससम् ॥ ३९ ॥
नयनानां सहस्रैश्च विचित्राङ्गं महौजसम्। पार्वत्या सहितं देव-
भूतसङ्घैश्च भास्वरैः ॥ ४० ॥ गीतवादित्रसन्नादैर्हास्यलास्यसम-
न्वितैः। वल्गितास्फोटितोत्क्रुष्टैः पुण्यैर्गन्धैश्च शोभितम् ॥ ४१ ॥
स्तूयमानं स्तवैर्दिव्यैर्ऋषिभिर्ब्रह्मवादिभिः। गोप्तारं सर्वभूताना-
मिष्वासधरमच्युतम् ॥ ४२ ॥ वासुदेवस्तु तं दृष्ट्वा जगाम शिरसा
क्षितिम्। पार्थेन सह धर्मात्मा गृणन् ब्रह्म सनातनम् ॥ ४३ ॥
लोकादिं विश्वकर्माणमजमीशानमव्ययम्। मनसः परमां योनिं
खं वायुं ज्योतिषां निधिम् ॥ ४४ ॥ स्रष्टारं वारिधाराणां भुवश्च
प्रकृतिं पराम्। देवदानवयक्षाणां मानवानां च साधनम् ॥ ४५ ॥
योगानाञ्च परं ब्रह्म दृष्टं ब्रह्मविदान्निधिम्। चराचरस्य स्रष्टारं
प्रतिहर्त्तारमेव च ॥ ४६ ॥ कालकोपं महात्मानं शक्रसूर्य्यगुणो-
दयम्। ववन्दे तं तदा कृष्णो वाङ्मनोबुद्धिकर्मभिः ॥ ४७ ॥
यम्प्रपद्यन्ति विद्वांसः सूक्ष्माध्यात्मपदैषिणः। तमजं कारणा-
त्मानं जग्मतुः शरणं भवम् ॥ ४८ ॥ अर्जुनश्चापि तन्देवं भूयो-
भूयोऽभ्यवन्दत। ज्ञात्वा तं सर्वभूतादिं भूतभव्यभवोद्भवम् ॥ ४९ ॥
ततस्तावागतौ दृष्ट्वा नरनारायणावुभौ। सुप्रसन्नमनाः शर्वः
प्रोवाच प्रहसन्निव ॥ ५० ॥ स्वागतं वां नरश्रेष्ठावुत्तिष्ठेतां गत-
क्लमौ। किञ्च वामीप्सितं वीरौ मनसः क्षिप्रमुच्यताम् ॥ ५१ ॥
येन कार्य्येण सम्प्राप्तौ युवान्तत्साधयामि किम्। व्रियतामात्मनः
श्रेयस्तत्सर्वं प्रददामि वाम् ॥ ५२ ॥ ततस्तद्वचनं श्रुत्वा प्रत्युत्थाय
कृताञ्जली। वासुदेवार्जुनौ शर्वं तुष्टुवाते महामती। भक्त्या
स्तवेन दिव्येन महात्मानमनिन्दितौ ॥ ५३ ॥

कृष्णार्ज्जुनावूचतुः। नमो भवाय शर्वाय रुद्राय वरदाय च।

पशुना पतये नित्यमुग्राय च कपर्द्दिने। महादेवाय भीमाय त्र्यम्बकाय च शान्तये ॥ ५४ ॥ ईशानाय भगघ्नाय नमोऽस्त्वन्धकघातिने। कुमारगुरवे तुभ्यं नीलग्रीवाय वेधसे ॥ ५५ ॥ पिनाकिने हविष्याय सत्याय विभवे सदा। विलोहिताय धूम्राय व्याधाय नपराजिते ॥ ५६ ॥ नित्यं नीलशिखण्डाय शूलिने दिव्यचक्षुषे। होत्रे पोत्रे त्रिनेत्राय व्याधये वसुरेतसे ॥ ५७ ॥ अचिन्त्यायाम्बिकाभर्त्रे सर्वदेवस्तुताय च। वृषध्वजाय मुण्डाय जटिने ब्रह्मचारिणे ॥ ५८ ॥ तप्यमानाय सलिले ब्रह्मण्यायाजिताय च। विश्वात्मने विश्वसृजे विश्वमावृत्य तिष्ठते ॥ ५९ ॥ नमो नमस्ते सेव्याय भूतानाम्प्रभवे सदा। ब्रह्मवक्त्राय सर्वाय शङ्कराय शिवाय च ॥ ६० ॥ नमोऽस्तु वाचाम्पतये प्रजानां पतये नमः। नमो विश्वस्य पतये महतां पतये नमः ॥ ६१ ॥ नमः सहस्रशिरसे सहस्रभुजमन्यवे। सहस्रनेत्रपादाय नमोऽसङ्ख्येयकर्मणे ॥ ६२ ॥ नमो हिरण्यवर्णाय हिरण्यकवचाय च। भक्तानुकम्पिने नित्यं सिध्यतां नौ वरः प्रभो ॥ ६३ ॥

सञ्जय उवाच। एवं स्तुत्वा महादेवं वासुदेवः सहार्ज्जुनः। प्रसादयामास भवं तदा ह्यस्त्रोपलब्धये ॥ ६४ ॥

इति द्रोणपर्व्वणि प्रतिज्ञापर्व्वणि अर्ज्जुनस्वप्नदर्शने अशीतितमोऽध्यायः ॥ ८० ॥

---

सञ्जय उवाच। ततः पार्थः प्रसन्नात्मा प्राञ्जलिर्वृषभध्वजम्। ददर्शोत्फुल्लनयनः समस्तं तेजसां निधिम् ॥ १ ॥ तञ्चोपहारं स्वकृतं नैशं नैत्यकमात्मनः। ददर्श त्र्यम्बकाभ्यासे वासुदेवनिवेदितम् ॥ २ ॥ ततोऽभिपूज्य मनसा कृष्णं शर्वञ्च पाण्डवः। इच्छाम्यहं दिव्यमस्त्रमित्यभाषत शङ्करम् ॥ ३ ॥ ततः पार्थस्य

विधाय वरार्थं वचनं तदा। वासुदेवार्जुनौ देव स्मयमानोऽभ्यभाषत ॥ ४ ॥ स्वागतं वां नरश्रेष्ठौ विज्ञातं मनसेप्सितम्। येन कामेन सम्प्राप्तौ भवद्भ्यां तद्ददाम्यहम् ॥ ५ ॥ सरोऽमृतमयं दिव्यमभ्याशे मधुसूदनौ। तत्र मे तद्धनुर्दिव्यं शरश्च निहितः पुरा ॥ ६ ॥ येन देवारयः सर्वे मया युधि निपातिताः। तत आनीयतां कृष्णौ सशरं धनुरुत्तमम् ॥ ७ ॥ तथेत्युक्त्वा तु तौ वीरौ सर्वपारिषदैः सह। प्रस्थितौ तत्सरो दिव्यं दिव्याश्चर्यैः शतैर्युतम् ॥ ८ ॥ निर्दिष्टं यद्वृषाङ्केन पुण्यं सर्वार्थसाधकम्। तौ जग्मतुरसम्भ्रान्तौ नरनारायणावृषी ॥ ९ ॥ ततस्तौ तत्सरो गत्वा सूर्यमण्डलसन्निभम्। नागमन्तर्जले घोरं दृष्टवन्तावर्जुनाच्युतौ ॥ १० ॥ द्वितीयं चापरं नागं सहस्रशिरसं वरम्। वमन्तं विपुलां ज्वालां दृष्टवन्तावग्निवर्चसम् ॥ ११ ॥ ततः कृष्णश्च पार्थश्च संस्पृश्यापः कृताञ्जली। तौ नागावुपतस्थाते नमस्यन्तौ वृषध्वजम् ॥ १२ ॥ गृणन्तौ वेदविदुषौ तद्ब्रह्म शतरुद्रियम्। अप्रमेयं प्रणमन्तौ गत्वा सर्वात्मना भवम् ॥ १३ ॥ ततस्तौ रुद्रमाहात्म्याद्धित्वा रूपं महोरगौ। धनुर्बाणश्च शत्रुघ्नं तद्द्वन्द्वं समपद्यत ॥ १४ ॥ तौ तज्जगृहतुः प्रीतौ धनुर्बाणं च सुप्रभम्। आजह्रतुर्महात्मानौ ददतुश्च महात्मने ॥ १५ ॥ ततः पार्श्वाद्वृषाङ्कस्य ब्रह्मचारी न्यवर्तत। पिङ्गाक्षस्तपसः क्षेत्रं बलवान्नीललोहितः ॥ १६ ॥ स तद्गृह्य धनुःश्रेष्ठं तस्थौ स्थानं समाहितः। विचकर्षाथ विधिवत् सशरं धनुरुत्तमम् ॥ १७ ॥ तस्य मौर्वीं च मुष्टिं च स्थानं चालक्ष्य पाण्डवः। श्रुत्वा मन्त्रं भवप्रोक्तं जग्राहाचिन्त्यविक्रमः ॥ १८ ॥ स सरस्येव तं बाणं मुमोचातिबलः प्रभुः। चकार च पुनर्वीरस्तस्मिन् सरसि तद्धनुः ॥ १९ ॥ ततः प्रीतं भवं ज्ञात्वा स्मृतिमानर्जुनस्तदा। वरमारण्यके दत्तं दर्शनं शङ्करस्य च ॥ २० ॥ मनसा चिन्तयामास तन्मे सम्पद्यतामिति।

तस्य तन्मतमाज्ञाय प्रीतः प्रादाद्वरं भवः ॥ २१ ॥ तच्च पाशुपतं
घोरं प्रतिज्ञायाश्च पारणम् । ततः पाशुपतं दिव्यमवाप्य पुन-
रीश्वरात् ॥ २२ ॥ संहृष्टरोमा दुर्द्धर्षः कृतं कार्य्यममन्यत ।
ववन्दतुश्च संहृष्टौ शिरोभ्यां तं महेश्वरम् ॥ २३ ॥ अनुज्ञातौ
क्षणे तस्मिन् भवेनार्ज्जुनकेशवौ । प्राप्तौ स्वशिबिरं वीरौ मुदा
परमया युतौ ॥ २४ ॥ तथा भवेनानुमतौ महासुरनिघातिना ।
इन्द्रविष्णू यथा प्रीतौ जम्भस्य वधकाङ्क्षिणौ ॥ २५ ॥

इति द्रोणपर्व्वणि प्रतिज्ञापर्व्वणि पाशुपतास्त्रप्राप्तौ
एकाशीतोऽध्यायः ॥ ८१ ॥

---

सञ्जय उवाच । तयोः संवदतोरेवं कृष्णदारुकयोस्तदा ।
सात्यगाद्रजनी राजन्नथ राजान्वबुध्यत ॥ १ ॥ पठन्ति पाणि-
स्वनिका मागधा मधुपर्क्किकाः । वैतालिकाश्च सूताश्च तुष्टुवुः
पुरुषर्षभम् ॥ २ ॥ नर्त्तकाश्चाप्यनृत्यन्त जगुर्गीतानि गायकाः ।
कुरुवंशस्तवार्थानि मधुरं रक्तकण्ठिनः ॥ ३ ॥ मृदङ्गा झर्झरा भेर्य्यः
पणवानकगोमुखाः । आडम्बराश्च शङ्खाश्च दुन्दुभ्यश्च महास्वनाः
॥ ४ ॥ एवमेतानि सर्व्वाणि तथान्यानपि भारत । वादयन्ति
सुसंहृष्टाः कुशलाः साधुशिक्षिताः ॥ ५ ॥ स मेघस्वननिर्घोषो
महाशब्दोऽस्पृशद्दिवम् । पार्थिवप्रवरं सुप्तं युधिष्ठिरमबोधयत्
॥ ६ ॥ प्रतिबुद्धः सुखं सुप्तो महार्हे शयनोत्तमे । उत्थाया-
वश्यकार्य्यार्थं ययौ स्नानगृहं नृपः ॥ ७ ॥ ततः शुक्लाम्बराः
स्नातास्तरुणाः शतमष्ट च । स्नातकाः काञ्चनैः कुम्भैः पूर्णैः समु-
पतस्थिरे ॥ ८ ॥ भद्रासने सूपविष्टः परिधायाम्बरं लघु । सस्नौ
चन्दनसंयुक्तैः पानीयैरभिमन्त्रितैः ॥ ९ ॥ उत्सादितः कषायेण
बलवद्भिः सुशिक्षितैः । आप्लुतः साधिवासेन जलेन सुसुगन्धिना

उपतस्थुर्महात्मानं विविशुश्चासने शुभे ॥ ७ ॥ एकस्मिन्नासने
वीरावुपविष्टौ महाबलौ । कृष्णश्च युयुधानश्च महात्मानौ महा-
द्युती ॥ ८ ॥ ततो युधिष्ठिरस्तेषां शृण्वतां मधुसूदनम् । अब्र-
वीत् पुण्डरीकाक्षं सम्भाष्य मधुरं वचः ॥ ९ ॥ एकं त्वां वय-
माश्रित्य सहस्राक्षमिवामराः । प्रार्थयामो जयं युद्धे शाश्वतानि
सुखानि च ॥ १० ॥ त्वं हि राज्यविनाशञ्च द्विषद्भिश्च निरा-
क्रियाम् । क्लेशांश्च विविधान् कृष्ण सर्वांस्तानपि वेद न ॥ ११ ॥
त्वयि सर्वेश सर्वेषामस्माकं भक्तवत्सल । सुखमायत्तमत्यर्थं यात्रा
च मधुसूदन ॥ १२ ॥ स तथा कुरु वार्ष्णेय यथा त्वयि मनो
मम । अर्ज्जुनस्य यथा सत्या प्रतिज्ञा स्याच्चिकीर्षिता ॥ १३ ॥
स भवांस्तारयत्वस्माद्दुःखामर्षमहार्णवात् । पारन्तितीर्षतामद्य
प्लवो नो भव माधव ॥ १४ ॥ न हि तत् कुरुते सङ्ख्ये रथी
रिपुवधोद्यतः । यथा वै कुरुते कृष्ण सारथिर्यत्नमास्थितः ॥ १५ ॥
यथैव सर्वास्वापत्सु पासि वृष्णीन् जनार्द्दन । तथैवास्मान्महाबाहो
वृजिनात्त्रातुमर्हसि ॥ १६ ॥ त्वमगाधेऽप्लवे मग्नान् पाण्डवान्
कुरुसागरे । समुद्धर प्लवो भूत्वा शङ्खचक्रगदाधर ॥ १७ ॥
नमस्ते देवदेवेश सनातन विशातन । विष्णो जिष्णो हरे कृष्ण
वैकुण्ठ पुरुषोत्तम ॥ १८ ॥ नारदस्त्वां समाचख्यौ पुराणमृषि-
सत्तमम् । वरदं शार्ङ्गिणं श्रेष्ठं तत् सत्यं कुरु माधव ॥ १९ ॥
इत्युक्तः पुण्डरीकाक्षो धर्मराजेन संसदि । तोयमेघस्वनो वाग्मी
प्रत्युवाच युधिष्ठिरम् ॥ २० ॥

करिष्यामि यथा कौन्तेयोऽर्जुनः । धार्त्तराष्ट्रस्य सैन्यानि धक्ष्य-त्यग्निरिवोत्थितः ॥ २४ ॥ अद्य तं पापकर्माणं क्षुद्रं सौभद्र-घातिनम् । अपुनर्द्दर्शनं मार्गमिषुभिः क्षेप्स्यतेऽर्जुनः ॥ २५ ॥ तस्याद्य गृध्राः श्येनाश्च चण्डगोमायवस्तथा । भक्षयिष्यन्ति मांसानि ये चान्ये पुरुषादकाः ॥ २६ ॥ यद्यस्य देवा गोप्तारः सेन्द्राः सर्वे युधिष्ठिर । राजधानीं यमस्याद्य हतः प्राप्स्यति सङ्कुले ॥ २७ ॥ निहत्य सैन्धवं जिष्णुरद्य त्वामुपयास्यति । विशोको विज्वरो राजन् भव भूतिपुरस्कृत ॥ २८ ॥

इति द्रोणपर्वणि प्रतिज्ञापर्वणि कृष्णवाक्ये त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

---

सञ्जय उवाच । तथा संवदतां तेषां प्रादुरासीद्धनञ्जयः । दिदृक्षुर्भरतश्रेष्ठं राजानं ससुहृद्गणम् ॥ १ ॥ तं प्रविष्टं शुभां कक्षामभिवाद्याग्रतः स्थितम् । समुत्थायार्जुनं प्रेम्णा सस्वजे पाण्डव-र्षभः ॥ २ ॥ मूर्द्ध्नि चैनमुपाघ्राय परिष्वज्य च बाहुना । आशिषः परमाः प्रोच्य स्मयमानोऽभ्यभाषत ॥ ३ ॥ व्यक्तमर्ज्जुन सङ्ग्रामे ध्रुवस्ते विजयो महान् । यादृग्रूपा च ते छाया प्रसन्नश्च जनार्द्दनः ॥ ४ ॥ तमब्रवीत्ततो जिष्णुर्महदाश्चर्य्यमुत्तमम् । दृष्टवानस्मि भद्रन्ते केशवस्य प्रसादजम् ॥ ५ ॥ ततस्तत् कथयामास यथादृष्टं धनञ्जयः । आश्वासनार्थं सुहृदां त्र्यम्बकेन समागमम् ॥ ६ ॥ ततः शिरोभिरवनिं स्पृष्ट्वा सर्वे च विस्मिताः । नमस्कृत्य वृषा-ङ्काय साधु साध्विति चाब्रुवन् ॥ ७ ॥ अनुज्ञातास्ततः सर्वे सुहृदो धर्मसूनुना । त्वरमाणाः सुसंनद्धा हृष्टा युद्धाय निर्ययुः ॥ ८ ॥ अभिवाद्य तु राजानं युयुधानाच्युतार्जुनाः । हृष्टा विनिर्ययुस्ते वै युधिष्ठिरनिवेशनात् ॥ ९ ॥ रथेनैकेन दुर्द्धर्षौ युयुधानजना-

उपतस्थुर्महात्मानं विविशुश्चासने शुभे ॥ ७ ॥ एकस्मिन्नासने
वीरावुपविष्टौ महाबलौ । कृष्णश्च युयुधानश्च महात्मानौ महा-
द्युती ॥ ८ ॥ ततो युधिष्ठिरस्तेषां शृण्वतां मधुसूदनम् । अब्र-
वीत् पुण्डरीकाक्षं सम्भाष्य मधुरं वचः ॥ ९ ॥ एकं त्वां वय-
माश्रित्य सहस्राक्षमिवामराः । प्रार्थयामो जयं युद्धे शाश्वतानि
सुखानि च ॥ १० ॥ त्वं हि राज्यविनाशञ्च द्विषद्भिश्च निरा-
क्रियाम् । क्लेशांश्च विविधान् कृष्ण सर्वांस्तानपि वेत्थ नः ॥ ११ ॥
त्वयि सर्वेश सर्वेषामस्माकं भक्तवत्सल । सुखमायत्तमत्यर्थं यात्रा
च मधुसूदन ॥ १२ ॥ स तथा कुरु वार्ष्णेय यथा त्वयि मनो
मम । अर्जुनस्य यथा सत्या प्रतिज्ञा स्याच्चिकीर्षिता ॥ १३ ॥
स भवांस्तारयत्वस्माद्दुःखामर्षमहार्णवात् । पारं तितीर्षतामद्य
प्लवो नो भव माधव ॥ १४ ॥ न हि तत् कुरुते संख्ये रथी
रिपुवधोद्यतः । यथा वै कुरुते कृष्ण सारथिर्यत्नमास्थितः ॥ १५ ॥
यथैव सर्वास्वापत्सु पासि वृष्णीन् जनार्दन । तथैवास्मान् महाबाहो
वृजिनात्त्रातुमर्हसि ॥ १६ ॥ त्वमगाधेऽप्लवे मग्नान् पाण्डवान्
कुरुसागरे । समुद्धर प्लवो भूत्वा शङ्खचक्रगदाधर ॥ १७ ॥
नमस्ते देवदेवेश सनातन विशातन । विष्णो जिष्णो हरे कृष्ण
वैकुण्ठ पुरुषोत्तम ॥ १८ ॥ नारदस्त्वां समाचख्यौ पुराणमृषि
सत्तमम् । वरदं शार्ङ्गिणं श्रेष्ठं तत् सत्यं कुरु माधव ॥ १९ ॥
इत्युक्तः पुण्डरीकाक्षो धर्मराजेन संसदि । तोयमेघस्वनो वाग्मी
प्रत्युवाच युधिष्ठिरम् ॥ २० ॥

करिष्यामि यथा कुन्तीसुतोऽर्जुन । धार्तराष्ट्रस्य सैन्यानि धक्ष्यत्यग्निरिवोत्थित ॥ २४ ॥ अद्य तं पापकर्माणं क्षुद्रं सौभद्रघातिनम् । अपुनर्दर्शनं मार्गमिषुभिः क्षिप्स्यतेऽर्जुनः ॥ २५ ॥ तस्याद्य गृध्राः श्येनाश्च चण्डगोमायवस्तथा । भक्षयिष्यन्ति मांसानि ये चान्ये पुरुषादकाः ॥ २६ ॥ यद्यस्य देवा गोप्तारः सेन्द्राः सर्वे युधिष्ठिर । राजधानीं यमस्याद्य हतः प्राप्स्यति संकुले ॥ २७ ॥ निहत्य सैन्धवं जिष्णुरद्य त्वामुपयास्यति । विशोको विज्वरो राजन् भव भूतिपुरस्कृत ॥ २८ ॥

इति द्रोणपर्वणि प्रतिज्ञापर्वणि कृष्णवाक्ये त्र्यशीतोऽध्यायः ॥ ८३ ॥

---

सञ्जय उवाच । तथा संवदतां तेषां प्रादुरासीद्धनञ्जयः । दिदृक्षुर्भरतश्रेष्ठ राजानं ससुहृद्गणम् ॥ १ ॥ तं प्रविष्टं शुभां कक्षामभिवाद्याग्रतः स्थितम् । समुत्थायार्जुनं प्रेम्णा सस्वजे पाण्डवर्षभः ॥ २ ॥ मूर्ध्नि चैनमुपाघ्राय परिष्वज्य च बाहुना । आशिषः परमाः प्रोच्य स्मयमानोऽभ्यभाषत ॥ ३ ॥ व्यक्तमर्जुन संग्रामे ध्रुवस्ते विजयो महान् । यादृग्रूपा च ते छाया प्रसन्नश्च जनार्दनः ॥ ४ ॥ तमब्रवीत्ततो जिष्णुर्महदाश्चर्यमुत्तमम् । दृष्टवानस्मि भद्रन्ते केशवस्य प्रसादजम् ॥ ५ ॥ ततस्तत् कथयामास यथादृष्टं धनञ्जय । आश्वासनार्थं सुहृदां त्र्यम्बकेन समागमम् ॥ ६ ॥ ततः शिरोभिरवनिं स्पृष्ट्वा सर्वे च विस्मिताः । नमस्कृत्य वृषाङ्काय साधु साध्विति चाब्रुवन् ॥ ७ ॥ अनुज्ञातास्ततः सर्वे सुहृदो धर्मसूनुना । त्वरमाणाः सुसंरब्धा हृष्टा युद्धाय निर्ययुः ॥ ८ ॥ अभिवाद्य तु राजानं युयुधानाच्युतार्जुनाः । हृष्टा विनिर्ययुस्ते वै युधिष्ठिरनिवेशनात् ॥ ९ ॥ रथेनैकेन दुर्धर्षौ युयुधानजना-

हिनौ। जग्मतुः सहितौ वीरावर्जुनस्य निवेशनम् ॥ १० ॥ ततो
गत्वा हृषीकेशः कल्पयामास सूतवत्। रथं रथवरस्याजौ वानर-
र्षभलक्षणम् ॥ ११ ॥ स मेघस्तननिर्घोषस्तप्तकाञ्चनसुप्रभः। बभौ
रथवरः क्लृप्तः शिशुर्दिवसकृद्यथा ॥ १२ ॥ ततः पुरुषशार्दूलः
सज्जः सज्जपुरःसरः। कृताह्निकाय पार्थाय न्यवेदयत तं रथम्
॥ १३ ॥ तन्तु लोके वरः पुंसां किरीटी हेमवर्मभृत्। चापबाण-
धरो वाहं प्रदक्षिणमवर्त्तत ॥ १४ ॥ तपोविद्यावयोवृद्धैः क्रिया-
वद्भिर्जितेन्द्रियैः। स्तूयमानो जयाशीर्भिरारुरोह महारथम्
॥ १५ ॥ जैत्रैः सांग्रामिकैर्मन्त्रैः पूर्वमेव रथोत्तमम्। अभि
मन्त्रितमर्चिष्मानुदये भास्करो यथा ॥ १६ ॥ स रथी रथिनां
श्रेष्ठः काञ्चने काञ्चनावृतः। विबभौ विमलोऽर्चिष्मान्मेराविव
दिवाकरः ॥ १७ ॥ अन्वारुरुहतुः पार्थं युयुधानजनार्दनौ।
शर्यातेर्यज्ञमायान्तं यथेन्द्रं देवमश्विनौ ॥ १८ ॥ अथ जग्राह
गोविन्दो रश्मीन् रश्मिभृतांवरः। मातलिर्वासवमिव वृत्रं हन्तुं
प्रयास्यतः ॥ १९ ॥ स ताभ्यां सहितः पार्थो रथप्रवरमास्थितः।
सहितौ बुधशुक्राभ्यां तमो निघ्नन् यथा शशी ॥ २० ॥ सैन्धवस्य
वधं प्रेप्सुः प्रयातः शत्रुपूगहा। सहाम्बुपतिमित्राभ्यां यथेन्द्र-
स्तारकामये ॥ २१ ॥ ततो वादित्रघोषैश्च माङ्गल्यैश्च स्तवैः शुभैः।
प्रयान्तमर्जुनं वीरं मागधाश्चैव तुष्टुवुः ॥ २२ ॥ सजयाशीः सुप्र
भाताहः सूतमागधनिःस्वनः। युक्तो वादित्रघोषैश्च तेषां रति-
करोऽभवत् ॥ २३ ॥ तमनुप्रयतो वायुः पुण्यगन्धवहः शुभः।
ववौ सहर्षयन् पार्थं द्विषतश्चापि शोषयन् ॥ २४ ॥ ततस्तस्मिन्
क्षणे राजन् विविधानि शुभानि च। प्रादुरासन् निमित्तानि
विजयाय बहूनि च ॥ २५ ॥ पाण्डवानां त्वदीयानां विपरीतानि
मारिष। दृष्ट्वार्जुनो निमित्तानि विजयाय प्रदक्षिणम् ॥ २६ ॥
युयुधानं महेष्वासमिदं वचनमब्रवीत्। युयुधानाद्य युद्धे मे दृश्यते

विजयो ध्रुव ॥ २७ ॥ यथाद्यीमानि लिङ्गानि दृश्यन्ते शिनि-
पुङ्गव । सोऽहं तत्र गमिष्यामि यत्र सैन्धवको नृप ॥ २८ ॥
पियासुर्यमलोकाय मम वीर्य्यं प्रतीक्षते । यथा परमकं कृत्यं
सैन्धवस्य वधो मम ॥ २९ ॥ तथैव सुमहत्कृत्यं धर्म्मराजस्य
रक्षणम् । स त्वमद्य महाबाहो राजानं परिपालय ॥ ३० ॥
यथैव हि मया गुप्तस्त्वया गुप्तो भवेत्तथा । न पश्यामि च तं
लोके यस्त्वां युद्धे पराजयेत ॥ ३१ ॥ वासुदेवसमं सङ्ख्ये स्वय-
मप्यमरेश्वर । त्वयि चाहं पराश्वस्तः प्रद्युम्ने वा महारथे ॥ ३२ ॥
शक्तया सैन्धवं हन्तुमनपेक्षो नरर्षभ । मय्यपेक्षा न कर्त्तव्या कथ-
ञ्चिदपि सात्वत ॥ ३४ ॥ राजन्येव परा गुप्तिः कार्य्या सर्व्वात्मना
त्वया । न हि यत्र महाबाहुर्वासुदेवो व्यवस्थितः ॥ ३५ ॥ किञ्चि-
दापद्यते तत्र यत्राहमपि च ध्रुवम् । एवमुक्तस्तु पार्थेन सात्यकिः
परवीरहा । तथेत्युक्त्वागमत्तत्र यत्र राजा युधिष्ठिरः ॥ ३६ ॥

इति द्रोणपर्व्वणि प्रतिज्ञापर्व्वणि अर्ज्जुनवाक्ये चतु
रशीतोऽध्यायः ॥ ८४ ॥ समाप्तञ्च प्रतिज्ञापर्व्व ॥

---

अथ जयद्रथवधपर्व्व ॥

धृतराष्ट्र उवाच । श्वोभूते किमकार्षुस्ते दुःखशोकसमन्विताः ।
अभिमन्यौ हते तत्र के वायुध्यन्त मामकाः ॥ १ ॥ जानन्तस्तस्य
कर्म्माणि कुरवः सव्यसाचिनः । कथं तत् किल्बिषं कृत्वा निर्भया
ब्रूहि मामकाः ॥ २ ॥ पुत्रशोकाभिसन्तप्तं क्रुद्धं मृत्युमिवान्तकम् ।
आयान्तं पुरुषव्याघ्रं कथं ददृशुराहवे ॥ ३ ॥ कपिराजध्वजं
सङ्ख्ये विधुन्वानं महद्धनुः । दृष्ट्वा पुत्रपरिद्यूनं किमकुर्व्वत मामकाः
॥ ४ ॥ किन्नु सञ्जय सङ्ग्रामे वृत्तं दुर्य्योधनं प्रति । परिदेवो
महानत्र श्रुतो मे नाभिनन्दनम् ॥ ५ ॥ बभूवुर्य्ये मनोग्राह्या

श्रुतिसुखावहा । न श्रूयन्तेऽद्य ते सर्वे येऽस्य वेश्मनि वेशने ॥ ६ ॥
स्तुवतां नाद्य श्रूयन्ते पुत्राणां शिबिरे मम । सूतमागधसङ्घानां
नर्त्तकानाञ्च सर्वश ॥ ७ ॥ शब्देन नादिताभीक्ष्णमभवद्यत्र मे
श्रुतिः । दीनानामद्य स शब्दं न शृणोमि समीरितम् ॥ ८ ॥
निवेशने सत्यधृते सोमदत्तस्य सञ्जय । आसीनोऽहं पुरा तात
शब्दमश्रौषमुत्तमम् ॥ ९ ॥ तदद्य पुण्यहीनोऽहमार्त्तस्वरनिना
दितम् । निवेशनं गतोत्साहं पुत्राणां मम लक्षये ॥ १० ॥ विवि
शतेर्दुर्मुखस्य चित्रसेनविकर्णयोः । अन्येषाञ्च सुतानां मे न तथा
श्रूयते ध्वनिः ॥ ११ ॥ ब्राह्मणाः क्षत्रिया वैश्या यं शिष्याः पर्यु
पासते । द्रोणपुत्रं महेष्वासं पुत्राणां मे परायणम् ॥ १२ ॥
वितण्डालापसंलापैर्द्रुतवादित्रनादितैः । गीतैश्च विविधैरिष्टै
रमते यो दिवानिशम् ॥ १३ ॥ उपास्यमानो बहुभिः कुरुपाण्डव
सात्वतैः । सूत तस्य गृहे शब्दो नाद्य द्रौणेर्यथा पुरा ॥ १४ ॥
द्रोणपुत्रं महेष्वासं गायना नर्त्तकाश्च ये । अत्यर्थमुपतिष्ठन्ति
तेषां न श्रूयते ध्वनिः ॥ १५ ॥ विन्दानुविन्दयोः सायं शिबिरे
यो महाध्वनिः । श्रूयते सोऽद्य न तथा कैकेयानाञ्च वेश्मसु
॥ १६ ॥ नित्यं प्रमुदितानाञ्च तालगीतस्वनो महान् । नृत्यतां
श्रूयते तात गणानां सोऽद्य न स्वनः ॥ १७ ॥ सप्ततन्तून्वितन्वाना
यामेका ययुपासते । सोमदत्तिं श्रुतनिधिं तेषां न श्रूयते ध्वनिः
॥ १८ ॥ ज्याघोषो ब्रह्मघोषश्च तोमरासिरथध्वनिः । द्रोण
स्यासीदविरतो गृहे तं न शृणोम्यहम् ॥ १९ ॥ नानादेशसमु
त्थानां गीतानां योऽभवत् स्वनः । वादित्रनादितानां च सोऽद्य
न श्रूयते महान् ॥ २० ॥ यदा प्रभृत्युपप्लव्याच्छान्तिमिच्छञ्ज
नार्द्दनः । आगतः सर्वभूतानामनुकम्पार्थमच्युतः ॥ २१ ॥
ततोऽहमब्रुवं सूत मन्दं दुर्य्योधनं तदा । वासुदेवेन तीर्थेन पुत्र
सम्प्राप्य पाण्डवैः ॥ २२ ॥ कालप्राप्तमहं मन्ये मा त्वं दुर्य्यो

धनातिगाः। धर्मं चैवाचमानं त्वं प्रत्याख्यास्यसि केशवम् ॥२३॥
हितार्थमभिजल्पन्तं न तवास्ति रणे जयः। प्रत्याचष्ट स दाशार्ह-
मृषभं सर्वधन्विनाम् ॥ २४ ॥ अनुनेयानि जल्पन्तमनयान्नान्व-
पद्यत। ततो दुःशासनस्यैव कर्णस्य च मतन्द्वयोः ॥ २५ ॥ अन्व-
वर्त्तत मां हित्वा ग्रस्तः कालेन दुर्मतिः। न ह्यहं द्यूतमिच्छामि
विदुरो न प्रशंसति ॥ २६ ॥ सैन्धवो नेच्छति द्यूतं भीष्मो न
द्यूतमिच्छति। शल्यो भूरिश्रवाश्चैव पुरुमित्रो जयस्तथा ॥ २७ ॥
अश्वत्थामा कृपो द्रोणो द्यूतं नेच्छन्ति सञ्जय। एतेषां मतमादाय
यदि वर्त्तेत पुत्रकः ॥ २८ ॥ सज्ञातिमित्रः ससुखं चिरञ्जीवे-
दनामयः। श्लक्ष्णामधुरसम्भाषा ज्ञातिमध्ये प्रियम्वदाः ॥ २९ ॥
कुलीनाः सम्मताः प्राज्ञाः सुखं प्राप्स्यन्ति पाण्डवाः। धर्मापेक्षी
नरो नित्यं सर्वत्र लभते सुखम् ॥ ३० ॥ प्रेत्यभावे च कल्याणं
प्रसादं प्रतिपद्यते। अर्हन्त्यर्द्धं पृथिव्यास्ते भोक्तुं सामर्थ्यसाधनाः
॥ ३१ ॥ तेषामपि समुद्रान्ता पितृपैतामही मही। नियुज्य-
मानाः स्थास्यन्ति पाण्डवा धर्मवर्त्मनि ॥ ३२ ॥ सन्ति मे ज्ञातय-
स्तात येषां श्रोष्यन्ति पाण्डवाः। शल्यस्य सोमदत्तस्य भीष्मस्य च
महात्मनः ॥ ३३ ॥ द्रोणस्याथ विकर्णस्य वाह्लीकस्य कृपस्य च।
अन्येषाञ्चैव वृद्धानां भारतानां महात्मनाम् ॥ ३४ ॥ त्वदर्थं
ब्रुवतां तात करिष्यन्ति वचोहितम्। किं वा त्वं मन्यसे तेषां
यस्त्वं ब्रूयादतोऽन्यथा ॥ ३५ ॥ कृष्णो धर्मं न सन्त्यज्यात् सर्वे ते
हि तदन्वयाः। मयापि चोक्तास्ते वीरा वचनं धर्मसंहितम्
॥ ३६ ॥ नान्यथा प्रकरिष्यन्ति धर्मात्मानो हि पाण्डवाः। इत्यहं
विलपन् सूत बहुशः पुत्रमुक्तवान् ॥ ३७ ॥ न च मे श्रुतवान्मूढो
मन्ये कालस्य पर्य्ययम्। वृकोदरार्जुनौ यत्र वृष्णिवीरश्च सात्यकिः
॥ ३८ ॥ उत्तमौजाश्च पाञ्चाल्यो युधामन्युश्च दुर्ज्जयः। धृष्ट-
द्युम्नश्च दुर्द्धर्षः शिखण्डी चापराजितः ॥ ३९ ॥ अश्मकाः केकया-

श्चैव क्षत्रधर्मा च सौमकिः । चैद्यश्च चेकितानश्च पुत्रः काश्यस्य
चा विभुः ॥ ४० ॥ द्रौपदेया विराटश्च द्रुपदश्च महारथः । यमौ
च पुरुषव्याघ्रौ मन्त्री च मधुसूदनः ॥ ४१ ॥ क एतान् जातु
युध्येत लोकेऽस्मिन् वै जिजीविषुः । दिव्यमस्त्रं विकुर्वाणान् प्रस
हेत् परान्तप ॥ ४२ ॥ अन्यो दुर्योधनात् कर्णात् शकुनेश्चापि
सौबलात् । दुःशासनचतुर्थानां नान्यं पश्यामि पञ्चमम् ॥ ४३ ॥
येषामभीषुहस्तः स्याद्विष्वक्सेनो रथे स्थितः । सन्नद्धश्चार्जुनो
योद्धा तेषां नास्ति पराजयः ॥ ४४ ॥ तेषां मम विलापानां नायं
दुर्योधनः स्मरेत् । हतौ हि पुरुषव्याघ्रौ भीष्मद्रोणौ त्वमात्थ वै
॥ ४५ ॥ तेषां विदुरवाक्यानामुक्तानां दीर्घदर्शिना । दृष्ट्वेमां
फलनिर्वृत्तिं मन्ये शोचन्ति पुत्रकाः ॥ ४६ ॥ सेनां दृष्ट्वाभिभूतां
मे शैनेयेनार्जुनेन च । शून्यान् दृष्ट्वा रथोपस्थान् मन्ये शोचन्ति
पुत्रकाः ॥ ४७ ॥ हिमात्यये यथा कक्षं शुष्कं वातेरितो महान् ।
अग्निर्दहेत्तथा सेनां मामिकां स धनञ्जयः ॥ ४८ ॥ आचक्ष्व मम
तत् सर्वं कुशलो ह्यसि सञ्जय । यदुपायान्त सायाह्ने कृत्वा पार्थस्य
किल्बिषम् ॥ ४९ ॥ अभिमन्यौ हते तात कथमासीन्मनो हि वः ।
न जातु तस्य कर्माणि युधि गाण्डीवधन्वनः ॥ ५० ॥ अपकृत्य
महत्तात सोढुं शक्ष्यन्ति मामकाः । किन्नु दुर्योधनः कृत्यं कर्ण-
कृत्य किमब्रवीत् ॥ ५१ ॥ दुःशासनः सौबलश्च तेषामेव गतिं ह्यपि ।
सर्वेषां समवेतानां पुत्राणां मम सञ्जय ॥ ५२ ॥ यद्वृत्तं तात
सङ्ग्रामे मन्दस्यापनयैर्भृशम् । लोभानुगतदुर्बुद्धेः क्रोधेन विकृ
तात्मनः ॥ ५३ ॥ राज्यकामस्य मूढस्य रागोपहतचेतसः । दुर्नीतं
वा सुनीतं वा तन्ममाचक्ष्व सञ्जय ॥ ५४ ॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि धृतराष्ट्रानुतापे
पञ्चाशीतोऽध्यायः ॥ ८५ ॥

---

सञ्जय उवाच । हन्त ते शृणु वक्ष्यामि सर्वं प्रत्यक्षदर्शिवान् ।
शुश्रूषस्व स्थिरो भूत्वा तव ह्यपनयो महान् ॥ १ ॥ गतोदके
सेतुबन्धो यादृक् तादृगयन्तव । विलापो निष्फलो राजन् मा
शुचो भरतर्षभ ॥ २ ॥ अनतिक्रमणीयोऽयं कृतान्तस्याद्भुतो
विधिः । माशुचो भरतश्रेष्ठ दिष्टमेतत् पुरातनम् ॥ ३ ॥ यदि
त्वं हि पुरा द्यूतात् कुन्तीपुत्रं युधिष्ठिरम् । निवर्त्तयेथाः पुत्रांश्च
न त्वां व्यसनमाव्रजेत् ॥ ४ ॥ युद्धकाले पुनः प्राप्ते तदैव भवता
यदि । निवर्त्तिताः स्युः संरब्धा न त्वां व्यसनमाव्रजेत् ॥ ५ ॥
दुर्य्योधनं चाविधेयं बध्नीतेति पुरा यदि । कुरूनवारयिष्यस्त्वं
न त्वां व्यसनमाव्रजेत् ॥ ६ ॥ न ते बुद्धिव्यभीचारमुपलप्स्यन्ति
पाण्डवाः । पाञ्चाला वृष्णयः सर्व्वे ये चान्येऽपि नराधिपाः ॥ ७ ॥
स कृत्वा पितृकर्म्म त्वं पुत्रं संस्थाप्य सत्पथे । वर्त्तेथा यदि धर्म्मेण
न त्वां व्यसनमाव्रजेत् ॥ ८ ॥ त्वन्तु प्राज्ञतमो लोके हित्वा धर्म्मं
सनातनम् । दुर्य्योधनस्य कर्णस्य शकुनेश्चान्वगा मतम् ॥ ९ ॥
तत्ते विलपितं सर्व्वं मया राजन्निशामितम् । अर्थे निविशमानस्य
विषमिश्रं यथा मधु ॥ १० ॥ नामन्यत तदा कृष्णो राजानं
पाण्डवं पुरा । न भीष्मं नैव च द्रोणं यथा त्वां मन्यते नृप ॥ ११ ॥
अजानत् स यदा तु त्वां राजधर्म्मादधश्च्युतम् । तदाप्रभृति
कृष्णस्त्वां न तथा बहु मन्यते ॥ १२ ॥ परुषाण्युच्यमानांश्च यदा
पार्थानुपेक्षसे । तस्यानुबन्धः प्राप्तस्त्वां पुत्राणां राज्यकामुक ॥ १३ ॥
पितृपैतामहं राज्यमपहृत्य तदानघ । अथ पार्थैर्ज्जितां कृत्स्नां
पृथिवीं प्रत्यपद्यथाः ॥ १४ ॥ पाण्डुना निर्ज्जितं राज्यं कौर-
वाणां यशस्तथा । ततश्चाप्यधिकं भूयः पाण्डवैर्धर्म्मचारिभिः ॥ १५ ॥
तेषां तत्तादृशं कर्म्म त्वामासाद्य सुनिष्फलम् । यत् पित्र्याद्भ्रंशिता
राज्यात्त्वयेहामिषगृद्धिना ॥ १६ ॥ यत् पुनर्युद्धकाले तु पुत्रान्
गर्हयसे नृप । बहुधा व्याहरन्दोषान्न तदद्योपपद्यते ॥ १७ ॥

न हि रक्षन्ति राजानो युध्यन्तो जीवितं रणे। शमं विगाह्य
पार्थानां युध्यन्ते क्षत्रियर्षभाः ॥ १८ ॥ यान्तु कृष्णार्जुनौ सेनां
यां सात्यकिवृकोदरौ। रक्षेरन् को नु तां युध्येच्चमूमन्यत्र कौरवैः
॥ १९ ॥ येषां योद्धा गुडाकेशो येषां मन्त्री जनार्दनः। येषां
च सात्यकिर्गोप्ता येषां गोप्ता वृकोदरः ॥ २० ॥ को हि तान्
विषहेल्लोके मर्त्यधर्मा धनुर्धरः। अन्यत्र कौरवेयेभ्यो ये वा तेषां
पदानुगाः ॥ २१ ॥ यावत्तु शक्यते कर्त्तुमनुरक्तैर्जनाधिपैः।
क्षत्रधर्मपरैः शूरैस्तावत् कुर्वन्ति कौरवाः ॥ २२ ॥ यथा तु
पुरुषव्याघ्रैर्युद्धं परमसङ्कटम्। कुरूणां पाण्डवैः सार्द्धं तत्सर्वं
शृणु तत्त्वतः ॥ २३ ॥

इति द्रोणपर्व्वणि जयद्रथवधपर्व्वणि सञ्जयवाक्ये
षडशीतोऽध्यायः ॥ ८६ ॥



सञ्जय उवाच। तस्यां निशायां व्युष्टायां द्रोणः शस्त्रभृतां
वरः। स्वान्यनीकानि सर्व्वाणि प्राक्रामद्व्यूहितुं ततः ॥ १ ॥
शूराणां गर्ज्जतां राजन् सङ्क्रुद्धानाममर्षिणाम्। श्रूयन्ते स्म
गिरश्चित्राः परस्परवधैषिणाम् ॥ २ ॥ विस्फार्य्य च धनूंष्यन्ये ज्याः
करैः परिमृज्य च। विनिःश्वसन्तः प्राक्रोशन् केदानीं स धन-
ञ्जय ॥ ३ ॥ विकोषान् सुत्सरूनन्ये कृतधारान् समाहितान्।
पीतानाकाशसङ्काशानसीन् केचिच्च चिक्षिपुः ॥ ४ ॥ चरन्तस्त्वसि-
मार्गांश्च शिक्षया। सङ्ग्राममनसः शूरा दृश्यन्ते स्म सहस्रशः ॥५॥
सघण्टाश्चन्दनादिग्धाः स्वर्णवज्रविभूषिताः। समुत्क्षिप्य गदा-
श्चान्ये पर्य्यपृच्छन्त पाण्डवम् ॥ ६ ॥ अन्ये बलमदोन्मत्ताः परिघै-
र्बाहुशालिनः। चक्रुः सम्बाधमाकाशमुच्छ्रितेन्द्रध्वजोपमैः ॥ ७ ॥
नानाप्रहरणैश्चान्ये विचित्रस्रगलङ्कृताः। सङ्ग्राममनसः शूरास्तत्र

तत्र व्यवस्थिता ॥ ८ ॥ क्वार्जुन क्व च गोविन्द क्व च मानी
वृकोदर । क्व च ते सुहृदस्तेषामाह्वयन्तो रणे तदा ॥ ९ ॥
तत्र अश्वमुपाघ्राय त्वरयन् वाजिन स्वयम् । इतस्ततस्त्वाद्रवयन्
द्रोणश्चरति वेगित ॥ १० ॥ तेष्वनीकेषु सर्वेषु स्थितेष्वाहव-
नन्दिषु । भारद्वाजो महाराज जयद्रथमथाब्रवीत् ॥ ११ ॥ त्वं
चैव सौमदत्तिश्च कर्णश्चैव महारथे । अश्वत्थामा च शल्यश्च वृष-
सेन कृपस्तथा ॥ १२ ॥ शत चाश्वसहस्राणां रथानामयुतानि
षट् । द्विरदानां प्रभिन्नानां सहस्राणि चतुर्दश ॥ १३ ॥ पदा-
तीनां सहस्राणि दंशितान्येकविंशति । गव्यूतिषु त्रिमात्रासु
मामनासाद्य तिष्ठत ॥ १४ ॥ तत्रस्थं त्वां न संसोढु शक्ता देवाः
सवासवा । किं पुन पाण्डवा सर्वे समाश्वसिहि सैन्धव ॥ १५ ॥
एवमुक्त समाश्वस्त सिन्धुराजो जयद्रथ । सम्प्रायात् सह
गान्धारैस्तस्त्रैश्च महारथे ॥ १६ ॥ वर्मिभि सादिभिर्यत्तै प्राप्त-
पाणिभिरास्थिते । चामरापीडिन सर्वे जाम्बूनदविभूषिताः
॥ १७ ॥ जयद्रथस्य राजेन्द्र हया साधुप्रवाहिन । ते चैव
सप्तसाहस्रास्त्रिशाहस्राश्च सैन्धवा ॥ १८ ॥ मत्तानां सुविरूढानां
हस्त्यारोहैर्विशारदै । नागानां भीमरूपाणां वर्मिणां रौद्र-
कर्मिणाम् ॥ १९ ॥ अध्यर्धेन सहस्रेण पुत्रो दुर्मर्षणस्तव । अग्रतः
सर्वसैन्यानां युध्यमानो व्यवस्थित ॥ २० ॥ ततो दु सासनश्चैव
विकर्णश्च तवात्मजौ । सिन्धुराजार्थसिद्ध्यर्थमग्रानीके व्यवस्थितौ
॥ २१ ॥ दीर्घो द्वादशगव्यूति पश्चार्द्धे पञ्चविस्तृत । व्यूहः
सचक्रशकटो भारद्वाजेन निर्मित ॥ २२ ॥ नानानृपतिभिर्वीरैस्तत्र
तत्र व्यवस्थिते । रथाश्वगजपत्त्यौघैर्द्रोणेन विहित स्वयम् ॥२३॥
पश्चार्द्धे तस्य पद्मस्य गर्भव्यूह सुदुर्भिद । सूचीपद्मस्य गर्भस्थो
गूढो व्यूह कृत पुन ॥ २४ ॥ एवमेत महाव्यूह व्यूह्य द्रोणो
व्यवस्थित । सूचीमुखे महेष्वास कृतवर्मा व्यवस्थित ॥ २५ ॥

न हि रक्षन्ति राजानो युध्यन्तो जीवितं रणे। समं विगाह्य पार्थाना युध्यन्ते क्षत्रियर्षभा ॥ १८ ॥ यान्तु कृष्णार्जुनौ सेनां या सात्यकिवृकोदरौ । रक्षेरन् को नु ता युध्येत्चमूमन्यत्र कौरवैः ॥ १९ ॥ येषां योद्धा गुडाकेशो येषां मन्त्री जनार्दन । येषां च सात्यकिर्गोप्ता येषां गोप्ता वृकोदर. ॥ २० ॥ को हि तान् विषहेद्योद्धुं मर्त्यधर्मा धनुर्धर । अन्यत्र कौरवेयेभ्यो ये वा तेषां पदानुगा. ॥ २१ ॥ यावत्तु शक्यते कर्त्तुमनुरक्तैर्जनाधिपै । क्षत्रधर्मपरै. शूरैस्तावत् कुर्वन्ति कौरवा. ॥ २२ ॥ यथा तु पुरुषव्याघ्रै र्युद्ध परमसङ्कटम्। कुरूणा पाण्डवै सार्द्धं तत्सर्वं शृणु तत्त्वत ॥ २३ ॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि सञ्जयवाक्ये षडशीतोऽध्याय ॥ ८६ ॥

---

सञ्जय उवाच। तस्या निशाया व्युष्टाया द्रोण शस्त्रभृतां वर.। स्वान्यनीकानि सर्वाणि प्राक्रामद्व्यूहितु तत ॥ १ ॥ शूराणां गर्जता राजन् सङ्क्रुद्धानाममर्षिणाम् । श्रूयन्ते स्म गिरश्चित्राः परस्परवधैषिणाम् ॥ २ ॥ विस्फार्य च धनूंष्यन्ये ज्याः करै. परिमृज्य च। विनि श्वसन्त प्राक्रोशन् क्वेदानीं स धनञ्जय ॥ ३ ॥ विकोशान् सुत्सरूनन्ये कृतधारान् समाहितान्। पीतानाकाशसङ्काशानसीन् केचिच्च चिक्षिपु ॥ ४ ॥ चरन्तस्त्वसिमार्गांश्च शिक्षया। सङ्ग्राममनस शूरा दृश्यन्ते स्म सहस्रशः ॥५॥ सघण्टाश्चन्दनादिग्धा स्वर्णवज्रविभूषिता.। समुत्क्षिप्य गदाश्चान्ये पर्य्यपृच्छन्त पाण्डवम् ॥ ६ ॥ अन्ये बलमदोन्मत्ता परिघैर्बाहुशालिन । चक्रु सम्बाधमाकाशमुच्छ्रितेन्द्रध्वजोपमै ॥ ७ ॥ नानाप्रहरणैश्चान्ये विचित्रस्रगलङ्कृता.। सङ्ग्राममनस शूराश्तत्र

र्तव व्यवस्थिता ॥ ८ ॥ क्वार्जुन क्व स गोविन्द क्व च मानी
वृकोदर । क्व च ते सुहृदस्तेषामाह्वयन्तो रणे तदा ॥ ९ ॥
तत शङ्खमुपाध्माय त्वरयन् वाजिन स्वयम् । इतस्ततस्ताग्रचयन्
द्रोणश्चरति वेगित ॥ १० ॥ तेष्वनीकेषु सर्व्वेषु स्थितेष्वाहव-
नन्दिषु । भारद्वाजो महाराज जयद्रथमथाब्रवीत् ॥ ११ ॥ त्वं
चैव सौमदत्तिश्च कर्णश्चैव महारथे । अश्वत्थामा च शल्यश्च वृष-
सेन कृपस्तथा ॥ १२ ॥ शत चाश्वसहस्राणां रथानामयुतानि
षट् । द्विरदाना प्रभिन्नाना सहस्राणि चतुर्द्दश ॥ १३ ॥ पदा-
तीना सहस्राणि दंशितान्येकविंशति । गव्यूतिषु त्रिमात्रासु
मामनासाद्य तिष्ठत ॥ १४ ॥ तत्रस्थ त्वा न संसोढु शक्ता देवाः
सवासवा । किं पुन पाण्डवा सर्व्वे समाश्वसिहि सैन्धव ॥ १५ ॥
एवमुक्त समाश्वस्त सिन्धुराजो जयद्रथ । सम्प्रायात् सह
गान्धारैर्वृतस्तैश्च महारथै ॥ १६ ॥ वर्म्मिभि सादिभिर्यत्तै प्रास-
पाणिभिरास्थिते । चामरापीडिन सर्व्वे जाम्बूनदविभूषिताः
॥ १७ ॥ जयद्रथस्य राजेन्द्र हया साधुप्रवाहिन । ते चैव
सप्तसाहस्रास्त्रिसाहस्राश्च सैन्धवा ॥ १८ ॥ मत्ताना सुविरूढाना
हस्त्यारोहैर्विशारदै । नागाना भीमरूपाणा वर्म्मिणा रौद्र-
कर्म्मिणाम् ॥ १९ ॥ अध्यर्द्धेन सहस्रेण पुत्रो दुर्मर्षणस्तव । अग्रतः
सर्व्वसैन्याना युध्यमानो व्यवस्थित ॥ २० ॥ ततो दुःशासनश्चैव
विकर्णश्च तवात्मजौ । सिन्धुराजार्थसिद्धार्थमग्रानीके व्यवस्थितौ
॥ २१ ॥ दीर्घो द्वादशगव्यूति पश्चार्द्धे पञ्चविस्तृत । व्यूहः
सचक्रशकटो भारद्वाजेन निर्म्मित ॥ २२ ॥ नानानृपतिभिर्वीरैस्तत्र
तत्र व्यवस्थितै । रथाश्वगजपत्त्यौघैर्द्रोणेन विहित स्वयम् ॥२३॥
पश्चार्द्धे तस्य पद्मस्य गर्भव्यूह सुदुर्भिद । सूचीपद्मस्य गर्भस्थो
गूढो व्यूह कृत पुन ॥ २४ ॥ एवमेत महाव्यूह व्यूह्य द्रोणो
व्यवस्थित । सूचीमुखे महेष्वास कृतवर्म्मा व्यवस्थित ॥ २५ ॥

अनन्तरञ्च काम्बोजो जलसन्धश्च मारिष। दुर्योधनश्च कर्णश्च
तदनन्तरमेव च ॥ २६ ॥ ततः शतसहस्राणि योधानामनिवर्त्ति-
नाम्। व्यवस्थितानि सर्वाणि शकटे मुखरक्षिणाम् ॥ २७ ॥
तेषाञ्च पृष्ठतो राजा बलेन महता वृतः। जयद्रथस्ततो राजा
सूचीपार्श्वे व्यवस्थितः ॥ २८ ॥ शकटस्य तु राजेन्द्र भारद्वाजो
मुखे स्थितः। अनु तस्याभवद्भोजो जुगोपैनं ततः स्वयम् ॥ २९ ॥
श्वेतवर्मा वरोष्णीषी व्यूढोरस्को महाभुजः। धनुर्विस्फारयन्
द्रोणस्तस्थौ क्रुद्ध इवान्तकः ॥ ३० ॥ पताकिनं शोणहयं वेदी-
कृष्णाजिनध्वजम्। द्रोणस्य रथमालोक्य प्रहृष्टाः कुरवोऽभवन्
॥ ३१ ॥ सिद्धचारणसङ्घानां विस्मयः सुमहानभूत्। द्रोणेन
विहितं दृष्ट्वा व्यूहं क्षुब्धार्णवोपमम् ॥ ३२ ॥ सशैलसागरवनां
नानाजनपदाकुलाम्। ग्रसेद्व्यूहः क्षितिं सर्वामिति भूतानि मेनिरे
॥ ३३ ॥ बहुरथमनुजाश्वपत्तिनागं प्रतिभयनिस्वनमद्भुताकरूपम्।
अहितहृदयभेदनं महद्वै शकटमवेक्ष्य कृतं ननन्द राजा ॥ ३४ ॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि कौरवव्यूहनिर्माणे
सप्ताशीतोऽध्यायः ॥ ८७ ॥

---

सञ्जय उवाच। ततो व्यूढेष्वनीकेषु समुत्क्रुष्टेषु मारिष
ताड्यमानासु भेरीषु मृदङ्गेषु नदत्सु च ॥ १ ॥ अनीकानाञ्च
संह्रादे वादित्राणां च निस्वने। प्रध्मापितेषु शङ्खेषु सन्नादे लोम-
हर्षणे ॥ २ ॥ आवारयत्सु शनकैर्भरतेषु युयुत्सुषु। रौद्रे
मुहूर्ते संप्राप्ते सव्यसाची व्यदृश्यत ॥ ३ ॥ बलानां वायसानाञ्च
पुरस्तात् सव्यसाचिनः। बहुलानि सहस्राणि प्राक्रीडंस्तत्र भारत
॥ ४ ॥ मृगाश्च घोरसंनादाः शिवाश्चाशिवदर्शनाः। दक्षिणेन
प्रयातानामस्माकं प्राणदंस्तदा ॥ ५ ॥ सनिर्घाता ज्वलन्त्यश्च

पेतुरुल्काः सहस्रशः । चचाल च मही कृत्स्ना भये घोरे समु-
त्थिते ॥ ६ ॥ विष्वग्वाताः सनिर्घाता रूक्षाः शर्करकर्षिणः ।
ववुरायाति कौन्तेय सङ्ग्रामे समुपस्थिते ॥ ७ ॥ नाकुलिश्च शता-
नीको धृष्टद्युम्नश्च पार्षत । पाण्डवानामनीकानि प्राज्ञौ तौ
व्यूहतुस्तदा ॥ ८ ॥ ततो रथसहस्रेण द्विरदानां शतेन च ।
त्रिभिरश्वसहस्रैश्च पदातीनां शतैः शतैः ॥ ९ ॥ अध्यर्धमात्रे धनुषां
सहस्रेतनयस्तव । अग्रतः सर्वसैन्यानां स्थितो दुर्मर्षणोऽब्रवीत्
॥ १० ॥ अद्य गाण्डीवधन्वानं तपन्तं युद्धदुर्मदम् । अहमावा-
रयिष्यामि वेलेव मकरालयम् ॥ ११ ॥ अद्य पश्यन्तु सङ्ग्रामे धन-
ञ्जयममर्षणम् । विषक्तमपि दुर्धर्षमश्मकूटमिवाश्मनि ॥ १२ ॥
तिष्ठध्वं रथिनो यूयं सङ्ग्राममभिकाङ्क्षिणः । युध्यामि संहतानेता-
न्यशो मानं च वर्द्धयन् ॥ १३ ॥ एवं ब्रुवन् महाराज महात्मा स
महामतिः । महेष्वासैर्वृतो राजन् महेष्वासो व्यवस्थितः ॥ १४ ॥
ततोऽन्तक इव क्रुद्धः सवज्र इव वासवः । दण्डपाणिरिवासह्यो
मृत्युः कालेन चोदितः ॥ १५ ॥ शूलपाणिरिवाक्षोभ्यो वरुणः
पाशवानिव । युगान्ताग्निरिवार्चिष्मान् प्रधक्ष्यन् वै पुनः प्रजाः
॥ १६ ॥ क्रोधामर्षवशोद्धूतो निवातकवचान्तकः । जयो जेता
स्थितः सत्ये पारयिष्यन्महाव्रतम् ॥ १७ ॥ आमुक्तकवचः खड्गी
जाम्बूनदकिरीटभृत् । शुभ्रमाल्याम्बरधरो स्वङ्गदश्चारुकुण्डलः
॥ १८ ॥ रथप्रवरमास्थाय नरो नारायणानुगः । विधुन्वन्
गाण्डिवं सङ्ख्ये बभौ सूर्य्य इवोदितः ॥ १९ ॥ सोऽग्रानीकस्य
महत इषुपाते धनञ्जय । व्यवस्थाप्य रथं राजन् शङ्खं दध्मौ
प्रतापवान् ॥ २० ॥ अथ कृष्णोऽप्यसम्भ्रान्तः पार्थेन सह मारिष ।
प्राध्मापयत् पाञ्चजन्यं शङ्खप्रवरमोजसा ॥ २१ ॥ तयोः शङ्खप्रणा-
देन तव सैन्ये विशाम्पते । आसन् संहृष्टरोमाणः कम्पिता गत-
चेतसः ॥ २२ ॥ यथा त्रस्यन्ति भूतानि सर्वाण्यशनिनिःस्वनात् ।

तथा शङ्खप्रणादेन विव्यथुस्तव सैनिकाः ॥ २३ ॥ प्रसुस्रुवुः शकृ-न्मूत्रं वाहनानि च सर्वशः । एवं सवाहनं सर्वमाविग्नमभवद्बलम् ॥ २४ ॥ सीदन्ति स्म नरा राजन् शङ्खशब्देन मारिष । विसंज्ञा-श्चाभवन् केचित् केचिद्राजन् वितत्रसुः ॥ २५ ॥ ततः कपिर्महा-नादं सह भूतैर्ध्वजालयैः । अकरोद्व्यादितास्यश्च भीषयंस्तव सैनिकाः ॥ २६ ॥ ततः शङ्खाश्च भेर्यश्च मृदङ्गाश्चानकैः सह । पुनरेवाभ्यहन्यन्त तव सैन्यप्रहर्षणाः ॥ २७ ॥ नानावादित्रसंह्रादैः क्ष्वेडितास्फोटिताकुलैः । सिंहनादैः समुत्क्रुष्टैः समाहूतैर्महा-रथैः ॥ २८ ॥ तस्मिंस्तु तुमुले शब्दे भीरूणां भयवर्द्धने । अतीव-हृष्टो दाशार्हमब्रवीत पाकशासनिः ॥ २९ ॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि अर्ज्जुनरणप्रवेशे अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

———

कीर्णानि योधना वदनानि चकाशिरे ॥ ८ ॥ तपनीयतनुत्राणाः
संसिक्ता रुधिरेण च । संसक्ता इव दृश्यन्ते मेघसङ्घाः सविद्युतः
॥ ९ ॥ शिरसां पततां राजन् शब्दोऽभूद्वसुधातले । कालेन परि-
पक्वानां तालानां पततामिव ॥ १० ॥ तत्र कबन्धं किञ्चित्तु
धनुरालम्ब्य तिष्ठति । किञ्चित् खड्गं विनिष्कृष्य भुजेनोद्यम्य
तिष्ठति ॥ ११ ॥ पतितानि न जानन्ति शिरांसि पुरुषर्षभाः ।
अमृष्यमाणाः सङ्ग्रामे कौन्तेयं जयगृद्धिनः ॥ १२ ॥ हयानामुत्त
माङ्गैश्च हस्तिहस्तैश्च मेदिनी । बाहुभिश्च शिरोभिश्च वीराणां सम
कीर्यत ॥ १३ ॥ अयं पार्थः कुतः पार्थ एष पार्थ इति प्रभो ।
तव सैन्येषु योधानां पार्थभूतमिवाभवत् ॥ १४ ॥ अन्योऽन्यमपि
चाजघ्नुरात्मानमपि चापरे । पार्थभूतममन्यन्त जगत् कालेन
मोहिताः ॥ १५ ॥ निष्टनन्तः सरुधिरा विसञ्ज्ञा गाढवेदनाः ।
शयाना बहवो वीराः कीर्त्तयन्तः स्वबान्धवान् ॥ १६ ॥ सभिन्दि
पालाः सप्रासाः सशक्त्यृष्टिपरश्वधाः । सनिर्व्यूहाः सनिस्त्रिंशाः
सशरासनतोमराः ॥ १७ ॥ सबाणवर्माभरणाः सगदाः साङ्गदा
रणे । महाभुजगसङ्काशा बाहवः परिघोपमाः ॥ १८ ॥ उद्वे
ष्टन्ति विचेष्टन्ति संचेष्टन्ति च सर्वशः । वेगं कुर्वन्ति संरब्धा
निकृत्ताः परमेषुभिः ॥ १९ ॥ यो यः स्म समरे पार्थं प्रतिसंरभते
नरः । तस्य तस्यान्तको बाणः शरीरमुपसर्पति ॥ २० ॥ नृत्यतो
रथमार्गेषु धनुर्व्यायच्छतस्तथा । न कश्चित्तत्र पार्थस्य ददर्शान्तर-
मण्वपि ॥ २१ ॥ यत्तस्य घटमानस्य क्षिप्रं विसृजतः शरान् ।
लाघवात् पाण्डुपुत्रस्य व्यस्मयन्त परे जनाः ॥ २२ ॥ हस्तिनं
हस्तियन्तारमश्वमाश्विकमेव च । अभिनत् फाल्गुनो बाणै-
र्रथिनञ्च ससारथिम् ॥ २३ ॥ आवर्त्तमानमावृत्तं युध्यमानञ्च
पाण्डवः । प्रमुखे तिष्ठमानञ्च न कञ्चिन्न निहन्ति स ॥ २४ ॥
यथोद्यन् वै गगने सूर्यो हन्ति महत्तमः । तथार्जुनो गजा

नीकमवधीत कङ्कपत्रिभिः ॥ २५ ॥ हस्तिभिः पतितैर्भिन्नैस्तत् सैन्यमदृश्यत। अन्तकाले यथाभूमिर्व्यवकीर्णा महीधरैः ॥ २६ ॥ यथा मध्यन्दिने सूर्यो दुष्प्रेक्ष्यः पाणिभिः सदा। तथा धनञ्जयः क्रुद्धो दुष्प्रेक्ष्यो युधि शत्रुभिः ॥ २७ ॥ तत्तथा तव पुत्रस्य सैन्यं युधि परन्तप। प्रभग्नन्द्रुतमाविग्नमतीव शरपीड़ितम् ॥ २८ ॥ मारुतेनेव महता मेघानीकं व्यदीर्यत। प्रकाल्यमानं तत् सैन्यं नाशकत् प्रतिवीक्षितुम् ॥ २९ ॥ प्रतोदैश्चापि कोटीभिर्हुङ्कारैः साधुवाहितैः। कशापार्ष्णग्रभिघातैश्च वाग्भिरुग्राभिरेव च ॥ ३० ॥ चोदयन्तो हयांस्तूर्णं पलायन्ते स्म तावकाः। सादिनो रथिनश्चैव पत्तयश्चार्ज्जुनार्द्दिताः ॥ ३१ ॥ पार्ष्णङ्गुष्ठाङ्कुशैर्नागान् चोदयन्तस्तथा परे। शरैर्मोहिता शरैस्तान्ये तमेवाभिमुखा ययुः। तव योधा हतोत्साहा विभ्रान्तमनसस्तदा ॥ ३२ ॥

इति द्रोणपर्व्वणि जयद्रथवधपर्व्वणि अर्ज्जुनयुद्धे एकोननवतोऽध्यायः ॥ ८९ ॥

---

धृतराष्ट्र उवाच। तस्मिन् प्रभग्ने सैन्याग्रे वध्यमाने किरीटिना। के नु तत्र रणे वीराः प्रत्युद्ययुर्धनञ्जयम् ॥ १ ॥ आहोस्विच्छकटव्यूहं प्रविष्टा मोघनिश्चयाः। द्रोणमाश्रित्य तिष्ठन्तः प्राकारमकुतोभयम् ॥ २ ॥

सञ्जय उवाच। तथार्ज्जुनेन सङ्ग्रामे तस्मिंस्तव बलेऽनघ। हतवीरे हतोत्साहे पलायनकृतक्षणे ॥ ३ ॥ पाकशासनिनाभीक्ष्णं वध्यमाने शरोत्तमैः। न तत्र कश्चित् सङ्ग्रामे शशाकार्ज्जुनमीक्षितुम् ॥ ४ ॥ ततस्तव सुतो राजन् दृष्ट्वा सैन्यन्तथागतम्। दुःशासनो भृशं क्रुद्धो युद्धायार्ज्जुनमभ्यगात् ॥ ५ ॥ स काञ्चनविचित्रेण कवचेन समावृतः। जाम्बूनदशिरस्त्राणः शूरस्तीव्रपराक्रमः ॥ ६ ॥

गजानीकेन महता ग्रसन्निव महीमिमाम् । दुःशासनो महाराज
सव्यसाचिनमाह्वयत् ॥ ७ ॥ छादेन गजघण्टानां शङ्खानां निन-
देन च । ज्याक्षेपनिनदैश्चैव विरावेण च दन्तिनाम् ॥ ८ ॥ भू
र्दिशश्चान्तरिक्षञ्च शब्देनासीत् समावृतम् । स मुहूर्त्तं प्रतिभयो
दारुणः समपद्यत ॥ ९ ॥ तान् दृष्ट्वापततस्तूर्णमङ्कुशैरभिचोदि-
तान् । व्यालम्बहस्तान् संरब्धान् सपक्षानिव पर्वतान् ॥ १० ॥
सिंहनादेन महता नरसिंहो धनञ्जयः । गजानीकममित्राणा-
मभितो व्यधमच्छरैः ॥ ११ ॥ महोर्म्मिणमिवोद्धूतं श्वसनेन महा-
र्णवम् । किरीटी तद्गजानीकं प्राविशन्मकरो यथा ॥ १२ ॥
काष्ठातीत इवादित्यः प्रतपन् युगसंक्षये । ददृशे दिक्षु सर्व्वासु
पार्थः परपुरञ्जयः ॥ १३ ॥ खुरशब्देन चाश्वानां नेमिघोषेण
तेन च । तेन चोत्क्रुष्टशब्देन ज्यानिनादेन तेन च ॥ १४ ॥
नानावादित्रशब्देन पाञ्चजन्यस्वनेन च । देवदत्तस्य घोषेण
गाण्डीवनिनदेन च ॥ १५ ॥ मन्दवेगा नरा नागा बभूवुस्ते विचे-
तसः । शरैराशीविषस्पर्शैर्निर्भिन्नाः सव्यसाचिना ॥ १६ ॥ ते गजा
विशिखैस्तीक्ष्णैर्युधि गाण्डीवचोदितैः । अनेकशतसाहस्रैः सर्व्वाङ्गेषु
समर्पिताः ॥ १७ ॥ आरावं परमं कृत्वा वध्यमानाः किरीटिना ।
निपेतुरनिशं भूमौ छिन्नपक्षा इवाद्रयः ॥ १८ ॥ अपरे दन्तवेष्टेषु
कुम्भेषु च कटेषु च । शरैः समर्पिता नागाः क्रौञ्चवद्व्यनदन्मुहुः
॥ १९ ॥ गजस्कन्धगतानाञ्च पुरुषाणां किरीटिना । छिद्यन्ते
चोत्तमाङ्गानि भल्लैः सन्नतपर्व्वभिः ॥ २० ॥ सकुण्डलानां पततां
शिरसां धरणीतले । पद्मानामिव सङ्घातैः पार्थश्चक्रे निवेदनम्
॥ २१ ॥ यन्त्रबद्धा विकवचा व्रणार्त्ता रुधिरोक्षिताः । भ्रमत्सु
युधि नागेषु मनुष्या विललम्बिरे ॥ २२ ॥ केचिदेकेन बाणेन
सुमुक्तेन सुपत्रिणा । द्वौ त्रयश्च विनिर्भिन्ना निपेतुर्धरणीतले
॥ २३ ॥ अतिविद्धाश्च नाराचैर्वमन्तो रुधिरं मुखैः । सारोहा

न्यपतन् भूमौ द्रुमवन्त इवाचलाः ॥ २४ ॥ मौर्वीं ध्वजञ्चनुश्चैव युगमीषां तथैव च । रथिनां कुट्टयामास भल्लैः सन्नतपर्वभिः ॥ २५ ॥ न सन्दधन्न चाकर्षन् न विमुञ्चन् न चोदयन् । मण्डलेनैव धनुषा नृत्यन् पार्थः स्म दृश्यते ॥ २६ ॥ अतिविद्धाश्च नाराचैर्वमन्तो रुधिरं मुखैः । मुहूर्त्तान्न्यपतन्नन्ये वारणा वसुधातले ॥ २७ ॥ उत्थितान्यगणेयानि कबन्धानि समन्ततः । अदृश्यन्त महाराज तस्मिन् परमसङ्कुले ॥ २८ ॥ सचापाः साङ्गुलित्राणाः सखड्गाः साङ्गदा रणे । अदृश्यन्त भुजाश्छिन्ना हेमाभरणभूषिताः ॥ २९ ॥ सूपस्करैरधिष्ठानैरीषादण्डकबन्धुरैः । चक्रैर्विमथितैरक्षैर्भग्नैश्च बहुधा युगैः ॥ ३० ॥ चर्मचापधरैश्चैव व्यवकीर्णैस्ततस्ततः । स्रग्भिराभरणैर्वस्त्रैः पतितैश्च महाध्वजैः ॥३१॥ निहतैर्वारणैरश्वैः क्षत्रियैश्च निपातितैः । अदृश्यत मही तत्र दारुणप्रतिदर्शना ॥ ३२ ॥ एवं दुःशासनबलं वध्यमानं किरीटिना । सम्प्राद्रवन्महाराज व्यथितं सहनायकम् ॥ ३३ ॥ ततो दुःशासनस्त्रस्तः सहानीकः शरार्दितः । द्रोणं त्रातारमाकाङ्क्षन् शकटव्यूहमभ्यगात् ॥ ३४ ॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि दुःशासनसैन्यपराभवे नवतितमोऽध्यायः ॥ ९० ॥

---

सञ्जय उवाच । दुःशासनबलं हत्वा सव्यसाची महारथः । सिन्धुराजं परीप्सन् वै द्रोणानीकमुपाद्रवत् ॥ १ ॥ स तु द्रोणं समासाद्य व्यूहस्य प्रमुखे स्थितम् । कृताञ्जलिरिदं वाक्यं कृष्णस्यानुमतेऽब्रवीत् ॥ २ ॥ शिवेन ध्याहि मां ब्रह्मन् स्वस्ति चैव वदस्व मे । भवत्प्रसादादिच्छामि प्रवेष्टुं दुर्भिदां चमूम् ॥ ३ ॥ भवान् पितृसमो मह्यं धर्मराजसमोऽपि च । तथा

कृष्णमनयैव सत्यमेतद्‌ब्रवीमि ते ॥ ४ ॥ अश्वत्थामा यथा तात
रक्षणीयस्त्वयानघ । तथाहमपि ते रक्ष्य सदैव द्विजसत्तम ॥ ५ ॥
तव प्रसादादिच्छेयं सिन्धुराजानमाहवे । निहन्तुं द्विपदां श्रेष्ठ
प्रतिज्ञां रक्ष मे विभो ॥ ६ ॥

सञ्जय उवाच । एवमुक्तस्तदाचार्य्यः प्रत्युवाच स्मयन्निव ।
मामजित्वा न वीभत्सो शक्यो जेतुं जयद्रथः ॥ ७ ॥ एतावदुक्त्वा
तं द्रोणः शरव्रातैरवाकिरत् । सरथाश्वध्वजं तीक्ष्णैः प्रहसन् वै
ससारथिम् ॥ ८ ॥ ततोऽर्जुनः शरव्रातान् द्रोणस्याचार्य्यसायकैः ।
द्रोणमभ्यद्रवद्वाणैर्घोररूपैर्महत्तरैः ॥ ९ ॥ विव्याध च रणे द्रोण-
मनुमान्य विशाम्पते । क्षत्रधर्म्मं समास्थाय नवभिः सायकैः पुनः
॥ १० ॥ तस्येषुमिषुभिश्छित्त्वा द्रोणो विव्याध तावुभौ । विषाग्नि-
ज्वलितप्रख्यैरिषुभिः कृष्णपाण्डवौ ॥ ११ ॥ इयेष पाण्डवस्तस्य
बाणैश्छेत्तुं शरासनम् । तस्य चिन्तयतस्त्वेवं फाल्गुनस्य महा-
त्मनः ॥ १२ ॥ द्रोणः शरैरसंभ्रान्तो ज्यां चिच्छेदाशु वीर्य्यवान् ।
विव्याध च हयानस्य ध्वजं सारथिमेव च ॥ १३ ॥ अर्जुनञ्च शरै-
र्वीरः स्मयमानोऽभ्यवाकिरत् । एतस्मिन्नन्तरे पार्थः सज्यं कृत्वा
महद्धनुः ॥ १४ ॥ विशेषयिष्यन्नाचार्य्यं सर्वास्त्रविदुषां वरः ।
मुमोच षट्शतान् बाणान् गृहीत्वैकमिव द्रुतम् ॥ १५ ॥ पुनः
सप्तशतानन्यान् सहस्राण्यनिवर्त्तिनाम् । चिक्षेपायुतशश्चान्यांस्तेऽघ्नन्
द्रोणस्य तां चमूम् ॥ १६ ॥ तैः सम्यगस्तैर्बलिना कृतिना चित्र-
योधिना । मनुष्यवाजिमातङ्गा विद्धाः पेतुर्गतासवः ॥ १७ ॥
विसूताश्वध्वजाः पेतुः संछिन्नायुधजीविताः । रथिनो रथमुख्येभ्यः
सहसा शरपीड़िताः ॥ १८ ॥ चूर्णिताक्षिप्तदग्धाना वज्रानिल-
हुताशनैः । तुल्यरूपा गजाः पेतुर्गिर्य्यग्राम्बुदवेश्मनाम् ॥ १९ ॥
पेतुरश्वसहस्राणि प्रहतान्यर्ज्जुनेषुभिः । हंसा हिमवतः प्रस्थे
वारिविप्रहता इव ॥ २० ॥ रथाश्वद्विपपत्त्योघाः सलिलौघा

मर्मभिद्भिरजिह्मगैः । अन्तेवासिनमाचार्यो महेष्वासं समार्पयत्
॥ ७ ॥ तं तूर्णमिव बीभत्सुः सर्वशस्त्रभृतां वरः । अभ्यधाव-
दिषूनस्यन्निषुवेगविघातकान् ॥ ८ ॥ तस्याशुक्षिप्तान् भल्लान् हि
भल्लैः सन्नतपर्वभिः । प्रत्यविध्यदमेयात्मा ब्रह्मास्त्रं समुदीरयन्
॥ ९ ॥ तदद्भुतमपश्याम द्रोणस्याचार्यकं युधि । यतमानो युवा
नैनं प्रत्यविध्यद्यदर्जुनः ॥ १० ॥ क्षरन्निव महामेघो वारिधाराः
सहस्रशः । द्रोणमेघः पार्थशैलं ववर्ष शरवृष्टिभिः ॥ ११ ॥
अर्जुनः शरवर्षं तं ब्रह्मास्त्रेणैव मारिष । प्रतिजग्राह तेजस्वी
बाणान् बाणैर्व्यशातयत् ॥ १२ ॥ द्रोणस्तु पञ्चविंशत्या श्वेत-
वाहनमार्दयत् । वासुदेवञ्च सप्तत्या बाह्वोरुरसि चाशुगैः ॥ १३ ॥
पार्थस्तु प्रहसन् धीमानाचार्यं सशरौघिणम् । विसृजन्तं शितान्
बाणानवारयत तं युधि ॥ १४ ॥ अथ तौ वध्यमानौ तु द्रोणेन
रथसत्तमौ । आवर्जयेतां दुर्धर्षं युगान्ताग्निमिवोत्थितम् ॥ १५ ॥
वर्जयन्निशितान् बाणान् द्रोणचापविनिःसृतान् । किरीटमाली
कौन्तेयो भोजानीकं व्यशातयत् ॥ १६ ॥ सोऽन्तरा कृतवर्माणं
काम्बोजञ्च सुदक्षिणम् । अभ्ययाद्वर्जयन् द्रोणं मैनाकमिव पर्व-
तम् ॥ १७ ॥ ततो भोजो नरव्याघ्रो दुर्धर्षं कुरुसत्तमम् । अविध्य-
त्तूर्णमव्यग्रो दशभिः कङ्कपत्रिभिः ॥ १८ ॥ तमर्जुनः शतेनाजौ
राजन् विव्याध पत्रिणा । पुनश्चान्यैस्त्रिभिर्बाणैर्मोहयन्निव सात्व-
तम् ॥ १९ ॥ भोजस्तु प्रहसन् पार्थं वासुदेवञ्च माधवम् । एकैकं
पञ्चविंशत्या सायकानां समार्पयत् ॥ २० ॥ तस्यार्जुनो धनुश्छित्त्वा
विव्याधैनं त्रिसप्तभिः । शरैरग्निशिखाकारैः क्रुद्धाशीविषसन्निभैः
॥ २१ ॥ अथान्यद्धनुरादाय कृतवर्मा महारथः । पञ्चभिः
सायकैस्तूर्णं विव्याधोरसि भारत ॥ २२ ॥ पुनश्च निशितैर्बाणैः
पार्थं विव्याध पञ्चभिः । तं पार्थो नवभिर्बाणैराजघान स्तनान्तरे
॥ २३ ॥ दृष्ट्वा विषक्तं कौन्तेयं कृतवर्मरथं प्रति । चिन्तयामास

वार्ष्णेयो न नः, कालात्ययो भवेत् ॥ २४ ॥ ततः कृष्णोऽब्रवीत्
पार्थं कृतवर्मणि मा दयाम् । कृत्वा सम्बन्धकं हित्वा प्रमथ्यैनं
विशातय ॥ २५ ॥ ततः स कृतवर्माणं मोहयित्वार्जुनः शरैः ।
अभ्यगाज्जवनैरश्वैः काम्बोजानामनीकिनीम् ॥ २६ ॥ अमर्षितस्तु
हार्दिक्यः प्रविष्टे श्वेतवाहने । विधुन्वन् सशरं चापं पाञ्चाल्याभ्यां
समागतः ॥ २७ ॥ चक्ररक्षौ तु पाञ्चाल्यावर्ज्जुनस्य पदानुगौ ।
पर्यवारयदायान्तौ कृतवर्मा रथेषुभि ॥ २८ ॥ तावविध्यत् ततो
भोजः कृतवर्मा शितैः शरैः । त्रिभिरेव युधामन्युं चतुर्भिश्चोत्तमौ-
जसम् ॥ २९ ॥ तावप्येनं विव्यधतुर्दशभिर्दशभिः शरैः । त्रिभि-
रेव युधामन्युरुत्तमौजास्त्रिभिस्तथा ॥ ३० ॥ 'सञ्चिच्छिदतुरप्यस्य
ध्वजं कार्मुकमेव च ।' अथान्यद्धनुरादाय हार्दिक्यः क्रोधमूर्च्छितः
॥ ३१ ॥ कृत्वा विधनुषौ वीरौ शरवर्षैरवाकिरत् । तावन्ये
धनुषी सज्ये कृत्वा भोजं विजघ्नतुः ॥ ३२ ॥ तेनान्तरेण बीभत्सु
र्विवेशामित्रवाहिनीम् । न लेभाते तु तौ द्वारं वारितौ कृत-
वर्मणा ॥ ३३ ॥ धार्त्तराष्ट्रेष्वनीकेषु यतमानौ नरर्षभौ । अनी-
कान्यर्दयन् युद्धे त्वरितः श्वेतवाहनः ॥ ३४ ॥ नावधीत् कृत-
वर्माणं प्राप्तमप्यरिसूदनः । तं दृष्ट्वा तु तथा यान्तं शूरो राजा
श्रुतायुधः ॥ ३५ ॥ अभ्यद्रवत् सुसंक्रुद्धो विधुन्वानो महद्धनुः । स
पार्थं त्रिभिरानर्च्छत् सप्तत्या च जनार्द्दनम् ॥ ३६ ॥ क्षुरप्रेण
सुतीक्ष्णेन पार्थकेतुमताडयत् । ततोऽर्ज्जुनो नवत्या तु शराणां
नतपर्वणाम् ॥ ३७ ॥ आजघान भृशं क्रुद्धस्तोत्त्रैरिव महाद्विपम् ।
स तं न ममृषे राजन् पाण्डवेयस्य विक्रमम् ॥ ३८ ॥ अथैनं
सप्तसप्तत्या नाराचानां समार्पयत् । तस्यार्ज्जुनो धनुश्छित्त्वा शरा-
वापं निकृत्य च ॥ ३९ ॥ आजघानोरसि क्रुद्धः सप्तभिर्नतपर्वभिः ।
अथान्यद्धनुरादाय स राजा क्रोधमूर्च्छितः ॥ ४० ॥ वासविं
नवभिर्बाणैर्बाह्वोरुरसि चार्पयत् । ततोऽर्ज्जुनः स्मयन्नेव श्रुतायुध-

मरिन्दमः ॥ ४१ ॥ शरैरनेकसाहस्रैः पीडयामास भारत। अश्वांश्चास्यावधीत्तूर्णं सारथिञ्च महारथ ॥ ४२ ॥ विव्याध चैनं सप्तत्या नाराचानां महाबल। हताश्वं रथमुत्सृज्य स तु राजा श्रुतायुधः ॥ ४३ ॥ अभ्यद्रवद्रणे पार्थं गदामुद्यम्य वीर्य्यवान्। वरुणस्यात्मजो वीरः स तु राजा श्रुतायुधः ॥ ४४ ॥ पर्णाशा जननी यस्य शीततोया महानदी। तस्य माताब्रवीद्राजन् वरुणं पुत्रकारणात् ॥ ४५ ॥ अवध्योऽयं भवेल्लोके शत्रूणां तनयो मम। वरुणस्त्वब्रवीत् प्रीतो ददाम्यस्मै वरं हितम् ॥ ४६ ॥ दिव्यमस्त्रं सुतस्तेऽयं येनावध्यो भविष्यति। नास्ति चाप्यमरत्वं वै मनुष्यस्य कथञ्चन ॥ ४७ ॥ सर्वेणावश्यमर्त्तव्यं जातेन सरितांवरे। दुर्द्धर्षस्त्वेष शत्रूणां रणेषु भविता सदा ॥ ४८ ॥ अस्त्रस्यास्य प्रभावाद्वै व्येतु ते मनसो ज्वरः। इत्युक्त्वा वरुणः प्रादात् गदां मन्त्रपुरस्कृताम् ॥ ४९ ॥ यामासाद्य दुराधर्षः सर्वलोके श्रुतायुधः। उवाच चैनं भगवान् पुनरेव जलेश्वरः ॥ ५० ॥ अयुध्यति न मोक्तव्या सा त्वय्येव पतेदिति। हन्यादेषा प्रतीपं हि प्रयोक्तारमपि प्रभो ॥ ५१ ॥ न चाकरोत् स तद्वाक्यं प्राप्ते काले श्रुतायुधः। स तया वीरघातिन्या जनार्द्दनमताडयत् ॥ ५२ ॥ प्रतिजग्राह तां कृष्णः पीनेनांसेन वीर्य्यवान्। नाकम्पयत शौरिं सा विन्ध्यं गिरिमिवानिलः ॥ ५३ ॥ प्रत्युद्यान्ती तमेवैषा कृत्येव दुरधिष्ठिता। जघान चास्थितं वीरं श्रुतायुधममर्षणम् ॥ ५४ ॥ हत्वा श्रुतायुधं वीरं धरणीमन्वपद्यत। गदां निवर्त्तितां दृष्ट्वा निहतञ्च श्रुतायुधम् ॥ ५५ ॥ हाहाकारो महांस्तत्र सैन्यानां समजायत। स्वेनास्त्रेण हतं दृष्ट्वा श्रुतायुधमरिन्दमम् ॥ ५६ ॥ अयुध्यमानाय तत केशवाय नराधिप। क्षिप्ता श्रुतायुधेनाथ तस्मात्तमवधीद्गदा ॥ ५७ ॥ यथोक्तं वरुणेनाजौ तथा स निधनं गतः। व्यसुश्चाप्यपतद्भूमौ प्रेक्षतां सर्वधन्विनाम् ॥ ५८ ॥ पतमानस्तु स बभौ

पर्य्यायाया प्रिय सुत । स भग्न इव वातेन बहुशाखो वनस्पति
॥ ५९ ॥ तत सर्व्वाणि सैन्यानि सेनामुख्याश्च सर्व्वश । प्राद्रवन्त
हत दृष्ट्वा श्रुतायुधमरिन्दमम् ॥ ६० ॥ तत काम्बोजराजस्य पुत्र
शूर सुदक्षिण । अभ्ययाज्जवनैरश्वै फाल्गुन शत्रुसूदनम् ॥ ६१ ॥
तस्य पार्थ शरान् सप्त प्रेषयामास भारत । ते त शूर विनिर्भिद्य
प्राविशन् धरणीतलम् ॥ ६२ ॥ सोऽतिविद्ध शरैस्तीक्ष्णैर्गाण्डीव-
प्रेषितैर्मृधे । अर्ज्जुन प्रतिविव्याध दशभि कङ्कपत्रिभि ॥ ६३ ॥
वासुदेव त्रिभिर्विद्ध्वा पुन पार्थञ्च पञ्चभि । तस्य पार्थो धनु-
श्छित्त्वा केतु चिच्छेद मारिष ॥ ६४ ॥ भल्लाभ्या भृशतीक्ष्णाभ्या
तञ्च विव्याध पाण्डव । स तु पार्थ त्रिभिर्विद्ध्वा सिंहनादमथा-
नदत् ॥ ६५ ॥ सर्व्वपारशवीञ्चैव शक्ति शूर सुदक्षिण । सघण्टा
प्राहिणोद्घोरा क्रुद्धो गाण्डीवधन्वने ॥ ६६ ॥ सा ज्वलन्ती महो-
ल्केव तमासाद्य महारथम् । सविस्फुलिङ्गा निर्भिद्य निपपात
महीतले ॥ ६७ ॥ शक्त्या त्वभिहतो गाढ मूर्च्छयाभिपरिप्लुत ।
समाश्वस्य महातेजा सृक्किणी परिसंलिहन् ॥ ६८ ॥ त चतु-
र्द्दशभि पार्थो नाराचै कङ्कपत्रिभि । साश्वध्वजधनु सूत विव्या-
धाचिन्त्यविक्रम ॥ ६९ ॥ रथञ्चान्यै सुबहुभिश्चक्रे विशकल शरै ।
सुदक्षिणन्तु काम्बोज मोघसङ्कल्पविक्रमम् ॥ ७० ॥ बिभेद हृदि
बाणेन पृथुधारेण पाण्डव । स भिन्नवर्म्मा स्रस्ताङ्ग प्रभ्रष्ट-
मुकुटाङ्गद ॥ ७१ ॥ पपाताभिमुख शूरो यन्त्रमुक्त इव ध्वज ।
गिरे शिखरज श्रीमान् सुशाख सुप्रतिष्ठित ॥ ७२ ॥ निर्भग्न
इव वातेन कर्णिकारो हिमात्यये । शेते स्म निहतो भूमौ
काम्बोजास्तरणोचित ॥ ७३ ॥ महार्हाभरणोपेत सानुमानिव
पर्व्वत । सुदर्शनीयस्ताम्राक्ष कर्णिना स सुदक्षिण ॥ ७४ ॥
पुत्र काम्बोजराजस्य पार्थेन विनिपातित । धारयन्नग्निसङ्काशा
शिरसा काञ्चनी स्रजम् । ७५ ॥ अशोभत महाबाहुर्व्यसुर्भूमौ

निपातितः । ततः सर्वाणि सैन्यानि व्यद्रवन्त सुतस्य ते । इतं श्रुतायुधं दृष्ट्वा काम्बोजञ्च सुदक्षिणम् ॥ ७६ ॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि श्रुतायुधसुदक्षिणवधे द्विनवतोऽध्यायः ॥ ९२ ॥

महात्मनः । पार्थोऽपि भृशसंविद्धो ध्वजयष्टिं समाश्रित ॥ १४ ॥
ततः सर्वस्य सैन्यस्य तावकस्य विशाम्पते । सिंहनादो महानासीत्
हतं मत्वा धनञ्जयम् ॥ १५ ॥ कृष्णश्च भृशसन्तप्तो दृष्ट्वा पार्थं विचे-
तनम् । आश्वासयत् सुहृद्याभिर्वाग्भिस्तत्र धनञ्जयम् ॥ १६ ॥
ततस्तौ रथिनां श्रेष्ठौ लब्धलक्ष्यौ धनञ्जयम् । वासुदेवञ्च वार्ष्णेयं
शरवर्षैः समन्ततः ॥ १७ ॥ सचक्रकूवररथं साश्वध्वजपताकिनम् ।
अदृश्यं चक्रतुर्युद्धे तदद्भुतमिवाभवत् ॥ १८ ॥ प्रत्याश्वस्तस्तु बीभत्सुः
शनकैरिव भारत । प्रेतराजपुरं प्राप्य पुनः प्रत्यागतो यथा ॥ २० ॥
सञ्छन्नं शरजालेन रथं दृष्ट्वा सकेशवम् । शत्रू चाभिमुखौ दृष्ट्वा
दीप्यमानाविवानलौ ॥ २१ ॥ प्रादुश्चक्रे ततः पार्थः शाक्रमस्त्रं
महारथ । तस्मादासन् सहस्राणि शराणां नतपर्वणाम् ॥ २२ ॥
ते जघ्नुस्तौ महेष्वासौ ताभ्यां मुक्तांश्च सायकाः । विविशुराकाश-
गताः पार्थबाणविदारिताः ॥ २३ ॥ प्रतिहत्य शरांस्तूर्णं शर-
वेगेन पाण्डव । प्रतस्थे तत्र तत्रैव योधयन् वै महारथान् ॥ २४ ॥
तौ च फाल्गुनबाणौघैर्विबाहुशिरसौ कृतौ । वसुधामन्वपद्येतां
वातनुन्नाविव द्रुमौ ॥ २५ ॥ श्रुतायुषश्च निधनं वधश्चैवाच्युतायुषः ।
लोकविस्मापनमभूत् समुद्रस्येव शोषणम् ॥ २६ ॥ तयोः पदा-
नुगान् हत्वा पुनः पञ्चाशतं रथान् । प्रत्यगाद् भारतीं सेनां
निघ्नन् पार्थो वरान् वरान् ॥ २७ ॥ श्रुतायुषं निहतं प्रेक्ष्य
चैवाच्युतायुषम् । नियतायुश्च संक्रुद्धो दीर्घायुश्चैव भारत ॥ २८ ॥
पुत्रौ तयोर्नरव्याघ्रौ कौन्तेयं प्रतिजग्मतुः । किरन्तौ विविधान्
बाणान् पितृव्यसनकर्षितौ ॥ २९ ॥ तावर्जुनो मुहूर्त्तेन शरैः
सन्नतपर्वभिः । प्रेषयत् परमक्रुद्धो यमस्य सदनं प्रति ॥ ३० ॥
लोडयन्तमनीकानि द्विपं पद्मसरो यथा । नाशक्नुवन् वारयितुं
पार्थं क्षत्रियपुङ्गवाः ॥ ३१ ॥ अङ्गास्तु गजवारेण पाण्डवं पर्य्य-
वारयन् । क्रुद्धाः सहस्रशो राजन् शिक्षिता हस्तिसादिनः ॥ ३२ ॥

दुर्य्योधनसमादिष्टाः कुञ्जरैः पर्व्वतोपमैः । प्राच्याश्च दाक्षिणा-
त्याश्च कलिङ्गप्रमुखा नृपाः ॥ ३३ ॥ तेषामापततां शीघ्रं गाण्डीव-
प्रेषितैः शरैः । निचकर्त्त शिरांस्युग्रो बाहूनपि सभूषणान् ॥ ३४ ॥
तैः शिरोभिर्मही कीर्णा बाहुभिश्च सहाङ्गदैः । बभौ कनक-
पाषाणा भुजगैरिव संवृता ॥ ३५ ॥ बाहवो विशिखैश्छिन्नाः
शिरांस्युन्मथितानि च । पतमानान्यदृश्यन्त द्रुमेभ्य इव पक्षिणः
॥ ३६ ॥ शरैः सहस्रशो विद्धा द्विपाः प्रसृतशोणिताः । अदृश्य-
न्ताद्रयः काले गैरिकाम्बुस्रवा इव ॥ ३७ ॥ निहताः शेरते चान्ये
बीभत्सोर्निशितैः शरैः । गजपृष्ठगता म्लेच्छा नानाविकृतदर्शनाः
॥ ३८ ॥ नानावेशधरा राजन् नानाशस्त्रौघसंवृताः । रुधिरे-
णानुलिप्ताङ्गा भान्ति चित्रैः शरैर्हताः ॥ ३९ ॥ शोणितं निर्वमन्ति
स्म द्विपाः पार्थशराहताः । सहस्रशश्छिन्नगात्रा आरोहाः
सपदानुगाः ॥ ४० ॥ चुक्रुशुश्च निपेतुश्च बभ्रमुश्चापरे दिशः ।
भृशं त्रस्ताश्च बहवः स्वानेव ममृदुर्गजाः ॥ ४१ ॥ सान्तरायुधिन-
श्चैव द्विपास्तीक्ष्णविषोपमाः । विदन्त्यसुरमायां ये सुघोरा घोर-
चक्षुषः ॥ ४२ ॥ यवनाः पारदाश्चैव शकाश्च सह बाह्लिकैः । गो-

ततः कल्पा कृता भूमावपि वसुधिरं भृशा। पत्तग्रथ्रयनागैश्च प्रच्छन्नकृतमस्युनाम् ॥ ५० ॥ शरवर्षप्रवा घोरा केशशैवलशाद्वलाम्। प्रावर्त्तयन्नदीमुग्रां शोणितौघतरङ्गिणीम् ॥ ५१ ॥ छिन्नाङ्गुलिचुद्रमत्स्या युगान्ते कालसन्निभाम्। अकरोद्गजसम्बाधां नदीमुत्तरशोणिताम् ॥ ५२ ॥ देहेभ्यो राजपुत्राणां नागाश्वरथसादिनाम्। यथा स्थलञ्च निम्नञ्च न स्यादर्षति वासवे ॥ ५३ ॥ तथासीत् पृथिवी सर्वा शोणितेन परिप्लुता। षट्सहस्रान् हयान् वीरान् पुनर्दशशतान् वरान् ॥ ५४ ॥ प्राहिणोन्मृत्युलोकाय क्षत्रियान् क्षत्रियर्षभ। शरैः सहस्रशो विद्धा विधिवत् कल्पिता द्विपाः ॥ ५५ ॥ शेरते भूमिमासाद्य शैला वज्रहता इव। स वाजिरथमातङ्गान् निघ्नन् व्यचरदर्जुनः ॥ ५६ ॥ प्रभिन्न इव मातङ्गो मृद्नन् नलवनं यथा। भूरिद्रुमलतागुल्मं शुष्केन्धनतृणोलपम् ॥ ५७ ॥ निर्दहेदनलोऽरण्यं यथा वायुसमीरितः। सैनारण्यं तव तथा कृष्णानिलसमीरितः ॥ ५८ ॥ शराचिरदहत् क्रुद्धः पाण्डवाग्निर्धनञ्जयः। शून्यान् कुर्वन् रथोपस्थान् मानवैः संस्तरन्महीम् ॥ ५९ ॥ प्रानृत्यदिव सम्बाधे चापहस्तो धनञ्जयः। वज्रकल्पैः शरैर्भूमिं कुर्वन्नुत्तरशोणिताम् ॥ ६० ॥ प्राविशद्भारतीं सेनां सङ्क्रुद्धो वै धनञ्जयः। तं श्रुतायुस्तथाम्बष्ठो व्रजमानं न्यवारयत् ॥ ६१ ॥ तस्यार्जुनः शरैस्तीक्ष्णैः कङ्कपत्रपरिच्छदैः। न्यपातयद्धयान् शीघ्रं यतमानस्य मारिष ॥ ६२ ॥ धनुश्चास्यापरैश्छित्त्वा शरैः पार्थो विचक्रमे। अम्बष्ठस्तु गदां गृह्य क्रोधपर्याकुलेक्षणः ॥ ६३ ॥ आससाद रणे पार्थं केशवञ्च महारथम्। ततः स प्रहरन् वीरो गदामुद्यम्य भारत ॥ ६४ ॥ रथमावार्य्य गदया केशवं समताडयत्। गदया ताडितं दृष्ट्वा केशवं परवीरहा ॥ ६५ ॥ अर्जुनोऽथ भृशं क्रुद्धः सोऽम्बष्ठं प्रति भारत। ततः शरैर्हेमपुङ्खैः सगदं रथिनां वरम् ॥ ६६ ॥ छादयामास

समरे मेघैः सूर्यमिवोदितम्। अथापरैः शरैश्चापि गदां तस्य महात्मनः ॥ ६७ ॥ अचूर्णयत्तदा पार्थस्तदद्भुतमिवाभवत्। अथ तां पतितां दृष्ट्वा बध्यमानां च महागदाम् ॥ ६८ ॥ अर्जुनं वासुदेवञ्च पुनः पुनरताड़यत। तस्यार्जुनः क्षुरप्राभ्यां सगदावुद्यतौ भुजौ ॥ ६९ ॥ चिच्छेदेन्द्रध्वजाकारौ शिरश्चान्येन पत्रिणा। स पपात हतो राजन् वसुधामनुनादयन् ॥ ७० ॥ इन्द्रध्वज इवोत्सृष्टो यन्त्रनिर्मुक्तबन्धनः। रथानीकावगाढश्च वारणाश्वरथैर्वृतः। अदृश्यत तदा पार्थो घनैः सूर्य इवावृतः ॥ ७१ ॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि अम्बष्ठवधे

त्रिनवतोऽध्यायः ॥ ९३ ॥

---

सञ्जय उवाच। ततः प्रविष्टे कौन्तेये सिन्धुराजजिघांसया। द्रोणानीकं विनिर्भिद्य भोजानीकञ्च दुस्तरम् ॥ १ ॥ काम्बोजस्य च दायादे हते राजन् सुदक्षिणे। श्रुतायुधे च विक्रान्ते निहते सव्यसाचिना ॥ २ ॥ विप्रद्रुतेष्वनीकेषु विध्वस्तेषु समन्ततः। प्रभग्नं स्वबलं दृष्ट्वा पुत्रस्ते द्रोणमभ्ययात् ॥ ३ ॥ त्वरन्नेकरथेनैव समेत्य द्रोणमब्रवीत्। गतः स पुरुषव्याघ्रः प्रमथ्येमां महाचमूम् ॥ ४ ॥ अत्र बुद्ध्या समीक्षस्व किन्नु कार्य्यमनन्तरम्। अर्जुनस्य विघाताय दारुणेऽस्मिन् जनक्षये ॥ ५ ॥ यथा स पुरुषव्याघ्रो न हन्येत जयद्रथः। तथा विधत्स्व भद्रं ते त्वं हि नः परमा गतिः ॥ ६ ॥ असौ धनञ्जयाग्निर्हि कोपमारुतचोदितः। सेनाकक्षं दहति मे वह्निः कक्षमिवोत्थितः ॥ ७ ॥ अतिक्रान्ते हि कौन्तेये भित्त्वा सैन्यं परन्तप। जयद्रथस्य गोप्तारः संशयं परमं गताः ॥ ८ ॥ स्थिरा बुद्धिर्नरेन्द्राणामासीद्ब्रह्मविदां वर।

नातिक्रमिष्यति द्रोणं जातु जीवन् धनञ्जयः ॥ ९ ॥ योऽसौ पार्थो व्यतिक्रान्तो मिषतस्ते महाद्युते। सर्वं ह्ययातुरं मन्ये नैतदस्ति बलं मम ॥ १० ॥ जानामि त्वां महाभाग पाण्डवानां हिते रतम्। तथा मुह्यामि च ब्रह्मन् कार्य्यवत्तां विचिन्तयन् ॥ ११ ॥ यथाशक्ति च ते ब्रह्मन् वर्त्तये वृत्तिमुत्तमाम्। प्रीणामि च यथाशक्ति तच्च त्वं नावबुध्यसे ॥ १२ ॥ अस्मान्न त्वं सदा भक्तानिच्छस्यमितविक्रम। पाण्डवान् सततं प्रीणास्यस्माकं विप्रिये रतान् ॥ १३ ॥ अस्मानेवोपजीवंस्त्वमस्माकं विप्रिये रतः। न ह्यहं त्वां विजानामि मधुदिग्धमिव क्षुरम् ॥ १४ ॥ नादास्यच्चेद्वरं मह्यं भवान् पाण्डवनिग्रहे। नावारयिष्यं गच्छन्तमहं सिन्धुपतिं गृहान् ॥ १५ ॥ मया त्वाशंसमानेन त्वत्तस्त्राणमबुद्धिना। आश्वासितः सिन्धुपतिर्मोहाद्दत्तश्च मृत्यवे ॥ १६ ॥ यमदंष्ट्रान्तरंप्राप्तो मुच्येताऽपि हि मानवः। नार्ज्जुनस्य वशं प्राप्तो मुच्येताजौ जयद्रथः ॥ १७ ॥ स तथा कुरु शोणाश्व यथा मुच्येत सैन्धवः। मम चार्त्तप्रलापानां माक्रुधः पाहि सैन्धवम् ॥ १८ ॥

द्रोण उवाच। नाभ्यसूयामि ते वाक्यमश्वत्थाम्नाऽपि मे समः। सत्यं तु ते प्रवक्ष्यामि तज्जुषस्व विशाम्पते ॥ १९ ॥ सारथिप्रवरः कृष्णः शीघ्राश्चास्य हयोत्तमाः। अल्पञ्च विवरं कृत्वा तूर्णं याति धनञ्जयः ॥ २० ॥ किन्न पश्यसि बाणौघान् क्रोशमात्रे किरीटिनः। पश्चाद्रथस्य पतितान् क्षिप्तान् शीघ्रं हि गच्छतः ॥ २१ ॥ न चाहं शीघ्रयानेऽद्य समर्थो वयसान्वितः। सेनामुखे च पार्थानामेतद्बलमुपस्थितम् ॥ २२ ॥ युधिष्ठिरश्च मे ग्राह्यो मिषतां सर्वधन्विनाम्। एवं मया प्रतिज्ञातं क्षत्रमध्ये महाभुज ॥ २३ ॥ धनञ्जयेन चोत्सृष्टो वर्त्तते प्रमुखे नृप। तस्माद्व्यूहमुखं हित्वा नाहं योत्स्यामि फाल्गुनम् ॥ २४ ॥ तुल्याभिजनकर्म्माणं शत्रुमेकं सहायवान्। गत्वा योधय मा भैस्त्वं त्वं ह्यस्य जगतः पतिः ॥२५॥

समरे मेघः सूर्य्यमिवोदितम्। अथापरैः शरैश्चापि गदां तस्य
महात्मनः ॥ ६७ ॥ अचूर्णयत्तदा पार्थस्तदद्भुतमिवाभवत्। अथ
तां पतितां दृष्ट्वा गृह्यान्यां च महागदाम् ॥ ६८ ॥ अर्जुनं वासु-
देवञ्च पुनः पुनरताड़यत। तस्यार्जुनः क्षुरप्राभ्यां सगदावुद्यतौ
भुजौ ॥ ६९ ॥ चिच्छेदेन्द्रध्वजाकारौ शिरश्चान्येन पत्रिणा। स
पपात हतो राजन् वसुधामनुनादयन् ॥ ७० ॥ इन्द्रध्वज इवोत्-
सृष्टो यन्त्रनिर्मुक्तबन्धनः। रथानीकावगाढ़श्च वारणाश्वरथै-
र्वृतः। अदृश्यत तदा पार्थो घनैः सूर्य्य इवावृतः ॥ ७१ ॥

इति द्रोणपर्व्वणि जयद्रथवधपर्व्वणि अम्बष्ठवधे
त्रिनवतोऽध्यायः ॥ ९३ ॥

---

सञ्जय उवाच। ततः प्रविष्टे कौन्तेये सिन्धुराजजिघांसया।
द्रोणानीकं विनिर्भिद्य भोजानीकञ्च दुस्तरम् ॥ १ ॥ काम्बोजस्य
च दायादे हते राजन् सुदक्षिणे। श्रुतायुधे च विक्रान्ते निहते
सव्यसाचिना ॥ २ ॥ विप्रद्रुतेष्वनीकेषु विध्वस्तेषु समन्ततः।
प्रभग्नं स्वबलं दृष्ट्वा पुत्रस्ते द्रोणमभ्ययात् ॥ ३ ॥ त्वरन्नेकरथेनैव
समेत्य द्रोणमब्रवीत्। गतः स पुरुषव्याघ्रः प्रमथ्येमां महाचमूम्
॥ ४ ॥ अत्र बुद्ध्या समीक्षस्व किन्नु कार्य्यमनन्तरम्। अर्जुनस्य
विघाताय दारुणेऽस्मिन् जनक्षये ॥ ५ ॥ यथा स पुरुषव्याघ्रो न
हन्येत जयद्रथः। तथा विधत्स्व भद्रं ते त्वं हि नः परमा
गतिः ॥ ६ ॥ असौ धनञ्जयाग्निर्हि कोपमारुतचोदितः। सेना-
कक्षं दहति मे वह्निः कक्षमिवोत्थितः ॥ ७ ॥ अतिक्रान्ते हि
कौन्तेये भित्त्वा सैन्यं परन्तप। जयद्रथस्य गोप्तारः संशयं परमं
गताः ॥ ८ ॥ स्थिरा बुद्धिर्नरेन्द्राणामासीद्ब्रह्मविदाम्वर।

नातिक्रमिष्यति द्रोणं जातु जीवन् धनञ्जय ॥ ९ ॥ योऽसौ पार्थो व्यतिक्रान्तो मिषतस्ते महाद्युते । सर्वं ह्याद्यातुरं मन्ये नैतदस्ति बलं मम ॥ १० ॥ जानामि त्वा महाभाग पाण्डवानां हिते रतम् । तथा मुह्यामि च ब्रह्मन् कार्य्यवत्ता विचिन्तयन् ॥ ११ ॥ यथाशक्ति च ते ब्रह्मन् वर्त्तये वृत्तिमुत्तमाम् । प्रीणामि च यथाशक्ति तच्च त्वं नावबुध्यसे ॥ १२ ॥ अस्मान्न त्वं सदा भक्तानिच्छस्यमितविक्रम । पाण्डवान् सततं प्रीणास्यस्माकं विप्रिये रतान् ॥ १३ ॥ अस्मानेवोपजीवंस्त्वमस्माकं विप्रिये रत । न ह्यहं त्वा विजानामि मध्वदिग्धमिव क्षुरम् ॥ १४ ॥ नादास्यच्चेद्वरं मह्यं भवान् पाण्डवनिग्रहे । नावारयिष्यं गच्छन्तमहं सिन्धुपतिं गृहान् ॥ १५ ॥ मया त्वाशंसमानेन त्वत्तस्त्राणमबुद्धिना । आश्वासितः सिन्धुपतिर्मोहाद्दत्तश्च मृत्यवे ॥ १६ ॥ यमदंष्ट्रान्तरंप्राप्तो मुच्येतापि हि मानवः । नार्ज्जुनस्य वशं प्राप्तो मुच्येताजौ जयद्रथः ॥ १७ ॥ स तथा कुरु शोणाश्व यथा मुच्येत सैन्धवः । मम चार्त्तप्रलापानां माक्रुधः पाहि सैन्धवम् ॥ १८ ॥

द्रोण उवाच । नाभ्यसूयामि ते वाक्यमश्वत्थाम्नापि मे समः । सत्यं तु ते प्रवक्ष्यामि तज्जुषस्व विशाम्पते ॥ १९ ॥ सारथिप्रवरः कृष्णः शीघ्राश्चास्य हयोत्तमाः । अल्पञ्च विवरं कृत्वा तूर्णं याति धनञ्जय ॥ २० ॥ किन्न पश्यसि बाणौघान् क्रोशमात्रे किरीटिनः । पश्चाद्रथस्य पतितान् क्षिप्तान् शीघ्रं हि गच्छतः ॥ २१ ॥ न चाहं शीघ्रयानेऽद्य समर्थो वयसान्वितः । सेनामुखे च पार्थानामेतद्बलमुपस्थितम् ॥ २२ ॥ युधिष्ठिरश्च मे ग्राह्यो मिषतां सर्वधन्विनाम् । एवं मया प्रतिज्ञातं क्षत्रमध्ये महाभुज ॥ २३ ॥ धनञ्जयेन चोत्सृष्टो वर्त्तते प्रमुखे नृप । तस्माद्व्यूहमुखं हित्वा नाहं योत्स्यामि फाल्गुनम् ॥ २४ ॥ तुल्याभिजनकर्माणं शत्रुमेकं सहायवान् । गत्वा योधय मा भैस्त्वं त्वं ह्यस्य जगतः पतिः ॥२५॥

राजा शूरः कृती दक्षो जेतुं परपुरञ्जय। वीरः स्वयं प्रयाह्यत्र
यत्र पार्थो धनञ्जय ॥ २६ ॥

दुर्योधन उवाच। कथं त्वामप्यतिक्रान्त सर्वशस्त्रभृतांवरम्।
धनञ्जयो मया शक्य आचार्य प्रतिबाधितुम् ॥ २७ ॥ अपि वज्री
रणे जेतुं वज्रहस्तः पुरन्दरः। नार्ज्जुनः समरे शक्यो जेतुं पर-
पुरञ्जयः ॥ २८ ॥ येन भोजश्च हार्द्दिक्यो भवांश्च त्रिदशोपमः।
अस्त्रप्रतापेन जितौ श्रुतायुश्च निवर्हितः ॥ २९ ॥ सुदक्षिणश्च
निहतः स च राजा श्रुतायुधः। श्रुतायुश्चाच्युतायुश्च म्लेच्छाश्चायु-
तशो हताः ॥ ३० ॥ तं कथं पाण्डवं युद्धे दहन्तमिव पावकम्।
प्रतियोत्स्यामि दुर्द्धर्षं तमहं शस्त्रकोविदम् ॥ ३१ ॥ क्षमश्च मन्यसे
युद्धं मम तेनाद्य संयुगे। परवानस्मि भवति प्रेष्यवद्रक्ष मे यशः ॥३२॥

द्रोण उवाच। सत्यं वदसि कौरव्य दुराधर्षो धनञ्जय।
अहन्तु तत् करिष्यामि यथैनं प्रसहिष्यसि ॥ ३३ ॥ अद्भुतञ्चाद्य
पश्यन्तु लोके सर्वधनुर्द्धराः। विषक्तं त्वयि कौन्तेयं वासुदेवस्य
पश्यतः ॥ ३४ ॥ एष ते कवचं राजंस्तथा बध्नामि काञ्चनम्।
यथा न बाणा नास्त्राणि प्रहरिष्यन्ति ते रणे ॥ ३५ ॥ यदि त्वां
सासुरसुराः सयक्षोरगराक्षसाः। योधयन्ति त्रयो लोकाः सनरा
नास्ति ते भयम् ॥ ३६ ॥ न कृष्णो न च कौन्तेयो न चान्यः शस्त्र-
भृद्रणे। शरानर्पयितुं कश्चित् कवचे तव शक्ष्यति ॥ ३७ ॥ स
त्वं कवचमास्थाय क्रुद्धमद्य रणेऽर्ज्जुनम्। त्वरमाणः स्वयं याहि
न त्वासौ विसहिष्यति ॥ ३८ ॥

सञ्जय उवाच। एवमुक्त्वा त्वरन्द्रोणः स्पृष्ट्वाम्भो वर्म भास्वरम्।
आबबन्धाद्भुततमं जपन् मन्त्रान् यथाविधि ॥ ३९ ॥ रणे तस्मिन्
सुमहति विजयस्य सुतस्य ते। विसिस्मापयिषुर्लोकान् विद्यया
ब्रह्मवित्तम ॥ ४० ॥

द्रोण उवाच। करोतु स्वस्ति ते ब्रह्मा ब्रह्मा चापि द्विजा-

तवः । वरीहपाश्च ये श्रेष्ठास्तेभ्यस्ते स्वस्ति भारत ॥ ४१ ॥
ययातिर्नहुषश्चैव धुन्धुमारो भगीरथः । तुभ्यं राजर्षयः सर्वे
स्वस्ति कुर्वन्तु सर्वशः ॥ ४२ ॥ स्वस्ति तेऽस्त्वेकपादेभ्यो बहुपादेभ्य
एव च । स्वस्त्यस्त्वपादकेभ्यश्च नित्यं तव महारणे ॥ ४३ ॥ स्वाहा
स्वधा शची चैव स्वस्ति कुर्वन्तु ते सदा । लक्ष्मीररुन्धती चैव
कुरुतां स्वस्ति तेऽनघ ॥ ४४ ॥ असितो देवलश्चैव विश्वामित्र-
स्तथाङ्गिराः । वसिष्ठः कश्यपश्चैव स्वस्ति कुर्वन्तु ते नृप ॥ ४५ ॥
धाता विधाता लोकेशो दिशश्च सदिगीश्वराः । स्वस्ति तेऽद्य
प्रयच्छन्तु कार्त्तिकेयश्च षण्मुखः ॥ ४६ ॥ विवस्वान् भगवान्
स्वस्ति करोतु तव सर्वशः । दिग्गजाश्चैव चत्वारः क्षितिश्च गगनं
ग्रहाः ॥ ४७ ॥ अधस्ताद्धरणीं योऽसौ सदा धारयते नृप ।
शेषश्च पन्नगश्रेष्ठः स्वस्ति तुभ्यं प्रयच्छतु ॥ ४८ ॥ गान्धारे युधि
विक्रम्य निर्जिताः सुरसत्तमाः । पुरा वृत्रेण दैत्येन भिन्नदेहाः
सहस्रशः ॥ ४९ ॥ हृततेजोबलाः सर्वे तदा सेन्द्रा दिवौकसः ।
ब्रह्माणं शरणं जग्मुर्वृत्राद्भीता महासुरात् ॥ ५० ॥

देवा ऊचुः । प्रमर्द्दितानां वृत्रेण देवानां देवसत्तम । गति-
र्भव सुरश्रेष्ठ त्राहि नो महतो भयात् ॥ ५१ ॥ अथ पार्श्वे स्थितं
विष्णुं शक्रादींश्च सुरोत्तमान् । प्राह तथ्यमिदं वाक्यं विषण्णान्
सुरसत्तमान् ॥ ५२ ॥ रक्ष्या मे सततं देवाः सहेन्द्राः सद्विजातयः ।
त्वष्टुः सुदुर्द्धरं तेजो येन वृत्रो विनिर्मितः ॥ ५३ ॥ त्वष्ट्रा पुरा
तपस्तप्त्वा वर्षायुतशतं तदा । वृत्रो विनिर्मितो देवाः प्राप्यानुज्ञां
महेश्वरात् ॥ ५४ ॥ स तस्यैव प्रसादाद्वो हन्यादेव रिपुर्बली ।
नागत्वा शङ्करस्थानं भगवान् दृश्यते हरः ॥ ५५ ॥ दृष्ट्वा जेष्यथ
वृत्रं तं क्षिप्रं गच्छत मन्दरम् । यत्रास्ते तपसां योनिर्दक्षयज्ञ-
विनाशनः ॥ ५६ ॥ पिनाकी सर्वभूतेशो भगनेत्रनिपातनः । ते
गत्वा सहिता देवा ब्रह्मणा सह मन्दरम् ॥ ५७ ॥ अपश्यं-

स्तेजसा राशिं सूर्य्यकोटिसमप्रभम् । सोऽब्रवीत स्वागत देवा ब्रूत किङ्करवाण्यहम् ॥ ५८ ॥ अमोघ दर्शनं मह्य कामप्राप्तिरतोऽस्तु व । एवमुक्तास्तु ते सर्वे प्रत्यूचुस्त दिवौकस ॥ ५९ ॥ तेजो हृत नो वृत्रेण गतिर्भव दिवौकसाम् । मूर्त्तीरीचस्व नो देव प्रहारैर्ज्जर्ज्जरीकृता । शरण त्वा प्रपन्ना स्म गतिर्भव महेश्वर ॥ ६० ।

सर्व उवाच । विदित वो यथा देवा कृत्येय सुमहाबला । त्वष्टुस्तेजोभवा घोरा दुर्निवार्य्या कृतात्मभि ॥ ६१ ॥ अवश्यन्तु मया कार्य्य सह्य सर्वदिवौकसाम् । ममेद गात्रज शक्र कवच गृह्य भास्वरम् । बधानोऽनेन मन्त्रेण मानसेन सुरेश्वर ॥ ६२ ॥

द्रोण उवाच । इत्युक्त्वा वरद प्रादात वर्म तन्मन्त्रमेव च । स तेन वर्म्मणा गुप्त प्रायाद्वृत्रचमू प्रति ॥ ६३ ॥ नानाविधैश्च शस्त्रौघै पात्यमानैर्म्महारणे । न सन्धि शक्यते भेत्तुं वर्मबन्धस्य तस्य तु ॥ ६४ ॥ ततो जघान समरे वृत्र देवपति स्वयम् । तच्च मन्त्रमय बन्ध वर्म चाङ्गिरसे ददौ ॥ ६५ ॥ अङ्गिरा प्राह पुत्रस्य मन्त्रज्ञस्य बृहस्पते । बृहस्पतिरथोवाच अग्निवेश्याय धीमते ॥ ६६ ॥ अग्निवेश्यो मम प्रादात्तेन बध्नामि वर्म ते । तवाद्य देहरक्षार्थं मन्त्रेण नृपसत्तम ॥ ६७ ॥

मत्तानां वीर्य्यशालिनाम्। अश्वानां नियुतैर्नैव तथान्यैश्च महारथैः ॥ ७३ ॥ वृतः प्रायान्महाबाहुरर्ज्जुनस्य रथं प्रति। नानावादित्रघोषेण यथा वैरोचनिस्तथा ॥ ७४ ॥ ततः शब्दो महानासीत् सैन्यानां तव भारत। अगाधं प्रस्थितं दृष्ट्वा समुद्रमिव कौरवम् ॥७५॥

इति द्रोणपर्व्वणि जयद्रथवधपर्व्वणि दुर्य्योधनकवचबन्धे चतुर्नवतोऽध्यायः ॥ ९४ ॥

---

सञ्जय उवाच। प्रविष्टयोर्महाराज पार्थवार्ष्णेययो रथे। दुर्य्योधने प्रयाते च पृष्ठतः पुरुषर्षभे ॥ १ ॥ जवेनाभ्यद्रवद्द्रोणं महता निस्वनेन च। पाण्डवाः सोमकैः सार्द्धं ततो युद्धमवर्त्तत ॥ २ ॥ तद्युद्धमभवत्तीव्रं तुमुलं लोमहर्षणम्। कुरूणां पाण्डवानाञ्च व्यूहस्य पुरतोऽद्भुतम् ॥ ३ ॥ राजन् कदाचिन्नास्माभिर्दृष्टं तादृक् न च श्रुतम्। यादृशं मध्यगते सूर्य्ये युद्धमासीद्विशाम्पते ॥ ४ ॥ धृष्टद्युम्नमुखाः पार्था व्यूढानीकाः प्रहारिणः। द्रोणस्य सैन्यं ते सर्व्वे शरवर्षैरवाकिरन् ॥ ५ ॥ वयं द्रोणं पुरस्कृत्य सर्व्वशस्त्रभृतां वरम्। पार्षतप्रमुखान् पार्थानभ्यवर्षाम सायकैः ॥ ६ ॥ महामेघाविवोदीर्णौ मिश्रवातौ हिमात्यये। सेनाग्रे प्रचकाशेते रुचिरे रथभूषिते ॥ ७ ॥ समेत्य तु महासेने चक्रतुर्वेगमुत्तमम्। जाह्नवीयमुने नद्यौ प्रावृषीवोल्बणोदके ॥८॥ नानाशस्त्रपुरोवातो द्विपाश्वरथसंवृतः। गदाविद्युन्महारौद्रः सङ्ग्रामजलदो महान् ॥ ९ ॥ भारद्वाजानिलोद्धूतः शरधारासहस्रवान्। अभ्यवर्षन्महासेन्यः पाण्डुसेनाग्निमुद्धतम् ॥ १० ॥ समुद्रमिव घर्मान्ते विशन् घोरो महानिलः। व्यक्षोभयदनीकानि पाण्डवानां द्विजोत्तमः ॥ ११ ॥ तेऽपि सर्व्वप्रयत्नेन द्रोणमेव समाद्रवन्। बिभित्सन्तो महासेतुं वार्य्योघाः प्रबला इव ॥ १२ ॥

वारयामास तान् द्रोणो जलौघमचलो यथा। पाण्डवान् समरे
क्रुद्धान् पाञ्चालांश्च सकेकयान् ॥ १३ ॥ अथापरे च राजानः
परिवृत्य समन्ततः। महाबला रणे शूरा पाञ्चालानन्ववारयन्
॥ १४ ॥ ततो रणे नरव्याघ्रः पार्षतः पाण्डवैः सह। सञ्जघा-
नासकृद्द्रोणं बिभित्सुररिवाहिनीम् ॥ १५ ॥ यथैव शरवर्षाणि
द्रोणो वर्षति पार्षते। तथैव शरवर्षाणि धृष्टद्युम्नोऽप्यवर्षत ॥१६॥
सनिस्त्रिंशपुरोवातः शक्तिप्रासर्ष्टिसंवृतः। ज्याविद्युच्चापसंह्रादो
धृष्टद्युम्नबलाहकः ॥ १७ ॥ शरधाराश्मवर्षाणि व्यसृजत् सर्वतो
दिशम्। निघ्नन् रथवराश्वौघान् प्लावयामास वाहिनीम् ॥ १८ ॥
यं यमार्च्छच्छरैर्द्रोणः पाण्डवानां रथव्रजम्। ततस्ततः शरै-
र्द्रोणमपाकर्षत पार्षतः ॥ १९ ॥ तथा तु यतमानस्य द्रोणस्य
युधि भारत। धृष्टद्युम्नं समासाद्य त्रिधा सैन्यमभिद्यत ॥ २० ॥
भोजमेकेऽभ्यवर्त्तन्त जलसन्धं तथापरे। पाण्डवैर्हन्यमानाश्च द्रोण-
मेवापरे ययुः ॥ २१ ॥ सङ्घटयति सैन्यानि द्रोणस्तु रथिनांवरः।
व्यधमच्चापि तान्यस्य धृष्टद्युम्नो महारथः ॥ २२ ॥ धार्त्तराष्ट्रा-
स्त्रिधाभूता वध्यन्ते पाण्डुसृञ्जयैः। अगोपाः पशवोऽरण्ये बहुभिः
श्वापदैरिव ॥२३॥ कालः सङ्ग्रसते योधान् धृष्टद्युम्नेन मोहितान्।
सङ्ग्रामे तुमुले तस्मिन्निति सम्मेनिरे जनाः ॥ २४ ॥ कुनृपस्य यथा
राष्ट्रं दुर्भिक्षव्याधितस्करैः। द्राव्यते तद्वदापन्ना पाण्डवैस्तव
वाहिनी ॥ २५ ॥ अर्करश्मिविमिश्रेषु शस्त्रेषु कवचेषु च। चक्षूंषि
प्रतिहन्यन्त सैन्येन रजसा तथा ॥ २६ ॥ त्रिधाभूतेषु सैन्येषु वध्य-
मानेषु पाण्डवैः। अमर्षितस्ततो द्रोणः पाञ्चालान् व्यधमच्छरैः
॥ २७ ॥ मृद्नतस्तान्यनीकानि निघ्नतश्चापि सायकैः। बभूव रूपं
द्रोणस्य कालाग्नेरिव दीप्यतः ॥ २८ ॥ रथं नागं हयञ्चापि
पत्तिनश्च विशाम्पते। एकैकेनेषुणा सङ्ख्ये निर्विभेद महारथः
॥ २९ ॥ पाण्डवानान्तु सैन्येषु नास्ति कश्चित् स भारत। दधार

धी रणे बाणान् द्रोणचापच्युतान् प्रभो ॥ ३० ॥ तत पच्यमान-
मर्केण द्रोणसायकतापितम् । बभ्राम पाण्डवं सैन्यं तत्र तत्रैव
भारत ॥ ३१ ॥ तथैव पार्थेनापि काल्यमानं बलं तव । अभ-
वत् सर्वतो दीप्तं शुष्कं वनमिवाग्निना ॥ ३२ ॥ वध्यमानेषु सैन्येषु
द्रोणपार्थशरायकैः । त्यक्त्वा प्राणान् परं शक्त्या युध्यन्ते सर्वतो-
मुखाः ॥ ३३ ॥ तावकानां परेषाञ्च युध्यतां भरतर्षभ । नासीत्
कश्चिन्महाराज योऽत्याक्षीत् संयुगं महत् ॥ ३४ ॥ भीमसेनन्तु
कौन्तेयं सोदर्य्याः पर्य्यवारयन् । विविंशतिश्चित्रसेनो विकर्णश्च
महारथः ॥ ३५ ॥ विन्दानुविन्दावावन्त्यौ क्षेमधूर्त्तिश्च वीर्य्यवान् ।
त्रयाणां तव पुत्राणां त्रय एवानुयायिनः ॥ ३६ ॥ वाह्लीकराज-
स्तेजस्वी कुलपुत्रो महारथः । सहसेनः सहामात्यो द्रौपदेया-
नवारयत् ॥ ३७ ॥ शैव्यो गोवासनो राजा योधैर्दशशतावरैः ।
काश्यस्याभिभुवः पुत्रं पराक्रान्तमवारयत् ॥ ३८ ॥ अजातशत्रुं
कौन्तेयं ज्वलन्तमिव पावकम् । मद्राणामीश्वरः शल्यो राजा
राजानमावृणोत् ॥ ३९ ॥ दुःशासनस्त्ववस्थाप्य स्वमनीकमम
र्षणः । सात्यकिं प्रययौ क्रुद्धः पुत्रो रथवरं युधि ॥ ४० ॥
स्वकेनाहमनीकेन सन्नद्धः कवचावृतः । चतुःशतैर्महेष्वासैश्चेकि-
तानमवारयत् ॥ ४१ ॥ शकुनिस्तु सहानीको माद्रीपुत्रमवारयत् ।
गान्धारकैः सप्तशतैश्चापशक्त्यसिपाणिभिः ॥ ४२ ॥ विन्दानुविन्दा-
वावन्त्यौ विराटं मत्स्यमार्च्छताम् । प्राणांस्त्यक्त्वा महेष्वासौ
मित्रार्थेऽभ्युद्यतायुधौ ॥ ४३ ॥ शिखण्डिनं याज्ञसेनिं रुन्धान
मपराजितम् । वाह्लीकः प्रतिसंयत्तः पराक्रान्तमवारयत् ॥ ४४ ॥
धृष्टद्युम्नं तु पाञ्चाल्यं क्रूरैः सार्द्धं प्रभद्रकैः । आवन्त्यः सह
सौवीरैः क्रुद्धरूपमवारयत् ॥ ४५ ॥ घटोत्कचं तथा शूरं राक्षसं
क्रूरकर्म्मिणम् । अलायुधोऽद्रवत्तूर्णं क्रुद्धमायान्तमाहवे ॥ ४६ ॥
अलम्बुषं राक्षसेन्द्रं कुन्तिभोजो महारथः । सैन्येन महता युक्त-

क्रूरस्तूपमवारयत् ॥ ४७ ॥ एवं द्वन्द्वशतान्यासंस्तव तेषाञ्च भारत । सैन्धवं पृष्ठतस्त्वासीत् सर्वसैन्यस्य भारत । रक्षितः परमेष्वासैः कृपप्रभृतिभीरथैः ॥ ४८ ॥ तस्यास्तां चक्ररक्षौ द्वौ सैन्धवस्य वृषद्युतमौ । द्रौणिर्दक्षिणतो राजन् सूतपुत्रश्च वामतः ॥ ४९ ॥ पृष्ठगोपास्तु तस्यासन् सौमदत्तिपुरोगमाः । कृपश्च वृषसेनश्च शलः शल्यश्च दुर्जयः ॥५०॥ नीतिमन्तो महेष्वासाः सर्वे युद्धविशारदाः । सैन्धवस्य विधायैवं रक्षां युयुधिरे तदा ॥ ५१ ॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि सङ्कुलयुद्धे पञ्चनवतोऽध्यायः ॥ ९५ ॥

---

सञ्जय उवाच । राजन् सङ्ग्राममाश्चर्यं शृणु कीर्त्तयतो मम । कुरूणां पाण्डवानाञ्च यथा युद्धमवर्त्तत ॥ १ ॥ भारद्वाजं समासाद्य व्यूहस्य प्रमुखे स्थितम् । अयोधयन्रणे पार्था द्रोणानीकं बिभित्सवः ॥ २ ॥ रक्षमाणः स्वकं व्यूहं द्रोणोऽपि सह सैनिकैः । अयोधयद्रणे पार्थान् प्रार्थयानो महद्यशः ॥ ३ ॥ विन्दानुविन्दावावन्त्यौ विराटं दशभिः शरैः । आजघ्नतुः सुसंक्रुद्धौ तव पुत्रहितैषिणौ ॥ ४ ॥ विराटश्च महाराज तावुभौ समरे स्थितौ । पराक्रान्तौ समासाद्य योधयामास सानुगौ ॥ ५ ॥ तेषां युद्धं समभवद्दारुणं शोणितोदकम् । सिंहस्य द्विपमुख्याभ्यां प्रभिन्नाभ्यां यथा वने ॥६॥ बाह्लीकं रभसं युद्धे याज्ञसेनिर्महाबलः । आजघ्ने विशिखैस्तीक्ष्णैर्घोरैर्मर्मास्थिभेदिभिः ॥ ७ ॥ बाह्लीको याज्ञसेनिन्तु हेमपुङ्खैः शिलाशितैः । आजघान भृशं क्रुद्धो नवभिर्नतपर्वभिः ॥ ८ ॥ तद्युद्धमभवद्घोरं शरशक्तिसमाकुलम् । भीरूणां त्रासजननं शूराणां हर्षवर्द्धनम् ॥ ९ ॥ ताभ्यां तत्र शरैर्मुक्तैरन्तरीक्षं दिशस्तथा । अभवत् संवृतं सर्वं न प्राज्ञायत किञ्चन ॥ १० ॥

शैब्यो गोवासनो युद्धे काश्यपुत्रं महारथम् । स सैन्यो योधया-
मास गजः प्रतिगजं यथा ॥ ११ ॥ बाह्लीकराजः संक्रुद्धो द्रौप-
देयान्महारथान् । मनःपञ्चेन्द्रियाणीव शुशुभे योधयन् रणे
॥ १२ ॥ योधयंस्ते सुभृशं तं शरौघैः समन्ततः । इन्द्रियार्था
यथा देहं शश्वद्देहवतांवर ॥ १३ ॥ वार्ष्णेयं सात्यकिं युद्धे पुत्रो
दुःशासनस्तव । आजघ्ने सायकैस्तीक्ष्णैर्नवभिर्नतपर्वभिः ॥ १४ ॥
सोऽतिविद्धो बलवता महेष्वासेन धन्विना । ईषन्मूर्छां जगा-
माशु सात्यकिः सत्यविक्रमः ॥ १५ ॥ समाश्वस्तस्तु वार्ष्णेयस्तव
पुत्रं महारथम् । विव्याध दशभिस्तूर्णं सायकैः कङ्कपत्रिभिः
॥ १६ ॥ तावन्योऽन्यं दृढं विद्धावन्योऽन्यशरपीडितौ । रेजतुः
समरे राजन् पुष्पिताविव किंशुकौ ॥ १७ ॥ अलम्बुषस्तु संक्रुद्धः
कुन्तिभोजशरार्दितः । अशोभत भृशं लक्ष्म्या पुष्पाढ्य इव किंशुकः
॥ १८ ॥ कुन्तिभोजं ततो रक्षो विद्ध्वा बहुभिरायसैः । अनद-
द्भैरवं नादं वाहिन्याः प्रमुखे तव ॥ १९ ॥ ततस्तौ समरे शूरौ
योधयन्तौ परस्परम् । ददृशुः सर्वसैन्यानि शक्रजम्भौ यथा पुरा
॥ २० ॥ शकुनिं रभसं युद्धे कृतवैरञ्च भारत । माद्रीपुत्रौ
सुसंरब्धौ शरैरार्दयतां मृधम् ॥ २१ ॥ तुमुलः समहाराज प्राव-
र्तत जनक्षयः । त्वया सञ्जनितोऽत्यर्थं कर्णेन च विवर्धितः ॥ २२ ॥
रक्षितस्तव पुत्रैश्च क्रोधमूलो हुताशनः । य इमां पृथिवीं राजन्
दग्धुं सर्वां समुद्यतः ॥ २३ ॥ शकुनिः पाण्डुपुत्राभ्यां कृतः स
विमुखः शरैः । न स्म जानाति कर्त्तव्यं युद्धे किञ्चित् पराक्रमम्
॥ २४ ॥ विमुखं चैनमालोक्य माद्रीपुत्रौ महारथौ । ववर्षतुः
पुनर्बाणैर्यथा मेघौ महागिरिम् ॥ २५ ॥ स वध्यमानो बहुभिः
शरैः सन्नतपर्वभिः । सम्प्रायाज्जवनैरश्वैर्द्रोणानीकाय सौबलः
॥ २६ ॥ घटोत्कचस्तथा शूरो राक्षसं तमलायुधम् । अभ्यया-
द्रभसं युद्धे वेगमास्थाय मध्यमम् ॥ २७ ॥ तयोर्युद्धं महाराज

क्रूरक्षपमवारयत् ॥ ४७ ॥ एवं द्वन्द्वशतान्यासंस्तत्र तेषाञ्च भारत । सैन्धवः पृष्ठतस्तस्थौ सर्वसैन्यस्य भारत । रक्षितः परमेष्वासैः कृपप्रभृतिभीरथैः ॥ ४८ ॥ तस्यास्तां चक्ररक्षौ द्वौ सैन्धवस्य वृषसेनौ । द्रौणिर्दक्षिणतो राजन् सूतपुत्रश्च वामतः ॥ ४९ ॥ पृष्ठगोपास्तु तस्यासन् सौमदत्तिपुरोगमाः । कृपश्च वृषसेनश्च शलः शल्यश्च दुर्जयः ॥५०॥ नीतिमन्तो महेष्वासाः सर्वे युद्धविशारदाः । सैन्धवस्य विधायैवं रक्षां युयुधिरे ततः ॥ ५१ ॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि सङ्कुलयुद्धे पञ्चनवतोऽध्यायः ॥ ९५ ॥

---

सञ्जय उवाच । राजन् सङ्ग्राममाश्चर्यं शृणु कीर्त्तयतो मम । कुरूणां पाण्डवानाञ्च यथा युद्धमवर्त्तत ॥ १ ॥ भारद्वाजं समासाद्य व्यूहस्य प्रमुखे स्थितम् । अयोधयन्रणे पार्था द्रोणानीकं बिभित्सव ॥ २ ॥ रक्षमाणः स्वकं व्यूहं द्रोणोऽपि सह सैनिकैः । अयोधयद्रणे पार्थान् प्रार्थयानो महद्यशः ॥ ३ ॥ विन्दानुविन्दावावन्त्यौ विराटं दशभिः शरैः । आजघ्नतुः सुसंक्रुद्धौ तव पुत्रहितैषिणौ ॥ ४ ॥ विराटश्च महाराज तावुभौ समरे स्थितौ । पराक्रान्तौ समासाद्य योधयामास सानुगौ ॥ ५ ॥ तेषां युद्धं समभवद्दारुणं शोणितोदकम् । सिंहस्य द्विपमुख्याभ्यां प्रभिन्नाभ्यां यथा वने ॥६॥ बाह्लीकं रभसं युद्धे याज्ञसेनिर्महाबलः । आजघ्ने विशिखैस्तीक्ष्णैर्घोरैर्मर्मास्थिभेदिभिः ॥ ७ ॥ बाह्लीको याज्ञसेनिन्तु हेमपुङ्खैः शिलाशितैः । आजघान भृशं क्रुद्धो नवभिर्नतपर्वभिः ॥ ८ ॥ तद्युद्धमभवद्घोरं शरशक्तिसमाकुलम् । भीरूणां त्रासजननं शूराणां हर्षवर्द्धनम् ॥ ९ ॥ ताभ्यां तत्र शरैर्मुक्तैरन्तरीक्षं दिशस्तथा । अभवत् सहसा सर्वं न प्राज्ञायत किञ्चन ॥ १० ॥

शैब्यो गोवासनो युद्धे काश्यपुत्रं महारथम्। स शैब्यो योधयामास गजः प्रतिगजं यथा ॥ ११ ॥ वाह्लीकराजः संक्रुद्धो द्रौपदेयान्महारथान्। मनःपञ्चेन्द्रियाणीव शुशुभे योधयन् रणे ॥ १२ ॥ अयोधयस्ते सुभृशं तं शरौघैः समन्ततः। इन्द्रियार्था यथा देहं शश्वद्देहवतांवर ॥ १३ ॥ वार्ष्णेयं सात्यकिं युद्धे पुत्रो दुःशासनस्तव। आजघ्ने सायकैस्तीक्ष्णैर्नवभिर्नतपर्वभिः ॥ १४ ॥ सोऽतिविद्धो बलवता महेष्वासेन धन्विना। ईषन्मूर्च्छां जगामाशु सात्यकिः सत्यविक्रमः ॥ १५ ॥ समाश्वस्तस्तु वार्ष्णेयस्तव पुत्रं महारथम्। विव्याध दशभिस्तूर्णं सायकैः कङ्कपत्रिभिः ॥ १६ ॥ तावन्योऽन्यं दृढं विद्धावन्योन्यशरपीडितौ। रेजतुः समरे राजन् पुष्पिताविव किंशुकौ ॥ १७ ॥ अलम्बुषस्तु संक्रुद्धः कुन्तिभोजशराहितः। अशोभत भृशं लक्ष्म्या पुष्पाढ्य इव किंशुकः ॥ १८ ॥ कुन्तिभोजं ततो रक्षो विद्ध्वा बहुभिरायसैः। अनदद्भैरवं नादं वाहिन्याः प्रमुखे तव ॥ १९ ॥ ततस्तौ समरे शूरौ योधयन्तौ परस्परम्। ददृशुः सर्वसैन्यानि शक्रजम्भौ यथा पुरा ॥ २० ॥ शकुनिं रभसं युद्धे कृतवैरञ्च भारत। माद्रीपुत्रौ सुसंरब्धौ शरैरार्दयतां मृधम् ॥ २१ ॥ तुमुलः स महाराज प्रावर्त्तत जनक्षयः। त्वया सञ्जनितोऽत्यर्थं कर्णेन च विवर्द्धितः ॥ २२ ॥ रक्षितस्तव पुत्रैश्च क्रोधमूलो हुताशनः। य इमां पृथिवीं राजन् दग्धुं सर्वां समुद्यतः ॥ २३ ॥ शकुनिः पाण्डुपुत्राभ्यां कृतः स विमुखः शरैः। न स्म जानाति कर्त्तव्यं युद्धे किञ्चित् पराक्रमम् ॥ २४ ॥ विमुखं चैनमालोक्य माद्रीपुत्रौ महारथौ। ववर्षतुः पुनर्बाणैर्यथा मेघौ महागिरिम् ॥ २५ ॥ स बध्यमानो बहुभिः शरैः सन्नतपर्वभिः। सम्प्रायाज्जवनैरश्वैर्द्रोणानीकाय सौबलः ॥ २६ ॥ घटोत्कचस्तथा शूरो राक्षसं तमलायुधम्। अभ्ययाद्भृशं युद्धे वेगमास्थाय मध्यमम् ॥ २७ ॥ तयोर्युद्धं महाराज

विरथरूपमिवाभवत् । यादृशं हि पुरा वृत्तं रामरावणयोर्मृधे ॥२८॥
ततो युधिष्ठिरो राजा मद्रराजानमाहवे । विद्ध्वा पञ्चशतैर्बाणैः
पुनर्विव्याध सप्तभिः ॥ २९ ॥ ततः प्रववृते युद्धं तयोरत्यद्भुतं नृप ।
यथा पूर्वमभूद्युद्धं शम्बरामरराजयोः ॥ ३० ॥ विविंशतिश्चित्रसेनो
विकर्णश्च तवात्मजः । अयोधयन् भीमसेनं महत्या सेनया वृताः ॥३१॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि सङ्कुलयुद्धे
षण्णवतोऽध्यायः ॥ ९६ ॥

---

सञ्जय उवाच । तथा तस्मिन् प्रवृत्ते तु सङ्ग्रामे लोमहर्षणे ।
कौरवेयास्त्रिधाभूतान् पाण्डवान् समुपाद्रवन् ॥ १ ॥ जलसन्धं
महाबाहुर्भीमसेनोऽभ्यवर्त्तत । युधिष्ठिरः सहानीकः कृतवर्माणमाहवे
॥ २ ॥ किरन्तु शरवर्षाणि रोचमान इवांशुमान् । धृष्ट
द्युम्नो महाराज द्रोणमभ्यद्रवच्छरैः ॥ ३ ॥ ततः प्रववृते युद्धं
त्वरतां सर्वधन्विनाम् । कुरूणां पाण्डवानाञ्च सङ्क्रुद्धानां पर-
स्परम् ॥ ४ ॥ सङ्क्षये तु तथाभूते वर्त्तमाने महाभये । द्वन्द्वी-
भूतेषु सैन्येषु युध्यमानेष्वभीतवत् ॥ ५ ॥ द्रोणः पाञ्चालपुत्रेण
बली बलवता सह । यदाक्षिपत् शायकौघांस्तदद्भुतमिवाभवत्
॥ ६ ॥ पुण्डरीकवनानीव विध्वस्तानि समन्ततः । चक्राते द्रोण-
पाञ्चाल्यौ नृणां शीर्षाण्यनेकशः ॥ ७ ॥ विनिकीर्णानि वीराणा-
मनीकेषु समन्ततः । वस्त्राभरणशस्त्राणि ध्वजवर्मायुधानि च
॥ ८ ॥ तपनीयतनुत्राणाः संसिक्ता रुधिरेण च । संसक्ता इव
दृश्यन्ते मेघसङ्घाः सविद्युतः ॥ ९ ॥ कुञ्जराश्वनरानन्ये पातयन्ति
स्म पत्रिभिः । तालमात्राणि चापानि विकर्षन्तो महारथाः ॥१०॥
असिचर्माणि चापानि शिरांसि कवचानि च । विप्रकीर्य्यन्त शूराणां
सम्प्रहारे महात्मनाम् ॥ ११ ॥ उत्थितान्यगणेयानि कबन्धानि

समन्ततः । अदृश्यन्त महाराज तस्मिन् परमसङ्कुले ॥ १२ ॥
गृध्राः कङ्का बला श्येना वायसा जाम्बुकास्तथा । बहवश्च पिशि-
ताशाश्च तत्रादृश्यन्त मारिष ॥ १३ ॥ भक्षयन्तश्च मांसानि पिबन्त-
श्चापि शोणितम् । विलुम्पन्तश्च केशांश्च मज्जाश्च बहुधा नृप ॥ १४ ॥
आकर्षन्तः शरीराणि शरीरावयवांस्तथा । नराश्वगजसङ्घानां
शिरांसि च ततस्ततः ॥ १५ ॥ कृतास्त्रा रणदीक्षाभिर्दीक्षिता
रणशालिनः । रणे जयं प्रार्थयन्तो भृशं युयुधिरे तदा ॥ १६ ॥
असिमार्गान् बहुविधान् विचेरुः सैनिका रणे । ऋष्टिभिः शक्तिभिः
प्रासैः शूलतोमरपट्टिशैः ॥ १७ ॥ गदाभिः परिघैश्चान्यैरायुधैश्च
भुजैरपि । अन्योऽन्यं जघ्निरे क्रुद्धा युद्धरङ्गगता नराः ॥ १८ ॥
रथिनो रथिभिः सार्द्धमश्वारोहाश्च सादिभिः । मातङ्गा वर-
मातङ्गैः पदाताश्च पदातिभिः ॥ १९ ॥ क्षीवा इवान्ये चोन्मत्ता
रङ्गेष्विव च वारणाः । उच्चुक्रुशुरथान्योऽन्यं जघ्नुरन्योऽन्यमाहवे
॥ २० ॥ वर्त्तमाने तथा युद्धे निर्मर्य्यादे विशाम्पते । धृष्टद्युम्नो
हयानश्वैर्द्रोणस्य व्यत्यमिश्रयत् ॥ २१ ॥ ते हयाः साध्वशोभन्त
मिश्रिता वातरंहसः । पारावतसवर्णाश्च रक्तशोणाश्च संयुगे ॥ २२ ॥
हयाः शुशुभिरे राजन् मेघा इव सविद्युतः । धृष्टद्युम्नस्तु सं-
प्रेक्ष्य द्रोणमभ्याशमागतम् ॥ २३ ॥ असिचर्म्माददे वीरो धनु-
रुत्सृज्य भारत । चिकीर्षुर्दुष्करं कर्म्म पार्षतः परवीरहा ॥ २४ ॥
ईषया समतिक्रम्य द्रोणस्य रथमाविशत् । अतिष्ठद्युगमध्ये स
युगसन्नहनेषु च ॥ २५ ॥ जघनार्द्धेषु चाश्वानां तत्सैन्यान्यभ्य-
पूजयन् । खड्गेन चरतस्तस्य शोणाश्वानधितिष्ठतः ॥ २६ ॥
न ददर्शान्तरं द्रोणस्तदद्भुतमिवाभवत् । यथा श्येनस्य पतनं
वनेष्वामिषगृद्धिनः ॥ २७ ॥ तथैवासीदभीसारस्तस्य द्रोणं जिघा-
सतः । ततः शरशतेनास्य शतचन्द्रं समाक्षिपत् ॥ २८ ॥ द्रोणो
द्रुपदपुत्रस्य खड्गञ्च दशभिः शरैः । हयाश्चैव चतुःषष्ट्या शराणां

जघ्निवान् बली ॥ २९ ॥ ध्वजं छत्रञ्च महाबाहुः तयोर्भीमौ पार्थिव सारथी । अथाशु त्वरितो बाणमपरं जीवितान्तकम् ॥ ३० ॥ आकर्णपूर्णं चिक्षेप वज्रं वज्रधरो यथा । स चतुर्दशभिस्तीक्ष्णैः बाणैर्विच्छेद सात्यकिः ॥ ३१ ॥ ग्रस्तमाचार्यमुखेन दृष्ट्वा कृष्णेऽमोचयत् । सिंहेनेव मृगं ग्रस्तं नरसिंहेन मारिष ॥ ३२ ॥ द्रोणेन मोचयामास पाञ्चाल्यं शिनिपुङ्गवः । सात्यकिं प्रेक्ष्य गोप्तारं पाञ्चाल्यञ्च महाहवे ॥ ३३ ॥ शराणां त्वरितो द्रोणः षड्विंशत्या समार्पयत् । ततो द्रोणं शिने पौत्रो ग्रसन्तमिव सृञ्जयान् ॥ ३४ ॥ प्रत्यविध्यच्छितैर्बाणैः षड्विंशत्या स्तनान्तरे । ततः सर्वे रथास्तूर्णं पाञ्चाल्या जयकाङ्क्षिणः । सात्वताभिसृते द्रोणे धृष्टद्युम्नमवाक्षिपन् ॥ ३५ ॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि सङ्कुलयुद्धे सप्तनवतोऽध्यायः ॥ ९७ ॥

---

धृतराष्ट्र उवाच । बाणे तस्मिन्निकृत्ते तु धृष्टद्युम्ने च मोक्षिते । तेन वृष्णिप्रवीरेण युयुधानेन सञ्जय ॥ १ ॥ अमर्षितो महेष्वासः सर्वशस्त्रभृताम्वरः । नरव्याघ्रे शिनेः पौत्रे द्रोणः किमकरोद्युधि ॥ २ ॥

सञ्जय उवाच । स प्रद्रुतः क्रोधविषो व्यादितास्यशरासनः । तीक्ष्णधारेषुदशनः शितनाराचदंष्ट्रवान् ॥ ३ ॥ संरम्भामर्षताम्राक्षो महोरग इव श्वसन् । नरवीरः प्रमुदितः शोणैरश्वैर्महाजवैः ॥ ४ ॥ उत्पतद्भिरिवाकाशं क्रामद्भिरिव पर्वतम् । रुक्मपुङ्खान् शरानस्यन् युयुधानमुपाद्रवत् ॥ ५ ॥ शरपातमहावर्षं रथघोषवलाहकम् । कार्मुकाकर्षविक्षेपं नाराचबहुविद्युतम् ॥ ६ ॥ स खड्गगदाधरं क्रोधवेगसमुत्थितम् । द्रोणमेघ-

घनेवाचार्यं हयमारुतचोदितम् ॥ ७ ॥ दृष्ट्वैवाभिपतन्तं तं शूरः परपुरञ्जय । उवाच सूत शैनेय प्रहसन् युद्धदुर्मदः ॥ ८ ॥ एष वै ब्राह्मणं शूरं स्वकर्मण्यनवस्थितम् । आश्रयं धार्त्तराष्ट्रस्य राज्ञो दुःखभयापहम् ॥ ९ ॥ शीघ्रं प्रजविनैरश्वैः प्रत्युद्याहि प्रहृष्टवत् । आचार्यं राजपुत्राणां सततं शूरमानिनम् ॥ १० ॥ ततो रजतसङ्काशा माधवस्य हयोत्तमाः । द्रोणस्याभिमुखाः शीघ्रमगच्छन् वातरंहसः ॥ ११ ॥ ततस्तौ द्रोणशैनेयौ युयुधाते परन्तपौ । शरैरनेकसाहस्रैस्ताडयन्तौ परस्परम् ॥ १२ ॥ इषुजालावृतं व्योम चक्रतुः पुरुषर्षभौ । पूरयामासतुर्वीरावुभौ दश दिशः शरैः ॥ १३ ॥ मेघाविवातपापाये धाराभिरितरेतरम् । न स्म सूर्यस्तदा भाति न ववौ च समीरणः ॥ १४ ॥ इषुजालावृतं घोरमन्धकारमनन्तरम् । अनाधृष्यमिवान्येषां शूराणामभवत्तदा ॥ १५ ॥ अन्धकारीकृते लोके द्रोणशैनेययोः शरैः । तयोः शीघ्रास्त्रविदुषोः द्रोणसात्वतयोस्तदा ॥ १६ ॥ नान्तरं शरवृष्टीनां ददृशे नरसिंहयोः । इषूणां सन्निपातेन शब्दो धाराभिघातजः ॥ १७ ॥ शुश्रुवे शक्रमुक्तानामशनीनामिव स्वनः । नाराचैर्व्यपविद्धानां शराणां रूपमाबभौ ॥ १८ ॥ आशीविषविदष्टानां सर्पाणामिव भारत । तयोर्ज्यातलनिर्घोषः शुश्रुवे युद्धशौण्डयोः ॥ १९ ॥ अजस्रं शैलशृङ्गाणां वज्रेणाहन्यतामिव । उभयोस्तौ रथौ राजन् ते चाश्वास्तौ च सारथी ॥ २० ॥ रुक्मपुङ्खैः शरैश्छन्नाश्चित्ररूपा बभुस्तदा । निर्मलानामजिह्मानां नाराचानां विशाम्पते ॥ २१ ॥ निर्मुक्ताशीविषाभानां सम्पातोऽभूत् सुदारुणः । उभयोः पतिते छत्रे तथैव पतितौ ध्वजौ ॥ २२ ॥ उभौ रुधिरसिक्ताङ्गावुभौ च विजयैषिणौ । स्रवद्भिः शोणितं गात्रैः प्रस्रुताविव वारणौ ॥ २३ ॥ अन्योऽन्यमभ्यविध्येतां जीवितान्तकरैः शरैः । गर्जितोत्क्रुष्टसन्नादाः शङ्खदुन्दुभिनिस्वनाः ॥ २४ ॥

उपारमन्महाराज व्याजहार न कश्चन । तूष्णीम्भूतान्यनीकानि
योधा युद्धादुपारमन् ॥ २५ ॥ ददर्श द्वैरथं ताभ्यां जातकौतूहलो
जनः । रथिनो हस्तियन्तारो हयारोहाः पदातिनः ॥ २६ ॥
अवैक्षन्ताचलैर्नेत्रैः परिवार्य्य नरर्षभौ । हस्त्यनीकान्यतिष्ठन्त
तथानीकानि वाजिनाम् ॥ २७ ॥ तथैव रथवाहिन्यः प्रतिव्यूह्य
व्यवस्थिताः । मुक्ताविद्रुमचित्रैश्च मणिकाञ्चनभूषितैः ॥ २८ ॥
ध्वजैराभरणैश्चित्रैः कवचैश्च हिरण्मयैः । वैजयन्तीपताकाभिः
परिस्तोमाङ्गकम्बलैः ॥ २९ ॥ विमलैर्निशितैः शस्त्रैर्हयानाञ्च
प्रकीर्णकैः । जातरूपमयीभिश्च राजतीभिश्च मूर्द्धसु ॥ ३० ॥
गजानां कुम्भमालाभिर्दन्तवेष्टैश्च भारत । सबलाकाः सखद्योताः
सैरावतशतह्रदाः ॥ ३१ ॥ अदृश्यन्तोष्णपर्याये मेघानामिव
वागुराः । अपश्यन्नस्मदीयाश्च ते च यौधिष्ठिराश्च ये ॥ ३२ ॥
तद्युद्धं युयुधानस्य द्रोणस्य च महात्मनः । विमानाग्रगता देवा
ब्रह्मसोमपुरोगमाः ॥ ३३ ॥ सिद्धचारणसङ्घाश्च विद्याधरमहो-
रगाः । गतप्रत्यागताक्षेपैश्चित्रैरस्त्रविघातिभिः ॥ ३४ ॥ विविधै-
र्विस्मयं जग्मुस्तयोः पुरुषसिंहयोः । हस्तलाघवमस्त्रेषु दर्शयन्तौ
महाबलौ ॥ ३५ ॥ अन्योऽन्यमभिविध्येतां शरैस्तौ द्रोणसात्यकी ।
ततो द्रोणस्य दाशार्हः शरांश्चिच्छेद संयुगे ॥ ३६ ॥ पत्रिभिः
सुदृढैराशु धनुश्चैव महाद्युतेः । निमेषान्तरमात्रेण भारद्वाजो
ऽपरन्धनुः ॥ ३७ ॥ सज्यं चकार तदपि चिच्छेदास्य च सात्यकिः ।
ततस्त्वरन् पुनर्द्रोणो धनुर्हस्तो व्यतिष्ठत ॥ ३८ ॥ सज्यं सज्यं
धनुश्चास्य चिच्छेद नव सप्त च । ततोऽस्य संयुगे द्रोणो दृष्ट्वा
कर्मातिमानुषम् ॥ ३९ ॥ युयुधानस्य राजेन्द्र मनसैतदचिन्तयत् ।
एतदस्त्रबलं रामे कार्त्तवीर्य्ये धनञ्जये ॥ ४० ॥ भीष्मे च पुरुष-
व्याघ्रे यदिदं सात्वतां वरे । तच्चास्य मनसा द्रोणः पूजयामास
विक्रमम् ॥ ४१ ॥ लाघवं वासवस्येव सम्प्रेक्ष्य द्विजसत्तम ।

तुतोषास्त्रविदां श्रेष्ठस्तथा देवाः सवासवाः ॥ ४२ ॥ न ताम्या-
लक्षयामासुर्लघुतां शीघ्रचारिणः । देवाश्च युयुधानस्य गन्धर्वाश्च
विशाम्पते ॥ ४३ ॥ सिद्धचारणसङ्घाश्च विदुर्द्रोणस्य कर्म तत् ।
ततोऽन्यद्धनुरादाय द्रोणः क्षत्रियमर्द्दनः ॥ ४४ ॥ अस्त्रैरस्त्रविदां
श्रेष्ठो योधयामास भारत । तस्यास्त्राण्यस्त्रमायाभिः प्रतिहत्य च
सात्यकिः ॥ ४५ ॥ जघान निशितैर्वाणैस्तदद्भुतमिवाभवत् ।
तस्यातिमानुषं कर्म दृष्ट्वान्यैरसमं रणे ॥ ४६ ॥ युक्तं योगेन
योगज्ञास्तावकाः समपूजयन् । यदस्त्रमस्यति द्रोणस्तदेवास्यति
सात्यकिः ॥ ४७ ॥ तमाचार्य्योऽथ सम्भ्रान्तोऽयोधयच्छत्रुतापनः ।
ततः क्रुद्धो महाराज धनुर्वेदस्य पारगः ॥ ४८ ॥ वधाय युयु-
धानस्य दिव्यमस्त्रमुदैरयत् । तदाग्नेयं महाघोरं रिपुघ्नमुपलक्ष्य
सः ॥ ४९ ॥ दिव्यमस्त्रं महेष्वासो वारुणं समुदैरयत् । हाहा-
कारो महानासीद्दृष्ट्वा दिव्यास्त्रधारिणौ ॥ ५० ॥ न विचेरु-
स्तदाकाशे भूतान्याकाशगान्यपि । अस्त्रे ते वारुणाग्नेये ताभ्यां
बाणसमाहिते ॥ ५१ ॥ तत्तावदभिपद्येतां व्यावर्त्तद्य भास्करः ।
ततो युधिष्ठिरो राजा भीमसेनश्च पाण्डवः ॥ ५२ ॥ नकुलः सह-
देवश्च पर्य्यरक्षन्त सात्यकिम् । धृष्टद्युम्नमुखैः सार्द्धं विराटश्च
सकेकयः ॥ ५३ ॥ मत्स्याः शाल्वेयसेनाश्च द्रोणमाजग्मुरञ्जसा ।
दुःशासनं पुरस्कृत्य राजपुत्राः सहस्रशः ॥ ५४ ॥ द्रोणमभ्युप-
पद्यन्त सपत्नैः परिवारितम् । ततो युद्धमभूद्राजन् तेषां तव च
धन्विनाम् ॥ ५५ ॥ रजसा संवृते लोके शरजालसमावृते । सर्व-
माविग्नमभवन्न प्राज्ञायत किञ्चन । सैन्ये च रजसा ध्वस्ते
निर्मर्य्यादमवर्त्तत ॥ ५६ ॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि द्रोणसात्यकियुद्धे
अष्टनवतोऽध्यायः ॥ ९८ ॥

सञ्जय उवाच। विवर्त्तमाने त्वादित्ये तत्रास्तशिखरं प्रति। रजसा कीर्य्यमाणे च मन्दीभूते दिवाकरे ॥ १ ॥ तिष्ठतां युध्यमानानां पुनरावर्त्ततामपि। भज्यतां जयताञ्चैव जगाम तदहः शनैः ॥ २ ॥ तथा तेषु विषक्तेषु सैन्येषु जयगृद्धिषु। अर्जुनो वासुदेवश्च सैन्धवायैव जग्मतुः ॥ ३ ॥ रथमार्गप्रमाणन्तु कौन्तेयो निशितैः शरैः। चकार तत्र पन्थानं ययौ येन जनार्द्दनः ॥ ४ ॥ यत्र यत्र रथो याति पाण्डवस्य महात्मनः। तत्र तत्रैव दीर्य्यन्ते सेनास्तव विशाम्पते ॥ ५ ॥ रथशिक्षान्तु दाशार्हो दर्शयामास वीर्य्यवान्। उत्तमाधममध्यानि मण्डलानि विदर्शयत् ॥ ६ ॥ ते तु नामाङ्किताः पीताः कालज्वलनसन्निभाः। स्नायनद्धाः सुपर्वाणः पृथवो दीर्घगामिनः ॥ ७ ॥ वैणवाश्चायसाश्चोग्रा ग्रसन्तो विविधानरीन्। रुधिरं पतगैः सार्द्धं प्राणिनां पपुराहवे ॥ ८ ॥ रथस्थितोऽग्रतः क्रोशं यानस्यत्यर्जुनः शरान्। रथे क्रोशमतिक्रान्ते तस्य ते घ्नन्ति शात्रवान् ॥ ९ ॥ तार्क्ष्यमारुतरंहोभिर्वाजिभिः साधुवाहिभिः। तदागच्छद्धृषीकेशः कृत्स्नं विस्मापयन् जगत् ॥ १० ॥ न तथा गच्छति रथस्तपनस्य विशाम्पते। नेन्द्रस्य च न रुद्रस्य नापि वैश्रवणस्य च ॥ ११ ॥ नान्यस्य समरे राजन् गतपूर्वस्तथा रथः। यथा ययावर्ज्जुनस्य मनोऽभिप्रायशीघ्रग-

चतुःषष्ट्या समृत्या च जनार्द्दनम् । शराणाञ्च शतैरञ्जानविध्येतां
मुदान्वितौ ॥ १८ ॥ तावर्ज्जुनो महाराज नवभिर्नतपर्वभिः ।
आजघान रणे क्रुद्धो मर्म्मज्ञो मर्म्मभेदिभिः ॥ १९ ॥ ततस्तौ तु
शरौघेण बीभत्सुं सहकेशवम् । आच्छादयेतां संरब्धौ सिंहनादञ्च
चक्रतुः ॥ २० ॥ तयोस्तु धनुषी चित्रे भल्लाभ्यां श्वेतवाहनः ।
चिच्छेद समरे तूर्णं ध्वजौ च कनकोज्ज्वलौ ॥ २१ ॥ अथान्ये
धनुषी राजन् प्रगृह्य समरे तदा । पाण्डवं भृशसंक्रुद्धावर्द्दया-
मासतुः शरैः ॥ २२ ॥ तयोस्तु भृशसंक्रुद्धः शराभ्यां पाण्डुनन्दनः ।
धनुषी चिच्छिदे तूर्णं भूय एव धनञ्जयः ॥ २३ ॥ तथान्यै-
र्विशिखैस्तूर्णं रुक्मपुङ्खैः शिलाशितैः । जघानाश्वांस्तथा सूतौ
पार्ष्णी च सपदानुगौ ॥ २४ ॥ ज्येष्ठस्य च शिरः कायात् क्षुर-
प्रेण न्यकृन्तत । स पपात हतः पृथ्व्यां वातभग्न इव द्रुमः ॥ २५ ॥
विन्दन्तु निहतं दृष्ट्वा अनुविन्दः प्रतापवान् । हताश्वं रथमुत्-
सृज्य गदां गृह्य महाबलः ॥ २६ ॥ अभ्यवर्त्तत सङ्ग्रामे भ्रातुर्वध-
मनुस्मरन् । गदया रथिनां श्रेष्ठो नृत्यन्निव महारथः ॥ २७ ॥
अनुविन्दस्तु गदया ललाटे मधुसूदनम् । स्पृष्ट्वा नाकम्पयत् क्रुद्धो
मैनाकमिव पर्व्वतम् ॥ २८ ॥ तस्यार्ज्जुनः शरैः षड्भिर्ग्रीवां पादौ
भुजौ शिरः । निचकर्त्त स संछिन्नः पपाताद्रिचयो यथा ॥ २९ ॥
ततस्तौ निहतौ दृष्ट्वा तयो राजन् पदानुगाः । अभ्यद्रवन्त संक्रुद्धाः
किरन्तः शतशः शरान् ॥ ३० ॥ तानर्ज्जुनः शरैस्तूर्णं निहत्य
भरतर्षभ । व्यरोचत यथा वह्निर्दावं दग्ध्वा हिमात्यये ॥ ३१ ॥
तयोः सेनामतिक्रम्य कृच्छ्रादिव धनञ्जयः । विबभौ जलदं हित्वा
दिवाकर इवोदितः ॥ ३२ ॥ तं दृष्ट्वा कुरवस्त्रस्ताः प्रहृष्टाश्चाभवन्
पुनः । अभ्यवर्त्तन्त पार्थञ्च समन्ताद्भरतर्षभ ॥ ३३ ॥ श्रान्तञ्चैनं
समालक्ष्य ज्ञात्वा दूरे च सैन्धवम् । सिंहनादेन महता सर्व्वतः
पर्य्यवारयन् ॥ ३४ ॥ तांस्तु दृष्ट्वा सुसंरब्धानुत्स्मयन् पुरुषर्षभः ।

सञ्जय उवाच। विवर्त्तमाने त्वादित्ये तत्रास्तशिखरं प्रति। रजसा कीर्य्यमाणे च मन्दीभूते दिवाकरे ॥ १ ॥ तिष्ठतां युध्यमानानां पुनरावर्त्ततामपि। भज्यतां जयताञ्चैव जगाम तदहः शनैः ॥ २ ॥ तथा तेषु विषक्तेषु सैन्येषु जयगृद्धिषु। अर्जुनो वासुदेवश्च सैन्धवायैव जग्मतुः ॥ ३ ॥ रथमार्गप्रमाणन्तु कौन्तेयो निशितैः शरैः। चकार तत्र पन्थानं ययौ येन जनार्दनः ॥ ४ ॥ यत्र यत्र रथो याति पाण्डवस्य महात्मनः। तत्र तत्रैव दीर्य्यन्ते सेनास्तव विशाम्पते ॥ ५ ॥ रथशिक्षान्तु दाशार्हो दर्शयामास वीर्य्यवान्। उत्तमाधममध्यानि मण्डलानि विदर्शयत् ॥ ६ ॥ ते तु नामाङ्किताः पीताः कालज्वलनसन्निभाः। स्नायुनद्धाः सुपर्वाणः पृथवो दीर्घगामिनः ॥ ७ ॥ वैणवाश्चायसाश्चोग्रा ग्रसन्तो विविधानरीन्। रुधिरं पतगैः सार्द्धं प्राणिनां पपुराहवे ॥ ८ ॥ रथस्थितोऽग्रतः क्रोशं यानस्यत्यर्जुनः शरान्। रथे क्रोशमतिक्रान्ते तस्य ते घ्नन्ति शात्रवान् ॥ ९ ॥ तार्क्ष्यमारुतरंहोभिर्वाजिभिः साधुवाहिभिः। तदागच्छद्धृषीकेशः कृत्स्नं विस्मापयन् जगत् ॥ १० ॥ न तथा गच्छति रथस्तपनस्य विशाम्पते। नेन्द्रस्य च न रुद्रस्य नापि वैश्रवणस्य च ॥ ११ ॥ नान्यस्य समरे राजन् गतपूर्वस्तथा रथः। यथा ययावर्जुनस्य मनोऽभिप्रायशीघ्रगः ॥ १२ ॥ प्रविश्य तु रणे राजन् केशवः परवीरहा। सेनामध्ये हयांस्तूर्णं चोदयामास भारत ॥ १३ ॥ ततस्तस्य रथौघस्य मध्यं प्राप्य हयोत्तमाः। कृच्छ्रेण रथमूहुस्तं क्षुत्पिपासाश्रमन्विताः ॥ १४ ॥ क्षताश्च बहुभिः शस्त्रैर्युद्धशौण्डैरनेकशः। मण्डलानि विचित्राणि विचेरुस्ते मुहुर्मुहुः ॥ १५ ॥ हतानां वाजिनागानां रथानाञ्च नरैः सह। उपरिष्टादतिक्रान्ताः शैलमानां सहस्रशः ॥ १६ ॥ एतस्मिन्नन्तरे वीरावावन्त्यौ भ्रातरौ नृप। सहसैनौ समार्च्छेतां पाण्डवं क्लान्तवाहनम् ॥ १७ ॥ तावर्जुनं

चतुःषष्ट्या समस्ताश्च जनार्द्दनम् । शराणाञ्च शतैरश्वानविध्येतां
मुदान्वितौ ॥ १८ ॥ तावर्ज्जुनो महाराज नवभिर्नतपर्व्वभिः ।
आजघान रणे क्रुद्धो मर्म्मज्ञो मर्म्मभेदिभिः ॥ १९ ॥ ततस्तौ तु
शरौघेण बीभत्सुं सहकेशवम् । आच्छादयेतां संरब्धौ सिंहनादञ्च
चक्रतुः ॥ २० ॥ तयोस्तु धनुषी चित्रे भल्लाभ्यां श्वेतवाहनः ।
चिच्छेद समरे तूर्णं ध्वजौ च कनकोज्ज्वलौ ॥ २१ ॥ अथान्ये
धनुषी राजन् प्रगृह्य समरे तदा । पाण्डवं भृशसंक्रुद्धावर्द्दया-
मासतुः शरैः ॥ २२ ॥ तयोस्तु भृशसंक्रुद्धः शराभ्यां पाण्डुनन्दनः ।
धनुषी चिच्छिदे तूर्णं भूय एव धनञ्जयः ॥ २३ ॥ तथान्यै-
र्विशिखैस्तूर्णं रुक्मपुङ्खैः शिलाशितैः । जघानाश्वांस्तथा सूतौ
पार्ष्णी च सपदानुगौ ॥ २४ ॥ ज्येष्ठस्य च शिरः कायात् क्षुर-
प्रेण न्यकृन्तत । स पपात हतः पृथ्व्यां वातभग्न इव द्रुमः ॥ २५ ॥
विन्दन्तु निहतं दृष्ट्वा अनुविन्दः प्रतापवान् । हताश्वं रथमुत्-
सृज्य गदां गृह्य महाबलः ॥ २६ ॥ अभ्यवर्त्तत सङ्ग्रामे भ्रातुर्वध-
मनुस्मरन् । गदया रथिनां श्रेष्ठो नृत्यन्निव महारथः ॥ २७ ॥
अनुविन्दस्तु गदया ललाटे मधुसूदनम् । स्पृष्ट्वा नाकम्पयत् क्रुद्धो
मैनाकमिव पर्व्वतम् ॥ २८ ॥ तस्यार्ज्जुनः शरैः षड्भिर्ग्रीवां पादौ
भुजौ शिरः । विचकर्त्त स संछिन्नः पपाताद्रिचयो यथा ॥ २९ ॥
ततस्तौ निहतौ दृष्ट्वा तयो राजन् पदानुगाः । अभ्यद्रवन्त संक्रुद्धाः
किरन्तः शतशः शरान् ॥ ३० ॥ तानर्ज्जुनः शरैस्तूर्णं निहत्य
भरतर्षभ । व्यरोचत यथा वह्निर्दावं दग्ध्वा हिमात्यये ॥ ३१ ॥
तयोः सेनामतिक्रम्य कृच्छ्रादिव धनञ्जयः । विबभौ जलदं हित्वा
दिवाकर इवोदितः ॥ ३२ ॥ तं दृष्ट्वा कुरवस्त्रस्ताः प्रहृष्टाश्चाभवन्
पुनः । अभ्यवर्त्तन्त पार्थञ्च समन्ताद्भरतर्षभ ॥ ३३ ॥ श्रान्तञ्चैनं
समालक्ष्य ज्ञात्वा दूरे [illegible] सैन्धवम् । सिंहनादेन महता सर्व्वतः
पर्य्यवारयन् ॥ ३४ ॥ तांस्तु दृष्ट्वा सुसंरब्धानुत्स्मयन् पुरुषर्षभः ।

धनञ्जयोरिव न्नायार्थमर्ज्जुनो वाक्यमब्रवीत ॥ ३५ ॥ मराहिताश्च
रलानाथं त्वया दूरे च के भव । किमिदानन्तरं कार्य्यं त्वायि
तत्र रोचते ॥ ३६ ॥ ब्रूहि कृष्ण यथा तत्त्वं त्वं हि प्राप्तम
सदा । भवन्नेता रथे भवन् विजेष्यन्तीह पाण्डवा ॥ ३७ ॥
मम त्वनन्तरं कृत्य यद्धे तत्त्व निबोध मे । हयान् विमुच्य ह
सुख विशल्यान् कुरु माधव ॥ ३८ ॥ एवमुक्तास्तु पार्थेन केशव
प्रत्युवाच तम् । ममाप्येतन्मत पार्थ यदिदं ते प्रभाषितम् ॥ ३९ ॥
अर्ज्जुन उवाच । अहमावारयिष्यामि सर्वसैन्यानि केशव ।
त्वमप्यत्र यथान्याय कुरु कार्य्यमनन्तरम् ॥ ४० ॥

सञ्जय उवाच । सोऽवतीर्य्य रथोपस्थादसम्भ्रान्तो धनञ्जय ।
गाण्डीव धनुरादाय तस्थौ गिरिरिवाचल ॥ ४१ ॥ तमभ्यधावन्
क्रोशन्त क्षत्रियाजयकाङ्क्षिण । इद छिद्रामति ज्ञात्वा धरणीस्थ
धनञ्जयम् ॥ ४२ ॥ तमेकं रथवंशेन महता पर्य्यवारयन् । विक
र्षन्तश्च चापानि विसृजन्तश्च सायकान् ॥ ४३ ॥ अस्त्राणि च
विचित्राणि क्रुद्धास्तत्र व्यदर्शयन् । छादयन्त शरै पार्थं मेघा
इव दिवाकरम् ॥ ४४ ॥ अभ्यद्रवन्त वेगेन क्षत्रिया क्षत्रियर्षभम् ।
नराश्च रथोदारा सिंह मत्ता इव द्विपा ॥ ४५ ॥
तत्र पार्थस्य भुजयोर्महद्बलमदृश्यत । यत् क्रुद्धो बहुला सेना
सर्वत समवारयत् ॥ ४६ ॥ अस्त्रैरस्त्राणि संवार्य्य द्विषता
विभु । इषुभिर्बहुभिस्तूर्णं सर्वानेव समावृणोत् ॥ ४७ ॥ तत्रान्त

महद्रथौघमपारञ्च रथोर्मिणमतीव च । तथैवोपक्रमठं छत्रपताका-
फेनमालिनम् ॥ ५२ ॥ रथसागरमक्षोभ्य मातङ्गाङ्गशिलान्वितम् ।
वेलाभूतस्तदा पार्थः पत्रिभिः समवारयत् ॥ ५३ ॥ ततो जना-
र्द्दनः सङ्ग्रे प्रियं पुरुषमुत्तमम् । असम्भ्रान्तो महावाहुरर्ज्जुनं
वाक्यमब्रवीत् ॥ ५४ ॥ उदपानमिहाश्वानां नालमस्ति रणे-
ऽर्ज्जुन । परीप्सन्ते जलं चैमे पेयं न त्ववगाहनम् ॥ ५५ ॥ इद-
मस्तीत्यसम्भ्रान्तो ब्रुवन्नस्त्रेण मेदिनीम् । अभिहत्यार्जुनश्चक्रे
वाजिपानसरः शुभम् ॥ ५६ ॥ हंसकारण्डवाकीर्णं चक्रवाकोप-
शोभितम् । सुविस्तीर्णं प्रसन्नाम्भः प्रफुल्लवरपङ्कजम् ॥ ५७ ॥ कूर्म-
मत्स्यगणाकीर्णमगाधमृषिसेवितम् । आगच्छन्नारदमुनिर्द्दर्शनार्थं
कृतं क्षणात् ॥ ५८ ॥ शरवंशं शरस्थूणं शराच्छादनमद्भुतम् ।
शरवेश्माकरोत् पार्थस्त्वष्टेवाद्भुतकर्म्मकृत् ॥ ५९ ॥ ततः प्रहस्य
गोविन्दः साधुसाध्विति चाब्रवीत् । शरवेश्मनि पार्थेन कृते
तस्मिन् महात्मना ॥ ६० ॥

इति द्रोणपर्व्वणि जयद्रथवधपर्व्वणि अर्ज्जुनसरोवरनिर्माणे
एकोनशततमोऽध्यायः ॥ ९९ ॥

---

सञ्जय उवाच । सलिले जनिते तस्मिन् कौन्तेयेन महा-
त्मना । निवारिते द्विषत्सैन्ये कृते च शरवेश्मनि ॥ १ ॥ वासु-
देवो रथात्तूर्णमवतीर्य्य महाद्युतिः । मोचयामास तुरगान् वितु-
न्नान् कङ्कपत्रिभिः ॥ २ ॥ अदृष्टपूर्व्वं तद्दृष्ट्वा साधुवादो महा-
नभूत् । सिद्धचारणसङ्घानां सैनिकानाञ्च सर्व्वशः ॥ ३ ॥ पदा-
तीनां तु कौन्तेयं युध्यमानं महारथाः । नाशक्नुवन् वारयितुं
तदद्भुतमिवाभवत् ॥ ४ ॥ आपतत्सु रथौघेषु प्रभूतगजवाजिषु ।
न सम्भ्रमत्तदा पार्थस्तदस्य पुरुषानति ॥ ५ ॥ व्यसृजन्त शरौ-

धास्ते पाण्डवं प्रति पार्थिवाः । न चाव्यथत धर्मात्मा वासविः
परवीरहा ॥ ६ ॥ स तानि शरजालानि गदाः प्रासांश्च वीर्य-
वान् । आगतानग्रसत् पार्थः सरितः सागरो यथा ॥ ७ ॥
अस्त्रवेगेन महता पार्थो बाहुबलेन च । सर्वेषां पार्थिवेन्द्राणा-
मग्रसत्ताश्चकरोत्तमान् ॥ ८ ॥ स पार्थः पार्थिवान् सर्वान् भूमि-
ष्ठोऽपि रथस्थितान् । एको निवारयामास लोभः सर्वगुणानिव
॥ ९ ॥ तत् पार्थस्य विक्रान्तं वासुदेवस्य चोभयोः । अपूजय-
न्महाराज कौरवा महदद्भुतम् ॥ १० ॥ किमद्भुततमं लोके
भवितात्यथवा ह्यभूत् । यदश्वान् पार्थगोविन्दौ मोचयामासतू-
रणे ॥ ११ ॥ भयं विपुलमाधाय तावकानां नरोत्तमौ । तेजो
विदधतुश्चोग्रं विस्रब्धौ रणमूर्द्धनि ॥ १२ ॥ अथ स्मयन् हृषी-
केशः स्त्रीमध्य इव भारत । अर्जुनेन कृते सङ्ख्ये शरगर्भगृहे
तदा ॥ १३ ॥ उपावर्त्तयदव्यग्रस्तानश्वान् पुष्करेक्षणः । मिषतां
सर्वसैन्यानां त्वदीयानां विशाम्पते ॥ १४ ॥ तेषां श्रमञ्च ग्लानिञ्च
वेपथुं वमथुं व्रणान् । सर्वं व्यपानुदत् कृष्णः कुशलो ह्यश्वकर्मणि
॥ १५ ॥ शल्यानुद्धृत्य पाणिभ्यां परिमृज्य च तान् हयान् ।
उपावर्त्त्य यथान्यायं पाययामास वारि च ॥ १६ ॥ स ता-
ल्लब्धोदकान् स्नातान् जग्धान्नान् विगतक्लमान् । योजयामास
संहृष्टः पुनरेव रथोत्तमे ॥ १७ ॥ स तं रथवरं शौरिः सर्व-
शस्त्रभृतां वरः । समास्थाय महातेजाः सार्जुनः प्रययौ द्रुतम्
॥ १८ ॥ रथं रथवरस्याजौ युक्तं लब्धोदकैर्हयैः । दृष्ट्वा कुरु-
बलश्रेष्ठाः पुनर्विमनसोऽभवन् ॥ १९ ॥ विनिश्वसन्तस्ते राजन्
भग्नदंष्ट्रा इवोरगाः । धिगहो धिग्गतः पार्थः कृष्णश्चेत्यब्रुवन्
पृथक् ॥ २० ॥ सर्वक्षत्रस्य मिषतो रथेनैकेन दंशितौ । बाल-
क्रीडनकेनेव कदर्थीकृत्य नो बलम् ॥ २१ ॥ क्रोशतां यतमानाना-
मसंसक्तौ परन्तपौ । दर्शयित्वात्मनो वीर्यं प्रयातौ सर्व-

राजसु ॥ २२ ॥ तौ प्रयातौ पुनर्दृष्ट्वा तदान्ये सैनिकाब्रुवन् । त्वरध्वं कुरवः सर्व्वे वधे कृष्णकिरीटिनोः ॥ २३ ॥ रथं युक्त्वा हि दाशार्हो मिषतां सर्व्वधन्विनाम् । जयद्रथे प्रयात्येव कदर्थीकृत्य नो रणे ॥ २४ ॥ तत्र केचिन्मिथो राजन् समभाषन्त भूमिपाः । अदृष्टपूर्व्वं सङ्ग्रामे तद्दृष्ट्वा महदद्भुतम् ॥ २५ ॥ सर्व्वसैन्यानि राजा च धृतराष्ट्रोऽत्ययं गतः । दुर्य्योधनापराधेन क्षत्रं कृत्स्ना च मेदिनी ॥ २६ ॥ विलयं समनुप्राप्ता तच्च राजा न बुध्यते । इत्येवं क्षत्रियास्तत्र ब्रुवन्त्यन्ये च भारत ॥ २७ ॥ सिन्धुराजस्य यत् कृत्यं गतस्य यमसादनम् । तत् करोतु वृथादृष्टिर्धार्त्तराष्ट्रो-ऽनुपायवित् ॥ २८ ॥ ततः शीघ्रतरं प्रायात् पाण्डवः सैन्धवं प्रति । विवर्त्तमाने तिग्मांशौ हृष्टैः पीतोदकैर्हयैः ॥ २९ ॥ तं प्रयान्तं महाबाहुं सर्व्वशस्त्रभृतांवरम् । नाशक्नुवन् वारयितुं योधाः क्रुद्धमिवान्तकम् ॥ ३० ॥ विद्राव्य तु ततः सैन्यं पाण्डवः शत्रुतापनः । यथा मृगगणान् सिंहः सैन्धवार्थे व्यलोडयत ॥ ३१ ॥ गाहमानस्त्वनीकानि तूर्णमश्वानचोदयत् । बलाकावर्णांस्तु दाशार्हः पाञ्चजन्यं व्यनादयत् ॥ ३२ ॥ कौन्तेयेनाग्रतः सृष्टा न्यपतन् पृष्ठतः शराः । तूर्णात्तूर्णतरं ह्यश्वाः प्रावहन् वातरंहसः ॥ ३३ ॥ ततोनृपतयः क्रुद्धाः परिवव्रुर्धनञ्जयम् । क्षत्रिया बहवश्चान्ये जयद्रथवधैषिणम् ॥ ३४ ॥ सैन्येषु विप्रयातेषु धिष्ठितं पुरुषर्षभम् । दुर्य्योधनोऽन्वयात् पार्थं त्वरमाणो महाहवे ॥ ३५ ॥ वातोद्धूतपताकन्तं रथं जलदनिस्वनम् । घोरं कपिध्वजं दृष्ट्वा विषण्णा रथिनोऽभवन् ॥ ३६ ॥ दिवाकरेऽथ रजसा सर्व्वतः संवृते भृशम् । शरार्त्ताश्च रणे योधा शेकुः कृष्णौ न वीक्षितुम् ॥ ३७ ॥

इति द्रोणपर्व्वणि जयद्रथवधपर्व्वणि सैन्यविस्मये

शततमोऽध्यायः ॥ १०० ॥

---

सञ्जय उवाच। संयन्त इव राजानस्तावकानां महानृप।
तौ दृष्ट्वा समतिक्रान्तौ वासुदेवधनञ्जयौ ॥ १ ॥ सर्वे तु प्रति-
संरब्धा ह्रीमन्तः सत्त्वचोदिताः। स्थिरीभूता महात्मानः प्रत्य-
गच्छन्धनञ्जयम् ॥ २ ॥ ये गताः पाण्डवं युद्धे रोषामर्षसम-
न्विताः। तेऽद्यापि न निवर्त्तन्ते सिन्धव सागरादिव ॥ ३ ॥
असन्तस्तु न्यवर्त्तन्ते वेदेभ्य इव नास्तिकाः। नरकं भजमानास्ते
प्रत्यपद्यन्त किल्बिषम् ॥ ४ ॥ तावतीत्य रथानीकं विमुक्तौ पुरुष-
र्षभौ। ददृशाते यथा राहोरास्यान्मुक्तौ प्रभाकरौ ॥ ५ ॥
मत्स्याविव महाजालं विदार्य्य विगतक्लमौ। तथा कृष्णावदृश्येतां
सेनाजालं विदार्य्य तत् ॥ ६ ॥ विमुक्तौ शस्त्रसम्बाधाद्द्रोणा-
नीकात् सुदुर्भिदात्। अदृश्येतां महात्मानौ कालसूर्य्याविवोदितौ
॥ ७ ॥ अस्त्रसम्बाधनिर्मुक्तौ विमुक्तौ शस्त्रसङ्कटात्। अदृश्येतां
महात्मानौ शत्रुसम्बाधकारिणौ ॥ ८ ॥ विमुक्तौ ज्वलनस्पर्शा-
न्मकरास्याज्झषाविव। व्यक्षोभयेतां सेनां तौ समुद्रं मकरा-
विव ॥ ९ ॥ तावकास्तव पुत्राश्च द्रोणानीकस्थयोस्तयोः। नैतौ
तरिष्यतो द्रोणमिति चक्रुस्तदा मतिम् ॥ १० ॥ तौ तु दृष्ट्वा
व्यतिक्रान्तौ द्रोणानीकं महाद्युती। नाशशंसुर्महाराज सिन्धु-
राजस्य जीवितम् ॥ ११ ॥ आशा बलवती राजन् सिन्धुराजस्य
जीविते। द्रोणहार्दिक्ययोः कृष्णौ न मोक्ष्येते इति प्रभो ॥ १२ ॥
तामाशां विफलीकृत्य सन्तीर्णौ तौ परन्तपौ। द्रोणानीकं महा-
राज भोजानीकञ्च दुस्तरम् ॥ १३ ॥ अथ दृष्ट्वा व्यतिक्रान्तौ
ज्वलिताविव पावकौ। निराशाः सिन्धुराजस्य जीवितं नाशशं-
सिरे ॥ १४ ॥ मिथश्च समभाषेतामभीतौ भयवर्द्धनौ। जयद्रथ-
वधे वाचस्तास्ताः कृष्णधनञ्जयौ ॥ १५ ॥ असौ मध्ये कृतः
षड्भिर्धार्त्तराष्ट्रैर्महारथैः। चक्षुर्विषयसम्प्राप्तो न नो मोक्ष्यति
सैन्धव ॥ १६ ॥ यद्यस्य समरे गोप्ता शक्रो देवगणैः सह।

तथाप्येनं निहंस्याव इति कृष्णावभाषताम् ॥ १७ ॥ इति कृष्णौ
महाबाहू मिथः कथयतां तदा । सिन्धुराजमवेक्षन्तौ तत्पुत्राः
बहु चुक्रुशुः ॥ १८ ॥ अतीत्य मरुधन्वानन्तृषितौ त्वरितौ गतौ ।
पीत्वा वारि समाश्वस्तौ तथैवास्तामरिन्दमौ ॥ १९ ॥ व्याघ्र-
सिंहगजाकीर्णानतिक्रम्य च पर्वतान् । वणिजाविव दृश्येतां हीन-
मृत्युजरातिगौ ॥ २० ॥ तथाहि मुखवर्णोऽयमनयोरिति मेनिरे ।
तावका वीक्ष्य मुक्तौ तौ विक्रोशन्ति स्म सर्वतः ॥ २१ ॥ द्रोणा-
दाशीविषाकाराज्ज्वलितादिव पावकात् । अन्येभ्यः पार्थिवेभ्यश्च
भास्वन्ताविव भास्करौ ॥ २२ ॥ विमुक्तौ सागरप्रख्याद्द्रोणा-
नीकादरिन्दमौ । अदृश्येतां मुदा युक्तौ समुत्तीर्यार्णवं यथा
॥ २३ ॥ शस्त्रौघान्महतो मुक्तौ द्रोणहार्दिक्यरक्षितात् । रोच-
मानावदृश्येतामिन्द्राग्न्योः सदृशौ रणे ॥ २४ ॥ उद्भिन्नरुधिरौ
कृष्णौ भारद्वाजस्य सायकैः । शितैश्चितौ व्यरोचेतां कर्णिकारै-
रिवाचलौ ॥ २५ ॥ द्रोणग्राहह्रदान्मुक्तौ शक्त्याशीविषसङ्कटात् ।
अयःशरोग्रमकरात् क्षत्रियप्रवराम्भसः ॥ २६ ॥ ज्याघोषतल-
निर्ह्रादाद्गदानिस्त्रिंशविद्युतः । द्रोणास्त्रमेघान्निर्मुक्तौ सूर्य्येन्दू
तिमिरादिव ॥ २७ ॥ बाहुभ्यामिव सन्तीर्णौ सिन्धुषष्ठाः समु-
द्रगाः । तपान्ते सरितः पूर्णा महाग्राहसमाकुलाः ॥ २८ ॥ इति
कृष्णौ महेष्वासौ यशसा लोकविश्रुतौ । सर्वभूतान्यमन्यन्त
द्रोणास्त्रबलविस्मयात् ॥ २९ ॥ जयद्रथं समीपस्थमवेक्षन्तौ जिघां-
सया । रुरुं निपातयिष्यन्तौ व्याघ्रवत्तावतिष्ठताम् ॥ ३० ॥
यथाहि मुखवर्णोऽमनयोरिति मेनिरे । तव योधा महाराज
हतमेव जयद्रथम् ॥ ३१ ॥ लोहिताक्षौ महाबाहू संयुक्तौ कृष्ण-
पाण्डवौ । सिन्धुराजमभिप्रेक्ष्य हृष्टौ व्यनदतां मुहुः ॥ ३२ ॥
शौरेरभीशुहस्तस्य पार्थस्य च धनुष्मतः । तयोरासीत् प्रभा राजन्
सूर्य्यपावकयोरिव ॥ ३३ ॥ हर्ष एव तयोरासीद्द्रोणानीकप्रमु-

सञ्जय उवाच । ध्वंसन्त इव राजानस्तावकानां भयान्नृप ।
तौ दृष्ट्वा समतिक्रान्तौ वासुदेवधनञ्जयौ ॥ १ ॥ सर्वे तु प्रति-
संरब्धा ह्रीमन्तः सत्त्वचोदिताः । स्थिरीभूता महात्मानः प्रत्य-
गच्छन्धनञ्जयम् ॥ २ ॥ ये गताः पाण्डवं युद्धे रोषामर्षसम-
न्विताः । तेऽद्यापि न निवर्त्तन्ते सिन्धवः सागरादिव ॥ ३ ॥
असन्तस्तु न्यवर्त्तन्त वेदेभ्य इव नास्तिकाः । नरकं भजमानास्ते
प्रत्यपद्यन्त किल्बिषम् ॥ ४ ॥ तावतीत्य रथानीकं विमुक्तौ पुरुष-
र्षभौ । ददृशाते यथा राहोरास्यान्मुक्तौ प्रभाकरौ ॥ ५ ॥
मत्स्याविव महाजालं विदार्य्य विगतक्लमौ । तथा कृष्णावदृश्येतां
सेनाजालं विदार्य्य तत् ॥ ६ ॥ विमुक्तौ शस्त्रसम्बाधाद्द्रोणा-
नीकात् सुदुर्भिदात् । अदृश्येतां महात्मानौ कालसूर्य्याविवोदितौ
॥ ७ ॥ अस्त्रसम्बाधनिर्मुक्तौ विमुक्तौ शस्त्रसङ्कटात् । अदृश्येतां
महात्मानौ शत्रुसम्बाधकारिणौ ॥ ८ ॥ विमुक्तौ ज्वलनस्पर्शा-
न्मकरास्याज्झषाविव । व्यक्षोभयेतां सेनां तौ समुद्रं मकरा-
विव ॥ ९ ॥ तावकास्तव पुत्राश्च द्रोणानीकस्थयोस्तयोः । नैतौ
तरिष्यतो द्रोणमिति चक्रुस्तदा मतिम् ॥ १० ॥ तौ तु दृष्ट्वा
व्यतिक्रान्तौ द्रोणानीकं महाद्युती । नाशशंसुर्महाराज सिन्धु-
राजस्य जीवितम् ॥ ११ ॥ आशा बलवती राजन् सिन्धुराजस्य
जीविते । द्रोणहार्द्दिक्ययोः कृष्णौ न मोक्ष्येते इति प्रभो ॥ १२ ॥
तामाशां विफलीकृत्य सन्तीर्णौ तौ परन्तपौ । द्रोणानीकं महा-
राज भोजानीकञ्च दुस्तरम् ॥ १३ ॥ अथ दृष्ट्वा व्यतिक्रान्तौ
ज्वलिताविव पावकौ । निराशाः सिन्धुराजस्य जीवितं नाशशं-
सिरे ॥ १४ ॥ मिथश्च समभाषेतामभीतौ भयवर्द्धनौ । जयद्रथ-
वधे वाचस्तास्ताः कृष्णधनञ्जयौ ॥ १५ ॥ असौ मध्ये कृतः
षड्भिर्धार्त्तराष्ट्रैर्महारथैः । चक्षुर्विषयसम्प्राप्तो न मे मोक्ष्यति
सैन्धवः ॥ १६ ॥ यद्यस्य समरे गोप्ता शक्रो देवगणैः सह ।

तथाप्येनं निहंस्याव इति कृष्णावभीषताम् ॥ १७ ॥ इति कृष्णौ महाबाहू मिथः कथयतां तदा । सिन्धुराजमवेक्षन्तौ सत्पुत्रा बहु चक्रतुः ॥ १८ ॥ अतीत्य मरुधन्वानन्तृषितौ त्वरितौ गजौ । पीत्वा वारि समाश्वस्तौ तथैवास्तामरिन्दमौ ॥ १९ ॥ व्याघ्रसिंहगजाकीर्णानतिक्रम्य च पर्वतान् । वणिजाविव दृश्येतां हीनमृत्युजरातिगौ ॥ २० ॥ तथाहि मुखवर्णोऽयमनयोरिति मेनिरे । तावका वीक्ष्य मुक्तौ तौ विक्रोशन्ति च सर्व्वतः ॥ २१ ॥ द्रोणाद्दाशीविषाकाराज्ज्वलितादिव पावकात् । अन्येभ्यः पार्थिवेभ्यश्च भास्वन्ताविव भास्करौ ॥ २२ ॥ विमुक्तौ सागरप्रख्याद्द्रोणानीकादरिन्दमौ । अदृश्येतां मुदा युक्तौ समुत्तीर्य्यार्णवं यथा ॥ २३ ॥ अस्त्रौघान्महतो मुक्तौ द्रोणहार्द्दिक्यरक्षितात् । रोचमानावदृश्येतामिन्द्राग्न्योः सदृशौ रणे ॥ २४ ॥ उद्भिन्नरुधिरौ कृष्णौ भारद्वाजस्य सायकैः । चितौ चित्रौ व्यरोचेतां कर्णिकारैरिवाचलौ ॥ २५ ॥ द्रोणग्राहह्रदान्मुक्तौ शक्त्याशीविषसङ्कटात् । अयःशिरोऽग्रमकरात् क्षत्रियप्रवराम्भसः ॥ २६ ॥ ज्याघोषतलनिर्ह्रादाद्गदानिस्त्रिंशविद्युतः । द्रोणास्त्रमेघान्निर्मुक्तौ सूर्य्येन्दू तिमिरादिव ॥ २७ ॥ बाहुभ्यामिव सन्तीर्णौ सिन्धुषष्ठाः समुद्रगाः । तपान्ते सरितः पूर्णा महाग्राहसमाकुलाः ॥ २८ ॥ इति कृष्णौ महेष्वासौ यशसा लोकविश्रुतौ । सर्व्वभूतान्यमन्यन्त द्रोणास्त्रबलविस्मयात् ॥ २९ ॥ जयद्रथं समीपस्थमवेक्षन्तौ जिघांसया । रुरुं निपातेलिप्सन्तौ व्याघ्रवत्तावतिष्ठताम् ॥ ३० ॥ यथाहि मुखवर्णोऽनयोरिति मेनिरे । तव योधा महाराज हतमेव जयद्रथम् ॥ ३१ ॥ लोहिताक्षौ महाबाहू संयुक्तौ कृष्णपाण्डवौ । सिन्धुराजमभिप्रेक्ष्य हृष्टौ व्यनदतां मुहुः ॥ ३२ ॥ शौरेरभीशुहस्तस्य पार्थस्य च धनुष्मतः । तयोरासीत प्रभा राजन् सूर्य्यपावकयोरिव ॥ ३३ ॥ हर्ष एव तयोरासीद्द्रोणानीकप्रमु-

ष्णयोः । समीपे सैन्धवं दृष्ट्वा श्येनयोरामिषं यथा ॥ ३४ ॥ तौ तु सैन्धवमालोक्य वर्त्तमानमिवान्तिके । सहसा पेततुः क्रुद्धौ क्षिप्रं श्येनाविवामिषम् ॥ ३५ ॥ तौ तु दृष्ट्वा व्यतिक्रान्तौ हृषीकेशधनञ्जयौ । सिन्धुराजस्य रक्षार्थं पराक्रान्तः सुतस्तव ॥ ३६ ॥ द्रोणेनाबद्धकवचो राजा दुर्य्योधनस्तदा । ययावेकरथेनाजौ हयसंस्कारवित् प्रभो ॥ ३७ ॥ कृष्णपार्थौ महेष्वासौ व्यतिक्रम्याथ ते सुतः । अग्रतः पुण्डरीकाक्षं प्रतीयाय नराधिपः ॥ ३८ ॥ ततः सर्वेषु सैन्येषु वादित्राणि प्रहृष्टवत् । प्रावाद्यन्त व्यतिक्रान्ते तव पुत्रे धनञ्जये ॥ ३९ ॥ सिंहनादरवाश्चासन् शङ्खशब्दविमिश्रिताः । दृष्ट्वा दुर्य्योधनं तत्र कृष्णयोः प्रमुखे स्थितम् ॥ ४० ॥ ये च ते सिन्धुराजस्य गोप्तारः पावकोपमाः । तेऽप्यहृष्यन्त समरे दृष्ट्वा पुत्रं तव प्रभो ॥ ४१ ॥ दृष्ट्वा दुर्य्योधनं कृष्णो व्यतिक्रान्तं सहानुगम् । अब्रवीदर्जुनं राजन् प्राप्तकालमिदं वचः ॥ ४२ ॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि दुर्य्योधनागमने
एकाधिकशततमोऽध्यायः ॥ १०१ ॥

---

वासुदेव उवाच । सुयोधनमतिक्रान्तमेनं पश्य धनञ्जय । अत्यद्भुतमिमं मन्ये नास्त्यस्य सदृशो रथः ॥ १ ॥ दूरपाती महेष्वासः कृतास्त्रो युद्धदुर्मदः । दृढास्त्रश्चित्रयोधी च धार्त्तराष्ट्रो महाबलः ॥ २ ॥ अत्यन्तसुखसम्वृद्धो मानितश्च महारथैः । कृती च सततं पार्थ नित्यं द्वेष्टि च पाण्डवान् ॥ ३ ॥ तेन युद्धमिमं मन्ये प्राप्तकालं तवानघ । अत्र वा द्यूतमायत्तं विजयायेतराय च ॥ ४ ॥ अत्र क्रोधविषं पार्थ विमुञ्च चिरसम्भृतम् । एष मूलमनर्थानां पाण्डवानां महारथः ॥ ५ ॥ सोऽयं प्राप्तस्तवाक्षेपे पश्य साफल्यमात्मनः । कथं हि राजा राज्यार्थी त्वया गच्छेत संयुगम् ॥ ६ ॥

दिष्ट्या त्विदानीं संप्राप्त एष ते बाणगोचरम् । यथायं जीवितं
जह्यास्त्वया कुरु धनञ्जय ॥ ७ ॥ ऐश्वर्य्यमदसम्मूढो नैष दुःख-
मुपेयिवान् । न च ते संयुगे वीर्य्यं जानाति पुरुषर्षभ ॥ ८ ॥
त्वां हि लोकास्त्रयः पार्थ ससुरासुरमानुषाः । नोत्सहन्ते रणे
जेतुं किमुतैकः सुयोधनः ॥ ९ ॥ स दिष्ट्या समनुप्राप्तस्तव पार्थ
रथान्तिकम् । जह्येनं त्वं महाबाहो यथा वृत्रं पुरन्दरः ॥ १० ॥
एष ह्यनर्थे सततं पराक्रान्तस्तवानघ । निकृत्या धर्म्मराजञ्च द्यूते
वञ्चितवानयम् ॥ ११ ॥ बहूनि सुनृशंसानि कृतान्येतेन मानद ।
युष्मासु पापमतिना ह्यपापेष्वेव नित्यदा ॥ १२ ॥ तमनार्य्यं सदा
क्षुद्रं पुरुषं कामरूपिणम् । आर्य्यां युद्धे मतिं कृत्वा जहि
पार्थाविचारयन् ॥ १३ ॥ निकृत्या राज्यहरणं वनवासञ्च पाण्डव ।
परिक्लेशञ्च कृष्णाया हृदि कृत्वा पराक्रम ॥ १४ ॥ दिष्ट्यैष तव
बाणानां गोचरे परिवर्त्तते । प्रतिघाताय कार्य्यस्य दिष्ट्या च
यततेऽग्रत ॥ १५ ॥ दिष्ट्या जानाति सङ्ग्रामे योद्धव्यं हि त्वया
सह । दिष्ट्या च सफलाः पार्थ सर्व्वे कामा ह्यकामिताः ॥ १६ ॥
तस्माज्जहि रणे पार्थ धार्त्तराष्ट्रं कुलाधमम् । यथेन्द्रेण हतः
पूर्व्वं जम्भो देवासुरे मृधे ॥ १७ ॥ अस्मिन् हते त्वया सैन्यमनाथं
भिद्यतामिदम् । वैरस्यास्यास्त्ववभृथो मूलं छिन्धि दुरात्मनाम् ॥ १८ ॥
सञ्जय उवाच । तं तथेत्यब्रवीत् पार्थः कृत्यरूपमिदं मम ।
सर्व्वमन्यदनादृत्य गच्छ यत्र सुयोधनः ॥ १९ ॥ येनैतद्दीर्घकालं
नो भुक्तं राज्यमकण्टकम् । अप्यस्य युधि विक्रम्य छिन्द्यां मूर्द्धान-
माहवे ॥ २० ॥ अपि तस्या ह्यनर्हायाः परिक्लेशस्य माधव ।
कृष्णायाः शक्नुयां गन्तुं पदं केशप्रधर्षणे ॥ २१ ॥ इत्येवं वादिनौ
कृष्णौ हृष्टौ श्वेतान् हयोत्तमान् । प्रेषयामासतुः सङ्ख्ये प्रेप्-
सन्तौ तं नराधिपम् ॥ २२ ॥ तयोः समीपं सम्प्राप्य पुत्रस्ते
भरतर्षभ । न चकार भयं प्राप्ते भये महति मारिष ॥ २३ ॥

तदस्य क्षत्रियास्तत्र सर्व एवाभ्यपूजयन्। यदर्जुनहृषीकेशौ
प्रत्युद्यातो न्यवारयत्॥ २४॥ ततः सर्वस्य सैन्यस्य तावकस्य
विशाम्पते। महानादो ह्यभूत्तत्र दृष्ट्वा राजानमाहवे॥ २५॥
तस्मिन् जनसमुन्नादे प्रवृत्ते भैरवे सति। कदर्थीकृत्य ते पुत्र
प्रतिमित्रमवारयत्॥ २६॥ आवारितस्तु कौन्तेयस्तव पुत्रेण
धन्विना। संरम्भमगमद्भूय स च तस्मिन् परन्तप॥ २७॥
तौ दृष्ट्वा प्रतिसंरब्धौ दुर्योधनधनञ्जयौ। अभ्यवैक्षन्त राजानो
भीमरूपा समन्ततः॥ २८॥ दृष्ट्वा तु पार्थं संरब्धं वासुदेवञ्च
मारिष। प्रहसन्निव पुत्रस्ते योद्धुकाम समाह्वयत्॥ २९॥ ततः-
प्रहृष्टो दाशार्हं पाण्डवश्च धनञ्जय। व्याक्रोशेतां महानादं
दध्मतुश्चाम्बुजोत्तमौ॥ ३०॥ तौ हृष्टरूपौ सम्प्रेक्ष्य कौरवेयास्तु
सर्वशः। निराशा समपद्यन्त पुत्रस्य तव जीविते॥ ३१॥ शोक-
मापुः परे चैव कुरवः सर्व एव ते। अमन्यन्त च पुत्रन्ते वैश्वा-
नरमुखे हुतम्॥ ३२॥ तथा तु दृष्ट्वा योधास्ते प्रहृष्टौ कृष्ण-
पाण्डवौ। हतो राजा हतो राजेत्यूचिरे च भयार्दिता॥ ३३॥
जनस्य सन्निनादन्तु श्रुत्वा दुर्योधनोऽब्रवीत्। व्येतु वो भीरहं
कृष्णौ प्रेषयिष्यामि मृत्यवे॥ ३४॥ इत्युक्त्वा सैनिकान् सर्वान्
जयापेक्षी नराधिप। पार्थमाभाष्य संरम्भादिदं वचनमब्रवीत्॥ ३५॥
पार्थ यत् शिक्षितं तेऽस्त्रं दिव्यं पार्थिवमेव च। तद्दर्शय मयि
क्षिप्रं यदि जातोऽसि पाण्डुना॥ ३६॥ यद्बलं तव वीर्यञ्च केश-
वस्य तथैव च। तत् कुरुष्व मयि क्षिप्रं पश्यामस्तव पौरुषम्॥ ३७॥
अस्मत्परोक्षं कर्माणि कृतानि प्रवदन्ति ते। स्वामिसत्कारयुक्तानि
यानि तानीह दर्शय॥ ३८॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि दुर्योधनदर्पवाक्ये
द्व्यधिकशततमोऽध्यायः॥ १०२॥

सञ्जय उवाच । एवमुक्त्वार्जुनं राजा त्रिभिर्मर्म्मातिगैः शरैः ।
प्रत्यविध्यन्महावेगैश्चतुर्भिश्चतुरो हयान् ॥ १ ॥ वासुदेवञ्च दशभिः
प्रत्यविध्यत् स्तनान्तरे । प्रतोदं चास्य भल्लेन छित्त्वा भूमावपा-
तयत् ॥ २ ॥ तञ्चतुर्द्दशभिः पार्थश्चित्रपुङ्खैः शिलाशितैः । अविध्य-
त्तूर्णमव्यग्रस्ते चाभ्रश्यन्त वर्म्मणि ॥ ३ ॥ तेषां नैष्फल्यमालोक्य
पुनर्नव च पञ्च च । प्राहिणोन्निशितान् बाणान् ते चाभ्रश्यन्त
वर्म्मणः ॥ ४ ॥ अष्टाविंशत्तु तान् बाणानस्तान् विप्रेक्ष्य निष्फलान् ।
अब्रवीत् परवीरघ्नः कृष्णोऽर्जुनमिदं वचः ॥ ५ ॥ अदृष्टपूर्वं
पश्यामि शिलानामिव सर्पणम् । त्वया सम्प्रेरिताः पार्थ नार्थं
कुर्व्वन्ति पत्रिणः ॥ ६ ॥ कच्चिद्गाण्डीवतः प्राणास्तथैव भरतर्षभ ।
मुष्टिश्च ते यथा पूर्वं भुजयोश्च बलं तव ॥ ७ ॥ न वा कच्चिदयं
कालः प्राप्तः स्यादद्य पश्चिमः । तव चैवास्य शत्रोश्च तन्ममाचक्ष्व
पृच्छतः ॥ ८ ॥ विस्मयो मे महान् पार्थ तव दृष्ट्वा शरानिमान् ।
व्यर्थान् निपतितान् दृष्ट्वा दुर्य्योधनरथं प्रति ॥ ९ ॥ वज्राशनि-
समा घोराः परकायावभेदिनः । शराः कुर्व्वन्ति ते नार्थं पार्थ
काद्य विडम्बना ॥ १० ॥

अर्जुन उवाच । द्रोणेनैषा मतिः कृष्ण धार्त्तराष्ट्रे निवे-
शिता । अभेद्या हि ममास्त्राणामेषा कवचधारणा ॥ ११ ॥
अस्मिन्नन्तर्हितं कृष्ण त्रैलोक्यमपि वर्म्मणि । एको द्रोणो हि
वेदैतदहं तस्माच्च सत्तमात् ॥ १२ ॥ न शक्यमेतत् कवचं बाणै-
र्भेत्तुं कथञ्चन । अपि वज्रेण गोविन्द स्वयं मघवता युधि ॥ १३ ॥
जानंस्त्वमपि वै कृष्ण मां विमोहयसे कथम् । यद्वृत्तं त्रिषु लोकेषु
यच्च केशव वर्त्तते ॥ १४ ॥ तथा भविष्यच्चैव तत् सर्व्वं विदितं
तव । न त्विदं वेद वै कश्चित् यथा त्वं मधुसूदन ॥ १५ ॥ एष
दुर्य्योधनः कृष्ण द्रोणेन विहितामिमाम् । तिष्ठत्यभीवत् सङ्ख्ये
बिभ्रत् कवचधारणाम् ॥ १६ ॥ यत्त्वत्र विहितं कार्य्यं नैष

तद्वेत्ति माधव । स्त्रीवदेष बिभर्त्येतां युक्तां कवचधारणाम् ॥१७॥
पश्य बाह्वोश्च मे वीर्यं धनुषश्च जनार्दन । पराजितं कौरव्यं
कवचेनापि रक्षितम् ॥ १८ ॥ इदमङ्गिरसे प्रादाद्देवेशो वर्म
भास्वरम् । तस्माद्बृहस्पतिः प्राप ततः प्राप पुरन्दरः ॥ १९ ॥
पुनर्ददौ सुरपतिर्मह्यं वर्म ससंग्रहम् । दैवं यद्यस्य वर्मैतद्ब्रह्मणा
वा स्वयं कृतम् । नैनं गोप्स्यति दुर्बुद्धिमद्य बाणहतं मया ॥२०॥
सञ्जय उवाच । एवमुक्त्वार्जुनो बाणानभिमन्त्र्य व्यकर्षयत् ।
विकृष्यमाणांस्तेनैव धनुर्मध्यगतांछरान् ॥ २१ ॥ तानस्यास्त्रेण
चिच्छेद द्रौणिः सर्वास्त्रघातिना । तान्निकृत्तानिषून् दृष्ट्वा दूरतो
ब्रह्मवादिना ॥ २२ ॥ न्यवेदयत् केशवाय विस्मितः श्वेतवाहनः ।
नैतदस्त्रं मया शक्यं द्विः प्रयोक्तुं जनार्दन ॥ २३ ॥ अस्त्रं मामेव
हन्याद्धि हन्याच्चापि बलं मम । ततो दुर्योधनः कृष्णौ नवभि-
र्नवभिः शरैः ॥ २४ ॥ अविध्यत रणे राजञ्छरैराशीविषो-
पमैः । भूय एवाभ्यवर्षच्च समरे कृष्णपाण्डवौ ॥ २५ ॥ शर-
वर्षेण महता ततोऽहृष्यन्त तावकाः । चक्रुर्वादित्रनिनदान् सिंह-
नादरवांस्तथा ॥ २६ ॥ ततः क्रुद्धो रणे पार्थः सृक्किणी परि-
संलिहन् । नापश्यच्च ततोऽस्याङ्गं यन्न स्याद्वर्मरक्षितम् ॥ २७ ॥
ततोऽस्य निशितैर्बाणैः सुमुक्तैरन्तकोपमैः । हयांश्चकार निर्देहा-
नुभौ च पार्ष्णिसारथी ॥ २८ ॥ धनुरस्याच्छिनत्तूर्णं हस्तावापं च
वीर्यवान् । रथं च शकलीकर्तुं सव्यसाची प्रचक्रमे ॥ २९ ॥
दुर्योधनं च बाणाभ्यां तीक्ष्णाभ्यां विरथीकृतम् । अविध्यद्धस्त-
तलयोरुभयोरर्जुनस्तथा ॥ ३० ॥ तं कृच्छ्रामापदं प्राप्तं दृष्ट्वा
परमधन्विनम् । समापेतुः परीप्सन्तो धनञ्जयशरार्दितम् ॥३१॥
तं रथैर्बहुसाहस्रैः कल्पितैः कुञ्जरैर्हयैः । पदात्योघैश्च संरब्धैः
परिवव्रुर्धनञ्जयम् ॥ ३२ ॥ अथ नार्जुनगोविन्दौ न रथो वा
व्यदृश्यत । अस्त्रवर्षेण महता जनौघैश्चापि संवृतौ ॥ ३३ ॥

ततोऽर्ज्जुनोऽस्त्रवीर्य्येण निजघ्ने तां वरूथिनीम्। तत्र व्यङ्गीकृताः
पेतुः शतशोऽथ रथद्विपाः ॥ ३४ ॥ ते हता हन्यमानाश्च न्यगृह्णंस्तं
रथोत्तमम्। स रथस्तम्भितस्तस्थौ क्रोशमात्रं समन्ततः ॥ ३५ ॥
ततोऽर्ज्जुनं वृष्णिवीरस्त्वरितो वाक्यमब्रवीत्। धनुर्विस्फारया-
त्यर्थमहं ध्मास्यामि चाम्बुजम् ॥ ३६ ॥ ततो विस्फार्य्य बलवत्
गाण्डीवं जघ्निवान् रिपून्। महता शरवर्षेण तलशब्देन चार्ज्जुनः
॥ ३७ ॥ पाञ्चजन्यञ्च बलवान्दध्मौ तारेण केशवः। रजसा
ध्वस्तपक्ष्माच प्रस्विन्नवदनो भृशम् ॥ ३८ ॥ तस्य शङ्खस्य नादेन
धनुषो निस्वनेन च। निःसत्त्वाश्च ससत्त्वाश्च क्षितौ पेतुस्तदा
जनाः ॥ ३९ ॥ तैर्विमुक्तो रथो रेजे वाय्वीरित इवाम्बुदः।
जयद्रथस्य गोप्तारस्ते वै क्रुद्धाः सहानुगाः ॥ ४० ॥ ते दृष्ट्वा
सहसा पार्थं गोप्तारः सैन्धवस्य तु। चक्रुर्न्नादान् महेष्वासाः
कम्पयन्तो वसुन्धराम् ॥ ४१ ॥ बाणशब्दरवांश्चोग्रान् विमिश्रा-
ञ्छङ्खनिस्वनैः। प्रादुश्चक्रुर्महात्मानः सिंहनादरवानपि ॥ ४२ ॥
तं श्रुत्वा निनदं घोरं तावकानां समुत्थितम्। प्रदध्मतुः शङ्खवरौ
वासुदेवधनञ्जयौ ॥ ४३ ॥ तेन शब्देन महता पूरितेयं वसुन्धरा।
सशैला सार्णवद्वीपा सपाताला विशाम्पते ॥ ४४ ॥ स शब्दो भरत-
श्रेष्ठ व्याप्य सर्व्वा दिशो दश। प्रतिसस्वान तत्रैव कुरुपाण्डवयो-
र्बले ॥ ४५ ॥ तावका रथिनस्तत्र दृष्ट्वा कृष्णधनञ्जयौ। सम्भ्रमं
परमं प्राप्तास्त्वरमाणा महारथाः ॥ ४६ ॥ अथ कृष्णौ महा-
भागौ तावका वीक्ष्य दंशितौ। अभ्यद्रवन्त संक्रुद्धास्तदद्भुत-
मिवाभवत् ॥ ४७ ॥

इति द्रोणपर्व्वणि जयद्रथवधपर्व्वणि दुर्य्योधनपराजये
त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

---

रक्षिता ॥ १७ ॥ अमर्षिता महाशङ्खान् दध्मुर्वीरा महारथाः ।
कृते प्रतिकरिष्यन्तः केशवस्यार्ज्जुनस्य च ॥ १८ ॥ बभूव तव तत्
सैन्यं शङ्खशब्दसमीरितम् । उद्विग्नरथनागाश्वमस्वस्थमिव वा
विभो ॥ १९ ॥ तत् प्रविद्धमिवाकाशं शूरैः शङ्खनिनादितम् ।
बभूव भृशमुद्विग्नं निर्घातैरिव नादितम् ॥ २० ॥ स शब्दः सु-
महान् राजन् दिशः सर्वा व्यनादयत् । त्रासयामास तत् सैन्यं
युगान्त इव सम्भृतः ॥ २१ ॥ ततो दुर्योधनोऽष्टौ च राजानस्ते
महारथाः । जयद्रथस्य रक्षार्थं पाण्डवं पर्य्यवारयन् ॥ २२ ॥
ततो द्रौणिस्त्रिसप्तत्या वासुदेवमताडयत् । अर्ज्जुनञ्च त्रिभिर्भल्लै-
र्ध्वजमश्वांश्च पञ्चभिः ॥ २३ ॥ तमर्ज्जुनः पृषत्कानां शतैः षड्भि-
रताडयत् । अत्यर्थमिव सङ्क्रुद्धः प्रतिविद्धे जनार्द्दने ॥ २४ ॥ कर्णञ्च
च दशभिर्विद्ध्वा वृषसेनं त्रिभिस्तथा । शल्यस्य सशरं चाप मुष्टौ
चिच्छेद वीर्य्यवान् ॥ २५ ॥ गृहीत्वा धनुरन्यत्तु शल्यो विव्याध
पाण्डवम् । भूरिश्रवास्त्रिभिर्बाणैर्हेमपुङ्खैः शिलाशितैः ॥ २६ ॥
कर्णो द्वात्रिंशता चैव वृषसेनश्च सप्तभिः । जयद्रथस्त्रिसप्तत्या
कृपश्च दशभिः शरैः ॥ २७ ॥ मद्रराजश्च दशभिर्विव्यधुः फाल्गुनं
रणे । ततः शराणां षष्ट्या तु द्रौणिः पार्थमवाकिरत् ॥ २८ ॥
वासुदेवञ्च विंशत्या पुनः पार्थञ्च पञ्चभिः । प्रहसंस्तु नर-
व्याघ्रः श्वेताश्वः कृष्णसारथिः ॥ २९ ॥ प्रत्यविध्यत् स तान्
सर्वान् दर्शयन् पाणिलाघवम् । कर्णं द्वादशभिर्विद्ध्वा वृषसेनं
त्रिभिः शरैः ॥ ३० ॥ शल्यस्य सशरं चापं मुष्टिदेशे व्यकृन्तत ।
सौमदत्तिं त्रिभिर्विद्ध्वा शल्यञ्च दशभिः शरैः ॥ ३१ ॥ शितैरग्नि-
शिखाकारैर्द्रौणिं विव्याध चाष्टभिः । गौतमं पञ्चविंशत्या सैन्ध-
वञ्च शतेन ह ॥ ३२ ॥ पुनर्द्रौणिञ्च सप्तत्या शराणां सोऽभ्य-
ताडयत् । भूरिश्रवास्तु सङ्क्रुद्धः प्रतोदं चिच्छिदे हरेः ॥ ३३ ॥
अर्ज्जुनञ्च त्रिसप्तत्या बाणानामाजघान ह । ततः शरशतैस्तीक्ष्णै-

सञ्जय उवाच। तावका हि समीक्ष्यैव वृष्ण्यन्धककुरूत्तमौ। प्रागत्रसन् जिघांसन्तस्तथैवाविजयं परान् ॥१॥ सुवर्णचित्रैर्वैयाघ्रै-स्तनवद्भिर्यशारथै । दीपयन्तो दिश सर्वा ज्वलद्भिरिव पावकै ॥ २ ॥ रुक्मपृष्ठैश्च दुष्प्रेक्ष्यै कार्मुकै पृथिवीपते। कूजद्भिरतुला न्नादान् कोपितैस्तुरगैरिव ॥ ३ ॥ भूरिश्रवा शल्य कर्णो वृष-सेनो जयद्रथ । कृपश्च मद्रराजश्च द्रौणिश्च रथिनाम्वर ॥ ४ ॥ ते पिबन्त इवाकाशमश्वैरष्टौ महारथा । अराजयन् दश दिशो वैयाघ्रैर्हेमचन्द्रिभि ॥ ५ ॥ ते दंशिता सुसंरब्धा रथैर्मेघौघ-निस्वनै । समावृण्वन् दश दिश पार्थस्य निशितै शरै ॥ ६ ॥ कुलीनाश्च हयास्तेषा वहन्तस्तान् महारथान् । व्यशोभन्त तदा शीघ्रा दीपयन्तो दिशो दश ॥ ७ ॥ आजानेयैर्महावेगैर्नानादेश-समुत्थितै । पार्वतीयैर्नदीजैश्च सैन्धवैश्च हयोत्तमै ॥ ८ ॥ कुरु-योधवरा राजंस्तव पुत्र परीप्सव । धनञ्जयरथं शीघ्र सर्वत समुपाद्रवन् ॥ ९ ॥ ते प्रगृह्य महाशङ्खान् दध्मु पुरुषसत्तमा । पूरयन्तो दिव राजन् पृथिवीञ्च ससागराम् ॥ १० ॥ तथैव दध्मतु शङ्खौ वासुदेवधनञ्जयौ । प्रवरौ सर्वदेवाना सर्वशङ्ख वरौ भुवि ॥ ११ ॥ देवदत्तञ्च कौन्तेय पाञ्चजन्यञ्च केशव । शब्दस्तु देवदत्तस्य धनञ्जयसमीरित ॥ १२ ॥ पृथिवीञ्चान्त रीक्षञ्च दिशश्चैव समावृणोत् । तथैव पाञ्चजन्योऽपि वासुदेव-समीरित ॥ १३ ॥ सर्वशब्दानतिक्रम्य पूरयामास रोदसी । तस्मिंस्तथा वर्त्तमाने दारुणे नादसङ्कुले ॥ १४ ॥ भीरूणा त्रास-जनने शूराणा हर्षवर्द्धने । प्रवादितासु भेरीषु झर्झरेष्वानकेषु च ॥ १५ ॥ मृदङ्गेष्वपि राजेन्द्र वाद्यमानेष्वनेकश । महारथा समाहूता दुर्योधनहितैषिण ॥ १६ ॥ अमृष्यमाणास्त शब्द क्रुद्धा परमधन्विन । नानादेश्या महीपाला स्वसैन्यपरि

रक्षिण ॥ १७ ॥ अमर्षिता महाराज दधुर्वीरा महारथाः ।
कृते प्रतिकरिष्यन्तः केशवस्यार्ज्जुनस्य च ॥ १८ ॥ बभूव तव तत्
सैन्यं शङ्खशब्दसमीरितम् । उद्विग्नरथनागाश्वमस्वस्थमिव वा
विभो ॥ १९ ॥ तत् प्रविष्टमिवाकाशं शूरैः शङ्खनिनादितम् ।
बभूव भृशमुद्विग्नं निर्घातैरिव नादितम् ॥ २० ॥ स शब्दः सु-
महान् राजन् दिशः सर्वा व्यनादयत् । त्रासयामास तत् सैन्यं
युगान्त इव सम्भृतः ॥ २१ ॥ ततो दुर्य्योधनोऽष्टौ च राजानस्ते
महारथाः । जयद्रथस्य रक्षार्थं पाण्डवं पर्य्यवारयन् ॥ २२ ॥
ततो द्रौणिस्त्रिसप्तत्या वासुदेवमताड़यत् । अर्ज्जुनञ्च त्रिभिर्भल्लै-
र्ध्वजमश्वांश्च पञ्चभिः ॥ २३ ॥ तमर्ज्जुनः पृषत्कानां शतैः षड्भि-
रताड़यत् । अत्यर्थमिव सङ्क्रुद्धः प्रतिविद्धे जनार्द्दने ॥ २४ ॥ कर्णं
तु दशभिर्विद्ध्वा वृषसेनं त्रिभिस्तथा । शल्यस्य समरे चापं मुष्टौ
चिच्छेद वीर्य्यवान् ॥ २५ ॥ गृहीत्वा धनुरन्यत्तु शल्यो विव्याध
पाण्डवम् । भूरिश्रवास्त्रिभिर्बाणैर्हेमपुङ्खैः शिलाशितैः ॥ २६ ॥
कर्णो द्वात्रिंशता चैव वृषसेनश्च सप्तभिः । जयद्रथस्त्रिसप्तत्या
कृपश्च दशभिः शरैः ॥ २७ ॥ मद्रराजश्च दशभिर्विव्यधुः फाल्गुनं
रणे । ततः शराणां षष्ट्या तु द्रौणिः पार्थमवाकिरत् ॥ २८ ॥
वासुदेवञ्च विंशत्या पुनः पार्थञ्च पञ्चभिः । प्रहसंस्तु नर-
व्याघ्रः श्वेताश्वः कृष्णसारथिः ॥ २९ ॥ प्रत्यविध्यत स तान्
सर्व्वान् दर्शयन् पाणिलाघवम् । कर्णं द्वादशभिर्विद्ध्वा वृषसेनं
त्रिभिः शरैः ॥ ३० ॥ शल्यस्य समरे चापं मुष्टिदेशे व्यकृन्तत ।
सौमदत्तिं त्रिभिर्विद्ध्वा शल्यञ्च दशभिः शरैः ॥ ३१ ॥ शितैरग्नि-
शिखाकारैर्द्रौणिं विव्याध चाष्टभिः । गौतमं पञ्चविंशत्या सैन्ध-
वञ्च शतेन च ॥ ३२ ॥ पुनर्द्रौणिञ्च सप्तत्या शराणां सोऽभ्य-
ताड़यत् । भूरिश्रवास्तु सङ्क्रुद्धः प्रतोदं चिच्छिदे हरेः ॥ ३३ ॥
अर्ज्जुनञ्च त्रिसप्तत्या बाणानामाजघान ह । ततः शरशतैस्तीक्ष्णै-

मृगी ॥ १३ ॥ नृत्यतीव रथोपस्थे श्वसनेन समीरिता । आचार्-
यस्य च पाञ्चाली ब्राह्मणस्य तपस्विन ॥ १४ ॥ गोवृषो गौतम-
स्यासीत् कृपस्य सुपरिष्कृत । स तेन भ्राजते राजन् गोवृषेण
महात्मवान् ॥ १५ ॥ त्रिपुरघ्नरथो यद्वद्गोवृषेण विराजता ।
मयूरो वृषसेनस्य काञ्चनो मणिरत्नवान् ॥ १६ ॥ व्याहरिष्य-
न्निवातिष्ठत् सेनाग्रमुपशोभयन् । तेन तस्य रथो भाति मयूरेण
महात्मन ॥ १७ ॥ यथा स्कन्दस्य राजेन्द्र मयूरेण विराजता ।
मद्रराजस्य शल्यस्य ध्वजाग्रेऽग्निशिखामिव ॥ १८ ॥ सौवर्णीं
प्रतिपश्याम सीतामप्रतिमां शुभाम् । सा सीता भ्राजते तस्य
रथमास्थाय मारिष ॥ १९ ॥ सर्वबीजविरूढेव यथा सीता श्रिया
वृता । वराह सिन्धुराजस्य राजतोऽभिविराजते ॥ २० ॥
ध्वजाग्रे लोहिताभासो हेमजालपरिष्कृत । शुशुभे केतुना तेन
राजतेन जयद्रथ ॥ २१ ॥ यथा देवासुरे युद्धे पुरा पूषा स्म
शोभते । सौमदत्ते पुनर्यूपो यज्ञशीलस्य धीमत ॥ २२ ॥ ध्वज
सूर्य इवाभाति सोमश्चात्र प्रदृश्यते । स यूप काञ्चनो राजन्
सौमदत्तेर्विराजते ॥ २३ ॥ राजसूये मखश्रेष्ठे यथा यूप समु-
च्छ्रित । शल्यस्य तु महाराज राजतो द्विरदो महान् ॥ २४ ॥
केतु काञ्चनचित्राङ्गैर्मयूरैरुपशोभित । स केतु शोभयामास
सैन्य ते भरतर्षभ ॥ २५ ॥ यथा श्वेतो महानागो देवराजचमूं
तथा । नागो मणिमयो राज्ञो ध्वज कनकसंवृत ॥ २६ ॥
किङ्किणीशतसंह्रादो राजांश्चित्रे रथोत्तमे । व्यभ्राजत भृशं
राजन् पुत्रस्तव विशाम्पते ॥ २७ ॥ ध्वजेन महता संख्ये कुरू-
णामृषभस्तदा । नवैते तव वाहिन्यामुच्छ्रिता परमध्वजा ॥२८॥
व्यदीपयंस्ते पृतना युगान्तादित्यसन्निभा । दशमस्त्वर्जुनस्यासी-
देक एव महाकपि ॥ २९ ॥ अदीप्यतार्जुनो येन हिमवानिव
वह्निना । ततश्चित्राणि शुभ्राणि सुमहान्ति महारथा ॥ ३० ॥

स्तानरीन् श्वेतवाहन । प्रत्यपिबद्द्रुत क्रुद्धो महावातो घनानि-
निव ॥ २४ ॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि सङ्कुलयुद्धे
चतुरधिकशतोऽध्याय ॥ १०४ ॥

---

संयुगे ॥ १३ ॥ नृत्यतीव रथोपस्थे श्वसनेन समीरिता । आचा-
र्यस्य च पाण्डुरा ब्राह्मणस्य तपस्विनः ॥ १४ ॥ गोवृषो गौतम-
स्यासीत् कृपस्य सुपरिष्कृतः । स तेन भ्राजते राजन् गोवृषेण
महात्मवान् ॥ १५ ॥ त्रिपुरघ्नरथो यद्वद्गोवृषेण विराजता ।
मयूरो वृषसेनस्य काञ्चनो मणिरत्नवान् ॥ १६ ॥ व्याहरिष्य-
न्निवातिष्ठत् सेनाग्रमुपशोभयन् । तेन तस्य रथो भाति मयूरेण
महात्मनः ॥ १७ ॥ यथा स्कन्दस्य राजेन्द्र मयूरेण विराजता ।
मद्रराजस्य शल्यस्य ध्वजाग्रेऽग्निशिखामिव ॥ १८ ॥ सौवर्णीं
प्रतिपश्याम सीतामप्रतिमां शुभाम् । सा सीता भ्राजते तस्य
रथमास्थाय मारिष ॥ १९ ॥ सर्वबीजविरूढेव यथा सीता श्रिया
वृता । वराहः सिन्धुराजस्य राजतोऽभिविराजते ॥ २० ॥
ध्वजाग्रे लोहिताकाभो हेमजालपरिष्कृतः । शुशुभे केतुना तेन
राजतेन जयद्रथः ॥ २१ ॥ यथा देवासुरे युद्धे पुरा पूषा स्म
शोभते । सौमदत्तेः पुनर्यूपो यज्ञशीलस्य धीमतः ॥ २२ ॥ ध्वजः
सूर्य इवाभाति सोमश्चात्र प्रदृश्यते । स यूपः काञ्चनो राजन्
सौमदत्तेर्विराजते ॥ २३ ॥ राजसूये मखश्रेष्ठे यथा यूपः समु-
च्छ्रितः । शलस्य तु महाराज राजतो द्विरदो महान् ॥ २४ ॥
केतुः काञ्चनचित्राङ्गैर्मयूरैरुपशोभितः । स केतुः शोभयामास
सैन्यं ते भरतर्षभ ॥ २५ ॥ यथा श्वेतो महानागो देवराजचमूं
तथा । नागो मणिमयो राज्ञो ध्वजः कनकसंवृतः ॥ २६ ॥
किङ्किणीशतसंह्रादो राजंश्चित्रो रथोत्तमे । व्यभ्राजत भृशं
राजन् पुत्रस्तव विशाम्पते ॥ २७ ॥ ध्वजेन महता संख्ये कुरू-
णामृषभस्तदा । नवैते तव वाहिन्यामुच्छ्रिताः परमध्वजाः ॥ २८ ॥
व्यदीपयंस्ते पृतनां युगान्तादित्यसन्निभाः । दशमस्त्वर्जुनस्यासी-
देक एव महाकपिः ॥ २९ ॥ अदीप्यतार्जुनो येन हिमवानिव
वह्निना । ततश्चित्राणि शुभ्राणि सुमहान्ति महारथाः ॥ ३० ॥

कार्मुकाण्यादद्दुस्तूर्णमर्ज्जुनार्थे परन्तपा । तथैव धनुरायच्छत्
पार्थ शत्रुविनाशनम् ॥ ३१ ॥ गाण्डीवं दिव्यकर्मा-तद्राजन्
दुर्मन्त्रिते तव । तवापराधाद्राजानो निहता बहुधा युधि ॥ ३२ ॥
नानादिग्भ्य समाहूता सहया सरथादया । तेषामासीत्
प्रतिक्षेपो गर्ज्जतामितरेतरम् ॥ ३३ ॥ दुर्य्योधनमुखानाञ्च पाण्डू
नामृषभस्य च । तत्राद्भुतं परश्चक्रे कौन्तेय कृष्णसारथि ॥३४॥
यदेको बहुभि सार्द्धं समागच्छदभीतवत् । अशोभत महा-
बाहुर्गाण्डीवं विक्षिपन् धनु ॥ ३५ ॥ जिगीषुस्तान्नरव्याघ्रान्
जिघांसुश्च जयद्रथम् । तत्रार्ज्जुनो नरव्याघ्र शरैर्मुक्तै सहस्रश
॥ ३६ ॥ अदृश्यांस्तावकान् योधान् प्रचक्रे शत्रुतापन । ततस्तेऽपि
नरव्याघ्रा पार्थं सर्व्वे महारथा ॥ ३७ ॥ अदृश्यं समरे चक्रु
सायकौघै समन्तत । संवृते नरसिंहैस्तु कुरूणामृषभेऽर्ज्जुने ।
महानासीत्समुद्भूतस्तस्य सैन्यस्य निस्वन ॥ ३८ ॥

इति द्रोणपर्व्वणि जयद्रथवधपर्व्वणि ध्वजवर्णने
पञ्चाधिकशततोऽध्याय ॥ १०५ ॥

---

धृतराष्ट्र उवाच । अर्ज्जुने सैन्धवं प्राप्ते भारद्वाजे च संवृता ।
पाञ्चाला कुरुभि सार्द्धं किमकुर्व्वत सञ्जय ॥ १ ॥
सञ्जय उवाच । अपराह्णे महाराज संग्रामे लोमहर्षणे ।
पाञ्चालानां कुरूणाञ्च द्रोणे द्यूतमवर्त्तत ॥ २ ॥ पाञ्चाला हि
जिघांसन्तो द्रोणं संहृष्टचेतस । अभ्यवर्षन्त गर्ज्जन्त शर-
वर्षाणि मारिष ॥ ३ ॥ ततस्तु तुमुलस्तेषां सङ्ग्रामोऽवर्त्तताद्भुत ।
पाञ्चालानां कुरूणाञ्च घोरो देवासुरोपम ॥ ४ ॥ सर्व्वे द्रोणरथं
प्राप्य पाञ्चाला पाण्डवै सह । तदनीकं विभित्सन्तो महास्त्राणि
व्यदर्शयन् ॥ ५ ॥ द्रोणस्य रथपर्य्यन्तं रथिनो रथमास्थिता ।

कम्पयन्तीऽभ्यवर्त्तन्त वेगमास्थाय मध्यमम् ॥ ६ ॥ तमभ्ययाद्बृहत्-
क्षत्रः केकयानां महारथः । प्रवपन्निशितान् वाणान्महेन्द्राशनि-
सन्निभान् ॥ ७ ॥ तन्तु प्रत्युद्ययौ शीघ्रं क्षेमधूर्त्तिर्महायशाः ।
विमुञ्चन्निशितान् वाणान् शतशोऽथ सहस्रशः ॥ ८ ॥ धृष्टकेतुश्च
चेदीनामृषभोऽतिबलोदितः । त्वरितोऽभ्यद्रवत्सौं महेन्द्र इव
शम्बरम् ॥ ९ ॥ तमापतन्तं सहसा व्यादितास्यमिवान्तकम् ।
वीरधन्वा महेष्वासस्त्वरमाणः समभ्ययात् ॥ १० ॥ युधिष्ठिरं
महाराजं जिगीषुं समवस्थितम् । सहानीकं ततो द्रोणो न्यवा-
रयत वीर्य्यवान् ॥ ११ ॥ नकुलञ्च कुशलं युद्धे पराक्रान्तं परा-
क्रमी । अभ्यगच्छत् समायान्तं विकर्णस्ते सुतः प्रभो ॥ १२ ॥
सहदेवं तथायान्तं दुर्मुखः शत्रुकर्षणः । शरैरनेकसाहस्रैः सम-
वाकिरदाशुगैः ॥ १३ ॥ सात्यकिन्तु नरव्याघ्रं व्याघ्रदत्तस्त्ववा-
रयत् । शरैः सुनिशितैस्तीक्ष्णैः कम्पयन् वै मुहुर्मुहुः ॥ १४ ॥
द्रौपदेयान्नरव्याघ्रान् मुञ्चतः सायकोत्तमान् । संरब्धान्रथिनः
श्रेष्ठान् सौमदत्तिरवारयत् ॥ १५ ॥ भीमसेनं तदा क्रुद्धं भीम-
रूपो भयानकः । प्रत्यवारयदायान्तमार्ष्यशृङ्गिर्महारथः ॥ १६ ॥
तयोः समभवद्युद्धं नरराक्षसयोर्मृधे । यादृगेव पुरा वृत्तं राम-
रावणयोर्नृप ॥ १७ ॥ ततो युधिष्ठिरो द्रोणं नवत्या नतपर्व-
णाम् । आजघ्ने भरतश्रेष्ठः सर्वमर्मसु भारत ॥ १८ ॥ तं द्रोणः
पञ्चविंशत्या निजघान स्तनान्तरे । रोषितो भरतश्रेष्ठ कौन्तेयेन
यशस्विना ॥ १९ ॥ भूय एव तु विंशत्या सायकानां समाचिनोत् ।
साश्वसूतध्वजं द्रोणः पश्यतां सर्वधन्विनाम् ॥ २० ॥ तान् शरान्
द्रोणमुक्तांस्तु शरवर्षेण पाण्डवः । अवारयत धर्मात्मा दर्शयन्
पाणिलाघवम् ॥ २१ ॥ ततो द्रोणो भृशं क्रुद्धो धर्मराजस्य
संयुगे । चिच्छेद समरे धन्वी धनुस्तस्य महात्मनः ॥ २२ ॥
अथैनं छिन्नधन्वानं त्वरमाणो महारथः । शरैरनेकसाहस्रैः

पूरयामास सर्वतः ॥ २३ ॥ अदृश्यं वीक्ष्य राजानं भारद्वाजस्य सायकैः । सर्वभूतान्यमन्यन्त हतमेव युधिष्ठिरम् ॥ २४ ॥ केचिच्चैनममन्यन्त तथैव विमुखीकृतम् । हतो राजेति राजेन्द्र भारद्वाजेन महात्मना ॥ २५ ॥ स कृच्छ्रं परमं प्राप्तो धर्मराजो युधिष्ठिरः । त्यक्त्वा तत् कार्मुकं छिन्नं भारद्वाजेन संयुगे ॥ २६ ॥ आददेऽन्यद्धनुर्दिव्यं भास्वरं वेगवत्तरम् । ततस्तान् सायकांस्तत्र द्रोणमुक्तान् सहस्रशः ॥ २७ ॥ चिच्छेद समरे वीरस्तदद्भुतमिवाभवत् । छित्त्वा तु ताञ्छरान् राजन् क्रोधसंरक्तलोचनः ॥ २८ ॥ शक्तिं जग्राह समरे गिरीणामपि दारणीम् । स्वर्णदण्डां महाघोरामष्टघण्टां भयावहाम् ॥ २९ ॥ समुत्क्षिप्य च तां हृष्टो ननाद बलवद्बली । नादेन सर्वभूतानि त्रासयन्निव भारत ॥ ३० ॥ शक्तिं समुद्यतां दृष्ट्वा धर्मराजेन संयुगे । स्वस्ति द्रोणाय सहसा सर्वभूतान्यथाब्रुवन् ॥ ३१ ॥ सा राजभुजनिर्मुक्ता निर्मुक्तोरगसन्निभा । प्रज्वालयन्ती गगनं दिशः सप्रदिशस्तथा ॥ ३२ ॥ द्रोणान्तिकमनुप्राप्ता दीप्तास्या पन्नगी यथा । तामापतन्तीं सहसा दृष्ट्वा द्रोणो विशाम्पते ॥ ३३ ॥ प्रादुश्चक्रे ततो ब्राह्ममस्त्रमस्त्रविशारदः । तदस्त्रं भस्मसात् कृत्वा तां शक्तिं घोरदर्शनाम् ॥ ३४ ॥ जगाम स्यन्दनं तूर्णं पाण्डवस्य यशस्विनः । ततो युधिष्ठिरो राजा द्रोणास्त्रं तत् समुद्यतम् ॥ ३५ ॥ अशामयत् महाप्राज्ञो ब्रह्मास्त्रेणैव मारिष । विद्ध्वा तच्च रणे द्रोणं पञ्चभिर्नतपर्वभिः ॥ ३६ ॥ क्षुरप्रेण सुतीक्ष्णेन चिच्छेदास्य महद्धनुः । तदपास्य धनुश्छिन्नं द्रोणः क्षत्रियमर्दनः ॥ ३७ ॥ गदां चिक्षेप सहसा धर्मपुत्राय मारिष । तामापतन्तीं सहसा गदां दृष्ट्वा युधिष्ठिरः ॥ ३८ ॥ गदामेवाग्रहीत् क्रुद्धश्चिक्षेप च परन्तप । ते गदे सहसा मुक्ते समासाद्य परस्परम् ॥ ३९ ॥ सङ्घर्षात् पावकं मुक्त्वा समेयातां महीतले । ततो द्रोणो भृशं

ক্রুদ্ধো ধর্ম্মরাজস্য মারিষ ॥ ৪০ ॥ চতুর্ভির্নিশিতৈস্তীক্ষ্ণৈর্হয়ান্
জঘ্নে শরোত্তমৈঃ। চিচ্ছেদৈকেন ভল্লেন ধনুশ্চেন্দ্রধ্বজোপমম্ ॥ ৪১ ॥
কেতুমেকেন চিচ্ছেদ পাণ্ডবস্যাহ্বয়চ্ছিভিঃ। হতাশ্বাত্তু রথাত্তূর্ণ-
মবপ্লুত্য যুধিষ্ঠিরঃ ॥ ৪২ ॥ তস্থাবুদ্ধৃভুজো রাজা ব্যায়ুধো
ভরতর্ষভ। বিরথং তং সমালোক্য ব্যায়ুধঞ্চ বিশেষতঃ ॥ ৪৩ ॥
দ্রোণো ব্যমোহয়চ্ছত্রূন্ সর্ব্বসৈন্যানি বা বিভো। মুঞ্চন্নিষুগণাং-
স্তীক্ষ্ণান্ লঘুহস্তো দৃঢ়ব্রতঃ ॥ ৪৪ ॥ অভিদুদ্রাব রাজানং সিংহো
মৃগমিবোল্বণঃ। তমভিদ্রুতমালোক্য দ্রোণেনামিত্রঘাতিনা ॥ ৪৫ ॥
হাহেতি সহসা শব্দঃ পাণ্ডূনাং সমজায়ত। হৃতো রাজা হৃতো
রাজা ভারদ্বাজেন মারিষ ॥ ৪৬ ॥ ইত্যাসীৎ সুমহান্ শব্দঃ
পাণ্ডুসৈন্যস্য ভারত। ততস্ত্বরিতমারুহ্য সহদেবরথং নৃপঃ।
অপায়াজ্জবনৈরশ্বৈঃ কুন্তীপুত্রো যুধিষ্ঠিরঃ ॥ ৪৭ ॥

ইতি দ্রোণপর্ব্বণি জয়দ্রথবধপর্ব্বণি যুধিষ্ঠিরাপযানে
ষড়ধিকশতোঽধ্যায় ॥ ১০৬ ॥

---

সঞ্জয় উবাচ। বৃহৎক্ষত্রমথায়ান্তং কৈকেয়ং দৃঢ়বিক্রমম্।
ক্ষেমধূর্ত্তির্মহারাজ বিব্যাধোরসি মার্গণৈঃ ॥ ১ ॥ বৃহৎক্ষত্রস্তু
তং রাজা নবত্যা নতপর্ব্বণাম্। আজঘ্নে ত্বরিতো রাজন্ দ্রোণা-
নীক বিভিৎসয়া ॥ ২ ॥ ক্ষেমধূর্ত্তিস্তু সংক্রুদ্ধঃ কৈকেয়স্য মহাত্মনঃ।
ধনুশ্চিচ্ছেদ ভল্লেন পীতেন নিশিতেন চ ॥ ৩ ॥ অথৈনং ছিন্নধন্বানং
শরেণানতপর্ব্বণা। বিব্যাধ সমরে তূর্ণং প্রবরং সর্ব্বধন্বিনাম্ ॥ ৪ ॥
অথান্যদ্ধনুরাদায় বৃহৎক্ষত্রো হসন্নিব। ব্যশ্বসূতরথঞ্চক্রে ক্ষেম-
ধূর্ত্তিং মহারথম্ ॥ ৫ ॥ ততোঽপরেণ ভল্লেন পীতেন নিশিতেন চ।
জহার নৃপতেঃ কায়াৎ শিরো জ্বলিতকুণ্ডলম্ ॥ ৬ ॥ তচ্ছিন্নং
সহসা তস্য শিরঃ কুঞ্চিতমূর্দ্ধজম্। সকিরীটং মহীং প্রাপ্য বভৌ

ज्योतिरिवाम्बरात् ॥ ७ ॥ तं निरीक्ष्य रणे हृष्टो हृदत्वरो
महारथः। सहसाभ्यपतत्सैन्यं तावकं पार्थकारणात् ॥ ८ ॥
धृष्टकेतुं तदायान्तं द्रोणहेतोः पराक्रमी। वीरधन्वा महेष्वासो
वारयामास भारत ॥ ९ ॥ तौ परस्परमासाद्य शरदंष्ट्रौ तर-
स्विनौ। शरैरनेकसाहस्रैरन्योऽन्यमभिजघ्नतुः ॥ १० ॥ तावुभौ
नरशार्दूलौ युयुधाते परस्परम्। महावने तीव्रमदौ वारणाविव
यूथपौ ॥ ११ ॥ गिरिगह्वरमासाद्य शार्दूलाविव रोषितौ।
युयुधाते महावीर्य्यौ परस्परजिघांसया ॥ १२ ॥ तद्युद्धमासी-
त्तुमुलं प्रेक्षणीयं विशाम्पते। सिद्धचारणसङ्घानां विस्मयाद्भुत-
दर्शनम् ॥ १३ ॥ वीरधन्वा ततः क्रुद्धो धृष्टकेतोः शरासनम्।
द्विधा चिच्छेद भल्लेन प्रहसन्निव भारत ॥ १४ ॥ तदुत्सृज्य
धनुश्छिन्नं चेदिराजो महारथः। शक्तिं जग्राह विपुलां हेम-
दण्डामयस्मयीम् ॥ १५ ॥ तान्तु शक्तिं महावीर्य्यां दोर्भ्यामायम्य
भारत। चिक्षेप सहसा यत्तो वीरधन्वरथम्प्रति ॥ १६ ॥ तया
स वीरघातिन्या भृशया त्वभिहतो भृशम्। निर्भिन्नहृदयस्तूर्णं
निपपात रथान्महीम् ॥ १७ ॥ तस्मिन् विनिहते वीरे त्रैगर्त्तानां
महारथे। बलन्तेऽभज्यत विभो पाण्डवेयैः समन्ततः ॥ १८ ॥
सहदेवे ततः षष्टिं सायकान् दुर्मुखोऽक्षिपत्। ननाद च महा-
नादं तर्ज्जयन् पाण्डवं रणे ॥ १९ ॥ माद्रेयस्तु ततः क्रुद्धो दुर्मु-
खञ्च शितैः शरैः। भ्राता भ्रातरमायान्तं विव्याध प्रहसन्निव
॥ २० ॥ तं रणे रभसं दृष्ट्वा सहदेवो महाबलम्। दुर्मुखं
नवभिर्बाणैस्ताडयामास भारत ॥ २१ ॥ दुर्मुखस्य तु भल्लेन
छित्त्वा केतुं महाबलः। जघान चतुरो वाहांश्चतुर्भिर्निशितैः शरैः
॥ २२ ॥ अथापरेण भल्लेन पीतेन निशितेन च। चिच्छेद सारथेः
कायाच्छिरो ज्वलितकुण्डलम् ॥ २३ ॥ क्षुरप्रेण च तीक्ष्णेन कौर-
व्यस्य महद्धनुः। सहदेवो रणे छित्त्वा तञ्च विव्याध पञ्चभिः ॥ २४ ॥

हतोऽश्वस्तु रथं त्यक्त्वा दुर्मुखो विमनास्तदा । आरुरोह रथं
राजन्निरमित्रस्य भारत ॥ २५ ॥ सहदेवस्ततः क्रुद्धो निरमित्रं
महाहवे । जघान पृतनामध्ये भल्लेन परवीरहा ॥ २६ ॥ स
पपात रथोपस्थान्निरमित्रो जनेश्वरः । त्रिगर्त्तराजस्य सुतो
व्यथयंस्तव वाहिनीम् ॥ २७ ॥ तन्तु हत्वा महाबाहुः सहदेवो
व्यरोचत । यथा दाशरथी रामः खरं हत्वा महाबलम् ॥ २८ ॥
हाहाकारो महानासीत् त्रिगर्त्तानां जनेश्वर । राजपुत्रं हतं
दृष्ट्वा निरमित्रं महारथम् ॥ २९ ॥ नकुलस्ते सुतं राजन् विकर्णं
पृथुलोचनम् । मुहूर्त्ताज्जितवान् संख्ये तदद्भुतमिवाभवत् ॥ ३० ॥
सात्यकिं व्याघ्रदत्तस्तु शरैः सन्नतपर्व्वभिः । चक्रेऽदृश्यं साश्वसूतं
सध्वजं पृतनान्तरे ॥ ३१ ॥ तान्निवार्य्य शरान् शूरः शैनेयः कृत-
हस्तवत् । साश्वसूतध्वजं वाणैर्व्याघ्रदत्तमपातयत् ॥ ३२ ॥ कुमारे
निहते तस्मिन् मागधस्य सुते प्रभो । मागधाः सर्व्वतो यत्ता
युयुधानमुपाद्रवन् ॥ ३३ ॥ विसृजन्तः शरांश्चैव तोमरांश्च सह-
स्रशः । भिन्दिपालांस्तथा प्रासान् मुद्गरान् मुषलानपि ॥ ३४ ॥
अयोधयंस्ते शूराः सात्वतं युद्धदुर्म्मदम् । तांस्तु सर्व्वान् स बल-
वान् सात्यकिर्युद्धदुर्म्मदः ॥ ३५ ॥ नातिकृच्छ्राद्धसन्नेव विजिग्ये
पुरुषर्षभः । मागधान् द्रवतो दृष्ट्वा हतशेषान् समन्ततः ॥ ३६ ॥
बलन्तेऽभज्यत विभो युयुधानशरार्द्दितम् । नाशयित्वा रणे सैन्यं
त्वदीयं माधवोत्तमः ॥ ३७ ॥ विधुन्वानो धनुःश्रेष्ठं व्यभ्राजत
महायशाः । भज्यमानं बलं राजन् सात्वतेन महात्मना ॥ ३८ ॥
नाभ्यवर्त्तत युद्धाय त्रासितं दीर्घबाहुना । ततो द्रोणो भृशं क्रुद्धः
सहसोद्वृत्य चक्षुषी । सात्यकिं सत्यकर्म्माणं स्वयमेवाभिदुद्रुवे ॥ ३९ ॥

इति द्रोणपर्व्वणि जयद्रथवधपर्व्वणि सात्यकियुद्धे
सप्ताधिकशतोऽध्यायः ॥ १०७ ॥

---

ज्योतिरिवाम्बरात् ॥ ७ ॥ तं निरीक्ष्य रणे हृष्टो दृढहस्तो
महारथः । सहसाभ्यपतत्तूर्णं तावकं पार्थकारणात् ॥ ८ ॥
धृष्टकेतुं तदायान्तं द्रोणहेतोः पराक्रमी । वीरधन्वा महेष्वासो
वारयामास भारत ॥ ९ ॥ तौ परस्परमासाद्य शरदंष्ट्रौ तर-
स्विनौ । शरैरनेकसाहस्रैरन्योऽन्यमभिजघ्नतुः ॥ १० ॥ तावुभौ
नरशार्दूलौ युयुधाते परस्परम् । महावने तीव्रमदौ वारणाविव
यूथपौ ॥ ११ ॥ गिरिगह्वरमासाद्य शार्दूलाविव रोषितौ ।
युयुधाते महावीर्य्यौ परस्परजिघांसया ॥ १२ ॥ तद्युद्धमासी-
त्तुमुलं प्रेक्षणीयं विशाम्पते । सिद्धचारणसङ्घानां विस्मयाद्भुत-
दर्शनम् ॥ १३ ॥ वीरधन्वा ततः क्रुद्धो धृष्टकेतोः शरासनम् ।
द्विधा चिच्छेद भल्लेन प्रहसन्निव भारत ॥ १४ ॥ तदुत्सृज्य
धनुश्छिन्नं चेदिराजो महारथः । शक्तिं जग्राह विपुलां हेम-
दण्डामयस्मयीम् ॥ १५ ॥ तान्तु शक्तिं महावीर्य्यां दोर्भ्यामायम्य
भारत । चिक्षेप सहसा यत्तो वीरधन्वरथं प्रति ॥ १६ ॥ तया
तु वीरघातिन्या शक्त्या त्वभिहतो भृशम् । निर्भिन्नहृदयस्तूर्णं
निपपात रथान्महीम् ॥ १७ ॥ तस्मिन् विनिहते वीरे त्रैगर्त्तानां
महारथे । बलन्तेऽभज्यत विभो पाण्डवेयैः समन्ततः ॥ १८ ॥
सहदेवे ततः षष्टिं सायकान् दुर्मुखोऽक्षिपत् । ननाद च महा-
नादं तर्ज्जयन् पाण्डवं रणे ॥ १९ ॥ माद्रेयस्तु ततः क्रुद्धो दुर्मु-
खञ्च शितैः शरैः । भ्राता भ्रातरमायान्तं विव्याध प्रहसन्निव
॥ २० ॥ तं रणे रभसं दृष्ट्वा सहदेवो महाबलम् । दुर्मुखं
नवभिर्बाणैस्ताडयामास भारत ॥ २१ ॥ दुर्मुखस्य तु भल्लेन
छित्त्वा केतुं महाबलः । जघान चतुरो वाहांश्चतुर्भिर्निशितैः शरैः
॥ २२ ॥ अथापरेण भल्लेन पीतेन निशितेन च । चिच्छेद सारथेः
कायाच्छिरो ज्वलितकुण्डलम् ॥ २३ ॥ क्षुरप्रेण च तीक्ष्णेन कौर-
व्यस्य महद्धनुः । सहदेवो रणे छित्त्वा तञ्च विव्याध पञ्चभिः ॥ २४ ॥

हताश्वन्तु रथं त्यक्त्वा दुर्मुखो विमनास्तदा । आरुरोह रथं
राजन्निरमित्रस्य भारत ॥ २५ ॥ सहदेवस्ततः क्रुद्धो निरमित्रं
महाहवे । जघान पृतनामध्ये भल्लेन परवीरहा ॥ २६ ॥ स
पपात रथोपस्थान्निरमित्रो जनेश्वरः । त्रिगर्त्तराजस्य सुतो
व्यथयंस्तव वाहिनीम् ॥ २७ ॥ तन्तु हत्वा महाबाहुः सहदेवो
व्यरोचत । यथा दाशरथी रामः खरं हत्वा महाबलम् ॥ २८ ॥
हाहाकारो महानासीत् त्रिगर्त्तानां जनेश्वर । राजपुत्रं हतं
दृष्ट्वा निरमित्रं महारथम् ॥ २९ ॥ नकुलस्ते सुतं राजन् विकर्णं
पृथुलोचनम् । मुहूर्त्ताज्जितवान् संख्ये तदद्भुतमिवाभवत् ॥ ३० ॥
सात्यकिं व्याघ्रदत्तस्तु शरैः सन्नतपर्वभिः । चक्रेऽदृश्यं साश्वसूतं
सध्वजं पृतनान्तरे ॥ ३१ ॥ तान्निवार्य्य शरान् शूरः शैनेयः कृत-
हस्तवत् । साश्वसूतध्वजं बाणैर्व्याघ्रदत्तमपातयत् ॥ ३२ ॥ कुमारे
निहते तस्मिन् मागधस्य सुते प्रभो । मागधाः सर्वतो यत्ता
युयुधानमुपाद्रवन् ॥ ३३ ॥ विसृजन्तः शरांश्चैव तोमरांश्च सह-
स्रशः । भिन्दिपालांस्तथा प्रासान् मुद्गरान् मुषलानपि ॥ ३४ ॥
अयोधयन् रणे शूराः सात्वतं युद्धदुर्म्मदम् । तांस्तु सर्वान् स बल-
वान् सात्यकिर्युद्धदुर्म्मदः ॥ ३५ ॥ नातिकृच्छ्राद्धसन्नेव विजिग्ये
पुरुषर्षभ । मागधान् द्रवतो दृष्ट्वा हतशेषान् समन्ततः ॥ ३६ ॥
बलन्तेऽभज्यत विभो युयुधानशरार्द्दितम् । नाशयित्वा रणे सैन्यं
त्वदीयं माधवोत्तमः ॥ ३७ ॥ विधुन्वानो धनुःश्रेष्ठं व्यभ्राजत
महायशाः । भज्यमानं बलं राजन् सात्वतेन महात्मना ॥ ३८ ॥
नाभ्यवर्त्तत युद्धाय त्रासितं दीर्घबाहुना । ततो द्रोणो भृशं क्रुद्धः
सहसोद्वृत्य चक्षुषी । सात्यकिं सत्यकर्म्माणं स्वयमेवाभिदुद्रुवे ॥ ३९ ॥

इति द्रोणपर्व्वणि जयद्रथवधपर्व्वणि सात्यकियुद्धे
सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥

---

सञ्जय उवाच। द्रौपदेयान्महेष्वासान् सौमदत्तिर्महायशाः।
एकैकं पञ्चभिर्विद्ध्वा पुनर्विव्याध सप्तभिः ॥ १ ॥ ते पीडिता भृश
तेन रौद्रेण सहसा विभो। प्रमूढा नैव विविदुर्मृधे कृत्यं स्म
किञ्चन ॥ २ ॥ नाकुलिस्तु शतानीकः सौमदत्तिं नरर्षभम्।
द्वाभ्यां विद्ध्वानदद्‌हृष्टः शराभ्यां शत्रुकर्षणः ॥ ३ ॥ तथेतरे रणे
यत्तास्त्रिभिस्त्रिभिरजिह्मगैः। विव्यधुः समरे तूर्णं सौमदत्ति-
ममर्षणम् ॥ ४ ॥ स तान् प्रति महाराज चिक्षेप पञ्च सायः
कान्। एकैकं हृदि चाजघ्ने एकैकेन महायशाः ॥ ५ ॥ ततस्ते
भ्रातरः पञ्च शरैर्विद्ध्वा महात्मना। परिवार्य रणे वीरं विव्यधुः
सायकैर्भृशम् ॥ ६ ॥ आर्जुनिस्तु हयांस्तस्य चतुर्भिर्निशितैः शरैः।
प्रेषयामास सङ्क्रुद्धो यमस्य सदनं प्रति ॥ ७ ॥ भैमसेनिर्धनु-
श्छित्त्वा सौमदत्तेर्महात्मनः। ननाद बलवन्नादं विव्याध च शितैः
शरैः ॥ ८ ॥ यौधिष्ठिरिर्ध्वजं तस्य छित्त्वा भूमावपातयत्।
नाकुलिश्चाथ यन्तारं रथनीडादपाहरत् ॥ ९ ॥ साहदेविस्तु
तं ज्ञात्वा भ्रातृभिर्विमुखीकृतम्। क्षुरप्रेण शिरो राजन्निचकर्त
महात्मनः ॥ १० ॥ तच्छिरो न्यपतद्भूमौ तपनीयविभूषितम्।
भ्राजयन्तं रणोद्देशं बालसूर्यसमप्रभम् ॥ ११ ॥ सौमदत्तेः
शिरो दृष्ट्वा निहतं तन्महात्मनः। वित्रस्तास्तावका राजन् प्र-
दुद्रुवुरनेकधा ॥ १२ ॥ अलम्बुषस्तु समरे भीमसेनं महाबलम्।
योधयामास सङ्क्रुद्धो लक्ष्मणं रावणिर्यथा ॥ १३ ॥ सम्प्रयुद्धौ
रणे दृष्ट्वा तावुभौ नरराक्षसौ। विस्मयः सर्वभूतानां प्रहर्षः
समजायत ॥ १४ ॥ आर्ष्यशृङ्गिं ततो भीमो नवभिर्निशितैः शरैः।
विव्याध प्रहसन् राजन् राक्षसेन्द्रममर्षणम् ॥ १५ ॥ तद्रक्षः
समरे विद्धं कृत्वा नादं भयावहम्। अभ्यद्रवत्ततो भीमं ये च
तस्य पदानुगाः ॥ १६ ॥ स भीमं पञ्चभिर्विद्ध्वा शरैः सन्नत-
पर्वभिः। भैमान् परिजघानाशु रथांस्त्रिंशतमाहवे ॥ १७ ॥

पुनश्चतुःशतान् हत्वा भीमं विव्याध पत्रिणा । सोऽतिविद्धस्तथा
भीमो राक्षसेन महाबल ॥ १८ ॥ निषसाद रथोपस्थे मूर्च्छ-
याभिपरिप्लुतः । प्रतिलभ्य ततः संज्ञां मारुतिः क्रोधमूर्च्छितः
॥ १९ ॥ विकृष्य कार्मुकं घोरं भारसाधनमुत्तमम् । अलम्बुषं
शरैस्तीक्ष्णैरर्दयामास सर्वतः ॥ २० ॥ स विद्धो बहुभिर्बाणै-
र्नीलाञ्जनचयोपम । शुशुभे सर्वतो राजन् प्रफुल्ल इव किंशुकः
॥ २१ ॥ स वध्यमानः समरे भीमचापच्युतैः शरैः । स्मरन्
भ्रातृवधञ्चैव पाण्डवेन महात्मना ॥ २२ ॥ घोरं रूपमथो कृत्वा
भीमसेनमभाषत । तिष्ठेदानीं रणे पार्थ पश्य मेऽद्य पराक्रमम्
॥ २३ ॥ बको नाम सुदुर्बुद्धे राक्षसप्रवरो बली । परोक्षं मम
तद्वृत्तं यद्भ्राता मे हतस्त्वया ॥ २४ ॥ एवमुक्त्वा ततो भीममन्त-
र्धानं गतस्तदा । महता शरवर्षेण भृशं तं समवाकिरत् ॥ २५ ॥
भीमस्तु समरे राजन्नदृश्ये राक्षसे तदा । आकाशं पूरयामास
शरैः सन्नतपर्वभिः ॥ २६ ॥ स वध्यमानो भीमेन निमेषाद्रथ-
मास्थितः । जगाम धरणीञ्चैव क्षुद्रः खं सहसागमत् ॥ २७ ॥
उच्चावचानि रूपाणि चकार सुबहूनि च । अणुर्बृहत् पुनः
स्थूलो नादं मुञ्चन्निवाम्बुदः ॥ २८ ॥ उच्चावचास्तथा वाचो व्याज-
हार समन्ततः । निपेतुर्गगनाच्चैव शरधाराः सहस्रशः ॥ २९ ॥
शक्तयः कुणपाः प्रासाः शूलपट्टिशतोमराः । शतघ्न्यः परिघाश्चैव
भिन्दिपालाः परश्वधाः ॥ ३० ॥ शिलाः खड्गगुडाश्चैव ऋष्टि-
र्वज्राणि चैव च । सा राक्षसविसृष्टा तु शस्त्रवृष्टिः सुदारुणा
॥ ३१ ॥ जघान पाण्डुपुत्रस्य सैनिकान् रणमूर्द्धनि । तेन पाण्डव-
सैन्यानां मृदिता युधि वारणाः ॥ ३२ ॥ हयाश्च बहवो राजन्
पत्तयश्च तथा पुनः । रथेभ्यो रथिनः पेतुस्तस्य नुन्नाः स सायकैः
॥ ३३ ॥ शोणितोदां रथावर्त्तां हस्तिग्राहसमाकुलाम् । छत्र-
हंसां कर्दमिनीं बाहुपन्नगसङ्कुलाम् ॥ ३४ ॥ नदीं प्रावर्त्तयामास

रक्षोगणसमाकुलाम् । वदन्तीं बहुधा राजंश्छिन्धिपाटयसूद-
यान् ॥ ३५ ॥ तं तथा समरे राजन् विचरन्तमभीतवत् । पाण्डवा
भृशसंविग्नाः प्रापश्यंस्तस्य विक्रमम् ॥ ३६ ॥ तावकानान्तु सैन्यानां
प्रहर्षः समजायत । वादित्रनिनदश्चोग्रः सुमहाल्लोमहर्षणः ॥ ३७ ॥
तं श्रुत्वा निनदं घोरं तव सैन्यस्य पाण्डवः । नामृष्यत यथा
नागस्तलशब्दं समीरितम् ॥ ३८ ॥ ततः क्रोधाभिताम्राक्षो
निर्दहन्निव पावकः । सन्दधे त्वाष्ट्रमस्त्रं स स्वयं त्वष्टेव मारिष
॥ ३९ ॥ ततः शरसहस्राणि प्रादुरासन् समन्ततः । तैः शरै-
स्तव सैन्यस्य विद्रवः सुमहानभूत् ॥ ४० ॥ तदस्त्रं प्रेरितं तेन
भीमसेनेन संयुगे । राक्षसस्य महामायां हत्वा राक्षसमार्दयत्
॥ ४१ ॥ स वध्यमानो बहुधा भीमसेनेन राक्षसः । सन्त्यज्य
समरे भीमं द्रोणानीकमुपाद्रवत् ॥ ४२ ॥ तस्मिंस्तु निर्जिते
राजन् राक्षसेन्द्रे महात्मना । अनादयन् सिंहनादैः पाण्डवाः सर्वतो
दिशम् ॥ ४३ ॥ अपूजयन् मारुतिञ्च संहृष्टास्ते महाबलम् । प्रह्लादं
समरे जित्वा यथा शक्रं मरुद्गणाः ॥ ४४ ॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि अलम्बुषपराजये
अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

---

सञ्जय उवाच । अलम्बुषं तथा युद्धे विचरन्तमभीतवत् ।
हैडिम्बः प्रययौ तूर्णं विव्याध निशितैः शरैः ॥ १ ॥ तयोः प्रति-
भयं युद्धमासीद्राक्षससिंहयोः । कुर्वतोर्विविधा मायाः शक्रशम्ब-
रयोरिव ॥ २ ॥ अलम्बुषो भृशं क्रुद्धो घटोत्कचमताडयत् ।
तयोर्युद्धं समभवद्रक्षोग्रामणिमुख्ययोः ॥ ३ ॥ यादृगेव पुरा वृत्तं
रामरावणयोः प्रभो । घटोत्कचस्तु विंशत्या नाराचानां स्तना-
न्तरे ॥ ४ ॥ अलम्बुषमथो विद्ध्वा सिंहवद्व्यनदन्मुहुः । तथै-

ह्यालम्बुषो राजन् हैडिम्बं युद्धदुर्मदम् ॥ ५ ॥ विद्ध्वा विद्ध्वानदद्-
धृष्टः पूरयन् खं समन्ततः । तथा तौ भृशसंक्रुद्धौ राक्षसेन्द्रौ
महाबलौ ॥ ६ ॥ निर्विशेषमयुध्येतां मायाभिरितरेतरम् । मायि-
शतसृजौ नित्यं मोहयन्तौ परस्परम् ॥ ७ ॥ मायायुद्धेषु कुशलौ
मायायुद्धमयुद्ध्यताम् । यां यां घटोत्कचो युद्धे मायां दर्शयते
नृप ॥ ८ ॥ तां तामलम्बुषो राजन् माययैव निजघ्निवान् । तं
तथा युद्ध्यमानन्तु मायायुद्धविशारदम् ॥ ९ ॥ अलम्बुषं राक्ष-
सेन्द्रं दृष्ट्वाक्रुध्यन्त पाण्डवाः । त एनं भृशसंविग्नाः सर्वतः प्रवरा
रथैः ॥ १० ॥ अभ्यद्रवन्त संक्रुद्धा भीमसेनादयो नृप । त एनं
कोष्ठकीकृत्य रथवंशेन मारिष ॥ ११ ॥ सर्वतो व्यकिरन् बाणै-
रुल्काभिरिव कुञ्जरम् । स तेषामस्त्रवेगं तं प्रतिहन्यास्त्रमायया
॥ १२ ॥ तस्माद्रथव्रजान्मुक्तो वनदाहादिव द्विपः । स विस्फार्य्य
धनुर्घोरमिन्द्राशनिसमस्वनम् ॥ १३ ॥ मारुतिं पञ्चविंशत्या भैम-
सेनिञ्च पञ्चभिः । युधिष्ठिरं त्रिभिर्विद्ध्वा सहदेवञ्च सप्तभिः ॥ १४ ॥
नकुलञ्च त्रिसप्तत्या द्रौपदेयांश्च मारिष । पञ्चभिः पञ्चभिर्विद्ध्वा
घोरं नादं ननाद च ॥ १५ ॥ तं भीमसेनो नवभिः सहदेवस्तु
पञ्चभिः । युधिष्ठिरः शतेनैव राक्षसं प्रत्यविध्यत ॥ १६ ॥ नकुलस्तु
चतुःषष्ट्या द्रौपदेयास्त्रिभिस्त्रिभिः । हैडिम्बो राक्षसं विद्ध्वा
युद्धे पञ्चशता शरैः ॥ १७ ॥ पुनर्विव्याध सप्तत्या ननाद च महा-
बलः । तस्य नादेन महता कम्पितेयं वसुन्धरा ॥ १८ ॥ स-
पर्व्वतवना राजन् सपादपजलाशया । सोऽतिविद्धो महेष्वासैः
सर्व्वतस्तैर्महारथैः ॥ १९ ॥ प्रतिविव्याध तान् सर्व्वान् पञ्चभिः
पञ्चभिः शरैः । तं क्रुद्धं राक्षसं युद्धे प्रतिक्रुद्धस्तु राक्षसः ॥ २० ॥
हैडिम्बो भरतश्रेष्ठ शरैर्विव्याध सप्तभिः । सोऽतिविद्धो बलवता
राक्षसेन्द्रो महाबलः ॥ २१ ॥ व्यसृजत् सायकांस्तूर्णं स्वर्णपुङ्खान्
शिलाशितान् । ते शरा नतपर्व्वाणो विविशू राक्षसं तदा ॥ २२ ॥

हृषिता पन्नगा यद्वर्हिनिर्मुक्ता महावना । ततस्ते पाण्डवा
राजन् समन्तान्निशितान्छरान् ॥ २३ ॥ प्रेषयामासुराहत्य
हैडिम्बश्च घटोत्कच । स बध्यमान समरे पाण्डवैर्जितकाशिभि
॥ २४ ॥ मर्त्यधर्ममनुप्राप्य कर्त्तव्य नान्वपद्यत । तत समरशौण्डो
वै भैमसेनिर्महाबल ॥ २५ ॥ समीक्ष्य तदवस्थ त वधायास्य
मनो दधे । वेगञ्चक्रे महान्तञ्च राक्षसेन्द्ररथम्प्रति ॥ २६ ॥
दग्धाद्रिकूटशृङ्गाभ भिन्नाञ्जनचयोपमम् । रथाद्रथमभिद्रुत्य क्रुद्धो
हैडिम्बिराक्षिपत् ॥ २७ ॥ उद्ववर्ह रथाच्चापि पन्नग गरुडो
यथा । समुत्क्षिप्य च बाहुभ्यामाविध्य च पुन पुन ॥ २८ ॥
निष्पिपेष क्षितौ क्षिप्र पूर्ण कुम्भमिवाश्मनि । बललाघवसम्पन्न
सम्पन्नो विक्रमेण च ॥ २९ ॥ भैमसेनी रणे क्रुद्ध सर्वसैन्यान्य
भीषयत् । सविस्फोटितसर्वाङ्गश्चूर्णितास्थिर्विभीषण ॥३०॥ घटोत्
कचेन वीरेण हत शालकटङ्कट । तत सुमनस पार्था हते
तस्मिन्निशाचरे ॥ ३१ ॥ चक्रुशु सिंहनादाश्च वासांस्यादुधुवुश्
च । तावकाश्च हत दृष्ट्वा राक्षसेन्द्र महाबलम् ॥ ३२ ॥ अलम्बुष
तथा शूरा विशीर्णमिव पर्वतम् । हाहाकारमकार्षुश्च सैन्यानि
भरतर्षभ ॥ ३३ ॥ जनाश्च तद्ददृशिरे रक्ष कौतूहलान्विता ।
यदृच्छया निपतित भूमावङ्गारक यथा ॥ ३४ ॥ घटोत्कचस्तु
तद्धत्वा रक्षोबलवताम्वर । मुमोच बलवन्नाद बल हत्वेव वासव
॥ ३५ ॥ स पूज्यमान पितृभि सबान्धवैर्घटोत्कच कर्मणि दुष्करे
कृते । रिपु निहत्याभिननन्द वै तदा ह्यलम्बुष पक्वमलम्बुष
यथा ॥ ३६ ॥ ततो निनाद सुमहान् समुत्थित सशङ्खनानाविध
बाणघोषवान् । निशम्य त प्रत्यनदंस्तु कौरवास्ततो ध्वनिर्भुवन
मथास्पृशद्भृशम् ॥ ३७ ॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि अलम्बुषवधे
नवाधिकशततोऽध्याय ॥ १०९ ॥

धृतराष्ट्र उवाच । भारद्वाजं कथं युद्धे युयुधानो न्यवारयत् । सञ्जयाचक्ष्व तत्त्वेन परं कौतूहलं हि मे ॥ १ ॥

सञ्जय उवाच । शृणु राजन् महाप्राज्ञ सङ्ग्रामं लोमहर्षणम् । द्रोणस्य पाण्डवैः सार्द्धं युयुधानपुरोगमैः ॥ २ ॥ वध्यमानं बलं दृष्ट्वा युयुधानेन मारिष । अभ्यद्रवत स्वयं द्रोणः सात्यकिं सत्यविक्रमम् ॥ ३ ॥ तमापतन्तं सहसा भारद्वाजं महारथम् । सात्यकिः पञ्चविंशत्या क्षुद्रकाणां समार्पयत ॥ ४ ॥ द्रोणोऽपि युधि विक्रान्तो युयुधानं समाहितः । अविध्यत् पञ्चभिस्तूर्णं हेमपुङ्खैः शरैः शितैः ॥ ५ ॥ ते वर्म भित्त्वा सुदृढं द्विषत्पिशितभोजनाः । अभ्ययुर्धरणीं राजन् श्वसन्त इव पन्नगाः ॥ ६ ॥ दीर्घबाहुरभिक्रुद्धस्तोत्रार्दित इव द्विपः । द्रोणं पञ्चाशताविध्यन्नाराचैरग्निसन्निभैः ॥ ७ ॥ भारद्वाजो रणे विद्धो युयुधानेन सत्वरम् । सात्यकिं बहुभिर्बाणैर्यतमानमविध्यत ॥ ८ ॥ ततः क्रुद्धो महेष्वासो भूय एव महाबलः । सात्वतं पीडयामास शरेणानतपर्व्वणा ॥ ९ ॥ स वध्यमानः समरे भारद्वाजेन सात्यकिः । नान्वपद्यत कर्त्तव्यं किञ्चिदेव विशाम्पते ॥ १० ॥ विषण्णवदनश्चापि युयुधानोऽभवन्नृप । भारद्वाजं रणे दृष्ट्वा विसृजन्तं शितान् शरान् ॥ ११ ॥ तन्तु सम्प्रेक्ष्य ते पुत्राः सैनिकाश्च विशाम्पते । प्रहृष्टमनसो भूत्वा सिंहवद्व्यनदन् मुहुः ॥ १२ ॥ तं श्रुत्वा निनदं घोरं पीड्यमानञ्च माधवम् । युधिष्ठिरोऽब्रवीद्राजा सर्व्वसैन्यानि भारत ॥ १३ ॥ एष वृष्णिवरो वीरः सात्यकिः सत्यविक्रमः । ग्रस्यते युधि वीरेण भानुमानिव राहुणा ॥ १४ ॥ अभिद्रवत गच्छध्वं सात्यकिर्यत्र युध्यते । धृष्टद्युम्नञ्च पाञ्चाल्यमिदमाह जनाधिप ॥ १५ ॥ अभिद्रव द्रुतं द्रोणं किमु तिष्ठसि पार्षत । न पश्यसि भयं द्रोणाद्घोरं नः समुपस्थितम् ॥ १६ ॥ असौ द्रोणो महेष्वासो युयुधानेन संयुगे । क्रीडते सूत्रबद्धेन

पाञ्चाला पाण्डवाश्च ससैनिकाः ॥ ३४ ॥ न तथा समरे द्रोणं
निघ्नन्तं सोमकान् रणे । न चाप्यमित्रयुः केचिदपरे नैव विव्यधुः
॥ ३५ ॥ वर्त्तमाने तथा रौद्रे तस्मिन् वीरवरक्षये । अशृणोत्
सहसा पार्थः पाञ्चजन्यस्य निस्वनम् ॥ ३६ ॥ पूरितो वासुदेवेन
शङ्खराट् स्वनते भृशम् । युध्यमानेषु वीरेषु सैन्धवस्याभिरक्षिषु
॥ ३७ ॥ नदत्सु धार्त्तराष्ट्रेषु विजयस्य रथम्प्रति । गाण्डीवस्य
च निर्घोषे विप्रनष्टे समन्ततः ॥ ३८ ॥ कश्मलाभिहतो राजा
चिन्तयामास पाण्डवः । न नूनं स्वस्ति पार्थाय यथा नदति
शङ्खराट् ॥ ३९ ॥ कौरवाश्च यथा हृष्टा विनदन्ति मुहुर्मुहुः ।
एवं सञ्चिन्तयित्वा तु व्याकुलेनान्तरात्मना ॥ ४० ॥ अजातशत्रुः
कौन्तेयः सात्वतं प्रत्यभाषत । बाष्पगद्गदया वाचा मुह्यमानो
मुहुर्मुहुः । कृत्यस्यानन्तरापेक्षी शैनेयं शिनिपुङ्गवम् ॥ ४१ ॥

युधिष्ठिर उवाच । यः स धर्म्मः पुरा दृष्टः सद्भिः शैनेय
शाश्वतः । साम्पराये सुहृत्कृत्ये तस्य कालोऽयमागतः ॥ ४२ ॥
सर्व्वेष्वपि च योधेषु चिन्तयन् शिनिपुङ्गव । त्वत्तः सुहृत्तमं कञ्चि-
न्नाभिजानामि सात्यके ॥ ४३ ॥ यो हि प्रीतमना नित्यं यश्च
नित्यमनुव्रतः । स कार्य्ये साम्पराये तु नियोज्य इति मे मतिः
॥ ४४ ॥ यथा च केशवो नित्यं पाण्डवानां परायणम् । तथा
त्वमपि वार्ष्णेय कृष्णतुल्यपराक्रम ॥ ४५ ॥ सोऽहं भारं समा-
धास्ये त्वयि तं वोढुमर्हसि । अभिप्रायञ्च मे नित्यं न वृथा कर्त्तु-
मर्हसि ॥ ४६ ॥ स त्वं भ्रातुर्वयस्यस्य गुरोरपि च संयुगे । कुरु
कृच्छ्रे सहायार्थमर्ज्जुनस्य नरर्षभ ॥ ४७ ॥ त्वं हि सत्यव्रतः शूरो
मित्राणामभयङ्करः । लोके विख्यायसे वीर कर्म्मभिः सत्यवागिति
॥ ४८ ॥ यो हि शैनेय मित्रार्थे युध्यमानस्त्यजेत्तनुम् । पृथिवीञ्च
द्विजातिभ्यो यो दद्यात् स समो भवेत् ॥ ४९ ॥ श्रुताश्च बहवो-
ऽस्माभी राजानो ये दिवं गताः । दत्त्वेमां पृथिवीं कृत्स्नां ब्राह्म-

मग्निना बालको यथा ॥ १७ ॥ तवैव सर्वे गच्छन्तु भीमसेन-
पुरोगमाः। त्वयैव सहिताः सर्वे युयुधानरथं प्रति ॥ १८ ॥
पृष्ठतोऽनुगमिष्यामि त्वामहं सहसैनिकः। सात्यकिं मोचयस्वाद्य
यमदंष्ट्रान्तरं गतम् ॥ १९ ॥ एवमुक्त्वा ततो राजा सर्वसैन्येन
भारत। अभ्यद्रवद्रणे द्रोणं युयुधानस्य कारणात् ॥ २० ॥
तत्रारावो महानासीत् द्रोणमेकं युयुत्सताम्। पाण्डवानाञ्च
भद्रन्ते सृञ्जयानाञ्च सर्वशः ॥ २१ ॥ ते समेत्य नरव्याघ्र भार-
द्वाजं महारथम्। अभ्यवर्षंश्छरैस्तीक्ष्णैः कङ्कबर्हिणवाजितैः ॥२२॥
स्मयन्नेव तु तान् वीरान् द्रोणः प्रत्यग्रहीत् स्वयम्। अतिथी-
नागतान् यद्वत् सलिलेनासनेन च ॥ २३ ॥ तर्पितास्ते शरैस्तस्य
भारद्वाजस्य धन्विनः। आतिथेयं गृहं प्राप्य नृपतेऽतिथयो यथा
॥ २४ ॥ भारद्वाजञ्च ते सर्वे न शेकुः प्रतिवीक्षितुम्। मध्यन्दिन-
मनुप्राप्तं सहस्रांशुमिव प्रभो ॥ २५ ॥ तांस्तु सर्वान् महेष्वासान्
द्रोणः शस्त्रभृतां वरः। अतापयच्छरव्रातैर्गभस्तिभिरिवांशुमान्
॥ २६ ॥ वध्यमाना महाराज पाण्डवाः सृञ्जयास्तथा। त्रातारं
नाध्यगच्छन्त पङ्कमग्ना इव द्विपाः ॥ २७ ॥ द्रोणस्य च व्यदृश्यन्त
विसर्पन्तो महाशराः। गभस्तय इवार्कस्य प्रतपन्तः समन्ततः
॥ २८ ॥ तस्मिन् द्रोणेन निहताः पाञ्चालाः पञ्चविंशतिः। महा-
रथाः समाख्याता धृष्टद्युम्नस्य सम्मताः ॥ २९ ॥ पाण्डूनां सर्व-
सैन्येषु पाञ्चालानां तथैव च। द्रोणं स्म ददृशुः शूरं विनिघ्नन्तं
वरान् वरान् ॥ ३० ॥ केकयानां शतं हत्वा विद्राव्य च सम-
न्ततः। द्रोणस्तस्थौ महाराज व्यादितास्य इवान्तकः ॥ ३१ ॥
पाञ्चालान् सृञ्जयान् मत्स्यान् केकयांश्च नराधिप। द्रोणोऽजय-
न्महाबाहुः शतशोऽथ सहस्रशः ॥ ३२ ॥ तेषां समभवच्छब्दो
विद्धानां द्रोणसायकैः। वनौकसामिवारण्ये व्याप्तानां धूमकेतुना
॥ ३३ ॥ तत्र देवाः सगन्धर्वाः पितरश्चाब्रुवन्नृप। एते द्रवन्ति

पाञ्चालाः पाण्डवाश्च ससैनिकाः ॥ ३४ ॥ तं तथा समरे द्रोणं
निघ्नन्तं सोमकान् रणे । न चाप्यभिययुः केचिदपरे नैव विव्यधुः
॥ ३५ ॥ वर्त्तमाने तथा रौद्रे तस्मिन् वीरवरक्षये । अशृणोत्
सहसा पार्थः पाञ्चजन्यस्य निस्वनम् ॥ ३६ ॥ पूरितो वासुदेवेन
शङ्खराट् स्वनते भृशम् । युध्यमानेषु वीरेषु सैन्धवस्याभिरक्षिषु
॥ ३७ ॥ नदत्सु धार्त्तराष्ट्रेषु विजयस्य रथम् प्रति । गाण्डीवस्य
च निर्घोषे विप्रनष्टे समन्ततः ॥ ३८ ॥ कश्मलाभिहतो राजा
चिन्तयामास पाण्डवः । न नूनं स्वस्ति पार्थाय यथा नदति
शङ्खराट् ॥ ३९ ॥ कौरवाश्च यथा हृष्टा विनदन्ति मुहुर्मुहुः ।
एवं सञ्चिन्तयित्वा तु व्याकुलेनान्तरात्मना ॥ ४० ॥ अजातशत्रुः
कौन्तेयः सात्वतं प्रत्यभाषत । बाष्पगद्गदया वाचा मुह्यमानो
मुहुर्मुहुः । कृत्यस्यानन्तरापेक्षी शैनेयं शिनिपुङ्गवम् ॥ ४१ ॥
युधिष्ठिर उवाच । यः स धर्मः पुरा दृष्टः सद्भिः शैनेय
शाश्वतः । साम्पराये सुहृत्कृत्ये तस्य कालोऽयमागतः ॥ ४२ ॥
सर्व्वेष्वपि च योधेषु चिन्तयन् शिनिपुङ्गव । त्वत्तः सुहृत्तमं कञ्चि-
न्नाभिजानामि सात्यके ॥ ४३ ॥ यो हि प्रीतमना नित्यं यश्च
नित्यमनुव्रतः । स कार्य्यः साम्पराये तु नियोज्य इति मे मतिः
॥ ४४ ॥ यथा च केशवो नित्यं पाण्डवानां परायणम् । तथा
त्वमपि वार्ष्णेय कृष्णतुल्यपराक्रम ॥ ४५ ॥ सोऽहं भारं समा-
धास्ये त्वयि तं वोढुमर्हसि । अभिप्रायञ्च मे नित्यं न वृथा कर्त्तु-
मर्हसि ॥ ४६ ॥ स त्वं भ्रातुर्वयस्यस्य गुरोरपि च संयुगे । कुरु
कृच्छ्रे सहायार्थमर्ज्जुनस्य नरर्षभ ॥ ४७ ॥ त्वं हि सत्यव्रतः शूरो
मित्राणामभयङ्करः । लोके विख्यायसे वीर कर्म्मभिः सत्यवागिति
॥ ४८ ॥ यो हि शैनेय मित्रार्थे युध्यमानस्त्यजेत्तनुम् । पृथिवीञ्च
द्विजातिभ्यो यो दद्यात् स समो भवेत् ॥ ४९ ॥ श्रुताश्च बहवो-
ऽस्माभी राजानो ये दिवं गताः । दत्त्वेमां पृथिवीं कृत्स्नां ब्राह्म-

भ्यो यथाविधि ॥ ५० ॥ एवं त्वामपि धर्मात्मन् प्रयाचेऽहं
कृताञ्जलिः । पृथिवीदानतुल्यं स्यादधिकं वा फलं विभो ॥ ५१ ॥
एक एव सदा कृष्णो मित्राणामभयङ्करः । रणे सन्त्यजति प्राणान्
द्वितीयस्त्वन्तु सात्यके ॥ ५२ ॥ विक्रान्तस्य च वीरस्य युद्धे प्रार्थ-
यतो यशः । शूर एव सहायः स्यान्नेतरः प्राकृतो जनः ॥ ५३ ॥
ईदृशे तु परामर्शे वर्त्तमानस्य माधव । त्वदन्यो हि रणे गोप्ता
विजयस्य न विद्यते ॥ ५४ ॥ श्लाघन्नेव हि कर्माणि शतशस्तव
पाण्डवः । मम सञ्जनयन् हर्षं पुनः पुनरकीर्त्तयत् ॥ ५५ ॥
लघुहस्तश्चित्रयोधी तथा लघुपराक्रमः । प्राज्ञः सर्वास्त्रविच्छूरो
मुह्यते न च संयुगे ॥ ५६ ॥ महास्कन्धो महोरस्को महाबाहु-
र्महाहनुः । महाबलो महावीर्य्यः स महात्मा महारथः ॥ ५७ ॥
शिष्यो मम सखा चैव प्रियोऽस्याहं प्रियश्च मे । युयुधानः सहायो
मे प्रमथिष्यति कौरवान् ॥ ५८ ॥ अस्मदर्थञ्च राजेन्द्र सन्नह्ये-
द्यदि केशवः । रामो वाप्यनिरुद्धो वा प्रद्युम्नो वा महारथः
॥ ५९ ॥ गदो वा सारणो वापि साम्बो वा सह वृष्णिभिः ।
सहायार्थं महाराज सङ्ग्रामोत्तममूर्द्धनि ॥ ६० ॥ तथाप्यहं नर-
व्याघ्र शैनेयं सत्यविक्रमम् । साहाय्ये विनियोक्ष्यामि नास्ति
योऽन्यो हि तत्समः ॥ ६१ ॥ इति द्वैतवने तात मामुवाच धन-
ञ्जयः । परोक्षे त्वद्गुणांस्तथ्यान् कथयन्नार्य्यसंसदि ॥ ६२ ॥
तस्य त्वमेव सङ्कल्पं न वृथा कर्त्तुमर्हसि । धनञ्जयस्य वार्ष्णेय
मम भीमस्य चोभयोः ॥ ६३ ॥ यच्चापि तीर्थानि चरन्नगच्छं
द्वारकां प्रति । तत्राहमपि ते भक्तिमर्ज्जुनं प्रति दृष्टवान् ॥ ६४ ॥
न तत् सौहृदमन्येषु मया शैनेय लक्षितम् । यथा त्वमस्मान्
भजसे वर्त्तमानानुपप्लवे ॥ ६५ ॥ सोऽभिजात्या च भक्त्या च
सख्यस्याचार्य्यकस्य च । सौहृदस्य च वीर्य्यस्य कुलीनत्वस्य माधव
॥ ६६ ॥ सत्यस्य च महाबाहो अनुकम्पार्थमेव च । अनुरूपं

मद्विधानां कर्म त्वं कर्तुमर्हसि ॥ ६७ ॥ सुयोधनो हि सहसा
गतो द्रोणेन दंशितः । पूर्वमेवानुयातास्ते कौरवाणां महा-
रथाः ॥ ६८ ॥ सुमहान्निनदश्चैव श्रूयते विजयं प्रति । स शैनेय
जवेनाशु गन्तुमर्हसि मानद ॥ ६९ ॥ भीमसेनो वयञ्चैव सन्नद्धाः
सहसैनिकाः । द्रोणमावारयिष्यामो यदि त्वां प्रति यास्यति
॥ ७० ॥ पश्य शैनेय सैन्यानि द्रवमाणानि संयुगे । महान्तञ्च
रणे शब्दं दीर्यमाणाञ्च भारतीम् ॥ ७१ ॥ महामारुतवेगेन
समुद्रमिव पर्वसु । धार्त्तराष्ट्रबलं तात विक्षिप्तं सव्यसाचिना ॥ ७२ ॥
रथैर्विपरिधावद्भिर्मनुष्यैश्च हयैश्च ह । सैन्यं रजः समुद्भूतमेतत्
सम्परिवर्त्तते ॥ ७३ ॥ संवृतः सिन्धुसौवीरैर्नखरप्रासयोधिभिः ।
अत्यन्तोपचितैः शूरैः फाल्गुनः परवीरहा ॥ ७४ ॥ नैतद्बल-
मसंवार्य्य शक्यो जेतुं जयद्रथः । एते हि सैन्धवस्यार्थे सर्वे
सन्त्यक्तजीविताः ॥ ७५ ॥ शरशक्तिध्वजवरं हयनागसमाकुलम् ।
पश्यैतद्धार्त्तराष्ट्राणामनीकं सुदुरासदम् ॥ ७६ ॥ शृणु दुन्दुभि-
निर्घोषं शङ्खशब्दांश्च पुष्कलाम् । सिंहनादरवांश्चैव रथनेमिस्वनां-
स्तथा ॥ ७७ ॥ नागानां शृणु शब्दञ्च पत्तीनाञ्च सहस्रशः ।
सादिनां द्रवताञ्चैव शृणु कम्पयतां महीम् ॥ ७८ ॥ पुरस्तात्
सैन्धवानीकं द्रोणानीकञ्च पृष्ठतः । बहुत्वाद्धि नरव्याघ्र देवेन्द्र-
मपि पीडयेत् ॥ ७९ ॥ अपर्य्यन्ते बले मग्नो जह्यादपि च जीवि-
तम् । तस्मिंश्च निहते युद्धे कथं जीवेत मादृशः ॥ ८० ॥ सर्वथाह-
मनुप्राप्तः सुकृच्छ्रं त्वयि जीवति । श्यामो युवा गुडाकेशो दर्श-
नीयश्च पाण्डवः ॥ ८१ ॥ लघ्वस्त्रश्चित्रयोधी च प्रविष्टस्तात भार-
तीम् । सूर्योदये महाबाहुर्दिवसश्चातिवर्त्तते ॥ ८२ ॥ तन्न
जानामि वार्ष्णेय यदि जीवति वा न वा । कुरूणाञ्चापि तत्सैन्यं
सागरप्रतिमं महत् ॥ ८३ ॥ एक एव च बीभत्सुः प्रविष्टस्तात
भारतीम् । अविषह्यां महाबाहुः सुरैरपि महाहवे ॥ ८४ ॥

भ्यो यथाविधि ॥ ५० ॥ एवं त्वामपि धर्मज्ञ प्रयाचेऽहं
कृताञ्जलिः । पृथिवीदानतुल्यं स्यादधिकं वा फलं विभो ॥ ५१ ॥
एक एव सदा कृष्णो मित्राणामभयङ्करः । रणे सन्त्यजति प्राणान्
द्वितीयस्तु सात्यकिः ॥ ५२ ॥ विक्रान्तस्य च वीरस्य युद्धे प्रार्थ-
यतो यशः । शूर एव सहायः स्यान्नेतरः प्राकृतो जनः ॥ ५३ ॥
ईदृशे तु परामर्द्दे वर्त्तमानस्य माधव । त्वदन्यो हि रणे गोप्ता
विजयस्य न विद्यते ॥ ५४ ॥ श्लाघन्नेव हि कर्माणि शतशस्तव
पाण्डव । मम सञ्जनयन् हर्षं पुनः पुनरकीर्त्तयत् ॥ ५५ ॥
लघुहस्तश्चित्रयोधी तथा लघुपराक्रमः । प्राज्ञः सर्वास्त्रविच्छूरो
मुह्यते न च संयुगे ॥ ५६ ॥ महास्कन्धो महोरस्को महाबाहु-
र्महाहनुः । महाबलो महावीर्य्यः स महात्मा महारथः ॥ ५७ ॥
शिष्यो मम सखा चैव प्रियोऽस्याहं प्रियश्च मे । युयुधान सहायो
मे प्रमथिष्यति कौरवान् ॥ ५८ ॥ अस्मदर्थं च राजेन्द्र सन्नह्ये-
द्यदि केशवः । रामो वाप्यनिरुद्धो वा प्रद्युम्नो वा महारथः
॥ ५९ ॥ गदो वा सारणो वापि साम्बो वा सह वृष्णिभिः ।
साहाय्यार्थं महाराज संग्रामोत्तममूर्द्धनि ॥ ६० ॥ तथाप्यहं नर-
व्याघ्र शैनेयं सत्यविक्रमम् । साहाय्ये विनियोक्ष्यामि नास्ति
योऽन्यो हि तत्समः ॥ ६१ ॥ इति द्वैतवने तात मामुवाच धन-
ञ्जयः । परोक्षे त्वद्गुणांस्तथ्यान् कथयन्नार्य्यसंसदि ॥ ६२ ॥
तस्य त्वमेव सङ्कल्पं न वृथा कर्त्तुमर्हसि । धनञ्जयस्य वार्ष्णेय
मम भीमस्य चोभयोः ॥ ६३ ॥ यच्चापि तीर्थानि चरन्नगच्छं
द्वारकां प्रति । तत्राहमपि ते भक्तिमर्ज्जुनं प्रति दृष्टवान् ॥ ६४ ॥
न तत् सौहृदमन्येषु मया शैनेय लक्षितम् । यथा त्वमस्मान्
भजसे वर्त्तमानानुपप्लवे ॥ ६५ ॥ सोऽभिजात्या च भक्त्या च
सख्यस्याचार्य्यकस्य च । सौहृदस्य च वीर्य्यस्य कुलीनत्वस्य माधव
॥ ६६ ॥ सत्यस्य च महाबाहो अनुकम्पार्थमेव च । अनुरूपं

महेष्वास कर्म्म त्वं कर्त्तुमर्हसि ॥ ६७ ॥ सुयोधनो हि सहसा
गतो द्रोणेन दंशित । पूर्व्वमेवानुयातास्ते कौरवाणां महा-
रथा ॥ ६८ ॥ सुमहान्निनदश्चैव श्रूयते विजय प्रति । स शैनेय
जवेनाशु गन्तुमर्हसि मानद ॥ ६९ ॥ भीमसेनो वयञ्चैव सम्पन्नाः
सहसैनिका । द्रोणमावारयिष्यामो यदि त्वां प्रति यास्यति
॥ ७० ॥ पश्य शैनेय सैन्यानि द्रवमाणानि संयुगे । महान्तञ्च
रणे शब्दं दीर्य्यमाणाञ्च भारतीम् ॥ ७१ ॥ महामारुतवेगेन
समुद्रमिव पर्व्वसु । धार्त्तराष्ट्रबलं तात विक्षिप्तं सव्यसाचिना ॥७२॥
रथैर्विपरिधावद्भिर्मनुष्यैश्च हयैश्च ह । सैन्यं रजः समुद्धूतमेतत्
सम्परिवर्त्तते ॥ ७३ ॥ संवृतः सिन्धुसौवीरैर्नखरप्रासयोधिभिः ।
अत्यन्तोपचितैः शूरैः फाल्गुनः परवीरहा ॥ ७४ ॥ नैतद्बल-
मसंवार्य्य शक्यो जेतुं जयद्रथः । एते हि सैन्धवस्यार्थे सर्व्वे
सन्त्यक्तजीविताः ॥ ७५ ॥ शरशक्तिध्वजवरं हयनागसमाकुलम् ।
पश्यैतद्धार्त्तराष्ट्राणामनीकं सुदुरासदम् ॥ ७६ ॥ शृणु दुन्दुभि-
निर्घोषं शङ्खशब्दांश्च पुष्कलान् । सिंहनादरवांश्चैव रथनेमिस्वना-
स्तथा ॥ ७७ ॥ नागानां शृणु शब्दञ्च पत्तीनाञ्च सहस्रशः ।
सादिनां द्रवताञ्चैव शृणु कम्पयतां महीम् ॥ ७८ ॥ पुरस्तात्
सैन्धवानीकं द्रोणानीकञ्च पृष्ठतः । बहुत्वाद्धि नरव्याघ्र देवेन्द्र-
मपि पीडयेत् ॥ ७९ ॥ अपर्य्यन्ते बले मग्नो जह्यादपि च जीवि-
तम् । तस्मिंश्च निहते युद्धे कथं जीवेत मादृशः ॥ ८० ॥ सर्व्वथाह-
मनुप्राप्तः सुकृच्छ्रं त्वयि जीवति । श्यामो युवा गुडाकेशो दर्श-
नीयश्च पाण्डवः ॥ ८१ ॥ लघ्वस्त्रश्चित्रयोधी च प्रविष्टस्तात भार-
तीम् । सूर्य्योदये महाबाहुर्दिवसश्चातिवर्त्तते ॥ ८२ ॥ तन्न
जानामि वार्ष्णेय यदि जीवति वा न वा । कुरूणाञ्चापि तत्सैन्यं
सागरप्रतिमं महत् ॥ ८३ ॥ एक एव च बीभत्सुः प्रविष्टस्तात
भारतीम् । अविषह्यां महाबाहुः सुरैरपि महाहवे ॥ ८४ ॥

न हि मे वर्त्तते बुद्धिरद्य युद्धे कथञ्चन। द्रोणोऽपि रभसो युद्धे मम पीडयते बलम् ॥ ८५ ॥ प्रत्यक्षन्ते महाबाहो यथासौ चरति द्विज। युगपच्च समेतानां कार्य्याणाञ्च विचक्षण ॥ ८६ ॥ महार्थं लघुसंयुक्तं कर्त्तुमर्हसि मानद। तस्य मे सर्वकार्य्येषु कार्य्यमेतन्मतं महत् ॥ ८७ ॥ अर्ज्जुनस्य परित्राणं कर्त्तव्यमिति संयुगे। नाहं शोचामि दाशार्हं गोप्तारं जगतः पतिम् ॥ ८८ ॥ स हि शक्तो रणे तात त्रीन् लोकानपि सङ्गतान्। विजेतुं पुरुषव्याघ्र सत्यमेतद्ब्रवीमि ते ॥ ८९ ॥ किं पुनर्धार्त्तराष्ट्रस्य बलमेतत् सुदुर्बलम्। अर्ज्जुनस्त्वेष वार्ष्णेय पीडितो बहुभिर्युधि ॥ ९० ॥ प्रजह्यात् समरे प्राणान् तस्माद्विन्दामि कश्मलम्। तस्य त्वं पदवीं गच्छ गच्छेयुस्त्वादृशा यथा ॥ ९१ ॥ तादृशस्येदृशे काले मादृशेनाभिचोदितः। रणे वृष्णिप्रवीराणां द्वावेवातिरथौ स्मृतौ ॥ ९२ ॥ प्रद्युम्नश्च महाबाहुस्त्वञ्च सात्वत विश्रुतः। अस्त्रे नारायणसमः सङ्कर्षणसमो बले ॥ ९३ ॥ वीरतायां नरव्याघ्र धनञ्जयसमो ह्यसि। भीष्मद्रोणावतिक्रम्य सर्वयुद्धविशारदम् ॥ ९४ ॥ त्वामेव पुरुषव्याघ्र लोके सन्तः प्रचक्षते।

सत्यमेतन्मयोक्तन्ते याहि यत्र धनञ्जय । एतद्वचनमाज्ञाय मम सत्यपराक्रम ॥ १०२ ॥ प्रविशैतद्बलं तात धार्त्तराष्ट्रस्य दुर्मते । प्रविश्य च यथान्यायं सङ्गम्य च महारथैः । यथार्हमात्मनः कर्म रणे सात्वत दर्शय ॥ १०३ ॥

इति द्रोणपर्व्वणि जयद्रथवधपर्व्वणि युधिष्ठिरवाक्ये
दशाधिकशततोऽध्यायः ॥ ११० ॥

---

सञ्जय उवाच । प्रीतियुक्तञ्च हृद्यञ्च मधुराक्षरमेव च । कालयुक्तञ्च चित्रञ्च न्याय्यं यच्चापि भाषितम् ॥ १ ॥ धर्म्मराजस्य तद्वाक्यं निशम्य शिनिपुङ्गव । सात्यकिर्भरतश्रेष्ठ प्रत्युवाच युधिष्ठिरम् ॥ २ ॥ श्रुतं ते गदतो वाक्यं सर्व्वमेतन्मयाच्युत । न्याययुक्तञ्च चित्रञ्च फाल्गुनार्थे यशस्करम् ॥ ३ ॥ एवंविधे तथा काले मादृशं प्रेक्ष्य सम्मतम् । वक्तुमर्हसि राजेन्द्र यथा पार्थं तथैव माम् ॥ ४ ॥ न मे धनञ्जयस्यार्थे प्राणा रक्ष्याः कथञ्चन । त्वत्प्रयुक्तः पुनरहं किन्न कुर्य्यां महाहवे ॥ ५ ॥ लोकत्रयं योधयेयं सदेवासुरमानुषम् । त्वत्प्रयुक्तो नरेन्द्रेह किमुतैतत् सुदुर्ब्बलम् ॥ ६ ॥ सुयोधनबलन्त्वद्य योधयिष्ये समन्ततः । विजेष्ये च रणे राजन् सत्यमेतद्ब्रवीमि ते ॥ ७ ॥ कुशल्यहं कुशलिनं समासाद्य धनञ्जयम् । हते जयद्रथे राजन् पुनरेष्यामि तेऽन्तिकम् ॥ ८ ॥ अवश्यन्तु मया सर्व्वं विज्ञाप्यस्त्वं नराधिप । वासुदेवस्य यद्वाक्यं फाल्गुनस्य च धीमतः ॥ ९ ॥ दृढन्त्वभिपरीतोऽहमर्ज्जुनेन पुनः पुनः । मध्ये सर्व्वस्य सैन्यस्य वासुदेवस्य शृण्वतः ॥ १० ॥ अद्य माधव राजानमप्रमत्तोऽनुपालय । आर्य्यां युद्धे मतिं कृत्वा यावद्धन्मि जयद्रथम् ॥ ११ ॥ त्वयि चाहं महाबाहो प्रद्युम्ने वा महारथे । नृपं निक्षिप्य गच्छेयं निरपेक्षो जय

द्वयम् ॥ १२ ॥ जानीषे हि यथा द्रोणं कुरुषु श्रेष्ठसम्मतम् ।
प्रतिज्ञातं हि तेनेह पश्यमानेन वै प्रभो ॥ १३ ॥ ग्रहणं धर्म-
राजस्य भारद्वाजोऽपि इच्छति । शक्तश्चापि रणे द्रोणो निग्र-
होतुं युधिष्ठिरम् ॥ १४ ॥ एवं त्वयि समाधाय धर्मराजं नरो-
त्तमम् । अहमद्य गमिष्यामि सैन्धवस्य वधाय हि ॥ १५ ॥ जय-
द्रथञ्च हत्वाहं द्रुतमेष्यामि माधव । धर्मराजं न चेत् द्रोणो
निगृह्णीयाद्रणे बलात् ॥ १६ ॥ निगृहीते नरश्रेष्ठे भारद्वाजेन
माधव । सैन्धवस्य वधो न स्यान्ममाप्रीतिस्तथा भवेत् ॥ १७ ॥
एवं गते नरश्रेष्ठे पाण्डवे सत्यवादिनि । अस्माकं गमनं व्यक्तं
वनं प्रति भवेत् पुनः ॥ १८ ॥ सोऽयं मम जयो व्यक्तं व्यर्थ एव
भविष्यति । यदि द्रोणो रणे क्रुद्धो निगृह्णीयाद्युधिष्ठिरम् ॥ १९ ॥
स त्वमद्य महाबाहो प्रियार्थं मम माधव । जयार्थञ्च यशोऽर्थञ्च
रक्ष राजानमाहवे ॥ २० ॥ स भवान्मयि निक्षेपो निक्षिप्तः
सव्यसाचिना । भारद्वाजाद्भयं नित्यं मन्यमानेन वै प्रभो ॥ २१ ॥
तस्यापि च महाबाहो नित्यं पश्यामि संयुगे । नान्यं हि प्रति-
योद्धारं रौक्मिणेयादृते प्रभो ॥ २२ ॥ मां चापि मन्यते युद्धे
भारद्वाजस्य धीमतः । सोऽहं सम्भावनाञ्चैतामाचार्यवचनन्तु तत्
॥ २३ ॥ पृष्ठतो नोत्सहे कर्त्तुं त्वां वा त्यक्तुं महीपते । आचार्यो
लघुहस्तत्वादभेद्यकवचावृतः ॥ २४ ॥ उपलभ्य रणे क्रीडेद्यथा
शकुनिना शिशुः । यदि कार्ष्णिर्धनुष्पाणिरिह स्यान्मकरध्वजः
॥ २५ ॥ तस्मै त्वां विसृजेयं वै स त्वां रक्षेद्यथार्जुन । कुरु
त्वमात्मनो गुप्तिं कस्ते गोप्ता गते मयि ॥ २६ ॥ यः प्रतीयाद्रणे
द्रोणं यावद्गच्छामि पाण्डवम् । मा च ते भयमद्यास्तु राज-
न्नर्जुनसम्भवम् ॥ २७ ॥ न स जातु महाबाहुर्भारमुद्यम्य सीदति ।
ये च सौवीरका योधास्तथा सैन्धवपौरवाः ॥ २८ ॥ उदीच्या
दाक्षिणात्याश्च ये चान्येऽपि महारथाः । ये च कर्णमुखा राजन्

ह्योदाराः प्रकीर्त्तिताः ॥ २९ ॥ एतेऽर्ज्जुनस्य क्रुद्धस्य कलां नार्हन्ति षोड़शीम् । सदेवा पृथिवी सर्व्वा ससुरासुरमानुषा ॥ ३० ॥ सराक्षसगणा राजन् सकिन्नरमहोरगा । जङ्गमाः स्थावराः सर्व्वे नालं पार्थस्य संयुगे ॥ ३१ ॥ एवं ज्ञात्वा महाराज व्येतु ते भीर्धनञ्जये । यत्र वीरौ महेष्वासौ कृष्णौ सत्यपराक्रमौ ॥ ३२ ॥ न तत्र कर्म्मणो व्यापत् कथञ्चिदपि विद्यते । दैवं कृतास्त्रतां योगममर्षमपि चाहवे ॥ ३३ ॥ कृतज्ञतां दयाञ्चैव भ्रातुस्त्वमनुचिन्तय । मयि चापयाते वै गच्छमानेऽर्ज्जुनं प्रति ॥ ३४ ॥ द्रोणे चित्रास्त्रतां सङ्ख्ये राजंस्त्वमनुचिन्तय । आचार्य्यो हि भृशं राजन्निग्रहे तव गृध्यति ॥ ३५ ॥ प्रतिज्ञामात्मनो रक्षन् सत्यां कर्त्तुञ्च भारत । कुरुष्वाद्यात्मनो गुप्तिं कस्ते गोप्ता गते मयि ॥ ३६ ॥ यस्याहं प्रत्ययात् पार्थं गच्छेयं फाल्गुनं प्रति । न ह्यहं त्वा महाराज अनिक्षिप्य महाहवे ॥ ३७ ॥ क्वचिद्यास्यामि कौरव्य सत्यमेतद्ब्रवीमि ते । एतद्विचार्य्य बहुधा बुद्ध्या बुद्धिमतां वर । दृष्ट्वा श्रेयः परं बुद्ध्या ततो राजन् प्रशाधि माम् ॥ ३८ ॥

युधिष्ठिर उवाच । एवमेतन्महाबाहो यथा वदसि माधव । न तु मे शुध्यते भाव श्वेताश्वं प्रति मारिष ॥ ३९ ॥ करिष्ये परमं यत्नमात्मनो रक्षणे ह्यहम् । गच्छ त्वं समनुज्ञातो यत्र यातो धनञ्जयः ॥ ४० ॥ आत्मसंरक्षणं सङ्ख्ये गमनञ्चार्ज्जुनं प्रति । विचार्य्यैतत् स्वयं बुद्ध्या गमनं तत्र रोचये ॥ ४१ ॥ स त्वमातिष्ठ यानाय यत्र यातो धनञ्जयः । ममापि रक्षणं भीमः करिष्यति महाबलः ॥ ४२ ॥ पार्षतश्च ससोदर्य्यः पार्थिवाश्च महाबलाः । द्रौपदेयाश्च मां तात रक्षिष्यन्ति न संशयः ॥ ४३ ॥ कैकया भ्रातरः पञ्च राक्षसश्च घटोत्कचः । विराटो द्रुपदश्चैव शिखण्डी च महारथः ॥ ४४ ॥ धृष्टकेतुश्च बलवान् कुन्तिभोजश्च मारिष । नकुलः सहदेवश्च पाञ्चालाः सृञ्जयास्तथा ॥ ४५ ॥

द्रथम् ॥ १२ ॥ जानीषे हि रणे द्रोणं कुरुषु श्रेष्ठसम्मतम् ।
प्रतिज्ञातं हि तेनेदं पश्यमानेन वै प्रभो ॥ १३ ॥ ग्रहणं धर्म
राजस्य भारद्वाजोऽपि यास्यति । यत्तश्चापि रणे द्रोणो ,निग्र-
हीतुं युधिष्ठिरम् ॥ १४ ॥ एवं त्वयि समाधाय धर्मराजं नरो-
त्तमम् । अहमद्य गमिष्यामि सैन्धवस्य बधाय हि ॥ १५ ॥ जय-
द्रथञ्च हत्वाहं द्रुतमेष्यामि माधव । धर्मराजं न चैव द्रोणो
निगृह्णीयाद्रणे बलात् ॥ १६ ॥ निगृहीते नरश्रेष्ठे भारद्वाजेन
माधव । सैन्धवस्य बधो न स्यान्ममाप्रीतिस्तथा भवेत ॥ १७ ॥
एवं गते नरश्रेष्ठे पाण्डवे सत्यवादिनि । अस्माकं गमनं व्यक्तं
वनं प्राप्त भवेत् पुनः ॥ १८ ॥ सोऽयं मम जयो व्यक्तं व्यर्थ एव
भविष्यति । यदि द्रोणो रणे क्रुद्धो निगृह्णीयाद्युधिष्ठिरम् ॥१६॥
स त्वमद्य महाबाहो प्रियार्थं मम माधव । जयार्थञ्च यशोऽर्थञ्च
रक्ष राजानमाहवे ॥ २० ॥ स भवान्मयि निक्षेपो निक्षिप्त
सव्यसाचिना । भारद्वाजाद्भयं नित्यं मन्यमानेन वै प्रभो ॥ २१ ॥
तस्यापि च महाबाहो नित्यं पश्यामि स युगे । नान्यं हि प्रति
योद्धारं रौक्मिणेयादृते प्रभो ॥ २२ ॥ मान्चापि मन्यते युद्धे
भारद्वाजस्य धीमतः । सोऽहं सम्भावनाञ्चैतामाचार्य्यवचनन्तु तत्
॥ २३ ॥ पृष्ठतो नोत्सहे कर्त्तुं त्वां वा त्यक्तुं महीपते । आचार्य्यो
लघुहस्तत्वादभेद्यकवचावृत ॥ २४ ॥ उपलभ्य रणे क्रीडेद्यथा
शकुनिना शिशुः । यदि कार्ष्णिर्धनुष्पाणिरिह स्यान्मकरध्वज
॥ २५ ॥ तस्मै त्वं विसृजेयं वै स त्वां रक्षेद्यथार्जुन । । कुरु
त्वमात्मनो गुप्तिं कस्ते गोप्ता गते मयि ॥ २६ ॥ यं प्रतीयाद्रणे
द्रोणं यावद्गच्छामि पाण्डवम् । मा च ते भयमद्यास्तु राजं
न्नर्जुनसम्भवम् ॥ २७॥ न स जातु महाबाहुर्भारमुद्यम्य सीदति ।
ये च सौवीरका योधास्तथा सैन्धवपौरवाः ॥ २८ ॥ उदीच्या
दाक्षिणात्याश्च ये चान्येऽपि महारथाः । ये च कर्णमुखा राजन्

रथोदारा प्रकीर्त्तिताः ॥ २९ ॥ एतेऽर्ज्जुनस्य क्रुद्धस्य कलां नार्हन्ति
षोडशीम् । उद्युक्ता पृथिवी सर्वा ससुरासुरमानुषा ॥ ३० ॥
सराक्षसगणा राजन् सकिन्नरमहोरगा । जङ्गमाः स्थावराः
सर्वे नालं पार्थस्य संयुगे ॥ ३१ ॥ एवं ज्ञात्वा महाराज व्येतु ते
भीर्धनञ्जये । यत्र वीरौ महेष्वासौ कृष्णौ सत्यपराक्रमौ ॥ ३२ ॥
न तत्र कर्म्मणो व्यापत् कथञ्चिदपि विद्यते । दैवं कृतास्त्रतां
योगममर्षमपि चाहवे ॥ ३३ ॥ कृतज्ञतां दयाञ्चैव भ्रातुस्त्वमनु
चिन्तय । मयि च व्यपयाते वै गच्छमानेऽर्ज्जुनं प्रति ॥ ३४ ॥
द्रोणे चित्रास्त्रतां संख्ये राजंस्त्वमनुचिन्तय । आचार्य्यो हि
भृशं राजन्निग्रहे तव गृध्यति ॥ ३५ ॥ प्रतिज्ञामात्मनो रक्षन्
सत्यां कर्त्तुञ्च भारत । कुरुष्वाद्यात्मनो गुप्तिं कस्ते गोप्ता गते
मयि ॥ ३६ ॥ यस्याहं प्रत्ययात् पार्थं गच्छेयं फाल्गुनं प्रति ।
न ह्यहं त्वां महाराज अनिक्षिप्य महाहवे ॥ ३७ ॥ क्वचिद्यास्यामि
कौरव्य सत्यमेतद्ब्रवीमि ते । एतद्विचार्य्य बहुधा बुद्ध्या बुद्धि
मतां वर । दृष्ट्वा श्रेय परं बुद्ध्या ततो राजन् प्रशाधि माम् ॥ ३८ ॥

युधिष्ठिर उवाच । एवमेतन्महाबाहो यथा वदसि माधव ।
न तु मे शुध्यते भाव श्वेताश्वं प्रति मारिष ॥ ३९ ॥ करिष्ये
परमं यत्नमात्मनो रक्षणे त्वहम् । गच्छ त्वं समनुज्ञातो यत्र
यातो धनञ्जयः ॥ ४० ॥ आत्मसंरक्षणं संख्ये गमनञ्चार्ज्जुनं
प्रति । विचार्य्यैतत् स्वयं बुद्ध्या गमनं तत्र रोचये ॥ ४१ ॥ स
त्वमातिष्ठ यानाय यत्र यातो धनञ्जयः । ममापि रक्षणं भीमः
करिष्यति महाबलः ॥ ४२ ॥ पार्षतश्च सहोदर्य्यैः पार्थिवाश्च
महाबलाः । द्रौपदेयाश्च मां तात रक्षिष्यन्ति न संशयः ॥ ४३ ॥
केकया भ्रातरः पञ्च राक्षसश्च घटोत्कचः । विराटो द्रुपदश्चैव
शिखण्डी च महारथः ॥ ४४ ॥ धृष्टकेतुश्च बलवान् कुन्तिभोजश्च
मारिष । नकुलः सहदेवश्च पाञ्चालाः सृञ्जयास्तथा ॥ ४५

द्रुथम् ॥ १२ ॥ जानीषे हि रणे द्रोणं कुरूणां श्रेष्ठसम्मतम् ।
प्रतिघात हि तेनेह पश्यमानेन वै प्रभो ॥ १३ ॥ ग्रहणं धर्म-
राजस्य भारद्वाजोऽपि यच्छति । शक्तश्चापि रणे द्रोणो निग्र-
हीतुं युधिष्ठिरम् ॥ १४ ॥ एवं त्वयि समाधाय धर्मराजं नरो-
त्तमम् । अहमद्य गमिष्यामि सैन्धवस्य वधाय हि ॥ १५ ॥ जय-
द्रथञ्च हत्वाहं द्रुतमेष्यामि माधव । धर्मराजं न चेत द्रोणो
निगृह्णीयाद्रणे बलात् ॥ १६ ॥ निगृहीते नरव्याघ्रे भारद्वाजेन
माधव । सैन्धवस्य वधो न स्यान्ममाप्रीतिस्तथा भवेत ॥ १७ ॥
एवं गते नरश्रेष्ठे पाण्डवे सत्यवादिनि । अस्माकं गमनं व्यक्तं
वनं प्रति भवेत् पुनः ॥ १८ ॥ सोऽयं मम जयो व्यक्तं व्यर्थ एव
भविष्यति । यदि द्रोणो रणे क्रुद्धो निगृह्णीयाद्युधिष्ठिरम् ॥१९॥
स त्वमद्य महाबाहो प्रियार्थं मम माधव । जयार्थञ्च यशोऽर्थञ्च
रक्ष राजानमाहवे ॥ २० ॥ स भवान्मयि निक्षेपो निक्षिप्तः
सव्यसाचिना । भारद्वाजाद्धि नित्यं मन्यमानेन वै प्रभो ॥ २१ ॥
तस्यापि च महाबाहो नित्यं पश्यामि संयुगे । नान्यं हि प्रति-
योद्धारं रौक्मिणेयादृते प्रभो ॥ २२ ॥ मांश्चापि मन्यते युद्धे
भारद्वाजस्य धीमतः । सोऽहं सम्भावनाञ्चैतामाचार्यवचनन्तु तत्
॥ २३ ॥ पृष्ठतो नोत्सहे कर्त्तुं त्वां वा त्यक्तुं महीपते । आचार्यो
लघुहस्तत्वादभेद्यकवचावृत ॥ २४ ॥ उपलभ्य रणे क्रीडेद्यथा
शकुनिना शिशुः । यदि कार्ष्णिर्धनुष्पाणिरिह स्यान्मकरध्वज
॥ २५ ॥ तस्मै त्वां विसृजेयं वै स त्वां रक्षेद्यथार्जुन । कुरु
त्वमात्मनो गुप्तिं कस्ते गोप्ता गते मयि ॥ २६ ॥ यः प्रतीयाद्रणे
द्रोणं यावद्गच्छामि पाण्डवम् । मा च ते भयमद्यास्तु राज-
न्नर्जुनसम्भवम् ॥ २७ ॥ न स जातु महाबाहुर्भारमुद्यम्य सीदति ।
ये च सौवीरका योधास्तथा सैन्धवपौरवाः ॥ २८ ॥ उदीच्या
दाक्षिणात्याश्च ये चान्येऽपि महारथाः । ये च कर्णमुखा राजन्

रथोदाराः प्रकीर्त्तिताः ॥ २९ ॥ एतेऽर्ज्जुनस्य क्रुद्धस्य कलां नार्हन्ति
षोड़शीम् । उद्युक्ता पृथिवी सर्व्वा ससुरासुरमानुषा ॥ ३० ॥
सराक्षसगणा राजन् सकिन्नरमहोरगा । जङ्गमाः स्थावराः
सर्व्वे नालं पार्थस्य संयुगे ॥ ३१ ॥ एवं ज्ञात्वा महाराज व्येतु ते
भीर्धनञ्जये । यत्र वीरौ महेष्वासौ कृष्णौ सत्यपराक्रमौ ॥ ३२ ॥
न तत्र कर्म्मणो व्यापत् कथञ्चिदपि विद्यते । दैवं कृतास्त्रतां
योगममर्षमपि चाहवे ॥ ३३ ॥ कृतज्ञतां दयाञ्चैव भ्रातुस्त्वमनु-
चिन्तय । मयि च व्यपयाते वै गच्छमानेऽर्ज्जुनं प्रति ॥ ३४ ॥
द्रोणे चित्रास्त्रतां सङ्ख्ये राजंस्त्वमनुचिन्तय । आचार्य्यो हि
भृशं राजन्निग्रहे तव गृध्यति ॥ ३५ ॥ प्रतिज्ञामात्मनो रक्षन्
सत्यां कर्त्तुञ्च भारत । कुरुष्वाद्यात्मनो गुप्तिं कस्ते गोप्ता गते
मयि ॥ ३६ ॥ यद्यहं प्रत्ययात् पार्थं गच्छेयं फाल्गुनं प्रति ।
न ह्यहं त्वा महाराज सन्निक्षिप्य महाहवे ॥ ३७ ॥ क्वचिद्यास्यामि
कौरव्य सत्यमेतद्ब्रवीमि ते । एतद्विचार्य्य बहुधा बुद्ध्या बुद्धि-
मतां वर । दृष्ट्वा श्रेयः परं बुद्ध्या ततो राजन् प्रशाधि माम् ॥ ३८ ॥
युधिष्ठिर उवाच । एवमेतन्महाबाहो यथा वदसि माधव ।
न तु मे रुच्यते भाव श्वेताश्वं प्रति मारिष ॥ ३९ ॥ करिष्ये
परमं यत्नमात्मनो रक्षणे ह्यहम् । गच्छ त्वं समनुज्ञातो यत्र
यातो धनञ्जयः ॥ ४० ॥ आत्मसंरक्षणं सङ्ख्ये गमनञ्चार्ज्जुन-
प्रति । विचार्य्यैतत् स्वयं बुद्ध्या गमनं तत्र रोचये ॥ ४१ ॥ स
त्वमातिष्ठ यानाय यत्र यातो धनञ्जयः । ममापि रक्षणं भीमः
करिष्यति महाबलः ॥ ४२ ॥ पार्षतश्च ससोदर्य्यः पार्थिवाश्च
महाबलाः । द्रौपदेयाश्च मां तात रक्षिष्यन्ति न संशयः ॥ ४३ ॥
केकया भ्रातरः पञ्च राक्षसश्च घटोत्कचः । विराटो द्रुपदश्चैव
शिखण्डी च महारथः ॥ ४४ ॥ धृष्टकेतुश्च बलवान् कुन्तिभोजश्च
मारिष । नकुलः सहदेवश्च पाञ्चालाः सृञ्जयास्तथा ॥ ४५

प्रभो । भित्त्वेदं दुर्भिदं सैन्यं प्रयास्ये नरपुङ्गव ॥ ९ ॥ द्रोणा-
नीकं विधास्येष क्रुद्धो झष इवार्णवम् । तत्र यास्यामि यत्रासौ
राजन् राजा जयद्रथ ॥ १० ॥ यत्र सेनां समाश्रित्य भीत-
स्तिष्ठति पाण्डवात् । गुप्तो रथवरश्रेष्ठैद्रौणिकर्णकृपादिभिः ॥११॥
इतस्त्रियोजनं मन्ये तमध्वानं विशाम्पते । यत्र तिष्ठति पार्थोऽसौ
जयद्रथवधोद्यत ॥ १२ ॥ त्रियोजनगतस्यापि तस्य यास्याम्यहं
पदम् । आसैन्धववधाद्राजन् सुदृढेनान्तरात्मना ॥ १३ ॥ अना-
दिष्टस्तु गुरुणा को न युध्येत मानव । आदिष्टस्तु यथा राजन्
को न युध्येत मादृश ॥ १४ ॥ अभिजानामि तं देशं यत्र यास्या-
म्यहं प्रभो । हलशक्तिगदाप्रासचर्मखड्गर्ष्टितोमरम् ॥ १५ ॥
इष्वस्त्रवरसम्बाधं क्षोभयिष्ये बलार्णवम् । यदेतत् कुञ्जरानीकं
सहस्रमनुपश्यसि ॥ १६ ॥ कुलमञ्जनकं नाम यत्रैते वीर्य्य-
शालिन । आस्थिता बहुभिर्म्लेच्छैर्युद्धशौण्डै प्रहारिभिः ॥ १७ ॥
नागा मेघनिभा राजन् क्षरन्त इव तोयदा । नैते जातु निवर्त्ते-
रन् प्रेषिता हस्तिसादिभिः ॥ १८ ॥ अन्यत्र हि वधादेषां नास्ति
राजन् पराजय । अथ यान्रथिनो राजन् सहस्रमनुपश्यसि ॥१९॥
एते रुक्मरथा नाम राजपुत्रा महारथा । रथेष्वस्त्रेषु निपुणा
नागेषु च विशाम्पते ॥ २० ॥ धनुर्वेदे गता पारं मुष्टियुद्धे च
कोविदा । गदायुद्धविशेषज्ञा नियुद्धकुशलास्तथा ॥ २१॥ खड्गप्र-
हरणे युक्ता सम्पाते चासिचर्म्मणो । शूराश्च कृतविद्याश्च
स्पर्द्धन्ते च परस्परम् ॥ २२ ॥ नित्यं हि समरे राजन् विजिगी-
षन्ति मानवान् । कर्णेन विहिता राजन् दुःशासनमनुव्रताः
॥ २३ ॥ एतांस्तु वासुदेवोऽपि रथोदारान् प्रशंसति । सततं
प्रियकामाश्च कर्णस्यैते वशे स्थिता ॥ २४ ॥ तस्यैव वचनाद्राजन्
निवृत्ता श्वेतवाहनात् । तेन श्रान्ता न च श्रान्ता दृढावरण-
कार्मुका ॥ २५ ॥ मदर्थं धिष्ठिता नूनं धार्त्तराष्ट्रस्य शासनात् ।

एते समादिष्टास्तात रक्षिष्यन्ति न संशयः । न द्रोणः सह सैन्येन
कृतवर्मा च संयुगे ॥ ४६ ॥ समासादयितुं शक्तो न च मां धर्ष-
यिष्यति । धृष्टद्युम्नश्च समरे द्रोणं क्रुद्धं परन्तप ॥ ४७ ॥ वार-
यिष्यति विक्रम्य वेलेव मकरालयम् । यत्र स्थास्यति संग्रामे
पार्षतः परवीरहा ॥ ४८ ॥ द्रोणो न सैन्यं बलवत् क्रामेत्तत्र
कथञ्चन । एष द्रोणविनाशाय समुत्पन्नो हुताशनात् ॥ ४९ ॥
कवची सशरी खड्‌गी धन्वी च वरभूषणः । विश्रब्धो गच्छ
शैनेय माकार्षीर्मयि सम्भ्रमम् । धृष्टद्युम्नो रणे क्रुद्धं द्रोणमावा-
रयिष्यति ॥ ५० ॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि युधिष्ठिरवाक्ये
एकादशाधिकशततमोऽध्यायः ॥ १११ ॥

---

प्रभो । भित्त्वेदं दुर्भिदं सैन्यं प्रयास्ये नरपुङ्गव ॥ ९ ॥ द्रोणा-
नीकं विशाम्येष क्रुद्धो झष इवार्णवम् । तत्र यास्यामि यत्रासौ
राजन् राजा जयद्रथ ॥ १० ॥ यत्र सेना समाश्रित्य भीत-
स्तिष्ठति पाण्डवात् । गुप्तो रथवरश्रेष्ठैर्द्रौणिकर्णकृपादिभि ॥ ११ ॥
इतस्त्रियोजनमन्ये तमध्वानं विशाम्पते । यत्र तिष्ठति पार्थोऽसौ
जयद्रथवधोद्यत ॥ १२ ॥ त्रियोजनगतस्यापि तस्य यास्याम्यहं
पदम् । आसैन्धववधाद्राजन् सुदृढेनान्तरात्मना ॥ १३ ॥ अना-
दिष्टस्तु गुरुणा को न युध्येत मानव । आदिष्टस्तु यथा राजन्
को न युध्येत मादृश ॥ १४ ॥ अभिजानामि तं देशं यत्र यास्या-
म्यहं प्रभो । हलशक्तिगदाप्रासचर्मखड्गर्ष्टितोमरम् ॥ १५ ॥
इष्वस्त्रवरसम्बाधं क्षोभयिष्ये बलार्णवम् । यदेतत् कुञ्जरानीकं
साहस्रमनुपश्यसि ॥ १६ ॥ कुलमञ्जनकं नाम यत्रैते वीर्य-
शालिन । आस्थिता बहुभिर्म्लेच्छैर्युद्धशौण्डै प्रहारिभि ॥ १७ ॥
नागा मेघनिभा राजन् क्षरन्त इव तोयदा । नैते जातु निवर्त्ति-
ष्यन् प्रेषिता हस्तिसादिभि ॥ १८ ॥ अन्यत्र हि वधादेषां नास्ति
राजन् पराजय । अथ यान् रथिनो राजन् सहस्रमनुपश्यसि ॥ १९ ॥
एते रुक्मरथा नाम राजपुत्रा महारथा । रथेष्वस्त्रेषु निपुणा
नागेषु च विशाम्पते ॥ २० ॥ धनुर्वेदे गता पारं मुष्टियुद्धे च
कोविदा । गदायुद्धविशेषज्ञा नियुद्धकुशलास्तथा ॥ २१ ॥ खड्गा-
प्रहरणे युक्ता सम्पाते चासिचर्मणो । शूराश्च कृतविद्याश्च
स्पर्द्धन्ते च परस्परम् ॥ २२ ॥ नित्यं हि समरे राजन् विजिगी-
षन्ति मानवान् । कर्णेन विजिता राजन् दुःशासनमनुव्रता
॥ २३ ॥ एतांस्तु वासुदेवोऽपि रथोदारान् प्रशंसति । सततं
प्रियकामाश्च कर्णस्यैते वशे स्थिता ॥ २४ ॥ तस्यैव वचनाद्राजन्
निवृत्ता श्वेतवाहनात् । तेन श्रान्ता न च श्रान्ता दृढावरण-
कार्मुका ॥ २५ ॥ मदर्थं धिष्ठिता नूनं धार्त्तराष्ट्रस्य शासनात् ।

एते समाहितास्तात रक्षिष्यन्ति न संशयः । न द्रोणः सह सैन्येन
कृतवर्मा च संयुगे ॥ ४६ ॥ समासादयितुं शक्तो न च मां धर्ष-
यिष्यति । धृष्टद्युम्नश्च समरे द्रोणं क्रुद्धं परन्तपः ॥ ४७ ॥ वार-
यिष्यति विक्रम्य वेलेव मकरालयम् । यत्र स्थास्यति सङ्ग्रामे
पार्षतः परवीरहा ॥ ४८ ॥ द्रोणो न सैन्यं बलवत् क्रामेत्तत्र
कथञ्चन । एष द्रोणविनाशाय समुत्पन्नो हुताशनात् ॥ ४९ ॥
कवची सशरो खड्गी धन्वी च वरभूषणः । विश्वस्तं गच्छ
शैनेय मा कार्षीर्मयि सम्भ्रमम् । धृष्टद्युम्नो रणे क्रुद्धं द्रोणमावा-
रयिष्यति ॥ ५० ॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि युधिष्ठिरवाक्ये
एकादशाधिकशततमोऽध्यायः ॥ १११ ॥

---

सञ्जय उवाच । धर्मराजस्य तद्वाक्यं निशम्य शिनिपुङ्गवः ।
स पार्थाद्भयमाशंसन् परित्यागान्महीपतेः ॥ १ ॥ अपवादं ह्यति-
मथ लोकात् पश्यन् विशेषतः । तं मां भीतमिति ब्रूयुरायान्तं
फाल्गुनं प्रति ॥ २ ॥ निश्चित्य बहुधैवं स सात्यकिर्युद्धदुर्मदः ।
धर्मराजमिदं वाक्यमब्रवीत् पुरुषर्षभः ॥ ३ ॥ कृतां चेत्मन्यसे
रक्षां स्वस्ति तेऽस्तु विशाम्पते । अनुयास्यामि बीभत्सुं करिष्ये
वचनं तव ॥ ४ ॥ न हि मे पाण्डवात् कश्चित् त्रिषु लोकेषु
विद्यते । यो मे प्रियतरो राजन् सत्यमेतद्ब्रवीमि ते ॥ ५ ॥
तस्याहं पदवीं यास्ये सन्देशात्तव मानद । त्वत्कृते न च मे
किञ्चिदकर्त्तव्यं कथञ्चन ॥ ६ ॥ यथा हि मे गुरोर्वाक्यं विशिष्टं
द्विपदाम्वर । तथा तवापि वचनं विशिष्टतरमेव मे ॥ ७ ॥ प्रिये
हि तव वर्त्तेते भ्रातरौ कृष्णपाण्डवौ । तयोः प्रिये स्थितञ्चैव
विद्धि मां राजपुङ्गव ॥ ८ ॥ तवाज्ञां शिरसा गृह्य पाण्डवार्थमहं

प्रभो। भित्त्वेदं दुर्भिदं सैन्यं प्रयास्ये नरपुङ्गव ॥ ९ ॥ द्रोणा-
नीकं विशाम्येष क्रुद्धो झष इवार्णवम्। तत्र यास्यामि यत्रासौ
राजन् राजा जयद्रथः ॥ १० ॥ यत्र सेनां समाश्रित्य भीत-
स्तिष्ठति पाण्डवात्। गुप्तो रथवरश्रेष्ठैर्द्रौणिकर्णकृपादिभिः ॥ ११ ॥
इतस्त्रियोजनं मन्ये तमध्वानं विशाम्पते। यत्र तिष्ठति पार्थोऽसौ
जयद्रथवधोद्यतः ॥ १२ ॥ त्रियोजनगतस्यापि तस्य यास्याम्यहं
पदम्। आसैन्धववधाद्राजन् सुदृढेनान्तरात्मना ॥ १३ ॥ अना-
दिष्टस्तु गुरुणा को न युध्येत मानवः। आदिष्टस्तु यथा राजन्
को न युध्येत मादृशः ॥ १४ ॥ अभिजानामि तं देशं यत्र यास्या-
म्यहं प्रभो। हलशक्तिगदाप्रासचर्मखड्गर्ष्टितोमरम् ॥ १५ ॥
इष्वस्त्रवरसम्बाधं क्षोभयिष्ये बलार्णवम्। यदेतत् कुञ्जरानीकं
सहस्रमनुपश्यसि ॥ १६ ॥ कुलमञ्जनकं नाम यत्रैते वीर्य-
शालिनः। आस्थिता बहुभिर्म्लेच्छैर्युद्धशौण्डैः प्रहारिभिः ॥ १७ ॥
नागा मेघनिभा राजन् क्षरन्त इव तोयदाः। नैते जातु निवर्त्ते-
रन् प्रेषिता हस्तिसादिभिः ॥ १८ ॥ अन्यत्र हि वधादेषां नास्ति
राजन् पराजयः। अथ यान् रथिनो राजन् सहस्रमनुपश्यसि ॥ १९ ॥
एते रुक्मरथा नाम राजपुत्रा महारथाः। रथेष्वस्त्रेषु निपुणा
नागेषु च विशाम्पते ॥ २० ॥ धनुर्वेदे गताः पारं मुष्टियुद्धे च
कोविदाः। गदायुद्धविशेषज्ञा नियुद्धकुशलास्तथा ॥ २१ ॥ खड्ग-
प्रहरणे युक्ताः सम्पाते चासिचर्मणोः। शूराश्च कृतविद्याश्च
स्पर्द्धन्ते च परस्परम् ॥ २२ ॥ नित्यं हि समरे राजन् विजिगी-
षन्ति मानवान्। कर्णेन विहिता राजन् दुःशासनमनुव्रताः
॥ २३ ॥ एतांस्तु वासुदेवोऽपि रथोदारान् प्रशंसति। सततं
प्रियकामाश्च कर्णस्यैते वशे स्थिताः ॥ २४ ॥ तस्यैव वचनाद्राजन्
निवृत्ताः श्वेतवाहनात्। तेन श्रान्ता न च श्रान्ता दृढावरण-
कार्मुकाः ॥ २५ ॥ मदर्थं धिष्ठिता नूनं धार्त्तराष्ट्रस्य शासनात्।

उपितान्। दारुकस्यानुजो भ्राता सूतस्तस्य प्रिय सखा ॥ ५९ ॥ न्यवेदयद्रथं युक्तं वासवस्येव मातलि। तत स्नात शुचिर्भूत्वा कृतकौतुकमङ्गल ॥ ६० ॥ स्नातकानां सहस्रस्य स्वर्णनिष्कानवाचयत्। आशीर्वादैः परिष्वक्त सात्यकि श्रीमतां वर ॥ ६१ ॥ तत स मधुपर्कार्हः पीत्वा कैलातकं मधु। लोहिताक्षो बभौ तत्र मदविह्वललोचन ॥ ६२ ॥ आलभ्य वीरकांस्यञ्च हर्षेण महतान्वित। द्विगुणीकृततेजा हि प्रज्वलन्निव पावक ॥ ६३ ॥ उत्सङ्गे धनुरादाय सशरं रथिनाम्वर। कृतस्वस्त्ययनो विप्रैः कवची समलङ्कृत ॥ ६४ ॥ लाजैर्गन्धैस्तथा माल्यैः कन्याभिश्चाभिनन्दित। युधिष्ठिरस्य चरणावभिवाद्य कृताञ्जलि ॥ ६५ ॥ तेन मूर्द्धन्युपाघ्रात आरुरोह महारथम्। ततस्ते वाजिनो हृष्टाः सुपुष्टा वातरंहस ॥ ६६ ॥ अजय्या जैत्रमूहुस्तं विकुर्वाणा स्म सैन्धवा। तथैव भीमसेनोऽपि धर्मराजेन पूजित ॥ ६७ ॥ प्रायात् सात्यकिना सार्द्धमभिवाद्य युधिष्ठिरम्। तौ दृष्ट्वा प्रविविक्षन्तौ तव सेनामरिन्दमौ ॥ ६८ ॥ सपदास्तावका सर्वे तस्थुर्द्रोणपुरोगमा। अन्वक्षमनुगच्छन्तं दृष्ट्वा भीमं ससात्यकिम् ॥ ६९ ॥ अभिनन्द्याब्रवीद्वीरस्तदा हर्षकरं वच। अथ हर्षपरीताङ्गः सात्यकिर्भीममब्रवीत् ॥ ७० ॥ त्वं भीम रक्ष राजानमेतत्कार्यतमं हि ते। अहं भित्त्वा प्रवेक्ष्यामि कालपक्वमिदं बलम् ॥ ७१ ॥ आयत्याञ्च तदात्वे च श्रेयो राज्ञोऽभिरक्षणम्। जानीषे मम वीर्यं त्वं तव चाहमरिन्दम ॥ ७२ ॥ तस्माद्भीम निवर्त्तस्व मम चेदिच्छसि प्रियम्। तथोक्त सात्यकिं प्राह व्रज त्वं कार्यसिद्धये ॥ ७३ ॥ अहं राज्ञ करिष्यामि रक्षां पुरुषसत्तम। एवमुक्तः प्रत्युवाच भीमसेनं स माधव ॥ ७४ ॥ गच्छ गच्छ द्रुतं पार्थ ध्रुवो हि विजयो मम। यन्मे गुणानुरक्तश्च त्वमद्य वशमास्थित ॥ ७५ ॥ निमित्तानि च धन्यानि यथा भीम वदन्ति माम्।

निहते सैन्धवे पापे पाण्डवेन महात्मना ॥ ७६ ॥ परिष्वजिष्ये राजानं धर्मात्मान युधिष्ठिरम्। एतावदुक्त्वा भीमस्तु विसृज्य च महायशा ॥ ७७ ॥ सम्प्रैच्छ तावकं सैन्य व्याघ्रो मृगगणानिव। स दृष्ट्वा प्रतिवीरन्तं सैन्य तव जनाधिप ॥ ७८ ॥ भूय एवाभवन्मूढं सुभृशं धाप्यकम्पत। ततः प्रयातः सहसा तव सैन्य स सात्यकिः। दिदृक्षुरर्ज्जुनं राजन् धर्मराजस्य शासनात् ॥ ७९ ॥

इति द्रोणपर्व्वणि जयद्रथवधपर्व्वणि सात्यकिप्रवेशे द्वादशाधिकशततोऽध्यायः ॥ ११२ ॥

---

सञ्जय उवाच। प्रयाते तव सैन्यन्तु युयुधाने युयुत्सया। धर्मराजो महाराज सेनानीकेन संवृतः ॥ १ ॥ प्रायाद्द्रोणरथं प्रेप्सुर्युयुधानस्य पृष्ठतः। ततः पाञ्चालराजस्य पुत्त्रः समरदुर्मदः ॥ २ ॥ प्राक्रोशत् पाण्डवानीके वसुदानश्च पार्थिवः। आगच्छत प्रहरत द्रुतं विपरिधावत ॥ ३ ॥ यथा सुखेन गच्छेत सात्यकिर्युद्धदुर्मदः। महारथा हि बहवो यतिष्यन्त्यस्य निर्ज्जये ॥ ४ ॥ इति ब्रुवन्तो वेगेन निपेतुस्ते महारथा। वयम्प्रतिजिगीषन्तस्तत्र तान् समभिद्रुताः ॥ ५ ॥ ततः शब्दो महानासीत् युयुधानरथम्प्रति। आकीर्य्यमाणा धावन्ती तव पुत्त्रस्य वाहिनी ॥ ६ ॥ सात्वतेन महाराज शतधाभिव्यशीर्य्यत। तस्यां विदीर्य्यमाणायां शिनेः पुत्त्रो महारथ ॥ ७ ॥ सप्त वीरान् महेष्वासान् अग्रानीकेष्वपोथयत्। अथान्यानपि राजेन्द्र नानाजनपदेश्वरान् ॥ ८ ॥ शरैरनलसङ्काशैर्निन्ये वीरान् यमक्षयम्। शतमेकेन विव्याध शतेनैकञ्च पत्रिणाम् ॥ ९ ॥ द्विपारोहान् द्विपांश्चैव हयारोहान् हयांस्तथा। रथिनः साश्वसूतांश्च जघानेशः पशूनिव ॥ १० ॥ तं तथा द्रुतकर्माणं शरसम्पातवर्षिणम्। न केचनास्य-

धावन् वै सात्यकिं तव सैनिकाः ॥ ११ ॥ ते भीता मृद्यमानाश्च
प्रमृष्टा दीर्घबाहुना । आयोधन जङ्घवीरा दृष्ट्वा समतिमानिनम्
॥ १२ ॥ तमेकं बहुधा पश्यन्मोहितास्तस्य तेजसा । रथैर्विम-
थितैश्चैव भग्ननीडैश्च मारिष ॥ १३ ॥ चक्रैर्विमथितैश्छत्रैर्ध्वजैश्च
विनिपातितैः । अनुकर्षैः पताकाभिः शिरस्त्राणैः सकाञ्चनैः ॥१४॥
बाहुभिश्चन्दनादिग्धैः साङ्गदैश्च विशाम्पते । हस्तिहस्तोपमैश्चापि
भुजङ्गाभोगसन्निभैः ॥ १५ ॥ ऊरुभिः पृथिवी छन्ना मनुजानां
नराधिप । शशाङ्कसन्निभैश्चैव वदनैश्चारुकुण्डलैः ॥ १६ ॥ पतितै-
र्ऋषभाक्षाणां सा बभावतिमेदिनी । गजैश्च बहुधाच्छिन्नैः शयानैः
पर्वतोपमैः ॥ १७ ॥ रराजातिभृशं भूमिर्विकीर्णैरिव पर्वतैः ।
तपनीयमयैर्योक्त्रैर्मुक्ताजालविभूषितैः ॥ १८ ॥ उरश्छदैर्विचित्रैश्च
व्यशोभन्त तुरङ्गमाः । गतसत्त्वा महीं प्राप्य प्रमृष्टा दीर्घबाहुना
॥ १९ ॥ नानाविधानि सैन्यानि तव हत्वा तु सात्वतः । प्रविष्ट-
स्तावकं सैन्यं द्रावयित्वा चमूं भृशम् ॥ २० ॥ ततस्तेनैव मार्गेण
येन यातो धनञ्जयः । इयेष सात्यकिर्गन्तुं ततो द्रोणेन वारितः
॥ २१ ॥ भारद्वाजं समासाद्य युयुधानश्च सात्यकिः । न न्यव-
र्तत संक्रुद्धो वेलामिव जलाशयः ॥ २२ ॥ निवार्य तु रणे
द्रोणो युयुधानं महारथम् । विव्याध निशितैर्बाणैः पञ्चभिर्मर्म-
भेदिभिः ॥ २३ ॥ सात्यकिस्तु रणे द्रोणं राजन् विव्याध
सप्तभिः । हेमपुङ्खैः शिलाधौतैः कङ्कबर्हिणवाजितैः ॥ २४ ॥
तं षड्भिः सायकैर्द्रोणः साश्वयन्तारमार्दयत् । स तन्न ममृषे
द्रोणं युयुधानो महारथः ॥ २५ ॥ सिंहनादं ततः कृत्वा द्रोणं
विव्याध सात्यकिः । दशभिः सायकैश्चान्यैः षड्भिरष्टाभिरेव
च ॥ २६ ॥ युयुधान पुनर्द्रोणं विव्याध दशभिः शरैः । एकेन
सारथिं चास्य चतुर्भिश्चतुरो हयान् ॥ २७ ॥ ध्वजमेकेन बाणेन
विव्याध युधि मारिष । तं द्रोणः साश्वयन्तारं सध्वजम्

मार्गणैः ॥ २८ ॥ त्वरन् प्राच्छादयद्द्रोणं चलमानामिव व्रजे ।
तथैव युयुधानोऽपि द्रोणं बह्वीभिराशुगैः ॥ २९ ॥ आच्छादयत
सम्भ्रान्तस्ततो द्रोण उवाच ह । तवाचार्य्यो रणं हित्वा गतः
कापुरुषो यथा ॥ ३० ॥ युध्यमानञ्च मां हित्वा प्रदक्षिणमवर्त्तत ।
त्वं हि मे युध्यतो नाद्य जीवन् यास्यसि माधव । यदि मां त्वं
रणे हित्वा न यास्याचार्य्यवद्द्रुतम् ॥ ३१ ॥
सात्यकिरुवाच । धनञ्जयस्य पदवीं धर्म्मराजस्य शासनात् ।
गच्छामि स्वस्ति ते ब्रह्मन् मे कालात्ययो भवेत् ॥ ३२ ॥ आचा-
र्य्यानुगतो मार्गः शिष्यैरन्वास्यते सदा । तस्मादेव व्रजाम्याशु
यथा मे स गुरुर्गतः ॥ ३३ ॥
सञ्जय उवाच । एतावदुक्त्वा शैनेय आचार्य्यं परिवर्ज्जयन् ।
प्रयातः सहसा राजन् सारथिञ्चेदमब्रवीत् ॥ ३४ ॥ द्रोणः
करिष्यते यत्नं सर्व्वथा मम वारणे । यत्तो याहि रणे सूत शृणु
चेदं वचः परम् ॥ ३५ ॥ एतदालोक्यते सैन्यमावन्त्यानां महा-
प्रभम् । अस्यानन्तरतस्त्वेतद् दाक्षिणात्यं महद्बलम् ॥ ३६ ॥
तदनन्तरमेतच्च वाह्लिकानां महद्बलम् । वाह्लिकाभ्याशतो युक्तं
कर्णस्य च महद्बलम् ॥ ३७ ॥ अन्योऽन्येन हि सैन्यानि भिन्ना-
न्येतानि सारथे । अन्योऽन्यं समुपाश्रित्य विरचन्ति रणाजिरे
॥ ३८ ॥ एतदन्तरमासाद्य चोदयाश्वान् प्रहृष्टवत् । मध्यमं
जवमास्थाय वह मामत्र सारथे ॥ ३९ ॥ वाह्लिका यत्र दृश्यन्ते
नानाप्रहरणोद्यताः । दाक्षिणात्याश्च बहवः सूतपुत्रपुरोगमाः
॥ ४० ॥ हस्त्यश्वरथसम्बाधं यच्चानीकं विलोक्यते । नानादेश-
समुत्थैश्च पदातिभिरधिष्ठितम् ॥ ४१ ॥ एतावदुक्त्वा यन्तारं ब्राह्मणं
परिवर्ज्जयन् । मध्यतो याहि यत्राग्र्यं कर्णस्य च महद्बलम् ॥ ४२ ॥
तं द्रोणोऽनुययौ क्रुद्धो विकिरन् विशिखान् बहून् । युयुधानं
महाभागं गच्छन्तमनिवर्त्तिनम् ॥ ४३ ॥ कर्णस्य सैन्यं सुमह-

दृभिद्दव्य शितैः शरैः। प्राविशद्भारतीं सेनामपर्यन्तां च सात्यकिः
॥ ४४ ॥ प्रविष्टे युयुधाने तु सैनिकेषु द्रुतेषु च। अमर्षी कृत-
वर्मा तु सात्यकिं पर्यवारयत् ॥ ४५ ॥ तमापतन्तं विशिखैः
षड्भिराहत्य सात्यकिः। चतुर्भिश्चतुरोऽस्याश्वानाजघानाशु
वीर्यवान् ॥ ४६ ॥ ततः पुनः षोड़शभिर्नतपर्वभिराशुगैः। सात्यकिः
कृतवर्माणं प्रत्यविध्यत् स्तनान्तरे ॥ ४७ ॥ स ताड्यमानो विशिखै-
र्बहुभिस्तिग्मतेजनैः। सात्वतेन महाराज कृतवर्मा न चक्षमे ॥४८॥
स वत्सदन्तं सन्धाय जिह्मगानिलसन्निभम्। आकृष्य राजन्ना-
कर्णाद्विव्याधोरसि सात्यकिम् ॥ ४९ ॥ स तस्य देहावरणं भित्त्वा
देहञ्च सायकः। सपुङ्खपत्रः पृथिवीं विवेश रुधिरोक्षितः ॥ ५० ॥
अथास्य बहुभिर्बाणैरच्छिनत् परमास्त्रवित्। स मार्गणगणं
राजन् कृतवर्मा शरासनम् ॥ ५१ ॥ विव्याध च रणे राजन्
सात्यकिं सत्यविक्रमम्। दशभिर्विशिखैस्तीक्ष्णैरभिक्रुद्धः स्तनान्तरे
॥ ५२ ॥ ततः प्रशीर्णे धनुषि शक्त्या शक्तिमतां वरः। जघान
दक्षिणं बाहुं सात्यकिः कृतवर्मणः ॥ ५३ ॥ ततोऽन्यत् सुदृढ-
श्चापं पूर्णमायम्य सात्यकिः। व्यसृजद्विशिखांस्तूर्णं शतशोऽथ
सहस्रशः ॥ ५४ ॥ सरथं कृतवर्माणं समन्तात् पर्यवारयत्।
छादयित्वा रणे राजन् हार्दिक्यं स तु सात्यकिः ॥ ५५ ॥ अथास्य
भल्लेन शिरः सारथेः समकृन्तत। स पपात हतः सूतो हार्दिक्यस्य
महारथात् ॥ ५६ ॥ ततस्ते यन्तृरहिता प्राद्रवंस्तुरगा भृशम्।
अथ भोजस्तु सम्भ्रान्तो निगृह्य तुरगान् स्वयम् ॥ ५७ ॥ तस्थौ
वीरो धनुष्पाणिस्तत्सैन्यान्यभ्यपूजयन्। स मुहूर्त्तमिवाश्वस्य सद-
श्वान् समचोदयत् ॥ ५८ ॥ व्यपेतभीरमित्राणामावहत् सुमह-
द्भयम्। सात्यकिश्चाप्यगात्तस्मात् स तु भीममुपाद्रवत् ॥ ५९ ॥
युयुधानोऽपि राजेन्द्र द्रोणानीकाद्विनिःसृतः। प्रययौ त्वरितस्तूर्णं
काम्बोजानां महाचमूम् ॥ ६० ॥ स तत्र बहुभिः शूरैः सन्निरुद्धो

मर्दयन्। न चचाल तदा राजन् सात्यकिः सत्यविक्रमः ॥ ६१ ॥ सन्धाय च धनुः द्रोणो भोजे भारं निवेश्य च। अभ्यधावद्रणे यत्तो युयुधानं युयुत्सया ॥ ६२ ॥ तथा तमनुधावन्तं युयुधानस्य पृष्ठतः। न्यवारयन्त संहृष्टाः पाण्डुसैन्ये नृपोत्तमाः ॥ ६३ ॥ समासाद्य च हार्द्दिक्यं रथानां प्रवरं रथम्। पाञ्चाला विगतोत्साहा भीमसेनपुरोगमाः ॥ ६४ ॥ विक्रम्य वारिता राजन् वीरेण कृतवर्म्मणा। यतमानांश्च तान् सर्व्वानीषद्विगतचेतस। ॥६५॥ अभितस्तान् शरौघेण क्लान्तवाहानकारयत्। निगृहीतास्तु भोजेन भोजानीकेप्सवो रणे।। अतिष्ठन्नार्य्यवद्वीराः प्रार्थयन्तो महद्यशः ॥ ६६ ॥

इति द्रोणपर्व्वणि जयद्रथवधपर्व्वणि सात्यकिप्रवेशे त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

---

धृतराष्ट्र उवाच। एवं बहुविधं सैन्यं एवं प्रविचितं वरम्। व्यूढमेवं यथान्यायं एवं बहु च सञ्जय ॥ १ ॥ नित्यं पूजितमस्माभिरभिकामश्च नः सदा। प्रौढमत्यद्भुताकारं पुरस्ताद्दृढविक्रमम् ॥ २ ॥ नातिवृद्धमबालञ्च नाकृशं नापि पीवरम्। लघुवृत्तायतप्रायं सारगात्रमनामयम् ॥ ३ ॥ आत्तसन्नाहसंच्छन्नं बहुशस्त्रपरिच्छदम्। शस्त्रग्रहणविद्यासु बह्वीषु परिनिष्ठितम् ॥ ४ ॥ आरोहे पर्य्यवस्कन्दे सरणे सान्तरप्लुते। सम्यक्प्रहरणे याने व्यपयाने च कोविदम् ॥ ५ ॥ नागेष्वश्वेषु बहुशो रथेषु च परीक्षितम्। परीक्ष्य च यथान्यायं वेतनेनोपपादितम् ॥ ६ ॥ न गोष्ठ्या नोपचारेण न सम्बन्धनिमित्ततः। नानाहूतं नाप्यभृतं मम सैन्यं बभूव ह ॥ ७ ॥ कुलीनार्य्यजनोपेतं तुष्टपुष्टमनुद्धतम्। कृतमानोपचारञ्च यशस्वि च मनस्वि च ॥ ८ ॥ सचिवैश्चापरै-

सुखैर्बहुभिः पुरुषकर्मभिः । लोकपालोपमैस्तात पालितं नरसत्तमैः ॥ ९ ॥ बहुभिः पार्थिवैर्गुप्तमस्मत्प्रियचिकीर्षुभिः । अस्माकमभिसृतैः कामात् सबलैः सपदानुगैः ॥ १० ॥ पयोधिमिवापूर्णमापगाभिः समन्ततः । अपक्षैः पक्षिसङ्काशै रथैरश्वैश्च संवृतम् ॥ ११ ॥ प्रभिन्नकरटैश्चैव द्विरदैरावृतं महत् । यदहन्यत मे सैन्यं किमन्यद्भागधेयतः ॥ १२ ॥ योधाक्षय्यजलं भीमं वाहनोर्मितरङ्गिणम् । क्षेपण्यसिगदाशक्तिशरप्रासझषाकुलम् ॥ १३ ॥ ध्वजभूषणसम्बाधं रत्नोपलसुसञ्चितम् । वाहनैरभिधावद्भिर्वायुवेगविकम्पितम् ॥ १४ ॥ द्रोणगम्भीरपातालं कृतवर्ममहाह्रदम् । जलसन्धमहाग्राहं कर्णचन्द्रोदयोद्धतम् ॥ १५ ॥ गते सैन्यार्णवं भित्त्वा तरसा पाण्डवर्षभे । सञ्जयैकरथेनैव युयुधाने च मामकम् ॥ १६ ॥ तत्र शेषं न पश्यामि प्रविष्टे सव्यसाचिनि । सात्वते च रथोदारे मम सैन्यस्य सञ्जय ॥ १७ ॥ तौ तत्र समतिक्रान्तौ दृष्ट्वातीव तरस्विनौ । सिन्धुराजन्तु सम्प्रेक्ष्य गाण्डीवस्येषुगोचरे ॥ १८ ॥ किन्नु वा कुरवः कृत्यं विदधुः कालचोदिताः । दारुणैकायने काले कथं वा प्रतिपेदिरे ॥ १९ ॥ ग्रस्तान् हि कौरवान्मन्ये मृत्युना तात सङ्गतान् । विक्रमोऽपि रणे तेषां न तथा दृश्यते हि वै ॥ २० ॥ अक्षतौ संयुगे तत्र प्रविष्टौ कृष्णपाण्डवौ । न च वारयिता कश्चित्तयोरस्तीह सञ्जय ॥ २१ ॥ भृताश्च बहवो योधाः परीक्ष्यैव महारथाः । वेतनेन यथायोगं प्रियवादेन चापरे ॥ २२ ॥ असत्कारभृतस्तात मम सैन्ये न विद्यते । कर्मणा ह्यनुरूपेण लभ्यते भक्तवेतनम् ॥ २३ ॥ न च योधोऽभवत् कश्चिन्मम सैन्ये तु सञ्जय । अल्पदानभृतस्तात तथा चाभृतको नरः ॥ २४ ॥ पूजितो हि यथाशक्त्या दानमानासनैर्मया । तथा पुत्रैश्च मे तात ज्ञातिभिश्च सबान्धवैः ॥ २५ ॥ ते च प्राप्यैव सङ्ग्रामे निर्जिताः सव्यसाचिना । शैनेयेन परामृष्टाः

किमन्यद्भागधेयतः ॥ २६ ॥ दृश्यते यत्र सङ्ग्रामे ये च सञ्जय
रक्षिणः । एकः साधारणः पन्था रक्ष्यस्य सह रक्षिभिः ॥ २७ ॥
अर्जुनं समरे दृष्ट्वा सैन्धवस्याग्रतः स्थितम् । पुत्रो मम भृशं मूढः
किं कार्यं प्रत्यपद्यत ॥ २८ ॥ सात्यकिञ्च रणे दृष्ट्वा प्रविशन्त-
मभीतवत् । किन्नु दुर्योधनः कृत्यं प्राप्तकालममन्यत ॥ २९ ॥
सर्वशस्त्रातिगौ सेनां प्रविष्टौ रथसत्तमौ । दृष्ट्वा कां वै मतिं युद्धे
प्रत्यपद्यन्त मामकाः ॥ ३० ॥ दृष्ट्वा कृष्णन्तु दाशार्हमर्जुनार्थे
व्यवस्थितम् । शिनीनामृषभञ्चैव मन्ये शोचन्ति पुत्रकाः ॥ ३१ ॥
दृष्ट्वा सेनां व्यतिक्रान्तां सात्वतेनार्जुनेन च । पलायमानांश्च
कुरून् मन्ये शोचन्ति पुत्रकाः ॥ ३२ ॥ विद्रुतान् रथिनो दृष्ट्वा
निरुत्साहान् द्विषज्जये । पलायनकृतोत्साहान् मन्ये शोचन्ति
पुत्रकाः ॥ ३३ ॥ शून्यान् कृतान्रथोपस्थान् सात्वतेनार्जुनेन च ।
हतांश्च योधान् संदृश्य मन्ये शोचन्ति पुत्रकाः ॥ ३४ ॥ व्यश्व-
नागरथान् दृष्ट्वा तत्र वीरान् सहस्रशः । धावमानान् रणे व्यग्रा-
न्मन्ये शोचन्ति पुत्रकाः ॥ ३५ ॥ महानागान् विद्रवतो दृष्ट्वार्जुन-
शराहतान् । पतितान् पततश्चान्यान्मन्ये शोचन्ति पुत्रकाः ॥ ३६ ॥
विहीनांश्च कृतानश्वान् विरथांश्च कृतान्नरान् । तत्र सात्यकि-
पार्थाभ्यां मन्ये शोचन्ति पुत्रकाः ॥ ३७ ॥ हयौघान्निहतान् दृष्ट्वा
द्रवमाणांस्ततस्ततः । रणे माधवपार्थाभ्यां मन्ये शोचन्ति पुत्रकाः
॥ ३८ ॥ पत्तिसङ्घान्रणे दृष्ट्वा धावमानांश्च सर्वशः । निराशा
विजये सर्वे मन्ये शोचन्ति पुत्रकाः ॥ ३९ ॥ द्रोणस्य समति-
क्रान्तावनीकमपराजितौ । क्षणेन दृष्ट्वा तौ वीरौ मन्ये शोचन्ति
पुत्रकाः ॥ ४० ॥ सम्मूढोऽस्मि भृशं तात श्रुत्वा कृष्णधनञ्जयौ ।
प्रविष्टौ मामकं सैन्यं सात्वतेन सहाच्युतौ ॥ ४१ ॥ तस्मिन्
प्रविष्टे पृतनां शिनीनां प्रवरे रथे । भोजानीकं व्यतिक्रान्ते किम-
कुर्वत कौरवाः ॥ ४२ ॥ तथा द्रोणेन समरे निगृहीतेषु पाण्डुषु ।

कथं युद्धमभूत्तेषां तन्ममाचक्ष्व सञ्जय ॥ ४३ ॥ द्रोणो हि बल-
वान् श्रेष्ठः कृतास्त्रो युद्धदुर्मदः। पाञ्चालास्तं महेष्वासं प्रत्य-
विध्यत् कथं रणे ॥ ४४ ॥ बद्धवैरास्ततो द्रोणं धनञ्जयजयै-
षिणः। भारद्वाजसुतस्तेषु दृढवैरो महारथः ॥ ४५ ॥ अर्जुन-
श्चापि यच्चक्रे सिन्धुराजवधं प्रति। तन्मे सर्वं समाचक्ष्व कुशलो
ह्यसि सञ्जय ॥ ४६ ॥ [illegible]
सञ्जय उवाच। आत्मापराधात् सम्भूतं व्यसनं भरतर्षभ।
प्राप्य प्राकृतवद् वीर मा त्वं शोचितुमर्हसि ॥ ४७ ॥ पुरा यदु-
च्यसे प्राज्ञैः सुहृद्भिर्विदुरादिभिः। माहार्षीः पाण्डवान्राजन्निति
तन्न त्वया श्रुतम् ॥ ४८ ॥ सुहृदां हितकामानां वाक्यं यो न
शृणोति ह। स महद्व्यसनं प्राप्य शोचते वै यथा भवान् ॥ ४९ ॥
याचितोऽसि पुरा राजन् दाशार्हेण शमं प्रति। न च तं लब्ध-
वान् कामं त्वत्तः कृष्णो महायशाः ॥ ५० ॥ तव निर्गुणतां ज्ञात्वा
पक्षपातं सुतेषु च। द्वैधीभावं तथा धर्मे पाण्डवेषु च मत्सरम्
॥ ५१ ॥ तव जिह्ममभिप्रायं विदित्वा पाण्डवान् प्रति। आर्त-
प्रलापांश्च बहून् मनुजाधिपसत्तम ॥ ५२ ॥ सर्वलोकस्य तत्त्वज्ञः
सर्वलोकेश्वरः प्रभुः। वासुदेवस्ततो युद्धं कुरूणामकरोन्महत्
॥ ५३ ॥ आत्मापराधात् सुमहान् प्राप्तस्ते विपुलः क्षयः। नैनं
दुर्योधने दोषं कर्त्तुमर्हसि मानद ॥ ५४ ॥ न हि ते सुकृतं
किञ्चिदादौ मध्ये च भारत। दृश्यते पृष्ठतश्चैव त्वन्मूलो हि
पराजयः ॥ ५५ ॥ तस्मादवस्थितो भूत्वा ज्ञात्वा लोकस्य निर्णयम्।
शृणु युद्धं यथावृत्तं घोरं देवासुरोपमम् ॥ ५६ ॥ प्रविष्टे तव
सैन्यन्तु शैनेये सत्यविक्रमे। भीमसेनमुखाः पार्थाः प्रतीयुर्वाहिनी-
न्तव ॥ ५७ ॥ आगच्छतस्तान् सहसा क्रुद्धरूपान् सहानुगान्।
दधारैको रणे पाण्डून् कृतवर्मा महारथः ॥ ५८ ॥ यथोद्वृत्तं
धारयते वेला वै सलिलार्णवम्। पाण्डुसैन्यं तथा सङ्ख्ये

हार्दिक्यः समवारयत् ॥ ५९ ॥ तत्राद्भुतमपश्याम हार्दिक्यस्य
पराक्रमम् । यदेनं सहिताः पार्था नातिचक्रमुराहवे ॥ ६० ॥
ततो भीमस्त्रिभिर्विद्ध्वा कृतवर्माणमाशुगैः । शङ्खं दध्मौ महा-
बाहुर्हर्षयन् सर्वपाण्डवान् ॥ ६१ ॥ सहदेवस्तु विंशत्या धर्म-
राजश्च पञ्चभिः । शतेन नकुलश्चापि हार्दिक्यं समविध्यत ॥ ६२ ॥
द्रौपदेयास्त्रिसप्तत्या सप्तभिश्च घटोत्कचः । धृष्टद्युम्नस्त्रिभिश्चापि
कृतवर्माणमार्दयत् ॥ ६३ ॥ विराटो द्रुपदश्चैव याज्ञसेनिश्च
पञ्चभिः । शिखण्डी चैव हार्दिक्यं विद्ध्वा पञ्चभिराशुगैः ॥ ६४ ॥
पुनर्विव्याध विंशत्या सायकानां हसन्निव । कृतवर्मा ततो राजन्
सर्वतस्तान् महारथान् ॥ ६५ ॥ एकैकं पञ्चभिर्विद्ध्वा भीमं विव्याध
सप्तभिः । धनुर्ध्वजञ्चास्य तदा रथाद्भूमावपातयत् ॥ ६६ ॥
अथैनं छिन्नधन्वानं त्वरमाणो महारथः । आजघानोरसि क्रुद्धः
सप्तत्या निशितैः शरैः ॥ ६७ ॥ स गाढविद्धो बलवान् हार्दिक्यस्य
शरोत्तमैः । चचाल रथमध्यस्थः क्षितिकम्पे यथाचलः ॥ ६८ ॥
भीमसेनं तथा दृष्ट्वा धर्मराजपुरोगमाः । विसृजन्तः शरान् राजन्
कृतवर्माणमार्दयन् ॥ ६९ ॥ तं तथा कोष्ठकीकृत्य रथवंशेन
मारिष । विव्यधुः सायकैर्हृष्टा रक्षार्थं मारुतेर्मृधे ॥ ७० ॥
प्रतिलभ्य ततः संज्ञां भीमसेनो महाबलः । शक्तिं जग्राह समरे
हेमदण्डामयस्मयीम् ॥ ७१ ॥ चिक्षेप च रथात्तूर्णं कृतवर्मरथं
प्रति । सा भीमभुजनिर्मुक्ता निर्मुक्तोरगसन्निभा ॥ ७२ ॥ कृत
वर्माणमभितः प्रजज्वाल सुदारुणा । तामापतन्तीं सहसा
युगान्ताग्निसमप्रभाम् ॥ ७३ ॥ द्वाभ्यां शराभ्यां हार्दिक्यो निज-
घान द्विधा तदा । सा छिन्ना पतिता भूमौ शक्तिः कनकभूषणा
॥ ७४ ॥ द्योतयन्ती दिशो राजन् महोल्केव नभश्च्युता । शक्तिं
विनिहतां दृष्ट्वा भीमश्चुक्रोध वै भृशम् ॥ ७५ ॥ ततोऽन्यद्धनुरादाय
वेगवत् सुमहास्वनम् । भीमसेनो रणे क्रुद्धो हार्दिक्यं सम-

वारयत् ॥ ७६ ॥ अथैनं पञ्चभिर्बाणैराजघान स्तनान्तरे । भीमो भीमबलो राजंस्तव दुर्मन्त्रितेन च ॥ ७७ ॥ भोजस्तु शतधा विद्धो भीमसेनेन मारिष । रक्ताशोक इवोत्फुल्लो व्यभ्राजत रणाजिरे ॥ ७८ ॥ ततः क्रुद्धस्त्रिभिर्बाणैर्भीमसेनं हसन्निव । अभिहत्य दृढं युद्धे तान् सर्वान् प्रत्यविध्यत ॥ ७९ ॥ त्रिभिस्त्रिभिर्महेष्वासो यतमानान्महारथान् । तेऽपि तं प्रत्यविध्यन्त सप्तभिः सप्तभिः शरैः ॥ ८० ॥ शिखण्डिनस्ततः क्रुद्धः क्षुरप्रेण महारथः । धनुश्चिच्छेद समरे प्रहसन्निव भारत ॥ ८१ ॥ शिखण्डी च ततः क्रुद्धश्छिन्ने धनुषि सत्वरः । असिं जग्राह समरे शतचन्द्रं च भास्वरम् ॥ ८२ ॥ भ्रामयित्वा महच्चर्म चामीकरविभूषितम् । तमसिं प्रेषयामास कृतवर्मरथं प्रति ॥ ८३ ॥ स तस्य सशरं चापं छित्त्वा राजन् महानसिः । अभ्यगाद्धरणीं राजन् च्युतं ज्योतिरिवाम्बरात् ॥ ८४ ॥ एतस्मिन्नेव काले च त्वरमाणा महारथाः । विव्यधुः सायकैर्गाढं कृतवर्माणमाहवे ॥ ८५ ॥ अथान्यद्धनुरादाय त्यक्त्वा तच्च भेदवत् । विशीर्णं भरतश्रेष्ठ हार्दिक्यः परवीरहा ॥ ८६ ॥ विव्याध पाण्डवान् युद्धे त्रिभिस्त्रिभिरजिह्मगैः । शिखण्डिनञ्च विव्याध त्रिभिः पञ्चभिरेव च ॥ ८७ ॥ धनुरन्यत् समादाय शिखण्डी तु महायशाः । अवारयत् कूर्मनखैराशुगैर्हार्दिकात्मजम् ॥ ८८ ॥ ततः क्रुद्धो रणे राजन् हृदिकस्यात्मसम्भवः । अभिदुद्राव वेगेन याज्ञसेनिं महारथम् ॥ ८९ ॥ भीष्मस्य समरे राजन् मृत्योर्हेतुं महात्मनः । विदर्शयन् बलं शूरः शार्दूल इव कुञ्जरम् ॥ ९० ॥ तौ दिशागजसङ्काशौ ज्वलिताविव पावकौ । समापेततुरन्योऽन्यं शरसङ्घैररिन्दमौ ॥ ९१ ॥ विधुन्वानौ धनुःश्रेष्ठे सन्दधानौ च सायकान् । विसृजन्तौ च शतशो गभस्तीनिव भास्करौ ॥ ९२ ॥ तापयन्तौ शरैस्तीक्ष्णैरन्योऽन्यं तौ महारथौ । युगान्तप्रतिमौ

वीरौ रेजतुर्भास्कराविव ॥ ९३ ॥ कृतवर्मा च समरे याज्ञसेनिं महारथम् । विद्ध्वा सुभिस्त्रिसप्तत्या पुनर्विव्याध सप्तभिः ॥ ९४ ॥ स गाढविद्धो व्यथितो रथोपस्थे उपाविशत् । विसृज्य सशरं चापं मूर्च्छयाभिपरिप्लुतः ॥ ९५ ॥ तं विषण्णं रथे दृष्ट्वा तावकाः पुरुषर्षभ । हार्द्दिक्यं पूजयामासुर्वासांस्याद्दुधुवुश्च ह ॥ ९६ ॥ शिखण्डिनं तथा ज्ञात्वा हार्द्दिक्यशरपीड़ितम् । अपोवाह रणाद्यन्ता त्वरमाणो महारथम् ॥ ९७ ॥ सादितन्तु रथोपस्थे दृष्ट्वा पार्थाः शिखण्डिनम् । परिवव्रूरथैस्तूर्णं कृतवर्माणमाहवे ॥ ९८ ॥ तत्राद्भुतं परञ्चक्रे कृतवर्मा महारथः । यदेकः समरे पार्थान् वारयामास सानुगान् ॥ ९९ ॥ पार्थान् जित्वाजयच्चेदीन् पाञ्चालान् सृञ्जयानपि । कैकयांश्च महावीर्य्यान् कृतवर्मा महारथः ॥ १०० ॥ ते वध्यमानाः समरे हार्द्दिक्येन स्म पाण्डवाः । इतश्चेतश्च धावन्तो नैव चक्रुर्धृतिं रणे ॥ १०१ ॥ जित्वा पाण्डुसुतान् युद्धे भीमसेनपुरोगमान् । हार्द्दिक्यः समरेऽतिष्ठद्विधूम इव पावकः ॥ १०२ ॥ ते द्राव्यमाणाः समरे हार्द्दिक्येन महारथाः । विमुखाः समपद्यन्त शरवृष्टिभिरर्द्दिताः ॥ १०३ ॥

इति द्रोणपर्व्वणि जयद्रथवधपर्व्वणि कृतवर्मपराक्रमे चतुर्द्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

सञ्जय उवाच । शृणुष्वैकमना राजन् यन्मां त्वं परिपृच्छसि । द्राव्यमाणे बले तस्मिन् हार्द्दिक्येन महात्मना ॥ १ ॥ लज्जयावनते चापि प्रहृष्टेषापि तावकैः । द्वीपो य आसीत् पाण्डूनामगाधे गाधमिच्छताम् ॥ २ ॥ श्रुत्वा स निनदं भीमं तावकानां महाहवे । शैनेयस्त्वरितो राजन् कृतवर्माणमभ्ययात् ॥ ३ ॥ कृतवर्मा तु हार्द्दिक्यः शैनेयं निशितैः शरैः । अवाकिरत् सुसं-

क्रुद्धस्ततोऽक्रुध्यत् स सात्यकिः ॥ ४ ॥ अथाशु निशितं भल्लं शैनेयः
कृतवर्मणः । प्रेषयामास समरे शरांश्च चतुरोऽपरान् ॥ ५ ॥ ते
तस्य जघ्निरे वाहान् भल्लेनास्याच्छिनद्धनुः । पृष्ठरक्षं तथा सूत-
मविध्यन्निशितैः शरैः ॥ ६ ॥ ततस्तं विरथं कृत्वा सात्यकिः
सत्यविक्रमः । सेनामस्यार्दयामास शरैः सन्नतपर्वभिः ॥ ७ ॥
अभज्यताथ पृतना शैनेयशरपीड़िता । ततः प्रायात् स त्वरितः
सात्यकिः सत्यविक्रमः ॥ ८ ॥ शृणु राजन् यदकरोत् तव सैन्येषु
वीर्य्यवान् । अतीत्य स महाराज द्रोणानीकमहार्णवम् ॥ ९ ॥
पराजित्य तु संहृष्टः कृतवर्माणमाहवे । यन्तारमब्रवीत् शूरः
शनैर्याहीत्यसम्भ्रमः ॥ १० ॥ दृष्ट्वा तु तव तत्सैन्यं रथाश्वद्विप-
सङ्कुलम् । पदातिजनसम्पूर्णमब्रवीत् सारथिं पुनः ॥ ११ ॥
यदेतन्मेघसङ्काशं द्रोणानीकस्य सव्यतः । सुमहत् कुञ्जरानीकं
यस्य रुक्मरथो मुखम् ॥ १२ ॥ एते हि बहवः सूत दुर्निवाराश्च
संयुगे । दुर्य्योधनसमादिष्टा मदर्थे त्यक्तजीविताः ॥ १३ ॥ राज-
पुत्रा महेष्वासाः सर्व्वे विक्रान्तयोधिनः । त्रिगर्त्तानां रथोदाराः
सुवर्णविकृतध्वजाः ॥ १४ ॥ मामेवाभिमुखा वीरा योत्स्यमाना
व्यवस्थिताः । अत्र मां प्रापय क्षिप्रमश्वांश्चोदय सारथे ॥ १५ ॥
त्रिगर्त्तैः सह योत्स्यामि भारद्वाजस्य पश्यतः । ततः प्रायाच्छनैः
सूतः सात्वतस्य मते स्थितः ॥ १६ ॥ रथेनादित्यवर्णेन भास्वरेण
पताकिना । तमूहुः सारथेर्वश्या वल्गमाना हयोत्तमाः ॥ १७ ॥
वायुवेगसमाः सङ्ख्ये कुन्देन्दुरजतप्रभाः । आपतन्तं रथे तन्तु
शङ्खवर्णैर्हयोत्तमैः ॥ १८ ॥ परिवव्रुस्ततः शूरा गजानीकेन
सर्व्वतः । किरन्तो विविधांस्तीक्ष्णान् सायकान् लघुवेधिनः ॥ १९ ॥
सात्वतोऽपि शितैर्बाणैर्गजानीकमयोधयत् । पर्व्वतानिव वर्षेण
तपान्ते जलदो महान् ॥ २० ॥ वज्राशनिसमस्पर्शैर्वध्यमानाः
शरैर्गजाः । प्राद्रवन् रणमुत्सृज्य शिनिवीरसमीरितैः ॥ २१ ॥

शीर्णदन्ता विरुधिरा भिन्नमस्तकपिण्डिकाः । विशीर्णकर्णास्य-
करा विनियन्तृपताकिनः ॥ २२ ॥ सम्भिन्नवर्मघण्टाश्च विनिकृत्त-
महाध्वजाः । हतारोहा दिशो राजन् भेजिरे भ्रष्टकम्बलाः
॥ २३ ॥ रुवन्तो विविधान्नादान् जलदोपमनिस्वनाः । नाराचै-
र्वत्सदन्तैश्च भल्लैरञ्जलिकैस्तथा ॥ २४ ॥ क्षुरप्रैरर्धचन्द्रैश्च सात्व-
तेन विदारिताः । क्षरन्तोऽसृक् तथा मूत्रं पुरीषञ्च प्रदुद्रुवुः
॥ २५ ॥ बभ्रमुश्चस्खलुश्चान्ये पेतुर्मम्लुस्तथापरे । एवं तत्कुञ्जरा-
नीकं युयुधानेन पीडितम् ॥ २६ ॥ शरैरग्न्यर्कसङ्काशैः प्रदुद्राव
समन्ततः । तस्मिन् हते गजानीके जलसन्धो महाबलः ॥ २७ ॥
यत्तः सम्प्रापयन्नागं रजताश्वरथं प्रति । रुक्मवर्मधरः शूर-
स्तपनीयाङ्गदः शुचिः ॥ २८ ॥ कुण्डली मुकुटी खड्गी रक्त-
चन्दनरूषितः । शिरसा धारयन् दीप्तां तपनीयमयीं स्रजम्
॥ २९ ॥ उरसा धारयन्निष्कं कण्ठसूत्रञ्च भास्वरम् । चापञ्च
रुक्मविकृतं विधुन्वन् गजमूर्धनि ॥ ३० ॥ अशोभत महाराज
सविद्युदिव तोयदः । तमापतन्तं सहसा मागधस्य गजोत्तमम्
॥ ३१ ॥ सात्यकिर्वारयामास वेलेव मकरालयम् । नागं निवा-
रितं दृष्ट्वा शैनेयस्य शरोत्तमैः ॥ ३२ ॥ अक्रुध्यत रणे राजन्
जलसन्धो महाबलः । ततः क्रुद्धो महाराज मार्गणैर्भारसाधनैः
॥ ३३ ॥ अविध्यत शिनेः पौत्रं जलसन्धो महोरसि । ततोऽपरेण
भल्लेन पीतेन निशितेन च ॥ ३४ ॥ अस्यतो वृष्णिवीरस्य निचकर्त
शरासनम् । सात्यकिं छिन्नधन्वानं प्रहसन्निव भारत ॥ ३५ ॥
अविध्यन्मागधो वीरः पञ्चभिर्निशितैः शरैः । स विद्धो बहुभि-
र्बाणैर्जलसन्धेन वीर्यवान् ॥ ३६ ॥ नाकम्पत महाबाहुस्तद-
द्भुतमिवाभवत् । अचिन्तयन् वै स शरान् नात्यर्थं सम्भ्रमाद्बली
॥ ३७ ॥ धनुरन्यत् समादाय तिष्ठ तिष्ठेत्युवाच ह । एतावदुक्त्वा
शैनेयो जलसन्धं महोरसि ॥ ३८ ॥ विव्याध षष्ट्या सुभृशं

धरायां प्रहसन्निव। क्षुरप्रेण सुतीक्ष्णेन मुष्टिदेशे महद्धनुः ॥३९॥
जलसन्धस्य चिच्छेद विव्याध च त्रिभिः शरैः। जलसन्धस्तु
तत्त्यक्त्वा सशरं वै शरासनम् ॥ ४० ॥ तोमरं व्यसृजत्तूर्णं
सात्यकिं प्रति मारिष। स निर्भिद्य भुजं सव्यं माधवस्य महा-
रणे ॥ ४१ ॥ अभ्यगाद्धरणीं घोरः श्वसन्निव महोरगः। निर्भिन्ने
तु भुजे सव्ये सात्यकिः सत्यविक्रमः ॥ ४२ ॥ त्रिंशद्भिर्विशिखै-
स्तीक्ष्णैर्जलसन्धमताडयत्। प्रगृह्य तु ततः खड्गं जलसन्धो
महाबलः ॥ ४३ ॥ आर्षभं चर्म च महत् शतचन्द्रकमण्डलम्।
आविध्य च ततः खड्गं सात्वतायोत्ससर्ज ह ॥ ४४ ॥ शैनेयस्य
धनुश्छित्त्वा सखड्गो न्यपतन्महीम्। अलातचक्रवच्चैव व्यरोचत
महीं गतः ॥ ४५ ॥ अथान्यद्धनुरादाय सर्वकायावदारणम्।
शालस्कन्धप्रतीकाशमिन्द्राशनिसमस्वनम् ॥ ४६ ॥ विस्फार्य विव्यधे
क्रुद्धो जलसन्धं शरेण ह। ततः साभरणौ बाहू क्षुराभ्यां
माधवोत्तमः ॥ ४७ ॥ सात्यकिर्जलसन्धस्य चिच्छेद प्रहसन्निव।
तौ बाहू परिघप्रख्यौ पेततुर्गजसत्तमात् ॥ ४८ ॥ वसुन्धरधरा-
द्भ्रष्टौ पञ्चशीर्षाविवोरगौ। ततः सुदंष्ट्रं सुमहत् चारुकुण्डल-
मण्डितम् ॥ ४९ ॥ क्षुरेणास्य तृतीयेन शिरश्चिच्छेद सात्यकिः।
तत् पातितशिरोबाहु कबन्धं भीमदर्शनम् ॥ ५० ॥ द्विरदं जल-
सन्धस्य रुधिरेणाभ्यषिञ्चत। जलसन्धं निहत्याजौ त्वरमाणस्तु
सात्वतः ॥ ५१ ॥ वैमानं पातयामास गजस्कन्धाद्विशाम्पते।
रुधिरेणावसिक्ताङ्गो जलसन्धस्य कुञ्जरः ॥ ५२ ॥ विलम्बमान-
मवहत् संश्लिष्टं परमासनम्। शरार्दितः सात्वतेन मर्द्यमानः
स्ववाहिनीम् ॥ ५२ ॥ घोरमार्तस्वरं कृत्वा विदुद्राव महागजः।
हाहाकारो महानासीत्तव सैन्यस्य मारिष ॥ ५३ ॥ जलसन्धं
हतं दृष्ट्वा वृष्णीनामृषभेण तु। विमुखाश्चाभ्यधावन्त तव योधाः
समन्ततः ॥ ५४ ॥ पलायनकृतोत्साहा निरुत्साहा द्विषज्जये।

एतस्मिन्नन्तरे राजन् द्रोणः शस्त्रभृतांवरः ॥ ५५ ॥ अभ्यया-
ज्जवनैरश्वैर्युयुधानं महारथम् । तमुदीर्णं तथा दृष्ट्वा सैनेयं
कुरुपुङ्गवाः ॥ ५६ ॥ द्रोणेनैव सह क्रुद्धाः सात्यकिं समुपाद्रवन् ।
ततः प्रववृते युद्धं कुरूणां सात्वतस्य च । द्रोणस्य च रणे
राजन् घोरं देवासुरोपमम् ॥ ५७ ॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि जलसन्धवधे
पञ्चदशाधिकशततोऽध्यायः ॥ ११५ ॥

—०—

सञ्जय उवाच । ते किरन्तः शरव्रातान् सर्वे यत्ताः प्रहा-
रिणः । त्वरमाणा महाराज युयुधानमयोधयन् ॥ १ ॥ तं द्रोणः
सप्तसप्तत्या जघान निशितैः शरैः । दुर्मर्षणो द्वादशभिर्दुःसहो
दशभिः शरैः ॥ २ ॥ विकर्णश्चापि निशितैस्त्रिंशद्भिः कङ्कपत्रिभिः ।
विव्याध सव्ये पार्श्वे तु स्तनाभ्यामन्तरे तथा ॥ ३ ॥ दुर्मुखो
दशभिर्बाणैस्तथा दुःशासनोऽष्टभिः । चित्रसेनश्च शैनेयं द्वाभ्यां
विव्याध मारिष ॥ ४ ॥ दुर्योधनश्च महता शरवर्षेण माधवम् ।
अपीडयद्रणे राजन् शूराश्चान्ये महारथम् ॥ ५ ॥ सर्वतः प्रति-
विद्धस्तु तव पुत्रैर्महारथैः । तान् प्रत्यविध्यद्वार्ष्णेयः पृथक् पृथ-
गजिह्मगैः ॥ ६ ॥ भारद्वाजं त्रिभिर्बाणैर्दुःसहं नवभिः शरैः ।
विकर्णं पञ्चविंशत्या चित्रसेनञ्च सप्तभिः ॥ ७ ॥ दुर्मर्षणं द्वादश-
भिरष्टाभिश्च विविंशतिम् । सत्यव्रतञ्च नवभिर्विजयं दशभिः शरैः
॥ ८ ॥ ततो रुक्माङ्गदं चापं विधुन्वानो महारथः । अभ्ययात्
सात्यकिस्तूर्णं पुत्रं तव महारथम् ॥ ९ ॥ राजानं सर्वलोकस्य
सर्वलोकमहारथम् । शरैरभ्याहनद्गाढं ततो युद्धमभूत्तयोः ॥ १० ॥
विमुञ्चन्तौ शरांस्तीक्ष्णान् सन्दधानौ च सायकान् । अदृश्यं

समरेऽन्योन्यं चक्रतुस्तौ महारथौ ॥ ११ ॥ सात्यकिं कुरुराजेन
निर्विद्धो बह्वशोभत । असवद्रुधिरं भूरि स्वरसं चन्दनो यथा
॥ १२ ॥ सात्वतेन च बाणौघैर्निर्विद्धस्तनयस्तव । शातकुम्भ
मयापीड़ो बभौ यूप इवोच्छ्रितः ॥ १३ ॥ माधवस्तु रणे राजन्
कुरुराजस्य धन्विनः । धनुश्चिच्छेद समरे क्षुरप्रेण हसन्निव
॥ १४ ॥ अथैनं छिन्नधन्वानं शरैर्बहुभिराचिनोत् । निर्भिन्नश्च
शरैस्तेन द्विषता क्षिप्रकारिणा ॥ १५ ॥ नामृष्यत रणे राजा
शत्रोर्विजयलक्षणम् । अथान्यद्धनुरादाय हेमपृष्ठं दुरासदम् ॥ १६ ॥
विव्याध सात्यकिं तूर्णं सायकानां शतेन ह । सोऽतिविद्धो बल
वता तव पुत्रेण धन्विना ॥ १७ ॥ अमर्षवशमापन्नस्तव पुत्र
मपीडयत । पीड़ितं नृपतिं दृष्ट्वा तव पुत्रा महारथाः ॥ १८ ॥
सात्यकिं शरवर्षेण छादयामासुरोजसा । स छाद्यमानो बहुभि-
स्तव पुत्रैर्महारथैः ॥ १९ ॥ एकैकं पञ्चभिर्विद्ध्वा पुनर्विव्याध
सप्तभिः । दुर्योधनञ्च त्वरितो विव्याधाष्टभिराशुगैः ॥ २० ॥
प्रहसंश्चास्य चिच्छेद कार्मुकं रिपुभीषणम् । नागं मणिमयञ्चैव
शरैर्ध्वजमपातयत् ॥ २१ ॥ हत्वा तु चतुरो वाहान् चतुर्भिर्निशितैः
शरैः । सारथिं पातयामास क्षुरप्रेण महायशाः ॥ २२ ॥ एत
स्मिन्नन्तरे चैव कुरुराजं महारथम् । अवाकिरत् शरैर्हृष्टो
बहुभिर्मर्मभेदिभिः ॥ २३ ॥ स वध्यमानः समरे शैनेयस्य शरो-
त्तमैः । प्राद्रवत् सहसा राजन् पुत्रो दुर्योधनस्तव ॥ २४ ॥
आप्लुतश्च ततो यानं चित्रसेनस्य धन्विनः । हाहाभूतं जगच्चासीद्
दृष्ट्वा राजानमाहवे ॥ २५ ॥ ग्रस्यमानं सात्यकिना खे सोममिव
राहुणा । तन्तु शब्दमथ श्रुत्वा कृतवर्मा महारथः ॥ २६ ॥
अभ्ययात् सहसा तत्र यत्रास्ते माधवः प्रभुः । विधुन्वानो धनु-
श्रेष्ठं चोदयंश्चैव वाजिनः ॥ २७ ॥ भर्त्सयन् सारथिञ्चाग्रे याहि
याहीति सत्वरम् । तमापतन्तं सम्प्रेक्ष्य व्यादितास्यमिवान्तकम्

॥ २८ ॥ युयुधानो महाराज यन्तारमिदमब्रवीत् । कृतवर्मा
रथेनैष द्रुतमापतते परी ॥ २९ ॥ प्रत्युद्याहि रथेनैनं प्रवरं
सर्वधन्विनाम् । ततः प्रजविताश्वेन विधिवत् कल्पितेन च ॥ ३० ॥
आससाद रणे भोजं प्रतिमानं धनुष्मताम् । ततः परमसंक्रुद्धौ
ज्वलिताविव पावकौ ॥ ३१ ॥ समेयातां नरव्याघ्रौ व्याघ्राविव
तरस्विनौ । कृतवर्मा तु शैनेयं षड्विंशत्या समार्पयत् ॥ ३२ ॥
निशितैः सायकैस्तीक्ष्णैर्यन्तारञ्चास्य पञ्चभिः । चतुरश्चतुरो वाहा-
श्चतुर्भिः परमेषुभिः ॥ ३३ ॥ अविध्यत् साधुदान्तान् वै सैन्धवान्
सात्वतस्य हि । रुक्मध्वजो रुक्मपृष्ठं महद्विस्फार्य्य कार्मुकम् ॥३४॥
रुक्माङ्गदी रुक्मवर्मा रुक्मपुङ्खैरवारयत् । ततोऽशीतिं शिने-
पौत्रं सायकान् कृतवर्मणः ॥ ३५ ॥ प्राहिणोत्त्वरया युक्तो द्रष्टु-
कामो धनञ्जयम् । सोऽतिविद्धो बलवता शत्रुणा शत्रुतापन
॥ ३६ ॥ समकम्पत दुर्द्धर्षः क्षितिकम्पे यथाचलः । त्रिषष्ट्या
चतुरोऽस्याश्वान् सप्तभिः सारथिं तथा ॥ ३७ ॥ विव्याध निशि-
तैस्तूर्णं सात्यकिं सत्यविक्रमः । सुवर्णपुङ्खं विशिखं समाधाय च
सात्यकिः ॥ ३८ ॥ विसृजन्तं महाज्वालं संक्रुद्धमिव पन्नगम् ।
सोऽविध्यत् कृतवर्माणं यमदण्डोपमं शरम् ॥ ३९ ॥ जाम्बूनद-
विचित्रञ्च वर्म निर्भिद्य भानुमत् । अभ्यगाद्धरणीमुग्रो रुधिरेण
समुक्षितः ॥ ४० ॥ सञ्जातरुधिरश्चाजौ सात्वतेषुभिरर्द्दितः ।
सशरं धनुरुत्सृज्य न्यपतत् स्यन्दनोत्तमात् ॥ ४१ ॥ स सिंहदंष्ट्रो
जानुभ्यां पतितोऽमितविक्रमः । शरार्द्दितः सात्यकिना रथोपस्थे
नरर्षभः ॥ ४२ ॥ सहस्रबाहुसदृशमक्षोभ्यमिव सागरम् ।
निवार्य्य कृतवर्माणं सात्यकिः प्रययौ ततः ॥ ४३ ॥ खड्ग
शक्तिधनुःकीर्णां गजाश्वरथसङ्कुलाम् । प्रवर्त्तितोग्ररुधिरां शतशः
क्षत्रियर्षभैः ॥ ४४ ॥ प्रेक्षतां सर्वसैन्यानां मध्येन शिनिपुङ्गवः ।
अभ्यगाद्वाहिनीं हित्वा वृत्रहेवासुरीं चमूम् ॥ ४५ ॥ समाश्वस्य

च हार्द्दिक्यो रुद्ध्वा पान्यमहद्रनु । तस्थौ च तत्र बलवान्
वारयन् युधि पाण्डवान् ॥ ४६ ॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि कृतवर्मपराजये
षोड़शाधिकशततमोऽध्यायः ॥ ११६ ॥

---

सञ्जय उवाच । कम्पमानेषु सैन्येषु शैनेयेन ततस्ततः ।
भारद्वाजः शरव्रातैर्महद्भिः समवाकिरत् ॥ १ ॥ स सम्प्रहार-
स्तुमुलो द्रोणसात्वतयोरभूत् । पश्यतां सर्वसैन्यानां बलिवास-
वयोरिव ॥ २ ॥ ततो द्रोणः शिनेः पौत्रं चित्रैः सर्वायसैः शरैः ।
त्रिभिराशीविषाकारैर्ललाटे समविध्यत ॥ ३ ॥ तैर्ललाटार्पितै-
र्बाणैर्युयुधानस्त्वजिह्मगैः । व्यरोचत महाराज त्रिशृङ्ग इव पर्वतः
॥ ४ ॥ ततोऽस्य बाणानपरानिन्द्राशनिसमस्वनान् भारद्वाजो-
ऽन्तरप्रेक्षी प्रेषयामास संयुगे ॥ ५ ॥ तान् द्रोणचापनिर्मुक्तान्
दाशार्हः पततः शरान् । द्वाभ्यां द्वाभ्यां सुपुङ्खाभ्यां चिच्छेद
परमास्त्रवित् ॥ ६ ॥ तामस्य लघुतां द्रोणः समवेक्ष्य विशाम्पते ।
प्रहस्य सहसाविध्यद् विंशता शिनिपुङ्गवम् ॥ ७ ॥ पुनः पञ्चा-
शतेषूणां शतेन च समार्पयत् । लघुतां युयुधानस्य लाघवेन
विशेषयन् ॥ ८ ॥ समुत्पतन्ति वल्मीकाद् यथा क्रुद्धा महोरगाः ।
तथा द्रोणरथाद्राजन्नापतन्ति तनुच्छिदः ॥ ९ ॥ तथैव
युयुधानेन सृष्टाः शतसहस्रशः । अवाकिरन् द्रोणरथं शरा
रुधिरभोजनाः ॥ १० ॥ लाघवाद् द्विजमुख्यस्य सात्वतस्य च
मारिष । विशेषं नाध्यगच्छाम समावास्तां नरर्षभौ ॥ ११ ॥
सात्यकिस्तु ततो द्रोणं नवभिर्नतपर्वभिः । आजघान भृशं क्रुद्धो
ध्वजञ्च निशितैः शरैः ॥ १२ ॥ सारथिञ्च शतेनैव भारद्वाजस्य
पश्यतः । लाघवं युयुधानस्य दृष्ट्वा द्रोणो महारथः ॥ १३ ॥

सप्तत्या सारथिं विद्धा तुरगांश्च त्रिभिस्त्रिभिः । ध्वजमेकेन चिच्छेद माधवस्य रथे स्थितम् ॥ १४ ॥ अथापरेण भल्लेन हेमपुङ्खेन पत्रिणा । धनुश्चिच्छेद समरे माधवस्य महात्मनः ॥ १५ ॥ सात्यकिस्तु ततः क्रुद्धो धनुस्त्यक्त्वा महारथः । गदां जग्राह महतीं भारद्वाजाय चाक्षिपत् ॥ १६ ॥ तामापतन्तीं सहसा पट्टबद्धामयस्मयीम् । न्यवारयच्छरैर्द्रोणो बहुभिर्बहुरूपिभिः ॥ १७ ॥ अथान्यद्धनुरादाय सात्यकिः सत्यविक्रमः । विव्याध बहुभिर्वीरं भारद्वाजं शिलाशितैः ॥ १८ ॥ स विद्धा समरे द्रोणं सिंहनादममुञ्चत । तं वै न ममृषे द्रोणः सर्वशस्त्रभृतांवरः ॥ १९ ॥ ततः शक्तिं गृहीत्वा तु रुक्मदण्डामयस्मयीम् । तरसा प्रेषयामास माधवस्य रथं प्रति ॥ २० ॥ अनासाद्य तु शैनेयं सा शक्तिः कालसन्निभा । भित्त्वा रथं जगामोग्रा धरणीं दारुणस्वना ॥ २१ ॥ ततो द्रोणं शिने पौत्रो राजन् विव्याध पत्रिणा । दक्षिणं भुजमासाद्य पीडयन् भरतर्षभ ॥ २२ ॥ द्रोणोऽपि समरे राजन्माधवस्य महद्धनुः । अर्द्धचन्द्रेण चिच्छेद रथशक्त्या च सारथिम् ॥ २३ ॥ मुमोह सारथिस्तस्य रथशक्त्या समाहतः । स रथोपस्थमासाद्य मुहूर्त्तं सन्निपीडितः ॥ २४ ॥ चकार सात्यकी राजन् तत्र कर्मातिमानुषम् । अयोधयच्च यद्द्रोणं रश्मीन् जग्राह च स्वयम् ॥ २५ ॥ ततः शरशतेनैव युयुधानो महारथः । अविध्यद्ब्राह्मणं सङ्ख्ये हृष्टरूपो विशाम्पते ॥ २६ ॥ तस्य द्रोणः शरान् पञ्च प्रेषयामास भारत । ते घोराः कवचं भित्त्वा पपुः शोणितमाहवे ॥ २७ ॥ निर्विद्धस्तु शरैर्घोरैरक्रुध्यत् सात्यकिर्भृशम् । सायकान् व्यसृजच्चापि वीरो रुक्मरथं प्रति ॥ २८ ॥ ततो द्रोणस्य यन्तारं निपात्यैकेषुणा भुवि । अश्वान् व्यद्रावयद्बाणैर्हतसूतांस्ततस्ततः ॥ २९ ॥ स रथः प्रद्रुतः सङ्ख्ये मण्डलानि सहस्रशः । चकार राजतो राजन् भ्राजमान इवांशुमान्

॥ ३० ॥ अभिद्रवत गृह्णीत हयान् द्रोणस्य धावत । इति ते
मुक्रुशुः सर्वे राजपुत्राः सराजकाः ॥ ३१ ॥ ते सात्यकिमपास्याथ
राजन् युधि-महारथाः । यतो द्रोणस्ततः सर्वे सहसा समुपा-
द्रवन् ॥ ३२ ॥ तान् दृष्ट्वा प्रद्रुतान् संख्ये सात्वतेन शराहितान् ।
प्रभग्नं पुनरेवासीत्तव सैन्यं समाकुलम् ॥ ३३ ॥ व्यूहस्यैव पुन-
र्द्वारं गत्वा द्रोणो व्यवस्थितः । वातायमानैस्तैरश्वैर्नीतो वृष्णि-
शराहितैः ॥ ३४ ॥ पाण्डुपाञ्चालसम्भिन्नं व्यूहमालोक्य वीर्य्यवान् ।
शैनेये नाकरोद्यत्नं व्यूहस्यैवाभ्यरक्षत ॥ ३५ ॥ निवार्य्य पाण्डु-
पाञ्चालान् द्रोणाग्निः प्रदहन्निव । तस्थौ क्रोधाग्निसन्दीप्तः काल-
सूर्य्य इवोदितः ॥ ३६ ॥

इति द्रोणपर्व्वणि जयद्रथवधपर्व्वणि सात्यकिपराक्रमे
सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

---

सञ्जय उवाच । द्रोणं स जित्वा पुरुषप्रवीरस्तथैव हार्द्दिक्य-
मुखांस्त्वदीयान् । प्रहस्य सूतं वचनं बभाषे शिनिप्रवीरः कुरु-
पुङ्गवाग्र्य ॥ १ ॥ निमित्तमात्रं वयमत्र सूत दग्धारयः केशव-
फाल्गुनाभ्याम् । हतान्निहन्म्येह नरर्षभेण वयं सुरेशात्मजसम्भ-
वेन ॥ २ ॥ तमेवमुक्त्वा शिनिपुङ्गवस्तदा महामृधे सोऽग्र्यधनु-
र्द्धरोऽरिहा । किरन् समन्तात् सहसा शरान् बली समापतत्
श्येन इवामिषं यथा ॥ ३ ॥ तं यान्तमश्वैः शशिशङ्खवर्णैर्विगाह्य
सैन्यं पुरुषप्रवीरम् । नाशक्नुवन् वारयितुं समन्तादादित्यरश्मि-
प्रतिमं रथाग्र्यम् ॥ ४ ॥ असह्यविक्रान्तमदीनसत्त्वं सर्व्वे गणा
भारत ये त्वदीयाः । सहस्रनेत्रप्रतिमप्रभावं दिवीव सूर्य्यं जलद-
व्यपाये ॥ ५ ॥ अमर्षपूर्णस्त्वतिचित्रयोधी शरासनी काञ्चनवर्म-
धारी । सुदर्शनः सात्यकिमापतन्तं न्यवारयद्राजवरः प्रसह्य ॥ ६ ॥

ततोऽभवत् भारत सम्प्रहारः सुदारुणस्तं समतिप्रशंसन्। योधा-स्तदा योधवरौ हि तौ सम्प्रेक्ष्य तौ वत्सेन्द्रयोर्युद्धमिवामरौघाः ॥ ७ ॥ शरैः सुतीक्ष्णैः शतशोऽभ्यविध्यत् सुदर्शनः सात्वतमुख्यमाजौ। अना-गतानेव तु तान् पृषत्कान् चिच्छेद राजन् शिनिपुङ्गवोऽपि ॥ ८ ॥ तथैव शक्रप्रतिमोऽपि सात्यकिः सुदर्शने यान् क्षिपति स्म, सायकान्। द्विधा त्रिधा तानकरोत् सुदर्शनः शरोत्तमैः स्यन्दनवर्य्य-मास्थितः ॥ ९ ॥ तान् वीक्ष्य बाणान् निहतांस्तदानीं सुदर्शनः सात्यकिबाणवेगैः। क्रोधाद्दिधक्षन्निव तिग्मतेजाः शरानमुञ्च-त्तपनीयचित्रान् ॥ १० ॥ पुनः स बाणैस्त्रिभिरग्निकल्पैराकर्ण-पूर्णैर्निशितैः सुपुङ्खैः। विव्याध देहावरणं विभिद्य ते सात्यकेः शाविविशुः शरीरम् ॥ ११ ॥ तथैव तस्यावनिपालपुत्रः सन्धाय बाणैरपरैर्ज्वलद्भिः। आजघ्निवांस्तान् रजतप्रकाशान् चतुर्भिरश्वां-श्चतुरः प्रसह्य ॥ १२ ॥ तथा तु तेनाभिहतस्तरस्वी नप्ता शिने-रिन्द्रसमानवीर्य्यः। सुदर्शनस्येषुगणैः सुतीक्ष्णैर्हयान्निहत्याशु ननाद नादम् ॥ १३ ॥ अथास्य सूतस्य शिरो निकृत्य भल्लेन शक्राशनिसन्निभेन। सुदर्शनस्यापि शिनिप्रवीरः क्षुरेण कालान-लसन्निभेन ॥ १४ ॥ सकुण्डलं पूर्णशशिप्रकाशं भ्राजिष्णुवक्त्रं विचकर्त्त देहात्। यथा पुरा वज्रधरः प्रसह्य बलस्य सङ्ख्येऽति-बलस्य राजन् ॥ १५ ॥ निहत्य तं पार्थिवपुत्रपौत्रं रणे यदूनां-मृषभस्तरस्वी। मुदा समेतः परया महात्मा रराज राजन् सुर-राजकल्पः ॥ १६ ॥ ततो ययावर्ज्जुन एव येन निवार्य्य सैन्यं तव मार्गणौघैः। सदश्वयुक्तेन रथेन राजन् लोकान् विसिस्मापयिषुर्नृवीरः ॥ १७ ॥ तत्तस्य विस्मापयनीयमग्र्यमपूजयन् योधवराः समेताः। प्रवर्त्तमानानिषुगोचरेऽरीन् ददाह बाणैर्हुतभुग्यथैव ॥ १८ ॥

इति द्रोणपर्व्वणि जयद्रथवधपर्व्वणि सुदर्शनवधे अष्टादशाधिकशततोऽध्यायः ॥ ११८ ॥

सञ्जय उवाच। ततः स सात्यकिर्धीमान् महात्मा वृष्णिपुङ्गवः। सुदर्शनं निहत्याजौ यन्तारं पुनरब्रवीत् ॥ १ ॥ रथाश्वनागकलिलं शरशक्त्यूर्मिमालिनम्। खड्गमत्स्यं गदाग्राहं शूरायुधमहास्वनम् ॥ २ ॥ प्राणापहारिणं रौद्रं वादित्रोत्क्रुष्टनादितम्। योधानामसुखस्पर्शं दुर्धर्षमजयैषिणाम् ॥ ३ ॥ तीर्णाः स्म दुस्तरं तात द्रोणानीकमहार्णवम्। जलसन्धबलेनाजौ पुरुषादैरिवावृतम् ॥ ४ ॥ अतोऽन्यत् पृतनाशेषं मन्ये कुनदिकामिव। तर्त्तव्यामल्पसलिलां चोदयाश्वानसम्भ्रमम् ॥ ५ ॥ हस्तप्राप्तमहं मन्ये साम्प्रतं सव्यसाचिनम्। निर्जित्य दुर्धरं द्रोणं सपदानुगमाहवे ॥ ६ ॥ हार्दिक्यं योधवर्यं च मन्ये प्राप्तं धनञ्जयम्। न हि मे जायते त्रासो दृष्ट्वा सैन्यान्यनेकशः ॥ ७ ॥ वह्नेरिव प्रदीप्तस्य वने शुष्कतृणोलपे। पश्य पाण्डवमुख्येन याता भूमिः किरीटिना ॥ ८ ॥ पत्त्यश्वरथनागौघैः पतितैर्विषमीकृताम्। द्रवते तद्यथा सैन्यं तेन भग्नं महात्मना ॥ ९ ॥ रथैर्विपरिधावद्भिर्गजैरश्वैश्च सारथे। कौशेयारुणसङ्काशमेतदुद्धूयते रजः ॥ १० ॥ अभ्याशस्थमहं मन्ये श्वेताश्वं कृष्णसारथिम्। स एष श्रूयते शब्दो गाण्डीवस्यामितौजसः ॥ ११ ॥ यादृशानि निमित्तानि मम प्रादुर्भवन्ति वै। अनस्तं गत आदित्ये हन्ता सैन्धवमर्जुनः ॥ १२ ॥ शनैर्विश्रम्भयन्नश्वान् याहि यत्तारिवाहिनीं। यत्रैते सतनुत्राणाः सुयोधनपुरोगमाः ॥ १३ ॥ दंशिताः क्रूरकर्माणः काम्बोजा युद्धदुर्मदाः। शरबाणासनधरा यवनाश्च प्रहारिणः ॥ १४ ॥ शकाः किराता दरदा बर्बरास्ताम्रलिप्तकाः। अन्ये च बहवो म्लेच्छा विविधायुधपाणयः ॥ १५ ॥ यत्रैते सतनुत्राणाः सुयोधनपुरोगमाः। मामेवाभिमुखाः सर्वे तिष्ठन्ति समरार्थिनः ॥ १६ ॥ एतान् सरथनागाश्वान् निहत्याजौ सपत्तिनः। इदं दुर्गं महाघोरं तीर्णमेवोपधारय ॥ १७ ॥

सूत उवाच । न सम्भ्रमो मे वार्ष्णेय विद्यते सत्यविक्रम ।
यद्यपि स्यात्तव क्रुद्धो जामदग्न्योऽग्रतः स्थितः ॥ १८ ॥ द्रोणो
वा रथिनां श्रेष्ठः कृपो मद्रेश्वरोऽपि वा । तथापि सम्भ्रमो न
स्यात् त्वामाश्रित्य महाभुज ॥ १९ ॥ त्वया सुबहवो युद्धे निर्जिता
मधुसूदन । दंशिताः क्रूरकर्माणः काम्बोजा युद्धदुर्मदाः ॥ २० ॥
शरबाणासनधरा यवनाश्च प्रहारिणः । शका किराता दरदा
बर्बरास्ताम्रलिप्तका ॥ २१ ॥ अन्ये च बहवो म्लेच्छा विविधा-
युधपाणयः । न च मे सम्भ्रमः कश्चिद्भूतपूर्वः कदाचन ॥ २२ ॥
किमुतैतत् समासाद्य वीरं संयुगगोष्पदम् । आयुष्मन् कतरेण
त्वा प्रापयामि धनञ्जयम् ॥ २३ ॥ केषां क्रुद्धोऽसि वार्ष्णेय केषां
मृत्युरुपस्थितः । केषां संयमनीमद्य गन्तुमुत्सहते मनः ॥ २४ ॥
के त्वां युधि पराक्रान्तं कालान्तकयमोपमम् । दृष्ट्वा विक्रमसंयुक्तं
विद्रविष्यन्ति संयुगे । केषां वैवस्वतो राजा स्मरतेऽद्य महाभुज ॥ २५ ॥
सात्यकिरुवाच । मुण्डानेतान् हनिष्यामि दानवानिव वासवः ।
प्रतिज्ञां पालयिष्यामि काम्बोजानेव मा वह ॥ २६ ॥ अद्यैषां
कदनं कृत्वा प्रियं यास्यामि पाण्डवम् । अद्य द्रक्ष्यन्ति मे वीर्यं
कौरवाः ससुयोधनाः ॥ २७ ॥ मुण्डानीके हते सूत सर्वसैन्येषु
चासकृत् । अद्य कौरवसैन्यस्य दीर्यमाणस्य संयुगे ॥ २८ ॥
श्रुत्वा विरावं बहुधा सन्तप्स्यति सुयोधनः । अद्य पाण्डवमुख्यस्य
श्वेताश्वस्य महात्मनः ॥ २९ ॥ आचार्यस्य कृतं मार्गं दर्शयिष्यामि
संयुगे । अद्य महाबाणनिहतान् योधमुख्यान् सहस्रशः ॥ ३० ॥
दृष्ट्वा दुर्योधनो राजा पश्चात्तापं गमिष्यति । अद्य मे क्षिप्रहस्तस्य
क्षिपतः सायकोत्तमान् ॥ ३१ ॥ अलातचक्रप्रतिमं धनुर्द्रक्ष्यन्ति
कौरवाः । मत्सायकाचिताङ्गानां रुधिरं स्रवतां मुहुः ॥ ३२ ॥
सैनिकानां वधं दृष्ट्वा सन्तप्स्यति सुयोधनः । अद्य मे क्रुद्धरूपस्य
निघ्नतश्च वरान् वरान् ॥ ३३ ॥ द्विरर्जुनमिमं लोकं मंस्यतेऽद्य

सुयोधन। अद्य राजसहस्राणि निहतानि मया रणे ॥ ३४ ॥ दृष्ट्वा दुर्योधनो राजा सन्तप्स्यति महामृधे। अद्य स्नेहञ्च भक्तिञ्च पाण्डवेषु महात्मसु ॥ ३५ ॥ हत्वा राजसहस्राणि दर्शयिष्यामि राजसु। बलं वीर्य्यं कृतज्ञत्वं मम ज्ञास्यन्ति कौरवाः ॥ ३६ ॥

सञ्जय उवाच। एवमुक्तस्तदा सूत शिक्षितान् साधुवाहिनः। शशाङ्कसन्निकाशान् वै वाजिनो व्यनुदद् भृशम् ॥ ३७ ॥ ते पिबन्त इवाकाशं युयुधानं हयोत्तमाः। प्रापयन् यवनान् शीघ्रं मनःपवनरंहसः ॥ ३८ ॥ सात्यकिं ते समासाद्य पृतनास्वनिवर्त्तिनम्। बहवो लघुहस्ताश्च शरवर्षैरवाकिरन् ॥ ३९ ॥ तेषामिषूनथास्त्राणि वेगवान्नतपर्वभिः। अच्छिनत् सात्यकी राजन् नैन ते प्राप्नुवन् शराः ॥ ४० ॥ रुक्मपुङ्खैः सुनिशितैर्गार्द्धपत्रैरजिह्मगैः। उच्चकर्त्त शिरांस्युग्रो यवनानां भुजानपि ॥ ४१ ॥ शैक्यायसानि वर्म्माणि कांस्यानि च समन्ततः। भित्त्वा देहांस्तथा तेषां शरा जग्मुर्महीतलम् ॥ ४२ ॥ ते हन्यमाना वीरेण म्लेच्छाः सात्यकिना रणे। शतशोऽभ्यपतंस्तत्र व्यसवो वसुधातले ॥ ४३ ॥ सुपूर्णायतमुक्तैस्तानव्यवच्छिन्नपिच्छितैः। पञ्च षट् सप्त चाष्टौ च बिभेद यवनाञ्छरैः ॥ ४४ ॥ काम्बोजानां सहस्रैस्तु शकानाञ्च विशाम्पते। शबराणां किरातानां बर्बराणां तथैव च ॥ ४५ ॥ अगम्यरूपां पृथिवीं मांसशोणितकर्द्दमाम्। कृतवांस्तत्र शैनेयः क्षपयंस्तावकं बलम् ॥ ४६ ॥ दस्यूनां साशिरस्त्राणैः शिरोभिर्लूनमूर्द्धजैः। दीर्घकूर्च्चैर्मही कीर्णा विबर्हैरण्डजैरिव ॥ ४७ ॥ रुधिरोक्षितसर्वाङ्गैस्तैस्तदायोधनं बभौ। कबन्धैरावृतं सर्वं ताम्राभ्रैः खमिवावृतम् ॥ ४८ ॥ वज्राशनिसमस्पर्शैः सुपर्वभिरजिह्मगैः। ते सात्वतेन निहताः समावव्रुर्वसुन्धराम् ॥ ४९ ॥ अल्पावशिष्टाः सम्भग्नाः कृच्छ्रप्राणा विचेतसः। जिताः सङ्ख्ये

न्युक्त तीर्णं वै सैन्यसागरम् ॥ ९ ॥ परिवव्रुः सुसंक्रुद्धास्तावकीया
सात्यकिं रथाः । दुर्योधनचित्रसेनौ दुःशासनविविंशती ॥ १० ॥
शकुनिर्दुःसहश्चैव युवा दुर्मर्षणः क्रथः । अन्ये च बहवः शूरा
शस्त्रवन्तो दुरासदा ॥ ११ ॥ पृष्ठतः सात्यकिं यान्तमन्वधाव
न्नमर्षिणः । अथ शब्दो महानासीत्तव सैन्यस्य मारिष ॥ १२ ॥
मारुतोद्धूतवेगस्य सागरस्येव पर्वणि । तानभिद्रवतः सर्वान्
समीक्ष्य शिनिपुङ्गवः ॥ १३ ॥ शनैर्याहीति यन्तारमब्रवीत्
प्रहसन्निव । इदमेतत् समुद्धूतं धार्तराष्ट्रस्य यद्बलम् ॥ १४ ॥
मामेवाभिमुखं तूर्णं गजाश्वरथपत्तिमत् । नादयद्वै दिशः सर्वा
रथघोषेण सारथे ॥ १५ ॥ पृथिवीं चान्तरीक्षञ्च कम्पयत् साग
रानाप । एतद्बलार्णवं सूत वारयिष्ये महारणे ॥ १६ ॥ पौर्ण
मास्यामिवोद्धूतं वेलेव मकरालयम् । पश्य मे सूत विक्रान्त
मिन्द्रस्येव महामृधे ॥ १७ ॥ एष सैन्यानि शत्रूणां विधमामि
शितैः शरैः । निहतानाहवे पश्य पदात्यश्वरथद्विपान् ॥ १८ ॥
मच्छरैरग्निसङ्काशैर्विदेहान् सहस्रशः । इत्येवं ब्रुवतस्तस्य
सात्यकेरमितौजसः ॥ १९ ॥ समीपे सैनिकास्ते तु शीघ्रमीयु
र्युयुत्सवः । जह्याद्रवस्व तिष्ठेति पश्य पश्येति वादिनः ॥ २० ॥
तानेवं ब्रुवतो वीरान् सात्यकिर्निशितैः शरैः । जघान त्रिशता

सम्भ्रान्तनरनागाश्वमावर्त्ततमुहुर्मुहुः । तत्सैन्यमिषुभिस्तेन वध्य-
मानं समन्ततः ॥ २७ ॥ बभ्राम तत्र तत्रैव गावः शीतार्द्दिता
इव । पदातिनं रथं नागं सादिनं तुरगन्तथा ॥ २८ ॥ अविद्धं
तत्र नाद्राक्ष युयुधानस्य सायकैः । न तादृक् कदनं राजन् कृतवा-
स्तत्र फाल्गुनः ॥ २९ ॥ यादृक् क्षयमनीकानामकरोत् सात्यकि-
र्नृप । अत्यर्ज्जुनं शिनेः पौत्रो युध्यते पुरुषर्षभ ॥ ३० ॥ वीतभी-
र्लाघवोपेतः कृतित्वं सम्प्रदर्शयन् । ततो दुर्य्योधनो राजा सात्व-
तस्य त्रिभिः शरैः ॥ ३१ ॥ विव्याध सूतं निशितैश्चतुर्भिश्चतुरो
हयान् । सात्यकिञ्च त्रिभिर्विद्ध्वा पुनरष्टाभिरेव च ॥ ३२ ॥ दुःशा-
सनः षोड़शभिर्विव्याध शिनिपुङ्गवम् । शकुनिः पञ्चविंशत्या
चित्रसेनश्च पञ्चभिः ॥ ३३ ॥ दुःसहः पञ्चदशभिर्विव्याधोरसि सात्य-
किम् । उत्स्मयन् वृष्णिशार्दूलस्तथा बाणैः समाहतः ॥ ३४ ॥
तानविध्यन्महाराज सर्व्वानेव त्रिभिस्त्रिभिः । गाढविद्धानरीन् कृत्वा
मार्गणैः सोऽतितेजनैः ॥ ३५ ॥ शैनेयः श्येनवत् सङ्ख्ये व्यचरल्लघु-
विक्रमः ॥ सौबलस्य धनुश्छित्त्वा हस्तावापं निकृत्य च ॥ ३६ ॥
दुर्य्योधनं त्रिभिर्बाणैरभ्यविध्यत् स्तनान्तरे । चित्रसेनं शतेनैव
दुःसहं दशभिस्तथा ॥ ३७ ॥ दुःशासनन्तु विंशत्या विव्याध शिनि-
पुङ्गवः । अथान्यद्धनुरादाय श्यालस्तव विशाम्पते ॥ ३८ ॥ अष्टाभिः
सात्यकिं विद्ध्वा पुनर्विव्याध पञ्चभिः । दुःशासनश्च दशभिर्दुःसहश्च
त्रिभिः शरैः ॥ ३९ ॥ दुर्मुखश्च द्वादशभी राजन् विव्याध सात्य-
किम् । दुर्य्योधनस्त्रिसप्तत्या विद्ध्वा भारत माधवम् ॥ ४० ॥
ततोऽस्य निशितैर्बाणैस्त्रिभिर्विव्याध सारथिम् । तान् सर्व्वान्
सहितान् शूरान् यतमानान्महारथान् ॥ ४१ ॥ पञ्चभिः पञ्चभि-
र्बाणैः पुनर्विव्याध सात्यकिः । ततः स रथिनां श्रेष्ठस्तव पुत्रस्य
सारथिम् ॥ ४२ ॥ आजघानाशु भल्लेन स हतो न्यपतद्भुवि ।
पतिते सारथौ तस्मिन् तव पुत्ररथः प्रभो ॥ ४३ ॥ वातायमानै-

स्वैरश्वैरपनीयत सङ्गरात् ।, ततस्तव सुतो राजन् सैनिकाश्च विशाम्पते ॥ ४४ ॥ राज्ञो रथमभिप्रेक्ष्य विद्रुता शतशोऽभवन् । विद्रुत तव तत्सैन्य दृष्ट्वा भारत सात्यकि ॥ ४५ ॥ अवाकिरच्छरैस्तीक्ष्णै रुक्मपुङ्खैः शिलाशितै, । विद्राव्य सर्वसैन्यानि तावकानि सहस्रश ॥ ४६ ॥ प्रययौ सात्यकी राजन् श्वेताश्वस्य रथं प्रति । त शरानाददानञ्च रक्षमाणञ्च सारथिम् । आत्मानं पालयानञ्च तावका समपूजयन् ॥ ४७ ॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि सात्यकिप्रवेशे विंशत्यधिकशततमोऽध्याय ॥ १२० ॥

———

सञ्जय उवाच। तव दुर्मन्त्रिते राजन् दुर्योधनकृतेन च।
शृणुष्वावहितो भूत्वा यत्ते वक्ष्यामि भारत ॥ ११ ॥ ते पुनः
संन्यवर्त्तन्त कृत्वा संशप्तका मिथः। परां युद्धे मतिं क्रूरां तव
पुत्रस्य शासनात् ॥ १२ ॥ त्रीणि सादिसहस्राणि दुर्योधनपुरो-
गमाः। शककाम्बोजवाह्लीका यवनाः पारदास्तथा ॥ १३ ॥
कलिङ्गास्तङ्गणाम्बष्ठाः पैशाचाश्च सबर्बराः। पार्वतीयाश्च राजेन्द्र
क्रुद्धाः पाषाणपाणयः ॥ १४ ॥ अभ्यद्रवंस्ते शैनेयं शलभाः
पावकं यथा। युक्ताः पञ्चशता राजन् शैनेयं समुपाद्रवन् ॥ १५ ॥
ततो रथसहस्रेण महारथशतेन च। द्विरदानां सहस्रेण द्वि-
साहस्रैश्च वाजिभिः ॥ १६ ॥ शरवर्षाणि मुञ्चन्तो विविधानि
महारथाः। अभ्यद्रवंस्ते शैनेयमसङ्ख्येयाः परन्तप ॥ १७ ॥
तांश्च सञ्चोदयन् सर्वान् घ्नतैनमिति भारत। दुःशासनो महा-
राज सात्यकिं पर्य्यवारयत ॥ १८ ॥ तत्राद्भुतमपश्याम शैनेय-
चरितं महत्। यदेको बहुभिः सार्द्धमसम्भ्रान्तमयुध्यत ॥ १९ ॥
अवधीच्च रथानीकं द्विरदानाञ्च तद्बलम्। सादिनश्चैव तान् सर्वान्
दस्यूनपि च सर्वशः ॥ २० ॥ तत्र चक्रैर्विमथितैर्भग्नैश्च परमायुधैः।
अक्षैश्च बहुधा भग्नैरीषादण्डकबन्धुरैः ॥ २१ ॥ कुञ्जरैर्मथितै-
श्चापि ध्वजैश्च विनिपातितैः। वर्मभिश्चामरैश्चैव विकीर्णैश्च समन्-
न्ततः ॥ २२ ॥ स्रग्भिराभरणैर्वस्त्रैरनुकर्षैश्च मारिष। संछन्ना
वसुधा तत्र शरदि द्यौर्ग्रहैरिव ॥ २३ ॥ गिरिरूपधराश्चापि
पतिताः कुञ्जरोत्तमाः। अञ्जनस्य कुले जाता वामनस्य च
भारत ॥ २४ ॥ सुप्रतीककुले जाता महापद्मकुले तथा। ऐरा-
वतकुले चैव तथान्येषु कुलेषु च ॥ २५ ॥ जाता दन्तिवरा राजन्
शेरते बहवो हताः। वानायुजान् पार्वतीयान् काम्बोजानथ
बाह्लिकान् ॥ २६ ॥ तथा हयवरान् राजन् निजघ्ने तत्र सात्यकिः।
नानादेशोद्भवान् पत्तीन्नानाजातीय सर्वशः ॥ २७ ॥ निजघ्ने

ततः शैनेयः शतशोऽथ सहस्रशः। तेषु प्रकाल्यमानेषु दस्यून्
दुःशासनोऽब्रवीत् ॥ २८ ॥ निवर्त्तध्वमधर्मज्ञा युध्यध्वं किं सृतेन
वः। तांश्चातिभग्नान् सम्प्रेक्ष्य पुत्रो दुःशासनस्तव ॥ २९ ॥
पाषाणयोधिनः शूरान् पार्वतीयानचोदयत्। अश्मयुद्धेषु कुशलं
नैतज्जानाति सात्यकिः ॥ ३० ॥ अश्मयुद्धमजानन्तं घ्नतैनं युद्ध-
कामुकम्। तथैव कुरवः सर्वे नाश्मयुद्धविशारदाः ॥ ३१ ॥ अभि-
द्रवत माभैष्ट न वः प्राप्स्यति सात्यकिः। ते पार्वतीया राजानः
सर्वे पाषाणयोधिनः ॥ ३२ ॥ अभ्यद्रवन्त शैनेयं राजानमिव
मन्त्रिणः। ततो गजशिरःप्रख्यैरुपलैः शैलवासिनः ॥ ३३ ॥
उद्यतैर्युयुधानस्य पुरतस्तस्थुराहवे। क्षेपणीयैस्तथाप्यन्ये सात्व-
तस्य वधैषिणः ॥ ३४ ॥ चोदितास्तव पुत्रेण सर्वतो रुरुधुर्दिशः।
तेषामापततामेव शिलायुद्धं चिकीर्षताम् ॥ ३५ ॥ सात्यकिः
प्रतिसन्धाय निशितान् प्राहिणोच्छरान्। तामश्मवृष्टिं तुमुलां
पार्वतीयैः समीरिताम् ॥ ३६ ॥ चिच्छेदोरगसङ्काशैर्नाराचैः शिनि-
पुङ्गवः। तैरश्मचूर्णैर्दीप्यद्भिः खद्योतानामिव व्रजैः ॥ ३७ ॥
प्रायः सैन्यान्यहन्यन्त हाहाभूतानि मारिष। ततः पञ्चशताः
शूराः समुद्यतमहाशिलाः ॥ ३८ ॥ निकृत्तबाहवो राजन् निपेतु-
र्धरणीतले। पुनर्दशशताश्चान्ये शतशश्च सहस्रशः ॥ ३९ ॥
सोपलैर्बाहुभिश्छिन्नैः पेतुरप्राप्य सात्यकिम्। पाषाणयोधिनः
शूरान् यतमानानवस्थितान् ॥ ४० ॥ न्यवधीद्बहुसाहस्रांस्तदद्भुत-
मिवाभवत्। ततः पुनस्तु सम्भूय तेऽश्मवृष्टिं समन्ततः ॥ ४१ ॥
अयोहस्ताः शूलहस्ता दरदास्तङ्गणाः खशाः। लम्पाकाश्च पुलि-
न्दाश्च चिक्षिपुस्तांश्च सात्यकिः ॥ ४२ ॥ नाराचैः प्रतिचिच्छेद
प्रतिपत्तिविशारदः। अद्रीणां भिद्यमानानामन्तरीक्षे शितैः शरैः
॥ ४३ ॥ शब्देन प्राद्रवन् सङ्ख्ये रथाश्वगजपत्तयः। अश्म-
चूर्णैरवाकीर्णा मनुष्या गजवाजिनः ॥ ४४ ॥ नाशक्नुवन्नवस्थातुं

१

भ्रमरैरिव द्रुमिताः। हतविष्टाः वरुधिरा भिन्नमस्तकपिण्डिकाः ॥ ४५ ॥ कुञ्जरा वर्ज्जयामासुर्युयुधानरथं तदा। ततः शब्दः समभवत् तव सैन्यस्य मारिष ॥ ४६ ॥ माधवेनार्द्यमानस्य सागरस्येव पर्व्वणि। तं शब्दं तुमुलं श्रुत्वा द्रोणो यन्तारमब्रवीत् ॥४७॥ एष सूत रणे क्रुद्धः सात्वतानां महारथः। दारयन् बहुधा सैन्यं रणे चरति कालवत् ॥ ४८ ॥ यत्रैष शब्दस्तुमुलस्तत्र सूत रथं नय। पाषाणयोधिभिर्नूनं युयुधानः समागतः ॥ ४९ ॥ तथाहि रथिनः सर्व्वे ह्रियन्ते विद्रुतैर्हयैः। विशस्त्रकवचा रुग्णास्तत्र तत्र पतन्ति च ॥ ५० ॥ न शक्नुवन्ति यन्तारः संयन्तुं तुमुले हयान्। इत्येतद्वचनं श्रुत्वा भारद्वाजस्य सारथिः ॥ ५१ ॥ प्रत्युवाच ततो द्रोणं सर्व्वशस्त्रभृताम्वरम्। सैन्यं द्रवति चायुष्मन् कौरवेयं समन्ततः ॥ ५२ ॥ पश्य योधान्रणे भग्नान् धावतो वै समन्ततः। इमे च संहताः शूराः पाञ्चालाः पाण्डवैः सह ॥ ५३ ॥ त्वामेव हि जिघांसन्तः आद्रवन्ति समन्ततः। अत्र कार्य्यं समाधत्स्व प्राप्तकालमरिन्दम ॥ ५४ ॥ स्थाने वा गमने वापि दूरं यातश्च सात्यकिः। तथैवं वदतस्तस्य भारद्वाजस्य मारिष ॥ ५५ ॥ प्रत्यदृश्यत शैनेयो निघ्नन् बहुविधान्नरान्। ते वध्यमानाः समरे युयुधानेन तावकाः ॥ ५६ ॥ युयुधानरथं त्यक्त्वा द्रोणानीकाय दुद्रुवुः। यैस्तु दुःशासनः सार्द्धं रथैः पूर्व्वं न्यवर्त्तत। ते भीतास्त्वभ्यधावन्त सर्व्वे द्रोणरथं प्रति ॥ ५७ ॥

इति द्रोणपर्व्वणि जयद्रथवधपर्व्वणि सात्यकिप्रवेशे एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥

---

सञ्जय उवाच। दुःशासनरथं दृष्ट्वा समीपे पर्य्यवस्थितम्। भारद्वाजस्ततो वाक्यं दुःशासनमथाब्रवीत् ॥ १ ॥ दुःशासन रथाः

सर्वे कस्माच्चैते प्रविद्रुताः । कच्चित् क्षेमन्तु नृपतेः कच्चिज्जीवति
सैन्धवः ॥ २ ॥ राजपुत्रो भवानग्र्य राजभ्राता महारथः । किमर्थं
द्रवसे युद्धे यौवराज्यमवाप्य हि ॥ ३ ॥ दासी जितासि द्यूते त्वं
यथाकामचरी भव । वाससां वाहिका राज्ञो भ्रातुर्ज्येष्ठस्य मे
भव ॥ ४ ॥ न सन्ति पतयः सर्वे तेऽद्य षण्डतिलैः समाः ।
दुःशासनैवं कस्मात्त्वं पूर्वमुक्त्वा पलायसे ॥ ५ ॥ स्वयं वैरं महत्
कृत्वा पाञ्चालैः पाण्डवैः सह । एकं सात्यकिमासाद्य कथं भीतो-
ऽसि संयुगे ॥ ६ ॥ न जानीषे पुरा त्वन्तु गृह्णन्नक्षान् दुरोदरे ।
शरा ह्येते भविष्यन्ति दारुणाशीविषोपमाः ॥ ७ ॥ अप्रियाणां
हि वचसां पाण्डवेषु विशेषतः । द्रौपद्याश्च परिक्लेशस्त्वन्मूलो
ह्यभवत् पुरा ॥ ८ ॥ क्व ते मानश्च दर्पश्च क्व ते वीर्य्यं क्व गर्जि-
तम् । आशीविषसमान् पार्थान् कोपयित्वा क्व यास्यसि ॥ ९ ॥
शोच्येयं भारती सेना राजा चैव सुयोधनः । यस्य त्वं कर्कशो
भ्राता पलायनपरायणः ॥ १० ॥ ननु नाम त्वया वीर दीर्य्य-
माणा भयार्द्दिता । स्वबाहुबलमास्थाय रक्षितव्या ह्यनीकिनी
॥ ११ ॥ स त्वमद्य रणं हित्वा भीतो हर्षयसे परान् । विद्रुते
त्वयि सैन्यस्य नायके शत्रुसूदन ॥ १२ ॥ कोऽन्यः स्थास्यति
सङ्ग्रामे भीतो भीतव्यपाश्रये । एकेन सात्वतेनाद्य युध्यमानस्य
तेन वै ॥ १३ ॥ पलायने तव मतिः सङ्ग्रामाद्धि प्रवर्त्तते । यदा
गाण्डीवधन्वानं भीमसेनञ्च कौरव ॥ १४ ॥ यमौ वा युधि द्रष्टासि
तदा त्वं किं करिष्यसि । युधि फाल्गुनवाणानां सूर्य्याग्निसम
वर्च्चसाम् ॥ १५ ॥ न तुल्याः सात्यकिशरा येषां भीतः पलायसे ।
यदि तावत् कृता बुद्धिः पलायनपरायणा ॥ १६ ॥ पृथिवी
धर्म्मराजाय शमेनैव प्रदीयताम् । यावत् फाल्गुननाराचा निर्मुक्तो
रगसन्निभाः ॥ १७ ॥ नाविशन्ति शरीरन्ते तावत् सन्धाय
पाण्डवैः । यावत्ते पृथिवीं पार्था हत्वा भ्रातृशतं रणे ॥ १८ ॥

नाक्षिपन्ति महात्मानस्तावत् समास्व पाण्डवे । यावत् क्रुध्यति
नो राजा धर्मपुत्रो युधिष्ठिरः ॥ १९ ॥ कृष्णश्च समरश्लाघी
तावत् समास्व पाण्डवे । यावद्भीमो महाबाहुर्विगाह्य महतीं-
चमूम् ॥ २० ॥ योधांस्ते न च हन्यात तावत समास्व पाण्डवे ।
पूर्वमुक्तश्च ते भ्राता भीष्मेणासौ सुयोधन ॥ २१ ॥ अजेयाः
पाण्डवा सङ्ख्ये सौम्य समास्व तैः सह । न च तत् कृतवान्
मन्दस्तव भ्राता सुयोधन ॥ २२ ॥ स युद्धे धृतिमास्थाय यत्तो
युध्यस्व पाण्डवैः । गच्छ तूर्णं रथेनैव यत्र तिष्ठति सात्यकिः
॥ २३ ॥ त्वया हीनं बलं ह्येतद्विद्रविष्यति भारत । आत्मार्थं
योधय रथे सात्यकिं सत्यविक्रमम् ॥ २४ ॥ एवमुक्तस्तव सुतो
नाब्रवीत् किञ्चिदप्यसौ । श्रुतञ्चाश्रुतवत् कृत्वा प्रायाद्येन स
सात्यकिः ॥ २५ ॥ सैन्येन महता युक्तो म्लेच्छानामनिवर्त्तिनाम् ।
आसाद्य च रणे यत्तो युयुधानमयोधयत् ॥ २६ ॥ द्रोणोऽपि
रथिनां श्रेष्ठः पाञ्चालान् पाण्डवांस्तथा । अभ्यद्रवत सङ्क्रुद्धो
जवमास्थाय मध्यमम् ॥ २७ ॥ प्रविश्य च रणे द्रोणः पाण्डवानां
वरूथिनीम् । द्रावयामास योधान् वै शतशोऽथ सहस्रशः ॥२८॥
ततो द्रोणो महाराज नाम विश्राव्य सयुगे । पाण्डुपाञ्चाल
मत्स्यानां प्रचक्रे कदनं महत ॥ २९ ॥ तं जयन्तमनीकानि
भारद्वाजं ततस्ततः । पाञ्चालपुत्रो द्युतिमान् वीरकेतुः समभ्ययात्
॥ ३० ॥ स द्रोणं पञ्चभिर्विद्धा शरैः सन्नतपर्वभिः । ध्वज-
मेकेन विव्याध सारथिञ्चास्य सप्तभिः ॥ ३१ ॥ तत्राद्भुतं महा-
राज दृष्टवानस्मि संयुगे । यद्द्रोणो रभसो युद्धे पाञ्चाल्यं नाभ्य
वर्त्तत ॥ ३२ ॥ सन्निरुद्धं रणे द्रोणं पाञ्चाला वीक्ष्य मारिष ।
आवव्रुः सर्वतो राजन् धर्मपुत्रजयैषिणः ॥ ३३ ॥ ते शरैरग्नि-
सङ्काशैस्तोमरैश्च महाधनैः । शस्त्रैश्च विविधैराजन् द्रोणमेक-
मवाकिरन् ॥ ३४ ॥ निहत्य तान् बाणगणैर्द्रोणो राजन् सम

स्ततः । महाजलधरान् व्योम्नि मातरिश्वा इवाबभौ ॥ ३५ ॥
ततः शरं महाघोरं सूर्य्यपावकसन्निभम् । सन्दधे परवीरघ्नो
वीरकेतोरथं प्रति ॥ ३६ ॥ स भित्त्वा तु शरो राजन् पाञ्चाल-
कुलनन्दनम् । अभ्यगाद्धरणीं तूर्णं लोहिताद्रो ज्वलन्निव ॥ ३७ ॥
ततोऽपतद्रथात्तूर्णं पाञ्चालकुलनन्दनः । पर्वताग्रादिव महा-
चम्पको वायुपीड़ितः ॥ ३८ ॥ तस्मिन् हते महेष्वासे राजपुत्रे
महाबले । पाञ्चालास्त्वरिता द्रोणं समन्तात् पर्य्यवारयन् ॥ ३९ ॥
चित्रकेतुः सुधन्वा च चित्रवर्मा च भारत । तथा चित्ररथश्चैव
भ्रातृव्यसनकर्षिताः ॥ ४० ॥ अभ्यद्रवन्त सहिता भारद्वाजं
युयुत्सवः । मुञ्चन्तः शरवर्षाणि तपान्ते जलदा इव ॥ ४१ ॥
स वध्यमानो बहुधा राजपुत्रैर्महारथैः । क्रोधमाहारयत्तेषा-
मभावार्थं द्विजर्षभः ॥ ४२ ॥ ततः शरमयं जालं द्रोणस्तेषा-
मवासृजत् । ते हन्यमाना द्रोणस्य शरैराकर्णचोदितैः ॥ ४३ ॥
कर्त्तव्यं नाभ्यजानन् वै कुमारा राजसत्तम । तान् विमूढान् रणे
द्रोणः प्रहसन्निव भारत ॥ ४४ ॥ व्यश्वसूतरथांश्चक्रे कुमारान्
कुपितो रणे । तथा शरैः सुनिशितैर्भल्लैस्तेषां महायशाः ॥ ४५ ॥
पुष्पाणीव विचिन्वानः उत्तमाङ्गान्यपातयत् । ते रथेभ्यो हताः
पेतुः छिन्ना राजन् सुवर्चसः ॥ ४६ ॥ देवासुरे पुरा युद्धे यथा
दैतेयदानवाः । तान्निहत्य रणे राजन् भारद्वाजः प्रतापवान्
॥ ४७ ॥ कार्मुकं भ्रामयामास हेमपृष्ठं दुरासदम् । पाञ्चाला-
न्निहतान् दृष्ट्वा देवकल्पान्महारथान् ॥ ४८ ॥ धृष्टद्युम्नो रणे
क्रुद्धो नेत्राभ्यां पातयञ्जलम् । अभ्यवर्त्तत सङ्ग्रामे क्रुद्धो द्रोण-
रथं प्रति ॥ ४९ ॥ ततो हाहेति सहसा नादः समभवन्नृप ।
पाञ्चाल्येन रणे दृष्ट्वा द्रोणमावारितं शरैः ॥ ५० ॥ स छाद्य-
मानो बहुधा पार्षतेन महात्मना । न विव्यथे ततो द्रोणः स्मय-
न्नेवान्वयुध्यत ॥ ५१ ॥ ततो द्रोणं महाराज पाञ्चाल्यः क्रोध-

मूर्च्छितः । आजघानोरसि क्रुद्धो नवत्या नतपर्व्वणाम् ॥ ५२ ॥
स गाढविद्धो बलिना भारद्वाजो महायशाः । निषसाद रथो-
पस्थे कश्मलञ्च जगाम ह ॥ ५३ ॥ तं वै तथागतं दृष्ट्वा धृष्टद्युम्नः
पराक्रमी । चापमुत्सृज्य शीघ्रन्तु असिं जग्राह वीर्य्यवान् ॥ ५४ ॥
अवप्लुत्य रथाच्चापि त्वरितः स महारथ । आरुरोह रथं तूर्णं
भारद्वाजस्य मारिष ॥ ५५ ॥ हर्त्तुमिच्छन् शिरः कायात् क्रोध-
संरक्तलोचनः । प्रत्याश्वस्तस्ततो द्रोणो धनुरादाय वीर्य्यवान्
॥ ५६ ॥ आसन्नमागतं दृष्ट्वा धृष्टद्युम्नं जिघांसया । शरैर्वैत-
स्तिकैराजन् विव्याधासन्नयोधिभिः ॥ ५७ ॥ योधयामास समरे
धृष्टद्युम्नं महारथम् । ते हि वैतस्तिका नाम शराः आसन्न-
योधिनः ॥ ५८ ॥ द्रोणस्य विदिता राजन् धृष्टद्युम्नमचिक्षिपत् ।
स वध्यमानो बहुभिः सायकैस्तैर्म्महाबलः ॥ ५९ ॥ अवप्लुत्य रथा-
त्तूर्णं भग्नवेग पराक्रमी । आरुह्य स्वरथं वीरः प्रगृह्य च मह-
द्धनुः ॥ ६० ॥ विव्याध समरे द्रोणं धृष्टद्युम्नो महारथः । द्रोण-
श्चापि महाराज शरैर्विव्याध पार्षतम् ॥ ६१ ॥ तदद्भुतमभूद्युद्धं
द्रोणपाञ्चालयोस्तदा । त्रैलोक्यकाङ्क्षिणोरासीच्छक्रप्रह्लादयोरिव
॥ ६२ ॥ मण्डलानि विचित्राणि यमकानीतराणि च । चरन्तौ
युद्धमार्गज्ञौ ततक्षतुरथेषुभिः ॥ ६३ ॥ मोहयन्तौ मनांस्याजौ
योधानां द्रोणपार्षतौ । सृजन्तौ शरवर्षाणि वर्षास्विव बलाहकौ
॥ ६४ ॥ छादयन्तौ महात्मानौ शरैर्व्योम दिशो महीम् । तद-
द्भुतं तयोर्युद्धं भूतसङ्घा ह्यपूजयन् ॥ ६५ ॥ क्षत्रियाश्च महाराज
ये चान्ये तव सैनिकाः । अवश्यं समरे द्रोणो धृष्टद्युम्नेन सङ्गतः
॥ ६६ ॥ वशमेष्यति नो राजन् पाञ्चाला इति चुक्रुशुः । द्रोणस्तु
त्वरितो युद्धे धृष्टद्युम्नस्य सारथेः ॥ ६७ ॥ शिरः प्रच्यावयामास
फलं पक्वं तरोरिव । ततस्तु प्रद्रुता वाहा राजंस्तस्य महात्मनः
॥ ६८ ॥ तेषु प्रद्रवमाणेषु पाञ्चालान् सृञ्जयांस्तथा । व्यद्रावय-

रणे द्रोणस्तव तव पराक्रमी ॥ ६९ ॥ विजित्य पाण्डुपाञ्चालान् भारद्वाजः प्रतापवान् । स्वं व्यूहं पुनरास्थाय प्रत्यतिष्ठदरिन्दमः । न चैनं पाण्डवा युद्धे जेतुमुत्सेहिरे प्रभो ॥ ७० ॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि द्रोणपराक्रमे द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

—o—

भूत्वा संप्रसक्ता मिथः ॥ १३ ॥ तेषां प्रपततां युद्धे शरवर्षाणि
मुञ्चताम्। योधान् पञ्चशतान् मुख्यान् अग्रानीके व्यपोथयत्
॥ १४ ॥ ते पतन्ति हतास्तूर्णं शिनिप्रवरसायकैः। महा-
मारुतवेगेन भग्ना इव नगाद्‌द्रुमाः ॥ १५ ॥ नागैश्च बहुधा च्छिन्नै-
र्ध्वजैश्चैव विशाम्पते। हयैश्च कनकापीडैः पतितैस्तत्र मेदिनी
॥ १६ ॥ शैनेयशरसंकृत्तैः शोणितौघपरिप्लुतैः। अशोभत महा-
राज किंशुकैरिव पुष्पितैः ॥ १७ ॥ ते वध्यमानाः समरे युयु-
धानेन तावकाः। त्रातारं नाध्यगच्छन्त पङ्कमग्ना इव द्विपाः
॥ १८ ॥ ततस्ते पर्य्यवर्त्तन्त सर्व्वे द्रोणरथं प्रति। भयात् पतग-
राजस्य गर्त्तानीव महोरगाः ॥ १९ ॥ हत्वा पञ्चशतान् योधान्
शरैराशीविषोपमैः। प्रायात् स शनकैर्वीरो धनञ्जयरथं प्रति
॥ २० ॥ तं प्रयान्तं नरश्रेष्ठं पुत्रो दुःशासनस्तव। विव्याध
नवभिस्तूर्णं शरैः सन्नतपर्व्वभिः ॥ २१ ॥ स तु तं प्रतिविव्याध
पञ्चभिर्निशितैः शरैः। रुक्मपुङ्खैर्महेष्वासो गार्द्धपत्रैरजिह्मगैः
॥ २२ ॥ सात्यकिं तु महाराज प्रहसन्निव भारत। दुःशासन-
स्त्रिभिर्विद्ध्वा पुनर्विव्याध पञ्चभिः ॥ २३ ॥ शैनेयस्तव पुत्रन्तु हत्वा
पञ्चभिराशुगैः। धनुश्चास्य रणे छित्त्वा प्रहसन्नर्जुनं ययौ ॥ २४ ॥
ततो दुःशासनः क्रुद्धो वृष्णिवीराय गच्छते। सर्व्वपारशवीं शक्तिं
विससर्ज जिघांसया ॥ २५ ॥ तान्तु शक्तिं तदा घोरां तव पुत्रस्य
सात्यकिः। चिच्छेद स तदा राजन् निशितैः कङ्कपत्रिभिः ॥ २६ ॥
अथान्यद्धनुरादाय पुत्रस्तव जनेश्वर। सात्यकिञ्च शरैर्विद्ध्वा
सिंहनादं ननर्द ह ॥ २७ ॥ सात्यकिस्तु रणे क्रुद्धो मोहयित्वा
सुतं तव। शरैरग्निशिखाकारैराजघान स्तनान्तरे ॥ २८ ॥
सर्व्वायसैस्तीक्ष्णवक्त्रैरष्टाभिर्विव्यधे पुनः। दुःशासनस्तु विंशत्या
सात्यकिं प्रत्यविध्यत ॥ २९ ॥ सात्वतोऽपि महाराज तं विव्याध
स्तनान्तरे। त्रिभिरेव महाभाग शरैः सन्नतपर्व्वभिः ॥ ३० ॥

इषे द्रोणस्तत्र तव पराक्रमी ॥ ६९ ॥ विजित्य पाण्डुपाञ्चालान् मारद्वाज प्रतापवान्। स व्यूह पुनराश्थाय स्यतिष्ठदरिन्दमः। न चैनं पाण्डवा युद्धे जेतुमुत्सेहिरे प्रभो ॥ ७० ॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि द्रोणपराक्रमे द्वाविंशत्यधिकशततोऽध्याय ॥ १२२ ॥

—०—

सञ्जय उवाच। ततो दुःशासनो राजन् शैनेयं समुपाद्रवत्। किरन् शरसहस्राणि पर्जन्य इव दृष्टिमान् ॥ १ ॥ स विद्ध्वा सात्यकिं षष्टया तथा षोडशभिः शरैः। नाकम्पयत् स्थितं युद्धे मैनाकमिव पर्वतम् ॥ २ ॥ रथव्रातेन महता नानादेशोद्भवेन ह। सर्वतो भरतश्रेष्ठो विसृजन् सायकान् बहून् ॥ ३ ॥ पर्जन्य इव घोषेण नादयन् वै दिशो दश। तमापतन्तमालोक्य सात्यकिः कौरवं रणे ॥ ४ ॥ अभिद्रुत्य महाबाहुश्छादयामास सायकैः। ते छाद्यमाना बाणौघैर्दुःशासनपुरोगमाः ॥ ५ ॥ प्राद्रवन् समरे भीतास्तव पुत्रस्य पश्यतः। तेषु द्रवत्सु राजेन्द्र पुत्रो दुःशासनस्तव ॥ ६ ॥ तस्थौ व्यपेतभीराजन् सात्यकिञ्चार्दयच्छरैः। चतुर्भिर्वाजिनस्तस्य सारथिञ्च त्रिभिः शरैः ॥ ७ ॥ सात्यकिञ्च शतेनाजौ विद्ध्वा नादं मुमोच ह। ततः क्रुद्धो महाराज माधवस्तस्य संयुगे ॥ ८ ॥ रथ सूतं ध्वज तञ्च चक्रेऽदृश्यमजिह्मगैः। स तु दुःशासनं शूरं सायकैरावृणोद्भृशम् ॥ ९ ॥ मशक समनुप्राप्तमूर्णनाभिरिवोर्णया। त्वरन् समावृणोद्बाणैर्दुःशासनममित्रजित् ॥१०॥ दृष्ट्वा दुःशासन राजा तथा शरशताचितम्। त्रिगर्त्तांश्चोदयामास युयुधानरथ प्रति ॥ ११ ॥ तेऽगच्छन् युयुधानस्य समीपं क्रूरकर्मिण। त्रिगर्त्तानां त्रिसाहस्रा रथा युद्धविशारदाः ॥ १२ ॥ ते तु त रथवंशेन महता पर्यवारयन्। स्थिरां कृत्वा मतिं युद्धे

भूत्वा संप्रसक्ता शिव ॥ १३ ॥ तेषां प्रपततां युद्धे शरवर्षाणि
मुञ्चताम् । योधान् पञ्चशतान् शूरान् अग्रानीके व्यपोथयत्
॥ १४ ॥ ते पतन्ति हतास्तूर्णं शिनिप्रवरसायकैः । महा-
मारुतवेगेन भग्ना इव नगाद्द्रुमाः ॥ १५ ॥ नागैश्च बहुधाच्छिन्नै-
र्ध्वजैश्चैव विशाम्पते । हयैश्च कनकापीडैः पतितैस्तत्र मेदिनी
॥ १६ ॥ शैनेयशरसङ्कृत्तैः शोणितौघपरिप्लुतैः । अशोभत महा-
राज किंशुकैरिव पुष्पितैः ॥ १७ ॥ ते वध्यमानाः समरे युयु-
धानेन तावकाः । त्रातारं नाध्यगच्छन्त पङ्कमग्ना इव द्विपाः
॥ १८ ॥ ततस्ते पर्य्यवर्त्तन्त सर्वे द्रोणरथं प्रति । भयात् पतग-
राजस्य गर्त्तानीव महोरगाः ॥ १९ ॥ हत्वा पञ्चशतान् योधान्
शरैराशीविषोपमैः । प्रायात् स शनकैर्वीरो धनञ्जयरथं प्रति
॥ २० ॥ तं प्रयान्तं नरश्रेष्ठं पुत्रो दुःशासनस्तव । विव्याध
नवभिस्तूर्णं शरैः सन्नतपर्वभिः ॥ २१ ॥ स तु तं प्रतिविव्याध
पञ्चभिर्निशितैः शरैः । रुक्मपुङ्खैर्महेष्वासो गार्द्ध्रपत्रैरजिह्मगैः
॥ २२ ॥ सात्यकिं तु महाराज प्रहसन्निव भारत । दुःशासन-
स्त्रिभिर्विद्ध्वा पुनर्विव्याध पञ्चभिः ॥ २३ ॥ शैनेयस्तव पुत्रन्तु हत्वा
पञ्चभिराशुगैः । धनुश्चास्य रणे छित्त्वा प्रहसन्नर्जुनं ययौ ॥ २४ ॥
ततो दुःशासनः क्रुद्धो वृष्णिवीराय गच्छते । सर्वपारशवीं शक्तिं
विससर्ज जिघांसया ॥ २५ ॥ तान्तु शक्तिं तदा घोरां तव पुत्रस्य
सात्यकिः । चिच्छेद स तदा राजन् निशितैः कङ्कपत्रिभिः ॥ २६ ॥
अथान्यद्धनुरादाय पुत्रस्तव जनेश्वर । सात्यकिञ्च शरैर्विद्ध्वा
सिंहनादं ननर्द्द ह ॥ २७ ॥ सात्यकिस्तु रणे क्रुद्धो मोहयित्वा
सुतं तव । शरैरग्निशिखाकारैराजघान स्तनान्तरे ॥ २८ ॥
सर्वायसैस्तीक्ष्णवक्त्रैरष्टाभिर्विव्यधे पुनः । दुःशासनस्तु विंशत्या
सात्यकिं प्रत्यविध्यत ॥ २९ ॥ सात्वतोऽपि महाराज तं विव्याध
स्तनान्तरे । त्रिभिरेव महाभाग शरैः सन्नतपर्वभिः ॥ ३० ॥

ततोऽस्य वाहान्निशितैः शरैर्जघ्ने महारथः । सारथिञ्च सुसं-
क्रुद्धः शरैः सन्नतपर्वभिः ॥ ३१ ॥ धनुरेकेन भल्लेन हस्तावापञ्च
पञ्चभिः । ध्वजञ्च रथशक्तिञ्च भल्लाभ्यां परमास्त्रवित् ॥ ३२ ॥
चिच्छेद विशिखैस्तीक्ष्णैस्तथोभौ पार्ष्णिसारथी । स छिन्नधन्वा
विरथो हताश्वो हतसारथिः ॥ ३३ ॥ त्रिगर्त्तसेनापतिना स्वरथे-
नापवाहितः । तमभिद्रुत्य शैनेयो मुहूर्त्तमिव भारत ॥ ३४ ॥
न जघान महाबाहुर्भीमसेनवचः स्मरन् । भीमसेनेन तु वधः
सुतानां तव भारत ॥ ३५ ॥ प्रतिज्ञातः सभामध्ये सर्वेषामेव
संयुगे । ततो दुःशासनं जित्वा सात्यकिः संयुगे प्रभो । जगाम
त्वरितो राजन् येन यातो धनञ्जयः ॥ ३६ ॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि सात्यकिप्रवेशे दुःशासन-
पराजये त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥

---

धृतराष्ट्र उवाच । किं तस्यां मम सेनायां नासन् केचिन्महा-
रथाः । ये तथा सात्यकिं यान्तं नैवाघ्नन्नाप्यवारयन् ॥ १ ॥
एको हि समरे कर्म कृतवान् सत्यविक्रमः । शक्रतुल्यबलो युद्धे
महेन्द्रो दानवेष्विव ॥ २ ॥ अथ वा शून्यमासीत्तद् येन यातः स
सात्यकिः । एको वै बहुलां सेनां प्रमृद्नन् सत्यविक्रमः ॥ ३ ॥
कथञ्च युध्यमानानामपक्रान्तो महात्मनाम् । एको बहूनां शैनेय-
स्तन्ममाचक्ष्व सञ्जय ॥ ४ ॥
सञ्जय उवाच । राजन् सेनासमुद्योगो रथनागाश्वपत्ति-
मान् । तुमुलस्तव सैन्यानां युगान्तसदृशोऽभवत् ॥ ५ ॥ आह्निकेषु
समूहेषु तव सैन्यस्य मानद । नाभूल्लोके समः कश्चित् समूह इति
मे मतिः ॥ ६ ॥ तत्र देवास्त्वभाषन्त चारणाश्च समागताः ।
एतदन्ताः समूहा वै भविष्यन्ति महीतले ॥ ७ ॥ न च एतादृशो

व्यूह आसीत् कश्चिदिह सम्मते । यावच्छल्यजयद्रथवधे द्रोणेन विहितोऽभवत् ॥ ८ ॥ चण्डवातविभिन्नानां समुद्राणामिव स्वनः । रथोऽभवद्बलौघानामन्योन्यमभिधावताम् ॥ ९ ॥ पार्थिवानां समेतानां व्यहन्यासन् नरोत्तम । ह्वदतां पाण्डवानाञ्च सहस्राणि शतानि च ॥ १० ॥ संरब्धानां प्रवीराणां समरे दृढकर्मणाम् । तत्रासीत् सुमहान् शब्दस्तुमुलो लोमहर्षणः ॥ ११ ॥ अथाक्रन्दद्भीमसेनो धृष्टद्युम्नश्च मारिष । नकुलः सहदेवश्च धर्मराजश्च पाण्डवः ॥ १२ ॥ आगच्छत प्रहरत द्रुतं विपरिधावत । प्रविष्टावरिसेनां हि वीरौ माधवपाण्डवौ ॥ १३ ॥ यथासुखेन गच्छेतां जयद्रथवधं प्रति । तथा प्रकुरुत क्षिप्रं इति सैन्यान्यचोदयत् ॥ १४ ॥ तयोरभावे कुरवः कृतार्थाः स्युर्वयं जिताः । ते यूयं संहिता भूत्वा तूर्णमेव बलार्णवम् ॥ १५ ॥ क्षोभयध्वं महावेगाः पवनः सागरं यथा । भीमसेनेन ते राजन् पाञ्चाल्येन च चोदिताः ॥ १६ ॥ आजघ्नुः कौरवान् संख्ये त्यक्त्वासूनात्मनः प्रियान् । इच्छन्तो निधनं युद्धे शस्त्रैरुत्तमतेजसः ॥ १७ ॥ स्वर्गप्रेप्सवो मित्रकार्य्ये नाभ्यरक्षन्त जीवितम् । तथैव तावका राजन् प्रार्थयन्तो महद्यशः ॥ १८ ॥ आर्य्यां युद्धे मतिं कृत्वा युद्धायैवावतस्थिरे । तस्मिंस्तु तुमुले युद्धे वर्त्तमाने महाभये ॥ १९ ॥ जित्वा सर्वाणि सैन्यानि प्रायात् सात्यकिरर्जुनम् । कवचानां प्रभास्तत्र सूर्य्यरश्मिविराजिताः ॥ २० ॥ दृष्टीः संख्ये सैनिकानां प्रतिजघ्नुः समन्ततः । तथा प्रयतमानानां पाण्डवानां महात्मनाम् ॥ २१ ॥ दुर्य्योधनो महाराज व्यगाहत महद्बलम् । स सन्निपातस्तुमुलस्तेषां तस्य च भारत । अभवत् सर्वभूतानामभावकरणो महान् ॥ २२ ॥

धृतराष्ट्र उवाच । तथा यातेषु सैन्येषु तथा कृच्छ्रगतः स्वयम् । कच्चिद्दुर्य्योधनः सूत नाकार्षीत् पृष्ठतो रणम् ॥ २३ ॥ एकस्य च बहूनाञ्च सन्निपातो महाहवे । विशेषतो नरपतेर्विषमः

प्रतिभाति मे ॥ २४ ॥ योऽत्यन्तसुखसंवृद्धो लक्ष्म्या लोकस्य चेश्वरः। एको बहून् समासाद्य कच्चिन्नासीत् पराङ्मुखः ॥ २५ ॥

सञ्जय उवाच। राजन् सङ्ग्राममाश्चर्यं तव पुत्रस्य भारत। एकस्य बहुभिः सार्द्धं शृणुष्व गदतो मम ॥ २६ ॥ दुर्योधनेन समरे पृतना पाण्डवी रणे। नलिनी द्विरदेनेव समन्तात् प्रतिलोडिता ॥ २७ ॥ ततस्तां प्रहतां सेनां दृष्ट्वा पुत्रेण ते नृप। भीमसेनपुरोगास्ते पाञ्चालाः समुपाद्रवन् ॥ २८ ॥ स भीमसेनं दशभिः शरैर्विव्याध पाण्डवम्। त्रिभिस्त्रिभिर्यमौ वीरौ धर्मराजञ्च सप्तभिः ॥ २९ ॥ विराटद्रुपदौ षड्भिः शतेन च शिखण्डिनम्। धृष्टद्युम्नञ्च विंशत्या द्रौपदेयांस्त्रिभिस्त्रिभिः ॥ ३० ॥ शतशश्चापरान् योधान् सद्विपांश्च रथान्रणे। शरैरवचकर्त्तोग्रैः क्रुद्धोऽन्तक इव प्रजाः ॥ ३१ ॥ न सन्दधन् विमुञ्चन् वा मण्डलीकृतकार्मुकः। अदृश्यत रिपून्निघ्नन् शिक्षयावास्त्रबलेन च ॥ ३२ ॥ तस्य तान् निघ्नतः शत्रून् हेमपृष्ठं महद्धनुः। सततं मण्डलीभूतं ददृशुः समरे जनाः ॥ ३३ ॥ ततो युधिष्ठिरो राजा भल्लाभ्याम-च्छिनद्धनुः। तव पुत्रस्य कौरव्य यतमानस्य संयुगे ॥ ३४ ॥ विव्याध चैनं दशभिः सम्यगस्तैः शरोत्तमैः। वर्म चाशु समासाद्य ते भित्त्वा क्षितिमाविशन् ॥ ३५ ॥ ततः प्रमुदिताः पार्थाः परिवव्रुर्युधिष्ठिरम्। यथा वृत्रवधे देवाः पुरा शक्रं महर्षयः ॥ ३६ ॥ ततोऽन्यद्धनुरादाय तव पुत्रः प्रतापवान्। तिष्ठ तिष्ठेति राजानं ब्रुवन् पाण्डवमभ्ययात् ॥ ३७ ॥ तमायान्तमभिप्रेक्ष्य तव पुत्रं महामृधे। प्रत्युद्ययुः प्रमुदिताः पाञ्चाला जयगृद्धिनः ॥ ३८ ॥ तान् द्रोणः प्रतिजग्राह परीप्सन् युधि पार्थिवम्। चण्डवातोद्धुतान् मेघान् गिरिरम्बुमुचो यथा ॥ ३९ ॥ तत्र राजन्महानासीत् सङ्ग्रामो लोमहर्षणः। पाण्डवानां महाबाहो तावकानाञ्च संयुगे ॥ ४० ॥ रुद्रस्याक्रीडसदृशः संहारः सर्वदेहिनाम्। ततः

भल्लो महानासीत् पुनर्येन धनञ्जयः ॥ ४१ ॥ अतीव सर्व्वभूतेभ्यो लोमहर्षकरः प्रभो । अर्ज्जुनस्य महावाहो तावकानाञ्च धन्विनाम् ॥ ४२ ॥ मध्ये भारतसैन्यस्य माधवस्य महारणे । द्रोणस्यापि परैः सार्द्धं व्यूहद्वारे महारणे ॥ ४३ ॥ एवमेव क्षयो वृत्तः पृथिव्यां पृथिवीपते । क्रुद्धेऽर्ज्जुने तथा द्रोणे सात्वते च महारणे ॥ ४४ ॥

इति द्रोणपर्व्वणि जयद्रथवधपर्व्वणि-सङ्कुलयुद्धे चतुर्विंशत्यधिकशततोऽध्यायः ॥ १२४ ॥

---

सञ्जय उवाच । अपराह्णे महाराज सङ्ग्रामः समहानभूत् । पर्ज्जन्यसमनिर्घोषः पुनर्द्रोणस्य सोमकैः ॥ १ ॥ शोणाश्वं रथमास्थाय नरवीरः समाहितः । समरेऽभ्यद्रवत् पाण्डून् जवमास्थाय मध्यमम् ॥ २ ॥ तव प्रियहिते युक्तो महेष्वासो महाबलः । चित्रपुङ्खैः शितैर्बाणैः कलशोत्तमसम्भवः ॥ ३ ॥ वरान् वरान् हि योधानां विचिन्वन्निव भारत । आक्रीड़त रणे राजन् भारद्वाजः प्रतापवान् ॥ ४ ॥ तमभ्ययात् बृहत्क्षत्रः केकयानां महारथः । भ्रातॄणां नृप पञ्चानां श्रेष्ठः समरकर्कशः ॥ ५ ॥ विमुञ्चन् विशिखांस्तीक्ष्णानाचार्य्यं भृशमर्द्दयत् । महामेघो यथा वर्षं विमुञ्चन् गन्धमादने ॥ ६ ॥ तस्य द्रोणो महाराज स्वर्णपुङ्खाञ्छिलाशितान् । प्रेषयामास संक्रुद्धः सायकान् दश पञ्च च ॥ ७ ॥ तांस्तु द्रोणविनिर्मुक्तान् क्रुद्धाशीविषसन्निभान् । एकैकं पञ्चभिर्बाणैर्युधि चिच्छेद हृष्टवत् ॥ ८ ॥ तदस्य लाघवं दृष्ट्वा प्रहस्य द्विजपुङ्गवः । प्रेषयामास विशिखानष्टौ सन्नतपर्व्वणः ॥ ९ ॥ तान् दृष्ट्वा पततस्तूर्णं द्रोणचापच्युताञ्छरान् ।

देव तावद्विनिर्भिन्नैर्मृधे ॥ १० ॥ ततोऽभवन्महाराज तव सैन्यस्य
विस्मयः । बृहत्क्षत्रेण तत् कर्म कृतं दृष्ट्वा सुदुष्करम् ॥ ११ ॥
ततो द्रोणो महाराज बृहत्क्षत्रं विशेषयन् । प्रादुश्चक्रे रणे
दिव्यं ब्राह्ममस्त्रं सुदुर्जयम् ॥ १२ ॥ कैकेयोऽस्त्रं समालोक्य
मुक्तं द्रोणेन संयुगे । ब्रह्मास्त्रेणैव राजेन्द्र ब्राह्ममस्त्रमशातयत्
॥ १३ ॥ ततोऽस्त्रे निहते ब्राह्मे बृहत्क्षत्रस्तु भारत । विव्याध
ब्राह्मणं षष्ट्या स्वर्णपुङ्खैः शिलाशितैः ॥ १४ ॥ तं द्रोणो
द्विपदां श्रेष्ठो नाराचेन समर्पयत् । स तस्य कवचं भित्त्वा
प्राविशद्धरणीतलम् ॥ १५ ॥ कृष्णसर्पो यथा मुक्तो वल्मीकं
नृपसत्तम । तथाभ्यगान्महीं बाणो भित्त्वा कैकेयमाहवे ॥ १६ ॥
सोऽतिविद्धो महाराज कैकेयो द्रोणसायकैः । क्रोधेन महता-
विष्टो व्यावृत्य नयने शुभे ॥ १७ ॥ द्रोणं विव्याध सप्तत्या
स्वर्णपुङ्खैः शिलाशितैः । सारथिं चास्य बाणेन भृशं मर्मस्वता-
डयत् ॥ १८ ॥ द्रोणस्तु बहुभिर्विद्धो बृहत्क्षत्रेण मारिष ।
असृजद्विशिखांस्तीक्ष्णान् कैकेयस्य रथं प्रति ॥ १९ ॥ व्याकुली-
कृत्य तं द्रोणो बृहत्क्षत्रं महारथम् । अश्वांश्चतुर्भिर्न्यवधीच्चतु-
रोऽस्य पतत्रिभिः ॥ २० ॥ सूतं चैकेन बाणेन रथनीडादपा-
हरत् । द्वाभ्यां ध्वजं च छत्रं च छित्त्वा भूमावपातयत् ॥ २१ ॥
ततः साधुविसृष्टेन नाराचेन द्विजर्षभः । हृद्यविध्यद् बृहत्क्षत्रं
स छिन्नहृदयोऽपतत् ॥ २२ ॥ बृहत्क्षत्रे हते राजन् कैकयानां
महारथे । शैशुपालिरभिक्रुद्धो यन्तारमिदमब्रवीत् ॥ २३ ॥
सारथे याहि यत्रैष द्रोणस्तिष्ठति दंशितः । विनिघ्नन् कैकयान्
सर्वान् पाञ्चालानां च वाहिनीम् ॥ २४ ॥ तस्य तद्वचनं श्रुत्वा
सारथी रथिनां वरः । द्रोणाय प्रापयामास काम्बोजैर्जवनैर्हयैः
॥ २५ ॥ धृष्टकेतुश्च चेदीनामृषभोऽतिबलोदितः । वधायाभ्य-
द्रवत् द्रोणं पतङ्ग इव पावकम् ॥ २६ ॥ सोऽविध्यत् तदा

द्रोणं पश्यता भारद्वाजरथध्वजम्। पुनश्चान्यैः शरैस्तीक्ष्णैः सर्पं व्याघ्रं तुदन्निव ॥ २७ ॥ तस्य द्रोणो धनुर्मध्ये क्षुरप्रेण शितेन च। चकर्त्त गार्द्धपत्रेण यतमानस्य शुष्मिणः ॥ २८ ॥ अथान्यद्धनुरादाय चैद्यः पार्थिवदारयः। विव्याध सायकैर्द्रोणं कङ्कबर्हिणवाजितैः ॥ २९ ॥ तस्य द्रोणो हयान् हत्वा चतुर्भिश्चतुरः शरैः। सारथेश्च शिरः कायाच्चकर्त्त प्रहसन्निव ॥ ३० ॥ अथैनं पञ्चविंशत्या सायकानां समार्पयत्। अवप्लुत्य रथाच्चैद्यो गदामादाय सत्वरः ॥३१॥ भारद्वाजाय चिक्षेप रुषितामिव पन्नगीम्। तामापतन्तीमालोक्य कालरात्रिमिवोद्यताम् ॥ ३२ ॥ अश्मसारमयीं गुर्वीं तपनीयविभूषिताम्। शरैरनेकसाहस्रैर्भारद्वाजोऽच्छिनच्छितैः ॥ ३३ ॥ सा छिन्ना बहुभिर्बाणैर्भारद्वाजेन मारिष। गदा पपात कौरव्य नादयन्ती धरातलम् ॥ ३४ ॥ गदां विनिहतां दृष्ट्वा धृष्टकेतुरमर्षणः। तोमरं व्यसृजद्वीरः शक्तिञ्च कनकोज्ज्वलाम् ॥ ३५ ॥ तोमरं पञ्चभिर्भित्त्वा शक्तिञ्चिच्छेद पञ्चभिः। तौ जग्मतुर्महीं छिन्नौ सर्पाविव गरुत्मता ॥ ३६ ॥ ततोऽस्य विशिखं तीक्ष्णं बधाय बधकाङ्क्षिणः। प्रेषयामास समरे भारद्वाजः प्रतापवान् ॥ ३७ ॥ स तस्य कवचं भित्त्वा हृदयञ्चामितौजसः। अभ्यगाद्धरणीं बाणो हंस पद्मवनं यथा ॥ ३८ ॥ पतङ्गं हि ग्रसेच्चाषो यथा क्षुद्रं बुभुक्षितः। तथा द्रोणोऽग्रसच्छूरो धृष्टकेतुं महाहवे ॥ ३९ ॥ निहते चेदिराजे तु तत्खण्डं पित्र्यमाविशत्। अमर्षवशमापन्नः पुत्रोऽस्य परमास्त्रवित् ॥ ४० ॥ तमपि प्रहसन् द्रोणः शरैर्निन्ये यमक्षयम्। महाव्याघ्रो महारण्ये मृगशावं यथा बली ॥ ४१ ॥ तेषु प्रक्षीयमाणेषु पाण्डवेयेषु भारत। जरासन्धसुतो वीरः स्वयं द्रोणमुपाद्रवत् ॥ ४२ ॥ स तु द्रोणं महाबाहुं शरधाराभिराहवे। अदृश्यमकरोत्तूर्णं जलदो भास्करं यथा ॥ ४३ ॥ तस्य तल्लाघवं दृष्ट्वा द्रोणः क्षत्रियमर्द्दनः। व्यसृ-

रेव तावद्विनिर्घितैर्मृधे ॥ १० ॥ ततोऽभवन्महाराज तव सैन्यस्य
विस्मयः । बृहत्क्षत्रेण तत् कर्म कृतं दृष्ट्वा सुदुष्करम् ॥ ११ ॥
ततो द्रोणो महाराज बृहत्क्षत्रं विशेषयन् । प्रादुश्चक्रे रणे
दिव्यं ब्राह्ममस्त्रं सुदुर्जयम् ॥ १२ ॥ कैकेयोऽस्त्रं समालोक्य
मुक्तं द्रोणेन संयुगे । ब्रह्मास्त्रेणैव राजेन्द्र ब्राह्ममस्त्रमशातयत्
॥ १३ ॥ ततोऽस्त्रे निहते ब्राह्मे बृहत्क्षत्रस्तु भारत । विव्याध
ब्राह्मणं षष्ट्या स्वर्णपुङ्खैः शिलाशितैः ॥ १४ ॥ तं द्रोणो
द्विपदां श्रेष्ठो नाराचेन समर्पयत् । स तस्य कवचं भित्त्वा
प्राविशद्धरणीतलम् ॥ १५ ॥ कृष्णसर्पो यथा मुक्तो वल्मीकं
नृपसत्तम । तथाभ्यगान्महीं बाणो भित्त्वा कैकेयमाहवे ॥ १६ ॥
सोऽतिविद्धो महाराज कैकेयो द्रोणसायकैः । क्रोधेन महता-
विष्टो व्यावृत्य नयने शुभे ॥ १७ ॥ द्रोणं विव्याध सप्तत्या
स्वर्णपुङ्खैः शिलाशितैः । सारथिञ्चास्य बाणेन भृशं मर्मस्वता-
डयत् ॥ १८ ॥ द्रोणस्तु बहुभिर्विद्धो बृहत्क्षत्रेण मारिष ।
असृजद्विशिखांस्तीक्ष्णान् कैकेयस्य रथं प्रति ॥ १९ ॥ व्याकुली-
कृत्य तं द्रोणो बृहत्क्षत्रं महारथम् । अश्वांश्चतुर्भिर्न्यवधीच्चतु-
रोऽस्य पतत्रिभिः ॥ २० ॥ सूतञ्चैकेन बाणेन रथनीडादपा-
हरत् । द्वाभ्यां ध्वजञ्च छत्रञ्च छित्त्वा भूमावपातयत् ॥ २१ ॥
ततः साधुविसृष्टेन नाराचेन द्विजर्षभः । हृद्यविध्यत् बृहत्क्षत्रं
स छिन्नहृदयोऽपतत् ॥ २२ ॥ बृहत्क्षत्रे हते राजन् कैकयानां
महारथे । शैशुपालिरभिक्रुद्धो यन्तारमिदमब्रवीत् ॥ २३ ॥
सारथे याहि यत्रैष द्रोणस्तिष्ठति दंशितः । विनिघ्नन् कैकयानां
सर्वान् पाञ्चालानाञ्च वाहिनीम् ॥ २४ ॥ तस्य तद्वचनं श्रुत्वा
सारथी रथिनां वर । द्रोणाय प्रापयामास काम्बोजैर्जवनैर्हयैः
॥ २५ ॥ धृष्टकेतुश्च चेदीनामृषभोऽतिबलोद्धतः । वधायाभ्य-
द्रवद् द्रोणं पतङ्ग इव पावकम् ॥ २६ ॥ सोऽविध्यत् तदा

द्रोणं पञ्चा साश्वरथध्वजम् । पुनश्चान्यैः शरैस्तीक्ष्णैः सर्पं व्याघ्रं
तुदन्निव ॥ २७ ॥ तस्य द्रोणो धनुर्मध्ये क्षुरप्रेण शितेन च ।
चकर्त्त गार्द्धपत्रेण पतमानस्य मारिष ॥ २८ ॥ अथान्यद्धनुरादाय
शैशुपालिर्महारथः । विव्याध सायकैर्द्रोणं कङ्कबर्हिणवाजितैः
॥ २९ ॥ तस्य द्रोणो हयान् हत्वा चतुर्भिश्चतुरः शरैः । सारथेश्च
शिरः कायाच्चकर्त्त प्रहसन्निव ॥ ३० ॥ अथैनं पञ्चविंशत्या साय-
कानां समार्पयत् । अवप्लुत्य रथाच्चैद्यो गदामादाय सत्वरः ॥ ३१ ॥
भारद्वाजाय चिक्षेप रुषितामिव पन्नगीम् । तामापतन्तीमालोक्य
कालरात्रिमिवोद्यताम् ॥ ३२ ॥ अश्मसारमयीं गुर्वीं तपनीय-
विभूषिताम् । शरैरनेकसाहस्रैर्भारद्वाजोऽच्छिनच्छितैः ॥ ३३ ॥
सा छिन्ना बहुभिर्बाणैर्भारद्वाजेन मारिष । गदा पपात कौरव्य
नादयन्ती धरातलम् ॥ ३४ ॥ गदां विनिहतां दृष्ट्वा धृष्टकेतुरम-
र्षणः । तोमरं व्यसृजद्वीरः शक्तिञ्च कनकोज्ज्वलाम् ॥ ३५ ॥
तोमरं पञ्चभिर्भित्त्वा शक्तिञ्चिच्छेद पञ्चभिः । तौ जग्मतुर्महीं
छिन्नौ सर्पाविव गरुत्मता ॥ ३६ ॥ ततोऽस्य विशिखं तीक्ष्णं
वधाय वधकाङ्क्षिणः । प्रेषयामास समरे भारद्वाजः प्रतापवान्
॥ ३७ ॥ स तस्य कवचं भित्त्वा हृदयञ्चामितौजसः । अभ्यगा-
द्धरणीं बाणो हंसः पद्मवनं यथा ॥ ३८ ॥ पतङ्गं हि ग्रसेच्चाषो
यथा क्षुद्रं बुभुक्षितः । तथा द्रोणोऽग्रसच्छूरो धृष्टकेतुं महाहवे
॥ ३९ ॥ निहते चेदिराजे तु तत्खण्डं पित्र्यमाविशत् । अमर्ष-
वशमापन्नः पुत्रोऽस्य परमास्त्रवित् ॥ ४० ॥ तमपि प्रहसन् द्रोणः
शरैर्निन्ये यमक्षयम् । महाव्याघ्रो महारण्ये मृगशावं यथा
बली ॥ ४१ ॥ तेषु प्रक्षीयमाणेषु पाण्डवेयेषु भारत । जरा-
सन्धसुतो वीरः स्वयं द्रोणमुपाद्रवत् ॥ ४२ ॥ स तु द्रोणं महा-
बाहुं शरधाराभिराहवे । अदृश्यमकरोत्तूर्णं जलदो भास्करं
यथा ॥ ४३ ॥ तस्य तल्लाघवं दृष्ट्वा द्रोणः क्षत्रियमर्द्दनः । व्यसृ-

जन् सायकास्तूर्णं शतशोऽथ सहस्रशः ॥ ४४ ॥ छादयित्वा
रणे द्रोणो रथस्थं रथिनां वरम् । जाराशन्धिं जघानाशु मिषतां
सर्वधन्विनाम् ॥ ४५ ॥ यो यः स्म लीयते तत्र तं द्रोणो ह्यन्तको-
पमः । आदत्त सर्वभूतानि प्राप्तकाले यथान्तकः ॥ ४६ ॥ ततो
द्रोणो महाराज नाम विश्राव्य संयुगे । शरैरनेकसाहस्रैः पाण्ड-
वेयान् समावृणोत् ॥ ४७ ॥ ते तु नामाङ्किता बाणा द्रोणेनास्ताः
शिलाशिताः । नरान्नागान् हयांश्चैव निजघ्नुः शतशो मृधे ॥४८॥
ते वध्यमाना द्रोणेन शक्रेणेव महासुराः । समकम्पन्त पाञ्चाला
गावः शीतार्दिता इव ॥ ४९ ॥ ततो निष्टानको घोरः पाण्ड-
वानामजायत । द्रोणेन वध्यमानेषु सैन्येषु भरतर्षभ ॥ ५० ॥
प्रताप्यमानाः सूर्य्येण हन्यमानाश्च सायकैः । अन्वपद्यन्त पाञ्चाला-
स्तदा संत्रस्तचेतसः ॥ ५१ ॥ मोहिता बाणजालेन भारद्वाजेन
संयुगे । ऊरुग्राहगृहीताना पाञ्चालानां महारथाः ॥ ५२ ॥
चेदयश्च महाराज सृञ्जयाः काशिकोशलाः । अभ्यद्रवन्त संहृष्टा
भारद्वाजं युयुत्सया ॥ ५३ ॥ ब्रुवन्तश्च रणे द्रोणं चेदिपाञ्चाल-
सृञ्जयाः । हत द्रोणं हत द्रोणमिति ते द्रोणमभ्ययुः ॥ ५४ ॥
ते यतन्तो नरव्याघ्राः सर्वे शक्त्या महाद्युतिम् । निनीषवो युधि
द्रोणं यमस्य सदनं प्रति ॥ ५५ ॥ यतमानांश्च तान् शूरान् भार-
द्वाजः शिलीमुखैः । यमाय प्रेषयामास चेदिमुख्यान् विशेषतः
॥ ५६ ॥ तेषु प्रक्षीयमाणेषु चेदिमुख्येषु सर्वशः । पाञ्चालाः

दुस्तर घोर यथादृश्यन्त भारत ॥ ६१ ॥ यथा बल यथोत्साह यथासत्त्व महाद्युति । मोहयन् सर्व्वभूतानि द्रोणो हन्ति बलानि न ॥ ६२ ॥ तेषा तद्वचन श्रुत्वा चत्रधर्मा व्यवस्थित । अर्द्धचन्द्रेण चिच्छेद चत्रधर्मा महाबल ॥ ६३ ॥ क्रोधमन्वित मनसो द्रोणस्य समर धनु । सुमरत्व्तरो भूत्वा द्रोण चत्रिय मर्द्दन ॥ ६४ ॥ अन्यत कार्म्मुकमादाय भास्वर वेगवत्तरम् । तत्राधाय शर तीक्ष्ण परानोकविघातनम् ॥ ६५ ॥ आकर्णपूर्ण माचार्य्यो बलवानभ्यवाहृजत् । स हत्वा चत्रधर्म्माण जगाम धरणीतलम् ॥ ६६ ॥ स भिन्नहृदयो वाहात्तत्रपतनो दिनीतलो । तत सैन्यान्यकम्पन्त धृष्टद्युम्नसुते हते ॥ ६७ ॥ अथ द्रोण समारोहच्चेकितानो महाबल । स द्रोण दशभिर्विद्ध्वा प्रत्यविध्यत स्तनान्तरे ॥ ६८ ॥ चतुर्भि सारथिञ्चास्य चतुर्भिश्चतुरो हयान् । तस्याचार्य्य षोडशभिरविध्यद्दचिणं भुजम् ॥ ६९ ॥ ध्वज षोड शभिर्वाणैर्यन्तारञ्चास्य सप्तभि । तस्य सूते हते तेऽश्वा रथ मादाय विद्रुता ॥ ७० ॥ समरे शरसम्वीता भारद्वाजेन मारिष । चेकितानरथ दृष्ट्वा हताश्व हतसारथिम् ॥ ७१ ॥ पाञ्चालान् पाण्डवाश्चैव महद्भयमथाविशत् । तान् समेतान्रणे शूरान् चेदि पाञ्चालसृञ्जयान् ॥ ७२ ॥ समन्तात् द्रावयन् द्रोणो बह्वशोभत मारिष । आकर्णपलित श्यामो वयसाशीतिपञ्चक ॥ ७३ ॥ रणे पर्य्यचरद्द्रोणो वृद्ध षोडशवर्षवत् । अथ द्रोण महाराज विचरन्तमभीतवत् ॥ ७४ ॥ वज्रहस्तममन्यन्त शत्रव शत्रुसूदनम् । ततोऽब्रवीन्महाबाहुर्द्रुपदो बुद्धिमान्नृप ॥ ७५ ॥ लुब्धोऽय चत्रि यान् हन्ति व्याघ्र चुद्रमृगानिव । कृच्छ्रान् दुर्य्योधनो लोकान् पाप प्राप्स्यति दुर्म्मति ॥ ७६ ॥ यस्य लोभाद्धतानहता समरे चत्रियर्षभा । शतश शेरते भूमौ निकृत्ता गोवृषा इव ॥ ७७ ॥ रुधिरेण परीताङ्गा श्वशृगालादनीकृता । एवमुक्त्वा महाराज

द्रुपदोऽस्यौहिणीपतिः। पुरस्कृत्य रणे पार्थान् द्रोणमभ्यद्रवद्द्रुतम् ॥ ३८ ॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि द्रोणपराक्रमे
पञ्चविंशत्यधिकशततोऽध्यायः ॥ १२५ ॥

---

सञ्जय उवाच। व्यूहेष्वालोड्यमानेषु पाण्डवानां ततस्ततः।
सुदूरमन्वयुः पार्थाः पाञ्चालाः सह सोमकैः ॥ १ ॥ वर्त्तमाने
तथा रौद्रे सङ्ग्रामे लोमहर्षणे। सङ्क्षये जगतस्तीव्रे युगान्त इव
भारत ॥ २ ॥ द्रोणे युधि पराक्रान्ते नर्दमाने मुहुर्मुहुः। पाञ्चा-
लेषु च क्षीणेषु वध्यमानेषु पाण्डुषु ॥ ३ ॥ नापश्यच्छरणं किञ्चि-
द्धर्मराजो युधिष्ठिरः। चिन्तयामास राजेन्द्र कथमेतद्भविष्यति
॥ ४ ॥ ततो वीक्ष्य दिशः सर्वाः सव्यसाचिदिदृक्षया। युधिष्ठिरो
ददर्शाय नैव पार्थं न माधवम् ॥ ५ ॥ सोऽपश्यन्नरशार्दूलं वानर-
र्षभलक्षणम्। गाण्डीवस्य च निर्घोषमशृण्वन् व्यथितेन्द्रियः ॥ ६ ॥
अपश्यन् सात्यकिञ्चापि वृष्णीनां प्रवरं रथम्। चिन्तयाभिपरी-
ताङ्गो धर्मराजो युधिष्ठिरः ॥ ७ ॥ नाध्यगच्छत्तदा शान्तिं ताव-
पश्यन्नरोत्तमौ। लोकोपक्रोशभीरुत्वात् धर्मराजो महामनाः ॥ ८ ॥
अचिन्तयन्महाबाहुः शैनेयस्य रथं प्रति। पदवीं प्रेषितश्चैव
फाल्गुनस्य मया रणे ॥ ९ ॥ शैनेयः सात्यकिः सत्योमित्राणा-
मभयङ्करः। तदिदं ह्येकमेवासीत् द्विधा जातं ममाद्य वै ॥ १० ॥
सात्यकिश्च हि मे चेयः पाण्डवश्च धनञ्जयः। सात्यकिं प्रेषयित्वा
तु पाण्डवस्य पदानुगम् ॥ ११ ॥ सात्वतस्यापि कं युद्धे प्रेषयिष्ये
पदानुगम्। करिष्यामि प्रयत्नेन भ्रातुरन्वेषणं यदि ॥ १२ ॥
युयुधानमनन्विष्य लोको मां गर्हयिष्यति। भ्रातुरन्वेषणं कृत्वा

धर्मपुत्रो युधिष्ठिरः ॥ १३ ॥ परित्यजति वार्ष्णेयं सत्यकिं सत्य-
विक्रमम् । लोकापवादभीरुत्वात् सोऽहं पार्थं वृकोदरम् ॥ १४ ॥
यद्वदीं प्रेषयिष्यामि माधवस्य महात्मनः । यथैव च मम प्रीति-
रर्जुने यदुसूदने ॥ १५ ॥ तथैव वृष्णिवीरेऽपि सात्वते युद्ध-
दुर्मदे । अतिभारे नियुक्तश्च मया शैनेयनन्दनः ॥ १६ ॥ स तु
मित्रोपरोधेन गौरवाच्च महाबलः । प्रविष्टो भारतीं सेना मकरः
सागरं यथा ॥ १७ ॥ असौ हि श्रूयते शब्दः शूराणामनिवर्त्ति-
नाम् । मिथः संयुध्यमानानां वृष्णिवीरेण धीमता ॥ १८ ॥ प्राप्त-
कालं सुबलवत् निचितं बहुधा हि तैः । तत्रैव पाण्डवेयस्य भीम-
सेनस्य धन्विनः ॥ १९ ॥ गमनं रोचते मह्यं यत्र यातौ महा-
रथौ । न चाप्यसह्यं भीमस्य विद्यते भुवि किञ्चन ॥ २० ॥ यक्तो
ह्येष रणे यत्तः पृथिव्यां सर्वधन्विनाम् । स्वबाहुबलमास्थाय
प्रतिव्यूहितमच्युता ॥ २१ ॥ यस्य बाहुबलं सर्वे समाश्रित्य महा-
त्मनः । वनवासान्निवृत्ताः स्म न च युद्धेषु निर्ज्जिताः ॥ २२ ॥
इतो गते भीमसेने सात्वतं प्रति पाण्डवे । सनाथौ भविताराै
हि युधि सात्वतफाल्गुनौ ॥ २३ ॥ कामन्त्वशोचनीयौ तौ रणे
सात्वतफाल्गुनौ । रक्षितौ वासुदेवेन स्वयञ्चास्त्रविशारदौ ॥२४॥
अवश्यन्तु मया कार्य्यमात्मनः शोकनाशनम् । तस्माद्भीमं नियो-
क्ष्यामि सात्वतस्य पदानुगम् ॥ २५ ॥ ततः प्रतिकृतं मन्ये विधानं
सात्यकिं प्रति । एवं निश्चित्य मनसा धर्म्मपुत्रो युधिष्ठिरः ॥ २६ ॥
यन्तारमब्रवीद्राजा भीमं प्रति नयस्व माम् । धर्म्मराजवचः श्रुत्वा
सारथिर्हयकोविदः ॥ २७ ॥ रथं हेमपरिष्कारं भीमान्तिक-
मुपानयत् । भीमसेनमनुप्राप्य प्राप्तकालमनुस्मरन् ॥ २८ ॥ कश्मलं
प्राविशद्राजा बहु तत्र समादिशत् । स कश्मलसमाविष्टो भीम-
माहूय पार्थिवः ॥ २९ ॥ अब्रवीद्वचनं राजन् कुन्तीपुत्रो युधि-
ष्ठिरः । यः स देवान् सगन्धर्वान् दैत्यांश्चैकरथोऽजयत् ॥ ३० ॥

तस्य लक्ष्म न पश्यामि भीमसेनानुजस्य ते। ततोऽब्रवीद्धर्मराजं
भीमसेनस्तथागतम् ॥ ३१ ॥ नैवाद्राक्षं न चाश्रौषं तव कश्मल
मीदृशम्। पुरातिदुःखदीर्णानां भवान् गतिरभूद्धि नः ॥ ३२ ॥
उत्तिष्ठोत्तिष्ठ राजेन्द्र शाधि किं करवाणि ते। न तु कार्य्य-
मसाध्यं वा विद्यते मम मानद ॥ ३३ ॥ आज्ञापय कुरुश्रेष्ठ मा
च शोके मनः कृथाः। तमब्रवीदश्रुपूर्णः कृष्णसर्प इव श्वसन् ॥ ३४ ॥
भीमसेनमिदं वाक्यं प्रम्लानवदनो नृपः। यथा शङ्खस्य निर्घोषः
पाञ्चजन्यस्य श्रूयते ॥ ३५ ॥ पूरितो वासुदेवेन संरब्धेन यश-
स्विना। नूनमद्य हतः शेते तव भ्राता धनञ्जयः ॥ ३६ ॥
तस्मिन् विनिहते नूनं युध्यतेऽसौ जनार्द्दनः। यस्य सत्त्ववतो वीर्य्य
मुपजीवन्ति पाण्डवाः ॥ ३७ ॥ यं भयेष्वभिगच्छन्ति सहस्राक्ष
मिवामराः। स शूरः सैन्धवप्रेप्सुरन्वयाद्भारतीञ्चमूम् ॥ ३८ ॥
तस्य वै गमनं विद्मो भीम नावर्त्तनं पुनः। श्यामो युवा गुडा-
केशो दर्शनीयो महारथः ॥ ३९ ॥ व्यूढोरस्को महाबाहुर्मत्त-
द्विरदविक्रमः। चकोरनेत्रस्ताम्राक्षो द्विषतां भयवर्द्धनः ॥ ४० ॥
तदिदं मम भद्रन्ते शोकस्थानमरिन्दम। अर्ज्जुनार्थं महाबाहो
सात्वतस्य च कारणात् ॥ ४१ ॥ वर्द्धते हविषेवाग्निरिध्यमानः
पुनः पुनः। तस्य लक्ष्म न पश्यामि तेन विन्दामि कश्मलम् ॥ ४२ ॥
तस्मिन् कृष्णो हते नूनं युध्यते युद्धकोविदः। तं विद्धि पुरुष-
व्याघ्रं सात्वतञ्च महारथम् ॥ ४३ ॥ स तं महारथं पश्चादनु
यातस्तवानुजम्। तमपश्यन्महाबाहुमहं विन्दामि कश्मलम्
॥ ४४ ॥ स तत्र गच्छ कौन्तेय यत्र यातो धनञ्जयः। सात्य-
किश्च महावीर्य्यः कर्त्तव्यं यदि मन्यसे ॥ ४५ ॥ वचनं मम धर्मज्ञ
भ्राता ज्येष्ठो भवामि ते। न तेऽर्ज्जुनस्तथा ज्ञेयो ज्ञातव्यः
सात्यकिर्यथा ॥ ४६ ॥ चिकीर्षुर्मत् प्रियं पार्थं स यातः सव्य
साचिन। पदवीं दुर्गमां घोरामगम्यामकृतात्मभिः ॥ ४७ ॥

दृष्ट्वा कुशलिनौ कृष्णौ सात्वतञ्चैव सात्यकिम् । संविदञ्चैव
कुर्य्यास्त्वं सिंहनादेन पाण्डव ॥ ४८ ॥

इति द्रोणपर्व्वणि जयद्रथवधपर्व्वणि युधिष्ठिरचिन्तायां
षड्विंशत्यधिकशततोऽध्यायः ॥ १२६ ॥

---

भीम उवाच । ब्रह्मेशानेन्द्रवरुणानवहद्यः पुरा रथः ।
तमास्थाय गतौ कृष्णौ न तयोर्विद्यते भयम् ॥ १ ॥ आज्ञान्तु
शिरसा बिभ्रन्नेष गच्छामि मा शुच । समेत्य तान्नरव्याघ्रान्
तव दास्यामि संविदम् ॥ २ ॥

सञ्जय उवाच । एतावदुक्त्वा प्रययौ परिदाय युधिष्ठिरम् ।
धृष्टद्युम्नाय बलवान् सुहृद्भ्यश्च पुनः पुनः ॥ ३ ॥ धृष्टद्युम्नञ्चेद-
माह भीमसेनो महाबलः । विदितन्ते महाबाहो यथा द्रोणो
महारथः ॥ ४ ॥ ग्रहणे धर्म्मराजस्य सर्व्वोपायेन वर्त्तते । न च
मे गमने कृत्यं तादृक् पार्षत विद्यते ॥ ५ ॥ यादृशं रक्षणे राज्ञः
कार्य्यमात्ययिकं हि नः । एवमुक्तोऽस्मि पार्थेन प्रतिवक्तुञ्च नोत्-
सहे ॥ ६ ॥ प्रयास्ये तत्र यत्रासौ मुमूर्षुः सैन्धवः स्थितः ।
धर्म्मराजस्य वचने स्थातव्यमविशङ्कया ॥ ७ ॥ यास्यामि पदवीं
भ्रातुः सात्वतस्य च धीमतः । सोऽद्य यत्तो रणे पार्थं परिरक्ष
युधिष्ठिरम् ॥ ८ ॥ एतद्धि सर्व्वकार्य्याणां परमं कृत्यमाहवे । तम-
ब्रवीन्महाराज धृष्टद्युम्नो वृकोदरम् ॥ ९ ॥ ईप्सितं ते करि-
ष्यामि गच्छ पार्थाविचारयन् । नाहत्वा समरे द्रोणो धृष्टद्युम्नं
कथञ्चन ॥ १० ॥ निग्रहं धर्म्मराजस्य प्रकरिष्यति संयुगे । ततो
निक्षिप्य राजानं धृष्टद्युम्ने च पाण्डवम् ॥ ११ ॥ अभिवाद्य गुरुं
ज्येष्ठं प्रययौ येन फाल्गुनः । परिष्वक्तश्च कौन्तेयो धर्म्मराजेन
भारत ॥ १२ ॥ आघ्रातश्च तथा मूर्द्ध्नि श्रावितश्चाशिषः शुभाः ।

कृत्वा प्रदक्षिणं विप्रानर्चितांस्तुष्टमानसान् ॥ १३ ॥ आलभ्य
मङ्गलान्यष्टौ पीत्वा कैलातकं मधु । द्विगुणद्रविणो वीरो मद-
रक्तान्तलोचनः ॥ १४ ॥ विप्रैः कृतस्वस्त्ययनो विजयोत्पाद-
सूचितः । पश्यन्नेवात्मनो बुद्धिं विजयानन्दकारिणीम् ॥ १५ ॥
अनुलोमानिलैश्चाशु प्रदर्शितजयोऽजयः । भीमसेनो महाबाहुः
कवची शुभकुण्डली ॥ १६ ॥ साङ्गदः सतलत्राणः सरथो
रथिनाम्वरः । तस्य कार्ष्णायसं वर्म हेमचित्रं महर्द्धिमत् ॥ १७ ॥
विबभौ सर्वतः श्लिष्टं सविद्युत्तोयदोपमम् । पीतरक्तासितसितै-
र्वासोभिश्च सुवेष्टितः ॥ १८ ॥ कण्ठत्राणेन च बभौ सेन्द्रायुध
इवाम्बुदः । प्रयाते भीमसेने तु तव सैन्यं युयुत्सया ॥ १९ ॥
पाञ्चजन्यरवो घोरः पुनराशीद्विशाम्पते । तं श्रुत्वा निनदं घोरं
त्रैलोक्यत्रासनं महत् ॥ २० ॥ पुनर्भीमं महाबाहुं धर्मपुत्रो-
ऽभ्यभाषत । एष वृष्णिप्रवीरेण ध्मातः सलिलजो भृशम् ॥ २१ ॥
पृथिवीं चान्तरीक्षञ्च विनादयति शङ्खराट् । नूनं व्यसनमापन्ने
सुमहत् सव्यसाचिनि ॥ २२ ॥ कुरुभिर्युध्यते सार्द्धं सर्वैश्चक्रगदा-
धरः । नूनमार्य्या महत् कुन्ती पापमद्य निदर्शनम् ॥ २३ ॥
द्रौपदी च सुभद्रा च पश्यन्ति सह बन्धुभिः । स भीम त्वरया
युक्तो याहि यत्र धनञ्जयः ॥ २४ ॥ मुह्यन्तीव हि मे सर्वा
धनञ्जयदिदृक्षया । दिशश्च प्रदिशः पार्थ सात्वतस्य च कारणात्
॥ २५ ॥ गच्छ गच्छेति गुरुणा सोऽनुज्ञातो वृकोदरः । ततः
पाण्डुसुतो राजन् भीमसेनः प्रतापवान् ॥ २६ ॥ बद्धगोधाङ्गुलि-
त्राणः प्रगृहीतशरासनः । ज्येष्ठेन प्रहितो भ्रात्रा भ्राता भ्रातुः
प्रियङ्करः ॥ २७ ॥ आहत्य दुन्दुभीन् भीमः शङ्खं प्रध्माप्य चास-
कृत् । विनद्य सिंहनादञ्च कृत्वा ज्याघट्टनेन च ॥ २८ ॥ तेन
शब्देन वीराणां पातयित्वा मनांस्युत । दर्शयन् घोरमात्मान-
ममित्रान् सहसाभ्ययात् ॥ २९ ॥ तमूहुर्जवना दान्ता विकुर्वन्तो

हयोत्तमाः । विशोकेनाभिसंयत्ता मनोमारुतरंहसः ॥ ३० ॥
आरुजन् विरुजन् पार्थो ज्यां विकर्षन् पाणिना । सोऽपकर्षन्
विकर्षंश्च सेनाग्रं समलोडयत ॥ ३१ ॥ तं प्रयान्तं महाबाहुं
पाञ्चालाः सहसोमकाः । पृष्ठतोऽनुययुः शूरा मघवन्तमिवामराः
॥ ३२ ॥ तं समेत्य महाराज सोदर्य्याः पर्य्यवारयन् । दुःशल-
श्चित्रसेनश्च कुण्डभेदी विविंशतिः ॥ ३३ ॥ दुर्मुखो दुःसहश्चैव
विकर्णश्च शलस्तथा । विन्दानुविन्दौ सुमुखो दीर्घबाहुः सुदर्शनः
॥ ३४ ॥ वृन्दारकः सुहस्तश्च सुषेणो दीर्घलोचनः । अभयो-
रौद्रकर्मा च सुवर्मा दुर्विमोचनः ॥ ३५ ॥ श्रीमन्तो रथिनां श्रेष्ठाः
सहसैन्यपदानुगाः । संयत्ताः समरे वीरा भीमसेनमुपाद्रवन्
॥ ३६ ॥ तैः समन्तादृतः शूरः समरेषु महारथः । तान् समीक्ष्य
तु कौन्तेयो भीमसेनः पराक्रमी ॥ ३७ ॥ अभ्यवर्त्तत वेगेन सिंहः
क्षुद्रमृगानिव । ते महास्त्राणि दिव्यानि तत्र वीरा अदर्शयन्
॥ ३८ ॥ छादयन्तः शरैर्भीमं मेघाः सूर्य्यमिवोदितम् । स तान-
तीत्य वेगेन द्रोणानीकमुपाद्रवत् ॥ ३९ ॥ अग्रतश्च गजानीकं
शरवर्षैरवाकिरत् । सोऽचिरेणैव कालेन तद्गजानीकमाशुगैः ॥ ४० ॥
दिशः सर्व्वाः समभ्यस्य व्यधमत् पवनात्मजः । त्रासिताः शरभस्येव
गर्ज्जितेन वने मृगाः ॥ ४१ ॥ प्राद्रवन् द्विरदाः सर्व्वे नदन्तो
भैरवान् रवान् । पुनश्चातीत्य वेगेन द्रोणानीकमुपाद्रवत् ॥ ४२ ॥
समवारयदाचार्य्यो वेलोद्वृत्तमिवार्णवम् । ललाटे ताडयच्चैनं
नाराचेन स्मयन्निव ॥ ४३ ॥ ऊर्द्धरश्मिरिवादित्यो विबभौ तत्र
पाण्डवः । स मन्यमानस्त्वाचार्य्यो ममायं फाल्गुनो यथा ॥ ४४ ॥
भीमः करिष्यते पूजामित्युवाच वृकोदरम् । भीमसेन न ते शक्यं
प्रवेष्टुमरिवाहिनीम् ॥ ४५ ॥ मामनिर्ज्जित्य समरे शत्रुमद्य महा-
बल । यदि ते सानुजः कृष्णः प्रविष्टोऽनुमते मम ॥ ४६ ॥
अनीकं न तु शक्यं मे प्रवेष्टुमिह वै त्वया । अथ भीमस्तु तच्छ्रुत्वा

गुरोर्वाक्यमिवष्टमी ॥ ४७ ॥ क्रुद्धः प्रोवाच वै द्रोणं रक्तताम्रेक्षण-
स्तदा । त्वयार्जुनो नानुमतो ब्रह्मबन्धो रणाजिरम् ॥ ४८ ॥
प्रविष्टः स हि दुर्द्धर्षः शक्रस्यापि विशेद्बलम् । येन वै परमां पूजां
कुर्वता मानितो ह्यसि ॥ ४९ ॥ नार्जुनोऽहं घृणी द्रोण भीम-
सेनोऽस्मि ते रिपुः । पिता नस्त्वं गुरुर्बन्धुस्तथा पुत्रा हि ते
वयम् ॥ ५० ॥ इति मन्यामहे सर्वे भवन्तं प्रणताः स्थिताः ।
अद्य तद्विपरीतं ते वदतोऽस्मासु दृश्यते ॥ ५१ ॥ यदि त्वं शत्रु-
मात्मानं मन्यसे तत्तथास्त्विह । एष ते सदृशं शत्रोः कर्म भीमः
करोम्यहम् ॥ ५२ ॥ अथोद्भ्राम्य गदां भीमः कालदण्डमिवा-
न्तकः । द्रोणाय व्यसृजद्राजन् स रथादवपुप्लुवे ॥ ५३ ॥ साश्व-
सूतध्वजं यानं द्रोणस्यापोथयत्तदा । प्रामृद्नाच्च बहून् योधान्
वायुर्वृक्षानिवौजसा ॥ ५४ ॥ तं पुनः परिवव्रुस्ते तव पुत्रा
रथोत्तमम् । अन्यन्तु रथमास्थाय द्रोणः प्रहरतां वरः ॥ ५५ ॥
व्यूहद्वारं समासाद्य युद्धाय समवस्थितः । ततः क्रुद्धो महाराज
भीमसेनः पराक्रमी ॥ ५६ ॥ अग्रतः स्यन्दनानीकं शरवर्षैरवा-
किरत् । ते वध्यमानाः समरे तव पुत्रा महारथाः ॥ ५७ ॥
भीमं भीमबला युद्धे योधयन्ति जयैषिणः । ततो दुःशासनः
क्रुद्धो रथशक्तिं समाक्षिपत् ॥ ५८ ॥ सर्वपारशवीं तीक्ष्णां जिघांसुः
पाण्डुनन्दनम् । आपतन्तीं महाशक्तिं तव पुत्रप्रचोदिताम् ॥ ५९ ॥
द्विधा चिच्छेद तां भीमस्तदद्भुतमिवाभवत् । अथान्यैर्विशिखै-
र्बाणैः पाण्डवः कुण्डभेदिनम् ॥ ६० ॥ सुषेणं दीर्घनेत्रञ्च त्रिभि-
स्त्रीनवधीद्बली । ततो वृन्दारकं वीरं कुरूणां कीर्त्तिवर्द्धनम् ॥ ६१ ॥
पुत्राणां तव वीराणां युध्यतामवधीत् पुनः । अभयं रौद्रकर्माणं
दुर्विमोचनमेव च ॥ ६२ ॥ त्रिभिस्त्रीनवधीद्भीमः पुनरेव सुतां-
स्तव । वध्यमाना महाराज पुत्रास्तव बलीयसा ॥ ६३ ॥ भीमं
प्रहरतां श्रेष्ठं समन्तात् पर्य्यवारयन् । ते शरैर्भीमकर्माणं ववृषुः

पाण्डवं युधि ॥ ६४ ॥ मेघा इव तपापाये धाराभिर्धरणीधरम् ।
स तदाश्ममयं वर्षमश्मवर्षमिवाचलः ॥ ६५ ॥ प्रतीच्छन् पाण्डु-
दायादो न प्राव्यथत मधुहा । विन्दानुविन्दौ सहितौ सुवर्माणञ्च
ते सुतम् ॥ ६६ ॥ प्रहसन्नेव कौन्तेयः शरैर्निन्ये यमक्षयम् । ततः
सुदर्शनं वीरं पुत्रन्ते भरतर्षभ ॥ ६७ ॥ विव्याध समरे तूर्णं स
पपात ममार च । सोऽचिरेणैव कालेन तद्रथानीकमाशुगैः ॥ ६८ ॥
दिशः सर्वाः समालोक्य व्यधमत् पाण्डुनन्दनः । ततो वै रथ-
घोषेण गर्जितेन मृगा इव ॥ ६९ ॥ भज्यमानाश्च समरे तव
पुत्रा विशाम्पते । प्राद्रवन् सहसा सर्वे भीमसेनभयार्दिताः ॥ ७० ॥
अनुयायांश्च कौन्तेयः पुत्राणां ते महद्बलम् । विव्याध समरे
राजन् कौरवेयान् समन्ततः ॥ ७१ ॥ वध्यमाना महाराज भीम-
सेनेन तावकाः । त्यक्त्वा भीमं रणाश्लाघं चोदयन्तो हयोत्तमान्
॥ ७२ ॥ तांस्तु निर्जित्य समरे भीमसेनो महाबलः । सिंह-
नादरवं चक्रे बाहुशब्दञ्च पाण्डवः ॥ ७३ ॥ तलशब्दञ्च सुमहत्
कृत्वा भीमो महाबलः । भीषयित्वा रथानीकं हत्वा योधान्
वरान् वरान् । व्यतीत्य रथिनश्चापि द्रोणानीकमुपाद्रवत् ॥ ७४ ॥

सिंहवन्नदन् ॥ ४ ॥ अवासृजच्च वेगेन शत्रुपक्षविनाशिनीम् ।
इन्द्राशनिरिवेन्द्रेण प्रविद्धा संहतात्मना ॥ ५ ॥ प्रामथ्नात् सा
महाराज सैनिकांस्तव संयुगे । घोषेण महता राजन् पूरयन्तीव
मेदिनीम् ॥ ६ ॥ ज्वलन्ती तेजसा भीमा त्रासयामास ते सुतान् ।
तां पतन्तीं महावेगां दृष्ट्वा तेजोऽभिसंवृताम् ॥ ७ ॥ प्राद्रवंस्तावकाः
सर्वे नदन्तो भैरवान् रवान् । तञ्च शब्दमसह्यं वै तस्याः श्रुत्वा च
मारिष ॥ ८ ॥ प्रापतन्मनुजास्तत्र रथेभ्यो रथिनस्तदा । ते
हन्यमाना भीमेन गदाहस्तेन तावकाः ॥ ९ ॥ प्राद्रवन्त रणे
भीता व्याघ्रघ्राता मृगा इव । स तान् विद्राव्य कौन्तेयः संख्ये-
ऽमित्रान् दुरासदान् ॥ १० ॥ सुपर्ण इव वेगेन पक्षिराडत्यगा-
च्चमूम् । तथा तु विप्रकुर्वाणं रथयूथपयूथपम् ॥ ११ ॥ भार-
द्वाजो महाराज भीमसेनं समभ्ययात् । भीमन्तु समरे द्रोणो
वारयित्वा शरोर्मिभिः ॥ १२ ॥ अकरोत् सहसा नादं पाण्डूनां
भयमादधत् । तद्युद्धमासीत् सुमहद्घोरं देवासुरोपमम् ॥ १३ ॥
द्रोणस्य च महाराज भीमस्य च महात्मनः । यदा तु विशिखै-
स्तीक्ष्णैर्द्रोणचापविनिःसृतैः ॥ १४ ॥ वध्यन्ते समरे वीराः शत-
शोऽथ सहस्रशः । ततो रथादवप्लुत्य वेगमास्थाय पाण्डवः ॥ १५ ॥
निमील्य नयने राजन् पदातिर्द्रोणमभ्ययात् । यथा हि गोवृषो
वर्षं प्रति गृह्णाति लीलया ॥ १६ ॥ तथा भीमो नरव्याघ्रः शर-
वर्षं समग्रहीत् । स वध्यमानः समरे रथं द्रोणस्य मारिष ॥ १७ ॥
ईषायां पाणिना गृह्य प्रचिक्षेप महाबलः । द्रोणस्तु सत्वरो
राजन् क्षिप्तो भीमेन संयुगे ॥ १८ ॥ रथमन्यं समारुह्य व्यूह-
द्वारमुपाययौ । तस्मिन् क्षणे तस्य यन्ता तूर्णमश्वानचोदयत्
॥ १९ ॥ भीमसेनस्य कौरव्य तदद्भुतमिवाभवत् । ततः स्वरथ-
मास्थाय भीमसेनो महाबलः ॥ २० ॥ पर्य्यवर्त्तत वेगेन तव पुत्रस्य
वाहिनीम् । स मृद्नन् क्षत्रियानाजौ वातो वृक्षानिवोद्धतः ॥ २१ ॥

अगच्छद्दारयन् सेनां सिन्धु वेगो नगानिव । भोजानीकं समा-
साद्य हार्दिक्येनाभिरक्षितम् ॥ २२ ॥ प्रमथ्य तरसा राजन्
भीमसेनः समभ्ययात् । सन्त्रासयन्ननीकानि तलशब्देन मारिष
॥ २३ ॥ अजयत् सर्वसैन्यानि शार्दूल इव गोवृषान् । भोजा-
नीकमतिक्रम्य काम्बोजानाञ्च वाहिनीम् ॥ २४ ॥ तथा म्लेच्छ-
गणांश्चान्यान् बहून् युद्धविशारदान् । सात्यकिञ्चापि सम्प्रेक्ष्य
युध्यमानं नरर्षभम् ॥ २५ ॥ रथेन यत्तः कौन्तेयो वेगेन प्रययौ
तदा । भीमसेनो महाराज द्रष्टुकामो धनञ्जयम् ॥ २६ ॥ अतीत्य
समरे योधांस्तावकान् पाण्डुनन्दनः । सोऽपश्यदर्ज्जुनं तत्र युध्य-
मानं महारथम् ॥ २७ ॥ सैन्धवस्य वधार्थं हि पराक्रान्तं परा-
क्रमी । तं दृष्ट्वा पुरुषव्याघ्रश्चुक्रोश महतो रवान् ॥ २८ ॥ प्रावृट्-
काले महाराज नर्द्दन्निव बलाहकः । तं तस्य निनदं घोरं पार्थः
शुश्राव नर्द्दतः ॥ २९ ॥ वासुदेवश्च कौरव्य भीमसेनस्य संयुगे ।
तौ श्रुत्वा युगपद्वीरौ निनदं तस्य शुष्मिणः ॥ ३० ॥ पुनः पुनः
प्राणदतां दिदृक्षन्तौ वृकोदरम् । ततः पार्थो महानादं मुञ्चन् वै
माधवश्च ह ॥ ३१ ॥ अभ्ययातां महाराज नर्दन्तौ गोवृषाविव ।
भीमसेनरवं श्रुत्वा फाल्गुनस्य च धन्विनः ॥ ३२ ॥ अप्रीयत
महाराज धर्मपुत्रो युधिष्ठिरः । विशोकश्चाभवद्राजा श्रुत्वा तं
निनदं तयोः ॥ ३३ ॥ धनञ्जयस्य च रणे जयमाशास्तवान्
विभुः । तथा तु नर्दमाने वै भीमसेने मदोत्कटे ॥ ३४ ॥ स्मितं
कृत्वा महाबाहुर्धर्मपुत्रो युधिष्ठिरः । हृद्गतं मनसा प्राह ध्यात्वा
धर्मभृतां वरः ॥ ३५ ॥ दत्ता भीम त्वया सम्वित् कृतं गुरुवच-
स्तथा । न हि तेषां जयो युद्धे येषां द्वेष्टासि पाण्डव ॥ ३६ ॥
दिष्ट्या जीवति सङ्ग्रामे सव्यसाची धनञ्जयः । दिष्ट्या च कुशली
वीरः सात्यकिः सत्यविक्रमः ॥ ३७ ॥ दिष्ट्या शृणोमि गर्जन्तौ
वासुदेवधनञ्जयौ । येन शक्रं रणे जित्वा तर्पितो हव्यवाहनः ॥३८॥

स हन्ता द्विषतां सङ्ख्ये दिष्ट्या जीवति फाल्गुनः । यस्य बाहुबलं सर्वे वयमाश्रित्य जीविताः ॥ ३९ ॥ स हन्ता रिपुसैन्यानां दिष्ट्या जीवति फाल्गुनः । निवातकवचा येन देवैरपि सुदुर्जयाः ॥ ४० ॥ निर्जिता धनुषैकेन दिष्ट्या पार्थः स जीवति । कौरवान् सहितान् सर्वान् गोग्रहार्थे समागतान् ॥ ४१ ॥ योऽजयन्मत्स्यनगरे दिष्ट्या पार्थः स जीवति । कालकेयसहस्राणि चतुर्दश महारणे ॥ ४२ ॥ योऽवधीद्भुजवीर्येण दिष्ट्या पार्थः स जीवति । गन्धर्वराजं बलिनं दुर्योधनकृते वै ॥ ४३ ॥ जितवान् योऽस्त्रवीर्येण दिष्ट्या पार्थः स जीवति । किरीटमाली बलवान् श्वेताश्वः कृष्णसारथिः ॥ ४४ ॥ मम प्रियश्च सततं दिष्ट्या जीवति फाल्गुनः । पुत्रशोकाभिसन्तप्तश्चिकीर्षन् कर्म दुष्करम् ॥ ४५ ॥ जयद्रथवधान्वेषी प्रतिज्ञां कृतवान् हि यः । कच्चित् स सैन्धवं सङ्ख्ये हनिष्यति धनञ्जय ॥ ४६ ॥ कच्चित्तीर्ण-

धृतराष्ट्र उवाच । तथा तु नर्दमानं तं भीमसेनं महाबलम् ।
मेघस्तनितनिर्घोषं के वीराः पर्यवारयन् ॥ १ ॥ न हि पश्या-
म्यहं तं वै त्रिषु लोकेषु सञ्जय । क्रुद्धस्य भीमसेनस्य यस्तिष्ठे-
दग्रतो रणे ॥ २ ॥ गदामुद्यच्छतस्तस्य कालस्येव महामृधे । न
हि पश्याम्यहं तात यस्तिष्ठेत रणाजिरे ॥ ३ ॥ रथं रथेन यो
हन्यात् कुञ्जरं कुञ्जरेण च । कस्तस्य पुरतः स्थाता साक्षादपि
शतक्रतुः ॥ ४ ॥ रणे क्रुद्धस्य भीमस्य मम पुत्रान् जिघांसतः ।
दुर्योधनहिते युक्ताः समतिष्ठन्त केऽग्रतः ॥ ५ ॥ भीमसेनदवा-
ग्नेस्तु मम पुत्रांस्तृणोपमान् । प्रदहतो रणमुखे केऽतिष्ठन्नग्रतो
नराः ॥ ६ ॥ काल्यमानान् हि मे पुत्रान् भीमेनावेक्ष्य संयुगे ।
कालेनेव प्रजाः सर्वाः के भीमं पर्यवारयन् ॥ ७ ॥ न मेऽर्जुना-
द्भयं तादृक् कृष्णान्नापि च सात्वतात् । हुतभुग्जन्मनो नैव
यादृग्भीमाद्भयं मम ॥ ८ ॥ भीमवह्नेः प्रदीप्तस्य मम पुत्रान्
दिधक्षतः । के शूराः पर्यवर्तन्त तन्ममाचक्ष्व सञ्जय ॥ ९ ॥
सञ्जय उवाच । तथा तु नर्दमानं तं भीमसेनं महारथम् ।
तुमुलेनैव शब्देन कर्णोऽप्यभ्यपतद्बली ॥ १० ॥ व्याक्षिपन् बल-
वच्चापमतिमात्रममर्षणः । कर्णस्तु युद्धमाकाङ्क्षन् दर्शयिष्यन् बलं
बली ॥ ११ ॥ रुरोध मार्गं भीमस्य वातस्येव महीरुहः ।
भीमोऽपि दृष्ट्वा सावेगं पुरो वैकर्तनं स्थितम् ॥ १२ ॥ चुकोप
बलवद्वीरश्चिक्षेपास्य शिलाशितान् । तान् प्रत्यगृह्णात् कर्णोऽपि
प्रतीपं प्रेषयच्छरान् ॥ १३ ॥ ततस्तु सर्वयोधानां यततां प्रेक्षतां
तदा । प्रावेपन्निव गात्राणि कर्णभीमसमागमे ॥ १४ ॥ रथिनां
सादिनां चैव तयोः श्रुत्वा तलस्वनम् । भीमसेनस्य निनदं घोरं
श्रुत्वा रणाजिरे ॥ १५ ॥ खं च भूमिं च संरुद्धां मेनिरे क्षत्रिय-
र्षभाः । पुनर्घोरेण नादेन पाण्डवस्य महात्मनः ॥ १६ ॥
समरे सर्वयोधानां धनूंष्यभ्यपतन् क्षितौ । वित्रस्तानि च सर्वाणि

चक्रतुस्तं प्रसस्रुवुः ॥ १७ ॥ वाहनानि महाराज बभूवुर्विमनांसि
च । प्रादुरासन्निमित्तानि घोराणि च बहूनि च ॥ १८ ॥ गृध्र-
कङ्कबलैश्चासीदन्तरीक्षं समावृतम् । तस्मिंस्तु तुमुले राजन् भीम-
कर्णसमागमे ॥ १९ ॥ ततः कर्णस्तु विंशत्या शराणां भीम-
मार्दयत् । विव्याध चास्य त्वरितः सूतं पञ्चभिराशुगैः ॥ २० ॥
प्रहस्य भीमसेनस्तु कर्णं प्रत्याद्रवद्रणे । सायकानां चतुःषष्ट्या
क्षिप्रकारी महाबलः ॥ २१ ॥ तस्य कर्णो महाराज सायकां-
श्चतुरोऽक्षिपत् । असंप्राप्तांस्तु तान् भीमः सायकैर्नतपर्वभिः ॥ २२ ॥
चिच्छेद बहुधा राजन् दर्शयन् पाणिलाघवम् । तं कर्णश्छादयामा-
स शरव्रातैरनेकशः ॥ २३ ॥ सञ्छाद्यमानः कर्णेन बहुधा
पाण्डुनन्दनः । चिच्छेद चापं कर्णस्य मुष्टिदेशे महारथः ॥ २४ ॥
विव्याध चैनं दशभिः सायकैर्नतपर्वभिः । अथान्यद्धनुरादाय सज्यं
कृत्वा च सूतजः ॥ २५ ॥ विव्याध समरे भीमं भीमकर्मा महा-
रथः । तस्य भीमो भृशं क्रुद्धस्त्रीन् शरान्नतपर्वणः ॥ २६ ॥
निचखानोरसि क्रुद्धः सूतपुत्रस्य वेगतः । तैः कर्णोऽराजत शरै-
रुरोमध्यगतैस्तदा ॥ २७ ॥ महीधर इवोदग्रस्त्रिशृङ्गो भरत-
र्षभ । सुस्राव चास्य रुधिरं विद्धस्य परमेषुभिः ॥ २८ ॥ धातु-
प्रस्यन्दिनः शैलाद्यथा गैरिकधातवः । किंचिद्विचलितः कर्णः
सुप्रहाराभिपीडितः ॥ २९ ॥ ससायकं धनुः कृत्वा भीमं विव्याध
मारिष । चिक्षेप च पुनर्बाणान् शतशोऽथ सहस्रशः ॥ ३० ॥
स छाद्यमानः सहसा कर्णेन दृढधन्विना । धनुर्ज्यामच्छिनत्तूर्ण-
मुत्स्मयन् पाण्डुनन्दनः ॥ ३१ ॥ सारथिं चास्य भल्लेन प्राहिणो-
द्यमसादनम् । वाहांश्च चतुरः संख्ये व्यसूंश्चक्रे महारथः ॥ ३२ ॥
हताश्वात्तु रथात्तूर्णमवप्लुत्य विशाम्पते । स्यन्दनं वृषसेनस्य
समारोहन्महारथः ॥ ३३ ॥ निर्जित्य तु रणे कर्णं भीमसेनः
प्रतापवान् । ननाद च महानादं पर्जन्यनिनदोपमम् ॥ ३४ ॥

तस्य तन्निनदं श्रुत्वा प्रहृष्टोऽभूद्युधिष्ठिरः। कर्णन्तु निर्ज्जितं मत्वा भीमसेनेन भारत ॥ ३५ ॥ समन्तात् शङ्खनिनदं पाण्डुसेनाकरोत्तदा। शत्रुसेनाध्वनिं श्रुत्वा तावका व्यनदन् भृशम् ॥ ३६ ॥ गाण्डीवं प्राक्षिपत् पार्थः कृष्णोऽप्यब्जमवादयत्। तमन्तर्धाय निनदं ध्वनिर्भीमस्य नर्द्दतः ॥ ३७ ॥ अभूयत महाराज सर्व्वसैन्येषु मारिष। ततो व्यायच्छतामस्त्रैः पृथक् पृथगजिह्मगैः। मृदुपूर्व्वञ्च राधेयो दृढपूर्व्वञ्च पाण्डवः ॥ ३८ ॥

इति द्रोणपर्व्वणि जयद्रथवधपर्व्वणि कर्णपराजये
एकोनत्रिंशदधिकशततोऽध्यायः ॥ १२९ ॥

---

सञ्जय उवाच। तस्मिन् विलुलिते सैन्ये सैन्धवायार्ज्जुने गते। सात्वते भीमसेने च पुत्रस्ते द्रोणमभ्ययात् ॥ १ ॥ त्वरन्नेकरथेनैव बहुकृत्यं विचिन्तयन्। स रथस्तव पुत्रस्य त्वरया परया युतः ॥ २ ॥ तूर्णमभ्यद्रवत् द्रोणं मनोमारुतवेगवान्। उवाच चैनं पुत्रस्ते संरम्भाद्रक्तलोचनः ॥ ३ ॥ अर्ज्जुनो भीमसेनश्च सात्यकिश्चापराजितः। विजित्य सर्व्वसैन्यानि सुमहान्ति महारथाः ॥ ४ ॥ सम्प्राप्ता सिन्धुराजस्य समीपमरिकर्षण। व्यायच्छन्ति च तत्रापि सर्व्व एवापराजिताः ॥ ५ ॥ विजित्य सर्व्वसैन्यानि सुमहान्ति महारथाः। कथं सात्यकिभीमाभ्यां व्यतिक्रान्तोऽसि मानद ॥ ६ ॥ आश्चर्य्यभूतं लोकेऽस्मिन् समुद्रस्येव शोषणम्। निर्ज्जयस्तव विप्राग्र्य सात्वतेनार्ज्जुनेन च ॥ ७ ॥ तथैव भीमसेनेन लोकः संवदते भृशम्। कथं द्रोणो जितः सङ्ख्ये धनुर्वेदस्य पारगः ॥ ८ ॥ इत्येव ब्रुवते योधा अश्रद्धेयमिदं तव। नाश एव तु मे नूनं मन्दभाग्यस्य संयुगे ॥ ९ ॥ यत्र त्वां पुरुषव्याघ्र व्यतिक्रान्तास्त्रयो

तस्य तन्निनदं श्रुत्वा प्रहृष्टोऽभूद्युधिष्ठिरः । कर्णन्तु निर्जितं मत्वा
भीमसेनेन भारत ॥ ३५ ॥ समन्ताच्छङ्खनिनदं पाण्डुसेनाकरो-
त्तदा । शत्रुसेनाध्वनिं श्रुत्वा तावका व्यनदन् भृशम् ॥ ३६ ॥
गाण्डीवं प्राक्षिपत् पार्थः कृष्णोऽप्यब्जमवादयत् । तमन्तर्धाय
निनदं ध्वनिर्भीमस्य नर्दतः ॥ ३७ ॥ अश्रूयत महाराज सर्व-
सैन्येषु मारिष । ततो व्यायच्छतामस्त्रैः पृथक् पृथगजिह्मगैः ।
मृदुपूर्वञ्च राधेयो दृढपूर्वञ्च पाण्डवः ॥ ३८ ॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि कर्णपराजये
एकोनत्रिंशदधिकशततोऽध्यायः ॥ १२९ ॥



सञ्जय उवाच । तस्मिन् विलुलिते सैन्ये सैन्धवायार्जुने गते ।
सात्वते भीमसेने च पुत्रस्ते द्रोणमभ्ययात् ॥ १ ॥ त्वरन्नेकरथे-
नैव बहुकृत्यं विचिन्तयन् । स रथस्तव पुत्रस्य त्वरया परया
युतः ॥ २ ॥ तूर्णमभ्यद्रवत् द्रोणं मनोमारुतवेगवान् । उवाच
चैनं पुत्रस्ते संरम्भाद्रक्तलोचनः ॥ ३ ॥ अर्जुनो भीमसेनश्च सात्यकि-
श्चापराजितः । विजित्य सर्वसैन्यानि सुमहान्ति महारथाः ॥ ४ ॥
सम्प्राप्ताः सिन्धुराजस्य समीपमरिकर्षण । व्यायच्छन्ति च
तत्रापि सर्व एवापराजिताः ॥ ५ ॥ विजित्य सर्वसैन्यानि सुमहान्ति
महारथाः । कथं सात्यकिभीमाभ्यां व्यतिक्रान्तोऽसि मानद ॥ ६ ॥
आश्चर्य्यभूतं लोकेऽस्मिन् समुद्रस्येव शोषणम् । निर्जयस्तव
विप्राग्र्य सात्वतेनार्जुनेन च ॥ ७ ॥ तथैव भीमसेनेन लोकः सं-
वदते भृशम् । कथं द्रोणो जितः सङ्ख्ये धनुर्वेदस्य पारगः ॥ ८ ॥
इत्येवं ब्रुवते योधा अश्रद्धेयमिदं तव । नाश एव तु मे नूनं
मन्दभाग्यस्य संयुगे ॥ ९ ॥ यत्र त्वां पुरुषव्याघ्र व्यतिक्रान्तास्त्रयो

शकृन्मूत्रं प्रसुस्रुवुः ॥ १७ ॥ वाहनानि महाराज बभूवुर्विमनांसि
च । प्रादुरासन्निमित्तानि घोराणि च बहूनि च ॥ १८ ॥ गृध्र-
कङ्कबलैश्चासीदन्तरीक्षं समावृतम् । तस्मिंस्तु तुमुले राजन् भीम-
कर्णसमागमे ॥ १९ ॥ ततः कर्णस्तु विंशत्या शराणां भीम-
माहनत् । विव्याध चास्य त्वरितः सूतं पञ्चभिराशुगैः ॥ २० ॥
प्रहस्य भीमसेनस्तु कर्णं प्रत्याहनद्रणे । सायकानां चतुःषष्ट्या
क्षिप्रकारी महाबलः ॥ २१ ॥ तस्य कर्णो महाराज सायकां-
श्चतुरोऽक्षिपत् । असंप्राप्तांस्तु तान् भीमः सायकैर्नतपर्वभिः ॥ २२ ॥
चिच्छेद बहुधा राजन् दर्शयन् पाणिलाघवम् । तं कर्णश्छादया-
मास शरव्रातैरनेकशः ॥ २३ ॥ सञ्छाद्यमानः कर्णेन बहुधा
पाण्डुनन्दनः । चिच्छेद चापं कर्णस्य मुष्टिदेशे महारथः ॥ २४ ॥
विव्याध चैनं दशभिः सायकैर्नतपर्वभिः । अथान्यद्धनुरादाय सज्यं
कृत्वा च सूतजः ॥ २५ ॥ विव्याध समरे भीमं भीमकर्मा महा-
रथः । तस्य भीमो भृशं क्रुद्धस्त्रीन् शरान्नतपर्वणः ॥ २६ ॥
निचखानोरसि क्रुद्धः सूतपुत्रस्य वेगतः । तैः कर्णोऽराजत स्त-
नमध्यगतैस्तदा ॥ २७ ॥ महीधर इवोदग्रस्त्रिशृङ्गो भरत-
र्षभ । सुस्राव चास्य रुधिरं विद्धस्य परमेषुभिः ॥ २८ ॥ धातु-
प्रस्यन्दिनः शैलाद्यथा गैरिकधातवः । किंचिद्विचलितः कर्णः
सम्प्रहाराभिपीडितः ॥ २९ ॥ सशायकं धनुः कृत्वा भीमं विव्याध
मारिष । चिक्षेप च पुनर्बाणान् शतशोऽथ सहस्रशः ॥ ३० ॥
स छाद्यमानः सहसा कर्णेन दृढधन्विना । धनुर्ज्यामच्छिनत्तूर्ण-
मुत्स्मयन् पाण्डुनन्दनः ॥ ३१ ॥ सारथिं चास्य भल्लेन प्राहिणो-
द्यमसादनम् । वाहांश्च चतुरः सङ्ख्ये व्यसूंश्चक्रे महारथः ॥ ३२ ॥
हताश्वात्तु रथात्तूर्णमवप्लुत्य विशाम्पते । स्यन्दनं वृषसेनस्य
समारोहन्महारथः ॥ ३३ ॥ निर्जित्य तु रणे कर्णं भीमसेनः
प्रतापवान् । ननाद च महानादं पर्जन्यनिनदोपमम् ॥ ३४ ॥

तस्य तन्निनदं श्रुत्वा प्रहृष्टोऽभूद्युधिष्ठिरः। कर्णन्तु निर्जितं मत्वा भीमसेनेन भारत ॥ ३५ ॥ समन्ताच्छङ्खनिनदं पाण्डुसेनाकरोत्तदा। शत्रुसेनाध्वनिं श्रुत्वा तावका ह्यनदन् भृशम् ॥ ३६ ॥ गाण्डीवं प्राक्षिपत् पार्थः कृष्णोऽप्यब्जमवादयत्। तमन्तर्धाय निनदं ध्वनिर्भीमस्य नर्द्दतः ॥ ३७ ॥ अयूयत महाराज सर्वसैन्येषु भारत। ततो व्यायच्छतामस्त्रैः पृथक् पृथगजिह्मगैः। मृदुपूर्वञ्च राधेयो दृढपूर्वञ्च पाण्डवः ॥ ३८ ॥

इति द्रोणपर्व्वणि जयद्रथवधपर्व्वणि कर्णपराजये एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥



सञ्जय उवाच। तस्मिन् विलुलिते सैन्ये सैन्धवायार्ज्जुने गते। सात्वते भीमसेने च पुत्रस्ते द्रोणमभ्ययात् ॥ १ ॥ त्वरन्नेकरथेनैव बहुकृत्यं विचिन्तयन्। स रथस्तव पुत्रस्य त्वरया परया युतः ॥ २ ॥ तूर्णमभ्यद्रवत् द्रोणं मनोमारुतवेगवान्। उवाच चैनं पुत्रस्ते संरम्भाद्रक्तलोचनः ॥ ३ ॥ अर्ज्जुनो भीमसेनश्च सात्यकिश्चापराजितः। विजित्य सर्वसैन्यानि सुमहान्ति महारथाः ॥ ४ ॥ सम्प्राप्ताः सिन्धुराजस्य समीपमरिकर्षण। व्यायच्छन्ति च तत्रापि सर्व एवापराजिताः ॥ ५ ॥ विजित्य सर्वसैन्यानि सुमहान्ति महारथाः। कथं सात्यकिभीमाभ्यां व्यतिक्रान्तोऽसि मानद ॥ ६ ॥ आश्चर्य्यभूतं लोकेऽस्मिन् समुद्रस्येव शोषणम्। निर्ज्जयस्तव विप्राग्र्य सात्वतेनार्ज्जुनेन च ॥ ७ ॥ तथैव भीमसेनेन लोकः संवदते भृशम्। कथं द्रोणो जितः सङ्ख्ये धनुर्वेदस्य पारगः ॥ ८ ॥ इत्येवं ब्रुवते योधा अश्रद्धेयमिदं तव। नाश एव तु मे नूनं मन्दभाग्यस्य संयुगे ॥ ९ ॥ यत्र त्वां पुरुषव्याघ्र व्यतिक्रान्तास्त्रयो

रथाः । एवं गते तु कृत्येऽस्मिन् ब्रूहि यत्ते विवक्षितम् ॥ १० ॥
यद्गतं गतमेवेह शेषं चिन्तय मानद । यत् कृत्यं सिन्धुराजस्य
प्राप्तकालमनन्तरम् । तद्ब्रवीतु भवान् क्षिप्रं साधु तत् सम्विधी-
यताम् ॥ ११ ॥

द्रोण उवाच । चिन्त्यं बहु महाराज यत्कृत्यं तच्च मे शृणु ।
त्रयो हि समतिक्रान्ताः पाण्डवानां महारथाः ॥ १२ ॥ याव-
न्तेषां भयं पश्चात्तावदेषां पुरःसरम् । तद्गरीयस्तरं मन्ये यत्र
कृष्णधनञ्जयौ ॥ १३ ॥ सा पुरस्ताच्च पश्चाच्च गृहीता भारती
चमूः । तत्र कृत्यमहं मन्ये सैन्धवस्याभिरक्षणम् ॥ १४ ॥ स नो
रक्ष्यतमस्तात क्रुद्धाद्भीतो धनञ्जयात् । गतौ हि सैन्धवं वीरौ
युयुधानवृकोदरौ ॥ १५ ॥ सम्प्राप्तं तदिदं द्यूतं यत्तच्छकुनि-
बुद्धिजम् । न सभायां जयो वृत्तो नापि तत्र पराजयः ॥ १६ ॥
इह नो ग्लहमानानामद्य तावज्जयाजयौ । यान् स्म तान् ग्लहते
घोरान् शकुनिः कुरुसंसदि ॥ १७ ॥ अक्षान् स मन्यमानः प्राक्
शरास्ते हि दुरासदाः । न तेऽक्षा निशिता घोराः शरा युष्म-
त्तनुच्छिदः ॥ १८ ॥ यत्र ते बहवस्तात कुरवः पर्यवस्थिताः ।
सेनां दुरोदरं विद्धि शरानक्षान् विशाम्पते ॥ १९ ॥ ग्लहञ्च
सैन्धवं राजन्नत्र द्यूतस्य निश्चयः । सैन्धवे हि महद्द्यूतं समा-
सक्तं परैः सह ॥ २० ॥ अत्र सर्वे महाराज त्यक्त्वा जीवित-
मात्मनः । सैन्धवस्य रणे रक्षां विधिवत् कर्तुमर्हथ ॥ २१ ॥
तत्र नो ग्लहमानानां ध्रुवौ तात जयाजयौ । यत्र ते परमेष्वासा
यत्ता रक्षन्ति सैन्धवम् ॥ २२ ॥ तत्र याहि ध्रुवं शीघ्रं तांश्च
रक्षस्व रक्षिणः । इहैव त्वहमासिष्ये प्रेषयिष्यामि चापरान् ॥ २३ ॥
निरोत्स्यामि च पाञ्चालान् सहितान् पाण्डुसृञ्जयैः । ततो
दुर्योधनः प्रायात्तूर्णमाचार्यशासनात् ॥ २४ ॥ उद्यम्यात्मान-
मुग्राय कर्मणे सपदानुगः । चक्ररक्षौ तु पाञ्चाल्यौ युधामन्यू-

त्तमौजसौ ॥ २५ ॥ वाह्येन सेनामभ्येत्य जग्मतुः सव्यसाचिनम् ।
यौ हि पूर्वं महाराज वारितौ कृतवर्म्मणा ॥ २६ ॥ प्रविष्टेऽर्जुने
राजंस्तव सैन्यं युयुत्सया । पार्श्वेन सैन्यमायान्तौ कुरुराजो
ददर्श ह ॥ २७ ॥ ताभ्यां दुर्य्योधनश्चार्द्धं समार्च्छद्युद्धमुत्तमम् ।
त्वरितस्त्वरमाणाभ्यां भ्रातृभ्यां भारतो बली ॥ २८ ॥ तावभि
द्रवतामेवमुभावुद्यतकार्मुकौ । महारथसमाख्यातौ क्षत्रियप्रवरौ
युधि ॥ २९ ॥ तमविध्यद्युधामन्युस्त्रिंशता कङ्कपत्रिभिः । विंशत्या
सारथिञ्चापि चतुर्भिश्चतुरो हयान् ॥ ३० ॥ दुर्य्योधनो युधा-
मन्योर्ध्वजमेकेषुणाच्छिनत् । एकेन कार्मुकञ्चास्य चकर्त्त सुत-
स्तव ॥ ३१ ॥ सारथिञ्चास्य भल्लेन रथनीडादपाहरत् । ततो
विध्यच्छरैस्तीक्ष्णैश्चतुर्भिश्चतुरो हयान् ॥ ३२ ॥ युधामन्युश्च संक्रुद्ध
शरांस्त्रिंशतमाहवे । व्यसृजच्चैव पुत्रस्य त्वरमाणः स्तनान्तरे
॥ ३३ ॥ तथोत्तमौजाः संक्रुद्धः शरैर्हेमविभूषितैः । अविध्यत्
सारथिञ्चास्य प्राहिणोद्यमसादनम् ॥ ३४ ॥ दुर्य्योधनोऽपि राजेन्द्र
पाञ्चाल्यस्योत्तमौजसः । जघान चतुरोऽश्वांश्च उभौ च पार्ष्णि-
सारथी ॥ ३५ ॥ उत्तमौजा हताश्वस्तु हतसूतश्च संयुगे ।
आरुरोह रथं भ्रातुर्युधामन्योरभित्वरन् ॥ ३६ ॥ स रथं प्राप्य
तं भ्रातुर्दुर्य्योधनहयान् शरैः । बहुभिस्ताडयामास ते हताः
प्रापतन् भुवि ॥ ३७ ॥ हयेषु पतितेष्वस्य चिच्छेद परमेषुणा ।
युधामन्युर्धनुः शीघ्रं शरावापञ्च वीर्य्यवान् ॥ ३८ ॥ हताश्व-
सूतात् स रथादवप्लुत्य नरर्षभः । गदामादाय ते पुत्र
पाञ्चाल्यावभ्यधावत ॥ ३९ ॥ तमापतन्तं सम्प्रेक्ष्य क्रुद्धं पर
पुरञ्जयम् । अवप्लुतौ रथोपस्थात् युधामन्यूत्तमौजसौ ॥ ४० ॥
ततः स हेमचित्रं तं स्यन्दनप्रवरं गदी । गदया पोथयामास
साश्वसूतध्वजं रणे ॥ ४१ ॥ हत्वा चैव च पुत्रस्ते हताश्वो
हतसारथिः । मद्रराजरथं तूर्णमारुरोह परन्तप ॥ ४२ ॥

पाञ्चालानान्तु मुख्यौ तौ राजपुत्रौ महारथौ। रथावन्यौ समारुह्य भीमसेनमभिजग्मतुः ॥ ४२ ॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि दुर्योधनयुद्धे
विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥



पुत्रस्य मम संयुगे । स कथं भीमकर्माणं भीमसेनमयुध्यत ॥ १३ ॥
यं समाश्रित्य पुत्रैर्मे कृतं वैरं महारथैः । तं सूततनयं तात
कथं भीमो ह्ययोधयत् ॥ १४ ॥ अनेकान् विप्रकारांश्च सूतपुत्र-
समुद्भवान् । स्मरमाणः कथं भीमो युयुधे सूतसूनुना ॥ १५ ॥
योऽजयत् पृथिवीं सर्वां रथेनैकेन वीर्यवान् । तं सूततनयं युद्धे
कथं भीमोऽप्ययोधयत् ॥ १६ ॥ यो जातः कुण्डलाभ्याञ्च कवचेन
सहैव च । तं सूतपुत्रं समरे भीमः कथमयोधयत् ॥ १७ ॥ यथा
तयोर्युद्धमभूत् यश्चासीद्विजयस्तयोः । तन्ममाचक्ष्व तत्त्वेन कुशलो
ह्यसि सञ्जय ॥ १८ ॥

सञ्जय उवाच । भीमसेनस्तु राधेयमुत्सृज्य रथिनां वरम् ।
इयेष गन्तुं यत्रास्तां वीरौ कृष्णधनञ्जयौ ॥ १९ ॥ तं प्रयान्त-
मभिद्रुत्य राधेयः कङ्कपत्रिभिः । अभ्यवर्षन्महाराज मेघो वृष्ट्येव
पर्वतम् ॥ २० ॥ फुल्लता पङ्कजेनेव वक्त्रेणाभ्युत्स्मयन् बली ।
आजुहाव रणे यान्तं भीममाधिरथिस्तदा ॥ २१ ॥

कर्ण उवाच । भीमाहितैस्तव रणः स्वप्नेऽपि न विभा-
वितः । तद्दर्शयसि कस्मान्मे पृष्ठं पार्थदिदृक्षया ॥ २२ ॥ कुन्त्याः
पुत्रस्य सदृशं नेदं पाण्डवनन्दन । तेन मामभितः स्थित्वा शर-
वर्षैरवाकिर ॥ २३ ॥ भीमसेनस्तदाह्वानं कर्णान्नामर्षयद्युधि ।
अर्द्धमण्डलमावृत्य सूतपुत्रमयोधयत् ॥ २४ ॥ अवक्रगामिभिर्बाणै-
रभ्यवर्षन्महायशाः । द्वैरथे दंशितं यान्तं सर्वशस्त्रविशारदम् ॥२५॥
विधित्सन् कलहस्यान्तं जिघांसुः कर्णमाचिणोत । तांस्तु घले-
तरान् सर्वान् भीमसेनो महाबलः ॥ २६ ॥ तस्मै प्रासृजदुग्राणि
विविधानि परन्तपः । अमर्षी पाण्डवः क्रुद्धः शरवर्षाणि मारिष
॥ २७ ॥ तस्य तानीषुवर्षाणि मत्तद्विरदगामिनः । सूतपुत्रो-
ऽस्त्रमायाभिरग्रसत् स महाबलः ॥ २८ ॥ स यथावन्महाराज
विद्यया वै सुपूजितः । आचार्यवन्महेष्वासः कर्णः पर्यचरद्रणे ॥२९॥

पाञ्चालानान्तु मुख्यौ तौ राजपुत्रौ महारथौ । रथावन्यौ समारुह्य बीभत्सुमभिजग्मतुः ॥ ४३ ॥

इति द्रोणपर्व्वणि जयद्रथवधपर्व्वणि दुर्य्योधनयुद्धे
विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

—०—

सञ्जय उवाच । वर्त्तमाने महाराज सङ्ग्रामे लोमहर्षणे । व्याकुलेषु च सर्व्वेषु पीड्यमानेषु सर्व्वशः ॥ १ ॥ राधेयो भीममानर्च्छद्युद्धाय भरतर्षभ । यथा नागो वने नागं मत्तो मत्तमभिद्रवन् ॥ २ ॥

धृतराष्ट्र उवाच । यौ तौ कर्णश्च भीमश्च सम्प्रयुद्धौ महाबलौ । अर्ज्जुनस्य रथोपान्ते कीदृशः सोऽभवद्रणः ॥ ३ ॥ पूर्व्वं हि निर्ज्जितः कर्णो भीमसेनेन संयुगे । कथम्भूयस्तु राधेयो भीममागान्महारथ ॥ ४ ॥ भीमो वा सूततनयं प्रत्युद्यातः कथं रणे । महारथं समाख्यातं पृथिव्यां प्रवरं रथम् ॥ ५ ॥ भीष्मद्रोणावतिक्रम्य धर्म्मपुत्रो युधिष्ठिरः । नान्यतो भयमादत्त विना कर्णं धनुर्द्धरम् ॥ ६ ॥ भयान्न शेते सततं चिन्तयन् वै महारथम् । स कथं सूतपुत्रं हि भीमोऽयुध्यत संयुगे ॥ ७ ॥ ब्रह्मण्यं वीर्य्यसम्पन्नं समरेष्वनिवर्त्तिनम् । कथं कर्णं युधां श्रेष्ठं भीमोऽयुध्यत सञ्जय ॥ ८ ॥ यौ तौ समीयतुर्वीरावर्ज्जुनस्य रथं प्रति । कथन्नु तावयुध्येतां सूतपुत्रवृकोदरौ ॥ ९ ॥ भ्रातृत्वं दर्शितं पूर्व्वं घृणी चापि च सूतजः । कथं भीमेन युयुधे कुन्त्या वाक्यमनुस्मरन् ॥ १० ॥ भीमो वा सूतपुत्रेण स्मरन् वैरं पुराकृतम् । सोऽयुध्यत कथं वीरः कर्णेन सह संयुगे ॥ ११ ॥ आशास्ते च सदा सूत पुत्रो दुर्य्योधनो मम । कर्णो जेष्यति सङ्ग्रामे सहितान् पाण्डवानिति ॥ १२ ॥ जयाशा यत्र मन्दस्य

पुत्रस्य मम संयुगे। स कथं भीमकर्माणं भीमसेनमयुध्यत॥१३॥
यं समाश्रित्य पुत्रेण कृतं वैरं महात्मभिः। तं सूतपुत्रं तात
कथं भीमो ह्ययोधयत्॥१४॥ अनेकान् विप्रकारांश्च सूतपुत्र-
समुद्भवान्। स्मरमाणः कथं भीमो युयुधे सूतसूनुना॥१५॥
योऽजयत् पृथिवीं सर्वां रथेनैकेन वीर्यवान्। तं सूतपुत्रं युद्धे
कथं भीमोऽप्ययोधयत्॥१६॥ यो जातः कुण्डलाभ्यां च कवचेन
सहैव च। तं सूतपुत्रं समरे भीमः कथमयोधयत्॥१७॥ यथा
तयोर्युद्धमभूद् यश्चासीद्विजयस्तयोः। तन्ममाचक्ष्व तत्त्वेन कुशलो
ह्यसि सञ्जय॥१८॥

संरम्भेण तु युध्यन्तं भीमसेनं मर्यान्तिर । अवारयत राधेय-
स्तमवार्यं वृकोदरम् ॥ ३० ॥ तन्नामृष्यत कौन्तेयः कर्णस्य स्मित-
माहवे । युध्यमानेषु वीरेषु पश्यत्सु च समन्ततः ॥ ३१ ॥ सं
भीमसेनः सम्प्राप्य वत्सदन्तैः स्तनान्तरे । विव्याध बलवान्
क्रुद्धस्तोत्त्रैरिव महाद्विपम् ॥ ३२ ॥ पुनस्तु सूतपुत्रन्तु सपुङ्खै-
र्निशितैः शरैः । सुमुक्तैश्चित्रवर्माणं निर्बिभेद त्रिसप्तभिः ॥ ३३ ॥
कर्णो जाम्बूनदैर्जालैः सञ्छन्नान् वातरंहसः । विव्याध तुरगान्
वीरः पञ्चभिः पञ्चभिः शरैः ॥ ३४ ॥ ततो बाणमयं जालं भीम-
सेनरथं प्रति । कर्णेन विहितं राजन् निमेषार्द्धाददृश्यत ॥ ३५ ॥
सरथः सध्वजस्तत्र ससूतः पाण्डवस्तदा । प्राच्छाद्यत महा-
राज कर्णचापच्युतैः शरैः ॥ ३६ ॥ तस्य कर्णश्चतुःषष्ट्या व्यधमत्
कवचं दृढम् । क्रुद्धश्चाप्यहनत् पार्थं नाराचैर्मर्मभेदिभिः ॥ ३७ ॥
ततोऽचिन्त्य महाबाहुः कर्णकार्मुकनिःसृतान् । समाश्लिष्यदस-
म्भ्रान्तः सूतपुत्रं वृकोदरः ॥ ३८ ॥ स कर्णचापप्रभवानिषूनाशी-
विषोपमान् । बिभ्रद्भीमो महाराज न जगाम व्यथां रणे ॥ ३९ ॥
ततो द्वात्रिंशता भल्लैर्निशितैस्तिग्मतेजनैः । विव्याध समरे कर्णं
भीमसेनः प्रतापवान् ॥ ४० ॥ अयत्नेनैव तं कर्णः शरैर्भृशमवा-
किरत् । भीमसेनं महाबाहुं सैन्धवस्य वधैषिणम् ॥ ४१ ॥
मृदुपूर्वं हि राधेयो भीममाजावयोधयत् । क्रोधपूर्वं तथा भीमः
पूर्ववैरमनुस्मरन् ॥ ४२ ॥ तं भीमसेनो नामृष्यदवमानममर्षणः ।
स तस्मै व्यसृजत्तूर्णं शरवर्षममित्रहा ॥ ४३ ॥ ते शराः प्रेषिता-
स्तेन भीमसेनेन संयुगे । निपेतुः सर्वतो वीरे कूजन्त इव पक्षिणः
॥ ४४ ॥ हेमपुङ्खाः प्रसन्नाग्रा भीमसेनधनुश्च्युताः । प्राच्छादयंस्ते
राधेयं शलभा इव पावकम् ॥ ४५ ॥ कर्णस्तु रथिनां श्रेष्ठ-
श्छाद्यमानः समन्ततः । राजन् व्यसृजदुग्राणि शरवर्षाणि भारत
॥ ४६ ॥ तस्य तानशनिप्रख्यानिषून् समरशोभिनः । चिच्छेद

बहुभिर्भल्लैरसंप्राप्तान् वृकोदरः ॥ ४७ ॥ पुनश्च शरवर्षेण छादयामास भारत । कर्णो वैकर्त्तनो युद्धे भीमसेनमरिन्दमः ॥ ४८ ॥ तव भारत भीमन्तु दृष्टवन्तः स्म सायकैः । समाचिततनुं सङ्ख्ये श्वाविधं शललैरिव ॥ ४९ ॥ हेमपुङ्खाञ्छिलाधौतान् कर्णचापच्युताञ्छरान् । दधार समरे वीरः स्वरश्मीनिव रश्मिवान् ॥ ५० ॥ रुधिरोक्षितसर्वाङ्गो भीमसेनो व्यराजत । समस्तकुसुमापीडो वसन्तेऽशोकवृक्षवत् ॥ ५१ ॥ तत्तु भीमो महाबाहोः कर्णस्य चरितं रणे । नामृष्यत महाबाहुः क्रोधादुद्वृत्तलोचनः ॥ ५२ ॥ स कर्णं पञ्चविंशत्या नाराचानां समार्पयत् । महीधरमिव श्वेतं गूढपादैर्विषोल्बणैः ॥ ५३ ॥ पुनरेव च विव्याध षड्भिरष्टाभिरेव च । मर्मस्वमरविक्रान्तः सूतपुत्रं तनुत्यजम् ॥ ५४ ॥ पुनरन्येन बाणेन भीमसेनः प्रतापवान् । चिच्छेद कार्मुकं तूर्णं कर्णस्य प्रहसन्निव ॥ ५५ ॥ जघान चतुरश्चाश्वान् सूतञ्च त्वरितं शरैः । नाराचैरर्करश्म्याभैः कर्णं विव्याध चोरसि ॥ ५६ ॥ ते जग्मुर्धरणीमाशु कर्णं निर्भिद्य पत्रिणः । यथा जलधरं भित्त्वा दिवाकरमरीचयः ॥ ५७ ॥ स वैकल्यं महत् प्राप्य छिन्नधन्वा शरार्दितः । तथा पुरुषमानी स प्रत्यपायाद्रथान्तरम् ॥ ५८ ॥

तात किमकार्षीद्गतः परम्। भीमसेनं रणे दृष्ट्वा ज्वलन्तमिव पावकम् ॥ २ ॥

सञ्जय उवाच। रथमन्यं समास्थाय विधिवत् कल्पितं पुनः। अभ्ययात् पाण्डवं कर्णो वातोद्धूत इवार्णवः ॥ ३ ॥ क्रुद्धमाधिरथं दृष्ट्वा पुत्रास्तव विशाम्पते। भीमसेनममन्यन्त वैश्वानरमुखे हुतम् ॥ ४ ॥ चापशब्दं ततः कृत्वा तलशब्दञ्च भैरवम्। अभ्यवर्त्तत राधेयो भीमसेनरथं प्रति ॥ ५ ॥ पुनरेव ततो राजन् घोर आसीत् समागमः। वैकर्त्तनस्य शूरस्य भीमस्य च महात्मनः ॥ ६ ॥ संरब्धौ हि महाबाहू परस्परवधैषिणौ। अन्योऽन्यमीक्षाञ्चक्राते दहन्ताविव लोचनैः ॥ ७ ॥ क्रोधरक्तेक्षणौ तीव्रौ निश्वसन्ताविवोरगौ। शूरावन्योऽन्यमासाद्य ततक्षतुररिन्दमौ ॥ ८ ॥ व्याघ्राविव सुसंरब्धौ श्येनाविव च शीघ्रगौ। शरभाविव संक्रुद्धौ युयुधाते परस्परम् ॥ ९ ॥ ततो भीमः स्मरन् क्लेशानक्षद्यूते वनेऽपि च। विराटनगरे चैव दुःखं प्राप्तमरिन्दमः ॥ १० ॥ राष्ट्राणां स्फीतरत्नानां हरणञ्च तवात्मजैः। सततञ्च परिक्लेशान् सपुत्रेण त्वया कृतान् ॥ ११ ॥ दग्धुमैच्छश्च यद् कुन्तीं सपुत्रां त्वमनागसम्। कृष्णायाश्च परिक्लेशं सभामध्ये दुरात्मभिः ॥ १२ ॥ केशपक्षग्रहञ्चैव दुःशासनकृतं तथा। परुषाणि च वाक्यानि कर्णेनोक्तानि भारत ॥ १३ ॥ पतिमन्यं परीप्सस्व न सन्ति पतयस्तव। पतिता नरके पार्थाः सर्वे षण्ढतिलोपमाः ॥ १४ ॥ समक्षं तव कौरव्य यदूचुः कुरवस्तदा। दासभावेन कृष्णाञ्च भोक्तुकामाः सुतास्तव ॥ १५ ॥ यच्चापि तान् प्रव्रजतः कृष्णाजिननिवासिनः। परुषाण्युक्तवान् कर्णः सभायां सन्निधौ तव ॥ १६ ॥ तृणीकृत्य यथा पार्थांस्तव पुत्रो ववल्ग ह। विषमस्थान् समस्थो हि संरब्धो गतचेतसः ॥ १७ ॥ बाल्यात् प्रभृति चारिघ्नः स्वानि दुःखानि चिन्तयन्। निरविद्यत

धर्मात्मा जीवितेन वृकोदरः ॥ १८ ॥ ततो विस्फार्य सुमहद्धेम-
पृष्ठं दुरासदम् । चापं भरतशार्दूल त्यक्त्वात्मा कर्णमभ्ययात्
॥ १९ ॥ स सायकमयैर्जालैर्भीमः कर्णरथं प्रति । भानुमद्भिः
शिलाधौतैर्भानोः प्राच्छादयत् प्रभाम् ॥ २० ॥ ततः प्रहस्याधि-
रथिस्तूर्णमस्य शिलाशितैः । व्यधमद्भीमसेनस्य शरजालानि पत्रिभिः
॥ २१ ॥ महारथो महाबाहुर्महाबाणैर्महाबलः । विव्याधाधि-
रथिर्भीमं नवभिर्निशितैस्तदा ॥ २२ ॥ स तोत्त्रैरिव मातङ्गो
वार्यमाणः पतत्रिभिः । अभ्यधावत सम्भ्रान्तः सूतपुत्रं वृकोदरः
॥ २३ ॥ तमापतन्तं वेगेन रभसं पाण्डवर्षभम् । कर्णः प्रत्यु-
द्ययौ क्रुद्धो मत्तो मत्तमिव द्विपम् ॥ २४ ॥ ततः प्रध्माप्य जलजं
भेरीशतसमस्वनम् । अक्षुभ्यत बलं हर्षादुद्धूत इव सागरः ॥ २५ ॥
तदुद्धूतं बलं दृष्ट्वा नागाश्वरथपत्तिमत् । भीमः कर्णं समासाद्य
छादयामास सायकैः ॥ २६ ॥ अश्वानृक्षसवर्णांस्तु हंसवर्णैर्हयो-
त्तमैः । व्यामिश्रयद्रणे कर्णः पाण्डवं छादयन् शरैः ॥ २७ ॥
ऋक्षवर्णान् हयान् कर्कैर्मिश्रान् मारुतरंहसः । निरीक्ष्य तव
पुत्राणां हाहाकृतमभूद्बलम् ॥ २८ ॥ ते हया बह्वशोभन्त मिश्रिता
वातरंहसः । सितासिता महाराज यथा व्योम्नि बलाहकाः
॥ २९ ॥ संरब्धौ क्रोधताम्राक्षौ प्रेक्ष्य कर्णवृकोदरौ । सन्त्रस्ताः
समकम्पन्त त्वदीया वै महारथाः ॥ ३० ॥ यमराष्ट्रोपमं घोर-
मासीदायोधनं तयोः । दुर्दर्शं भरतश्रेष्ठ प्रेतराजपुरं यथा ॥ ३१ ॥
समाजमिव तच्चित्रं प्रेक्षमाणा महारथाः । नालक्षयन् जयं
व्यक्तमेकस्यैव महारणे ॥ ३२ ॥ तयोः प्रैक्षन्त संमर्दं सन्निकृष्टं
महास्त्रयोः । तव दुर्मन्त्रिते राजन् सपुत्रस्य विशाम्पते ॥ ३३ ॥
छादयन्तौ हि शत्रुघ्नावन्योन्यं सायकैः शितैः । शरजालावृतं
व्योम चक्रातेऽद्भुतविक्रमौ ॥ ३४ ॥ तावन्योन्यं जिघांसन्तौ
शरैस्तीक्ष्णैर्महारथौ । प्रेक्षणीयतरावास्तां वृष्टिमन्ताविवाम्बुदौ

तात किमकार्षीदतः परम्। भीमसेनं रणे दृष्ट्वा ज्वलन्तमिव पावकम् ॥ २ ॥

सञ्जय उवाच। रथमन्यं समास्थाय विधिवत् कल्पितं पुनः। अभ्ययात् पाण्डवं कर्णो वातोद्धूत इवार्णवः ॥ ३ ॥ क्रुद्धमाधिरथिं दृष्ट्वा पुत्रास्तव विशाम्पते। भीमसेनममन्यन्त वैश्वानरमुखे हुतम् ॥ ४ ॥ चापशब्दं ततः कृत्वा तलशब्दञ्च भैरवम्। अभ्यवर्त्तत राधेयो भीमसेनरथं प्रति ॥ ५ ॥ पुनरेव ततो राजन् घोर आसीत् समागमः। वैकर्त्तनस्य शूरस्य भीमस्य च महात्मनः ॥ ६ ॥ संरब्धौ हि महाबाहू परस्परवधैषिणौ। अन्योऽन्यमीक्षाञ्चक्राते दहन्ताविव लोचनैः ॥ ७ ॥ क्रोधरक्तेक्षणौ तीव्रौ निःश्वसन्ताविवोरगौ। शूरावन्योऽन्यमासाद्य ततक्षतुररिन्दमौ ॥ ८ ॥ व्याघ्राविव सुसंरब्धौ श्येनाविव च शीघ्रगौ। शरभाविव संक्रुद्धौ युयुधाते परस्परम् ॥ ९ ॥ ततो भीमः स्मरन् क्लेशानक्षद्यूते वनेऽपि च। विराटनगरे चैव दुःखं प्राप्तमरिन्दमः ॥ १० ॥ राष्ट्राणां स्फीतरत्नानां हरणञ्च तवात्मजैः। सततञ्च परिक्लेशान् सपुत्रेण त्वया कृतान् ॥ ११ ॥ दग्धुमैच्छश्च यत् कुन्तीं सपुत्रां त्वमनागसम्। कृष्णायाश्च परिक्लेशं सभामध्ये दुरात्मभिः ॥ १२ ॥ केशपक्षग्रहञ्चैव दुःशासनकृतं तथा। परुषाणि च वाक्यानि कर्णेनोक्तानि भारत ॥ १३ ॥ पतिमन्यं परीप्सस्व न सन्ति पतयस्तव। पतिता नरके पार्थाः सर्वे षण्ढतिलोपमाः ॥ १४ ॥ समक्षं तव कौरव्य यदूचुः कुरवस्तदा। दासीभावेन कृष्णाञ्च भोक्तुकामाः सुतास्तव ॥ १५ ॥ यच्चापि तान् प्रव्रजतः कृष्णाजिननिवासिनः। परुषाण्युक्तवान् कर्णः सभायां सन्निधौ तव ॥ १६ ॥ तृणीकृत्य यथा पार्थांस्तव पुत्रो ववल्ग ह। विषमस्थान् समस्थो हि संरब्धो गतचेतनः ॥ १७ ॥ बाल्यात् प्रभृति चारिघ्नः स्वानि दुःखानि चिन्तयन्

धर्मात्मा जीवितेन वृकोदरः ॥ १८ ॥ ततो विस्फार्य्य सुमहद्धेम-
पृष्ठं दुरासदम् । चापं भरतशार्दूल त्यक्तात्मा कर्णमभ्ययात्
॥ १९ ॥ स सायकमयैर्जालैर्भीमः कर्णरथं प्रति । भानुमद्भिः
शिलाधौतैर्भानोः प्राच्छादयत् प्रभाम् ॥ २० ॥ ततः प्रहस्याधि-
रथिस्तूर्णमस्य शिलाशितैः । व्यधमद्भीमसेनस्य शरजालानि पत्रिभिः
॥ २१ ॥ महारथो महाबाहुर्महाबाणैर्महाबलः । विव्याधाधि-
रथिर्भीमं नवभिर्निशितैस्तदा ॥ २२ ॥ स तोत्रैरिव मातङ्गो
वार्य्यमाणः पतत्रिभिः । अभ्यधावत सम्भ्रान्तः सूतपुत्रं वृकोदरः
॥ २३ ॥ तमापतन्तं वेगेन रभसं पाण्डवर्षभम् । कर्णः प्रत्यु-
द्ययौ क्रुद्धो मत्तो मत्तमिव द्विपम् ॥ २४ ॥ ततः प्रध्माप्य जलजं
भेरीशतसमस्वनम् । अक्षुभ्यत बलं हर्षादुद्धूत इव सागरः ॥ २५ ॥
तदुद्धूतं बलं दृष्ट्वा नागाश्वरथपत्तिमत् । भीमः कर्णं समासाद्य
छादयामास सायकैः ॥ २६ ॥ अश्वानृक्षसवर्णांश्च हंसवर्णैर्हयो-
त्तमैः । व्यामिश्रयद्रणे कर्णः पाण्डवं छादयन् शरैः ॥ २७ ॥
ऋक्षवर्णान् हयान् दृष्ट्वा मिश्रान् मारुतरंहसः । निरीक्ष्य तव
पुत्राणां हाहाकृतमभूद्बलम् ॥ २८ ॥ ते हया बह्वशोभन्त मिश्रिता
वातरंहसः । सितासिता महाराज यथा व्योम्नि बलाहकाः
॥ २९ ॥ संरब्धौ क्रोधताम्राक्षौ प्रेक्ष्य कर्णवृकोदरौ । सन्त्रस्ताः
समकम्पन्त त्वदीया वै महारथाः ॥ ३० ॥ यमराष्ट्रोपमं घोर-
मासीदायोधनं तयोः । दुर्दर्शं भरतश्रेष्ठ प्रेतराजपुरं यथा ॥ ३१ ॥
समाजमिव तच्चित्रं प्रेक्षमाणा महारथाः । नालक्षयन् जयं
व्यक्तमेकस्यैव महारणे ॥ ३२ ॥ तयोः प्रैक्षन्त संमर्दं सन्निकृष्टौ
महास्त्रयोः । तव दुर्मन्त्रिते राजन् सपुत्रस्य विशाम्पते ॥ ३३ ॥
छादयन्तौ हि शत्रुघ्नावन्योन्यं सायकैः शितैः । शरजालावृतं
व्योम चक्राते ऽद्भुतविक्रमौ ॥ ३४ ॥ तावन्योन्यं जिघांसन्तौ
शरैस्तीक्ष्णैर्महारथौ । प्रेक्षणीयतरावास्तां वृष्टिमन्ताविवाम्बुदौ

सवासवैः । न च तद्बुध्यते मन्दः पुत्रो दुर्योधनो मम ॥ ९ ॥ धनंजयेनेश्वरस्येव हत्वा पार्थस्य मे सुतः । अधर्मेणासुरिवाबुद्धिः प्रपातं नावबुध्यते ॥ १० ॥ निकृत्या निकृतिप्रज्ञो राज्यं हृत्वा महात्मनाम् । जितानित्येव मत्वा तैः पाण्डवानवमन्यते ॥ ११ ॥ पुत्रस्नेहाभिभूतेन मया चाप्यकृतात्मना । धर्मे स्थिता महात्मानो निकृताः पाण्डुनन्दनाः ॥ १२ ॥ शमकामः सदा पार्थो दीर्घप्रेक्षी युधिष्ठिरः । अशक्त इति मत्वा तैः पुत्रैर्मम निराकृतः ॥ १३ ॥ तानि दुःखान्यनेकानि विप्रकारांश्च सर्वशः । हृदि कृत्वा महाबाहुर्भीमोऽयुध्यत सूतजम् ॥ १४ ॥ तस्मान्मे संजय ब्रूहि कर्णभीमौ यथा रणे । अयुध्येतां युधि श्रेष्ठौ परस्परवधैषिणौ ॥ १५ ॥ संजय उवाच । शृणु राजन् यथावृत्तं संग्रामं कर्णभीमयोः । परस्परं वधप्रेप्सोर्वने कुञ्जरयोरिव ॥ १६ ॥ राजन् वैकर्तनो भीमं क्रुद्धः क्रुद्धमरिंदमम् । पराक्रान्तं पराक्रम्य विव्याध त्रिंशता शरैः ॥ १७ ॥ महावेगैः प्रसन्नाग्रैः शातकुम्भपरिष्कृतैः । अहनद्भरतश्रेष्ठ भीमं वैकर्तनः शरैः ॥ १८ ॥ तस्यास्यतो धनुर्भीमश्चकर्त निशितैस्त्रिभिः । रथनीडाच्च यन्तारं भल्लेनापातयत् क्षितौ ॥ १९ ॥ स काङ्क्षन् भीमसेनस्य वधं वैकर्तनो वृषः । शक्तिं कनकवैडूर्यचित्रदण्डां परामृशत् ॥ २० ॥ प्रगृह्य च महाशक्तिं कालशक्तिमिवापराम् । समुत्क्षिप्य च राधेयः संधाय च महाबलः ॥ २१ ॥ चिक्षेप भीमसेनाय जीवितान्तकरीमिव । शक्तिं विसृज्य राधेयः पुरंदर इवाशनिम् ॥ २२ ॥ ननाद सुमहानादं बलवान् सूतनन्दनः । तं च नादं ततः श्रुत्वा पुत्रास्ते हर्षिताभवन् ॥ २३ ॥ तां कर्णभुजनिर्मुक्तामर्कवैश्वानरप्रभाम् । शक्तिं वियति चिच्छेद भीमः सप्तभिराशुगैः ॥ २४ ॥ छित्त्वा शक्तिं ततो भीमो निर्मुक्तोरगसंनिभाम् । मार्गमाण इव प्राणान् सूतपुत्रस्य मारिष ॥ २५ ॥ प्राहिणोत् क्रुद्धसंरब्धः शरान्

॥ ३५ ॥ सुवर्णविकृतान् बाणान् प्रमुञ्चन्तावरिन्दमौ । भासयं
व्योम चक्राते महोल्काभिरिव प्रभो ॥ ३६ ॥ ताभ्यां मुक्ताः शरा
राजन् गार्द्धपत्राः शकाशिरे । श्रेण्यः शरदि मत्तानां सारसाना-
मिवाम्बरे ॥ ३७ ॥ संसक्तं सूतपुत्रेण दृष्ट्वा भीममरिन्दमम् ।
अतिभारममन्येतां भीमे कृष्णधनञ्जयौ ॥ ३८ ॥ ततोऽधिरथि-
भीमाभ्यां शरैर्मुक्तैर्दृढं हताः । इषुपातमतिक्रम्य पेतुरश्वनर-
द्विपाः ॥ ३९ ॥ पतद्भिः पतितैश्चान्यैर्गतासुभिरनेकशः । कृतो
राजन्महाराज पुत्राणां ते जनक्षयः ॥ ४० ॥ मनुष्याश्वगजानाञ्च
शरीरैर्गतजीवितैः । क्षणेन भूमिः सञ्छन्ना संवृता भरतर्षभ ॥४१॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि भीमकर्णयुद्धे
द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥

धृतराष्ट्र उवाच । अत्यद्भुतमहं मन्ये भीमसेनस्य विक्रमम् ।
यत् कर्णं योधयामास समरे लघुविक्रमम् ॥ १ ॥ त्रिदशानपि
चोद्युक्तान् सर्वशस्त्रधरान् युधि । वारयेद्यो रणे कर्णः सयक्ष-
सुरमानवान् ॥ २ ॥ स कथं पाण्डवं युद्धे भ्राजमानमिव श्रिया ।
नातरत् संयुगे पार्थं तन्ममाचक्ष्व सञ्जय ॥ ३ ॥ कथञ्च युद्धं
सम्भूतं तयोः प्राणदुरोदरे । अत्र मन्ये समायत्तो जयो वाजय
एव च ॥ ४ ॥ कर्णं प्राप्य रणे सूत मम पुत्रः सुयोधनः । जेतु-
मुत्सहते पार्थान् सगोविन्दान् ससात्वतान् ॥ ५ ॥ श्रुत्वा तु
निर्जितं कर्णमसकृद्भीमकर्मणा । भीमसेनेन समरे मोह आवि-
शतीव माम् ॥ ६ ॥ विनष्टान् कौरवान्मन्ये मम पुत्रस्य दुर्नयैः ।
न हि कर्णो महेष्वासान् पार्थान् जेष्यति सञ्जय ॥ ७ ॥ कृतवान्
यानि युद्धानि कर्णः पाण्डुसुतैः सह । सर्वत्र पाण्डवाः कर्ण-
मजयन्त रणाजिरे ॥ ८ ॥ अजेयाः पाण्डवास्तात सेन्द्रैरपि

पिवाचैव । न च तद्बुध्यते मन्दः पुत्रो दुर्योधनो मम ॥ ९ ॥ धनं
धनेश्वरस्येव हृत्वा पार्थस्य मे सुतः । मधुप्रेप्सुरिवाबुद्धिः प्रपातं
नावबुध्यते ॥ १० ॥ निकृत्या निकृतिप्रज्ञो राज्यं हृत्वा महा-
त्मनाम् । जितमित्येव मन्वानः पाण्डवानवमन्यते ॥ ११ ॥ पुत्र-
स्नेहाभिभूतेन मया चाप्यकृतात्मना । धर्मे स्थिता महात्मानो
निकृताः पाण्डुनन्दनाः ॥ १२ ॥ शमकामः सदा पार्थो दीर्घ-
प्रेक्षी युधिष्ठिरः । अशक्त इति मन्वानैः पुत्रैर्मम निराकृतः ॥ १३ ॥
तानि दुःखान्यनेकानि विप्रकारांश्च सर्वशः । हृदि कृत्वा महा-
बाहुर्भीमोऽयुध्यत सूतजम् ॥ १४ ॥ तस्मान्मे सञ्जय ब्रूहि कर्ण-
भीमौ यथा रणे । अयुध्येतां युधि श्रेष्ठौ परस्परवधैषिणौ ॥ १५ ॥
सञ्जय उवाच । शृणु राजन् यथावृत्तं सङ्ग्रामं कर्ण-
भीमयोः । परस्परं वधप्रेप्स्वोर्वने कुञ्जरयोरिव ॥ १६ ॥ राजन्
वैकर्त्तनो भीमं क्रुद्धः क्रुद्धमरिन्दमम् । पराक्रान्तं पराक्रम्य विव्याध
त्रिंशता शरैः ॥ १७ ॥ महावेगैः प्रसन्नाग्रैः शातकुम्भपरिष्कृतैः ।
अहनद्भरतश्रेष्ठ भीमं वैकर्त्तनः शरैः ॥ १८ ॥ तस्यास्यतो धनु-
र्भीमश्चकर्त्त निशितैस्त्रिभिः । रथनीडाच्च यन्तारं भल्लेनापातयत्
क्षितौ ॥ १९ ॥ स काङ्क्षन् भीमसेनस्य वधं वैकर्त्तनो भृशम् ।
शक्तिं कनकवैदूर्यचित्रदण्डां परामृशत् ॥ २० ॥ प्रगृह्य च महा-
शक्तिं कालशक्तिमिवापराम् । समुत्क्षिप्य च राधेयः सन्धाय च
महाबलः ॥ २१ ॥ चिक्षेप भीमसेनाय जीवितान्तकरीमिव ।
शक्तिं विसृज्य राधेयः पुरन्दर इवाशनिम् ॥ २२ ॥ ननाद
सुमहानादं बलवान् सूतनन्दनः । तञ्च नादं ततः श्रुत्वा पुत्रास्ते
हर्षिताभवन् ॥ २३ ॥ तां कर्णभुजनिर्मुक्तामर्कवैश्वानरप्रभाम् ।
शक्तिं वियति चिच्छेद भीमः सप्तभिराशुगैः ॥ २४ ॥ छित्त्वा
शक्तिं ततो भीमो निर्मुक्तोरगसन्निभाम् । मार्गमाण इव प्राणान्
सूतपुत्रस्य मारिष ॥ २५ ॥ प्राहिणोत् क्रुद्धसंरब्धः शरान्

बर्हिणवाससः । स्वर्णपुङ्खान् शिलाधौतान् यमदण्डोपमान् मृधे
॥ २६ ॥ कर्णोऽप्यन्यद्धनुर्गृह्य हेमपृष्ठं दुरासदम् । विकृष्य च
महातेजा व्यसृजत् सायकांस्तदा ॥ २७ ॥ तान् पाण्डुपुत्रश्चिच्छेद
नवभिर्नतपर्वभिः । वसुषेणेन निर्मुक्तान्नरराज महाशरान् ॥२८॥
छित्त्वा भीमो महाराज नादं सिंह इवानदत् । तौ वृषाविव
नर्दन्तौ बलिनौ वाशितान्तरे ॥ २९ ॥ शार्दूलाविव चान्योऽन्य-
मभिपार्श्वेऽप्यगर्जताम् । अन्योऽन्यं प्रजिहीर्षन्तावन्योऽन्यस्या-
न्तरैषिणौ ॥ ३० ॥ अन्योऽन्यमभिवीक्षन्तौ गोष्ठेष्विव महर्षभौ ।
महागजाविवासाद्य विषाणाग्रैः परस्परम् ॥ ३१ ॥ शरैः पूर्णा-
यतोत्सृष्टैरन्योऽन्यमभिजघ्नतुः । निर्दहन्तौ महाराज शरवृष्ट्या
परस्परम् । अन्योऽन्यमभिवीक्षन्तौ कोपाद्विवृतलोचनौ ॥ ३२ ॥
प्रहसन्तौ तथान्योऽन्यं भर्त्सयन्तौ मुहुर्मुहुः । शङ्खशब्दं च कुर्वाणौ
युयुधाते परस्परम् ॥ ३३ ॥ तस्य भीमः पुनश्चापं मुष्टौ चिच्छेद
मारिष । शङ्खवर्णांश्च तानश्वान् बाणैर्निन्ये यमक्षयम् ॥ ३४ ॥
सारथिं च तथाप्यस्य रथनीडादपातयत् । ततो वैकर्तनः कर्णः
चिन्तां प्राप दुरत्ययाम् ॥ ३५ ॥ छाद्यमानः समरे हताश्वो
हतसारथिः । मोहितः शरजालेन कर्तव्यं नाभ्यपद्यत ॥ ३६ ॥
तथा कृच्छ्रगतं दृष्ट्वा कर्णं दुर्योधनो नृपः । वेपमान इव क्रोधा-
द्व्यादिदेशाथ दुर्जयम् ॥ ३७ ॥ गच्छ दुर्जय राधेयं पुरो ग्रसति
पाण्डवः । जहि तूवरकं क्षिप्रं कर्णस्य बलमादधत् ॥ ३८ ॥
एवमुक्तस्तथेत्युक्त्वा तव पुत्रस्तवात्मजम् । अभ्यद्रवद्भीमसेनं व्यासक्तं
विकिरञ्छरैः ॥ ३९ ॥ स भीमं नवभिर्बाणैरश्वानष्टभिरार्दयत् ।
षड्भिः सूतं त्रिभिः केतुं पुनस्तं चापि सप्तभिः ॥ ४० ॥ भीम-
सेनोऽपि संक्रुद्धः साश्वयन्तारमाशुगैः । दुर्जयं भिन्नमर्माण-
मनयद्यमसादनम् ॥ ४१ ॥ स्वलङ्कृतं क्षितौ क्षिप्तं चेष्टमानं यथो-
रगम् । रुदन्नार्तस्तव सुतं कर्णश्चक्रे प्रदक्षिणम् ॥ ४२ ॥ स तु

मभ्यहनच्छरैः । हताश्वसूतमुत्सृज्य स रथं पतितध्वजम् ॥१३॥
विस्फारयन् धनुः कर्णस्तस्थौ भारत दुर्मनाः । तत्राद्भुतपश्याम
राधेयस्य पराक्रमम् ॥ १४ ॥ विरथो रथिनां श्रेष्ठो वारयामास
यद्रिपुम् । विरथं तं नरश्रेष्ठ दृष्ट्वाधिरथिमाहवे ॥ १५ ॥ दुर्यो-
धनस्ततो राजन्नभ्यभाषत दुर्मुखम् । एष दुर्मुख राधेयो भीमेन
विरथीकृतः ॥ १६ ॥ तं रथेन नरश्रेष्ठं सम्पादय महारथम् ।
दुर्योधनवचः श्रुत्वा ततो भारत दुर्मुखः ॥ १७ ॥ त्वरमाणोऽभ्य-
यात् कर्णं भीमञ्चावारयच्छरैः । दुर्मुखं प्रेक्ष्य सङ्ग्रामे सूतपुत्र-
पदानुगम् ॥ १८ ॥ वायुपुत्रः प्रहृष्टोऽभूत् सृक्कणी परिलेलिहन् ।
ततः कर्णं महाराज वारयित्वा शिलीमुखैः ॥ १९ ॥ दुर्मुखाय
रथं शीघ्रं प्रेषयामास पाण्डव । तस्मिन् क्षणे महाराज नवभि-
र्नतपर्वभिः ॥ २० ॥ सुमुखैर्दुर्मुखं भीमः शरैर्निन्ये यमक्षयम् ।
ततस्तमेवाधिरथिः स्यन्दनं दुर्मुखे हते ॥ २१ ॥ आस्थितः
प्रबभौ राजन् दीप्यमान इवांशुमान् । शयानं भिन्नमर्माणं
दुर्मुखं शोणितोक्षितम् ॥ २२ ॥ दृष्ट्वा कर्णोऽश्रुपूर्णाक्षो मुहूर्तं
नाभ्यवर्तत । तं गतासुमतिक्रम्य कृत्वा कर्णः प्रदक्षिणम् ॥ २३ ॥
दीर्घमुष्णं श्वसन् वीरो न किञ्चित् प्रत्यपद्यत । तस्मिंस्तु विवरे
राजन्नाराचान् गार्द्धवाससः ॥ २४ ॥ प्राहिणोत् सूतपुत्राय
भीमसेनश्चतुर्दश । ते तस्य कवचं भित्त्वा स्वर्णपुङ्खा महौजसः ॥२५॥
हेमचित्रा महाराज द्योतयन्तो दिशो दश । अपिबन् सूतपुत्रस्य
शोणितं रक्तभोजनाः ॥ २६ ॥ क्रुद्धा इव मनुष्येन्द्र भुजङ्गाः काल-
चोदिताः । प्रसर्पमाणा मेदिन्यां ते व्यरोचन्त मार्गणाः ॥ २७ ॥
अर्द्धप्रविष्टाः संरब्धा बिलानीव महोरगाः । तं प्रत्यविध्यद्राधेयो
जाम्बूनदविभूषितैः ॥ २८ ॥ चतुर्दशभिरत्युग्रैर्नाराचैरविचारयन् ।
ते भीमसेनस्य भुजं सव्यं निर्भिद्य पत्रिणः ॥ २९ ॥ प्राविशन्
मेदिनीं भीमाः क्रौञ्चपत्ररथा इव । ते व्यरोचन्त नाराचाः

प्रविशन्तो वसुन्धराम् ॥ २० ॥ गच्छत्यस्तं दिनकरे दीप्यमाना इवाशवः । स निर्भिन्नो रणे भीमो नाराचैर्मर्म्मभेदिभिः ॥ २१ ॥ सुस्राव रुधिरं भूरि पर्वतः सलिलं यथा । स भीमस्त्रिभिरायस्तः सूतपुत्रं पतत्रिभिः ॥ २२ ॥ सुपर्णवेगैर्विव्याध सारथिञ्चास्य सप्तभिः । स विह्वलो महाराज कर्णो भीमबलाहतः ॥ २३ ॥ प्राद्रवज्जवनैरश्वै रणं त्यक्त्वा महायशाः । भीमसेनस्तु विस्फार्य चापं हेमपरिष्कृतम् । आहवेऽतिरथोऽतिष्ठज्ज्वलन्निव हुताशनः ॥ २४ ॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि कर्णापयाने
चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥

---

धृतराष्ट्र उवाच । दैवमेव परं मन्ये धिक् पौरुषमनर्थकम् । यत्राधिरथिरायत्तो नातरत् पाण्डवं रणे ॥ १ ॥ कर्णः पार्थान् सगोविन्दान् जेतुमुत्सहते रणे । न च कर्णसमं योधं लोके पश्यामि कञ्चन ॥ २ ॥ इति दुर्योधनस्याहमश्रौषं जल्पतो मुहुः । कर्णो हि बलवान् शूरो दृढधन्वा जितक्लमः ॥ ३ ॥ इति मामब्रवीत् सूत मन्दो दुर्योधनः पुरा । वसुषेणसहायं मां नालं देवापि संयुगे ॥ ४ ॥ किमु पाण्डुसुता राजन् गतसत्त्वा विचेतसः । तत्र तं निर्जितं दृष्ट्वा भुजङ्गमिव निर्विषम् ॥ ५ ॥ युद्धात् कर्णमपक्रान्तं किंस्वित् दुर्योधनोऽब्रवीत् । अहो दुर्मुखमेवैकं युद्धानामविशारदम् ॥ ६ ॥ प्रावेशयद्धुतवहं पतङ्गमिव मोहितः । अश्वत्थामा मद्रराजः कृपः कर्णश्च सङ्गताः ॥ ७ ॥ न शक्ताः प्रमुखे स्थातुं नूनं भीमस्य सञ्जय । तेऽपि चास्य महाघोरं बलं नागायुतोपमम् ॥ ८ ॥ जानन्तो व्यवसायञ्च क्रूरं मारुततेजसः । किमर्थं क्रूरकर्म्माणं यमकालान्तकोपमम् ॥ ९ ॥ बलसंरम्भवीर्य्यज्ञाः कोपयिष्यन्ति संयुगे । कर्णस्त्वेको महाबाहुः स्वबाहुबलमाश्रितः

॥ १० ॥ भीमसेनमनाहृत्य रथेऽयुध्यत सूतज । योऽजयत्
समरे कर्णं पुरन्दरं इवासुरम् ॥ ११ ॥ न च पाण्डुसुतौ जेतुं
शक्य केनचिदाहवे । द्रोणं च सम्प्रमथ्यैक प्रविष्टो मम
वाहिनीम् ॥ १२ ॥ भीमो धनञ्जयान्वेषी कस्तमर्च्छेज्जिजीविषु ।
को हि सञ्जय भीमस्य स्थातुमुत्सहतेऽग्रत ॥ १३ ॥ उद्यता-
शनिवज्रस्य महेन्द्रस्येव दानव । प्रेतराजपुरम्प्राप्य निवर्त्तेतापि
मानव । ॥ १४ ॥ न भीमसेन सम्प्राप्य निवर्त्तेत कदाचन ।
पतङ्गा इव वह्निं ते प्राविशन्नल्पतेजस ॥ १५ ॥ ये भीमसेन
सङ्क्रुद्धमन्वधावन् विमोहिता । यत्तत् सभायां भीमेन मम पुत्र
वधाश्रयम् ॥ १६ ॥ उक्त सर्म्मिणोऽग्रेष कुरूणां शृण्वतां तदा ।
तन्नूनमभिसञ्चिन्त्य दृष्ट्वा कर्णं विनिर्जितम् ॥ १७ ॥ दुःशासन
सह भ्राता भयाद्भीमादुपारमत् । यश्च सञ्जय दुर्बुद्धिरब्रवीत्
समितौ मुहु ॥ १८ ॥ कर्णो दुःशासनोऽहञ्च जेष्यामो युधि
पाण्डवान् । स नून विरथं दृष्ट्वा कर्णं भीमेन निर्जितम् ॥ १९ ॥
प्रत्याख्यानाच्च कृष्णस्य भृशं तप्यति सञ्जय । दृष्ट्वा भ्रातॄन् हतान्
सङ्ख्ये भीमसेनेन दंशितान् ॥ २० ॥ आत्मापराधे सुमहन्नून
तप्यति पुत्रक । को हि जीवितमन्विच्छन् प्रतीपं पाण्डवं व्रजेत्
॥ २१ ॥ भीमं भीमायुधं क्रुद्धं साक्षात् कालमिव स्थितम् ।
वडवामुखमध्यस्थो मुच्येतापि हि मानव ॥ २२ ॥ न भीम-
मुखसम्प्राप्तो मुच्येतेति मतिर्मम । न पार्थो न च पाञ्चाला न
च केशवसात्यकी ॥ २३ ॥ जानन्ति युधि संरब्धा जीवितं परि-
रक्षितुम् । अहो मम सुतानां हि विपन्नं सूत जीवितम् ॥ २४ ॥

सञ्जय उवाच । यत्त्वं शोचसि कौरव्य वर्त्तमाने जनक्षये ।
त्वमस्य जगतो मूलं विनाशस्य न संशय ॥ २५ ॥ स्वयं वैरं
महत् कृत्वा पुत्राणां वचने स्थित । उच्यमानो न गृह्णीषे मर्त्य
पथ्यमिवौषधम् । ॥ २६ ॥ स्वयं पीत्वा महाराज कालकूट

सुदुर्ज्जरम् । तस्येदानीं फल कृत्स्नमवाप्नुहि नरोत्तम ॥ २७ ॥
यत्तु कुत्सयसे योधान् युध्यमानान् यथाबलम् । तत्र ते वर्त्तयि-
ष्यामि यथा युद्धमवर्त्तत ॥ २८ ॥ दृष्ट्वा कर्णन्तु पुत्रास्ते भीमसेन-
पराजितम् । नामृष्यन्त महेष्वासा सोदर्य्या पञ्च मारिष ॥ २९ ॥
दुर्मर्षणो दु सहश्च दुर्मदो दुर्धरो जय । पाण्डव चित्रसन्नाहा-
स्तम्,तीपमुपाद्रवन् ॥ ३० ॥ ते समन्तान्महाबाहुं परिवार्य्य
वृकोदरम् । दिश शरै समावृण्वञ्छलभानामिव व्रजै ॥ ३१ ॥
आगच्छतस्तान् सहसा कुमारान् देवरूपिण । प्रतिजग्राह
समरे भीमसेनो हसन्निव ॥ ३२ ॥ तव दृष्ट्वा तु तनयान् भीम-
सेनपुरोगमान् । अभ्यवर्त्तत राधेयो भीमसेन ,महाबलम् ॥ ३३ ॥
विसृजन् विशिखास्तीक्ष्णान् स्वर्णपुङ्खाञ्छिलाशितान् । तन्तु
भीमोऽभ्ययात्तूर्णं वार्य्यमाण सुतैस्तव ॥ ३४ ॥ कुरवस्तु तत
कर्णं परिवार्य्य समन्तत ।' अवाकिरन् भीमसेन शरै सन्नत-
पर्वभि ॥ ३५ ॥ तान् वाणै पञ्चविंशत्या साश्वान्राजन्नरर्षभान् ।
ससूतान् भीमधनुषो भीमो निन्ये यमक्षयम् ॥ ३६ ॥ प्रापतन्
स्यन्दनेभ्यस्ते सार्द्ध सूतैर्गतासव । चित्रपुष्पधरा भग्ना वातेनेव
महाद्रुमा ॥ ३७ ॥ तदद्भुतमपश्याम भीमसेनस्य विक्रमम् ।
संवार्य्याधिरथिं वाणैर्यज्जघान तवात्मजान् ॥ ३८ ॥ स वार्य्य-
माणो भीमेन शितैर्वाणै समन्तत । सूतपुत्रो महाराज भीम-
सेनमवैक्षत ॥ ३९ ॥ त भीमसेन सरम्भात् क्रोधसंरक्तलोचन ।
विस्फार्य्य तु महच्चाप मुहु ,कर्णमवैक्षत ॥ ४० ॥ -

इति द्रोणपर्वणि जयद्रथवधपर्वणि भीमपराक्रमे
पञ्चत्रिंशदधिकशततोऽध्याय ॥ १३५ ॥

—०—

सञ्जय उवाच। तवात्मजांस्तु पतितान् दृष्ट्वा कर्णः प्रताप-
वान्। क्रोधेन महताविष्टो निर्विण्णोऽभूत् स जीवितात्॥ १॥
आगस्कृतमिवात्मानं मेने चाधिरथिस्तदा। यत् प्रत्यक्षं तव सुता
भीमसेन निहता रणे॥ २॥ भीमसेनस्ततः क्रुद्धः कर्णस्य निशि-
तान् शरान्। निचखान च संरब्धः पूर्ववैरमनुस्मरन्॥ ३॥ ततो
भीमं पञ्चभिर्विद्ध्वा राधेयः प्रहसन्निव। पुनर्विव्याध सप्तत्या स्वर्ण-
पुङ्खैः शिलाशितैः॥ ४॥ अविचिन्त्याथ तान् बाणान् कर्णेना-
स्तान् वृकोदरः। रणे विव्याध राधेयं शतेनानतपर्वणाम्॥ ५॥
पुनश्च विशिखैस्तीक्ष्णैर्विद्ध्वा मर्मसु पञ्चभिः। धनुश्चिच्छेद भल्लेन
सूतपुत्रस्य मारिष॥ ६॥ अथान्यद्धनुरादाय कर्णो भारत

मालोक्य पदाति सूतनन्दनम्। कौन्तेयशरसञ्छन्नं राजा दुर्यो-
धनोऽब्रवीत् ॥ १८ ॥ त्वरध्वं सर्वतो यत्ता राधेयस्य रथं प्रति।
ततस्तव सुता राजन् श्रुत्वा भ्रातुर्वचोऽद्भुतम् ॥ १९ ॥ अभ्ययुः
पाण्डवं युद्धे विसृजन्तः शिलीमुखान्। चित्रोपचित्रश्चित्राक्षश्चारु-
चित्रः शरासनः ॥ २० ॥ चित्रायुधश्चित्रवर्मा समरे चित्रयोधिनः।
तानापतत एवाशु भीमसेनो महारथः ॥ २१ ॥ एकैकेन शरे-
णाजौ पातयामास ते सुतान्। ते हता न्यपतन् भूमौ वातरुग्णा
इव द्रुमाः ॥ २२ ॥ दृष्ट्वा विनिहतान् पुत्रांस्तव राजन् महा-
रथान्। अश्रुपूर्णमुखः कर्णः क्षत्तुः सस्मार तद्वचः ॥ २३ ॥
रथमन्यं समास्थाय विधिवत् कल्पितं पुनः। अभ्ययात् पाण्डवं
युद्धे त्वरमाणः पराक्रमी ॥ २४ ॥ तावन्योऽन्यं शरैर्विद्ध्वा स्वर्ण-
पुङ्खैः शिलाशितैः। व्यभ्राजेतां यथा मेघौ संस्यूतौ सूर्यरश्मिभिः
॥ २५ ॥ षट्त्रिंशद्भिस्ततो भल्लैर्निशितैस्तिग्मतेजनैः। व्यधमत्
कवचं क्रुद्धः सूतपुत्रस्य पाण्डवः ॥ २६ ॥ सूतपुत्रोऽपि कौन्तेयं
शरैः सन्नतपर्वभिः। पञ्चाशता महाबाहुर्विव्याध भरतर्षभ ॥ २७ ॥
रक्तचन्दनदिग्धाङ्गौ शरैः कृतमहाव्रणौ। शोणिताक्तौ व्यरा-
जेतां चन्द्रसूर्याविवोदितौ ॥ २८ ॥ तौ शोणितोक्षितैर्गात्रैः शरै-
श्छिन्नतनुच्छदौ। कर्णभीमौ व्यराजेतां निर्मुक्ताविव पन्नगौ
॥ २९ ॥ व्याघ्राविव नरव्याघ्रौ दंष्ट्राभिरितरेतरम्। शरधारा-
सृजौ वीरौ मेघाविव ववर्षतुः ॥ ३० ॥ वारणाविव चान्योऽन्यं
विषाणाभ्यामरिन्दमौ। निर्भिन्दन्तौ स्वगात्राणि सायकैश्चारु
रेजतुः ॥ ३१ ॥ नादयन्तौ प्रवर्षन्तौ विक्रीडन्तौ परस्परम्।
मण्डलानि विकुर्वाणौ रथाभ्यां रथसत्तमौ ॥ ३२ ॥ वृषाविव च
नर्दन्तौ बलिनौ वाशितान्तरे। सिंहाविव पराक्रान्तौ नरसिंहौ
महाबलौ ॥ ३३ ॥ परस्परं वीक्षमाणौ क्रोधसंरक्तलोचनौ।
युयुधाते महावीर्यौ शक्रवैरोचनौ यथा ॥ ३४ ॥ ततो भीमो

महाबाहुर्भुजाभ्यां व्याक्षिपन् धनुः । व्यरोचत रणे भीमः सविद्युदिव तोयदः ॥ ३५ ॥ स चापघोषस्तनितः शरधाराम्बुदो महान् । भीमसेनो महाराज कर्णपर्वतमावृणोत् ॥ ३६ ॥ ततः शरसहस्रेण धनुर्मुक्तेन भारत । पाण्डवो व्यकिरत् कर्णं भीमो भीमपराक्रमः ॥ ३७ ॥ तत्रापश्यंस्तव सुता भीमसेनस्य विक्रमम् । सुपुङ्खैः कङ्कवासोभिर्यत् कर्णं छादयच्छरैः ॥ ३८ ॥ स नन्दयन् रणे पार्थं केशवञ्च यशस्विनम् । सात्यकिञ्चक्ररक्षौ च भीमः कर्णमयोधयत् ॥ ३९ ॥ विक्रमं भुजयोर्वीर्यं धैर्य्यञ्च विदितात्मनः । पुत्रास्तव महाराज दृष्ट्वा विमनसोऽभवन् ॥ ४० ॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि भीमयुद्धे षट्त्रिंशदधिकशततोऽध्यायः ॥ १३६ ॥

---

सञ्जय उवाच । भीमसेनस्य राधेयः श्रुत्वा ज्यातलनिस्वनम् । नामृष्यत यथा मत्तो गजः प्रतिगजस्वनम् ॥ १ ॥ सोऽपक्रम्य मुहूर्त्तन्तु भीमसेनस्य गोचरात् । पुत्रांस्तव ददर्शाथ भीमसेनेन पातितान् ॥ २ ॥ तानवेक्ष्य नरश्रेष्ठ विमना दुःखितस्तदा । निःश्वसन् दीर्घमुष्णञ्च पुनः पाण्डवमभ्ययात् ॥ ३ ॥ स ताम्रनयनः क्रोधात् श्वसन्निव महोरगः । बभौ कर्णः शरानस्यन् रश्मिवानिव भास्करः ॥ ४ ॥ रश्मिजालैरिवार्कस्य विततैर्भरतर्षभ । कर्णचापच्युतैर्बाणैः प्राच्छाद्यत वृकोदरः ॥ ५ ॥ कर्णचापच्युता-श्चित्रा शरा बर्हिणवाससः । विविशुः सर्वतः पार्थं वासार्थं वाण्डजा द्रुमम् ॥ ६ ॥ कर्णचापच्युता बाणाः सम्पतन्तस्ततस्ततः । रुक्मपुङ्खा व्यराजन्त हंसाः श्रेणीकृता इव ॥ ७ ॥ चापध्वजोपस्करेभ्यश्छत्रादीषामुखात् युगात् । प्रभवन्तो व्यदृश्यन्त राजन् शरा ॥ ८ ॥ खं पूरयन्महावेगान् खगमान् गृध्र

वासवः । सुवर्णविकृतांश्चित्रान् मुमोचाधिरथिः शरान् ॥ ९ ॥
तमन्तकमिवायस्तमापतन्तं वृकोदरः । त्यक्त्वा प्राणानतिक्रम्य
विव्याध नवभिः शरैः ॥ १० ॥ तस्य वेगमसह्यञ्च दृष्ट्वा कर्णस्य
पाण्डवः । महतश्च शरौघांस्तान्नैवाव्यथत वीर्य्यवान् ॥ ११ ॥
ततो विध्याधिरथेः शरजालानि पाण्डवः । विव्याध कर्णं
विंशत्या पुनरन्यैः शितैः शरैः ॥ १२ ॥ यथैव हि शरैः पार्थः
सूतपुत्रेण छादितः । तथैव स रणे कर्णं छादयामास पाण्डवः
॥ १३ ॥ दृष्ट्वा तु भीमसेनस्य विक्रमं युधि भारत । अभ्यनन्द-
स्त्वदीयाश्च संप्रहृष्टाश्च चारणाः ॥ १४ ॥ भूरिश्रवाः कृपो द्रौणि-
र्मद्रराजो जयद्रथः । उत्तमौजा युधामन्युः सात्यकिः केशवा-
र्ज्जुनौ ॥ १५ ॥ कुरुपाण्डवप्रवरा दश राजन्महारथाः । साधु-
साध्विति वेगेन सिंहनादमथानदन् ॥ १६ ॥ तस्मिंस्तु तुमुले
शब्दे प्रवृत्ते लोमहर्षणे । अभ्यभाषत पुत्रांस्ते राजा दुर्य्योधन-
स्त्वरन् ॥ १७ ॥ राज्ञः स राजपुत्रांश्च सोदरांश्च विशेषतः ।
कर्णं गच्छत भद्रं वः परीप्सन्तो वृकोदरात् ॥ १८ ॥ पुरा
निघ्नन्ति राधेयं भीमचापच्युताः शराः । ते यतध्वं महेष्वासाः
सूतपुत्रस्य रक्षणे ॥ १९ ॥ दुर्य्योधनसमादिष्टाः सोदर्य्याः सप्त
भारत । भीमसेनमभिद्रुत्य संरब्धाः पर्य्यवारयन् ॥ २० ॥ ते
समासाद्य कौन्तेयमावृण्वञ्छरवृष्टिभिः । पर्वतं वारिधाराभिः
प्रावृषीव बलाहकाः ॥ २१ ॥ तेऽपीडयन् भीमसेनं क्रुद्धाः सप्त
महारथाः । प्रजासंहरणे राजन् सोमं सप्त ग्रहा इव ॥ २२ ॥
ततो वेगेन कौन्तेयः पीडयित्वा शरासनम् । मुष्टिना पाण्डवो
राजन् दृढेन सुपरिष्कृतम् ॥ २३ ॥ मनुष्यसमतां ज्ञात्वा सप्त
सन्धाय सायकान् । तेभ्यो व्यसृजदायस्तः सूर्य्यरश्मिनिभान् प्रभुः
॥ २४ ॥ निरस्यन्निव देहेभ्यस्तनयानामसून् स्तव । भीमसेनो
महाराज पूर्ववैरमनुस्मरन् ॥ २५ ॥ ते क्षिप्ता भीमसेनेन शरा

भारत भारतान्। विदार्य्य खं समुत्पेतुः स्वर्णपुङ्खाः शिलाशिताः ॥ २६ ॥ तेषां विदार्य्य चेतांसि शरा हेमविभूषिताः। व्यराजन्त महाराज सुपर्णा इव खेचराः ॥ २७ ॥ शोणितादिग्धसर्वाङ्गास्तप्तहेमपरिष्कृताः। पुत्राणां तव राजेन्द्र पीत्वा शोणितमुद्गताः ॥ २८ ॥ ते शरैर्भिन्नमर्माणो रथेभ्यः प्रापतन् क्षितौ। गिरिसानुरुहा भग्ना द्विपेनेव महाद्रुमाः ॥ २९ ॥ शत्रुञ्जयः शत्रुसहश्चित्रश्चित्रायुधो दृढः। चित्रसेनो विकर्णश्च सप्तैते विनिपातिताः ॥ ३० ॥ पुत्राणां तव सर्वेषां निहतानां वृकोदरः। शोचत्यतिभृशं दुःखाद्विकर्णं पाण्डवः प्रियम् ॥ ३१ ॥ प्रतिज्ञेयं मया दत्ता निहन्तव्यास्तु संयुगे। विकर्ण तेनासि हतः प्रतिज्ञा रक्षिता मया ॥ ३२ ॥ त्वमागाः सङ्गरं वीर क्षात्रं धर्ममनुस्मरन्। विनिहतोऽसि नृपतिस्तथास्माकं हिते रतः ॥ ३३ ॥ न्यायतो न्यायतो नैवमेकः शोको महाद्युतिः। तान्निहत्य महाराज राधेयस्यैव पश्यतः ॥ ३४ ॥ सिंहनादरवं घोरमसृजत् पाण्डुनन्दनः। स रवस्तस्य शूरस्य धर्मराजस्य भारत ॥ ३५ ॥ आचख्याविव तद्युद्धे विजयञ्चात्मनो महत्। श्रुत्वा तं सुमहानादं भीमसेनस्य धन्विनः ॥ ३६ ॥ बभूव परमा प्रीतिर्धर्मराजस्य संयुगे। ततो हृष्टो महाराज वादित्राणां महास्वनैः ॥ ३७ ॥ सिंहनादरवं भ्रातुः प्रतिजग्राह पाण्डवः। अभ्ययाच्च समरे द्रोणं सर्वशस्त्रविदांवरः ॥ ३८ ॥ हर्षेण महता युक्तः कृतसंज्ञे वृकोदरे। एकत्रिंशन्महाराज पुत्रास्तव निपातितान् ॥ ३९ ॥ हतान् दुर्य्योधनो दृष्ट्वा क्षत्तुः सस्मार तद्वचः। तदिदं समनुप्राप्तं क्षत्तुर्हितकरं वचः ॥ ४० ॥ इति सञ्चिन्त्य राजासौ नोत्तरं प्रत्यपद्यत। यत् द्यूतकाले दुर्बुद्धिरब्रवीत्तनयस्तव ॥ ४१ ॥ सभामानाय्य पाञ्चालीं कर्णेन सहितोऽल्पधीः। यच्च कर्णोऽब्रवीत् कृष्णां सभायां परुषं वचः ॥ ४२ ॥ प्रमुखे पाण्डुपुत्राणां तव

चैव विधास्यते ॥ शृणु तस्तव राजेन्द्र कौरवाणाञ्च सर्व्वश. ॥ ४३ ॥ विनष्टा. पाण्डवाः कृष्णे यां पूर्व्वं नरक गता. । पतिमन्यं वृणु-ष्वेति तस्येदं फलमागतम ॥ ४४ ॥ यच्च षण्डतिलादीनि परु-षाणि तवात्मजै. । श्राविताः ते महात्मान पाण्डवाः कोपयिष्णुभिः ॥ ४५ ॥ तं भीमसेन क्रोधाग्नि त्रयोदशसमा.र्जितम । विसृज-स्तव पुत्राणामन्तं गच्छति कौरव ॥ ४६ ॥ विलपन् बहु क्षत्ता शमं नालभत त्वयि । सपुत्रो भरतश्रेष्ठ तस्य भुङ्क्ष्व फलोदयम ॥ ४७ ॥ त्वया वृद्धेन धीरेण कार्य्यतत्त्वार्थदर्शिना । न कृतं सुहृदां वाक्यं दैवमत्र परायणम् ॥ ४८ ॥ तन्मा शुचो नरव्याघ्र तवैवापनयो महान् । विनाशहेतुः पुत्राणां भवानेव मतो मम ॥ ४९ ॥ हतो विकर्णो राजेन्द्र चित्रसेनश्च वीर्य्यवान् । प्रवरा-श्चात्मजानान्ते सुताश्चान्ये महारथाः ॥ ५० ॥ यानन्यान् ददृशे भीमश्चक्षुर्विषयमागतान् । पुत्रांस्तव महाबाहो त्वरया तान् जघान च ॥ ५१ ॥ त्वत्कृतेऽहमद्राक्षं दह्यमाना वरूथिनीम् । सहस्रशः शरैर्मुक्तैः पाण्डवेन वृषेण च ॥ ५२ ॥

इति द्रोणपर्व्वणि जयद्रथवधपर्व्वणि भीमयुद्धे सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥

---

धृतराष्ट्र उवाच । महानपनयः सूत ममैवात्र विशेषतः । स इदानीमनुप्राप्तो मन्ये सञ्जय शोचतः ॥ १ ॥ यद्गतं तद्गतमिति ममासीन्मनसि स्थितम् । इदानीमत्र किं कार्य्यं प्रकरिष्यामि सञ्जय ॥ २ ॥ यथा ह्येष क्षयो वृत्तो ममापनयसम्भव. । वीराणां तन्ममाचक्ष्व स्थिरीभूतोऽस्मि सञ्जय ॥ ३ ॥

सञ्जय उवाच । कर्णभीमौ महाराज पराक्रान्तौ महाहवे । बाणवर्षाण्यसृजतां वृष्टिमन्ताविवाम्बुदौ ॥ ४ ॥ भीमसेनाङ्किता

माया स्वर्णपुङ्खा शिलाधौता । विविशुः कर्णमासाद्य भिद्यन्त
इव जीवितम् ॥ ५ ॥ तथैव कर्णनिर्मुक्तैः सविषैरिव पन्नगैः ।
प्राकीर्यत रणे भीम शतशोऽथ सहस्रश ॥ ६ ॥ ततो शरै-
र्महाराज सम्पतद्भिः समन्ततः । बभूव तव सैन्यानां सङ्क्षोभः
सागरोपम ॥ ७ ॥ भीमचापच्युतैर्बाणैस्तव सैन्यमरिन्दम ।
अवध्यत चमूमध्ये घोरैराशीविषोपमैः ॥ ८ ॥ वारणैः पतितै-
राजन् वाजिभिश्च नरैः सह । अदृश्यत मही कीर्णा वातभग्नैरिव
द्रुमैः ॥ ९ ॥ ते वध्यमाना समरे भीमचापच्युतैः शरैः । प्राद्रव
स्तावका योधा किमेतदिति चाब्रुवन् ॥ १० ॥ ततो व्युदस्तं
तत् सैन्यं सिन्धुसौवीरकौरवम् । प्रोत्सारितं महावेगैः कर्ण-
पाण्डवयोः शरैः ॥ ११ ॥ ते शूरा हतभूयिष्ठा हताश्वा हत
वारणाः । उत्सृज्य भीम कर्णञ्च व्यद्रवन् सर्वतो दिशः ॥ १२ ॥
नूनं पार्थार्थमेवास्मान्मोहयन्ति दिवौकसः । यत् कर्णभीमप्रभवै-
र्वध्यते नो बलं शरैः ॥ १३ ॥ एवं ब्रुवाणा योधास्ते तावका
भयपीडिताः । शरपातं समुत्सृज्य स्थिता युद्धदिदृक्षव ॥ १४ ॥
ततः प्रावर्त्तत नदी घोररूपा रणाजिरे । शूराणां हर्षजननी
भीरूणां भयवर्द्धिनी ॥ १५ ॥ वारणाश्वमनुष्याणां रुधिरौघ
समुद्भवा । संवृता गतसत्त्वैश्च मनुष्यगजवाजिभिः ॥ १६ ॥
सानुकर्षपताकैश्च द्विपाश्वरथभूषणैः । स्यन्दनैरपविद्धैश्च भग्न
चक्राक्षकूवरैः ॥ १७ ॥ जातरूपपरिष्कारैर्धनुर्भिः सुमहास्वनैः ।
सुवर्णपुङ्खैरिषुभिर्नाराचैश्च सहस्रशः ॥ १८ ॥ कर्णपाण्डव-
निर्मुक्तैर्निर्मुक्तैरिव पन्नगैः । प्रासतोमरसङ्घातैः खड्गैश्च सपर-
श्वधैः ॥ १९ ॥ सुवर्णविकृतैश्चापि गदामुषलपट्टिशैः । ध्वजैश्च
विविधाकारैः शक्तिभिः परिघैरपि ॥ २० ॥ शतघ्नीभिश्च चित्राभि-
र्बभौ भारत मेदिनी । कनकाङ्गदहारैश्च कुण्डलैर्मुकुटैस्तथा
॥ २१ ॥ वलयैरपविद्धैश्च तथैवाङ्गुलिवेष्टकैः । चूड़ामणिभि-

सप्तोपैः स्वर्णभूषैश्च मारिष ॥ २२ ॥ तनुत्रैः सतलत्रैश्च ग्रैवेयैश्च भारत । वस्त्रैश्छत्रैश्च विध्वस्तैश्चामरव्यजनैरपि ॥ २३ ॥ गजाश्वमनुजैर्भिन्नैः शोणिताक्तैश्च पत्रिभिः । तैस्तैश्च विविधैर्भिन्नैस्तत्र तत्र वसुन्धरा ॥ २४ ॥ पतितैरपविद्धैश्च विबभौ द्यौरिव ग्रहैः । अचिन्त्यमद्भुतञ्चैव तयोः कर्मातिमानुषम् ॥ २५ ॥ दृष्ट्वा चारणसिद्धानां विस्मयः समजायत । अग्नेर्वायुसहायस्य गतिः कक्ष इवाहवे ॥ २६ ॥ आसीद्भीमसहायस्य रौद्रमाधिरथेर्गतम् । निपातितध्वजरथं हतवाजिनरद्विपम् ॥ २७ ॥ गजाभ्यां सम्प्रयुक्ताभ्यामासीन्नलवनं यथा । मेघजालनिभं सैन्यमासीत्तव नराधिप । विमर्द्दे कर्णभीमाभ्यामासीच्च परमो रणे ॥ २८ ॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि भीमकर्णयुद्धे अष्टत्रिंशदधिकशततोऽध्यायः ॥ १३८ ॥

---

सञ्जय उवाच । ततः कर्णो महाराज भीमं विद्ध्वा त्रिभिः शरैः । मुमोच शरवर्षाणि विचित्राणि बहूनि च ॥ १ ॥ वध्यमानो महाबाहुः सूतपुत्रेण पाण्डवः । न विव्यथे भीमसेनो भिद्यमान इवाचलः ॥ २ ॥ स कर्णं कर्णिना कर्णे पीतेन निशितेन च । विव्याध सुभृशं सङ्ख्ये तैलधौतेन मारिष ॥ ३ ॥ स कुण्डलं महच्चारु कर्णस्यापातयद्भुवि । तपनीयं महाराज दीप्तं ज्योतिरिवाम्बरात् ॥ ४ ॥ अथापरेण भल्लेन सूतपुत्रं स्तनान्तरे । आजघान भृशं क्रुद्धो हसन्निव वृकोदरः ॥ ५ ॥ पुनरस्य त्वरन् भीमो नाराचान्दश भारत । रणे प्रैषीन्महाबाहुर्निर्मुक्ताशीविषोपमान् ॥ ६ ॥ ते ललाटं विनिर्भिद्य सूतपुत्रस्य मारिष । विविशुर्चोदितास्तेन वल्मीकमिव पन्नगाः ॥ ७ ॥ ललाटस्थैस्ततो बाणैः सूतपुत्रो व्यरोचत । नीलोत्पलमयीं मालां धारयन् वै

यथा पुरा ॥ ८ ॥ कीर्त्तिविद्धो भृशं कर्णो पाण्डवेन तरस्विना।
रथकूबरमासाद्य न्यमीलयत लोचने ॥ ९ ॥ स मुहूर्त्तात् पुनः
संज्ञां लब्ध्वा कर्णः परन्तप। रुधिरोक्षितसर्वाङ्गः क्रोधमाहा-
रयत् परम् ॥ १० ॥ ततः क्रुद्धो रणे कर्णः पीडितो दृढधन्वना।
वेगवत्तरं महावेगो भीमसेनरथं प्रति ॥ ११ ॥ तस्मै कर्णः शतं
राजन्निषूणां गार्ध्रवाससाम्। अमर्षी बलवान् क्रुद्धः प्रेषयामास
भारत ॥ १२ ॥ ततः प्रासृजदुग्राणि शरवर्षाणि पाण्डव। समरे
तमनादृत्य तस्य वीर्यमचिन्तयन् ॥ १३ ॥ कर्णस्ततो महाराज
पाण्डवं नवभिः शरैः। आजघानोरसि क्रुद्धः क्रुद्धरूपं परन्तप
॥ १४ ॥ तावुभौ नरशार्दूलौ शार्दूलाविव दंष्ट्रिणौ। जीमूता
विव चान्योऽन्यं प्रववर्षतुराहवे ॥ १५ ॥ तलशब्दरवैश्चैव त्रास
यन्तौ परस्परम्। शरजालैश्च विविधैस्त्रासयामासतुर्मृधे ॥ १६ ॥
अन्योऽन्यं समरे क्रुद्धौ कृतप्रतिकृतैषिणौ। ततो भीमो महा-
बाहुः सूतपुत्रस्य भारत ॥ १७ ॥ क्षुरप्रेण धनुश्छित्त्वा ननाद
परवीरहा। तदपास्य धनुश्छिन्नं सूतपुत्रो महारथः ॥ १८ ॥
अन्यत् कार्मुकमादत्त भारघ्नं वेगवत्तरम्। दृष्ट्वा स कुरुसौवीर-
सिन्धुवीरबलक्षयम् ॥ १९ ॥ सवर्मध्वजशस्त्रैश्च पतितैः संवृतां
महीम्। हस्त्यश्वरथदेहांश्च गतासून् प्रेक्ष्य सर्वतः ॥ २० ॥ सूत-
पुत्रस्य संरम्भाद्दीप्तं वपुरजायत। स विस्फार्य महच्चापं कार्त्त-
स्वरविभूषितम् ॥ २१ ॥ भीमं प्रैक्षत राधेयो राजन् घोरेण
चक्षुषा। ततः क्रुद्धः शरानस्यन् सूतपुत्रो व्यरोचत ॥ २२ ॥
मध्यान्दिनगतोऽर्चिष्मान् शरदीव दिवाकरः। मरीचिविकचस्येव
राजन् भानुमतो वपुः ॥ २३ ॥ आसीदाधिरथेर्घोरं वपुः शर-
शताचितम्। कराभ्यामाददानस्य सन्दधानस्य चाशुगान् ॥ २४ ॥
कर्षतो मुञ्चतो बाणान्नान्तरं ददृशे रणे। अग्निचक्रोपमं घोरं
मण्डलीकृतमायुधम् ॥ २५ ॥ कर्णस्यासीन्महीपाल सव्यदक्षिण-

मस्यतः। स्वर्णपुङ्खाः सुनिशिताः कर्णचापच्युताः शराः॥ २६॥
आच्छादयन्महाराज दिशः सूर्य्यस्य च प्रभाः। ततः कनक-
पुङ्खानां शराणां नतपर्व्वणाम्॥ २७॥ धनुश्च्युतानां वियति ददृशे
बहुधा व्रजः। बाणासनादाधिरथेः प्रभवन्ति स्म सायकाः॥ २८॥
श्रेणीकृता व्यरोचन्त राजन् क्रौञ्चा इवाम्बरे। गार्द्धपत्राञ्छिला-
धौतान् कार्त्तस्वरविभूषितान्॥ २९॥ महावेगान् प्रदीप्ताग्रान्
मुमोचाधिरथिः शरान्। ते तु चापबलोद्धूताः शातकुम्भविभू-
षिताः॥ ३०॥ अजस्रमपतन् बाणा भीमसेनरथं प्रति। ते
व्योम्नि रुक्मविकृता व्यकाशन्त सहस्रशः॥ ३१॥ शलभानामिव
व्राताः शराः कर्णसमीरिताः। चापादाधिरथेर्बाणाः प्रपतन्त-
श्चकाशिरे॥ ३२॥ एको दीर्घ इवात्यर्थमाकाशे संस्थितः शरः।
पर्व्वतं वारिधाराभिश्छादयन्निव तोयदः॥ ३३॥ कर्णः प्राच्छा-
दयत् क्रुद्धो भीमं सायकवृष्टिभिः। तत्र भारत भीमस्य बलं
वीर्य्यं पराक्रमम्॥ ३४॥ व्यवसायञ्च पुत्रास्ते ददृशुः सहसैनिकाः।
तां समुद्रमिवोद्धूतां शरवृष्टिं समुत्थिताम्॥ ३५॥ अचिन्तयित्वा
भीमस्तु क्रुद्धः कर्णमुपाद्रवत्। रुक्मपृष्ठं महच्चापं भीमस्यासी-
द्विशाम्पते॥ ३६॥ आकर्णमण्डलीभूतं शक्रचापमिवापरम्।
तस्माच्छराः प्रादुरासन् पूरयन्त इवाम्बरम्॥ ३७॥ सुवर्णपुङ्खै-
र्भीमेन सायकैर्नतपर्व्वभिः। गगने रचिता माला काञ्चनीव
व्यरोचत॥ ३८॥ ततो व्योम्नि विषक्तानि शरजालानि भागशः।
आहतानि व्यशीर्य्यन्त भीमसेनस्य पत्रिभिः॥ ३९॥ कर्णस्य शर-
जालौघैर्भीमसेनस्य चोभयोः। अग्निस्फुलिङ्गसंस्पर्शैरञ्जोगतिभि-
राहवे॥ ४०॥ तैस्तैः कनकपुङ्खानां द्यौरासीत् संवृता व्रजैः।
न स्म सूर्य्यस्तदा भाति न स्म वाति समीरणः॥ ४१॥ शरजाला-
वृते व्योम्नि न चाज्ञायत किञ्चन। स भीमं छादयन् बाणै-
सूतपुत्रः पृथग्विधैः॥ ४२॥ उपारोहदनादृत्य तस्य वीर्य्यं

महात्मनः । तयोर्विसृजतोस्तत्र शरजालानि मारिष ॥ ४२ ॥
वायुभूतान्यदृश्यन्त संसक्तानीतरेतरम् । अन्योऽन्यशरसङ्घातैस्तयो-
र्मनुजसिंहयोः ॥ ४४ ॥ आकाशे भारतश्रेष्ठ पावकः समजायत ।
तथा कर्णः शितान् बाणान् कर्मारपरिमार्ज्जितान् ॥ ४५ ॥
सुवर्णविकृतान् क्रुद्ध प्राहिणोद्वधकाङ्क्षया । तानन्तरीक्षे विशिखै-
स्त्रिधैकैकमशातयत ॥ ४६ ॥ विशेषयन् सूतपुत्रं भीमस्तिष्ठेति
चाब्रवीत । पुनश्चासृजदुग्राणि शरवर्षाणि पाण्डव ॥ ४७ ॥
अमर्षी बलवान् क्रुद्धो दिधक्षन्निव पावकः । ततश्चटचटाशब्दो
गोधाघातादभूत्तयोः ॥ ४८ ॥ तलशब्दश्च सुमहान् सिंहनादश्च
भैरव । रथनेमिनिनादश्च ज्याशब्दश्चैव दारुण ॥ ४९ ॥ योधा
व्युपारमन् युद्धाद्दिदृक्षन्तं पराक्रमम् । कर्णपाण्डवयो राजन्
परस्परवधैषिणोः ॥ ५० ॥ देवर्षिसिद्धगन्धर्वाः साधुसाध्वित्यपू-
जयन् । मुमुचुः पुष्पवर्षं च विद्याधरगणास्तथा ॥ ५१ ॥ ततो
भीमो महाबाहुः संरम्भी दृढविक्रमः । अस्त्रैरस्त्राणि संवार्य
शरैर्विव्याध सूतजम् ॥ ५२ ॥ कर्णोऽपि भीमसेनस्य निवार्येषून्
महाबल । प्राहिणोन्नव नाराचानाशीविषसमान्रणे ॥ ५३ ॥
तावद्भिरथ तान् भीमो व्योम्नि चिच्छेद पत्रिभिः । नाराचान्
सूतपुत्रस्य तिष्ठतिष्ठेति चाब्रवीत् ॥ ५४ ॥ ततो भीमो महाबाहुः
शरं क्रुद्धोऽन्तकोपमम् । मुमोचाधिरथेर्वीरो यमदण्डमिवापरम्
॥ ५५ ॥ तमापतन्तं चिच्छेद राधेयः प्रहसन्निव । त्रिभिः शरैः
शरं राजन् पाण्डवस्य प्रतापवान् ॥ ५६ ॥ पुनश्चासृजदुग्राणि
शरवर्षाणि पाण्डव । तस्य तान्याददे कर्णः सर्वाण्यस्त्राण्यभीत-
वत् ॥ ५७ ॥ युध्यमानस्य भीमस्य सूतपुत्रोऽस्त्रमायया । तस्ये-
षुधी धनुर्ज्यां च बाणैः सन्नतपर्वभिः ॥ ५८ ॥ रश्मीन् योक्त्राणि
चाश्वानां क्रुद्धः कर्णोऽच्छिनन्मृधे । तस्याश्वांश्च पुनर्हत्वा सूतं
विव्याध पञ्चभिः ॥ ५९ ॥ सोऽपसृत्य द्रुतं सूतो युधामन्योरथं

ययौ । विधमन्निव भीमस्य क्रुद्धः कालानलद्युतिः ॥ ६० ॥ ध्वजं-
श्चिच्छेद राधेयः पताकाञ्च व्यपातयत् । स विधन्वा महाबाहु-
रथ शक्तिं परामृशत् ॥ ६१ ॥ तामवासृजदाविध्य क्रुद्धः कर्ण-
रथं प्रति । तामाधिरथिरायस्तां शक्तिं कनकभूषणाम् ॥ ६२ ॥
आपतन्तीं महोल्काभां चिच्छेद दशभिः शरैः । सापतद्दशधा
छिन्ना कर्णस्य निशितैः शरैः ॥ ६३ ॥ अस्यतः सूतपुत्रस्य मित्रार्थे
चित्रयोधिनः । स चर्मादत्त कौन्तेयो जातरूपपरिष्कृतम् ॥ ६४ ॥
खड्गञ्चान्यतरं प्रेप्सुर्मृत्योरग्रे जयस्य वा । तदस्य तरसा
कर्णो व्यधमच्चर्म सुप्रभम् ॥ ६५ ॥ शरैर्बहुभिरत्युग्रैः प्रहसन्निव
भारत । स विचर्मा महाराज विरथः क्रोधमूर्च्छितः ॥ ६६ ॥
असिं प्रासृजदत्युग्रं त्वरन् कर्णरथं प्रति । स धनुः सूतपुत्रस्य
सज्यं छित्त्वा महानसिः ॥ ६७ ॥ पपात भुवि राजेन्द्र क्रुद्धः सर्प
इवाम्बरात् । ततः प्रहस्याधिरथिरन्यदादाय कार्मुकम् ॥ ६८ ॥
शत्रुघ्नं समरे क्रुद्धो दृढज्यं वेगवत्तरम् । व्यायच्छत स शरान्
कर्णः कुन्तीपुत्रजिघांसया ॥ ६९ ॥ सहस्रशो महाराज रुक्म-
पुङ्खान् सुतेजनान् । स वध्यमानो बलवान् कर्णचापच्युतैः शरैः
॥ ७० ॥ वैहायसं प्राक्रमद्वै कर्णस्य व्यथयन्मनः । स तस्य
चरितं दृष्ट्वा सङ्ग्रामे विजयैषिणः ॥ ७१ ॥ बलमास्थाय राधेयो
भीमसेनमवञ्चयत् । तं दृष्ट्वा रथोपस्थे निलीनं व्यथितेन्द्रियम्
॥ ७२ ॥ ध्वजमस्य समारुह्य तस्थौ भीमो महीतले । तदस्य
कुरवः सर्वे चारणाश्चाभ्यपूजयन् ॥ ७३ ॥ यदियेष रथात् कर्णं
हर्त्तुं तार्क्ष्य इवोरगम् । स च्छिन्नधन्वा विरथः स्वधर्ममनुपालयन्
॥ ७४ ॥ स्वरथं पृष्ठतः कृत्वा युद्धायैव व्यवस्थितः । तद्विहत्यास्य
राधेयस्तत एनं समभ्ययात् ॥ ७५ ॥ संरम्भात् पाण्डवं सङ्ख्ये
युद्धाय समुपस्थितम् । तौ समेतौ महाराज स्पर्द्धमानौ महा-
बलौ ॥ ७६ ॥ जीमूता इव घर्मान्ते गर्ज्जमानौ नरर्षभौ । तयो-

राधेयोः सम्प्रहारः क्रुद्धयोर्नरसिंहयोः ॥ ७७ ॥ अमृष्यमाणयोः
संख्ये देवदानवयोरिव । क्षीणशस्त्रस्तु कौन्तेय कर्णेन समभि
द्रुतः ॥ ७८ ॥ दृष्ट्वार्जुनहतान्नागान् पतितान् पर्वतोपमान् ।
रथमार्गविघातार्थं व्यायुधः प्रविवेश ह ॥ ७९ ॥ हस्तिनां व्रज
मासाद्य रथदुर्गं प्रविश्य च । पाण्डवो जीविताकाङ्क्षी राधेयं
नाभ्यहारयत् ॥ ८० ॥ व्यवस्थानमथाकाङ्क्षन् धनञ्जयशरैर्हतम् ।
उद्यम्य कुञ्जरं पार्थस्तस्थौ परपुरञ्जय ॥ ८१ ॥ महौषधि-
समायुक्तं हनूमानिव पर्वतम् । तमस्य विशिखैः कर्णो व्यधमत्
कुञ्जरं पुनः ॥ ८२ ॥ हस्त्यङ्गान्यथ कर्णाय प्राहिणोत् पाण्डु-
नन्दनः । चक्राण्यश्वांस्तथा चान्यद्यद्यत् पश्यति भूतले ॥ ८३ ॥
तत्तदादाय चिक्षेप क्रुद्धः कर्णाय पाण्डवः । तदस्य सर्वं चिच्छेद
छिन्नं छिन्नं शितैः शरैः ॥ ८४ ॥ भीमोऽपि मुष्टिमुद्यम्य वज्रगर्भं
सुदारुणम् । हन्तुमिच्छन् सूतपुत्रं संस्मरन्नर्जुनं चपात ॥ ८५ ॥
शक्तोऽपि नावधीत् कर्णं समर्थं पाण्डुनन्दनः । रक्षमाणः
प्रतिज्ञां तां या कृता सव्यसाचिना ॥ ८६ ॥ तमेवं व्याकुलं भीमं
भूयो भूयः शितैः शरैः । मूर्च्छयाभिपरीताङ्गमकरोत् सूत
नन्दनः ॥ ८७ ॥ व्यायुधं नावधीच्चैनं कर्णः कुन्त्या वचः स्मरन् ।
धनुषोऽग्रेण तं कर्णस्त्वभिद्रुत्य परामृशत् ॥ ८८ ॥ धनुषा स्पृष्ट
मात्रेण क्रुद्धः सर्प इव श्वसन् । आच्छिद्य स धनुस्तस्य कर्णं
मूर्धन्यताडयत् ॥ ८९ ॥ ताडितो भीमसेनेन क्रोधादारक्त-
लोचनः । विहसन्निव राधेयो वाक्यमेतदुवाच ह ॥ ९० ॥ पुनः

त्वं युद्धोचितस्तात वनवासरतिर्भवान् ॥ ९४ ॥ सूदान् भत्यजनांन् दासांस्त्वं गृहे त्वरयन् भृशम् । योगास्ताद्भवितुं क्रोधात् भोजनार्थं वृकोदर ॥ ९५ ॥ मुनिर्भूत्वाथ वा भीम फलान्यादत्स्व दुर्मते । वनाय व्रज कौन्तेय न त्वं युद्धविशारदः ॥ ९६ ॥ फलमूलाशने युक्तस्त्वं तथातिथिपूजने । न त्वां शस्त्रसमुद्योगे योग्यं मन्ये वृकोदर ॥ ९७ ॥ कौमारे यानि वृत्तानि विप्रियाणि विशाम्पते । तानि सर्वाणि चाप्येनं रूक्षाण्यश्रावयद्भृशम् ॥ ९८ ॥ अथैनं तत्र संलीनमस्पृशद्धनुषा पुनः । प्रहसंश्च पुनर्वाक्यं भीममाह वृषस्तदा ॥ ९९ ॥ योद्धव्यं मारिषान्यत्र न योद्धव्यन्तु मादृशः । मादृशैर्युध्यमानानामेतच्चान्यच्च विद्यते ॥ १०० ॥ गच्छ वा यत्र तौ कृष्णौ तौ त्वां रक्षिष्यतो रणे । गृहं वा गच्छ कौन्तेय किन्ते युद्धेन बालक ॥ १०१ ॥ कर्णस्य वचनं श्रुत्वा भीमसेनोऽतिदारुणम् । उवाच कर्णं प्रहसन् सर्वेषां शृण्वतां वचः ॥ १०२ ॥ जितस्त्वमसकृद्दुष्ट कत्थसे किं वृथात्मना । जयाजयौ महेन्द्रस्य लोके दृष्टौ पुरातनैः ॥ १०३ ॥ मल्लयुद्धं मया सार्द्धं कुरु दुष्कुलसम्भव । महाबलो महाभोगी कीचको निहतो यथा ॥ १०४ ॥ तथा त्वां घातयिष्यामि पश्यत्सु सर्वराजसु । भीमस्य मतमाज्ञाय कर्णो बुद्धिमतांवरः ॥ १०५ ॥ विरराम रणात्तस्मात् पश्यतां सर्वधन्विनाम् । एवं सं विरथं कृत्वा कर्णो राजन् व्यकत्थयत् ॥ १०६ ॥ प्रमुखे वृष्णिसिंहस्य पार्थस्य च महात्मनः । ततो राजन् शिलाधौतान् शरान् शाखामृगध्वजः ॥ १०७ ॥ प्राहिणोत् सूतपुत्राय केशवेन प्रचोदितः । ततः पार्थभुजोत्सृष्टाः शराः कनकभूषणाः ॥ १०८ ॥ गाण्डीवप्रभवाः कर्णं हंसाः क्रौञ्चमिवाविशन् । स भुजङ्गैरिवाविष्टैर्गाण्डीवप्रेषितैः शरैः ॥ १०९ ॥ भीमसेनादपासेधत् सूतपुत्रं धनञ्जय । स छिन्नधन्वा भीमेन धनञ्जयशराहतः ॥ ११० ॥

कर्णो भीमादपायासीद्रथेन महता द्रुतम् । भीमोऽपि सात्यके-
र्वाहं समारुह्य नरर्षभ ॥ १११ ॥ अन्वयाद् भ्रातरं सङ्ख्ये पाण्डवं
सव्यसाचिनम् । ततः कर्णं समुद्दिश्य त्वरमाणो धनञ्जयः ॥११२॥
नाराचं क्रोधताम्राक्षः प्रैषीन्मृत्युमिवान्तकः । स गरुत्मानिवा-
काशे प्रार्थयन् भुजगोत्तमम् ॥ ११३ ॥ नाराचोऽभ्यपतत् कर्णं
तूर्णं गाण्डीवचोदितः । तमन्तरीक्षे नाराचं द्रौणिश्चिच्छेद
पत्रिणा ॥ ११४ ॥ धनञ्जयभयात् कर्णमुज्जिहीर्षुर्महारथः ।
ततो द्रौणिं चतुःषष्ट्या विव्याध कुपितोऽर्जुनः ॥ ११५ ॥ शिली-
मुखैर्महाराज मागास्तिष्ठेति चाब्रवीत् । स तु मत्तगजाकीर्ण-
मनीकं रथसङ्कुलम् ॥ ११६ ॥ तूर्णमभ्याविशद् द्रौणिर्धनञ्जय-
शराहितः । ततः सुवर्णपृष्ठानां चापानां कूजतां रणे ॥ ११७ ॥
शब्दं गाण्डीवघोषेण कौन्तेयोऽभ्यभवद्बली । धनञ्जयस्तथायान्तं
पृष्ठतो द्रौणिमभ्ययात् ॥ ११८ ॥ नातिदीर्घमिवाध्वानं शरैः
सन्त्रासयन् बलम् । विदार्य देहान्नाराचैर्नरवारणवाजिनाम्
॥ ११९ ॥ कङ्कबर्हिणवासोभिर्बलं व्यधमदर्जुनः । तद्बलं भरत
श्रेष्ठ सवाजिद्विपमानवम् । पाकशासनिरायस्तः पार्थः सञ्ज-
घान ह ॥ १२० ॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि भीमकर्णयुद्धे
एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥

---

धृतराष्ट्र उवाच । अहन्यहनि मे दीप्तं यशः पतति सञ्जय ।
हता मे बहवो योधा मन्ये कालस्य पर्य्ययम् ॥ १ ॥ धनञ्जय-
स्सुसंक्रुद्धः प्रविष्टो मामकं बलम् । रक्षितं द्रोणकर्णाभ्यामप्रवेश्यं
सुरैरपि ॥ २ ॥ ताभ्यामूर्ज्जितवीर्य्याभ्यामाप्यायितपराक्रमः ।
सहितः कृष्णभीमाभ्यां शिनीनामृषभेण च ॥ ३ ॥ तदा प्रभृति

मा शोको हृदयाग्निरिवाग्नियम्। अस्तानिव प्रपश्यामि भूमि-
पालान् ससैन्धवान्॥ ४॥ अप्रिय सुमहत् कृत्वा सिन्धुराजः
किरीटिन। चक्षुर्विषयमापन्न कथ जीवितमाप्नुयात्॥ ५॥
अनुमानाच्च पश्यामि नास्ति सञ्जय सैन्धव। युद्धन्तु तद्यथावृत्त
तन्ममाचक्ष्व तत्त्वत॥ ६॥ यश्च विक्षोभ्य महतीं सेनामालोड्य
चासकृत्। एक प्रविष्ट सक्रुद्धो नलिनीमिव कुञ्जर॥ ७॥
तस्य मे वृष्णिवीरस्य ब्रूहि युद्ध यथातथम्। धनञ्जयार्थं यत्तस्य
कुशलो ह्यसि सञ्जय॥ ८॥

सञ्जय उवाच। तथा तु वैकर्त्तनपीड़ित तं भीमम्प्रयान्त
कुरुप्रवीरम्। समीक्ष्य राजन्नरवीरमध्ये शिनिप्रवीरोऽनुययौ
रथेन॥ ९॥ नदन् यथा वज्रधरस्तपान्ते ज्वलन् यथा जलदान्ते
च सूर्य्य। निघ्नन्नमित्रान् धनुषा दृढेन सङ्कम्पयंस्तव पुत्रस्य
सेनाम्॥ १०॥ त यान्तमश्वै रजतप्रकाशैरायोधने वीरतरं नद-
न्तम्। नाशक्नुवन् वारयितुं त्वदीया सर्व्वे तथा भारत माध-
वाग्र्यम्॥ ११॥ अमर्षपूर्णस्त्वनिवृत्तयोधी शरासनी काञ्चनवर्म-
धारी। अलम्बुष सात्यकि माधवाग्र्यमवारयद्राजवरोऽभिपत्य
॥ १२॥ तयोरभूद्भारत सम्प्रहारो यथाविधो नैव बभूव कश्चित्।
प्रैक्षन्त एवाहवशोभिनौ तौ योधास्त्वदीयाश्च परे च सर्व्वे॥ १३॥
अविध्यदेन दशभि पृषत्कैरलम्बुषो राजवर प्रसह्य। अना-
गतानेव तु तान् पृषत्कांश्चिच्छेद बाणै शिनिपुङ्गवोऽपि॥ १४॥
पुन स बाणैस्त्रिभिरग्निकल्पैराकर्णपूर्णैर्निशितै सुपुङ्खै। विव्याध
देहावरण विदार्य्य ते सात्यकेराविविशु शरीरम्॥ १५॥ तै
कायमस्याग्न्यनिलप्रभावैर्विदार्य्य बाणैर्निशितैर्ज्वलद्भि। आजघ्नि-
वांस्तान्रजतप्रकाशानश्वांश्चतुर्भिश्चतुर प्रसह्य॥ १६॥ तथा तु
तेनाभिहतस्तरस्वी नप्ता शिनेश्चक्रधरप्रभाव। अलम्बुषस्योत्तम-
वेगवद्भिरश्वांश्चतुर्भिर्निजघान बाणै॥ १७॥ अथास्य सूतस्य

शिरो निहत्य भल्लेन कालानलसन्निभेन। सकुण्डलं पूर्णशशि-
प्रकाशं भ्राजिष्णु वक्त्रं विचकर्त्त देहात् ॥ १८ ॥ निहत्य तं
पार्थिवपुत्रपौत्रं सङ्ख्ये यदूनामृषभः प्रमाथी। ततोऽन्वया-
दर्ज्जुनमेव वीरः सैन्यानि राजंस्तव सन्निवार्य्य ॥ १९ ॥ अन्वा-
गतं वृष्णिवीरं समीक्ष्य तथारिमध्ये परिवर्त्तमानम्। घ्नन्तं
कुरूणामिषुभिर्बलानि पुनः पुनर्वायुमिवाभ्रपूगान् ॥ २० ॥ ततो-
ऽवहन् सैन्धवाः साधुदान्ता गोक्षीरकुन्देन्दुहिमप्रकाशाः। सुवर्ण-
जालावतताः सदश्वा यतो यतः कामयते नृसिंहः ॥ २१ ॥
अथात्मजास्ते सहिताभिपेतुरन्ये च योधास्त्वरितास्त्वदीयाः।
कृत्वा मुखं भारत योधमुख्यं दुःशासनं त्वत्सुतमाजमीढ ॥ २२ ॥
ते सर्व्वतः सम्परिवार्य्य सङ्ख्ये शैनेयमाजघ्नुरनीकसाहाः। स
चापि तान् प्रवरः सात्वतानां न्यवारयद्बाणजालेन वीरः ॥ २३ ॥
निवार्य्य तांस्तूर्णममित्रघाती नप्ता शिनेः पत्रिभिरग्निकल्पैः। दुःशा-
सनस्याभिजघान वाहानुद्यम्य बाणासनमाजमीढ। ततोऽर्ज्जुनो
हर्षमवाप सङ्ख्ये कृष्णश्च दृष्ट्वा पुरुषप्रवीरम् ॥ २४ ॥

इति द्रोणपर्व्वणि जयद्रथवधपर्व्वणि अलम्बुषवधे
चत्वारिंशदधिकशतोऽध्यायः ॥ १४० ॥

---

सञ्जय उवाच। समुद्यतं महाबाहुं दुःशासनरथं प्रति।
त्वरितं त्वरणीयेषु धनञ्जयहितैषिणम् ॥ १ ॥ त्रिगर्त्तानां महे-
ष्वासाः सुवर्णविकृतध्वजाः। सेनासमुद्रमाविष्टमनन्तं पर्य्यवार-
यन् ॥ २ ॥ अथैनं रथवंशेन सर्व्वतः सन्निवार्य्य ते। अवाकिर-
ञ्छरव्रातैः क्रुद्धाः परमधन्विनः ॥ ३ ॥ अजयद्राजपुत्रांस्तान् भ्राज-
मानान् महारणे। एकः पञ्चाशतं शत्रून् सात्यकिः सत्यविक्रमः ॥ ४ ॥
सम्प्राप्य भारतीमध्यं तलघोषसमाकुलम्। असिशक्तिगदापूर्ण-

अप्लवं चलितं यथा ॥ ५ ॥ ततोऽहं तमपश्याम शैनेयचरितं रणे ।
प्रतीपगां दिवि तं दृष्ट्वा मायया पश्याम माधवात् ॥ ६ ॥ उदीचीं
दक्षिणां प्राचीं प्रतीचीं विदिशस्तथा । नृत्यन्निवाचरच्छूरो यथा
रथशतं तथा ॥ ७ ॥ तद्दृष्ट्वा चरितं तस्य सिंहविक्रान्तगामिनः ।
त्रिगर्त्ता न्यवर्त्तन्त सन्तप्ताः स्वजनं प्रति ॥ ८ ॥ तमन्ये शूर-
सेनानां शूरा सङ्ख्ये न्यवारयन् । नियच्छन्तः शरव्रातैर्मत्तं
द्विपमिवाङ्कुशैः ॥ ९ ॥ तैर्व्यवाहरदाव्यग्रो मुहूर्त्तमिव सात्यकिः ।
ततः कलिङ्गैर्युयुधे सोऽचिन्त्यबलविक्रमः ॥ १० ॥ तां च सेनामति-
क्रम्य कलिङ्गानां दुरत्ययाम् । अथ पार्थं महाबाहुर्धनञ्जयमुपा-
सदत् ॥ ११ ॥ तरन्निव जले श्रान्तो यथा स्थलमुपेयिवान् ।
तं दृष्ट्वा पुरुषव्याघ्रं युयुधानं समाश्वसत् ॥ १२ ॥ तमायान्त-
मभिप्रेक्ष्य केशवः पार्थमब्रवीत् । असावायाति शैनेयस्तव पार्थ
पदानुगः ॥ १३ ॥ एष शिष्यः सखा चैव तव सत्यपराक्रमः ।
सर्वान् योधांस्तृणीकृत्य विजिग्ये पुरुषर्षभ ॥ १४ ॥ एष
कौरवयोधानां कृत्वा घोरमुपद्रवम् । तव प्राणैः प्रियतमः
किरीटिन्नेति सात्यकिः ॥ १५ ॥ एष द्रोणं तथा भोजं कृतवर्माण-
मेव च । कदर्थीकृत्य विशिखैः फाल्गुनाभ्येति सात्यकिः ॥ १६ ॥
धर्मराजप्रियान्वेषी हत्वा योधान् वरान् वरान् । शूरश्चैव
कृतास्त्रश्च फाल्गुनाभ्येति सात्यकिः ॥ १७ ॥ कृत्वा सुदुष्करं कर्म
सैन्यमध्ये महाबलः । तव दर्शनमन्विच्छन् पाण्डवाभ्येति सात्यकिः
॥ १८ ॥ बहूनेकरथेनाजौ योधयित्वा महारथान् । आचार्य-
प्रमुखान् पार्थं प्रायात्येष स सात्यकिः ॥ १९ ॥ स्वबाहुबल-
माश्रित्य विदार्य्य च वरूथिनीम् । प्रेषितो धर्मपुत्रेण पार्थैषो-
ऽभ्येति सात्यकिः ॥ २० ॥ यस्य नास्ति समो योधः कौरवेषु
कथञ्चन । सोऽयमायाति कौन्तेय सात्यकिर्युद्धदुर्मदः ॥ २१ ॥
कुरुसैन्याद्विमुक्तो वै सिंहो मध्याद्गवामिव । निहत्य बहुला

येना पार्थपोऽस्येति सात्यकिः ॥ २२ ॥ एष राजसहस्राणां
वक्त्रैः पङ्कजसन्निभैः । आस्तीर्य वसुधां पार्थ क्षिप्रमायाति
सात्यकिः ॥ २३ ॥ एष दुर्य्योधनं जित्वा भ्रातृभी रक्षितं रणे ।
निहत्य जलसन्धञ्च क्षिप्रमायाति सात्यकिः ॥ २४ ॥ रुधिरौघवतीं
कृत्वा नदीं शोणितकर्द्दमाम् । तृणवद्व्यस्य कौरव्यानेष आयाति
सात्यकिः ॥ २५ ॥ ततोऽप्रहृष्टः कौन्तेयः केशवं वाक्यमब्रवीत् ।
न मे प्रियं महाबाहो यन्मामभ्येति सात्यकिः ॥ २६ ॥ न हि
जानामि वृत्तान्तं धर्म्मराजस्य केशव । सात्वतेन विहीनः स
यदि जीवति वा न वा ॥ २७ ॥ एतेन हि महाबाहो रक्षितव्यः
स पार्थिवः । तमेष कथमुत्सृज्य मम कृष्ण पदानुगः ॥ २८ ॥
राजा द्रोणाय चोत्सृष्टः सैन्धवश्चानिपातितः । प्रत्युद्याति च
शैनेयमेष भूरिश्रवा रणे ॥ २९ ॥ सोऽयं गुरुतरो भारः सैन्ध
वार्थे समाहितः । ज्ञातव्यश्च हि मे राजा रक्षितव्यश्च सात्यकिः
॥ ३० ॥ जयद्रथश्च हन्तव्यो लम्बते च दिवाकरः । श्रान्तश्चैव
महाबाहुरल्पप्राणश्च साम्प्रतम् ॥ ३१ ॥ परिश्रान्ता हयाश्चास्य
हययन्ता च माधव । न च भूरिश्रवाः श्रान्तः ससहायश्च केशव
॥ ३२ ॥ अपीदानीं भवेदस्य क्षेममस्मिन् समागमे । कच्चिन्न
सागरं तीर्त्त्वा सात्यकिः सत्यविक्रमः ॥ ३३ ॥ गोष्पदं प्राप्य सीदेत
महौजाः शिनिपुङ्गवः । अपि कौरव्यमुख्येन कृतास्त्रेण महात्मना
॥ ३४ ॥ समेत्य भूरिश्रवसा स्वस्तिमान् सात्यकिर्भवेत् । व्यति
क्रममिमं मन्ये धर्म्मराजस्य केशव ॥ ३५ ॥ आचार्य्याद्भयमुत्सृज्य
यः प्रैषयत सात्यकिम् । ग्रहणं धर्म्मराजस्य खगः श्येन इवा
मिषम् । नित्यमाशंसते द्रोणः कच्चित् स्यात् कुशली नृपः ॥ ३६ ॥

इति द्रोणपर्व्वणि जयद्रथवधपर्व्वणि सात्यक्यर्ज्जुनदर्शने
एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥

---

सञ्जय उवाच। तमापतन्तं सम्प्रेक्ष्य सात्वतं युद्धदुर्मदम्। औघाद्भूरिश्रवा राजन् सहसा समुपाद्रवत् ॥ १ ॥ तमब्रवीन्महाराज कौरव्यः शिनिपुङ्गवम्। अद्य प्राप्तोऽसि दिष्ट्या मे चक्षुर्विषयमित्युत ॥ २ ॥ चिराभिलषितं काममहं प्राप्स्यामि संयुगे। न हि मे मोक्ष्यसे जीवन् यदि नोत्सृजसे रणम् ॥ ३ ॥ अद्य त्वां समरे हत्वा नित्यं शूराभिमानिनम्। नन्दयिष्यामि दाशार्ह कुरुराजं सुयोधनम् ॥ ४ ॥ अद्य मद्बाणनिर्दग्धं पतितं धरणीतले। द्रक्ष्यतस्त्वां रणे वीरौ सहितौ केशवार्ज्जुनौ ॥ ५ ॥ अद्य धर्मसुतो राजा श्रुत्वा त्वां निहतं मया। सव्रीडो भविता सद्यो येनासीह प्रवेशितः ॥ ६ ॥ अद्य मे विक्रमं पार्थो विज्ञास्यति धनञ्जयः। त्वयि भूमौ विनिहते शयाने रुधिरोक्षिते ॥ ७ ॥ चिराभिलषितो ह्येष त्वया सह समागमः। पुरा देवासुरे युद्धे शक्रस्य बलिना यथा ॥ ८ ॥ अद्य युद्धं महावीरं तव दास्यामि सात्वत। ततो ज्ञास्यसि तत्त्वेन मद्वीर्य्यबलपौरुषम् ॥ ९ ॥ अद्य संयमनीं याता मया त्वं निहतो रणे। यथा रामानुजेनाजौ रावणिर्लक्ष्मणेन ह ॥ १० ॥ अद्य कृष्णश्च पार्थश्च धर्मराजश्च माधव। हते त्वयि निरुत्साहा रणं त्यक्ष्यन्त्यसंशयम् ॥ ११ ॥ अद्य तेऽपचितिं कृत्वा शितैर्माधव सायकैः। तत् स्त्रियो नन्दयिष्यामि ये त्वया निहता रणे ॥ १२ ॥ चक्षुर्विषयसम्प्राप्तो न त्वं माधव मोक्ष्यसे। सिंहस्य विषयं प्राप्तो यथा क्षुद्रमृगस्तथा ॥ १३ ॥ युयुधानस्तु तं राजन् प्रत्युवाच हसन्निव। कौरवेय न सन्त्रासो विद्यते मम संयुगे ॥ १४ ॥ नाहं भीषयितुं शक्यो वाङ्मात्रेण तु केवलम्। स मां निहन्यात् सङ्ग्रामे यो मां कुर्य्यान्निरायुधम् ॥ १५ ॥ समास्तु शाश्वतीर्हन्याद्यो मां हन्याद्धि संयुगे। किं वृथोक्तेन बहुना कर्म्मणा तत् समाचर ॥ १६ ॥ शारदस्येव मेघस्य गर्ज्जितं निष्फलं हि ते। श्रुत्वैतद्गर्ज्जितं वीर

हास्यं हि मम जायते ॥ १७ ॥ चिरकालेप्सितं लोके युद्ध-
मद्यास्तु कौरव । वर्तते मे मतिस्तात तव युद्धाभिकाङ्क्षिणो
॥ १८ ॥ नाहत्वाहं निवर्तिष्ये त्वामद्य पुरुषाधम । अन्योऽन्यं
तौ तथा वाग्भिस्तक्षन्तौ नरपुङ्गवौ ॥ १९ ॥ जिघांसू परमक्रुद्धा-
वभिजघ्नतुराहवे । समेतौ तौ महेष्वासौ शुष्मिणौ स्पर्धिनौ
रणे ॥ २० ॥ द्विरदाविव संक्रुद्धौ वाशितार्थे मदोत्कटौ । भूरि-
श्रवाः सात्यकिश्च ववर्षतुररिन्दमौ ॥ २१ ॥ शरवर्षाणि घोराणि
मेघाविव परस्परम् । सौमदत्तिस्तु शैनेयं प्रच्छाद्येषुभिराशुगैः
॥ २२ ॥ जिघांसुर्भरतश्रेष्ठ विव्याध निशितैः शरैः । दशभिः
सात्यकिं विद्ध्वा सौमदत्तिरथापरान् ॥ २३ ॥ मुमोच निशितान्
बाणान् जिघांसुः शिनिपुङ्गवम् । तानस्य विशिखांस्तीक्ष्णानन्त-
रिक्षे विशाम्पते ॥ २४ ॥ अप्राप्तानस्त्रमायाभिरग्रसत् सात्यकिः
प्रभो । तौ पृथक् शस्त्रवर्षाभ्यामवर्षतां परस्परम् ॥ २५ ॥
उत्तमाभिजनौ वीरौ कुरुवृष्णियशस्करौ । तौ नखैरिव शार्दूलौ
दन्तैरिव महाद्विपौ ॥ २६ ॥ रथशक्तिभिरन्योऽन्यं विशिखैश्चाप्य-
कृन्तताम् । निर्भिन्दन्तौ हि गात्राणि विक्षरन्तौ च शोणितम्
॥ २७ ॥ व्यष्टम्भयेतामन्योऽन्यं प्राणद्यूताभिदेविनौ । एवमुत्तम-
कर्माणौ कुरुवृष्णियशस्करौ ॥ २८ ॥ परस्परमयुध्येतां वारणा-
विव यूथपौ । तावदीर्घेण कालेन ब्रह्मलोकपुरस्कृतौ ॥ २९ ॥
जिगीषन्तौ परं स्थानमन्योऽन्यं सञ्जगर्जतुः । सात्यकिः सौम-
दत्तिश्च शरवृष्ट्या परस्परम् ॥ ३० ॥ हृष्टानां धार्तराष्ट्राणां
पश्यतामभ्यवर्षताम् । सम्प्रैक्षन्त जनास्तौ तु युध्यमानौ युधाम्-
पती ॥ ३१ ॥ यूथपौ वाशिताहेतोः प्रयुद्धाविव कुञ्जरौ ।
अन्योऽन्यस्य हयान् हत्वा धनुषी विनिकृत्य च ॥ ३२ ॥ विरथा-
वसियुद्धाय समेयातां महारणे । आर्षभे चर्मणी चित्रे प्रगृह्य
विपुले शुभे ॥ ३३ ॥ विकोशौ चाप्यसी कृत्वा समरे तौ विचेरतुः ।

चरन्तौ विविधान्मार्गान्मण्डलानि च भागशः ॥ ३४ ॥ मुहुराज-
घ्नतुः क्रुद्धावन्योन्यमरिमर्दनौ । खड्गौ चित्रवर्माणौ स-
निष्काङ्गदभूषणौ ॥ ३५ ॥ भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं विप्लुतं
सृतम् । सम्पातं समुदीर्णं च दर्शयन्तौ यशस्विनौ ॥ ३६ ॥
खड्गाभ्यां सम्प्रजह्राते परस्परमरिन्दमौ । उभौ छिद्रैषिणौ
वीरावुभौ चित्रं ववल्गतुः ॥ ३७ ॥ दर्शयन्तावुभौ शिक्षां लाघवं
सौष्ठवं तथा । रणे रणकृतां श्रेष्ठावन्योन्यं पर्यकर्षताम् ॥ ३८ ॥
मुहूर्तमिव राजेन्द्र समाहत्य परस्परम् । पश्यतां सर्वसैन्यानां
वीरावाश्वसतां पुनः ॥ ३९ ॥ असिभ्यां चर्मणी चित्रे शतचन्द्रे
नराधिप । निकृत्य पुरुषव्याघ्रौ बाहुयुद्धं प्रचक्रतुः ॥ ४० ॥
व्यूढोरस्कौ दीर्घभुजौ नियुद्धकुशलावुभौ । बाहुभिः समसज्जेता-
मायसैः परिघैरिव ॥ ४१ ॥ तयो राजन् भुजाघातनिग्रहप्रग्रहा-
स्तथा । शिक्षाबलसमुद्भूताः सर्वयोधप्रहर्षणाः ॥ ४२ ॥ तयो-
र्नृवरयो राजन् समरे युध्यमानयोः । भीमोऽभवन्महाशब्दो वज्र-
पर्वतयोरिव ॥ ४३ ॥ द्विपाविव विषाणाग्रैः शृङ्गैरिव महर्षभौ ।
भुजयोक्त्रावबन्धैश्च शिरोभ्यां चावघातनैः ॥ ४४ ॥ पादावकर्ष-
सन्दानैस्तोमराङ्कुशपातनैः । पादोदरविबन्धैश्च भूमावुद्भ्रमणै-
स्तथा ॥ ४५ ॥ गतप्रत्यागताक्षेपैः पातनोत्थानसम्प्लुतैः । युयु-
धाते महात्मानौ कुरुसात्वतपुङ्गवौ ॥ ४६ ॥ द्वात्रिंशत्करणानि
स्युर्यानि युद्धानि भारत । तान्यदर्शयतां तत्र युध्यमानौ महा-
बलौ ॥ ४७ ॥ क्षीणायुधे सात्वते युध्यमाने ततोऽब्रवीदर्जुनं
वासुदेवः । पश्यस्वैनं विरथं युध्यमानं रणे वरं सर्वधनुर्धराणाम्
॥ ४८ ॥ प्रविष्टो भारतीं भित्त्वा तव पाण्डव पृष्ठतः । योधितश्च
महावीर्यैः सर्वैर्भारत भारतैः ॥ ४९ ॥ परिश्रान्तो युधां श्रेष्ठः
सम्प्राप्तो भूरिदक्षिणम् । युद्धकाङ्क्षी समायान्तं नैतत् सममिवा-
र्जुन ॥ ५० ॥ ततो भूरिश्रवाः क्रुद्धः सात्यकिं युद्धदुर्मदम् ।

उद्यम्याभ्यहनद्राजन् मत्तो मत्तमिव द्विपम् ॥ ५१ ॥ रथस्थयो-
र्द्वयोर्युद्धे क्रुद्धयोर्धनुर्धरयोः । केशवार्जुनयो राजन् समरे
प्रेक्षमाणयोः ॥ ५२ ॥ अथ कृष्णो महाबाहुरर्जुनं प्रत्यभाषत ।
पश्य वृष्ण्यन्धकव्याघ्रं सोमदत्तिवशं गतम् ॥ ५३ ॥ परिश्रान्तं
गतं भूमौ कृत्वा कर्म सुदुष्करम् । तवान्तेवासिनं शूरं पालया-
र्जुन सात्यकिम् ॥ ५४ ॥ न वशं यज्ञशीलस्य गच्छेदेष वरो-
ऽर्जुन । त्वत्कृते पुरुषव्याघ्र तदाशु क्रियतां विभो ॥ ५५ ॥
अथाब्रवीत् हृष्टमना वासुदेवं धनञ्जयः । पश्य वृष्णिप्रवीरेण
क्रीडन्तं कुरुपुङ्गवम् ॥ ५६ ॥ महाद्विपेनेव वने मत्तेन हरियूथ-
पम् । इत्येवं भाषमाणे तु पाण्डवे वै धनञ्जये ॥ ५७ ॥ हाहा-
कारो महानासीत् सैन्यानां भरतर्षभ । यदुद्यम्य महाबाहुः
सात्यकिं न्यहनद्भुवि ॥ ५८ ॥ स सिंह इव मातङ्गं विकर्षन्
भूरिदक्षिणः । व्यरोचत कुरुश्रेष्ठः सात्वतप्रवरं युधि ॥ ५९ ॥
अथ कोशाद्विनिष्कृष्य खड्गं भूरिश्रवा रणे । मूर्द्धजेषु निज-
ग्राह पदा चोरस्यताडयत् ॥ ६० ॥ ततोऽस्य छेत्तुमारब्धः शिरः
कायात् सकुण्डलम् । तावत् क्षणं सात्वतोऽपि शिरः सम्भ्रमय-
स्त्वरन् ॥ ६१ ॥ यथा रथाङ्गं कौलालो दण्डविद्धन्तु भारत ।
तथैव भूरिश्रवसो बाहुना केशधारिणा ॥ ६२ ॥ तं तथा परि-
कृष्यन्तं दृष्ट्वा सात्वतमाहवे । वासुदेवस्ततो राजन् भूयोऽर्जुन-
मभाषत ॥ ६३ ॥ पश्य वृष्ण्यन्धकव्याघ्रं सोमदत्तिवशं गतम् ।
तव शिष्यं महाबाहो धनुष्यनवरं त्वया ॥ ६४ ॥ असत्यो विक्रमः
पार्थ यत्र भूरिश्रवा रणे । विशेषयति वार्ष्णेयं सात्यकिं सत्य-
विक्रमम् ॥ ६५ ॥ एवमुक्तो महाबाहुर्वासुदेवेन पाण्डवः ।
मनसा पूजयामास भूरिश्रवसमाहवे ॥ ६६ ॥ विकर्षन् सात्वत-
श्रेष्ठं क्रीडमान इवाहवे । संहर्षयति मां भूयः कुरूणां कीर्त्ति-
वर्द्धनः ॥ ६७ ॥ प्रवरं वृष्णिवीराणां यन्न हन्याद्धि सात्यकिम् ।

महाद्विपमिवारण्ये मृगेन्द्र इव कर्षति ॥ ६७ ॥ एवन्तु मनसा राजन् पार्थं सम्पूज्य कौरवम् । वासुदेवं महावाहुरर्ज्जुनः प्रत्यभाषत ॥ ६८ ॥ सैन्धवे सक्तदृष्टित्वान्नैनं पश्यामि माधव । एष त्वसुकरं कर्म यादवार्थे करोम्यहम् ॥ ६९ ॥ इत्युक्त्वा वचनं कुर्व्वन् वासुदेवस्य पाण्डव । ततः क्षुरप्रं निशितं गाण्डीवे समयोजयत् ॥ ७० ॥ पार्थवाहुविसृष्टः स महोल्केव नभश्च्युता । सखड्‌गं यज्ञशीलस्य साङ्गदं बाहुमच्छिनत् ॥ ७१ ॥

इति द्रोणपर्व्वणि जयद्रथवधपर्व्वणि भूरिश्रवोबाहुच्छेदे द्विचत्वारिंशदधिकशततोऽध्यायः ॥ १४२ ॥

---

सञ्जय उवाच । स बाहुर्न्यपतद्भूमौ सखड्‌गः सशुभाङ्गदः । आदधज्जीवलोकस्य दुःखमद्भुतमुत्तमम् ॥ १ ॥ प्रहरिष्यन् हृतो बाहुरदृश्येन किरीटिना । वेगेन न्यपतद्भूमौ पञ्चास्य इव पन्नगः ॥ २ ॥ स मोघं कृतमात्मानं दृष्ट्वा पार्थेन कौरवः । उत्सृज्य सात्यकिं क्रोधाद्गर्हयामास पाण्डवम् ॥ ३ ॥

भूरिश्रवा उवाच । नृशंसं बत कौन्तेय कर्म्मेदं कृतवानसि । अपश्यतोऽविषक्तस्य यन्मे बाहुमचिच्छिदः ॥ ४ ॥ किन्तु वक्ष्यसि राजानं धर्म्मपुत्रं युधिष्ठिरम् । किं कुर्व्वाणो मया सङ्ख्ये हतो भूरिश्रवा रणे ॥ ५ ॥ इदमिन्द्रेण ते साक्षादुपदिष्टं महात्मना । अस्त्रं रुद्रेण वा पार्थ द्रोणेनाथ कृपेण वा ॥ ६ ॥ ननु नामास्त्रधर्म्मज्ञस्त्वं लोकेऽभ्यधिकः परैः । अयुध्यमानस्य कथं रणे प्रहृतवानसि ॥ ७ ॥ न प्रमत्ताय भीताय विरथाय प्रयाचते । व्यसने वर्त्तमानाय प्रहरन्ति मनस्विनः ॥ ८ ॥ इदन्तु नीचाचरितमसत्पुरुषसेवितम् । कथमाचरितं पार्थ पापकर्म सुदुष्करम् ॥ ९ ॥ आर्य्येण सुकरं ह्याहुरार्य्यकर्म धनञ्जय । अनार्य्यकर्म

स्वार्थेण सुदुष्करतमं भुवि ॥ १० ॥ येषु येषु नरः पार्थ यत्र यत्र
च वर्त्तते । आशु तच्छीलतामेति तदिदं त्वयि दृश्यते ॥ ११ ॥
कथं हि राजवंश्यस्त्वं कौरवेयो विशेषतः । क्षत्रधर्मादपक्रान्तः
सुवृत्तचरितव्रतः ॥ १२ ॥ इदन्तु यदतिक्षुद्रं वार्ष्णेयार्थे कृतं
त्वया । वासुदेवमतं नूनं नैतत्त्वय्युपपद्यते ॥ १३ ॥ को हि नाम
प्रमत्ताय परेण सह युध्यते । ईदृशं व्यसनं दद्याद्यो न कृष्णसखो
भवेत् ॥ १४ ॥ व्रात्याः संश्लिष्टकर्माणः प्रकृत्यैव विगर्हिताः ।
वृष्ण्यन्धकाः कथं पार्थ प्रमाणं भवता कृताः । एवमुक्तो रणे
पार्थो भूरिश्रवसमब्रवीत् ॥ १५ ॥

अर्ज्जुन उवाच । व्यक्तं हि जीर्य्यमाणोऽपि बुद्धिं जरयते
नरः । अनर्थकमिदं सर्वं यत्त्वया व्याहृतं प्रभो ॥ १६ ॥ जानन्
नैव हृषीकेशं गर्हसे मां च पाण्डवम् । सङ्ग्रामाणां हि धर्मज्ञः
सर्वशास्त्रार्थपारगः ॥ १७ ॥ न चाधर्ममहं कुर्य्यां जानंश्चैव हि
मुह्यसे । युध्यन्ति क्षत्रिया शत्रून् स्वैः स्वैः परिवृता नरैः ॥ १८ ॥
भ्रातृभिः पितृभिः पुत्रैस्तथा सम्बन्धिबान्धवैः । वयस्यैरथ मित्रैश्च
ते च बाहुं समाश्रिताः ॥ १९ ॥ स कथं सात्यकिं शिष्यं सुख-
सम्बन्धिनमेव च । अस्मदर्थे च युध्यन्तं त्यक्त्वा प्राणान् सुदुस्त्यजान्
॥ २० ॥ मम बाहुं रणे राजन् दक्षिणं युद्धदुर्म्मदम् । न चात्मा
रक्षितव्यो वै राजन्नपागतेन हि ॥ २१ ॥ यो यत्र युध्यतेऽर्थेषु
स वै रक्ष्यो नराधिप । तै रक्ष्यमाणैश्च नृपो रक्षितव्यो महा-
मृधे ॥ २२ ॥ यद्यहं सात्यकिं पश्ये वध्यमानं महारणे । तत-
स्तस्य वियोगेन पापं मेऽनर्थतो भवेत् ॥ २३ ॥ रक्षितश्च मया
यस्मात् तस्मात् क्रुध्यसि किं मयि । यच्च मे गर्हसे राजन्नन्येन सह
सङ्गतम् ॥ २४ ॥ अह त्वया विनिकृतस्तत्र मे बुद्धिविभ्रमः । कवचं
धुन्वतस्तस्य रथमारोहतः स्वयम् ॥ २५ ॥ धनुर्ज्यां कर्षतश्चैव
युध्यतः सह शत्रुभिः । एवं रथगजाकीर्णे हयपत्तिसमाकुले ॥ २६ ॥

सिंहनादोदतरवे गम्भीरे सैन्यसागरे। स्वे परेश्च समेतैश्च सात्त्वतेन च संयुगे ॥ २७ ॥ एकस्यैकेन हि कथं सङ्ग्रामः स भविष्यति। बहुभिः सह सङ्गम्य निर्जित्य च महारथान् ॥२८॥ श्रान्तश्च श्रान्तवाहश्च विमना शस्त्रपीडितः। ईदृशं सात्यकिं सङ्ख्ये निर्जित्य च महारथम् ॥ २९ ॥ अधिकत्वं विजानीषे स्ववीर्य्यवशमागतम्। यदिच्छसि शिरश्चास्य असिना हन्तुमाहवे ॥ ३० ॥ तथा कृच्छ्र-गतश्चैव सात्यकिः कः क्षमिष्यति। त्वं वै विगर्हयात्मानमात्मानं यो न रक्षसि। कथं करिष्यसे वीर यो वा त्वां संश्रयेज्जन ॥ ३१ ॥

सञ्जय उवाच। एवमुक्तो महाबाहुर्यूपकेतुर्महायशाः। युयुधानं समुत्सृज्य रणे प्रायमुपाविशत् ॥ ३२ ॥ शरानास्तीर्य्य सव्येन पाणिना पुण्यलक्षणः। यियासुर्ब्रह्मलोकाय प्राणान् प्राणेष्वथाजुहोत् ॥ ३३ ॥ सूर्य्ये चक्षुः समाधाय प्रसन्नं सलिले मनः। ध्यायन्महोपनिषदं योगयुक्तोऽभवन्मुनिः ॥ ३४ ॥ ततः स सर्व्वसेनाया जनः कृष्णधनञ्जयौ। गर्हयामास तच्चापि शशंस पुरुषर्षभम् ॥ ३५ ॥ निन्द्यमानौ तथा कृष्णौ नोचतुः किञ्चिदप्रियम्। तथा प्रशस्यमानश्च नाहृष्यद्यूपकेतनः ॥ ३६ ॥ तांस्तथावादिनो राजन् पुत्रांस्तव धनञ्जयः। अमृष्यमाणो मनसा तेषां तस्य च भाषितम् ॥ ३७ ॥ असङ्क्रुद्धमना वाच स्मारयन्निव भारत। उवाच पाण्डुतनयः साक्षेपमिव फाल्गुनः ॥ ३८ ॥ मम सर्व्वेऽपि राजानो जानन्त्येव महाव्रतम्। न शक्यो मामको हन्तुं यो मे स्याद्बाणगोचरे ॥ ३९ ॥ यूपकेतो समीक्ष्यैतन्न मामर्हसि गर्हितुम्। न हि धर्म्ममविज्ञाय युक्तं गर्हयितुं परम् ॥ ४० ॥ आत्तशस्त्रस्य हि रणे वृष्णिवीरं जिघांसतः। यदहं बाहुमच्छेत्स्यन्न स धर्म्मो विगर्हितः ॥ ४१ ॥ न्यस्तशस्त्रस्य बालस्य विरथस्य विवर्म्मणः। अभिमन्योर्व्वधं तात धार्म्मिकः कोऽनुपूजयेत् ॥ ४२ ॥ एवमुक्तः स पार्थेन शिरसा भूमिमस्पृशत्। पाणिना चैव सव्येन

प्राहिणोद्दक्षिणम् ॥ ४३ ॥ एतत् पार्थस्यानुवचस्तत श्रुत्वा महाद्युतिः। यूपकेतुर्महाराज मूर्ध्नोमासीदवाङ्मुखः ॥ ४४ ॥

अर्जुन उवाच। या प्रीतिर्धर्मराजे मे भीमे च बलिनां वरे। नकुले सहदेवे च सा मे त्वयि महाग्रज ॥ ४५ ॥ मया त्वमनुज्ञातः कृष्णेन च महात्मना। गच्छ पुण्यकृतांल्लोकान् शिबिरौशीनरो यथा ॥ ४६ ॥

वासुदेव उवाच। ये लोका मम विमला सकृद्विभान्ति ब्रह्माद्यैः सुरवृषभैरपीष्यमाणाः। तान् क्षिप्रं व्रज सततान्निहोत्रयाजिन्मत्तुल्यो भव गरुडोत्तमाङ्गयानः ॥ ४७ ॥

सञ्जय उवाच। उत्थितः स तु शैनेयो विमुक्तः सौमदत्तिना। खड्गमादाय चिच्छित्सुः शिरस्तस्य महात्मनः ॥ ४८ ॥ निहतं पाण्डुपुत्रेण प्रमत्तं भूरिदक्षिणम्। इयेष सात्यकिर्हन्तुं शलाग्रजमकल्मषम् ॥ ४९ ॥ निकृत्तभुजमासीनं छिन्नहस्तमिव द्विपम्। क्रोशतां सर्वसैन्यानां निन्द्यमानः सुदुर्मनाः ॥ ५० ॥ वार्यमाणः स कृष्णेन पार्थेन च महात्मना। भीमेन चक्ररक्षाभ्यामश्वत्थाम्ना कृपेण च ॥ ५१ ॥ कर्णेन वृषसेनेन सैन्धवेन तथैव च। विक्रोशतां च सैन्यानामवधीत्तं यतव्रतम् ॥ ५२ ॥ प्रायोपविष्टाय रणे पार्थेन छिन्नबाहवे। सात्यकिः कौरवेयाय खड्गेनापाहरच्छिरः ॥ ५३ ॥ नाभ्यनन्दन्त सैन्यानि सात्यकिन्तेन कर्मणा। अर्जुनेन हतं पूर्वं यज्जघान कुरूद्वहम् ॥ ५४ ॥ सहस्राक्षसमं तत्र सिद्धचारणमानवाः। भूरिश्रवसमालोक्य युद्धे प्रायगतं हतम् ॥ ५५ ॥ अपूजयन्त तं देवा विस्मितास्तस्य कर्मभिः। पक्षवादांश्च बहून् प्रावदंस्तव सैनिकाः ॥ ५६ ॥ न वार्ष्णेयस्यापराधो भवितव्यं हि तत्तथा। तस्मान्मन्युर्न वः कार्यः क्रोधो दुःखतरो नृणाम् ॥ ५७ ॥ हन्तव्यश्चैष वीरेण नात्र कार्या विचारणा। विहितो ह्यस्य धात्रैव मृत्युः सात्यकिराहवे ॥ ५८ ॥

।। सात्यकिरुवाच।। न हन्तव्यो न हन्तव्य इति यन्मां प्रभाषत। धर्मवादैरधर्मिष्ठा धर्मकञ्चुकमास्थिताः ॥ ५९ ॥ यदा बालः सुभद्रायाः सुतः शस्त्रविनाकृतः। युष्माभिर्निहतो युद्धे तदा धर्मः क्व वो गतः ॥ ६० ॥ मया त्वेतत् प्रतिज्ञातं क्षेपे कस्मिंश्चिदेव हि। यो मां निष्पिष्य सङ्ग्रामे जीवन् हन्यात् पदा रुषा ॥ ६१ ॥ स मे वध्यो भवेच्छत्रुर्यद्यपि स्यान्मुनिव्रतः। चेष्टमानं प्रतीघाते सभुजं मां सचक्षुषः ॥ ६२ ॥ मन्यध्वं मृतमित्येवमेतद्वो बुद्धिलाघवम्। युक्तो ह्यस्य प्रतीघातः कृतो मे कुरुपुङ्गवाः ॥ ६३ ॥ यत्तु पार्थेन मे स्नेहात् प्रतिज्ञा चाभिरक्षिता। सखड्गोऽस्य हृतो बाहुरेतेनैवास्मि वञ्चितः ॥ ६४ ॥ भवितव्यञ्च यद्भावि दैवं चेष्टयतीव च। सोऽयं हतो विमर्देऽस्मिन् किमत्राधर्मचेष्टितम् ॥ ६५ ॥ अपि चायं पुरा गीतः श्लोको वाल्मीकिना भुवि। न हन्तव्याः स्त्रिय इति यद्ब्रवीषि प्लवङ्गम ॥ ६६ ॥ सर्वकालं मनुष्येण व्यवसायवता सदा। पीडाकरममित्राणां यत् स्यात्कर्त्तव्यमेव तत् ॥ ६७ ॥

सञ्जय उवाच। एवमुक्ते महाराज सर्वे पाण्डवकौरवाः। न स्म किञ्चिदभाषन्त मनसा समपूजयन् ॥ ६८ ॥ मन्त्रामिपूतस्य महाध्वरेषु यशस्विनो भूरिसहस्रदस्य। मुनेरिवारण्यगतस्य तस्य न तस्य कश्चिद्वधमभ्यनन्दत् ॥ ६९ ॥ सुनीलकेशं वरदस्य तस्य शूरस्य पारावतलोहिताक्षम्। अश्वस्य मेध्यस्य शिरो निकृत्तं न्यस्तं हविर्द्धानमिवान्तरेण ॥ ७० ॥ स तेजसा शस्त्रहतेन पूतो महाहवे देहवरं विसृज्य। आक्रामदूर्द्ध्वं वरदो वरार्हो व्यावृत्य धर्मेण परेण रोदसी ॥ ७१ ॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि भूरिश्रवोवधे

विंशत्यधिकशततमोऽध्यायः ॥ १४२ ॥

धृतराष्ट्र उवाच । अजितो द्रोणराधेयविकर्णकृतवर्मभिः । तीर्णः सैन्यार्णवं वीरः प्रतिश्रुत्य युधिष्ठिरे ॥ १ ॥ स कथं कौरवेयेण समरेष्वनिवारितः । निगृह्य भूरिश्रवसा बलाद्भुवि निपातितः ॥ २ ॥

सञ्जय उवाच । शृणु राजन्निहोत्पत्तिं शैनेयस्य यथा पुरा । यथा च भूरिश्रवसो यत्र ते संशयो नृप ॥ ३ ॥ अत्रेः पुत्रोऽभवत् सोमः सोमस्य तु बुधः स्मृतः । बुधस्यासीन्महेन्द्राभः पुत्र आसीत् पुरूरवाः ॥ ४ ॥ पुरूरवस आयुस्तु आयुषो नहुषः सुतः । नहुषस्य ययातिस्तु राजर्षिर्देवसम्मितः ॥ ५ ॥ ययातेर्देवयान्यान्तु यदुर्ज्येष्ठोऽभवत् सुतः । यदोरभूदन्ववाये देवमीढ इति श्रुतः ॥ ६ ॥ यादवस्तस्य तु सुतः शूरस्त्रैलोक्यसम्मतः । शूरस्य शौनिर्नृवरो वसुदेवो महायशाः ॥ ७ ॥ धनुष्यनवरः शूरः कार्त्तवीर्य्यसमो युधि । तद्वीर्य्यस्तस्य तत्रैव कुले शिनिरभून्नृप ॥ ८ ॥ एतस्मिन्नेव काले तु देवकस्य महात्मनः । दुहितुः स्वम्वरे राजन् सर्वक्षत्रसमागमे ॥ ९ ॥ तत्र वै देवकीं देवीं वसुदेवार्थमाशु वै । निर्जित्य पार्थिवान् सर्वान्रथमारोपयच्छिनिः ॥ १० ॥ तां दृष्ट्वा देवकीं शौरेरथस्थां पुरुषर्षभ । नामृष्यत महातेजाः सोमदत्तः शिनेर्नृप ॥ ११ ॥ तयोर्युद्धमभूद्राजन् दिनार्द्धचित्रमद्भुतम् । बाहुयुद्धं सुबलिनोः प्रसक्तं पुरुषर्षभ ॥ १२ ॥ शिनिना सोमदत्तस्तु प्रसह्य भुवि पातितः । असिमुद्यम्य केशेषु प्रगृह्य च पदा हतः ॥ १३ ॥ मध्ये राजसहस्राणां प्रेक्षकाणां समन्ततः । कृपया च पुनस्तेन च जीवेति विसर्जितः ॥ १४ ॥ तदवस्थः कृतस्तेन सोमदत्तोऽथ मारिष । प्रसादयन्महादेवममर्षवशमास्थितः ॥१५॥ तस्य तुष्टो महादेवो वरदानां महाप्रभुः । वरेण छन्दयामास स तु वव्रे वरं नृपः ॥ १६ ॥ पुत्रमिच्छामि भगवन् यो निहन्याच्छिनेः सुतम् । मध्ये राजसहस्राणां पदा हन्याच्च संयुगे ॥ १७ ॥

तस्य तद्वचनं श्रुत्वा सोमदत्तस्य पार्थिव। एवमस्त्विति तत्रोक्ता
स देवोऽन्तरधीयत ॥ १८ ॥ स तेन वरदानेन लब्धवान् भूरि-
दक्षिणम्। न्यपातयच्च समरे सौमदत्तिं शिने सुतम् ॥ १९ ॥
पश्यतां सर्व्वसैन्यानां पदा चैनमताड़यत्। एतत्ते कथितं राजन्
यन्मां त्वं परिपृच्छसि ॥ २० ॥ न च शक्यो रणे जेतु सात्वतो
मनुजर्षभैः। लब्धलक्ष्याश्च सङ्ग्रामे बहवश्चित्रयोधिनः ॥ २१ ॥
देवदानवगन्धर्व्वां विजेतारो ह्यविस्मिताः। स्ववीर्य्यविजये युक्ता
नैते परपरिग्रहाः ॥ २२ ॥ न तुल्यं वृष्णिभिरिह दृश्यते किञ्चन
प्रभो। भूतं भव्यं भविष्यच्च बलेन भरतर्षभ ॥ २३ ॥ न ज्ञाति-
मवमन्यन्ते वृद्धानां शासने रताः। न देवासुरगन्धर्व्वा न यक्षो-
रगराक्षसाः ॥ २४ ॥ जेतारो वृष्णिवीराणां किं पुनर्मानुषा
रणे। ब्रह्मद्रव्ये गुरुद्रव्ये ज्ञातिद्रव्येऽप्यहिंसकाः ॥ २५ ॥ एतेषां
रक्षितारश्च ये स्युः कस्याञ्चिदापदि। अर्थवन्तो न चोत्सिक्ता
ब्रह्मण्याः सत्यवादिनः ॥ २६ ॥ समर्थानपि मन्यन्ते दीनानभ्यु
द्धरन्ति च। नित्यं देवपरा दान्ता दातारश्चाविकत्थनाः ॥ २७ ॥
तेन वृष्णिप्रवीराणां चक्रं न प्रतिहन्यते। अपि मेरुं वहेत्कश्चित्
तरेद्वा मकरालयम् ॥ २८ ॥ न तु वृष्णिप्रवीराणां समेत्यान्तं
व्रजेन्नृप। एतत्ते सर्व्वमाख्यातं यत्र ते संशयो विभो। कुरु-
राज नरश्रेष्ठ तव ह्यपनयो महान् ॥ २९ ॥

इति द्रोणपर्व्वणि जयद्रथवधपर्व्वणि सात्यकिप्रशंसायां
चतुश्चत्वारिंशदधिकशततोऽध्यायः ॥ १४४ ॥

---

धृतराष्ट्र उवाच। तदवस्थे हते तस्मिन् भूरिश्रवसि कौरवे।
यथा भूयोऽभवद्युद्धं तन्ममाचक्ष्व सञ्जय ॥ १ ॥
सञ्जय उवाच। भूरिश्रवसि सङ्क्रान्ते परलोकाय भारत।

वासुदेवं महाबाहुरर्ज्जुनः समचूचुदत् ॥ २ ॥ चोदयाश्वान् भृशं कृष्ण यतो राजा जयद्रथः । प्रतिज्ञां सफलाञ्चापि कर्त्तुमर्हसि मेऽनघ ॥ ३ ॥ अस्तमेति महाबाहो त्वरमाणो दिवाकरः । एतद्धि पुरुषव्याघ्र महदभ्युद्यतं मया ॥ ४ ॥ कार्य्यं संरक्ष्यते चैव कुरुसेनामहारथैः । नास्तमेति यथा सूर्य्यो यथा सत्यं भवेद्वचः ॥ ५ ॥ चोदयाश्वांस्तथा कृष्ण यथा हन्यां जयद्रथम् । ततः कृष्णो महाबाहू रजतप्रतिमान् हयान् ॥ ६ ॥ हयज्ञश्चोदयामास जयद्रथवधं प्रति । तं प्रयान्तममोघेषुमुत्पतद्भिरिवाशुगैः ॥ ७ ॥ त्वरमाणो महाराज सेनामुख्याः समाव्रजन् । दुर्य्योधनश्च कर्णश्च वृषसेनोऽथ मद्रराट् ॥ ८ ॥ अश्वत्थामा कृपश्चैव स्वयमेव च सैन्धवः । समासाद्य तु बीभत्सुं सैन्धवं प्रमुखे स्थितम् ॥ ९ ॥ नेत्राभ्यां क्रोधदीप्ताभ्यां सम्प्रैक्षन्निर्दहन्निव । ततो दुर्य्योधनो राजा राधेयं त्वरितोऽब्रवीत् ॥ १० ॥ अर्ज्जुनं वीक्ष्य संयातं जयद्रथवधं प्रति । उवाच राजन् पुत्रस्ते कर्णं राजा सुयोधनः ॥ ११ ॥ अयं स वैकर्त्तन युद्धकालो प्रदर्शय स्वात्मबलं महात्मन् । यथा न वध्येत रणेऽर्ज्जुनेन जयद्रथः कर्ण तथा कुरुष्व ॥ १२ ॥ अल्पावशिष्टं दिवसं नृवीर विघातयस्वाद्य रिपुं शरौघैः । दिनक्षयम्प्राप्य नरप्रवीर ध्रुवं हि नः कर्ण जयो भविष्यति ॥ १३ ॥ सैन्धवे रक्ष्यमाणे तु सूर्य्यस्यास्तमनं प्रति । मिथ्याप्रतिज्ञः कौन्तेयः प्रवेक्ष्यति हुताशनम् ॥ १४ ॥ अनर्ज्जुनायाञ्च भुवि मुहूर्त्तमपि मानद । जीवितुं नोत्सहेरन् वै भ्रातरोऽस्य सहानुगाः ॥ १५ ॥ विनष्टे पाण्डवेयैश्च सशैलवनकाननाम् । वसुन्धरामिमां कर्ण भोक्ष्यामो हतकण्टकाम् ॥ १६ ॥ दैवेनोपहतः पार्थो विपरीतश्च मानद । कार्य्याकार्य्यमजानन् वै प्रतिज्ञां कृतवान् रणे ॥ १७ ॥ नूनमात्मविनाशाय पाण्डवेन किरीटिना । प्रतिज्ञेयं कृता कर्ण जयद्रथवधं प्रति ॥ १८ ॥ कथं जीवति

दुर्द्धर्षे त्वयि राधेय फाल्गुनः । अनस्तं गते आदित्ये हन्यात्
सैन्धवकं नृपम् ॥ १९ ॥ रक्षितं मद्रराजेन कृपेण च महात्मना ।
जयद्रथं रणमुखे कथं हन्याद्धनञ्जयः ॥ २० ॥ द्रौणिना रक्ष्य-
माणञ्च मया दुःशासनेन च । कथं प्राप्स्यति बीभत्सुः सैन्धवं
कालचोदितः ॥ २१ ॥ युध्यन्ते बहवः शूरा लम्बते च दिवाकरः ।
शङ्के जयद्रथं पार्थो नैव प्राप्स्यति मानद ॥ २२ ॥ स त्वं कर्ण
मया सार्द्धं शूरैश्चान्यैर्महारथैः । द्रौणिना त्वं हि सहितो मद्रे-
शेन कृपेण च ॥ २३ ॥ युध्यस्व यत्नमास्थाय परं पार्थेन संयुगे ।
एवमुक्तस्तु राधेयस्तव पुत्रेण मारिष ॥ २४ ॥ दुर्य्योधनमिदं
वाक्यं प्रत्युवाच कुरूत्तमम् । दृढलक्षेण शूरेण भीमसेनेन धन्विना
॥ २५ ॥ भृशं भिन्नतनुः सङ्ख्ये शरजालैरनेकशः । स्थातव्य-
मिति तिष्ठामि रणे सम्प्रति मानद ॥ २६ ॥ नाङ्गमिङ्गति
किञ्चिन्मे सन्तप्तस्य महेषुभिः । योत्स्यामि तु यथाशक्त्या त्वदर्थं
जीवितं मम ॥ २७ ॥ यथा पाण्डवमुख्योऽसौ न हनिष्यति
सैन्धवम् । न हि मे युध्यमानस्य सायकानस्यतः शितान् ॥ २८ ॥
सैन्धवं प्राप्स्यते वीरः सव्यसाची धनञ्जयः । यत्तु भक्तिमता
कार्य्यं सततं हितकाङ्क्षिणा ॥ २९ ॥ तत् करिष्यामि कौरव्य
जयो दैवे प्रतिष्ठितः । सैन्धवार्थे परं यत्नं करिष्याम्यद्य संयुगे
॥ ३० ॥ त्वत्प्रियार्थं महाराज जयो दैवे प्रतिष्ठितः । अद्य
योत्स्येऽर्ज्जुनमहं पौरुषं स्वव्यपाश्रितः ॥ ३१ ॥ त्वदर्थं पुरुष-
व्याघ्र जयो दैवे प्रतिष्ठितः । अद्य युद्धं कुरुश्रेष्ठ मम पार्थस्य
चोभयोः ॥ ३२ ॥ पश्यन्तु सर्व्वसैन्यानि दारुणं लोमहर्षणम् ।
कर्णकौरवयोरेवं रणे सम्भाषमाणयोः ॥ ३३ ॥ अर्ज्जुनो निशितै-
र्बाणैर्जघान तव वाहिनीम् । चिच्छेद निशितैर्भल्लैः शूराणा-
मनिवर्त्तिनाम् ॥ ३४ ॥ भुजान् परिघसङ्काशान् हस्तिहस्तो-
पमान् रणे । शिरांसि च महाबाहुश्चिच्छेद निशितैः शरैः ॥ ३५ ॥

हस्तिहस्तान् हयग्रीवान् रथाक्षांश्च समन्ततः । शोणिताक्तान्
हयारोहान् सप्रासतोमरान् ॥ ३६ ॥ क्षुरैश्चिच्छेद बीभत्सु-
र्द्विधैकैकं त्रिधैव च । हया वारणमुख्याश्च प्रापतन्त समन्ततः
॥ ३७ ॥ ध्वजाश्छत्राणि चापानि चामराणि शिरांसि च । कक्ष-
मग्निरिवोद्धतः प्रदहंस्तव वाहिनीम् ॥ ३८ ॥ अचिरेण महीं
पार्थश्चकार रुधिरोत्तराम् । हतभूयिष्ठयोधं तत् कृत्वा तव बलं
बली ॥ ३९ ॥ आससाद दुराधर्षः सैन्धवं सत्यविक्रमः । बीभत्सु-
र्भीमसेनेन सात्वतेन च रक्षितः ॥ ४० ॥ प्रबभौ भरतश्रेष्ठ
ज्वलन्निव हुताशनः । तं तथावस्थितं दृष्ट्वा त्वदीया वीर्यसम्मताः
॥ ४१ ॥ नामृष्यन्त महेष्वासाः फाल्गुनं पुरुषर्षभाः । दुर्यो-
धनश्च कर्णश्च वृषसेनोऽथ मद्रराट् ॥ ४२ ॥ अश्वत्थामा कृपश्चैव
स्वयमेव च सैन्धवः । संरब्धाः सैन्धवस्यार्थे समावृण्वन् किरी-
टिनम् ॥ ४३ ॥ नृत्यन्तं रथमार्गेषु धनुर्ज्यातलनिःस्वनैः । संग्राम-
कोविदं पार्थं सर्वे युद्धविशारदाः ॥ ४४ ॥ अभीताः पर्यवर्त्तन्त
व्यादितास्यमिवान्तकम् । सैन्धवं पृष्ठतः कृत्वा जिघांसन्तोऽर्जुना-
च्युतौ ॥ ४५ ॥ सूर्यास्तमनमिच्छन्तो लोहितायति भास्करे ।
ते भुजैर्भोगिभोगाभैर्धनूंष्यानम्य सायकान् ॥ ४६ ॥ मुमुचुः सूर्य-
रश्म्याभाञ्छतशः फाल्गुनं प्रति । तानस्तानस्यमानांश्च किरीटी
युद्धदुर्मदः ॥ ४७ ॥ द्विधा त्रिधाष्टधैकैकं छित्त्वा विव्याध तान् रणे ।
सिंहलाङ्गूलकेतुस्तु दर्शयञ्छक्तिमात्मनः ॥ ४८ ॥ शारद्वतीसुतो
राजन्नर्जुनं प्रत्यवारयत् । स विद्ध्वा दशभिः पार्थं वासुदेवञ्च
सप्तभिः ॥ ४९ ॥ अतिष्ठद्रथमार्गेषु सैन्धवं परिपालयन् । अथैनं
कौरवश्रेष्ठाः सर्व एव महारथाः ॥ ५० ॥ महता रथसङ्घेन
सर्वतः पर्यवारयन् । विस्फारयन्तश्चापानि विसृजन्तश्च सायकान्
॥ ५१ ॥ सैन्धवं पर्यरक्षन्त शासनात्तनयस्य ते । तत्र पार्थस्य
शूरस्य बाह्वोर्बलमदृश्यत ॥ ५२ ॥ इषूणामक्षयत्वञ्च धनुषो

गाण्डीवस्य च। अस्त्रैरस्त्राणि संवार्य्य द्रौणे गाण्डीवतस्य च
॥ ५३ ॥ एकैकं नवभिर्वाणैः सर्वानेव समार्पयत्। तं द्रौणिः
पञ्चविंशत्या वृषसेनश्च सप्तभिः ॥ ५४ ॥ दुर्य्योधनस्तु विंशत्या
कर्णशल्यौ त्रिभिस्त्रिभिः। त एनमभिगर्जन्तो विध्यन्तश्च पुनः पुनः
॥ ५५ ॥ विधुन्वन्तश्च चापानि सर्वतः पर्य्यवारयन्। श्लिष्टञ्च
सर्वतश्चक्रूरथमण्डलमाशु ते ॥ ५६ ॥ सूर्य्यास्तमनमिच्छन्तस्त्वर-
माणा महारथाः। त एनमभिनर्द्दन्तो विधुन्वाना धनूंषि च ॥ ५७ ॥
सिषिचुर्मार्गणैस्तीक्ष्णैर्गिरिं मेघा इवाम्बुभिः। ते महास्त्राणि
दिव्यानि तत्र राजन् व्यदर्शयन् ॥ ५८ ॥ धनञ्जयस्य गात्रे तु
शूराः परिघबाहवः। हतभूयिष्ठयोधं तत्कृत्वा तव बलं बली
॥ ५९ ॥ आससाद सुदुर्द्धर्षः सैन्धवं सत्यविक्रमः। तं कर्णः
संयुगे राजन् प्रत्यवारयदाशुगैः ॥ ६० ॥ मिषतो भीमसेनस्य
सात्वतस्य च भारत। तं पार्थो दशभिर्वाणैः प्रत्यविध्यद्रणाजिरे
॥ ६१ ॥ सूतपुत्रं महाबाहुः सर्वसैन्यस्य पश्यतः। सात्वतस्तु
त्रिभिर्वाणैः कर्णं विव्याध मारिष ॥ ६२ ॥ भीमसेनस्त्रिभिश्चैव
पुनः पार्थश्च सप्तभिः। तान् कर्णः प्रतिविव्याध षष्ट्या षष्ट्या
महारथः ॥ ६३ ॥ तद्युद्धमभवद्राजन् कर्णस्य बहुभिः सह।
तत्राद्भुतमपश्याम सूतपुत्रस्य मारिष ॥ ६४ ॥ यदेकः समरे
क्रुद्धस्त्रीन् रथान् पर्य्यवारयत्। फाल्गुनस्तु महाबाहुः कर्णं वैक-
र्त्तनं मृधे ॥ ६५ ॥ सायकानां शतेनैव सर्वमर्मस्वताडयत्।
रुधिरोक्षितसर्वाङ्गः सूतपुत्रः प्रतापवान् ॥ ६६ ॥ शरैः पञ्चाशता
वीरः फाल्गुनं प्रत्यविध्यत। तस्य तल्लाघवं दृष्ट्वा नामृष्यत रणे-
ऽर्जुनः ॥ ६७ ॥ तस्य पार्थो धनुश्छित्त्वा विव्याधैनं स्तनान्तरे।
सायकैर्नवभिर्वीरस्त्वरमाणो धनञ्जयः ॥ ६८ ॥ वधार्थं तस्य
समरे सायकं सूर्य्यवर्चसम्। चिक्षेप त्वरया युक्तस्त्वराकाले
धनञ्जयः ॥ ६९ ॥ तमापतन्तं वेगेन द्रौणिश्चिच्छेद सायकम्।

अर्द्धचन्द्रेण तीक्ष्णेन च छिन्नः प्रापतद्भुवि ॥ ७० ॥ अथान्यद्धनु-
रादाय सूतपुत्रः प्रतापवान् । सायकैर्बहुसाहस्रैश्छादयामास
पाण्डवम् ॥ ७१ ॥ तां शरवृष्टिमतुलां कर्णचापसमुत्थिताम् ।
व्यधमत् सायकैः पार्थः शलभानिव मारुतः ॥ ७२ ॥ छादया-
मास च तदा सायकैरर्जुनो रणे । पश्यतां सर्वयोधानां दर्शयन्
पाणिलाघवम् ॥ ७३ ॥ कर्णोऽपि विपतां हन्ता छादयामास
फाल्गुनम् । सायकैर्बहुसाहस्रैः कृतप्रतिकृतेप्सया ॥ ७४ ॥ तौ
वृषाविव नर्दन्तौ नरसिंहौ महारथौ । सायकैः प्रतिच्छन्नं
चक्रतुः खमजिह्मगैः ॥ ७५ ॥ अदृश्यौ च शरौघैस्तौ निघ्नतामितरे-
तरम् । पार्थोऽहमस्मि तिष्ठ त्वं कर्णोऽहं तिष्ठ फाल्गुन ॥ ७६ ॥
इत्येवं तर्जमानौ तु वाक्शल्यैस्तुदतां तदा । युध्येतां समरे वीरौ
चित्रं लघु च सुष्ठु च ॥ ७७ ॥ प्रेक्षणीयावभवतां सर्वयोधसमा-
गमे । प्रशस्यमानौ समरे सिद्धचारणवातिकैः ॥ ७८ ॥ अयु-
ध्येतां महाराज परस्परवधैषिणौ । ततो दुर्य्योधनो राजंस्तावका-
नभ्यभाषत ॥ ७९ ॥ यत्ताद्रक्षत राधेयं नाहत्वा समरेऽर्जुनम् ।
निवर्त्तिष्यति राधेय इति मामुक्तवान् वृषः ॥ ८० ॥ एतस्मिन्नन्तरे
राजन् दृष्ट्वा कर्णस्य विक्रमम् । आकर्णमुक्तैरिषुभिः कर्णस्य
चतुरो हयान् ॥ ८१ ॥ अनयन्मृत्युलोकाय चतुर्भिः श्वेतवाहनः ।
सारथिञ्चास्य भल्लेन रथनीडादपाहरत् ॥ ८२ ॥ छादयामास
च शरैस्तव पुत्रस्य पश्यतः । स छाद्यमानः समरे हताश्वो हत-
सारथिः ॥ ८३ ॥ मोहितः शरजालेन कर्त्तव्यं नाभ्यपद्यत । तं
तथा विरथं दृष्ट्वा रथमारोप्य तं तदा ॥ ८४ ॥ अश्वत्थामा
महाराज भूयोऽर्जुनमयोधयत् । मद्रराजस्तु कौन्तेयमविध्य-
त्त्रिंशता शरैः ॥ ८५ ॥ शारद्वतस्तु विंशत्या वासुदेवं समा-
र्पयत् । धनञ्जयं द्वादशभिराजघान शिलीमुखैः ॥ ८६ ॥ चतुर्भि-
स्सिन्धुराजश्च वृषसेनश्च सप्तभिः । पृथक् पृथक् महाराज कृपा-

पार्थं विविध्यताम् ॥ ८७ ॥ तथैव तान् प्रत्यविध्यत् कुन्तीपुत्रो
धनञ्जयः । द्रोणपुत्रं चतुःषष्ट्या मद्रराजं शतेन च ॥ ८८ ॥
सैन्धवं दशभिर्भल्लैर्वृषसेनं त्रिभिः शरैः । शारद्वतं च विंशत्या
विद्ध्वा पार्थः समुन्नदत् ॥ ८९ ॥ ते प्रतिज्ञाप्रतीघातमिच्छन्तः
सव्यसाचिनः । रोषितास्तावकास्तूर्णमभिपेतुर्धनञ्जयम् ॥ ९० ॥
अथार्जुनः सर्वतो वारुणास्त्रं प्रादुश्चक्रे त्रासयन् धार्तराष्ट्रान् ।
ते प्रत्युदीयुः कुरवः पाण्डुपुत्रं रथैर्महार्हैः शरवर्षाण्यवर्षन् ॥ ९१ ॥
ततस्तु तस्मिंस्तुमुले समुत्थिते सुदारुणे भारत मोहनीये । नामु-
ह्यत प्राप्य स राजपुत्रः किरीटमाली विसृजन् पृषत्कान् ॥ ९२ ॥
राज्यमीप्सुः सव्यसाची कुरूणां स्मरन् क्लेशान् द्वादशवर्षवृत्तान् ।
गाण्डीवमुक्तैरिषुभिर्महात्मा सर्वा दिशो व्यावृणोदप्रमेयः ॥ ९३ ॥
प्रदीप्तोल्कमभवच्चान्तरिक्षं देहेषु भूरीण्यपतन् वयांसि । यत्
पिङ्गलज्येन किरीटमाली क्रुद्धो रिपूनाजगवेन हन्ति ॥ ९४ ॥
ततः किरीटी महता महायशाः महाधनेनास्य महानीकजित् ।
हयप्रवेकोत्तमनागधूर्गतान् कुरुप्रवीरानिषुभिर्व्यपातयत् ॥ ९५ ॥
गदाश्च गुर्वीः परिघानयस्मयानसींश्च शक्तीश्च रणे नराधिपाः ।
महान्ति शस्त्राणि च भीमदर्शना प्रगृह्य पार्थं सहसाभिदुद्रुवुः
॥ ९६ ॥ ततो युगान्ताभ्रघनस्वनं महत् महेन्द्रचापप्रतिमं स
गाण्डिवम् । चकर्ष दोर्भ्यां विहसन् भृशं जयी दहंस्तदीयान्
यमराष्ट्रवर्धनः ॥ ९७ ॥ स तानुदीर्णान् सरथान् सनागान्
पदातिसङ्घांश्च धनुर्धरांश्च । विपन्नसर्वायुधजीवितान् रणे चकार
वीरो यमराष्ट्रवर्धनान् ॥ ९८ ॥

सञ्जय उवाच । श्रुत्वा निनादं धनुषस्तस्य विसृष्टमुत्-
कृष्टमिवान्तकस्य । शक्राशनिस्फोटसमं सुघोरं विकृष्यमाणस्य
धनञ्जयेन ॥ १ ॥ त्रासोद्विग्नं तदोद्भ्रान्तं त्वदीयं तद्बलं नृप ।
युगान्तवातसंक्षुब्धं चलद्वीचितरङ्गिणम् ॥ २ ॥ प्रक्षीणमीनमकरं
सागराम्भ इवाभवत् । स रणे व्यचरत् पार्थः प्रेक्षणीयो धन-
ञ्जयः ॥ ३ ॥ युगपद्दिक्षु सर्वासु चित्राण्यस्त्राणि दर्शयन् ।
आददानं महाराज सन्दधानञ्च पाण्डवम् ॥ ४ ॥ उत्कर्षन्तं
सृजन्तञ्च न स्म पश्याम लाघवात् । ततः क्रुद्धो महाबाहुरैन्द्रमस्त्रं
दुरासदम् ॥ ५ ॥ प्रादुश्चक्रे महाराज त्रासयन् सर्वभारतान् ।
ततः शराः प्रादुरासन् दिव्यास्त्रप्रतिमन्त्रिताः ॥ ६ ॥ प्रदीप्ताग्र-
शिखिमुखाः शतशोऽथ सहस्रशः । आकर्णपूर्णनिर्मुक्तैरुग्रवीर्यैरु-
र्मिभिः शरैः ॥ ७ ॥ नभोऽभवत् सुदुष्प्रेक्ष्यमुल्काभिरिव संवृतम् ।
ततः शरान्धकारं तत् कौरवैः समुदीरितम् ॥ ८ ॥ अशक्यं
मनसाप्यन्यैः पाण्डवः सम्मन्निव । नाशयामास विक्रम्य शरै-
र्दिव्यास्त्रमन्त्रितैः ॥ ९ ॥ नैशं तमोंऽशुभिः क्षिप्रं दिनादाविव
भास्करः । ततस्तु तावकं सैन्यं दीप्तैः शरगभस्तिभिः ॥ १० ॥
आक्षिपत् पल्वलाम्बूनि निदाघार्क इव प्रभुः । ततो दिव्यास्त्र-
विदुषा प्रहिताः सायकाम्बवः ॥ ११ ॥ समाप्लवन् द्विषत्सैन्यं लोकं
भानोरिवांशवः । तथा परे समुत्सृष्टा विशिखास्तिग्मतेजसः
॥ १२ ॥ हृदयान्याशु वीराणां विविशुः प्रियबन्धुवत् । य आ-
यन्ति स्म समरे त्वदीयाः शूरमानिनः ॥ १३ ॥ शलभा इव ते
दीप्तमग्निं प्राप्य ययुः क्षयम् । एवं सम्मृद्नन् शत्रूणां जीवितानि
यशांसि च ॥ १४ ॥ पार्थश्चचार सङ्ग्रामे मृत्युर्विग्रहवानिव ।
सकिरीटानि वक्त्राणि साङ्गदान् विपुलान् भुजान् ॥ १५ ॥ स-
कुण्डलयुगान् कर्णान् द्विषां निरहरच्छरैः । सतोमरान् गज-
स्थानां सप्रासान् हयसादिनाम् ॥ १६ ॥ सचर्मणः पदातीनां

रथिनाञ्च सवन्धनः । सप्रतोदान्नियन्तॄणां बाहूंश्चिच्छेद पाण्डवः
॥ १७ ॥ स दीप्ताग्रशरार्च्चिष्मान् बभौ तत्र धनञ्जयः । स-
विस्फुलिङ्गाग्रशिखो ज्वलन्निव हुताशनः ॥ १८ ॥ तं देवराज-
प्रतिमं सर्वशस्त्रभृतां वरम् । युगपद्दिक्षु सर्वासु रथस्थं पुरुष-
र्षभम् ॥ १९ ॥ निक्षिपन्तं महास्त्राणि प्रेक्षणीयं धनञ्जयम् ।
नृत्यन्तं रथमार्गेषु धनुर्ज्यातलनादितम् ॥ २० ॥ निरीक्षितुं न
शेकुस्ते यत्नवन्तोऽपि पार्थिवाः । मध्यन्दिनगतं सूर्यं प्रतपन्त-
मिवाम्बरे ॥ २१ ॥ दीप्तोग्रशरभृत् पार्थः किरीटी विरराज ह ।
वर्षास्विवोदीर्णजलः सेन्द्रचापाम्बुदो महान् ॥ २२ ॥ महास्त्र-
संप्लवे तस्मिन् जिष्णुना सम्प्रवर्त्तिते । सुदुस्तरे महाघोरे ममज्जु-
र्योधपुङ्गवाः ॥ २३ ॥ उत्कृत्तवदनैर्देहैः शरीरैः क्षतबाहुभिः ।
भुजैश्च पाणिनिर्मुक्तैः पाणिभिर्व्यङ्गुलीकृतैः ॥ २४ ॥ कृत्ताग्रहस्तैः
करिभिः कृत्तदन्तैर्मदोत्कटैः । हयैश्च विधुरग्रीवैरथैश्च शकली-
कृतैः ॥ २५ ॥ निकृत्तान्त्रैः कृत्तपादैस्तथान्यैः कृत्तसन्धिभिः ।
निश्चेष्टैर्विस्फुरद्भिश्च शतशोऽथ सहस्रशः ॥ २६ ॥ मृत्योराघात-
ललितं तत् पार्थायोधनं महत् । अपश्याम महीपाल भीरूणां
भयवर्द्धनम् ॥ २७ ॥ आक्रीड़मिव रुद्रस्य पुरा घ्नतः पशून् ।
गजानां क्षुरनिर्मुक्तैः करैः सभुजगेव भूः ॥ २८ ॥ क्वचिद्बभौ
स्रग्विणीव वक्त्रपद्मैः समाचिता । विचित्रोष्णीषमुकुटैः केयूरा-
ङ्गदकुण्डलैः ॥ २९ ॥ स्वर्णचित्रतनुत्रैश्च भाण्डैश्च गजवाजिनाम् ।
किरीटशतसङ्कीर्णा तत्र तत्र समाचिता ॥ ३० ॥ विरराज भृशं
चित्रा मही नववधूरिव । मज्जामेदःकर्द्दमिनीं शोणितौघतर-
ङ्गिणीम् ॥ ३१ ॥ मर्मास्थिभिरगाधाञ्च केशशैवलशाद्वलाम् ।
शिरोबाहूपलतटां रुग्णक्रोड़ास्थिसङ्कटाम् ॥ ३२ ॥ चित्रध्वज-
पताकाढ्यां छत्रचापोर्मिमालिनीम् । विगतासुमहाकाया गज-
देहाभिसङ्कुलाम् ॥ ३३ ॥ रथोडुपशताकीर्णां हयसङ्घातरोधसम् ।

रथचक्रयुगीषाक्षकूबरैरतिदुर्गमाम् ॥ ३४ ॥ प्रासासिशक्तिपरशु-
विशिखाद्रिदुरासदाम्। बककङ्कमहानक्रां गोमायुमकरोत्-
कटाम् ॥ ३५ ॥ रक्षोदग्रमहाग्राहां शिवाभिरुतभैरवाम्। नृत्यत्-
प्रेतपिशाचाद्यैर्भूताकीर्णां सहस्रशः ॥ ३६ ॥ गतासुयोधनिश्चेष्ट-
शरीरचयवाहिनीम्। महाप्रतिभयां रौद्रां घोरां वैतरणीमिव
॥ ३७ ॥ नदीं प्रवर्त्तयामास भीरूणां भयवर्द्धिनीम्। ते दृष्ट्वा
तस्य विक्रान्तमन्तकस्येव रूपिणः ॥ ३८ ॥ अभूतपूर्वं कुरुषु
भयमागाद्रणाजिरे। तत आदाय वीराणामस्त्रैरस्त्राणि पाण्डवः
॥ ३९ ॥ आत्मानं रौद्रमास्थाय रौद्रकर्मा व्यतिष्ठत। ततो
रथवरान् राजन्नत्यक्रामदर्ज्जुनः ॥ ४० ॥ मध्यन्दिनगतं सूर्य्यं
प्रतपन्तमिवाम्बरे। न शेकुः सर्व्वभूतानि पाण्डवं प्रतिवीक्षितुम्
॥ ४१ ॥ प्रसृतान् तस्य गाण्डीवाच्छरव्रातान्महात्मनः। संग्रामे
समपश्याम हंसपङ्क्तीरिवाम्बरे ॥ ४२ ॥ विनिवार्य्य स
वीराणामस्त्रैरस्त्राणि सर्व्वशः। दर्शयन् रौद्रमात्मानमुग्रे कर्म्मणि
विष्ठितः ॥ ४३ ॥ स तान् रथवरान् राजन्नत्यक्रामत्तदार्ज्जुनः।
मोहयन्निव नाराचैर्जयद्रथवधेप्सया ॥ ४४ ॥ विसृजन् दिक्षु
सर्व्वासु शरानसितसारथिः। स रथो व्यचरत्तूर्णं प्रेक्षणीयो
धनञ्जयः ॥ ४५ ॥ भ्रमन्त इव शूरस्य शरव्राता महात्मनः।
अदृश्यन्तान्तरीक्षस्थाः शतशोऽथ सहस्रशः ॥ ४६ ॥ आददानं
महेष्वासं सन्दधानञ्च पाण्डवम्। विसृजन्तन्तु कौन्तेयं नानु-
पश्यामहे तदा ॥ ४७ ॥ तथा सर्व्वा दिशो राजन् सर्व्वांश्च रथिनो
रणे। आकुलीकृत्य कौन्तेयो जयद्रथमुपाद्रवत् ॥ ४८ ॥ विव्याध
च चतुःषष्ट्या शराणां नतपर्व्वणाम्। सैन्धवाभिमुखं यान्तं योधाः
सम्प्रेक्ष्य पाण्डवम् ॥ ४९ ॥ न्यवर्त्तन्त रणाद्वीरा निराशास्तस्य
जीविते। यो योऽभ्यधावदाक्रन्दे तावकः पाण्डवं रणे ॥ ५० ॥
तस्य तस्यान्तगो बाणः शरीरे न्यपतत् प्रभो। कबन्धसङ्कुलञ्चक्रे

तव सैन्यं महारथः ॥ ५१ ॥ अर्ज्जुनो जयतां श्रेष्ठः शरैरग्निशिखासन्निभैः । एवं तत्तव राजेन्द्र चतुरङ्गबलं तदा ॥ ५२ ॥ आकुलीकृत्य कौन्तेयो जयद्रथमुपाद्रवत् । द्रौणिं पञ्चाशताविध्यद्वृषसेनं त्रिभिः शरैः ॥ ५३ ॥ कृपायमाणः कौन्तेयः कृपं नवभिरार्द्दयत् । शल्यं षोडशभिर्वाणैः कर्णं द्वात्रिंशता शरैः ॥ ५४ ॥ सैन्धवञ्च चतुःषष्ट्या विद्धा सिंह इवानदत् । सैन्धवस्तु तदा विद्धः शरैर्गाण्डीवधन्वना ॥ ५५ ॥ न चक्षमे सुसंक्रुद्धस्तोत्त्रार्द्दित इव द्विपः । स वराहध्वजस्तूर्णं गार्द्धपत्रानजिह्मगान् ॥ ५६ ॥ क्रुद्धाशीविषसङ्काशान् कर्म्मारपरिमार्ज्जितान् । आकर्णपूर्णांश्चिक्षेप फाल्गुनस्य रथं प्रति ॥ ५७ ॥ त्रिभिस्तु विद्धा गोविन्दं नाराचैः षड्भिरर्ज्जुनम् । अष्टाभिर्वाजिनोऽविध्यद्ध्वजञ्चैकेन पत्रिणा ॥ ५८ ॥ स विक्षिप्यार्ज्जुनस्तीक्ष्णान् सैन्धवप्रहिताञ्छरान् । युगपत्तस्य चिच्छेद शराभ्यां सैन्धवस्य च ॥ ५९ ॥ सारथेश्च शिरः कायात् ध्वजञ्च समलङ्कृतम् । स छिन्नयष्टिः सुमहान्दीर्य्यमाणः शराहतः ॥ ६० ॥ वराहः सिन्धुराजस्य पपाताग्निशिखोपमः । एतस्मिन्नेव काले तु द्रुतं गच्छति भास्करे ॥ ६१ ॥ अब्रवीत् पाण्डवं तत्र त्वरमाणो जनार्द्दनः । एष मध्ये कृतः षड्भिः पार्थ वीरैर्महारथैः ॥ ६२ ॥ जीवितेप्सुर्महाबाहो भीतस्तिष्ठति सैन्धवः । एतानन्निर्ज्जित्य रणे षड्रथान् पुरुषर्षभ ॥ ६३ ॥ न शक्यः सैन्धवो हन्तुं यत्तो निर्व्याजमार्ज्जुन । योगमत्र विधास्यामि सूर्य्यस्यावरणं प्रति ॥ ६४ ॥ अस्तं गत इति व्यक्तं द्रक्ष्यत्येकः स सिन्धुराट् । हर्षेण जीविताकाङ्क्षी विनाशार्थं तव प्रभो ॥ ६५ ॥ न गोपयिष्यति दुराचारः स आत्मानं कथञ्चन । तत्र छिद्रे प्रहर्त्तव्यं त्वयास्य कुरुसत्तम ॥ ६६ ॥ व्यपेक्षा नैव कर्त्तव्या गतोऽस्तमिति भास्करः । एवमस्त्विति बीभत्सुः केशवं प्रत्यभाषत ॥ ६७ ॥ ततोऽसृजत्तमः कृष्णः सूर्य्यस्यावरणं प्रति । योगी योगेन युक्तो योगिनामीश्वरो हरिः ॥ ६८ ॥

दृष्टे तस्मिन् ह्यस्तं गतोऽस्तमिति भास्करः। त्वदीया जहृषु-
र्योधाः पार्थनाशान्नराधिप॥६९॥ ते प्रहृष्टा रणे राजन्नाप-
श्यन् सैनिका रविम्। उन्नाम्य वक्त्राणि तदा स च राजा जय-
द्रथः॥७०॥ वीक्षमाणे ततस्तस्मिन् सिन्धुराजे दिवाकरम्।
पुनरेवाब्रवीत् कृष्णो धनञ्जयमिदं वचः॥७१॥ पश्य सिन्धुपतिं
वीरं प्रेक्षमाणं दिवाकरम्। भयं हि विप्रमुक्तोऽसौ त्वत्तो भरत-
सत्तम॥७२॥ अयं कालो महाबाहो वधायास्य दुरात्मनः।
छिन्धि मूर्द्धानमस्याशु कुरु साफल्यमात्मनः॥७३॥ इत्येवं केशवे-
नोक्तः पाण्डुपुत्रः प्रतापवान्। न्यवधीत्तावकं सैन्यं शरैरर्काग्नि-
सन्निभैः॥७४॥ कृपं विव्याध विंशत्या कर्णं पञ्चाशता शरैः।
शल्यं दुर्योधनञ्चैव षड्भिः षड्भिरताडयत्॥७५॥ वृषसेनं
तथाष्टाभिः षष्ट्या सैन्धवमेव च। तथैव च महाबाहुस्त्वदीयान्
पाण्डुनन्दनः॥७६॥ गाढं विद्ध्वा शरै राजन् जयद्रथमुपाद्रवत्।
तं समीपस्थितं दृष्ट्वा लेलिहानमिवानलम्॥७७॥ जयद्रथस्य
गोप्तारः संशयं परमं गताः। ततः सर्वे महाराज तव योधा
जयैषिणः॥७८॥ सिषिचुः शरधाराभिः फाल्गुनमाहवे।
सञ्छाद्यमानः कौन्तेयः शरजालैरनेकशः॥७९॥ अक्रुध्यत् स
महाबाहुरजितः कुरुनन्दनः। ततः शरमयं जालं तुमुलं पाक-
शासनिः॥८०॥ व्यसृजत् पुरुषव्याघ्रस्तव सैन्यजिघांसया। ते
हन्यमाना वीरेण योधा राजन्रणे तव॥८१॥ प्रजह्रुः सैन्धवं
भीता द्वौ सम नाभ्यधावताम्। तत्राद्भुतमपश्याम कुन्तीपुत्रस्य
विक्रमम्॥८२॥ यादृक्समावी भूतो वा चकार महायशाः।
द्विपान् द्विपगतांश्चैव हयान् हयगतानपि॥८३॥ तथा सार-
थिनश्चैव न्यहन् रुद्रः पशूनिव। न तत्र समरे कश्चिन्मया दृष्टो
नराधिप॥८४॥ गजो वाजी नरो वापि यो न पार्थशराहतः।
रजसा तमसा चैव योधाः सञ्छन्नचक्षुषः॥८५॥ कश्मलं

प्राविशत् घोरं नान्वजानन् परस्परम् । ते शरैर्भिन्नमर्माणः सैनिकाः कालचोदिताः ॥ ८६ ॥ बभ्रमुश्चस्खलुः पेतुः सेदुर्म्लुश्च भारत । तस्मिन् महामोहपाके प्रजानामिव सङ्क्षये ॥ ८७ ॥ रणे महति दुष्पारे वर्त्तमाने सुदारुणे । शोणितस्य प्रसेकेन शीघ्रत्वादनिलस्य च ॥ ८८ ॥ अशाम्यत्तद्रजो भौममसृक्सिक्ते धरातले । आनाभि निरमज्जंश्च रथचक्राणि शोणिते ॥ ८९ ॥ मत्ता वेगवतो राजंस्तावकानां रणाङ्गणे । हस्तिनश्च हतारोहा दारिताङ्गाः सहस्रशः ॥ ९० ॥ स्वान्यनीकानि मृद्नन्त आर्त्तनादाः प्रदुद्रुवुः । हयाश्च पतितारोहाः पत्तयश्च नराधिप ॥ ९१ ॥ प्रदुद्रुवुर्भयाद्राजन् धनञ्जयशराहताः । मुक्तकेशा विकवचाः क्षरन्तः क्षतजं क्षतैः ॥ ९२ ॥ प्रपलायन्त सन्त्रस्तास्त्यक्त्वा रणशिरो जनाः । ऊरुग्राहगृहीताश्च केचित्तत्राभवन् भुवि ॥ ९३ ॥ हतानाञ्चापरे मध्ये द्विरदानां निलिल्यिरे । एवं तव बलं राजन् द्रावयित्वा धनञ्जय ॥ ९४ ॥ न्यवधीत् सायकैर्घोरैः सिन्धुराजस्य रक्षिणः । कर्णं द्रौणिं कृपं शल्यं वृषसेनं सुयोधनम् ॥ ९५ ॥ छादयामास तीव्रेण शरजालेन पाण्डवः । न गृह्ण-न्नपि राजन्न मुञ्चन्नापि सन्दधन् ॥ ९६ ॥ अदृश्यतार्जुनः सङ्ख्ये शीघ्रास्त्रत्वात् कथञ्चन । धनुर्मण्डलमेवास्य दृश्यते शाश्वत सदा ॥ ९७ ॥ सायकाश्च व्यदृश्यन्त निश्चरन्तः समन्ततः । कर्णस्य तु धनुश्छित्त्वा वृषसेनस्य चैव ह ॥ ९८ ॥ शल्यस्य सूतं भल्लेन रथनीडादपातयत् । गाढविद्धावुभौ कृत्वा शरैः स्वस्रीयमातुलौ ॥ ९९ ॥ अर्जुनो जयतां श्रेष्ठो द्रौणिशारद्वतौ रणे । एवं तान् व्याकुलीकृत्य त्वदीयानां महारथान् ॥ १०० ॥ उज्जहार शरं घोरं पाण्डवोऽनलसन्निभम् । इन्द्राशनिसमप्रख्यं दिव्यमन्त्राभिमन्त्रितम् ॥ १०१ ॥ सर्वभारसहं शश्वत् गन्धमाल्यार्चितं भारत । वज्रेणास्त्रेण संयोज्य विधिवत् कुरुनन्दन ॥ १०२ ॥ समा-

दधन्महाबाहुर्गाण्डीवे क्षिप्रमर्जुनः । तस्मिन् सन्धायमाने तु शरे ज्वलनतेजसि ॥ १०३ ॥ अन्तरीक्षे महानादो भूतानामभवन्नृप । अब्रवीच्च पुनस्तत्र त्वरमाणो जनार्दनः ॥ १०४ ॥ धनञ्जय शिरश्छिन्धि सैन्धवस्य दुरात्मनः । अस्तं महीधरश्रेष्ठं यियासति दिवाकरः ॥ १०५ ॥ शृणुष्वैव च मे वाक्यं जयद्रथवधं प्रति । वृद्धक्षत्रः सैन्धवस्य पिता जगति विश्रुतः ॥ १०६ ॥ स कालेनेह महता सैन्धवं प्राप्तवान् सुतम् । जयद्रथममित्रघ्नं वागुवाचाशरीरिणी ॥ १०७ ॥ नृपमन्तर्हिता वाणी मेघदुन्दुभिनिःस्वना । तवात्मजोऽयं मर्त्येषु कुलशीलदमादिभिः ॥ १०८ ॥ गुणैर्भविष्यति विभो सदृशो वंशयोर्द्वयोः । क्षत्रियप्रवरो लोके नित्यं शूराभिसत्कृतः ॥ १०९ ॥ किन्त्वस्य युध्यमानस्य सङ्ग्रामे क्षत्रियर्षभ । शिरश्छेत्स्यति संक्रुद्धः शत्रुरालक्षितो भुवि ॥ ११० ॥ एतच्छ्रुत्वा सिन्धुराजो ध्यात्वा चिरमरिन्दम । ज्ञातीन् सर्वानुवाचेदं पुत्रस्नेहाभिपीड़ितः ॥ १११ ॥ सङ्ग्रामे युध्यमानस्य वहतो महतीं धुरम् । धरण्यां मम पुत्रस्य पातयिष्यति यः शिरः ॥ ११२ ॥ तस्यापि शतधा मूर्द्धा फलिष्यति न संशयः । एवमुक्त्वा ततो राज्ये स्थापयित्वा जयद्रथम् ॥ ११३ ॥ वृद्धक्षत्रो वनं यातस्तपश्चेष्टं समास्थितः । सोऽयं तप्यति तेजस्वी तपो घोरं दुरासदम् ॥ ११४ ॥ समन्तपञ्चकादस्माद्बहिर्वानरकेतन । तस्माज्जयद्रथस्य त्वं शिरश्छित्त्वा महामृधे ॥ ११५ ॥ दिव्येनास्त्रेण रिपुघ्न घोरेणाद्भुतकर्मणा । सकुण्डलं सिन्धुपतेः प्रभञ्जनसुतानुज ॥ ११६ ॥ उत्सङ्गे पातयस्वाशु वृद्धक्षत्रस्य भारत । अथ त्वमस्य मूर्द्धानं पातयिष्यसि भूतले ॥ ११७ ॥ तवापि शतधा मूर्द्धा फलिष्यति न संशयः । यथा चैतन्न जानीयात् स राजा पृथिवीपतिः ॥ ११८ ॥ तथा कुरु कुरुश्रेष्ठ दिव्यमस्त्रमुपाश्रितः । न ह्यसाध्यमकार्य्यं वा विद्यते तव किञ्चन ॥ ११९ ॥ समस्तेष्वपि लोकेषु विष्णु वासव

नन्दन । एतच्छ्रुत्वा तु वचनं सृक्किणी परिसंलिहन् ॥ १२० ॥
इन्द्राशनिसमस्पर्शं दिव्यं मन्त्राभिमन्त्रितम् । सर्वभारसहं शश्व-
द्गन्धमाल्यार्चितं शरम् ॥ १२१ ॥ विससर्जार्जुनस्तूर्णं सैन्धवस्य
वधे धृतम् । स तु गाण्डीवनिर्मुक्तः शरः श्येन इवाशुगः ॥ १२२ ॥
शकुन्तमिव वृक्षाग्रात् सैन्धवस्य शिरोऽहरत् । अहरत्तत् पुनश्चैव
शरैरूर्ध्वं धनञ्जयः ॥ १२३ ॥ दुर्हृदामप्रहर्षाय सुहृदां हर्षणाय
च । शरैः कदम्बकीकृत्य काले तस्मिंश्च पाण्डवः ॥ १२४ ॥ समन्त-
पञ्चकाद्बाह्यं शिरस्तदहरत्ततः । एतस्मिन्नेव काले तु वृद्धक्षत्रो
महीपतिः ॥ १२५ ॥ सन्ध्यामुपास्ते तेजस्वी सम्बन्धी तव मारिष ।
उपासीनस्य तस्याथ कृष्णकेशं सकुण्डलम् ॥ १२६ ॥ सिन्धुराजस्य
मूर्द्धानमुत्सङ्गे समपातयत् । तस्योत्सङ्गे निपतितं शिरस्तच्चारु-
कुण्डलम् ॥ १२७ ॥ वृद्धक्षत्रस्य नृपतेरलक्षितमरिन्दम । कृत-
जप्यस्य तस्याथ वृद्धक्षत्रस्य धीमतः ॥ १२८ ॥ उत्तिष्ठतस्तत्
सहसा शिरोऽगच्छद्धरातलम् । ततस्तस्य नरेन्द्रस्य पुत्रमूर्द्धनि
भूतलम् ॥ १२९ ॥ गते तस्यापि शतधा मूर्द्धाऽगच्छदरिन्दम ।
ततः सर्वाणि भूतानि विस्मयं जग्मुरुत्तमम् ॥ १३० ॥ वासुदेवश्च
बीभत्सुं प्रशंसुर्महाबलम् । ततो विनिहते राजन् सिन्धुराजे
किरीटिना ॥ १३१ ॥ तमस्तद्वासुदेवेन संहृतं भरतर्षभ । पश्चाज्-
ज्ञातं महीपाल तव पुत्रैः सहानुगैः ॥ १३२ ॥ वासुदेवप्रयुक्तेयं
मायेति नृपसत्तम । एवं स निहतो राजन् पार्थेनामिततेजसा
॥ १३३ ॥ अक्षौहिणीरष्ट हत्वा जामाता तव सैन्धवः । ततो
दृष्ट्वा विनिहतं सिन्धुराजं जयद्रथम् ॥ १३४ ॥ पुत्राणां तव
नेत्रेभ्यो दुःखादभ्यपतज्जलम् । ततो जयद्रथे राजन् हते पार्थेन
केशवः ॥ १३५ ॥ दध्मौ शङ्खं महाबाहुरर्जुनश्च परन्तपः । भीम-
सेनोऽपि सङ्ग्रामे बोधयन्निव पाण्डवम् ॥ १३६ ॥ सिंहनादेन
महता पूरयामास रोदसी । तं श्रुत्वा तु महानादं धर्मपुत्रो

युधिष्ठिरः ॥ १३७ ॥ सैन्धवं निहतं मेने फाल्गुनेन महात्मना। ततो वादित्रघोषेण स्वयोधानभ्यहर्षयत् ॥ १३८ ॥ अभ्यवर्त्तत सङ्ग्रामे भारद्वाजं युयुत्सया। ततः प्रववृते राजन्नस्तं गच्छति भास्करे ॥ १३९ ॥ द्रोणस्य सोमकैः सार्द्धं सङ्ग्रामो लोमहर्षणः। ते तु सर्वप्रयत्नेन भारद्वाजं जिघांसवः ॥ १४० ॥ सैन्धवे निहते राजन्नयुध्यन्त महारथाः। पाण्डवास्तु जयं लब्ध्वा सैन्धवं विनिहत्य च ॥ १४१ ॥ अयोधयंस्ततो द्रोणं जयोन्मत्तास्ततस्ततः। अर्जुनोऽपि रणे योधांस्तावकान् रथसत्तमान् ॥ अयोधयन्महाराज तं हत्वा सैन्धवं नृपम् ॥ १४२ ॥ स देवशत्रूनिव देवराजः किरीटमाली व्यधमत् समन्तात्। यथा तमांस्यभ्युदितस्तमोघ्नः पूर्वां प्रतिज्ञां समवाप्य वीरः ॥ १४३ ॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि जयद्रथवधे षट्चत्वारिंशदधिकशततोऽध्यायः ॥ १४६ ॥

---

धृतराष्ट्र उवाच। तस्मिन् विनिहते वीरे सैन्धवे सव्यसाचिना। मामका यदकुर्वन्त तन्ममाचक्ष्व सञ्जय ॥ १ ॥

सञ्जय उवाच। सैन्धवं निहतं दृष्ट्वा रणे पार्थेन मारिष। अमर्षवशमापन्नः कृपः शारद्वतस्तथा ॥ २ ॥ महता शरवर्षेण पाण्डवं समवाकिरत्। द्रौणिश्चाभ्यद्रवत् पार्थं रथमास्थाय फाल्गुनम् ॥ ३ ॥ तावेतौ रथिनां श्रेष्ठौ रथाभ्यां रथसत्तमौ। उभावुभयतस्तीक्ष्णैर्विशिखैरभ्यवर्षताम् ॥ ४ ॥ स तथा शरवर्षाभ्यां सुमहद्भ्यां महाभुजः। पीड्यमानः परामार्त्तिमगमद्रथिनाम्वरः ॥ ५ ॥ सोऽजिघांसुर्गुरुं सङ्ख्ये गुरोस्तनयमेव च। चकाराचार्य्यकं तत्र कुन्तीपुत्रो धनञ्जयः ॥ ६ ॥ अस्त्रैरस्त्राणि संवार्य्य द्रौणेः शारद्वतस्य च। मन्दवेगानिषूंस्ताभ्यामजिघांसुरवासृजत् ॥ ७ ॥

ते चापि भृशमस्यघ्नन् विशिखा जवचोदिताः । बहुलत्वात् परा-
मार्त्तिं शराणान्तावगच्छताम् ॥ ८ ॥ अथ शारद्वतो राजन्
कौन्तेयशरपीड़ितः । अवासीदद्रथोपस्थे मूर्च्छामभिजगाम ह
॥ ९ ॥ विह्वलन्तमभिज्ञाय भर्त्तारं शरपीड़ितम् । हतोऽयमिति
च ज्ञात्वा सारथिस्तमपाहरत् ॥ १० ॥ तस्मिन् भग्ने महाराज
कृपे शारद्वते युधि । अश्वत्थामाप्यपायासीत् पाण्डवेयाद्रथान्तरम्
॥ ११ ॥ दृष्ट्वा शारद्वतं पार्थो मूर्च्छितं शरपीड़ितम् । रथ एव
महेष्वासः कृपणं पर्य्यदेवयत् ॥ १२ ॥ अश्रुपूर्णमुखो दीनो वचन-
ञ्चेदमब्रवीत् । पश्यन्निदं महाप्राज्ञः क्षत्ता राजानमुक्तवान् ॥ १३ ॥
कुलान्तकरणे पापे जातमात्रे सुयोधने । नीयतां परलोकाय
साध्वयं कुलपांसनः ॥ १४ ॥ अस्माद्धि कुरुमुख्यानां महदुत्-
पत्स्यते भयम् । तदिदं समनुप्राप्तं वचनं सत्यवादिनः ॥ १५ ॥
तत्कृते ह्यद्य पश्यामि शरतल्पगतं गुरुम् । धिगस्तु क्षात्रमाचारं
धिगस्तु बलपौरुषम् । १६ ॥ को हि ब्राह्मणमाचार्य्यमभिद्रुह्येत
मादृशः । ऋषिपुत्रो ममाचार्य्यो द्रोणस्य दयितः सखा ॥ १७ ॥
एष शेते रथोपस्थे मद्बाणैरभिपीड़ितः । अकामयानेन मया
विशिखैरर्द्दितो भृशम् ॥ १८ ॥ अवसीदन्रथोपस्थे प्राणान् पीड़-
यतीव मे । शरार्द्दितेन हि मया प्रेक्षणीयो महाद्युतिः ॥ १९ ॥
प्रत्यस्तो बहुभिर्वाणैर्दशधर्मगतेन वै । शोचयत्येष निहतो भूयः
पुत्रवधाद्धि माम् ॥ २० ॥ कृपणं स्वरथे सन्नं पश्य कृष्ण यथा-
गतम् । उपाकृत्य तु वै विद्यामाचार्य्येभ्यो नरर्षभाः ॥ २१ ॥
प्रयच्छन्तीह ये कामान् देवत्वमुपयान्ति ते । ये तु विद्यामुपादाय
गुरुभ्यः पुरुषाधमाः ॥ २२ ॥ घ्नन्ति तानेव दुर्वृत्तास्ते वै निरय-
गामिनः । तदिदं नरकायाद्य कृतं कर्म मया ध्रुवम् । २३ ॥
आचार्य्यं शरवर्षेण रथे सादयता भृशम् । यत्तत् पूर्वमुपाकुर्व-
न्नस्त्रं मामब्रवीत् कृपः ॥ २४ ॥ न कथञ्चन कौरव्य प्रहर्त्तव्यं

गुराविति । तदिदं वचनं साधोराचार्य्यस्य महात्मनः ॥ २५ ॥ नानुष्ठितं त्वमेवाजौ विशिखैरभिवर्षता । नमस्तस्मै सुपूज्याय गौतमायापलायिने ॥ २६ ॥ धिगस्तु मम वार्ष्णेय यो ह्यस्मै प्रहराम्यहम् । तथा विलपमाने तु सव्यसाचिनि तं प्रति ॥ २७ ॥ सैन्धवं निहतं दृष्ट्वा राधेयः समुपाद्रवत् । तमापतन्तं राधेयमर्ज्जुनस्य रथं प्रति ॥ २८ ॥ पाञ्चाल्यौ सात्यकिश्चैव सहसा समुपाद्रवन् । उपायान्तन्तु राधेयं दृष्ट्वा पार्थो महारथः ॥ २९ ॥ प्रहसन्देवकीपुत्रमिदं वचनमब्रवीत् । एष प्रयात्याधिरथिः सात्यकेः स्यन्दनं प्रति ॥ ३० ॥ न मृष्यति हतं नूनं भूरिश्रवसमाहवे । यत्र यात्येष तत्र त्वं चोदयाश्वान् जनार्द्दन ॥ ३१ ॥ मा सौमदत्तेः पदवीं गमयेत् सात्वतं वृष । एवमुक्तो महाबाहुः केशवः सव्यसाचिना ॥ ३२ ॥ प्रत्युवाच महातेजा कालयुक्तमिदं वचः । अलमेष महाबाहुः कर्णायैको हि पाण्डव ॥ ३३ ॥ किम्पुनर्द्रौपदेयाभ्यां सहितः सात्वतर्षभ । न च तावत् क्षमः पार्थ कर्णेन तव सङ्गरः ॥ ३४ ॥ प्रज्वलन्तो महोल्केव तिष्ठत्यस्य हि वासवी । त्वदर्थं पूज्यमाना वै रक्ष्यते परवीरहन् ॥ ३५ ॥ अतः कर्णः प्रयात्वत्र सात्वतस्य यथातथा । अहं ज्ञास्यामि कौन्तेय कालमस्य दुरात्मनः । यत्रैनं विशिखैस्तीक्ष्णैः पातयिष्यसि भूतले ॥३६॥

धृतराष्ट्र उवाच । योऽसौ कर्णेन वीरेण वार्ष्णेयस्य समागमः । हते च भूरिश्रवसि सैन्धवे च निपातिते ॥ ३७ ॥ सात्यकिश्चापि विरथः कं समारूढवान्रथम् । चक्ररक्षौ तु पाञ्चाल्यौ तन्ममाचक्ष्व सञ्जय ॥ ३८ ॥

सञ्जय उवाच । हन्त ते वर्त्तयिष्यामि यथावृत्तं महारणे । शुश्रूषस्व स्थिरो भूत्वा दुराचरितमात्मनः ॥ ३९ ॥ पूर्व्वमेव हि कृष्णस्य मनोगतमिदं प्रभो । विजेतव्यो यथा वीरः सात्यकिर्यूपकेतुना ॥ ४० ॥ अतीतानागते राजन् स हि वेत्ति जनार्द्दनः ।

ततः सूतं समानीय दारुकं सन्दिदेश ह ॥ ४१ ॥ रथो मे युज्यतां
कल्यमिति राजन्महाबल । न हि देवा न गन्धर्वा न यक्षोरग-
राक्षसाः ॥ ४२ ॥ मानवाश्च विजेतारः कृष्णयोः सन्ति केचन ।
पितामहपुरोगाश्च देवाः सिद्धाश्च तं विदुः ॥ ४३ ॥ तयोः प्रभाव-
मतुलं शृणु युद्धन्तु तत्तथा । सात्यकिं विरथं दृष्ट्वा कर्णञ्चाभ्युद्यतं
युधि ॥ ४४ ॥ दध्मौ शङ्खं महानादमार्षभेणाथ माधवः । दारुको
वेत्ति सन्देशं श्रुत्वा शङ्खस्य च स्वनम् ॥ ४५ ॥ रथमन्वानयत्तस्मै
सुवर्णोच्छ्रितकेतनम् । स केशवस्यानुमते रथं दारुकसंयुतम् ॥ ४६ ॥
आरुरोह शिनेः पौत्रो ज्वलनादित्यसन्निभम् । कामगैः शैब्य-
सुग्रीवमेघपुष्पबलाहकैः ॥ ४७ ॥ हयोदग्रैर्महावेगैर्हेमभाण्डविभू-
षितैः । युक्तं समारुह्य च तं विमानप्रतिमं रथम् ॥ ४८ ॥ अभ्य-
द्रवत राधेयं प्रवपन् सायकान् बहून् । चक्ररक्षावपि तदा युधा-
मन्यूत्तमौजसौ ॥ ४९ ॥ धनञ्जयरथं हित्वा राधेयं प्रत्युदीयतुः ।
राधेयोऽपि महाराज शरवर्षं समुत्सृजन् ॥ ५० ॥ अभ्यद्रवत्
सुसंक्रुद्धो रणे शैनेयमच्युतम् । नैव दैवं न गान्धर्वं नासुरोरग-
राक्षसम् ॥ ५१ ॥ तादृशं भुवि नो युद्धं दिवि वा श्रुतमित्युत ।
उपारमत तत्सैन्यं सरथाश्वनरद्विपम् ॥ ५२ ॥ तयोर्दृष्ट्वा महा-
राज कर्म सम्मूढचेतनम् । सर्वे च समपश्यन्त तद्युद्धमतिमानुषम्
॥ ५३ ॥ तयोर्नृवरयो राजन् सारथ्यं दारुकस्य च । गतप्रत्या-
गतावृत्तैर्मण्डलैः सन्निवर्त्तनैः ॥ ५४ ॥ सारथेस्तु रथस्थस्य काश्य-
पेयस्य विस्मिताः । नभस्तलगताश्चैव देवगन्धर्वदानवाः ॥ ५५ ॥
अतीवावहिता द्रष्टुं कर्णशैनेययो रणम् । मित्रार्थे तौ पराक्रान्तौ
स्पर्द्धिनौ शुष्मिणौ रणे ॥ ५६ ॥ कर्णश्चामरसङ्काशो युयुधानश्च
सात्यकिः । अन्योऽन्यं तौ महाराज शरवर्षैरवर्षताम् ॥ ५७ ॥
प्रममाथ शिनेः पौत्रं कर्णः सायकवृष्टिभिः । अमृष्यमाणो निधनं
कौरव्यजलसन्धयोः ॥ ५८ ॥ कर्णः शोकसमाविष्टो महोरग इव

प्रवपन् । स शैनेयं रणे क्रुद्धः प्रदहन्निव चक्षुषा ॥ ५९ ॥ अभ्य-
द्रवत वेगेन पुनः पुनररिन्दम । तन्तु सम्प्रेक्ष्य संक्रुद्धं सात्यकिः
प्रत्यविध्यत ॥ ६० ॥ महता शरवर्षेण गजः प्रतिगजं यथा ।
तौ समेत्य नरव्याघ्रौ व्याघ्राविव तरस्विनौ ॥ ६१ ॥ अन्योन्यं
सन्ततक्षाते रणेऽनुपमविक्रमौ । ततः कर्णं शिनेः पौत्रः सर्व-
पारशवैः शरैः ॥ ६२ ॥ बिभेद सर्वगात्रेषु पुनः पुनररिन्दमम् ।
सारथिञ्चास्य भल्लेन रथनीडादपाहरत् ॥ ६३ ॥ अश्वांश्च चतुरः
श्वेतान् निजघ्ने निशितैः शरैः । छित्त्वा ध्वजं शतेनैव शतधा
पुरुषर्षभ ॥ ६४ ॥ चकार विरथं कर्णं तव पुत्रस्य पश्यतः ।
ततो विमनसो राजंस्तावका भरतर्षभ ॥ ६५ ॥ वृषसेनः कर्ण-
सुतः शल्यो मद्राधिपस्तथा । द्रोणपुत्रश्च शैनेयं सर्वतः पर्य्य-
वारयन् ॥ ६६ ॥ ततः पर्य्याकुलं सर्वं न प्राज्ञायत किञ्चन ।
तथा सात्यकिना वीरे विरथे सूतजे कृते ॥ ६७ ॥ हाहाकार-
स्ततो राजन् सर्वसैन्येषु चाभवत् । कर्णोऽपि विह्वलो राजन्
सात्वतेनार्दितः शरैः ॥ ६८ ॥ दुर्य्योधनरथं राजन्नारुरोह विनिः-
श्वसन् । मानयंस्तव पुत्रस्य बाल्यात्प्रभृति सौहृदम् ॥ ६९ ॥
कृतां राज्यप्रदानेन प्रतिज्ञां परिपालयन् । तथा तु विरथे कर्णे
पुत्रान् वै तव पार्थिव ॥ ७० ॥ दुःशासनमुखान् शूरान्नावधीत्
सात्यकिर्वशी । रक्षन् प्रतिज्ञां भीमेन पार्थेन च कृतां पुरा ॥ ७१ ॥
विरथान् विह्वलांश्चक्रे न तु प्राणैर्व्ययोजयत् । भीमसेनेन तु
वधः पुत्राणान्ते प्रतिश्रुतः ॥ ७२ ॥ पुनर्द्यूते च पार्थेन वधः
कर्णस्य संश्रुतः । वधे त्वकुर्वन् यत्नं ते तस्य कर्णमुखा रथाः
॥ ७३ ॥ नाशक्नुवंश्च तं हन्तुं सात्यकिं प्रवरा रथाः । द्रौणिश्च
कृतवर्मा च तथैवान्ये महारथाः ॥ ७४ ॥ निर्जिता धनुषैकेन
शतशः क्षत्रियर्षभाः । काङ्क्षता परलोकञ्च धर्मराजस्य च प्रियम्
॥ ७५ ॥ कृष्णयोः सदृशो वीर्य्ये सात्यकिः शत्रुकर्षणः । जित-

वान् सर्व्वसैन्यानि तावकानि द्रवन्निव ॥ ७६ ॥ कृष्णो वापि भवेल्लोके पार्थो वापि धनुर्द्धरः। शैनेयो वा नरश्रेष्ठ चतुर्थो नोपलभ्यते ॥ ७७ ॥

धृतराष्ट्र उवाच। अन्यं रथमास्थाय वासुदेवस्य सात्यकिः। विरथं कृतवान् कर्णं वासुदेवसमो युधि ॥ ७८ ॥ दारुकेण समायुक्तः स्वबाहुबलदर्पितः। कच्चिदन्यं समारूढः स रथं सात्यकिः पुनः ॥ ७९ ॥ एतदिच्छाम्यहं श्रोतुं कुशलो ह्यसि भाषितुम्। असह्यं तमहं मन्ये तन्ममाचक्ष्व सञ्जय ॥ ८० ॥

सञ्जय उवाच। शृणु राजन् यथा तस्य रथमन्यं महामतिः। दारुकस्यानुजस्तूर्णं कल्पनाविधिकल्पितम् ॥ ८१ ॥ आयसैः काञ्चनैश्चापि पट्टैः सन्नद्धकूवरम्। ताराशतसमाचितं सिंहध्वजपताकिनम् ॥ ८२ ॥ अश्वैर्वातजवैर्युक्तं हेमभाण्डपरिच्छदैः। रथं सम्पादयामास मेघगम्भीरनिस्वनम् ॥ ८३ ॥ तं समारुह्य शैनेयस्तव सैन्यमुपाद्रवत्। दारुकोऽपि यथाकामं प्रययौ केशवान्तिकम् ॥ ८४ ॥ कर्णस्यापि महाराज शङ्खगोक्षीरपाण्डुरैः। चित्रकाञ्चनसन्नाहैः सदश्वैर्वेगवत्तरैः ॥ ८५ ॥ हेमकक्षाध्वजोपेतं क्लृप्तयन्त्रपताकिनम्। अग्र्यं रथं सुयन्तारं बहुशस्त्रपरिच्छदम् ॥ ८६ ॥ उपाजह्रुस्तमास्थाय कर्णोऽप्यभ्यद्रवद्रिपून्। एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥ ८७ ॥ भूयश्चापि निबोध त्वं तवापनयजं क्षयम्। एकत्रिंशत्तव सुता भीमसेनेन पातिताः ॥ ८८ ॥ दुर्मुखं प्रमुखे कृत्वा सततं चित्रयोधिना। शतशो निहताः शूराः सात्वतेनार्जुनेन च ॥ ८९ ॥ भीष्मं प्रमुखतः कृत्वा भगदत्तञ्च मारिष। एवमेष क्षयो वृत्तो राजन् दुर्मन्त्रिते तव ॥ ९० ॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि कर्णसात्यकियुद्धे सप्तचत्वारिंशदधिकशततोऽध्यायः ॥ १४७ ॥

धृतराष्ट्र उवाच। तथा गतेषु शूरेषु तेषां मम च संयुगे। किं वै भीमस्तदाकार्षीत्तन्ममाचक्ष्व सञ्जय ॥ १ ॥

सञ्जय उवाच। विरथो भीमसेनो वै कर्णवाक्शल्यपीडित। अमर्षवशमापन्न फाल्गुन वाक्यमब्रवीत् ॥ २ ॥ पुन पुनस्तूवरक मूढ औदरिकेति च। अकृतास्त्रक माऽयोत्सीर्बाल सङ्ग्रामकातर ॥ ३ ॥ इति मामब्रवीत् कर्ण पश्यतस्ते धनञ्जय। एवं वक्ता च मे वध्यस्तेन चोक्तोऽस्मि भारत ॥ ४ ॥ एतद्व्रत महाबाहो त्वया सह कृत मया। यथैतन्मम कौन्तेय तथा तव न संशय ॥ ५ ॥ तद्वधाय नरश्रेष्ठ स्मरैतद्वचन मम। यथा भवति तत् सत्यं तथा कुरु धनञ्जय ॥ ६ ॥ तच्छ्रुत्वा वचनं तस्य भीमस्यामितविक्रम। ततोऽर्जुनोऽब्रवीत् कर्णं किञ्चिदभ्येत्य संयुगे ॥ ७ ॥ कर्ण कर्ण वृथादृष्टे सूतपुत्रात्मसंस्तुत। अधर्मबुद्धे शृणु मे यत्त्वा वक्ष्यामि साम्प्रतम् ॥ ८ ॥ द्विविधं कर्म शूराणां युद्धे जयपराजयौ। तौ चाप्यनित्यौ राधेय वासवस्यापि युध्यत ॥ ९ ॥ मुमूर्षुर्युयुधानेन विरथो विकलेन्द्रिय। मद्वध्यस्त्वमिति ज्ञात्वा जित्वा जीवन् विसर्जित ॥ १० ॥ यदृच्छया भीमसेनं विरथं कृतवानसि। अधर्मस्तैव राधेय यत्त्वं भीममवोचथा ॥ ११ ॥ नारीन् जित्वा विकत्थन्ते न च जल्पन्ति दुर्वच। न च किञ्चन निन्दन्ति सन्त शूरा नरर्षभा ॥ १२ ॥ त्वन्तु प्राकृतविज्ञानस्तत्तद्वदसि सूतज। युध्यमान पराक्रान्तं शूरमार्यव्रते रतम् ॥ १३ ॥ यदवोचोऽप्रियं भीमं नैतत् सत्यं वचस्तव। पश्यतां सर्वसैन्यानां केशवस्य ममैव च ॥ १४ ॥ विरथो भीमसेनेन कृतोऽसि बहुशो रणे। न च त्वां परुषं किञ्चिदुक्तवान् पाण्डुनन्दन ॥ १५ ॥ यस्माद्बहु च रूक्षञ्च श्रावितस्ते वृकोदर। परोक्षं यच्च सौभद्रो युष्माभिर्निहतो मम ॥ १६ ॥ तस्मादस्यावलेपस्य सद्य फलमवाप्नुहि। त्वया तस्य धनुश्छिन्नं

मात्मनामाद्य दुर्मते ॥ १७ ॥ तस्मादद्योऽसि मे मूढ सभृत्यबल-
वाहनः। कुरु त्वं सर्वकृत्यानि महत्ते भयमागतम् ॥ १८ ॥
हन्तास्मि वृषसेनं ते प्रेक्षमाणस्य संयुगे। ये चान्ये नृपयास्यन्ति
बुद्धिमोहेन मां नृपाः ॥ १९ ॥ तांश्च सर्वान् हनिष्यामि सत्ये-
नायुधमालभे। त्वाञ्च मूढाकृतप्रज्ञमभिमानिनमाहवे ॥ २० ॥
दृष्ट्वा दुर्य्योधनो मन्दो भृशं तप्स्यति पातितम्। अर्ज्जुनेन प्रति-
ज्ञाते वधे कर्णसुतस्य तु ॥ २१ ॥ महान् सुतुमुलः शब्दो बभूव
रथिनां तदा। तस्मिन्नाकुलसङ्ग्रामे वर्त्तमाने भयावहे ॥ २२ ॥
मन्दरश्मिः सहस्रांशुरस्तं गिरिमुपागमत्। ततो राजन् हृषी-
केशः सङ्ग्रामशिरसि स्थितम् ॥ २३ ॥ तीर्णप्रतिज्ञं बीभत्सुं
परिष्वज्येदमब्रवीत्। दिष्ट्या सम्पादिता जिष्णो प्रतिज्ञा महती
त्वया ॥ २४ ॥ दिष्ट्या च निहतः पापो वृद्धक्षत्रः सहात्मजः।
धार्त्तराष्ट्रबलं प्राप्य देवसेनाऽपि भारत ॥ २५ ॥ सीदेत समरे
जिष्णो नात्र कार्य्या विचारणा। न तं पश्यामि लोकेषु चिन्तयन्
पुरुषं क्वचित् ॥ २६ ॥ त्वदृते पुरुषव्याघ्र य एतद्योधयेद्बलम्।
महाप्रभावा बहवस्त्वया तुल्याधिका अपि वा ॥ २७ ॥ समेताः पृथिवी-
पाला धार्त्तराष्ट्रस्य शासनात्। ते त्वां प्राप्य रणे क्रुद्धं नाभ्यवर्त्तन्त
दंशिताः ॥ २८ ॥ तव वीर्य्यं बलञ्चैव रुद्रशक्रान्तकोपमम्।
नेदृशं शक्नुयात् कश्चिद्रणे कर्त्तुं पराक्रमम् ॥ २९ ॥ यादृशं
कृतवानद्य त्वमेकः शत्रुतापन। एवमेव हते कर्णे सानुबन्धे
दुरात्मनि ॥ ३० ॥ वर्द्धयिष्यामि भूयस्त्वां विजितारिं हत-
द्विषम्। तमर्ज्जुनः प्रत्युवाच प्रसादात्तव माधव ॥ ३१ ॥ प्रतिज्ञेयं
मया तीर्णा विबुधैरपि दुस्तरा। अनाश्चर्य्यो जयस्तेषां येषां
नाथोऽसि केशव ॥ ३२ ॥ त्वत्प्रसादान्महीं कृत्स्नां सम्प्राप्स्यति
युधिष्ठिरः। तव प्रभावो वार्ष्णेय तवैव विजयः प्रभो ॥ ३३ ॥
वर्द्धनीयास्तव वयं प्रेष्याश्च मधुसूदन। एवमुक्तः स्मयन् कृष्णः

शनकैर्वाहयन् हयान्। दर्शयामास पार्थाय क्रूरमायोधनं
महत्॥ ३४॥
कृष्ण उवाच। प्रार्थयन्तो जयं युद्धे प्रथिताश्च महारथाः।
पृथिव्यां शेरते शूराः पार्थिवास्त्वच्छरैर्हताः॥ ३५॥ विकीर्ण-
शस्त्राभरणा विपन्नाश्वरथद्विपाः। सञ्छिन्नभिन्नवर्माणो वैक्लव्यं
परमं गताः॥ ३६॥ सत्त्वा गतसत्त्वाश्च प्रभया परया युताः।
सजीवा इव लक्ष्यन्ते गतसत्त्वा नराधिपाः॥ ३७॥ तेषां शरैः
स्वर्णपुङ्खैः शस्त्रैश्च विविधैस्तथा। वाहनैरायुधैश्चैव सम्पूर्णां पश्य
मेदिनीम्॥ ३८॥ वर्मभिश्चर्मभिर्हारैश्च शिरोभिश्च सकुण्डलैः।
उष्णीषैर्मुकुटैः स्रग्भिश्चूडामणिभिरेव च॥ ३९॥ कण्ठसूत्रै-
रङ्गदैश्च निष्कैरपि च सुप्रभैः। अन्यैश्चाभरणैश्चित्रैर्भाति भारत
मेदिनी॥ ४०॥ अनुकर्षैरुपासङ्गैः पताकाभिर्ध्वजैस्तथा। उप-
स्करैरधिष्ठानैरीषादण्डकबन्धुरैः॥ ४१॥ चक्रैः प्रमथितैश्चित्रै-
रक्षैश्च बहुधा रणे। युगैर्योक्त्रैः कलापैश्च धनुर्भिः सायकैस्तथा
॥ ४२॥ परिस्तोमैः कुथाभिश्च परिघैरङ्कुशैस्तथा। शक्तिभि-
र्भिन्दिपालैश्च तूणैः शूलैः परश्वधैः॥ ४३॥ प्रासैश्च तोमरैश्चैव
कुन्तैर्यष्टिभिरेव च। शतघ्नीभिर्भुशुण्डीभिः खड्गैः परशुभि-
स्तथा॥ ४४॥ मुसलैर्मुद्गरैश्चैव गदाभिः कुणपैस्तथा। सुवर्ण-
विकृताभिश्च कशाभिर्भरतर्षभ॥ ४५॥ घण्टाभिश्च गजेन्द्राणां
भाण्डैश्च विविधैरपि। स्रग्भिश्च नानाभरणैर्वस्त्रैश्चैव महाधनैः
॥ ४६॥ अपविद्धैर्बभौ भूमिर्ग्रहैर्द्यौरिव शारदी। पृथिव्यां
पृथिवीहेतोः पृथिवीपतयो हताः॥ ४७॥ पृथिवीमुपगुह्याङ्गैः
सुप्ताः कान्तामिव प्रियाम्। इमांश्च गिरिकूटाभान्नागानैरावतो-
पमान्॥ ४८॥ क्षरतः शोणितं भूरि शस्त्रच्छेददरीमुखैः।
दरीमुखैरिव गिरीन् गैरिकाम्बुपरिस्रवान्॥ ४९॥ तांश्च बाण-
हतान् वीर पश्य निष्टनतः क्षितौ। हयांश्च पातितान् पश्य स्वर्ण-

भाण्डविभूषितान् ॥ ५० ॥ गन्धर्व्वनगराकारांश्चाथ निहते-
श्वरान् । छिन्नध्वजपताकाग्रान् विचक्रान् हतसारथीन् ॥ ५१ ॥
निकृत्तकूवरयुगान् भग्नेषाबन्धुरान् प्रभो । पश्य पार्थ हतान्
भूमौ विमानोपमदर्शनान् ॥ ५२ ॥ पत्तींश्च निहतान् वीर शत-
शोऽथ सहस्रश । धनुर्भृतश्चर्म्मभृत' शयानान् रुधिरोक्षितान्
॥ ५३ ॥ महीमालिङ्ग्य सर्व्वाङ्गै पांशुध्वस्तशिरोरुहान् । पश्य
योधान्महाबाहो त्वच्छरैर्भिन्नविग्रहान् ॥ ५४ ॥ चामरव्यजनैश्छत्रै-
र्ध्वजैश्चाश्वरथद्विपै । विविधैश्च परिस्तोमैरश्वानाञ्च प्रकर्पपै ॥ ५५ ॥
कुथाभिश्च विचित्राभिर्व्वरूथैश्च महाधनै । संस्तीर्णां वसुधां पश्य
चित्रपट्टैरिवावृताम् ॥ ५६ ॥ नागेभ्य पतितानन्यान् कल्पितेभ्यो
द्विपै सह । सिंहान् वज्रप्रणुन्नेभ्यो गिरिग्रेभ्य इव च्युतान् ॥ ५७ ॥
संस्यूतान् वाजिभि' सार्द्धं धनुर्भिश्च तथापरान् । पदातीन्
सादिनश्चैव हतजीवपरिच्युतान् ॥ ५८ ॥ निपातितद्विपरथवाजि-
सङ्कुलमसृग्वसापिशितसमस्तकर्द्दमम् । निशाचरश्ववृककपिशाचमोदनं
महीतलं नरवर पश्य दुर्दृशम् ॥ ५९ ॥ इदं महत्त्वय्युपपद्यते प्रभो
रणाजिरे कर्म्मयशोऽभिवर्द्धनम् । शतक्रतौ चापि च देवसत्तमे
महाहवे जघ्नुषि दैत्यदानवान् ॥ ६० ॥

सञ्जय उवाच । एवं सन्दर्शयन् कृष्णो रणभूमिं किरीटिने ।
स्वैः समेत समुदितैः पाञ्चजन्यं व्यनादयत् ॥ ६१ ॥ सन्दर्शयन्नेव
किरीटिनेऽरिहा जनार्द्दनस्तामरिभूमिमञ्जसा । अजातशत्रुं समु-
पेत्य पाण्डवं निवेदयामास हतं जयद्रथम् ॥ ६२ ॥

इति द्रोणपर्व्वणि जयद्रथवधपर्व्वणि युद्धभूमिदर्शने
अष्टचत्वारिंशदधिकशततोऽध्याय ॥ १४८ ॥

---

सञ्जय उवाच। ततो राजानमभ्येत्य धर्मपुत्रं युधिष्ठिरम्।
ववन्दे सम्प्रहृष्टात्मा हते पार्थेन सैन्धवे ॥ १ ॥ दिष्ट्या वर्द्धसि
राजेन्द्र हतशत्रुर्नरोत्तम। दिष्ट्या निस्तीर्णवांश्चैव प्रतिज्ञामनुज-
स्तव ॥ २ ॥ स त्वेवमुक्तः कृष्णेन हृष्टः परपुरञ्जयः। ततो
युधिष्ठिरो राजा रथादाप्लुत्य भारत ॥ ३ ॥ पर्यष्वजत्तदा
कृष्णावानन्दाश्रुपरिप्लुतः। प्रमृज्य वदनं शुभ्रं पुण्डरीकसमप्रभम्
॥ ४ ॥ अब्रवीद्वासुदेवञ्च पाण्डवञ्च धनञ्जयम्। दिष्ट्या पश्यामि
सङ्ग्रामे तीर्णभारौ महारथौ ॥ ५ ॥ दिष्ट्या च निहतः पापः
सैन्धवः पुरुषाधमः। कृष्णौ दिष्ट्या मम प्रीतिर्महती प्रतिपादिता
॥ ६ ॥ दिष्ट्या शत्रुगणाश्चैव निमग्नाः शोकसागरे। न तेषां
दुष्कृतं किञ्चित्त्रिषु लोकेषु विद्यते ॥ ७ ॥ सर्वलोकगुरुर्येषां
त्वन्नाथो मधुसूदन। तव प्रसादाद्गोविन्द वयं जेष्यामहे
रिपून् ॥ ८ ॥ यथा पूर्वं प्रसादात्ते दानवान् पाकशासनः।
पृथिव्या विजयो वापि त्रैलोक्यविजयोऽपि च ॥ ९ ॥ ध्रुवो हि
तेषां वार्ष्णेय येषां तुष्टोऽसि मानद। न तेषां विद्यते पापं
सङ्ग्रामे वा पराजयः ॥ १० ॥ त्रिदशेश्वरनाथस्त्वं येषां तुष्टोऽसि
मानद। त्वत्प्रसादात् हृषीकेश शक्रः सुरगणेश्वरः ॥ ११ ॥
त्रैलोक्यविजयं श्रीमान् प्राप्तवान् रणमूर्द्धनि। तव चैव प्रसादेन
त्रिदशास्त्रिदशेश्वर ॥ १२ ॥ अमरत्वं गताः कृष्ण लोकांश्चाश-
वतोऽक्षयान्। त्वत्प्रसादसमुत्थेन विक्रमेणारिसूदन ॥ १३ ॥
सुरेशत्वं गतः शक्रो हत्वा दैत्यान् सहस्रशः। त्वत्प्रसादात्
हृषीकेश जगत् स्थावरजङ्गमम् ॥ १४ ॥ स्ववर्त्मनि स्थितं वीर
जपहोमेषु वर्त्तते। एकार्णवमिदं पूर्वं सर्वमासीत्तमोमयम् ॥१५॥
त्वत्प्रसादात्प्रकाशत्वं जगत् प्राप्तं नरोत्तम। स्रष्टारं सर्वलोकानां
परमात्मानमव्ययम् ॥ १६ ॥ ये पश्यन्ति हृषीकेशं न ते मुह्यन्ति
कर्हिचित्। पुराणं परमं देवं देवदेवं सनातनम् ॥ १७ ॥ ये

प्रपन्नाः सुरगुरुं न ते मुह्यन्ति कर्हिचित् । अनादिनिधनं देवं लोककर्त्तारमव्ययम् ॥ १८ ॥ ये भक्तास्त्वां हृषीकेश दुर्गाण्यति तरन्ति ते । परं पुराणं पुरुषं पराणां परमञ्च यत् ॥ १९ ॥ प्रपद्यतस्तत् परमं परा भूतिर्विधीयते । यं गायन्ति चतुरो वेदा यश्च वेदेषु गीयते ॥ २० ॥ तं प्रपद्य महात्मानं भूतिमाप्नोत्यनुत्तमाम् । परमेश परेशेश तिर्य्यगीश नरेश्वर ॥ २१ ॥ सर्व्वेश्वरेश्वरेशेश नमस्ते पुरुषोत्तम । त्वमीश ईश्वरेशान प्रभो वर्द्धस्व माधव ॥ २२ ॥ प्रभवाप्यय सर्व्वस्य सर्व्वात्मन् पृथुलोचन । धनञ्जयसखा यश्च धनञ्जयहितश्च यः ॥ २३ ॥ धनञ्जयस्य गोप्तारं प्रपद्य सुखमेधते । एवमुक्तौ महात्मानौ तदा केशवपाण्डवौ ॥ २४ ॥ तावब्रूतां तदा हृष्टौ राजानं पृथिवीपतिम् । तव कोपाग्निना दग्धः पापो राजा जयद्रथः ॥ २५ ॥ उदीर्णञ्चापि सुमहद्धार्त्तराष्ट्रबलं प्रभो । हन्यते निहतञ्चैव विनश्यन्ति च भारत ॥ २६ ॥ तव क्रोधाद्धता ह्येते कौरवाः शत्रुसूदन । त्वां हि चक्षुर्हणं वीर कोपयित्वा सुयोधनः ॥ २७ ॥ समित्रबन्धुः समरे प्राणांस्त्यक्ष्यति दुर्म्मतिः । तव क्रोधहतः पूर्वं देवैरपि दुरासदः ॥ २८ ॥ शरतल्पगतः शेते भीष्मः कुरुपितामहः । दुर्लभो हि जयस्तेषां सङ्ग्रामे रिपुसूदन ॥ २९ ॥ याता मृत्युवशं ते च येषां द्वेष्टा च पाण्डवः । राज्यं प्राणाः प्रियाः पुत्राः सौख्यानि विविधानि च ॥ ३० ॥ अचिरात्तस्य नश्यन्ति यस्य क्रुद्धः परन्तप । विनष्टान् कौरवान् मन्ये सपुत्रपशुबान्धवान् ॥ ३१ ॥ राजधर्मपरे नित्यं त्वयि क्रुद्धे परन्तप । ततो भीमो महाराज सात्यकिश्च महारथः ॥ ३२ ॥ अभिवाद्य गुरुं ज्येष्ठं मार्गणैः क्षतविक्षतौ । स्थितावास्तां महेष्वासौ पाञ्चाल्यैः परिवारितौ ॥ ३३ ॥ तौ दृष्ट्वा मुदितौ वीरौ प्राञ्जली समुपस्थितौ । अभ्यनन्दत कौन्तेयस्तावुभौ भीमसात्यकी ॥ ३४ ॥ दिष्ट्या पश्यामि वां शूरौ विमुक्तौ सैन्य-

सागरात्। द्रोणग्राहदुराधर्षात् हार्दिक्यमकरालयात्। दिष्ट्या
मे निर्जिताः सर्वे पृथिव्यां सर्वपार्थिवाः॥३५॥ युवां विजयिनौ
चापि दिष्ट्या पश्यामि संयुगे। दिष्ट्या द्रोणो जितः सङ्ख्ये
हार्दिक्यश्च महारथः॥३६॥ दिष्ट्या विकर्णिभिः कर्णो रणे
नीतः पराजयम्। विमुखश्च कृतः शल्यो युवाभ्यां पुरुषर्षभौ
॥३७॥ दिष्ट्या युवां कुशलिनौ सङ्ग्रामात् पुनरागतौ। पश्यामि
रथिनां श्रेष्ठावुभौ युद्धविशारदौ॥३८॥ मम वाक्यकरौ वीरौ
मम गौरवयन्त्रितौ। सैन्यार्णवं समुत्तीर्णौ दिष्ट्या पश्यामि
वामहम्॥३९॥ समरश्लाघिनौ वीरौ सङ्ग्रामेष्वपलायिनौ।
मम प्राणसमौ चैव दिष्ट्या पश्यामि वामहम्॥४०॥ इत्युक्त्वा
पाण्डवो राजन् युयुधानवृकोदरौ। सस्वजे पुरुषव्याघ्रौ हर्षा-
द्बाष्पं मुमोच ह॥४१॥ ततः प्रमुदितं सर्वं बलमासीद्विशाम्पते।
पाण्डवानां रणे हृष्टं युद्धाय च मनो दधे॥४२॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि युधिष्ठिरहर्षे
एकोनपञ्चाशदधिकशततमोऽध्यायः॥१४९॥

---

१ सञ्जय उवाच॥ सैन्धवे निहते राजन् पुत्रस्तव सुयोधनः।
अश्रुक्लिन्नमुखो दीनो निरुत्साहो द्विषज्जये॥१॥ दुर्मना निः-
श्वसन्दुष्टो भग्नदंष्ट्र इवोरगः। आगस्कृत् सर्वलोकस्य पुत्रस्तेऽर्त्तिं
परामगात्॥२॥ दृष्ट्वा तत् कदनं घोरं स्वबलस्य कृतं महत्।
जिष्णुना भीमसेनेन सात्वतेन च संयुगे॥३॥ स विवर्णः कृशो
दीनो बाष्पविप्लुतलोचनः। अमन्यतार्जुनसमो न योद्धा भुवि
विद्यते॥४॥ न द्रोणो न च राधेयो नाश्वत्थामा कृपो न च।
क्रुद्धस्य प्रमुखे स्थातुं पर्याप्ता इति मारिष॥५॥ निर्जित्य हि
रणे पार्थः सर्वान्मम महारथान्। अवधीत्सैन्धवं सङ्ख्ये नैनं

कश्चिदवारयत् ॥ ६ ॥ सर्वथा हतमेवेदं पाण्डवैर्मे महद्बलम् । न ह्यस्य विद्यते त्राता साक्षादपि पुरन्दरः ॥ ७ ॥ यमुपाश्रित्य सङ्ग्रामे कृतः शस्त्रसमुद्यमः । स कर्णो निर्जितः सङ्ख्ये हतश्चैव जयद्रथः ॥ ८ ॥ यस्य वीर्य्यं समाश्रित्य शमं याचन्तमच्युतम् । तृणवत्तमहं मन्ये स कर्णो निर्जितो युधि ॥ ९ ॥ एवं क्लान्तमना राजन्नुपायाद् द्रोणमीक्षितुम् । आगस्कृत् सर्वलोकस्य पुत्रस्ते भरतर्षभ ॥ १० ॥ ततस्तत् सर्वमाचख्यौ कुरूणां वैशसं महत् । परान् विजयतस्तांश्च धार्त्तराष्ट्रान्निमज्जतः ॥ ११ ॥

दुर्य्योधन उवाच । पश्य मूर्द्धाभिषिक्तानामाचार्य्य कदनं महत् । कृत्वा प्रमुखतो भीष्मं शूरं मम पितामहम् ॥ १२ ॥ तं निहत्य प्रलुब्धोऽयं शिखण्डी पूर्णमानसः । पाञ्चालैः सहितः सर्वैः सेनाग्रमभिवर्त्तते ॥ १३ ॥ अपरश्चापि दुर्द्धर्षः शिष्यस्ते सव्यसाचिना । अक्षौहिणीः सप्त हत्वा हतो राजा जयद्रथः ॥ १४ ॥ अस्मद्विजयकामानां सुहृदामुपकारिणाम् । गन्तास्मि कथमानृण्यं गतानां यमसादनम् ॥ १५ ॥ ये मदर्थं परीप्सन्ते वसुधां वसुधाधिपाः । ते हित्वा वसुधैश्वर्य्यं वसुधामधिशेरते ॥ १६ ॥ सोऽहं कापुरुषः कृत्वा मित्राणां क्षयमीदृशम् । नाश्वमेधसहस्रेण पातुमात्मानमुत्सहे ॥ १७ ॥ मम लुब्धस्य पापस्य तथा धर्म्मापचायिनः । व्यायामेन जिगीषन्तः प्राप्ता वैवस्वतक्षयम् ॥ १८ ॥ कथं पतितवृत्तस्य पृथिवी सुहृदां द्रुहः । विवरं नाशकद्दातुं पृथिवी मम दुर्म्मतेः ॥ १९ ॥ योऽयं रुधिरदिग्धाङ्गो राज्ञां मध्ये पितामहः । किं स वक्ष्यति दुर्द्धर्षः समेत्य परलोकजित् ॥ २० ॥ जलसन्धं महेष्वासं पश्य सात्यकिना हतम् । मदर्थमुद्यतं शूरं प्राणांस्त्यक्त्वा महारथम् ॥ २१ ॥ काम्बोजं निहतं दृष्ट्वा तथालम्बुषमेव च । अन्यान् बहूंश्च सुहृदो जीवितार्थोऽद्य को मम ॥ २२ ॥ व्यायच्छन्तो हताः शूरा मदर्थे येऽपराङ्मुखाः । यतमानाः पर-

शक्त्या विजेतुमहितानम ॥ २३ ॥ तेषां गत्वाहमानृण्यमद्य शक्त्या परन्तप। तर्पयिष्यामि तानेव जलेन यमुनामनु ॥ २४ ॥ सत्यं ते प्रतिजानामि सर्वशस्त्रभृतांवर। इष्टापूर्तेन च भ्रात्रा वीर्येण च सुतैरपि ॥ २५ ॥ निहत्य तान् रणे सर्वान् पाञ्चालान् पाण्डवैः सह। शान्तिं गन्तास्मि तेषां वा रणे गत्वा सलोकताम् ॥ २६ ॥ सोऽहं तत्र गमिष्यामि यत्र ते पुरुषर्षभाः। हता मदर्थं सङ्ग्रामे युध्यमानाः किरीटिना ॥ २७ ॥ न हीदानीं सहाया मे परीप्सन्त्यनुपस्कृताः। श्रेयो हि पाण्डून्मन्यन्ते न तथास्मान्महाभुज ॥ २८ ॥ स्वयं हि मृत्युर्विहितः सत्यसन्धेन संयुगे। भवानुपेक्षां कुरुते शिष्यत्वादर्जुनस्य तु ॥ २९ ॥ अतो हि निहताः सर्वे येऽस्मज्जयचिकीर्षवः। कर्णमेव तु पश्यामि सम्प्रत्यस्मज्जयैषिणम् ॥ ३० ॥ यो हि मित्रमविज्ञाय याथातथ्येन मन्दधीः। मित्रार्थे योजयत्येनं तस्यार्थोऽवसीदति ॥ ३१ ॥ तादृग्रूपं कृतमिदं मम कार्यं सुहृत्तमैः। मोहाल्लुब्धस्य पापस्य जिह्मस्य धनमीहतः ॥ ३२ ॥ हतो जयद्रथो राजा सौमदत्तिश्च वीर्यवान्। अभीषाहाः शूरसेनाः शिवयोऽथ वसातयः ॥ ३३ ॥ सोऽहमद्य गमिष्यामि यत्र ते पुरुषर्षभाः। हता मदर्थं सङ्ग्रामे युध्यमानाः किरीटिना ॥ ३४ ॥ न हि मे जीवितेनार्थस्तानृते पुरुषर्षभान्। आचार्यः पाण्डुपुत्राणामनुजानातु नो भवान् ॥ ३५ ॥

इति द्रोणपर्वणि जयद्रथवधपर्वणि दुर्योधनानुतापे
पञ्चाशदधिकशततमोऽध्यायः ॥ १५० ॥

---

धृतराष्ट्र उवाच। सिन्धुराजे हते तात समरे सव्यसाचिना। तथैव भूरिश्रवसि किमासीद्वो मनस्तदा ॥ १ ॥ दुर्योधनेन च

द्रोणस्तथोक्तः कुरुसंसदि । किमुक्तवान् परं तस्मै तन्ममाचक्ष्व
सञ्जय ॥ २ ॥
सञ्जय उवाच । निष्टानको महानासीत् सैन्यानां तव भारत ।
सैन्धवं निहतं दृष्ट्वा भूरिश्रवसमेव च ॥ ३ ॥ अवामन्यन्त ते सर्वे
तव पुत्रस्य मन्त्रितम् । येन मन्त्रेण निहताः शतशः पुरुषर्षभाः
॥ ४ ॥ द्रोणस्तु तद्वचः श्रुत्वा तव पुत्रस्य दुर्मनाः । ध्यात्वा
मुहूर्तं राजेन्द्र भृशमार्त्तोऽभ्यभाषत ॥ ५ ॥
द्रोण उवाच । दुर्योधन किमेवं मां वाक्शरैरुपविध्यसि ।
अजय्यं हि सदा सङ्ख्ये ब्रुवाणं सव्यसाचिनम् ॥ ६ ॥ एतेनैवार्जुनं
ज्ञातुमलं कौरव संयुगे । यच्छिखण्ड्यवधीद्भीष्मं पाल्यमानः
किरीटिना ॥ ७ ॥ अवध्यं निहतं दृष्ट्वा संयुगे देवदानवैः । तदै-
वाज्ञासिषमहं नेयमस्तीति भारती ॥ ८ ॥ यं पुंसां त्रिषु लोकेषु
सर्वशूरममंस्महि । तस्मिन्निपतिते शूरे किं शेषं पर्युपास्महे
॥ ९ ॥ यान् स्म तान् ग्लहते तात शकुनिः कुरुसंसदि । अक्षान्न
तेऽक्षा निशिता बाणास्ते शत्रुतापनाः ॥ १० ॥ त एते घ्नन्ति
नस्तात विशिखा जयनोदिताः । यांस्तदाख्यायमानस्त्वं विदु-
रेण न बुध्यसे ॥ ११ ॥ यास्ता विलपतश्चापि विदुरस्य महा-
त्मनः । धीरस्य वाचो नाश्रौषीः क्षेमाय वदतः शुभाः ॥ १२ ॥
तदिदं वर्त्तते घोरमागतं वैशसं महत् । तस्यावमानाद्वाक्यस्य
दुर्योधन कृते तव ॥ १३ ॥ योऽवमन्य वचः पथ्यं सुहृदामाप्त-
कारिणाम् । स्वमतं कुरुते मूढः स शोच्यो न चिरादिव ॥ १४ ॥
यच्च नः पश्यमानानां कृष्णामानाय्य तत् सभाम् । अनर्हन्तीं कुले
जातां सर्वधर्मानुचारिणीम् ॥ १५ ॥ तस्याधर्मस्य गान्धारे फलं
प्राप्तमिदं महत् । नो चेत् पापं परे लोके त्वमर्च्छेथास्ततोऽधि-
कम् ॥ १६ ॥ यच्च त्वं पाण्डवान् द्यूते विषमेण विजित्य च ।
प्राव्राजयस्तदारण्ये रौरवाजिनवाससः ॥ १७ ॥ पुत्राणामिव

तेषां वै धर्ममाचरतां सदा। द्रुह्येत् को नु नरो लोके मदन्यो
ब्राह्मणब्रुवः॥१८॥ पाण्डवानामयं कोपस्त्वया शकुनिना सह।
आहूतो धृतराष्ट्रस्य सम्मते कुरुसंसदि॥१९॥ दुःशासनेन संयुक्तः
कर्णेन परिवर्धितः। क्षत्तुर्वाक्यमनादृत्य त्वयाभ्यस्तः पुनः पुनः
॥२०॥ यत्ता सर्वे पराभूता पर्य्यवारयतार्ज्जुनम्। सिन्धु-
राजमपाश्रित्य स वो मध्ये कथं हतः॥२१॥ कथञ्च त्वयि कर्णे
च कृपे शल्ये च जीवति। अश्वत्थाम्नि च कौरव्य निधनं सैन्धवो
गतः॥२२॥ युध्यत सर्वराजानस्तेजस्तिग्ममुपासते। सिन्धु-
राजं परित्रातुं स वो मध्ये कथं हतः॥२३॥ मय्येव हि विशे-
षेण तथा दुर्य्योधन त्वयि। आशंसत परित्राणमर्ज्जुनात् स
महीपतिः॥२४॥ ततस्तस्मिन् परित्राणमलब्धवति फाल्गुनात्।
न किञ्चिदपि पश्यामि जीवितस्थानमात्मनः॥२५॥ मज्जन्तमिव
चात्मानं धृष्टद्युम्नस्य किल्बिषी। पश्याम्यहत्वा पाञ्चालान् सह
तेन शिखण्डिना॥२६॥ तस्मात् किमभितप्यन्तं वाक्शरैरुप-
कृन्तसि। अशक्तः सिन्धुराजस्य भूत्वा त्राणाय भारत॥२७॥
सौवर्णं सत्यसन्धस्य ध्वजमक्लिष्टकारिणः। अपश्यन् युधि भीष्मस्य
कथमाशंससे जयम्॥२८॥ मध्ये महारथानाञ्च यत्राहन्यत
सैन्धवः। हतो भूरिश्रवाश्चैव किं शेषं तत्र मन्यसे॥२९॥ कृप
एव च दुर्द्धर्षो यदि जीवति पार्थिव। यो नागात् सिन्धुराजस्य
वर्त्म तं पूजयाम्यहम्॥३०॥ यदापश्यं हतं भीष्मं पश्यतस्ते-
ऽनुजस्य वै। दुःशासनस्य कौरव्य कुर्वाणं कर्म दुष्करम्॥३१॥
अवध्यकल्पं सङ्ग्रामे देवैरपि सवासवैः। न ते वसुन्धरास्तीति
तदाहं चिन्तये नृप॥३२॥ इमानि पाण्डवानाञ्च सृञ्जयानाञ्च
भारत। अनीकान्याद्रवन्ते मां सहितान्यद्य मारिष॥३३॥
नाहत्वा सर्वपाञ्चालान् कवचस्य विमोक्षणम्। कर्त्तास्मि समरे
कर्म धार्त्तराष्ट्र हितं तव॥३४॥ राजन् ब्रूयाः सुतं मे त्वमश्व

त्थामानमाहवे । न सोमकाः प्रमोक्तव्या जीवितं परिरक्षता ॥३५॥ यच्च पित्रानुशिष्टोऽसि तद्वचः परिपालय । आनृशंस्ये दमे सत्ये आर्ज्जवे च स्थिरो भव ॥ ३६ ॥ धर्मार्थकामकुशलो धर्मार्थावप्यपीडयन् । धर्मप्रधानकार्य्याणि कुर्य्यास्तेति पुनः पुनः ॥ ३७ ॥ दक्षिणाभिश्च सन्तर्प्या विप्राः पूज्याश्च सर्व्वशः । न चैषां विप्रियं कार्य्यं ते हि वह्निशिखोपमाः ॥ ३८ ॥ एष त्वहमनीकानि प्रविशाम्यरिसूदन । रणाय महते युक्तस्त्वया वाक्शल्यपीड़ितः ॥ ३९ ॥ त्वञ्च दुर्य्योधन बलं यदि शक्तोऽसि धारय । रात्रावपि हि योत्स्यन्ति संरब्धाः कुरुसृञ्जयाः ॥ ४० ॥ एवमुक्त्वा ततः प्रायात् द्रोणः पाण्डवसृञ्जयान् । मुष्णन् क्षत्रियतेजांसि नक्षत्राणामिवांशुमान् ॥ ४१ ॥

इति द्रोणपर्व्वणि जयद्रथवधपर्व्वणि द्रोणवाक्ये
एकपञ्चाशदधिकशततोऽध्यायः ॥ १५१ ॥

---

सञ्जय उवाच । ततो दुर्य्योधनो राजा द्रोणेनैवं प्रचोदितः । अमर्षवशमापन्नो युद्धायैव मनो दधे ॥ १ ॥ अब्रवीच्च तदा कर्णं पुत्रो दुर्य्योधनस्तव । पश्य कृष्णसहायेन पाण्डवेन किरीटिना ॥ २ ॥ आचार्य्यविहितं व्यूहं भित्त्वा देवैः सुदुर्भिदम् । तव व्यायच्छमानस्य द्रोणस्य च महात्मनः ॥ ३ ॥ मिषतां योधमुख्यानां सैन्धवो विनिपातितः । पश्य राधेय राजानः पृथिव्यां प्रवरा युधि ॥ ४ ॥ पार्थेनैकेन निहताः सिंहेनेवेतरे मृगाः । मम व्यायच्छमानस्य द्रोणस्य च महात्मनः ॥ ५ ॥ अल्पावशेषं सैन्यं मे कृतं शक्रात्मजेन हि । कथं नियच्छमानस्य द्रोणस्य युधि फाल्गुनः ॥ ६ ॥ प्रतिज्ञायाः गतः पारं हत्वा सैन्धवमर्ज्जुनः । अनिच्छतः कथं वीर द्रोणस्य युधि पाण्डवः ॥ ७ ॥ भिन्द्यात्

सुदुर्भिदं व्यूहं यतमानस्य संयुगे। प्रियो हि फाल्गुनो नित्यमाचार्य्यस्य महात्मनः ॥ ८ ॥ ततोऽस्य दत्तवान् द्वारमयुद्धेनैव संयुगे। अभयं सैन्धवस्यादौ दत्त्वा द्रोणः परन्तप ॥९॥ प्रादात् किरीटिने द्वारं पश्य निर्गुणतां मम। यद्यदास्यदनुज्ञां वै पूर्वमेव गृहान् प्रति ॥ १० ॥ सिन्धुराजस्य समरे नाभविष्यज्जनक्षयः। जयद्रथो जीवितार्थी गच्छमानो गृहान् प्रति ॥ ११ ॥ मयानार्य्येण संरुद्धो द्रोणात् प्राप्याभयं रणे। अद्य मे भ्रातरः क्षीणाश्चित्रसेनादयो युधि। भीमसेनं समासाद्य पश्यतां नो दुरात्मनाम् ॥ १२ ॥

कर्ण उवाच। आचार्य्यं मा विगर्हस्व शक्त्या युध्यत्यसौ द्विजः। यथाबलं यथोत्साहं त्यक्त्वा जीवितमात्मनः ॥ १३ ॥ यद्येनं समतिक्रम्य प्रविष्टः श्वेतवाहनः। नात्र सूक्ष्मोऽपि दोषः स्यादाचार्य्यस्य कथञ्चन ॥ १४ ॥ कृती दक्षो युवा शूरः कृतास्त्रो लघुविक्रमः। दिव्यास्त्रयुक्तमास्थाय रथं वानरलक्षणम् ॥ १५ ॥ कृष्णेन च गृहीताश्वमभेद्यकवचावृतः। गाण्डीवमजरं दिव्यं धनुरादाय वीर्य्यवान् ॥ १६ ॥ प्रवर्षन्निशितान् बाणान् बाहुद्रविणदर्पितः। यदर्ज्जुनोऽभ्ययाद्द्रोणमुपपन्नं हि तस्य तत् ॥१७॥ आचार्य्यः स्थविरो राजन् शीघ्रयाने तथाक्षमः। बाहुव्यायामचेष्टायामशक्तस्तु नराधिप ॥ १८। तेनैनमभ्यतिक्रान्तः श्वेताश्वः कृष्णसारथिः। तस्माद्दोषं न पश्यामि द्रोणस्यानेन हेतुना ॥ १९ ॥ अजेयान् पाण्डवान्मन्ये द्रोणेनास्त्रविदा मृधे। तथा ह्येनमतिक्रम्य प्रविष्टः श्वेतवाहनः ॥ २० ॥ दैवादिष्टोऽन्यथाभावो न मन्ये विद्यते क्वचित्। यतो नो युध्यमानानां परं शक्त्या सुयोधन ॥ २१ ॥ सैन्धवो निहतो युद्धे दैवमत्र परं स्मृतम्। परं यत्नं कुर्वतां च त्वया सार्द्धं रणाजिरे ॥ २२ ॥ हत्वास्माकं पौरुषं दैवं पश्चात् करोति नः। सततं चेष्टमानानां निकृत्या विक्रमेण च ॥ २३ ॥ दैवोपसृष्टः पुरुषो यत् कर्म्म कुरुते नृप।

कृतं कृतं हि तत्तस्य दैवेन विनिपात्यते ॥ २४ ॥ यत् कर्त्तव्य
मनुष्येण व्यवसायवता सदा । तत् कार्य्यमविशङ्केन सिद्धिर्दैवे
प्रतिष्ठिता ॥ २५ ॥ निकृत्या वञ्चिताः पार्था विषयोगैश्च भारत ।
दग्धा जतुगृहे चैव द्यूतेन च पराजिताः ॥ २६ ॥ राजनीतिं
समास्थाय प्रहिताश्चैव काननम् । यत्नेन च कृतं तत्तद्दैवेन विनि
पातितम् ॥ २७ ॥ युध्यस्व यत्नमास्थाय दैवं कृत्वा निरर्थकम् ।
यततस्तव तेषाञ्च दैवं मार्गेण यास्यति ॥ २८ ॥ न तेषां मतिपूर्व्वं
हि सुकृतं विद्यते क्वचित् । दुष्कृतं तव वा वीर बुद्ध्या हीनं
कुरूद्वह ॥ २९ ॥ दैवं प्रमाणं सर्व्वस्य सुकृतस्येतरस्य वा । अनन्य-
कर्म्म दैवं हि जागर्त्ति सुप्तानामपि ॥ ३० ॥ बहूनि तव सैन्यानि
योधाश्च बहवस्तथा । न तथा पाण्डुपुत्राणामेवं युद्धमवर्त्तत ॥ ३१ ॥
तैरल्पैर्बहवो यूयं क्षयं नीताः प्रहारिणः । शङ्के दैवस्य तत् कर्म्म
पौरुषं येन नाशितम् ॥ ३२ ॥

सञ्जय उवाच । एवं सम्भाषमाणानां बहु तत्र जनाधिप ।
पाण्डवानामनीकानि समदृश्यन्त संयुगे ॥ ३३ ॥ ततः प्रववृते युद्धं
व्यतिषक्तरथद्विपम् । तावकानां परैः सार्द्धं राजन् दुर्म्मन्त्रिते
तव ॥ ३४ ॥

इति द्रोणपर्व्वणि जयद्रथवधपर्व्वणि पुनर्युद्धारम्भे द्विपञ्चाश
दधिकशततमोऽध्यायः समाप्तञ्च जयद्रथवधपर्व्व ॥ १५२ ॥

---

### अथ घटोत्कचवधपर्व्व ।

सञ्जय उवाच । तदुदीर्णं गजानीकं बलं तव जनाधिप ।
पाण्डुसेनामतिक्रम्य योधयामास सर्व्वतः ॥ १ ॥ पाञ्चालाः कौरवा
श्चैव योधयन्तः परस्परम् । यमराष्ट्राय महते परलोकाय दीक्षिता
॥ २ ॥ शूराः शूरैः समागम्य शरतोमरशक्तिभिः । विव्यधु

समरे तूर्णं निन्युरेव यमक्षयम् ॥ ३ ॥ रथिनो रथिभिः सार्द्धं
रुधिरस्रावदारुणम्। प्रावर्त्तत महद्युद्धं निघ्नतामितरेतरम् ॥ ४ ॥
वारणाश्च महाराज समासाद्य परस्परम्। विषाणैर्द्दारयामासुः
सुसंक्रुद्धमदोत्कटाः ॥ ५ ॥ हयारोहान् हयारोहाः प्रासशक्ति-
परश्वधैः। बिभिदुस्तुमुले युद्धे प्रार्थयन्तो महद्यशः ॥ ६ ॥
पत्तयश्च महाबाहो शतशः शस्त्रपाणयः। अन्योऽन्यमभ्यधावन्त
नित्यं यत्ताः परन्तप ॥ ७ ॥ गोत्राणां नामधेयानां कुलानाञ्चैव
मारिष। श्रवणाद्धि विजानीमः पाञ्चालान् कुरुभिः सह ॥ ८ ॥
अन्योऽन्यं समरे योधाः शरशक्तिपरश्वधैः। प्रैषयन् परलोकाय
विचरन्तो ह्यभीतवत् ॥ ९ ॥ शरैर्दश दिशो राजंस्तेषां मुक्तैः
सहस्रशः। न भ्राजन्ते यथातत्त्वं भास्करेऽस्तं गतेऽपि च ॥ १० ॥
तथा प्रयुध्यमानेषु पाण्डवेयेषु भारत। दुर्य्योधनो महाराज
व्यवगाहत तद्बलम् ॥ ११ ॥ सैन्धवस्य वधेनैव भृशदुःखसमन्वितः।
मर्त्तव्यमिति सञ्चिन्त्य प्राविशत्तद्द्विषां बलम् ॥ १२ ॥ नादयन्रथ-
घोषेण कम्पयन्निव मेदिनीम्। अभ्यवर्त्तत पुत्रस्ते पाण्डवाना-
मनीकिनीम् ॥ १३ ॥ स सन्निपातस्तुमुलस्तस्य तेषाञ्च भारत।
अभवत् सर्व्वसैन्यानामभावकरणो महान् ॥ १४ ॥ यथा मध्य-
न्दिने सूर्य्यं प्रतपन्तमिवांशुभिः। तथा तव सुतं मध्ये प्रतपन्तं
शरार्च्चिभिः ॥ १५ ॥ न शेकुर्भ्रातरं युद्धे पाण्डवाः प्रतिवीक्षितुम्।
पलायनकृतोत्साहा निरुत्साहा द्विषज्जये ॥ १६ ॥ पर्य्यधावन्त
पाञ्चाला वध्यमाना महात्मना। रुक्मपुङ्खैः प्रसन्नाग्रैस्तव पुत्रेण
धन्विना ॥ १७ ॥ अर्द्यमानाः शरैस्तूर्णं न्यपतन् पाण्डुसैनिकाः।
न तादृशं रणे कर्म्म कृतवन्तः स्म पाण्डवाः ॥ १८ ॥ यादृशं कृत-
वान् राजा पुत्रस्तव विशाम्पते। पुत्रेण तव सा सेना पाण्डवी
मथिता रणे ॥ १९ ॥ नलिनी द्विरदेनेव समन्ताद्विप्रलोडिता।
क्षीणतोयानिलार्काभ्यां हतत्विडिव पद्मिनी ॥ २० ॥ बभूव पाण्डवी

सेना तव पुत्रस्य तेजसा। पाण्डुसेनां हतां दृष्ट्वा तव पुत्रेण भारत ॥ २१ ॥ भीमसेनपुरोगास्तु पाञ्चालाः समुपाद्रवन्। स भीमसेनं दशभिर्माद्रीपुत्रौ त्रिभिस्त्रिभिः ॥ २२ ॥ विराटद्रुपदौ षड्भि शतेन च शिखण्डिनम्। धृष्टद्युम्नञ्च सप्तत्या धर्मपुत्रञ्च सप्तभिः ॥ २३ ॥ केकयांश्चैव चेदींश्च बहुभिर्निशितैः शरैः। सात्वतं पञ्चभिर्विद्ध्वा द्रौपदेयांस्त्रिभिस्त्रिभिः ॥ २४ ॥ घटोत्कचञ्च समरे विद्ध्वा सिंह इवानदत्। शतशश्चापरान् योधान् द्विपाश्वांश्च महारणे ॥ २५ ॥ शरैरुग्रैश्चकर्त्त क्रुद्धोऽन्तक इव प्रजाः। तस्य तान्निघ्नतः शत्रून् रुक्मपृष्ठं महद्धनुः ॥ २६ ॥ भल्लाभ्यां पाण्डवो ज्येष्ठस्त्रिधा चिच्छेद मारिष। विव्याध चैनं दशभिः सम्यगस्तैः शितैः शरैः ॥ २७ ॥ मर्म भित्त्वा तु ते सर्वे संसक्ताः क्षितिमाविशन्। ततः परिवृता योधाः परिवव्रुर्युधिष्ठिरम् ॥२८॥ वृत्रहत्ये यथा देवाः परिवव्रुः पुरन्दरम्। ततो युधिष्ठिरो राजा तव पुत्रस्य मारिष ॥ २९ ॥ शरं परमदुर्द्धर्षं प्रेषयामास संयुगे। स तेन भृशसंविद्धो निषसाद रथोत्तमे ॥ ३० ॥ ततः पाञ्चाल-सैन्यानां भृशमासीद्रवो महान्। हतो राजेति राजेन्द्र तत्र घुष्टोऽभवन्महान् ॥ ३१ ॥ वाणशब्दरवश्चोग्रः शुश्रुवे तत्र भारत। अथ द्रोणो द्रुतं तत्र प्रत्यदृश्यत संयुगे ॥ ३२ ॥ हृष्टो दुर्य्योधन-श्चापि दृढमादाय कार्मुकम्। तिष्ठतिष्ठेति राजानं ब्रुवन् पाण्डव-मभ्ययात् ॥ ३३ ॥ प्रत्युद्ययुश्च त्वरिताः पाञ्चाला जयगृद्धिनः। तान् द्रोणः प्रतिजग्राह परीप्सन् कुरुसत्तमम् ॥ ३४ ॥ चण्डवातोद्धता-न्मेघान् निघ्नन्रश्मिमुचो यथा। ततो राजन्महानासीत् सङ्ग्रामो भूरिवर्द्धनः। तावकानां परेषाञ्च समेतानां युयुत्सया ॥ ३५ ॥

इति द्रोणपर्व्वणि घटोत्कचवधपर्व्वणि दुर्य्योधनपराभवे
त्रय-पञ्चाशदधिकशततोऽध्यायः ॥ १५३ ॥

---

धृतराष्ट्र उवाच। यत्तदा प्राविशत् पाण्डूनाचार्यः कुपितो
वशी। उक्त्वा दुर्योधनं सम्यक् मम शास्त्रातिग सुतम्॥१॥
प्रविश्य विचरन्तञ्च रणे शूरमवस्थितम्। कथं द्रोणं महेष्वासं
पाण्डवाः समवारयन्॥२॥ केऽरक्षन् दक्षिणं चक्रमाचार्यस्य
महात्मनः। के च उत्तरमरक्षन्त निघ्नतः शात्रवान् हठम्॥३॥
के चास्य पृष्ठतो गुप्ता वीरा वीरस्य योधिन। के पुरस्तादवर्तन्त
रथिनस्तस्य शत्रवः॥४॥ मन्ये तानस्पृशच्छीतमतिवेलमना-
र्त्तवम्। मन्ये ते समवेपन्त गावो वै शिशिरे यथा॥५॥ यत्
प्राविशन्महेष्वासः पाञ्चालानपराजितः। नृत्यन् स रथमार्गेषु
सर्वशस्त्रभृतांवर॥६॥ निर्दहन् सर्वसैन्यानि पाञ्चालानां
रथर्षभः। धूमकेतुरिव क्रुद्धः कथं मृत्युमुपेयिवान्॥७॥

सञ्जय उवाच। सायाह्ने सैन्धवं हत्वा राज्ञा पार्थः समेत्य
च। सात्यकिश्च महेष्वासो द्रोणमेवाभ्यधावताम्॥८॥ ततो
युधिष्ठिरस्तूर्णं भीमसेनश्च पाण्डवः। पृथक्चमूभ्यां संसक्तौ द्रोण-
मेवाभ्यधावताम्॥९॥ तथैव नकुलो धीमान् सहदेवश्च दुर्जयः।
धृष्टद्युम्नः शतानीको विराटश्च सकेकयः॥१०॥ मत्स्याः शाल्वाः
ससैनाश्च द्रोणमेव ययुर्युधि। द्रुपदश्च तथा राजा पाञ्चालैरभि-
रक्षितः॥११॥ धृष्टद्युम्नपिता राजन् द्रोणमेवाभ्यवर्तत।
द्रौपदेया महेष्वासा राक्षसश्च घटोत्कचः॥१२॥ ससैनास्ते-
ऽभ्यवर्तन्त द्रोणमेव महाद्युतिम्। प्रभद्रकाश्च पाञ्चालाः षट्-
सहस्राः प्रहारिणः॥१३॥ द्रोणमेवाभ्यवर्तन्त पुरस्कृत्य शिख-
ण्डिनम्। तथेतरे नरव्याघ्राः पाण्डवानां महारथाः॥१४॥
सहिताः सन्न्यवर्तन्त द्रोणमेव नरर्षभ। तेषु शूरेषु युद्धाय गतेषु
भरतर्षभ॥१५॥ बभूव रजनी घोरा भीरूणां भयवर्द्धिनी।
योधानामशिवा रौद्रा राजन्नन्तकगामिनी॥१६॥ कुञ्जराश्व-
मनुष्याणां प्राणान्तकरणी तदा। तस्यां रजन्यां घोरायां नदन्त्य

यचैतः शिवाः ॥ १७ ॥ न्यवेदयन् भयं घोरं सज्वालकवलैर्मुखैः ।
उलूकाश्चाप्यदृश्यन्त शंसन्तो विपुलं भयम् ॥ १८ ॥ विशेषतः
कौरवाणां ध्वजिन्यामतिदारुणाः । ततः सैन्येषु राजेन्द्र शब्दः
समभवन्महान् ॥ १९ ॥ भेरीशब्देन महता मृदङ्गानां स्वनेन च ।
गजानां गर्जितैश्चापि तुरङ्गाणाञ्च हेषितैः ॥ २० ॥ खुरशब्द-
निपातैश्च तुमुलं सर्वतोऽभवत् । ततः समभवद्युद्धं सन्ध्यायामति-
दारुणम् ॥ २१ ॥ द्रोणस्य च महाराज सृञ्जयानाञ्च सर्वशः ।
तमसा चावृते लोके न प्राज्ञायत किञ्चन ॥ २२ ॥ सैन्येन रजसा
चैव समन्तादुत्थितेन च । नरस्याश्वस्य नागस्य समसज्जत
शोणितम् ॥ २३ ॥ नापश्याम रजो भौमं कश्मलेनाभिसंवृताः ।
रात्रौ वंशवनस्येव दह्यमानस्य पर्वते ॥ २४ ॥ घोरश्चटचटाशब्दः
शस्त्राणां पततामभूत् । मृदङ्गानकनिर्ह्रादैर्झर्झरीपटहैस्तथा ॥ २५ ॥
फेत्कारैर्हेषिताकारैः सर्वमेवाकुलं विभो । नैव स्वे न परे राजन्
प्राज्ञायन्त तमोवृते ॥ २६ ॥ उन्मत्तमिव तत्सर्वं बभूव रजनीमुखे ।
भौमं रजोऽथ राजेन्द्र शोणितेन समुच्छ्रितम् ॥ २७ ॥ शातकौ-
म्भैश्च कवचैर्भूषणैश्च तमोऽभ्यगात् । ततः सा भारती सेना मणि-
हेमविभूषिता ॥ २८ ॥ द्यौरिवासीत् सनक्षत्रा रजन्यां भरत-
र्षभ । गोमायुबलसङ्घुष्टा शक्तिध्वजसमाकुला ॥ २९ ॥ दार-
णाभिरुता घोरा क्ष्वेडितोत्क्रुष्टनादिता । ततोऽभवन्महाशब्द-
स्तुमुलो लोमहर्षणः ॥ ३० ॥ समावृण्वन् दिशः सर्वा महेन्द्राशनि-
निस्वनः । सा निशीथे महाराज सेनादृश्यत भारती ॥ ३१ ॥
अङ्गदैः कुण्डलैर्निष्कैः शस्त्रैश्चैवावभासिता । तत्र नागा रथाश्चैव
जाम्बूनदविभूषिताः ॥ ३२ ॥ निशायां प्रत्यदृश्यन्त मेघा इव
सविद्युतः । ऋष्टिशक्तिगदाखड्गमुसलप्रासपट्टिशाः ॥ ३३ ॥

र्वताम्। द्रोणपाण्डवपर्जन्यां खड्गशक्तिगदाशनीम् ॥ ३५ ॥
शरधारास्त्रपवनां भृशं शीतोष्णसङ्कुलाम्। घोरां विस्मापनीमुग्रां
जीवितच्छेदविश्रुताम् ॥ ३६ ॥ तां प्राविशन्नतिभयां सेनां युद्ध-
चिकीर्षवः। तस्मिन्रात्रिमुखे घोरे महाशब्दनिनादिते ॥ ३७ ॥
भीरूणां त्रासजनने शूराणां हर्षवर्द्धने। रात्रियुद्धे महाघोरे
वर्त्तमाने सुदारुणे ॥ ३८ ॥ द्रोणमभ्यद्रवन् क्रुद्धाः सहिताः पाण्डु-
सृञ्जयाः। ये ये प्रमुखतो राजन्नावर्त्तन्त महात्मनः ॥ ३९ ॥
तान् सर्वान् विमुखांश्चक्रे कांश्चिन्निन्ये यमक्षयम्। तानि नाग-
सहस्राणि रथानामयुतानि च ॥ ४० ॥ पदातिहयसङ्घानां प्रयुता-
न्यर्बुदानि च। द्रोणेनैकेन नाराचैर्निर्भिन्नानि निशामुखे ॥ ४१ ॥

इति द्रोणपर्वणि घटोत्कचवधपर्वणि द्रोणयुद्धे
चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥

---

धृतराष्ट्र उवाच। तस्मिन् प्रविष्टे दुर्द्धर्षे सृञ्जयानमितौजसि।
अमृष्यमाणे संरब्धे का वोऽभूद्वै मतिस्तदा ॥ १ ॥ दुर्य्योधनं तथा
पुत्रमुक्त्वा शास्त्रातिगं मम। यत् प्राविशदमेयात्मा किं पार्थः
प्रत्यपद्यत ॥ २ ॥ निहते सैन्धवे वीरे भूरिश्रवसि चैव हि।
यदभ्यगान्महातेजाः पाञ्चालानपराजितः ॥ ३ ॥ किममन्यत दुर्द्धर्षे
प्रविष्टे शत्रुतापने। दुर्य्योधनस्तु किं कृत्यं प्राप्तकालममन्यत ॥ ४ ॥
के च तं वरदं वीरमन्वयुर्द्विजसत्तमम्। के चास्य पृष्ठतः सूत
वीराः शूरस्य युध्यतः ॥ ५ ॥ के पुरस्तादयुध्यन्त निघ्नतः शात्र-
वान् रणे। मन्येऽहं पाण्डवान् सर्वान् भारद्वाजशरार्दितान् ॥ ६ ॥
शिशिरे कम्पमाना वै कृशा गाव इव प्रभो। प्रविश्य स महेष्वासः
पाञ्चालानरिमर्द्दनः। कथं नु पुरुषव्याघ्रः पञ्चत्वमुपजग्मिवान् ॥ ७ ॥
सर्वेषु सैन्येषु च संहितेषु रात्रौ समेतेषु महारथेषु। संलोडय-

मानेषु पृथग्विधेषु के वस्तदानीं मतिमन्त आसन् ॥ ८ ॥ हतां-श्चैव विषक्तांश्च पराभूतांश्च शंससि। रथिनो विरथांश्चैव कृतान् युद्धेषु मामकान् ॥ ९ ॥ तेषां संलोड्यमानानां पाण्डवैर्हतचेतसाम्। अन्धे तमसि मग्नानामभवत् का मतिस्तदा ॥ १० ॥ प्रहृष्टांश्चाप्युदग्रांश्च पाण्डवेयान् ब्रवीषि मे। अप्रहृष्टान् विमनसो विवस्तांश्चैव मामकान् ॥ ११ ॥ कथमेषां ततः सूत पार्थानामपलायिनाम्। प्रकाशमभवद्रात्रौ कथं कुरुषु सञ्जय ॥ १२ ॥

सञ्जय उवाच। रात्रियुद्धे तदा राजन् वर्त्तमाने सुदारुणे। द्रोणमभ्यद्रवन् सर्वे पाण्डवाः सह सोमकैः ॥ १३ ॥ ततो द्रोणः केकयांश्च धृष्टद्युम्नस्य चात्मजान्। सम्प्रैषयत प्रेतलोकं सर्वानिषुभिराशुगैः ॥ १४ ॥ ये ये प्रमुखतो राजन्नवर्त्तन्त महारथाः। तान् सर्वान् प्रेषयामास पितृलोकाय पार्थिवान् ॥ १५ ॥ प्रमथ्नन्तं तदा वीरं भारद्वाजं महारथम्। अभ्यवर्त्तत स क्रुद्धः शिबी राजा प्रतापवान् ॥ १६ ॥ तमापतन्तं सम्प्रेक्ष्य पाण्डवानां महारथम्। विव्याध दशभिर्द्रोणः सर्वपारशवैः शरैः ॥ १७ ॥ तं शिबिः प्रतिविव्याध त्रिंशद्भिः कङ्कपत्रकैः। सारथिञ्चास्य भल्लेन स्मयमानो न्यपातयत् ॥ १८ ॥ तस्य द्रोणो हयान् हत्वा सारथिञ्च महात्मनः। अथास्य सशिरस्त्राणं शिरः कायादपाहरत् ॥ १९ ॥ ततोऽस्य सारथिं क्षिप्रमन्यं दुर्य्योधनोऽदिशत्। स तेन संगृहीताश्वः पुनरभ्यद्रवदरिपून् ॥ २० ॥ कलिङ्गानाञ्च सैन्येन कलिङ्गस्य सुतो रणे। पूर्वं पितृवधात् क्रुद्धो भीमसेनमुपाद्रवत् ॥ २१ ॥ स भीमं पञ्चभिर्विद्ध्वा पुनर्विव्याध सप्तभिः। विशोकं त्रिभिराजघ्ने ध्वजमेकेन पत्रिणा ॥ २२ ॥ कलिङ्गानान्तु तं शूरं क्रुद्धं क्रुद्धो वृकोदरः। रथाद्रथमभिद्रुत्य मुष्टिना निजघान ह ॥ २३ ॥ तस्य मुष्टिहतस्याजौ पाण्डवेन बलीयसा। सर्वाण्यस्थीनि सहसा प्रापतन् वै पृथक् पृथक् ॥ २४ ॥ तं कर्णो

भ्रातरश्चास्य नाम्यघ्नन् परन्तप। ते भीमसेनं नाराचैर्जघ्नुरामोविपोपमैः॥ २५॥ ततः स्वकरथं त्यक्त्वा भीमो ध्रुवरथं गतः। ध्रुवञ्चास्यन्तमनिशं मुष्टिना समपोथयत्॥ २६॥ स तथा पाण्डुपुत्रेण बलिनाभिहतोऽपतत्। तं निहत्य महाराज भीमसेनो महाबलः॥ २७॥ जयरातरथं प्राप्य मुहुः सिंह इवानदत्। जयरातमथाक्षिप्य नदन् सव्येन पाणिना॥ २८॥ तलेन नाशयामास कर्णस्यैवाग्रतः स्थितः। कर्णस्तु पाण्डवे शक्तिं काञ्चनीं समवासृजत्॥ २९॥ ततस्तामेव जग्राह प्रहसन् पाण्डुनन्दनः। कर्णायैव च दुर्धर्षश्चिक्षेपाजौ वृकोदरः॥ ३०॥ तामापतन्तीं चिच्छेद शकुनिस्तैलपायिना। एतत् कृत्वा महत् कर्म रणेऽद्भुतपराक्रमः॥ ३१॥ पुनः स्वरथमास्थाय दुद्राव तव वाहिनीम्। तमायान्तं जिघांसन्तं भीमं क्रुद्धमिवान्तकम्॥ ३२॥ न्यवारयन्महाबाहुं तव पुत्रा विशाम्पते। महता शरवर्षेण छादयन्तो महारथाः॥ ३३॥ दुर्मदस्य ततो भीमः प्रहसन्निव संयुगे। सारथिञ्च हयांश्चैव शरैर्निन्ये यमक्षयम्॥ ३४॥ दुर्मदस्तु ततो यानं दुष्कर्णस्यावचक्रमे। तावेकरथमारूढौ भ्रातरौ परतापनौ॥ ३५॥ सङ्ग्राममिरसो मध्ये भीमं द्वावभ्यधावताम्। तथाम्बुपतिमित्रौ हि तारकं दैत्यसत्तमम्॥ ३६॥ ततस्तु दुर्मदश्चैव दुष्कर्णश्च तवात्मजौ। रथमेकं समारुह्य भीमं बाणैरविध्यताम्॥ ३७॥ ततः कर्णस्य मिषतो द्रौणेर्दुर्योधनस्य च। कृपस्य सोमदत्तस्य बाह्लीकस्य च पाण्डवः॥ ३८॥ दुर्मदस्य च वीरस्य दुष्कर्णस्य च तं रथम्। पादप्रहारेण धरां प्रावेशयदरिन्दमः॥ ३९॥ ततः सुतौ तौ बलिनौ शूरौ दुष्कर्णदुर्मदौ। मुष्टिनाहत्य संक्रुद्धो ममर्द च ननर्द च॥ ४०॥ ततो हाहाकृते सैन्ये दृष्ट्वा भीमं नृपाब्रुवन्। रुद्रोऽयं भीमरूपेण धार्त्तराष्ट्रेषु युध्यति॥ ४१॥ एवमुक्त्वा पलायन्त सर्वे भारत पार्थिवाः।

त्रिंशा वादयन् वाद्यांश्च हृष्टौ सह प्रावतः ॥ ४२ ॥ ततो बले
भृशलुलिते निशामुखे सुपूजितो नृपवृषभैर्वृकोदरः । महाबलः
कमलविबुद्धलोचनो युधिष्ठिरं नृपतिमपूजयद्बली ॥ ४३ ॥ ततो
यमौ द्रुपदविराटकेकया युधिष्ठिरश्चापि परां मुदं ययुः । वृको-
दरं भृशमपूजयंश्च ते यथान्धके प्रतिनिहते हरं सुराः ॥ ४४ ॥
ततः सुतास्ते वरुणात्मजोपमा रुषान्विताः सह गुरुणा महा-
त्मना । वृकोदरं सरथपदातिकुञ्जरा युयुत्सवो भृशमभिपर्य-
वारयन् ॥ ४५ ॥ ततोऽभवत्तिमिरघनैरिवावृते महाभये भयद-
मतीव दारुणम् । निशामुखे बकवलवप्रमोदनं महात्मनां नृप-
वर युद्धमुत्तमम् ॥ ४६ ॥

इति द्रोणपर्वणि घटोत्कचवधपर्वणि भीमपराक्रमे
पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १५५ ॥

---

सञ्जय उवाच । प्रायोपविष्टे तु हते पुत्रे सात्यकिना त
सोमदत्तो भृशं क्रुद्धः सात्यकिं वाक्यमब्रवीत् ॥ १ ॥ क्षत्रधर्मः
पुरा दृष्टो यस्तु देवैर्महात्मभिः । तं त्वं सात्वत सन्त्यज्य दस्यु-
धर्मे रतः कथम् ॥ २ ॥ पराङ्मुखाय दीनाय न्यस्तशस्त्राय
याचते । क्षत्रधर्मरतः प्राज्ञः कथं नु प्रहरेद्रणे ॥ ३ ॥ द्वावेव
किल वृष्णीनां तत्र ख्यातौ महारथौ । प्रद्युम्नश्च महातेजास्त्वञ्चैव
युधि सात्वत ॥ ४ ॥ कथं प्रायोपविष्टाय पार्थेन छिन्नबाहवे ।
नृशंसम्पतनीयञ्च तादृशं कृतवानसि ॥ ५ ॥ कर्मणस्तस्य दुर्वृत्त
फलं प्राप्नुहि संयुगे । अद्य छेत्स्यामि ते मूढ शिरो विक्रम्य
पत्रिणा ॥ ६ ॥ शपे सात्वतपुत्राभ्यामिष्टेन सुकृतेन च । अन-
तीतामिमां रात्रिं यदि त्वां वीरमानिनम् ॥ ७ ॥ अरक्ष्यमाणं
पार्थेन जिष्णुना ससुतानुजम् । न हन्यां नरके घोरे पतेयं वृष्णि-

पार्षत ॥ ८ ॥ एवमुक्ता तु संक्रुद्धः सोमदत्तो महाबलः । दध्मौ
शङ्खञ्च तारेण सिंहनादं ननाद च ॥ ९ ॥ ततः कमलपत्राक्षः
सिंहदंष्ट्रो महाबलः । सात्यकिर्भृशसंक्रुद्धः सोमदत्तमथाब्रवीत्
॥ १० ॥ कौरवेय न मे त्रासः कथञ्चिदपि विद्यते । त्वया सार्द्ध-
मथान्यैश्च युध्यतो हृदि कश्चन ॥ ११ ॥ यदि सर्वेण सैन्येन गुप्तो
मां योधयिष्यसि । तथापि न व्यथा काचित्त्वयि स्यान्मम कौरव
॥ १२ ॥ युद्धसारेण वाक्येन असतामवमतेन च । नाहं भीष-
यितुं शक्यः क्षत्रवृत्ते स्थितस्त्वया ॥ १२ ॥ यदि तेऽस्ति युयुत्-
सा मया सह नराधिप । निर्दयो निशितैर्बाणैः प्रहर प्रहरामि
ते ॥ १३ ॥ हतो भूरिश्रवा राजंस्तव पुत्रो महारथः । शलश्चैव
तदा वीर वृषसेनश्च कर्षितः ॥ १४ ॥ त्वाञ्चाप्यद्य वधिष्यामि
सपुत्रं सहबान्धवम् । तिष्ठेदानीं रणे यत्तः कौरवोऽसि महा-
बलः ॥ १५ ॥ यस्मिन् दानं दमः शौचमहिंसा ह्रीर्धृतिः क्षमा ।
अनपायीनि सर्वाणि नित्यं राज्ञि युधिष्ठिरे ॥ १६ ॥ मृदङ्ग-
केतोस्तस्य त्वं तेजसा निहतः पुरा । सकर्णसौबलः सङ्ख्ये
विनाशमुपयास्यसि ॥ १७ ॥ शपेऽहं कृष्णचरणाविष्टापूर्तेन चैव
हि । यदि त्वा ससुतं पापं न हन्यां युधि रोषितः ॥ १८ ॥ अप-
यास्यसि चेत्त्यक्त्वा ततो मुक्तो भविष्यसि । एवमाभाष्य चान्योन्यं
क्रोधसंरक्तलोचनौ ॥ १९ ॥ प्रवृत्तौ शरसम्पातं कर्त्तुं पुरुषर्-
षभौ । ततो रथसहस्रेण नागानामयुतेन च ॥ २० ॥ दुर्यो-
धनः सोमदत्तं परिवार्य व्यवस्थितः । शकुनिश्च सुसंक्रुद्धः सर्व-
शस्त्रपरिग्रहः ॥ २१ ॥ पुत्रपौत्रैः परिवृतो भ्रातृभिश्चेन्द्रविक्रमैः ।
स्यालस्तव महाराज वज्रसंहननो युवा ॥ २२ ॥ साग्रं शतसह-
स्रन्तु हयानां तस्य धीमतः । सोमदत्तं महेष्वासं समन्तात्
पर्यवारयत् ॥ २३ ॥ रक्ष्यमाणश्च बलिभिश्छादयामास सात्य-
किम् । तं छाद्यमानं विशिखैर्दृष्ट्वा सन्नतपर्वभिः ॥ २४ ॥ धृष्ट-

द्युम्नोऽभ्ययात् क्रुद्धः प्रगृह्य महतीं चमूम्। पाण्डवानामभिहृष्टाना-
मुदधीनामिव स्वनः ॥ २५ ॥ आसीद्राजन् बलौघानामन्योऽन्य-
मभिनिघ्नताम्। विव्याध सोमदत्तश्च सात्वतं नवभिः शरैः ॥ २६ ॥
सात्यकिर्नवभिश्चैनमवधीत् कुरुपुङ्गवम्। सोऽतिविद्धो बलवता
समरे दृढधन्विना ॥ २७ ॥ रथोपस्थं समासाद्य मुमोह गत-
चेतनः। तं विमूढं समालक्ष्य सारथिस्त्वरयान्वितः ॥ २८ ॥
अपोवाह रणाद्वीरं सोमदत्तं महारथम्। तं विसंज्ञं समालक्ष्य
युयुधानशराहितम् ॥ २९ ॥ अभ्यधावत्ततो द्रोणो यदुवीरजिघां-
सया। तमायान्तमभिप्रेक्ष्य युधिष्ठिरपुरोगमाः ॥ ३० ॥ परि-
वव्रुर्महात्मानं परीप्सन्तो यदूद्वहम्। ततः प्रववृते युद्धं द्रोणस्य
सह पाण्डवैः ॥ ३१ ॥ बलेरिव सुरैः पूर्वं त्रैलोक्यजयकाङ्क्षया।
ततः सायकजालेन पाण्डवानीकमावृणोत् ॥ ३२ ॥ भारद्वाजो
महातेजा विव्याध च युधिष्ठिरम्। सात्यकिं दशभिर्बाणैर्विंशत्या
पार्षतं शरैः ॥ ३३ ॥ भीमसेनञ्च नवभिर्नकुलं पञ्चभिस्तथा।
सहदेवं तथाष्टाभिः शतेन च शिखण्डिनम् ॥ ३४ ॥ द्रौपदेयान्
महाबाहुः पञ्चभिः पञ्चभिः शरैः। विराटं मत्स्यमष्टाभिर्द्रुपदं
दशभिः शरैः ॥ ३५ ॥ युधामन्युं त्रिभिः षड्भिरुत्तमौजस-
माहवे। अन्यांश्च सैनिकान् विद्ध्वा युधिष्ठिरमुपाद्रवत् ॥ ३६ ॥
ते वध्यमाना द्रोणेन पाण्डुपुत्रस्य सैनिकाः। प्राद्रवन् वै भया-
द्राजन् सार्त्तनादा दिशो दश ॥ ३७ ॥ काल्यमानन्तु तत्सैन्यं
दृष्ट्वा द्रोणेन फाल्गुनः। किञ्चिदागतसंरम्भो गुरुं पार्थोऽभ्य-
यात् द्रुतम् ॥ ३८ ॥ दृष्ट्वा द्रोणस्तु बीभत्सुमभिधावन्तमाहवे।
सन्न्यवर्त्तत तत्सैन्यं पुनर्यौधिष्ठिरं नृप ॥ ३९ ॥ ततो युद्धमभू-
द्भूयो भारद्वाजस्य पाण्डवैः। द्रोणस्तव सुतै राजन् सर्वतः परि-
वारितः ॥ ४० ॥ व्यधमत् पाण्डुसैन्यानि तूलराशिमिवानलः।
तं ज्वलन्तमिवादित्यं दीप्तानलसमद्युतिम् ॥ ४१ ॥ राजन्निश-

मत्यन्तं दृष्ट्वा द्रोणशराचिषम् । मण्डलीकृतधन्वानं तपन्तमिव भास्करम् ॥ ४२ ॥ दहन्तमहितान् सैन्ये नैनं कश्चिदवारयत् । यो यो हि यतते तस्य तस्यौ द्रोणस्य पूरुषः ॥ ४३ ॥ तस्य तस्य शिरश्छित्त्वा ययौ द्रोणशरः क्षितिम् । एवं सा पाण्डवी सेना बध्यमाना महात्मना ॥ ४४ ॥ प्रदुद्राव पुनर्भीता पश्यतः सव्यसाचिनः । सम्प्रभग्नं बलं दृष्ट्वा द्रोणेन निशि भारत ॥ ४५ ॥ गोविन्दमब्रवीज्जिष्णुर्गच्छ द्रोणरथं प्रति । ततो रजतगोक्षीर-कुन्देन्दुवर्णप्रभान् ॥ ४६ ॥ चोदयामास दाशार्हो हयान् द्रोणरथं प्रति । भीमसेनोऽपि तं दृष्ट्वा यान्तं द्रोणाय फाल्गुनम् ॥ ४७ ॥ स्वसारथिमुवाचेदं द्रोणानीकाय मां वह । सोऽपि तस्य वचः श्रुत्वा विशोकोऽवाहयद्धयान् ॥ ४८ ॥ पृष्ठतः सत्य-सन्धस्य जिष्णोर्भरतसत्तम । तौ दृष्ट्वा भ्रातरौ यत्तौ द्रोणानीक-मभिद्रुतौ ॥ ४९ ॥ पाञ्चालाः सृञ्जया मत्स्याश्चेदिकारूषकोशलाः । अन्वगच्छन्महाराज केकयाश्च महारथाः ॥ ५० ॥ ततो राज-न्नभूद्घोरः संग्रामो लोमहर्षणः । बीभत्सुर्दक्षिणं पार्श्वमुत्तरञ्च वृकोदरः ॥ ५१ ॥ महद्भ्यां रथवृन्दाभ्यां बलं जगृहतुस्तव । तौ दृष्ट्वा पुरुषव्याघ्रौ भीमसेनधनञ्जयौ ॥ ५२ ॥ धृष्टद्युम्नोऽभ्यया-द्राजन् सात्यकिश्च महाबलः । चण्डवाताभिपन्नानामुदधीनामिव स्वनः ॥ ५३ ॥ आसीद्राजन् बलौघानां तदान्योऽन्यमभिघ्नताम् । सौमदत्तिर्वधात् क्रुद्धो दृष्ट्वा सात्यकिमाहवे ॥ ५४ ॥ द्रौणिरभ्य-द्रवत् क्रुद्ध आस्थाय रथमूर्द्धनि । तमापतन्तं समरे शैनेयस्य रथं प्रति ॥ ५५ ॥ प्रत्ययौ महद्दीप्तो भैमसेनिर्महाबलः ॥ कार्ष्णा-यसं महाघोरमृक्षचर्मावृतं महत् ॥ ५६ ॥ महान्तं रथमास्थाय त्रिंशन्नल्वान्तरान्तरम् । विक्षिप्तयन्त्रतल्पाढ्यं महामेघौघनिस्वनम् ॥ ५७ ॥ युक्तं गजनिभैर्वाहैर्न हयैर्नापि वारणैः । विक्षिप्तपक्ष-चरणविहृताक्षेण कूजता ॥ ५८ ॥ ध्वजेनोच्छ्रितदण्डेन गृध्रराजेन

राजता । लोहिताद्र्रपताकञ्च अन्त्रमालाविभूषितम् ॥ ५९ ॥
अष्टचक्रसमायुक्तमास्थाय विपुलं रथम् । शूलमुद्गरधारिण्या शैल-
पादपहस्तया ॥ ६० ॥ रक्षसां घोररूपाणामक्षौहिण्या समा-
वृतः । तमुद्यतमहाचापं निशाम्य व्यथिता नृपाः ॥ ६१ ॥ युगान्त-
कालसमये दण्डहस्तमिवान्तकम् । ततस्तं गिरिशृङ्गाभं भीम-
रूपं भयावहम् ॥ ६२ ॥ दंष्ट्राकरालोग्रमुखं शङ्कुकर्णं महाहनुम् ।
ऊर्द्धकेशं विरूपाक्षं दीप्तास्यं निम्नितोदरम् ॥ ६३ ॥ महाश्व-
भ्रगलद्वारं किरीटच्छन्नमूर्द्धजम् । त्रासनं सर्वभूतानां व्यात्तानन-
मिवान्तकम् ॥ ६४ ॥ वीक्ष्य दीप्तमिवायान्तं रिपुविक्षोभकारकम् ।
तमुद्यतमहाचापं राक्षसेन्द्रं घटोत्कचम् ॥ ६५ ॥ भयार्दिता प्रचु-
क्षोभ तव पुत्रस्य वाहिनी । वायुना क्षोभितावर्त्ता गङ्गेवोर्द्ध्व-
तरङ्गिणी ॥ ६६ ॥ घटोत्कचप्रमुक्तेन सिंहनादेन भीषिताः ।
प्रसुस्रुवुर्गजा मूत्रं विव्यथुश्च नृपा भृशम् ॥ ६७ ॥ ततोऽश्मवृष्टि-
रत्यर्थमासीत्तत्र समन्ततः । सन्ध्याकालाधिकबलैर्विमुक्ता राक्षसैः
क्षितौ ॥ ६८ ॥ आयसानि च चक्राणि भुशुण्ड्यः प्रासतोमराः ।
पतन्त्यविरताः शूलाः शतघ्न्यः पट्टिशास्तथा ॥ ६९ ॥ तदुग्रमति-
रौद्रञ्च दृष्ट्वा युद्धं नराधिपाः । तनयास्तव कर्णश्च व्यथिताः
सम्प्रदुद्रुवुः ॥ ७० ॥ तत्रैकोऽस्त्रबलश्लाघी द्रौणिर्मानी न विव्यथे ।
व्यधमच्च तदा मायां घटोत्कचविनिर्मिताम् ॥ ७१ ॥ विहतायान्तु
मायायाममर्षी स घटोत्कचः । विससर्ज शरान् घोरांस्तेऽश्व-
त्थामानमाविशन् ॥ ७२ ॥ भुजगा इव वेगेन वल्मीकं क्रोध-
मूर्च्छिताः । ते शरा रुधिराक्ताङ्गा भित्त्वा शारद्वतीसुतम् ॥ ७३ ॥
विविशुर्धरणीं शीघ्रं वल्मीकमिव पन्नगाः । अश्वत्थामा तु
संक्रुद्धो लघुहस्तः प्रतापवान् ॥ ७४ ॥ घटोत्कचमतिक्रुद्धो बिभेद
दशभिः शरैः । घटोत्कचोऽतिविद्धस्तु द्रोणपुत्रेण मर्मसु ॥ ७५ ॥
चक्रं शतसहस्रारमगृह्णाद्व्यथितो भृशम् । क्षुरान्तं बालसूर्याभं

मणिवज्रविभूषितम् ॥ ७६ ॥ अश्वत्थाम्नि च चिच्छेद भैमसेनि-
र्महाशया । वेगेन महता गच्छद्विच्छिन्नं द्रौणिना शरैः ॥ ७७ ॥
अभागस्येव सङ्कल्पस्तन्मोघमपतद्भुवि । घटोत्कचस्ततस्तूर्णं दृष्ट्वा
चक्रं निपातितम् ॥ ७८ ॥ द्रौणिं प्राच्छादयद्बाणैः स्वर्भानुरिव
भास्करम् । घटोत्कचसुत श्रीमान् भिन्नाञ्जनचयोपमः ॥ ७९ ॥
रुरोध द्रौणिमायान्तं प्रभञ्जनमिवाद्रिराट् । पौत्रेण भीमसेनस्य
शूरेणाञ्जनपर्वणा ॥ ८० ॥ बभौ मेघेन धाराभिर्गिरिर्मेरुरिवा-
र्दितः । अश्वत्थामा तु सङ्क्रुद्धो रुद्रोपेन्द्रेन्द्रविक्रमः ॥ ८१ ॥
ध्वजमेकेन बाणेन चिच्छेदाञ्जनपर्वणः । द्वाभ्यान्तु रथयन्तारौ
त्रिभिश्चास्य त्रिवेणुकम् ॥ ८२ ॥ धनुरेकेन चिच्छेद चतुर्भिश्चतुरो
हयान् । विरथस्योद्यतं हस्ताद्धेमबिन्दुभिराचितम् ॥ ८३ ॥
विशिखेन सुतीक्ष्णेन खड्गमस्य द्विधाकरोत् । गदा हेमाङ्गदा
राजंस्तूर्णं हैडिम्बसूनुना ॥ ८४ ॥ भ्राम्योत्क्षिप्ता शरैः सापि
द्रौणिनाहत्य पातिता । ततोऽन्तरीक्षमुत्पत्य कालमेघ इवोन्नदन्
॥ ८५ ॥ ववर्षाञ्जनपर्वा स द्रुमवर्षं नभस्तलात् । ततो माया-
धरं द्रौणिर्घटोत्कचसुतं दिवि ॥ ८६ ॥ मार्गणैरभिविव्याध घनं
सूर्य इवांशुभिः । सोऽवतीर्य पुनस्तस्थौ रथे हेमविभूषिते ।
॥ ८७ ॥ महीगत इवात्युग्रः श्रीमानञ्जनपर्वतः । तमयस्मय-
वर्माणं द्रौणिर्भीमात्मजात्मजम् ॥ ८८ ॥ जघानाञ्जनपर्वाणं
महेश्वर इवान्धकम् । अथ दृष्ट्वा हतं पुत्रमश्वत्थाम्ना महाबलम्
॥ ८९ ॥ द्रौणेः सकाशमभ्येत्य रोषात् प्रज्वलिताङ्गदः । प्राह
वाक्यमसम्भ्रान्तो वीरः शारद्वतीसुतम् । दहन्तं पाण्डवानीकं वन-
मग्निमिवोत्थितम् ॥ ९० ॥

घटोत्कच उवाच । तिष्ठ तिष्ठ न मे जीवन् द्रोणपुत्र गमि-
ष्यसि । त्वामद्य निहनिष्यामि क्रौञ्चमग्निसुतो यथा ॥ ९१ ॥

अश्वत्थामोवाच । गच्छ वत्स सहान्यैस्त्वं युध्यस्वामरविक्रम ।

न तु प्रविश्य हैडिम्बे पिता न्याय्यं प्रबाधितुम् ॥ ९२ ॥ कामं
खलु न मे रोषो हैडिम्बे विद्यते त्वयि । किन्तु रोषाद्धितो
जन्तुर्हन्यादात्मानमप्युत ॥ ९३ ॥
सञ्जय उवाच । श्रुत्वैवं क्रोधताम्राक्षः पुत्रशोकसमन्वितः ।
अश्वत्थामानमायस्तो भैमसेनिरभाषत ॥ ९४ ॥ किमहं कातरो
द्रौणे पृथग्जन इवाहवे । यन्मां भीषयसे वाग्भिरसदेतद्वच-
स्तव ॥ ९५ ॥ भीमात् खल्वहमुत्पन्नः कुरूणां विपुले कुले ।
पाण्डवानामहं पुत्रः समरेष्वनिवर्त्तिनाम् ॥ ९६ ॥ रक्षसामधि-
राजोऽहं दशग्रीवसमो बले । तिष्ठ तिष्ठ न मे जीवन् द्रोणपुत्र
गमिष्यसि ॥ ९७ ॥ युद्धश्रद्धामहं तेऽद्य विनेष्यामि रणाजिरे ।
इत्युक्त्वा रोषताम्राक्षो राक्षसः सुमहाबलः ॥ ९८ ॥ द्रौणिमभ्य-
द्रवत् क्रुद्धो गजेन्द्रमिव केसरी । रथाक्षमात्रैरिषुभिरभ्यवर्ष-
द्घटोत्कचः ॥ ९९ ॥ रथिनामृषभं द्रौणिं धाराभिरिव तोयदः ।
शरवृष्टिं शरैर्द्रौणिरप्राप्तान्तां व्यशातयत् ॥ १०० ॥ ततोऽन्त-
रीक्षे बाणानां सङ्ग्रामोऽन्य इवाभवत् । अथास्त्रसम्मर्दकृतैर्विस्फु-
लिङ्गैस्तदा बभौ ॥ १०१ ॥ विभावरीमुखे व्योम खद्योतैरिव
चित्रितम् । निशम्य निहतां मायां द्रौणिना रणमानिना ॥ १०२ ॥
घटोत्कचस्तदा मायां ससर्जान्तर्हितः पुनः । सोऽभवद्गिरिरत्युच्चः
शिखरैस्तरुसङ्कटैः ॥ १०३ ॥ शूलप्रासासिमुषलजलप्रस्रवणो
महान् । तमञ्जनचयप्रख्यं द्रौणिर्दृष्ट्वा महीधरम् ॥ १०४ ॥
प्रपतद्भिश्च बहुभिः शस्त्रसङ्घैर्न चुक्षुभे । ततः स्मयन्निव द्रौणि-
र्वज्रमस्त्रमुदैरयत् ॥ १०५ ॥ स तेनास्त्रेण शैलेन्द्रः क्षिप्तः क्षिप्र-
मनश्यत । ततः स तोयदो भूत्वा नीलः सेन्द्रायुधो दिवि ॥ १०६ ॥
अश्मवृष्टिभिरत्युग्रो द्रौणिमाच्छादयद्रणे । अथ सन्धाय वायव्य-
मस्त्रमस्त्रविदाम्बरः ॥ १०७ ॥ व्यधमद्द्रोणतनयो नीलमेघं
समुत्थितम् । स मार्गणगणैर्द्रौणिर्दिशः प्रच्छाद्य सर्वतः ॥ १०८ ॥

शतं रथसहस्राणां जघान द्विपदाम्वरः । स दृष्ट्वा पुनरायान्तं
रथेनायतकार्मुकम् ॥ १०९ ॥ घटोत्कचमसम्भ्रान्तं राक्षसैर्बहुभि-
र्वृतम् । सिंहशार्दूलसदृशैर्मत्तद्विरदविक्रमैः ॥ ११० ॥ गज-
स्थैश्च रथस्थैश्च वाजिपृष्ठगतैरपि । विकृतास्यशिरोग्रीवैर्हैडिम्बो-
ऽनुचरैः सह ॥ १११ ॥ पौलस्त्यैर्यातुधानैश्च तामसैश्चेन्द्रविक्रमैः ।
नानाशस्त्रधरैर्वीरैर्नानाकवचभूषितैः ॥ ११२ ॥ महाबलैर्भीमरवैः
क्रूरैः संरम्भाद्वृत्तलोचनैः । उपस्थितैस्ततो युद्धे राक्षसैर्युद्धदुर्मदैः
॥ ११३ ॥ विषण्णमभिसम्प्रेक्ष्य पुत्रं ते द्रौणिरब्रवीत् । तिष्ठ
दुर्योधनाद्य त्वं न कार्यः सम्भ्रमस्त्वया ॥ ११४ ॥ सहैभिर्भ्रातृभि-
र्वीरैः पार्थिवैश्चेन्द्रविक्रमैः । निहनिष्याम्यमित्रांस्ते तव नास्ति
पराजयः ॥ सत्यं ते प्रतिजानामि पर्याश्वासय वाहिनीम् ॥ ११५॥
दुर्योधन उवाच । न त्वेतदद्भुतं मन्ये यत्ते महदिदं मनः ।
प्रसादश्च परा भक्तिस्त्वयि गौतमिनन्दन ॥ ११६ ॥
सञ्जय उवाच । अश्वत्थामानमुक्त्वैवं ततः सौबलमब्रवीत् ।
वृतः शतसहस्रेण रथानां रणशोभिनाम् ॥ ११७ ॥ षष्ट्या गज-
सहस्रैश्च प्रयाहि त्वं धनञ्जयम् । कर्णश्च वृषसेनश्च कृपो नील-
स्तथैव च ॥ ११८ ॥ उदीच्याः कृतवर्मा च पुरुमित्रस्ततः पुनः ।
दुःशासनो निकुम्भश्च कुण्डभेदी पुरुक्रमः ॥ ११९ ॥ पुरञ्जयो
दृढरथः पताकी हेमपुङ्खकः । शल्योऽरुणीन्द्रसेनश्च सञ्जयो विजयो
जयः ॥ १२० ॥ कमलाक्षः परक्राथी जयवर्मा सुदर्शनः । एते
त्वामनुयास्यन्ति पत्तीनामयुतानि षट् ॥ १२१ ॥ जहि भीमं
यमौ चैव धर्मराजञ्च मातुल । असुरानिव देवेन्द्रो जयाशा
त्वयि मे स्थिता ॥ १२२ ॥ दारितान् द्रौणिना बाणैर्भृशं विक्षत-
विग्रहान् । जहि मातुल कौन्तेयानसुरानिव पावकिः ॥ १२३॥
एवमुक्तो ययौ शीघ्रं पुत्रेण तव सौबलः । पिप्रीषुस्ते सुतांश्चापि
दिधक्षुश्चैव पाण्डवान् ॥ १२४ ॥ अथ प्रववृते युद्धं द्रौणिराक्षसयोः

मृधे । विभावर्यां सुतुमुलं शक्रप्रह्लादयोरिव ॥ १२५ ॥ ततो
घटोत्कचो बाणैर्दशभिर्गौतमीसुतम् । जघानोरसि संक्रुद्धो विषाग्नि-
प्रतिमैर्दृढैः ॥ १२६ ॥ स तैरभ्याहतो गाढं शरैर्भीमसुतेरितैः ।
चचाल रथोपस्थे वातोद्धूत इव द्रुमः ॥ १२७ ॥ भूयश्चाञ्जलि-
केनास्य मार्गणेन महाप्रभम् । द्रौणिहस्तस्थितं चापं चिच्छेदाशु
घटोत्कचः ॥ १२८ ॥ ततोऽन्यद्द्रौणिरादाय धनुर्भारसहं दृढम् ।
ववर्ष विशिखांस्तीक्ष्णान् वारिधारा इवाम्बुदः ॥ १२९ ॥ ततः
शारद्वतीपुत्रः प्रेषयामास भारत । सुवर्णपुङ्खाञ्छत्रुघ्नान् खचरान्
खचरं प्रति ॥ १३० ॥ तद्बाणैरर्दितं यूथं रक्षसां पीनवक्षसाम् ।
सिंहैरिव बभौ मत्तं गजानां सङ्कुलं कुलम् ॥ १३१ ॥ विशस्य
राक्षसान् बाणैः साश्वसूतरथान् विभुः । ददाह भगवान् वह्नि-
र्भूतानीव युगक्षये ॥ १३२ ॥ स दग्ध्वाक्षौहिणीं बाणैर्नैरृतीं
रुरुचे भृशम् । पुरेव त्रिपुरं दग्ध्वा दिवि देवो महेश्वरः ॥१३३॥
युगान्ते सर्वभूतानि दग्ध्वेव वसुरुल्बणः । रराज जयतां श्रेष्ठो
द्रोणपुत्रस्तवाहितान् ॥ १३४ ॥ ततो घटोत्कचः क्रुद्धो रक्षसां
भीमकर्मणाम् । द्रौणिं हतेति महतीं चोदयामास तां चमूम्
॥ १३५ ॥ घटोत्कचस्य तामाज्ञां प्रतिगृह्याथ राक्षसाः । दंष्ट्रो-
ज्ज्वला महावक्त्रा घोररूपा भयावहाः ॥ १३६ ॥ व्यात्तानना
दीर्घजिह्वा क्रोधरक्तेक्षणा भृशम् । सिंहनादेन महता नादयन्तो
वसुन्धराम् ॥ १३७ ॥ हन्तुमभ्यद्रवन् द्रौणिं नानाप्रहरणायुधाः ।
शक्तीः शतघ्नीः परिघानशनीः शूलपट्टिशान् ॥ १३८ ॥ खड्गान्
गदा भिन्दिपालान् मुषलानि परश्वधान् । प्रासानसींस्तोमरांश्च
कणपान् कम्पनाञ्छितान् ॥ १३९ ॥ शूलान् भुशुण्ड्यश्मगुडाः
स्थूणाः कार्ष्णायसीस्तथा । मुद्गरांश्च महाघोरान् समरे शत्रु-
दारणान् ॥ १४० ॥ द्रौणिमूर्द्धन्यसृजन्त राक्षसा भीमविक्रमाः ।
चिक्षिपुः क्रोधताम्राक्षाः शतशोऽथ सहस्रशः ॥ १४१ ॥ तच्छस्त्र-

वर्षं समसृजद्द्रोणपुत्रस्य मूर्द्धनि । पतमानं समीक्ष्याथ धीमांस्ते
व्यथितामवन् ॥ १४२ ॥ द्रोणपुत्रस्त्वसम्भ्रान्तस्तद्वर्षं घोरमुच्छ्रि-
तम् । शरैर्विध्वंसयामास वज्रकल्पैः शिलाशितैः ॥ १४३ ॥ ततो-
ऽन्यैर्विशिखैस्तूर्णं स्वर्णपुङ्खैर्महामना । निजघ्ने राक्षसान् द्रौणि-
र्दिव्यास्त्रप्रतिमन्त्रितैः ॥ १४४ ॥ तद्बाणैरर्दितं यूथं रक्षसां पीन-
वक्षसाम् । सिंहैरिव बभौ मत्तं गजानामाकुलं कुलम् ॥ १४५ ॥
ते राक्षसाः सुसंक्रुद्धा द्रोणपुत्रेण ताडिताः । क्रुद्धाः समभ्यद्रवन्
द्रौणिं जिघांसन्तो महाबलाः ॥ १४६ ॥ तत्राद्भुतमिमं द्रौणि-
र्दर्शयामास विक्रमम् । अशक्यं कर्तुमन्येन सर्वभूतेषु भारत
॥ १४७ ॥ यदेको राक्षसीं सेनां क्षणाद्द्रौणिर्महास्त्रवित् ।
ददाह ज्वलितैर्बाणै राक्षसेन्द्रस्य पश्यतः ॥ १४८ ॥ स दग्ध्वा राक्ष-
सानीकं रराज द्रौणिराहवे । युगान्ते सर्वभूतानि संवर्त्तक
इवानलः ॥ १४९ ॥ तं दहन्तमनीकानि शरैराशीविषोपमैः ।
तेषु राजसहस्रेषु पाण्डवेयेषु भारत ॥ १५० ॥ नैनं निरीक्षितुं
कश्चित् शक्नोति द्रौणिमाहवे । 'ऋते घटोत्कचाद्वीराद्राक्षसेन्द्रा-
न्महाबलात् ॥ १५१ ॥ स पुनर्भरतश्रेष्ठ क्रोधादुद्भ्रान्तलोचनः ।
तलं तलेन संहत्य सन्दश्य दशनच्छदम् ॥ १५२ ॥ स्वं सूतमब्रवीत्
क्रुद्धो द्रोणपुत्राय मां वह । स ययौ घोररूपेण तेन जैत्रपता-
किना ॥ १५३ ॥ द्वैरथं द्रोणपुत्रेण पुनरप्यरिसूदनः । स विनद्य
महानादं सिंहवद्भीमविक्रमः ॥ १५४ ॥ चिक्षेपाविध्य सङ्ग्रामे
द्रोणपुत्राय राक्षसः । अष्टघण्टां महाघोरामशनीं देवनिर्मिताम्
॥ १५५ ॥ तामवप्लुत्य जग्राह द्रौणिर्न्यस्य रथे धनुः । चिक्षेप
चैनां तस्यैव स्यन्दनात् सोऽवपुप्लुवे ॥ १५६ ॥ साश्वसूतध्वजं
वाहं भस्म कृत्वा महाप्रभा । विवेश वसुधां भित्त्वा साशनिर्भृश-
दारुणा ॥ १५७ ॥ द्रौणेस्तत् कर्म दृष्ट्वा तु सर्वभूतान्यपूजयन् ।
यदवप्लुत्य जग्राह घोरां शङ्करनिर्मिताम् ॥ १५८ ॥ धृष्टद्युम्नरथं

गत्वा भैमसेनिस्ततो नृप । धनुर्घोरं समादाय महदिन्द्रायुधो-
पमम् ॥ १५९ ॥ मुमोच निशितान् वाणान् पुनर्द्रौणेर्महात्मनः ।
धृष्टद्युम्नोऽप्यसम्भ्रान्तो मुमोचाशीविषोपमान् ॥ १६० ॥ सुवर्ण-
पुङ्खान् प्रवरान् द्रोणपुत्रस्य वक्षसि । ततो मुमोच नाराचान्
द्रौणिस्तांश्च सहस्रशः ॥ १६१ ॥ तावप्यग्निसमस्पर्शैश्चिच्छिदतुस्तस्य
मार्गणान् । अतितीव्रमभूद्युद्धं तयोः पुरुषसिंहयोः ॥ १६२ ॥
योधानां प्रीतिजननं द्रौणेश्च भरतर्षभ । ततो रथसहस्रेण
द्विरदानां त्रिभिः शतैः ॥ १६३ ॥ षड्भिर्वाजिसहस्रैश्च भीमस्तं
देशमाव्रजत् । ततो भीमात्मजं वीरं धृष्टद्युम्नञ्च सानुगम् ॥१६४॥
अयोधयत धर्मात्मा द्रौणिरक्लिष्टविक्रमः । तत्राद्भुततमं द्रौणि-
र्दर्शयामास विक्रमम् ॥ १६५ ॥ अशक्यं कर्त्तुमन्येन सर्वभूतेषु
भारत । निमेषान्तरमात्रेण साश्वसूतरथद्विपान् ॥ १६६ ॥
अक्षौहिणीं राक्षसानां शितैर्वाणैरनाशयत् । मिषतो भीम-
सेनस्य हैडिम्बेः पार्षतस्य च ॥ १६७ ॥ यमयोर्धर्मपुत्रस्य विजः
यस्याच्युतस्य च । प्रगाढमञ्जोगतिभिर्नाराचैरभ्य ताडिताः ॥१६८॥
निपेतुर्द्विरदा भूमौ विश्रृङ्गा इव पर्वताः । निकृत्तैर्हस्तिहस्तैश्च
विचरद्भिरितस्ततः ॥ १६९ ॥ रराज वसुधा कीर्णा विसर्पद्भि-
रिवोरगैः । छिन्नैः काञ्चनदण्डैश्च नृपच्छत्रैः क्षितिर्बभौ ॥ १७० ॥
द्यौरिवोदितचन्द्रार्का ग्रहाकीर्णा युगक्षये । प्रवृद्धध्वजमण्डूकां
भेरीविस्तीर्णकच्छपाम् ॥ १७१ ॥ छत्रहंसावलीजुष्टां फेणचामर-
मालिनीम् । कङ्कगृध्रमहाग्राहां नैकायुधझषाकुलाम् ॥ १७२ ॥
विस्तीर्णगजपाषाणां हतश्वमकराकुलाम् । रथक्षिप्तमहावप्रां
पताकारुचिरद्रुमाम् ॥ १७३ ॥ शरमीनां महारौद्रां प्रासशक्त्यृष्टि-
डुण्डुभाम् । मज्जामांसमहापङ्कां कबन्धावर्जितोडुपाम् ॥ १७४ ॥
केशशैवलकल्माषां भीरूणां कश्मलावहाम् । नागेन्द्रहयधोधानां
शरीरव्ययसम्भवाम् ॥ १७५ ॥ शोणितौघमहावेगां द्रौणिः प्राव-

र्त्तयन्नदीम् । योधार्त्तरवनिर्घोषां चलनोर्मिसमाकुलाम् ॥ १७६ ॥
पदातिभिर्महाघोरां यमक्षयमहोदधिम् । निपात्य राक्षसान्
बाणैर्द्रौणिर्हैडिम्बिमार्दयत् ॥ १७७ ॥ पुनरप्यतिसंक्रुद्धः सवृको-
दरपार्षतान् । स नाराचगणैः पार्थान् द्रौणिर्विद्ध्वा महारथान्
॥ १७८ ॥ जघान सुरथं नाम द्रुपदस्य सुतं विभुः । पुनः शत्रु-
ञ्जयं नाम सुरथस्यानुजं रणे ॥ १७९ ॥ बलानीकं जयानीकं
जयञ्चाथ निजघ्निवान् । पुनः शरेण तीक्ष्णेन द्रौणिः सिंह इवो-
न्नदन् ॥ १८० ॥ जघान च पृषध्रञ्च चन्द्रसेनञ्च मानिनम् ।
कुन्तीभोजसुतांश्चासौ दशभिर्दश जघ्निवान् ॥ १८१ ॥ श्रुतायुषञ्च
राजेन्द्र द्रौणिर्निन्ये यमक्षयम् । त्रिभिश्चान्यैः शरैस्तीक्ष्णैः सपुङ्खै-
रक्तलोचने ॥ १८२ ॥ शत्रुञ्जयञ्च बलिनं शक्रलोकं निनाय ह ।
अश्वत्थामा सुसंक्रुद्धः सन्धायोग्रमजिह्मगम् ॥ १८३ ॥ मुमोचा-
कर्णपूर्णेन धनुषा शरमुत्तमम् । यमदण्डोपमं घोरमुद्दिश्याशु
घटोत्कचम् ॥ १८४ ॥ स भित्त्वा हृदयं तस्य राक्षसस्य महा-
शरः । विवेश वसुधां भित्त्वा सपुङ्खः पृथिवीपते ॥ १८५ ॥ तं
हतं पतितं ज्ञात्वा धृष्टद्युम्नो महारथः । द्रौणेः सकाशाद्राजेन्द्र
अपनिन्ये रथान्तरम् ॥ १८६ ॥ तथा पराङ्मुखरथं सैन्यं यौधि-
ष्ठिरं नृप । पराजित्य रिपून् वीरो द्रोणपुत्रो ननाद च । पूजितः
सर्वलोकैश्च तव पुत्रैश्च मारिष ॥ १८७ ॥ अथ शरशतभिन्नकृत्त-
देहैर्हतपतितैः क्षणदाचरैः समन्तात् । निधनमुपगतैर्बभूव भूमि-
र्गिरिशिखरैरिव दुर्गमातिरौद्रा ॥ १८८ ॥ तं सिद्धगन्धर्वपिशाच-
सङ्घा नागाः सुपर्णाः पितरो वयांसि । रक्षोगणा भूतगणाश्च
द्रौणिमपूजयन्नप्सरसः सुराश्च ॥ १८९ ॥

इति द्रोणपर्वणि घटोत्कचवधपर्वणि अश्वत्थामयुद्धे
षट्पञ्चाशदधिकशततमोऽध्यायः ॥ १५६ ॥

---

सञ्जय उवाच । द्रुपदस्यात्मजान् दृष्ट्वा कुन्तिभोजसुतांस्तथा ।
द्रोणपुत्रेण निहतान्राजसाथ सहस्रशः ॥ १ ॥ युधिष्ठिरो भीम-
सेनो धृष्टद्युम्नश्च पार्षतः । युयुधानश्च संयत्ता युद्धायैव ,मनो
दधुः ॥ २ ॥ सोमदत्त. पुन क्रुद्धो दृष्ट्वा सात्यकिमाहवे । महता
शरवर्षेण छादयामास भारत ॥ ३ ॥ ततः समभवद्युद्धमतीवा-
द्भुतदर्शनम् । त्वदीयानां परेषाञ्च घोरं विजयकाङ्क्षिणाम् ॥ ४ ॥
दशभिः सात्वतस्यार्थे भीमो विव्याध कौरवम् । सोमदत्तोऽपि
तं वीरं शतेन प्रत्यविध्यत ॥ ५ ॥ सात्वतस्त्वभिसंक्रुद्ध. पुत्राधिभि-
राभिभूतम् । वृद्धं वृद्धगुणैर्युक्तं ययातिमिव नाहुषम् ॥ ६ ॥
विव्याध दशभिस्तीक्ष्णैः शरैर्वज्रनिपातिभिः । शक्त्या चैनं विनि
र्भिद्य पुनर्विव्याध सप्तभिः ॥ ७ ॥ ततस्तु सात्यकेरर्थे भीमसेनो
नवं दृढम् । मुमोच परिघं घोरं सोमदत्तस्य मूर्द्धनि ॥ ८ ॥
सात्वतोऽप्यग्निसङ्काशं मुमोच शरमुत्तमम् । सोमदत्तोरसि क्रुद्धः
सुपत्रं निशितं युधि ॥ ९ ॥ युगपत् पेततुर्वीरे घोरौ परिघ-
मार्गणौ । शरीरे सोमदत्तस्य स पपात महारथः ॥ १० ॥
व्यामोहिते तु तनये बाह्लीकस्समुपाद्रवत् । विसृजञ्छरवर्षाणि
कालवर्षीव तोयदः ॥ ११ ॥ भीमोऽथ सात्वतस्यार्थे बाह्लीक
नवभिः शरैः । प्रपीडयन्महात्मानं विव्याध रणमूर्द्धनि ॥ १२ ॥
प्रातिपीयस्तु संक्रुद्धः शक्तिं भीमस्य वक्षसि । निचखान महा-
बाहुः पुरन्दर इवाशनिम् ॥ १३ ॥ स तया निहतो भीमश्चचाल
च मुमोह च । प्राप्य चेतश्च बलवान् गदामस्मै ससर्ज्ज ह ॥ १४ ॥
सा पाण्डवेन प्रहिता बाह्लीकस्य शिरोऽहरत् । स पपात हतः
पृथ्व्यां वज्राहत इव द्रुमः ॥ १५ ॥ तस्मिन् विनिहते वीरे बाह्लीके
पुरुषर्षभे । पुत्रास्तेऽभ्यर्द्दयन् भीमं दश दाशरथेः समाः ॥ १६ ॥
नागदत्तो दृढरथो वीरबाहुरयोभुजः । दृढ. सुहस्तो विरजाः
प्रमाथश्चोग्रयाय्यपि ॥ १७ ॥ तान् दृष्ट्वा चुक्रुधे भीमो जगृहे

भारसाधनान् । एकमेकं समुद्दिश्य पातयामास मर्मसु ॥ १८ ॥
ते विद्धा व्यसव पेतु स्यन्दनेभ्यो हतौजस । चण्डवातप्रभग्नास्तु
पर्वताग्रान्महीरुहा ॥ १९ ॥ नाराचैर्द्दशभिर्भीमस्तान्निहत्य
तवात्मजान् । कर्णस्य दयित पुत्रं वृषसेनमवाकिरत् ॥ २० ॥
ततो वृकरथो नाम भ्राता कर्णस्य विश्रुत । विव्याध भीम
नाराचैस्तं समभ्यवधीद्वली ॥ २१ ॥ तत सप्तरथान् वीरं
स्यालानां तव भारत । निहत्य भीमो नाराचै शतचन्द्रमपोथयत्
॥ २२ ॥ अमर्षयन्तो निहत शतचन्द्र महारथम् । शकुनेर्भ्रातरो
वीर गवाक्ष शरभो विभु ॥ २३ ॥ अभिद्रुत्य शरैस्तीक्ष्णैर्भीमसेन
मताडयत । स ताड्यमानो नाराचैर्वृष्टिवेगैरिवाचल ॥ २४ ॥
जघान पञ्चभिर्बाणै पञ्च चातिबलान्नृपान् । तान् दृष्ट्वा निह
तान् वीरान् विचेलर्नृपसत्तमा ॥ २५ ॥ ततो युधिष्ठिर क्रुद्ध
स्तवानीकमशातयत् । मिषत कुम्भयोनेश्च पुत्राणां तव चानघ
॥ २६ ॥ अम्बष्ठान्मालवान् शूरास्त्रिगर्त्तान् सशिवीनपि । प्राहि
णोन्मृत्युलोकाय गणान् युद्धे युधिष्ठिर ॥ २७ ॥ अभीषाहान्
शूरसेनान् वाह्लीकान् सवातिकान् । निकृत्य पृथिवीं चक्रे मांस
शोणितकर्द्दमाम् ॥ २८ ॥ यौधेयान् मालवान्राजन् मद्रकांश्च गणान्
युधि । प्राहिणोद्यमलोकाय शूरान् बाणगणै स्तदा ॥ २९ ॥
हता हरत गृह्णीत विध्यत व्यवकृन्तत । इत्यासीत्तुमुल शब्दो
युधिष्ठिररथ प्रति ॥ ३० ॥ सैन्यानि द्रावयन्तन्तु द्रोणो दृष्ट्वा
युधिष्ठिरम् । चोदितस्तव पुत्रेण सायकैरभ्यवाकिरत् ॥ ३१ ॥
द्रोणस्तु परम क्रुद्धो वायव्यास्त्रेण पाण्डवम् । विव्याध सोऽपि
तद्दिव्यमस्त्रमस्त्रेण जघ्निवान् ॥ ३२ ॥ तस्मिन्नस्त्रे विनिहते भार
द्वाजो युधिष्ठिरे । वारुणं याम्यमाग्नेय त्वाष्ट्रं सावित्रमेव च
॥ ३३ ॥ चिक्षेप परमक्रुद्धो जिघांसु पाण्डुनन्दनम् । क्षिप्तानि
क्षिप्यमाणानि तानि चास्त्राणि धर्मजित् ॥ ३४ ॥ जघानास्त्रैर्महा

बाहुः कुम्भयोनेरविध्यत् । तथा चिकीर्षमानस्तु प्रतिज्ञां कुम्भ-
सम्भव ॥ ३५ ॥ प्रादुश्चक्रेऽस्त्रमैन्द्रं वै प्राजापत्यञ्च भारत ।
जिघांसुर्धर्म्मतनयं तव पुत्रहिते रतः ॥ ३६ ॥ पतिः कुरूणां
गजसिंहगामी व्यूढोरस्को व्यायतपृथुलोहिताक्षः । प्रादुश्चकारास्त्र-
महीनतेजा माहेन्द्रमन्यत् स जघान चास्त्रम् ॥ ३७ ॥ निहन्य-
मानेष्वस्त्रेषु द्रोणः क्रोधसमन्वितः । युधिष्ठिरवधं प्रेप्सुर्ब्राह्म-
मस्त्रमुदैरयत् ॥ ३८ ॥ नाज्ञासिषं ततः किञ्चिद्घोरेण तमसा
वृते । सर्व्वभूतानि च त्रासं परं जग्मुर्विशाम्पते ॥ ३९ ॥ ब्रह्मास्त्र-
मुद्यतं दृष्ट्वा कुन्तीपुत्रो युधिष्ठिरः । ब्रह्मास्त्रेणैव राजेन्द्र तदस्त्रं
पर्य्यवारयत् ॥ ४० ॥ ततः सैनिकमुख्यास्ते प्रशशंसुर्नरर्षभौ ।
द्रोणपार्थौ महेष्वासौ सर्व्वयुद्धविशारदौ ॥ ४१ ॥ ततः प्रमुच्य
कौन्तेयं द्रोणो द्रुपदवाहिनीम् । व्यधमत् सोऽस्त्रमस्त्रेण क्रोध-
पर्य्याकुलेक्षणः ॥ ४२ ॥ ते हन्यमाना द्रोणेन पाञ्चालाः प्राद्रवन्
भयात् । पश्यतो भीमसेनस्य पार्थस्य च महात्मनः ॥ ४३ ॥
ततः किरीटी भीमश्च सहसा सन्न्यवर्त्तताम् । महद्भ्यां रथवंशाभ्यां
प्रतिगृह्य बलं तदा ॥ ४४ ॥ बीभत्सुर्दक्षिणं पार्श्वमुत्तरञ्च
वृकोदरः । भारद्वाजं शरौघाभ्यां महद्भ्यामभ्यवर्षताम् ॥ ४५ ॥
कैकयाः सृञ्जयाश्चैव पाञ्चालाश्च महौजसः । अन्वगच्छन्महा-
राज मत्स्याश्च सह सात्वतैः ॥ ४६ ॥ ततः सा भारती सेना
बध्यमाना किरीटिना । तमसा निद्रया चैव पुनरेव व्यदीर्य्यत
॥ ४७ ॥ द्रोणेन वार्य्यमाणास्ते स्वयं तव सुतेन च । नाशक्यन्त
महाराज योधा वारयितुं तदा ॥ ४८ ॥

इति द्रोणपर्व्वणि घटोत्कचवधपर्व्वणि द्रोणयुधिष्ठिरयुद्धे
सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥

---

युध्यन्त सैन्यानि तवैकोऽग्रे पलायिताः ॥ १६ ॥ विराटनगरे
चापि समेताः सर्वकौरवाः । पार्थेन निर्जिता युद्धे त्वञ्च कर्ण
सहानुजः ॥ १७ ॥ एकस्याप्यसमर्थस्त्वं फाल्गुनस्य रणाजिरे ।
कथमुत्सहसे जेतुं सकृष्णान् सर्वपाण्डवान् ॥ १८ ॥ अब्रुवन् कर्ण
युध्यस्व कत्थसे बहु सूतज । अनुक्त्वा विक्रमेद्यस्तु तद्वै सत्पुरुष-
व्रतम् ॥ १९ ॥ गर्जित्वा सूतपुत्र त्वं मारुताभ्रमिवाजलम् ।
निष्फलो दृश्यसे कर्ण तच्च राजा न बुध्यते ॥ २० ॥ तावद्गर्जसि
राधेय यावत् पार्थं न पश्यसि । आरात् पार्थं हि ते दृष्ट्वा दुर्लभं
गर्जितं पुनः ॥ २१ ॥ त्वमनासाद्य तान् बाणान् फाल्गुनस्य
विगर्जसि । पार्थसायकविद्धस्य दुर्लभं गर्जितं तव ॥ २२ ॥
बाहुभिः क्षत्रियाः शूरा वाग्भिः शूरा द्विजातयः । धनुषा
फाल्गुनः शूरः कर्णः शूरो मनोरथैः ॥ २३ ॥ तोषितो येन
रुद्रोऽपि कः पार्थं प्रतिघातयेत् । एवं स परुषितस्तेन तदा शार-
द्वतेन ह ॥ २४ ॥ कर्णः प्रहरतां श्रेष्ठः कृपं वाक्यमथाब्रवीत् ।
शूरा गर्जन्ति सततं प्रावृषीव बलाहकाः ॥ २५ ॥ फलञ्चाशु प्रय-
च्छन्ति बीजमुप्तं ऋताविव । दोषमत्र न पश्यामि शूराणां रण-
मूर्द्धनि ॥ २६ ॥ तत्तद्विकत्थमानानां भारञ्चोद्वहतां युधि । यं भारं
पुरुषो वोढुं मनसा हि व्यवस्यति ॥२७॥ दैवमस्य ध्रुवं तत्र साहा-
य्यायोपपद्यते । व्यवसायद्वितीयोऽहं मनसा भारमुद्वहन् ॥ २८ ॥
हत्वा पाण्डुसुतानाजौ सकृष्णान् सहसात्वतान् । गर्जामि यद्यहं
विप्र तव किन्तत्र नश्यति ॥ २९ ॥ वृथा शूरा न गर्जन्ति शारदा
इव तोयदाः । सामर्थ्यमात्मनो ज्ञात्वा ततो गर्जन्ति पण्डिताः
॥ ३० ॥ सोऽहमद्य रणे यत्तौ सहितौ कृष्णपाण्डवौ । उत्सहे
मनसा जेतुं ततो गर्जामि गौतम ॥ ३१ ॥ पश्य त्वं गर्जितस्यास्य
फलं मे विप्र सानुगान् । हत्वा पाण्डुसुतानाजौ सहकृष्णान् स-
सात्वतान् । दुर्योधनाय दास्यामि पृथिवीं हतकण्टकाम् ॥ ३२ ॥

सञ्जय उवाच। उदीर्य्यमाणं तं दृष्ट्वा पाण्डवानां महद्बलम्। अविषह्यञ्च मन्वानः कर्णं दुर्य्योधनोऽब्रवीत् ॥ १ ॥ अयं स कालः सम्प्राप्तो मित्राणां मित्रवत्सल। त्रायस्व समरे कर्ण सर्वान् योधान्महारथान् ॥ २ ॥ पाञ्चालैः केकयैर्मत्स्यैः पाण्डवैश्च महारथैः। वृतान् समन्तात् सङ्क्रुद्धैर्निःश्वसद्भिरिवोरगैः ॥ ३ ॥ एते नदन्ति संहृष्टाः पाण्डवा जितकाशिनः। शक्रोपमाश्च बहवः पाञ्चालानां रथव्रजाः ॥ ४ ॥

कर्ण उवाच। परित्रातुमिह प्राप्तो यदि पार्थं पुरन्दरः। तमप्याशु पराजित्य ततो हन्तास्मि पाण्डवम् ॥ ५ ॥ सत्यं ते प्रतिजानामि समाश्वसिहि भारत। हन्तास्मि पाण्डुतनयान् पाञ्चालांश्च समागतान् ॥ ६ ॥ जयन्ते प्रतिदास्यामि वासवस्येव पावकिः। प्रियं तव मया कार्य्यमिति प्राणसमागमे ॥ ७ ॥ सर्वेषामेव पार्थानां फाल्गुनो बलवत्तरः। तस्यामोघां विमोक्ष्यामि शक्तिं शक्रविनिर्मिताम्। ८ ॥ तस्मिन् हते महेष्वासे भ्रातरस्तस्य मानद। तव वश्या भविष्यन्ति वनं यास्यन्ति वा पुनः ॥ ९ ॥ मयि जीवति कौरव्य विषादं मा कृथाः क्वचित्। अहं जेष्यामि समरे सहितान् सर्वपाण्डवान् ॥ १० ॥ पाञ्चालान् केकयांश्चैव वृष्णींश्चापि समागतान्। बाणौघैः शकलीकृत्य तव दास्यामि मेदिनीम् ॥ ११ ॥

युध्यन्त सैन्यानि समेतोऽग्रे पलायिताः ॥ १६ ॥ विराटनगरे
चापि समेताः सर्वकौरवाः । पार्थेन निर्ज्जिता युद्धे त्वञ्च कर्ण
सहानुजः ॥ १७ ॥ एकस्याप्यसमर्थस्त्वं फाल्गुनस्य रणाजिरे ।
कथमुत्सहसे जेतुं सकृष्णान् सर्वपाण्डवान् ॥ १८ ॥ अब्रुवन् कर्ण
युध्यस्व कत्थसे बहु सूतज । अनुक्त्वा विक्रमेद्यस्तु तद्वै सत्पुरुष-
व्रतम् ॥ १९ ॥ गर्ज्जित्वा सूतपुत्र त्वं शारदाभ्रमिवाजलम् ।
निष्फलो दृश्यसे कर्ण तच्च राजा न बुध्यते ॥ २० ॥ [1]तावद्गर्ज्जसि
राधेय यावत् पार्थं न पश्यसि । आरात् पार्थं हि ते दृष्ट्वा दुर्लभं
गर्ज्जितं पुनः ॥ २१ ॥ त्वमनासाद्य तान् बाणान् फाल्गुनस्य
विगर्ज्जसि । पार्थसायकविद्धस्य दुर्लभं गर्ज्जितं तव ॥ २२ ॥
बाहुभिः क्षत्रियाः शूरा वाग्भिः शूरा द्विजातयः । धनुषा
फाल्गुनः शूरः कर्णः शूरो मनोरथैः ॥ २३ ॥ तोषितो येन
रुद्रोऽपि कः पार्थं प्रतिघातयेत् । एवं स परुषस्तेन तदा शार-
द्वतेन च ॥ २४ ॥ कर्णः प्रहरतां श्रेष्ठः कृपं वाक्यमथाब्रवीत् ।
शूरा गर्ज्जन्ति सततं प्रावृषीव बलाहकाः ॥ २५ ॥ फलञ्चाशु प्रय-
च्छन्ति बीजमुप्तं ऋताविव । दोषमत्र न पश्यामि शूराणां रण-
मूर्द्धनि ॥ २६ ॥ तत्तद्विकत्थमानानां भारञ्चोद्वहतां युधि । यं भारं
पुरुषो वोढुं मनसा हि व्यवस्यति ॥२७॥ दैवमस्य ध्रुवं तत्र साहा-
य्यायोपपद्यते । व्यवसायद्वितीयोऽहं मनसा भारमुद्वहन् ॥ २८ ॥
हत्वा पाण्डुसुतानाजौ सकृष्णान् सहसात्वतान् । गर्ज्जामि यद्यहं
विप्र तव किन्तत्र नश्यति ॥ २९ ॥ वृथा शूरा न गर्ज्जन्ति शारदा
इव तोयदाः । सामर्थ्यमात्मनो ज्ञात्वा ततो गर्ज्जन्ति पण्डिताः
॥ ३० ॥ सोऽहमद्य रणे यत्तौ सहितौ कृष्णपाण्डवौ । उत्सहे
मनसा जेतुं ततो गर्ज्जामि गौतम ॥ ३१ ॥ पश्य त्वं गर्ज्जितस्यास्य
फलं मे विप्र सानुगान् । हत्वा पाण्डुसुतानाजौ सहकृष्णान् स-
सात्वतान् । दुर्य्योधनाय दास्यामि पृथिवीं हतकण्टकाम् ॥ ३२ ॥

कृप उवाच। मनोरथप्रलापो मे न ग्राह्यस्तव सूतज। यदा-
धिपाऽपि वै कृष्णौ धर्मराजश्च पाण्डवम् ॥ ३३ ॥ ध्रुवस्तत्र जयः
कर्ण यत्र युद्धविशारदौ। देवगन्धर्वयक्षाणां मनुष्योरगपक्षिणाम्
॥ ३४ ॥ दर्पितानामपि रणेऽजेयौ कृष्णपाण्डवौ। ब्रह्मण्य-
सत्यवाग्दान्तः पितृदैवतपूजकः ॥ ३५ ॥ सत्यधर्मरतश्चैव कृता-
स्त्रश्च विशेषतः। धृतिमांश्च कृतज्ञश्च धर्मपुत्रो युधिष्ठिरः ॥ ३६ ॥
भ्रातरश्चास्य बलिनः सर्वास्त्रेषु कृतश्रमाः। गुरुवृत्तिरताः प्राज्ञा
धर्मनित्या यशस्विनः ॥ ३७ ॥ सम्बन्धिनश्चेन्द्रवीर्याः स्वनुरक्ताः
प्रहारिणः। धृष्टद्युम्नः शिखण्डी च दौर्मुखिर्जनमेजयः ॥ ३८ ॥
चन्द्रसेनो भद्रसेनः कीर्त्तिधर्मा ध्रुवो धरः। वसुचन्द्रो दामचन्द्रः
सिंहचन्द्रः सुतेजनः ॥ ३९ ॥ द्रुपदस्य तथा पुत्रा द्रुपदश्च महास्त्र-
वित्। येषामर्थाय यत्तो मत्स्यराजः सहानुगः ॥ ४० ॥ गजा-
नीकः श्रुतानीको वीरभद्रः सुदर्शनः। श्रुतध्वजो बलानीको
जयानीको जयप्रियः ॥ ४१ ॥ विजयो लब्धलक्षश्च जयाश्वो रथ-
वाहनः। चन्द्रोदयः कामरथो विराटभ्रातरः शुभाः ॥ ४२ ॥
यमौ च द्रौपदेयाश्च राक्षसश्च घटोत्कचः। येषामर्थाय युध्यन्ते न
तेषां विद्यते क्षयः ॥ ४३ ॥ एते चान्ये च बहवो गणाः पाण्डु-
सुतस्य वै। कामं खलु जगत् सर्वं सदेवासुरमानुषम् ॥ ४४ ॥
सयक्षराक्षसगणं सभूतभुजगद्विपम्। निःशेषमस्त्रवीर्येण कुर्यातां
भीमफाल्गुनौ ॥ ४५ ॥ युधिष्ठिरश्च पृथिवीं निर्दहेद्घोरचक्षुषा।
अप्रमेयबलः शौरिर्येषामर्थे च दंशितः ॥ ४६ ॥ कथं तान् संयुगे
कर्ण जेतुमुत्सहसे परान्। महानपनयस्त्वेष तव नित्यं हि
सूतज। यस्त्वमुत्सहसे योद्धुं समरे शौरिणा सह ॥ ४७ ॥

सञ्जय उवाच। एवमुक्तस्तु राधेयः प्रहसन् भरतर्षभ।
अब्रवीच्च तदा कर्णो गुरुं शारद्वतं कृपम् ॥ ४८ ॥ सत्यमुक्तं
ब्रह्मन् पाण्डवान् प्रति यद्वचः। एते चान्ये च बहवो गुणाः

पाण्डुसुतेषु वै ॥ ४९ ॥ अजेयाश्च रणे पार्था देवैरपि सवासवैः ।
सदैत्ययक्षगन्धर्वैः पिशाचोरगराक्षसैः ॥ ५० ॥ तथापि पार्थान्
जेष्यामि शक्त्या वासवदत्तया । ममाप्यमोघा दत्तेयं शक्तिः शक्रेण
वै द्विज ॥ ५१ ॥ एतया निहनिष्यामि सव्यसाचिनमाहवे । हते
तु पाण्डवे कृष्णो भ्रातरश्चास्य सोदराः ॥ ५२ ॥ अनर्ज्जुना न
शक्ष्यन्ति महीं भोक्तुं कथञ्चन । तेषु सर्व्वेषु नष्टेषु पृथिवीयं
ससागरा ॥ ५३ ॥ अयत्नात् कौरवेन्द्रस्य वशे स्थास्यति गौतम ।
सुनीतैरिह सर्व्वाणि सिध्यन्ते नात्र संशयः ॥ ५४ ॥ एतमर्थमहं
ज्ञात्वा ततो गर्ज्जामि गौतम । त्वन्तु वृद्धश्च विप्रश्च अशक्तश्चापि
संयुगे ॥ ५५ ॥ कृतस्नेहश्च पार्थेषु ततो मामवमन्यसे । यद्येवं
वक्ष्यसे भूयो ममाप्रियमिह द्विज ॥ ५६ ॥ ततस्ते खड्गमुद्यम्य
जिह्वां छेत्स्यामि दुर्मते । यच्चापि पाण्डवान् विप्र स्तोतुमिच्छसि
संयुगे ॥ ५७ ॥ भीषयन् सर्व्वसैन्यानि कौरवेयाणि दुर्मते ।
अत्रापि शृणु मे वाक्यं यथावच्छृणु गौतम ॥ ५८ ॥ दुर्य्योधनश्च
द्रोणश्च शकुनिर्दुर्मुखो जयः । दुःशासनो वृषसेनो मद्रराज-
स्त्वमेव च ॥ ५९ ॥ सोमदत्तश्च भूरिश्च तथा द्रौणिर्विविंशतिः ।
तिष्ठन्ति दंशिता यत्र सर्व्वे युद्धविशारदाः ॥ ६० ॥ जयेदेतानृणे
को हि शक्रतुल्यबलोऽप्यरिः । शूराश्च हि कृतास्त्राश्च बलिनः
स्वर्गलिप्सवः ॥ ६१ ॥ धर्म्मज्ञा युद्धकुशला हन्युर्युद्धे सुरानपि ।
एते स्थास्यन्ति सङ्ग्रामे पाण्डवानां वधार्थिनः ॥ ६२ ॥ जयमाकाङ्क्ष-
माणस्य कौरवेयस्य दंशिताः । दैवायत्तमहं मन्ये जयं सुबलिना-
मपि ॥ ६३ ॥ यत्र भीष्मो महाबाहुः शेते शरशताचितः । विकर्ण-
श्चित्रसेनश्च बाह्लीकश्च जयद्रथः ॥ ६४ ॥ भूरिश्रवा जयश्चैव जल-
सन्धः सुदक्षिणः । शलश्च रथिनां श्रेष्ठो भगदत्तश्च वीर्य्यवान् ॥ ६५ ॥
एते चान्ये च बहवो देवैरपि च दुर्ज्जयाः । निहताः समरे शूराः
पाण्डवैर्बलवत्तराः ॥ ६६ ॥ किमन्यद्दैवसंयोगान्मन्यसे पुरुषा-

धम। यथैतान् सोऽपि सततं दुर्योधनरिपून् द्विज ॥ ६७ ॥ तेषामपि हताः शूरा शतशोऽथ सहस्रशः। चीयन्ते सर्वसैन्यानि कुरूणां पाण्डवैः सह ॥ ६८ ॥ प्रभावं नात्र पश्यामि पाण्डवानां कथञ्चन। यस्तान् बलवतो नित्यं मन्यसे हि नराधम ॥ ६९ ॥ यतिष्येऽहं परं शक्त्या योद्धुं तैः सह संयुगे। दुर्योधन हितार्थाय जयो दैवे प्रतिष्ठितः ॥ ७० ॥

इति द्रोणपर्वणि घटोत्कचवधपर्वणि कृपकर्णवाक्ये अष्टपञ्चाशदधिकशततोऽध्यायः ॥ १५८ ॥

---

सञ्जय उवाच। तथा परुषितं दृष्ट्वा सूतपुत्रेण मातुलम्। खड्गमुद्यम्य वेगेन द्रौणिरभ्यपतद्द्रुतम् ॥ १ ॥ ततः परम-संक्रुद्धः सिंहो मत्तमिव द्विपम्। प्रेक्षतः कुरुराजस्य द्रौणिः कर्णं समभ्ययात ॥ २ ॥

अश्वत्थामोवाच। यदर्जुनगुणांस्तथ्यान् कीर्त्तयानं नराधम। शूरं द्वेषात सुदुर्बुद्धे त्वं भर्त्सयसि मातुलम् ॥ ३ ॥ विकत्थमानः शौर्य्येण सर्वलोकधनुर्द्धरम्। दर्पोत्सेकगृहीतोऽद्य न किञ्चिद्गण्य-यन् मृधे ॥ ४ ॥ क्व ते वीर्य्यं क्व चास्त्राणि यत्त्वां निर्जित्य संयुगे। गाण्डीवधन्वा हतवान् प्रेक्षतस्ते जयद्रथम् ॥ ५ ॥ येन साक्षान्महादेवः समरे योधितः पुरा। तमिच्छसि वृथा जेतुं सूताधम मनोरथैः ॥ ६ ॥ यं हि कृष्णेन सहित सर्वशस्त्र-भृताम्बरम्। जेतुं न शक्ताः सहिताः सेन्द्रा अपि सुरासुराः ॥ ७ ॥ लोकैकवीरमजितमर्जुनं सूत संयुगे। किम्, वक्ष्यसि त्वं जेतुं सरथिमिदं सुधाधिपो ॥ ८ ॥ कर्णाद्य पश्य दुर्बुद्धे तिष्ठेदानीं नरा-धम। एष तेऽद्य शिरः कायादुद्धरामि सुदुर्मते ॥ ९ ॥

सञ्जय उवाच । तमापतन्तु वेगेन राजा दुर्य्योधनः स्वयम् ।
न्यवारयन्महातेजाः कृपश्च द्विपदां वरम् ॥ १० ॥
कर्ण उवाच । शूरोऽयं समरश्लाघी दुर्मतिश्च द्विजाधमः ।
आसादयतु मद्वीर्य्यं मुञ्चेमं द्विजसत्तम ॥ ११ ॥
अश्वत्थामोवाच । तवैतत् क्षम्यतेऽस्माभिः सूतात्मज सुदुर्मते । दर्पमुत्थितमेतत्ते फाल्गुनो नाशयिष्यति ॥ १२ ॥
दुर्य्योधन उवाच । अश्वत्थामन् प्रसीदस्व क्षन्तुमर्हसि मानद । कोपः खलु न कर्त्तव्यः सूतपुत्रे त्वयानघ ॥ १३ ॥ त्वयि कर्णे कृपे द्रोणे मद्रराजे च सौबले । महत् कार्य्यं समायत्तं प्रसीद द्विजसत्तम ॥ १४ ॥ एते ह्यभिमुखाः सर्वे राधेयेन युयुत्सवः । आयान्ति पाण्डवाः ब्रह्मन्नाह्वयन्तः समन्ततः ॥ १५ ॥
सञ्जय उवाच । प्रसाद्यमानस्तु ततो राज्ञा द्रौणिर्महामनाः । प्रससाद महाराज क्रोधवेगसमन्वितः ॥ १६ ॥ ततः कृप उवाचेदमाचार्य्यः सुमहामनाः । सौम्यस्वभावाद्राजेन्द्र क्षिप्रमागतमार्द्दवः ॥ १७ ॥
कृप उवाच । तवैतत् क्षम्यतेऽस्माभिः सूतात्मज सुदुर्मते । दर्पमुत्सिक्तमेतत्ते फाल्गुनो नाशयिष्यति ॥ १८ ॥
सञ्जय उवाच । ततस्ते पाण्डवा राजन् पाञ्चालाश्च यशस्विनः । आजग्मुः सहितास्तत्र तर्ज्जयन्तः सहस्रशः ॥ १९ ॥ कर्णोऽपि रथिनां श्रेष्ठश्चापमुद्यम्य वीर्य्यवान् । कौरवाग्र्यैः परिवृतः शक्रो देवगणैरिव ॥ २० ॥ पर्य्यतिष्ठत तेजस्वी स्वबाहुबलमाश्रितः । ततः प्रववृते युद्धं कर्णस्य सह पाण्डवैः ॥ २१ ॥ भीषणं सुमहाराज सिंहनादविराजितम् । ततस्ते पाण्डवा राजन् पाञ्चालाश्च यशस्विनः ॥ २२ ॥ दृष्ट्वा कर्णं महाबाहुमुच्चैः शब्दमथानदन् । अयं कर्णः कुतः कर्णस्तिष्ठ कर्ण महारणे ॥ २३ ॥ युध्यस्व सहितोऽस्माभिर्दुरात्मन् पुरुषाधम । अन्ये तु

दृष्ट्वा राधेयं क्रोधदीप्ताः समाद्रवन् ॥ २४ ॥ वध्यतामयमुत्सिक्तः
सूतपुत्रोऽल्पचेतनः । सर्वैः पार्थिवशार्दूलैर्नानेनार्थोऽस्ति जीवता
॥ २५ ॥ अत्यन्तवैरी पार्थानां सततं पापपूरुषः । एष मूलं
ह्यनर्थानां दुर्योधनमते स्थितः ॥ २६ ॥ घ्नतैनमिति जल्पन्तः
क्षत्रियाः समुपाद्रवन् । महता शरवर्षेण छादयन्तो महारथाः
॥ २७ ॥ वधार्थं सूतपुत्रस्य पाण्डवेयेन चोदिताः । तांस्तु सर्वां-
स्तथा दृष्ट्वा पाण्डुपुत्रान्महाबलान् ॥ २८ ॥ न विव्यथे सूतपुत्रो
न च त्रासमगच्छत । दृष्ट्वा संहारकल्पं तमद्भुतं सैन्यसागरम्
॥ २९ ॥ पितृकृत्तव पुत्राणां संग्रामेष्वपराजितः । सायकौघेन
बलवान् क्षिप्रकारी महाबलः ॥ ३० ॥ वारयामास तत् सैन्यं
समन्ताद्भरतर्षभ । ततस्तु शरवर्षेण पाण्डवाः समवारयन् ॥३१॥
धनूंषि ते विधुन्वानाः शतशोऽथ सहस्रशः । अयोधयन्त राधेयं
शक्रं दैत्या यथा पुरा ॥ ३२ ॥ शरवर्षन्तु तत् कर्णः पार्थिवैः
समुदीरितम् । शरवर्षेण महता समन्ताद्व्यधमद्बली ॥ ३३ ॥
तद्युद्धमभवत्तेषां कृतप्रतिकृतैषिणाम् । यथा देवासुरे युद्धे शक्रस्य
सह दानवैः ॥ ३४ ॥ तत्राद्भुतमपश्याम सूतपुत्रस्य लाघवम् ।
यदेनं समरे यत्ता नाप्नुवन्त परे युधि ॥ ३५ ॥ निवार्य च
शरौघांस्तान् पार्थिवानां महारथः । युगेष्वीषासु छत्रेषु ध्वजेषु
च हयेषु च ॥ ३६ ॥ आत्मनामाङ्कितान् घोरान् राधेयः प्राहि-
णोच्छरान् । ततस्ते व्याकुलीभूता राजानः कर्णपीडिताः ॥३८॥
बभ्रमुस्तत्र तत्रैव गावः शीतार्दिता इव । हयानां वध्यमानानां
गजानां रथिनां तदा ॥ ३९ ॥ तत्र तत्र स्म दृश्यन्ते संघाः कर्णेन
पीडिताः । शिरोभिः पतितै राजन् बाहुभिश्च समन्ततः ॥ ४० ॥
आकीर्णा वसुधा सर्वा शूराणामनिवर्तिनाम् । हतैश्च हन्यमानैश्च
निष्टनद्भिश्च सर्वशः ॥ ४१ ॥ बभूवायोधनं राजन् वैवस्वतपुरं
यथा । दुर्योधनस्ततो राजन् दृष्ट्वा कर्णस्य विक्रमम् ॥ ४२ ॥

অশ্বত্থামানমাসাদ্য ততো বাক্যমুবাচ হ। অসৌ হি দৃশ্যতে কর্ণো দংশিতঃ সর্ব্বপার্থিবৈঃ ॥ ৪৩ ॥ যস্যেমা দ্রবতীং সেনাং কর্ণসায়কপীড়িতাম্। কার্ত্তিকেয়সমুদ্ভূতামাসুরীমিব তাং চমূম্ ॥ ৪৪ ॥ দৃষ্ট্বেমাং নিহতাং সেনাং রণে কর্ণেন ধীমতা। অভিযাত্যেষ বীভৎসুঃ সূতপুত্রজিঘাংসয়া ॥ ৪৫ ॥ তদ্যথা পশ্যমানানাং সূতপুত্রং মহারথম্। ন হন্যাৎ পাণ্ডবঃ সংখ্যে যথা নীতির্বিধীয়তাম্ ॥ ৪৬ ॥ ততো দ্রৌণিঃ কৃপঃ শল্যো হার্দ্দিক্যশ্চ মহারথঃ। প্রত্যুদ্যযুস্তদা পার্থং সূতপুত্রস্য রক্ষিণঃ ॥ ৪৭ ॥ আয়ান্তং বীক্ষ্য কৌন্তেয়ং শক্রং দৈত্যচমূমিব। বীভৎসুরপি রাজেন্দ্র পাঞ্চালৈরভিসংবৃতঃ। প্রত্যুদ্যযৌ তদা কর্ণং যথা বৃত্রং পুরন্দরম্ ॥ ৪৮ ॥

ধৃতরাষ্ট্র উবাচ। সংরব্ধং ফাল্গুনং দৃষ্ট্বা কালান্তকযমোপমম্। কর্ণো বৈকর্ত্তনঃ সূত প্রত্যপদ্যত কিমুত্তরম্ ॥ ৪৯ ॥ যোঽস্পর্দ্ধত চ পার্থেন নিত্যমেব মহারথঃ। আশংসতে চ বীভৎসুমবজেতুং সুদারুণঃ ॥ ৫০ ॥ স তু তং সহসা প্রাপ্তং নিত্যমত্যন্তবৈরিণম্। কর্ণো বৈকর্ত্তনঃ সূত কিমন্যৎ প্রত্যপদ্যত ॥ ৫১ ॥

সঞ্জয় উবাচ। আয়ান্তং পাণ্ডবং দৃষ্ট্বা গজঃ প্রতিগজং যথা। অসম্ভ্রান্তস্ততঃ কর্ণঃ প্রত্যুদীয়াৎ ধনঞ্জয়ম্ ॥ ৫২ ॥ তমাপতন্তং বেগেন স্বর্ণপুঙ্খৈরজিহ্মগৈঃ। ছাদয়ামাস পার্থোঽথ কর্ণন্তু বিজয়ং শরৈঃ ॥ ৫৩ ॥ তং কর্ণং শরজালেন ছাদয়ামাস পাণ্ডবঃ। ততঃ কর্ণঃ সুসংরব্ধঃ শরৈস্ত্রিভিরবিধ্যত ॥ ৫৪ ॥ তস্য তল্লাঘবং দৃষ্ট্বা নামৃষ্যত মহারথঃ। তস্মৈ বাণাঞ্ছিলাধৌতান্ প্রসন্নাগ্রানজিহ্মগান্ ॥ ৫৫ ॥ প্রাহিণোৎ সূতপুত্রায় ত্রিংশতং শত্রুতাপনঃ। বিব্যাধ চৈনং সংরম্ভাৎ বাণেনৈকেন বীর্য্যবান্ ॥ ৫৬ ॥ সব্যে ভুজাগ্রে বলবান্নারাচেন হসন্নিব। তস্য বিদ্ধস্য বেগেন করাচ্চাপং পপাত হ ॥ ৫৭ ॥ পুনরাদায় তচ্চাপং নিমেষার্দ্ধান্মহাবলঃ। ছাদয়ামাস বাণৌঘৈঃ ফাল্গুনং কৃতহস্তবৎ ॥ ৫৮ ॥ শরবৃষ্টিন্তু

तां मुक्तां सूतपुत्रेण भारत । व्यधमच्छरवर्षेण वायुरिव घन-
म्बव. ॥ ५९ ॥ तौ परस्परमासाद्य छादयेतां समन्ततः । शर-
जालैर्महेष्वासैः कृतप्रतिकृतैषिणौ ॥ ६० ॥ तदद्भुतमभूद्युद्धं
कर्णपाण्डवयोर्मृधे । उभयोर्वाशिताहेतोर्वन्ययोर्गजयोरिव ॥६१॥
ततः पार्थो महेष्वासो दृष्ट्वा कर्णस्य विक्रमम् । मुष्टिदेशे धनु-
स्तस्य चिच्छेद त्वरयान्वितः ॥ ६२ ॥ अश्वांश्च चतुरो भल्लैरन-
यद्यमसादनम् । सारथेश्च शिरः कायादहरच्छत्रुतापनः ॥ ६३ ॥
अथैनं छिन्नधन्वानं हताश्वं हतसारथिम् । विव्याध सायकैः
पार्थश्चतुर्भिः पाण्डुनन्दनः ॥ ६४ ॥ हताश्वात्तु रथात्तूर्णमव-
प्लुत्य नरर्षभः । आरुरोह रथं तूर्णं कृपस्य शरपीडितः ॥ ६५ ॥
राधेयं निर्जितं दृष्ट्वा तावका भरतर्षभ । धनञ्जयशरैर्नुन्नाः
प्राद्रवन्त दिशो दश ॥ ६६ ॥ द्रवतस्तान् समालोक्य राजा
दुर्योधनः स्वयम् । निवर्त्तयामास तदा वाक्यञ्चेदमुवाच ह ॥६७॥
अलं द्रुतेन वः शूरास्तिष्ठध्वं क्षत्रियर्षभाः । एष पार्थवधायाहं
स्वयं गच्छामि संयुगे ॥ ६८ ॥ अहं पार्थं हनिष्यामि सपाञ्चालं
समागतम् । अद्य मे युध्यमानस्य सह गाण्डीवधन्वना ॥ ६९ ॥
द्रक्ष्यन्ति विक्रमं पार्थाः कालस्येव युगक्षये । अद्य मद्बाणजालानि
विमुक्तानि सहस्रशः ॥ ७० ॥ द्रक्ष्यन्ति समरे पार्थाः शलभाना-
मिवायतीः । अद्य बाणमयं वर्षं सृजतो मम धन्विनः ॥ ७१ ॥

त्समर्षी क्रोधमूर्च्छितः ॥ ७६ ॥ पतङ्गवृत्तिमास्थाय फाल्गुनं योद्धुमिच्छति। यावन्न पश्यमानानां प्राणान् पार्थेन संयुगे ॥७७॥ न जह्यात् पार्थिवश्रेष्ठस्तावत् वारय कौरवम्। यावत् फाल्गुनबाणानां गोचरं नाधिगच्छति ॥ ७८ ॥ कौरव्य पार्थिवो वीरस्तावत्तिष्ठति संयुगे। यावत् पार्थशरैर्घोरैर्निर्मुक्तोरगसन्निभैः ॥ ७९ ॥ न भग्नोक्रियते राजा तावद्युद्धान्निवार्य्यताम्। अयुक्तमिव पश्यामस्तिष्ठत्स्वस्मासु मानद ॥ ८० ॥ स्वयं युद्धाय यद्राजा पार्थं यात्यसहायवान्। दुर्लभं जीवितं मन्ये कौरवस्य किरीटिना ॥ ८१ ॥ युध्यमानस्य समरे शार्दूलेनेव हस्तिनः। मातुलेनैवमुक्तस्तु द्रौणिः शस्त्रभृताम्बरः। ॥ ८२ ॥ दुर्य्योधनमिदं वाक्यं त्वरितं समभाषत। मयि जीवति गान्धारे न युद्धं कर्त्तुमर्हसि ॥ ८३ ॥ मामनादृत्य कौरव्य तव नित्यं हितैषिणाम्। न हि ते सम्भ्रम कार्य्यो पार्थस्य विजयं प्रति। अहमावारयिष्यामि पार्थं तिष्ठ सुयोधन ॥ ८४ ॥

दुर्य्योधन उवाच। आचार्य्यो पाण्डुपुत्रान् वै पुत्रवत परिरक्षति। त्वमप्युपेक्षां कुरुषे तेषु नित्यंममारिषु ॥ ८५ ॥ मम वा मन्दभाग्यत्वान्मन्दस्ते विक्रमो युधि। धर्म्मराजप्रियार्थं वा द्रौपद्या वा न विद्म तत् ॥ ८६ ॥ धिगस्तु मम लुब्धस्य यत कृते सर्व्वबान्धवाः। सुखकामाः परं दुःखं प्राप्नुवन्ति पराजिताः ॥८७॥ को हि शस्त्रभृतां श्रेष्ठो महेश्वरसमो युधि। शत्रुं न क्षपयेच्छक्तो यो न स्याद्गौतमीसुत ॥ ८८ ॥ अश्वत्थामन् प्रसीदस्व नाशयैतान्ममाहितान्। तवास्त्रगोचरे शक्ता स्थातुं देवा न दानवाः ॥ ८९ ॥ पाञ्चालान् सोमकांश्चैव जहि द्रौणे सहानुगान्। वयं शेषान् हनिष्यामस्त्वयैव परिरक्षिता ॥ ९० ॥ एते हि सोमका विप्र पाञ्चालाश्च यशस्विनः। मम सैन्येषु सक्रुद्धा विचरन्ति दवाग्निवत् ॥ ९१ ॥ तान् वारय महाबाहो कैकयांश्च नरोत्तम।

पुरा कुर्वन्ति निःशेषं रक्ष्यमाणाः किरीटिना ॥ ९२ ॥ अश्वत्थामन्
त्वरायुक्तो याहि शीघ्रमरिन्दम । आदौ वा यदि वा पश्चात्तवेदं
कर्म ब्राह्मण ॥ ९३ ॥ त्वमुत्पन्नो महाबाहो पाञ्चालानां वधाय
वै । करिष्यसि जगत् कृत्स्नमपाञ्चालं किलोद्यत ॥ ९४ ॥ एवं
सिद्धाब्रुवन्ताव्यां भविष्यति च तत्तथा । तस्मात्त्वं पुरुषव्याघ्र
पाञ्चालान् जहि सानुगान् ॥ ९५ ॥ न तेऽस्त्रगोचरे यत्ताः स्थातुं
देवाः सवासवाः । किमु पार्थाः सपाञ्चालाः सत्यमेतद्वचो मम
॥ ९६ ॥ न त्वां समर्थाः सङ्ग्रामे पाण्डवाः सह सोमकैः । बलात्
योधयितुं वीर सत्यमेतद्ब्रवीमि ते ॥ ९७ ॥ गच्छ गच्छ
महाबाहो न नः कालात्ययो भवेत् । द्रव हि द्रवते सेना पार्थ-
सायकपीडिता ॥ ९८ ॥ शक्तो ह्यसि महाबाहो दिव्येन स्वेन
तेजसा । निग्रहे पाण्डुपुत्राणां पाञ्चालानाञ्च मानद ॥ ९९ ॥

इति द्रोणपर्वणि घटोत्कचवधपर्वणि दुर्योधनवाक्ये
एकोनषष्ट्यधिकशततोऽध्यायः ॥ १५९ ॥

---

सञ्जय उवाच । दुर्योधनेनैवमुक्तो द्रौणिराहवदुर्मदः ।
चकारारिवधे यत्नमिन्द्रो दैत्यवधे यथा ॥ १ ॥ प्रत्युवाच महा-
बाहुस्तव पुत्रमिदं वचः । सत्यमेतन्महाबाहो यथा वदसि कौरव
॥ २ ॥ प्रिया हि पाण्डवा नित्यं मम चापि पितुश्च मे । तथैव
चावां प्रियौ तेषां न तु युद्धे कथञ्चन ॥ ३ ॥ शक्तितस्तात युध्या-
मस्त्यक्त्वा प्राणानभीतवत् । अहं कर्णश्च शल्यश्च कृपो हार्दिक्य
एव च ॥ ४ ॥ निमेषात् पाण्डवीं सेनां क्षपयेयुर्नृपोत्तम । ते
चापि कौरवीं सेनां निमेषात् कुरुसत्तम ॥ ५ ॥ क्षपयेयुर्महाबाहो
यदि न स्याम संयुगे । युध्यतां पाण्डवान् शक्त्या तेषां चास्मान्
युयुत्सतः ॥ ६ ॥ तेजस्तु तेज आसाद्य प्रशमं याति भारत ।

अगम्या तरसा जेतु पाण्डवानामनीकिनी ॥ ७ ॥ जीवत्सु पाण्डुपुत्रेषु तद्धि सत्य ब्रवीमि ते । आत्मार्थं युध्यमानास्ते समर्थाः पाण्डुनन्दना ॥ ८ ॥ किमर्थं तव सैन्यानि न हनिष्यन्ति भारत । त्वन्तु लुब्धतमो राजन्निकृतिज्ञश्च कौरव ॥ ९ ॥ सर्वाभिशङ्की मानी च ततोऽस्मानभिशङ्कसे । मन्ये त्वं कुत्सितो राजन् पापात्मा पापपूरुष ॥ १० ॥ अन्यानपि च नः क्षुद्र शङ्कसे पापभावित । अहन्तु यत्नमास्थाय त्वदर्थं त्यक्तजीवित ॥ ११ ॥ एष गच्छामि सङ्ग्राम त्वत्कृते कुरुसत्तम । योत्स्यामि शत्रुभिः सार्द्धं हनिष्यामि परान् बहून् ॥ १२ ॥ पाञ्चालैः सह योत्स्यामि सोमकैः केकयैस्तथा । पाण्डवैश्चैव सङ्ग्रामे त्वत्प्रियार्थमरिन्दम ॥ १३ ॥ अद्य मदाणनिर्द्दग्धाश्चेदिपाञ्चालसोमकाः । सिंहेनेवार्द्दिता गावो विद्रविष्यन्ति सर्वतः ॥ १४ ॥ अद्य धर्मसुतो राजा दृष्ट्वा मम पराक्रमम् । अश्वत्थाममयं लोकं मंस्यते सह सोमकैः ॥ १५ ॥ आगमिष्यति निर्वेदं धर्मपुत्रो युधिष्ठिरः । दृष्ट्वा विनिहतान् सङ्ख्ये पाञ्चालान् सह सोमकैः ॥ १६ ॥ ये मां युद्धे प्रयास्यन्ति तान् हनिष्यामि भारत । न हि ते वीर मोक्ष्यन्ते मद्बाहुबलपीड़िताः एवमुक्त्वा महाबाहुः पुत्रं दुर्य्योधनं तव । अभ्यवर्त्तत युद्धाय द्रावयन् सर्वधन्विन ॥ १७ ॥ चिकीर्षुस्तव पुत्राणां प्रियं प्राणभृताम्वर । ततोऽब्रवीत् सकैकेयान् पाञ्चालान् गौतमीसुतः ॥ १८ ॥ प्रहरध्वमितः सर्व्वे मम गात्रे महारथाः । स्थिरीभूताश्च युध्यध्वं दर्शयन्तोऽस्त्रलाघवम् ॥ १९ ॥ एवमुक्तास्तु ते सर्व्वे शस्त्रवृष्टिमपातयन् । द्रौणिं प्रति महाराज जलं जलधरा इव ॥ २० ॥ तान्निहत्य रणे द्रौणिर्दशवीरानपोथयत् । प्रमुखे पाण्डुपुत्राणां धृष्टद्युम्नस्य वा विभो ॥ २१ ॥ निहन्यमाना समरे पाञ्चालाः सृञ्जयास्तथा । परित्यज्य रणे द्रौणिं व्यद्रवन्त दिशो दश ॥ २२ ॥ तान् दृष्ट्वा द्रवतः शूरान् पाञ्चालान् सह सोमकैः

धृष्टद्युम्नो महाराज द्रौणिमभ्यद्रवद्युधि ॥ २३ ॥ ततः काञ्चन-
चित्राणां सजलाम्बुदनादिनाम् । वृतः शतेन शूराणां रथाना-
मनिवर्त्तिनाम् ॥ २४ ॥ पुत्रः पाञ्चालराजस्य धृष्टद्युम्नो महा-
रथः । द्रौणिमित्यब्रवीद्वाक्यं दृष्ट्वा योधान्निपातितान् ॥ २५ ॥
आचार्य्यपुत्र दुर्बुद्धे किमन्यैर्निहतैस्तव । प्रयुध्यस्व मया सार्द्धं
यदि शूरोऽसि संयुगे ॥ २६ ॥ अहं त्वां निहनिष्यामि तिष्ठेदानीं
स्थिरो भव । ततस्तमाचार्य्यसुतं धृष्टद्युम्नः प्रतापवान् ॥ २७ ॥
मर्म्मभिद्भिः शरैस्तीक्ष्णैर्जघान भृशदारुणैः । ते तु पङ्क्तीकृता
द्रौणिं शरा विविशुराशुगाः ॥ २८ ॥ रुक्मपुङ्खाः प्रसन्नाग्राः
सर्व्वकायावदारणाः । मध्वर्थिन इवोद्दामा भ्रमराः पुष्पितं द्रुमम्
॥ २९ ॥ सोऽतिविद्धो भृशं क्रुद्धः पादाक्रान्त इवोरगः । मानी
द्रौणिरसम्भ्रान्तः शरपाणिरभाषत ॥ ३० ॥ धृष्टद्युम्न स्थिरो
भूत्वा मुहूर्त्तं प्रतिपालय । यावत्त्वां निशितैर्बाणैः प्रेषयामि यम-
क्षयम् ॥ ३१ ॥ द्रौणिरेवमथाभाष्य पार्षतं परवीरहा । छादया-
मास बाणौघैः समन्ताल्लघुहस्तवत् ॥ ३२ ॥ सञ्छाद्यमानः समरे
द्रौणिना युद्धदुर्म्मदः । द्रौणिं पाञ्चालतनयो वाग्भिरातर्ज्जय-
त्तदा ॥ ३३ ॥ न जानीषे प्रतिज्ञां मे विप्रोत्पत्तिं तथैव च ।
द्रोणं हत्वा किल मया हन्तव्यस्त्वं सुदुर्म्मते ॥ ३४ ॥ ततस्त्वाहं
न हन्म्यद्य द्रोणे जीवति संयुगे । इमान्तु रजनीं प्राप्तां सुप्र-
भातां सुदुर्म्मते ॥ ३५ ॥ निहत्य पितरं तेऽद्य ततस्त्वामपि संयुगे ।
नेष्यामि प्रेतलोकाय एतन्मे मनसि स्थितम् ॥ ३६ ॥ यस्ते पार्थेषु
विद्वेषो या भक्तिः कौरवेषु च । तां दर्शय स्थिरो भूत्वा न मे
जीवन् गमिष्यसि ॥ ३७ ॥ यो हि ब्राह्मण्यमुत्सृज्य क्षत्रधर्म्म-
रतो द्विजः । स वध्यः सर्व्वलोकस्य यथा त्वं पुरुषाधम ॥ ३८ ॥
इत्युक्तः परुषं वाक्यं पार्षतेन द्विजोत्तमः । क्रोधमाहारयत्तीव्रं

सोऽभ्यवैक्षत । छादयामास समरे निम्नगम्भुरगो यथा ॥ ४० ॥ स ताड्यमानः समरे द्रोणिना पार्षतः शरैः । सर्वपाञ्चालसेनाभिः संवृतो रथसत्तमः ॥ ४१ ॥ नाकम्पत महाबाहुः स्वधैर्य्यं समुपाश्रितः । सायकांश्चैव विविधानश्वत्थाम्नि मुमोच ह ॥ ४२ ॥ तौ पुन संन्यवर्त्तेतां प्राणद्यूताभिदेविनौ । निवारयन्तौ बाणौघान् परस्परममर्षणौ ॥ ४३ ॥ उत्सृजन्तौ महेष्वासौ शरवृष्टीः समन्ततः । द्रोणिपार्षतयोर्युद्धं घोररूपं भयावहम् ॥ ४४ ॥ दृष्ट्वा सम्पूजयामासुः सिद्धचारणवातिकाः । शरौघैः पूरयन्तौ तावाकाशं प्रदिशस्तथा ॥ ४५ ॥ अलक्ष्यौ समयुध्येतां महत् कृत्वा शरैस्तमः । नृत्यमानाविव रणे मण्डलीकृतकार्म्मुकौ ॥ ४६ ॥ परस्परवधे युक्तौ सर्वभूतभयङ्करौ । अयुध्येतां महाबाहू चित्रं लघु च सुष्ठु च ॥ ४७ ॥ सम्पूज्यमानौ समरे योधमुख्यैः सहस्रशः । तौ प्रयुक्तौ रणे दृष्ट्वा वने वन्यौ गजाविव ॥ ४८ ॥ उभयोः सेनयोर्हर्षस्तुमुलः समपद्यत । सिंहनादरवाश्चासन् दध्मुः शङ्खांश्च सैनिकाः ॥ ४९ ॥ वादित्राण्यभ्यवादन्त शतशोऽथ सहस्रश । तस्मिंस्तु तुमुले युद्धे भीरूणां भयवर्द्धने ॥ ५० ॥ मुहूर्त्तमिव तद्युद्धं समरूपमिवाभवत । ततो द्रोणिर्म्महाराज पार्षतस्य महात्मन ॥ ५१ ॥ धनुर्ध्वजं तथा छत्रं तयोर्मो पार्ष्णिसारथी । सूतमश्वांश्च चतुरो निहत्याभ्यद्रवद्रणे ॥ ५२ ॥ पाञ्चालांश्चैव तान् सर्वान् शरैः सन्नतपर्वभिः । व्यद्रावयदमेयात्मा शतशोऽथ सहस्रशः ॥ ५३ ॥ ततः प्रविव्यथे सेना पाण्डवी भरतर्षभ । दृष्ट्वा द्रोणेर्म्महत कर्म वासवस्येव संयुगे ॥ ५४ ॥ शतेन च शतं हत्वा पाञ्चालानां महारथः । त्रिभिश्च निशितैर्बाणैर्हत्वा त्रीन् वै नरर्षभान् ॥ ५५ ॥ द्रोणाद्रुं पदपुत्रस्य फाल्गुनस्य च पश्यतः । नाशयामास पाञ्चालान् भूयिष्ठं ये व्यवस्थिता ॥ ५६ ॥ ते वध्यमानाः पाञ्चालाः समरे सह सृञ्जयैः । अगच्छन् ...

विप्रकीर्णरथध्वजा ॥ ५७ ॥ स जित्वा समरे शत्रून् द्रोणपुत्रो महारथः । ननाद सुमहानादं तपान्ते जलदो यथा ॥ ५८ ॥ स निहत्य बहून् शूरानश्वत्थामा व्यरोचत । युगान्ते सर्वभूतानि प्रदह्यन्निव पावकः ॥ ५९ ॥ सम्पूज्यमानो युधि कौरवेयैर्निर्जित्य सङ्ख्ये ऽरिगणान् सहस्रशः । व्यरोचत द्रोणसुतः प्रतापवान् यथा सुरेन्द्रोऽरिगणान्निपात्य वै ॥ ६० ॥

इति द्रोणपर्वणि घटोत्कचवधपर्वणि अश्वत्थामपराक्रमे षष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥

---

सञ्जय उवाच ततो युधिष्ठिरो राजा भीमसेनश्च पाण्डवः । द्रोणपुत्रं महाराज समन्तात् पर्यवारयन् ॥ १ ॥ ततो दुर्योधनो राजा भारद्वाजेन संवृतः । अभ्ययात् पाण्डवान् सङ्ख्ये ततो युद्धमवर्त्तत ॥ २ ॥ घोरन्तच्च महाभीमं भीरूणां भयवर्द्धनम् । अम्बष्ठान्मालवान् वङ्गाञ्छिबींस्त्रैगर्तकानपि ॥ ३ ॥ प्राहिणोन्मृत्युलोकाय गणान् क्रुद्धो युधिष्ठिरः । अभीषाहान् शूरसेनान् क्षत्रियान् युद्धदुर्मदान् ॥ ४ ॥ निकृत्य पृथिवीञ्चक्रे भीमः शोणितकर्द्दमाम् । यौधेयानद्रिजांश्चैव मद्रकान्मालवानपि ॥ ५ ॥ प्राहिणोन्मृत्युलोकाय किरीटी श्वेतवाहनः । प्रगाढमञ्जोगतिभिर्नाराचैरभिताडिता ॥ ६ ॥ निपेतुर्द्विरदा भूमौ द्विशृङ्गा इव पर्वताः । निकृत्तैर्हस्तिहस्तैश्च चेष्टमानैस्ततस्ततः ॥ ७ ॥ रराज वसुधा कीर्णा विसर्पद्भिरिवोरगैः । क्षिप्तैः कनकचित्रैश्च नृप छत्रैश्च भूर्बभौ ॥ ८ ॥ द्यौरिवादित्यचन्द्राद्यैर्ग्रहैः कीर्णा युगक्षये । हत प्रहरताभीता विध्यत व्यवकृन्तत ॥ ९ ॥ इत्यासीत्तुमुलः शब्दः शोणाश्वरथं प्रति । द्रोणस्तु परमक्रुद्धो वायव्यास्त्रेण संयुगे ॥ १० ॥ व्यधमत्तान्यथा वायुर्मेघानिव दुरत्यय ।

ते हन्यमाना द्रोणेन पाञ्चाला प्राद्रवन् भयात् ॥ ११ ॥ पश्यतो भीमसेनस्य पार्थस्य च महात्मनः । किरीटी भीमसेनश्च सहसा सन्न्यवर्त्तताम् ॥ १२ ॥ महता रथवंशेन परिगृह्य बलं महत् । बीभत्सुर्दक्षिणे पार्श्वमुत्तरन्तु वृकोदरः ॥ १३ ॥ भारद्वाजं शरौघाभ्यां महद्भ्यामभ्यवर्षताम् । तौ तथा सृञ्जयाश्चैव पाञ्चालाश्च महारथाः ॥ १४ ॥ अन्वगच्छन्महाराज मत्स्याश्च सह सोमकैः । तथैव तव पुत्रस्य रथोदारा प्रहारिणः ॥ १५ ॥ महत्या सेनया राजन् जग्मुर्द्रोणरथं प्रति । ततः सा भारती सेना वध्यमाना किरीटिना ॥ १६ ॥ तमसा निद्रया चैव पुनरेव व्यदीर्य्यत । द्रोणेन वार्य्यमाणास्ते स्वयं तव सुतेन च ॥ १७ ॥ नाशक्यन्त महाराज योधा वारयितुं तदा । सा पाण्डुपुत्रस्य शरैर्वध्यमाना महाचमूः ॥ १८ ॥ तमसा संवृते लोके व्यद्रवत् सर्वतोमुखी । उत्सृज्य शतशो वाहांस्तत्र केचिन्नराधिपाः । प्राद्रवन्त महाराज भयाविष्टाः समन्ततः ॥ १९ ॥

इति द्रोणपर्व्वणि घटोत्कचवधपर्व्वणि सङ्कुलयुद्धे
एकषष्ट्यधिकशततोऽध्यायः ॥ १६१ ॥

---

सञ्जय उवाच । सोमदत्तन्तु संक्रुद्धं विधुन्वानं महद्धनुः । सात्यकिः प्राह यन्तारं सोमदत्ताय मां वह ॥ १ ॥ 'न ह्यहत्वा रणे शत्रुं बाह्लीकं कौरवाधमम् । निवर्त्तिष्ये रणात् सूत सत्यमेतद्वचो मम ॥ २ ॥ ततः सम्प्रैषयद्यन्ता सैन्धवांस्तान्महाजवान् । तुरङ्गमाञ्छङ्खवर्णान् सर्वशस्त्रातिगान् रणे ॥ ३ ॥ तेऽवहन् युयुधानन्तु मनोमारुतरंहसः । यथेन्द्रं हरयो राजन् पुरा दैत्यवधोद्यतम् ॥ ४ ॥ तमापतन्तं सम्प्रेक्ष्य सात्वतं रभसं रणे । सोमदत्तो महाराज ह्यसम्भ्रान्तो न्यवर्त्तत ॥ ५ ॥ विमुञ्चञ्छर-

वर्षाणि पर्जन्य इव वृष्टिमान्। छादयामास शैनेयं भास्करं
जलदो यथा॥ ६॥ असम्भ्रान्तश्च समरे सात्यकिः कुरुपुङ्गवम्।
छादयामास बाणौघैः समन्ताद्भरतर्षभ॥ ७॥ सोमदत्तस्तु
तं दृष्ट्वा विव्याधोरसि माधवम्। सात्यकिश्चापि तं राजन्
अविध्यत सायकैः शितैः॥ ८॥ तावन्योन्यं शरैः कृत्तौ व्यरो-
चेतां परस्परम्। सुपुष्पौ पुष्पसमये पुष्पिताविव किंशुकौ॥ ९॥
रुधिरोक्षितसर्वाङ्गौ कुरुवृष्णियशस्करौ। परस्परमवेक्षेतां दह-
न्ताविव लोचनैः॥ १०॥ रथमण्डलमार्गेषु चरन्तावरिमर्दनौ।
घोररूपौ हि तावास्तां वृष्टिमन्ताविवाम्बुदौ॥ ११॥ शर-
सम्भिन्नगात्रौ तौ सर्वतः शकलीकृतौ। श्वाविधाविव राजेन्द्र
व्यदृश्येतां शरक्षतौ॥ १२॥ सुवर्णपुङ्खैरिषुभिराचितौ तौ व्यरो-
चताम्। खद्योतैरावृतौ राजन् प्रावृषीव वनस्पती॥ १३॥
*सम्प्रदीपितसर्वाङ्गौ सायकैस्तौ महारथौ। अदृश्येतां रणे*
क्रुद्धावुल्काभिरिव कुञ्जरौ॥ १४॥ ततो युधि महाराज सोम-
दत्तो महारथः। अर्धचन्द्रेण चिच्छेद माधवस्य महद्धनुः॥ १५॥
अथैनं पञ्चविंशत्या सायकानां समार्पयत्। त्वरमाणस्त्वराकाले
पुनश्च दशभिः शरैः॥ १६॥ अथान्यद्धनुरादाय सात्यकिर्वेग-
वत्तरम्। पञ्चभिः सायकैस्तूर्णं सोमदत्तमविध्यत॥ १७॥ ततो-
ऽपरेण भल्लेन ध्वजञ्चिच्छेद काञ्चनम्। वाह्लीकस्य रणे राजन्
सात्यकिः प्रहसन्निव॥ १८॥ सोमदत्तस्त्वसम्भ्रान्तो दृष्ट्वा केतुं
निपातितम्। शैनेयं पञ्चविंशत्या सायकानां समाचिनोत्॥ १९॥
सात्वतोऽपि रणे क्रुद्धः सोमदत्तस्य धन्विनः। धनुश्चिच्छेद समरे
क्षुरप्रेण शितेन च॥ २०॥ अथैनं रुक्मपुङ्खानां शतेन नतपर्व-
णाम्। आचिनोद्बहुधा राजन् भग्नदंष्ट्रमिवोरगम्॥ २१॥
अथान्यद्धनुरादाय सोमदत्तो महारथः। सात्यकिं छादयामास
शरवृष्ट्या महाबलः॥ २२॥ सोमदत्तञ्च संक्रुद्धो रणे विव्याध

सात्यकिं । सात्यकिश्च शरजालेन सोमदत्तोऽभ्यपीडयत् ॥ २३ ॥
रथिभिः सात्वतस्यार्थे भीमोऽहन् वाह्लिकात्मजम् । सोमदत्तो-
ऽप्यसम्भ्रान्तो भीममाच्छंच्छते शरैः ॥ २४ ॥ ततस्तु सात्वतः
क्रुद्धो हेमदण्डं नवं दृढम् । मुमोच परिघं घोरं सोमदत्तस्य
वक्षसि ॥ २५ ॥ तमापतन्तं वेगेन परिघं घोरदर्शनम् । द्विधा
चिच्छेद समरे प्रहसन्निव कौरवः ॥ २६ ॥ स पपात द्विधा
छिन्न आयसः परिघो महान् । महीधरस्येव महच्छिखरं वज्र-
ताडितम् ॥ २७ ॥ ततस्तु सात्यकी राजन् सोमदत्तस्य संयुगे ।
धनुश्चिच्छेद भल्लेन हस्तावापञ्च पञ्चभिः ॥ २८ ॥ ततश्चतुर्भिश्च
शरैस्तूर्णं तान् तुरगोत्तमान् । समीपं प्रेषयामास प्रेतराजस्य
भारत ॥ २९ ॥ सारथेश्च शिरः कायात् भल्लेनानतपर्व्वणा ।
जहार रथशार्दूलः प्रहसन्निव भारत ॥ ३० ॥ ततः शरं महा-
घोरं ज्वलन्तमिव पावकम् । मुमोच स्वर्णपुङ्खं तं तैलधौतं
शिलाशितम् ॥ ३१ ॥ स विमुक्तो बलवता शैनेयेन शरोत्तमः ।
घोरस्तस्योरसि विभो निपपाताशु स्वनवत् ॥ ३२ ॥ सोऽतिविद्धो
बलवता सात्वतेन महारथः । सोमदत्तो महाराज पपात च
ममार च ॥ ३३ ॥ तं दृष्ट्वा निहतं तत्र सोमदत्तं महारथम् ।
तावका रथवंशेन युयुधानमुपाद्रवन् ॥ ३४ ॥ पाण्डवाश्च महा-
राज सह सर्वैः प्रभद्रकैः । महत्या सेनया सार्द्धं द्रोणानीक-
मुपाद्रवन् ॥ ३५ ॥ ततो युधिष्ठिरः क्रुद्धो भारद्वाजस्य सैनिकान् ।
शरैर्विद्रावयामास भारद्वाजस्य पश्यतः ॥ ३६ ॥ सैन्यानि द्रावय-
न्तञ्च द्रोणो दृष्ट्वा युधिष्ठिरम् । अभिदुद्राव वेगेन क्रोधसंरक्त-
लोचनः ॥ ३७ ॥ ततः सुनिशितैर्वाणैः पार्थं विव्याध सप्तभिः ।
युधिष्ठिरोऽपि संक्रुद्ध प्रतिविव्याध पञ्चभिः ॥ ३८ ॥ सोऽतिविद्धो
महेष्वासः सृक्किणी विलिहन्मुहुः । युधिष्ठिरस्य चिच्छेद ध्वजं
कार्मुकमेव च ॥ ३९ ॥ ततो विधन्वा त्वरितस्त्वराकाले नृपो-

त्तमः ॥ अन्यदादत्त वेगेन कार्मुकं समरे दृढम् ॥ ४० ॥ ततः
शरसहस्रेण द्रोणं विव्याध पाण्डवः । सायकैस्तद्ध्वजरथं तद-
द्भुतमिवाभवत् ॥ ४१ ॥ ततो मुहूर्त्तं व्यथितः शरघातप्रपी-
ड़ितः । निषसाद रथोपस्थे द्रोणो ब्राह्मणपुङ्गवः ॥ ४२ ॥ प्रति-
लभ्य ततः संज्ञां निश्वसन्नुरगो यथा । क्रोधेन महताविष्टो
वायव्यास्त्रमथासृजत् ॥ ४३ ॥ असम्भ्रान्तस्ततः पार्थो धनुरादाय
वीर्य्यवान् । तदस्त्रमस्त्रेण रणे स्तम्भयामास तस्य तु ॥ ४४ ॥
चिच्छेद च धनुर्दीर्घं ब्राह्मणस्य च पाण्डवः । अथान्यद्धनुरादाय
द्रोणः क्षत्रियमर्द्दनः ॥ ४५ ॥ तदप्यस्य शितैर्भल्लैश्चिच्छेद कुरु-
पुङ्गवः । ततोऽब्रवीद्वासुदेवः कुन्तीपुत्रं युधिष्ठिरम् ॥ ४६ ॥
युधिष्ठिर महाबाहो यत्त्वा वक्ष्यामि तच्छृणु । उपारमस्व युद्धात्त्वं
द्रोणाद्भारतसत्तम ॥ ४७ ॥ यतते हि सदा द्रोणो ग्रहणे तव
संयुगे । नानुरूपमहं मन्ये युद्धमस्य त्वया सह ॥ ४८ ॥ योऽस्य
सृष्टो विनाशाय स एनं श्वो हनिष्यति । परिवर्ज्य गुरुं याहि
यत्र राजा सुयोधनः ॥ ४९ ॥ राज्ञा राजा हि योद्धव्यो नाराज्ञा
युद्धमिष्यते । तत्र त्वं व्रज कौन्तेय हस्त्यश्वरथसंवृतः ॥ ५० ॥
यावन्मात्रेण च मया सहायेन धनञ्जयः । भीमश्च नरशार्दूलो
युध्यते कौरवैः सह ॥ ५१ ॥ वासुदेववचः श्रुत्वा धर्मराजो युधि-
ष्ठिरः । मुहूर्त्तं चिन्तयित्वा तु ततो दारुणमाहवम् ॥ ५२ ॥
प्रायाद्द्रुतममित्रघ्नो यत्र भीमो व्यवस्थितः । विनिघ्नंस्तावकान्
योधान् व्यादितास्य इवान्तकः ॥ ५३ ॥ रथघोषेण महता नाद-
यन् वसुधातलम् । च मेघ इव घर्मान्ते राजराजो युधिष्ठिरः

सञ्जय उवाच। वर्त्तमाने तथा युद्धे घोररूपे भयानके।
तमसा संवृते लोके रजसा च महीपते॥१॥ नापश्यन्त रणे
योधाः परस्परमवस्थिताः। अनुमानेन संज्ञाभिर्युध्यन्ते चाविव-
र्षभाः॥२॥ नरनागाश्वपत्तीनां महारौद्रे क्षये विभो। द्रोण-
कर्णकृपा वीरा भीमपार्षतसात्वताः॥३॥ अन्योऽन्यं क्षोभया-
मासुः सैन्यानि भरतर्षभ। वध्यमानानि सैन्यानि समन्तात्तैर्महा-
रथैः॥४॥ तमसा संवृते चैव समन्ताद्विप्रदुद्रुवुः। ते सर्वतो
विद्रवन्तो योधा विध्वस्तचेतसः॥५॥ अहन्यन्त महाराज धाव-
मानाश्च सर्वतः। महारथसहस्राणि जघ्नुरन्योऽन्यमाहवे॥६॥
अन्धे तमसि मूढानि पुत्रस्य तव मन्त्रितैः। ततः सर्वाणि भूतानि
सेनाग्रगाश्च भारत। व्यमुह्यन्त रणे तत्र तमसा संवृते सति॥७॥

धृतराष्ट्र उवाच। अथ संलोड्यमानानां पाण्डवैर्निहतौ-
जसाम्। अन्धे तमसि मग्नानामासीत् किं वो मनस्तदा॥८॥
कथं प्रकाशस्तेषां वा मम सैन्यस्य वा पुनः। बभूव लोके तमसा
तथा सञ्जय संवृते॥९॥

सञ्जय उवाच। ततः सर्वाणि सैन्यानि हतशिष्टानि यानि
वै। सेनागोप्तृनथादिश्य पुनर्व्यूहमकल्पयन्॥१०॥ द्रोणः
पुरस्ताज्जघने तु शल्यस्तथा द्रौणिः पार्श्वतः सौबलश्च। स्वयञ्च
सर्वाणि बलानि राजन् राजाभ्ययाद्गोपयन् वै निशायाम्॥११॥
उवाच सर्वांश्च पदातिसङ्घान् दुर्योधनः पार्थिवान् सान्त्वपूर्वम्।
उत्सृज्य सर्वे परमायुधानि गृह्णीत हस्तैर्ज्वलितान् प्रदीपान्
॥१२॥ ते चोदिताः पार्थिवसत्तमेन ततः प्रहृष्टा जगृहुः प्रदी-
पान्। देवर्षिगन्धर्वसुरर्षिसङ्घा विद्याधराश्चाप्सरसां गणाश्च
॥१३॥ नागाः सयक्षोरगकिन्नराश्च हृष्टा दिविस्था जगृहुः
प्रदीपान्। दिग्देवतेभ्यश्च समापतन्तोऽदृश्यन्त दीपाः ससुगन्धि-
तैलाः॥१४॥ विशेषतो नारदपर्वताभ्यां सम्बोध्यमानाः कुरु-

पुङ्खवार्थम् । सा चैव भूयो ध्वजिनी विषक्ता व्यरोचताभिप्रभया
निशायाम् ॥ १५ ॥ महाधनैराभरणैश्च दीप्तैः शस्त्रैश्च दिव्यैरभि
सम्पतद्भिः । रथे रथे पञ्च विदीपिकास्तु प्रदीपिका-मत्तगजे
त्रयश्च ॥ १६ ॥ प्रत्यश्वमेकश्च महाप्रदीपः कृतास्तु ताः पाण्डव-
कौरवेयैः । क्षणेन सर्वं विहिताः प्रदीपा व्यादीपयन्तो ध्वजिनीं
तदाशु ॥ १७ ॥ सर्वा तु सेना परिदीप्यमाना पदातिभिः पावक
तैलहस्तैः । प्रकाश्यमाना ददृशुर्निशायां यथान्तरीक्षे जलदा-
स्तडिद्भिः ॥ १८ ॥ प्रकाशितायान्तु ततो ध्वजिन्यां द्रोणोऽग्नि
कल्पः प्रतपन् समन्तात् । रराज राजेन्द्र सुवर्णवर्मा मध्यङ्गतः
सूर्य इवांशुमाली ॥ १९ ॥ जाम्बूनदेष्वाभरणेषु चैव निष्केषु
शुद्धेषु शरासनेषु । पीतेषु शस्त्रेषु च पावकस्य प्रतिप्रभास्तत्र तदा
बभूवुः ॥ २० ॥ गदाश्च शैक्याः परिघाश्च शुभ्रा रथेषु शक्त्यश्च
विवर्त्तमानाः । प्रतिप्रभा रश्मिभिराजमीढ पुनः पुनः सञ्जनयन्ति
दीपान् ॥ २१ ॥ छत्राणि बालव्यजनानि खड्गा दीप्ता महो-
ल्काश्च तथैव राजन् । व्याघूर्णमानाश्च सुवर्णमाला व्यायच्छतां
तत्र तदा विरेजुः ॥ २२ ॥ शस्त्रप्रभाभिश्च विराजमानं दीपप्रभा-
भिश्च तदा बलन्तत् । प्रकाशितञ्चाभरणप्रभाभिर्भृशं प्रकाशं नृपते
बभूव ॥ २३ ॥ पीतानि शस्त्राण्यसृगुक्षितानि वीरावधूतानि
सुघीममानि । दीप्तां प्रभां प्राजनयन्त तत्र तपात्यये विद्युदिवा-
न्तरीक्षे ॥ २४ ॥ प्रकम्पितानामभिघातवेगैरभिघ्नताञ्चापततां
जवेन । वक्त्राण्यशोभन्त तदा नराणां वाय्वीरितानीव महाम्बु-
जानि ॥ २५ ॥ महावने दारुमये प्रदीप्ते यथा प्रभा भास्कर-
स्याधिका स्यात् । तथा तदासीत् ध्वजिनी प्रदीप्ता महाभये तत्र

दश प्रदीपाः । रथाश्वपृष्ठे परिपार्श्वतोऽन्ये ध्वजेषु चान्ये जघनेषु
चान्ये ॥ २८ ॥ सेनासु सर्वासु च पार्श्वतोऽन्ये पश्चात् पुरस्ताच्च
समन्ततश्च । मध्ये तथान्ये ज्वलितप्रदीपाः सेनाद्वयेऽपि स्म तदा
बभूवुः ॥ २९ ॥ सर्वेषु सैन्येषु पदातिसङ्घाः सम्मिश्रिता हस्ति-
रथाश्ववृन्दैः । मध्ये तथान्ये ज्वलिताग्निहस्ता व्यदीपयन्
पाण्डुसुतस्य सेनाम् ॥ ३० ॥ तैस्तु प्रदीपैस्तु तथा प्रदीप्तं बलं
बभासे बलवद्बलेन । भाः कुर्वता भानुमता ग्रहेण दिवाकरेणाग्नि-
रिवाभितप्तम् ॥ ३१ ॥ तयोः प्रभा पृथिवीमन्तरीक्षं सर्वं व्यतिक्रम्य
दिशश्च वृद्धाः । तेन प्रकाशेन भृशं प्रकाशं तथा च तेषां तव चैव
सैन्यम् ॥ ३२ ॥ तेन प्रकाशेन दिवं गतेन सम्बोधिता देवगणाः
समस्ताः । गन्धर्वयक्षाः सुरसिद्धसङ्घाः समागमन्नप्सरसश्च सर्वाः
॥ ३३ ॥ तद्देवगन्धर्वसमाकुलञ्च यक्षैश्च सिद्धाप्सरसागणैश्च ।
हतैश्च वीरैर्दिवमाविशद्भिरायोधनं दिव्यकल्पं बभूव ॥ ३४ ॥
रथाश्वनागाकुलदीप्तदीपं संरब्धयोधं हतविद्रुताश्वम् । महद्बलं
व्यूढरथाश्वनागं सुरासुरव्यूहसमं बभूव ॥ ३५ ॥ तच्छक्तिसम्पर्क-
सुचण्डवातं महारथाभ्रं नरवाजिनागम् । शरौघवर्षं रुधिराम्बु-
धारं निशि प्रवृत्तं नरदेवयुद्धम् ॥ ३६ ॥ तस्मिन्महाग्निप्रतिमो
महात्मा सन्तापयन् पाण्डवान् विप्रमुख्यः । गभस्तिभिर्मध्यगतो
यथार्को वर्षात्यये तद्वदभून्नरेन्द्र ॥ ३७ ॥

इति द्रोणपर्वणि घटोत्कचवधपर्वणि दीपोद्योतने
त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥

---

सञ्जय उवाच । प्रकाशिते तथा लोके रजसा च समावृते ।
समाजग्मुरथो वीराः परस्परवधैषिणः ॥ १ ॥ ते समेत्य रणे
राजन् शस्त्रप्रासासिधारिणः । परस्परमुदैक्षन्त परस्परकृता-

गव: ॥ २ ॥ प्रदीपानां सहस्रैश्च दीप्यमानैः समन्ततः। रत्नाचितैः स्वर्णदण्डैर्गन्धतैलावसिञ्चितैः ॥ ३ ॥ देवगन्धर्वदीपाद्यैः प्रभाभिरधिकोज्ज्वलैः। विरराज तदा भूमिर्ग्रहैर्द्यौरिव भारत ॥ ४ ॥ उल्काशतैः प्रज्वलितैरणभूमिर्व्यराजत। दह्यमानेव लोकानामभावे च वसुन्धरा ॥ ५ ॥ व्यदीप्यन्त दिशः सर्वा प्रदीपैस्तैः समन्ततः। वर्षाप्रदोषे खद्योतैर्वृता वृक्षा इवाबभुः ॥ ६ ॥ असज्जन्त तदा वीरा राजन् वीरैः पृथक् पृथक्। नागा नागैः समाजग्मुस्तुरगा हयसादिभिः ॥ ७ ॥ रथा रथिवरैरेव समाजग्मुर्मुदा युताः। तस्मिन्रात्रिमुखे घोरे पुत्रस्य तव शासनात् ॥ ८ ॥ चतुरङ्गस्य सैन्यस्य सम्पातश्च महानभूत्। ततोऽर्जुनो महाराज कौरवाणामनीकिनीम्। व्यधमत्त्वरया युक्तः क्षपयन् सर्वपार्थिवान् ॥ ९ ॥

धृतराष्ट्र उवाच। तस्मिन् प्रविष्टे संरब्धे मम पुत्रस्य वाहिनीम्। अमृष्यमाणे दुर्धर्षे किं व आसीन्मनस्तदा ॥ १० ॥ किममन्यन्त सैन्यानि प्रविष्टे परतापने। दुर्योधनश्च किं कृत्यं प्राप्तकालममन्यत ॥ ११ ॥ के चैनं समरे वीरं प्रत्युद्ययुररिन्दमाः। द्रोणञ्च के व्यरक्षन्त प्रविष्टे श्वेतवाहने ॥ १२ ॥ केऽरक्षन् दक्षिणञ्चक्रं के च द्रोणस्य सव्यतः। के पृष्ठतोऽन्वरक्षन्त वीरा वीरस्य युध्यतः ॥ १३ ॥ के पुरस्तादगच्छन्त निघ्नतः शात्रवान् रणे। यत् प्राविशन्महेष्वासः पाञ्चालानपराजितः ॥ १४ ॥ नृत्यन्निव नरव्याघ्रो रथमार्गेषु वीर्यवान्। यो ददाह शरैर्द्रोणः पाञ्चालानां रथव्रजान् ॥ १५ ॥ धूमकेतुरिव क्रुद्धः कथं मृत्युमुपेयिवान्। अव्यग्रानेव हि परान् कथयस्यपराजितान् ॥ १६ ॥ हृष्टानुदीर्णान् संग्रामे न तु सञ्जय मामकान्। हतांश्चैव विशीर्णांश्च विप्रकीर्णांश्च शंससि। रथिनो विरथांश्चैव कृतान् युद्धेषु मामकान् ॥ १७ ॥

सञ्जय उवाच । द्रोणस्य मतमाज्ञाय योद्धुकामस्य तां
निशाम् । दुर्य्योधनो महाराज वचनाद् भ्रातृनमापत ॥ १८ ॥
विकर्णश्चित्रसेनश्च सपार्श्वंन्तु तथैव च । दुर्म्मर्ष दीर्घवाहुश्च ये च
तेषां पदानुगाः ॥ १९ ॥ द्रोणं यत्ता पराक्रान्ता सर्वे रक्षन्तु
पृष्ठत । हार्द्दिक्यो, दक्षिणञ्चक्रं शल्यश्चैवोत्तर तथा ॥ २० ॥
त्रिगर्त्तानाञ्च ये शूरा हतशेषा महारथा । तांश्चैव पुरत सर्वान्
पुत्रस्ते समचोदयत् ॥ २१ ॥ आचार्य्यो हि चमायुक्तो भृशं
यत्ताश्च पाण्डवा । ते रक्षध्व सुसयुक्ता निघ्नन्त शात्रवान्‌रणे ॥२२॥
द्रोणोऽपि बलवान् युद्धे चिप्रहस्त पराक्रमी । निर्ज्जयेत्त्रिदशान्
युद्धे किमु पार्थान् ससोमकान् ॥ २३ ॥ ते यूयं सहिता सर्वे
भृशं यत्ता महारथे । द्रोणं रक्षत दुर्द्धर्षं धृष्टद्युम्नान्महारथात्
॥ २४ ॥ पाण्डवेयेषु योधेषु योध पश्याम्यह न तम् । यो जयेत
रणे द्रोणं धृष्टद्युम्नादृते पुमान् ॥ २५ ॥ तत्र सर्व्वात्मना मन्ये
भारद्वाजस्य रक्षणम् । स गुप्त सोमकान् हन्यात् सृञ्जयाश्च
समागतान् ॥ २६ ॥ सृञ्जयेषु च सर्व्वेषु निहतेषु चमूमुखे । धृष्ट
द्युम्न रणे द्रौणिर्नाशयिष्यत्यसशयम् ॥ २७ ॥ तथार्ज्जुन रणे
कर्णो विजेष्यति महारथ । भीमसेनमुखाश्चाह युद्धे जेष्यामि
दंशितान् ॥ २८ ॥ शेषाश्च पाण्डवान् योधा प्रसभ हीनतेजस ।
सोऽय मम जयो व्यक्तो दीर्घकाल भविष्यति ॥ २९ ॥ तस्मा-
द्रक्षत सङ्ग्रामे द्रोणमेव महारथम् । इत्युक्त्वा भरतश्रेष्ठ पुत्रो
दुर्य्योधनस्तव ॥ ३० ॥ व्यादिदेश तदा सैन्य तस्मिंस्तमसि
दारुणे । तत प्रववृते युद्ध रात्रौ भरतसत्तम ॥ ३१ ॥ उभयोः
सैन्ययोराजन् विजय प्रतिकाङ्क्षिणो । अर्ज्जुन कौरव सैन्य-
मर्ज्जुनञ्चापि कौरवा ॥ ३२ ॥ नानाशस्त्रसमावापैरन्योऽन्य पर्य्य-
पीडयन् । द्रौणि पाञ्चालराजान भारद्वाजश्च सृञ्जयान् ॥ ३४ ॥
छादयाञ्चक्रतु सङ्ख्ये शरै सन्नतपर्व्वभि । पाण्डुपाञ्चालसैन्यानां

कौरवाणाञ्च भारत ॥ ३५ ॥ आसीन्निष्टानको घोरो निघ्नतामितरेतरम्। नैवास्माभिर्न पूर्वैश्च दृष्टपूर्वन्तथाविधम्। यादृशं युद्धमेवासीत्तस्यां रात्रौ महाभयानकम् ॥ ३६ ॥

इति द्रोणपर्वणि घटोत्कचवधपर्वणि सङ्कुलयुद्धे चतुःषष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥

---

सञ्जय उवाच। वर्त्तमाने तथा रौद्रे रात्रियुद्धे विशाम्पते। सर्वभूतक्षयकरे धर्मपुत्रो युधिष्ठिरः ॥ १ ॥ अब्रवीत् पाण्डवांश्चैव पाञ्चालांश्च ससोमकान्। मनुष्यरथनागानामभावाय नराधिप ॥ २ ॥ युधिष्ठिरोऽब्रवीद्राजा स्वान् योधाननुजाधिप। अभ्यागच्छत गच्छध्वं द्रोणमेव जिघांसया ॥ ३ ॥ राज्ञस्ते वचनाद्राजन् पाञ्चालाः सोमकास्तथा। द्रोणमेवाभ्यधावन्त नदन्तो भैरवान् रवान् ॥ ४ ॥ तान् वयं प्रतिगर्ज्जन्तः प्रत्युद्यातास्त्वमर्षिताः। यथाशक्ति यथोत्साहं यथासत्त्वञ्च संयुगे ॥ ५ ॥ कृतवर्म्मा तु हार्दिक्यो युधिष्ठिरमुपाद्रवत्। द्रोणं प्रति समायान्तं मत्तो मत्तमिव द्विपम् ॥ ६ ॥ शैनेयं शरवर्षाणि विसृजन्तं समन्ततः। अभ्ययात् कौरवो राजन् भूरिः सङ्ग्राममूर्द्धनि ॥ ७ ॥ सहदेवमथायान्तं द्रोणप्रेप्सुं महारथम्। कर्णो वैकर्त्तनो राजन् वारयामास पाण्डवम् ॥ ८ ॥ भीमसेनं तथायान्तं रथेन रथिनां वरम्। स्वयं दुर्य्योधनो युद्धे प्रतीपं मृत्युमाव्रजत् ॥ ९ ॥ नकुलञ्च युधां श्रेष्ठं सर्वयुद्धविशारदम्। शकुनिः सौबलो राजन् वारयामास सत्वरः ॥ १० ॥ शिखण्डिनमथायान्तं रथेन रथिनां वरम्। कृपः शारद्वतो राजन् वारयामास संयुगे ॥ ११ ॥ प्रतिविन्ध्यमथायान्तं मयूरसदृशैर्हयैः। दुःशासनो महाराज यत्तो यत्तमवारयत् ॥ १२ ॥ भैमसेनिमथायान्तं मायाशतविशारदम्।

अश्वत्थामा महाराज राक्षसं संन्यवारयत् ॥ १३ ॥ द्रुपदं वृषसेनस्तु ससैन्यं सपदानुगम्। वारयामास समरे द्रोणप्रेप्सुं महाबलम् ॥ १४ ॥ विराटं द्रुतमायान्तं द्रोणस्य निधनं प्रति। मद्रराज सुसंक्रुद्धो वारयामास भारत ॥ १५ ॥ शतानीकमथायान्तं नाकुलिं रभसं रणे। चित्रसेनो शरोघेन शरैर्द्रोणवधेप्सया ॥ १६ ॥ अर्ज्जुनन्तु युधां श्रेष्ठं प्राद्रवन्तं महारथम्। अलम्बुषो महाराज राक्षसेन्द्रो न्यवारयत् ॥ १७ ॥ ततो द्रोणं महेष्वासं निघ्नन्तं शत्रवान् रणे। धृष्टद्युम्नोऽथ पाञ्चाल्यो हृष्टरूपमवारयत् ॥ १८ ॥ तथान्यान् पाण्डुपुत्राणां समायातान्महारथान्। तावका रथिनो राजन् वारयामासुरोजसा ॥ १९ ॥ गजारोहा गजैस्तूर्णं सन्निपत्य महामृधे। योधयन्तश्च मृद्नन्तः शतशोऽथ सहस्रशः ॥ २० ॥ निशीथे तुरगा राजन् द्रवन्तश्च परस्परम्। समदृश्यन्त वेगेन पक्षवन्तो यथाद्रयः ॥ २१ ॥ सादिनः सादिभिः सार्द्धं प्रासशक्त्यृष्टिपाणयः। समागच्छन्महाराज विनर्दन्तः परस्परम् ॥ २२ ॥ नरास्तु बहवस्तत्र व्यहन्यन्त परस्परम्। गदाभिर्मुषलैश्चैव नानाशस्त्रैश्च बहुशः ॥ २३ ॥ कृतवर्म्मा तु हार्द्दिक्यो धर्म्मपुत्रं युधिष्ठिरम्। वारयामास संक्रुद्धो वेलेवोद्वृत्तमर्णवम् ॥ २४ ॥ युधिष्ठिरस्तु हार्द्दिक्यं विद्ध्वा पञ्चभिराशुगैः। पुनर्विव्याध विंशत्या तिष्ठ तिष्ठेति चाब्रवीत् ॥ २५ ॥ कृतवर्म्मा तु संक्रुद्धो धर्म्मराजस्य मारिष। धनुश्चिच्छेद भल्लेन तञ्च विव्याध सप्तभिः ॥ २६ ॥ अथान्यद्धनुरादाय धर्म्मपुत्रो महारथः। हार्द्दिक्यं दशभिर्बाणैर्बाह्वोरुरसि चार्पयत् ॥ २७ ॥ माधवस्तु रणे विद्धो धर्म्मपुत्रेण मारिष। प्राकम्पत च रोषेण सप्तभिश्चार्द्दयच्छरैः ॥ २८ ॥ तस्य पार्थो धनुश्छित्त्वा हस्तावापं निकृत्य तु। प्राहिणोन्निशितान् भल्लान् पञ्च राजञ्छिलाशितान् ॥ २९ ॥ तस्य तद् कवचं भित्त्वा हेमचित्रं महाधनम्। प्राविशन्

धरणीमुग्रा वल्मीकमिव पन्नगाः ॥ ३० ॥ अक्ष्णोर्निमेषमात्रेण
सोऽन्यदादाय कार्मुकम् । विव्याध पाण्डवं षष्ट्या पुनश्च दशभिः
शरैः ॥ ३१ ॥ तस्य शक्तिममेयात्मा चिक्षेप भुजगोपमाम् ।
पाण्डवेन तदा क्रुद्धा रथे न्यस्य महद्धनुः ॥ ३२ ॥ सा हेमचित्रा
महती पाण्डवेनानुप्रेषिता । निर्भिद्य दक्षिणं बाहुं प्राविश-
द्धरणीतलम् ॥ ३३ ॥ एतस्मिन्नेव काले तु गृह्य पार्थो महद्धनुः ।
हार्दिक्यं छादयामास शरैः सन्नतपर्वभिः ॥ ३४ ॥ ततस्तु तव
वै शूरो वृष्णीनां प्रवरो रथी । व्यश्वसूतरथं चक्रे निमेषार्द्धा-
द्युधिष्ठिरम् ॥ ३५ ॥ ततस्तु पाण्डवो ज्येष्ठः खड्गचर्म समा-
ददे । तदप्यस्य शितैर्भल्लैर्व्यधमन्माधवो रणे ॥ ३६ ॥ तोमरन्तु
ततो गृह्य स्वर्णदण्डं दुरासदम् । अप्रैषीत् समरे तूर्णं हार्दि-
क्यस्य महात्मनः ॥ ३७ ॥ तमापतन्तं सहसा युधिष्ठिरभुजच्युतम् ।
द्विधा चिच्छेद हार्दिक्यः कृतहस्तः स्मयन्निव ॥ ३८ ॥ ततः
शरशतेनाजौ धर्मपुत्रमवाकिरत् । कवचञ्च रणे क्रुद्धो वाण-
जालैरपाकिरत् ॥ ३९ ॥ हार्दिक्यशरसञ्छन्नं जाम्बूनदविभू-
षितम् । व्यशीर्यत रणे राजंस्ताराजालमिवाम्बरात् ॥ ४० ॥
स छिन्नधन्वा विरथः कृतवर्मशराहतः । अपयातो रणात्तूर्णं
धर्मपुत्रो युधिष्ठिरः ॥ ४१ ॥ कृतवर्मा तु निर्जित्य धर्मपुत्रं युधि-
ष्ठिरम् । पुनर्द्रोणस्य जुगुपे चक्रमेव महारथः ॥ ४२ ॥

इति द्रोणपर्वणि घटोत्कचवधपर्वणि युधिष्ठिरापयाने
पञ्चषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥

---

सञ्जय उवाच । भूरिस्तु समरे राजन् शैनेयं रथिनाम्वरम् ।
आपतन्तमपासेधत् प्रपानादिव कुञ्जरम् ॥ १ ॥ अथैनं सात्यकि
ः पञ्चभिर्निशितैः शरैः । विव्याध हृदये तस्य प्रास्रवत्तस्य

घोरमाहवम् ॥ २ ॥ तथैव कौरवो युद्धे शैनेयं युद्धदुर्मदम् । दशभि-
र्विशिखैस्तूर्णमविध्यत भुजान्तरे ॥ ३ ॥ तावन्योऽन्यं महाराज
ततक्षाते परस्परम् । क्रोधसंरक्तनयनौ दृढे विस्फार्य्य कार्म्मुके
॥ ४ ॥ तयोरासीन्महाराज शस्त्रवृष्टिः सुदारुणा । क्रुद्धयोः
सायकमुचोर्यमान्तकनिकाशयोः ॥ ५ ॥ तावन्योऽन्यं महाराज
प्रच्छाद्य समरे स्थितौ । मुहूर्त्तञ्चैव तद्युद्धं समरूपमिवाभवत्
॥ ६ ॥ ततः क्रुद्धो महाराज शैनेयः प्रहसन्निव । धनुश्चिच्छेद
समरे कौरवस्य महात्मनः ॥ ७ ॥ अथैनं छिन्नधन्वानं नवभि-
र्निशितैः शरैः । विव्याध हृदये तूर्णं तिष्ठ तिष्ठेति चाब्रवीत्
॥ ८ ॥ सोऽतिविद्धो बलवता शत्रुणा शत्रुतापनः । धनुरन्यत्
समादाय सात्वतं प्रत्यविध्यत ॥ ९ ॥ स विद्धा सात्वतं बाणै-
स्त्रिभिरेव विशाम्पते । धनुश्चिच्छेद भल्लेन सुतीक्ष्णेन हसन्निव
॥ १० ॥ छिन्नधन्वा महाराज सात्यकिः क्रोधमूर्च्छितः । चिक्षेप
सुमहावेगां शक्तिं तस्य महोरसि ॥ ११ ॥ स तु शक्त्या विभि-
न्नाङ्गो निपपात रथोत्तमात् । लोहिताङ्ग इवाकाशाद्दीप्तरश्मि-
र्यदृच्छया ॥ १२ ॥ तन्तु दृष्ट्वा हतं शूरमश्वत्थामा महारथः ।
अभ्यधावत वेगेन शैनेयं प्रति भारत ॥ १३ ॥ तिष्ठ तिष्ठेति
चाभाष्य सात्यकिं स नराधिप । अभ्यवर्षच्छरौघेण मेरुं वृष्ट्या
यथाम्बुदः ॥ १४ ॥ तमापतन्तं वेगेन शैनेयस्य रथं प्रति ।
घटोत्कचोऽब्रवीद्राजन्नादं मुक्त्वा महारथः ॥ १५ ॥ तिष्ठ तिष्ठ न
मे जीवन् द्रोणपुत्र गमिष्यसि । एष त्वां निहनिष्यामि महिषं
षण्मुखो यथा ॥ १६ ॥ युद्धश्रद्धामहं तेऽद्य विनेष्यामि रणा-
जिरे । इत्युक्त्वा रोषताम्राक्षो राक्षसः परवीरहा ॥ १७ ॥
द्रौणिमभ्यद्रवत् क्रुद्धो गजेन्द्रमिव केशरी । रथाक्षमात्रैरिषुभि-
रभ्यवर्षद्घटोत्कचः ॥ १८ ॥ रथिनामृषभं द्रौणिं धाराभिरिव
तोयदः । तां बाणवृष्टिमप्राप्तां शरैराशीविषोपमैः ॥ १९ ॥

घातयामास समरे तरसा द्रौणिराहवे । ततः शरशतैस्तीक्ष्णै-
र्मर्मभेदिभिराशुगैः ॥ २० ॥ समाचिनोद्राक्षसेन्द्रं घटोत्कचमरि-
न्दमम् । स शरैराचितस्तेन राक्षसो रणमूर्द्धनि ॥ २१ ॥ व्यभ्रा-
जत महाराज श्वाविच्छललितो यथा । ततः क्रोधसमाविष्टो
भैमसेनिः प्रतापवान् ॥ २२ ॥ शरैरवचकर्त्तोग्रैर्द्रौणिं वज्राशनि-
स्वनैः । क्षुरप्रैरर्द्धचन्द्रैश्च नाराचैः सशिलीमुखैः ॥ २३ ॥ वराह-
कर्णैर्नालीकैर्विकर्णैश्चाप्यवीवृषत् । तां शस्त्रवृष्टिमतुलां वज्राशनि-
समस्वनाम् ॥ २४ ॥ पतन्तीमुपरि क्रुद्धो द्रौणिरव्यथितेन्द्रियः ।
सुदुःसहां शरैर्घोरैर्दिव्यास्त्रपरिमन्त्रितैः ॥ २५ ॥ व्यधमत् स
महाराज महाभ्राणीव मारुतः । ततोऽन्तरीक्षे बाणानां सङ्ग्रा-
मोऽन्य इवाभवत् ॥ २६ ॥ घोररूपो महाराज योधानां हर्ष-
वर्द्धनः । तयोस्तु सङ्घर्षकृतैर्विस्फुलिङ्गैरितस्ततः ॥ २७ ॥ बभौ
निशामुखे व्योम खद्योतैरिव चित्रितम् । स मार्गणगणैर्द्रौणि-
र्दिशः प्रच्छाद्य सर्वशः ॥ २८ ॥ प्रियार्थं तव पुत्राणां राक्षसं
समवाकिरत् । ततः प्रववृते युद्धं द्रौणिराक्षसयोः पुनः ॥ २९ ॥
विगाढे रजनीमध्ये शक्रप्रह्लादयोरिव । ततो घटोत्कचो बाणै-
र्दशभिर्द्रौणिमाहवे ॥ ३० ॥ जघानोरसि सङ्क्रुद्धः कालज्वलन-
सन्निभैः । स गाढविद्धो व्यथितो राक्षसेन महाबलः ॥ ३१ ॥
चचाल समरे द्रौणिर्वातनुन्न इव द्रुमः । स मोहमनुसम्प्राप्तो
ध्वजयष्टिं समाश्रितः ॥ ३२ ॥ ततो हाहाकृतं सैन्यं तव सर्वं
जनाधिप । हतं स्म मेनिरे सर्वे तावकास्तं विशाम्पते ॥ ३३ ॥
तन्तु दृष्ट्वा तथावस्थमश्वत्थामानमाहवे । पाञ्चालाः सृञ्जयाश्चैव
सिंहनादं प्रचक्रिरे ॥ ३४ ॥ प्रतिलभ्य ततः संज्ञामश्वत्थामा महा-
रथः । धनुः प्रपीड्य वामेन करेणामित्रकर्षणः ॥ ३५ ॥ मुमो-
चाकर्णपूर्णेन धनुषा शरमुत्तमम् । यमदण्डोपमं घोरमुद्दिश्याशु
घटोत्कचम् ॥ ३६ ॥ स भित्त्वा हृदयं तस्य राक्षसस्य शरोत्तमः ।

विवेश वसुधामुग्रः सुपुङ्खः पृथिवीपते ॥ ३७ ॥ सोऽतिविद्धो महाराज रथोपस्थ उपाविशत् । राक्षसेन्द्रः स बलवान् द्रौणिना रणमानिना ॥ ३८ ॥ दृष्ट्वा विमूढं हैडिम्बं सारथिस्तं रणाजिरात् । द्रोणेः सकाशात् सम्भ्रान्तस्त्वपनिन्ये त्वरान्वितः ॥३९॥ तथा तु समरे विद्धा राक्षसेन्द्रं घटोत्कचम् । ननाद सुमहानादं द्रोणपुत्रो महारथः ॥ ४० ॥ पूजितस्तव पुत्रैश्च सर्व्वयोधैश्च भारत । वपुषा प्रतिजज्वाल मध्याह्ने भास्करो यथा ॥ ४१ ॥ भीमसेनन्तु युध्यन्तं भारद्वाजरथं प्रति । स्वयं दुर्य्योधनो राजा प्रत्यविध्यच्छितैः शरैः ॥ ४२ ॥ तं भीमसेनो नवभिः शरैर्विव्याध भारत । दुर्य्योधनोऽपि विंशत्या शराणां प्रत्यविध्यत ॥ ४३ ॥ तौ सायकैः प्रतिच्छन्नावदृश्येतां रणाजिरे । मेघजालप्रतिच्छन्नौ नभसीवेन्दुभास्करौ ॥ ४४ ॥ ततो दुर्य्योधनो राजा भीमं विव्याध पत्रिभिः । पञ्चभिर्भरतश्रेष्ठ तिष्ठ तिष्ठेति चाब्रवीत् ॥ ४५ ॥ तस्य भीमो धनुश्छित्त्वा ध्वजञ्च निशितैः शरैः । विव्याध कौरवश्रेष्ठं नवत्या नतपर्व्वणाम् ॥ ४६ ॥ ततो दुर्य्योधनः क्रुद्धो धनुरन्यन्महत्तरम् । गृहीत्वा भरतश्रेष्ठो भीमसेनं शितैः शरैः ॥ ४७ ॥ अपीडयद्रणमुखे पश्यतां सर्व्वधन्विनाम् । निहत्य तान् शरान् भीमो दुर्य्योधनधनुश्च्युतान् ॥ ४८ ॥ कौरवं पञ्चविंशत्या क्षुद्रकाणां समार्पयत् । दुर्य्योधनस्तु संक्रुद्धो भीमसेनस्य मारिष ॥ ४९ ॥ क्षुरप्रेण धनुश्छित्त्वा दशभिः प्रत्यविध्यत । अथान्यद्धनुरादाय भीमसेनो महाबलः ॥ ५० ॥ विव्याध नृपतिं तूर्णं सप्तभिर्निशितैः शरैः । तदप्यस्य धनुः क्षिप्रं चिच्छेद लघुहस्तवत् ॥ ५१ ॥ द्वितीयञ्च तृतीयञ्च चतुर्थं पञ्चमन्तथा । आत्तमात्तं महाराज भीमस्य धनुराच्छिनत् ॥ ५२ ॥ तव पुत्रो महाराज जितकाशी मदोत्कटः । स तदा छिद्यमानेषु कार्म्मुकेषु पुनः पुनः ॥ ५३ ॥ शक्तिं चिक्षेप समरे सर्व्वपारशवीं दृढाम् । मृत्योरिव स्वसारं हि

दीप्तां केतुशिखामिव ॥ ५४ ॥ सीमन्तमिव कुर्वन्तीं नभसोऽति-
समप्रभाम् । अप्राप्तमेव तां शक्तिं त्रिधा चिच्छेद कौरव ॥ ५५ ॥
पश्यतः सर्वलोकस्य भीमसेनस्य चाग्रतः । ततो भीमो महाराज
गदां गुर्वीं महाप्रभाम् ॥ ५६ ॥ चिक्षेपाविध्य वेगेन दुर्योधन-
रथं प्रति । ततः सा सहसा वाहांस्तव पुत्रस्य संयुगे ॥ ५७ ॥
सारथिञ्च गदा गुर्वी ममर्द्दास्य रथं पुनः । पुत्रस्तु तव राजेन्द्र
भीमाद्भीतः प्रणश्य च ॥ ५८ ॥ आरुरोह रथश्चान्यं नन्दकस्य
महात्मनः । ततो भीमो हतं मत्वा निशामध्ये सुयोधनम् ॥ ५९ ॥
सिंहनादं महच्चक्रे तर्ज्जयन्निव कौरवान् । तावकाः सैनिकाश्चापि
मेनिरे निहतं नृपम् ॥ ६० ॥ ततो विचुक्रुशुः सर्वे हाहेति च
समन्ततः । तेषाञ्च निनदं श्रुत्वा त्रस्तानां सर्वयोधिनाम् ॥ ६१ ॥
भीमसेनस्य नादञ्च श्रुत्वा राजन्महात्मनः । ततो युधिष्ठिरो राजा
हतं मत्वा सुयोधनम् ॥ ६२ ॥ अभ्यवर्त्तत वेगेन यत्र पार्थो
वृकोदरः । पाञ्चाला सृञ्जया मत्स्याः कैकेयाश्चेदयस्तथा ॥ ६३ ॥
सर्वोद्योगेनाभिजग्मुर्द्रोणमाशु जिघांसया । तत्रापि सुमहद्युद्धं
द्रोणस्यासीत् परैः सह । घोरे तमसि मग्नानां निघ्नतामितरे-
तरम् ॥ ६४ ॥

इति द्रोणपर्वणि घटोत्कचवधपर्वणि दुर्योधनापयाने
षट्षष्ट्यधिकशतोऽध्यायः ॥ १६६ ॥

---

माद्रीपुत्रः प्रतापवान्। कर्णं विव्याध विंशत्या तदद्भुतमिवाभवत्
॥४॥ तस्य कर्णो हयान् हत्वा शरैः सन्नतपर्वभिः। सारथि-
ञ्चास्य भल्लेन द्रुतं निन्ये यमक्षयम्॥५॥ विरथः सहदेवस्तु
खड्गं चर्म्म समाददे। तदप्यस्य शितैर्बाणैर्व्यधमत् प्रहसन्निव
॥६॥ ततो गुर्वीं गदां घोरां हेमचित्रां महाहवे। प्रेषया-
मास समरे वैकर्त्तनरथं प्रति॥७॥ तामापतन्तीं सहसा सह-
देवेन प्रेषिताम्। व्यष्टम्भयच्छरैः कर्णो भूमावेवाप्यपातयत्॥८॥
गदां विनिहतां दृष्ट्वा सहदेवस्त्वरान्वितः। शक्तिं चिक्षेप कर्णाय
तामप्यस्याच्छिनच्छरैः॥९॥ माद्रीसुतस्ततस्तूर्णमवप्लुत्य रथो-
त्तमात्। प्रज्वलन्निव रोषेण दृष्ट्वा कर्णं व्यवस्थितम्॥१०॥
रथचक्रं ततो गृह्य मुमोचाधिरथिं प्रति। तदापतद्वै सहसा
कालचक्रमिवोद्यतम्॥११॥ शरैरनेकसाहस्रैरच्छिनत् सूत-
नन्दनः। तस्मिंश्छिन्ने रथाङ्गे तु सहदेवस्तु मारिष॥१२॥
ईषादण्डकयोक्त्राणि युगानि विविधानि च। हस्त्यङ्गानि तथा-
श्वांश्च मृतांश्च पुरुषान् बहून्॥१३॥ चिक्षेप कर्णमुद्दिश्य कर्ण-
स्तान् व्यधमच्छरैः। स निरायुधमात्मानं ज्ञात्वा माद्रवतीसुतः
॥१४॥ वार्य्यमाणस्तु विशिखैः सहदेवो रणं जहौ। तमभि-
द्रुत्य राधेयो मुहूर्त्तं भरतर्षभ॥१५॥ अब्रवीत् प्रहसन् वाक्यं
सहदेव सनिष्ठुरम्। मा युध्यस्व रणे वीर विशिष्टै रथिभिः सह
॥१६॥ सदृशैर्युध्य माद्रेय वचो मे नाभिशङ्किथाः। अथैनं
धनुषोऽग्रेण तुदन् भूयोऽब्रवीदिदम्॥१७॥ एषोऽर्जुनो रणे
यत्तो युध्यते कुरुभिः सह। तत्र वा गच्छ माद्रेय गृहं वा यदि
मन्यसे॥१८॥ एवमुक्त्वा तु तं कर्णो रथेन रथिनाम्वरः।
प्रायात् पाञ्चालराजस्य सैन्यानि प्रहसन्निव॥१९॥ वधप्राप्तन्तु
माद्रेयं नावधीत् समरेऽरिहा। कुन्त्याः स्मृत्वा वचो राजन् सत्य-
सन्धो महारथ॥२०॥ सहदेवस्ततस्त्रस्तो विमना शर

पीड़ितः। कर्णवाक्शल्यविद्धस्य जीवितान्निर्विद्यत ॥ २१ ॥
आरुरोह रथं तूर्णं पाञ्चाल्यस्य महात्मनः। जनमेजयस्य समरे
त्वरायुक्तो महारथः॥ २२ ॥

इति द्रोणपर्वणि घटोत्कचवधपर्वणि सहदेवापयाने
सप्तषष्ट्यधिकशततोऽध्यायः॥ १६७ ॥

सञ्जय उवाच । शतानीकं शरैस्तीक्ष्णैर्निर्दहन्तममूंस्तव ।
चित्रसेनस्तव सुतो वारयामास भारत ॥ १ ॥ नाकुलिश्चित्रसेनन्तु
विद्ध्वा पञ्चभिराशुगैः । स च तं प्रतिविव्याध दशभिर्निशितैः शरैः
॥ २ ॥ चित्रसेनो महाराज शतानीकं पुनर्युधि । नवभिर्निशितै-
र्बाणैः क्रूरैर्विव्याध वक्षसि ॥ ३ ॥ नाकुलिस्तस्य विशिखैर्वर्म सन्नत-
पर्वभिः । गात्रात् सञ्च्यावयामास तदद्भुतमिवाभवत् ॥ ४ ॥
सोऽपेतवर्मा पुत्रस्ते विरराज भृशं नृप । उत्सृज्य काले राजेन्द्र
निर्मोकमिव पन्नगः ॥ ५ ॥ ततोऽस्य निशितैर्बाणैर्ध्वजं चिच्छेद
नाकुलिः । धनुश्चैव महाराज यतमानस्य संयुगे ॥ ६ ॥ स
छिन्नधन्वा विरथो विवर्मा च महारथः । अथान्यद्धनुरादाय
दृढं वेगवत्तरम् ॥ ७ ॥ ततस्तूर्णं चित्रसेनो नाकुलिं नतपर्वभिः ।
शरैर्विव्याध समरे भरतानां महारथः ॥ ८ ॥ शतानीकोऽथ
सङ्क्रुद्धश्चित्रसेनस्य भारत । जघान चतुरो वाहान् सारथिञ्च
महाबलः ॥ ९ ॥ आप्लुत्य च रथात्तस्माच्चित्रसेनो महायशाः ।
नाकुलिं पञ्चविंशत्या शराणामार्दयद्बली ॥ १० ॥ तस्य तत्कुर्वतः
कर्म नकुलस्य सुतो रणे । अर्धचन्द्रेण चिच्छेद चापं हेमपरि-
ष्कृतम् ॥ ११ ॥ स छिन्नधन्वा विरथो हताश्वो हतसारथिः ।
आरुरोह रथं शीघ्रं हार्दिक्यस्य महात्मनः ॥ १२ ॥ द्रुपदन्तु
सहानीकं द्रोणप्रेप्सुं महारथम् । वृषसेनो महाराज किर-
ञ्छरशतैस्तदा ॥ १३ ॥ यज्ञसेनस्तु समरे कर्णपुत्रं महारथम् ।
षष्ट्या शराणां विव्याध बाह्वोरुरसि चा विभो ॥ १४ ॥ वृष-
सेनस्तु संक्रुद्धो यज्ञसेनं रथे स्थितम् । बहुभिः सायकैस्तूर्ण-
माजघान स्तनान्तरे ॥ १५ ॥ तावुभौ शरकृत्ताङ्गौ शरकण्टकिनौ
रणे । व्यराजेतां महाराज श्वाविधौ शललैरिव ॥ १६ ॥ रुक्म-
पुङ्खैरजिह्माग्रैः शरैः सन्नतपर्वभिः । रुधिरौघपरिक्लिन्नौ व्यरा-
जेतां महामृधे ॥ १७ ॥ तपनीयनिभौ चित्रौ कल्पवृक्षाविवाद्भुतौ ।

किंशुकाविव पुष्पाढ्यौ प्रकाशेतां रणाजिरे ॥ १८ ॥ वृषसेनस्ततो
राजन् द्रुपदं नवभिः शरैः । विद्ध्वा विव्याध सप्तत्या पुनश्चान्यै-
स्त्रिभिः शरैः ॥ १९ ॥ ततः शरसहस्राणि विमुञ्चन् विबभौ रणे ।
कर्णपुत्रो महाराज वर्षमाण इवाम्बुदः ॥ २० ॥ द्रुपदस्तु ततः
क्रुद्धो वृषसेनस्य कार्मुकम् । द्विधा चिच्छेद भल्लेन पीतेन निशि-
तेन च ॥ २१ ॥ सोऽन्यत् कार्मुकमादाय रुक्मबद्धं नवं दृढम् ।
तूणादाकृष्य विमलं भल्लं पीतं शितं दृढम् ॥ २२ ॥ कार्मुके योज-
यित्वा तु द्रुपदं सन्निरीक्ष्य च । आकर्णपूर्णं मुमुचे त्रासयन् सर्व-
सोमकान् ॥ २३ ॥ हृदयं तस्य भित्त्वा च जगाम वसुधातलम् ।
कश्मलं प्राविशद्राजा वृषसेनशराहतः ॥ २४ ॥ सारथिस्तमपो-
वाह स्मरन् सारथिचेष्टितम् । तस्मिन् प्रभग्ने राजेन्द्र पाञ्चालानां
महारथे ॥ २५ ॥ ततस्तु द्रुपदानीकं शरैश्छिन्नतनुच्छदम् ।
सम्प्राद्रवत्तदा सर्वं निशीथे भैरवे सति ॥ २६ ॥ प्रदीपैर्हि
परित्यक्तैः प्रज्वलद्भिः समन्ततः । व्यराजत मही राजन् वीताभ्रा
द्यौरिव ग्रहैः ॥ २७ ॥ तथाङ्गदैर्निपतितैर्व्यराजत वसुन्धरा ।
प्रावृट्काले महाराज विद्युद्भिरिव तोयदः ॥ २८ ॥ ततः कर्ण-
सुतत्रस्ताः समन्तात् विप्रदुद्रुवुः । यथेन्द्रभयवित्रस्ता दानवास्तारका-
मये ॥ २९ ॥ तेनार्द्यमानाः सङ्ग्रामे पाञ्चालाः सोमकैः सह ।

रिव ॥ ३५ ॥ प्रतिविन्ध्यन्तु समरे कुर्वाणं कर्म दारुणम् ।
दुःशासनस्त्रिभिर्बाणैर्ललाटे समविध्यत ॥ ३६ ॥ सोऽतिविद्धो
बलवता तव पुत्रेण धन्विना । विरराज महाराज सशृङ्ग इव
पर्वतः ॥ ३७ ॥ दुःशासनन्तु समरे प्रतिविन्ध्यो महारथ ।
नवभिः सायकैर्विद्ध्वा पुनर्विव्याध सप्तभिः ॥ ३८ ॥ तत्र भारत
पुत्रस्ते कृतवान् कर्म दुष्करम् । प्रतिविन्ध्यहयानुग्रैः पातयामास
सायकैः ॥ ३९ ॥ सारथिञ्चास्य भल्लेन ध्वजञ्च समपातयत् ।
रथञ्च तिलशो राजन् व्यधमत्तस्य धन्विनः ॥ ४० ॥ पताकाश्च
सतूणीरा रश्मीन् योक्त्राणि च प्रभो । चिच्छेद तिलशः क्रुद्धः
शरैः सन्नतपर्वभिः ॥ ४१ ॥ विरथः स तु धर्मात्मा धनुष्पाणि
रवस्थितः । अयोधयत्तव सुतं किरञ्छरशतान् बहून् ॥ ४२ ॥
क्षुरप्रेण धनुस्तस्य चिच्छेद कृतहस्तवत् । अथैनं दशभिर्बाणै-
श्छिन्नधन्वानमार्दयत् ॥ ४३ ॥ तं दृष्ट्वा भ्रातरं तत्र भ्रातरोऽस्य
महारथाः । अन्ववर्त्तन्त वेगेन महत्या सेनया सह ॥ ४४ ॥
सोऽप्लुतस्तु ततो यानं सुतसोमस्य भास्वरम् । धनुर्गृह्य महाराज
विव्याध तनयं तव ॥ ४५ ॥ ततस्तु तावकाः सर्वे परिवार्य्य सुतं
तव । अभ्यवर्त्तन्त वेगेन महत्या सेनया वृताः ॥ ४६ ॥ ततः
प्रववृते युद्धं तव तेषाञ्च भारत । निशीथे दारुणे काले यम-
राष्ट्रविवर्द्धनम् ॥ ४७ ॥

इति द्रोणपर्वणि घटोत्कचवधपर्वणि शतानीकादियुद्धे
एकोनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥

---

सञ्जय उवाच । नकुलं रभसं युद्धे निघ्नन्तं तव वाहिनीम् ।
अभ्ययात् सौबलः क्रुद्धस्तिष्ठ तिष्ठेति चाब्रवीत् ॥ १ ॥ कृतवैरौ
तु तौ शूरावन्योऽन्यवधकाङ्क्षिणौ । शरैः पूर्णायतोत्सृष्टैरन्योऽन्य

अभिजघ्नतुः ॥ २ ॥ यथैव नकुलो राजन् शरवर्षाण्यमुञ्चत ।
तथैव सौबलश्चापि शिक्षां सन्दर्शयन् युधि ॥ ३ ॥ तावुभौ समरे
शूरौ शरकण्टकिनौ तदा । व्यभ्राजेतां महाराज श्वाविधौ
शललैरिव ॥ ४ ॥ रुक्मपुङ्खैरजिह्माग्रैः शरैश्छिन्नतनुच्छदौ ।
रुधिरौघपरिक्लिन्नौ व्यभ्राजेतां महामृधे ॥ ५ ॥ तपनीयनिभौ
चित्रौ कल्पवृक्षाविव द्रुमौ । किंशुकाविव चोत्फुल्लौ प्रकाशेते
रणाजिरे ॥ ६ ॥ तावुभौ समरे शूरौ शरकण्टकिनौ तदा ।
व्यराजेतां महाराज कण्टकैरिव शाल्मली ॥ ७ ॥ सुजिह्मं प्रेक्ष-
माणौ तौ राजन् विवृतलोचनौ । क्रोधसंरक्तनयनौ निर्दहन्तौ
परस्परम् ॥ ८ ॥ श्यालस्तव सुसंक्रुद्धो माद्रीपुत्रं हसन्निव ।
कर्णिनैकेन विव्याध हृदये निशितेन ह ॥ ९ ॥ नकुलस्तु भृशं
विद्धः श्यालेन तव धन्विना । निषसाद रथोपस्थे कश्मलं च
समाविशत् ॥ १० ॥ अत्यन्तवैरिणं दृप्तं दृष्ट्वा शत्रुं तथागतम् ।
ननाद शकुनिस्तत्र तपान्ते जलदो यथा ॥ ११ ॥ प्रतिलभ्य ततः
संज्ञां नकुलः पाण्डुनन्दनः । अभ्यधावत् सौबलं भूयो व्यात्तानन
इवान्तकः ॥ १२ ॥ स क्रुद्धः शकुनिं षष्ट्या विव्याध भरतर्षभ ।
पुनश्चैव शतेनैव नाराचानां स्तनान्तरे ॥ १३ ॥ ततोऽस्य सशरं
चापं मुष्टिदेशे द्विधाच्छिनत् । ध्वजं च त्वरितं छित्त्वा रथाद् भू-
मपातयत् ॥ १४ ॥ विशिखेन च तीक्ष्णेन पीतेन निशितेन च ।
ऊरू निर्भिद्य चैकेन नकुलः पाण्डुनन्दनः ॥ १५ ॥ श्येनं सपक्षं
व्याधेन पातयामास तं तदा । सोऽतिविद्धो महाराज रथोपस्थ
उपाविशत् ॥ १६ ॥ ध्वजयष्टिं परिक्लिश्य कामिनीं कामुको यथा ।
तं विसंज्ञं निपतितं दृष्ट्वा श्यालं तवानघ ॥ १७ ॥ अपोवाह
रथेनाशु सारथिर्ध्वजिनीमुखात् । ततः प्रचुक्रुशुः पार्था ये च
तेषां पदानुगाः ॥ १८ ॥ निर्जित्य च रणे शत्रून् नकुलः शत्रु-
तापनः । अब्रवीत् सारथिं तत्र द्रोणानीकाय मां वह ॥ १

तस्य तद्वचनं श्रुत्वा माद्रीपुत्रस्य सारथिः । प्रायात्तेन तदा राजन्
येन द्रोणो व्यवस्थितः ॥ २० ॥ शिखण्डिनन्तु समरे द्रोणप्रेप्सुं
महाबलम् । कृपः शारद्वतो यत्तः प्रत्युद्गच्छत वेगितः ॥ २१ ॥
गौतमं द्रुतमायान्तं द्रोणान्तिकमरिन्दमः । विव्याध नवभिर्बाणैः
शिखण्डी प्रहसन्निव ॥ २२ ॥ तमाचार्य्यो महाराज विद्धा पञ्चभि-
राशुगैः । पुनर्विव्याध विंशत्या पुत्राणां प्रियकृत्तव ॥ २३ ॥ मह-
द्युद्धं तयोरासीद्घोररूपं विशाम्पते । यथा देवासुरे युद्धे शम्बरा-
मरराजयोः ॥ २४ ॥ शरजालावृतं व्योम चक्रतुस्तौ महारथौ ।
मेघाविव तपापाये वीरौ समरदुर्मदौ ॥ २५ ॥ प्रकृत्या घोररूपं
तदासीद्घोरतरं ततः । रात्रिश्च भरतश्रेष्ठ योधानां युद्धशालिनाम्
॥ २६ ॥ कालरात्रिनिभा ह्यासीद्घोररूपा भयावहा । शिखण्डी
तु महाराज गौतमस्य महद्धनुः ॥ २७ ॥ अर्द्धचन्द्रेण चिच्छेद
सज्जं च विसृजन् शरान् । तस्य क्रुद्धः कृपो राजन् शक्तिं चिक्षेप
दारुणाम् ॥ २८ ॥ रुक्मदण्डामकुण्ठाग्रां कर्मारपरिमार्जिताम् ।
तामापतन्तीं चिच्छेद शिखण्डी दशभिः शरैः ॥ २९ ॥ सा पपात
च मेदिन्यां शक्तिर्हेमविभूषिता । अथान्यद्धनुरादाय गौतमो
वदताम्बरः ॥ ३० ॥ प्राच्छादयच्छितैर्बाणैर्महाराज शिखण्डिनम् ।
स च्छाद्यमानः समरे गौतमेन महात्मना ॥ ३१ ॥ व्यषीदत
रथोपस्थे शिखण्डी रथिनाम्वरः । सीदन्तञ्चैनमालोक्य कृपः
शारद्वतो युधि ॥ ३२ ॥ आजघ्ने बहुभिर्बाणैर्जिघांसन्निव भारत ।
विमुखं तं रणे दृष्ट्वा याज्ञसेनिं महारथम् ॥ ३३ ॥ पाञ्चालाः
सोमकाश्चैव परिवव्रुः समन्ततः । तथैव तव पुत्राश्च परिवव्रु-
र्द्विजोत्तमम् ॥ ३४ ॥ महत्या सेनया सार्द्धं ततो युद्धमभूत् पुनः ।
रथिनाञ्च रणे राजन्नन्योऽन्यमभिधावताम् ॥ ३५ ॥ बभूव तुमुलः
शब्दो मेघानामिव भारत । द्रवतां सादिनाञ्चैव गजानाञ्च विशा-
म्पते ॥ ३६ ॥ अन्योऽन्यं निघ्नतां राजन् क्रूरमायोधनं बभौ ।

पत्तीनां द्रवतां चैव पादशब्देन मेदिनी ॥ ३७ ॥ अकम्पत महा-
राज शोणितस्ता भयादिव । रथिनो रथमारुह्य प्रद्रुता वेग
वत्तरम् ॥ ३८ ॥ अगृह्णन् बहवो राजन् मन्यमाना वायसा इव ।
तथा गजान् प्रभिन्नांश्च सुप्रभिन्ना महागजाः ॥ ३९ ॥ तस्मि-
न्नेव पदे यत्ता निरगृह्णन्त भारत । सादी सादिनमासाद्य
पदातीयः पदातिनम् ॥ ४० ॥ समासाद्य रणेऽन्योन्यं संरब्धा
नातिचक्रमुः । धावतां द्रवतां चैव पुनरावर्त्ततामपि ॥ ४१ ॥
बभूव तत्र सैन्यानां शब्दस्तु तुमुलो निशि । दीप्यमानाः प्रदी-
पाश्च रथवारणवाजिषु ॥ ४२ ॥ अदृश्यन्त महाराज महोल्का
इव खाच्च्युताः । सा निशा भरतश्रेष्ठ प्रदीपैरवभासिता ॥ ४३ ॥
दिवसप्रतिमा राजन् बभूव रणमूर्द्धनि । आदित्येन यथा व्याप्तं
तमो घोरं प्रणश्यति ॥ ४४ ॥ तथा नष्टं तमो घोरं दीपैर्दीप्तै-
रणे कृतम् । दिवञ्च पृथिवीञ्चैव दिशश्च प्रदिशस्तथा ॥ ४५ ॥
रजसा तमसा व्याप्ता द्योतिताः प्रभया पुनः । अस्त्राणां कवचा-
नाञ्च मणीनाञ्च महात्मनाम् ॥ ४६ ॥ अन्तर्हिताः प्रभाः सर्वा दीपै-
स्तैरवभासिताः । तस्मिन् युद्धे महारौद्रे वर्त्तमाने निशामुखे
॥ ४७ ॥ न कश्चिद्विदुरात्मानमयमस्मीति भारत । अवधीत् समरे
पुत्रं पिता भरतसत्तम ॥ ४८ ॥ पुत्रश्च पितरं मोहात् सखायञ्च
तथा सखा । सम्बन्धिनश्च सम्बन्धी स्वस्त्रीयश्चापि मातुलम् ॥ ४९ ॥
स्वे स्वान् परे स्वकीयाश्च निजघ्नुस्तत्र भारत । निर्मर्य्यादमभू-
द्राजन् रात्रौ युद्धं भयानकम् ॥ ५० ॥

सञ्जय उवाच। तस्मिन् सुतुमुले युद्धे वर्त्तमाने भयावहे।
धृष्टद्युम्नो महाराज द्रोणमेवाभ्यवर्त्तत ॥ १ ॥ सन्दधानो धनुः
श्रेष्ठं ज्यां विकर्षन् पुनः पुनः। अभ्यद्रवत द्रोणस्य रथं रुक्म
विभूषितम् ॥ २ ॥ धृष्टद्युम्नमथायान्तं द्रोणस्यान्तचिकीर्षया।
परिवव्रुर्महाराज पाञ्चालाः पाण्डवैः सह ॥ ३ ॥ तथा परिवृतं
दृष्ट्वा द्रोणमाचार्य्यसत्तमम्। पुत्रास्ते सर्वतो यत्ता ररक्षुर्द्रोण
माहवे ॥ ४ ॥ बलार्णवौ ततस्तौ तु समेयातां निशामुखे।
वातोद्धूतौ क्षुभितौ भैरवौ सागराविव ॥ ५ ॥ ततो द्रोणं
महाराज पाञ्चाल्यः पञ्चभिः शरैः। विव्याध हृदये तूर्णं सिंह
नादं ननाद च ॥ ६ ॥ तं द्रोणः पञ्चविंशत्या विद्ध्वा भारत
संयुगे। चिच्छेदान्येन भल्लेन धनुरस्य महाप्रभम् ॥ ७ ॥ धृष्ट
द्युम्नस्तु निर्विद्धो द्रोणेन भरतर्षभ। उत्सृज्य च धनुः शीघ्रं
सन्दश्य दशनच्छदम् ॥ ८ ॥ ततः क्रुद्धो महाराज धृष्टद्युम्नः
प्रतापवान्। आददेऽन्यद्धनुः श्रेष्ठं द्रोणस्यान्तचिकीर्षया ॥ ९ ॥
विकृष्य तत्तु कौमानाकर्णात् परवीरहा। द्रोणस्यान्तकरं घोरं
व्यसृजत् सायकं ततः ॥ १० ॥ स विसृष्टो बलवता शरो घोरो
महामृधे। भासयामास तत् सैन्यं दिवाकर इवोदितः ॥ ११ ॥
तन्तु दृष्ट्वा शरं घोरं देवगन्धर्वमानवाः। स्वस्त्यस्तु समरे राजन्
द्रोणायेत्यब्रुवन् वचः ॥ १२ ॥ तन्तु सायकमप्राप्तमाचार्य्यस्य रथं
प्रति। कर्णो द्वादशधा राजंश्चिच्छेद कृतहस्तवत् ॥ १३ ॥ स
छिन्नो बहुधा राजन् धृष्टद्युम्नस्य मारिष। निपपात शरस्तूर्णं
निर्विषो भुजगो यथा ॥ १४ ॥ छित्त्वा तु समरे बाणान् शरैः
सन्नतपर्वभिः। धृष्टद्युम्नं ततः कर्णो विव्याध निशितैः शरैः
॥ १५ ॥ पञ्चभिर्द्रोणपुत्रस्तु स्वयं द्रोणश्च पञ्चभिः। शल्यस्तु
नवभिर्बाणैस्त्रिभिर्दुःशासनस्तथा ॥ १६ ॥ दुर्य्योधनस्तु विंशत्या
च पञ्चभिः। पाञ्चाल्यं त्वरिता विध्यन् सर्व एव महा

रेयाः ॥ १७ ॥ स विद्ध सप्तभिर्वीरैर्द्रौणवायाथमाहवे। स चापि प्रतिविव्याध सर्व्वानेव त्रिभिस्त्रिभिः ॥ १८ ॥ द्रौणि कर्णश्च द्रौणिश्च विव्याध तनय तव। त्वरायुक्तो महाराज धृष्टद्युम्नो महामृधे ॥ १९ ॥ निर्भिन्ना पत्त्रिना तेन धृष्टद्युम्नं पुनर्मृधे। विव्यधु समवेतास्ते मुञ्चन्तो भैरवान् रवान् ॥ २० ॥ द्रुमसेनन्तु संक्रुद्धो राजन् विव्याध पत्त्रिणा। पुनश्च विशिखैस्तूर्णं तिष्ठ तिष्ठेति चाब्रवीत् ॥ २१ ॥ स तु तं प्रतिविव्याध त्रिभिस्तीक्ष्णैरजिह्मगैः। स्वर्णपुङ्खैः शिलाधौतैः प्राणान्तकरणैर्युधि ॥ २२ ॥ भल्लेनान्येन तु पुनः सुवर्णोज्ज्वलकुण्डलम्। उन्ममाथ शिरः कायात् द्रुमसेनस्य वीर्य्यवान् ॥ २३ ॥ तच्छिरः प्रापतद्भूमौ सन्दष्टौष्ठपुटं रणे। महावातसमुद्धूतं पक्वं तालफलं यथा ॥ २४ ॥ तांश्च विद्ध्वा पुनर्योधान् वीरः सुनिशितैः शरैः। राधेयस्याच्छिनद् भल्लैः कार्म्मुकं चित्रयोधिनः ॥ २५ ॥ न च तन्ममृषे कर्णो धनुषश्छेदनं तदा। निकर्त्तनमिवात्युग्रो लाङ्गूलस्य यथा हरिः ॥ २६ ॥ सोऽन्यद्धनुः समादाय क्रोधरक्तेक्षणः श्वसन्। अभ्यवर्षच्छरौघेण धृष्टद्युम्नं महाबलम् ॥ २७ ॥ दृष्ट्वा कर्णन्तु संरब्धं ते वीराः षड्रथर्षभाः। पाञ्चालपुत्त्रं त्वरिताः परिवव्रुर्जिघांसवः ॥ २८ ॥ षण्णां योधप्रवीराणां तावकानां पुरस्कृतम्। मृत्योरास्यमनुप्राप्तं मेनिरे सैनिका विभो ॥ २९ ॥ एतस्मिन्नेव काले तु दाशार्हो विकिरन् शरान्। धृष्टद्युम्नं पराक्रान्तं सात्यकिः प्रत्यपद्यत ॥ ३० ॥ तमापतन्तं सम्प्रेक्ष्य सात्वतं युद्धदुर्म्मदम्। राधेयो दशभिर्बाणैस्ततो विव्याध वीर्य्यवान् ॥ ३१ ॥ तं सात्यकिर्महाराज विव्याध दशभिः शरैः। पश्यतां सर्व्ववीराणां नागास्तिष्ठेति चाब्रवीत् ॥ ३२ ॥ स सात्यकेस्तु बलिनः कर्णस्य च महात्मनः। आसीत् समागमो राजन् बलिवासवयोरिव ॥ ३३ ॥ त्रासयन्नथघोषेण क्षत्त्रियान् क्षत्त्रियर्षभः। राजीवलोचनं कर्णं

सात्यकिः प्रत्यविध्यत ॥ ३४ ॥ कम्पयन्निव मेदिनीं धनुषी बहुधा वशी। सूतपुत्रो महाराज सात्यकिं प्रत्ययोधयत् ॥ ३५ ॥ विपाठकर्णिनाराचैर्वत्सदन्तैः क्षुरैरपि। कर्णः शरशतैश्चापि शैनेयं प्रत्यविध्यत ॥ ३६ ॥ तथैव युयुधानोऽपि वृष्णीनां प्रवरो युधि। अभ्यवर्षच्छरैः कर्णं तद्युद्धमभवत् समम् ॥ ३७ ॥ कर्णं प्रमुखतः कृत्वा पुत्रास्तव विशाम्पते। सात्यकिं विव्यधुः सर्वे समन्तान्निशितैः शरैः ॥ ३८ ॥ अस्त्रैरस्त्राणि संवार्य्य तेषां कर्णस्य वा विभो। अविध्यत् सात्यकिस्तूर्णं वृषसेनं स्तनान्तरे ॥ ३९ ॥ तेन वाणेन निर्विद्धो वृषसेनो महाद्युतिः। न्यपतच्च रथे तूर्णं धनुरुत्सृज्य वीर्य्यवान् ॥ ४० ॥ ततः कर्णो हतं मत्वा वृषसेनं महारथम्। पुत्रशोकाभिसन्तप्तः सात्यकिं प्रत्यपीड़यत् ॥ ४१ ॥ पीड्यमानस्तु कर्णेन युयुधानो महारथः। विव्याध बहुभिः कर्णं त्वरमाणः पुनः पुनः ॥ ४२ ॥ स कर्णं दशभिर्विद्ध्वा वृषसेनञ्च पञ्चभिः। सहस्तावापधनुषी तयोश्चिच्छेद सात्वतः ॥ ४३ ॥ तावन्ये धनुषी सज्ये कृत्वा शत्रुभयङ्करे। युयुधानमविध्येतां समन्तान्निशितैः शरैः ॥ ४४ ॥ वर्त्तमाने तथा रौद्रे तस्मिन् वीरवरक्षये। अतीव शुश्रुवे राजन् गाण्डीवस्य महास्वनः ॥ ४५ ॥ श्रुत्वा तु रथनिर्घोषं गाण्डीवस्य च निस्वनम्। सूतपुत्रोऽब्रवीद्राजन् दुर्य्योधनमिदं वचः ॥ ४६ ॥ एष सर्व्वाश्चमूर्हत्वा मुख्यशश्च नरर्षभान्। कौरवांश्च महेष्वासान् गाण्डीवनिनदो महान् ॥ ४७ ॥ श्रूयते रथनिर्घोषो वासवस्येव गर्जतः। करोति पाण्डवो व्यक्तं कर्मौपयिकमात्मनः ॥ ४८ ॥ एष पार्थो महाराज महेद्येत् समहाचमूः। विप्रकीर्णान्यनेकानि नावतिष्ठन्ति कर्हिचित् ॥ ४९ ॥ वातेनेव समुद्धूतमभ्रजालं विदीर्य्यते। सव्यसाचिनमासाद्य भिन्ना नौरिव सागरे ॥ ५० ॥ द्रवतां योधमुख्यानां गाण्डीवप्रेषितैः शरैः। पततां समरे राजन् श्रूयते निनदो

महान् ॥ ५१ ॥ शृणु दुन्दुभिनिर्घोषमर्ज्जुनस्य रथं प्रति । निर्घोषे
राजशार्दूल स्तनयित्नोरिवाम्बरे ॥ ५२ ॥ हाहाकाररवांश्चैव
सिंहनादांश्च पुष्कलान् । शृणु शब्दान् बहुविधानर्ज्जुनस्य रथं
प्रति ॥ ५३ ॥ अयं मध्ये स्थितोऽस्माकं सात्यकिः सत्वताम्वरः ।
इह चेल्लप्स्यते लक्ष्यं ततस्तान् जेष्यामहे परान् ॥ ५४ ॥ एवं
पाञ्चालराजस्य पुत्रो द्रोणेन सङ्गतः । सर्व्वतः संवृतः शूरै रथैः
पुरुषसत्तमैः ॥ ५५ ॥ सात्यकिं यदि हन्याम धृष्टद्युम्नञ्च पार्ष-
तम् । असंशयं महाराज ध्रुवो नो विजयो भवेत् ॥ ५६ ॥
सौभद्रवदिमौ वीरौ परिवार्य्य महारथौ । प्रयताम महाराज
निहन्तुं वृष्णिपार्षतौ ॥ ५७ ॥ सव्यसाची पुरोऽभ्येति द्रोणा-
नीकाय भारत । संसक्तं सात्यकिं ज्ञात्वा बहुभिः कुरुपुङ्गवैः ॥५८॥
तत्र गच्छन्तु बहवः प्रवरा रथसत्तमाः । यावत् पार्थो न जानाति
सात्यकिं बहुभिर्वृतम् ॥ ५९ ॥ ते त्वरध्वं महाशूराः शराणां
मोक्षणे भृशम् । यथा त्विह व्रजत्येष परलोकाय माधवः ॥ ६० ॥
कर्णस्य मतमास्थाय पुत्रस्ते प्राह सौबलम् । यथेन्द्रः समरे
राजन् प्राह विष्णुं महायशाः ॥ ६१ ॥ वृतः सहस्रैर्दशभिर्गजाना-
मनिवर्त्तिनाम् । रथैश्च दशसाहस्रैर्वृतो याहि धनञ्जयम् ॥ ६२ ॥
दुःशासनो दुर्व्विषहः सुबाहुर्दुष्प्रधर्षणः । एते त्वामनुयास्यन्ति
पत्तिभिर्बहुभिर्वृताः ॥ ६३ ॥ जहि कृष्णौ महाबाहो धर्म्मराजञ्च
मातुल । नकुलं सहदेवञ्च भीमसेनञ्च पाण्डवम् ॥ ६४ ॥ देवाना-
मिव देवेन्द्रे जयाशा त्वयि मे स्थिता । जहि मातुल कौन्तेया-
नसुरानिव पावकिः ॥ ६५ ॥ एवमुक्तो ययौ पार्थान् तव पुत्रेण
चोदितः । महत्या सेनया सार्द्धं तव पुत्रैश्च दंशितः ॥ ६६ ॥
प्रियार्थं तव पुत्रस्य दिधक्षुः पाण्डुनन्दनान् । ततः प्रववृते युद्धं
तावकानां परैः सह ॥ ६७ ॥ प्रयाते सौबले राजन् पाण्डवाना-
मनीकिनीम् । बलेन महता युक्तः सूतपुत्रस्तु सात्वतम् ॥ ६८ ॥

अभ्ययात्त्वरितो युद्धे किरन् शरशतान् बहून्। समेत्य तावकाः सर्वे सात्यकिं पर्यवारयन्॥६९॥ भारद्वाजस्ततो गत्वा धृष्टद्युम्नरथं प्रति। महद्युद्धं तदा चक्रे निशीथे भरतर्षभ। धृष्टद्युम्नेन शूरेण पाञ्चाल्यैश्च महाद्भुतम्॥७०॥

इति द्रोणपर्वणि घटोत्कचवधपर्वणि सङ्कुलयुद्धे एकसप्तत्यधिकशतोऽध्यायः॥१७१॥

---

सञ्जय उवाच। ततस्ते पार्थिवाः सर्वे त्वरिता युद्धदुर्मदाः। अमृष्यमाणाः संरब्धा युयुधानरथं प्रति॥१॥ ते रथैः कल्पितै राजन् हेमरत्नविभूषितैः। सादिभिश्च गजैश्चैव परिवव्रुः स्म सात्वतम्॥२॥ अथैनं कोष्ठकीकृत्य सर्वतस्ते महारथाः। सिंहनादं महत् कृत्वा तर्ज्जयन्तस्तुताहिषम्॥३॥ तेऽभ्यवर्षञ्छरैस्तीक्ष्णैः सात्यकिं सत्यविक्रमम्। त्वरमाणा महावीरा माधवस्य वधैषिणः॥४॥ तान् दृष्ट्वापततस्तूर्णं शैनेयः परवीरहा। प्रत्यगृह्णान्महाबाहुः प्रमुञ्चन् विशिखान् बहून्॥५॥ तत्र वीरो महेष्वासः सात्यकिर्युद्धदुर्मदः। निचकर्त्त शिरांस्युग्रैः शरैः सन्नतपर्वभिः॥६॥ हस्तिहस्तान् हयग्रीवान् बाहूनपि च सायुधान्। क्षुरप्रैः पातयामास तावकानां स माधवः॥७॥ पतितैश्चामरैश्चैव श्वेतच्छत्रैश्च भारत। बभूव धरणी पूर्णा नक्षत्रैर्द्यौरिव प्रभो॥८॥ तेषान्तु युयुधानेन युध्यतां युधि भारत। बभूव तुमुलः शब्दः प्रेतानामिव क्रन्दताम्॥९॥ तेन शब्देन महता पूरितेयं वसुन्धरा। रात्रिः समभवच्चापि घोररूपा भयावहा॥१०॥ दीर्य्यमाणं बलं दृष्ट्वा युयुधानशराहतम्। श्रुत्वा तु विपुलं नादं निशीथे लोमहर्षणम्॥११॥ सुतस्तवाब्रवीद्राजन् सारथिं रथिनां वर। यत्रैष शब्दस्तत्राश्वांश्चोदयेति पुनः पुनः॥१२॥

ततो दुर्य्योधनो राजा दृढधन्वा जितक्लमः । शीघ्रहस्तश्चित्रयोधी
युयुधानमुपाद्रवत् ॥ १३ ॥ ततः पूर्णायतोत्सृष्टैर्मांसशोणित-
भोजनैः । दुर्य्योधनं द्वादशभिर्माधवः प्रत्यविध्यत ॥ १४ ॥ दुर्य्यो-
धनस्तेन तथा पूर्वमेवार्द्दितः शरैः । शैनेयं दशभिर्बाणैः प्रत्य-
विध्यदमर्षितः ॥ १५ ॥ ततः समभवद्युद्धमङ्गलोपमदर्शनम् ।
पाञ्चालानाञ्च सर्वेषां तावकानाञ्च सर्वशः ॥ १६ ॥ शैनेयस्तु रणे
क्रुद्धस्तव पुत्रं महारथम् । सायकानामशीत्या तु विव्याधोरसि
भारत ॥ १७ ॥ ततोऽस्य वाहान् समरे शरैर्निन्ये यमक्षयम् ।
सारथिञ्च रथात्तूर्णं पातयामास पत्रिणा ॥ १८ ॥ हताश्वे तु
रथे तिष्ठन् पुत्रस्तव विशाम्पते । मुमोच निशितान् बाणाञ्छैने-
यस्य रथं प्रति ॥ १९ ॥ शरान् पञ्चाशतस्तांस्तु शैनेयः कृत-
हस्तवत् । चिच्छेद समरे राजन् प्रेषितांस्तनयेन ते ॥ २० ॥
अथापरेण भल्लेन मुष्टिदेशे महद्धनुः । चिच्छेद रभसा युद्धे तव
पुत्रस्य माधवः ॥ २१ ॥ विरथो विधनुष्कश्च सर्वलोकेश्वरः प्रभुः ।
आरुरोह रथं तूर्णं भास्वरं कृतवर्मणः ॥ २२ ॥ दुर्य्योधने
परावृत्ते शैनेयस्तव वाहिनीम् । द्रावयामास विशिखैर्निशामध्ये
विशाम्पते ॥ २३ ॥ शकुनिश्चार्ज्जुनं राजन् परिवार्य्य समन्ततः ।
रथैरनेकसाहस्रैर्गजैश्चैव सहस्रशः ॥ २४ ॥ तथा हयसहस्रैश्च
तुमुलं सर्व्वतोऽकरोत् । ते महास्त्राणि दिव्यानि विकिरन्तो-
ऽर्ज्जुनं प्रति ॥ २५ ॥ अर्ज्जुनं योधयन्ति स्म क्षत्रियाः कालचोदिताः ।
तान्यर्ज्जुनः सहस्राणि रथवारणवाजिनाम् ॥ २६ ॥ प्रत्यवारय-
दायस्तः प्रकुर्वन् विपुलं क्षयम् । ततोऽर्ज्जुनमरिघ्नन्तं विव्याध
युधि सौबलः ॥ २७ ॥ रोषितात्मेव क्रुद्धो विंशत्या सायकै-
र्भृशम् । पुनश्चैव शतेनास्य संरुरोध महारथम् ॥ २८ ॥ तम-
र्ज्जुनस्तु विंशत्या विव्याध युधि भारत । अथेतरान् महेष्वासां-
स्त्रिभिस्त्रिभिरविध्यत ॥ २९ ॥ निवार्य्य तान् बाणगणान् युधि

राजन् धनञ्जय । निजघ्ने तावकान् योधान् वज्रवेगी शरोत्तमैः ॥ ३० ॥ भुजैश्छिन्नैर्महाराज शरीरैश्च सहस्रशः । समास्तीर्णा धरा तत्र बभौ पुष्पैरिवावृता ॥ ३१ ॥ शिरोभिः सकिरीटैश्च सुनसैश्चारुकुण्डलैः । सन्दष्टोष्ठपुटैः क्रुद्धैस्तथैवोद्वृत्तलोचनैः ॥ ३२ ॥ निष्कचूडामणिधरैः क्षत्रियाणां प्रियम्वदैः । चम्पकैरिव विन्यस्तैः पर्वतैर्बभौ मही ॥ ३३ ॥ कृत्वा तत् कर्म बीभत्सुरुग्रमुग्रपराक्रमः । स विद्धा शकुनिं भूयः पञ्चभिर्नतपर्वभिः ॥ ३४ ॥ उलूकं पुनराजघ्ने युधि बाणेन रोपितः । समुलूकं तथा विद्धा सौबलस्यैव पश्यतः ॥ ३५ ॥ ननाद च महानादं पूरयन् वसुधातलम् । ततो देवेन्द्रतनयः शकुनेर्धनुराच्छिनत् ॥ ३६ ॥ निन्ये च चतुरो वाहान् यमस्य सदनं प्रति । ततो रथादवप्लुत्य सौबलो भरतर्षभ ॥ ३७ ॥ उलूकस्य रथं तूर्णमारुरोह त्वरान्वितः । तावेकरथमारूढौ पितापुत्रौ महारथौ ॥ ३८ ॥ पार्थं ववर्षतुर्बाणैर्गिरिं मेघाविवोत्थितौ । ततो विद्धा महाराज पाण्डवो निशितैः शरैः ॥ ३९ ॥ विद्रावयंस्तव चमूं शतशोऽथ सहस्रशः । अनिलेन यथाभ्राणि विच्छिन्नानि ततस्ततः ॥ ४० ॥ विच्छिन्नानि तथा राजन् बलान्यासन् विशाम्पते । तद्बलं भरतश्रेष्ठ वध्यमानं तदा निशि ॥ ४१ ॥ प्रदुद्राव दिशः सर्वा वीक्षमाणं भयार्दितम् । उत्सृज्य वाहान् समरे चोदयन्तस्तथापरे ॥ ४२ ॥ सम्भ्रान्ताः पर्यवर्त्तन्त तस्मिंस्तमसि दारुणे । निर्जित्य समरे योधांस्तावकान् भरतर्षभ ॥ ४३ ॥ दध्मतुर्मुदितौ शङ्खौ वासुदेवधनञ्जयौ । धृष्टद्युम्नो महाराज द्रोणं विद्धा त्रिभिः शरैः ॥ ४४ ॥ चिच्छेद धनुषस्तूर्णं ज्यां शितेन शरेण ह । स विहाय धनुर्भूमौ द्रोणः क्षत्रियमर्द्दनः ॥ ४५ ॥ आददेऽन्यद्धनुः शूरो वेगवत् सारवत्तमम् । धृष्टद्युम्नं ततो द्रोणो विद्धा सप्तभिराशुगैः ॥ ४६ ॥ सारथिं पञ्चभिर्बाणैर्विव्याध भरतर्षभ । तं

निवार्य्य शरैर्द्रौणिं धृष्टद्युम्नो महारथः ॥ ४७ ॥ व्यधमत्
कौरवीं सेनामासुरीं मघवानिव । बध्यमाने बले तस्मिंस्तव
पुत्रस्य मारिष ॥ ४८ ॥ प्रावर्त्तत नदी घोरा शोणितोघतर-
ङ्गिणी । उभयोः सेनयोर्मध्ये नराश्वद्विपवाहिनी ॥ ४९ ॥ यथा
वैतरणी राजन् यमराष्ट्रं प्रति प्रभो । द्रावयित्वा तु तत् सैन्यं
धृष्टद्युम्नः प्रतापवान् ॥ ५० ॥ अत्यराजत तेजस्वी शक्रो देव-
गणेष्विव । अथ दध्मुर्महाशङ्खान् धृष्टद्युम्नशिखण्डिनौ ॥ ५१ ॥
यमौ च युयुधानश्च पाण्डवश्च वृकोदरः । जित्वा राजसहस्राणि
तावकानां तरस्विनाम् ॥ ५२ ॥ सिंहनादरवांश्चक्रुः पाण्डवा जित-
काशिनः । पश्यतस्तव पुत्रस्य कर्णस्य च रणोत्कटाः । तथा
द्रोणस्य शूरस्य द्रौणेश्चैव विशाम्पते ॥ ५३ ॥

इति द्रोणपर्वणि घटोत्कचवधपर्वणि सङ्कुलयुद्धे
द्विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥

---

सञ्जय उवाच । विद्रुतं स्वबलं दृष्ट्वा वध्यमानं महात्मभिः ।
क्रोधेन महताविष्टः पुत्रस्तव विशाम्पते ॥ १ ॥ अभ्येत्य सहसा
कर्णं द्रोणञ्च जयतांवरम् । अमर्षवशमापन्नो वाक्यज्ञो वाक्य-
मब्रवीत् ॥ २ ॥ भवद्भ्यामिह सङ्ग्रामः क्रुद्धाभ्यां सम्प्रवर्त्तितः ।
आहवे निहतं दृष्ट्वा सैन्धवं सव्यसाचिना ॥ ३ ॥ निहन्यमानां
पाण्डूनां बलेन मम वाहिनीम् । भूत्वा तद्विजये शक्तावशक्ता-
विव पश्यतः ॥ ४ ॥ यद्यहं भवतोस्त्याज्यो न वाच्योऽस्मि तदैव
हि । आवां पाण्डुसुतान् सङ्ख्ये जेष्याव इति मानदौ ॥ ५ ॥
तदैवाहं वचः श्रुत्वा भवद्भ्यामनुसम्मतम् । नाकरिष्यमिदं पार्थैः
वैरं योधविनाशनम् ॥ ६ ॥ यदि नाहं परित्याज्यो भवद्भ्यां
पुरुषर्षभौ । युध्यतामनुरूपेण विक्रमेण सुविक्रमौ ॥ ७ ॥

वाक्प्रतोदेन तौ वीरौ प्रणुन्नौ वचनेन ते । प्रावर्त्तयेतां तौ युद्धं
घट्टिताविव पन्नगौ ॥ ८ ॥ ततस्तौ रथिनां श्रेष्ठौ सर्वलोकधनु-
र्द्धरौ । शैनेयप्रमुखान् पार्थानभिदुद्रुवतू रणे ॥ ९ ॥ तथैव
सहिताः पार्थाः स्वेन सैन्येन सर्वशः । अभ्यवर्त्तन्त तौ वीरौ
नर्द्दमानौ मुहुर्मुहुः ॥ १० ॥ अथ द्रोणो महेष्वासो दशभिः
शिनिपुङ्गवम् । अविध्यत्त्वरितं क्रुद्धः सर्वशस्त्रभृताम्वरः ॥ ११ ॥
कर्णश्च दशभिर्वाणैः पुत्रश्च तव सप्तभिः । दशभिर्वृषसेनश्च सौबल-
श्चापि सप्तभिः ॥ १२ ॥ एते कौरवसक्रन्दे शैनेयं पर्य्यवाकिरन् ।
दृष्ट्वा च समरे द्रोणं निघ्नन्तं पाण्डवीं चमूम् ॥ १३ ॥ विव्यधुः
सोमकास्तूर्णं समन्ताच्छरवृष्टिभिः । ततो द्रोणोऽहरत् प्राणान्
क्षत्रियाणां विशाम्पते ॥ १४ ॥ रश्मिभिर्भास्करो राजंस्तमसाचैव
समन्ततः । द्रोणेन वध्यमानानां पाञ्चालानां विशाम्पते ॥ १५ ॥
शुश्रुवे तुमुलः शब्दः क्रोशतामितरेतरम् । पुत्रानन्ये पितॄनन्ये
भ्रातॄनन्ये च मातुलान् ॥ १६ ॥ भागिनेयान् वयस्यांश्च तथा
सम्बन्धिबान्धवान् । उत्सृज्योत्सृज्य गच्छन्ति त्वरिता जीवि-
तैषिणः ॥ १७ ॥ अपरे मोहिता मोहात्तमेवाभिमुखा ययुः ।
पाण्डवानां रणे योधा परलोकं गता परे ॥ १८ ॥ तथा सा
पाण्डवी सेना पीड्यमाना महात्मना । निशि सम्प्राद्रवद्राजन्
विसृष्टोल्काः समन्ततः ॥ १९ ॥ पश्यतो भीमसेनस्य विजय-
स्याच्युतस्य च । यमयोर्धर्मपुत्रस्य पार्षतस्य च पश्यतः ॥ २० ॥
तमसा संवृते लोके न प्राज्ञायत किञ्चन । कौरवाणां प्रकाशेन
दृश्यन्ते विद्रुताः परे ॥ २१ ॥ द्रवमाणन्तु तत् सैन्यं द्रोणकर्णौ
महारथौ । जघ्नतुः पृष्ठतो राजन् किरन्तौ सायकान् बहून्
॥ २२ ॥ पाञ्चालेषु प्रमग्नेषु दीर्यमाणेषु सर्वतः । जनार्द्दनो
दीनमनाः प्रत्यभाषत फाल्गुनम् ॥ २३ ॥ द्रोणकर्णौ महे-
ष्वासावेतौ पार्षतसात्यकी । पाञ्चालांश्चैव सहितौ जघ्नतुः सायकैः

युधि ॥ २४ ॥ सा तदा भरतश्रेष्ठ प्रभग्ना महती चमूः । वार्य्य-
माणापि कौन्तेय पृतना नावतिष्ठते ॥ २५ ॥ तान्तु विद्रवतीं
दृष्ट्वा जयत्, केशवार्ज्जुनौ । मा विद्रवत वित्रस्ता भयं त्यजत
पाण्डवाः ॥ २६ ॥ एतावावां सर्वसैन्यैर्व्यूढौ सम्यगुदायुधौ ।
द्रोणञ्च सूतपुत्रञ्च प्रयातौ सम्प्रबाधितुम् ॥ २७ ॥ वृकोदरमथा-
यान्तं दृष्ट्वा तत्र जनार्द्दनः । पुनरेवाब्रवीद्राजन् हर्षयन्निव पाण्ड-
वम् ॥ २८ ॥ एष भीमो रणश्लाघी वृतः सोमकपाण्डवैः । समु-
पैति वेगेन द्रोणकर्णौ महारथौ ॥ २९ ॥ एतेन सहितो युध्य
पाञ्चालैश्च महारथैः । आश्वासनार्थं सर्व्वेषां सैन्यानां पाण्डु-
नन्दन ॥ ३० ॥ ततस्तौ पुरुषव्याघ्रावुभौ माधवपाण्डवौ । द्रोण-
कर्णौ समासाद्य स्थितौ रणमूर्द्धनि ॥ ३१ ॥

सञ्जय उवाच । ततस्तत् पुनरावृत्तं युधिष्ठिरबलं महत् ।
यतो द्रोणश्च कर्णश्च परान् ममृदतुर्युधि ॥ ३२ ॥ सम्प्रहारस्तु
तुमुलो निशीथे समवर्त्तत महान् । यथा सागरयो राजन् चन्द्रो-
दयसमुद्धयोः ॥ ३३ ॥ तत उत्सृज्य पाणिभ्यः प्रदीपांस्तव
वाहिनी । युयुधे पाण्डवैः सार्द्धमुन्मत्तवदहर्निशम् ॥ ३४ ॥ रजसा
तमसा चैव सङ्ग्रामे भृशदारुणे । केवलं नामगोत्रेण प्रायुध्यन्त
जयैषिणः ॥ ३५ ॥ अश्रूयन्त हि नामानि श्राव्यमाणानि पार्थिवैः ।
प्रहरद्भिर्महाराज स्वयम्वर इवाहवे ॥ ३६ ॥ निःशब्दमासीत्
सहसा पुनः शब्दो महानभूत् । क्रुद्धानां युध्यमानानां जयतां
जीयतामपि ॥ ३७ ॥ यत्र यत्र स्म दृश्यन्ते प्रदीपाः कुरुपुङ्गव ।
शूरास्तत्र तत्र स्म निपतन्ति पतङ्गवत् ॥ ३८ ॥ तथा संयुध्य-
मानानां विगाढाभून्महानिशा । पाण्डवानाञ्च राजेन्द्र कौर-
वाणाञ्च भारत ॥ ३९ ॥

इति द्रोणपर्व्वणि घटोत्कचवधपर्व्वणि सङ्कुलयुद्धे
विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥

सञ्जय उवाच। ततः कर्णो रणे दृष्ट्वा पार्षतं परवीरहा। आजघानोरसि शरैर्दशभिर्मर्मभेदिभिः ॥ १ ॥ प्रतिविव्याध तं कर्णं धृष्टद्युम्नो महारथे। पञ्चभिः सायकैस्तूर्णं तिष्ठ तिष्ठेति चाब्रवीत् ॥ २ ॥ तावन्योऽन्यं शरै राजन् सञ्छाद्य सुमहारणे। पुनः पूर्णायतोत्सृष्टैर्विव्याधाते परस्परम् ॥ ३ ॥ ततः पाञ्चालमुख्यस्य धृष्टद्युम्नस्य संयुगे। सारथिं चतुरश्चाश्वान् कर्णो निन्ये यमक्षयम् ॥ ४ ॥ कार्मुकप्रवरं चास्य चिच्छेद निशितैः शरैः। सारथिं चास्य भल्लेन रथनीडादपातयत् ॥ ५ ॥ धृष्टद्युम्नस्तु विरथो हताश्वो हतसारथिः। अवप्लुत्य रथात्तूर्णं गदामादाय वीर्यवान् ॥ ६ ॥ स वध्यमानः कर्णेन शरैः सन्नतपर्वभिः। गत्वा कर्णसमीपं तु जघान चतुरो हयान् ॥ ७ ॥ पुनरावृत्य वेगेन पार्षतः परवीरहा। धनञ्जयरथं क्षिप्रमारुह्य रथिनां वरः ॥ ८ ॥ प्रयातुकामः कर्णाय वारितो धर्मसूनुना। कर्णस्तु सुमहातेजाः सिंहनादविमिश्रितम् ॥ ९ ॥ धनुःशब्दं महच्चक्रे दध्मौ तारेण चाम्बुजम्। दृष्ट्वा विनिर्जितं युद्धे पार्षतं ते महारथाः ॥ १० ॥ अमर्षवशमापन्नाः पाञ्चालाः सह सोमकैः। सूतपुत्रवधार्थाय शस्त्राण्यादाय सर्वशः ॥ ११ ॥ प्रययुः कर्णमुद्दिश्य मृत्युं कृत्वा निवर्तनम्। कर्णस्यापि रणे वाहानन्यान् सूतोऽभ्ययोजयत् ॥ १२ ॥ शङ्खवर्णान् महावेगान् सैन्धवान् साधुवाहिनः। लब्धलक्षस्तु राधेयः पाञ्चालानां महारथान् ॥ १३ ॥ अभ्यपीडयदायस्तः शरैर्मेघ इवाचलम्। सा पीड्यमाना कर्णेन पाञ्चालानामनीकिनी ॥ १४ ॥ सम्प्राद्रवत् सुसन्त्रस्ता सिंहेनेवार्दिता मृगी। प्रपतन्तो रथेभ्यश्च गजेभ्यश्च महीपते ॥ १५ ॥ रथेभ्यो रथिनस्तूर्णमदृश्यन्त समन्ततः। धावमानस्य योधस्य क्षुरप्रेण महामृधे ॥ १६ ॥ बाहू चिच्छेद वै कर्णः शिरश्चैव सकुण्डलम्। ऊरू चिच्छेद चान्यस्य गजस्थस्य विशाम्पते ॥ १७ ॥ वाजिपृष्ठगत-

स्थापि भूमिष्ठस्य च मारिष। नाशक्नुवन्समासाद्य बहवोऽन्ये
महारथाः ॥ १८ ॥ संछिन्नान्यात्मगात्राणि वाहनानि च संयुगे।
बध्यमाना शरैर्घोरैः पाञ्चालाः सृञ्जयैः सह ॥ १९ ॥ दृष्ट्वा
विसन्दनाश्चापि सूतपुत्रस्य मेनिरे। अपि स्म समरे योध धाव-
मानं विचेतस ॥ २० ॥ कर्णमेवाभ्यमन्यन्त ततो भीता द्रवन्ति
ते। तान्यनीकानि भग्नानि द्रवमाणानि भारत ॥ २१ ॥ अभ्य-
द्रवद्द्रुतं कर्णः सर्वतो विकिरञ्छरान्। बध्यन्ते समरे योधा
धावमाना विचेतस ॥ २२ ॥ नाशक्नुवन्नवस्थातुं काल्यमाना
महात्मना। कर्णेनाभ्याहता राजन् पाञ्चाला परमेषुभिः ॥ २३ ॥
द्रोणेन च दिश सर्वा वीक्ष्यमाणाः प्रदुद्रुवुः। ततो युधिष्ठिरो
राजा स्वसैन्यं प्रेक्ष्य विद्रुत ॥ २४ ॥ अपयाने मतिं कृत्वा फाल्गुनं
वाक्यमब्रवीत्। पश्य कर्णं महेष्वासं धनुष्पाणिमवस्थितम् ॥२५॥
निशीथे दारुणे काले तपन्तमिव भास्करम्। कर्णसायकनुन्नानां
क्रोशतामेव निस्वन ॥ २६ ॥ स निर्यं श्रूयते पार्थ त्वद्बन्धूनामनाथ-
वत्। यथा विसृजतश्चास्य सन्दधानस्य चाशुगान् ॥ २७ ॥
पश्यामि नान्तरं पार्थ क्षपयिष्यति बान्धवान्। यदत्रानन्तरं कार्यं
प्राप्तकालं प्रपश्यसि ॥ २८ ॥ कर्णस्य वधसंयुक्तं तत् कुरुष्व धन-
ञ्जय। एवमुक्तो महाराज पार्थः कृष्णमथाब्रवीत् ॥ २९ ॥ भीतो
धर्मसुतो राजा राधेयस्याद्य विक्रमात्। एवङ्गते प्राप्तकालं
कर्णानीके पुनः पुनः ॥ ३० ॥ भवान् व्यवस्यतां शीघ्रं द्रवते हि
वरूथिनी। द्रोणसायकनुन्नानां भग्नानां मधुसूदन ॥ ३१ ॥
कर्णेन त्रास्यमानानामवस्थानं न विद्यते। पश्यामीह तथा कर्णं
विचरन्तमभीतवत् ॥ ३२ ॥ द्रवमाणान्रथोदारान् किरन्तं निशितैः
शरैः। नैनं पश्यामि सङ्घोढुं चरन्तं रणमूर्द्धनि ॥ ३३ ॥ प्रत्यक्षं
वृष्णिशार्दूल पादस्पर्शमिवोरग। स भवांस्तत्र यात्वाशु यत्र
कर्णो महारथः। अहमेनं वधिष्यामि मा वैष मधुसूदन ॥ ३४ ॥

वासुदेव उवाच । पश्यामि कर्णं कौन्तेय देवराजमिवाहवे । विचरन्तं नरव्याघ्रमतिमानुषविक्रमम् ॥ ३५ ॥ न तथान्योऽस्ति समरे प्रत्युद्याता धनञ्जय । ऋते त्वां पुरुषव्याघ्र राक्षसाद्वा घटोत्कचात् ॥ ३६ ॥ न तु तावदहं मन्ये प्राप्तकालं तवानघ । समागमं महाबाहो सूतपुत्रेण संयुगे ॥ ३७ ॥ दीप्यमाना महोल्केव तिष्ठत्यस्य हि वासवी । त्वदर्थं हि महाबाहो सूतपुत्रेण संयुगे ॥ ३८ ॥ रक्ष्यते शक्तिरेषा हि रौद्रं रूपं बिभर्ति च । सततञ्चानुरक्तो वै हितैषी च घटोत्कचः ॥ ३९ ॥ घटोत्कचस्तु राधेयं प्रत्ययातु महाबलः । स हि भीमेन बलिना जातः सुरपराक्रमः ॥ ४० ॥ तस्मिन्नस्त्राणि दिव्यानि राक्षसान्यासुराणि च । विजेष्यति रणे कर्णमिति मे नास्ति संशयः ॥ ४१ ॥ एवमुक्तो महाबाहुः पार्थः पुष्करलोचनम् । आजुहावाथ तद्रक्षस्तच्चाविरासीत् प्राहुरग्रतः ॥ ४२ ॥ कवची सशरः खड्गी सधन्वा च विशाम्पते । अभिवाद्य ततः कृष्णं पाण्डवञ्च धनञ्जयम् ॥ ४३ ॥ अब्रवीत्, च तदा गर्वाऽयमस्मि प्रशाधि माम् । ततस्तं मेघसङ्काशं दीप्तास्यं दीप्तलोचनम् । अभ्यभाषत हैडिम्बं दाशार्हः प्रहसन्निव ॥ ४४ ॥

वासुदेव उवाच । घटोत्कच विजानीहि यत्त्वां वक्ष्यामि तच्छृणु । प्राप्तो विक्रमकालोऽयं तव नान्यस्य कस्यचित् ॥ ४५ ॥ स त्वं निमज्जतां युद्धे पाण्डवानां प्लवो भव । विविधानि तवास्त्राणि सन्ति माया च राक्षसी ॥ ४६ ॥ पश्य कर्णेन हैडिम्बे पाण्डवानामनीकिनी । काल्यमाना यथा गावः पालेन रणमूर्धनि ॥ ४७ ॥ एष कर्णो महेष्वासो मतिमान् दृढविक्रमः । पाण्डवानामनीकेषु दहति क्षत्रियर्षभान् ॥ ४८ ॥ किरन्तं शरवर्षाणि महान्ति दृढधन्विनः । नाशक्नुवन्नवस्थातुं पीड्यमानाः शराचिषा ॥ ४९ ॥ निशीथे सूतपुत्रेण शरवर्षेण पीड़िताः । एते

द्रवन्ति पाञ्चाला सिंहेनेवार्द्दिता मृगा ॥ ५० ॥ एतस्यैवं प्रवृत्तस्य सूतपुत्रस्य संयुगे। निरोद्धा विद्यते नान्यस्त्वामृते भीमविक्रम ॥ ५१ ॥ स त्वं कुरु महाबाहो कर्म्म युक्तमिहात्मन। मातुलानां पितृणाञ्च तेजसो च बलेन च ॥ ५२ ॥ एतदर्थं हि हैडिम्बे पुत्रानिच्छन्ति मानवा। कथं न तारयेद्दुर्गात् स त्वं तारय बान्धवान् ॥ ५३ ॥ इच्छन्ति पितरः पुत्रान् स्वार्थहेतोर्घटोत्कच। इह लोकात् परे लोके तारयिष्यन्ति ये हिता ॥५४॥ तवाप्यस्त्रबलं घोरं बलं युद्धे महात्मन। सङ्ग्रामे युध्यमानस्य न समस्तव विद्यते ॥ ५५ ॥ पाण्डवानां प्रभग्नानां कर्ण्णेन निशि सायके। मज्जतां धार्त्तराष्ट्रेषु भव पारं परन्तप ॥ ५६ ॥ रात्रौ हि राक्षसा भूयो भवन्त्यमितविक्रमा। बलवन्तः सुदुर्द्धर्षाः शूरा विक्रान्तयोधिन ॥ ५७ ॥ जहि कर्णं महेष्वासं निशीथे मायया रणे। पार्था द्रोणं वधिष्यन्ति धृष्टद्युम्नपुरोगमा ॥५८॥

सञ्जय उवाच। केशवस्य वचः श्रुत्वा बीभत्सुरपि राक्षसम्। अभ्यभाषत कौरव्य घटोत्कचमरिन्दमम् ॥ ५९ ॥ घटोत्कच भवांश्चैव दीर्घबाहुश्च सात्यकि। मतो मे सर्व्वसैन्येषु भीमसेनश्च पाण्डव ॥ ६० ॥ स भवान् यातु कर्ण्णेन द्वैरथं युधि निशि। सात्यकि पृष्ठतो गोप्ता भविष्यति महारथ ॥ ६१ ॥ जहि कर्णं रणे शूर सात्वतेन महायशान्। यथेन्द्रस्तारकं पूर्व्वं स्कन्देन सह जघ्निवान् ॥ ६२ ॥

घटोत्कच उवाच। अलमेवास्मि कर्णाय द्रोणायालञ्च भारत। अन्येषां क्षत्रियाणां वै कृतास्त्राणां महात्मनाम् ॥ ६३ ॥ अद्य दास्यामि सङ्ग्रामं सूतपुत्राय तं निशि। यं जना सम्प्रवक्ष्यन्ति यावद्भूमिर्धरिष्यति ॥ ६४ ॥ न चात्र शूरान्मोक्ष्यामि न भीतान्न कृताञ्जलीन्। सर्व्वानेव वधिष्यामि राक्षसं धर्म्ममाश्रित ॥ ६५ ॥

सञ्जय उवाच। एवमुक्त्वा महाबाहुर्हैडिम्बि परवीरहा।

अभ्ययात्तुमुले कर्णं तव सैन्यं विभीषयन् ॥ ६६ ॥ समापतन्तं
संक्रुद्धं दीप्तास्यं दीप्तमूर्द्धजम्। प्रहसन् पुरुषव्याघ्रः प्रतिजग्राह
सूतजः ॥ ६७ ॥ तयोः समभवद्युद्धं कर्णराक्षसयोर्मृधे। गर्जतो
राजशार्दूल शक्रप्रह्रादयोरिव ॥ ६८ ॥

इति द्रोणपर्व्वणि घटोत्कचवधपर्व्वणि घटोत्कचयाने
चतुःसप्तत्यधिकशततोऽध्यायः ॥ १७४ ॥

---

सञ्जय उवाच। दृष्ट्वा घटोत्कचं राजन् सूतपुत्ररथं प्रति।
प्रतियान्तं महाबाहुं जिघांसुं कर्णमाहवे ॥ १ ॥ अब्रवीत्तव
पुत्रस्तु दुर्य्योधनमिदं वचः। एतद्दृष्ट्वा रणे तूर्णं दृष्ट्वा कर्णस्य
विक्रमम् ॥ २ ॥ अभियाति रणे कर्णं तहारय महारथम्।
वृतं सैन्येन महता याहि यत्र महाबलः ॥ ३ ॥ कर्णो वैकर्त्तनो
युद्धे राक्षसेन युयुत्सति। रक्ष कर्णं रणे यत्तो वृत सैन्येन
मानद ॥ ४ ॥ मा कर्णं राक्षसो घोरः प्रमादान्नाशयिष्यति।
एतस्मिन्नन्तरे राजन् जटासुरसुतो बली ॥ ५ ॥ दुर्य्योधनमुपा
गम्य प्राह प्रहरताम्वर। दुर्य्योधन तवामित्रान् प्रख्यातान्
युद्धदुर्म्मदान् ॥ ६ ॥ पाण्डवान् हन्तुमिच्छामि त्वयाज्ञप्तः सहा
नुगान्। जटासुरो मम पिता रक्षसामग्रणीः पुरा ॥ ७ ॥
प्रयुज्य कर्म्म रक्षोघ्नं क्षुद्रैः पार्थैर्निपातितः। तस्यापचिति
मिच्छामि शत्रुशोणितपूजया ॥ ८ ॥ शत्रुमांसैश्च राजेन्द्र मामनु
ज्ञातुमर्हसि। तमब्रवीत्ततो राजा प्रीयमाणः पुनः पुनः ॥ ९ ॥
द्रोणकर्णादिभिः सार्द्धं पर्य्याप्तोऽहं द्विषद्वधे। त्वन्तु गच्छ मया
ज्ञप्तो जहि युद्धे घटोत्कचम् ॥ १० ॥ राक्षसं क्रूरकर्म्माणं रक्षो
मानुषसम्भवम्। पाण्डवानां हितं नित्यं हस्त्यश्वरथघातिनम् ॥ ११ ॥
वैहायसगतं युद्धे प्रेषयेथा यमसादनम्। तथेत्युक्त्वा महाकायः

समाहूय घटोत्कचम् ॥ १२ ॥ जटासुरिर्भीमसेनिं नानाशस्त्रैरवा-
किरत् । अलम्बुषश्च कर्णञ्च कुरुसैन्यञ्च दुस्तरम् ॥ १३ ॥
हैडिम्ब प्रममाथैको महावातोऽम्बुदानिव । ततो मायाबलं
दृष्ट्वा रक्षस्तूर्णमलम्बुष ॥ १४ ॥ घटोत्कचं शरव्रातैर्नानालिङ्गैः
समाकिरत । विद्ध्वा तु बहुभिर्बाणैर्भैमसेनिमलम्बुष ॥ १५ ॥
व्यद्रावयच्छरैस्तूर्णं पाण्डवानामनीकिनीम् । तेन विद्राव्यमाणानि
पाण्डुसैन्यानि भारत ॥ १६ ॥ निशीथे विप्रकीर्य्यन्त वाततुन्ना
घना इव । घटोत्कचशरैर्नुन्ना तथैव तव वाहिनी ॥ १७ ॥ निशीथे
प्राद्रवद्राजन्नुत्सृज्योल्का सहस्रशः । अलम्बुषस्ततः क्रुद्धो भैम-
सेनिं महामृधे ॥ १८ ॥ आजघ्ने बहुभिर्बाणैस्तोत्रैरिव महा-
द्विपम् । तिलशश्च ततो यानं सूत सर्व्वायुधानि च ॥ १९ ॥ घटोत्-
कच प्रचिच्छेद प्राहसच्चातिभैरवम् । ततः कर्णं शरव्रातैः
कुरूंश्चापि सहस्रशः ॥ २० ॥ अलम्बुषञ्चाम्यवर्षन्मेघो मेरुमिवा-
चलम् । तत संचुक्षुभे सैन्यं कुरूणां राक्षसार्द्दितम् ॥ २१ ॥
उपर्य्युपरि चान्योऽन्यं चतुरङ्गं ममर्द्द च । जटासुरिर्महाराज
विरथो हतसारथिः ॥ २२ ॥ घटोत्कचं रणे क्रुद्धो मुष्टिनाभ्यहनद्
दृढम् । मुष्टिनाभ्याहतस्तेनाथ प्रचचाल घटोत्कच ॥ २३ ॥ क्षिति-
कम्पे यथा शैल सवृक्षतृणगुल्मवान् । ततः स परिघाभेन
द्विषद्घ्नेन तु बाहुना ॥ २४ ॥ जाटासुरिं भैमसेनिरवधीत्
क्रोधमूर्च्छित । ततः प्रमथ्य तं क्रुद्ध तूर्णं हैडिम्बराक्षिपत्
॥ २५ ॥ हाभ्यां भुजाभ्यां सङ्गृह्य निष्पिष्य महीतले । जाटा-
सुरिर्मोक्षयित्वा आत्मानञ्च घटोत्कचात् ॥ २६ ॥ पुनरुत्थाय वेगेन
घटोत्कचमुपाद्रवत । अलम्बुषोऽपि विक्षिप्य समुत्क्षिप्य च
राक्षसम् ॥ २७ ॥ घटोत्कचं रणे रोषान्निष्पिपेष महीतले ।
तयोः समभवद्युद्धं गर्ज्जतोरतिकाययोः ॥ २८ ॥ घटोत्कचाल-
म्बुषयोस्तुमुलं लोमहर्षणम् । विशेषयन्तावन्योऽन्यं मायाभि

-रतिमानिनौ ॥ २९ ॥ युयुधाते महावीर्याविन्द्रवैरोचनाविव ।
पावकाम्बुनिधी भूत्वा पुनर्गरुडतक्षकौ ॥ ३० ॥ पुनर्मेघमहा-
वातौ पुनर्वज्रमहाचलौ । पुनः कुञ्जरशार्दूलौ पुनः स्वर्भानु-
भास्करौ ॥ ३१ ॥ एवं मायाशतसृजावन्योन्यवधकाङ्क्षिणौ । भृशं
चित्रमयुध्येतामलम्बुषघटोत्कचौ ॥ ३२ ॥ परिघैश्च गदाभिश्च प्रास-
मुद्गरपट्टिशैः । मुसलैः पर्वताग्रैश्च तावन्योऽन्यं विजघ्नतुः ॥ ३३ ॥
हयाभ्यां च गजाभ्यां च पदातिरथिनौ पुनः । युयुधाते महामायौ
राक्षसप्रवरौ युधि ॥ ३४ ॥ ततो घटोत्कचो राजन्नलम्बुष-
वधेप्सया । उत्पपात भृशं क्रुद्धः श्येनवन्निपपात च ॥ ३५ ॥
गृहीत्वा च महाकायं राक्षसेन्द्रमलम्बुषम् । उद्यम्य न्यवधीद्भूमौ
मयं विष्णुरिवाहवे ॥ ३६ ॥ ततो घटोत्कचः खड्गमुद्गृह्याद्भुत-
दर्शनम् । रौद्रस्य कायाच्छिरो भीमं विकृतदर्शनम् ॥ ३७ ॥
स्फुरतस्तस्य चनदे नदतश्चातिभैरवम् । विचकर्त महाराज भैमो-
ऽमितविक्रमः ॥ ३८ ॥ शिरस्तच्चापि संगृह्य केशेषु रुधिरोक्षितम् ।
ययौ घटोत्कचस्तूर्णं दुर्योधनरथं प्रति ॥ ३९ ॥ अभ्येत्य च महा-
बाहुः स्मयमानः स राक्षसः । शिरो रथेऽस्य निक्षिप्य विकृतानन-
मूर्धजम् ॥ ४० ॥ प्राणदद्भैरवं नादं प्रावृषीव बलाहकः । अब्रवीच्च
ततो राजन् दुर्योधनमिदं वचः ॥ ४१ ॥ एष ते निहतो बन्धुस्त्वया
दृष्टविक्रमः । पुनर्द्रष्टासि कर्णस्य निष्ठामेतां तथात्मनः ॥ ४२ ॥
स्वधर्ममर्थं कामं च त्रितयं योऽभिकाङ्क्षति । रिक्तपाणिर्न पश्येत
राजानं ब्राह्मणं स्त्रियम् ॥ ४३ ॥ सुप्रीतस्तावत तिष्ठस्व यावत्
कर्णं वधाम्यहम् । एवमुक्त्वा ततः प्रायात् कर्णं प्रति नरेश्वर ॥ ४४ ॥
किरञ्छरशतांस्तीक्ष्णान् विमुञ्चन् कर्णमूर्धनि । ततः समभवद्युद्धं
घोररूपं भयानकम् । विस्मापनं महाराज नरराक्षसयोर्मृधे ॥ ४५ ॥

इति द्रोणपर्वणि घटोत्कचवधपर्वणि अलम्बुषवधे
पञ्चसप्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥

धृतराष्ट्र उवाच । यत्तद्वैकर्त्तनः कर्णो राक्षसश्च घटोत्कचः ।
निशीथे समसज्जेतां तद्युद्धमभवत् कथम् ॥ १ ॥ कीदृशञ्चाभव-
द्रूपं तस्य घोरस्य रक्षसः । रथश्च कीदृशस्तस्य हयाः सर्व्वायुधानि
च ॥ २ ॥ किम्प्रमाणा हयास्तस्य रथकेतुर्धनुस्तथा । कीदृशं
वर्म्म चैवास्य शिरस्त्राणञ्च कीदृशम् । पृष्टस्त्वमेतदाचक्ष्व कुशलो
ह्यसि सञ्जय ॥ ३ ॥

सञ्जय उवाच । लोहिताक्षो महाकायस्ताम्रास्यो निम्नितो-
दरः । ऊर्द्ध्वरोमा हरिश्मश्रुः शङ्कुकर्णो महाहनुः ॥ ४ ॥
आकर्णाद्दारितास्यश्च तीक्ष्णदंष्ट्रः करालवान् । सुदीर्घताम्र-
जिह्वोष्ठो लम्बभ्रूः स्थूलनासिकः ॥ ५ ॥ नीलाङ्गो लोहितग्रीवो
गिरिवर्ष्मा भयङ्करः । महाकायो महाबाहुर्महाशीर्षो महाबलः
॥ ६ ॥ विकचः परुषस्पर्शो विकटोद्बद्धपिण्डिकः । स्थूलस्फिग्-
गूढनाभिश्च शिथिलोपचयो महान् ॥ ७ ॥ तथैव हस्ताभरणी
महामायोऽङ्गदी तथा । उरसा धारयन्निष्कमग्निमालां यथा-
चलः ॥ ८ ॥ तस्य हेममयं चित्रं बहुरूपाङ्गशोभितम् । तोरण-
प्रतिमं शुभ्रं किरीटं मूर्द्ध्न्यशोभत ॥ ९ ॥ कुण्डले बालसूर्य्याभे
मालां हेममयीं शुभाम् । धारयन् विपुलं कांस्यं कवचञ्च महा-
प्रभम् ॥ १० ॥ किङ्किणीशतनिर्घोषं रक्तध्वजपताकिनम् । ऋक्ष-
चर्म्मावनद्धाङ्गं नल्वमात्रं महारथम् ॥ ११ ॥ सर्व्वायुधवरोपेत-
मास्थितं ध्वजमालिनम् । अष्टचक्रसमायुक्तं मेघगम्भीरनिस्वनम्
॥ १२ ॥ मत्तमातङ्गसङ्काशा लोहिताक्षा विभीषणाः । कामवर्ण-
जवोपेता बलवन्तश्च ते हयाः ॥ १३ ॥ वहन्तो राक्षसं घोरं
बलवन्तो जितश्रमाः । विपुलाभिः सटाभिस्ते ह्रेषमाणा मुहु-
र्मुहुः ॥ १४ ॥ राक्षसोऽस्य विरूपाक्षः सूतो दीप्तास्यकुण्डलः ।
रश्मिभिः सूर्य्यरश्म्याभैः सञ्जग्राह हयान् रणे ॥ १५ ॥ स तेन
सहितस्तस्थावरुणेन यथा रविः । संसक्त इव चाभ्रेण यथाद्रि-

मेघता महान् ॥ १६ ॥ दिवस्पृक् सुमहाकेतुः स्यन्दनेऽस्य समुच्छ्रितः । रक्तोत्तमाङ्गः क्रव्यादो गृध्रः परमभीषणः ॥ १७ ॥ वासवाशनिनिर्घोषं दृढज्यमभिविक्षिपन् । व्यक्तं किष्कुपरीणाहं द्वादशारत्निकार्मुकम् ॥ १८ ॥ रथाक्षमात्रैरिषुभिः सर्वाः प्रच्छादयन् दिशः । तस्यां वीरापहारिण्यां निशायां कर्णमभ्ययात् ॥ १९ ॥ तस्य विक्षिपतश्चापं रथे विष्टभ्य तिष्ठतः । अशूयत धनुर्घोषो विस्फूर्जितमिवाशने ॥ २० ॥ तेन वित्रास्यमानानि तव सैन्यानि भारत । समकम्पन्त सर्वाणि सिन्धोरिव महोर्मयः ॥२१॥ तमापतन्तं सम्प्रेक्ष्य विरूपाक्षं विभीषणम् । उत्स्मयन्निव राधेयस्त्वरमाणो न्यवारयत् ॥ २२ ॥ ततः कर्णोऽभ्ययादेनमस्यन्नस्यन्तमन्तिकात् । मातङ्गमिव मातङ्गो यूथर्षभ इवर्षभम् ॥२३॥ स सन्निपातस्तुमुलस्तयोरासीद्विशाम्पते । कर्णराक्षसयो राजन्निन्द्रशम्बरयोरिव ॥ २४ ॥ तौ प्रगृह्य महाभीमे धनुषी भीमनिःस्वने । प्राच्छादयेतामन्योन्यं तक्षमाणौ महेषुभिः ॥ २५ ॥ ततः पूर्णायतोत्सृष्टैः शरैः सन्नतपर्वभिः । व्यदारयेतामन्योन्यं कांस्ये निर्भिद्य वर्मणी ॥ २६ ॥ तौ नखैरिव शार्दूलौ दन्तैरिव महाद्विपौ । रथशक्तिभिरन्योन्यं विशिखैश्च ततक्षतुः ॥ २७ ॥ संछिन्दन्तौ च गात्राणि सन्दधानौ च सायकान् । दहन्तौ च शरव्रातैर्दुष्प्रेक्ष्यौ च बभूवतुः ॥ २८ ॥ तौ शरक्षतसर्वाङ्गौ शोणितौघपरिप्लुतौ । विभ्राजेतां यथा वारिस्रवन्तौ गैरिकाचलौ ॥२९॥ तौ शराग्रविभिन्नाङ्गौ निर्भिन्दन्तौ परस्परम् । नाकम्पयेतामन्योन्यं यतमानौ महारथौ ॥ ३० ॥ तत् प्रवृत्तं निशायुद्धं चिरं सममिवाभवत् । प्राणयोर्दीव्यतो राजन् कर्णराक्षसयोर्मृधे ॥ ३१ ॥ तस्य सन्दधतस्तीक्ष्णान् शरांश्चासक्तमस्यतः । धनुर्घोषेण वित्रस्ताः स्वे परे च तदाभवन् ॥ ३२ ॥ घटोत्कचं तदा कर्णो न विशेषयते नृप । प्रादुश्चक्रे ततो दिव्यमस्त्रमस्त्रविदांवरः ॥ ३३ ॥ कर्णेन

सन्धितं दृष्ट्वा दिव्यमस्त्रं घटोत्कचः । प्रादुश्चक्रे ततो मायां राक्षसीं
राक्षसेश्वरः ॥ ३४ ॥ शूलपर्वतधारिण्या शैलमुद्गरहस्तया ।
रक्षसां घोररूपाणां महत्या सेनया वृतः ॥ ३५ ॥ समुद्यतमहा-
स्त्रं दृष्ट्वा ते व्यथिता नृपाः । भूतान्तकमिवायान्तं कालदण्डोग्र-
धारिणम् ॥ ३६ ॥ घटोत्कचप्रमुक्तेन सिंहनादेन भीषिताः ।
प्रसुस्रुवुर्गजा मूत्रं विव्यथुश्च नरा भृशम् ॥ ३७ ॥ ततोऽश्मवृष्टि-
रत्युग्रा महत्यासीत् समन्ततः । अर्द्धरात्राधिकबलैर्विमुक्ता राक्षसै-
र्भृशम् ॥ ३८ ॥ आयसानि च चक्राणि भुशुण्ड्यः शक्तितोमराः ।
पतन्त्यविरलाः शूला शतघ्न्यः पट्टिशास्तथा ॥ ३९ ॥ तदुग्रमति-
रौद्रञ्च दृष्ट्वा युद्धं नराधिपाः । पुत्राश्च तव योधाश्च व्यथिता
विप्रदुद्रुवुः ॥ ४० ॥ तत्रैकोऽस्त्रबलश्लाघी कर्णो मानी न विव्यथे ।
व्यधमच्च शरैर्मायां घटोत्कचविनिर्मिताम् । विससर्ज शरान्
घोरान् सूतपुत्रवधेप्सया ॥ ४१ ॥ ततस्ते रुधिराभ्यक्ता भित्त्वा
मार्गं महाहवे । विविशुर्धरणीं बाणाः संक्रुद्धा इव पन्नगाः ॥ ४२ ॥
सूतपुत्रस्तु संक्रुद्धो लघुहस्तः प्रतापवान् । घटोत्कचमतिक्रम्य
विभेद दशभिः शरैः ॥ ४३ ॥ घटोत्कचो विनिर्भिन्नः सूतपुत्रेण
मर्मसु । चक्रं दिव्यं सहस्रारमगृह्णाद्व्यथितो भृशम् ॥ ४४ ॥
क्षुरान्तं बालसूर्य्याभं मणिरत्नविभूषितम् । चिक्षेपाधिरथेः क्रुद्धो
भैमसेनिर्जिघांसया ॥ ४५ ॥ प्रविद्धमतिवेगेन विध्वस्तं कर्णसायकैः ।
अभाग्यस्येव सङ्कल्पस्तन्मोघमपतद्भुवि ॥ ४६ ॥ घटोत्कचः सुसं-
क्रुद्धो दृष्ट्वा चक्रं निपातितम् । कर्णं प्राच्छादयद्बाणैः स्वर्भानु-
रिव भास्करम् ॥ ४७ ॥ सूतपुत्रस्त्वसम्भ्रान्तो रुद्रोपेन्द्रेन्द्रविक्रमः ।
घटोत्कचरथं तूर्णं छादयामास पत्रिभिः ॥ ४८ ॥ घटोत्कचेन तु
गदा नद्धहेमाङ्गदा तदा । क्षिप्ता भ्राम्य शरैश्चापि कर्णेनाभ्या-
हतापतत् ॥ ४९ ॥ ततोऽन्तरीक्षमुत्पत्य कालमेघ इवोन्नदन् ।
प्रववर्ष महाकायो द्रुमवर्षं नभस्तलात् ॥ ५० ॥ ततो मायाविनं

कर्णो भीमसेनसुतं दिवि। मार्गणैरभिविव्याध घनं सूर्य इवा-
ंशुभिः ॥ ५१ ॥ तस्य सर्वान् हयान् हत्वा संछिद्य शतधा रथम्।
अभ्यवर्षच्छरैः कर्णः पर्जन्य इव वृष्टिमान् ॥ ५२ ॥ न तस्यासी-
दनिर्भिन्नं गात्रे द्व्यङ्गुलमन्तरम्। सोऽदृश्यत मुहूर्त्तेन श्वाविच्छ-
ललितो यथा ॥ ५३ ॥ न हयान्न रथं तस्य न ध्वजं न घटोत्-
कचम्। दृष्टवन्तः स्म समरे शरौघैरभिसंवृतम् ॥ ५४ ॥ स तु
कर्णस्य तद्दिव्यमस्त्रमस्त्रेण शातयन्। मायायुद्धेन मायावी सूत-
पुत्रमयोधयत् ॥ ५५ ॥ सोऽयोधयत्तदा कर्णं मायया लाघवेन
च। अलक्ष्यमाणानि दिवि शरजालानि सम्पतन् ॥ ५६ ॥ भैम-
सेनिर्महामायो मायया कुरुसत्तम। विचकारात्मनात्मानं मोहय-
न्निव भारत ॥ ५७ ॥ स तु कृत्वा विरूपाणि वदनान्यशुभानि
च। अग्रसत् सूतपुत्रस्य दिव्यान्यस्त्राणि वीर्यवान् ॥ ५८ ॥ पुन-
श्चापि महाकायः संछिन्नः शतधा रणे। हतसत्त्वो निरुत्साहो
पतितः समदृश्यत ॥ ५९ ॥ हतं तं मन्यमानाश्च प्रणेदुः कुरु-
पुङ्गवाः। अथ देहैर्नवैरन्यैर्दिक्षु सर्वास्वदृश्यत ॥ ६० ॥ पुनश्चापि
महाकायः शतशीर्षः शतोदरः। व्यदृश्यत महाराज मैनाक इव
पर्वतः ॥ ६१ ॥ अङ्गुष्ठमात्रो भूत्वा च पुनरेव स राक्षसः। सागर-
रोर्मिरिवोद्धूतस्तिर्य्यगूर्द्ध्वमवर्त्तत ॥ ६२ ॥ वसुधां दारयित्वा च
पुनरप्सु न्यमज्जत। अदृश्यत तदा तत्र पुनरुन्मज्जितोऽन्यतः
॥ ६३ ॥ सोऽवतीर्य्य पुनस्तस्थौ रथे हेमपरिष्कृते। क्षितिं
खञ्च दिशश्चैव माययाभ्येत्य दंशितः ॥ ६४ ॥ गत्वा कर्णरथाभ्याश-
विचलत्कुण्डलाननः। प्राह वाक्यमसम्भ्रान्तः सूतपुत्रं विशां
पते ॥ ६५ ॥ तिष्ठेदानीं क्व मे जीवन् सूतपुत्र गमिष्यसि।
युद्धश्रद्धामहं तेऽद्य विनेष्यामि रणाजिरे ॥ ६६ ॥ इत्युक्त्वा रोष-
ताम्राक्षं रक्षः क्रूरपराक्रमम्। उत्पपातान्तरीक्षञ्च जहास च
सुविस्तरम् ॥ ६७ ॥ कर्णमभ्यहनच्चैव गजेन्द्रमिव केशरी। रथाक्ष

सायकैरिषुभिरभ्यवर्षद्घटोत्कचः ॥ ६८ ॥ रथिनामृषभं कर्णं धाराभि-
रिव तोयदः । शरवृष्टिञ्च तां कर्णो दूरात् प्राप्तामशातयत् ॥ ६९ ॥
दृष्ट्वा च विहतां मायां कर्णेन भरतर्षभ । घटोत्कचस्ततो मायां
ससर्जान्तर्हितः पुनः ॥ ७० ॥ सोऽभवद्गिरिरत्युच्चः शिखरैस्तरु-
सङ्कटैः । शूलप्रासासिमुषलैर्जलप्रस्रवणो महान् ॥ ७१ ॥ तम-
ञ्जनचयप्रख्यं कर्णो दृष्ट्वा महीधरम् । प्रपातैरायुधान्युग्राण्युद्व-
हन्तं न चुक्षुभे ॥ ७२ ॥ स्मयन्निव ततः कर्णो दिव्यमस्त्रमुदैरयत् ।
ततः सोऽस्त्रेण शैलेन्द्रो विक्षिप्तो वै व्यनश्यत ॥ ७३ ॥ ततः स
तोयदो भूत्वा नीलः सेन्द्रायुधो दिवि । अश्मवृष्टिभिरत्युग्रः
सूतपुत्रमवाकिरत् ॥ ७४ ॥ अथ सन्धाय वायव्यमस्त्रमस्त्रविदां
वरः । व्यधमत् कालमेघं तं कर्णो वैकर्त्तनो वृषः ॥ ७५ ॥
स मार्गणगणैः कर्णो दिशः प्रच्छाद्य सर्वशः । जघानास्त्रं महा-
राज घटोत्कचसमीरितम् ॥ ७६ ॥ ततः प्रहस्य समरे भैमसेनि-
र्महाबलः । प्रादुश्चक्रे महामायां कर्णं प्रति महारथम् ॥ ७७ ॥
स दृष्ट्वा पुनरायान्तं रथेन रथिनाम्वरम् । घटोत्कचमसम्भ्रान्तं
राक्षसैर्बहुभिर्वृतम् ॥ ७८ ॥ सिंहशार्दूलसदृशैर्मत्तमातङ्गविक्रमैः ।
गजस्थैश्च रथस्थैश्च वाजिपृष्ठगतैस्तथा ॥ ७९ ॥ नानाशस्त्रधरै-
र्घोरैर्नानाकवचभूषणैः । वृतं घटोत्कचं क्रूरैर्मरुद्भिरिव वासवम्
॥ ८० ॥ दृष्ट्वा कर्णो महेष्वासो योधयामास राक्षसम् । घटोत्-
कचस्ततः कर्णं विद्ध्वा पञ्चभिराशुगैः ॥ ८१ ॥ ननाद भैरवं नादं
भीषयन् सर्वपार्थिवान् । भूयश्चाञ्जलिकेनाथ समार्गणगणं महत्
॥ ८२ ॥ कर्णहस्तस्थितञ्चापं चिच्छेदाशु घटोत्कचः । अथान्य-
द्धनुरादाय दृढभारसहं महत् ॥ ८३ ॥ विचकर्ष बलात् कर्णं
इन्द्रायुधमिवोच्छ्रितम् । ततः कर्णो महाराज प्रेषयामास साय-
कान् ॥ ८४ ॥ सुवर्णपुङ्खाञ्छत्रुघ्नान् खचरान् राक्षसान् प्रति ।
तद्बाणैरर्दितं यूथं रक्षसां पीनवक्षसाम् ॥ ८५ ॥ सिंहेनेवार्दितं

वन्य गजानामाकुल कृतम्। विधम्य राक्षसान् वाणै बाह्व सुतगतान् विभु ॥ ८६ ॥ ददाह भगवान् वह्निर्भूतानीव युग क्षये। स हत्वा राक्षसी सेना शुशुभे सूतनन्दनः ॥ ८७ ॥ पुरेव त्रिपुर दग्ध्वा दिवि देवो महेश्वरः। तेषु राजसहस्रेषु पाण्ड वेयेषु मारिष ॥ ८८ ॥ नैन निरीक्षितुमपि कश्चिच्छक्नोति पार्थिव। ऋते घटोत्कचाद्राजन् राक्षसेन्द्रान्महाबलात् ॥ ८९ ॥ भीमवीर्य्य बलोपेतात् क्रुद्धाद्वैवस्वतादिव। तस्य क्रुद्धस्य नेत्राभ्या पावकः समजायत ॥ ९० ॥ महोल्काभ्या यथा राजन् सार्चिषः स्नेह बिन्दव। तल तलेन सहत्य सन्दश्य दशनच्छदम् ॥ ९१ ॥ रथ-मास्थाय च पुनर्मायया निर्मित तत। युक्त गजनिभैर्वाहै पिशाचवदनै खरै ॥ ९२ ॥ स सूतमब्रवीत् क्रुद्ध सूतपुत्राय मा वह। स ययौ घोररूपेण रथेन रथिनाम्वर ॥ ९३ ॥ द्वैरथ सूतपुत्रेण पुनरेव विशाम्पते। स चिक्षेप पुन क्रुद्ध सूत पुत्राय राक्षस ॥ ९४ ॥ अष्टचक्रा महाघोरामशनी रुद्रनिर्मिं ताम्। तामवप्लुत्य जग्राह कर्णो न्यस्य रथे धनु ॥ ९५ ॥ चिक्षेप चैना तस्यैव स्यन्दनात् सोऽवपुप्लुवे। साश्वसूतध्वज यान भस्म कृत्वा महाप्रभा ॥ ९६ ॥ विवेश वसुधा भित्वा सुरास्तत्र विसिस्मियु। कर्णञ्च सर्वभूतानि पूजयामासुरञ्जसा ॥ ९७ ॥ यदवप्लुत्य जग्राह देवसृष्टा महाशनीम्। एव कृत्वा रणे कर्ण आरुरोह रथ पुन ॥ ९८ ॥ ततो मुमोच विशिखान् सूतपुत्र परन्तप। अशक्य कर्त्तुमन्येन सर्वभूतेषु मानद ॥ ९९ ॥ यद कार्षीत्तदा कर्ण सङ्ग्रामे भीमदर्शने। स हन्यमानो नाराचै धाराभिरिव पर्वत ॥ १०० ॥ गन्धर्वनगराकार पुनरन्तरधीयत। एव स वै महाकायो मायया लाघवेन च ॥ १०१ ॥ अस्त्राणि तानि दिव्यानि जघान रिपुसूदन। निहन्यमानेष्वस्त्रेषु मायया रक्षसा ॥ १०२ ॥ असम्भ्रान्तस्तत कर्णस्तद्रक्ष प्रत्ययोधयत।

ततः क्रुद्धो महाराज भैमसेनिर्महाबलः ॥ १०३ ॥ चकार बहुधात्मानं भीषयाणो महारथान्। ततो सिंहाः समापेतुः सिंहव्याघ्रतरक्षवः ॥ १०४ ॥ अग्निजिह्वास्तु भुजगा विहगाश्चाप्ययोमुखाः। आकीर्य्यमाणो विशिखैः कर्णचापच्युतैः शरैः ॥ १०५ ॥ नगराजसमप्रख्यस्तत्रैवान्तरधीयत। राक्षसाश्च पिशाचाश्च यातुधानास्तथैव च ॥ १०६ ॥ शालावृकाश्च बहवो वृकाश्च विकृताननाः। ते कर्णं भक्षयिष्यन्तः सर्वतः समुपाद्रवन् ॥ १०७ ॥ अथैनं वाग्भिरुग्राभिस्त्रासयाञ्चक्रिरे तदा। उद्यतैर्बहुभिर्घोरैरायुधैः शोणितोक्षितैः ॥ १०८ ॥ तेषामनेकैरेकैकं कर्णो विव्याध सायकैः। प्रतिहत्य तु तां मायां दिव्येनास्त्रेण राक्षसीम् ॥ १०९ ॥ आजघान हयान् घोरान् शरैः सन्नतपर्व्वभिः। ते भग्ना विकृताङ्गाश्च छिन्नपृष्ठाश्च सायकैः ॥ ११० ॥ वसुधामन्वपद्यन्त पश्यतस्तस्य रक्षसः। स भग्नमायो हैडिम्बिः कर्णं वैकर्त्तनं ततः। एष ते विदधे मृत्युमित्युक्त्वान्तरधीयत ॥ १११ ॥

इति द्रोणपर्व्वणि घटोत्कचवधपर्व्वणि कर्णघटोत्कचयुद्धे षट्सप्तत्यधिकशततोऽध्यायः ॥ १७६ ॥



सञ्जय उवाच। तस्मिंस्तथा वर्त्तमाने कर्णराक्षसयोर्मृधे। अलायुधो राक्षसेन्द्रो वीर्य्यवानभ्यवर्त्तत ॥ १ ॥ महत्या सेनया युक्तः सुयोधनमुपागमत्। राक्षसानां विरूपाणां सहस्रैः परिवारितः ॥ २ ॥ नानारूपधरैर्वीरैः पूर्ववैरमनुस्मरन्। तस्य ज्ञातिर्हि विक्रान्तो ब्राह्मणादो बको हतः ॥ ३ ॥ किर्म्मीरश्च महातेजा हिडिम्बश्च तथा सखा। स दीर्घकालाध्युषितं पूर्ववैरमनुस्मरन् ॥ ४ ॥ विज्ञायैतन्निशायुद्धं जिघांसुर्भीममाहवे। स मत्त इव मातङ्गः संक्रुद्ध इव चोरगः ॥ ५ ॥ दुर्य्योधनमिदं

वाक्यमब्रवीद्युद्धलालसः । विदितं ते महाराज यथा भीमेन
राक्षसाः ॥ ६ ॥ हिडिम्बबककिर्मीरा निहता मम बान्धवाः ।
परामर्शश्च कन्याया हिडिम्बायाः कृतः पुरा ॥ ७ ॥ किमन्य-
द्राक्षसानन्यानस्मांश्च परिभूय ह । तमहं सगणं राजन् सवाजि-
रथकुञ्जरम् ॥ ८ ॥ हैडिम्बञ्च सहामात्यं हन्तुमभ्यागतः स्वयम् ।
अद्य कुन्तीसुतान् सर्वान् वासुदेवपुरोगमान् ॥ ९ ॥ हत्वा सम्भ-
क्षयिष्यामि सर्वैरनुचरैः सह । निवारय बलं सर्वं वयं योत्स्याम
पाण्डवान् ॥ १० ॥ तस्य तद्वचनं श्रुत्वा हृष्टो दुर्योधनस्तदा ।
प्रतिगृह्याब्रवीद्वाक्यं भ्रातृभिः परिवारितः ॥ ११ ॥ त्वां पुरस्कृत्य
सगणं वयं योत्स्यामहे परान् । न हि वैरान्तमनसः स्थास्यन्ति
मम सैनिकाः ॥ १२ ॥ एवमस्त्विति राजानमुक्त्वा राक्षसपुङ्गवः ।
अभ्ययात्त्वरितो भीमं सहितः पुरुषाशनैः ॥ १३ ॥ दीप्यमानेन
वपुषा रथेनादित्यवर्च्चसा । तादृशेनैव राजेन्द्र यादृशेन घटोत्-
कचः ॥ १४ ॥ तस्याप्यतुलनिर्घोषो बहुतोरणचित्रितः । ऋक्ष-
चर्मावनद्धाङ्गो नल्वमात्रो महारथः ॥ १५ ॥ तस्यापि तुरगाः
शीघ्रा हस्तिकाया खरस्वराः । शतं युक्ता महाकाया मांस-
शोणितभोजनाः ॥ १६ ॥ तस्यापि रथनिर्घोषो महामेघरवो-
पमः । तस्यापि सुमहच्चापं दृढज्यं बलवत्तरम् ॥ १७ ॥ तस्या-
प्यक्षसमा बाणा रुक्मपुङ्खाः शिलाशिताः । सोऽपि वीरो महा-
बाहुर्यथैव स घटोत्कचः ॥ १८ ॥ तस्यापि गोमायुबलाभिगुप्तो
बभूव केतुर्ज्वलनार्कतुल्यः । स चापि रूपेण घटोत्कचस्य श्रीमत्तमो
व्याकुलदीपितास्यः ॥ १९ ॥ दीप्ताङ्गदो दीप्तकिरीटमाली बद्ध-
स्रगुष्णीषनिबद्धखड्गः । गदी भुशुण्डी मुसली हली च शरा-
सनी वारणतुल्यवर्ष्मा ॥ २० ॥ रथेन तेनानलवर्च्चसा तदा विद्रा-
वयन् पाण्डववाहिनीं ताम् । रराज संख्ये परिवर्त्तमानो विद्यु-
न्माली मेघ इवान्तरीक्षे ॥ २१ ॥ ते चापि सर्वे प्रवरा नरेन्द्रा

महाबला धर्म्मिणोऽधर्म्मिणश्च । हर्षान्विता युयुधुस्तत्र राजन् सम
न्तत पाण्डवयोधवीरा ॥ २२ ॥

इति द्रोणपर्व्वणि घटोत्कचवधपर्व्वणि अलायुधयुद्धे
सप्तसप्तत्यधिकशततमोऽध्यायः ॥ १७७ ॥

---

सञ्जय उवाच । समागतमभिप्रेक्ष्य भीमकर्म्माणमाहवे । हर्ष-
माहारयाञ्चक्रुः कुरवः सर्व्व एव ते ॥ १ ॥ तथैव तव पुत्रास्ते
दुर्य्योधनपुरोगमाः । अप्लवाः प्लवमासाद्य तर्त्तुकामा इवार्णवम्
॥ २ ॥ पुनर्ज्जातमिवात्मानं मन्वाना पार्थिवास्तदा । अलायुधं
राक्षसेन्द्रं स्वागतेनाभ्यपूजयन् ॥ ३ ॥ तस्मिंस्त्वमानुषे युद्धे वर्त्त-
माने महाभये । कर्णराक्षसयोर्नक्तं दारुणप्रतिदर्शने ॥ ४ ॥
उपप्रैक्षन्त पाञ्चाला स्मयमाना सराजकाः । तथैव तावका
राजन् रक्षमाणास्ततस्ततः ॥ ५ ॥ चुक्रुशुर्न्नेदमस्तीति द्रोण-
द्रौणिकृपादयः । तत् कर्म्म दृष्ट्वा सम्भ्रान्ता हैडिम्बस्य रणाजिरे
॥ ६ ॥ सर्व्वमाविग्नमभवत् हाहाभूतमचेतनम् । तव सैन्य महा-
राज निराशं कर्णजीविते ॥ ७ ॥ दुर्य्योधनस्तु सम्प्रेक्ष्य कर्ण-
मार्त्तिं परां गतम् । अलायुधं राक्षसेन्द्रमाहूयेदमथाब्रवीत् ॥ ८ ॥
एष वैकर्त्तनः कर्णो हैडिम्बेन समागतः । कुरुते कर्म्म सुमह-
द्यदस्यौपयिकं मृधे ॥ ९ ॥ पश्यैतान् पार्थिवान् शूरान् निह-
तान् भैमसेनिना । नानाशस्त्रैरभिहतान् पादपानिव दन्तिना
॥ १० ॥ तवैष भाग समरे राजमध्ये मया कृतः । तवैवानुमते
वीर तं विक्रम्य निबर्हय ॥ ११ ॥ पुरा वैकर्त्तनं कर्णमेष पापो
घटोत्कचः । मायाबलमुपाश्रित्य मा हन्याच्छत्रुकर्षण ॥ १२ ॥
एवमुक्तः स राज्ञा तु राक्षसस्तीव्रविक्रमः । तथेत्युक्त्वा महाबाहु-
र्घटोत्कचमुपाद्रवत् ॥ १३ ॥ ततः कर्णं समुत्सृज्य भैमसेनिरपि
प्रभो । प्रत्यमित्रमुपायान्तं मर्द्दयामास मार्गणैः ॥ १४ ॥ ततः

समभवद्युद्धं क्रुद्धयोराक्षसेन्द्रयो । मत्तयोर्वाशिताहेतोर्द्विपयो-
रिव काननम् ॥ १५ ॥ राक्षसाद्विप्रमुक्तास्तु कर्णोऽपि रथिना
म्वर । अभ्यद्रवद्भीमसेनं रथेनादित्यवर्चसा ॥ १६ ॥ तमायान्त-
मनादृत्य दृष्ट्वा ग्रस्तं घटोत्कचम् । अलायुधेन समरे सिंहेनेव
गवाम्पतिम् ॥ १७ ॥ रथेनादित्यवपुषा भीम प्रहरताम्वर ।
किरन् शरौघान् प्रययावलायुधरथं प्रति ॥ १८ ॥ तमायान्त-
मभिप्रेक्ष्य स तदालायुध प्रभो । घटोत्कचं समुत्सृज्य भीमसेनं
समभ्ययात् ॥ १९ ॥ तं भीम सहसाभ्येत्य राक्षसान्तकर प्रभो ।
सगणं राक्षसेन्द्रं तं शरवर्षैरवाकिरत् ॥ २० ॥ तथैवालायुधो
राजञ्छिलाधौतैरजिह्मगै । अभ्यवर्षत कौन्तेयं पुन पुन-
ररिन्दम ॥ २१ ॥ तथा ते राक्षसा सर्वे भीमसेनमुपाद्रवन् ।
नानाप्रहरणा भीमास्त्वत्सुतानां जयैषिणा ॥ २२ ॥ स
ताड्यमानो बहुभिर्भीमसेनो महाबल । पञ्चभि पञ्चभि सर्वा-
स्तानविध्यच्छितै शरै ॥ २३ ॥ ते युध्यमाना भीमेन राक्षसा
क्रूरबुद्धय । विनद्य महानादान् दुद्रुवुश्च दिशो दश ॥ २४ ॥
तांस्त्रास्यमानान् भीमेन दृष्ट्वा रक्षो महाबलम् । अभिदुद्राव
वेगेन शरैश्चैनमवाकिरत् ॥ २५ ॥ तं भीमसेन समरे तीक्ष्णाग्रै-
रक्षिणोच्छरै । अलायुधस्ततस्तांस्तान् भीमेन विशिखान्रणे ॥२६॥
चिच्छेद कांश्चित समरे त्वरया कांश्चिदग्रहीत् । स तं दृष्ट्वा
राक्षसेन्द्रं भीमो भीमपराक्रम ॥ २७ ॥ गदां चिक्षेप वेगेन वज्र-
पातोपमां तदा । तामापतन्तीं वेगेन गदां ज्वालाकुलां तत
॥ २८ ॥ गदया ताडयामास सा गदा भीममाद्रवत् । स राक्ष-
सेन्द्रं कौन्तेय शरवर्षैरवाकिरत् ॥ २९ ॥ तानप्यस्याकरोन्मोघा-
न्राक्षसो निशितै शरै । ते चापि राक्षसा सर्वे सैनिका भीम-
रूपिण ॥ ४० ॥ शासनाद्राक्षसेन्द्रस्य निजघ्नू रथकुञ्जरान् ।
पाञ्चाला सृञ्जयांश्चैव वाजिन परमद्विपा ॥ ४१ ॥ न शान्ति

लेभिरे तव राक्षसैर्भृशपीड़िता । तं दृष्ट्वा तु महाघोरं वर्त्तमानं महाहवम् ॥ ४२ ॥ अब्रवीत् गुरुपर्य्येष्ठो धनञ्जयमिदं वच । पश्य भीम महाबाहु राक्षसेन्द्रवशङ्गतम् ॥ ४३ ॥ पदमस्यानुगच्छ त्व मा विचारय पाण्डव । धृष्टद्युम्न शिखण्डी च युधामन्यूत्तमौजसौ ॥ ४४ ॥ सहितौ द्रौपदेयाश्च कर्णं यान्तु महारथा । नकुल सहदेवश्च युयुधानश्च वीर्य्यवान् ॥ ४५ ॥ इतरान्राक्षसान् घ्नन्तु शासनात्तव पाण्डव । त्वमपीमां महाबाहो चमू द्रोणपुरस्कृताम् ॥ ४६ ॥ वारयस्व महाबाहो महद्धि भयमागतम् । एवमुक्ते तु कृष्णेन यथोद्दिष्टा रथोत्तमा ॥ ४७ ॥ जग्मुर्वैकर्त्तनं कर्णं राक्षसांश्चेतरान्रणे । अथ पूर्णायतोत्सृष्टैः शरैराशीविषोपमैः ॥ ४८ ॥ धनुश्चिच्छेद भीमस्य राक्षसेन्द्र प्रतापवान् । हयांश्चैव शितैर्बाणैः सारथिञ्च महाबलः ॥ ४९ ॥ जघान मिषत सङ्ख्ये भीमसेनस्य भारत । सोऽवतीर्य्य रथोपस्थाद्धताश्वो हत सारथि ॥ ५० ॥ तस्मै गुर्वीं गदां घोरां स विनद्योत्ससर्ज्ज ह । ततस्तां भीमनिर्घोषामापतन्तीं महागदाम् ॥ ५१ ॥ गदया राक्षसो घोरो निजघान ननाद च । तद्दृष्ट्वा राक्षसेन्द्रस्य घोरं कर्म भयावहम् ॥ ५२ ॥ भीमसेन प्रहृष्टात्मा गदामुग्रां परामृषत् । तयो समभवद्युद्ध तुमुल नररक्षसो ॥ ५३ ॥ गदानिपात सह्रादैर्भुवं कम्पयतो भृशम् । गदाविमुक्तौ तौ भूय समासाद्येतरेतरम् ॥ ५४ ॥ मुष्टिभिर्वज्रसह्रादैरन्योऽन्यमभिजघ्नतु । रथ चक्रैर्युगैरक्षैरधिष्ठानैरुपस्करैः ॥ ५५ ॥ यथासन्नमुपादाय तौ जघ्नतुरमर्षणौ । तौ विक्षरन्तौ रुधिरं समासाद्येतरेतरम् ॥ ५६ ॥ मत्ताविव महानागौ चकृषाते परस्परम् । तदपश्यद्धृषीकेश पाण्डवानां हिते रत । स भीमसेनरक्षार्थं हैडिम्बिं प्रत्यचोदयत् ॥ ५७ ॥

इति द्रोणपर्व्वणि घटोत्कचवधपर्व्वणि अलायुधयुद्धे अष्टसप्तत्यधिकशतोऽध्यायः ॥ १७८ ॥

नामयुतानि च । अवादयन् पाण्डवेयास्तस्मिन्नवरचमि पातिते ॥३४॥ अतीव सा निशा तेषां बभूव विजयावहा । विद्योतमाना विबभौ समन्ताद्दीपमालिनी ॥ ३५ ॥ अलायुधस्य तु शिरो भीमसेनि र्महाबल । दुर्योधनस्य प्रमुखे चिक्षेप गतचेतस ॥ ३६ ॥ अथ दुर्योधनो दृष्ट्वा हत वीरमलायुधम् । बभूव परमोद्विग्न सह सैन्येन भारत ॥ ३७ ॥ तेनह्यस्य प्रतिज्ञात भीमसेनमहं युधि । हन्तेति स्वयमागम्य स्मरता वैरमुत्तमम् ॥ ३८ ॥ ध्रुव स तेन हन्तव्य इत्यमन्यत पार्थिव । जीवितञ्चिरकालाय भ्रातृणामित्यमन्यत ॥ ३९ ॥ स त दृष्ट्वा विनिहत भीमसेनात्मजेन वै । प्रतिज्ञा भीमसेनस्य पूर्णामेवाभ्यमन्यत ॥ ४० ॥

इति द्रोणपर्वणि घटोत्कचवधपर्वणि अलायुधवधे एकोनाशीत्यधिकशततोऽध्याय ॥ १७९ ॥

---

सञ्जय उवाच । निहत्यालायुध रक्ष प्रहृष्टात्मा घटोत्कच । ननाद विविधान्नादान् वाहिन्या प्रमुखे स्थित ॥ १ ॥ तस्य त तुमुल शब्द श्रुत्वा कुञ्जरकम्पनम् । तावकाना महाराज भयमासीत् सुदारुणम् ॥ २ ॥ अलायुधवशन्तु भैमसेनि महाबलम् । दृष्ट्वा कर्णो महाबाहु पाञ्चालान् समुपाद्रवत् ॥ ३ ॥ दशभिर्दशभिर्बाणैर्धृष्टद्युम्नशिखण्डिनौ । दृढै पूर्णायतोत्सृष्टैर्बिभेद नतपर्वभि ॥ ४ ॥ तत परमनाराचैर्युधामन्यूत्तमौजसौ । सात्यकिञ्च रथोदार कम्पयामास मार्गणै ॥ ५ ॥ तेषामप्यस्यता सङ्ख्ये सर्वेषा सव्यदक्षिणम् । मण्डलान्येव चापानि व्यदृश्यन्त जनाधिप ॥ ६ ॥ तेषा ज्यातलनिर्घोषो रथनेमिस्वनश्च ह । मेघानामिव घर्मान्ते बभूव तुमुलो निशि ॥ ७ ॥ ज्यानेमिघोष स्तनयित्नुमान् वै धनुस्तडिन्मण्डलकेतुशृङ्ग । शरौघवर्षाकुलवृष्टि

भीम सङ्ग्रामसेव स बभूव राजन् ॥ ८ ॥ तदद्भुतं शैल इवा-
प्रकम्प्यो वर्षं महाशैलसमानरूप । विध्वंसयामास रणे नरेन्द्र
वैकर्त्तन सवगणावमर्द्दी ॥ ९ ॥ स तोमरैर्वज्रनिपाततुल्यै शितैः
शरै काञ्चनचित्रपुङ्खै । अयुत् व्यपोहन् समरे महात्मा वैकर्त्तन
पुत्रादितैरतस्ते ॥ १० ॥ सञ्छिन्नभिन्नध्वजिनश्च केचित्तीक्ष्णैः
शरैरर्द्दितभिन्नदेहा । केचिद्विसूता विहयाश्च केचिद्वैकर्त्तनेनाशु
कृता बभूवु ॥ ११ ॥ अविन्दमानस्त्वथ शर्म सङ्ख्ये योधिष्ठिरं
तद्बलमभ्यपद्यत । तान् प्रेक्ष्य भग्नान् विमुखीकृतांश्च घटोत्कचो
रोषमतीव चक्रे ॥ १२ ॥ आस्थाय स काञ्चनरत्नचित्रं रथोत्तमं
सिंहवत् सन्ननाद । वैकर्त्तनं कर्णमुपेत्य चापि विव्याध वज्र-
प्रतिमैः पृषत्कैः ॥ १३ ॥ तौ कर्णिनाराचशिलीमुखैश्च नालीक-
दण्डासनिवत्सदन्तैः । वराहकर्णैः सविपाठशृङ्गैः क्षुरप्रसङ्घैश्च
ववर्षतु खम् ॥ १४ ॥ तद्बाणवर्षोत्तममन्तरीक्ष तिर्य्यग्गताभि
समरे रराज । सुवर्णपुङ्खज्वलितप्रभाभिर्विचित्रपुष्पाभिरिव
स्रजोभि ॥ १५ ॥ सम इव तावप्रतिमप्रभावावन्योऽन्यमाजघ्नतु
रुत्तमास्त्रै । तयोर्हि वीरोत्तमयोर्न कश्चिद्ददर्श तस्मिन् समरे
विशेषम् ॥ १६ ॥ अतीव तच्चित्रमतुल्यरूपं बभूव युद्धं रवि-
भीमसून्वो । समाकुलं शस्त्रनिपातघोरं दिवीव राहंशुमतो-
प्रदीप्तम् ॥ १७ ॥

सञ्जय उवाच । घटोत्कचो यदा कर्णं न विशेषयते नृप ।
तत प्रादुश्चकारोग्रमस्त्रमस्त्रविदाम्वर ॥ १८ ॥ तेनास्त्रेण ह्यथान्
पूर्वं निहत्य तस्य राक्षस । सार्थ्यिश्चैव हैडिम्ब क्षिप्रमन्तर
धीयत ॥ १९ ॥

धृतराष्ट्र उवाच । तथा त्वन्तर्हिते तस्मिन् कूटयोधिन
राक्षसे । मामकैः प्रतिपन्नं तन्ममाचक्ष्व सञ्जय ॥ २० ॥

सञ्जय उवाच । अन्तर्हितं राक्षसं तं विदित्वा सम्प्राक्रोशन्

कुरवः सर्व एव । कथं नायं राक्षसः कूटयोधी हन्यात् कर्णं
समरे पच्यमानः ॥ २१ ॥ ततः कर्णो लघुचित्रास्त्रयोधी सर्वा
दिशो व्याहृणोद्वाणजालैः । न वै किञ्चिदप्यपश्याम भूतं तमोभूते
सायकैरन्तरीक्षे ॥ २२ ॥ न चाददानो न च सन्दधानो न चेषुधी
स्पृश्यमानः कराग्रैः । अदृश्यत लाघवात् सूतपुत्रः सर्वैर्बाणै-
श्छादयानोऽन्तरीक्षम् ॥ २३ ॥ ततो मायां विहितामन्तरीक्षे
घोरां भीमां राक्षसीं राक्षसेन । तां पश्यामो लोहिताभ्रप्रकाशां
देदीप्यन्तीमग्निशिखामिवोग्राम् ॥ २४ ॥ ततस्तस्या विद्युतः
प्रादुरासन्नुल्काश्चापि ज्वलिताः कौरवेन्द्र । घोषश्चास्याः प्रादु-
रासीत् सुघोरः सहस्रशो नदतां दुन्दुभीनाम् ॥ २५ ॥ ततः
शराः प्रापतन् रुक्मपुङ्खाः शक्त्यः प्रासा मुषलान्यायुधानि । पर-
श्वधास्तैलधौताश्च खड्गाः प्रदीप्ताग्राः पट्टिशास्तोमराश्च ॥ २६ ॥
मयूखिनः परिघा लोहबद्धा गदाश्चित्राः शितधाराश्च शूलाः ।
गुर्व्यो गदा हेमपट्टावनद्धाः शतघ्न्यश्च प्रादुरासन् समन्तात् ॥ २७ ॥
महाशिलाश्चापतंस्तत्र तत्र सहस्रशः साशनयश्च वज्राः । चक्राणि
चानेकशतक्षुराणि प्रादुर्बभूवुर्ज्वलनप्रभाणि ॥ २८ ॥ तां शक्ति-
पाषाणपरश्वधानां प्रासासिवज्राशनिमुद्गराणाम् । वृष्टिं विशालां
ज्वलितां पतन्तीं कर्णः शरौघैर्न शशाक हन्तुम् ॥ २९ ॥ शरा-
हतानां पततां हयानां वज्राहतानाञ्च महागजानाम् । शिला-
हतानाञ्च महारथानां महान्निनादः पततां बभूव ॥ ३० ॥ सुभीम-
नानाविधशस्त्रपातैर्घटोत्कचेनाभिहतं समन्तात् । दौर्योधनं
तद्बलमार्त्तमासीदावर्त्तमानं ददृशे भ्रमच्च ॥ ३१ ॥ हाहाकृतं
सम्परिवर्त्तमानं संलीयमानञ्च विषण्णरूपम् । ते त्वार्य्यभावात्
पुरुषप्रवीराः पराङ्मुखा न बभूवुस्तदानीम् ॥ ३२ ॥ तां राक्षसीं
घोरतरां सुभीमां वृष्टिं महाशस्त्रमयीं पतन्तीम् । दृष्ट्वा बलौ-
घांश्च निपात्यमानान् महद्भयं तव पुत्रान् विवेश ॥ ३३ ॥ शिवाश्च

वैश्वानरदीप्तजिह्वाः सुभीमनादाः शतशो नदन्तीः । रक्षोगणान्नर्दितयापि वीक्ष्य नरेन्द्रयोधा व्यथिता बभूवुः ॥ ३४ ॥ ते दीप्तजिह्वाननतीक्ष्णदंष्ट्रा विभीषणाः शैलनिकाशकायाः । नभोगताः शक्तिविषक्तहस्ता मेघा व्यमुञ्चन्निव वृष्टिमुग्राम् ॥ ३५ ॥ तेनाहतास्ते शरशक्तिशूलैर्गदाभिरुग्रैः परिघैश्च दीप्तैः । वज्रैः पिनाकैरशनिप्रहारैश्चक्रैः शतघ्न्या मथिताश्च पेतुः ॥ ३६ ॥ शूलाभुशुण्ड्यश्मगुडाः शतघ्न्यः स्थूणाश्च कार्ष्णायसपट्टनद्धाः । अवाकिरंस्तव पुत्रस्य सेना ततो रौद्रं कश्मलं प्रादुरासीत् ॥ ३७ ॥ विकीर्णास्त्रा विहतैरुत्तमाङ्गैः सम्भग्नाङ्गाः शेरते तत्र शूराः । छिन्ना हयाः कुञ्जराश्चावभग्नाः सञ्चूर्णिताश्चैव रथाः शिलाभिः ॥ ३८ ॥ एवं महच्छरवर्षं सृजन्तस्ते यातुधाना भुवि घोररूपाः । मायाः सृष्टास्तत्र घटोत्कचेन नामुञ्चन् वै याचमानं न भीतम् ॥ ३९ ॥ तस्मिन् क्रूरे कुरुवीरावमर्दे कालोत्सृष्टे क्षत्रियाणामभावे । ते वै भग्नाः सहसा व्यद्रवन्त तथाक्रोशन् कौरवाः सर्व एव ॥ ४० ॥ पलायध्वं कौरवा नैतदस्ति सेन्द्रा देवा घ्नन्ति न पाण्डवार्थे । ततो तेषां मज्जतां भारतानां न स्म द्वीपस्तत्र बभूव कश्चित् ॥ ४१ ॥ तस्मिन् संक्रन्दे तुमुले वर्त्तमाने सैन्ये भग्ने क्षीयमाणे कुरूणाम् । अनीकानां प्रविभागे प्रकाशे न ज्ञायन्ते कुरवो नेतरे वै ॥ ४२ ॥ निर्मर्यादे विद्रवे घोररूपे सर्वा दिशः प्रेक्षमाणाश्च शून्याः । तां शस्त्रवृष्टिं सहसा धारयानं कर्णं त्वेकं तत्र राजन्नपश्यन् ॥ ४३ ॥ ततो बाणैराकिरोदन्तरीक्षं दिव्यां मायां योधयन् राक्षसस्य । ह्रीमान् कुर्वन् दुष्करञ्चार्य्यकर्म नैवामुह्यत् संयुगे सूतपुत्त्र ॥ ४४ ॥ ततो भीताः समुदैक्षन्त कर्णं राजन् सर्वे सैन्धवा वाह्लिकाश्च । असंमोहं पूजयन्तोऽस्य संख्ये सम्पश्यन्तो वै विजयं राक्षसस्य ॥ ४५ ॥ तेनोत्सृष्टा चक्रयुक्ता शतघ्नी समं सर्वांश्चतुरोऽश्वान् जघान । ते जानुभिर्जगतीमन्व-

पद्यन् गतासवो निर्दृग्धनासिजिह्वा ॥ ४६ ॥ ततो हताश्वादवरुह्य यानादन्तर्मना कुरुषु प्रद्रवत्सु । दिव्ये चास्त्रे मायया वध्यमाने नैवाव्यथच्चिन्तयन् प्राप्तकालम् ॥ ४७ ॥ ततोऽब्रुवन् कौरवाः सर्व एव कर्णं दृष्ट्वा घोररूपाञ्च मायाम् । शक्त्या रक्षो जहि कर्णाद्य तूर्णं नश्यन्त्येते कुरवो धार्त्तराष्ट्राः ॥ ४८ ॥ करिष्यतः किञ्च नो भीमपार्थौ तपन्तमेनं जहि पापं निशीथे । यो नः सङ्ग्रामाद्घोररूपाद्विमुच्येत् स पार्थान् योत्स्यते संयुगेषु ॥ ४९ ॥ तस्मादेनं राक्षसं घोररूपं शक्त्या जहि त्वं दत्तया वासवेन । मा कौरवाः सर्व एवेन्द्रकल्पा रात्रियुद्धे कर्ण नेशुः सयोधाः ॥ ५० ॥ अवध्यमाने राक्षसे वै निशीथे दृष्ट्वा राजंस्त्रास्यमानं बलञ्च । महत् श्रुत्वा निनदं कौरवाणां मतिं दध्रे शक्तिमोक्षाय कर्णः ॥ ५१ ॥ स वै क्रुद्धः सिंह इवात्यमर्षी नामर्षयत् प्रतिघातं रणेऽसौ । शक्तिं श्रेष्ठां वैजयन्तीमजय्यां समाददे तस्य वधं चिकीर्षुः ॥ ५२ ॥ यासौ राजन्निहिता वर्षपूगान् वधायाजौ सत्कृता पाण्डवस्य । यां वै प्रादात् सूतपुत्राय शक्रः शक्तिं श्रेष्ठां कुण्डलाभ्यां निमाय ॥ ५३ ॥ तां वै घोरां लेलिहानां प्रदीप्तां पाशैर्युक्तामन्तकस्यैव जिह्वाम् । मृत्योः स्वसारं ज्वलमानामिवोल्कां वैकर्त्तनः प्राहिणोद्राक्षसाय ॥ ५४ ॥ तामुत्तमां परकायापहन्त्रीं दृष्ट्वा सौतेर्बाहुसंस्थां ज्वलन्तीम् । भीतं रक्षः सम्प्रदुद्राव राजन् कृत्वात्मानं विन्ध्यपादप्रमाणम् ॥ ५५ ॥ दृष्ट्वा शक्तिं कर्णबाह्वन्तरस्थां नेदुर्भूतान्यन्तरीक्षे नरेन्द्र । ववुर्वातास्तुमुलाश्चापि राजन् सनिर्घाता चाशनिर्गां जगाम ॥ ५६ ॥ सा तां मायां भस्म कृत्वा ज्वलन्ती भित्त्वा गाढं हृदयं राक्षसस्य । ऊर्ध्वं ययौ दीप्यमाना निशायां नक्षत्राणामन्तराण्याविवेश ॥ ५७ ॥ युद्ध्वा चित्रैर्विविधैः शस्त्रपूगैर्दिव्यैर्वीरो राक्षसैर्मानुषैश्च । नदन्नादान् विविधान् भैरवांश्च प्राणानिष्टांस्त्याजितः शक्रशक्त्या ॥ ५८ ॥ इदञ्चान्यच्चित्रमाश्चर्य्य

रूपं चकाराशु कर्म शत्रुक्षयाय । तस्मिन् काले शक्तिनिर्भिन्नमर्मा बभौ राजन् मेघशैलप्रकाशः ॥ ५९ ॥ स तद्रूपं भैरवं भीमकर्मा भीमं कृत्वा भैमसेनिः पपात । हतोऽप्येवं तव सैन्यैकदेशमपोथयत् स्वेन देहेन राजन् ॥ ६० ॥ पतन् रक्षः स्वेन कायेन तूर्णमतिप्रमाणेन विवर्धता च । प्रियं कुर्वन् पाण्डवानां गतासुरक्षौहिणीं तव तूर्णं जघान ॥ ६१ ॥ ततो मिश्राः प्राणदन् सिंहनादैः शङ्खा भेर्यो मुरजाश्चानकाश्च । दग्धां मायां निहतं राक्षसञ्च दृष्ट्वा हृष्टाः प्राणदन् कौरवेयाः ॥ ६२ ॥ ततः कर्णः कुरुभिः पूज्यमानो यथा शक्रो वृत्रवधे मरुद्भिः । अन्वारूढस्तव पुत्रस्य यानं हृष्टश्चापि प्राविशत् तत् स्वसैन्यम् ॥ ६३ ॥

इति द्रोणपर्वणि घटोत्कचवधपर्वणि घटोत्कचवधे
अशीत्यधिकशततमोऽध्यायः ॥ १८० ॥

---

सञ्जय उवाच । हैडिम्बं निहतं दृष्ट्वा विकीर्णमिव पर्वतम् । बभूवुः पाण्डवाः सर्वे शोकबाष्पाकुलेक्षणाः ॥ १ ॥ वासुदेवस्तु हर्षेण महताभिपरिप्लुतः । ननाद सिंहनादेन व्यथयन्निव पाण्डवान् ॥ २ ॥ विनद्य च महानादं पर्यष्वजत पाण्डवम् । स विनद्य महानादमभीषून् सन्नियम्य च ॥ ३ ॥ ननर्त हर्षसंवीतो वातोद्धूत इव द्रुमः । ततः परिष्वज्य पुनः पार्थमास्फोट्य चासकृत् ॥ ४ ॥ रथोपस्थगतो धीमान् प्राणदत् पुनरच्युतः । प्रहर्षं तस्य तं ज्ञात्वा केशवस्य धनञ्जयः ॥ ५ ॥ अर्जुनोऽथाब्रवीद्राजन्नातिहृष्टमना इव । अति हर्षोऽयमस्थाने तवाद्य मधुसूदन ॥ ६ ॥ शोकस्थाने परे प्राप्ते हैडिम्बस्य वधेन तु । विमुखानि च सैन्यानि हतं दृष्ट्वा घटोत्कचम् ॥ ७ ॥ वयञ्च भृशमुद्विग्ना हैडिम्बस्य निपातनात् । नैतत् कारणमल्पं हि भविष्यति जना-

र्द्दन ॥ ८ ॥ तदद्य मम मे पृष्ट सत्यं सत्यवताम्वर। यदेतन्मदस्यन्ते वक्तुमर्हस्यरिन्दम ॥ ९ ॥ धैर्य्यस्य वैकृतं ब्रूहि त्वमद्य मधुसूदन। समुद्रस्येव संक्षोभो मेरोरिव विसर्पणम्। तथैतन्माधव मन्ये तव कर्म जनार्द्दन ॥ १० ॥

वासुदेव उवाच। अतिहर्षमिमं प्राप्तं शृणु मे त्वं धनञ्जय। अतीव मनसः सद्यः प्रसादकरमुत्तमम् ॥ ११ ॥ शक्तिं घटोत्कचे नेमां व्यंसयित्वा महाद्युतिः। कर्णं निहतमेवाजौ विद्धि सद्यो धनञ्जय ॥ १२ ॥ शक्तिहस्तं पुनः कर्णं न लोकेऽस्ति पुमानिह। य एनमभितस्तिष्ठेत् कार्त्तिकेयमिवाहवे ॥ १३ ॥ दिष्ट्यापनीतकवचो दिष्ट्यापहृतकुण्डलः। दिष्ट्या विध्वंसिता शक्तिरमोघास्य घटोत्कचे ॥ १४ ॥ यदि हि स्यात् सकवचस्तथैव स्यात् सकुण्डलः। सामरानपि लोकांस्त्रीनेकः कर्णो जयेद्रणे ॥ १५ ॥ वासवो वा कुबेरो वा वरुणो वा जलेश्वरः। यमो वा नोत्सहेत् कर्णं रणे प्रतिसमासितुम् ॥ १६ ॥ गाण्डीवमुद्यम्य भवांश्चक्रञ्चाहं सुदर्शनम्। न शक्तौ स्वो रणे जेतुं तथा युक्तं नरर्षभम् ॥ १७ ॥ त्वद्धितार्थन्तु शक्रेण मायापहृतकुण्डलः। विहीनकवचश्चायं कृतः परपुरञ्जय ॥ १८ ॥ उत्कृत्य कवचं यस्मात् कुण्डले विमले च ते। प्रादाच्छक्राय कर्णो वै तस्माद्वैकर्त्तनः कृतः ॥ १९ ॥ आशीविष इव क्रुद्धः स्तम्भितो मन्त्रतेजसा। तथाद्य भाति कर्णो मे शान्तज्वाल इवानलः ॥ २० ॥ यदाप्रभृति कर्णाय शक्तिर्दत्ता महात्मना। वासवेन महाबाहो प्राप्ता यासौ घटोत्कचम् ॥ २१ ॥ कुण्डलाभ्यां निनायाथ दिव्येन कवचेन च। तां प्राप्यामन्यत वृष सततं त्वां हतं रणे ॥ २२ ॥ एवङ्गतोऽपि शक्योऽयं हन्तुं नान्येन केनचित्। ऋते त्वां पुरुषव्याघ्र शपे सत्येन चानघ ॥२३॥ ब्रह्मण्यः सत्यवादी च तपस्वी नियतव्रतः। रिपुष्वपि दयावांश्च तस्मात् कर्णो वृषः स्मृतः ॥ २४ ॥ युद्धशौण्डो महाबाहुर्नित्योद्यत-

शरासनः । केशरीव वने मर्द्दन्मत्तान्मातङ्गयूथपान् ॥ २५ ॥ विमर्द्दयन्धार्त्तराष्ट्रांस्तान् कुरुते रणमूर्द्धनि । मध्यङ्गत इवादित्यो यो न शक्य उदीक्षितुम् ॥ २६ ॥ त्वदीयैः पुरुषव्याघ्र योधमुख्यैर्महात्मभिः । शरजालसहस्रांशुः शरदीव दिवाकरः ॥ २७ ॥ तपान्ते जलदो यद्वत् शरधाराः क्षरन्प्रभुः । दिव्यास्त्रजलदः कर्णः पर्जन्य इव वृष्टिमान् ॥ २८ ॥ त्रिदशैरपि चाभ्यद्भिः शर-वर्षं समन्ततः । अशक्यस्तद्वयं जेतुं सवाङ्गमांसशोणितम् ॥ २९ ॥ कवचेन विहीनश्च कुण्डलाभ्याञ्च पाण्डव । सोऽद्य मानुषतां प्राप्तो विमुक्तः शक्रदत्तया ॥ ३० ॥ एको हि योगोऽस्य भवेद्वधाय छिद्रे ह्येनं स्वप्रमत्तः प्रमत्तम् । कृच्छ्रप्राप्तं रथचक्रे निमग्ने हन्याः पूर्वं त्वन्तु संज्ञां विज्ञाय ॥ ३१ ॥ न ह्युद्यतास्त्रं युधि हन्यादजय्य-मप्येकवीरो बलजित् सवज्रः । जरासन्धश्चेदिराजो महात्मा महा-बाहुश्चैकलव्यो निषादः ॥ ३२ ॥ एकैकशो निहताः सर्व एते योगैस्तैस्तैस्त्वद्धितार्थं मयैव । अथापरे निहता राक्षसेन्द्रा हिडिम्ब-किर्मीरबकप्रधानाः । अलायुधः परसैन्यावमर्दी घटोत्कचश्चोग्र-कर्मावमर्दी ॥ ३३ ॥

इति द्रोणपर्वणि घटोत्कचवधपर्वणि कृष्णहर्षे
एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥

---

अर्जुन उवाच । कथमस्मद्धितार्थं ते कैश्च योगैर्जनार्दन । जरासन्धप्रभृतयो घातिताः पृथिवीश्वराः ॥ १ ॥

वासुदेव उवाच । जरासन्धश्चेदिराजो नैषादिश्च महाबलः । यदि स्युर्न हताः पूर्वमिदानीं स्युर्भयङ्कराः ॥ २ ॥ दुर्योधन-स्तानवश्यं वृणुयाद्रथसत्तमान् । तेऽस्माभिर्नित्यविद्विष्टाः संश्रये-युः कौरवान् ॥ ३ ॥ ते हि वीरा महेष्वासाः कृतास्त्राः दृढ-

योधिनः। धार्त्तराष्ट्रस्य ते सर्वे रक्षेयुरमरा इव ॥ ४ ॥ सूतपुत्रो जरासन्धश्चेदिराजो निपातिताः। सुयोधनं समाश्रित्य जयेयुः पृथिवीमिमाम् ॥ ५ ॥ योगैरपि हतास्ते यैस्तन्मे शृणु धनञ्जय। अजय्या हि मृधे योगादृते ते दैवतैरपि ॥ ६ ॥ एकैको हि पृथक् तेषां समस्तां सुरवाहिनीम्। योधयेत् समरे पार्थ लोकपालाभिरक्षिताम् ॥ ७ ॥ जरासन्धोऽतिसंक्रुद्धो रौहिणेयप्रधर्षितः। अस्मद्वधार्थं चिक्षेप गदां वै सर्वघातिनीम् ॥ ८ ॥ सीमन्तमिव कुर्वाणा नभसः पावकप्रभाम्। व्यदृश्यत पतन्ती सा शक्रमुक्ता इवाशनिः ॥ ९ ॥ तामापतन्तीं दृष्ट्वैव गदां रौहिणिनन्दनः। प्रतिघातार्थमस्त्रं वै स्थूणाकर्णमवासृजत् ॥ १० ॥ अस्त्रवेगप्रतिहता सा गदा प्रापतद्भुवि। दारयन्ती धरां देवीं कम्पयन्तीव पर्वतान् ॥ ११ ॥ तत्र स्म राक्षसी घोरा जरा नाम सुविक्रमा। सन्धयामास तं राजन् जरासन्धमरिन्दमम् ॥ १२ ॥ द्वाभ्यां जातं स मातृभ्यामर्द्धदेहं पृथक् पृथक्। तया स सन्धितो यस्माज्जरासन्धस्ततोऽभवत् ॥ १३ ॥ सा तु भूमिं गता पार्थ हता ससुतबान्धवा। गदया तेन चास्त्रेण स्थूणाकर्णेन राक्षसी ॥ १४ ॥ विनाभूतः स गदया जरासन्धो महामृधे। निहतो भीमसेनेन पश्यतस्ते धनञ्जय ॥ १५ ॥ यदि हि स्याद्गदापाणिर्जरासन्धः प्रतापवान्। सेन्द्रा देवा न तं हन्तुं रणे शक्ता नरोत्तम ॥ १६ ॥ त्वद्धितार्थञ्च नैषादिरङ्गुष्ठेन वियोजितः। द्रोणेनाचार्य्यकं कृत्वा छद्मना सत्यविक्रम ॥ १७ ॥ स हि बद्धाङ्गुलित्राणो नैषादिर्दृढविक्रम। अतिमानी वनचरो बभौ राम इवापरः ॥ १८ ॥ एकलव्यं हि साङ्गुष्ठमशक्ता देवदानवाः। सराक्षसोरगाः पार्थ विजेतुं युधि कर्हिचित् ॥ १९ ॥ किमु मानुषमात्रेण शक्यः सम्प्रति वीक्षितुम्। दृढमुष्टिः कृती नित्यमस्यमानो दिवानिशम् ॥ २० ॥ त्वद्धितार्थन्तु स मया हतः सङ्ग्राममूर्द्धनि। चेदिराजो

हि विक्रान्तः प्रत्यक्षं निहतस्तव ॥ २१ ॥ स चाप्यशक्यः सङ्ग्रामे
जेतुं सर्वैः सुरासुरैः । वधार्थं तस्य जातोऽहमन्येषाञ्च सुर-
द्विषाम् ॥ २२ ॥ त्वत्सहायो नरव्याघ्र लोकानां हितकाम्यया ।
हिडिम्बवककिर्मीरा भीमसेनेन पातिताः ॥ २३ ॥ रावणेन सम-
प्राणा ब्रह्मयज्ञविनाशनः । हतस्तथैव मायावी हैडिम्बेनाप्यला-
युधः ॥ २४ ॥ हैडिम्बश्चाप्युपायेन शक्त्या कर्णेन पातितः । यदि
ह्येनं नाहनिष्यत् कर्णः शक्त्या महामृधे ॥ २५ ॥ मया वध्यो-
ऽभविष्यत् स भैमसेनिर्घटोत्कचः । मया न निहतः पूर्वमेष युष्मत्-
प्रियेप्सया ॥ २६ ॥ एष हि ब्राह्मणद्वेषी यज्ञद्वेषी च राक्षसः ।
यज्ञहन्ता च पापात्मा तस्मादेव निपातितः ॥ २७ ॥ व्यंसिता
चाप्युपायेन शक्रदत्ता मयानघ । ये हि धर्मस्य लोप्तारो वध्यास्ते
मम पाण्डव ॥ २८ ॥ धर्मसंस्थापनार्थाय प्रतिज्ञैषा मया कृता ।
ब्रह्म सत्यं दमः शौचं धर्मो ह्रीः श्रीर्धृतिः क्षमा ॥ २९ ॥ यत्र
यत्र भवेन्नित्यमहं तत्रैव सदा । अप्रमादस्त्वया कार्यः कर्णं
वैकर्तनं प्रति ॥ ३० ॥ उपदेक्ष्याम्युपायेन येन तं प्रसहिष्यसि ।
सुयोधनञ्चापि रणे हनिष्यति वृकोदरः ॥ ३१ ॥ तस्य चापि
वधोपायं वक्ष्ये च तव पाण्डव । वर्धते तुमुलस्त्वेष शब्दः परचमूं
प्रति ॥ ३२ ॥ विद्रवन्ति हि सैन्यानि त्वदीयानि दिशो दश ।
लब्धलक्ष्या हि कौरव्या विधमन्ति चमूं तव । दहत्येव च नः
सङ्ख्ये द्रोणः प्रहरतां वरः ॥ ३३ ॥

इति द्रोणपर्वणि घटोत्कचवधपर्वणि कृष्णवाक्ये
द्व्यशीत्यधिकशततमोऽध्यायः ॥ १८२ ॥

---

धृतराष्ट्र उवाच । एकवीरवधे मोघा शक्तिः सूतात्मजे हि
वै । कस्मात् सर्वान् समुत्सृज्य स तां पार्थे न मुक्तवान् ॥ १ ॥

तस्मिन् हते हता मन्ये सर्वे सृञ्जयपाण्डवाः । फाल्गुनस्य वधे
कस्माद्युद्धे न जयमाहरे ॥ २ ॥ आहूतो न निवर्त्तेयमिति तेन
व्रतं कृतम् । स्वयमाह्वयितव्यश्च सूतपुत्रेण फाल्गुनः ॥ ३ ॥
ततो द्वैरथमानीय फाल्गुनं शक्रदत्तया । न जघान वृष कस्मा-
त्तन्ममाचक्ष्व सञ्जय ॥ ४ ॥ नूनं बुद्धिविहीनश्चाप्यसहायश्च मे
सुतः । शत्रुभिर्व्यंसितः पापः स कथं नु जयेदरीन् ॥ ५ ॥ या
ह्यस्य परमा शक्तिर्जयस्य च परायणा । सा शक्तिर्वासुदेवेन
व्यंसिता च घटोत्कचे ॥ ६ ॥ कुणेर्यथा हस्तगतं ह्रियेत् फलं
बलीयसा । तथा शक्तिरमोघा वा मोघीभूता घटोत्कचे ॥ ७ ॥
यथा वराहस्य शुनश्च युद्धे तयोरभावे श्वपचस्य लाभः । मन्ये
विद्वन् वासुदेवस्य तद्वद्वै लाभः कर्णहैडिम्बयोर्वै ॥ ८ ॥ घटोत्-
कचो यदि हन्याद्धि कर्णं परो लाभः स भवेत् पाण्डवानाम् ।
वैकर्त्तनो यदि वा तन्निहन्यात्तथा कृत्यं शक्तिनाशात् कृतं स्यात्
॥ ९ ॥ इति प्राज्ञ प्रज्ञयैव विचार्य्य घटोत्कचं सूतपुत्रेण युद्धे ।
अघातयद्वासुदेवो नराग्र्यः प्रियं कुर्वन् पाण्डवानां हितञ्च ॥ १० ॥
सञ्जय उवाच । एतच्चिकीर्षितं ज्ञात्वा कर्णस्य मधुहा नृप ।
नियोजयामास तदा द्वैरथे राक्षसेश्वरम् ॥ ११ ॥ घटोत्कचं
महावीर्य्यं महाबुद्धिर्जनार्द्दनः । अमोघाया विघातार्थं राजन्
दुर्मन्त्रिते तव ॥ १२ ॥ तदैव कृतकार्य्या हि वयं स्याम कुरूद्वह ।
न रक्षेद्यदि कृष्णस्तं कर्णात् पार्थं महारथम् ॥ १३ ॥ साश्व-
ध्वजरथः सङ्ख्ये धृतराष्ट्र हतो भवेत् । विना जनार्द्दनं पार्थो
योगानामीश्वरं प्रभुम् ॥ १४ ॥ तैस्तैरुपायैर्बहुभी रक्ष्यमाणः स
पार्थिव । जयत्यभिमुखाञ्छत्रून् पार्थः कृष्णेन पालितः ॥ १५ ॥
सविशेषात्त्वमोघाया कृष्णो रक्षति पाण्डवान् । हन्यात् क्षिप्रं
हि कौन्तेयं शक्तिर्वृक्षमिवाशनिः ॥ १६ ॥
धृतराष्ट्र उवाच । विरोधी च कुमन्त्री च प्राज्ञमानी ममा

सञ्जय। यस्यैव समतिक्रान्तो बधोपायो जयं प्रति ॥ १७ ॥ स वा कर्णो महाबुद्धिः सर्व्वशस्त्रभृताम्वर। न मुक्तवान् कथं सूत तामामोघां धनञ्जये ॥ १८ ॥ तवापि समतिक्रान्तमेतद्गावल्गणे कथम्। एतमर्थं महाबुद्धे यत्त्वया नावबोधितः ॥ १९ ॥

सञ्जय उवाच। दुर्य्योधनस्य शकुनेर्म्मम दुःशासनस्य च। रात्रौ रात्रौ भवत्येषा नित्यमेव समर्थना ॥ २० ॥ श्वः सर्व्वसैन्यमुत्सृज्य जहि कर्ण धनञ्जयम्। प्रेष्यवत् पाण्डुपाञ्चालानुपभोक्ष्यामहे ततः ॥ २१ ॥ अथ वा निहते पार्थे पाण्डुष्वन्यतमं ततः। स्थापयेद्युधि वार्ष्णेयस्तस्मात् कृष्णो निपात्यताम् ॥ २२ ॥ कृष्णो हि मूलं पाण्डूनां पार्थः स्कन्ध इवोद्गतः। शाखा इवेतरे पार्थाः पाञ्चालाः पत्रसंज्ञकाः ॥ २३ ॥ कृष्णाश्रयाः कृष्णबलाः कृष्णनाथाश्च पाण्डवाः। कृष्णः परायणञ्चैषां ज्योतिषामिव चन्द्रमाः ॥ २४ ॥ तस्मात् पर्णानि शाखाश्च स्कन्धञ्चोत्सृज सूतज। कृष्णं हि विद्धि पाण्डूनां मूलं सर्व्वत्र सर्व्वदा ॥ २५ ॥ हन्याद्यदि हि दाशार्हं कर्णो यादवनन्दनम्। कृत्स्ना वसुमती राजन् वशे ते स्यान्न संशयः ॥ २६ ॥ यदि स निहतः शयीत भूमौ यदुकुलपाण्डवनन्दनो महात्मा। ननु तव वसुधा नरेन्द्र सर्व्वा सगिरिसमुद्रवना वशं प्रयात ॥ २७ ॥ सा तु बुद्धिः कृताप्येव जागर्त्ति त्रिदशेश्वरे। अप्रमेये हृषीकेशे युद्धकाले व्यमुह्यत ॥ २८ ॥ अर्जुनञ्चापि कौन्तेयं सदा रक्षति केशवः। न ह्येनमैच्छत् प्रमुखे सौतेः स्थापयितुं रणे ॥ २९ ॥ अन्यांश्चास्मै रथोदारानुपस्थापयदच्युतः। अमोघां तां कथं शक्तिं मोघां कुर्य्यामिति प्रभो ॥ ३० ॥ यतश्चैव रक्षति पार्थं कृष्णो महामनाः। आत्मानं स कथं राजन्न रक्षेत् पुरुषोत्तमः ॥ ३१ ॥ परिचिन्त्य तु पश्यामि चक्रायुधमरिन्दमम्। न सोऽस्ति त्रिषु लोकेषु यो जयेत जनार्द्दनम् ॥ ३२ ॥

सञ्जय उवाच। ततः कृष्णं महाबाहुः सात्यकिः सत्यविक्रमः।

अपृच्छद्रथशार्दूलं कर्णं प्रति महारथम् ॥ ३३ ॥ अयञ्च प्रत्ययः कर्णे शक्त्या चामितविक्रम । किमर्थं सूतपुत्रेण न मुक्ता फाल्गुने तदा ॥ ३४ ॥

वासुदेव उवाच । दुःशासनश्च कर्णश्च शकुनिश्च ससैन्धवः । सततं मन्त्रयन्ति स्म दुर्योधनपुरोगमाः ॥ ३५ ॥ कर्ण कर्ण महेष्वास रणेऽमितपराक्रम । नान्यस्य शक्तिरेषा ते मोक्तव्या जयतां वर ॥ ३६ ॥ ऋते महारथात् पार्थात् कुन्तीपुत्राद्धनञ्जयात् । स हि तेषामतियशा देवानामिव वासवः ॥ ३७ ॥ तस्मिन् विनिहते सर्वे पाण्डवाः सृञ्जयैः सह । भविष्यन्ति गतात्मानः सुरा इव निरग्नयः ॥ ३८ ॥ तथेति च प्रतिज्ञातं कर्णेन शिनिपुङ्गव । हृदि नित्यन्तु कर्णस्य वधो गाण्डीवधन्वनः ॥ ३९ ॥ अहमेव तु राधेयं मोहयामि युधाम्वर । ततो नावासृजच्छक्तिं पाण्डवे श्वेतवाहने ॥ ४० ॥ फाल्गुनस्य हि तं मृत्युमनिवार्य्यं युयुत्सतः । न निद्रा न च मे हर्षो मनसोऽस्ति युधाम्वर ॥ ४१ ॥ घटोत्कचे व्यंसिता तु दृष्ट्वा तां शिनिपुङ्गव । मृत्योरास्यान्तरान्मुक्तं पश्याम्यद्य धनञ्जयम् ॥ ४२ ॥ न पिता न च मे माता न यूयं भ्रातरस्तथा । न च प्राणास्तथा रक्ष्या यथा बीभत्सुराहवे ॥ ४३ ॥ त्रैलोक्यराज्याद्यत्किञ्चिद्भवेदन्यत् सुदुर्लभम् । नेच्छेयं सात्वताहं तद्विना पार्थं धनञ्जयम् ॥ ४४ ॥ अतः प्रहर्षः सुमहान् युयुधानाद्य मेऽभवत् । मृतं प्रत्यागतमिव दृष्ट्वा पार्थं धनञ्जयम् ॥ ४५ ॥ अतश्च प्रहितो युद्धे मया कर्णाय राक्षसः । न ह्यन्यः समरे रात्रौ शक्तः कर्णं प्रबाधितुम् ॥ ४६ ॥

सञ्जय उवाच । इति सात्यकये प्राह तदा देवकिनन्दनः । धनञ्जयहिते युक्तस्तत्प्रिये सततं रतः ॥ ४७ ॥

इति द्रोणपर्वणि घटोत्कचवधपर्वणि कृष्णवाक्ये त्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥

धृतराष्ट्र उवाच । कर्णदुर्योधनादीनां शकुनेः सौबलस्य च । अपनीतं महत्तात तव चैव विशेषतः ॥ १ ॥ यदा जानीत तां शक्तिमेकघ्नीं सततं रणे । अनिवार्य्यामसह्याञ्च देवैरपि सवासवैः ॥ २ ॥ सा किमर्थं कर्णेन प्रवृत्ते समरे पुरा । न देवकीसुते मुक्ता फाल्गुने वापि सञ्जय ॥ ३ ॥

सञ्जय उवाच । सङ्ग्रामाद्विनिवृत्तानां सर्व्वेषां नो विशाम्पते । रात्रौ कुरुकुलश्रेष्ठ मन्त्रो नः समजायत ॥ ४ ॥ प्रभातकाले श्वोभूते केशवायार्जुनाय वा । शक्तिरेषा विमोक्तव्या कर्ण कर्णेति नित्यशः ॥ ५ ॥ ततः प्रभातसमये राजन् कर्णस्य दैवतैः । अन्येषाञ्चैव योधानां सा बुद्धिर्नश्यते पुनः ॥ ६ ॥ दैवमेव परं मन्ये यत् कर्णो हस्तसंस्थया । न जघान रणे पार्थं कृष्णं वा देवकीसुतम् ॥ ७ ॥ तस्य हस्तस्थिता शक्तिः कालरात्रिरिवोद्यता । दैवोपहतबुद्धित्वान्न तां कर्णो विमुक्तवान् ॥ ८ ॥ कृष्णे वा देवकीपुत्रे मोहितो देवमायया । पार्थे वा शक्रकल्पे वै वधार्थं वासवीं विभो ॥ ९ ॥

धृतराष्ट्र उवाच । दैवेनैव हता यूयं स्वबुद्ध्या केशवेन च । गता हि वासवी हत्वा तृणभूतं घटोत्कचम् ॥ १० ॥ कर्णश्च मम पुत्राश्च सर्व्वे चान्ये च पार्थिवाः । अनेन दुष्प्रणीतेन गता वैवस्वतक्षयम् ॥ ११ ॥ भूय एव च मे शंस यथा युद्धमवर्त्तत । कुरूणां पाण्डवानाञ्च हैडिम्बे निहते तदा ॥ १२ ॥ ये च तेऽभ्यद्रवन् द्रोणं व्यूढानीकाः प्रहारिणः । सृञ्जयाः सह पाञ्चालैस्तेऽप्यकुर्व्वन् कथं रणम् ॥ १३ ॥ सौमदत्तेर्वधाद्द्रोणमायान्तं सैन्धवस्य च । अमर्षाज्जीवितं त्यक्त्वा गाहमानं वरूथिनीम् ॥ १४ ॥ जृम्भमाणमिव व्याघ्रं व्यात्ताननमिवान्तकम् । कथं प्रत्युद्ययुर्द्रोणमस्यन्तं पाण्डुसृञ्जयाः ॥ १५ ॥ आचार्य्यं ये च तेऽरक्षन् दुर्य्योधनपुरोगमाः । द्रौणिकर्णकृपास्तात ते वाकुर्व्वन् किमाहवे ॥ १६ ॥

भारद्वाजं जिघांसन्तौ धनञ्जयवृकोदरौ । समाच्छन्नावमर्षौ युद्धे
कथं संजय शंस मे ॥ १७ ॥ भिन्न राजवधेनेमे घटोत्कचवधेन ते ।
अमर्षिता सुसंरब्धा रणशूराः कथं निशि ॥ १८ ॥

सहाय मे महाबाहो प्रियोऽस्याद्य प्रियश्च मे । तेन विन्दामि
वार्ष्णेय कश्मलं शोकतापितः ॥ ३४ ॥ पश्य सैन्यानि वार्ष्णेय
द्राव्यमाणानि कौरवैः । द्रोणकर्णौ च यत्तौ पश्य युद्धे महा-
रथौ ॥ ३५ ॥ निशीथे पाण्डवं सैन्यमेतत् पश्य प्रमर्द्दितम् ।
गजाभ्यामिव मत्ताभ्यां यथा नलवनं महत् ॥ ३६ ॥ अनादृत्य
बलं बाह्वोर्भीमसेनस्य माधव । चित्रास्त्रताञ्च पार्थस्य विक्रमन्ति
स्म कौरवाः ॥ ३७ ॥ एष द्रोणश्च कर्णश्च राजा चैव सुयोधनः ।
निहत्य राक्षसं युद्धे हृष्टा नर्दन्ति संयुगे ॥ ३८ ॥ कथमस्मासु
जीवत्सु त्वयि चैव जनार्द्दन । हैडिम्बः प्राप्तवान् मृत्युं सूत-
पुत्रेण सङ्गतः ॥ ३९ ॥ कदर्थीकृत्य नः सर्वान् पश्यतः सव्य-
साचिनः । निहतो राक्षसः कृष्ण भैमसेनिर्महाबलः ॥ ४० ॥
यदाभिमन्युर्निहतो धार्त्तराष्ट्रैर्दुरात्मभिः । नासीत्तत्र रणे कृष्ण
सव्यसाची महारथः ॥ ४१ ॥ निरुद्धाश्च वयं सर्वे सैन्धवेन महा-
त्मना । निमित्तमभवद्द्रोणः सपुत्रस्तत्र कर्म्मणि ॥ ४२ ॥ उप-
दिष्टो वधोपायः कर्णस्य गुरुणा स्वयम् । व्यायच्छतश्च खड्गेन
द्विधा खड्गं चकार ह ॥ ४३ ॥ व्यसने वर्त्तमानस्य कृतवर्म्मा
नृशंसवत् । अश्वान् जघान सहसा तथोभौ पार्ष्णिसारथी ॥ ४४ ॥
तथेतरे महेष्वासाः सौभद्रं युधि पातयन् । अल्पे च कारणे कृष्ण
हतो गाण्डीवधन्वना ॥ ४५ ॥ सैन्धवो यादवश्रेष्ठ तच्च नातिप्रियं
मम । यदि शत्रुवधो न्याय्यो भवेत् कर्त्तुञ्च पाण्डवैः ॥ ४६ ॥
द्रोणकर्णौ रणे पूर्वं हन्तव्याविति मे मतिः । एतौ मूलं हि
दुःखानामस्माकं पुरुषर्षभ ॥ ४७ ॥ एतौ रणे समासाद्य समा-
श्वस्तः सुयोधनः । यत्र वध्यो भवेद्द्रोणः सूतपुत्रश्च सानुगः ॥ ४८ ॥
तत्रावधीन्महाबाहो सैन्धवं दूरवासिनम् । अवश्यन्तु मया कार्य्यः
सूतपुत्रस्य निग्रहः ॥ ४९ ॥ ततो यास्याम्यहं वीर सूतपुत्र-
जिघांसया । भीमसेनो महाबाहुर्द्रोणानीकेन सङ्गतः ॥ ५० ॥

एवमुक्त्वा ययौ कृष्णं त्वरमाणो युधिष्ठिरः। स विस्फार्य्य महच्चापं
शङ्खं प्रध्माप्य भैरवम् ॥ ५१ ॥ ततो रथसहस्रेण गजानाञ्च शतै-
स्त्रिभिः। वाजिभिः पञ्चसाहस्रैः पाञ्चालैः प्रभद्रकैः ॥ ५२ ॥ वृतः
शिखण्डी त्वरितो राजानं पृष्ठतोऽन्वयात्। ततो भेरीः समाजघ्नुः
शङ्खान् दध्मुश्च दंशिताः ॥ ५३ ॥ पाञ्चालाः पाण्डवाश्चैव युधि-
ष्ठिरपुरोगमाः। ततोऽब्रवीन्महाबाहुर्वासुदेवो धनञ्जयम् ॥ ५४ ॥
एष प्रयाति त्वरितः क्रोधाविष्टो युधिष्ठिरः। जिघांसुः सूतपुत्रस्य
तेऽस्योपेक्षा न युज्यते ॥ ५५ ॥ एवमुक्त्वा हृषीकेशः शीघ्रमश्वा-
नचोदयत्। दूराच्च यातं राजानमन्वगच्छज्जनार्द्दनः ॥ ५६ ॥
तं दृष्ट्वा सहसायान्तं सूतपुत्रजिघांसया। शोकोपहतसङ्कल्पं
दह्यमानमिवाग्निना। अभिगम्याब्रवीद्व्यासो धर्मपुत्रं युधिष्ठिरम्
॥ ५७ ॥

व्यास उवाच। कर्णमासाद्य सङ्ग्रामे दिष्ट्या जीवति
फाल्गुनः। सव्यसाचिवधाकाङ्क्षी शक्तिं रक्षितवान् हि सः ॥ ५८ ॥
न चागाद्द्वैरथं जिष्णुर्दिष्ट्या तु भरतर्षभ। सृजेतां स्पर्द्धिनावेतौ
दिव्यान्यस्त्राणि सर्वशः ॥ ५९ ॥ वध्यमानेषु चास्त्रेषु पीड़ितः
सूतनन्दनः। वासवीं समरे शक्तिं ध्रुवं मुञ्चेद्युधिष्ठिर ॥ ६० ॥
ततो भवेत्ते व्यसनं घोरं भरतसत्तम। दिष्ट्या रक्षो हतं युद्धे
सूतपुत्रेण मानद ॥ ६० ॥ वासवीं कारणं कृत्वा कालेनापि
हतो ह्यसौ। तवैव कारणाद्रक्षो निहतं तात संयुगे ॥ ६१ ॥
मा क्रुधो भरतश्रेष्ठ मा च शोके मनः कृथाः। प्राणिनामिह
सर्वेषामेषा निष्ठा युधिष्ठिर ॥ ६२ ॥ भ्रातृभिः सहितः सर्वैः
पार्थिवैश्च महात्मभिः। कौरवान् समरे सर्वानभियुध्यस्व भारत
॥ ६३ ॥ पञ्चमे दिवसे चैव पृथिवी ते भविष्यति। नित्यञ्च
पुरुषव्याघ्र धर्ममेव विचिन्तय ॥ ६४ ॥ आनृशंस्यं तपो दानं

धर्मा सत्यञ्च पाण्डव। येवञ्च परमप्रोतो यतो धर्मस्ततो जयः।
इत्युक्ता पाण्डवं व्यासस्तत्रैवान्तरधीयत ॥ ६५ ॥

इति द्रोणपर्व्वणि घटोत्कचवधपर्व्वणि व्यासवाक्ये
चतुरशीत्यधिकशततोऽध्यायः समाप्तञ्च घटोत्कचवधपर्व्व ॥ १८४ ॥

---

अथ द्रोणवधपर्व्व।

सञ्जय उवाच। व्यासेनैवमथोक्तस्तु धर्मराजो युधिष्ठिरः।
स्वयं कर्णवधाद्वीरो निवृत्तो भरतर्षभ ॥ १ ॥ घटोत्कचे तु निहते
सूतपुत्रेण ता निशाम्। दुःखामर्षवशं प्राप्तो धर्मराजो युधिष्ठिरः
॥ २ ॥ दृष्ट्वा भीमेन महतीं वार्य्यमाणाञ्चमूं तव। धृष्टद्युम्न-
मुवाचेदं कुम्भयोनिं निवारय ॥ ३ ॥ त्वं हि द्रोणविनाशाय
समुत्पन्नो हुताशनात्। शरः कवची खड्गी धन्वी च पर-
तापनः ॥ ४ ॥ अभिद्रव रणे हृष्टो न च ते भीः कथञ्चन। जन-
मेजयः शिखण्डी च दौर्मुखिश्च यशोधरः ॥ ५ ॥ अभिद्रवन्तु
संक्रुद्धाः कुम्भयोनिं समन्ततः। नकुलः सहदेवश्च द्रौपदेयाः
प्रभद्रकाः ॥ ६ ॥ द्रुपदश्च विराटश्च पुत्रभ्रातृसमन्वितौ। सात्यकिः
केकयाश्चैव पाण्डवाश्च धनञ्जयः ॥ ७ ॥ अभिद्रवन्तु वेगेन भार-
द्वाजं जिघांसवः। तथैव रथिनः सर्वे हस्त्यश्वं यश्च किञ्चन ॥ ८ ॥
पातयन्तु रथे द्रोणं पातयन्तु महाहवम्। तथाज्ञप्तास्तु ते
सर्वे पाण्डवेन महात्मना ॥ ९ ॥ अभ्यद्रवन्त वेगेन कुम्भयोनिं
जयैषिणः। आगच्छतस्तान् सहसा सर्वोद्योगेन पाण्डवान् ॥१०॥
प्रतिजग्राह समरे द्रोणः शस्त्रभृतांवरः। ततो दुर्योधनो राजा
सर्वोद्योगेन पाण्डवान् ॥ ११ ॥ अभ्यद्रवत् सुसंक्रुद्ध इच्छन्
द्रोणस्य जीवितम्। ततः प्रववृते युद्धं श्रान्तवाहनसैनिकम्
॥ १२ ॥ पाण्डवानां कुरूणाञ्च गर्ज्जतामितरेतरम्। निद्रान्धाश्च

महाराज परिश्रान्ताश्च संयुगे ॥ १३ ॥ नाभ्यजानन्त समरे काश्चि-
च्चेष्टा महारथाः । त्रियामा रजनी चैषा घोररूपा भयानका
॥ १४ ॥ सहस्रयामप्रतिमा बभूव प्राणहारिणी । बध्यतां च
तथा तेषां क्षतानां च विशेषतः ॥ १५ ॥ अहोरात्रिः समाजज्ञे
निद्रान्धानां विशेषतः । सर्वे ह्यासन् निरुत्साहाः क्षत्रिया दीन
चेतसः ॥ १६ ॥ तव चैव परेषां च गतास्त्रा विगतेषवः । ते
तदा पारयन्तश्च ह्रीमन्तश्च मनस्विनः ॥ १७ ॥ स्वधर्ममनुपश्यन्तो
न जहुः स्वामनीकिनीम् । शस्त्राण्यन्ये समुत्सृज्य निद्रान्धाः
शेरते जनाः ॥ १८ ॥ गजेष्वन्ये रथेष्वन्ये हयेष्वन्ये च भारत ।
निद्रान्धा नो बुबुधिरे काश्चिच्चेष्टा नराधिप ॥ १९ ॥ ते नान्ये समरे
योधा प्रेषयन्त यमक्षयम् । स्वप्नायमानास्त्वपरे परानिति विचे-
तसः ॥ २० ॥ आत्मानं समरे जघ्नुः स्वानेव च परानपि । नाना-
वाचो विमुञ्चन्तः प्रसुप्तास्ते महाहवे ॥ २१ ॥ अस्माकं तु महा-
राज परेभ्यो बहवो जनाः । योद्धव्यमिति तिष्ठन्तो निद्रासंसक्त
लोचनाः ॥ २२ ॥ संसर्पन्तो रणे केचिन्निद्रान्धास्ते परस्परम् ।
जघ्नुः शूरा रणे शूरांस्तस्मिंस्तमसि दारुणे ॥ २३ ॥ हन्य
मानमथात्मानं परेभ्यो बहवो जनाः । नाभ्यजानन्त समरे निद्रया
मोहिता भृशम् ॥ २४ ॥ तेषामेतादृशीं चेष्टां विज्ञाय पुरुषर्षभः ।
उवाच वाक्यं बीभत्सुरुच्चैः संनादयन्दिशः ॥ २५ ॥ श्रान्ता भवन्तो
निद्रान्धाः सर्व एव सवाहनाः । तमसा च वृते सैन्ये रजसा
बहुलेन च ॥ २६ ॥ ते यूयं यदि मन्यध्वमुपारमत सैनिकाः ।
निमीलयत चात्रैव रणभूमौ मुहूर्तकम् ॥ २७ ॥ ततो विनिद्रा
विश्रान्ताश्चन्द्रमस्युदिते पुनः । संसाधयिष्यथान्योन्यं स्वर्गाय कुरु-
पाण्डवाः ॥ २८ ॥ तद्वचः सर्वधर्मज्ञा धार्मिकस्य निशम्य ते ।
अरोचयन्त सैन्यानि तदा चान्योन्यमब्रुवन् ॥ २९ ॥ चुक्रुशुः
कर्ण कर्णेति राजन् दुर्योधनेति च । उपारमत पाण्डूनां विरता

हि वर्त्तयिनो ॥ ३० ॥ तथा विक्रोशतस्तस्य फाल्गुनस्य महात्मनः । अपारयत पार्थेन सेना तव च भारत ॥ ३१ ॥ तामस्य वाचं देवाश्च ऋषयश्च महात्मनः । सर्वे सैन्यानि चादृष्टा महृष्टाः प्रत्यपूजयन् ॥ ३२ ॥ तत् सम्पूज्य वचोऽक्रूरं सर्वसैन्यानि भारत । मुहूर्त्तमस्वपन्राजन् श्रान्तानि भरतर्षभ ॥ ३३ ॥ सा तु सम्प्राप्य विश्रामं ध्वजिनी तव भारत । सुखमाप्तवती काममर्ज्जुनं प्रत्यपूजयत् ॥ ३४ ॥ त्वयि वेदास्तथास्त्राणि त्वयि बुद्धिपराक्रमौ । धर्म्मस्त्वयि महाबाहो दया भूतेषु चानघ ॥ ३५ ॥ यच्चाश्वस्ताः स्तवेच्छामि शर्म्म पार्थ तदस्तु ते । मनसश्च प्रियानर्थान् वीर क्षिप्रमवाप्नुहि ॥ ३६ ॥ इति ते तं नरव्याघ्रं प्रशंसन्तो महारथाः । निद्रया समवाक्षिप्तास्तूष्णीमासन् विशाम्पते ॥ ३७ ॥ अश्वपृष्ठेषु चाप्यन्ये रथनीडेषु चापरे । गजस्कन्धगताश्चान्ये शेरते चापरे क्षितौ ॥ ३८ ॥ सायुधाः सगदाश्चैव सखड्गाः सपरश्वधाः । सप्रासकवचाश्चान्ये नराः सुप्ताः पृथक् पृथक् ॥ ३९ ॥ गजास्ते पन्नगाभोगैर्हस्तैर्भूरेणुरूषितैः । निद्रान्धा वसुधाञ्चक्रुर्घ्राणनिःश्वासशीतलाम् ॥ ४० ॥ गजाः शुशुभिरे तत्र निःश्वसन्तो महीतले । विकीर्णा गिरयो यद्वन्निःश्वसद्भिर्महोरगैः ॥ ४१ ॥ समाञ्च विषमाञ्चक्रुः खुराग्रैर्विक्षतां महीम् । हयाः काञ्चनयोक्त्राश्च केसरालम्बिभिर्युगैः ॥ ४२ ॥ सुषुपुस्तत्र राजेन्द्र युक्ता वाहेषु सर्वशः । एवं हयाश्च नागाश्च योधाश्च भरतर्षभ ॥ ४३ ॥ युद्धाद्विरम्य सुषुपुः श्रमेण महतान्विताः । तत् तथा निद्रया भग्नमबोधमस्वपद्बलम् । कुशलैः शिल्पिभिर्न्यस्तं पटे चित्रमिवाद्भुतम् ॥ ४४ ॥ ते क्षत्रियाः कुण्डलिनो युवानः परस्परं सायकविक्षताङ्गाः । कुम्भेषु लीना सुषुपुर्गजानां कुचेषु लग्ना इव कामिनीनाम् ॥ ४५ ॥ ततः कुमुदनाथेन कामिनीगण्डपाण्डुना । नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृता ॥ ४६ ॥ दृश्यते च ककुब्द्वार-

नि सृतः किरणकेशरभासुरपिञ्जरः। तिमिरवारणयूथविदारणः समुदियादुदयाचलकेसरी ॥ ४७ ॥ हरवृषोत्तमगात्रसमद्युतिः स्मरशरासनपूर्णसमप्रभः। नववधूस्मितचारुमनोहरः प्रविसृतः कुमुदाकरबान्धवः ॥ ४८ ॥ ततो मुहूर्त्ताद् भगवान् पुरस्ताच्छशलक्षणः। अरुणं दर्शयामास ग्रसन् ज्योतिःप्रभां प्रभुः ॥ ४९ ॥ अरुणस्य च तस्यानु जातरूपसमप्रभम्। रश्मिजालं महच्चन्द्रो मन्दं मन्दमिवासृजत् ॥ ५० ॥ उत्सारयन्तः प्रभया तमस्ते चन्द्ररश्मयः। प्रत्यगच्छञ्छनैः सर्वा दिशः खञ्च क्षितिं तथा ॥ ५१ ॥ ततो मुहूर्त्ताद्भुवनं ज्योतिर्भूतमिवाभवत्। अप्रख्यमप्रकाशञ्च जगामाशु तमस्तथा ॥ ५२ ॥ प्रतिप्रकाशिते लोके दिवाभूते निशाकरे। विचेरुर्न विचेरुश्च राजन्नक्तञ्चरास्ततः ॥ ५३ ॥ बोध्यमानन्तु तत्सैन्यं राजंश्चन्द्रस्य रश्मिभिः। बुबुधे शतपत्राणां वनं सूर्यांशुभिर्यथा ॥ ५४ ॥ यथा चन्द्रोदयोद्भूतः क्षुभितः सागरोऽभवत्। तथा चन्द्रोदयोद्भूतः स बभूव बलार्णवः ॥ ५५ ॥ ततः प्रववृते युद्धं पुनरेव विशाम्पते। लोके लोकविनाशाय लोकं परमभीप्सताम् ॥ ५६ ॥

इति द्रोणपर्वणि द्रोणवधपर्वणि सैन्यनिद्रायां
पञ्चाशीत्यधिकशततोऽध्यायः ॥ १८५ ॥

---

सञ्जय उवाच। ततो दुर्योधनो द्रोणमभिगम्येदमब्रवीत्। अमर्षवशमापन्नो जनयन् हर्षतेजसी ॥ १ ॥

दुर्योधन उवाच। न मर्षणीयाः सङ्ग्रामे विश्रमन्तः श्रमान्विताः। सपत्ना ग्लानमनसो लब्धलक्षा विशेषतः ॥ २ ॥ यत्तु मर्षितमस्माभिर्भवतः प्रियकाम्यया। तत एते परिश्रान्ताः पाण्डवा ॥ ३ ॥ सर्वथा परिहीनाः स्म तेजसा च बलेन च।

भवता पाल्यमानास्ते वर्द्धन्ते वा पुनः पुनः ॥ ४ ॥ दिव्यान्यस्त्राणि सर्वाणि ब्रह्मास्त्राणि च यान्यपि । तानि सर्वाणि तिष्ठन्ति भवत्येव विशेषतः ॥ ५ ॥ न पाण्डवेया न वयं नान्ये लोके धनुर्द्धराः । युध्यमानस्य ते तुल्याः सत्यमेतद्‌ब्रवीमि ते ॥ ६ ॥ ससुरासुरगन्धर्व्वानिमान् लोकान् द्विजोत्तम । सर्व्वास्त्रविद्भवान् हन्याद्दिव्यैरस्त्रैर्न संशयः ॥ ७ ॥ स भवान् मर्षयत्येतांस्त्वत्तो भीतान् विशेषतः । शिष्यत्वं वा पुरस्कृत्य मम वा मन्दभाग्यताम् ॥ ८ ॥

सञ्जय उवाच । एवमुत्तेजितो द्रोणः कोपितश्चात्मजेन ते । समन्युरब्रवीद्राजन् दुर्य्योधनमिदं वचः ॥ ९ ॥ स्थविरः सन् परं शक्त्या घटे दुर्य्योधनाहवे । अतः परं मया कार्य्यं क्षुद्रं विजयगार्द्धिना ॥ १० ॥ अनस्त्रविदयं सर्व्वो हन्तव्योऽस्त्रविदा जनः । यद्भवान् मन्यते चापि शुभं वा यदि वाशुभम् ॥ ११ ॥ तद्वै कर्त्तास्मि कौरव्य वचनात्तव नान्यथा । निहत्य सर्व्वपाञ्चालान् युद्धे कृत्वा पराक्रमम् ॥ १२ ॥ विमोक्ष्ये कवचं राजन् सत्येनायुधमालभे । मन्यसे यच्च कौन्तेयमर्ज्जुनं श्रान्तमाहवे ॥ १३ ॥ तस्य वीर्य्यं महाबाहो शृणु सत्येन कौरव । तं न देवा न गन्धर्व्वा न यक्षा न च राक्षसाः ॥ १४ ॥ उत्सहन्ते रणे योद्धुं कुपितं सव्यसाचिनम् । खाण्डवे येन भगवान् प्रत्युद्यातः सुरेश्वरः ॥ १५ ॥ सायकैर्व्वारितश्चापि वर्षमाणो महात्मना । यक्षा नागास्तथा दैत्या ये चान्ये बलगर्व्विताः ॥ १६ ॥ निहता पुरुषेन्द्रेण तच्चापि विदितं तव । गन्धर्व्वा घोषयात्रायां चित्रसेनादयो जिताः ॥ १७ ॥ यूयं तैर्ह्रियमाणाश्च मोचिता दृढधन्वना । निवातकवचाश्चापि देवानां शत्रवस्तथा ॥ १८ ॥ सुरैरवध्याः सङ्ग्रामे तेन वीरेण निर्ज्जिताः । दानवानां सहस्राणि हिरण्यपुरवासिनाम् ॥ १९ ॥ विजिग्ये पुरुषव्याघ्रः स शक्यो मानुषैः कथम् । प्रत्यक्षञ्चैव

ते सर्वं यथा बलमिदं तव । स्थातुं पाण्डुपुत्रेण चेष्टमानं निशाम्यते ॥ २० ॥

सञ्जय उवाच । तं तथा ब्रुवन्तमर्ज्जुनं कुपितस्तदा । द्रोणात्मजः सुतो राजन् पुनरेवेदमब्रवीत् ॥ २१ ॥ अहं दुःशासनं कर्णं शकुनिं मातुलं च मे । हनिष्यामोऽर्ज्जुन सङ्ख्ये ईदृशीं कथ्यसे भारतीम् ॥ २२ ॥ तस्य तद्वचनं श्रुत्वा माद्रीपुत्रो ध्वनन्निव । अभ्यवर्त्तत वेगेन स्वस्ति तेऽस्त्विति चाब्रवीत् ॥ २३ ॥ को हि गाण्डीवधन्वानं ज्वलन्तमिव तेजसा । अजय्यं जयेत् कश्चित् सविषं चाशीविषम् ॥ २४ ॥ न न, वित्तपतिर्न्निन्द्रो न यमो न जलेश्वरः । नासुरोरगरक्षांसि जयेयुः युद्धदुर्मदम् ॥ २५ ॥ मूढास्त्वेव प्रभाषन्ते यानीमान्यात्थ भारत । युद्धे त्वर्ज्जुनमासाद्य स्वस्तिमान् को व्रजेद् गृहान् ॥ २६ ॥ त्वं हि सर्वानभिषङ्क्त्वा निष्ठुरं पापनिश्चय । येऽस्मत्त्वाहते गुरुस्त्वत्तस्त्वमिच्छसि ॥ २७ ॥ गच्छ त्वमपि कौन्तेयमात्मार्थं तं महाहवम् । त्वमद्य प्रयत्ने युद्ध कुलजः क्षत्रियो ह्यसि ॥ २८ ॥ इमान् किं पार्थिवान् सर्वान् घातयिष्यस्यनागसः । त्वमस्य मूलं वैरस्य तस्मादासादयार्ज्जुनम् ॥ २९ ॥ एष ते मातुलः प्राज्ञः क्षत्रधर्म्मव्रतः । दुर्द्यूतदेवी गान्धारः प्रयात्वर्ज्जुनमाहवे ॥ ३० ॥ एषो-ऽक्षकुशलो जिह्मो द्यूतकृत् कितवः शठः । देविता निकृतिप्रज्ञो युद्धे जेष्यति पाण्डवान् ॥ ३१ ॥ त्वया कथितमत्यर्थं कर्णेन सह हृष्टवत् । असकृच्छब्दवन्मोहाद् धृतराष्ट्रस्य शृण्वतः ॥ ३२ ॥ अहञ्च तात कर्णश्च भ्राता दुःशासनश्च मे । पाण्डुपुत्रान् हनिष्याम सहिताः समरे त्रयः ॥ ३३ ॥ इति ते जल्पमानस्य श्रुतं संसदि संसदि । अनुतिष्ठ प्रतिज्ञां तां सत्यवाक् भव तैः सह ॥ ३४ ॥ एष ते पाण्डवः शत्रुरविशङ्कोऽग्रतः स्थितः । क्षत्रधर्म्ममवेक्षस्व श्लाघ्यस्तव वधो जयात् ॥ ३५ ॥ दत्तं भुक्तमधी,

तच्च प्राप्तसंख्यर्थमीप्सितम् । कृतकृत्योऽनुगृह्यास्मि मा मैवं ध्यस्व
पाण्डवम् ॥ ३९ ॥ इत्युक्त्वा समरे द्रोणो न्यवर्त्तत ततः परे ।
द्वैधीकृत्य ततः सेनां युद्धं समभवत्तदा ॥ ४० ॥

कर्णद्रौणावतिक्रम्य समन्तात् पर्य्यवारयत ॥ १२ ॥ तमाभिघोषं
मायान्तं दहन्तं क्षत्रियर्षभान् । पराक्रान्तं पराक्रम्य तत क्षत्रिय
पुङ्गवा ॥ १३ ॥ नाशक्नुवन् वारयितुं वर्द्धमानमिवानलम् । अथ
दुर्य्योधनः कर्णः शकुनिश्चापि सौबलः ॥ १४ ॥ अभ्यवर्षंस्त्वरन्नार्त्तं
कुन्तीपुत्रं धनञ्जयम् । तेषामस्त्राणि सर्व्वेषामुत्तमास्त्रविदाम्बर
॥ १५ ॥ करदीकृत्य राजेन्द्र शरवर्षैरवाकिरत् । अस्त्रैरस्त्राणि
सम्वार्य्य लघुहस्तो जितेन्द्रियः ॥ १६ ॥ सर्व्वानविध्यन्निशितैर्द्दशभि-
र्द्दशभिः शरैः । उद्धूता रजसो वृष्टिः शरवृष्टिस्तथैव च ॥ १७ ॥
तमश्च घोरमन्दश्च तदा समभवन्महान् । न द्यौर्न भूमिर्न दिशः
प्राज्ञायन्त तथागते ॥ १८ ॥ सैन्येन रजसा मूढं सर्व्वमन्धमिवा
भवत् । नैव ते न वयं राजन् प्राज्ञासिष्म परस्परम् ॥ १९ ॥
उद्देशेन हि तेन स्म समयुध्यन्त पार्थिवाः । विरथा रथिनो राजन्
समासाद्य परस्परम् ॥ २० ॥ केशेषु समसज्जन्त कवचेषु भुजेषु
च । हताश्वा हतसूताश्च निश्चेष्टा रथिनस्तथा ॥ २१ ॥ जीवन्त
इव तत्र स्म व्यदृश्यन्त भयार्द्दिताः । हतान् गजान् समाश्लिष्य
पर्व्वतानिव वाजिनः ॥ २२ ॥ गतसत्त्वा व्यदृश्यन्त तथैव सह
सादिभिः । ततस्त्वभ्यवसृत्यैव सङ्ग्रामादुत्तरां दिशम् ॥ २३ ॥
अतिष्ठदाहवे द्रोणो विधूम इव पावकः । तमाजिशीर्षादेकान्त
मपक्रान्तं निशम्य तु ॥ २४ ॥ समकम्पन्त सैन्यानि पाण्डवानां
विशाम्पते । भ्राजमानं श्रिया युक्तं ज्वलन्तमिव तेजसा ॥ २५ ॥
दृष्ट्वा द्रोणं परं भेजुश्चेलुर्म्मम्लुश्च भारत । आह्वयन्तं परानीकं
प्रभिन्नमिव वारणम् ॥ २६ ॥ नैनमाशंसिरे जेतुं दानवा वासवं
यथा । केचिदासन्निरुत्साहाः केचित् क्रुद्धा मनस्विनः ॥ २७ ॥
विस्मिताश्चाभवन् केचित् केचिदासन्नमर्षिताः । हस्तैर्हस्ताग्रमपरे
प्रत्यपिंषन्नराधिपाः ॥ २८ ॥ अपरे दशनैरोष्ठानदशन् क्रोध
[illegible] । व्याक्षिपन्नायुधान्यन्ये ममृदुश्चापरे भुजान् ॥ २९ ॥

अन्ये चाभ्यपतन् द्रोणं जितात्मानो महौजसः । पाञ्चालास्तु
विशेषेण द्रोणसायकपीडिताः ॥ ३० ॥ समसज्जन्त राजानः समरे
भृशवेदनाः । ततो विराटद्रुपदौ द्रोणं प्रतीयतू रणे ॥ ३१ ॥
तथा चरन्तं संग्रामे भृशं परमदुर्जयम् । द्रुपदस्य ततः पौत्रास्त्रय
एव विशाम्पते ॥ ३२ ॥ चेदयश्च महेष्वासा द्रोणमेवाभ्ययुर्युधि ।
तेषां द्रुपदपौत्राणां त्रयाणां निशितैः शरैः ॥ ३३ ॥ त्रिभिर्द्रोणो-
ऽहरत् प्राणांस्ते हता न्यपतन् भुवि । ततो द्रोणोऽजयद्युद्धे
चेदिकैकेयसृञ्जयान् ॥ ३४ ॥ मत्स्यांश्चैवाजयत् सर्वान् भार-
द्वाजो महारथः । ततस्तु द्रुपदः क्रोधात् शरवर्षं समासृजत् ॥ ३५ ॥
द्रोणं प्रति महाराज विराटश्चैव संयुगे । तं निहत्येषुवर्षं तु द्रोणः
क्षत्रियमर्द्दनः ॥ ३६ ॥ तौ शरैश्छादयामास विराटद्रुपदावुभौ ।
द्रोणेन छाद्यमानौ तौ क्रुद्धौ संग्राममूर्द्धनि ॥ ३७ ॥ द्रोणं
शरैर्विव्यधतुः परमं क्रोधमास्थितौ । ततो द्रोणो महाराज
क्रोधामर्षसमन्वितः ॥ ३८ ॥ भल्लाभ्यां भृशतीक्ष्णाभ्यां चिच्छेद
धनुषी तयोः । ततो विराटः कुपितः समरे तोमरान् दश ॥ ३९ ॥
चिक्षेप च शरान् द्रोणस्य वधकाङ्क्षया । शक्तिञ्च द्रुपदो
घोरामायसीं स्वर्णभूषिताम् ॥ ४० ॥ चिक्षेप भुजगेन्द्राभां क्रुद्धो
द्रोणरथं प्रति । ततो भल्लैः सुनिशितैश्छित्त्वा तांस्तोमरान्दश
॥ ४१ ॥ शक्तिं कनकवैदूर्य्यां द्रोणश्चिच्छेद सायकैः । ततो द्रोणः
सुपीताभ्यां भल्लाभ्यामरिमर्द्दनः ॥ ४२ ॥ द्रुपदञ्च विराटञ्च प्रेषया-
मास मृत्यवे । हते विराटे द्रुपदे केकयेषु तथैव च ॥ ४३ ॥
तथैव चेदिमत्स्येषु पाञ्चालेषु तथैव च । हतेषु त्रिषु वीरेषु
द्रुपदस्य च नप्तृषु ॥ ४४ ॥ द्रोणस्य कर्म तद्दृष्ट्वा कोपदुःखसम-
न्वितः । शशाप रथिनां मध्ये धृष्टद्युम्नो महामनाः ॥ ४५ ॥
इष्टापूर्त्तात्तथा क्षात्राद्ब्राह्मण्याच्च स नश्यतु । द्रोणो यस्याद्य
मुच्येत यं वा द्रोणः पराभवेत् ॥ ४६ ॥ इति तेषां प्रतिश्रुत्य मध्ये

सर्वधनुष्मताम् । यथाऽद्रोणिं द्रोणानीके पाञ्चाल्यं पर्यवारयत् ॥४७॥ पाञ्चाल्यास्त्रिकृतो द्रोणमभ्यघ्नन् पाण्डवान्विताः । दुर्योधनश्च कर्णश्च शकुनिश्चापि सौबलः ॥ ४८ ॥ सोदर्याश्च यथा मुख्यास्तेऽरक्षन् द्रोणमाहवे । रक्ष्यमाणं तथा द्रोणं समरे तैर्महात्मभिः ॥ ४९ ॥ यतमानास्तु पाञ्चाला न शेकुः प्रतिवीक्षितुम् । तत्राक्रुध्यद्भीमसेनो धृष्टद्युम्नस्य मारिष । स एनं वाग्भिरुग्राभिस्ततक्ष पुरुषर्षभ ॥ ५० ॥

भीमसेन उवाच । द्रुपदस्य कुले जातः सर्वास्त्रेष्वस्त्रवित्तमः । कः क्षत्रियो मन्यमानः प्रेक्षेतारिमवस्थितम् ॥ ५१ ॥ पितृपुत्रवधं प्राप्य पुमान् कः परिपालयेत् । विशेषतस्तु शपथं शपित्वा राजसंसदि ॥ ५२ ॥ एष वैश्वानर इव समिद्धः स्वेन तेजसा । शरचापेन्धनो द्रोणः क्षत्रं दहति तेजसा ॥ ५३ ॥ पुरा करोति निःशेषां पाण्डवानामनीकिनीम् । स्थिताः पश्यत मे कर्म द्रोणमेव व्रजाम्यहम् ॥ ५४ ॥ इत्युक्त्वा प्राविशत् क्रुद्धो द्रोणानीकं वृकोदरः । दृढैः पूर्णायतोत्सृष्टैर्द्रावयंस्तव वाहिनीम् ॥ ५५ ॥ धृष्टद्युम्नोऽपि पाञ्चाल्यः प्रविश्य महतीं चमूम् । आससाद रणे द्रोणं तदाऽऽसीत्तुमुलं महत् ॥ ५६ ॥ नैव नस्तादृशं युद्धं दृष्टपूर्वं न च श्रुतम् । यथा सूर्योदये राजन् समुत्पिञ्जोऽभवन्महान् ॥ ५७ ॥ संसक्तान्येव चादृश्यन् रथवृन्दानि मारिष । हतानि च विकीर्णानि शरीराणि शरीरिणाम् ॥ ५८ ॥ केचिदन्यत्र गच्छन्तः पथि चान्यैरुपद्रुताः । विमुखाः पृष्ठतश्चान्ये ताड्यन्ते पार्श्वतः परे ॥ ५९ ॥ तथा संसक्तयुद्धं तदभवद् भृशदारुणम् । अथ सन्ध्यागतः सूर्यः क्षणेन समपद्यत ॥ ६० ॥

इति द्रोणपर्वणि द्रोणवधपर्वणि संकुलयुद्धे सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥

सञ्जय उवाच। ते तथैव महाराज दंशिता रणमूर्द्धनि।
सन्ध्यागतं सहस्रांशुमादित्यमुपतस्थिरे ॥ १ ॥ उदिते तु सहस्रांशौ तप्तकाञ्चनसंप्रभे। प्रकाशितेषु लोकेषु पुनर्युद्धमवर्त्तत ॥ २ ॥
द्वन्द्वानि यानि तत्रासन् संसक्तानि पुरोदयात्। तान्येवाभ्युदिते सूर्य्ये समसज्जन्त भारत ॥ ३ ॥ रथैर्हया हयैर्नागाः पादाताश्चापि कुञ्जरैः। हया हयैः समाजग्मुः पादाताश्च पदातिभिः ॥४॥
तथा रथै रथैर्नागा हयैश्च भरतर्षभ। संयुक्ताश्च वियुक्ताश्च योधाः सन्न्यपतन् रणे ॥ ५ ॥ ते रात्रौ कृतकर्म्माणः श्रान्ताः सूर्य्यस्य तेजसा। क्षुत्पिपासापरीताङ्गा विसंज्ञा बहवोऽभवन् ॥ ६ ॥
शङ्खभेरीमृदङ्गानां कुञ्जराणाञ्च गर्ज्जताम्। विस्फारितविकृष्टानां कार्म्मुकाणाञ्च कूजताम् ॥ ७ ॥ शब्दः समभवद्राजन् दिविस्पृक् भरतर्षभ। द्रवताञ्च पदातीनां शस्त्राणां पततामपि ॥ ८ ॥
हयानां ह्रेषताञ्चैव रथानाञ्च निवर्त्तताम्। क्रोशतां गर्ज्जताञ्चैव तदासीत्तुमुलं महत् ॥ ९ ॥ विवृद्धस्तुमुलः शब्दो द्यामगच्छन्महास्वनः। नानायुधनिकृत्तानां चेष्टतामातुरः स्वनः ॥ १० ॥ भूमावश्रूयत महांस्तदासीत् कृपणं महत्। पततां पतिताञ्च पत्त्यश्वरथहस्तिनाम् ॥ ११ ॥ तेषु सर्व्वेष्वनीकेषु व्यतिषक्तेष्वनेकशः। स्वे स्वान् जघ्नुः परे स्वांश्च स्वान् परे च परान् परे ॥ १२ ॥
वीरबाहुविसृष्टाश्च योधेषु च गजेषु च। असयः प्रत्यदृश्यन्त वाससां नेजनेष्विव ॥ १३ ॥ उद्यतप्रतिपिष्टानां खड्गानां वीरबाहुभिः।
स एव शब्दस्तद्रूपो वाससां निज्यतामिव ॥ १४ ॥ अर्द्धासिभिस्तथा खड्गैस्तोमरैः सपरश्वधैः। निकृष्टयुद्धं संसक्तं महदासीत् सुदारुणम् ॥ १५ ॥ गजाश्वकायप्रभवां नरदेहप्रवाहिनीम्। शस्त्रमत्स्यसुसम्पूर्णां मांसशोणितकर्द्दमाम् ॥ १६ ॥
आर्त्तनादस्वनवतीं पताकावस्त्रफेनिलाम्। नदीं प्रावर्त्तयन् वीराः परलोकप्रवाहिनीम् ॥ १७ ॥ सर्व्वशस्त्रार्द्दिताः क्लान्ता रात्रि-

समसज्जत ॥ ३५ ॥ वृकोदरेण राधेयो भारद्वाजेन चार्जुनः ।
महाघोरं महद्युद्धं सर्वे प्रैक्षन्त सर्वतः ॥ ३६ ॥ रथनागैर्विचि-
त्रैश्च विचित्ररथसङ्कुलम् । रथर्षभाणां मुख्यानां सन्निपातममा-
नुषम् ॥ ३७ ॥ अपश्यन्रथिनो युद्धं विचित्रं चित्रयोधिनाम् । यत-
मानाः पराक्रान्ताः परस्परजिगीषवः ॥ ३८ ॥ जीमूता इव
घर्मान्ते शरवर्षैरवाकिरन् । ते रथान् सूर्य्यसङ्काशानास्थिताः
पुरुषर्षभाः ॥ ३९ ॥ अशोभन्त महामेघाः शारदाः समुपस्थिताः ।
योधास्ते तु महाराज क्रोधामर्षसमन्विताः ॥ ४० ॥ स्पर्द्धिनः
परमेष्वासाः कृतयत्ना धनुर्द्धराः । अभ्यगच्छंस्तथान्योऽन्यं मत्ता
गजवृषा इव ॥ ४१ ॥ न नूनं देहभेदोऽस्ति काले तस्मिन् समा-
गते । यत्र सर्व्वे युगपद्व्यशीर्य्यन्त महारथाः ॥ ४२ ॥ बाहुभि-
श्चरणैश्छिन्नैः शिरोभिश्चारुकुण्डलैः । कार्मुकैर्विशिखैः प्रासैः
खड्गैः परशुपट्टिशैः ॥ ४३ ॥ नालीकैः क्षुरनाराचैर्नखरैः शक्ति-
तोमरैः । अन्यैश्च विविधाकारैर्धौतैः प्रहरणोत्तमैः ॥ ४४ ॥
चित्रैश्च विविधाकारैः शरीरावरणैरपि । विचित्रैश्च रथैर्भग्नैर्हतैश्च
गजवाजिभिः ॥ ४५ ॥ शून्यैश्च नगराकारैर्हतयोधध्वजै रथैः ।
अमनुष्यैर्हयैस्त्रस्तैः कृष्यमाणैस्ततस्ततः ॥ ४६ ॥ वातायमानैरस-
कृद्धतवीरैरलङ्कृतैः । व्यजनैः कङ्कटैश्चैव ध्वजैश्च विनिपातितैः ॥४७॥
छत्रैराभरणैर्वस्त्रैर्माल्यैश्च सुसुगन्धिभिः । हारैः किरीटैर्मुकुटै-
रुष्णीषैः किङ्किणीगणैः ॥ ४८ ॥ उरस्यैर्मणिभिर्निष्कैश्चूडामणिभि-
रेव च । आसीदायोधनं तत्र नभस्तारागणैरिव ॥ ४९ ॥ ततो
दुर्य्योधनस्यासीन्नकुलेन समागमः । अमर्षितेन क्रुद्धस्य क्रुद्धे-
नामर्षितस्य च ॥ ५० ॥ अपसव्यं चकाराथ माद्रीपुत्रस्तवात्मजम् ।
किरञ्छरशतैर्हृष्टस्तत्र नादो महानभूत् ॥ ५१ ॥ अपसव्यं कृतः
सङ्ख्ये भ्रातृव्येनात्यमर्षिणा । सोऽमर्षितस्तमप्याजौ प्रतिचक्रेऽप-
सव्यतः ॥ ५२ ॥ पुत्रस्तव महाराज राजा दुर्य्योधनोऽद्भुतम् ।

ततः प्रतिचिकीर्षन्तमपश्यन्त ते सुतम् ॥ ५३ ॥ न्यवारयत तेजस्वी नकुलश्चित्रमार्गवित्। स सर्वतो निवार्य्यैनं शरजालेन पीड़यन् ॥५४॥ विनेदु नकुलश्चक्रे तत्सैन्याः समपूजयन्। तिष्ठ तिष्ठेति नकुलो बभाषे तनयं तव। संस्मृत्य बहुदुःखानि तव दुर्मन्त्रितेन च ॥ ५५ ॥

इति द्रोणपर्वणि द्रोणवधपर्वणि नकुलयुद्धे
अष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥

---

सञ्जय उवाच। ततो दुःशासनः क्रुद्धः सहदेवमुपाद्रवत्।
रथवेगेन तीव्रेण कम्पयन्निव मेदिनीम् ॥ १ ॥ तस्यापतत एवाशु
भल्लेनामित्रकर्षणः। माद्रीसुतः शिरो यन्तुः सशिरस्त्राणमच्छि-
नत् ॥ २ ॥ नैनं दुःशासनः सूतं नापि कश्चन सैनिकः। कृतो-
त्तमाङ्गमाशुत्वात् सहदेवेन बुद्धवान् ॥ ३ ॥ रथस्याप्यप्रतीतत्वात्
प्रयान्त्यश्वा यथासुखम्। ततो दुःशासनः सूतं बुद्धवान् गतचेत-
सम् ॥ ४ ॥ स हयान् सन्निगृह्याजौ स्वयं हयविशारदः। युयुधे
रथिनां श्रेष्ठो लघु चित्रञ्च सुष्ठु च ॥ ५ ॥ तदस्यापूजयन् कर्म स्वे
परे चैव संयुगे। हतसूतरथेनाजौ व्यचरद्यदभीतवत् ॥ ६ ॥
सहदेवस्तु तानश्वांस्तीक्ष्णैर्बाणैरवाकिरत्। पीड्यमानाः शरैश्चाशु
प्राद्रवंस्ते ततस्ततः ॥ ७ ॥ स रश्मिषु विषक्तत्वादुत्ससर्ज्ज शरा-
सनम्। धनुषा कर्म कुर्वंस्तु रश्मीन् स पुनरुत्सृजन् ॥ ८ ॥
छिद्रेषु तेषु तं बाणैर्माद्रीपुत्रोऽभ्यवाकिरत्। परीप्संस्त्वत्सुतं
कर्णस्तदन्तरमथापतत् ॥ ९ ॥ वृकोदरस्ततः कर्णं त्रिभिर्भल्लैः
समाहितः। आकर्णपूर्णैरभ्यघ्नन् बाह्वोरुरसि चार्पयत् ॥ १० ॥
न्यवर्त्तत ततः कर्णः सङ्घट्टित इवोरगः। भीममावारयामास
विकिरन्निशिताञ्छरान् ॥११॥ ततोऽभूत्तुमुलं युद्धं भीमराधेययो-
[illegible]। तौ वृषाविव नर्द्दन्तौ विवृत्तनयनावुभौ ॥ १२ ॥ वेगेन

महतान्योऽन्यं संरब्धावभिनेदतुः । अतिसंश्लिष्टयोस्तत्र तयो-
राहवशोण्डयोः ॥ १३ ॥ विच्छिन्नशरपातत्वात् गदायुद्धमवर्त्तत ।
गदया भीमसेनस्तु कर्णस्य रथकूवरम् ॥ १४ ॥ बिभेदाशु ततो
राजंस्तदद्भुतमिवाभवत् । ततो भीमस्य राधेयो गदामादाय
वीर्य्यवान् ॥ १५ ॥ अवासृजद्रथे तान्तु बिभेद गदया गदाम् ।
ततो भीमः पुनर्गुर्वीं चिक्षेपाधिरथेर्गदाम् ॥ १६ ॥ तां शरै-
र्दशभिः कर्णः सुपुङ्खैः सुप्रवेजितैः । प्रत्यविध्यत् पुनश्चान्यैः सा
भीमं पुनराव्रजत् ॥ १७ ॥ व्यालीव मन्त्राभिहता कर्णबाणैरभि-
द्रुता । तस्याः प्रतिनिपातेन भीमस्य विपुलो ध्वजः ॥ १८ ॥
पपात सारथिश्चास्य मुमोह गदया हतः । स कर्णे सायकानष्टौ
व्यसृजत् क्रोधमूर्च्छितः ॥ १९ ॥ ध्वजे शरासने चैव शरावापे
च भारत । ततस्तस्य निशितैस्तीक्ष्णैर्भीमसेनो महाबलः । चिच्छेद
परवीरघ्नः प्रहसन्निव भारत ॥ २० ॥ ध्वजं शरासनञ्चैव
शरावापञ्च भारत । कर्णोऽप्यस्य धनुरुग्रञ्च हेमपृष्ठं दुरासदम्
॥ २१ ॥ ततः पुनस्तु राधेयो हयानस्य रथेषुभिः । ऋक्ष-
वर्णान् जघानाशु तथोभौ पार्ष्णिसारथी ॥ २२ ॥ स विपन्न-
रथो भीमो नकुलस्याप्लुतो रथम् । हरिर्यथा गिरेः शृङ्गं समा-
क्रामदरिन्दमः ॥ २३ ॥ तथा द्रोणार्जुनौ चित्रमयुध्येतां महा-
रथौ । आचार्य्यशिष्यौ राजेन्द्र कृतप्रहरणौ युधि ॥ २४ ॥ लघु-
सन्धानयोगाभ्यां रथयोश्चरणेन च । मोहयन्तौ मनुष्याणां चक्षूंषि
च मनांसि च ॥ २५ ॥ उपारमन्त तेऽन्योऽन्यं योधाश्चकम्पिरे तथा ।
अदृष्टपूर्वं पश्यन्तस्तद्युद्धं गुरुशिष्ययोः ॥ २६ ॥ विचित्रं पृतनामध्ये
रथमार्गप्रदर्शिनोः । अन्योऽन्यमपसव्यन्तु कर्त्तुं वीरौ तदेषतुः
॥ २७ ॥ पराक्रमं तयोर्योधा ददृशुस्तं सुविस्मिताः । तयोः सम-
भवद्युद्धं द्रोणपाण्डवयोर्महत् ॥ २८ ॥ आमिषार्थे महाराज
गगने श्येनयोरिव । यद्यच्चकार द्रोणस्तु कुन्तीपुत्रजिगीषया ॥२९॥

तस्य तस्य विघातार्थं तत्तत् चक्रुतेऽर्जुनः। यदा द्रोणो न
शक्नोति पाण्डवस्य विशेषितुम् ॥ ३० ॥ ततः प्रादुश्चकारास्त्रमस्त्र-
मार्गविशारदः। ऐन्द्रं पाशुपतं त्वाष्ट्रं वायव्यमथ वारुणम् ॥ ३१ ॥
मुक्तं मुक्तं द्रोणचापात्तज्जघान धनञ्जयः। अस्त्राण्यस्त्रैर्यदा तस्य
विधिवद्धन्ति पाण्डवः ॥ ३२ ॥ ततोऽस्त्रैः परमैर्दिव्यैर्द्रोणः पार्थ-
मवाकिरत्। यद्यदस्त्रं स पार्थाय प्रयुङ्क्ते विजिगीषया ॥ ३३ ॥
तस्य तस्य विघाताय तत्तद्धि कुरुतेऽर्जुनः। स वध्यमानेष्वस्त्रेषु
दिव्येष्वपि यथाविधि ॥ ३४ ॥ अर्जुनेनार्जुनं द्रोणो मनसैवाभ्य-
पूजयत्। मेने चात्मानमधिकं पृथिव्यामपि भारत ॥ ३५ ॥ तेन
शिष्येण सर्वेभ्यः शस्त्रविद्भ्यः परन्तपः। वार्यमाणस्तु पार्थेन तथा
मध्ये महात्मनाम् ॥ ३६ ॥ यतमानोऽर्जुनं प्रीत्या प्रत्यवारयदुत्-
स्मयन्। ततोऽन्तरीक्षे देवाश्च गन्धर्वाश्च सहस्रशः ॥ ३७ ॥ ऋषयः
सिद्धसङ्घाश्च व्यतिष्ठन्त समन्ततः। तदप्सरोभिराकीर्णं यक्षराक्षस-
सङ्कुलम् ॥ ३८ ॥ श्रमदाकाशमभवत् यो मेघाकुलं यथा। तत्र
स्मान्तर्हिता वाचो विचरन्ति पुनः पुनः ॥ ३९ ॥ द्रोणसंस्तव-
संयुक्ताः पार्थस्य च महात्मनः। विसृज्यमानेष्वस्त्रेषु ज्वालयत्सु
ततस्ततः ॥ ४० ॥ अब्रुवंस्तत्र सिद्धाश्च ऋषयश्च समागताः। नैवेदं
मानुषं युद्धं नासुरं न च राक्षसम् ॥ ४१ ॥ न दैवं न च गान्धर्वं
ब्राह्मं ध्रुवमिदं परम्। विचित्रमिदमाश्चर्यं न नो दृष्टं न च
श्रुतम् ॥ ४२ ॥ अतिपार्थमथाचार्यो द्रोणञ्चाप्यतिपाण्डवः।
नानयोरन्तरं द्रष्टुं शक्यमन्येन केनचित् ॥ ४३ ॥ यदि रुद्रो द्विधा-
कृत्य युध्येतात्मानमात्मना। तत्र शक्योपमा कर्तुमन्यत्र न तु वर्त्तते
॥ ४४ ॥ ज्ञानमेकस्थमाचार्ये ज्ञानं योगश्च पाण्डवे। शौर्य-
मेकस्थमाचार्ये बलं शौर्यञ्च पाण्डवे ॥ ४५ ॥ नेमौ शक्यौ महेष्-
वासौ रणे क्षपयितुं परैः। इच्छमानौ पुनरिमौ हन्येतां
जगत् ॥ ४६ ॥ इत्यब्रुवन्महाराज दृष्ट्वा तौ पुरुषर्षभौ।

अन्तर्हितानि भूतानि प्रकाशानि च सञ्जय ॥ ४७ ॥ ततो द्रोणो ब्राह्ममस्त्रं प्रादुश्चक्रे महामतिः । सन्तापयन् रणे पार्थं भूतान्यन्तर्हितानि च ॥ ४८ ॥ ततश्चाल पृथिवी सपर्वतवनद्रुमा । ववौ च विषमो वायुः सागराश्चापि चुक्षुभुः ॥ ४९ ॥ ततस्त्रासो महानासीत् कुरुपाण्डवसैन्ययोः । सर्व्वेषाञ्चैव भूतानामुद्यतेऽस्त्रे महात्मना ॥ ५० ॥ ततः पार्थोऽप्यसम्भ्रान्तस्तदस्त्रं प्रतिजघ्निवान् । ब्रह्मास्त्रेणैव राजेन्द्र ततः सर्व्वमशीशमत् ॥ ५१ ॥ यदा न गम्यते पारं तयोरन्यतरस्य वा । तदा सङ्कुलयुद्धेन तद्युद्धं व्याकुलीकृतम् ॥ ५२ ॥ नाज्ञायत ततः किञ्चित् पुनरेव विशाम्पते । प्रवृत्ते तुमुले युद्धे द्रोणपाण्डवयोर्मृधे ॥ ५३ ॥ शरजालैः समाकीर्णे मेघजालैरिवाम्बरे । न स्म सम्पतते कश्चिदन्तरीक्षचरस्तदा ॥ ५४ ॥

इति द्रोणपर्व्वणि द्रोणवधपर्व्वणि सङ्कुलयुद्धे
एकोननवत्यधिकशततमोऽध्यायः ॥ १८९ ॥

सञ्जय उवाच । तस्मिंस्तदा वर्त्तमाने नराश्वगजसङ्क्षये । दुःशासनो महाराज धृष्टद्युम्नमयोधयत् ॥ १ ॥ स तु रुक्मरथासक्तो दुःशासनशरार्द्दितः । अमर्षात्तव पुत्रस्य शरैर्वाहानवाकिरत् ॥ २ ॥ क्षणेन स रथस्तस्य सध्वजः सहसारथिः । नादृश्यत महाराज पार्षतस्य शरैश्चितः ॥ ३ ॥ दुःशासनस्तु राजेन्द्र पाञ्चाल्यस्य महात्मनः । नाशकत् प्रमुखे स्थातुं शरजालप्रपीड़ितः ॥ ४ ॥ स तु दुःशासनं वाणैर्विमुखीकृत्य पार्षतः । किरन्शरसहस्राणि द्रोणमेवाभ्ययाद्रणे ॥ ५ ॥ प्रत्यपद्यत हार्द्दिक्य कृतवर्म्मा त्वनन्तरम् । सोदर्य्याणां त्रयश्चैव तथैन पर्य्यवारयन् ॥ ६ ॥ त यमौ पृष्ठतोऽन्वैतां रक्षन्तौ पुरुषर्षभौ । द्रोणायाभिमुखं यान्तं दीप्यमानमिवानलम् ॥ ७ ॥ सम्प्रहारमकुर्व्वंस्ते सर्व्वे च सुमहारथाः ।

अमर्षिताः सत्त्ववन्तः कृत्वा मरणमग्रतः ॥ ८ ॥ शुद्धात्मानः शुद्ध-
वृत्ता राजन् स्वर्गपुरस्कृताः । आर्य्यं युद्धमकुर्वंस्ते परस्परजिगी-
षवः ॥ ९ ॥ शुद्धाभिजनकर्माणो मतिमन्तो जनाधिपाः । धर्म-
युद्धमयुध्यन्त पश्यन्तो गतिमुत्तमाम् ॥ १० ॥ न तत्रासीदधर्मिष्ठ-
मशस्त्रं युद्धमेव च । नात्र कर्णी न नालीको न लिप्तो न च
वास्तिकः ॥ ११ ॥ न सूचीकपिशो नैव न गवास्थिगजास्थिकः ।
इषुरासीन्न संश्लिष्टो न पूतिर्न च जिह्मगः ॥ १२ ॥ ऋजून्येव
हि शुद्धानि सर्वे शस्त्राण्यधारयन् । सुयुद्धेन परान् लोकानीप्-
सन्तः कीर्त्तिमेव च ॥ १३ ॥ तदासीत्तुमुलं युद्धं सर्वदोषविव-
र्ज्जितम् । चतुर्णां तव योधानां तैस्त्रिभिः पाण्डवैः सह ॥ १४ ॥
धृष्टद्युम्नस्तु तान् दृष्ट्वा तव राजन्नथर्षभान् । यमाभ्यां वारितान्
वीरान् शीघ्रास्त्रो द्रोणमभ्ययात् ॥ १५ ॥ निवारितास्तु ते वीरा-
स्तयोः पुरुषसिंहयोः । समसज्जन्त चत्वारो वाताः पर्वतयोरिव
॥ १६ ॥ द्वाभ्यां द्वाभ्यां यमौ सार्द्धं रथाभ्यां रथपुङ्गवौ । समा-
सक्तौ ततो द्रोणं धृष्टद्युम्नोऽभ्यवर्त्तत ॥ १७ ॥ दृष्ट्वा द्रोणाय
पाञ्चाल्यं व्रजन्तं युद्धदुर्म्मदम् । यमाभ्यां तांश्च संसक्तांस्तदनन्तर-
मुपाद्रवत् ॥ १८ ॥ दुर्य्योधनो महाराज किरन् शोणितभोजनान् ।
तं सात्यकिः शीघ्रतरं पुनरेवाभ्यवर्त्तत ॥ १९ ॥ तौ परस्परमासाद्य
समीपे कुरुमाधवौ । हस्यमानौ नृशार्दूलावभितः समसज्जताम्
॥ २० ॥ बाल्ये वृत्तानि सर्वाणि प्रीयमाणौ विचिन्त्य तौ । ताव-
न्योऽन्यं प्रेक्षमाणौ हसमानौ पुनः पुनः ॥ २१ ॥ अथ दुर्य्योधनो
राजा सात्यकिं प्रत्यभाषत । प्रियं सखायं सततं गर्हयन् वृत्त-
मात्मनः ॥ २२ ॥ धिक् क्रोधं धिक् सखे लोभं धिक् मोहं धिग-
मर्षितम् । धिगस्तु क्षात्रमाचारं धिगस्तु बलमौरसम् ॥ २३ ॥
यत्र मामभिसन्धत्से त्वाञ्चाहं शिनिपुङ्गव । त्वं हि प्राणैः प्रिय-
तरो ममाहञ्च तथा तव ॥ २४ ॥ स्मरामि तानि सर्वाणि बाल्ये

वृत्तानि यानि नौ ।  तानि सर्व्वाणि जोर्णानि साम्प्रतं नौ रणा-
जिरे ॥ २५ ॥  किमद्य कारवलोमाभ्यां युद्धमेवाद्य सात्वत ।  तं
तथावादिनं राजन् सात्वतः प्रत्यभाषत ॥ २६ ॥ प्रहसन् विशिखान्
तीक्ष्णानुद्यम्य परमास्त्रवित् । नेयं सभा राजपुत्र नवाचार्य्य-
निवेशनम् । यत्र क्रीड़ितमस्माभिस्तदा राजन् समागतैः ॥ २७ ॥
दुर्य्योधन उवाच । क्व सा क्रीड़ा गतास्माकं बाल्ये वै शिनि-
पुङ्गव । क्व च युद्धमिदम्भूयः कालो हि दुरतिक्रमः ॥ २८ ॥
किन्नु नो विद्यते कृत्यं धनेन धनलिप्सया । यत्र युध्यामहे सर्व्वे
धनलोभात् समागताः ॥ २९ ॥

सञ्जय उवाच । तं तथावादिनं तत्र राजानं सात्वतोऽब्रवीत् ।
एवं वृत्तं सदा क्षात्रं युध्यन्तीह गुरुनपि ॥ ३० ॥ यद्यहं ते
प्रियो राजन् जहि मा मा चिरं कृथाः । त्वत्कृते सुकृतान् लोकान्
गच्छेयं भरतर्षभ ॥ ३१ ॥ या ते शक्तिर्बलञ्चैव तत् क्षिप्रं मयि
दर्शय । नेच्छामि तदहं द्रष्टुं मित्राणां व्यसनं महत् ॥ ३२ ॥
इत्येवं व्यक्तमाभाष्य प्रतिभाष्य च सात्यकिः । अभ्ययात्तूर्णमव्यग्रो
निरपेक्षो विशाम्पते ॥ ३३ ॥ तमायान्तमभिप्रेक्ष्य प्रत्यगृह्णात्तवा-
त्मजः । शरैश्चावाकिरद्राजन् शैनेयं तनयस्तव ॥ ३४ ॥ ततः
प्रववृते युद्धं कुरुमाधवसिंहयोः । अन्योऽन्यं क्रुद्धयोर्घोरं यथा
द्विरदसिंहयोः ॥ ३५ ॥ ततः पूर्णायतोत्सृष्टैः सात्वतं युद्ध-
दुर्म्मदम् । दुर्य्योधनः प्रत्यविध्यत् सात्वतं निशितैः शरैः ॥ ३६ ॥
तं सात्यकिः प्रत्यविध्यत् समरे निशितैः शरैः । पञ्चाशता पुन-
श्चाजौ विंशत्या दशभिश्च वै ॥ ३७ ॥ सात्यकिन्तु रणे राजन्
प्रहसंस्तनयस्तव । आकर्णपूर्णैर्निशितैर्विव्याध त्रिंशता शरैः ॥ ३८ ॥
ततोऽस्य सशरञ्चापं क्षुरप्रेण द्विधाकरोत् । सोऽन्यत् कार्म्मुक-
मादाय लघुहस्तस्ततो दृढम् ॥ ३९ ॥ सात्यकिर्व्यसृजच्चापि शर-
श्रेणीं सुतस्य ते । तामापतन्तीं सहसा शरश्रेणीं जिघांसया ॥४०॥

चिच्छेद बहुधा राजन् तत उग्रधनुर्ज्जवः। सात्यकिश्च वि
मुद्गरया पीडयामास वेगिन ॥ ४१ ॥ स्वर्णपुङ्खैः शिलाधौतैः
राकर्णपूर्णैन रणे। तस्य सन्धयतश्चेषून् सहितेषुञ्च कार्मुकम्
॥ ४२ ॥ अच्छिनत सात्यकिस्तूर्णं शरैश्चैवाभ्यवीवृषत्। स गाढ
विद्धो व्यथित प्रत्यपायाद्रथान्तरम् ॥ ४३ ॥ दुर्य्योधनो महाराज
दाशार्हशरपीडितः। समाश्वस्य तु पुत्रस्ते सात्यकिं पुनरभ्ययात्
॥ ४४ ॥ विसृजन्निषुजालानि युयुधाने रथ प्रति। तथैव
सात्यकिर्बाणान् दुर्य्योधनरथं प्रति ॥ ४५ ॥ सतत व्यसृजद्राज
स्तत्सङ्कुलमवर्त्तत। ततेषुभिः क्षिप्यमाणैः पतद्भिश्च समन्ततः ॥४६॥
अग्नेरिव महाकक्षे शब्दः समभवन्महान्। तयोः शरसहस्रैश्च
सञ्छन्नं वसुधातलम् ॥ ४७ ॥ अगम्यरूपञ्च शरैराकाशं सम-
पद्यत। तत्राभ्यधिकमालक्ष्य माधवं रथसत्तमम् ॥ ४८ ॥ क्षिप्र
मभ्यपतत् कर्णः परीप्सस्तनयं तव। न तु तं मर्षयामास भीम
सेनो महाबलः ॥ ४९ ॥ अभ्ययात्त्वरितः कर्णं व्यसृजत् सायकान्
बहून्। तस्य कर्णः शितान् बाणान् प्रतिहन्य हसन्निव ॥ ५० ॥
धनुः शरांश्च चिच्छेद सूतञ्चाभ्यहनच्छरैः। भीमसेनस्तु सक्रुद्धो
गदामादाय पाण्डव ॥ ५१ ॥ धनुर्ध्वजञ्च सूतञ्च सम्ममर्द्दाहवे
रिपोः। रथचक्रञ्च कर्णस्य बभञ्ज स महाबलः ॥ ५२ ॥ भग्न-
चक्रे रथे तिष्ठन्नाकम्पच्छैलराडिव। एकचक्रं रथं तस्य तमूहुः
सुचिरं हयाः ॥ ५३ ॥ एकचक्रमिवार्कस्य रथं सप्त हया यथा।
अमृष्यमाणः कर्णस्तु भीमसेनमयुध्यत ॥ ५४ ॥ विविधैरिषुजालैश्च
नानाशस्त्रैश्च संयुगे। भीमसेनस्तु सक्रुद्धः सूतपुत्रमयोधयत् ।५५।
सङ्कुले वर्त्तमाने तु राजा धर्मसुतोऽब्रवीत्। पाञ्चालानां रथ
व्याघ्रान्मत्स्यांश्चैव नरर्षभान् ॥ ५६ ॥ ये नः प्राणाः शिरो ये च
ये नो योधा महाबलाः। त एते धार्त्तराष्ट्रेषु विषक्ताः पुरुष
र्षभाः ॥ ५७ ॥ किं तिष्ठत यथा मूढाः सर्वे विगतचेतसः। तत्र

संस्कृत यद्येते युध्यन्ते मामका रथाः ॥ ५८ ॥ क्षत्रधर्मं पुरस्कृत्य
सर्व्व एव गतज्वराः । जयन्तो वध्यमाना वा गतिमिष्टां गमिष्यथ
॥ ५९ ॥ जित्वा च बहुभिर्यज्ञैर्यजध्वं भूरिदक्षिणैः । हता वा
देवभूत्वा लोकान् प्राप्स्यथ पुष्कलान् ॥ ६० ॥ ते राज्ञा
चोदिता वीरा योत्स्यमाना महारथाः । क्षात्रधर्मं पुरस्कृत्य
त्वरिता द्रोणमभ्ययुः ॥ ६१ ॥ पाञ्चालास्त्वेकतो द्रोणमभ्यघ्नन्
बहुभिः शरैः । भीमसेनपुरोगाश्चाप्येकतः पर्य्यवारयन् ॥ ६२ ॥
पार्थास्तु पाण्डुपुत्राणां त्रयो जिह्मा महारथाः । यमौ च भीम-
सेनश्च प्राक्रोशन्त धनञ्जयम् ॥ ६३ ॥ अभिद्रवार्ज्जुन क्षिप्रं कुरून्
द्रोणादपानुद । तत एनं न हनिष्यन्ति पाञ्चाला हतरक्षिणम् ॥ ६४ ॥
कौरवेयास्ततः पार्थं सहसा समुपाद्रवन् । पाञ्चालानेव तु द्रोणो
धृष्टद्युम्नपुरोगमान् । ममर्द्द सरसा वीराः पञ्चमेऽहनि भारत ॥ ६५ ॥

इति द्रोणपर्व्वणि द्रोणवधपर्व्वणि सङ्कुलयुद्धे
नवत्यधिकशतोऽध्यायः ॥ १९० ॥

---

सञ्जय उवाच । पाञ्चालानां ततो द्रोणस्त्वकरोत् कदनं
महत् । यथा क्रुद्धो रणे शक्रो दानवानां क्षयं पुरा ॥ १ ॥
द्रोणास्त्रेण महाराज वध्यमानाः परे युधि । नात्रसन्त रणे
द्रोणात् सत्त्ववन्तो महारथाः ॥ २ ॥ युध्यमाना महाराज पाञ्चालाः
सृञ्जयास्तथा । द्रोणमेवाभ्ययुर्युद्धे योधयन्तो महारथाः ॥ ३ ॥
तेषान्तु छाद्यमानानां पाञ्चालानां समन्ततः । अभवद्भैरवो नादो
वध्यतां शरवृष्टिभिः ॥ ४ ॥ वध्यमानेषु सङ्ग्रामे पाञ्चालेषु महा-
त्मना । उदीर्य्यमाणे द्रोणास्त्रे पाण्डवान् भयमाविशत् ॥ ५ ॥
दृष्ट्वाश्वनरयोधानां विपुलञ्च क्षयं युधि । पाण्डवेया महाराज
नाशशंसुर्जयं तदा ॥ ६ ॥ कच्चित् द्रोणो न नः सर्व्वान् क्षपयेत

परमास्त्रवित्। समिद्धः शिशिरापाये दहन् कक्षमिवानलः ॥७॥
न चैनं संयुगे कश्चित् समर्थः प्रतिवीक्षितुम्। न चैनमर्जुनो जातु
प्रतियुध्येत धर्मवित् ॥८॥ त्रस्तान् कुन्तीसुतान् दृष्ट्वा द्रोण
सायकपीड़ितान्। मतिमान् श्रेयसे युक्तः केशवोऽर्जुनमब्रवीत्
॥९॥ नैष युद्धेन संग्रामे जेतुं शक्यः कथञ्चन। सधनुर्धन्विनां
श्रेष्ठो देवैरपि सवासवैः ॥१०॥ न्यस्तशस्त्रस्तु संग्रामे शक्यो
हन्तुं भवेन्नृभिः। आस्थीयतां जये योगो धर्ममुत्सृज्य पाण्डव
॥११॥ यथा नः संयुगे सर्वान्न हन्याद्रुक्मवाहनः। अश्वत्थाम्नि
हते नैष युध्येदिति मतिर्मम ॥१२॥ तं हतं संयुगे कश्चिदस्मै
शंसतु मानवः। एतन्नारोचयद्राजन् कुन्तीपुत्रो धनञ्जयः ॥१३॥
अन्ये त्वरोचयन् सर्वे कृच्छ्रेण तु युधिष्ठिरः। ततो भीमो महा
बाहुरनीके स्वे महागजम् ॥१४॥ जघान गदया राजन्नश्व
त्थामानमित्युत। परप्रमथनं घोरं मालवस्येन्द्रवर्मणः ॥१५॥
भीमसेनस्तु सव्रीडमुपेत्य द्रोणमाहवे। अश्वत्थामा हत इति
शब्दमुच्चैश्चकार ह ॥१६॥ अश्वत्थामेति हि गजः ख्यातो
नाम्ना हतोऽभवत्। कृत्वा मनसि तं भीमो मिथ्या व्याहृतवांस्तदा
॥१७॥ भीमसेनवचः श्रुत्वा द्रोणस्तत् परमाप्रियम्। मनसा
सन्नगात्रोऽभूत् यथा सैकतमम्भसि ॥१८॥ शङ्कमानः स तन्मिथ्या
वीर्यज्ञः स्वसुतस्य वै। हतः स इति च श्रुत्वा नैव धैर्यादकम्पत
॥१९॥ स लब्ध्वा चेतनां द्रोणः क्षणेनैव समाश्वसत्। अनु
चिन्त्यात्मनः पुत्रमविषह्यमरातिभिः ॥२०॥ स पार्षतमभिद्रुत्य
जिघांसुर्मृत्युमात्मनः। अवाकिरत् सहस्रेण तीक्ष्णानां कङ्कपत्रि
णाम् ॥२१॥ तं वै विंशतिसाहस्राः पाञ्चालानां रथर्षभाः।
तथा चरन्तं संग्रामे सर्वतो व्यकिरन् शरैः ॥२२॥ तैः शरैरावृतं
द्रोणं नापश्याम महारथम्। भास्करं जलदैरुद्धं वर्षास्विव विशा
म्पते ॥२३॥ विधूय तान् बाणगणान् पाञ्चालानां महारथः।

प्रादुश्चक्रे ततो द्रोणो ब्राह्ममस्त्रं परन्तप ॥ २४ ॥ वधाय तेषां
शूराणां पाञ्चालानाममर्षित । ततो व्यरोचत द्रोणो विधूमो-
ऽग्निरिव ज्वलन् ॥ २५ ॥ तथैव स पुन क्रुद्धो भारद्वाज प्रताप-
वान् । ततो व्यरोचत द्रोणो विनिघ्नन् सर्वसोमकान् ॥ २६ ॥
शिरांस्यपातयच्चापि पाञ्चालानां महामृधे । तथैव परिघाकारान्
बाहून् कनकभूषणान् ॥ २७ ॥ ते वध्यमाना समरे भारद्वाजेन
पार्थिवा । मेदिन्यामन्वकीर्य्यन्त वातभग्ना इव द्रुमा ॥ २८ ॥
कुञ्जराणाञ्च पततां हयानाञ्चैव भारत । अगम्यरूपा पृथिवी
मांसशोणितकर्द्दमा ॥ २९ ॥ हत्वा विंशतिसाहस्रान् पाञ्चालानां
रथव्रजान् । अतिष्ठदाहवे द्रोणो विधूमोऽग्निरिव ज्वलन् ॥ ३० ॥
तथैव च पुन क्रुद्धो भारद्वाज प्रतापवान् । वसुदानस्य भल्लेन
शिर कायादपाहरत् ॥ ३१ ॥ पुन पञ्चशतान् मत्स्यान् षट्-
सहस्राणि सृञ्जयान् । हस्तिनामयुतं हत्वा जघानाश्वायुतं पुनः
॥ ३२ ॥ क्षत्रियाणामभावाय दृष्ट्वा द्रोणमवस्थितम् । ऋषयो-
ऽभ्यागमंस्तूर्णं हव्यवाहपुरोगमा ॥ ३३ ॥ विश्वामित्रो जमदग्नि-
र्भारद्वाजोऽपि गौतम । वसिष्ठ कश्यपोऽत्रिश्च ब्रह्मलोकं निनीषवः
॥ ३४ ॥ सिकता पृश्नयो गर्गा बालखिल्या मरीचिपा । भृगवो-
ऽङ्गिरसश्चैव सूक्ष्माश्चान्ये महर्षय ॥ ३५ ॥ त एनमब्रुवन् सर्वे
द्रोणमाहवशोभिनम् । अधर्म्मत कृत युद्ध समयो निधनस्य ते
॥ ३६ ॥ न्यस्यायुध रणे द्रोण समेत्यास्मानिह स्थितान् । नात-
क्रूरतर कर्म्म पुन कर्त्तुं त्वमर्हसि ॥ ३७ ॥ वेदवेदाङ्गविदुषे-
सत्यधर्म्मपरस्य ते । ब्राह्मणस्य विशेषेण तवैतन्नोपपद्यते ॥ ३८ ॥
न्यस्यायुधममोघेषो तिष्ठ वर्त्मनि शाश्वते । परिपूर्णस्तु कालस्ते
वस्तु लोकेऽद्य मानुषे ॥ ३९ ॥ ब्रह्मास्त्रेण त्वया दग्धा अनस्त्रज्ञा नरा
भुवि । यदेतदीदृश विप्र कृत कर्म्म न साधु तत् ॥ ४० ॥ न्यस्या-
युध रणे विप्र द्रोण मा त्वं चिर कृथा । मा पापिष्ठतर कर्म्म

करिष्यसि पुनार्हसि ॥ ४१ ॥ इति तेषां वच श्रुत्वा भीमसेनस्तथ
तत्। धृष्टद्युम्नश्च सम्प्रेच्य रथो न विमनाभवत् ॥ ४२ ॥ मन्दह्य
मानो व्यथित कुन्तीपुत्र युधिष्ठिरम्। अहत वा हत वेति पप्रच्छ
सुतमात्मन ॥ ४३ ॥ स्थिरा बुद्धाई द्रोणस्य न पार्थो वच्यति
ऽनृतम्। त्रयाणामपि लोकानामैश्वर्य्यार्थे कथञ्चन ॥ ४४ ॥ तस्मात्तं
पारिपप्रच्छ नान्य कञ्चिद्विजर्षभ। तस्मिंस्तस्य हि सत्याशा बाल्यात्
प्रभृति पाण्डवे ॥ ४५ ॥ ततो निष्पाण्डवामुर्वीं करिष्यन्त युधा
म्पतिम्। द्रोण ज्ञात्वा महाराज गोविन्दो व्यथितोऽब्रवीत् ॥ ४६ ॥
यद्यर्द्धदिवस द्रोणो युध्यते मन्युमास्थित। सत्य ब्रवीमि ते सेना
विनाश समुपैष्यति ॥ ४७ ॥ स भवांस्त्रातु नो द्रोणात् सत्याज्
ज्यायोऽनृत वच। अनृत जीवितस्यार्थे वदन्न स्पृश्यतेऽनृतै ॥ ४८ ॥
स्त्रीषु नर्मविवाहेषु गवां भक्ते तथैव च। ब्राह्मणाभ्युपपत्तौ च
ह्यनृते नास्ति पातकम् ॥ ४९ ॥ तयो सम्वदतोरेव भीमसेनो-
ऽब्रवीदिदम्। श्रुत्वैव ते महाराज वधोपाय महात्मन ॥ ५० ॥
गाहमानस्य ते सेना मालवस्येन्द्रवर्म्मण। अश्वत्थामेति विख्यातो
गज शक्रगजोपम ॥ ५१ ॥ निहतो युधि विक्रम्य ततोऽहं
द्रोणमब्रवम्। अश्वत्थामा हतो ब्रह्मन्निवर्त्तस्वाहवादिति ॥ ५२ ॥
नून नाश्रद्दधद्वाक्यमेष मे पुरुषर्षभ। स त्व गोविन्दवाक्यानि
मानयस्व जयैषिण ॥ ५३ ॥ द्रोणाय निहत शस राजन् शार-
द्वतीसुतम्। त्वयोक्तो नैष युध्येत जातु राजन् द्विजर्षभ ॥ ५४ ॥
सत्यवान् हि त्रिलोकेऽस्मिन् भवान् ख्यातो जनाधिप। तस्य
तद्वचन श्रुत्वा कृष्णवाक्यप्रचोदित ॥ ५५ ॥ भावित्वाच्च महाराज
वक्तु समुपचक्रमे। तमतथ्यभये मग्नो जये सक्तो युधिष्ठिर ॥ ५६ ॥

पुत्रव्यसनसन्तप्तो निराशो जीवितेऽभवत् । आगस्कृतमिवात्मान पाण्डवाना महात्मनाम् ॥ ५८ ॥ ऋषिवाक्येन मन्वान श्रुत्वा विनिहतं सुतम् । विचेता परमोद्विग्नो धृष्टद्युम्नमवेक्ष्य च । योद्धुं नाशक्नुवद्राजन् यथा पूर्वमरिन्दम ॥ ५९ ॥

इति द्रोणपर्वणि द्रोणवधपर्वणि युधिष्ठिरासत्यकथने
एकनवत्यधिकशततोऽध्याय ॥ १९१ ॥

---

सञ्जय उवाच । त दृष्ट्वा परमोद्विग्न शोकोपहतचेतसम् । पाञ्चालराजस्य सुतो धृष्टद्युम्न समाद्रवत ॥ १ ॥ य इष्ट्वा मनुजेन्द्रेण द्रुपदेन महामखे । लब्धो द्रोणविनाशाय समिद्धाद्धव्य वाहनात् ॥ २ ॥ स धनुर्जैत्रमादाय घोर जलदनिस्वनम् । दृढज्यमजर दिव्य शराशाशीविषोपमान् ॥ ३ ॥ सन्दधे कार्मुके तस्मिञ्छरमाशीविषोपमम् । द्रोण जिघांसु पाञ्चाल्यो महाज्वाल मिवानलम् ॥ ४ ॥ तस्य रूप शरस्यासीद्धनुर्ज्यामण्डलान्तरे । द्योततो भास्करस्येव घनान्ते परिवेषिण ॥ ५ ॥ पार्षतेन परामृष्ट ज्वलन्तमिव तद्धनु । अन्तकालमनुप्राप्त मेनिरे वीक्ष्य सैनिका ॥ ६ ॥ तमिषु संहित तेन भारद्वाज प्रतापवान् । दृष्ट्वामन्यत देहस्य कालपर्य्यायमागतम् ॥ ७ ॥ तत स यत्न मातिष्ठदाचार्य्यस्तस्य वारणे । न चास्यास्त्राणि राजेन्द्र प्रादुरासन्महात्मन ॥ ८ ॥ तस्य त्वहानि चत्वारि क्षपा चैकास्यतो गता । तस्य चाह्नस्त्रिभागेन क्षय जग्मु पतत्रिण ॥ ९ ॥ स शरक्षयमासाद्य पुत्रशोकेन चार्द्दित । विविधानाञ्च दिव्याना मस्त्राणामप्रसादत ॥ १० ॥ उत्स्रष्टुकाम शस्त्राणि विप्रवाक्य-प्रचोदित । तेजसा पूर्य्यमाणस्तु युयुधे न यथा पुरा ॥ ११ ॥ अथान्यत स समादाय दिव्यमाङ्गिरस धनु । शराश्च ब्रह्मदण्डा-

मान् धृष्टद्युम्नमयोधयत् ॥ १२ ॥ ततस्तं शरवर्षेण महता
समवाकिरत् । व्यथयच्च संक्रुद्धो धृष्टद्युम्नममर्षणम् ॥ १३ ॥
शरांश्च शतधा चास्य द्रोणश्चिच्छेद सायकैः । ध्वजं धनुश्च निशितैः
सारथिञ्चाप्यपातयत् ॥ १४ ॥ धृष्टद्युम्नः प्रहस्यान्यत् पुनरादाय
कार्मुकम् । शितेन चैनं बाणेन प्रत्यविध्यत् स्तनान्तरे ॥ १५ ॥
सोऽतिविद्धो महेष्वासः सम्भ्रान्त इव संयुगे । भल्लेन शितधारेण
चिच्छेदास्य पुनर्धनुः ॥ १६ ॥ यच्चास्य बाणं विकृतं धनूंषि च
विशाम्पते । सर्वं चिच्छेद दुर्धर्षो गदां खड्गञ्च वर्जयन् ॥ १७ ॥
धृष्टद्युम्नं ततोऽविध्यन्नवभिर्निशितैः शरैः । जीवितान्तकरैः क्रुद्धः
क्रुद्धरूपं परन्तप ॥ १८ ॥ धृष्टद्युम्नो रथस्याश्वान् स्वरथाश्वै-
र्महारथः । व्यामिश्रयदमेयात्मा ब्राह्ममस्त्रमुदीरयन् ॥ १९ ॥
ते मिश्रा बह्वशोभन्त जवना वातरंहसः । पारावतसवर्णाश्च
शोणाश्च भरतर्षभ ॥ २० ॥ यथा सविद्युतो मेघा नदन्तो
जलदागमे । तथा रेजुर्महाराज विमिश्रा रणमूर्धनि ॥ २१ ॥
ईषाबन्धं चक्रबन्धं रथबन्धं तथैव च । प्राणाशयदमेयात्मा धृष्ट-
द्युम्नस्य च द्विजः ॥ २२ ॥ स छिन्नधन्वा विरथो हताश्वो हत-
सारथिः । उत्तमामापदं प्राप्य गदां वीरः परामृशत् ॥ २३ ॥
तामस्य विशिखैस्तीक्ष्णैः क्षिप्यमाणां महारथः । निजघान शरैः
द्रोणः क्रुद्धः सत्यपराक्रमः ॥ २४ ॥ तां दृष्ट्वा च नरव्याघ्रो द्रोणेन
निहतां शरैः । विमलं खड्गमादत्त शतचन्द्रञ्च भानुमत् ॥ २५ ॥
असंशयं तथा भूते पाञ्चाल्यः साध्वमन्यत । वधमाचार्यमुख्यस्य
प्राप्तकालं महात्मनः ॥ २६ ॥ ततः स्वरथनीडस्थः स्वरथस्य रथे-
षया । अगच्छदसिमुद्यम्य शतचन्द्रञ्च भानुमत् ॥ २७ ॥ चिकीर्षु-
र्दुष्करं मोहाद् धृष्टद्युम्नो महारथः । इयेष वक्षो भेत्तुञ्च भार-
द्वाजस्य संयुगे ॥ २८ ॥ सोऽतिष्ठद्युगमध्ये वै युगसन्नहनेषु च ।
शोणानां जघनार्धेषु तत् सैन्याः समपूजयन् ॥ २९ ॥ तिष्ठतो

युगपाल्लीषु योधानप्यपिनिष्ठत । नापश्यदन्तरं द्रोणस्तदद्भुत-
मिवाभवत् ॥ ३० ॥ क्षिप्रं श्येनस्य चरतो यथैवामिषगृद्धिनः ।
तद्वदासीदभीसारो द्रोणपार्षतयो रणे ॥ ३१ ॥ तस्याश्वान्रथ-
शक्त्यासौ तदा क्रुद्धः पराक्रमी । सर्वानेकैकशो द्रोणो नीलश्यो-
नजीघनत् ॥ ३२ ॥ ते हता न्यपतन् भूमौ धृष्टद्युम्नस्य वाजिनः ।
शोणाश्वाः पर्य्यमुच्यन्त रथबन्धाद्विशाम्पते ॥ ३३ ॥ तान् हया-
न्निहतान् दृष्ट्वा द्विजाग्र्येण स पार्षतः । नामृष्यत युधां श्रेष्ठो
याज्ञसेनिर्महारथः ॥ ३४ ॥ विरथः स गृहीत्वा तु खड्गं
खड्गभृतां वरः । द्रोणमभ्यपतद्राजन् वैनतेय इवोरगम् ॥ ३५ ॥
तस्य रूपं बभौ राजन् भारद्वाजं जिघांसतः । यथा रूपं पुरा
विष्णोर्हिरण्यकशिपोर्वधे ॥ ३६ ॥ सोऽचरद्विविधान् मार्गान्
प्रवरानेकविंशतिम् । दर्शयामास कौरव्य पार्षतो विचरन् रणे ॥३७॥
भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं प्रसृतं स्रुतम् । परिवृत्तं निवृत्तञ्च
खड्गं चर्म च धारयन् ॥ ३८ ॥ सम्पातं समुदीर्णञ्च दर्शयामास
पार्षतः । भारतं कौशिकञ्चैव सात्वतञ्चैव शिक्षया ॥ ३९ ॥
दर्शयन्नचरद्युद्धे द्रोणस्यान्तचिकीर्षया । चरतस्तस्य तान्मार्गान्
विचित्रान् खड्गचर्म्मिणः ॥ ४० ॥ व्यस्मयन्त रणे योधा देवताश्च
समागताः । ततः शरसहस्रेण शतचन्द्रमपातयत् ॥ ४१ ॥ खड्ग-
चर्म सम्बाधे धृष्टद्युम्नस्य स द्विजः । ते तु वैतस्तिका नाम
शरा ह्यासन्नयोधिनः ॥ ४२ ॥ निकृष्टयुद्धे द्रोणस्य नान्येषां सन्ति
ते शराः । ऋते शारद्वतात् पार्थाद्द्रौणेर्वैकर्त्तनात्तथा ॥ ४३ ॥
प्रद्युम्नयुयुधानाभ्यामभिमन्योश्च ते शराः । अथेषुं स समाधत्त
दृढं परमवेगिनम् ॥ ४४ ॥ अन्तेवासिनमाचार्य्यो जिघांसुः पुत्र-
सम्मितम् । तं शरैर्दशभिस्तीक्ष्णैश्चिच्छेद शिनिपुङ्गवः ॥ ४५ ॥
पश्यतस्तव पुत्रस्य कर्णस्य च महात्मनः । ग्रस्तमाचार्य्यमुख्येन
धृष्टद्युम्नममोचयत् ॥ ४६ ॥ चरन्तं रथमार्गेषु सात्यकिं सत्य-

विक्रमम् । द्रोणकर्णान्तरगतं कृपस्यापि च भारत ॥ ४७ ॥ अप-
श्येतां महात्मानौ विष्वक्सेनधनञ्जयौ । अपूजयेतां वार्ष्णेयं
ब्रुवाणौ साधु साध्विति ॥ ४८ ॥ दिव्यान्यस्त्राणि सर्व्वेषां युधि
निघ्नन्तमच्युतम् । अभिपत्य ततः सेनां विष्वक्सेनधनञ्जयौ ॥ ४९ ॥
धनञ्जयस्ततः कृष्णमब्रवीत् पश्य केशव । आचार्य्यरथमुख्यानां
मध्ये क्रीड़न्मधूद्वह ॥ ५० ॥ आनन्दयति मां भूयः सात्यकिः
सत्यविक्रमः । माद्रीपुत्रौ च भीमञ्च राजानञ्च युधिष्ठिरम् ॥ ५१ ॥
यः शिक्षयानुद्धतः सन् रणे चरति सात्यकिः । महारथानुपक्रीड़न्
वृष्णीनां कीर्त्तिवर्द्धनः ॥ ५२ ॥ तमेते प्रतिनन्दन्ति सिद्धाः सैन्याश्च
विस्मिताः । अजय्यं समरे दृष्ट्वा साधु साध्विति सात्वतम् । योधा-
श्चोभयतः सर्व्वे कर्म्मभिः समपूजयन् ॥ ५३ ॥

इति द्रोणपर्व्वणि द्रोणवधपर्व्वणि द्रोणधृष्टद्युम्नयुद्धे
द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥

---

सञ्जय उवाच । सात्वतस्य तु तत् कर्म्म दृष्ट्वा दुर्य्योधनादयः ।
शैनेयं सर्व्वतः क्रुद्धा वारयामासुरञ्जसा ॥ १ ॥ कृपः कर्णोऽथ
समरे तव पुत्राश्च मारिष । शैनेयं त्वरयाभ्येत्य विनिघ्नन् निशितैः
शरैः ॥ २ ॥ युधिष्ठिरस्ततो राजा माद्रीपुत्रौ च पाण्डवौ । भीम-
सेनश्च बलवान् सात्वतं पर्य्यवारयन् ॥ ३ ॥ कर्णश्च शरवर्षेण
गौतमश्च महारथः दुर्य्योधनादयश्चैव शैनेयं पर्य्यवारयन् ॥ ४ ॥
तां वृष्टिं सहसा राजन्नुत्थितां घोररूपिणीम् । वारयामास
शैनेयो योधयंस्तान्महारथान् ॥ ५ ॥ तेषामस्त्राणि दिव्यानि
सन्धितानि महात्मनाम् । वारयामास विधिवद्दिव्यैरस्त्रैर्महाहवे
॥ ६ ॥ क्रूरमायोधनं जज्ञे तस्मिन् राजसमागमे । रुद्रस्येव हि
क्रुद्धस्य निघ्नतस्तान् पशून् पुरा ॥ ७ ॥ हस्तानामुत्तमाङ्गानां

कार्मुकाणां च भारत । छत्राणां चापविद्धानां चामराणां च संयुगे ॥ ८ ॥ रथाश्च सम्प्रदृश्यन्त तत्र तत्र रणाजिरे । भग्नचक्रा रथेशापि पतितेव महाभुजे ॥ ९ ॥ वाजिभिश्च हतैः शूरैः चक्रीणा वसुधाभवत् । बाणपातनिकृत्तास्तु योधास्ते कुरुसत्तम ॥ १० ॥ चेष्टन्तो विविधाश्चेष्टा व्यदृश्यन्त महाहवे । वर्त्तमाने तथा युद्धे घोरे देवासुरोपमे ॥ ११ ॥ अब्रवीत क्षत्रियांस्तत्र धर्मराजो युधिष्ठिरः । अभिद्रवत संयत्ताः कुम्भयोनिं महारथाः ॥ १२ ॥ एष हि पार्षतो वीरो भारद्वाजेन सङ्गत । घटते च यथाशक्ति भारद्वाजस्य नाशने ॥ १३ ॥ यादृशानि हि रूपाणि दृश्यन्ते स महारणे । अद्य द्रोणश्च सङ्क्रुद्धः पातयिष्यति पार्षतः ॥ १४ ॥ ते यूयं सहिता भूत्वा युध्यध्वं कुम्भसम्भवम् । युधिष्ठिरसमाज्ञप्ता सृञ्जयाना महारथाः ॥ १५ ॥ अभ्यद्रवन्त संयत्ता भारद्वाज जिघांसव । तान् समापततः सर्वान् भारद्वाजो महारथः ॥ १६ ॥ अभ्यवर्त्तत वेगेन मर्त्तव्यमिति निश्चितः । प्रयाते सत्यसन्धे तु समकम्पत मेदिनी ॥ १७ ॥ ववुर्वातास्ततो वीरास्त्रासयाना वरूथिनीम् । पपात महती चोल्का आदित्यान्निश्चरन्तिव ॥ १८ ॥ दीपयन्तीव पातेन शंसतीव महद्भयम् । जज्वलुश्चैव शस्त्राणि भारद्वाजस्य मारिष ॥ १९ ॥ रथाः स्वनन्ति चात्यर्थं हयाश्चाश्रूण्यपातयन् । हतौजा इव चाप्यासीद्भारद्वाजो महारथ ॥ २० ॥ प्रास्फुरन्नयनञ्चास्य वामबाहुस्तथैव च । विमनस्कोऽभवद्युद्धे दृष्ट्वा पार्षतमग्रत ॥ २१ ॥ ऋषीणां ब्रह्मवादीनां स्वर्गस्य गमनं प्रति । सुयुद्धेन ततः प्राणानुत्स्रष्टुमुपचक्रमे ॥ २२ ॥ ततश्चतुर्दिशं सैन्यैर्द्रुपदस्याभिसंवृत । निर्दहन् क्षत्रियव्रातान् द्रोणः पर्य्यचरद्रणे ॥ २३ ॥ हत्वा विंशतिसाहस्रान् क्षत्रियानरिमर्द्दन । दशायुतानि तीक्ष्णाग्रैरवधीद्विशिखै शितै ॥ २४ ॥ सोऽतिष्ठदाहवे यत्तो विधूम इव पावक । क्षत्रियाणामभावाय

ब्राह्ममस्त्रं समास्थितः ॥ २५ ॥ पाञ्चाल्यं विरथं भीमो हतसर्वा-
युधं वशी । अविषण्णं महात्मानं त्वरमाणः समभ्ययात् ॥ २६ ॥
ततः स्वरथमारोप्य पाञ्चाल्यमरिमर्दनः । अब्रवीदभिसंप्रेक्ष्य
द्रोणमस्यन्तमन्तिकात् ॥ २७ ॥ न त्वदन्य इहाचार्यं योद्धुमुत्-
सहते पुमान् । त्वरस्व प्राग्वधायास्य त्वयि भारः समाहितः ॥ २८ ॥
स तथोक्तो महाबाहुः सर्वभारसहं नवम् । अभिपत्याददे क्षिप्र-
मायुधप्रवरं दृढम् ॥ २९ ॥ संरब्धश्च शरानस्यन् द्रोणं दुर्वारणं
रणे । निवारयिषुराचार्यं शरवर्षैरवाकिरत् ॥ ३० ॥ तौ
न्यवारयतां श्रेष्ठौ संरब्धौ रणशोभिनौ । उदीरयेतां ब्राह्माणि
दिव्यान्यस्त्राण्यनेकशः ॥ ३१ ॥ स महास्त्रैर्महाराज द्रोणमाच्छा-
दयद्रणे । निहत्य सर्वाण्यस्त्राणि भारद्वाजस्य पार्षतः ॥ ३२ ॥
स वसातीन् शिबींश्चैव बाह्लीकान् कौरवानपि । रक्षिष्यमाणान्
संग्रामे द्रोणं व्यधमदच्युतः ॥ ३३ ॥ धृष्टद्युम्नस्तदा राजन् गभ-
स्तिभिरिवांशुमान् । बभौ प्रच्छादयन्नाशाः शरजालैः समन्ततः
॥ ३४ ॥ तस्य द्रोणो धनुश्छित्त्वा विद्ध्वा चैनं शिलीमुखैः । मर्मा-
ण्यभ्यहनद्भूयः स व्यथां परमामगात् ॥ ३५ ॥ ततो भीमो
दृढक्रोधो द्रोणस्याश्लिष्य तं रथम् । शनकैरिव राजेन्द्र द्रोणं
वचनमब्रवीत् ॥ ३६ ॥ यदि नाम न युध्येरञ्छिक्षिता ब्रह्मबन्धवः ।
स्वकर्मभिरसंतुष्टा न स्म क्षत्रं क्षयं व्रजेत् ॥ ३७ ॥ अहिंसा सर्व-
भूतेषु धर्मस्य विस्तरं विदुः । तस्य च ब्राह्मणो मूलं भवान् च
ब्रह्मवित्तमः ॥ ३८ ॥ श्वपाकवन् म्लेच्छगणान् हत्वा चान्यान्
पृथग्विधान् । अज्ञानान्मूढवद्ब्रह्मन् पुत्रदारधनेप्सया ॥ ३९ ॥
एकस्यार्थे बहून् हत्वा पुत्रस्याधर्मविद्यथा । स्वकर्मस्थान् विक-
र्मस्थो न व्यपत्रपसे कथम् ॥ ४० ॥ यस्यार्थे शस्त्रमादाय यमपेक्ष्य
च जीवसि । स चाद्य पतितः शेते पृष्ठेनावेदितस्तव ॥ ४१ ॥
धर्मराजेन तद्वाक्यं नाभिशङ्कितुमर्हसि । एवमुक्तस्ततो द्रोणो

भीमेनोत्सृज्य तद्धनुः ॥ ४२ ॥ सर्व्वाण्यस्त्राणि धर्म्मात्मा हातु-
कामोऽभ्यभाषत । कर्ण कर्ण महेष्वास कृप दुर्य्योधनेति च ॥ ४३ ॥
सङ्ग्रामे क्रियतां यत्नो ब्रवीम्येष पुनः पुनः । पाण्डवेभ्यः शिवं
वोऽस्तु शस्त्रमभ्युत्सृजाम्यहम् ॥ ४४ ॥ इति तत्र महाराज
प्राक्रोशद्द्रौणिमेव च । स उत्सृज्य रणे शस्त्रं रथोपस्थे निविश्य
च ॥ ४५ ॥ अभयं सर्व्वभूतानां प्रददौ योगयुक्तवान् । तस्य
तच्छिद्रमाज्ञाय धृष्टद्युम्नः समुत्थितः ॥ ४६ ॥ सशरं तद्धनुर्घोरं
सन्न्यस्याथ रथे ततः । खड्गी रथादवप्लुत्य सहसा द्रोणमभ्य-
यात् ॥ ४७ ॥ हाहाकृतानि भूतानि मानुषाणीतराणि च । द्रोणं
तथा गतं दृष्ट्वा धृष्टद्युम्नवशङ्गतम् ॥ ४८ ॥ हाहाकारं भृशञ्चक्रु-
रहो धिगिति चाब्रुवन् । द्रोणोऽपि शस्त्राण्युत्सृज्य परमं
साम्यमास्थितः ॥ ४९ ॥ तथोक्त्वा योगमास्थाय ज्योतिर्भूतो महा-
तपाः । पुराणं पुरुषं विष्णुं जगाम मनसा परम् ॥ ५० ॥ मुखं
किञ्चित् समुन्नाम्य विष्टभ्य उरमग्रतः । निमीलिताक्षः सत्त्वस्थो
निक्षिप्य हृदि धारणाम् ॥ ५१ ॥ ओमित्येकाक्षरं ब्रह्म ज्योति-
र्भूतो महातपाः । स्मरित्वा देवदेवेशमक्षरं परमं प्रभुम् ॥ ५२ ॥
दिवमाक्रामदाचार्य्यः साक्षात् सद्भिर्दुराक्रमम् । द्वौ सूर्य्याविति
नो बुद्धिरासीत्तस्मिंस्तथा गते ॥ ५३ ॥ एकाग्रमिव चासीद्धि
ज्योतिर्भिः पूरितं नभः । समपद्यत चार्काभे भारद्वाजदिवाकरे
॥ ५४ ॥ निमेषमात्रेण च तज्ज्योतिरन्तरधीयत । आसीत् किल-
किलाशब्दः प्रहृष्टानां दिवौकसाम् ॥ ५५ ॥ ब्रह्मलोकं गते द्रोणे
धृष्टद्युम्ने च मोहिते । वयमेव तदाद्राक्ष्म पञ्च मानुषयोनयः ॥ ५६ ॥
योगयुक्तं महात्मानं गच्छन्तं परमाङ्गतिम् । अहं धनञ्जयः पार्थो
भारद्वाजस्य चात्मजः ॥ ५७ ॥ वासुदेवश्च वार्ष्णेयो धर्म्मराजोऽथ
पाण्डवः । अन्ये सर्व्वे च नापश्यन् भारद्वाजस्य धीमतः ॥ ५८ ॥
गाहमानं महाराज योगयुक्तस्य गच्छतः । ब्रह्मलोकञ्च तद्दिव्य

देवगुह्यं हि तत्परम् ॥ ५९ ॥ गतिमैकान्तिकीं प्राप्तमजानन्तो
नृयोनयः । नापश्यन् गच्छमानं हि तं सार्द्धमृषिपुङ्गवैः ॥ ६० ॥
आचार्य्यं योगमास्थाय ब्रह्मलोकमरिन्दम । वितुन्नाङ्गं शरव्रातै-
र्न्यस्तायुधमसृक्चरम् ॥ ६१ ॥ धिक्कृतः पार्षतस्तन्तु सर्व्वभूतैः
परामृशत् । तस्य मूर्द्धानमालम्ब्य गतसत्त्वस्य देहिनः ॥ ६२ ॥
किञ्चिदब्रुवतः कायाद्विचकर्त्तासिना शिरः । हर्षेण महता युक्तो
भारद्वाजे निपातिते ॥ ६३ ॥ सिंहनादरवञ्चक्रे भ्रामयन् खड्ग-
माहवे । आकर्णपलितः श्यामो वयसाशीतिपञ्चकः ॥ ६४ ॥ त्वत्-
कृते व्यचरत् सङ्ख्ये स तु षोड़शवर्षवत् । उक्तवांश्च महाबाहुः
कुन्तीपुत्रो धनञ्जयः ॥ ६५ ॥ जीवन्तमानयाचार्य्यं मा वधी-
र्द्रुपदात्मज । न हन्तव्यो न हन्तव्य इति ते सैनिकाश्च ह ॥ ६६ ॥
उत्क्रोशन्नर्ज्जुनश्चैव सानुक्रोशस्तमाद्रवत् । क्रोशमानेऽर्ज्जुने चैव
पार्थिवेषु च सर्व्वशः ॥ ६७ ॥ धृष्टद्युम्नोऽवधीद्द्रोणं रथतल्पे नर-
र्षभ । शोणितेन परिक्लिन्नो रथाद्भूमिमरिन्दमः ॥ ६८ ॥ लोहि-
ताङ्ग इवादित्यो दुर्द्दर्शः समपद्यत । एवं तं निहतं सङ्ख्ये ददृशे
सैनिको जनः ॥ ६९ ॥ धृष्टद्युम्नस्ततो राजन् भारद्वाजशिरो
महत् । तावकानां महेष्वासः प्रमुखे तत्समाक्षिपत् ॥ ७० ॥ ते
तु दृष्ट्वा शिरो राजन् भारद्वाजस्य तावकाः । पलायनकृतोत्साहा
दुद्रुवुः सर्व्वतो दिशः ॥ ७१ ॥ द्रोणस्तु दिवमास्थाय नक्षत्रपथ-
माविशत् । अहमेव तदाद्राक्षं द्रोणस्य निधनं नृप ॥ ७२ ॥
ऋषेः प्रसादात् कृष्णस्य सत्यवत्याः सुतस्य तु । विधूमामिव सं-
यान्तीमुल्कां प्रज्वलितामिव ॥ ७३ ॥ अपश्याम दिवं स्तब्ध्वा
गच्छन्तं त महाद्युतिम् । हते द्रोणे निरुत्साहाः कुरुपाण्डव-
सृञ्जयाः ॥ ७४ ॥ अभ्यद्रवन्महावेगास्ततः सैन्यं व्यदीर्य्यत ।
निहता हतभूयिष्ठाः सङ्ग्रामे निशितैः शरैः ॥ ७५ ॥ तावका निहते
द्रोणे गतासव इवाभवन् । पराजयमथावाप्य परत्र च मह

ह्रयम् ॥ ७६ ॥ तमयेनैव ते दीना नाविदन् धृतिमात्मन।
आन्वक्रन्त शरीरन्तु भारद्वाजस्य पार्थिवा ॥ ७७ ॥ नान्वगच्छ-
न्महाराज कबन्धायुतसङ्गते। पाण्डवास्तु जयं लब्धा परत्र च
महद्यश ॥ ७८ ॥ बाणशङ्खरवांश्चक्रु सिंहनादांश्च पुष्कलान्।
भीमसेनस्ततो राजन् धृष्टद्युम्नश्च पार्षत ॥ ७९ ॥ वरूथिन्या-
मनृत्येतां परिष्वज्य परस्परम्। अब्रवीच्च तदा भीम पार्षतं
शत्रुतापन ॥ ८० ॥ भूयोऽहं त्वां विजयिन परिष्वक्ष्यामि पार्षत।
सूतपुत्रे हते पापे धार्त्तराष्ट्रे च संयुगे ॥ ८१ ॥ एतावदुक्त्वा
भीमस्तु हर्षेण महता युत। बाहुशब्देन पृथिवीं कम्पयामास
पाण्डव ॥ ८२ ॥ तस्य शब्देन वित्रस्ता प्राद्रवंस्तावका युधि।
क्षत्रधर्मं समुत्सृज्य पलायनपरायणा ॥ ८३ ॥ पाण्डवास्तु जयं
लब्धा हृष्टा ह्यासन् विशाम्पते। अरिक्षयञ्च सङ्ग्रामे तेन ते सुख-
माप्नुवन् ॥ ८४ ॥

इति द्रोणपर्वणि द्रोणवधपर्वणि द्रोणवधे
त्रिनवत्यधिकशततोऽध्याय समाप्तञ्च द्रोणवधपर्व ॥ १९३ ॥

---

अथ नारायणास्त्रमोक्षपर्व।

सञ्जय उवाच। ततो द्रोणे हते राजन् कुरव शस्त्र
पीडिता। हतप्रवीरा विध्वस्ता भृशं शोकपरायणा ॥ १ ॥
उदीर्णांश्च परान् दृष्ट्वा कम्पमाना पुन पुन। अश्रुपूर्णेक्षणा-
स्त्रस्ता दीनाश्चासन् विशाम्पते ॥ २ ॥ विचेतसो हतोत्साहा
कश्मलाभिहतौजस। आर्त्तस्वरेण महता पुत्रन्ते पर्य्यवारयन्
॥ ३ ॥ रजस्वला वेपमाना वीक्षमाणा दिशो दश। अश्रुकण्ठा
यथा दैत्या हिरण्याक्षे पुरा हते ॥ ४ ॥ स तै परिवृतो राजा
त्रस्तै क्षुद्रमृगैरिव। अशक्नुवन्नवस्थातुमपायात्तनयस्तव ॥ ५ ॥

द्युतिप्रभावपरिम्लानास्ते योधास्तव भारत। आदित्येनेव सन्तप्ता
दृढं विमनसोऽभवन् ॥ ६ ॥ भास्करस्येव पतनं समुद्रस्येव शोष
णम्। विपर्य्यासं यथा मेरोर्वासवस्येव निर्ज्जयम् ॥ ७ ॥ अमर्ष
णीयं तद्दृष्ट्वा भारद्वाजस्य पातनम्। त्रस्तरूपतरा राजन् कौरवाः
प्राद्रवन् भयात् ॥ ८ ॥ गान्धारराजः शकुनिस्त्रस्तस्त्रस्ततरैः सह।
हतं रुक्मरथं दृष्ट्वा प्राद्रवत् सहितो रथैः ॥ ९ ॥ वरूथिनीं
वेगवतीं विद्रुतां सपताकिनीम्। परिगृह्य महासेनां सूतपुत्रो-
ऽपयाद्भयात् ॥ १० ॥ रथनागाश्वकलिलां पुरस्कृत्य तु वाहिनीम्।
मद्राणामीश्वरः शल्यो वीक्षमाणोऽपयाद्भयात् ॥ ११ ॥ हत-
प्रवीरैर्भूयिष्ठैर्द्विपैर्बहुपदातिभिः। वृतः शारद्वतोऽगच्छत् कष्टं
कष्टमिति ब्रुवन् ॥ १२ ॥ भोजानीकेन शिष्टेन कालिङ्गारट्टबाह्लिकैः।
कृतवर्म्मा वृतो राजन् प्रायात् सुजवनैर्हयैः ॥ १३ ॥ पदातिगण-
संयुक्तस्त्रस्तो राजन् भयार्दितः। उलूकः प्राद्रवत्तत्र दृष्ट्वा द्रोणं
निपातितम् ॥ १४ ॥ दर्शनीयो युवा चैव शौर्य्ये च कृतलक्षणः।
दुःशासनो भृशोद्विग्नः प्राद्रवद्गजसंवृतः ॥ १५ ॥ रथानामयुतं गृह्य
त्रिसाहस्रांश्च दन्तिनः। वृषसेनो ययौ तूर्णं दृष्ट्वा द्रोणं निपा-
तितम् ॥ १६ ॥ गजाश्वरथसंयुक्तो वृतश्चैव पदातिभिः। दुर्य्यो-
धनो महाराज प्रायात्तत्र महारथः ॥ १७ ॥ संशप्तकगणान् गृह्य
हतशेषान् किरीटिना। सुशर्म्मा प्राद्रवद्राजन् दृष्ट्वा द्रोणं निपा
तितम् ॥ १८ ॥ गजान्रथान् समारुह्य व्युदस्य च हयान् जनाः।
प्राद्रवन् सर्व्वतः संख्ये दृष्ट्वा रुक्मरथं हतम् ॥ १९ ॥ त्वरयन्तः
पितॄनन्ये भ्रातॄनपि च मातुलान्। पुत्रानन्ये वयस्यांश्च प्राद्रवन्
कुरवस्तथा ॥ २० ॥ चोदयन्तश्च सैन्यानि स्वस्रीयांश्च तथा परे।
सम्बन्धिनस्तथा चान्ये प्राद्रवन्त दिशो दश ॥ २१ ॥ प्रकीर्णकेशा
विध्वस्ता न द्वावेकत्र धावतः। नेदमस्तीति पुरुषा हतोत्साहा
हतौजसः ॥ २२ ॥ उत्सृज्य कवचानन्ये प्राद्रवंस्तावका विभो।

अन्योऽन्यं ते समाक्रोशन् सैनिका भरतर्षभ ॥ २३ ॥ तिष्ठ तिष्ठेति न च ते स्वयं तत्रावतस्थिरे। पर्य्यानुत्सृज्य तु रथान् भूपयो- स्याप्यलङ्कृतान् ॥ २४ ॥ अधिरुह्य रथान् योधाः क्षिप्रं पद्भि- रचोदयन्। द्रवमाणे तथा सैन्ये त्रस्तरूपे हतौजसि ॥ २५ ॥ प्रतिस्रोत इव ग्राहो द्रोणपुत्र परानियात। तस्यासीत् सुमह- द्युद्धं शिखण्डिप्रमुखैर्गणैः ॥ २६ ॥ प्रभद्रकैश्च पाञ्चालैश्चेदिभिश्च सकेकयैः। हत्वा बहुविधाः सेनाः पाण्डूना युद्धदुर्मदाः ॥ २७ ॥ कथञ्चित्सङ्कटान्मुक्तो मत्तद्विरदविक्रमः। द्रवमाणं बलं दृष्ट्वा पलायनकृतक्षणम् ॥ २८ ॥ दुर्य्योधनं समासाद्य द्रोणपुत्रोऽब्रवी- दिदम्। किमियं द्रवते सेना त्रस्तरूपेव भारत ॥ २९ ॥ द्रव- माणां च राजेन्द्र नावस्थापयसे रणे। त्वञ्चापि न यथा पूर्वं प्रकृतिस्थो नराधिप ॥ ३० ॥ कर्णप्रमुखाश्चेह इति राजन्नयस्थितं बलं तव। एतामवस्थां सम्प्राप्य सज्जमानस्तु कौरव ॥ ३१ ॥ कर्णप्रभृतयश्चेमे नावतिष्ठन्ति पार्थिव। अन्येष्वपि च युद्धेषु नैव सेनाद्रवत्तथा ॥ ३२ ॥ कच्चित् क्षेमं महाबाहो तव सैन्यस्य भारत। तव दुर्य्योधनः श्रुत्वा द्रोणपुत्रस्य भाषितम् ॥ ३३ ॥ घोरमप्रिय- माख्यातुं नाशकत् पार्थिवर्षभः। भिन्ना नौरिव ते पुत्रो निमग्नः शोकसागरे ॥ ३४ ॥ वाष्पेणापिहितो दृष्ट्वा द्रोणपुत्रं रथे स्थितम्। ततः शारद्वतं राजन् सव्रीडमिदमब्रवीत् ॥ ३५ ॥ शंसेह पूर्वं भद्रन्ते यथा सैन्यमिदं द्रुतम्। अथ शारद्वतो राजन्नार्त्तिमार्च्छन् पुनः पुनः। शशंस द्रोणपुत्राय यथा द्रोणो निपातितः ॥ ३६ ॥

कृप उवाच। वयं द्रोणं पुरस्कृत्य पृथिव्याः प्रवरं रथम्। प्रावर्त्तयाम सङ्ग्रामं पाञ्चालैरेव केवलैः ॥ ३७ ॥ ततः प्रवृत्ते सङ्ग्रामे विमिश्राः कुरुसोमकाः। अन्योऽन्यमभिगर्ज्जन्तः शस्त्रैर्देहानपा- तयन् ॥ ३८ ॥ वर्त्तमाने तथा युद्धे क्षीयमाणेषु संयुगे। धार्त्त- राष्ट्रेषु संक्रुद्धः पिता तेऽस्त्रमुदैरयत् ॥ ३९ ॥ ततो द्रोणो ब्राह्म-

मस्त्रं विकुर्वाणो नरर्षभः । न्यहनत् पञ्चालवान् मत्स्ये सृतयोऽथ सहस्रशः ॥ ४० ॥ पाण्डवाः केकया मत्स्याः पाञ्चालाश्च द्विजोत्तम । सङ्ग्रामे द्रोणवशं प्राप्य व्यनशन् कालचोदिताः ॥ ४१ ॥ सहस्रं नरसिंहानां दिसाहस्रञ्च दन्तिनाम् । द्रोणो ब्रह्मास्त्रयोगेन प्रेषयामास मृत्यवे ॥ ४२ ॥ आकर्णपलितः श्यामो वयसाशीतिपञ्चकः । रणे पर्य्यचरद्द्रोणो वृद्धः षोड़शवर्षवत् ॥ ४३ ॥ क्लिश्यमानेषु सैन्येषु युध्यमानेषु राजसु । अमर्षवशमापन्ना पाञ्चाला विमुखाभवन् ॥ ४४ ॥ तेषु किञ्चित् प्रभग्नेषु विमुखेषु सपत्नजित् । दिव्यमस्त्रं विकुर्वाणो बभूवार्क इवोदितः ॥ ४५ ॥ स मध्यं प्राप्य पाण्डूनां शररश्मि प्रतापवान् । मध्यं गत इवादित्यो दुष्प्रेक्ष्यस्ते पिताभवत् ॥ ४६ ॥ ते दह्यमाना द्रोणेन सूर्य्येणेव विराजता । दग्धवीर्य्या निरुत्साहा बभूवुर्गतचेतसः ॥ ४७ ॥ तान् दृष्ट्वा पीड़ितान् वाणैर्द्रोणेन मधुसूदन । जयैषी पाण्डुपुत्राणामिदं वचनमब्रवीत् ॥ ४८ ॥ नैष जातु परैः शक्यो जेतुं शस्त्रभृताम्वरः । अपि वृत्रहणा सङ्ख्ये रथयूथपयूथप ॥ ४९ ॥ ते यूयं धर्ममुत्सृज्य जयं रक्षत पाण्डवाः । यथा वः संयुगे सर्वान् न हन्याद्रुक्मवाहनः ॥ ५० ॥ अश्वत्थाम्नि हते नैष युध्येदिति मतिर्मम । हतं तं संयुगे कश्चिदाख्यात्वस्य मृषा नरः ॥ ५१ ॥ एतन्नारोचयद्वाक्य कुन्तीपुत्रो धनञ्जय । अरोचयत्तु सर्व्वेऽन्ये कृच्छ्रेण तु युधिष्ठिरः ॥ ५२ ॥ भीमसेनस्तु सव्रीड़मब्रवीत् पितरं तव । अश्वत्थामा हत इति नाचाबुध्यत ते पिता ॥ ५३ ॥ स शङ्कमानस्तन्मिथ्या धर्मराजमपृच्छत । हतं वाप्यहतं वाजौ त्वां पिता पुत्रवत्सलः ॥ ५४ ॥ तमतथ्यभये मग्नो जये सक्तो युधिष्ठिरः । अश्वत्थामानमायोधे हतं दृष्ट्वा महागजम् ॥ ५५ ॥ भीमेन गिरिवर्षाणं मालवस्येन्द्रवर्मणः । अभिसृत्य ततो द्रोणमुच्चैरिदमभाषत ॥ ५६ ॥ यस्यार्थे शस्त्रमाधत्से यमवेक्ष्य च जीवसि । पुत्रस्ते दयितो नित्यं

सोऽश्वत्थामा निपातित ॥ ५७ ॥ शेते विनिहतो भूमौ वने सिंह-
मिवर्यथा । जानन्नप्यनृतस्याथ दोषान् स द्विजसत्तमम् ॥ ५८ ॥
अव्यक्तमब्रवीद्राजा हतः कुञ्जर इत्युत । स त्वां विहतमाक्रन्दे
श्रुत्वा सन्तापपीड़ित ॥ ५९ ॥ नियम्य दिव्यान्यस्त्राणि नायुध्यत
यथा पुरा । तं दृष्ट्वा परमोद्विग्नं शोकोपहतचेतसम् ॥ ६० ॥
पाञ्चालराजस्य सुत क्रूरकर्मा समाद्रवत् । त दृष्ट्वा विहितं मृत्युं
लोकतत्त्वविचक्षण ॥ ६१ ॥ दिव्यान्यस्त्राण्यथोत्सृज्य रणे प्राय
उपाविशत् । ततोऽस्य केशान् सव्येन गृहीत्वा पाणिना तदा
॥ ६२ ॥ पार्षतः क्रोशमानानां वीराणामच्छिनच्छिरः । न
हन्तव्यो न हन्तव्य इति ते सर्वतोऽब्रुवन् ॥ ६३ ॥ तथैव चार्ज्जुनो
वाहादवरुह्यैनमाद्रवत् । उद्यम्य त्वरितो बाहू ब्रुवाणश्च पुनः
पुन ॥ ६४ ॥ जीवन्तमानयाचार्य्यं नावधीरपि धर्म्मवित् । तथापि
वार्य्यमाणेन कौरवैरर्ज्जुनेन च ॥ ६५ ॥ हत एव नृशंसेन पिता
तव नरर्षभ । सैनिकाश्च तत सर्व्वे प्राद्रवन्त भयार्द्दिता । वय-
ञ्चापि निरुत्साहा हते पितरि तेऽनघ ॥ ६६ ॥
। सञ्जय उवाच । तच्छ्रुत्वा द्रोणपुत्रस्तु निधनं पितुराहवे ।
क्रोधमाहारयत्तीव्रं पदाहत इवोरग ॥ ६७ ॥ तत क्रुद्धो रणे
द्रौणिर्भृशं जज्वाल मारिष । यथेन्धनं महत् प्राप्य प्राज्वलद्धव्य-
वाहन ॥ ६८ ॥ तल तलेन निष्पिष्य दन्तैर्दन्तानुपस्पृशन् ।
नि श्वसन्नुरगो यद्वल्लोहिताक्षोऽभवत्तदा ॥ ६९ ॥

इति द्रोणपर्व्वणि नारायणास्त्रमोक्षपर्व्वणि अश्वत्थामक्रोधे
चतुर्नवत्यधिकशततमोऽध्याय ॥ १९४ ॥

---

धृतराष्ट्र उवाच । अधर्म्मेण हतं श्रुत्वा धृष्टद्युम्नेन सञ्जय ।
ब्राह्मण पितरं वृद्धमश्वत्थामा किमब्रवीत् ॥ १ ॥ मानवं वारु-

आग्नेयं ब्राह्ममस्त्रञ्च वीर्य्यवान्। ऐन्द्रं नारायणञ्चैव यस्मिन्नित्यं
प्रतिष्ठितम् ॥ २ ॥ तमधर्म्मेण धर्म्मिष्ठं धृष्टद्युम्नेन संयुगे। श्रुत्वा
निहतमाचार्य्यं सोऽश्वत्थामा किमब्रवीत् ॥ ३ ॥ येन रामादवा
प्येह धनुर्वेदं महात्मना। प्रोक्तान्यस्त्राणि दिव्यानि पुत्राय गुण
काङ्क्षिणा ॥ ४ ॥ एकमेव हि लोकेऽस्मिन्नात्मनो गुणवत्तरम्।
इच्छन्ति पुरुषा लोके पुत्रं नान्यं कथञ्चन ॥ ५ ॥ आचार्य्याणां
भवन्त्येव रहस्यानि महात्मनाम्। तानि पुत्राय वा दद्युः शिष्या-
यानुगताय वा ॥ ६ ॥ स शिष्यः प्राप्य तत्सर्वं सविशेषञ्च सञ्जय।
शूरः शारद्वतीपुत्रः सङ्ख्ये द्रोणादनन्तरः ॥ ७ ॥ रामस्यानुमतः
सङ्ख्ये पुरन्दरसमो युधि। कार्त्तवीर्य्यसमो वीर्य्ये बृहस्पतिसमो
मतौ ॥ ८ ॥ महीधरसमो धृत्या तेजसाग्निसमो युवा। समुद्र
इव गाम्भीर्य्ये क्रोधे सर्पविषोपमः ॥ ९ ॥ स रथी प्रथमो लोके
जितधन्वा जितक्लमः। शीघ्रोऽनिल इवाक्रन्दे चरन् क्रुद्ध इवान्तकः
॥ १० ॥ अस्यता येन सङ्ग्रामे धरण्यभिनिपीड़िता। यो न व्यथति
सङ्ग्रामे वीरः सत्यपराक्रमः ॥ ११ ॥ वेदस्नातो व्रतस्नातो धनु-
र्वेदे च पारगः। महोदधिरिवाक्षोभ्यो रामो दाशरथिर्यथा ॥१२॥
तमधर्म्मेण धर्म्मिष्ठं धृष्टद्युम्नेन संयुगे। श्रुत्वा निहतमाचार्य्यं
सोऽश्वत्थामा किमब्रवीत् ॥ १३ ॥ धृष्टद्युम्नश्च यो मृत्युः सृष्टस्तेन
महात्मना। यथा द्रोणस्य पाञ्चाल्यो यज्ञसेनसुतोऽभवत् ॥ १४ ॥
तं नृशंसेन पापेन क्षुद्रेणाल्पदर्शिना। श्रुत्वा निहतमाचार्य्य-
मश्वत्थामा किमब्रवीत् ॥ १५ ॥

इति द्रोणपर्व्वणि नारायणास्त्रमोक्षपर्व्वणि अश्वत्थामक्रोधे
पञ्चनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥

---

सञ्जय उवाच । छद्मना निहतं श्रुत्वा पितरं पापकर्मणा ।
वाष्पेणापूर्य्यत द्रौणी रोषेण च नरर्षभ ॥ १ ॥ तस्य क्रुद्धस्य
राजेन्द्र वपुर्दिव्यमदृश्यत । अन्तकस्येव भूतानि जिहीर्षोः काल-
पर्य्यये ॥ २ ॥ अश्रुपूर्णे ततो नेत्रे अपमृज्य पुनः पुनः । उवाच
कोपान्निःश्वस्य दुर्य्योधनमिदं वचः ॥ ३ ॥ पिता मम यथा क्षुद्रै-
र्न्यस्तशस्त्रो निपातितः । धर्मध्वजवता पापं कृतं तद्विदितं मम
॥ ४ ॥ अनार्य्यं सुनृशंसञ्च धर्मपुत्रस्य मे श्रुतम् । युद्धेष्वपि
प्रवृत्तानां ध्रुवौ जयपराजयौ ॥ ५ ॥ द्वयमेतद्भवेद्राजन् वधस्तत्र
प्रशस्यते । न्यायवृत्तो वधो यस्तु सङ्ग्रामे युध्यतो भवेत् ॥ ६ ॥
न स दुःखाय भवति यथा दृष्टो हि स द्विजैः । गतः स वीर-
लोकाय पिता मम न संशयः ॥ ७ ॥ न शोच्यः पुरुषव्याघ्रस्तथा
स निधनं गतः । यत्तु धर्मप्रवृत्तः सन् केशग्रहणमाप्तवान् ॥ ८ ॥
पश्यतां सर्वसैन्यानां तन्मे मर्माणि कृन्तति । मयि जीवति मत्तातः
केशग्रहणमाप्तवान् ॥ ९ ॥ कथमन्ये करिष्यन्ति पुत्रेभ्यः पुत्रिणः
स्पृहाम् । कामात् क्रोधादवज्ञानात् दर्पाद्बाल्येन वा पुनः ॥ १० ॥
विधर्मिकाणि कुर्वन्ति तथा परिभवन्ति च । तदिदं पार्षतेनेह
महदाधर्मिकं कृतम् ॥ ११ ॥ अवज्ञाय च मां नूनं नृशंसेन दुरा-
त्मना । तस्यानुबन्धं स द्रष्टा धृष्टद्युम्नः सुदारुणम् ॥ १२ ॥
अनार्य्यं परमं कृत्वा मिथ्यावादी च पाण्डवः । यो ह्यसौ छद्म-
नाचार्य्यं शस्त्रं सन्न्यासयत्तदा ॥ १३ ॥ तस्याद्य धर्मराजस्य
भूमिः पास्यति शोणितम् । अपि सत्येन कौरव्य इष्टापूर्त्तेन चैव
हि ॥ १४ ॥ अहत्वा सर्वपाञ्चालान् जीवेयं न कथञ्चन । सर्वो-
पायैर्यतिष्यामि पाञ्चालानां महाहवे ॥ १५ ॥ धृष्टद्युम्नञ्च समरे
हन्ताहं पापकारिणम् । कर्मणा येन तेनेह मृदुना दारुणेन च
॥ १६ ॥ पाञ्चालानां वधं कृत्वा शान्तिं लब्धास्मि कौरव । यदर्थं
पुरुषव्याघ्र पुत्रानिच्छन्ति मानवाः ॥ १७ ॥ प्रेत्य चेह च सम्प्राप्ता-

त्रायन्ते महतो भयात्। पिता तु मम सावस्थां प्राप्तो निर्बन्धुना यथा ॥ १८ ॥ मयि शैलप्रतीकाशे पुत्रे शिष्येऽत्र जीवति। धिङ् ममास्त्राणि दिव्यानि धिक् बाहू धिक् पराक्रमम् ॥ १९ ॥ यन्मां द्रोणः सुतं प्राप्य केशग्रहणमाप्तवान्। स तथाहं करिष्यामि यथा भरतसत्तम ॥ २० ॥ परलोकगतस्यापि गमिष्याम्यनृणः पितुः। आर्य्येण तु न कर्त्तव्या कदाचित् स्तुतिरात्मनः ॥ २१ ॥ पितुर्वधममृष्यंस्तु वक्ष्याम्यद्येह पौरुषम्। अद्य पश्यन्तु मे वीर्य्यं पाण्डवाः सजनार्द्दनाः ॥ २२ ॥ मृद्नतः सर्व्वसैन्यानि युगान्तमिव कुर्व्वतः। न हि देवा न गन्धर्वा नासुरोरगराक्षसाः ॥ २३ ॥ अद्य शक्ता रणे जेतुं रथस्थं मां नरर्षभाः। मदन्यो नास्ति लोकेऽस्मिन्नर्जुनाद्वास्त्रवित् क्वचित् ॥ २४ ॥ अहं हि ज्वलतां मध्ये मयूखानामिवांशुमान्। प्रयोक्ता देवसृष्टानामस्त्राणां पृतनागतः ॥ २५ ॥ मृधमिष्वासनाद्य मत्प्रयुक्ता महाहवे। दर्शयन्तः शरा वीर्य्यं प्रमथिष्यन्ति पाण्डवान् ॥ २६ ॥ अद्य सर्वा दिशो राजन् धाराभिरिव सङ्कुलाः। आवृताः पत्रिभिस्तीक्ष्णैर्द्रष्टारो मामकैरिह ॥२७॥ विकिरन् शरजालानि सर्व्वतो भैरवस्वनम्। शत्रून्निपातयिष्यामि महावात इव द्रुमान् ॥ २८ ॥ न हि जानाति बीभत्सुस्तदस्त्रं न जनार्द्दनः। न भीमसेनो न यमौ न च राजा युधिष्ठिरः ॥ २९ ॥ न पार्षतो दुरात्मासौ न शिखण्डी न सात्यकिः। यदिदं मम कौरव्य सकल्पं सनिवर्त्तनम् ॥ ३० ॥ नारायणाय मे पित्रा प्रणम्य विधिपूर्व्वकम्। उपहारः पुरा दत्तो ब्रह्मरूप उपस्थितः ॥ ३१ ॥ तं स्वयं प्रतिगृह्याथ भगवान् स वरं ददौ। वव्रे पिता मे परमस्त्रं नारायणं ततः ॥ ३२ ॥ अथैनमब्रवीद्राजन् भगवान् देवसत्तमः। भविता त्वत्समो नान्यः कश्चिद्युधि नरः क्वचित् ॥ ३३ ॥ न त्विदं सहसा ब्रह्मन् प्रयोक्तव्यं कथञ्चन। न ह्येतदस्त्रमन्यत्र वधाच्छत्रोर्निवर्त्तते ॥ ३४ ॥ न चैतच्छक्यते ज्ञातुं क

न वध्येदिति प्रभो। अवध्यमपि हन्याद्धि तस्मान्नैतत् प्रयोजयेत् ॥ ३५ ॥ अथ सङ्ख्ये रथस्यैव शस्त्राणाञ्च विसर्जने। प्रयाचतान्नु शत्रूणां गमनं शरणस्य च ॥ ३६ ॥ एते प्रशमने योगा महास्त्रस्य परन्तप। सर्व्वथा पीड़ितो हि स्यादवध्यान् पीड़यन्रणे ॥ ३७ ॥ तन्नाग्राह्यं पिता मह्यमब्रवीच्चैव स प्रभुः। त्वं वधिष्यसि दिव्यानि शस्त्रवर्षाण्यनेकशः ॥ ३८ ॥ अनेनास्त्रेण सङ्ग्रामे तेजसा प्रज्वलिष्यसि। एवमुक्त्वा स भगवान् दिवमाचक्रमे प्रभु ॥ ३९ ॥ एतन्नारायणादस्त्रं तत् प्राप्तं मम बन्धुना। तेनाहं पाण्डवांश्चैव पाञ्चालान्मत्स्यकेकयान् ॥ ४० ॥ विद्रावयिष्यामि रणे शचीपतिरिवासुरान्। यथा यथाहमिच्छेयं तथा भूत्वा शरा मम ॥ ४१ ॥ निपतेयुः सपत्नेषु विक्रमत्स्वपि भारत। यथेष्टमस्त्रवर्षेण प्रवर्षिष्ये रणे स्थितः ॥ ४२ ॥ अयोमुखैश्च विहगैर्द्रावयिष्ये रथोत्तमान्। परश्वधांश्च विविधान्सृक्ष्येऽहमसंशयम् ॥ ४३ ॥ सोऽहं नारायणास्त्रेण महता शत्रुतापनः। शत्रून् विध्वंसयिष्यामि कदर्थीकृत्य पाण्डवान् ॥ ४४ ॥ मित्रब्रह्मगुरुद्वेषी जाल्मकः सुविगर्हितः। पाञ्चालापसदश्चाद्य न मे जीवन् विमोक्ष्यते ॥ ४५ ॥ तच्छ्रुत्वा द्रोणपुत्रस्य पर्य्यवर्त्तत वाहिनी। ततः सर्व्वे महाशङ्खान् दध्मुः पुरुषसत्तमाः ॥ ४६ ॥ भेरीश्चाभ्यहनन् हृष्टा डिण्डिमांश्च सहस्रशः। तथा ननाद वसुधा खुरनेमिप्रपीड़िता ॥ ४७ ॥ स शब्दस्तुमुलः खं द्यां पृथिवीञ्च व्यनादयत्। तं शब्दं पाण्डवाः श्रुत्वा पर्जन्यनिनदोपमम् ॥ ४८ ॥ समेत्य रथिनां श्रेष्ठाः सहिताः सममन्त्रयन्। तथोक्त्वा द्रोणपुत्रोऽपि वार्य्युपस्पृश्य भारत। प्रादुश्चकार तद्दिव्यमस्त्रं नारायणं तदा ॥ ४९ ॥

इति द्रोणपर्व्वणि नारायणास्त्रमोक्षपर्व्वणि अश्वत्थामक्रोधे पञ्चनवत्यधिकशततमोऽध्यायः ॥ १९६ ॥

---

सञ्जय उवाच । प्रादुर्भूते ततस्तस्मिन्नस्त्रे नारायणे तदा । प्रावात् सपृषतो वायुरनभ्रे स्तनयित्नुमान् ॥ १ ॥ चचाल पृथिवी चापि समुद्रश्चैव चुक्षुभे । प्रतिस्रोतः प्रवृत्ताश्च गन्तुं तत्र समुद्रगाः ॥ २ ॥ शिखराणि व्यदीर्यन्त गिरीणां तत्र भारत । अपसव्यं मृगाश्चैव पाण्डुपुत्रान् प्रचक्रिरे ॥ ३ ॥ तमसा चावकीर्यन्त सूर्यश्च कलुषोऽभवत् । सम्पतन्ति च भूतानि क्रव्यादानि प्रहृष्टवत् ॥ ४ ॥ देवदानवगन्धर्वास्त्रस्ताश्चासन् विशाम्पते । कथं कथाभवत्तीव्रा दृष्ट्वा तद्व्याकुलं महत् ॥ ५ ॥ व्यथिताः सर्वराजानस्त्रस्ताश्चासन् विशाम्पते । तं दृष्ट्वा घोररूपन्तु द्रौणेरस्त्रं भयावहम् ॥ ६ ॥

धृतराष्ट्र उवाच । निवर्त्तितेषु सैन्येषु द्रोणपुत्रेण संयुगे । भृशं शोकाभितप्तेन पितुर्वधममृष्यता ॥ ७ ॥ कुरूनापततो दृष्ट्वा धृष्टद्युम्नस्य रक्षणे । को मन्त्रः पाण्डवेष्वासीत्तन्ममाचक्ष्व सञ्जय ॥ ८ ॥

सञ्जय उवाच । प्रागेव विद्रुतान् दृष्ट्वा धार्त्तराष्ट्रान् युधिष्ठिरः । पुनश्च तुमुलं शब्दं श्रुत्वार्जुनमथाब्रवीत् ॥ ९ ॥

युधिष्ठिर उवाच । आचार्ये निहते द्रोणे धृष्टद्युम्नेन संयुगे । निहते वज्रहस्तेन यथा वृत्रे महासुरे ॥ १० ॥ नाशंसन्त जयं युद्धे दीनात्मानो धनञ्जय । आत्मत्राणे मतिं कृत्वा प्राद्रवन् कुरवो रणात् ॥ ११ ॥ केचिद्भ्रान्तै रथैस्तूर्णं निहतैः पार्ष्णियन्तृभिः । विपताकध्वजच्छत्रैः पार्थिवाः शीर्णकूबरैः ॥ १२ ॥ भग्ननीडैराकुलैश्च मारुह्यान्यान् विचेतसः । भीताः पादैर्हयान् केचित् त्वरयन्तः स्वयं रथान् ॥ १३ ॥ युगचक्राक्षभग्नैश्च द्रुताः केचिद्भयातुराः । हयपृष्ठगताश्चान्ये कृष्यन्तेऽर्द्धच्युतासनाः ॥ १४ ॥ गजस्कन्धेषु संस्यूता नाराचैश्चलितासनाः । शरार्त्तैर्विद्रुतैर्नागैर्हृताः केचिद्दिशो दश ॥ १५ ॥ विशस्त्रकवचाश्चान्ये वाहनेभ्यः क्षितिं गताः । संछिन्ना नेमिभिश्चैव मर्दिताश्च हयद्विपैः ॥ १६ ॥ क्रोशन्तस्तात पुत्रेति पलायन्त्यपरे भयात् । नाभिजानन्ति चान्योन्यं

कश्मलाभिहतौजस ॥ १७ ॥ पुत्रान् पितॄन् सखीन् भ्रातॄन्
समारोप्य दृढक्षतान्। जलेन क्लेदयन्त्यन्ये विमुच्य कवचान्यपि
॥ १८ ॥ अवस्था तादृशीं प्राप्य हते द्रोणे द्रुतं बलम्। पुन-
रावर्त्तितं केन यदि जानासि शंस मे ॥ १९ ॥ हयानां हेषतां
शब्दः कुञ्जराणाञ्च बृंहताम्। रथनेमिस्वनैश्चात्र विमिश्रः श्रूयते
महान् ॥ २० ॥ एते शब्दा भृशं तीव्राः प्रवृत्ताः कुरुसागरे।
मुहुर्मुहुरुदीर्य्यन्ते कम्पयन्ति च मामकान् ॥ २१ ॥ य एष
तुमुलः शब्दः श्रूयते लोमहर्षणः। सेन्द्रानप्येष लोकांस्त्रीन् ग्रसे-
दिति मतिर्मम ॥ २२ ॥ मन्ये वज्रधरस्यैष निनादो भैरवस्वनः।
द्रोणे हते कौरवार्थं व्यक्तमभ्येति वासवः ॥ २३ ॥ प्रहृष्टरोम-
कूपाः स्म संविग्ना रथकुञ्जराः। धनञ्जय गुरुं श्रुत्वा तत्र नादं
विभीषणम् ॥ २४ ॥ क एष कौरवान् दीर्णानवस्थाप्य महारथः।
निवर्त्तयति युद्धार्थं मृधे देवेश्वरो यथा ॥ २५ ॥

अर्जुन उवाच। उद्यम्यात्मानमुग्राय कर्म्मणे धैर्य्यमास्थितः।
धमन्ति कौरवाः शङ्खान् यस्य वीर्य्यमुपाश्रिताः ॥ २६ ॥ यत्र ते
संशयो राजन् न्यस्तशस्त्रे गुरौ हते। धार्त्तराष्ट्रानवस्थाप्य क
एष नदतीति ह ॥ २७ ॥ ह्रीमन्तं तं महाबाहुं मत्तद्विरद-
गामिनम्। व्याघ्रास्यमुग्रकर्म्माणं कुरूणामभयङ्करम् ॥ २८ ॥
यस्मिन् जाते ददौ द्रोणो गवां दशशतं धनम्। ब्राह्मणेभ्यो
महार्हेभ्यः सोऽश्वत्थामैष गर्ज्जति ॥ २९ ॥ जातमात्रेण वीरेण
येनोच्चैःश्रवसा इव। हेषता कम्पिता भूमिर्लोकाश्च सकलास्त्रयः
॥ ३० ॥ तच्छ्रुत्वान्तर्हितं भूतं नाम तस्याकरोत् तदा। अश्व-
त्थामेति सोऽद्यैष शूरो नदति पाण्डव ॥ ३१ ॥ योऽद्यानाथ
इवाक्रम्य पार्षतेन हतस्तदा। कर्म्मणा सुनृशंसेन तस्य नाथो
व्यवस्थितः ॥ ३२ ॥ गुरुं मे यत्र पाञ्चाल्यः केशपक्षे परामृशत्।
तन्न जातु क्षमेद्द्रौणिर्जानन् पौरुषमात्मनः ॥ ३३ ॥ उपचीर्णो

गुरुर्मिथ्या भवता राज्यकारणात । धर्मज्ञेन सता नाम सोऽधर्मः
सुमहान् कृत ॥ ३४ ॥ एवं स्थास्यति चाकीर्त्तिस्त्रैलोक्ये सचरा-
चरे । रामे वालिबधाद्यद्वदेव द्रोणे निपातिते ॥ ३५ ॥ सर्व-
धर्मोपपन्नोऽयं मम शिष्यश्च पाण्डव । नायं वक्ष्यति मिथ्येति
प्रत्ययं कृतवांस्त्वयि ॥ ३६ ॥ स सत्यकञ्चुकं नाम प्रविष्टेन ततो-
ऽनृतम् । आचार्य्य उक्तो भवता हतः कुञ्जर इत्युत ॥ ३७ ॥
ततः शस्त्रं समुत्सृज्य निर्ममो गतचेतनः । आसीत् स विह्वलो
राजन् यथा दृष्टस्त्वया विभुः ॥ ३८ ॥ स तु शोकसमाविष्टो
विमुखः पुत्रवत्सलः । शाश्वतं धर्ममुत्सृज्य शिष्येण निहतो गुरुः
॥ ३९ ॥ न्यस्तशस्त्रमधर्म्मेण घातयित्वा गुरुं भवान् । रक्ष-
त्विदानीं सामात्यो यदि शक्नोषि पार्षतम् ॥ ४० ॥ ग्रस्तमाचार्य्य-
पुत्रेण क्रुद्धेन हतबन्धुना । सर्वे वयं परित्रातुं न शक्ताःस्मोऽद्य
पार्षतम् ॥ ४१ ॥ सौहार्द्दं सर्वभूतेषु य करोत्यतिमानुषः ।
सोऽद्य केशग्रहं श्रुत्वा पितुर्धक्ष्यति नो रणे ॥ ४२ ॥ विक्रोशमाने
ऽहं भृशमाचार्य्यघातिनि । अपाकीर्य्य स्वयं धर्मं शिष्येण
निहतो गुरुः ॥ ४३ ॥ यदा गतं वयो भूयः शिष्टमल्पतरञ्च नः ।
तस्येदानीं विकारोऽयमधर्मोऽयं कृतो महान् ॥ ४४ ॥ पितेव नित्य
सौहार्द्दात् पितेव हि स धर्मत । सोऽल्पकालस्य राज्यस्य कारण-
द्घातितो गुरुः ॥ ४५ ॥ धृतराष्ट्रेण भीष्माय द्रोणाय च विशाम्
पते । विसृष्टा पृथिवी सर्वा सह पुत्रैश्च तत्परैः ॥ ४६ ॥
सम्प्राप्य तादृशीं वृत्तिं सत्कृत सततं परैः । अवृणीत सदा
पुत्रान्मामेवाभ्यधिकं गुरुः ॥ ४७ ॥ अक्षीयमाणो न्यस्तास्त्रस्त्वद्वाक्ये
नाहवे हत । न हि तं युध्यमानं वै हन्यादपि शतक्रतुः ॥ ४८ ॥
तस्याचार्य्यस्य वृद्धस्य द्रोहो नित्योपकारिणः । कृतो ह्यनार्य्यै
रस्माभीराज्यार्थं लघुबुद्धिभिः ॥ ४९ ॥ अहो बत महत्पापं कृतं
सुदारुणम् । यद्राज्यसुखलोभेन द्रोणोऽयं साधुघातित ॥ ५० ॥

पितॄन् भ्रातॄन् सुतान् दारान् जीवितञ्चैव वासवि । त्यजेत् सर्वं
मम प्रेम्णा जानात्येव हि मे गुरुः ॥ ५१ ॥ स मया राज्यकामेन
हन्यमाने ह्युपेक्षितः । तस्मादवाक्शिरा राजन् प्राप्तोऽस्मि नरकं
विभो ॥ ५२ ॥ ब्राह्मणं वृद्धमाचार्य्यं न्यस्तशस्त्रं महामुनिम् ।
घातयित्वाद्य राज्यार्थे मृतं श्रेयो न जीवितम् ॥ ५३ ॥

इति द्रोणपर्व्वणि नारायणास्त्रमोक्षपर्व्वणि अर्ज्जुनवाक्ये
सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥

---

सञ्जय उवाच । अर्ज्जुनस्य वचः श्रुत्वा नोचुस्तत्र महारथाः ।
अप्रियं वा प्रियं वापि महाराज धनञ्जयम् ॥ १ ॥ ततः क्रुद्धो
महाबाहुर्भीमसेनोऽभ्यभाषत । कुत्सयन्निव कौन्तेयमर्ज्जुनं भरत-
र्षभ ॥ २ ॥ मुनिर्यथारण्यगतो भाषसे धर्म्मसंहितम् । न्यस्तदण्डो
यथा पार्थ ब्राह्मणः संशितव्रतः ॥ ३ ॥ क्षतत्राता क्षताज्जीवन्
क्षन्ता स्त्रीष्वपि साधुषु । क्षत्रियः क्षितिमाप्नोति क्षिप्रं धर्म्मं यशः
श्रियम् ॥ ४ ॥ स भवान् क्षत्रियगुणैर्युक्तः सर्व्वैः कुलोद्वहः । अवि-
पश्चिद्यथा वाचं व्याहरन्नाद्य शोभसे ॥ ५ ॥ पराक्रमस्ते कौन्तेय
शक्रस्येव शचीपतेः । न चातिवर्त्तसे धर्म्मं वेलामिव महोदधिः ॥ ६ ॥
न पूजयेत्त्वा कोऽन्वद्य यत्त्रयोदशवार्षिकम् । अमर्षं पृष्ठतः कृत्वा
धर्म्ममेवाभिकाङ्क्षसे ॥ ७ ॥ दिष्ट्या तात मनस्तेऽद्य स्वधर्म्ममनु-
वर्त्तते । आनृशंस्यञ्च ते दिष्ट्या बुद्धिः सततमच्युत ॥ ८ ॥ यत्तु
धर्म्मप्रवृत्तस्य हृतं राज्यमधर्म्मतः । द्रौपदी च परामृष्टा सभा-
मानीय शत्रुभिः ॥ ९ ॥ वनं प्रव्राजिताश्चास्म वल्कलाजिनवाससः ।
अनर्हमाणास्तं भावं त्रयोदश समाः परैः ॥ १० ॥ एतान्यमर्ष-
स्थानानि मर्षितानि त्वयानघ । क्षत्रधर्म्मप्रसक्तेन सर्व्वमेतदनुष्ठितम्
॥ ११ ॥ तमधर्म्ममपाक्रष्टुं स्मृत्वाद्य सहितस्त्वया । सानुबन्धान्

हनिष्यामि युद्धश्लाघ्यदुरासदम् ॥ १२ ॥ त्वया तु कथितं पूर्व-
मुद्यतायाभ्युद्यता वयम् । घटाम स यथाशक्ति त्वन्तु नोऽद्य जुगुप्-
सते ॥ १३ ॥ धर्ममन्विच्छतापि त्वातुं मिथ्यावचनमेव ते । भया-
र्दितानामस्माकं वाचा मर्माणि कृन्तसि ॥ १४ ॥ वपन् व्रणे क्षार-
मिव क्षतानां मम कर्षन । विदीर्य्यते मे हृदयं त्वया वाक्शल्य-
पीड़ितम् ॥ १५ ॥ अधर्मतत्त्वं विपुलं धार्मिकः सन्न बुध्यसे ।
यत्त्वयात्मानमस्माकं प्रशस्यान्न प्रशंससि ॥ १६ ॥ वासुदेवे स्थिते
चापि द्रोणपुत्रं प्रशंससि । य कलां षोड़शीं पूर्णां धनञ्जय न
तेऽर्हति ॥ १७ ॥ स्वयमेवात्मनो दोषान् ब्रुवाण किन्न लज्जसे ।
दारयेयं महीं क्रोधाद्विकिरेयञ्च पर्वतान् ॥ १८ ॥ आविध्य तां
गदां गुर्वीं भीमां काञ्चनमालिनीम् । गिरिप्रकाशान् क्षितिजान्
भञ्जेयमनिलो यथा ॥ १९ ॥ द्रावयेयं शरैश्चापि सेन्द्रान् देवान्
समागतान् । सराक्षसगणान् पार्थ सासुरोरगमानवान् ॥ २० ॥
स त्वमेवंविधो जानन् भ्रातरं मां नरर्षभ । द्रोणपुत्राद्भयं कर्त्तुं
नार्हस्यमितविक्रम ॥ २१ ॥ अथवा तिष्ठ बीभत्सो सह सर्व्वैर्नर-
र्षभैः । अहमेनं गदापाणिर्ज्जेष्याम्येको महारणे ॥ २२ ॥ संक्रुद्ध-
मिव गर्ज्जन्तं हिरण्यकशिपुं हरिम् । ततः पाञ्चालराजस्य पुत्रः
पार्थमथाब्रवीत् ॥ २३ ॥

धृष्टद्युम्न उवाच । बीभत्सो विप्रकर्माणि विहितानि मनी-
षिणाम् । याजनाध्यापने दानं तथा यज्ञप्रतिग्रहौ ॥ २४ ॥
षष्ठमध्ययनं नाम तेषां कस्मिन् प्रतिष्ठितः । हतो द्रोणो मया
यत्तत् किं मां पार्थ विगर्हसे ॥ २५ ॥ अपक्रान्तः स्वधर्माच्च क्षत्र-
धर्ममुपाश्रितः । अमानुषेण हन्त्यस्मानस्त्रेण क्षुद्रकर्मकृत ॥ २६ ॥
यथा मायां प्रयुञ्जानमसह्यं ब्राह्मणब्रुवम् । माययैव निहन्याद्यो
न युक्तं तत पार्थ किम् ॥ २७ ॥ तस्मिंस्तथा मया यस्ते यदि
[illegible] । कुरुते भैरवं नादं तत् किं मम हीयते ॥ २८ ॥

न चाद्य तमिदं मन्ये यद्द्रौणिर्युद्धसंश्रया । घातयिष्यति कौरव्यान्
परित्रातुमशक्नुवन् ॥ २९ ॥ उच्चं मां धार्मिको भूत्वा ब्रवीषि
गुरुघातिनम् । तदर्थमहमुत्पन्नः पाञ्चाल्यस्य सुतोऽनलात् ॥ ३० ॥
यस्य कार्यमकार्यं वा युध्यतः स्यात् समं रणे । ब्राह्मणं तं कथं
ब्रूयात् क्षत्रियं वा धनञ्जय ॥ ३१ ॥ यो ह्यनस्त्रविदो हन्याद्-
ब्रह्मास्त्रैः क्रोधमूर्च्छितः । सर्वोपायैर्न स कथं वध्यः पुरुषसत्तम
॥ ३२ ॥ विधर्मिणं धर्मविद्भिः प्रोक्तमेव विषोपमम् । जानन्
धर्मार्थतत्त्वज्ञ किमर्जुन विगर्हसे ॥ ३३ ॥ नृशंसः स मयाक्रम्य
रथ एव निपातितः । तं माभिनन्द्य बीभत्सो किमर्थं नाभिनन्दसे
॥ ३४ ॥ कालानलसमं पार्थ ज्वलनार्कविषोपमम् । भीमं द्रोण-
शिरश्छिन्नं प्रशस्यं न प्रशंससि ॥ ३५ ॥ योऽसौ ममैव नान्यस्य
बान्धवान् युधि जघ्निवान् । छित्त्वापि तस्य मूर्धानं नैवास्मि विगत-
ज्वरः ॥ ३६ ॥ तच्च मे कृन्तते मर्म यन्न तस्य शिरो मया ।
निषादविषये क्षिप्तं जयद्रथशिरो यथा ॥ ३७ ॥ अथावधश्च
शत्रूणामधर्मः श्रूयतेऽर्जुन । क्षत्रियस्य त्वयं धर्मो हन्याद्धन्येत वा
पुनः ॥ ३८ ॥ स शत्रुर्निहतः संख्ये मया धर्मेण पाण्डव । यथा
त्वया हतः शूरो भगदत्तः पितुः सखा ॥ ३९ ॥ पितामहं रणे
हत्वा मन्यसे धर्ममात्मनः । मया शत्रौ हते कस्मात् पापे धर्मं न
मन्यसे ॥ ४० ॥ सम्बन्धावनतं पार्थ न मां त्वं वक्तुमर्हसि । स्वगात्र-
कृतसोपानं निषण्णमिव दन्तिनम् ॥ ४१ ॥ क्षमामि ते सर्वमेव
वाग्व्यतिक्रममर्ज्जुन । द्रौपद्या द्रौपदेयानां कृते नान्येन हेतुना
॥ ४२ ॥ कुलक्रमागतं वैरं ममाचार्येण विश्रुतम् । तथा जानात्ययं
लोको न यूयं पाण्डुनन्दनाः ॥ ४३ ॥ नानृती पाण्डवो ज्येष्ठो नाहं
वाधार्मिकोऽर्जुन । शिष्यद्रोही हतः पापो युध्यस्व विजयस्तव ॥४४॥

इति द्रोणपर्वणि नारायणास्त्रमोक्षपर्वणि धृष्टद्युम्नवाक्ये
अष्टनवत्यधिकशततोऽध्यायः ॥ १९८ ॥

धृतराष्ट्र उवाच । भ्राता वेदा यथान्यायं येनाधीता महात्मना । यस्मिन् साक्षाद्धनुर्वेदो ह्रीनिषेवे प्रतिष्ठित ॥ १ ॥ यस्मिन्नाक्रुश्यति द्रोणे महापितनये तथा । नीचात्मना नृशंसेन षट्ट्या गुरुघातिना ॥ २ ॥ यस्य प्रसादात् कर्माणि कुर्वन्ति पुरुषर्षभा । अमानुषाणि सर्वाणि देवैरसुकराणि च ॥ ३ ॥ तस्मिन्नाक्रुश्यति द्रोणे समस्त पापकर्मणा । नामर्षन्तत्र कुर्वन्ति धिक् ताव धिगमर्षिताम् ॥ ४ ॥ पार्था सर्वे च राजान पृथिव्यां ये धनुर्धरा । श्रुत्वा किमाहुः पाञ्चाल्यं तन्ममाचक्ष्व सञ्जय ॥ ५ ॥

सञ्जय उवाच । श्रुत्वा द्रुपदपुत्रस्य ता वाच क्रूरकर्मण । तूष्णीभूतास्तदा राजन् सर्व एव विशाम्पते ॥ ६ ॥ अर्जुनस्तु कटाक्षेण जिह्म विप्रेक्ष्य पार्षतम् । सवाष्पमतिनि श्वस्य धिग् धिगित्येव चाब्रवीत ॥ ७ ॥ युधिष्ठिरश्च भीमश्च यमौ कृष्णस्तथापरे । आसन् सुव्रीडिता राजन् सात्यकिस्त्वब्रवीदिदम ॥ ८ ॥ न ह्यस्ति पुरुष कश्चिदिह य इम पापपूरुषम् । भाषमाणमकल्याणं शीघ्र हन्यान्नराधमम ॥ ९ ॥ एते त्वा पाण्डवा सर्वे कुत्सयन्ति विकुत्सया । कर्मणानेन पापेन श्वपाक ब्राह्मणा इव ॥ १० ॥ एतत् कृत्वा महत् पाप निन्दितं सर्वसाधुभि । न लज्जसे कथ वक्तु समिति प्राप्य शोभनाम् ॥ ११ ॥ कथञ्च शतधा जिह्वा न ते मूर्धा विदीर्यते । गुरुमाक्रोशत क्षुद्र न चाधर्मेण पात्यसे ॥ १२ ॥ वाच्यस्त्वमसि पार्थैश्च सर्वैश्चान्धकवृष्णिभि । यत् कर्म कलुष कृत्वा श्लाघसे जनसंसदि ॥ १३ ॥ अकार्यं तादृश कृत्वा पुनरेव गुरु क्षिपन् । वध्यस्त्व न त्वयार्थोऽस्ति मुहूर्तमपि जीवता ॥ १४ ॥ कस्त्वेतद्ध्यवसेदार्यस्त्वदन्य पुरुषाधम । निगृह्य केशेषु वध गुरोर्धर्मात्मन सत ॥ १५ ॥ सप्तावरे तथा पूर्वे बान्धवास्ते निपातिता । यशसा च परित्यक्तास्त्वा प्राप्य कुलपांसनम् ॥ १६ ॥ उक्तवांश्चापि यत् पार्थं भीष्म प्रति नरर्षभम् । तथान्तो विहितस्तेन स्वयमेव

महात्मना ॥ १७ ॥ तस्यापि तव सोदर्य्यो निहन्ता पापकृत्तम ।
नान्यः पाञ्चालपुत्रेभ्यो विद्यते भुवि पापकृत् ॥ १८ ॥ स चापि
सृष्टः पित्रा ते भीष्मस्यान्तकरः किल । शिखण्डी रक्षितस्तेन स
च मृत्युर्महात्मनः ॥ १९ ॥ पाञ्चालाश्चलिता धर्मात् क्षुद्रा मित्र-
गुरुद्रुहः । त्वं प्राप्य सहसोदर्य्यैर्धिक्कृतं सर्व्वसाधुभिः ॥ २० ॥
पुनश्चेदीदृशीं वाचं मत्समीपे वदिष्यसि । शिरस्ते पातयिष्यामि
गदया वज्रकल्पया ॥ २१ ॥ त्वाञ्च ब्रह्महणं दृष्ट्वा जनः सूर्य्य-
मवेक्षते । ब्रह्महत्या हि ते पाप प्रायश्चित्तार्थमात्मनः ॥ २२ ॥
पाञ्चालक सुदुर्वृत्त ममैव गुरुमग्रतः । गुरोर्गुरुं च भूयश्च क्षिप-
न्नैव च लज्जसे ॥ २३ ॥ तिष्ठ तिष्ठ सहस्वैकं गदापातमिमं मम ।
तव चापि सहिष्येऽहं गदापातननेकशः ॥ २४ ॥ सात्वतेनैव-
माक्षिप्तः पार्षतः परुषाक्षरम् । संरब्धं सात्यकिं प्राह सङ्क्रुद्धः
प्रहसन्निव ॥ २५ ॥

धृष्टद्युम्न उवाच । श्रूयते श्रूयते चापि क्षम्यते चेति माधव ।
सदानार्य्योऽशुभः साधुं पुरुषं क्षेप्तुमिच्छति ॥ २६ ॥ क्षमा प्रश-
स्यते लोके न तु पापोऽर्हति क्षमाम् । क्षमावन्तं हि पापात्मा
जितोऽयमिति मन्यते ॥ २७ ॥ स त्वं क्षुद्रसमाचारो नीचात्मा
पापनिश्चयः । आकेशाग्रान्नखाग्राच्च वक्तव्यो वक्तुमिच्छसि ॥ २८ ॥
यः स भूरिश्रवाश्छिन्नभुजः प्रायगतस्त्वया । वार्य्यमाणेन निहत-
स्ततः पापतरं नु किम् ॥ २९ ॥ व्यूहमानो मया द्रोणो दिव्ये-
नास्त्रेण संयुगे । विसृष्टशस्त्रो निहतः किन्तत्र क्रूरदुष्कृतम् ॥ ३० ॥
अयुध्यमानं यस्त्वाजौ तथा प्रायगतं मुनिम् । छिन्नबाहुं परै-
र्हन्यात् सात्यके स कथं वदेत् ॥ ३१ ॥ निहत्य त्वां यदा भूमौ स
विक्रामति वीर्य्यवान् । किन्तदा न निहंस्येनं भूत्वा पुरुषसत्तमः
॥ ३२ ॥ त्वया पुनरनार्य्येण पूर्वं पार्थेन निर्जितः । यदा तदा
हतः शूरः सौमदत्तिः प्रतापवान् ॥ ३३ ॥ यत्र यत्र तु पाण्डूनां

द्रौणी द्रावयते चमूम्। किरञ्छरसहस्राणि तत्र तत्र प्रयाम्यहम्
॥ ३४ ॥ स त्वमेवंविधं कृत्वा कर्म चाण्डालवत् स्वयम्। वक्तु
मिच्छसि वक्तव्यं कस्मात्त्वं परुषाण्यथ ॥ ३५ ॥ कर्त्ता त्वं कर्मणो
ऽस्यस्य नाहं वृष्णिकुलाधम। पापानाञ्च त्वमावासः कर्मणां मा
पुनर्वद ॥ ३६ ॥ जोषमास्स्व न मां भूयो वक्तुमर्हस्यतः परम्।
अधरोत्तरमेतद्धि न मां त्वं वक्तुमर्हसि ॥ ३७ ॥ अथ वक्ष्यसि मां
मौर्ख्याद्भूयः परुषमीदृशम्। गमयिष्यामि बाणैस्त्वां युधि वैवस्वत
क्षयम् ॥ ३८ ॥ न चैव मूर्ख धर्मेण केवलेनैव शक्यते। तेषामपि
ह्यधर्मेण चेष्टितं शृणु यादृशम् ॥ ३९ ॥ वञ्चितः पाण्डवः पूर्व
मधर्मेण युधिष्ठिरः। द्रौपदी च परिक्लिष्टा तथाधर्मेण सात्यके
॥ ४० ॥ प्रव्राजिता वने सर्वे पाण्डवाः सह कृष्णया। सर्वस्व
मपकृष्टञ्च तथाधर्मेण बालक ॥ ४१ ॥ अधर्मेणापकृष्टश्च मद्रराज
परैरितः। अधर्मेण तथा बालः सौभद्रो विनिपातितः ॥ ४२ ॥
इतोऽप्यधर्मेण हतो भीष्मः कुरुपितामहः। भूरिश्रवा ह्यधर्मेण
त्वया धर्मविदा हतः ॥ ४३ ॥ एवं परैराचरितं पाण्डवेयैश्च
संयुगे। रक्षमाणैर्जयं वीरैर्धर्मज्ञैरपि सात्वत ॥ ४४ ॥ दुर्ज्ञेय
परमो धर्मस्तथाधर्मः सुदुर्विदः। युध्यस्व कौरवैः सार्द्धं मा गाः
पितृनिवेशनम् ॥ ४५ ॥
सञ्जय उवाच। एवमादीनि वाक्यानि क्रूराणि परुषाणि
च। श्रावितः सात्यकिः श्रीमानाकम्पित इवाभवत् ॥ ४६ ॥
तच्छ्रुत्वा क्रोधताम्राक्षः सात्यकिरादद्दे गदाम्। विनिःश्वस्य
यथा सर्पः प्रणिधाय रथे धनुः ॥ ४७ ॥ ततोऽभिपत्य पाञ्चाल्यं
संरम्भेणेदमब्रवीत्। न त्वां वक्ष्यामि परुषं हनिष्ये त्वां वधक्षमम्
॥ ४८ ॥ तमापतन्तं सहसा महाबलममर्षणम्। पाञ्चाल्यायाभि-
संक्रुद्धमन्तकायान्तकोपमम् ॥ ४९ ॥ चोदितो वासुदेवेन भीम-
सेनो महाबलः। अवप्लुत्य रथात्तूर्णं बाहुभ्यां समवारयत् ॥ ५० ॥

द्रवमाणस्तथा क्रुद्धः सात्यकिः पाण्डवं बली । प्रस्यन्दमानमादाय
जगाम बलिनं बलात् ॥ ५१ ॥ स्थित्वा विष्टभ्य चरणौ भीमेन
शिनिपुङ्गवः । निगृहीतः पदे षष्ठे बलेन बलिनाम्वरः ॥ ५२ ॥
अवप्लुत्य रथात्तूर्णं ध्रियमाणं बलीयसा । उवाच श्लक्ष्णया वाचा
सहदेवो विशाम्पते ॥ ५३ ॥ अस्माकं पुरुषव्याघ्र मित्रमन्यन्न
विद्यते । परमन्धकवृष्णिभ्यः पाञ्चालेभ्यश्च माधव ॥ ५४ ॥ तथै-
वान्धकवृष्णीनां तथैव च विशेषतः । कृष्णस्य च तथास्मत्तो मित्र-
मन्यन्न विद्यते ॥ ५५ ॥ पाञ्चालानाञ्च वार्ष्णेय समुद्रान्तां विचि-
न्वताम् । नान्योऽस्ति परं मित्रं यथा पाण्डववृष्णयः ॥ ५६ ॥
स भवानीदृशं मित्रं मन्यसे च तथा भव । भवन्तश्च यथास्माकं
भवताञ्च यथा वयम् ॥ ५७ ॥ स एवं सर्व्वधर्म्मज्ञ मित्रधर्म्ममनु-
स्मरन् । नियच्छ मन्युं पाञ्चाल्यात् प्रशाम्य शिनिपुङ्गव ॥ ५८ ॥
पार्षतस्य क्षम त्वं वै क्षमतां चैव पार्षतः । वयं क्षमयितारश्च
किमन्यत्र शमाद्भवेत् ॥ ५९ ॥ प्रशाम्यमाने शैनेये सहदेवेन मारिष ।
पाञ्चालराजस्य सुतः प्रहसन्निदमब्रवीत् ॥ ६० ॥ मुञ्च मुञ्च शिनेः
पौत्रं भीम युद्धमदान्वितम् । आसादयतु मामेष धराधरमिवा-
निलः ॥ ६१ ॥ यावदस्य शितैर्वाणैः संरम्भं नाशयाम्यहम् । युद्ध-
श्रद्धाञ्च कौन्तेय जीवितञ्चास्य संयुगे ॥ ६२ ॥ किन्तु शक्यं मया
कर्त्तुं कार्य्यं यदिदमुद्यतम् । सुमहत् पाण्डुपुत्राणामायान्त्येते
हि कौरवाः ॥ ६३ ॥ अथ वा फाल्गुनः सर्व्वान् वारयिष्यति
संयुगे । अहमप्यस्य मूर्द्धानं पातयिष्यामि सायकैः ॥ ६४ ॥ मन्यते
छिन्नबाहुं मां भूरिश्रवसमाहवे । उद्यतैनमहञ्चैनमेष मां वा
हनिष्यति ॥ ६५ ॥ शृण्वन् पाञ्चालवाक्यानि सात्यकिः सर्पवत्
श्वसन् । भीमबाह्वन्तरे सक्तो विस्फुरत्यनिशं बली ॥ ६६ ॥ तौ
वृषाविव नर्द्दन्तौ बलिनौ बाहुशालिनौ । त्वरया वासुदेवश्च
धर्म्मराजश्च मारिष ॥ ६७ ॥ यत्नेन महता वीरौ वारयामासतु-

र्षभ। निरार्थे परमेष्वासौ क्रोधसंरक्तलोचनौ। युयुधस्त
नपरान् सङ्ग्रामे पश्यत्सु क्षत्रियर्षभाः ॥ ६८ ॥

इति द्रोणपर्वणि नारायणास्त्रमोक्षपर्वणि धृष्टद्युम्नसात्यकि
क्रोधे नवनवत्यधिकशततोऽध्यायः ॥ १९९ ॥

---

सञ्जय उवाच। ततः स कदनं चक्रे रिपूणां द्रोणनन्दनः।
युगान्ते सर्वभूतानां कालसृष्ट इवान्तकः ॥ १ ॥ ध्वजद्रुमं शस्त्रशृङ्गं
हतनागमहाशिलम्। अश्वकिम्पुरुषाकीर्णं शरासनलतावृतम् ॥ २ ॥
शवक्रव्यादसङ्घुष्टं भूतयक्षगणाकुलम्। निहत्य शात्रवान् भल्लैः
सोऽचिनोद्देहपर्वतम् ॥ ३ ॥ ततो वेगेन महता विनद्य भरतर्षभ।
प्रतिज्ञां श्रावयामास पुनरेव तवात्मजम् ॥ ४ ॥ यस्माद्युध्यन्त-
माचार्यं धर्मकञ्चुकमास्थितः। मुञ्च शस्त्रमिति प्राह कुन्तीपुत्रो
युधिष्ठिरः ॥ ५ ॥ तस्मात् सम्पश्यतस्तस्य द्रावयिष्यामि वाहिनीम्।
विद्राव्य सर्वान् हन्तास्मि पाञ्चाल्यं पापमेव च ॥ ६ ॥ सर्वानेतान्
हनिष्यामि यदि योत्स्यन्ति मां रणे। सत्यं ते प्रतिजानामि
परावर्त्तय वाहिनीम् ॥ ७ ॥ तच्छ्रुत्वा तव पुत्रस्तु वाहिनीं पर्य्य-
वर्त्तयत्। सिंहनादेन महता व्यपोह्य सुमहद्भयम् ॥ ८ ॥ ततः
समागमो राजन् कुरुपाण्डवसेनयोः। पुनरेवाभवत्तीव्रः पूर्ण-
सागरयोरिव ॥ ९ ॥ संरब्धा हि स्थिरीभूता द्रोणपुत्रेण कौरवाः।
उदग्राः पाण्डुपाञ्चाला द्रोणस्य निधनेन च ॥ १० ॥ तेषां परम-
हृष्टानां जयमात्मनि पश्यताम्। संरब्धानां महावेगः प्रादुरासी-
द्रणाजिरे ॥ ११ ॥ यथा शिलोच्चये शैलः सागरे सागरो यथा।
प्रतिहन्येत राजेन्द्र तथासन् कुरुपाण्डवाः ॥ १२ ॥ ततः शङ्ख-
सहस्राणि भेरीणामयुतानि च। अवादयन्त संहृष्टाः कुरुपाण्डव-
सैनिकाः ॥ १३ ॥ यथा निर्मथ्यमानस्य सागरस्य सनिस्वनः।

अभवत्तस्य सैन्यस्य सुमहानद्भुतोपमः ॥ १४ ॥ प्रादुश्चक्रे ततो
द्रौणिरस्त्रं नारायणं तदा । अभिसन्धाय पाण्डूनां पाञ्चालानाञ्च
वाहिनीम् ॥ १५ ॥ प्रादुरासंस्ततो बाणा दीप्ताग्राश्च सहस्रशः ।
पाण्डवान् क्षपयिष्यन्तो दीप्तास्या इव पन्नगाः ॥ १६ ॥ ते दिशः
खञ्च सैन्यञ्च समावृण्वन् महाहवे । मयूखा भास्करस्येव राजन्
लोके गभस्तयः ॥ १७ ॥ तथापरे द्योतमाना ज्योतींषीवाम्बरे-
ऽमले । प्रादुरासन्महीपाल कार्ष्णायसमया गुडाः ॥ १८ ॥ चतु-
श्चक्रा द्विचक्राश्च शतघ्न्योऽथ गुडा गदाः । चक्राणि च क्षुरान्तानि
मण्डलानीव भास्वतः ॥ १९ ॥ शस्त्राकृतिभिराकीर्णमतीव भरत-
र्षभ । दृष्ट्वान्तरीक्षमाविग्नाः पाण्डुपाञ्चालसृञ्जयाः ॥ २० ॥ यथा
यथा ह्ययुध्यन्त पाण्डवानां महारथाः । तथा तथा तदस्त्रं वै
व्यवर्द्धत जनाधिप ॥ २१ ॥ वध्यमानास्तथास्त्रेण तेन नारायणेन
वै । दह्यमानानलेनेव सर्वतोऽभ्यर्दिता रणे ॥ २२ ॥ यथा हि
शिशिरापाये दहेत् कक्षं हुताशनः । तथा तदस्त्रं पाण्डूनां
ददाह ध्वजिनीं प्रभो ॥ २३ ॥ जगाम परमं त्रासं धर्मराजो
युधिष्ठिरः । आपूर्य्यमाणेनास्त्रेण सैन्ये क्षीयति च प्रभो ॥ २४ ॥
द्रवमाणस्तु तत्सैन्यं दृष्ट्वा विगतचेतनम् । मध्यस्थतां च पार्थस्य
धर्मपुत्रोऽब्रवीदिदम् ॥ २५ ॥ धृष्टद्युम्न पलायस्व सह पाञ्चाल-
सेनया । सात्यके त्वञ्च गच्छस्व वृष्ण्यन्धकवृतः स्वयम् ॥ २६ ॥
वासुदेवोऽपि धर्मात्मा करिष्यत्यात्मनः क्षमम् । उपदेष्टुं समर्थोऽयं
लोकस्य किमुतात्मनः ॥ २७ ॥ सङ्ग्रामस्तु न कर्त्तव्यः सर्वसैन्यान्
ब्रवीमि वः । अहं हि सह सोदर्य्यैः प्रवेक्ष्ये हव्यवाहनम् ॥ २८ ॥
भीष्मद्रोणार्णवं तीर्त्वा सङ्ग्रामे भीरुदुस्तरे । विमङ्क्ष्यामि सलिले
सगणो द्रौणिगोष्पदे ॥ २९ ॥ कामः सम्पद्यतामद्य राज्ञो दुर्य्यो-
धनस्य च । कल्याणवृत्तिराचार्य्यो मया युधि निपातितः ॥ ३० ॥
येन बालः स सौभद्रो युद्धानामविशारदः । समर्थैर्बहुभिः क्रूरै-

घातितो नाभिपालितः ॥ ३१ ॥ येन विब्रुवती प्रश्नं यथा कृष्णा समागता । उपेक्षिता सपुत्रेण दासभावं नियच्छती ॥ ३२ ॥ जिघांसुर्धार्त्तराष्ट्रश्च श्रान्तेष्वश्वेषु फाल्गुनम् । कवचेन तथा युक्तो रक्षार्थं सैन्धवस्य च ॥ ३३ ॥ येन ब्रह्मास्त्रविदुषा पाञ्चालाः सत्यजिन्मुखाः । कुर्वाणा मज्जये यत्नं समूला विनिपातिताः ॥ ३४ ॥ येन प्रव्राज्यमानाश्च राज्याद्वयमधर्मतः । निवार्य्यमाणा न वयं नानुयातास्तदैषिणः ॥ ३५ ॥ योऽसावत्यन्तमस्माकं कुर्वाणः सौहृदं परम् । कृतस्तद्वधेमरणं गमिष्यामि सबान्धवः ॥ ३६ ॥ एवं ब्रुवति कौन्तेये दाशार्हस्त्वरितस्ततः । निवार्य्य सैन्यं बाहुभ्यामिदं वचनमब्रवीत् ॥ ३७ ॥ शीघ्रं न्यस्यत शस्त्राणि वाहेभ्यश्चावरोहत । एष योगोऽत्र विहितः प्रतिघाते महात्मना ॥ ३८ ॥ द्विपाश्वस्यन्दनेभ्यश्च क्षितिं सर्व्वेऽवरोहत । एवमेतन्नवो हन्यादस्त्रं भूमौ निरायुधान् ॥ ३९ ॥ यथा यथा हि युध्यन्ते ये ना ह्यस्त्रबलं प्रति । तथा तथा भवन्त्येते कौरवा बलवत्तराः ॥ ४० ॥ निक्षेप्स्यन्ति च शस्त्राणि वाहनेभ्योऽवरुह्य ये । तान्नैतदस्त्रं संग्रामे निहनिष्यति मानवान् ॥ ४१ ॥ ये त्वेतत् प्रतियोत्स्यन्ति मनसापीह केचन । निहनिष्यति तान् सर्व्वान् रसातलगतानपि ॥ ४२ ॥ ते वचस्तस्य तच्छ्रुत्वा वासुदेवस्य भारत । ईषुः सर्व्वे समुत्स्रष्टुं मनोभिः करणेन च ॥ ४३ ॥ तत उत्स्रष्टुकामांस्तानस्त्राण्यालोक्य पाण्डवः । भीमसेनोऽब्रवीद्राजन्निदं संहर्षयन् वच ॥ ४४ ॥ न कथञ्चन शस्त्राणि मोक्तव्यानीह केनचित् । अहमावारयिष्यामि द्रोणपुत्रास्त्रमाशुगैः ॥ ४५ ॥ गदयाप्यनया गुर्व्या हेमविग्रहया रणे । कालवद्विचरिष्यामि द्रौणेरस्त्रं विघातयन् ॥ ४६ ॥ न हि मे विक्रमे तुल्यः कश्चिदस्ति पुमानिह । यथैव सवितुस्तुल्यं ज्योतिरन्यन्न विद्यते ॥ ४७ ॥ पश्यध्वं मे दृढौ बाहू नागराजकरोपमौ । समर्थौ पर्व्वतस्यापि शैशिरस्य निपातने ॥ ४८ ॥

नागायुतसमप्राणो ह्यहमेको नरेष्विह । शक्रो यथाप्रतिद्वन्द्वो दिवि देवेषु विश्रुत ॥ ४९ ॥ अद्य पश्यन्तु मे वीर्य्यं बाह्वोः पीनांसयोर्युधि । ज्वलमानस्य दीप्तस्य द्रौणेरस्त्रस्य वारणे ॥ ५० ॥ यदि नारायणास्त्रस्य प्रतियोद्धा न विद्यते । अद्यैनं प्रतियोत्स्यामि पश्यतस्तु कुरुपाण्डव ॥ ५१ ॥ अर्ज्जुनार्ज्जुन बीभत्सो न न्यस्यं गाण्डिवं त्वया । शशाङ्कस्येव ते कायात् नैर्मल्यं पातयिष्यति ॥ ५२ ॥ अर्ज्जुन उवाच । भीम नारायणास्त्रे मे गोषु च ब्राह्मणेषु च । एतेषु गाण्डिव न्यस्यमेतद्धि व्रतमुत्तमम् ॥ ५३ ॥ एवमुक्तस्ततो भीमो द्रोणपुत्रमरिन्दम । अभ्ययान्मेघघोषेण रथेनादित्यवर्च्चसा ॥ ५४ ॥ स एनमिषुजालेन लघुत्वाच्छीघ्रविक्रमः । निमेषमात्रेणासाद्य कुन्तीपुत्रोऽभ्यवाकिरत् ॥ ५५ ॥ ततो द्रौणिः प्रहस्यैन द्रवन्तमभिभाष्य च । अवाकिरत् प्रदीप्ताग्रैः शरैस्तैरभिमन्त्रितैः ॥ ५६ ॥ पन्नगैरिव दीप्तास्यैर्वमद्भिरनलं रणे । अवकीर्णोऽभवत् पार्थः स्फुलिङ्गैरिव काञ्चने ॥ ५७ ॥ तस्य रूपमभूद्राजन् भीमसेनस्य संयुगे । खद्योतैरावृतस्येव पर्वतस्य दिनक्षये ॥ ५८ ॥ तदस्त्रं द्रोणपुत्रस्य तस्मिन् प्रति समस्यति । अवर्द्धत महाराज यथाग्निरनिलोद्धतः ॥ ५९ ॥ आवर्द्धमानमालक्ष्य तदस्त्रं भीमविक्रमम् । पाण्डुसैन्यमृते भीमं सुमहद्भयमाविशत् ॥ ६० ॥ ततः शस्त्राणि दिव्यानि समुत्सृज्य महीतले । अवरोहन् रथेभ्यश्च तुरगेभ्यश्च सर्वशः ॥ ६१ ॥ तेषु निक्षिप्तशस्त्रेषु वाहनेभ्यश्च्युतेषु च । तदस्त्रं वीर्य्यविपुलं भीममूर्द्धन्यथापतत् ॥ ६२ ॥ हाहाकृतानि भूतानि पाण्डवाश्च विशेषतः । भीमसेनमपश्यन्त तेजसा संवृतं तदा ॥ ६३ ॥

इति द्रोणपर्व्वणि नारायणास्त्रमोक्षपर्व्वणि पाण्डवसैन्यास्त्रत्यागे द्विशततमोऽध्यायः ॥ २०० ॥

सञ्जय उवाच । भीमसेनं समाकीर्णं दृष्ट्वास्त्रेण धनञ्जयः ।
तेजसः प्रतिघातार्थं वारुणेन समावृणोत् ॥ १ ॥ नालक्षयत तद्
कश्चिद्वारुणास्त्रेण संवृतम् । अर्जुनस्य लघुत्वाच्च संवृतत्वाच्च तेजसः
॥ २ ॥ साश्वसूतरथो भीमो द्रोणपुत्रास्त्रसंवृतः । अग्नावग्नि-
रिव न्यस्तो ज्वालामाली सुदुर्दृशः ॥ ३ ॥ यथा रात्रिक्षये राजन्
ज्योतींष्यस्तगिरिं प्रति । समापेतुस्तथा बाणा भीमसेनरथं प्रति
॥ ४ ॥ स हि भीमो रथश्चास्य हयाः सूतश्च मारिष । संवृता
द्रोणपुत्रेण पावकान्तर्गतोऽभवत् ॥ ५ ॥ यथा दग्ध्वा जगत्कृत्स्नं
समये सचराचरम् । गच्छेद्वह्निर्विभोरास्यं तथास्त्रं भीममावृ-
णोत् ॥ ६ ॥ सूर्यमग्निप्रविष्टः स्याद्यथा चाग्निं दिवाकरः । तथा
प्रविष्टं तत्तेजो न प्राज्ञायत किञ्चन ॥ ७ ॥ विकीर्णमस्त्रं तद्दृष्ट्वा
तथा भीमरथं प्रति । उदीर्यमाणं द्रौणिञ्च निष्प्रतिद्वन्द्वमाहवे
॥ ८ ॥ सर्वसैन्यानि पाण्डूनां न्यस्तशस्त्राण्यनेकशः । युधिष्ठिर-
पुरोगांश्च विमुखांस्तान्महारथान् ॥ ९ ॥ अर्जुनो वासुदेवश्च त्वर-
माणौ महाद्युती । अवप्लुत्य रथाद्वीरौ भीममाद्रवतां तदा ॥ १० ॥
ततस्तौ द्रोणपुत्रस्य तेजोऽस्त्रबलसम्भवम् । विगाह्य तौ सुबलिनौ
मायामाविशतां तदा ॥ ११ ॥ न्यस्तशस्त्रौ ततस्तौ तु नादहत्
सोऽस्त्रजोऽनलः । वारुणास्त्रप्रयोगाच्च वीर्यवत्त्वाच्च कृष्णयोः ॥ १२ ॥
ततश्चकृषतुर्भीमं तस्य सर्वायुधानि च । नारायणास्त्रशान्त्यर्थं नर-
नारायणौ बलात् ॥ १३ ॥ आकृष्यमाणः कौन्तेयो नदत्येव महा-
रथः । वर्धते चैव तद्घोरं द्रौणेरस्त्रं सुदुर्जयम् ॥ १४ ॥ तम-
ब्रवीद्वासुदेवः किमिदं पाण्डुनन्दन । वार्यमाणोऽपि कौन्तेय
यद्युद्धान्न निवर्तसे ॥ १५ ॥ यदि युद्धेन जेयाः स्युरिमे कौरव-
नन्दनाः । वयमप्यत्र युध्येम तथा चेमे नरर्षभाः ॥ १६ ॥ रथेभ्य-
स्त्ववतीर्णाः स्म सर्व एव हि तावकाः । तस्मात्त्वमपि कौन्तेय
रथात्तूर्णमपाक्रम ॥ १७ ॥ एवमुक्त्वा ततः कृष्णो रथाद्भूमिमपा-

दरत्। निश्वसन्तं यथा नागं क्रोधसंरक्तलोचनम् ॥ १८ ॥
यदापकृष्टः सरथात्रासितश्चायुधं युधि। ततो नारायणास्त्रं तत्
प्रशान्तं शत्रुतापनम् ॥ १९ ॥

सञ्जय उवाच। तस्मिन् प्रशान्ते विधिना तथा तेजसि दुःसहे।
बभूवुर्विमलाः सर्व्वा दिशः प्रदिश एव च ॥ २० ॥ प्रववुश्च शिवा
वाताः प्रशान्ता मृगपक्षिणः। वाहनानि प्रहृष्टानि योधाश्च मनु-
जेश्वर ॥ २१ ॥ व्यपोढे च ततो घोरे तस्मिंस्तेजसि भारत।
बभौ सौम्यो निशापाये धीमान् सूर्य्य इवोदितः ॥ २२ ॥ हतशिष्टं
बलं तत्र पाण्डवानामतिष्ठत। अस्त्रव्युपरमं हृष्ट्वा तव पुत्रजिघा-
सया ॥ २३ ॥ व्यवस्थिते बले तस्मिन्नस्त्रे प्रतिहते तथा। दुर्य्यो-
धनो महाराज द्रोणपुत्रमथाब्रवीत् ॥२४॥ अश्वत्थामन् पुनः शीघ्र-
मस्त्रमेतत् प्रयोजय। व्यवस्थिता हि पाञ्चालाः पुनरेव जयैषिणः
॥ २५ ॥ अश्वत्थामा तथोक्तस्तु तव पुत्रेण मारिष। सुदीनमभि-
नि श्वस्य राजानमिदमब्रवीत् ॥ २६ ॥ नैतदावर्त्तते राजन्नस्त्रं
द्विर्नोपपद्यते। आवर्त्ते हि निहन्त्येतत् प्रयोक्तारं न संशयः ॥२७॥
एषचास्त्रप्रतीघातं वासुदेवः प्रयुक्तवान्। अतो न विहितः सङ्ग्रा
वधः शत्रोर्जनाधिप ॥ २८ ॥ पराजयो वा मृत्युर्वा श्रेयो मृत्युर्न
निर्जयः। निर्जिताश्चारयो ह्येते शस्त्रोत्सृष्टा तापनाः ॥ २९ ॥

दुर्य्योधन उवाच। आचार्य्यपुत्र यद्येतद् द्विरस्त्रं न प्रयुज्यते।
अन्यैर्गुरुघ्ना वध्यन्तामस्त्रैरस्त्रविदाम्वर ॥ ३० ॥ त्वयि दिव्यानि
चास्त्राणि त्र्यम्बके चामितौजसि। इच्छतो हि न ते मुच्येत
क्रुद्धो ह्यपि पुरन्दरः ॥ ३१ ॥

धृतराष्ट्र उवाच। तस्मिन्नस्त्रे प्रतिहते द्रोणे चोपाधिना हते।
तथा दुर्य्योधनेनोक्तो द्रौणिः किमकरोत् पुनः ॥ ३२ ॥ दृष्ट्वा
पार्थांस्तु सङ्ग्रामे युद्धाय समुपस्थितान्। नारायणास्त्रनिर्मुक्तां-
श्चरतः पृतनामुखे ॥ ३३ ॥

दुर्य्योधनस्तु विंशत्या कृपः शारद्वतस्त्रिभिः । कृतवर्म्माथ दशभिः
कर्णः पञ्चाशता शरैः ॥ ५१ ॥ दुःशासनः शतेनैव वृषसेनश्च
सप्तभिः । सात्यकिं विव्यधुस्तूर्णं समन्तान्निशितैः शरैः ॥ ५२ ॥
ततः स सात्यकी राजन् सर्व्वानेव महारथान् । विरथान् विमुखां-
श्चैव क्षणेनैवाकरोन्नृप ॥ ५३ ॥ अश्वत्थामा तु सम्प्राप्य चेतनां
भरतर्षभ । चिन्तयामास दुःखार्त्तो निःश्वसन् पुनः पुनः ॥ ५४ ॥
ततो रथान्तरं द्रौणिः समारुह्य परन्तप । सात्यकिं वारयामास
किरञ्छरशतान् बहून् ॥ ५५ ॥ समापतन्तं सम्प्रेक्ष्य भारद्वाज-
सुतं रणे । विरथं विमुखञ्चैव पुनश्चक्रे महारथः ॥ ५६ ॥
ततस्ते पाण्डवा राजन् दृष्ट्वा सात्यकिविक्रमम् । शङ्खशब्दान्
भृशञ्चक्रुः सिंहनादांश्च नेदिरे ॥ ५७ ॥ एवं तं विरथं कृत्वा
सात्यकिः सत्यविक्रमः । जघान वृषसेनस्य त्रिसाहस्रान्महारथान्
॥ ५८ ॥ अयुतं दन्तिनां सार्द्धं कृपस्य निजघान च । पञ्चा-
युतानि चाश्वानां शकुनेर्निजघान च ॥ ५९ ॥ ततो द्रौणिर्म्महा-
राज रथमारुह्य वीर्य्यवान् । सात्यकिं प्रति सङ्क्रुद्धः प्रययौ तद्-
वधेप्सया ॥ ६० ॥ पुनस्तमागतं दृष्ट्वा शैनेयो निशितैः शरैः ।
अदारयत् क्रूरतरैः पुनः पुनररिन्दम ॥ ६१ ॥ सोऽतिविद्धो
महेष्वासो नानालिङ्गैरमर्षणः । युयुधानेन वै द्रौणिः प्रहसन्
वाक्यमब्रवीत् ॥ ६२ ॥ शैनेयाभ्युपपत्तिं ते जानाम्याचार्य्यघातिनि ।
न चैनं त्रास्यसि मया ग्रस्तमात्मानमेव च ॥ ६३ ॥ शपे तवाहं
शपेयं सत्येन तपसा तथा । अहत्वा सर्व्वपाञ्चालान् यदि शान्ति-
मवाप्नुयाम् ॥ ६४ ॥ यद्बलं पाण्डवेयानां वृष्णीनामपि यद्बलम् ।
क्रियतां सर्व्वमेवेह निहनिष्यामि सोमकान् ॥ ६५ ॥ एवमुक्त्वार्क-
रश्म्याभं सुपर्व्वाणं शरोत्तमम् । व्यसृजत् सात्वते द्रौणिर्व्वज्रं
वृत्रे यथा हरिः ॥ ६६ ॥ स तं निर्भिद्य तेनास्तः सायकः सशरा
वरम् । विवेश वसुधां भित्त्वा श्वसन् बिलमिवोरगः ॥ ६७ ॥ स

भिन्नकवचः शूरस्तोत्राहित इव द्विपः । विमुच्य सशरञ्चापं भूरि-
व्रणपरिस्रवः ॥ ६६ ॥ सीदन्रुधिरसिक्तश्च रथोपस्थ उपाविशत् ।
सूतेनापहृतस्तूर्णं द्रोणपुत्राद्रथान्तरम् ॥ ६७ ॥ अथान्येन सुपु-
ङ्खेन शरेणानतपर्वणा । आजघान भ्रुवोर्मध्ये धृष्टद्युम्नं परन्तपः
॥ ६८ ॥ स पूर्वमतिविद्धश्च भृशं पश्चात् समाहितः । ससाद युधि
पाञ्चाल्यो व्यपाश्रयत च ध्वजम् ॥ ६९ ॥ तं मत्तमिव सिंहेन
राजन् कुञ्जरमर्दितम् । जवेनाभ्यद्रवञ्छूराः पञ्च पाण्डवतो
रथाः ॥ ७० ॥ किरीटी भीमसेनश्च वृद्धक्षत्रश्च पौरवः । युव-
राजश्च चेदीनां मालवस्तु सुदर्शनः ॥ ७१ ॥ एते हाहाकृताः सर्वे
प्रगृहीतशरासनाः । वीरं द्रौणायनिं वीराः सर्वतः पर्यवारयन्
॥ ७२ ॥ ते विंशतिपदे यत्ता गुरुपुत्रममर्षणम् । पञ्चभिः पञ्चभि-
र्बाणैरभ्यघ्नन् सर्वतः समम् ॥ ७३ ॥ आशीविषाभैर्विंशद्भिः पञ्च-
भिश्च शितैः शरैः । चिच्छेद युगपद्द्रौणिः पञ्चविंशतिसायकान्
॥ ७४ ॥ सप्तभिश्च शितैर्बाणैः पौरवं द्रौणिरार्दयत् । मालवं
त्रिभिरेकेन पार्थं षड्भिर्वृकोदरम् ॥ ७५ ॥ ततस्ते विव्यधुः सर्वे
द्रौणिं राजन्महारथाः । युगपच्च पृथक् चैव रुक्मपुङ्खैः शिला-
शितैः ॥ ७६ ॥ युवराजश्च विंशत्या द्रौणिं विव्याध पत्रिणाम् ।
पार्थश्च पुनरष्टाभिस्तदा सर्वे त्रिभिस्त्रिभिः ॥ ७७ ॥ ततोऽर्जुनं
षड्भिरथाजघान द्रौणायनिर्दशभिर्वासुदेवम् । भीमं दशार्धै-
र्युवराजं चतुर्भिर्द्वाभ्यां द्वाभ्यां मालवं पौरवन्तु ॥ ७८ ॥ सूतं
विद्ध्वा भीमसेनस्य षड्भिर्द्वाभ्यां छित्त्वा कार्मुकञ्च ध्वजञ्च । पुनः
पार्थं शरवर्षेण विद्ध्वा द्रौणिर्घोरं सिंहनादं ननाद ॥ ७९ ॥ तस्या-
स्यतः सुनिशितान् पीतधारान् द्रौणेः शरान् पृष्ठतश्चाग्रतश्च ।
धरा वियद्द्यौः प्रदिशो दिशश्च छन्ना बाणैरभवन् घोररूपैः ॥ ८० ॥
आसन्नस्य स्वरथमुग्रतेजाः सुदर्शनस्येन्द्रकेतुप्रकाशौ । भुजौ शिर-
श्चेन्द्रसमानवीर्यस्त्रिभिः शरैर्युगपत् संचकर्त ॥ ८१ ॥ सपौरवं

रथमस्याभिद्रुत्य छित्त्वा रथं तिलशश्चापि बाणैः । छित्त्वा च
बाहू वरचन्दनाक्तौ भल्लेन कायाच्छिर उच्चकर्त्त ॥ ८२ ॥ युवान-
मिन्दीवरदामवर्णश्चेदिप्रभुं युवराजं प्रसह्य । बाणैस्त्वरावान्
ज्वलिताग्निकल्पैर्विद्धा प्राहान्मृत्यवे साश्वसूतम् ॥ ८३ ॥ मालवं
पौरवञ्चैव युवराजञ्च चेदिपम् । दृष्ट्वा समस्तं निहतं द्रोणपुत्रेण
पाण्डव ॥ ८४ ॥ भीमसेनो महाबाहुः क्रोधमाहारयत् परम् ।
ततः शरशतैस्तीक्ष्णैः स क्रुद्धाशीविषोपमैः ॥ ८५ ॥ छादयामास
समरे द्रोणपुत्रं परन्तप । ततो द्रौणिर्महातेजाः शरवर्षं निहत्य
तम् ॥ ८६ ॥ विव्याध निशितैर्बाणैर्भीमसेनममर्षणः । ततो भीमो
महाबाहुर्द्रौणेर्युधि महाबलः ॥ ८७ ॥ क्षुरप्रेण धनुश्छित्त्वा
द्रौणिं विव्याध पत्रिणा । तदपास्य धनुश्छिन्नं द्रोणपुत्रो महा-
मनाः ॥ ८८ ॥ अन्यत् कार्मुकमादाय भीमं विव्याध पत्रिभिः ।
तौ द्रौणिभीमौ समरे पराक्रान्तौ महाबलौ ॥ ८९ ॥ अवर्षतां
शरवर्षं घर्मान्ताविवाम्बुदौ । भीमनामाङ्किता बाणाः स्वर्णपुङ्खाः
शिलाशिताः ॥ ९० ॥ द्रौणिं सञ्छादयामासुर्मेघौघा इव भास्क-
रम् । तथैव द्रौणिनिर्मुक्तैर्भीमः सन्नतपर्वभिः ॥ ९१ ॥ अवा-
कीर्य्यत स क्षिप्रं शरैः शतसहस्रशः । सञ्छाद्यमानः समरे द्रौणिना
रणशालिना ॥ ९२ ॥ न विव्यथे महाराज तदद्भुतमिवाभवत् ।
ततो भीमो महाबाहुः कार्त्तस्वरविभूषितान् ॥ ९३ ॥ नाराचान्
दश सम्प्रैषीद्यमदण्डनिभान् शितान् । ते जत्रुदेशमासाद्य द्रोण-
पुत्रस्य मारिष ॥ ९४ ॥ निर्भिद्य विविशुस्तूर्णं वल्मीकमिव पन्नगाः ।
सोऽतिविद्धो भृशं द्रौणिः पाण्डवेन महात्मना ॥ ९५ ॥ ध्वजयष्टिं
समाश्रित्य न्यमीलयत लोचने । स मुहूर्त्तात् पुनः संज्ञां लब्ध्वा
द्रौणिर्नराधिप ॥ ९६ ॥ क्रोधं परममातस्थौ समरे रुधिरोक्षितः ।
दृढं सोऽभिहतस्तेन पाण्डवेन महात्मना ॥ ९७ ॥ वेगञ्चक्रे महा-
बाहुर्भीमसेनरथं प्रति । तत आकर्णपूर्णानां शराणां तिग्म

तेजसाम् ॥ ९८ ॥ शतमाशीविषाभानां प्रेषयामास भारत ।
भीमोऽपि समरश्लाघी तस्य वीर्यमचिन्तयन् ॥ ९९ ॥ तूर्णं प्रासृज
दुग्राणि शरवर्षाणि पाण्डव । ततो द्रौणिर्महाराज छित्त्वास्य
विशिखैर्धनुः ॥ १०० ॥ आजघानोरसि क्रुद्धः पाण्डवं निशितैः
शरैः । ततोऽन्यद्धनुरादाय भीमसेनोऽत्यमर्षणः ॥ १०१ ॥ विव्याध
निशितैर्बाणैर्द्रौणिं पञ्चभिराहवे । जीमूताविव घर्मान्ते तौ
शरौघप्रवर्षिणौ ॥ १०२ ॥ अन्योऽन्यं क्रोधताम्राक्षौ छादया-
मासतुर्युधि । तलशब्दैस्ततो घोरैस्त्रासयन्तौ परस्परम् ॥ १०३ ॥
अयुध्येतां सुसंरब्धौ कृतप्रतिकृतैषिणौ । ततो विस्फार्य सुमहच्चापं
रुक्मविभूषितम् ॥ १०४ ॥ भीमं प्रैक्षत स द्रौणिः शरानस्यन्त
मन्तिकात् । शरदहर्मध्यगतो दीप्तार्चिरिव भास्करः ॥ १०५ ॥
आददानस्य विशिखान् सन्दधानस्य चाशुगान् । विकर्षतो मुञ्च
तश्च नान्तरं ददृशुर्जनाः ॥ १०६ ॥ अलातचक्रप्रतिमं तस्य मण्डल-
मायुधम् । द्रौणेरासीन्महाराज बाणान् विसृजतस्तदा ॥ १०७ ॥
धनुश्च्युताः शरास्तस्य शतशोऽथ सहस्रशः । आकाशे प्रत्यदृश्यन्त
शलभानामिवायतौ ॥ १०८ ॥ ते तु द्रौणिधनुर्मुक्ताः शरा हेम
विभूषिताः । अजस्रमन्वकीर्यन्त घोरा भीमरथं प्रति ॥ १०९ ॥
तत्राद्भुतमपश्याम भीमसेनस्य विक्रमम् । बलं वीर्यं प्रभावञ्च
व्यवसायञ्च भारत ॥ ११० ॥ तां समेघामिवोद्भूतां बाणवृष्टिं
समन्ततः । जलवृष्टिं महाघोरां तपान्त इव चिन्तयन् ॥ १११ ॥
द्रोणपुत्रवधप्रेप्सुर्भीमो भीमपराक्रमः । अमुञ्चच्छरवर्षाणि प्रावृ-
षीव बलाहकः ॥ ११२ ॥ तद्रुक्मपृष्ठं भीमस्य धनुर्घोरं महद्रणे ।
विकृष्यमाणं विबभौ शक्रचापमिवापरम् ॥ ११३ ॥ तस्माच्छराः
प्रादुरासन् शतशोऽथ सहस्रशः । सञ्छादयन्त समरे द्रौणि
माहवशोभिनम् ॥ ११४ ॥ तयोर्विसृजतोरेव शरजालानि मारिष ।
वायुरप्यन्तरा राजन्नाशक्नोत् स विसर्पितुम् ॥ ११५ ॥ तथा

द्रौणिर्महाराज शरान् हेमविभूषितान् । तैलधौतान् प्रसन्ना-
ग्रान् प्राहिणोद्वधकाङ्क्षया ॥ ११६ ॥ तानन्तरीक्षे विशिखैस्त्रिधै-
कैकमपातयत् । विशेषयन् द्रोणसुतं तिष्ठ तिष्ठेति चाब्रवीत्
॥ ११७ ॥ पुनश्च शरवर्षाणि घोराण्युग्राणि पाण्डवः । व्यसृजद्
बलवान् क्रुद्धो द्रोणपुत्रवधेप्सया ॥ ११८ ॥ ततोऽस्त्रमायया
तूर्णं शरवृष्टिं निवार्य्य ताम् । धनुश्चिच्छेद भीमस्य द्रोणपुत्रो
महास्त्रवित् ॥ ११९ ॥ शरैश्चैनं सुबहुभिः क्रुद्धः सङ्ख्ये पराभिनत् ।
स छिन्नधन्वा बलवान् रथशक्तिं सुदारुणाम् ॥ १२० ॥ वेगेना-
विध्य चिक्षेप द्रोणपुत्ररथं प्रति । तामापतन्तीं सहसा महो-
ल्काभां शितैः शरैः ॥ १२१ ॥ चिच्छेद समरे द्रौणिर्दर्शयन्
पाणिलाघवम् । एतस्मिन्नन्तरे भीमो दृढमादाय कार्म्मुकम् ॥१२२॥
द्रौणिं विव्याध विशिखैः स्मयमानो वृकोदरः । ततो द्रौणिर्महा-
राज भीमसेनस्य सारथिम् ॥ १२३ ॥ ललाटे दारयामास शरे-
णानतपर्व्वणा । सोऽतिविद्धो बलवता द्रोणपुत्रेण सारथिः ॥१२४॥
व्यामोहमगमद्राजन् रश्मीनुत्सृज्य वाजिनाम् । ततोऽश्वाः
प्राद्रवंस्तूर्णं मोहिते रथसारथौ ॥ १२५ ॥ भीमसेनस्य राजेन्द्र
पश्यतां सर्व्वधन्विनाम् । तं दृष्ट्वा प्रद्रुतैरश्वैरपकृष्टं रणाजिरात्
॥ १२६ ॥ दध्मौ प्रमुदितः शङ्खं बृहन्तमपराजितः । ततः सर्व्वे
च पाञ्चाला भीमसेनश्च पाण्डवः ॥ १२७ ॥ धृष्टद्युम्नरथं त्यक्त्वा
भीता सम्प्राद्रवन् दिशः । तान् प्रभग्नांस्ततो द्रौणिः पृष्ठतो
विकिरन् शरैः ॥ १२८ ॥ अभ्यवर्त्तत वेगेन कालयन् पाण्डु-
वाहिनीम् । ते वध्यमाना समरे द्रोणपुत्रेण क्षत्रियाः । द्रोण-
पुत्रभयाद्राजन् दिशः सर्व्वाः भेजिरे ॥ १२९ ॥

इति द्रोणपर्व्वणि नारायणास्त्रमोक्षपर्व्वणि अश्वत्थाम-
पराक्रमे एकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥

---

सञ्जय उवाच। तत् प्रभग्नं बलं दृष्ट्वा कुन्तीपुत्रो धनञ्जयः।
न्यवारयदमेयात्मा द्रोणपुत्रवधेप्सया ॥ १ ॥ ततस्ते सैनिका राजन्नैव तत्रावतस्थिरे। संस्थाप्यमाना यत्नेन गोविन्देनार्जुनेन च ॥ २ ॥ एक एव तु बीभत्सुः सोमकावयवैः सह। मत्स्यैरन्यैश्च सन्धाय कौरवैः संन्यवर्त्तत ॥ ३ ॥ ततो द्रुतमतिक्रम्य सिंहलाङ्गूलकेतनम्। सव्यसाची महेष्वासमश्वत्थामानमब्रवीत् ॥ ४ ॥ या शक्तिर्यच्च ते वीर्यं यज्ज्ञानं यच्च पौरुषम्। धार्त्तराष्ट्रेषु या प्रीतिः प्रद्वेषोऽस्मासु यश्च ते ॥ ५ ॥ यच्च भूयोऽस्ति तेजस्तत्परमं मम दर्शय। स एव द्रोणहन्ता ते दर्पं भेत्स्यति पार्षतः ॥ ६ ॥ कालानलसमप्रख्यं द्विषतामन्तकोपमम्। समासादय पाञ्चाल्यं माञ्चापि सहकेशवम्। दर्पं नाशयितास्म्यद्य तवोद्धतस्य संयुगे ॥७॥
धृतराष्ट्र उवाच। आचार्यपुत्रो मानार्हो बलवांश्चापि सञ्जय। प्रीतिर्धनञ्जये चास्य प्रियश्चापि महात्मनः ॥ ८ ॥ न भूतपूर्वं बीभत्सोर्वाक्यं परममीदृशम्। अथ कस्मात् स कौन्तेय सखायं रूक्षमब्रवीत् ॥ ९ ॥

सञ्जय उवाच। युवराजे हते राजन् वृद्धक्षत्रे च पौरवे। इष्वस्त्रविधिसम्पन्ने मालवे च सुदर्शने ॥ १० ॥ धृष्टद्युम्ने सात्यकौ च भीमे चापि पराजिते। युधिष्ठिरस्य तैर्वाक्यैर्मर्मण्याप च घट्टिते। ॥ ११ ॥ अन्तर्भेदे च सञ्जाते दुःखं संस्मृत्य च प्रभो। अभूतपूर्वो बीभत्सोर्दुःखान्मन्युरजायत ॥ १२ ॥ तस्मादनर्हमश्लीलमप्रियं द्रौणिमब्रवीत्। मान्यमाचार्यतनयं रूक्षं कापुरुषो यथा ॥ १३ ॥ एवमुक्तस्तु स क्रोधान्महेष्वासतमो नृप। पार्थेन परुषं वाक्यं सर्वमर्म्मघ्नया गिरा ॥ १४ ॥ द्रौणिश्चुकोप पार्थाय कृष्णाय च विशेषतः। स तु यत्तो रथे स्थित्वा वार्य्युपस्पृश्य वीर्यवान् ॥ १५ ॥ दैवैरपि सुदुर्धर्षमस्त्रमाग्नेयमाददे। दृश्यादृश्यानरिगणानुद्दिश्याचार्यनन्दनः ॥ १६ ॥ सोऽभिमन्त्र्य शरं दीप्तं विधूम

मिव पावकम् । सर्व्वतः क्रोधमाविश्य चिक्षेप परवीरहा ॥ १७ ॥
ततस्तुमुलमाकाशे शरवर्षमजायत । पावकार्च्चिः परीतं तत्
पार्थमेवाभिदुद्रुवे ॥ १८ ॥ उल्काश्च गगनात् पेतुर्दिशश्च न चका-
शिरे । तमश्च सहसा रौद्रं चमूमवततार ताम् ॥ १९ ॥ रक्षांसि
च पिशाचाश्च विनेदुरभिसङ्गताः । ववुश्चाप्यशिवा वाताः सूर्य्यो
नैव तताप च ॥ २० ॥ पुस्फुरुर्व्वायसाश्चापि दिक्षु सर्व्वासु भैरवम् ।
रुधिरञ्चाभिवर्षन्तो विनेदुस्तोयदा दिवि ॥ २१ ॥ पक्षिणः पशवो
गावो मुनयश्चापि सुव्रताः । परमं प्रयतात्मानो न शान्तिमुप-
लेभिरे ॥ २२ ॥ भ्रान्तसर्व्वमहाभूतमावर्त्तितदिवाकरम् । त्रैलोक्य-
मभिसन्तप्तं ज्वराविष्टमिवाभवत् ॥ २३ ॥ अस्त्रतेजोभिसन्तप्ता
नागा भूमिशयास्तथा । निःश्वसन्तः समुत्पेतुस्तेजो घोरं मुमु-
क्षवः ॥ २४ ॥ जलजानि च सत्त्वानि दह्यमानानि भारत । न
शान्तिमुपजग्मुर्हि तप्यमानैर्ज्जलाशयैः ॥ २५ ॥ दिग्भ्यः प्रदिग्भ्यः
खाद्भूमेः सर्व्वतः शरवृष्टयः । उच्चावचानि पेतुर्व्वै गरुडानिल-
रंहसः ॥ २६ ॥ तैः शरैर्द्रोणपुत्रस्य वज्रवेगैः समाहताः । प्रदग्धाः
शत्रवः पेतुरग्निदग्धा इव द्रुमाः ॥ २७ ॥ दह्यमाना महानागाः
पेतुरुर्व्व्यां समन्ततः । नदन्तो भैरवान्नादान् जलदोपमनिस्वनान्
॥ २८ ॥ अपरे प्रद्रुतास्तत्र दह्यमाना महागजाः । तेसुस्तथा
यथा घोरा वने दावाग्निसंवृताः ॥ २९ ॥ द्रुमाणां शिखराणीव
दावदग्धानि मारिष । अश्ववृन्दान्यदृश्यन्त रथवृन्दानि वा विभो
॥ ३० ॥ अपतन्त रथौघाश्च तत्र तत्र सहस्रशः । तत्सैन्यं भग-
वानग्निर्द्दहाह युधि भारत ॥ ३१ ॥ युगान्ते सर्व्वभूतानि सम्व-
र्त्तक इवानलः । दृष्ट्वा तु पाण्डवीं सेनां दह्यमानां महाहवे ॥३२॥
प्रहृष्टास्तावका राजन् सिंहनादान् विनेदिरे । ततस्तूर्य्यसह-
स्राणि नानालिङ्गानि भारत ॥ ३३ ॥ तूर्णमाजघ्निरे हृष्टास्तावका
जितकाशिनः । कृत्स्ना ह्यक्षौहिणी राजन् सव्यसाची च पाण्डवः

॥ ३४ ॥ तमसा चावृते लोके नादृश्यन्त महाहवे। नैव तत्तादृशं
राजन् दृष्टपूर्वं न च श्रुतम् ॥ ३५ ॥ यादृशं द्रोणपुत्रेण सृष्टमस्त्र-
मनार्यया। अर्जुनस्तु महाराज ब्राह्ममस्त्रमुदैरयत् ॥ ३६ ॥
सर्वास्त्रप्रतिघातार्थं विहितं पद्मयोनिना। ततो मुहूर्त्तादिव तत्तमो
व्युपशशाम ह ॥ ३७ ॥ प्रववौ चानिलः शीतो दिशश्च विमला
बभुः। तत्राद्भुतमपश्याम कृत्स्नामक्षौहिणीं हताम् ॥ ३८ ॥
अनाभिज्ञेयरूपाञ्च प्रदग्धामस्त्रतेजसा। ततो वीरौ महेष्वासौ
विमुक्तौ केशवार्जुनौ ॥ ३९ ॥ सहितौ समदृश्येतां नभसीव
तमोनुदौ। ततो गाण्डीवधन्वा च केशवश्चाक्षतावुभौ ॥ ४० ॥
सपताकध्वजहयं सानुकर्षवरायुधम्। प्रबभौ स रथो मुक्तस्ताव-
कानां भयङ्करः ॥ ४१ ॥ ततः किलकिलाशब्दः शङ्खभेरीस्वनैः सह।
पाण्डवानां प्रहृष्टानां क्षणेन समजायत ॥ ४२ ॥ हताविति
तयोरासीत् सेनयोरुभयोर्मतिः। तरसाभ्यागतौ दृष्ट्वा विमुक्तौ
केशवार्जुनौ ॥ ४३ ॥ तावक्षतौ प्रमुदितौ दध्मतुर्वारिजोत्तमौ।
दृष्ट्वा प्रमुदितान् पार्थांस्त्वदीया व्यथिता भृशम् ॥ ४४ ॥ विमुक्तौ
च महात्मानौ दृष्ट्वा द्रौणिः सुदुःखितः। मुहूर्तं चिन्तयामास
किन्त्वेतदिति भारत ॥ ४५ ॥ चिन्तयित्वा तु राजेन्द्र ध्यानशोक
परायणः। निःश्वसन् दीर्घमुष्णञ्च विमनाश्चाभवत्तदा ॥ ४६ ॥
ततो द्रौणिर्धनुस्त्यक्त्वा रथात् प्रस्कन्द्य वेगितः। धिग्धिक् सर्वमिदं
मिथ्येत्युक्त्वा सम्प्राद्रवद्रणात् ॥ ४७ ॥ ततः स्निग्धाम्बुदाभासं
वेदव्यासमकल्मषम्। वेदव्यासं सरस्वत्यावासं व्यासं ददर्श ह
॥ ४८ ॥ तं द्रोणपुत्रो दृष्ट्वा स्थितं कुरुकुलोद्वह। सन्नकण्ठो
ऽब्रवीद्वाक्यमभिवाद्य सुदीनवत् ॥ ४९ ॥ भो भो माया यदृच्छा
वा न विद्मः किमिदं भवेत्। अस्त्रं त्विदं कथं मिथ्या मम कश्च
व्यतिक्रमः ॥ ५० ॥ अधरोत्तरमेतद्वा लोकानां वा पराभवः। यदिमौ
जीवतः कृष्णौ कालो हि दुरतिक्रमः ॥ ५१ ॥ नासुरा न च

गन्धर्वा न पिशाचा न राक्षसा । न सर्पयक्षपतगा न मनुष्या
कथञ्चन ॥ ५२ ॥ पक्षमन्ते त्वया कर्त्तुमेतदस्त्र मयेरितम् । तदिद्
केवल हत्वा शान्तमक्षौहिणीं ज्वलत ॥ ५३ ॥ सर्वघाति मया
मुक्तमस्त्र परमदारुणम् । केन मानुषधर्माणौ नावधीत केशवा-
र्जुनौ ॥ ५४ ॥ एतन्मे ब्रूहि भगवन् मया पृष्टो यथातथम् ।
श्रोतुमिच्छामि तत्त्वेन सर्वमेतन्महामुने ॥ ५५ ॥

व्यास उवाच । महान्तमेतमर्थं मा यत्त्व पृच्छसि विस्मयात् ।
तम्प्रवक्ष्यामि ते सर्वं समाधाय मन शृणु ॥ ५६ ॥ योऽसौ
नारायणो नाम पूर्वेषामपि पूर्वज । अजायत च कार्य्यार्थं पुत्रो
धर्मस्य विश्वकृत् ॥ ५७ ॥ स तपस्तीव्रमातस्थे शिशिर गिरि-
माश्रित । ऊर्द्ध्वबाहुर्महातेजा ज्वलनादित्यसन्निभ ॥ ५८ ॥
षष्टि वर्षसहस्राणि तावन्त्येव शतानि च । अशोषयत्तदात्मान
वायुभक्षोऽम्बुजेक्षण ॥ ५९ ॥ तथा पर तपस्तप्त्वा द्विस्ततोऽन्यत्
पुनर्महत् । द्यावापृथिव्योर्विवर तेजसा समपूरयत ॥ ६० ॥ स
तेन तपसा तात ब्रह्मभूतो यदाभवत् । ततो विश्वेश्वर योनिं
विश्वस्य जगत पतिम् ॥ ६१ ॥ ददर्श भृशदुर्दर्शं सर्वदेवैर
पीश्वरम् । अणोरणीयसमथ बृहद्भ्यश्च महत्तरम् ॥ ६२ ॥ रुद्र-
मीशानमृषभ हर शम्भु कपर्द्दिनम् । चेकितान पर योनिं तिष्ठतो
गच्छतश्च च ॥ ६३ ॥ दुर्वारण दुर्दृश तिग्ममन्युं महात्मान सर्व-
हर प्रचेतसम् । दिव्यश्चापानिषुधी चाददान हिरण्यवर्मा णमनन्त-
वीर्य्यम् ॥ ६४ ॥ पिनाकिन वज्रिण दीप्तशूल परश्वधिन गदिन
मायतासिम । शुभ्रु जटिल मुषलिन शूलपाणि व्याघ्राजिन
परिधिन दण्डपाणिम् ॥ ६५ ॥ शुभाङ्गद नागयज्ञोपवीत विश्वै
र्गणै शोभित भूतसङ्घै । एकीभूत तपसा सन्निधान वयोऽतगी
सृष्ट तमिष्टवाग्भि ॥ ६६ ॥ जल दिव ख क्षितिं सूर्यचन्द्रौ तथा
वायग्नी प्रमिमाण जगत । नाल द्रष्टु यमज भिन्नवृत्ता ब्रह्म

द्दिषद्गमभ्तत्वा योनिम् ॥ ६७ ॥ यं पश्यन्ति ब्राह्मणा साधुवृत्ताः
क्षीणे पापे मनसा वीतशोकाः। स निष्टप्य तपसा धर्ममीड्यं
तद्भक्त्या वै विश्वरूपं ददर्श। दृष्ट्वा चैनं वाङ्मनोबुद्धिदेहैः संहृ-
ष्टात्मा मुमुदे वासुदेव ॥ ६८ ॥ अक्षमालापरिक्षिप्तं ज्योतिषां
परमं निधिम्। ततो नारायणो देवं ववन्दे विश्वसम्भवम् ॥ ६९ ॥
वरदं पृथुचार्वङ्ग्या पार्वत्या सहितं प्रभुम्। क्रीडमानं महात्मानं
भूतसङ्घगणैर्वृतम् ॥ ७० ॥ अजमीशानमव्यक्तं कारणात्मानमच्यु-
तम्। अभिवाद्याथ रुद्राय सद्योऽन्धकनिपातिने। पद्माक्षस्तं
विरूपाक्षमभितुष्टाव भक्तिमान् ॥ ७१ ॥

नारायण उवाच। त्वत्सम्भूता भूतकृतो वरेण्य गोप्तारोऽस्य
भुवनस्यादिदेव। आविश्येमां धरणीं येऽभ्यरक्षन् पुरा पुराणीं
तव देव सृष्टिम् ॥७२॥ सुरासुरान्नागरक्षःपिशाचान्नरान् सुपर्णा-
नथ गन्धर्वयक्षान्। पृथग्विधान् भूतसङ्घांश्च विश्वांस्त्वत्सम्भूतान्
विद्म सर्वांस्तथैव ॥ ७३ ॥ ऐन्द्रं याम्यं वारुणं वैत्तपाल्यं पैत्रं
त्वाष्ट्रं कर्म सौम्यञ्च तुभ्यम्। रूपं ज्योतिः शब्द आकाशवायुः
स्पर्शं स्वाद्यं सलिलं गन्ध उर्वी ॥ ७४ ॥ कालो ब्रह्मा ब्रह्म च
ब्राह्मणाश्च त्वत् सम्भूतं स्थास्नु चरिष्णु चेदम्। अद्भ्यस्तोका
यान्ति यथा पृथक् त्वं ताभिश्चैक्यं संक्षये यान्ति भूय ॥ ७५ ॥
एवं विद्वान् प्रभवञ्चाप्ययञ्च मत्वा भूतानां तव सायुज्यमेति।
दिव्यामृतौ मानसौ द्वौ सुपर्णौ वाचा शाखाः पिप्पलाः सप्त गोपाः
॥ ७६ ॥ दश चान्ये ये पुरं धारयन्ति त्वया सृष्टास्ते हि तेभ्यः
परश्च। भूतं भव्यं भविता चाप्यधृष्यं त्वत्सम्भूता भुवनानीह विश्वा
॥ ७७ ॥ भक्तञ्च मां भजमानं भजस्व मा रीरिषो मामहिताहितेन।
आत्मानं त्वामात्मनोऽनन्यबोधं विद्वानेवं गच्छति ब्रह्म शुक्रम् ॥ ७८ ॥
अस्तौषं त्वां तव सम्मानमिच्छन् विचिन्वन् वै सदृशं देववर्य।
सुदुर्लभान् देहि वरान् ममेष्टानभिष्टुतः प्रतिकार्षीश्च मायाम् ॥ ७९ ॥

व्यास उवाच। तस्मै वरानचिन्त्यात्मा नीलकण्ठः पिनाकधृक्। अर्हते वासुदेवाय प्रायच्छदृषिसंस्तुत ॥ ८० ॥

श्रीभगवानुवाच। मत्प्रसादान्मनुष्येषु देवगन्धर्वयोनिषु। अप्रमेयबलात्मा त्वं नारायण भविष्यसि ॥ ८१ ॥ न च त्वां प्रसहिष्यन्ति देवासुरमहोरगाः। न पिशाचा न गन्धर्वा न नरा न च राक्षसाः ॥ ८२ ॥ न सुपर्णास्तथा नागा न च विश्वे वियोनिजाः। न कश्चित्त्वाञ्च देवोऽपि समरेषु विजेष्यति ॥ ८३ ॥ न शस्त्रेण न वज्रेण नाग्निना न च वायुना। न चार्द्रेण न शुष्केण त्रसेन स्थावरेण च ॥ ८४ ॥ कश्चित्तव रुजं कर्त्ता मत्प्रसादात् कथञ्चन। अपि चेत् समरं गत्वा भविष्यसि ममाधिकः ॥ ८५ ॥ एवमेते वरा लब्धा वरास्ते विद्धि शौरिणा। स एष देवश्चरति मायया मोहयन् जगत् ॥ ८६ ॥ तस्यैव तपसो जातं नरं नाम महामुनिम्। तुल्यमेतेन देवेन तं जानीह्यर्जुनं सदा ॥ ८७ ॥ तावेतौ पूर्वदेवानां परमौ प्रथितावृषी। लोकयात्राविधानार्थं सञ्जायेते युगे युगे ॥ ८८ ॥ तथैव कर्मणः कृत्स्नं महतस्तपसोऽपि च। तेजोमन्युश्च विद्वंस्त्वं जातो रौद्रो महामुने ॥ ८९ ॥ स भवान् देववान् प्राज्ञो ज्ञात्वा भवमयं जगत्। अवाकर्षस्त्वमात्मानं नियमैस्तत्प्रियेप्सया ॥ ९० ॥ शुभ्रं स तु भवान् कृत्वा महापुरुषविग्रहम्। ईजिवांस्त्वं जपैर्होमैरुपहारैश्च मानद ॥ ९१ ॥ स तथा पूज्यमानस्ते पूर्वदेवोऽप्यतूतुषत्। पुष्कलांश्च वरान् प्रादात्तव विद्वन् हृदि स्थितान् ॥ ९२ ॥ जन्मकर्मतपोयोगास्तयोस्तव च पुष्कलाः। ताभ्यां लिङ्गेऽर्चितो देवस्त्वयार्च्चायां युगे युगे ॥ ९३ ॥ स एष रुद्रभक्तश्च केशवो रुद्रसम्भवः। सर्वरूपं भवं ज्ञात्वा लिङ्गेऽर्चयति प्रभुम् ॥ ९४ ॥ आत्मयोगाश्च तस्मिन् वै शास्त्रयोगाश्च शाश्वताः। एवमेवार्चयन् देवा सिद्धाश्च परमर्षयः ॥ ९५ ॥ प्रार्थयन्ति परं लोके स्थाणुमेकं स सर्वदा। कृष्ण एव हि

यष्टव्यो यष्टा चैव सनातनः ॥ ९६ ॥ एवंभूतमिमं ज्ञात्वा लिङ्गमर्चति यः प्रभुं । तस्मिन्नभ्यधिकां प्रीतिं करोति वृषभध्वजः ॥ ९७ ॥

सञ्जय उवाच । तस्य तद्वचनं श्रुत्वा द्रोणपुत्रो महारथः । नमश्चकार रुद्राय बहु मेने च केशवम् ॥ ९८ ॥ हृष्टरोमा च वश्यात्मा नमस्कृत्य महर्षये । वरूथिनीमभिप्रेक्ष्य ह्यवहारमकारयत ॥ ९९ ॥ ततः प्रत्यवहारोऽभूत् पाण्डवानां विशाम्पते । कौरवाणाञ्च दीनानां द्रोणे युधि निपातिते ॥ १०० ॥ युद्धं कृत्वा दिनान् पञ्च द्रोणो हत्वा वरूथिनीम् । ब्रह्मलोके गतो राजन् ब्राह्मणो वेदपारगः ॥ १०१ ॥

इति द्रोणपर्वणि नारायणास्त्रमोक्षपर्वणि व्यासवाक्ये द्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥

---

धृतराष्ट्र उवाच । तस्मिन्नतिरथे द्रोणे निहते पार्षतेन वै । मामका पाण्डवाश्चैव किमकुर्वन्नतः परम् ॥ १ ॥

सञ्जय उवाच । तस्मिन्नतिरथे द्रोणे निहते पार्षतेन वै । कौरवेषु च भग्नेषु कुन्तीपुत्रो धनञ्जयः ॥ २ ॥ दृष्ट्वा सुमहदाश्चर्यमात्मनो विजयावहम् । यदृच्छया गतं व्यासं प्रपच्छ भरतर्षभ ॥ ३ ॥

अर्जुन उवाच । सङ्ग्रामे न्यहनं यत्नात् शरौघैर्विमलैरहम् । अग्रतो लक्षये यान्तं पुरुषं पावकप्रभम् ॥ ४ ॥ ज्वलन्तं शूलमुद्यम्य यां दिशं प्रतिपद्यते । तस्यां दिशि विशीर्यन्ते शत्रवो मे महामुने ॥ ५ ॥ तेन भग्नानरीन् सर्वान्मद्भग्नान्मन्यते जनः । तेन भग्नानि सैन्यानि पृष्ठतोऽनुव्रजाम्यहम् ॥ ६ ॥ भगवंस्तन्ममाचक्ष्व को वै स पुरुषोत्तमः । शूलपाणिर्मया दृष्टस्तेजसा सूर्यसन्निभः ॥ ७ ॥ न पद्भ्यां स्पृशते भूमिं न च शूलं विमुञ्चति । शूलाच्छूलसहस्राणि निष्पेतुस्तस्य तेजसा ॥ ८ ॥

व्यास उवाच । प्रजापतीनां प्रथमं तैजसं पुरुषं प्रभुम् । भुवनं भूर्भुवं देवं सर्वलोकेश्वरं प्रभुम् ॥ ९ ॥ ईशानं वरदं पार्थ

दृष्टवानसि शङ्करम् । तं गच्छ शरणं देवं वरदं भुवनेश्वरम्
॥ १० ॥ महादेवं महात्मानमीशानं जटिलं शिवम् । त्र्यक्षं
महाभुजं रुद्रं शिखिनं चीरवाससम् ॥ ११ ॥ महादेवं हरं
स्थाणुं वरदं भुवनेश्वरम् । जगत्प्रधानमधिकं जगत्प्रीतिमधी
श्वरम् ॥ १२ ॥ जगद्योनिं जगद्द्वीपं जयिनं जगतो गतिम् ।
विश्वात्मानं विश्वसृजं विश्वमूर्तिं यशस्विनम् ॥ १३ ॥ विश्वे-
श्वरं विश्वनरं कर्मणामीश्वरं प्रभुम् । शम्भुं स्वयम्भुं भूतेशं भूत
भव्यभवोद्भवम् ॥ १४ ॥ योगं योगेश्वरं शर्वं सर्वलोकेश्वरेश्वरम् ।
सर्वश्रेष्ठं जगच्छ्रेष्ठं वरिष्ठं परमेष्ठिनम् ॥ १५ ॥ लोकत्रयविधा
तारमेकं लोकत्रयाश्रयम् । सुदुर्जयं जगन्नाथं जन्ममृत्युजराति
गम् ॥ १६ ॥ ज्ञानात्मानं ज्ञानगम्यं ज्ञानश्रेष्ठं सुदुर्विदम् । दातारं-
चैव भक्तानां प्रसादविहितान् वरान् ॥ १७ ॥ तस्य पारिषदा
दिव्या रूपैर्नानाविधैर्विभो । वामना जटिला मुण्डा ह्रस्वग्रीवा
महोदरा ॥ १८ ॥ महाकाया महोत्साहा महाकर्णास्तथापरे ।
आननैर्विकृतैः पादैः पार्थ वेषैश्च वैकृतैः ॥ १९ ॥ ईदृशैः स महा
देव पूज्यमानो महेश्वरः । स शिवस्तात तेजस्वी प्रसादाद्याति
तेऽग्रत ॥ २० ॥ तस्मिन् घोरे सदा पार्थ सङ्ग्रामे लोमहर्षणे ।
द्रोणिकर्णकृपैर्गुप्तां महेष्वासैः प्रहारिभि ॥ २१ ॥ कस्तां सेना
तदा पार्थ मनसापि प्रधर्षयेत् । ऋते देवान्महेष्वासाद्बहुरूपा
न्महेश्वरात् ॥ २२ ॥ स्थातुमुत्सहते कश्चिन्न तस्मिन्नग्रत स्थिते ।
न हि भूत समन्तेन त्रिषु लोकेषु विद्यते ॥ २३ ॥ गन्धेनापि हि
सङ्ग्रामे तस्य क्रुद्धस्य शत्रव । विसंज्ञा हतभूयिष्ठा वेपन्ति च
पतन्ति च ॥ २४ ॥ तस्मै नमस्तु कुर्वन्तो देवास्तिष्ठन्ति वै दिवि ।
ये चान्ये मानवा लोके ये च स्वर्गजितो नरा ॥ २५ ॥ ये भक्ता
वरदं देवं शिवं रुद्रमुमापतिम् । इह लोके सुखं प्राप्य ते यान्ति
परमाङ्गतिम् ॥ २६ ॥ नमस्कुरुष्व कौन्तेय तस्मै शान्ताय वै सदा ।

रुद्राय शितिकण्ठाय कनिष्ठाय सुवर्च्चसे ॥ २७ ॥ कपर्द्दिने करा-
लाय हर्य्यक्षवरदाय च । याम्यायाव्यक्तकेशाय सद्वृत्ते शङ्कराय
च ॥ २८ ॥ काम्याय हरिनेत्राय स्थाणवे पुरुषाय च । हरि-
केशाय मुण्डाय कनिष्ठाय सुवर्च्चसे ॥ २९ ॥ भास्कराय सुतीर्थाय
देवदेवाय रंहसे । बहुरूपाय शर्व्वाय प्रियाय प्रियवाससे ॥ ३० ॥
उष्णीषिणे सुवक्त्राय सहस्राक्षाय मीढुषे । गिरिशाय सुशान्ताय
पतये चीरवाससे ॥ ३१ ॥ हिरण्यबाहवे राजन्नुग्राय पतये दिशाम् ।
पर्जन्यपतये चैव भूताना पतये नमः ॥ ३२ ॥ वृक्षाणाम्पतये चैव
गवाञ्च पतये तथा । वृक्षैरावृतकायाय सेनान्ये मध्यमाय च ॥ ३३ ॥
स्रुवहस्ताय देवाय धन्विने भार्गवाय च । बहुरूपाय विश्वस्य
पतये मुञ्जवाससे ॥ ३४ ॥ सहस्रशिरसे चैव सहस्रनयनाय च ।
सहस्रबाहवे चैव सहस्रचरणाय च ॥ ३५ ॥ शरणं गच्छ कौन्तेय
वरद भुवनेश्वरम् । उमापतिं विरूपाक्षं दक्षयज्ञनिबर्हणम् ॥ ३६ ॥
प्रजानाम्पतिमव्यग्रं भूताना पतिमव्ययम् । कपर्द्दिनं वृषावर्त्तं
वृषनाभं वृषध्वजम् ॥ ३७ ॥ वृषदर्पं वृषपतिं वृषशृङ्गं वृषर्षभम् ।
वृषाङ्कं वृषभोदारं वृषभं वृषभेक्षणम् ॥ ३८ ॥ वृषायुधं वृषशरं
वृषभूतं महेश्वरम् । महोदरं महाकायं द्वीपिचर्म्मनिवासिनम्
॥ ३९ ॥ लोकेशं वरदं मुण्डं ब्रह्मण्यं ब्राह्मणप्रियम् । त्रिशूल-
पाणिं वरदं खड्गचर्म्मधरं शुभम् ॥ ४० ॥ पिनाकिनं खण्डपरशुं
लोकानां पतिमीश्वरम् । प्रपद्ये देवमीशानं शरण्यं चीरवाससम्
॥ ४१ ॥ नमस्तस्मै सुरेशाय यस्य वैश्रवणः सखा । सुवाससे
नमो नित्यं सुव्रताय सुधन्विने ॥ ४२ ॥ धनुर्द्धराय देवाय प्रिय
धन्वाय धन्विने । धन्वन्तराय धनुषे धन्वाचार्य्याय ते नमः ॥ ४३ ॥
उग्रायुधाय देवाय नमः सुरवराय च । नमोऽस्तु बहुरूपाय
नमस्ते बहुधन्विने ॥ ४४ ॥ नमोऽस्तु स्थाणवे नित्यं नमस्तस्मै
सुधन्विने । नमोऽस्तु त्रिपुरघ्नाय भगघ्नाय च वै नमः ॥ ४५ ॥

वनस्पतीनां पतये नराणां पतये नमः। मातृणाम्पतये चैव गणानाम्पतये नमः ॥ ४६ ॥ गवाञ्च पतये नित्यं यज्ञाना पतये नमः। अपाञ्च पतये नित्यं देवाना पतये नमः ॥ ४७ ॥ पूष्णो दन्तविनाशाय त्र्यक्षाय वरदाय च। हराय नीलकण्ठाय स्वर्णकेशाय वै नमः ॥ ४८ ॥ कर्माणि यानि दिव्यानि महादेवस्य धीमतः। तानि ते कीर्त्तयिष्यामि यथाप्रज्ञं यथाश्रुतम् ॥ ४९ ॥ न सुरा नासुरा लोके न गन्धर्वा न राक्षसाः। सुखमेधन्ते कुपिते तस्मिन्नपि गुहागताः ॥ ५० ॥ दक्षस्य यजमानस्य विधिवत्सम्भृतं पुरा। विव्याध कुपितो यज्ञं निर्दयस्त्वभवत्तदा ॥ ५१ ॥ धनुषा बाणमुत्सृज्य सघोषं विननाद च। ते न शर्म्म कुत शान्ति लेभिरे स्म सुरास्तदा ॥ ५२ ॥ विद्रुते सहसा यज्ञे कुपिते च महेश्वरे। तेन ज्यातलघोषेण सर्व्वे देवाः समाकुलाः ॥ ५३ ॥ बभूवुर्वशगाः पार्थ निपेतुश्च सुरासुराः। आपश्चुक्षुभिरे सर्व्वाश्चकम्पे च वसुन्धरा ॥ ५४ ॥ पर्व्वताश्च व्यशीर्य्यन्त दिशो नागाश्च मोहिताः। अन्धेन तमसा लोका न प्राकाशन्त संवृताः ॥ ५५ ॥ जघ्निवान् सह सूर्य्येण सर्व्वेषां ज्योतिषां प्रभाम्। चुक्षुभुर्भयभीताश्च शान्तिञ्चक्रुस्तथैव च ॥ ५६ ॥ ऋषयः सर्व्वभूतानामात्मनश्च सुखेप्सवः। पूषाणमभ्यद्रवत शङ्करः प्रहसन्निव ॥ ५७ ॥ पुरोडाशं भक्षयतो दशनान् वै व्यशातयत्। ततो निश्चक्रमुर्द्देवा वेपमाना नताः स्म ॥ ५८ ॥ पुनश्च सन्दधे दीप्तान् देवाना निशितान् शरान्। सधूमान् सस्फुलिङ्गांश्च विद्युत्तोयदसन्निभान् ॥ ५९ ॥ तं दृष्ट्वा तु सुराः सर्व्वे प्रणिपत्य महेश्वरम्। रुद्रस्य यज्ञभागञ्च विशिष्टं तेऽन्वकल्पयन् ॥ ६० ॥ भयेन त्रिदशा राजन् शरणञ्च प्रपेदिरे। तेन चैवातिकोपेन स यज्ञः सन्धितस्तदा ॥ ६१ ॥ भग्नाश्चापि सुराश्चासन् भीताश्चाद्यापि तं प्रति। असुराणां पुराण्यासंस्त्रीणि वीर्य्यवतां दिवि ॥ ६२ ॥ आयसं राजतञ्चैव सौवर्णं

परमं महत्। सौवर्णं कमलाक्षस्य तारकाक्षस्य राजतम्॥ ६३॥
तृतीयन्तु पुरं तेषां विद्युन्मालिन आयसम्। न शक्तस्तानि
मघवा भेत्तुं सर्वायुधैरपि॥ ६४॥ अथ सर्वे सुरा रुद्रं जग्मुः
शरणमर्द्दिताः। ते तमूचुर्महात्मानं सर्वे देवाः सवासवाः॥ ६५॥
ब्रह्मदत्तवरा ह्येते घोरास्त्रिपुरवासिनः। पीडयन्त्यधिकं लोकं
यस्मात्ते वरदर्पिताः॥ ६६॥ त्वदृते, देवदेवेश नान्यः शक्तः
कथञ्चन। हन्तुं दैत्यान्महादेव जहि तांस्त्वं सुरार्द्दन॥ ६७॥
रुद्र रौद्रा भविष्यन्ति पशवः सर्वकर्मसु। निपातयिष्यसे चैता-
नसुरान् भुवनेश्वर॥ ६८॥ स तथोक्तस्तथेत्युक्त्वा देवानां हित-
काम्यया। गन्धमादनविन्ध्यौ च कृत्वा वंशध्वजौ हरः॥ ६९॥
पृथ्वीं ससागरवनां रथं कृत्वा च शङ्करः। अक्षं कृत्वा तु नागेन्द्रं
शेषं नाम त्रिलोचनः॥ ७०॥ चक्रे कृत्वा तु चन्द्रार्कौ देवदेवः
पिनाकधृक्। अणी कृत्वैलपत्रञ्च पुष्पदन्तञ्च त्र्यम्बकः॥ ७१॥ यूपं
कृत्वा तु मलयमवनाहञ्च तक्षकम्। योक्त्राङ्गानि च सत्त्वानि कृत्वा
सर्वं प्रतापवान्॥ ७२॥ वेदान् कृत्वाथ चतुरश्चतुरोऽश्वान् महे-
श्वरः। उपवेदान् खलीनांश्च कृत्वा लोकत्रयेश्वरः॥ ७३॥
गायत्रीं प्रग्रहं कृत्वा सावित्रीञ्च महेश्वरः। कृत्वोङ्कारं प्रतोदञ्च
ब्रह्माणञ्चैव सारथिम्॥ ७४॥ गाण्डीवं मन्दरं कृत्वा गुणं कृत्वा
च वासुकिम्। विष्णुं शरोत्तमं कृत्वा शल्यमग्निं तथैव च॥ ७५॥
वायुं कृत्वाथ वाजाभ्यां पुङ्खे वैवस्वतं यमम्। विद्युतं कृत्वाथ
निश्राणं मेरुं कृत्वाथ वै ध्वजम्॥ ७६॥ आरुह्य स रथं दिव्यं
सर्वदेवमयं शिवः। त्रिपुरस्य वधार्थाय स्थाणुः प्रहरतां वरः॥ ७७॥
असुराणामन्तकरः श्रीमानतुलविक्रमः। स्तूयमानः सुरैः पार्थ
ऋषिभिश्च तपोधनैः॥ ७८॥ स्थानं माहेश्वरं कृत्वा दिव्यमप्रतिमं
प्रभुः। अतिष्ठत् स्थाणुभूतः स सहस्रं परिवत्सरान्॥ ७९॥
यदा त्रीणि समेतानि अन्तरिक्षे पुराणि च। त्रिपर्वणा त्रि-

श्रब्देन सदा तानि बिभेद स. ॥ ८० ॥ पुराणि न च तं शेकु-
र्दानवाः प्रतिवीक्षितुम् । यत् कालाग्निसंयुक्तं विष्णुसोमसमा-
युतम् ॥ ८१ ॥ पुराणि दग्धवन्तं त देवी याता प्रवीक्षितुम् ।
बालमङ्कगतं कृत्वा स्वयं पञ्चशिख पुनः ॥ ८२ ॥ उमा जिज्ञास-
माना वै कोऽयमित्यब्रवीत् सुरान् । असूयतश्च शक्रस्य वज्रेण
प्रहरिष्यतः ॥ ८३ ॥ बाहुं सवज्रं तं तस्य क्रुद्धस्यास्तम्भयत्
प्रभुः । प्रहस्य भगवांस्तूर्णं सर्वलोकेश्वरो विभुः ॥ ८४ ॥ ततः
सस्तम्भितभुजः शक्रो देवगणैर्वृतः । जगाम ससुरस्तूर्णं ब्रह्माण
प्रभुमव्ययम् ॥ ८५ ॥ ते तं प्रणम्य शिरसा प्रोचुः प्राञ्जलयस्तदा ।
किमप्यङ्कगतं ब्रह्मन् पार्वत्या भूतमद्भुतम् ॥ ८६ ॥ बालरूपधरं
दृष्ट्वा नास्माभिरभिवादितः । तस्मात्त्वा प्रष्टुमिच्छामो निर्जिता
येन वै वयम् ॥ ८७ ॥ अयुध्यता हि बालेन लीलया सपुरन्दराः ।
तेषां तद्वचनं श्रुत्वा ब्रह्मा ब्रह्मविदांवरः ॥ ८८ ॥ ध्यात्वा स
शम्भुं भगवान् बालंचामिततेजसम् । उवाच भगवान् ब्रह्मा
शक्रादींश्च सुरोत्तमान् ॥ ८९ ॥ चराचरस्य जगतः प्रभुः स भग-
वान् हरः । तस्मात् परतरं नान्यत् किञ्चिदस्ति महेश्वरात् ॥ ९० ॥
यो दृष्टो ह्युमया सार्द्धं युष्माभिरमितद्युतिः । स पार्वत्याः कृते
देवः कृतवान् बालरूपताम् ॥ ९१ ॥ ते मया सहिता यूयं
प्राप्नुवध्वं तमेव हि । स एव भगवान् देवः सर्वलोकेश्वरः प्रभुः
॥ ९२ ॥ न सम्बुबुधिरे चैनं देवास्तं भुवनेश्वरम् । सप्रजापतयः
सर्वे बालार्कसदृशप्रभम् ॥ ९३ ॥ अथाभ्येत्य ततो ब्रह्मा दृष्ट्वा च स
महेश्वरम् । अयं श्रेष्ठ इति ज्ञात्वा ववन्दे त पितामह ॥ ९४ ॥

ब्रह्मोवाच । त्वं यज्ञो भुवनस्यास्य त्वं गतिस्त्वं परायणं ।
त्वम्भवस्त्वं महादेवस्त्वं धाम परमं पदम् ॥ ९५ ॥ त्वया सर्वमिदं
व्याप्तं जगत् स्थावरजङ्गमम् । भगवन् भूतभव्येश लोकनाथ जग-
त्पते । प्रसादं कुरु शक्रस्य त्वया क्रोधार्दितस्य वै ॥ ९६ ॥

व्यास उवाच। पद्मयोनेर्वचः श्रुत्वा ततः प्रीतो महेश्वरः। प्रसादाभिमुखो भूत्वा अट्टहासमथाकरोत् ॥ ९७ ॥ ततः प्रसादयामासुरुमां रुद्रञ्च ते सुराः। अभवच्च पुनर्बाहुः प्रकृतिस्थो हि वज्रिणः ॥ ९८ ॥ तेषां प्रसन्नो भगवान् सपत्नीको वृषध्वजः। देवानां त्रिदशश्रेष्ठो दक्षयज्ञविनाशनः ॥ ९९ ॥ स वै रुद्रः स च शिवः सोऽग्निः शर्वः स सर्ववित्। स चेन्द्रश्चैव वायुश्च सोऽश्विनौ च विद्युतः ॥ १०० ॥ स भवः स च पर्जन्यो महादेवः सनातनः। स चन्द्रमाः स चेशानः स सूर्यो वरुणश्च सः ॥ १०१ ॥ स कालः सोऽन्तको मृत्युः स यमो रात्र्यहानि च। मासार्द्धमासा ऋतवः सन्ध्ये संवत्सराणि च ॥ १०२ ॥ धाता च स विधाता च विश्वात्मा विश्वकर्मकृत्। सर्वासां देवतानाञ्च धारयत्यवपुर्वपुः ॥ १०३ ॥ सर्वैर्देवैः स्तुतो देवः सैकधा बहुधा च सः। शतधा सहस्रधा चैव तथा शतसहस्रधा ॥ १०४ ॥ द्वे तनू तस्य देवस्य वेदज्ञा ब्राह्मणा विदुः। घोरा चान्या शिवा चान्या ते तनू बहुधा पुनः ॥ १०५ ॥ घोरा तु या तनुस्तस्य सोऽग्निर्विष्णुः स भास्करः। सौम्या तु पुनरेवास्य आपो ज्योतींषि चन्द्रमाः ॥ १०६ ॥ वेदाङ्गाः सोपनिषदः पुराणाध्यात्मनिश्चयाः। यदत्र परमं गुह्यं स वै देवो महेश्वरः ॥ १०७ ॥ ईदृशश्च महादेवो भूयांश्च भगवानतः। न हि सर्वे मया शक्या वक्तुं भगवतो गुणाः ॥ १०८ ॥ अपि वर्षसहस्रेण सततं पाण्डुनन्दन। सर्वैर्ग्रहैर्गृहीतान् वै सर्वपापसमन्वितान् ॥ १०९ ॥ स मोचयति सुप्रीतः शरण्यः शरणागतान्। आयुरारोग्यमैश्वर्यं वित्तं कामांश्च पुष्कलान् ॥ ११० ॥ स ददाति मनुष्येभ्यः स चैवाक्षिपते पुनः। सेन्द्रादिषु च देवेषु तस्य चैश्वर्यमुच्यते ॥ १११ ॥ स चैव व्याप्टतो लोके मनुष्याणां शुभाशुभे। ऐश्वर्याच्चैव कामानामीश्वरश्च स उच्यते ॥ ११२ ॥ महेश्वरश्च भूतानां महतामीश्वरश्च सः।

बहुभिर्बहुधा रूपैर्विश्वं व्याप्नोति वै जगत् ॥ ११३ ॥ तस्य देवस्य यद्वक्त्रं समुद्रे तदतिष्ठत । वडवामुखेऽतिविख्यातं पिबत्तोयमयं हविः ॥ ११४ ॥ एष चैव श्मशानेषु देवो वसति नित्यशः । यजन्त्येनं जनास्तत्र वीरस्थान इतीश्वरम् ॥ ११५ ॥ अस्य दीप्तानि रूपाणि घोराणि च बहूनि च । लोके यान्यस्य पूज्यन्ते मनुष्याः प्रवदन्ति च ॥ ११६ ॥ नामधेयानि लोकेषु बहून्यस्य यथार्थवित् । निरुच्यते महत्त्वाच्च विभुत्वात् कर्मभिस्तथा ॥ ११७ ॥ वेदे चास्य समाम्नातं शतरुद्रियमुत्तमम् । नाम्ना चानन्तरुद्रेति उपस्थानं महात्मनः ॥ ११८ ॥ स कामानां प्रभुर्देवो ये दिव्या ये च मानुषाः । स विभुः स प्रभुर्देवो विश्वं व्याप्नोति वै महत् ॥ ११९ ॥ ज्येष्ठभूतं वदन्त्येनं ब्राह्मणा मुनयस्तथा । प्रथमो ह्येष देवानां मुखादस्यानलोऽभवत् ॥ १२० ॥ सर्वथा यत् पशून् पाति तैश्च यद्रमते पुनः । तेषामधिपतिर्यच्च तस्मात् पशुपतिः स्मृतः ॥ १२१ ॥ नित्येन ब्रह्मचर्य्येण लिङ्गमस्य यदा स्थितम् । महयत्येष लोकांश्च महेश्वर इति स्मृतः ॥ १२२ ॥ ऋषयश्चैव देवाश्च गन्धर्वाप्सरसस्तथा । लिङ्गमस्यार्चयन्ति स्म तच्चाप्यूर्द्ध्वं समास्थितम् ॥ १२३ ॥ पूज्यमाने ततस्तस्मिन् मोदते स महेश्वरः । सुखी प्रीतश्च भवति प्रहृष्टश्चैव शङ्करः ॥ १२४ ॥ यदस्य बहुधा रूपं भूतभव्यभवत्स्थितम् । स्थावरं जङ्गमञ्चैव बहुरूपस्ततः स्मृतः ॥ १२५ ॥ एकाक्षो जाज्वलन्नास्ते सर्वतोऽक्षिमयोऽपि वा । क्रोधाद्यश्चाविशल्लोकांस्तस्मात् शर्व इति स्मृतः ॥ १२६ ॥ धूम्ररूपञ्च यत्तस्य धूर्जटिस्तेन चोच्यते । विश्वे देवाश्च यत्तस्मिन् विश्वरूपस्ततः स्मृतः ॥ १२७ ॥ तिस्रो देव्यो यदा चैनं भजन्ते भुवनेश्वरम् । द्यौरापः पृथिवी चैव त्र्यम्बकस्तु ततः स्मृतः ॥ १२८ ॥ समेधयति यन्नित्यं सर्वार्थान् सर्वकर्मसु । शिवमिच्छन् मनुष्याणां तस्मादेष शिवः स्मृतः ॥ १२९ ॥ सहस्राक्षो-

ऽयुक्ताश्चो वा सर्वतोऽर्चिर्मयोऽपि वा। यच्च विश्वं महत् पाति महादेवस्ततः स्मृतः ॥ १३० ॥ दहत्यूर्द्ध्वं स्थितो यच्च प्राणोत्पत्ति-स्थितश्च यत्। स्थितलिङ्गश्च यन्नित्यं तस्मात् स्थाणुरिति स्मृतः ॥ १३१ ॥ सूर्य्याचन्द्रमसो लोके प्रकाशन्ते रुचश्च याः। ताः केशसंज्ञितास्त्र्यक्षे व्योमकेश इति स्मृतः ॥ १३२ ॥ ब्रह्माणमिन्द्रं वरुणं यमं धनदमेव च। निगृह्य हरते यस्मात्तस्माद्धर इति स्मृतः ॥ १३३ ॥ भूतं भव्यं भविष्यच्च सर्वं भवोद्भवतः। भव एव ततो यस्माद्भूतभव्यभवोद्भवः ॥ १३४ ॥ विषमस्थः शरीरेषु समश्च प्राणिनामिह। स वायुर्विषमस्थेषु प्राणोऽपानः शरीरिषु ॥ १३५ ॥ पूजयेद्विग्रहं यस्तु लिङ्गं वापि महात्मनः। लिङ्गं पूजयिता नित्यं महतीं श्रियमश्नुते ॥ १३६ ॥ ऊरुभ्यामर्द्धमाग्नेयं सोमार्द्धञ्च शिवा तनुः। आत्मनोऽर्द्धं तथा चाग्निः सोमार्द्धं पुनरुच्यते ॥ १३७ ॥ तैजसी महतीदीप्ता देवेभ्योऽस्य शिवा तनुः। भास्वती मानुषेष्वस्य तनुर्घोराग्निरुच्यते ॥ १३८ ॥ ब्रह्मचर्य्यं चरत्येष शिवा यास्य तनुस्तया। यस्य घोरतमा मूर्त्तिः सर्वानत्ति तयेश्वरः ॥ १३९ ॥ यन्निर्दहति यत्तीक्ष्णो यदुग्रो यत् प्रतापवान्। मांसशोणितमज्जादो यत्ततो रुद्र उच्यते ॥ १४० ॥ कपि-श्रेष्ठ इति प्रोक्तो धर्म्मश्च वृष उच्यते। स देवदेवो भगवान् कीर्त्त्यतेऽतो वृषाकपिः ॥ १४१ ॥ उन्मीलितस्त्वया नेत्राभ्या बलाद्देवो महेश्वरः। ललाटे नेत्रमसृजत्तेन त्र्यक्ष इति स्मृतः ॥ १४२ ॥ एष देवो महादेवो योऽसौ पार्थ तवाग्रतः। सङ्ग्रामे शात्रवान्निघ्नंस्त्वया दृष्टः पिनाकधृक् ॥ १४३ ॥ सिन्धुराजवधार्थाय प्रतिज्ञाते त्वयानघ। कृष्णेन दर्शितः स्वप्ने यस्तु शैलेन्द्रमूर्द्धनि ॥ १४४ ॥ एष वै भगवान्देवः सङ्ग्रामे याति तेऽग्रतः। येन दत्तानि ते-ऽस्त्राणि यैस्त्वया दानवा हताः ॥ १४५ ॥ धन्यं यशस्यमायुष्यं पुण्यं वेदैश्च सम्मितम्। देवदेवस्य ते पार्थ व्याख्यातं शतरुद्रियम्

॥ १४६ ॥ सर्वार्थसाधनं पुण्यं सर्वकिल्विषनाशनम् । सर्वपाप-
प्रशमनं सर्वदुःखभयापहम् ॥ १४७ ॥ चतुर्विधमिदं स्तोत्रं यः
शृणोति नरः सदा । विजित्य शत्रून् सर्वान् स रुद्रलोके महीयते ॥ १४८ ॥ चरितं महात्मनो दिव्यं साङ्ग्रामिकमिदं शुभम् ।
पठन् वै शतरुद्रीयं शृण्वंश्च सततोत्थितम् ॥ १४९ ॥ भक्तो
विश्वेश्वरं देवं मानुषेषु तु यः सदा । वरान् कामान् स लभते
प्रसन्ने त्र्यम्बके नरः ॥ १५० ॥ गच्छ युध्यस्व कौन्तेय न तवास्ति
पराजयः । यस्य मन्त्री च गोप्ता च पार्श्वतस्ते जनार्द्दनः ॥ १५१ ॥
सञ्जय उवाच । एवमुक्त्वार्ज्जुनं सङ्ख्ये पराशरसुतस्तदा ।
जगाम भरतश्रेष्ठ यथागतमरिन्दम ॥ १५२ ॥ —

इति द्रोणपर्व्वणि नारायणास्त्रमोक्षपर्व्वणि शतरुद्रीये
त्र्यधिकद्विशततोऽध्यायः ॥ २०३ ॥

---

सञ्जय उवाच । युद्धं कृत्वा महाघोरं पञ्चाहानि महाबलः ।
ब्राह्मणो निहतो राजन् ब्रह्मलोकमवाप्तवान् ॥ १ ॥ यदधीते यत्-
फलं वेदे तदस्मिन्नपि पर्व्वणि । क्षत्रियाणामभीतानामत्रानन्त
महद्यशः ॥ २ ॥ य इदं पठते पर्व्व शृणुयाद्वापि नित्यशः । स
मुच्यते महापापैः कृतैर्घोरैश्च कर्म्मभिः ॥ ३ ॥ यज्ञावाप्तिर्ब्राह्मण-
स्येह नित्यं घोरे युद्धे क्षत्रियाणां जयश्च । शेषा वर्णाः काममिष्टं
लभते पुत्रान् पौत्रान् नित्यमिष्टांस्तथैव ॥ ४ ॥

इति द्रोणपर्व्वणि नारायणास्त्रमोक्षपर्व्वणि द्रोणपर्व्वपाठफलश्रुतौ
चतुरधिकद्विशततोऽध्यायः । समाप्तं नारायणास्त्रमोक्षपर्व्व ॥२०४॥

---

॥ समाप्तञ्च द्रोणपर्व्व ॥